'स्वोच्चारणकाल इति। स्वशब्द आत्मीयवाची। भावल्युडन्तोच्चारणशब्देन सप्तम्यर्थे बहुव्रीहिः। कालश्चान्यपदार्थः। यद्वा आत्मवाची स्वशब्दः। कालकरणल्युडन्तोच्चारणशब्देन षष्ठीसमासः। ततः स्वोच्चारण इव काल इति समासः। स्वोच्चारणकालसदृशः कालो लक्ष्यते।......वस्तुतस्तु अकारादीनां पुरुषभेदेन युगपदुच्चारणे उकारोच्चारणकालस्यैवाऽकाराद्युच्चारणे सत्त्वेन यथाश्रुते न कापि दोषशङ्केति सुधीभिरूह्यम्।'

(ख) 'यत्तु आ च आ च रलौ, तौ चेमौ वर्णौ च, उश्च उल्च ऋलोः, तयोर्वर्णयोरिति वा प्रथमान्तेन परिनिष्ठितविभक्तया वा विग्रह इति (–प्रौढमनोरमायां ५० पृष्ठे) प्राहुः। तन्न। रलाविति रूपस्याऽसिद्धेः। 'ऋत्यक' इति शाकलप्रकृतिभावेन, तदभावे सवर्णदीर्घेण च यणादेशस्य बाधात्।' इति जगन्नाथोक्तस्य युक्तियुक्तं समाधानं बृहच्छब्दरत्ने (५० पृष्ठे) इत्थं दृष्टिपथमायाति—

'रलाविति। 'ऋ लृ औ' इत्यत्र ऋत्यक इति प्रकृतिभावे ऋतो ङीति गुणे (यणि) रलाविति रूपम्'।

(ग) 'निपात एकाच्। 'यत्तु पर्य्युदासादेवाङ्रूपनिपाते लब्धे निपातग्रहणमुत्तरार्थमिति (प्रौढमनोरमायां १९१ पृष्ठे) वदन्ति। तन्न। अनाङित्यस्य पर्य्युदासत्वे 'प्रतिषेधार्थोऽयमारम्भः' इत्येतत्सूत्रगतभाष्याऽसङ्गतेः।' इति कुचमर्दनस्योपमर्दनं बृहच्छब्दरत्ने (१९१ पृष्ठे) एवं विद्यते —

'अनाङिति पर्य्युदासादेवेति। यत्तु अनाङिति न पर्य्युदासः, किन्तु प्रसज्यप्रतिषेधः। 'आ+उ=ओ' इत्यत्र आङ्नाङोर्निपातयोरेकादेशस्य 'अनाङ्' इति प्रतिषेधे प्राप्ते प्रतिप्रसवाय 'ओत्' इति सूत्रमित्यर्थकेन 'प्रतिषिद्धार्थोऽयमारम्भ' इति भाष्यग्रन्थेन बोधितत्वात्। पर्य्युदासे तु पूर्वसूत्रेणैव सिद्धावसङ्गतमिदमिति स्पष्टमेवेत्याहुः। तन्न। 'अदोऽभवत्' इत्यादि सिद्ध्यर्थं प्रतिपदोक्तौकारस्यैव ग्रहणमित्यर्थस्यानुपदमेव भाष्ये सिद्धान्तितत्वात्।'

तदेवं नानाविधविलक्षणयुक्तिजालजटिले मनोरमामण्डनैककार्यव्यापृते चक्रपाणिजगन्नाथादिसकलाऽऽलोचकमतविध्वंसनोद्भटेऽस्मिन् बृहच्छब्दरत्ने 'ह ्' 'हलन्त्यम्' 'मुखनासिके'त्याद्यनेकसूत्राणामतिविस्तृतं, विशिष्टं, बहुविषयञ्च व्याख्यानं विदधता ग्रन्थकृता अनेकेषां प्राचीनानामाचार्य्याणां मतानि यथाऽवसरमुपस्थापितानि, समालोचितानि, खण्डितानि, कुत्र चिच्च स्वमतपोषकतया सादरं प्रमाणरूपेण समुद्धृतानीति ग्रन्थोऽयं वैयाकरणसिद्धान्तरत्नानामाकरतां भजत इति ग्रन्थावलोकनपरिशीलनादिना स्वयमेव स्पष्टतामभियास्यतीति नात्रोदाहरणानामुद्धरणस्याऽऽवश्यकतां विभावयामः।

## बृहच्छब्दरत्नसद्भावे केषाञ्चन सन्देहः

अथैवं सकलगुणगरिष्ठस्यापि बृहतः शब्दरत्नस्याऽस्य महतो ग्रन्थस्य सत्ताविषये एव सन्दिहानाः कतिचन ( येषु वैयाकरणा अपि केचन अभूवन् ) सज्जना

ग्रन्थस्याऽस्य सम्पादन-प्रकाशननिश्चयं प्रतिश्रुत्य यत्र तत्रेत्थं स्वाभिमतं प्रकटयामासुः, प्रचारयामासुश्च—

'बृहच्छब्दरत्न' इत्येवमभिख्यया सम्पाद्य प्रकाश्यमानोऽयं शब्दरत्नापरनामधेयो ग्रन्थो न किल प्राचीनो, न वा हरिदीक्षितविरचितः,

(१) एतद्ग्रन्थसम्बन्धिनां प्राचीनहस्तलेखानां कुत्रचिदपि (एतद्ग्रन्थसंपादक-पुस्तकालयादन्यत्र) अनुपलम्भात् ,

(२) ततोऽर्वाचीनेषु प्रामाणिकव्याकरणग्रन्थेषु बृहच्छब्दरत्ननाम्ना कस्याऽपि ग्रन्थस्याऽस्मरणात् , एतद्ग्रन्थान्तर्गतपाठानां प्रमाणतया, खण्डनबुद्ध्या वा कैश्चिदपि कुत्र चिदप्यनुद्धरणात् ,

(३) हरिदीक्षितविरचितत्वेन लघुशब्दरत्नग्रन्थस्यान्यस्यैवैकस्य प्रौढमनोरमा-व्याख्यानभूतस्य प्रसिद्धत्वाच्च ।

तथा च प्रकाश्यमानोऽयं ग्रन्थः स्वयं सम्पादकेन, सम्पादककुलप्राचीनपुरुषेण वा केन चिद्विदुषा विरचितः, इतश्चेतश्च संगृहीतो वा इति सर्वथा नवीन एवेति नाऽत्र प्राचीनग्रन्थत्वेन विशेषाऽऽदरप्रदर्शनमुचितम् । हरिदीक्षितविरचितः प्रौढमनोरमा-व्याख्यानभूतो 'लघुशब्दरत्न' इत्येवं, 'शब्दरत्न' इत्थं वा प्रसिद्धः प्राचीनग्रन्थस्तु बहुत्र प्रौढमनोरमया सह सम्मुद्रय प्रकाशित एवेति नास्य नवीनस्य ग्रन्थस्य वर्त्तते अंशेनाप्यावश्यकता वैयाकरणानाङ् कृते' इति ।

किञ्चैतद्ग्रन्थप्रकाशननिर्णयावसरे नेपाल-प्रकाशन-समिति-सदस्यानाम्पुरोऽपि एतत्प्राचीनग्रन्थास्तित्वविरोधिनो नानाविधास्तर्कास्तथा समुपस्थापिता यथा तेषामपि हृदियेषु सन्देहाङ्कुरो हठादिव समुदियाय ।

अस्माभिस्सम्पादितस्य बृहच्छब्देन्दुशेखरस्यापि प्रकाशनावसरे सज्जनै-रेभिरेवमेव विप्रालप्यतेति नात्र तर्केषु नवीनत्वं, नवा सारलेशोपि, तथापि सहृदय-जनसंशयाऽपाकरणायैवैतेषां तर्काऽऽभासानामालोचनमावश्यकमिति संक्षेपेणात्रैवं किञ्चिदिव विवेचयामः —

## पूर्वोक्तसन्देहसमाधानम्

(१) तत्तत्पुस्तकालयेषु वर्त्तमानानां सर्वेषां हस्तलेखनामवलोकनं विनैव, किं वा तत्सूचीपत्राणामप्यालोडनमकृत्वैव 'ग्रन्थस्याऽस्य प्राचीनहस्तलेखानां कुत्राऽप्युपल-ब्धिर्नास्तीति' कथनं ननु साहसमात्रमेव ।

अस्माकं पुस्तकालयादन्यत्रापि लण्डननगरस्थे 'इण्डिया-आफिस-लाइब्रेरी'-इत्येवं सुप्रसिद्धे पुस्तकागारे लघुशब्दरत्नतो विभिन्नत्वेन निर्दिष्टस्य अस्य बृहतः शब्दरत्नस्य ग्रन्थस्यैकस्य प्राचीनहस्तलेखस्य[1] १८५६ वैक्रमेऽब्दे लिपिकृतस्य वर्त्तमानत्वात् ।

[1] तत्पुस्तकालयसूचीपत्रेऽस्य हस्तलेखस्य ६५१-६५२ इति ग्रन्थाङ्कौ निर्दिष्टौ ।

वाराणसेय-सरस्वतीभवन-पुस्तकालयेऽप्यस्य चतुर्णां खण्डितहस्तलेखानामुपलम्भाच्च[1]। एवमेवाऽन्यत्रापि पुस्तकालयेष्वन्वेषणेनान्येषामपि हस्तलेखानामुपलब्धेः सम्भवाच्च।

एतद्ग्रन्थाऽन्तर्गते मङ्गलाचरणद्वितीयश्लोके[2], पूर्वार्द्धान्त-श्लोके,[3] प्रकरणान्तेषूल्लिखिताषु पुष्पिकासु[4] च एतद्ग्रन्थकर्त्तृत्वेन हरिदीक्षितनाम्नः स्पष्टमेवोपलम्भात्, 'ग्रन्थोऽयं न हरिदीक्षितविरचित' इति कथनमपि मत्तप्रजल्पनतामेवादधाति।

(२) ग्रन्थनिर्माणावसरे 'शब्दरत्न' इत्येवंविहितनामधेयस्याप्यस्य ग्रन्थस्य लघुशब्दरत्नग्रन्थलेखनाऽनन्तरं स्पष्टप्रतिपत्तये उभयोः शब्दरत्नयोः पृथक्त्वेन निर्भ्रान्तं बोधाय 'बृहच्छब्दरत्न' इत्येवं बृहच्छब्दघटितेनैव नाम्ना स्मरणं, तदन्तर्गतानां पाठानाञ्चोद्धरणं यत्र तत्र पश्चाद्भवेषु टीकाग्रन्थेषु स्पष्टमुपलभ्यते। तथाहि—

(i) प्रायशः १८५० वैक्रमेब्दे श्रीमदुदयङ्करपाठकैर्विरचितायां 'शब्देन्दुशेखरज्यौत्स्नी'इत्याख्यायां लघुशब्देन्दुशेखरटीकायाम्—

(क) अजन्तपुँल्लिङ्गे (८० पृष्ठे)[4] सरूपसूत्रव्याख्यावसरे 'एवञ्च घटघटमित्यादेरनभिधानं नाऽऽश्रयणीयमित्यपरमनुकूलम्। स्पष्टं चेदं बृहच्छब्दरत्ने, बृहच्छेखरे च।'

---

[1] तत्पुस्तकालयसूचीपत्रे एतेषां हस्तलेखानां ग्रन्थाङ्काः ३७९९५, ३८००६, ३८६८१, ३८९४४, इतीमे सन्ति।

[2] 'गूढोक्तिग्रथितां पितामहकृतां विद्वत्प्रमोदप्रदां
भक्त्याधीत्य मनोरमां निरुपमाद्रामाश्रमात्सद्गुरोः।
तत्त्वाज्ञानवशात्परेण कलितान् दोषान्समुन्मूलयन्
व्याचष्टे हरिरेष तां फणिमतानालोड्य वैरेश्वरिः'।

[3] 'तत्तत्स्वोक्तिविरुद्धवादिवचनप्रच्छेदयुक्तीर्हरे-
र्मश्रौसीदहिराज इत्यहिकुलेऽश्रोत्रत्वमाविर्बभौ।
तद्युक्तं, न हि चेद्गिगीशबुधवन्मोदाम्बुधौ मज्जना-
त्तत्राऽऽधूतसहस्रमूर्धनिकरे लोकः प्रयायात्तालम्'। (इति पूर्वार्द्धसमाप्तौ)।

[4] (१) इति श्रीभट्टोजिदीक्षितपौत्रेण वीरेश्वरदीक्षितसूनुना हरिदीक्षितेन कृते शब्दरत्ने सुबन्तं समाप्तम्। संवत् १८५६,
(२) इति श्रीभट्टोजिदीक्षितपौत्रहरिदीक्षितविरचिते शब्दरत्ने तिङन्तं समाप्तम्। (संवत् १८५६ मिति फाल्गुन सुदी ९ मंगल)
(३) इति श्रीभट्टोजिदीक्षितपौत्रवीरेश्वरदीक्षितपुत्रहरिदीक्षितविरचिते शब्दरत्ने उत्तरार्द्धं समाप्तम्।
(संवत् १८५६ फाल्गुनमासे कृष्णपक्षे त्रयोदश्याम्)

[4] 'ज्यौत्स्नी', 'सदाशिवभट्टी', 'विषमपदविवृत्तिरि'त्यादयो लघुशब्देन्दुशेखरटीका आचार्यश्रीगुरुप्रसादशास्त्रिमहाभागैः स्वनिर्मितवरवर्णिनीत्याख्यया प्रसिद्धया टीकया सह सम्पाद्य समूलं प्रकाशिता इति, अत्र पृष्ठसंख्या तैः सम्पादितस्य षट्टीकोपेतस्य लघुशब्देन्दुशेखरस्य द्रष्टृजनसौकर्य्याय संकेतितेति तत एवावगन्तव्या।

(ख) अजन्तस्त्रीलिङ्गे (३०४ पृष्ठे) 'शुक्ती रजतं यस्य शुक्तिरजतको देवदत्त' इत्यत एव सङ्गच्छते इत्युक्तं हरिदीक्षितैर्बृहच्छब्दरत्ने' इत्याहुः ।

ज्यौत्स्न्यां बृहच्छब्दरत्ननाम्ना समुद्धृतोऽयं पाठः शब्दरत्नापरनामधेयेऽस्मिन् बृहच्छब्दरत्ने ४२० पृष्ठे षष्ठ्यां पङ्क्तौ तेनैव रूपेण द्रष्टुं शक्यः । तथाहि— 'शुक्ती रजतं यस्य शुक्तिरजतको देवदत्त' इत्यत एव सङ्गच्छते ।' (बृहच्छब्दरत्नः)

(ii) प्रायशः १८७३ वैक्रमेऽब्दे श्रीसदाशिवभट्टनिर्मितायां लघुशब्देन्दुशेखरव्याख्यायां हल्सन्धौ (३५१ पृष्ठे) 'स्तोः श्चुना श्चुः' इति सूत्रव्याख्यावसरे— 'यथासंख्यमिति । स-श इति स्थानेन्तरतमपरिभाषया सिद्धिरित्यपि बृहच्छब्दरत्नोक्तमनुसन्धेयम्—' इत्येवं बृहच्छब्दरत्नस्य नामोल्लेखो दृश्यते ।

अस्यां सदाशिवभट्ट्यां संकेतियोऽयं विषयः बृहच्छब्दरत्ने २०१ पृष्ठे इत्थं स्पष्टी कृतः—'यथासंख्यमिति ।.........बाह्यप्रयत्नाऽऽन्तरतम्येन स्थानेन्तरतमपरिभाषया निर्वाहे तु सकार-शकारांशेऽप्याभ्यन्तरप्रयत्नाऽऽन्तरतम्येन, स्थानान्तरतम्येन च निर्वाहः सुकरः ।' (बृहच्छब्दरत्नः)

(iii) श्रीसदाशिवभट्टाभ्यर्णं कालं स्पृशद्भिः श्रीराघवेन्द्राचार्य्यैर्विरचितायां लघुशब्देन्दुशेखरविषमपदविवृतिव्याख्यायामप्यजन्तस्त्रीलिङ्गप्रकरणे (३२० पृष्ठे) 'वाचि ह्रस्वश्चे'ति वक्तव्ये 'ङिति ह्रस्वश्चे'त्युक्तिः सन्निपातपरिभाषाया अनित्यत्वज्ञापनायेति बृहच्छब्दरत्नोक्तमपास्तमि'त्येवं बृहच्छब्दरत्नो ग्रन्थः स्मृतः ।

(iv) स्वगुरोर्भट्टनागेशस्य प्रधानाचार्यान् श्रीहरिदीक्षितान् स्वनिर्मितचिदस्थिमाला-भावप्रकाशयोः 'मान्या' इति आदरसूचकशब्देनाऽसकृद् व्यपदिशन्[1] तेषां बृहच्छब्दरत्नस्थामुक्तिञ्च मान्योक्तित्वेनोद्धरन्[2] पायगुण्डेवैद्यनाथो भावप्रकाशे

[1] (क) 'यत्तु पुंस्त्वैकवचनयोः सौत्रत्वे न विशेष इति मान्याः (हरिदीक्षिताः), तत्प्राचामनुरोधेन ।' इत्येवं मान्यनाम्ना भावप्रकाशे ५८ पृष्ठे उद्धृतोऽयं पाठः बृहच्छब्दरत्ने ३४ पृष्ठे —'वस्तुतस्तु 'सौत्रं पुंस्त्वं', सौत्रमेकवचनमित्यनयोर्न कश्चिद्विशेष इत्याहुः ।' इत्येवं रूपेणोपलभ्यते ।

(ख) 'मान्यास्तु—अविवक्षितमिति । अवयुत्याऽनुवाद इत्यर्थः । एवञ्च दीर्घप्लुतयोरप्यर्धोदात्तबोधकम् । अर्द्धशब्दो न समांशवाची, किन्त्ववयववाचीत्याहुः ।' इत्येवं मान्यहरिदीक्षितसंकेतेन भावप्रकाशे ५९ पृष्ठे दृश्यमानः पाठो बृहच्छब्दरत्ने ३६ पृष्ठेऽपि प्रायस्तेनैव रूपेण प्राप्यते । तथा हि— 'अविवक्षितमिति । अवयुत्याऽनुवाद इत्यर्थः । तथा च अर्द्धशब्दो न समांशवाची, अपि तु लेशवाची ।' अयं पाठो नागेशभट्टेन बृहच्छब्देन्दुशेखरेऽपि ३२ पृष्ठे 'गुरवस्तु—इत्येवं स्वगुरुहरिदीक्षितनाम्ना अर्थतः प्रादर्शि ।

(ग) 'रलौ इति प्रतीकव्याख्यावसरे बृहच्छब्दरत्ने ५१ पृष्ठे 'अकृतव्यूहपरिभाषया सवर्णदीर्घो न ।' इत्येवं लिखितः पाठो भावप्रकाशे ७८ पृष्ठेऽपि 'अत्र मान्याः 'अकृतव्यूहपरिभाषया सवर्णदीर्घो न' इतीत्थं मान्यनाम्ना प्रदर्शितोऽवतिष्ठते ।

[2] (क) 'अलोन्त्यस्य इति तु विधिवाक्येष्ववान्तरवाक्यार्थबोधोत्तरं तदेकवाक्यतया सम्बध्यते इति बहिरङ्गत्वं तस्याः, तं विना स्थानषष्ठ्या निर्णेतुमशक्यत्वात्'

संज्ञाप्रकरणे—'एकस्मान् ङञणवटा' इति प्रत्याहारबोधकश्लोकव्याख्यावसरे 'शास इदङ्' इत्यादिज्ञापकात् आदिरन्त्येनेत्यस्याऽनित्यत्वेनेदं लभ्यते इति स्पष्टं बृहच्छब्दरत्ने।' इत्येवं बृहच्छब्दरत्नप्रतिपादितेऽर्थे नामग्राहमादरं प्रदर्शयति। स चात्र संकेतितोऽयं विषयो बृहच्छब्दरत्नेऽपि (३२ पृष्ठे) दृश्यताम्—'इदं च आदिरन्त्येनेति सूत्रस्याऽनित्यात्वाल्लभ्यते। तत्र च मानं शास इदङ् हलोः; ऋच्छत्यृताम्, परिमाणाख्यायां सर्वेभ्यः, इङश्च, इको झल्, अज्झनगमां सनि, क्रीङ्जीनां णौ इत्यादि।' (—बृहच्छब्दरत्नः)।

तथा चैवमुपर्युपदर्शितेषु विशिष्टव्याकरणटीकाग्रन्थेषु बृहच्छब्दरत्ननाम्नाऽस्य ग्रन्थस्य सादरं स्मरणात्, एतद्ग्रन्थान्तर्गतपाठानामप्येतन्नाम्नैवोद्धरणस्यैतेषु वर्त्तमानत्वाच्च 'ततोऽर्वाचीनेषु प्रामाणिकव्याकरणग्रन्थेषु बृहच्छब्दरत्ननाम्ना कस्याऽपि ग्रन्थस्याऽस्मरणात्, एतद्ग्रन्थान्तर्गतानां पाठानां प्रमाणतया खण्डनबुद्ध्या वा कैश्चिदपि कुत्रचिदनुद्धरणाच्च हेतोर्ग्रन्थोऽयं बृहच्छब्दरत्नः सर्वथा नवीनोऽप्रामाणिकश्चे'ति सेर्ष्यं, सामर्षं च प्रलपन्तः साधु समाहिताः।

(३) विद्वद्भिर्नितरामादृतश्चायं प्रौढमनोरमाव्याख्यानभूतो लघुशब्दरत्नो हरिदीक्षितविरचितत्वेन प्रसिद्धिं गतोऽपि न हरिदीक्षितेन निर्मितोऽपि तु भट्टनागेशलेखिनीप्रसूत इति त्वनुपदमेव स्फुटी भविष्यति।

एवमस्य बृहच्छब्दरत्नग्रन्थस्य प्राचीनत्वे, हरिदीक्षितविरचितत्वे च हिमालयतुल्याऽविचाल्यनेकपुष्टप्रमाणेषु विद्यमानेष्वपि एतद्ग्रन्थसद्भावे सन्देहोत्पादकतर्कानामुद्भावनं, तत्प्रचारणञ्च कन्नु खलु तेषां सज्जनानां हृद्गतमर्थमभिव्यञ्जयतीति परेङ्गितज्ञानैकफलबुद्धिशालिनो विपश्चितः स्वयमेवाभिसन्धास्यन्तीति नाऽत्राऽधिकं किञ्चिद् ब्रूमः।

वस्तुतस्तु बृहच्छब्दरत्नग्रन्थोऽयं श्रीहरिदीक्षितविरचितः, प्राचीनः, लघुशब्दरत्नात्पूर्वं निर्मितः, ततः सर्वथा भिन्नो, नितान्तं प्रामाणिकश्चेति उपरि प्रदर्शितैः प्रमाणैः साधु सिध्यतीति नाऽत्र शङ्काकलङ्कपङ्कलेशप्रसर इति गुणग्राहिभिर्विद्वद्भिर्विभावनीयम्।

## बृहच्छब्दरत्नः, बृहच्छब्दरत्नं वा

शब्दा रत्नानीव यस्मिन्नसौ ग्रन्थः शब्दरत्नः। एवमेव—शब्दा रत्नानीव शब्दरत्नानि, बृहन्ति शब्दरत्नानि यस्मिन् ग्रन्थे स बृहच्छब्दरत्नो ग्रन्थ' इति ग्रन्थान्यपदार्थस्य बृहच्छब्दरत्नशब्दस्य, शब्दरत्नशब्दस्य वा विशेष्यनिघ्नतया

---

इति मान्योक्तिः प्राचामनुरोधेनेति भावप्रकाशे १०० पृष्ठे उद्धृता मान्योक्तिः बृहच्छब्दरत्ने ६९ पृष्ठे एवं प्राप्यते—'अलोन्त्यपरिभाषा तु विधिवाक्येष्ववान्तरवाक्यार्थं बुध्वा तदैकवाक्यतया सम्बध्यते इति तदन्वयो बहिरङ्गः, अवान्तरवाक्याऽर्थबोधं विना स्थानषष्ठया निर्णेतुमशक्यत्वात्।' इति

(ख) 'किञ्चान्तरङ्गत्वान्नुमः पूर्वं स्वरस्य प्रवृत्तेः।' इति बृहच्छब्दरत्ने ७२ पृष्ठे हरिदीक्षितोक्तं भावप्रकाशे १०७ पृष्ठे मान्योक्तित्वेनेत्थमुद्धरति भावप्रकाशे वैद्यनाथः "एतेन—अन्तरङ्गत्वात् प्राक् स्वरप्रवृत्त्या तत्पक्षेऽपि न दोष इति मान्योक्तिः प्राचामनुरोधेनेति।"

पुँल्लिङ्गत्वमुचितमेव । अत एव वैद्यनाथकृते लघुशब्दरत्नव्याख्याने भावप्रकाशे (२७० पृष्ठे—) 'एवं चात्रत्यं मूलं निर्दुष्टमेवेत्यत्र शब्देन्दुशेखरो, हलन्तस्थशब्दरत्नश्चाऽयुक्तः' इति, तथा च 'एतेन विशिष्टयोरुपादाने तत्प्रवृत्तेः पदकार्यविषयत्वे मानाभावात्, फलाभावाच्च चिन्त्योऽयं शब्दरत्न' इति मन्दोक्तमपास्तम्' इति च (-भावप्रकाशे ६७८ पृष्ठे) अस्य नाम्नि पुँल्लिङ्गप्रयोगः साधूपपद्यते ।

एतेन रत्नशब्दस्य नित्यनपुंसकतया 'बृहच्छब्दरत्नः' 'लघुशब्दरत्न' इत्येवं पुँल्लिङ्गत्वेन प्रयोगो ह्यसाधुरेवेति आग्रहाविष्टाः प्रत्युक्ताः ।

व्याख्यानस्याऽन्यपदार्थत्वे तु 'बृहच्छब्दरत्नम्' 'लघुशब्दरत्नम्' इति नपुंसकलिङ्गप्रयोगोऽपि अस्य नाम्नि साधुरिति त्वन्यदेतत् ।

## बृहच्छब्दरत्नः, शब्दरत्नो वा

यथा प्रागवोचाम, यद्यपि एतद्ग्रन्थनिर्माणकाले ग्रन्थकृता श्रीहरिदीक्षितेनाऽस्य ग्रन्थस्य 'शब्दरत्न' इत्येव संज्ञा सम्पादिता, पुष्पिकासु 'शब्दरत्न' इति नाम्न एव अत्र दर्शनात् , तथापि तदनन्तरं प्रौढमनोरमामधिकृत्यैव विलिखितस्य 'लघुशब्दरत्न'-इत्येवं प्रसिद्धस्य ग्रन्थान्तरस्याऽपि निर्माणे जाते स्पष्टप्रतिपत्त्यर्थं लघोः शब्दरत्नादस्य निर्भ्रान्तो बोधो यथा स्यादित्येतदर्थं ग्रन्थोऽयं 'बृहच्छब्दरत्न' इत्यभिख्ययैव प्रसिद्धो बभूवेति 'बृहच्छब्दरत्न' इत्यप्यस्यैव द्वितीया संज्ञेति न विस्मर्त्तव्यम् । अनयैव संज्ञया चान्यैरपि विद्वद्भिर्ग्रन्थकृद्भिश्चाऽयं स्वेषु ग्रन्थेषु तत्र तत्र स्मृत उद्धृतश्चेत्यस्माभिरपि पूर्वाचार्य्याणां पन्थानमनुसरद्भिर्ग्रन्थोऽयं सर्वत्र बृहच्छब्दरत्नपदेनैव व्यवाह्रियतेति नाऽत्र कश्चन विवादावसरः ।

## लघुशब्दरत्नः

किञ्चैवं गच्छता कालेन शास्त्रार्थप्रसङ्गेन सिद्धान्तकौमुदी-प्रौढमनोरमा-बृहच्छब्दरत्नग्रन्थानवलम्ब्य प्रचलितेषु पण्डितमण्डलीनां वादाहवेषु नवनवोन्मेषशालिनीं प्रतिभामादधानैः कुशाग्रबुद्धिभी रत्नाकर-रत्नार्णवादिनानाविधग्रन्थलेखकैस्तात्कालिकविद्वद्वरेण्यैर्नूतनकोटिकल्पनावाग्जालैर्दीक्षित-कुलपाण्डित्यकीर्त्तिजालमवरुद्धमिव विलोक्य प्रायशः १७४० वैक्रमेब्दे स्वगुरुहरिदीक्षितपादपद्मानुरञ्जनावाप्तविलक्षणवैदुष्यः स्वमत-साधन-परमतविदारणसमर्थामनिर्वचनीयां कामपि स्पृहणीयां प्रतिभामादधानो बृहच्छब्देन्दुशेखर-लघुशब्देन्दुशेखर-परिभाषेन्दुशेखर-बृहन्मञ्जूषा-लघुमञ्जूषा-परमलघुमञ्जूषा-ऽऽदिविशिष्टव्याकरणमहाग्रन्थनिर्माणाऽवाप्तदिगन्तकीर्त्तिर्विद्वत्तल्लजोऽयं भट्टनागेशो बहोः कालाज्जरठैर्महावैयाकरणैर्विवर्द्ध्यमाने वादाहवे आत्मनो वैशिष्ट्यमनन्यसाधारणं शास्त्रार्थकौशलं, ग्रन्थनिर्माणपाटवं ख्यापयितुमिव सिद्धान्तकौमुदी-प्रौढमनोरमा-खण्डन-मण्डनकर्त्तॄणानामुक्तिप्रत्युक्तिषु तादृशं गभीरं वादवैदुष्यमनवलोक्य ताभिरतुष्यन् प्रौढमनोरमामधिकृत्याऽपि आत्मना विरचितं दृढतरकल्पनाकोटीयुतं निरस्तसकलवादिजनाऽभिमतं विलक्षणव्याख्यानसमन्वितं लघुशब्दरत्ननामधेयं विशिष्टमेकं ग्रन्थं स्वगुरोर्हरिदीक्षितस्य व्याकरणशास्त्रसम्बन्धि विलक्षणं विशिष्टं वाक्पाटवं ख्यापयितुम्

हरिदीक्षितनिर्मितत्वेनैव विदुषां पुरः समुपस्थाप्य शास्त्रार्थसभासु विद्वत्समवाये परैर्बृहच्छब्दरत्नोक्तश्लथयुक्तीनां खण्डनावसरे 'नायमस्मद्गुरूणामन्तिमः सिद्धान्तः, यतो बृहच्छब्दरत्ने तु बहुत्र तैः प्राचीनानुरोधेनैवेत्थं व्याख्यातत्वात्, अस्मद्गुरुवर्य्यै-र्निर्धारितानां स्वसिद्धान्तानां, मतोपमतानाञ्च वास्तविकं स्वरूपन्तु अनन्तरं तैर्निर्मिते लघुशब्दरत्ने एव सर्वैर्विलोक्यतां, यत्र भवद्भिरुपस्थापितानामुपस्थापयिष्यमाणानां, संभावितानाञ्च सर्वेषामपि तर्काणामाक्षेपाणाञ्च समाधानं पूर्वमेव विहितं तत्रैव राजते' इत्येवमुद्घुष्य च निजं वास्तविकं छात्रत्वं[1] साधयन् न केवलं ररक्ष दीक्षितकुलविरूढ-वैदुष्यविमलकीर्त्तिवल्लरीमपि तु तां पुष्पितां, सफलाञ्च व्यधात्।

नाम्ना लघुन्यपि शास्त्रसारगुरुण्यत एव महनीयेऽस्मिन् लघुशब्दरत्नग्रन्थे चक्रपाणिदत्त-पण्डितराजजगन्नाथ-रामकृष्णसूरि-मौनि-मन्दादिसकलमनोरमाऽऽलोचक-विदुषां दृढतरतर्कसहिताभिश्चेतश्चमत्कृतिकराभिर्युक्तिभिः खण्डशः कृता वाचो-ऽन्यत्राननुभूतं हृदयग्राहिमनोरमोक्तिमण्डनपाटवञ्च विलोक्य मित्राय्युदासीनमध्यस्थाः सर्वेऽपि विद्वांसो हरिदीक्षितस्य विशिष्टं वैदुष्यमङ्गीकुर्वन्त आश्चर्यचकिताः, स्तब्ध-वाक्प्रसराश्चाऽभूवन्।

वस्तुतो ग्रन्थशिरोमणावस्मिन् लघुशब्दरत्ने परिदृश्यमाना विचित्रा विषयप्रति-पादनशैली, परमतविध्वंसनायोपस्थापिता वज्रसारास्तर्काः, विरुद्धार्थानामपि प्राचीन-विद्वद्वचसां स्वप्रतिभाविशेषोद्भावितं स्वमतानुकूलं व्याख्यानं, महाभाष्यवचसां गूढाश-यावगाहनपरा विशिष्टा सरणिः, कैयट-हरदत्त-माधवादिग्रन्थानां वैदुष्यपूर्णं विवेचनम्, सारबहुला प्रवाहपूर्णा विशिष्टोपयुक्तशब्दचयचित्रा ग्रन्थभाषा चेति एकैकमेव ग्रन्थ-कर्त्तुरनन्यसाधारणं स्पृहणीयं चतुरस्रं पाण्डित्यं प्रकाशयितुमलमिति नैव तिरोहितं लघु-शब्दरत्नहृदयधारिणां सहृदयानामिति नात्रोऽदाहरणानामावश्यकतां जानीमः।

## लघुशब्दरत्नग्रन्थस्य कर्त्तुर्विनिश्चयः

अथाऽत्र प्रसङ्गतो लघुशब्दरत्नग्रन्थकर्त्तुर्विषये किञ्चिदावश्यकं विवेचयामः। बृहच्छब्दरत्नस्य हरिदीक्षितविरचितत्वे तु नास्ति सन्देहलेशोऽपीति प्राक्प्रतिपादितैः सुदृढैः प्रमाणैः स्पष्टमेव प्रेक्षावताम्।

संशयोत्पादकविरुद्धसामग्र्यभावे च कस्यचिदपि ग्रन्थस्य कर्त्तुर्विनिश्चयः सामान्यतस्तद्ग्रन्थान्तर्गतेषु मङ्गलाचरणादिश्लोकेषु, प्रकरणान्तेषूल्लिखितासु पुष्पिकासु च तत्कर्तृत्वेन निर्दिष्टेन नाम्नैव सम्पाद्यते। संशयोत्पादकविरुद्धसामग्रीसद्भावे तु ग्रन्थकर्त्तुर्निर्णयायान्यान्यपि बाह्यान्याभ्यन्तराणि च सुदृढान्यूहापोहाभ्यामधिगन्तव्यानि प्रमाणान्तराण्यप्यन्विष्यन्ते, आश्रीयन्ते च।

तथा च लघुशब्दरत्नान्तर्गतानां बहूनां ग्रन्थभागानां श्रीनागेशभट्टनिर्मितेषु बृहच्छब्देन्दुशेखर-लघुशब्देन्दुशेखरादिग्रन्थेषु तेनैव रूपेण शब्दतः, क्वचिदर्थत उप-लम्भात्, विषयप्रतिपादनशैलीसाम्यात्, भाषातौल्यात्, समानसिद्धान्तप्रतिपादकत्वाच्च

[1] गुरोर्दोषाणामावरणं छत्रम्, तच्छीलमस्य छात्रः, तस्य भावः छात्रत्वमिति।

ग्रन्थोऽयं भट्टनागेशेन विरचित, उताहो बृहच्छब्दरत्नसमानमङ्गलाचरणश्लोकवत्त्वात् प्रकरणान्तेषु प्रदर्शितासु पुष्पिकासु तत्कर्तृत्वेन हरिदीक्षितस्य नाम्न उपलम्भाच्चायं हरिदीक्षितेन विलिखित इत्यत्र संशयोत्पादकविरुद्धसामग्रीसत्त्वेन विद्यते सन्देहप्रसरावसर इति प्रमाणान्तरैरेव तत्त्वनिर्णयाय प्रयतामहे।

## लघुशब्दरत्नस्य हरिक्षिदीतविरचितत्वाऽभावे तर्काः—

हरिदीक्षितकृतित्वेन परां प्रसिद्धिमुपागतोऽपि लघुशब्दरत्नग्रन्थोऽयं वस्तुतो न हरिदीक्षितविरचितः;

(क) बहुषु स्थलेषु हरिदीक्षितविरचितबृहच्छब्दरत्नप्रतिपादितव्याख्यानतो विरुद्धव्याख्यानवत्त्वात्।

(ख) क्वचिच्च प्रौढमनोरमाग्रन्थखण्डनपराणामपि युक्तीनामत्र सद्भावात्।

(ग) स्वमतविरुद्धार्थानामपि मनोरमावाक्यानां प्रतिभावैशिष्ट्यात् स्वाभिमतार्थसाधनपरत्वेन व्याख्यातत्वाच्च।

## प्रथमस्तर्कः—

बृहच्छब्दरत्ने प्रौढमनोरमाव्याख्यानावसरे ये विषयाः सप्रमाणं यथा व्याख्यातास्त एव विषया लघुशब्दरत्ने तद्विरुद्धैः प्रमाणैः सर्वथा तद्वैपरीत्येन प्रतिपादिता इति समनन्तरमुदाहृतैर्ग्रन्थभागैस्सर्वथा स्पष्टमेव।

तथा च न हि कदाचिदेक एव विद्वान् लेखक एकस्यैव ग्रन्थस्य व्याख्यानं विदधत् प्रथमं प्रतिपादितं सिद्धान्तं पश्चाल्लिखिते व्याख्यानग्रन्थे सर्वथा परिवर्त्तयति। अन्यथा तस्य वचसि सुन्दोपसुन्दन्यायेनाऽप्रामाण्यग्रहेणोभयोरपि व्याख्यानग्रन्थयोरनादेयत्वं सम्भाव्येत। अतो बहुषु स्थलेषु हरिदीक्षितविरचितबृहच्छब्दरत्नप्रतिपादितव्याख्यानतो विरुद्धव्याख्यानवत्त्वादयं लघुशब्दरत्नो हरिदीक्षितविरचितो न कदाचिदपि संभवति।

## लघुशब्दरत्नान्तर्गतानां बृहच्छब्दरत्नविरुद्ध-व्याख्यानानामुदाहरणानि—

(१). 'चित्रगवीनाम् इति। प्रत्यासत्त्या विभक्त्याक्षिप्तप्रकृतेः कवर्गवदुत्तरपदसमासरूपाया एव ग्रहणेन कुमति चेत्यनेन णत्वं नेति वक्ष्यामः।' इत्येवं (बृहच्छब्दरत्ने ८ पृष्ठे) चित्रगवीनामिति मनोरमाप्रयोगे णत्वाऽभावमेव समर्थयन्ते हरिदीक्षिताः।

'लघुशब्दरत्ने तु (८ पृष्ठे)—'चित्रगवीणामिति। कुमति चेति णत्वम्। दन्त्यपाठस्तु लेखकप्रमादात्। एवं स्त्रीगवीणामित्येकशेषप्रकरणान्तस्थकैयटप्रयोगेऽपि बोध्यमित्यु'क्त्या—'चित्रगवीनामिति' णत्वशून्यः प्रयोगः प्रमादकृत इति स्पष्टमुद्घोषयति ग्रन्थकृत्—इत्युभयोः शब्दरत्नयोरुक्तिषु विरोधः सर्वथा स्पष्टः।

घ

(२) 'ऋलोरिति । अत्र ऋकारपूर्वपदक[1]:, अकारसहितरेफपूर्वपदको[2] वेति पाठद्वयं दृश्यते। तत्र प्रकृतिभावे परयणादेशे प्रथमः पक्षः । द्वितीयस्तु असाम्प्रदायिक एवेति बोध्यम् ।' इति बृहच्छब्दरत्ने (५१ पृष्ठे) 'रलोः' इति प्रयोगस्य निष्पादयितुमशक्यत्वेनाऽसाम्प्रदायिकत्वमुद्घोष्यते हरिदीक्षितैः ।

लघुशब्दरत्ने (५० पृष्ठे) तु 'उश्च उल्च ऋलोः' इति पाठः । रलोरिति पाठे आगन्तुना अकारेण निर्देश इति बोध्यम् ।' इत्येवमागन्तुकमकारमुद्भाव्य 'रलो'-रिति प्रयोगसाधनद्वारा तस्य साम्प्रदायिकत्वसिद्धये यतमानो दृश्यते ग्रन्थकर्त्ता–इति प्रत्यक्षा एव उभयोरुक्तिषु विरोधिता ।

(३) 'अनुनासिकसंज्ञासूत्रं मन्दप्रयोजनमि'ति प्रौढमनोरमाग्रन्थव्याख्यावसरे बृहच्छब्दरत्ने ( २९ पृष्ठे— ) 'योगाश्रयणेनैवेत्येवकारेण यमानुस्वारयोरनुनासिकशब्देन व्यवहारार्थं तदाश्रयणमावश्यकमिति ध्वनितम्'-- इति हरिदीक्षितेनोक्तम् ।

तथा च मन्दं=स्वल्पं (यमानुस्वारयोः अनुनासिकशब्देन व्यवहार एव) प्रयोजनं यस्य तत् 'मन्दप्रयोजनम्' इति विग्रहोऽत्र हरिदीक्षितसम्मत इति स्पष्टं प्रतीयते ।

परं लघुशब्दरत्ने (२९ पृष्ठे) तु 'मन्देषु प्रयोजनमस्ये'ति बहुव्रीहिः । एवंविध-योग-लोक-प्रातिशाख्याद्यनभिज्ञं प्रति सप्रयोजनमित्यर्थः ।' इत्येवं स्पष्टमुक्तत्वेन लघुशब्दरत्नकर्तृमते सूत्रमिदं निरर्थकमेवेति उभयोर्वैमत्यं स्पष्टमेव ।

(४) ऊकालोऽच् इति सूत्रे—'ह्रस्व-दीर्घ-प्लुत' इति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् ।' इति प्रौढमनोरमाव्याख्याने—'इतरेतरयोगः, सौत्रमेकवचनमित्यपि सम्भवतीत्याशयकं वाक्यं—बृहच्छब्दरत्ने (३४ पृष्ठे)—'वस्तुतस्तु सौत्रं पुंस्त्वं, सौत्रमेकवचनमित्यनयोर्न कश्चिद्विशेष इत्याहुः ।'—इत्युपलभ्यते ।

लघुशब्दरत्ने (३३ पृष्ठे) तु—"सौत्रं पुंस्त्वमिति । यद्यपि इतरेतरयोगेऽपि सौत्रमेकवचनं वक्तुं शक्यं, तथापि लिङ्गमशिष्यं लोकश्रयत्वाल्लिङ्गस्येति तत्र तत्र वार्त्तिकोक्तेर्लिङ्गस्य लौकिकत्वात्, तद्व्यत्ययकल्पनमेवोचितं, न तु शास्त्रीयवचनव्यत्ययकल्पनमिति भावः ।'—इत्यभिधाय ग्रन्थकर्त्रा सौत्रं पुंस्त्वमित्यत्रैव (न तु सौत्रमेकवचनमित्यत्र) सयुक्तिकमौचित्यं प्रत्यपादीति किमत्राऽवशिष्यते उभयोरुक्तिषु वैपरीत्येऽल्पीयानपि संशयः! ।

(५) हलन्त्यमिति सूत्रव्याख्यानावसरे उपदेशशब्दस्य करणघञन्तत्वं, भावघञन्तत्वं वेति विचारे बृहच्छब्दरत्नकारः प्रौढमनोरमोक्तानुसारं भावघञन्तत्वसाधने एव व्यापृतः, तद्विरुद्धं लघुशब्दरत्नकृत्तु स्पष्टमेव करणघञन्तत्वं प्रतिपादयतीति बृहच्छब्दरत्नविरुद्धव्याख्यानानामत्र लघुशब्दरत्नग्रन्थे प्रतिपदं सद्भाव इत्युभयग्रन्थपरिशीलनशालिनामतिरोहितमेव । तथा च नैतेयोः शब्दरत्नयोरेक एव लेखक इति प्रथमेनाऽनेन तर्केण साधु सिद्ध्यति ।

[1] 'ऋलोः' इत्यर्थः । [2] 'रलोः' इत्यर्थः ।

## द्वितीयस्तर्कः

स्वपितामहचरणैरभ्यूहितायाः प्रौढमनोरमाया मण्डनाय बृहच्छब्दरत्ननिर्माणं चिकीर्षवो हरिदीक्षिताः, 'तत्त्वाज्ञानवशात्परेण कलितान् दोषान् समुन्मूलयन् व्याचष्टे हरिरेष' इत्येवं स्वप्रतिज्ञानुसारं सर्वत्र प्रौढमनोरमोक्तिसाधनपरा एवाऽत्र ग्रन्थे विभाव्यन्ते, न तु कुत्रचिदपि तैः प्रौढमनोरमायाः साक्षात्खण्डनं, तद्विरुद्धव्याख्यानमपि वा समपादि । अपि तु पितामहचरणोक्तिषु विशिष्ट आदर एव तैः सर्वत्र प्रादर्शीति ग्रन्थस्याऽस्याऽनुशीलनेन परिज्ञायते ।

लघुशब्दरत्ने तु विभिन्नैव स्थितिः । नाऽत्र तादृशः प्रौढमनोरमामण्डनपक्षपातो, न वा प्रौढमनोरमोक्तिषु तादृशः समादरः समुपलभ्यते । नैतावदेव, प्रौढमनोरमाखण्डनेऽपि प्रवृत्तिरत्र ग्रन्थकर्तुः प्रेक्षावतां प्रत्यक्षतामुपयातीति कथं नामाऽयं लघुशब्दरत्नो हरिदीक्षितैर्विरचितः स्यात् !

### लघुशब्दरत्नान्तर्गतानां प्रौढमनोरमाविरुद्ध-व्याख्यानानामुदाहरणानि—

(१) आदिरन्त्येनेति सूत्रव्याख्यावसरे स्वस्य चेति प्रतीकमादाय प्रौढमनोरमायां (२१ पृष्ठे) दीक्षिताः 'स्वं रूपमित्यनुवृत्ते'रिति प्रतिपादयन्ति । तस्याऽयमाशयः— 'स्वस्य च संज्ञा स्यात्' इति वृत्तिघटकस्य 'स्वस्य' इति पदस्य लाभः स्वं रूपमिति सूत्रात्स्वं रूपमित्यस्यानुवृत्त्या एव जायते, अतस्तदनुवृत्तिरत्रावश्यकी'ति । स्वपितामहमतानुयायिनो हरिदीक्षिता अपि स्वशब्दानुवृत्तिमेवाद्रियन्ते ।

परन्तु लघुशब्दरत्नकृतस्तु 'वस्तुतो ज्ञापकादिना अस्यापि न संज्ञाकार्य्यम् । आद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदास्याऽऽक्षेपेणाऽन्येषामिव तयोः प्राप्तायाः संज्ञायाः प्रकारान्तरेणाऽशक्यवारणीयत्वात् । स्वशब्दानुवृत्तेश्च न फलम् । भाष्येऽपि एतत्फलितार्थकथनमेव—स्वस्य च रूपस्येति ।' इत्येवं लघुशब्दरत्ने (२० पृष्ठे) प्रौढमनोरमामतविरुद्धं स्वाभिप्रायं स्वैरं प्राचीकशन् ।

(२) 'सुध्युपास्य'–इति प्रयोगे यथासंख्यसूत्रसहकारेण इक्प्रत्याहारबोध्यस्य प्रथमस्य इकारस्य स्थाने यण्प्रत्याहारबोध्यः प्रथमो यकार एव भवति, न तु वकारादय' इति यथासंख्यसूत्रसहकारेण यणं विदधतां प्राचीनानां मतं खण्डयन्तो व्यक्तिपक्षाश्रयिणो भट्टोजिदीक्षिताः प्रौढमनोरमायां (८७ पृष्ठे) "तस्मादिह स्थानेन्तरतम इति सूत्रेणैव इष्टसिद्धिरित्यभिप्रेत्य आह—स्थानत आन्तर्य्यादीकारस्य यकार इति ।' —इति व्याचख्युः

स्वतन्त्रमतिर्लघुशब्दरत्नकृत्तु—'परे तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सर्वझकारादीनां ग्रहणं दुरुपपादम् । न हि तत्र लक्षणा वक्तुं शक्या, लक्ष्यतावच्छेदकाऽग्रहात् । एवञ्च तत्र प्रत्यहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो, नान्यथा । एवञ्च 'अइउण्' इत्यादावपि जातिनिर्देश एवोचितोऽर्द्धजरतीयस्याऽनौचित्यात् ।……… … …यथासंख्यसूत्रञ्च व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्त्तते ।'—इत्येवं लघुशब्दरत्ने

(८७ पृष्ठे) प्रौढमनोरमासम्मताऽर्थविरुद्धं यथासंख्यसूत्रेणैवाऽत्र यणो निर्वर्त्तनं भाष्यसम्मतमुद्घोषयन्तीत्यनयोर्विरुद्धमतोपस्थापकतां विभावयन्तु ।

(३) मनोरमाकृतो विधीयमानेष्वपि गुणानामभेदकत्वमिति पक्षमवलम्ब्य सवर्णग्राहकत्वमामनन्ति । अत एव 'यण्पदेन सप्त । भाव्यमानत्वेन सवर्णाऽग्राहकत्वेऽपि, गुणानामभेदकत्वेन अनुनासिकानामपि यवलानां ग्रहणात्[१] ।' इत्याहुः । अत एव चाग्रे 'उञ' इति सूत्रे—किम्वँ॑ति' इति प्रयोगसाधनावसरे—'आदेशस्य स्थानिवत्त्वेन 'मय उञ' इति प्रकृतिभावाऽपवादभूते आन्तरतम्यादनुनासिके वकारे, किम्वँ॑ति ।[२]'—इत्याहुः ।

परं लघुशब्दरत्नकृतस्तु भाव्यमानानां गुणाभेदकत्वेनान्येन वा केनापि मार्गेण सवर्णग्राहकत्वं नैव सहन्ते ।

अत एव लघुशब्दरत्ने (८६ पृष्ठे) 'यदि तु अणुदित्सूत्रे अण्ग्रहणात् यण्विषये गुणनाम्भेदकतैवोचिता, तदापि चत्वारो यण इति........।' 'तत्खण्डने एवाऽऽग्रहो, न तु सप्तत्वसंख्यायामिति भावः ।' इत्येवं सप्तत्वसंख्यायां स्वाऽरुचिमेव प्रदर्शयामासुः ।

किञ्चाग्रे (८८ पृष्ठे) 'उञ इति सूत्रे नव्यानाम्=(=भट्टोजिदीक्षित-हरिदीक्षितानाम्) प्रमाद एव ।" इत्येवं लघुशब्दरत्ने ब्रुवता ग्रन्थकृता दीक्षितसिद्धान्ते स्पष्टमेवाऽनास्था प्रादर्शि ।

बृहच्छब्दरत्ने तु भट्टोजिदीक्षितानभिलक्ष्यैतादृशः संमानाऽनभिव्यञ्जकः शब्दप्रयोगो नैव कुत्रापि दृष्ट इति-कथं नाम उभयोः शब्दरत्नयोरेक एक रचयिता स्वीकर्त्तुं शक्येत ।

(४) प्रौढमनोरमायां २२० पृष्ठे—'अप्रत्ययस्य यो विसर्ग' इति वैयधिकरण्येन व्याचक्षाणानां प्राचां मतेनेदम् । वक्ष्यमाणरीत्या सामानाधिकरण्येन व्याख्याने तु षत्वप्राप्तौ इति बोध्यम् ।' इत्येवं सिद्धान्ततया प्रतिपादितस्यापि दीक्षितमतस्य लघुशब्दरत्ने प्रत्यक्षं खण्डनमित्थं विलोक्यताम्—'वस्तुतस्तु तदसङ्गतम्, कविभिः कृतमित्यादौ षत्वापत्तेः ।'

(५) 'यदि तु स निषेधः अपदादिविधाविति पर्युदासेन पदान्तत्वनिमित्तके विधावेवेति 'न लुमता' इति सूत्रे भाष्ये स्पष्टम् । किञ्चोत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तिः । अत एव माषकुम्भवापेनेत्यादौ पदव्यवायेऽपीति निषेधसिद्धिरित्युच्यते तदा प्राचीनोक्तमेव शरणम् ।' इति लघुशब्दरत्ने (२१५ पृष्ठे) स्पष्टमेव दीक्षितेन समालोचितां प्राचीनानामुक्तिमेव समर्थयन् लघुशब्दरत्नकृदयं हरिदीक्षितो नैव भवितुमर्हतीति निश्चप्रचम् ।

## तृतीयस्तर्कः

स्वमतविरुद्धार्थप्रतिपादनपराणामपि मनोरमावाक्यानां स्वप्रतिभाबलेन स्वमतसाधनपरत्वेन व्याख्याने तु शब्दरत्नकृदयं वर्त्तते नितरां पटुः । तथा च कुत्र चिदयं

[१] प्रौढमनोरमा ८५-८६ पृष्ठे । [२] प्रौढमनोरमा १९९ पृष्ठे ।

स्पष्टमेव मनोरमायाः खण्डनं कुरुते, यथा प्राक् प्रदर्शितम्। कुत्रचिच्च तेषां मनोरमावाक्यानां व्याख्यानमेव तथा विदधाति यथा तेषां विभिन्नार्थकत्वमेव जायेत। एवं रीत्या वस्तुतो मनोरमाऽसम्मतमपि स्वाभिमतं मनोरमोक्त्यैव साधयतीति अहो चातुर्य्यमस्य। परं नैषा सरणिर्बृहच्छब्दरत्ने दृश्यत इत्युभयोरनयोः शब्दरत्नयोर्भिन्नावेव लेखकावित्यत्र नावशिष्यते सन्देहः।

एतादृशानां परिवर्त्तितव्याख्यानामामनुशीलनं मन्येऽवश्यमेव पाठकानामतिप्रमोदावहं स्यादिति तानि द्वित्राणीहोदाहरामः।

## लघुशब्दरत्नकृत्परिवर्तितव्याख्यानानामुदाहरणानि-

(१) हलन्त्यमितिसूत्रव्याख्यानावसरे उपदेशपदस्य करणघञन्तत्वमुत भावघञन्तत्वमिति विचारप्रसंगे 'अतो भाव एव प्रत्ययो न्याय' इत्येवं प्रौढमनोरमायां (२४ पृष्ठे) स्पष्टमुद्घोषयता दीक्षितेन भावघञन्तत्वपक्षे स्वकीया सम्मतिः प्रकटिता। किम्बहुना "यद्यपि उपदिश्यते अनेनेति करणव्युत्पत्त्या शास्त्रमुपदेश इति भाष्यवृत्त्यादिषु व्याख्यातम्, तथापि तत्प्रौढिवादमात्रम्" इत्येवं तत्रैव ब्रुवता, स्वमतविरुद्धार्थप्रतिपादके करणघञन्तसाधकभाष्येऽपि अनादरस्तैः प्रादर्शि—इति भावघञन्तपक्षपातिनो दीक्षिता' इत्यत्र नास्ति शङ्कालेशोऽपि।

उपदेशशब्दस्य करणघञन्तत्वमेवोचितमिति मन्वानो लघुशब्दरत्नकृत्तु 'तथापि तत् प्रौढिवादमात्रम्' इति दीक्षितोक्तं वचः कथं स्वाभिमतव्यञ्जकतया व्याकुरुते लघुशब्दरत्ने (२२ पृष्ठे) इति विभाव्यताम्—'प्रौढिवादमात्रमिति। वार्त्तिककृदुक्तन्यायस्य कथंचित्सूत्रतोऽपि लाभसम्भवान्न्यासान्तरप्रवृत्तिस्ते वृथैवेति प्रौढ्या बोधयितुमेवं वाद इति भावः।' इति।

लघुशब्दरत्नस्यास्य अयं भावो यद् भाष्यमिदं प्रौढ्या=दार्ढ्येन एवं बोधयति यत् 'उपदेशनेऽजनुनासिक इदि'ति वार्त्तिककारसम्मते न्यासान्तरे प्रवृत्तिस्ते वृथैव, यत उपदिश्यतेऽनेन इति करणघञन्तनिष्पन्नोपदेशपदघटितेन 'उपदेशेऽजनुनासिक इदि'ति पाणिनीयसूत्रेणैव वार्त्तिककृदुक्तार्थस्य लाभसम्भवात्' इति। क्व दीक्षितानामाशयः! कथं वा प्रतिभावैशिष्ट्येन व्याख्यातः स शब्दरत्नकृतेति विभावयन्तु सुधियः।

(२) तस्यादित उदात्तेति सूत्रे 'ह्रस्वग्रहणमतन्त्रम्' इति दीक्षिताः। तथा च तेषाम्मते ह्रस्वदीर्घप्लुतस्वरितानामादितोऽर्द्धभागः (न तु अर्द्धा मात्रा) उदात्तो भवति। अत एव अग्रे 'अर्द्धह्रस्वशब्देन अर्द्धमात्रा लक्ष्यते' इति हरदत्तादिग्रन्थास्तु मतान्तरपरतया कथञ्चिन्नेया' इत्येवमर्द्धमात्रा उदात्ता भवतीति वादिनाम्मते स्पष्टमेवाऽरुचिं प्रकटितवन्तः। किञ्च 'तस्योदात्ततरोदात्तादर्द्धमात्रार्द्धमेव वा' इति श्लोकव्याख्यायां—तस्य=स्वरितस्य उदात्ततरा अर्द्धमात्रा बोध्या इति 'क्व वोश्वा' इत्यादि ह्रस्वाभिप्रायकम्। अर्द्धं वेति दीर्घाभिप्रायकम्। अनेनैव ह्रस्वस्यापि संग्रहात् इदमेवादर्त्तव्यमिति सूचयितुमेवकारः।' इत्येवं मनोरमायां (३६ पृष्ठे) प्रतिपादि-

तत्वेन अर्धमात्रा स्वरितस्य आदित उदात्ता भवतीति स्वमतं प्रातिशाख्यसम्मतमित्यपि तैः सूचितम्।

परञ्च अर्धह्रस्वपदेनाऽर्धमात्रारूपार्थमभिप्रयल्लँघुशब्दरत्नकृत्तु 'अर्धमात्रा एव स्वरितस्योदात्ता भवती'ति स्वामिमतेऽर्थे दीक्षितस्यापि सम्मतिरिति कथं चातुर्य्येण अभिव्यनक्तीति निभाल्यताम्—

'अविवक्षितमिति। इदं च वक्ष्यमाणं प्रातिशाख्यं यच्छाखायां तच्छाखास्थवैदिकोदाहरणविषयम्।' (लघुशब्दरत्नः ३६ पृष्ठे)। अयमाशयः—ह्रस्वग्रहणमविवक्षितम्' इति यद्दीक्षितेनोक्तं तन्न सार्वत्रिकम्, अपि तु यच्छाखास्थवैदिकोदाहरणमत्र मूले प्रदर्शितं, तच्छाखामात्रविषयम्। एतच्छाखातिरिक्तस्थले तु सर्वत्र अर्धमात्रा एवोदात्ता भवति। सा च अर्धह्रस्वपदेनात्र बोध्यते' इति।

तथा च तत्रैवाग्रे लघुशब्दरत्ने (३७ पृष्ठे) 'तनूनपाच्छचीपतिशब्दयोरि'तिमूलमनोरमाप्रतीकमुपादाय—अस्य यद्यपीत्यादिः। शेषनिघात इति। अस्य 'तथापी'ति शेषः।' इत्येवं शेषपूरणादिना दीक्षितानां स्पष्टीभूतमप्याशयमन्यरूपेणैव स्वाभिमतेन प्रदर्शयन्नयं चतुरशिरोमणिर्नैव कदापि हरिदीक्षितो भवतीति दृढोऽस्माकं विचारः। एवमेवात्र सम्पूर्णसूत्रव्याख्याने लघुशब्दरत्नकृतः प्रतिपदं चातुर्य्यं दृष्टिपथमवतरतीत्यत्र मनोरमा-शब्दरत्नयोः सूक्ष्मेक्षिकयाऽवलोकनेन स्पष्टं स्यात्।

(४) 'आदेशस्य स्थानिवत्त्वेन 'मय उञ' इति प्रकृतिभावाऽपवादभूते आन्तरतम्यादनुनासिके वकारे किम्वँति' इति प्रौढमनोरमा (१९९ पृष्ठे)

किन्तु वकारस्य भाव्यमानतया सवर्णाऽग्राहकत्वेनानुनासिकस्य 'वँ' इत्यस्यादेशता न कदाचिप्युचिता इति हेतोर्नैतद्रोचते लघुशब्दरत्नकृते। अत आह लघुशब्दरत्ने नागेशः—'अनुनासिके वकारे इति। इदं कैय टानुरोधेन। 'मय उञ' इत्यत्र विधीयमानस्य सवर्णग्राहकत्वाऽभावेन कथमत्र सः।' इति।

अस्य ग्रन्थस्याऽयमाशयो यत्-'दीक्षितस्तु मन्मतानुयायी अत्र 'वँ' इति सानुनासिकं नैव वाञ्छति, परं कैयटानुरोधेनैव तेनेत्थं प्रत्यपादीति--विचित्रमेव व्याख्यानकौशलं निभाल्यतां लघुशब्दरत्नकृतः।

एवं पूर्वोक्तैस्सोदाहरणैरेभिस्तर्कैर्लघुशब्दरत्नकारोऽयं हरिदीक्षितात्सर्वथा भिन्न इत्येवं विनिश्चिते, कोऽयं लघुशब्दरत्नग्रन्थनिर्माता भवितुमर्हतीति प्रश्ने—

## लघुशब्दरत्नग्रन्थस्य निर्माता नागेशभट्टः

नूनमस्य लघुशब्दरत्नग्रन्थस्य निर्माता विश्वविश्रुतविमलकीर्त्तेर्विरचितानेकग्रन्थान्महावैयाकरणभट्टनागेशादभिन्न एव, (१) विषयप्रतिपादनशैलीसाम्यात्। (२) नागेशभट्टविरचितग्रन्थान्तरेषु वर्त्तमानानां ग्रन्थप्रघट्टकानामत्र लघुशब्दरत्नेऽपि तैनैव रूपेण ग्रन्थाङ्गतयोपलम्भात्, (३) बृहच्छब्देन्दुशेखरादिग्रन्थेषु निर्णीतानां दीक्षितमतविरुद्धानां नागेशभट्टसिद्धान्तानामत्र लघुशब्दरत्नेऽपि व्यञ्जनया, संकेतेन, साक्षाद्वा प्रतिपादितत्वाच्च।

## प्रथमस्तर्कः

बृहच्छब्देन्दुशेखर-लघुशब्देन्दुशेखर-मञ्जूषा--परिभाषेन्दुशेखरादिनागेशभट्ट-निर्मितेषु ग्रन्थेषु यादृशी विषयप्रतिपादनशैली, यादृशश्च परमतखण्डनप्रकारो, यादृशश्च व्याख्यानपाटवं, ये ये च स्वमतसाधकत्वेनोपस्थापितास्तर्का, यादृशश्च भाषाप्रवाह-स्तेषां सर्वेषामपि साकल्येन लघुशब्दरत्नेष्युपलम्भात्—ग्रन्थोऽयं नागेशभट्टेन विरचित इत्यर्थे नाऽवशिष्यते सन्देहलेशप्रसरः ।

## अपरस्तर्कः

खण्डनबुद्ध्या, तन्मण्डनेच्छया स्वमतपोषकतया वाऽन्यग्रन्थभागानां तद्ग्रन्थ-कर्त्तुर्नामनिर्देशपुरस्सरं 'यत्तु' 'केचित्तु' 'परेतु' 'अन्ये तु' इत्यादिरूपेण स्वग्रन्थेपूद्धरणं प्राचीनविद्वत्परिपाटीसम्मतं यद्यपि, तथापि अन्यलेखकरचितं ग्रन्थं, ग्रन्थभागान् वा स्वविरचितत्वेन प्रकटनं, प्रकाशनं, प्रसारणन्तु सर्वथा गर्हितमिति, नहि कश्चिदपि यशस्वी ग्रन्थनिर्माता कदाचिदपि कैश्चिदन्यैर्विलिखितेभ्यो ग्रन्थेभ्य उद्धृतान् ग्रन्थ-प्रघट्टकान् स्वनिर्मितत्वेन ख्यापयन्नात्मनो विमलकीर्त्तिमण्डलं कलङ्ककलुषितं चिकीर्षेत् स्वप्नेऽपि । स्वनिर्मितग्रन्थेषु स्वरचितान्यग्रन्थेभ्यो ग्रन्थभागानां स्वनाम्नैवोद्धरणन्तु न दोषावहमितीयं साधारणी स्थितिः ।

अस्मत्सम्पादिताद्वाराणसेयसरस्वीभवनग्रन्थमालायां प्रकाशिताद्भट्टश्रीनागेश-विरचिताद् बृहच्छब्देन्दुशेखरमहाग्रन्थादुद्धृतानां बहूनां प्रघट्टकानामत्र क्वचित्तैनैव रूपेण, क्वचित्स्वल्पपरिवर्त्तनेन वर्त्तमानत्वाद्धेतोर्लघुशब्दरत्नग्रन्थोऽयं भट्टनागेशविर-चित इति राद्धान्ते नैवावशिष्यते शङ्काकलङ्कपङ्कः । बृहच्छब्देन्दुशेखरादुद्धृतेभ्य एव कतिचिद् भागेभ्यो, लघुशब्देन्दुशेखरस्य कतिचिद् भागेभ्यश्च लघुशब्दरत्नस्य निर्माणं नागेशभट्टेन सम्पादितमित्यपि केचन तत्त्वविदो वदन्ति । तत्र पाठकमनस्तोषाय केषा-ञ्चित् तत्रत्यानां समानानां ग्रन्थभागानामुद्धरणं मन्ये नाऽप्रासाङ्गिकं स्यात् । तथाहि—

| बृहच्छब्देन्दुशेखरपाठः | लघुशब्दरत्नपाठः |
|---|---|
| (१) 'हयवरट् । हकारोऽत्र इण्-अश्-हश्-अङ्-ग्रहणेषु हकारग्रहणार्थं इत्युपक्रम्य—'नन्विदं न्यूनम् । अमूग्रहणेऽपि ग्रहणात् । न च तत्र फलाभावः । 'बहुपुमूकुहित्याहे'त्यादौ पुमः खयीति रुत्वस्य फलस्य स्पष्टत्वात् । अनुकार्य्यानु-करणयोरभेदविवक्षया पदान्तत्वाऽभावेन ककारादेर्जश्त्वप्रवृत्त्यभावादिति चेन्न ।'…… 'अत एवोच्चैरुदात्त इति सूत्रे भाष्यम्—'न पुनरन्तरेणाचं व्यञ्जनस्यो-च्चारणमपि भवतीति । अत एव अटि हकार-प्रयोजनकथनावसरे भाष्ये शश्छोऽटीत्यु- | 'इण्ग्रहणेष्विति ।' नन्विदं न्यूनम् । अम्ग्रहणेऽपि ग्रहणात् । फलन्तु बहुपुमूकुह् इत्याहेत्यादौ 'पुमः खयि' इति रुत्वम् । गवित्ययमाह इत्यादिवत् अपदान्तत्वात् ककारादेर्न जश्त्वमिति चेन्न ।…… अत एव 'उच्चैरुदात्त' इति सूत्रे भाष्यं-'न पुनरन्तरेणाऽचं व्यञ्जनस्योच्चारणमपि भवती'ति ।…… अत एवाटि हकार-प्रयोजनकथनावसरे भाष्ये 'शश्छोटी'त्यु-पन्यस्य तदुदाहरणं नोपन्यस्तम् । हकार-परशकाराऽसम्भवेन शश्छोटीति प्रसङ्गो-च्चारितमिति च कैयटेन व्याख्यातम् । अमि |

बृहच्छब्देन्दुशेखरपाठः

पन्यस्य तदुदाहरणं नोपन्यस्तम्। हकार-परशकारासम्भवेन शश्छोऽटीति प्रसङ्गो-च्चारितमिति च कैयटेन व्याख्यातम्। अमि हकारप्रयोजमिति च भाष्ये नोक्तमिति दिक्।' इति बृहच्छब्देन्दुशेखरे (४-५ पृष्ठयोः) वर्त्तमानोऽयं पाठः प्रायस्तेनैव रूपेण लघुशब्दरत्नेऽपि (२-४ पृष्ठेषु) दृश्यते।

(२) 'किञ्च ब्राह्मणस्य कम्बल' इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिवदनन्तर-समीपादिशब्दप्रयोगमन्तरा सामीप्याद्यप्रतीतौ वृत्तौ सुतरां तदप्रतीतिरिति सामीप्यादेः षष्ठ्यर्थत्वाभावः। पृथक् प्रयोगे त्वसामार्थ्याद्वृत्तेरेवाऽभाव इत्यस्य समासस्य क्लिष्टत्वम्। अत एव चित्रगुरित्यतश्चित्रा गावो यस्येत्यतश्च चित्रगवीसमीपवर्त्तिवृक्षादेरप्रतीतिः। चित्रगवीनामिति क्वचिद्दन्त्यनकारपाठस्तु लेखकप्रमाद एव। एवं चाऽऽनन्तर्यादयः षष्ठ्यर्था एव न भवन्ति। अस्तेरनन्तरे समीपे वेत्यादि भाष्यन्तु अनन्तरादिपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका, स्थाननिरुपितसम्बन्धार्थिका वेत्यभिप्रायकम्। अत एव मतुप्सूत्रे कैयटेन गावोऽस्य सत्यनन्तरा इत्यर्थे मतुप्शङ्कापरभाष्यव्याख्यावसरे आनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधिरित्युक्तं, न तु तस्य षष्ठ्यर्थत्वेन प्रत्ययार्थत्वमुक्तम्। भगवता भाष्यकारेण चाऽसामर्थ्याद्वृत्त्यभाव उक्तः। षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात्काऽसामर्थ्यम्। तस्माद्यत्र षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिः, तत्राऽनन्तरादिपदाध्याहार एवेति तत्त्वम्। तत्र सूत्रानुपात्ताऽस्त्यर्थान्तर्भावेण बहुव्रीहिवदानन्तर्याद्यर्थान्तरर्भावेण बहुव्रीहि-मत्वर्थीयौ—चित्रा

लघुशब्दरत्नपाठः

हकारप्रयोजनमिति च भाष्ये नोक्तमिति दिक्।' (—लघुशब्दरत्नः)

(२) 'क्लिष्टत्वादिति। ब्राह्मणस्य कम्बल इत्यादावसत्यपि प्रकारणादौ स्वस्वामिभावादिप्रतीतिवदनन्तरसमीपादिशब्द—प्रयोगमन्तरा सामीप्याद्यप्रतीतेस्तस्य षष्ठ्यर्थत्वाऽभावात्। ......चित्रगवीणामिति। कुमति चेति णत्वम्। दन्त्यपाठस्तु लेखकप्रमादात्।......अस्तेरनन्तरे, समीपे वेत्यादि भाष्यन्तु अनन्तरादिपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका, स्थानपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका वा षष्ठीत्यर्थभिप्रायकम्। अत एव मतुप्सूत्रे कैयटेन गावोऽस्य सत्यनन्तरा इत्यर्थे मतुप्शङ्कापरभाष्यव्याख्यावसर आनन्तर्यम् अस्त्यर्थवत् प्रकृत्यर्थोपाधिरित्युक्तम्। न तु तस्य षष्ठ्यर्थत्वेन प्रत्यार्थत्वमुक्तम्। भाष्यकृता चाऽसामर्थ्यात्तत्र वृत्त्यभाव उक्तः। षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात्काऽसामर्थ्यम्। तस्माद्यत्र षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिस्तत्राऽनन्तरादिपदाध्याहार एव बोध्यः। तत्रास्तिग्रहणाभावे, तस्याऽन्यफलकत्वे वा सूत्रानुपात्तास्त्यर्थान्तिर्भावेण मत्वर्थीयवत्, बहुव्रीहिवच्च तथा भूतानन्तर्याद्यर्थान्तर्भावेण 'चित्रा गावोऽस्य सत्यनन्तरा' इत्याद्यर्थे बहुव्रीहि-मत्वर्थीयौ न भवतोऽनभिधानादिति मतुप्सूत्रे भाष्ये स्पष्टम्। अनन्तरादेरिदमर्थत्वे तस्येदमिति शैषिकोऽपि

बृहच्छब्देन्दुशेखरपाठः

गावः सन्त्यस्यानन्तरा इत्यर्थे न भवतोऽनभिधानादिति मतुप्सूत्रे भाष्ये स्पष्टम्। अनन्तरादेरिदमर्थत्वे तस्येदमिति शैषिको नेति तस्येदमित्यत्र भाष्ये। अनन्तरादिशब्दैः षष्ठीतत्पुरुषस्तु भवत्येवेत्याद्यूह्यम्। इत्येवं बृहच्छब्देन्दुशेखरे (९-१० पृष्ठयोः) पठ्यमानो ग्रन्थभागः स्वल्पतमेन व्यत्यासेन प्रायस्तेनैव स्वरूपेण लघुशब्दरत्नेऽपि (७-८-९ पृष्ठेषु) लभ्यते।

लघुशब्दरत्नपाठः

अनभिधानान्नेति तस्येदमित्यत्र भाष्ये। ........'अनन्तरादिशब्दैः षष्ठीतत्पुरुषादिस्तु भवत्येव'—इति।

बृहच्छब्देन्दुशेखरपाठः (१०-११ पृष्ठयोः)

(३) 'आद्यन्तौ टकितौ' इत्यादौ यथासंख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नाऽन्वयमात्रेण सहविवक्षामाश्रित्य द्वन्द्वसाधुत्ववदिहाऽपि प्रथमतो लकारो, हल्पदवाच्यश्चेदिति सामान्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वोपपादनात्। ततो विशेषजिज्ञासायामादिरन्त्येनेत्याद्येकवाक्यतया विशेषतो वाक्यार्थबोधो लक्ष्यसंस्कारक इत्यदोषः।

किञ्च सहविवक्षा सह वक्तुं वक्तुरिच्छा, सा चाऽऽदिरन्त्येनेति सूत्रप्रणयनानुपपत्त्या पाणिनेः ततः पूर्वमपि हल्पदार्थज्ञानादक्षतैव। बोद्धबोधस्तु क्रमेणैवेति चेन्न।

आद्यन्तावित्यादौ यथासंख्यसूत्रारम्भसामर्थ्येन तथा साधुत्वाङ्गीकारेऽपि, अन्यप्रकारेण तस्य साधुत्वकल्पने मानाभावात्। किञ्च श्रोतॄणां सहबोधो भवत्वितीच्छया सह वक्तुमिच्छाया एव सहविवक्षात्वेन, श्रोतॄणामपि सहबोधस्यैवौचित्यात्। तादृशेच्छया तेषां तादृशबोधाऽजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः।'

लघुशब्दरत्नपाठः (११-१२-पृष्ठयोः)

(३)असम्भवादिति। न च आद्यन्तौ टकितौ इत्यादौ यथासंख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षामाश्रित्य यथा द्वन्द्वसाधुत्वं, तथा इहापि प्रथमतो 'लकारो, हल्पदवाच्यश्चेदि'ति सामान्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वम्, ततो विशेषजिज्ञासायामादिरन्त्येनेत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः।

किञ्च सहविवक्षा सह वक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनानुपपत्त्या पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानादक्षतैव। बोद्धबोधस्तु क्रमेणैवेति वाच्यम्।

'आद्यन्तौ' इत्यादौ यथासंख्यसूत्राऽऽरम्भसामर्थ्येन तथा साधुत्वाङ्गीकारेऽपि, अन्यप्रकारेण तस्य साधुत्वकल्पने मानाभावात्। किञ्च श्रोतॄणां सहबोधो भवतु इतीच्छया सह वक्तुमिच्छाया एव सहविवक्षात्वेन, श्रोतॄणामपि सहबोध एवोचितः। तादृशेच्छया तेषां तादृशबोधाजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः।'

इत्ययं बृहच्छब्देन्दुशेखरे भट्टनागेशेन प्रतिपादितो विषयस्तेनैव रूपेण तैरेव शब्दैर्लघुशब्दरत्नेऽपि वर्णितः। एवमन्यत्राऽपि सर्वत्र एवमेव पूर्णं साम्यं बृहच्छब्देन्दुशेखर-लघुशब्दरत्नयोः पदे पदे दृष्टिपथमुपयातीत्युभयोरेककर्तृत्वं स्पष्टमेव।

इ

## तृतीयस्तर्कः

शेखरादिग्रन्थेषु स्वप्रतिभाविशेषप्रभावात्परमतनिरसनपुरस्सरं व्याख्यातानां विशेषार्थानां, स्थिरीकृतानां सिद्धान्तानाञ्चात्रापि लघुशब्दरत्ने तेनैव रूपेणोपलब्धेरयं ग्रन्थो नागेशभट्टेनैव विरचित' इति साधनीयेऽर्थेऽतितरां प्राबल्यं, दाढर्यञ्चोपजायते इति तत उद्धृतैर्द्वित्रैर्ग्रन्थसन्दर्भैरुपदर्शयामः। तथाहि—

(क) 'आदिरन्त्येनेति सूत्रे स्वस्य च रूपस्येति प्रतीकमादाय 'एतत्फलितकथनमेव भाष्ये, मूले चेति पूर्वमुक्त्वा, 'स्वमित्यनुवृत्तिपरत्वेन व्याख्यानन्तु (प्रौढमनोरमोक्तम्) हेयमेव। अनुवृत्तौ फलाभावात्।' इत्येवं लघुशब्देन्दुशेखरे 'स्व'मित्यस्यानुवृत्तेर्वैयर्थ्यं प्रतिपादयामास भट्टनागेशः। स एव चाभिप्रायः प्रायस्तैरेव शब्दैर्लघुशब्दरत्नेऽपि (२० पृष्ठे) स्फुटीकृतो दृश्यते–यथा 'स्वशब्दानुवृत्तेश्च न फलम्। भाष्येऽपि एतत्फलितार्थकथनमेव स्वस्य च रूपस्येति।' (लघुशब्दरत्नः)।

(ख) भट्टोजिदीक्षितैरादृताऽपीयम् अकृतव्यूहपरिभाषा शेखरकृतां नागेशभट्टानां सर्वथाऽसम्मतेति विदन्ति सर्वेऽपि वैयाकरणाः। तथा च लघुशब्देन्दुशेखरे (परिभाषाप्रकरणान्ते) 'इयं परिभाषा निष्फला, निर्मूलेति परिभाषेन्दुशेखरे निरूपितम्।' इत्याहुर्नागेशभट्टाः। स एवार्थः लघुशब्दरत्नेऽपि (८३ पृष्ठे) परिदृश्यताम्—'यदि तु सेढ्रुष इत्यादौ·········तत्सिद्धिरित्युच्यते, तदा एषा परिभाषा निष्फलेति बोध्यम्। अत एव एषा भाष्ये न क्वापि व्यवहृतेत्यन्यत्र[1] विस्तरेण निरूपितम्।' (लघुशब्दरत्नः)।

(ग) 'सुद्ध्युपास्य इत्यादौ जातिपक्षे यथासंख्यसूत्रेणाऽपि निर्वाह इति स्थानेन्तरतम इति सूत्रे भाष्ये स्पष्टम्।' इति लघुशब्देन्दुशेखरे प्रतिपादिता दीक्षितमतविरुद्धा व्यवस्था लघुशब्दरत्नेऽपि (२०८ पृष्ठे) 'परे तु[2] व्यक्तिपक्षे·········' इत्यादिग्रन्थेन समादृतेति स्पष्टमेव।

(घ) 'एतेन एकशेषप्रकरणस्थ-स्त्रीगवीणामिति कैयटप्रयोगः समर्थितः। तत्र णत्वरहितपाठस्तु लेखकप्रमादादित्याहुः।' इति बृहच्छब्देन्दुशेखरे (१२१८ पृष्ठे) व्यक्तीकृतोऽभिप्रायः 'चित्रगवीणामिति। कुमति चेति णत्वम्। दन्त्यपाठस्तु लेखकप्रमादात्। एवं स्त्रीगवीणामित्येकशेषस्थकैयटप्रयोगेऽपि बोध्यम्।' इत्येवंरूपेण

---

[1] अत्र नागेशभट्टप्रधानशिष्यः श्रीवैद्यनाथो, भैरवमिश्रश्च लघुशब्दरत्नव्याख्याने भावप्रकाशे, भैरव्याञ्च 'अन्यत्र विस्तरेण निरूपितम्' इति वाक्यांशघटकान्यत्र इति पदस्य 'अन्यत्र=परिभाषेन्दुशेखरे' इत्येवं व्याख्यानमकार्ष्टाम्। अनेनापि लघुशब्दरत्नस्य नागेशकृतित्वं सिद्ध्यति। अन्यथा परिभाषेन्दुशेखरस्य नागेशप्रणीतत्वेन हरिदीक्षितकृतलघुशब्दरत्नग्रन्थे लिखितस्य 'इत्यन्यत्र विस्तरेण निरूपितम्' इत्यस्य 'परिभाषेन्दुशेखरे विस्तरेण निरूपितमि'त्येवं व्याख्यानं कथं नामोचितं स्यात्।

[2] नागेशभट्टाश्च 'परे तु' वस्तुतस्तु' इत्येवमेव प्रायशः स्वमतं प्रकटयन्तीति प्रतिपादितमस्माभिर्बृहच्छब्देन्दुशेखरभूमिकायाम्।

लघुशब्दरत्नेऽपि दृष्टिपथमवतरतीति स्थालीपुलाकन्यायेनेमान्युदाहरणानीति विदाङ्कुर्वन्तु सदहृया विपश्चितः।

किम्बहुना, नागशभट्टैः प्रायशः प्रतिपदं ग्रन्थेऽस्मिन् लघुशब्दरत्नाख्ये, पूर्वं विरचितेषु स्वकीयग्रन्थेषु प्रतिपादिताः सिद्धान्ता यथास्थानं नितरां कौशलेन समायोजिता इति एतद्ग्रन्थतत्त्वान्वेषणपराणामनायासेनैव स्फुटी भवतीति नात्र वैमत्यं विदुषाम्।

किञ्च नागेशभट्टप्रधानशिष्यो वैद्यनाथः स्वनिर्मिते लघुशब्दरत्नव्याख्याने भावप्रकाशे, लघुशब्देन्दुशेखरटीकायां चिदस्थिमालायां च बृहच्छब्दरत्नग्रन्थभागस्योद्धरणं[1] 'मान्याः' 'यत्तु मान्याः', 'मान्यास्तु' 'मान्योक्ति'रित्येवं सम्मानसूचकशब्दप्रयोगपूर्वकमेव कुरुते इति प्रागवोचाम। लघुशब्दरत्न-शब्देन्दुशेखर-परिभाषेन्दुशेखर-मञ्जूषाऽऽदिग्रन्थान्तर्गतविषयाणां संकेतावसरे तु 'अत्र[2] गुरुचरणाः' 'गुरुचरणानामाकूतं'

---

[1](क) 'एतेन पुम्कहौ इति (बृहच्छब्दरत्ने) उदाहरन्तो मान्या मान्या एव।' (भावप्रकाशः, ८ पृष्ठे)।

(ख) 'अत्र मान्याः—अकृतव्यूहपरिभाषया सवर्णदीर्घो न। (भावप्रकाशे ७८ पृष्ठे) अयं पाठः अनेनैव रूपेण बृहच्छब्दरत्ने ५१ पृष्ठे द्रष्टुं शक्यः।

(ग) 'परिनिष्ठितेति। यत्त्वत्र पूरणेत्यत्रत्यसमानाधिकरणेनेति ज्ञापकमि'ति मान्याः, तत्प्राचामनुरोधेन'। (भावप्रकाशः, ८० पृष्ठे)।

[2](क) 'अत्र कवर्गवदुत्तरपदेन स्वघटिताक्षिप्तसमासस्य, विभक्तयाक्षिप्तप्रकृतेश्च प्रत्यासत्तिन्यायेन एकत्वाश्रयणेऽपि चित्रगवीणामित्यादौ णत्वं भवत्येव। लिङ्गविशिष्टपरिभाषया विभक्तिप्रकृतेः समासत्वसत्त्वात्।' इत्ययं बृहच्छब्देन्दुशेखरस्थः (१२१ पृष्ठे) पाठः भावप्रकाशे (२३ पृष्ठे) अर्थत एवं समुद्धृतो वर्तते–'अत्र गुरुचरणाः–लिङ्गविशिष्टपरिभाषया तत्प्रकृतौ समासत्वस्य सत्वात्तथाश्रयणेऽपि णत्वं भवत्येव। इत्थं हि तदाऽऽकूतम्।' इति।

(ख) हकारग्रहणस्य 'अम्'प्रत्याहारे फलप्रदर्शनावसरे लघुशब्दरत्ने प्रस्तुतस्य 'बहुपुम्व्ह इत्याह' इति प्रयोगस्य साधुत्वप्रसंगे भावप्रकाशे (७ पृष्ठे) 'एवं चेदं फलं युक्तमिति गुरुचरणानामाकूतम्'—इति।

(ग) 'प्रतिज्ञाशब्दस्येति। भावाङन्तस्येत्यर्थ' इति (३१ पृष्ठस्थस्य) लघुशब्दरत्नस्य व्याख्याने भावप्रकाशः (५४ पृष्ठे)—'नन्वेवं लक्षणा वृथेत्यत आह-भावाङन्तस्येति। प्रतिज्ञया समधिगम्यमानमानुनासिक्यमेषामिति केनचिदुक्तं मध्यमपदलोपित्रिपदव्यधिकरणबहुव्रीहिं लक्षणाभावेन संखण्डचैवं गुरुणोक्तमिति बोध्यम्।'—इति।

(घ) ध्वनितं चेदं 'नलोपः सुप्' इतिसूत्रे इति तत्रैवोद्द्योते, परिभाषेन्दुशेखरे च निरूपितं गुरुचरणैरत आह—अर्थनिमित्तेति।' (इति ८८ पृष्ठे भावप्रकाशे)।

(ङ) 'साध्यत्वं चोत्पाद्यमानत्वमेवेत्यन्यत्र विस्तरः।' इति ६२ पृष्ठस्य लघुशब्दरत्नगतस्य 'अन्यत्र विस्तर' इति व्याख्यांशस्य विवरणे भावप्रकाशे—(९० पृष्ठे) 'स्पष्टीकृतं चैतद्गुरुचरणैर्धात्वर्थवादे, उपसर्गवादे च मञ्जूषायाम्। तदाह अन्यत्रेति'—इत्युक्तम्।

'निरूपितं गुरुचरणैः' 'स्पष्टीकृतं गुरुचरणैरि'त्येवं रूपेणैव ग्रन्थकर्तुः स्मरतीति पूर्वोक्तैः सोदाहरणैर्दृढतरैस्तर्केरतोऽपि हेतोश्चाऽयं बृहच्छब्दरत्नो हरिदीक्षितविरचितो, लघुशब्दरत्नश्च भट्टनागेशविरचित इति निस्सन्देहं सिध्यती'ति नात्र विपरीतपक्ष-प्रसरावसरोऽपि।

अत एव लघुशब्दरत्ने 'अन्यत्रोक्तम्', 'अन्यत्र निरूपितम्', 'अन्यत्र विस्तरः', 'अन्यत्र विस्तरेण निरूपितम्', इत्येतद्वाक्यांशान्तर्गतस्य 'अन्यत्र' इतिपदस्य 'लघुशब्दे-न्दुशेखरादौ'—इत्येवं वैद्यनाथ-भैरवमिश्राणां [1]व्याख्यानमप्याञ्जस्येन सङ्गच्छते। अन्यथा=लघुशब्दरत्नस्य हरिदीक्षितविरचितत्वे, तदन्तर्गतेन 'अन्यत्र निरूपितमि'-त्यादिवाक्यघटकेन 'अन्यत्र' इति पदेन हरिदीक्षितनिर्मितग्रन्थानामेव बोधौचित्येन टीकाकर्तॄणां तथा व्याख्यानस्य सर्वथाऽनौचित्यप्रसङ्गः स्यात्। तदुक्तं बृहच्छब्देन्दु-शेखरभूमिकायाम्—

'अद्य यावत् सम्मुद्रय सर्वांशेन क्वचिदप्यप्रकाशितस्य स्वगुरुभिर्भट्टोजिदीक्षित-पौत्रैः श्रीहरिदीक्षितैरभ्यूहितस्य प्रौढमनोरमाव्याख्यानभूतस्य बृहच्छब्दरत्नापरनाम-धेयस्य शब्दरत्नस्योपर्य्युपाक्षिप्तानां दोषाणामुद्धाराय, अथ च तत्र बृहति शब्दरत्ने प्राचीनाचार्यमतानुसारेण प्रतिपादितानां स्थूलयुक्तिसिद्धसिद्धान्तानां पुनः संशोधन-द्वारा स्वगुरोर्वैदुष्यस्यापि विद्वत्सदसि संस्थापनाय, स्वानुकूलमतोपष्टम्भाय च वास्त-विकं छात्रत्वमाविष्कुर्वता श्रीनागेशभट्टेन स्वगुरुनाम्नैव, न तु स्वनाम्ना, एकमन्यत् प्रौढमनोरमाव्याख्यानं भावगभीरं लघुशब्दरत्नं नाम व्यरचि।

एकेनैव नागेशभट्टविदुषा विरचितत्वादुभयोरनयोश्शेखर-लघुशब्दरत्नग्रन्थ-योर्न केवलं विषयप्रतिपादनशैलीसाम्यमपि तु यत्र तत्रोपलभ्यमानं पाठयोरपि सर्वथा साम्यं नाऽस्वाभाविकम्। केवलमेतयोरियान्भेदो—यदेकः सिद्धान्तकौमुदीप्रतीक-मुपादाय विरचितोऽन्यश्च प्रौढमनोरमाप्रतीकान्।

अत एव हरिदीक्षितनाम्ना लिखितोऽपि लघुशब्दरत्नग्रन्थोऽलौकिकप्रतिपादन-शैल्या सूचितनिजवास्तविकलेखको नागेशभट्टकृतिष्वेव पदं निधत्ते। सुदृढं प्रमाणं

[1](क) 'टकारस्यापीति। अत्र यद्वक्तव्यं तदन्यत्रोक्तम्' इति ३२ पृष्ठे लघुशब्द-रत्नः। 'अन्यत्र=लघुशब्देन्दुशेखरे' इति भैरवी। 'रप्रत्याहार विषये यद्व-क्तव्यं खण्डनं तच्छब्देन्दुशेखरे उक्तमित्यर्थः' इति ५५ पृष्ठे भावप्रकाशः।

(ख) 'अत्र यथा नासिकायाः स्थानत्वं तथाऽन्यत्र निरूपितम्' इति ४१ पृष्ठे लघु-शब्दरत्नः। 'अन्यत्र=शब्देन्दुशेखरादौ' इति ६९ पृष्ठे भावप्रकाशः।

(ग) 'प्रकृते तु निरधिष्ठानाऽऽरोपाऽसम्भवेन हननसजातीयं प्रयोगे कार्य्यप्रवर्त्तनमा-वश्यकमेवेत्यन्यत्र विस्तर' इति ४९ पृष्ठे लघुशब्दरत्नः। '.........इत्या-दिकं शब्देन्दुशेखरादौ द्रष्टव्यमिति भाव' इति ७७पृष्ठे भावप्रकाशः।

(घ) 'अत एव एषा(अकृतव्यूहपरिभाषा) भाष्ये न क्वाऽपि व्यवहृतेत्यन्यत्र विस्तरेण निरूपितम्' इति ८३ पृष्ठे लघुशब्दरत्नः। 'अन्यत्र=परिभाषेन्दु शेखरे' इति भैरवी। 'अन्यत्रेति। परिभाषेन्दुशेखरे इत्यर्थं' इति १२४ पृष्ठे भावप्रकाशः।

चाऽत्र 'गुरुं नत्वाश्रये बद्धशब्दरत्नेन्दुशेखरम्' इति लघुशब्दरत्नटीकायां नागेशभट्टशिष्य-पायगुण्डोपाह्ववैद्यनाथोक्तिरपि।

एतेन—'यत्तु केचित् लघुशब्दरत्नोऽपि नागेशभट्टेनैव विरचितः, शब्देन्दुशेख-रादिग्रन्थानुपूर्व्या बहुश उपलम्भात्, व्याख्यानसाम्याच्चे'ति। तन्न। गुरुशिष्योक्त तादृशसाम्यस्य बहुत्र दर्शनात्। तदीयग्रन्थापेक्षया (लघु)शब्दरत्नस्यातिशयितगाम्भीर्य-पूर्णलेखात्, तस्य हरिदीक्षितकृतित्वे बाधायोगाच्चेति श्रीसभापतिशर्मोपाध्याया लघुशब्दरत्नमधिकृत्य लघुमञ्जूषाभूमिकायां प्रत्यपीपदन्, तदेतद्धरिदीक्षितकृतबृह-च्छब्दरत्नाऽपर्य्यालोचनमूलकं, कुण्डलितपाठयुतबृहच्छेखरग्रन्थाऽदर्शनमूलकञ्चेति सुधियो विभावयन्तु।' इति

नागेशभट्टेन विदुषा न केवलमेकोऽयमेव ग्रन्थोऽज्ञानतिमिरदिनमणेः शास्त्र-विज्ञानप्रदस्य स्वगुरोर्हरिदीक्षितस्य ऋणादात्मानं मोचयितुं गुरुनाम्नैव व्यरचि, अपि तु स्वस्य योगक्षेमनिर्वाहसमर्थाया वृत्तेरपि कल्पयितुः शृङ्गवेरपुराधीशस्य स्व-शिष्यत्वमुपागतस्य[1] रामसिंहस्याऽपि कीर्त्तिवल्लरीमाचन्द्रदिवाकरौ सपुष्पफलां चिकी-र्षता विशिष्टार्थप्रतिपादनपरा अध्यात्मरामायणस्य, वाल्मीकिरामामणस्य च टीका स्वशिष्यनाम्नाऽपि व्यलेखीति, अन्यनाम्ना ग्रन्थलेखनव्यसनिनोऽस्य न किमप्या-श्चर्यकरम्।

## लघुशब्दरत्नस्य नागेशभट्टविरचितत्वसाधकानि ग्रन्थकर्त्तुर्व्यवहाराणि।

स्वगुरुनाम्नाऽपि विलिखितेऽस्मिन् लघुशब्दरत्नग्रन्थे लेखनकलाकोविदोऽयं नागेशभट्टसुधीर्न जाने, ज्ञात्वा, अनिच्छया वा—तथाऽऽचरितवान् यथा चतुरा विद्वांसोऽनायासेनैवास्य ग्रन्थस्य हरिदीक्षितभिन्नकर्तृकत्वं जानीयुरिति। तेषु मुख्यान् एकद्वान् व्यवहारानत्र प्रसङ्गाद् विद्वत्प्रमोदाय प्रदर्शयन्तः प्रसङ्गममुमु-पसंहरामः। तथाहि—

(१) बृहच्छब्दरत्नग्रन्थप्रारम्भे—'पितामहकृताम्' 'विद्वत्प्रमोदप्रदाम्' इत्येवं प्रौढमनोरमाकर्त्तारं भट्टोजिदीक्षितं स्वपितामहत्वेन ख्यापयति तद्ग्रन्थलेखकः।

---

[1] 'विसेनवंशजलधौ पूर्णः शीतकरोऽपरः।
तेन श्रीरामभक्तेन सर्वा विद्याः प्रजानता ॥१॥
शृङ्गवेरपुरेशेन, रिपुकक्षदवाग्निना।
अर्थिनां कल्पवृक्षेण विद्वज्जनसभासदा ॥२॥
नागेशभट्टशिष्येण बध्यते रामवर्मणा।
सेतुः परोपकृतयेऽध्यात्मरामायणाम्बुधौ' ॥३॥
इत्येवं श्लोकान् उल्लिख्य प्रवर्त्तमानेयमध्यात्मरामायणटीका स्वशिष्यरामसिंह-नाम्ना नागेशभट्टेनैव विरचितेति विदन्ति नागेशभट्टलेखनीप्रसृतशब्दझर्झरीप्रसूता-ऽलौकिकानन्दप्रवाहमाधुरीरसास्वादनविलक्षणरुचयो विपश्चितः।

ग्रन्थाभ्यन्तरेऽपि च यत्र तत्र प्रसङ्गतः क्रियासमभिहारेण[1] पितामहचरणान्, स्वपितृव्यचरणांश्च समुल्लिखन्नतितरामनुभवत्यानन्दसन्दोहम्। परं लघुशब्दरत्ने पितामहत्वेनैकवारमपि भट्टोजिदीक्षितं, किं वा पितृव्यत्वेन कौण्डभट्टं कुत्रचिदपि ग्रन्थकृन्न सस्मारेति किं नैतदाश्चर्यकरम्! किम्बहुना, लघुशब्दरत्नग्रन्थे बृहच्छब्दरत्नात् केवलं 'शेषविभूषणमीडे' इति एकमेव प्रथमं मङ्गलाचरणश्लोकमेवोपगृह्णता, पितामहपदघटितं द्वितीयं श्लोकं च परित्यजता ग्रन्थकृता व्यञ्जनया सूचितमेव सहृदयानां यन्नाऽस्य लघुशब्दरत्नकर्तुर्भट्टोजिदीक्षितः पितामहो भवतीति।

एवमेव बृहच्छब्दरत्नस्य पूर्वार्द्धान्ते, ग्रन्थादौ च पठितानां हरिदीक्षितनाम्ना घटितानां श्लोकानां लघुशब्दरत्नेऽसंग्रहोऽपि 'नायं हरिदीक्षितोऽस्य लघुशब्दरत्नग्रन्थस्य लेखको भवती'ति ग्रन्थकर्तुर्हृद्गतं भावमभिव्यनक्तीति विदाङ्कुर्वन्तु विद्वांसः।

(२) घ. च. इत्येवं संकेतितयोर्लघुशब्दरत्नप्राचीनहस्तलिखितपुस्तकयोः स्वादिसन्धिसमाप्तौ 'विस्तरस्तु अस्मत्कृते शब्दरत्ने, मदन्तेवासिकृते शब्देन्दुशेखरादौ च द्रष्टव्यः।' इत्येवं पाठः समुपलभ्यते। पाठेनाऽनेन किं व्यज्यते इति न भवति तिरोहितं सहृदयविद्वद्वरेण्यानाम्।

स्वशिष्यरचितानां शब्देन्दुशेखरादिग्रन्थानामपि स्वरचितबृहच्छब्दरत्नग्रन्थसाम्येन स्वग्रन्थे स्मरणं गुरोर्हरिदीक्षितस्य न भवति स्वाभाविकम्। भारतीयपरम्परायां न हि कश्चिदपि गुरु; स्वग्रन्थेषु व्याख्यातेभ्यः पदार्थेभ्योऽप्यधिकं बुभुत्सून् स्वशिष्यनिर्मितग्रन्थाऽवलोकनाय प्रेरयन् श्रुतो, नाऽपि दृष्टश्च।

अयं तु नागेशभट्ट[2] एव यः स्वग्रन्थानां विशेषप्रचारप्रसरायाऽध्येतृजनसौकर्य्याय च पूर्वं, पश्चाद्वा निर्मितेषु स्वकीयेषु ग्रन्थेषु स्वनाम्ना, स्वगुरुनाम्ना वा लिखितेषु प्रायशः स्वकीयानां सर्वेषामपि ग्रन्थानां नामानि तत्तग्रन्थान्तर्गतविषयव्याख्यानप्रसङ्गेन साक्षात्, भङ्गयन्तरेण वा समायोजयत्। तदुक्तमस्माभिर्बृहच्छब्देन्दुशेखरभूमिकायाम्—

---

[1](क) 'भाष्यस्य प्रौढिवादपरताया आवश्यकत्वे पितामहचरणोक्तेरेव शरणीकरणीयत्वात्।' (बृहच्छब्दरत्ने ४१ पृष्ठे)।

(ख) 'शब्दकौस्तुभे पितामहचरणैरुक्तत्वेन दोषाभावात्।' बृहच्छब्दरत्नः (४२ पृष्ठे)

(ग) '......न्यायेन निमित्तत्वपर्य्यवसानमिति पितामहचरणाः।' इति (७४ पृष्ठे बृहच्छब्दरत्ने)।

(घ) 'तत्त्यागे बीजानापत्तेश्चेति कौस्तुभे पितामहचरणाः।' (इति १८७ पृष्ठे बृहच्छब्दरत्ने)।

(ङ) 'भावनैव विशेष्या' इत्यर्थ इति वैयाकरणभूषणे पितृव्यचरणाः। (इति १९४ पृष्ठे बृहच्छब्दरत्ने)।

[2] लघुशब्देन्दुशेखरस्य पूर्वार्द्धान्ते, लकारार्थप्रक्रियान्ते, च 'विस्तरस्तु बृहच्छब्देन्दुशेखरे द्रष्टव्यः।' 'विस्तरस्तु बृहच्छब्देन्दुशेखरे बोध्यः।' इत्येवं वर्त्तमानोऽयं पाठः नागेशभट्टस्वभावं साधु व्यनक्तीति विवेचयन्तु विद्वांसः।

'यतो ग्रन्थकृन्नागेशोऽयं स्वलिखितग्रन्थानां पुनः पुनरनुसन्धान-परिवर्तन-परिवर्द्धनपरिशोधनावसरे पूर्वं पश्चाद्वा लिखितानां ग्रन्थानां पूर्वं, पश्चाद्वा लिखिते ग्रन्थे प्रसङ्गतः स्मरणमध्येतृणामधिकव्याख्यानजिज्ञासापनोदनसौकर्य्याय, स्वग्रन्थप्रसिद्धये च व्यधात्। अत एव प्रायशः सर्वेषामेव व्याकरणग्रन्थानां मञ्जूषा-शब्देन्दुशेखर-भाष्यप्रदीपोद्द्योतादीनां प्रायशः सर्वेष्वपि तद्ग्रन्थेपूल्लेखो दृश्यते, येन कश्च ग्रन्थः पूर्वं तेन लिखितः, कश्च पश्चादिति निर्धारणेऽन्वेषकजनमनोमोहको महानुत्पद्यते संशया नागेशभट्टग्रन्थानां पौर्वापर्य्यनिर्धारणे' इति।

अत्रापि स्वस्वभावानुसारं स्वग्रन्थप्रचारे उत्कटाभिलाषवान् नागेशभट्टो लघुशब्दरत्नानुशीलनपरान् विद्याव्यसनिनः स्वकीयाऽन्यग्रन्थरसास्वादोत्कान् विदधदेव हरिदीक्षितलेखव्याजेन 'विस्तरस्तु अस्मत्कृते शब्दरत्ने, मदन्तेवासिकृते शब्देन्दुशेखरादौ च द्रष्टव्यः।' इत्येवं स्वग्रन्थनामानि सर्वेषां बुद्धयारूढानि सम्पादयतीति नायं व्यवहारो नागेशभट्टानां प्रथमः।

(३) घसङ्केतिते प्रौढमनोरमा-लघुशब्दरत्नयोर्हस्तलेखे समासाश्रयप्रकरणान्ते 'इति नागोजिभट्टविरचितायां मनोरमाव्याख्यायां समासाश्रयविधय' इत्येवं पुष्पिका उपलभ्यते। 'नागोजिभट्ट' इति च नागेशभट्टस्यैव द्वितीयं नाम इति प्रसिद्धमेव। पुष्पिकेयं स्पष्टमेव प्रमाणयति यत् ग्रन्थोऽयं नागेशभट्टविरचित एव। ग्रन्थकर्त्ता नागेशभट्टो ग्रन्थममुं लघुशब्दरत्नं स्वनाम्नैव प्रथमं विरचयामास। तदनु स्व(गुरु)मतभञ्जकं तद्विरुद्धार्थप्रतिपादनपरं ग्रन्थममुं विलोक्य कदाचिद्धरिदीक्षिता रुष्टा माभूवन्निति तेषां गुरूणां प्रसादाशीर्वादप्राप्तये ग्रन्थममुं हरिदीक्षितविरचितत्वेनैव प्रचारयामास। तथा सर्वेषामेव हस्तलिखितलघुशब्दरत्नपुस्तकानां पुष्पिकासु स्वनामनिरसनपूर्वकं गुरोर्हरिदीक्षितस्य नाम्न उल्लेखे क्रियमाणेऽपि केषुचित्पुस्तकेषु शिष्यप्रशिष्यैरध्ययनकालसमाप्त्यनन्तरं स्वदेशं नीतेषु तथा संशोधनपरिवर्त्तनस्याऽसंभवान्नागेशभट्टस्यापि नाम क्वचित्पुष्पिकास्ववशिष्टमस्थादिति सर्वत्र पुष्पिकायां नागेशभट्टस्य नाम्नोऽनुपलब्धौ हेतुः।

तदेवमाभ्यन्तरैर्बाह्यैश्च सुदृढैः प्रमाणैः साधु साधितं लघुशब्दरत्नस्य नागेशभट्टकर्त्तृकत्वं को नामाभिनिवेशशून्यो गुणग्रहणशीलो विद्वान्नाङ्गी कुर्यादित्यलमतिप्रसक्त्या।

## बृहच्छब्दरत्नो, लघुशब्दरत्नश्च

दीक्षितवचसां मण्डनाय तत्र दोषावभासाकानां परमतानां खण्डनाय च विद्वन्मण्डलीषु स्वीयाऽलौकिकप्रतिभाभासितविविधविचित्रचमत्कृतिसहकृतकल्पनाकोटीप्रकटितविशिष्टवैदुष्यस्य प्रख्यापनाय चेत्यनेकप्रयोजनान्युद्दिश्य प्रारब्धनिर्मितावस्मिन् बृहच्छब्दरत्नाख्ये महति ग्रन्थे नानाविधमतोपमतानामालोचनप्रत्यालोचनं, नवीनैर्दृढैश्च तर्कैः परसिद्धान्तसंवरणमन्यत्रानवलोकितानां शास्त्रार्थकोटीनां संग्रहणमाकरग्रन्थानां स्वोपज्ञं विशिष्टार्थव्याख्यानं, महाभाष्यवचसां स्वानुकूल्येनोपस्थापनञ्चेत्यादिकं सर्वमावश्यकं, स्वाभाविकञ्च।

अत एवास्मिन् बृहच्छब्दरत्ने प्रायः सर्वेष्वपि सूत्रेषु महतो वाग्जालस्य वितान ग्रन्थकृता सम्पादितमुपलभ्यत एव। एकस्या एव शङ्काया नानाप्रकारेण समाधानमस्य ग्रन्थस्य अनन्यलभ्यं वैशिष्ट्यं प्रथयति। अतो विविधविषयविचारसंकलनदृष्ट्या-ऽद्भुतोऽयं बृहच्छब्दरत्नाख्यो ग्रन्थ इत्यत्र नास्ति मतभेदो विद्वज्जनानाम्।

ग्रन्थकृद्धरिदीक्षितस्तु–ग्रन्थेऽस्मिन् बृहच्छब्दरत्ने स्वप्रतिपादिता भाष्याशयविरुद्ध-परमतप्रभञ्जनप्रबला, विचित्रा, युक्तीर्नितरां प्रशंसन्, तासामलौकिकयुक्तीनामुद्भा-वनेऽतिप्रवीणाया नवनवोन्मेषशालिन्या स्वीयविलक्षणप्रतिभाया आश्रयस्य स्वस्यात्मनो गौरवञ्च स्वयमेव ख्यापयन् सर्पकुलेषु श्रोत्राणामभावं लोककल्याणसाधकमेवोत्प्रेक्षते, अन्यथा सर्पा यदि श्रोत्रवन्तोऽभविष्यन् तदा नूनमयं लोकानां धर्ताऽहिराजः शेषनागो-ऽपि इमा विलक्षणार्थप्रतिपादनपरा मदीया युक्तीर्निशम्यान्यदिगीशविबुधवन्मोदाम्बुधौ निमज्जनादानन्दातिरेकेण शिरोऽचालयिष्यत्तर्हि तेनाऽयं फणासु धृतो लोकस्तलं प्रायाष्यत्—इत्येवं पूर्वार्द्धान्तोद्धृतश्लोकद्वयेन सगर्वमस्य ग्रन्थस्यान्यसकलग्रन्थातिशा-यित्वमभिव्यनक्ति। तथा च हरिदीक्षितस्य श्लोकौ—

'तत्तत्स्वोक्तिविरुद्धवादिवचनप्रच्छेदयुक्तीर्हरे-
र्मा श्रौषीदहिराज इत्यहिकुलेऽश्रोत्रत्वमाविर्बभौ।
तद्युक्तं, न हि चेद्दिगीशबुधवन्मोदाम्बुधौ मज्जना-
त्तेनाऽऽधूतसहस्रमूर्धनिकरे लोकः प्रयायात्तलम्'॥
'विपक्षपक्षमत्तेभदानशोषकृतो हरेः।
कृतिः प्रीणातु देवेशं शैलकन्यार्द्धशेखरम्'॥ इति।

एकत्रीकृतसकलमहाभाष्यसारस्य, मण्डनीकृतभट्टोजीदीक्षितवचसो, विदलित-पराभिमतसिद्धान्तस्यातिविस्तृतविपुलव्याख्यानसम्भृतकलेवरस्यास्य बृहतः शब्दरत्नस्य विषये ग्रन्थकर्त्तुरियं गर्वोक्तिरौचित्यं नितरां यद्यपि भजते, तथापि प्रौढ़मनोरमायां, लघुशब्दरत्ने च यादृशः प्रसादगुणो, यादृशो वा वाक्प्रवाहो, यादृशी वा विषयप्रति-पादनचातुरी, यादृशं च गूढार्थानामप्युचितशब्दचयचित्राणां वाक्यानां हृदयावर्जकत्वं, चित्तविस्फारकत्वं वा, नात्र तादृशी स्थितिरिति तु तथ्यं वचः। बृहत्यप्यस्मिन् शब्दरत्ने तादृशानां शब्दानां, वाक्यानाञ्च वर्तते न्यूनता, यैः साधु शीघ्रमनायासनैवा-ऽर्थावबोधः पाठकानामुपजायेत। सामान्यस्याप्यर्थस्य प्रतिपादनमत्रातिसंक्षिप्तैः शब्दैस्तथा विहितं यथा न तद्भावः सारल्येन बुद्धिगम्यः सम्पद्यते, अपि तु विशेषाऽव-धानेनैव ग्रन्थोऽयं स्फुटितार्थो भवतीति गूढव्यङ्ग्यकाव्यौपम्यमस्येति विद्वांसो निश्चिन्वन्ति। एतद्ग्रन्थसम्पादनव्यापारव्यापृतैरस्माभिरपि स्थले स्थले कुत्र चिद्दिनपञ्चकं, कुत्रचिद्दिनसप्तकं, कदाचिच्च ततोप्यधिकं कालं वा विचारद्भिरस्या-ऽऽशयो याथातथ्येन गृहीतो, कुत्रचिन्नापीति वस्तुस्थितिः। कैयटमतानुयायिनो भट्टोजिदीक्षितस्य सिद्धान्तानां मण्डनाय प्रयतमानस्याऽस्य ग्रन्थस्यापि प्राचीनमता-ऽनुसारित्वं स्वाभाविकमेव। अत एव नवीनसिद्धान्तराजपथपरिष्कर्त्तॄणां भट्ट-नागेशानां प्रधानशिष्येण पायगुण्डेवैद्यनाथेन विरचिते लघुशब्दरत्नव्याख्याने भाव-प्रकाशाख्ये प्रायशः पदे पदे, अत्र बृहच्छब्दरत्ने सगर्वं सोत्साहं च समुपस्थापितानां

प्रतिपाद्यविषयाणां राद्धान्तानाञ्चाऽऽलोचनं खण्डनं प्राचीनानुरोधित्वञ्च समुद्भावितं वीक्ष्य नाऽस्य ग्रन्थस्य ग्रन्थकृन्मनःकल्पितमनन्यसाधारणं वैशिष्ट्यं तदानीन्तनैः, पश्चाद्भवैर्वा विद्वद्भिः स्वीकृतमिति विभावयामः। अत एव नानाविधव्याख्यान-विवृद्धवपुषोऽप्यस्य ग्रन्थस्य न तादृशः प्रचारः, समादरश्च संस्कृतविदुषां मध्ये समभूद् यादृशोऽभिलषितः स्याद् ग्रन्थकर्त्रेति न तिरोहितं प्रेक्षावताम्।

परं नैतावता बृहच्छब्दरत्नमहाव्याख्यानपरिशीलन-समालोचन-विशिष्टा-ऽध्ययनपरिशोधायोत्कैर्विपश्चिद्भिर्नतु हतोत्साहैर्भाव्यम्। अनेकेषामाचार्याणां मतो-पमतानामुपस्थापकतया, सकल-व्याकरणशास्त्रप्रतिपादितसारसंग्राहकतयाऽन्यत्राऽवि-चारितानां शास्त्रार्थविचारचयानामाकरतया ग्रन्थोऽयं किमप्यनिर्वचनीयं वैशिष्ट्यं धत्त इति नितरां मननीयः, सर्वथा समादरणीयश्चेत्यत्र नास्ति शङ्काकलङ्कलेशोऽपि।

सर्वतन्त्र-स्वतन्त्र-विद्वद्वरेण्यानां शब्देन्दुशेखर-परिभाषेन्दुशेखर-महाभाष्यप्रदी-पोद्द्योतमञ्जूषादिनानाविधमहाग्रन्थलेखकतया विश्वविश्रुतविमलकीर्त्तीनां श्रीनागेश-भट्टानां सिद्धलेखनीप्रसूतस्य लघुशब्दरत्नस्य विषये तु किं नु वक्तव्यम्। शर्कराया माधुर्य्यं यथा न शब्देनाऽपि तु आस्वादेनैवानुभूयते, तथैवास्य ग्रन्थस्य वैशिष्ट्यमपि न केवलं गुणानां श्रवणेनाऽपि तु स्वयं गाढपरिशीलनेनैव विदुषां प्रत्यक्षं स्यात्।

गभीरतममपि स्वप्रतिपाद्यमर्थं स्फुटतया प्रतिपादयितुं क्षमैः शब्दरत्नैः सुगुम्फितानि प्रसादगुणगरिष्ठानि लघूनि लघूनि वाक्यकदम्बान्यत्र महार्हमौक्तिक-हारवत् सचेतसां चेतांसि प्रसभमावर्जयन्तीति ग्रन्थकृतोऽस्य विचित्रलेखनकला-कोविदत्वं स्पृहणीयमेव।

वस्तुतो ग्रन्थेऽस्मिन् भट्टनागेशः पण्डितकुलशिरोमणेर्महावैयाकरणान्मूलग्रन्थ-रचयितुर्भट्टोजिदीक्षितादप्यधिकं वैदुष्यं, लेखनकलाकौशलं च प्रदर्शयन्नभिलक्ष्यते। यदि भट्टोजिदीक्षितोऽयं भट्टकुमारिलेनोपमीयते, तर्हि नूनमयं भट्टनागेशः प्रभाकरा-ख्यस्य गुरोः साम्यमादधाति। विचित्रविशिष्टनिर्मलतर्कोद्भावनस्वभावया स्वविलक्षणप्रतिभयाऽयं न केवलं स्वगुरून् हरिदीक्षितानेवाऽपि तु सभट्टोजिदीक्षितान् सकलानपि प्राचीनाचार्यानतिशेत इत्यहो! वैदग्ध्यमस्य नागेशभट्टस्य। साहित्यशास्त्रे पण्डितराजजगन्नाथ इव व्याकरणशास्त्रेऽयमनन्यसाधारणो महावैयाकरण इत्यत्र नास्त्ययुक्तिलेशोऽपि।

अत एव स्वरचयितुर्विशिष्टवैदुष्यस्य विचित्रलेखनसरण्याश्च साक्षिभूतोऽयं लघुरपि लघुशब्दरत्नग्रन्थो विद्वत्सदसि श्रीहरिदीक्षितनिर्मिताद् बृहतः शब्दरत्नादपि विशेषतया समाद्रितो, लब्धप्रचारश्चाऽभूदिति विदन्त्येव विपश्चितः।

'नागेशभट्टविरचितेषु व्याकरणशास्त्रमहाग्रन्थेष्वयमन्तिमो ग्रन्थ इति हेतोरयं भट्टनागेशानां नितरां पाकमापन्नस्य, अत एवातिशयितगभीरस्य विलक्षणपाण्डित्य-स्याभिव्यञ्जक' इत्यत्रोपदर्शितानां विशिष्टकोटीकल्पनाविचार-विमर्शानामनुशीलनेना-श्चार्यचकितचेतोभिरत्र बद्धादरैः सर्वैरेव व्याकरणशास्त्रमर्मज्ञैस्सादरमुद्घोष्यते।

## समूलशब्दरत्नयोः सम्पादनस्य निश्चयः

तदेवं गुरुशिष्याभ्यामेकामेव प्रौढमनोरमामभिलक्ष्य व्याख्यानरूपेणोपनिबद्धौ इमौ बृहच्छब्दरत्न-लघुशब्दरत्नौ यद्यपि समानाभिधेयावेव, तथापि स्वकीयया भिन्नया भिन्नया विलक्षणप्रतिभया विवेचन-चित्रया प्रज्ञया चोभाभ्यां ग्रन्थकृद्भ्यां विभाव्यमानानां पदार्थ-संचय-संकलन-व्याख्योपव्याख्यानभेदानामुभयत्र स्पष्टमुपलब्धेरिमावुभावपि ग्रन्थौ स्वकीयं भिन्नमस्तित्वं, महत्त्वं, वैशिष्ट्यं च साधु प्रकटयत एवेति नैकेनाऽन्यस्य गतार्थत्वमित्युभयोरप्यनयोः समूलमनुशीलनं व्याकरणशास्त्ररहस्य-जिज्ञासावतां ननु नितान्तमावश्यकमिति निश्चित्याऽद्यावध्यपि सम्पूर्णतयाऽप्रकाशितस्य बहोः कालात् पठन-पाठनसरणितो दूरतामुपगतस्याऽत एव प्राचीनैर्विद्वद्भिर्विस्मृतप्रायस्य नवीनैरिदानीन्तनैर्व्याकरणशास्त्राध्येतृभिरश्रुतनाम्नः शब्दरत्नाऽपरनामधेयस्य बृहच्छब्दरत्नस्य प्रौढमनोरमालघुशब्दरत्नसहितस्य सम्पादनाय कृतनिश्चयैरस्माभिरेतत्प्रकाशनायाऽभ्यर्थिता हिन्दूविश्वविद्यालयीय-नेपालराज्य-संस्कृत-ग्रन्थमालासमितेस्संयोजका लब्धकीर्त्तयोऽनेकग्रन्थलेखकास्सहृदयश्रेष्ठाः श्रीवासुदेवशरणाऽग्रवालमहाभागाः सहर्षं प्रस्तावममुमभिनन्दयन्तः समितेर्माननीयान् सदस्यान् कार्यस्यास्य महत्त्वं विबोध्य ततो लब्धैतत्प्रकाशनानुमतयो मुद्रणादिसकलसुव्यवस्थां सम्पाद्य समवर्द्धयन्नस्माकमुत्साहम् ।

## अधिगतानामादर्शपुस्तकानां विवरणम्

सम्पाद्य प्रकाश्यमानस्याऽस्य प्रौढमनोरमालघुशब्दरत्नसहितस्य बृहच्छब्दरत्नमहाग्रन्थस्य संस्करणमनुत्तमं, सर्वथा शुद्धं, प्राचीनोपलब्धसकलपाठान्तरसहितञ्च यथा भवेदेतदर्थमेतेषां ग्रन्थानां प्राचीनहस्तलिखिताऽऽदर्शपुस्तकानामन्वेषणाय इतस्ततो विचेष्टमानैः स्वदेश-विदेशस्थपुस्तकलयाऽध्यक्षैस्सह साक्षात्पत्रद्वारा वा सम्बन्धमुपस्थापयद्भिरस्माभिर्महता प्रयासेन बृहच्छब्दरत्नस्य 'क.' 'ख.' इत्येवं संकेतिते द्वे, एवमेतद्ग्रन्थप्रथमभागमुद्रणानन्तरमुपलब्धानि [1]सरस्वतीभवनपुस्तकालयीयानि 'स-क.' 'स-ख.' 'स-ग.' 'स-घ.' इत्येवं लक्षितानि चत्वारीति षट् हस्तलिखितपुस्तकानि, केवलायाः प्रौढमनोरमायाः 'ङ.', 'च.', 'छ.', 'ज.' इति संज्ञाभाञ्जि

[1] सरस्वतीभवनपुस्तकालयीयानां बृहच्छब्दरत्नहस्तलेखानामेतद्ग्रन्थाऽव्ययीभावसमासान्तभागमुद्रणानन्तरमेवातिविलम्बेनोपलब्ध्याऽत्रत्याः शुद्धाः, परिवर्द्धिताश्च पाठाः, पाठभेदाश्च मूलग्रन्थेन सह मुद्रापयितुमशक्या एवेति पाठकानां, गवेषकाणाञ्च सौकर्य्याय प्रास्ताविकवचसोऽनन्तरं पृथगुपन्यस्यन्ते । हस्तलेखानिमानस्मत्कार्य्यसिद्धयै हिन्दूविश्वविद्यालयपुस्तकागाराध्यक्षेभ्यो विलम्बेनाऽप्युपाहृत्य सम्पादनकार्य्येऽस्मिन्परम्परयाऽपि साहाय्यमाचरतां सरस्वतीभवनपुस्तकालयाध्यक्षाणां सौजन्याऽतिशयं सन्तुष्टेन चेतसा सधन्यवादं कत्थामहे ।

एवमेवाऽस्मदर्थं सरस्वतीभवनपुस्तकालयादेषां हस्तलेखानामवाप्तये दीर्घकालिकं सर्वप्रकारकं प्रयत्नमस्मत्सौकर्याय सानुरागमनुतिष्ठतां हिन्दूविश्वविद्यालयपुस्तकागाराध्यक्षाणामपि सहर्षं ससाधुवादञ्च गुणाननुवदामः ।

चत्वार्य्यादर्शपुस्तकानि, लघुशब्दरत्नसहितायाश्च प्रौढमनोरमाया 'ग.' 'घ.' इत्याख्ये द्वे, केवललघुशब्दरत्नस्यापि च 'क.' 'ख.' इत्याह्वे द्वे—इत्येवं सङ्कलनया चतुर्दशाऽऽदर्शभूतानि हस्तलिखितपुस्तकानि सम्पादनकार्यसाधनाय कथञ्चित् प्रालम्भिषत ।

## बृहच्छब्दरत्नहस्तलेखाः

### तत्र 'क.' पुस्तकम्

कस्माच्चित्प्राचीनबृहच्छब्दरत्नहस्तलेखादिदानीन्तनैः प्राचीनहस्तलिखिताऽक्षरपरिचयाऽभ्यासविहीनैर्नवीनलेखकैर्बहुभिः सम्भूय त्वरयाऽविचार्य्यैव च यथाकथंचिल्लिपिकृतं विभिन्नाऽस्पष्टाक्षरजटिलमशुद्धिबहुलञ्च, प्रारम्भे यत्र कुत्रचित् पाठान्तरसहितं, मध्ये मध्ये त्रुटितपाठं, नातिहृद्यं स्वरवैदिकान्तं सम्पूर्णं ७"×९" मितैर्नवीनैस्त्रिंशद्वर्णघटितसप्तदशपंक्तिसहितैः सार्द्धैकसहस्रैः पत्रैः प्रकाशितनिजस्थौल्यं कथंचिदाविष्कृतयथावद्वर्णपदवाक्यकदम्बमिदं बृहच्छब्दरत्नस्य 'क.' पुस्तकम्, कुलक्रमागतविदितविशिष्टवैदुष्यानामुदाराशयसहृदयशिरोमणीनामनेकशास्त्रमहार्णवपारदृश्वनामाचार्य्यवर्य्य-श्रीगुरुप्रसादशास्त्रिमहाभागानां स्वाभाविकसौजन्यवशाद्विस्मृतनाम्नो लुप्तप्रायस्य बृहतः शब्दरत्नाख्यस्य ग्रन्थशिरोमणेः समुद्धाराय तेभ्यो लब्धाशीर्वचनैरस्माभिः सरस्वत्या महतः प्रसादस्य प्रतिनिधिभूतमिव मन्यमानैस्सादरं प्राप्यत। अस्यैव 'क.'पुस्तकस्य मुद्रणपञ्जिकारूपेण ( Press copy ) उपयोगोऽस्माभिर्ग्रन्थस्याऽस्य प्राधान्येनाऽस्मिन् प्रकाशनमुद्रणादिकार्ये व्यधायीत्यस्य हस्तलेखस्य महत्त्वं न तिरोहितं सहृदयानाम् ।

हस्तलेखस्यास्योपलब्धिर्यदि नाऽभविष्यत्, लुप्तप्रायोऽयं हरिदीक्षितग्रन्थः प्राकट्यं नैवाऽभजिष्यदिति तु वास्तविकमावेदनम् ।

एतत्क. पुस्तके ये पाठभेदा यत्र कुत्रचिदादौ लेखकैः प्रान्तभागेषूल्लिखितास्ते सर्वेऽपि सम्पाद्य प्रकाश्यमानेऽस्मिन्ग्रन्थे 'ग.पुस्तकपाठ' इत्येवं रूपेणाऽस्माभिः संगृहीताः पाठकैरुपलप्स्यन्ते । हस्तेलेखेऽस्मिन् लिपिकालो न निर्दिष्टः ।

### 'ख.' पुस्तकम्

सुन्दरवेष्टनेन द्वयोः खण्डयोर्नद्धमर्वाचीनैर्व्याकरणज्ञानशून्यैः पुरातनलेखाक्षरपरिचयरहितैर्लेखनकलानभिज्ञैर्बहुभिर्लेखकैः कुत्रचित्स्पष्टैर्बहुत्र भ्रान्तिजनकैः स्थूलैरशोभनैर्देवनागराक्षरैरनवधानतया लिपिकृतमशुद्धिसङ्कुलं च यत्र तत्र, प्रायः सर्वत्र मात्राऽक्षर-पद-वाक्यपरिभ्रंशजटिलं केवलमेतदाधारेण सम्पादनकार्यस्य शुद्धपाठनिर्धारणस्य कथञ्चिदपि कर्त्तुमशक्यत्वेन व्यवहाराऽनर्हमपि परस्परं 'क.' 'ख.' इत्युभयहस्तलेखपरिशीलनेन, अन्येषां लघु-गुरु-शेखर-महाभाष्यप्रदीपोद्द्योत-लघुशब्दरत्नभैरवी-भावप्रकाशादिग्रन्थानामालोडनादिना च बृहच्छब्दरत्नविशुद्धपाठनिर्धारणक्रियायां कथंचित् परम्परया (न तु साक्षात्) साहाय्यसमाचरणेन प्रकटितनिजसाफल्यं, प्रायशः (प्रतिपत्रं) षष्टिवर्णसहितपंक्तिदशकशोभितैः १२"×४½" मितपरिमाणैश्च सुदृढैर्मसृणैर्नानावर्णैः पत्रैराविष्कृतनिजपूर्णविग्रहं सम्पूर्णमेतद् बृहच्छब्दरत्नस्य हस्तलिखितं

ख. पुस्तकं पारेसमुद्रं लण्डननगरस्थात् 'इण्डिया-आफिस-लाइब्रेरी' इत्येवं सुप्रसिद्धात् महतः पुस्तकागारात् गुणग्राहिणां स्वस्य पुस्तकालयस्य विवृद्धकीर्त्तिकलापस्य सर्वथा संरक्षणाय, परिपोषाय च प्रतिक्षणं प्रयत्नशालिनां वास्तविकसेवाव्रतिनां पाठकाऽरुन्तुदनिरर्थकाभिमानाऽभिनिवेशरहितशुद्धव्यवहाराणां पुस्तकालयाधिकारिणां हृदयग्राहिणा स्पृहणीयेनान्यत्राननुभूतेन च सौहार्देनावर्जितहृदयैरस्माभिरनायासं, सानन्दञ्च प्रालम्भि । तस्यास्य ख. पुस्तकस्य इण्डिया-आफिस-लाइब्रेरी-संस्कृत-हस्तलेख-सूचीपत्रे द्वितीयखण्डे मुद्रितं विवरणमप्यत्रालोचकजनपरितोषायोद्धरामः —

651, 652

1346. 1347b. Size 12 in. by 4½ in; Devanāgarī Character; written by different hands; 10-12 lines in a page.

*Śabdaratna*, a Commentary on the *Prauḍhamanoramā*, by *Haridīkshita* ( disciple of *Rāmāśrama* ), son of *Vīreśvara*, and grandson of *Bhaṭṭojidīkshita*.

Vol. i., foll 454 (while two leaves are numbered 85, one leaf is marked both 103 and 104). Pūrvārdha. It begins :

'शेषविभूषणमीडे शेषाऽशेषार्थलाभाय ।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥१॥
गूढोक्तिग्रथितां पितामहकृतां विद्वत्प्रमोदप्रदां
भक्त्याऽधीत्य मनोरमां निरुपमाद्रामाश्रमात् सद्गुरोः ।
तत्त्वाऽज्ञानवशात्परेण कलितान् दोषान् समुन्मूलयन्
व्याचष्टे हरिरेष तां फणिमतानालोच्य वैरेश्वरिः ॥२॥
भट्टोजिदीक्षितमुखैः कृतिभिः कृतेषु ग्रन्थेष्वमी किमु न सन्ति समीहितार्थाः ।
तत्संकलय्य कथिता इह तावतैव तुष्यन्तु मत्कृतिमिमामवलोक्य धीराः ॥३॥

Fol.262, इति स्त्रीप्रत्ययाः ॥ fol. 312 इति विभक्त्यर्थाः । fol. 389b, इति समासाश्रयविधयः ॥ Ends : इति श्रीभट्टोजिदीक्षितपौत्रेण वीरेश्वरसूनुना हरिदीक्षितेन कृते शब्दरत्ने सुबन्तं समाप्तम् ॥ संवत्[1] १८५६ ॥

Vol. ii. (1347b); foll 145 Uttarādha, the three parts of which are paged separately. (a) Tiṇanta, foll. 111; dated : संवत्[1] १८५६ मिति फाल्गुन सुदी ९ मंगल । (b) Kṛidanta, foll. 23. संवत्[1] १८५६ मिति फाल्गुने मासे शुक्लपक्षे द्वितीयायां रविवासरे ॥(c) Vaidik Chapter, foll. 11; संवत्[1] १८५६ मासे उत्तममासे फाल्गुनमासे कृष्णपक्षे त्रयोदश्यां । कथा लिख्यते ।

[H. T. COLEBROOKE]

[1] यद्यप्यस्मिन् इण्डिया-आफिस-पुस्तकालय-सूचीपत्र-द्वितीयभागे सर्वत्र ग्रन्थस्य लिपिकालः १९५६ वैक्रमाब्द एव निर्दिष्टस्तथापि हस्तलिखिते बृहच्छब्दरत्नग्रन्थेऽस्मिन् स्पष्टमेव १८५६ वैक्रमाब्दस्योल्लेखादस्माभिः स एवादृतः ।

# सरस्वतीभवनपुस्तकालीया बृहच्छब्दरत्नहस्तलेखाः

## 'स-क.' पुस्तकम्

सरस्वतीभवनपुस्तकालयाल्लब्धेषु बृहच्छब्दरत्नहस्तलिखितपुस्तकेषु 'स-क.' संज्ञितमिदं पुस्तकं चतुर्थीकारकप्रकरणान्तमपूर्णमपि मध्ये मध्ये खण्डितं दाक्षिणात्यशैलीसुन्दरदेवनागराक्षरेषु त्रिचतुर्लेखकैर्लिपिकृतं मध्येऽजन्तपुँल्लिङ्गं सुवाच्यं, प्रायशः शुद्धमतिप्राचीनमन्यादर्शपुस्तकापेक्षया विपुलपाठं ५″×११″ मितपरिमाणैः पञ्चाशद्वर्णघटिताभिस्सप्तदशपङ्क्तिभिर्युतैः प्रायशः सपादचतुश्शतपत्रैः परिशोभितमप्यनिर्दिष्टलिपिकालमेव वर्त्तते। एतत्पुस्तकवेष्टनस्थूलपत्रेऽस्य विवरणमित्थमुपलभ्यते—

प्रवेशसंख्या—१८६२। विषयः—व्याकरणम्, क्रमसंख्या ९७,
ग्रन्थनाम—बृहच्छब्दरत्नम्, ग्रन्थकारः—हरिदीक्षितः।
पत्रसंख्या—१-९४, २-२१, २७, ३८-३०७, २-१३। पंक्तिसंख्या (पृष्ठे) १५, अक्षराणि (पंक्तौ) ४०, आकारः ५.×११, लिपिः—देवनागरी। आधारः—कर्गदानि। अपूर्णः। लिपिकालः×, रचनाकालः×, अतिप्राचीनम् ७४, वि० विवरणम्×, (ग्रन्थस्यास्याऽङ्काः) ३८००६।

## 'स-ख.' पुस्तकम्

प्रायः पूर्वार्द्धान्तं मध्ये मध्ये विलुप्तपत्रमवाच्य-सुवाच्य-भ्रामक-देवनागराक्षरेषु नानालेखकैरनवधानतया यथाकथञ्चिल्लिपिकृतं कुत्रचिज्जीर्णपत्रं कुत्रचिन्नूतनदलं, नातिहृद्यं 'स-क.'पुस्तकसमानपाठमिदं 'स-ख.'पुस्तकमपि (प्रतिपत्रं) चत्वारिंशद्वर्णवतीभिर्नवभिः पंक्तिभिः सनाथितैः, १०″×५″ परिमाणमितैः सपादत्रिशतसंख्याकैः (३२५) पर्णैर्विराजितं लिपिकालनिर्देशशून्यमेव। अस्यापि विवरणमेतदावरणपत्रेऽमुना प्रकारेण निर्दिश्यते।

प्रवेशसंख्या—२७७५, विषयः—व्याकरणम्, क्रमसंख्या ३।१-८,
ग्रन्थनाम—बृहच्छब्दरत्नम्, ग्रन्थकारः—हरिः।
पत्रसंख्या—१—१०५, १—८७, १—८ (=९) १०—२३, १—२३, १—४३, १—२४, १—१९, १—२६, २८, १—३६। आकारः ११.×५, पङ्क्तिसंख्या (पृष्ठे) ९,
अक्षरसंख्या (पङ्क्तौ) ३८, लिपिः—देवनागरी, आधारः कर्गदपत्राणि। अपूर्णः। लिपिकालः×, रचनाकालः×, वि० विवरणम्—प्रौढमनोरमाटीका। अतिप्राचीनं, र. ६१ (अस्य ग्रन्थस्याङ्काः) ३८६८१।

## 'स-ग.' पुस्तकम्

अतिसुन्दर-शुद्ध-सुवाच्यदेवनागराक्षरपरिशोभितं मसृणपुरातनपत्रं परिशोधितपाठं कारकप्रकरणान्तं सम्पूर्णमेकेनैव कुशलेन लेखकेन विलिखितं 'स-क.'पुस्तकापेक्षया न्यूनपाठं परिशुद्धकलेवरं लण्डननगरस्थेण्डिया-आफिसपुस्तकालयीय-'ख.'संज्ञितपुस्तकसमानपाठं ग्रन्थकर्त्रा श्रीहरिदीक्षितेनैव पुनः परिशोधितानां पाठानां साक्षिभूत-

मिदं महत्त्वपूर्णं 'स-ग.' पुस्तकमपि लिपिकालाङ्कनरहितं १२.५"×४.८" परिमाणवद्भिः पञ्चाशद्वर्णविशिष्टैकादशपङ्क्तिपरिशोभितैः पञ्चाशीत्युत्तरद्विशतपर्णैः (२८५) पूर्णविग्रहं स्ववेष्टनस्थूलपत्रे इत्थमुपवर्ण्यते—

प्रवेशसंख्या×, विषयः—व्याकरणम्, (पाणिनीयम्), क्रमसंख्या ५।७३। ग्रन्थ-नाम—बृहच्छब्दरत्नम्। ग्रन्थकारः—हरिदीक्षितः। पत्रसंख्या—१—२४५, २४५—२८४+१। पंक्तिसंख्या (पृष्ठे) ११, अक्षरसंख्या (पंक्तौ) ५०, आकारः १२.५×४.८, लिपिः—देवनागरी, आधारः—कर्गदपत्राणि। विभक्त्यर्थान्तः पूर्णः। लिपिकालः ×, रचनाकालः×, वि० विवरणम् —वैयाकरण-सिद्धान्तकौमुदी-टीका-टीका=प्रौढ-मनोरमाटीका, विभक्त्यर्थान्ता। (अस्य गन्थस्याङ्काः) ३८९४४

## 'स-घ.' पुस्तकम्

सरस्वतीभवनहस्तलेखेषु चतुर्थमिदं 'स-घ' पुस्तकमशुद्धिबहुलं खण्डितं केवल-मच्सन्धिप्रकरणस्थेकोयणचिसूत्रविवरणपर्य्यन्तपाठं चतुश्चत्वारिंशद्वर्णघटितनवपंक्ति-सहितानां १०.४"×६.४" परिमितपरिमाणानां पञ्चषष्टिपत्राणां संग्रहमात्रमेवेति सर्व-थोपयोगशून्यमपि अस्माभिः पाठभेदलाभायौपायुज्यत। परमस्यापि पुस्तकस्य ख. पुस्तकपाठानुसारित्वेन ततो विभिन्नानां विशिष्टानां परिशुद्धानाञ्चोल्लेखनीयानां पाठानामत्राभावादस्य चतुर्थ्याः संख्यायाः पूरकत्वमात्रमेवेत्यस्माभिर्निरचीयत। तथा च नाऽनेनास्माकं निरर्थकायासप्रदानातिरिक्तमीषदप्यस्मिन् कार्ये साहाय्यमाचरितम् इति नात्राऽस्य विशेषविवरणस्याऽऽवश्यकतां प्रतीमः।

तदेवमुपलब्धानामेतेषां हस्तलेखानां सूक्ष्मेक्षिकया निभाल्यमाने धारणेयं खलु दृढतामुपयाति यन्निरन्तरशास्त्रव्यासङ्गेन संततजायमानप्रतिवादिजनशास्त्रार्थसंघर्षेण प्रतिक्षणमाकरग्रन्थानामनुशीलनादिना च स्वबुद्धेर्विशिष्टं परिपाकमासाद्य पूर्वं विरचितस्य नानाविधशास्त्रार्थ-कल्पनाकोटीपरिशोभितस्याऽय शब्दरत्नापरनामधेयस्य बृहच्छब्दरत्नग्रन्थस्य पुनः पुनरनुसन्धानाऽऽलोचनादिकं यथाशास्त्रं विदधता तत्र (बृहच्छब्दरत्ने) वर्त्तमानान् श्लथयुक्तीन् फल्गुपाठानुद्धरता सयुक्तिकानर्थगभीरांश्च नवीनपाठान् समायोजयता ग्रन्थकर्त्रा स्वयं हरिदीक्षितेनैव ग्रन्थोऽयं पुनः पर्य्यशोध्यत।

तथा च सरस्वतीभवनपुस्तकालयस्थे 'स-क.' 'स-ख.' इति द्वे पुस्तके बृहच्छब्द-रत्नग्रन्थस्य प्राचीनमूलपाठावबोधिके, अन्यापेक्षया विपुलपाठवत्त्वात्।

अवशिष्टानि 'क.' 'ख.' 'स-ग' 'स-घ.' इत्याख्यानि पुस्तकानि च पश्चात् संशोधितस्य ग्रन्थस्वरूपस्य साक्षिभूतानि। 'स-क.' 'स-ख.' पुस्तकयोर्वर्त्तमानानां विपुलानां पाठानामत्राऽविद्यमानत्वात्, परिवर्त्तितपाठवत्त्वाच्च।

न हि ग्रन्थकर्त्तृव्यतिरिक्तः कश्चनान्यो विद्वान् कस्माच्चिदपि ग्रन्थात् कांश्चित्पाठा-न्निक्षेप्तुं प्रक्षेप्तुं परिवर्त्तयितुं वा भवत्यधिकृतः। अत इमे सर्वेऽपि पाठभेदा महत्त्वपूर्णा एवेति परिशुद्धस्वरूपस्य ग्रन्थकर्त्तुरभिमतस्य 'क.' पुस्तकस्याधारेण यथामति महता परिश्रमेण सम्पाद्य यथाशक्त्युपलब्धैरधिकपाठैः, पाठभेदैश्च सनाथीकृत्य संस्कृतप्रणयिनां विदुषां करकञ्जेषु ग्रन्थममुमुपाहरद्भिरस्माभिर्नितरामानन्दातिशयोऽनुभूयते खलु।

# लघुशब्दरत्नप्रौढमनोरमाहस्तलेखाः

अव्ययीभावसमासान्तस्य प्रथमखण्डस्यास्य प्रकाशनावसरे प्रौढमनोरमा-लघुशब्दरत्नग्रन्थयोः सम्पादनायाऽष्टानां हस्तलेखानामुपयोगोऽत्रास्माभिर्व्यधायि। तेषु हस्तलेखेषु द्वौ केवललघुशब्दरत्नस्य, चत्वारः केवलप्रौढमनोरमायाः, द्वौ प्रौढमनोरमासहितस्य लघुशब्दरत्नस्येति तेषां पाठकवृन्दसौकर्य्याय 'क., ख., ग., घ., ङ., च., छ., ज.' इत्यभिख्याऽव्यक्रियत। एतेषु अन्तिमयोर्द्वयोर्छ. ज. पुस्तकयोरुपलभ्यमानानाम्पाठभेदानां संग्रहः परिशिष्टप्रकरणे विहित इति पाठकैस्तत एवावधेयास्ते।

## 'क.' पुस्तकम्

केवललघुशब्दरत्नपाठाऽवबोधकं क. पुस्तकमिदं प्राचीनं, शुद्धं सुवाच्यदेवनागराक्षरविलिखितं, मध्ये-मध्ये खण्डितमपि केनचिल्लेखकेन पश्चात्पूरिततदंशं वैदिकीप्रक्रियान्तं सम्पूर्णं १८८१ वैक्रमेऽब्दे लिपिकृतं स्वीयप्राचीनपत्रैः सूचितनिजपुरातनत्वं च पूर्वार्द्धे सप्तोत्तरद्विशतदलम्, (२०७) उत्तरार्द्धे व्यशीतिपत्रम् ९$\frac{3}{4}$"×४" मितपर्णपरिमाणं, प्रायशः प्रतिपत्रं कुत्रचित् षट्त्रिंशद्वर्णयुताभिरेकादशपङ्क्तिभिः, कुत्रचिच्च पञ्चाशद्वर्णसहिताभिर्नवभिर्दशभिर्वा पङ्क्तिभिः सहितैः अष्टनवत्युत्तरशतद्वयपर्णैः (२८९) पूरितनिजविग्रहं विभिन्नाक्षरतया पञ्चषैः पुरुषैर्विलिखितं वाराणसेयश्रीराजस्थान-संस्कृत-महाविद्यालयप्रधानाचार्याणामवदातयशसां श्रीगुरुप्रसादशास्त्रिमहाभागानां स्वीयपुस्तकालयात् तेषामनुकम्पाविशेषतोऽध्यगम्यतास्माभिः।

अथाऽस्य क. संज्ञितस्य हस्तलेखस्य प्रारम्भोऽन्तिमश्चांशो यथा—

श्रीगणेशायनमः। शेषविभूषणमीडे शेषाशेषार्थलाभाय। दातुं सकलमभीष्टं फलमीष्टे यत्कृपा-दृष्टिः॥१॥ ध्यायमिति। ध्यात्वा ध्यात्वेत्यर्थः। णमुलन्तमेतत्। परं सर्वजगदुपादानम्। कार्यब्रह्महिरण्यगर्भव्यावृत्तये इदम्। ध्यानं चिन्ताऽपरपर्य्यायं स्मृत्यनुकूलव्यापाररूपम्। स्मरणन्तु तज्जन्यमिति विशेषः। (—इति प्रारम्भः)

अस्य स्पष्टत्वादिति। पुंवद्रूपमिति हि तेनोक्तमिति भावः। आंजस्येनेत्येवेति। अत्र केचिदित्यादिना मदुक्तया मूलस्थरीत्येति भाव इति शुभम्॥

इति श्रीमद्दीक्षितभट्टोजिपौत्रदीक्षितहरिविरचिते प्रौढमनोरमाव्याख्याने लघुशब्दरत्ने सुबन्तं समाप्तम्। श्रीकृष्णार्पणमस्तु॥ श्रीः॥ (इति पूर्वार्द्धान्तांशः)

श्री गणेशाय नमः। श्री सरस्वत्यै नमः। ग्रन्थमध्ये कृतमिति। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणीत्यादिभाष्यफलोद्देशेनेत्यर्थः। ताभ्यां वित्तैरिति। तेन वित्त इति चणप्। (—इति उत्तरार्द्धप्रारम्भः)

'विकल्पव्यवस्थयेति। व्यवस्थितविकल्पेनेति यावत्। इत्यष्टमोध्यायः। इति श्रीमद्दीक्षितभट्टोजिपौत्रदीक्षितवीरेश्वरपुत्रदीक्षितहरिविरचिते लघुशब्दरत्ने वैदिकी समाप्ता'। शुभम्। सं० १८८१।

पुस्तकमिदं क. संज्ञितं प्रतीकस्थले रक्तेन रागेण रञ्जितं कुत्रचिद्धरितालमस्यादिलेपेन शोधितपाठं, कुत्रचिच्च टिप्पण्यादिना विभूषितमिति अध्ययनाध्यापनकार्ये

प्राचीनैर्विद्वद्भिर्विहितोपयोगमत एव कृतपरिष्कारं प्रायः सर्वथा शुद्धं सम्पादनकार्य्येऽस्माकं विशिष्टं साहाय्यमकल्पयत्।

## 'ख.' पुस्तकम्

तत्पुरुषसमासान्तमपूर्णं मध्ये त्रयोविंशतिपत्रादारभ्य पञ्चविंशतिपत्रं यावत्खण्डितं, सुवाच्यैः सुन्दरैः स्थूलदेवनागराक्षरैर्विलिखितं केवललघुशब्दरत्नपुस्तकमिदं ख. संज्ञितं, १२½"×५" मितपरिमाणदलं, प्रायशः षष्टिवर्णपूरणीयाभिः दशपंक्तिभिः सहितैरेकादशाऽधिकशतपत्रैः (१११) पूर्णविग्रहं तेभ्य एव विद्वद्वरश्रीगुरुप्रसादशास्त्रिमहोदयेभ्योऽस्माभिरलभ्यत।

अस्मिन्नपि ख. पुस्तके प्रतीकानां रक्तवर्णानुरञ्जनं, यत्र तत्र टिप्पणयोजनं, विशुद्धाऽशुद्धपाठखण्डनशोधनं, च्युतपाठयोजनादिकञ्च परिदृश्यमानमस्य पुस्तकस्य प्रायः सर्वथा शुद्धत्वं प्राचीनैर्विद्वद्भिः कृतोपयोगत्वञ्च सूचयति।

अथास्य पुस्तकस्याद्यन्तभागौ यथा—

'श्रीगणेशाय नमः। शेषविभूषणमीडे शेषाऽशेषार्थलाभाय। दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥१॥ ध्यायमिति। ध्यात्वा ध्यात्वेत्यर्थः। णमुलन्तमेतत्। परं सर्वजगदुपादानं, कार्यब्रह्महिरण्यगर्भव्यावृत्तये इदम्। ध्यानं चिन्तापरपर्य्यायं स्मृत्यनुकूलव्यापाररूपम्। स्मरणन्तु तज्जन्यमिति विशेषः'। (इति ग्रन्थप्रारम्भः)

व्याप्यमानत्वादिति। तेषां धात्वर्थत्वविवक्षयेत्यर्थः। ज्योतिष्टोमाऽभिन्नयागकरणिकामिष्टविषयां भावनां पश्येदिति बोध इत्यभिमानः। तथा बोधाऽननुभवेनाह— अन्यथेति। पुंस्त्वमेवेति। आदिशब्दस्य नित्यपुंस्त्वात्। इति तत्पुरुषः। श्रीसाम्बसदाशिवाय नमः। ॥छा॥ ॥छा॥ ॥छा॥

यद्यपि पुस्तकेऽस्मिन् लिपिकालो न निर्दिष्टस्तथापि सार्ध्दैकशताब्दतोऽप्यधिकं पुरातनमिदं स्यादिति पत्राणामवलोकनेनानुमीयते।

## 'ग.' पुस्तकम्

प्रौढमनोरमामूलपाठसहितं लघुशब्दरत्नपुस्तकमिदमजन्तपुंलिङ्गान्तं खण्डितमायासपठनीयैर्विचित्रैः सूक्ष्माक्षरैर्विलिखितम्, अपूर्णत्वादनुपलभ्यमानलिपिकालनिर्देशं, यत्र तत्र शोधितपाठमावश्यकटिप्पणयुतञ्च १२"×४" मितपरिमाणदलं, सप्ततिवर्णघटितद्वादशपङ्क्तिमद्भिः सप्तनवतिभिः पर्णैः पूर्णावयवं ग. पुस्तकमिदमपि तेषामेवोपर्य्युपगीतनामधेयानामाचार्यवर्याणां सहजकृपावशादस्माभिरधिगतमस्य ग्रन्थस्य सम्पादनप्रकाशनाय।

अथास्य ग. पुस्तकस्य आदावन्ते च निर्दिष्टाः पाठा यथा—

'श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। शेषविभूषणमीडे शेषाऽर्थलाभाय। दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥१॥ ध्यायमिति। ध्यात्वा, ध्यात्वा इत्यर्थः'। (लघुशब्दरत्नः)।

श्रीगणेशाय नमः। ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः। सिद्धान्त-कौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम्। हयवरट्। हकारोपदेशः अट्-अश्-हश्-इण्-ग्रहणेषु हकारग्रहणार्थः। (प्रौढमनोरमा)

'केवलं छान्दस इति पक्षान्तरं स एवाह। इत्यैदन्ताः। ग्लौर्मृगाङ्कः कलानिधि-रित्यमरः। एवं जनानवतीति जनौः। जनावौ। ज्वरत्वरेत्यूठ्, एत्येधतीति वृद्धिः। जनाव इत्यादि ॥६॥ इत्यजन्ताः पुँल्लिङ्गाः ॥६॥श्रीः॥ (प्रौढमनोरमा)

'···प्रायेण विसर्गरहितः पाठः। तदा यादौ प्रत्यये इत्यर्थे इति भावः। न त्विति। अत एव रायमिच्छतीति विग्रहप्रदर्शनपरं भाष्यं सङ्गच्छते। न हि विग्रहः छन्दः। अत एव रायि आशां, राय्याशामित्यचः परस्मिन्नित्यत्र भाष्ये प्रयुक्तमिति भावः। पक्षान्तरमिति। अत्रारुचिबीजं स्पष्टमेव। इत्यजन्ताः पुंलिङ्गाः। ॥श्रीः'॥ (—लघुशब्दरत्नः)

## 'घ.' पुस्तकम्

लकारार्थप्रक्रियान्तं सुन्दरं महत्त्वपूर्णं प्रौढमनोरमा-युत-लघुशब्दरत्नपाठसहितम् अनधिकाऽऽयासपठनयोग्यैः सुन्दरैर्देवनागराक्षरैः १८१६ वैक्रमेऽब्दे त्रिचतुरैर्लेखकै-र्लिखितं पूर्वार्द्धे समासाश्रयप्रकरणं यावत्पञ्चसप्तत्यधिकशतद्वयपत्रं, ततोऽग्रे पूर्वार्द्धं यावत् अष्टाशीतिपत्रैः समृद्धकलेवरमुत्तरार्द्धस्य लकारार्थप्रक्रियां यावत् द्वाविंशत्यधिक-शतपर्णं, $१०\frac{३}{४}'' \times ४\frac{१}{२}''$ मितपरिमाणदलं प्रायशः षट्पञ्चाशदक्षरघटितत्रयोदशपंक्ति-राजितैः पञ्चाशीत्यधिकचतुश्शतपत्रैः निर्मितसकलवपुस्तात्कालिकैः पण्डितैः परिशोधितपाठं यत्र तत्र टीकाटिप्पणविराजितमिदं घ· पुस्तकं मनोहारि, सम्पादन-कार्ये विशेषोपयोग्यपि श्रीराजस्थान-संस्कृतमहाविद्यालयप्रधानाचार्याणां तेषामेव श्रीगुरुप्रसादशास्त्रिमहाशयानां दयाविशेषतोऽधिगतम्। अथास्य घ· पुस्तकस्यादि-मध्यान्तभागा यथा—

'श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीगुरुभ्यो नमः ॥श्रीः॥

शेषविभूषणमीडे शेषाशेषार्थलाभाय।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥१॥

ध्यायमिति। ध्यात्वा ध्यात्वेत्यर्थः। णमुलन्तमेतत्। परं सर्वजगदुपादानम्। कार्यब्रह्महिरण्यगर्भव्यावृत्तये इदम्।'······ (लघुशब्दरत्नः)

'श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः।

ध्यायं ध्यायं परं ब्रह्म, स्मारं स्मारं गुरोर्गिरः।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥१॥

हयवरट्। हकारोपदेशः अट् अश् हश् इण्ग्रहणेषु हकारग्रहणार्थः'·········(पूर्वार्द्धादौ प्रौढमनोरमा)

'प्रत्यासत्योत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तेरित्यन्यत्र विस्तरः। पञ्चमीति

छ

योगविभागादिति। सुप्सुपेतीत्यन्ये। इति [1]नागोजिभट्टविरचितायां मनोरमाव्याख्यायां समासाश्रयविधयः।' (लघुशब्दरत्नः)

...'लोकाश्रयत्वाल्लिङ्गस्य विशेषनिघ्नता। पारस्करादित्वात् सुडिति दिक्। इति श्रीभट्टोजिदीक्षितकृतायां सिद्धान्तकौमुदीव्याख्यायां प्रौढमनोरमायां समासाश्रयविधयः। संवत् १८१६ पौषकृष्णचतुर्द्दश्यां भट्टमोलात्मजभट्ट इत्युपनामकेन भगवद्भक्तेन लिखितम्'। (प्रौढमनोरमा)

'अस्पष्टत्वादिति। पुंवद्रूपमिति हि तेनोक्तमिति भावः। आञ्जस्येनैवेति। अत्र केचिदित्यादिना मदुक्तमूलस्थरीत्येति भाव इति शुभम्। इति श्रीमद्दीक्षितभट्टोजिपौत्रदीक्षितहरिविरचिते प्रौढमनोरमाव्याख्याने लघुशब्दरत्ने सुबन्तं समाप्तम्। (—पूर्वार्द्धान्ते लघुशब्दरत्नः)

...'यथायथमिति। न लोकेति षष्ठीनिषेधः।

सिद्धान्तकौमुदीव्याख्या सेयं प्रौढमनोरमा।
समाप्तं तत्र पूर्वार्द्धं तेन तुष्यतु शङ्करः।

इति श्रीभट्टोजिदीक्षितविरचितायां प्रौढमनोरमायां सिद्धान्तकौमुदीव्याख्यायां पूर्वार्द्धं समाप्तिमगमत्'। (प्रौढमनोरमा)

'श्रीगुरुभ्यो नमः। ग्रन्थमध्ये कृतं मङ्गलं शिष्यशिक्षार्थमुपनिबध्नाति-श्रौत्रेति'। (—उत्तरार्द्धादौ प्रौढमनोरमा)

'श्रीगणेशाय नमः। ग्रन्थमध्ये कृतमिति। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाणीत्यादिभाष्योक्तफलोद्देशेनेत्यर्थः। ताभ्यां, वित्तैरिति'। —(उत्तरार्द्धादौ लघुशब्दरत्नः)

'......पुरुषवचनसंज्ञे तु न स्त एवेति सर्वसिद्धिः। इति लकारार्थप्रक्रिया। इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुदीव्याख्यायां प्रौढमनोरमायां तिङन्तं समाप्तम्'। (प्रौढमनोरमा)

'द्वित्वादिति। द्वित्वं क्रियासमभिहारे इत्यनेन। आदिना पुनःपुनःशब्दप्रयोग इति बोध्यम्। विस्तरस्तु मत्कृतशब्दरत्ने, मदन्तेवासिनागोजिभट्टकृते शब्देन्दुशेखरादौ द्रष्टव्यः।' इति लकारार्थप्रक्रिया। इति भट्टोजिदीक्षितपौत्रहरिदीक्षितविरचिते लघुशब्दरत्ने तिङन्तं समाप्तम्। विलम्बिनामसंवत्सरे अधिकश्रावणमासे शुक्लपक्षे द्वितीयायां तिथौ मनोरमाशब्दरत्नौ समाप्तौ।

## 'ङ.' पुस्तकम्

अपत्यादिविकारान्तार्थसाधारणतद्धितप्रत्ययप्रकरणान्तमपूर्णं केवलप्रौढमनोरमापाठमतिस्थूलाऽसुन्दरप्राचीनाक्षरमायासपठनीयं, लिपिकालाऽनिर्द्देशेऽपि जीर्णपत्रैरनुमापितपर्य्याप्तपुरातनत्वमेकेन लेखकेन प्रतिपत्रं लिखिताभिश्चत्वारिंशद्वर्णसहिताभि-

[1] नागोजिभट्टनामसहितयाऽनया पुष्पिकया ग्रन्थोऽयं लघुशब्दरत्नो नागोजिभट्टापरनामधेयेन श्रीनागेशभट्टेनैव निर्मित इति प्रमाणी क्रियते।

र्नवभिः पंक्तिभिश्चित्रितैस्त्रिनवत्युत्तरैकशतैर्दलैः ११"×४½" परिमाणपरिमितैः सनाथं, प्राचीनपण्डितैः संशोधितं, प्रान्तभागे टिप्पण्यादियोजनादिविशिष्टमिदं पञ्चमं ङ-पुस्तकमपि वैयाकरणशिरोमणीनां तेषामेवाचार्यवर्य्यश्रीगुरुप्रसादशास्त्रिमहाभागानामनुमत्याऽध्यगम्यत। अस्यापि आद्यन्तभागौ—

'श्रीगणेशाय नमः। ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः। सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम्। हयवरट्। हकारोपदेशः अट्-अश्-हश्-इण्ग्रहणेषु हकारग्रहणार्थः'। (इति प्रारम्भे)

'एतेन मीमांसकैर्यदुक्तं कलेर्ढगिति पाणिनीयसूत्रमपार्थकमित्यादि, तत्सर्वमवैयाकरणमीमांसकसन्तोषार्थमिति प्रपञ्चितं शब्दकौस्तुभे। इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः। (अन्ते पाठः)

## 'च.' पुस्तकम्

श्रीराजस्थान-संस्कृत-महाविद्यालयोपाध्यक्षाणां विद्वद्वर्य्याणामृषिकल्पानाम् अनेकशास्त्रमर्मज्ञानां श्रीनन्दकिशोरशास्त्रिमहाभागानामाशीर्वादरूपेणोपलब्धमिदं 'च'. मनोरमापुस्तकमाकारकान्तं सम्पूर्णमतिशुद्धं विशिष्टं पुरातनं विस्पष्टाक्षरं १४"×५½" मितपरिमाणेषु द्विनवतिपर्णेषु अनेकैर्लेखकैर्लिखितं, प्रतिपत्रं चत्वारिंशद्वर्णघटितैकादशपंक्तिशोभितं सुन्दरं सम्पादनकार्य्येऽस्मिन्नतितरां साहाय्यं व्यतरत्।

अस्य हस्तलेखस्य आद्यन्तभागौ यथा—

'ॐ श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः। सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम्। हयवरट्। हकारोपदेशः अट्-अश्-हश्-इण्ग्रहणेषु हकारग्रहणार्थः। अर्हेण। अड्व्यवायेपीति णत्वम्।' (—आदौ)

'एवञ्च व्याख्याभेदात्पर्य्यायेण विभक्तिः। सा च विशेषणात्षष्ठीवदिति भावः। इति सप्तमी।' (—अन्ते पाठः)

## इण्डिया-आफिस-पुस्तकागाराल्लब्धावतिप्राचीनौ हस्तलेखौ

इण्डिया-आफिस-पुस्तकालये सुरक्षितयोर्नितराम्प्राचीनयोः प्रौढमनोरमाहस्तलेखयोरवाप्तये प्रेषितमस्माकम् प्रथममेव साधारणं प्रार्थनापत्रमतितरामाद्रियन्त उदाराशयाः परकार्यसाधनसहजस्वभावा इण्डिया-आफिसपुस्तकालयाऽध्यक्षाः संस्करणस्याऽस्याऽनुत्तमतामभिकाङ्क्षन्तोऽतिप्राचीनतया पुस्तकालयाद्बहिरन्यत्र प्रेषणानर्हत्वत्युत्तमावमूल्याविमौ हस्तलेखौ सम्पादनकार्यसौकर्य्याय सहर्षं, सोत्साहञ्च स्वव्ययेनैव वाराणसीमस्मत्सविधे प्रैषयन्निति तयोरपि छ. ज. इत्येवं संकेतितयोर्बहुमूल्यान् पाठभेदान् ग्रन्थस्याऽस्य परिशिष्टभागे समायोजयद्भिरस्माभिरानन्दोऽतितरामनुभूयते।

## 'छ.' पुस्तकम्

तयोर्मध्येऽतिसुन्दरैस्सुवाच्यैर्मनोहरैरक्षरैः १६९३ वैक्रमेऽब्दे वाराणस्यां केनचित्

व्यासमाधवेन विलिखितस्य पूर्वार्द्ध-कृदन्त-स्वरवैदिकीभागस्य, केनचिदन्येन लेखन-कलानभिज्ञेन लेखकेनाऽसुन्दरैर्देवनागरैरक्षरैः पूरितोत्तरार्द्धतिङन्तांशस्य विशुद्धपाठस्य छ. संज्ञितस्याऽस्य प्रौढमनोरमापुस्तकस्य विवरणम्-इण्डिया-आफिस-पुस्तकालय-हस्त-लेख-सूचीपत्र-द्वितीय-भागे अमुना प्रकारेण वर्त्तते

647

3063, Foll 325, Sizc $11\frac{1}{2}$ in, by 5 in, Devanāgarī Character, foll-154-237 indiggerently written, forteen lins in a pege; fol 238 supplied by a modern hend; the remaining portion beautifully written; twelve lines in a page. *Prauḍhamanormā.*

The pūrvārdha ends fol. 153; tiṇant, fol. 238; Kridant, fol, 304: लिखितं वाराणसीस्थानात् व्यासमाधवजी ॥ सं० १६९३ वर्षे माघवदी १ रवौ ॥ The M. S. ends: सं० १६९३ समये माघवदी १२ गुरुवासरे ।

[J. R. Ballantyne]

## 'ज.' पुस्तकम्

द्वयोः खण्डयोर्नद्धं लकारार्थप्रक्रियान्तं कृत्प्रक्रियाप्रकरणपत्रद्वयसहितमपूर्णं सूक्ष्मैर्नाऽतिसुन्दरैर्देवनागरैरक्षरैरदक्षेण लेखकेन १७९९ वैक्रमेऽब्दे लिखितं जीर्णपत्रं शोधित-बहुलपाठं सायासपठनीयं १०"×४" मितिपरिमाणैः पञ्चसप्तत्यधिकशतद्वयपत्रैः प्रतिपत्रं पञ्चपञ्चाशद्वर्णघटितत्रयोदशपंक्तिविशिष्टैः पूर्णविग्रहं महत्त्वपूर्णमिदं ज. पुस्तकमपि इण्डिया-आफिस-पुस्तकालय-हस्तलेख-सूचीपत्रद्वितीयखण्डे इत्थं स्मर्य्यते—

648-649

2067, 2068. FOll. 182 and 85 resp; Size 10 in. by 4 in; written in a fair somewhat small, Devanāgarī hand; 10-13 lines in a page. *Prauḍhamanoramā.* Incomplete.

Vol. i Contains the *pūrvārdha.* A number of leaves, especially 161-167, have been slightly damaged by demp at one corner. Vol ii. foll 1 and 2a, the beginning of the Krit Portion; foll 3-85 (numbered 1-83) the tiṇant. Dated संवत् १७९९ फागुनवदी त्र. [GAIKAWAR]

## सम्पादनसरणिः

प्रौढमनोरमा-लघुशब्दरत्नयोरध्ययनाध्यापनं बहोः कालात् निर्माणसमकालादेव विद्वज्जनेषु, छात्रवृन्देषु च लब्धप्रचारमभूत्। अत एवैनयोर्ग्रन्थयोर्बहवो, नानाविधाश्च हस्तलेखा यत्र तत्र पुस्तकालयेषु, विदुषां गृहेषु च सुरक्षिता इदानीमप्युपलभ्यन्ते। यथा तदानीन्तनैः कोविदैस्सिद्धान्तकौमुद्या अध्ययनं प्रौढमनोरमा-

ऽनुशीलनं विनाऽपूर्णमेव मन्यते स्म, तथैव प्रौढमनोरमापरिशीलनमपि शब्दरत्नाऽनुचिन्तनं विना विगतसारमेव परिगण्यते स्म। अत एव प्रौढमनोरमया सह लघुशब्दरत्नस्यापि महान् प्रचारः, समादरश्च बभूव। लघुशब्दरत्नग्रन्थेन सह विलिखितानां प्रौढमनोरमाग्रन्थहस्तलेखानाम्बाहुल्येनोपलब्धिरप्यमुमेवार्थम्प्रमाणयति। अस्माभिरत्र सम्पानदकार्य्ये उपयुक्तेष्वष्टसु प्रौढमनोरमा-शब्दरत्नहस्तलेखेषु महत्त्वपूर्णे ग. घ. पुस्तके लघुशब्दरत्नग्रन्थेन सह लिखितायाः प्रौढमनोरमाया एव स्त इवि प्राक्प्रत्यपीपदाम।

प्रचाराधिक्यादेव ग्रन्थयोरनयोः प्रौढमनोरमा-लघुशब्दरत्नयोर्मुद्रणं, प्रकाशनञ्च बहोः स्थानान्नानाविधटीकाभिस्सह समजनि। तदत्र सम्पादनावसरे हस्तलेखैस्सह मुद्रितानि, प्रकाशितान्यपीमानि नानाविधानि संस्करणान्यप्युपायुज्यन्तास्माभिः। तथा च तेषु मुद्रितसंस्करणेषु वर्त्तमानानामपि पाठभेदानामत्र 'मुद्रितः पाठः' 'मुद्रितेषु पाठः' 'पाठोऽयं मुद्रितेषु त्रुटित' इत्येवं रूपेण संग्रहः समपाद्यत, येनास्य संस्करणस्य स्वकीयं वैशिष्ट्यं, सर्वातिशायित्वञ्चाक्षुण्णमेवाभूत्। पाठभेदेषु ये पाठाश्चमत्कृतिप्रदा अर्थाभिधानेऽधिकतयोपयोगिनो, हृदयग्राहिणश्च ते मूले समावेशिता, अन्ये च टिप्पण्यामिति ग्रन्थावलोकनशालिनामतिरोहितमेव भवेत्।

बृहच्छब्दरत्नस्य द्वावेव हस्तलेखौ ग्रन्थस्यास्य सम्पादनावसरेऽध्यगम्येतामस्माभिरिति प्रागवोचाम। अत्रोपयोगार्थं सरस्वतीभवनपुस्तकालये वर्त्तमानानां चतुर्णां बृहच्छब्दरत्न-खण्डित-हस्तलेखानामवाप्तये क्रियासमभिहारेण यथाशक्ति प्रयतमानैरप्यस्माभिस्तु विलम्बेनैव कृतकार्यैरभूयतेति तयोर्द्वयोरेव क. ख. पुस्तकयोस्साहाय्येन सम्पादनकार्यं प्रवर्त्तनीयमभूत्। अधिगताविमौ हस्तलेखौ च प्रायशः सर्वथा समानौ। यत्र स्थले एकस्मिन् हस्तलेखे त्रुटिर्भ्रमो, ग्रन्थहानिर्वा वर्त्तते द्वितीयस्मिन्नपि हस्तलेखे तत्र तादृश्येव स्थितिरिति तत्रत्यशुद्धपाठनिर्धारणार्थं खण्डितपाठपूर्त्तये च महान्तं क्लेशमनुभूयमाना बृहच्छब्देन्दुशेखर-लघुशब्देन्दुशेखरभाष्यप्रदीपोद्द्योत-काशिका-पदमञ्जरी-शब्दकौस्तुभादिसकल-व्याकरणग्रन्थानालोडयन्तः पञ्चषैर्दिनैस्ततोऽप्यधिकेन कालेन वा कदाचिद् गुरुकृपालब्धान्तर्दृष्ट्यो वयं कथं कथमपि स्वबुद्धिनिर्दिष्टं शुद्धं पाठं तत्र संयोक्तुं प्राभूम। यत्र क्वचित् क. ख. इत्युभयोर्हस्तलेखयोर्वर्त्तमानमशुद्धम्पाठं विहायाऽस्माभिः स्वबुद्धिकल्पितः शुद्धः पाठो मूले योजितस्तत्र टिप्पण्यां क. ख. पुस्तकपाठोऽपि पाठकानां विचारार्थं 'अयं क. ख. पाठः' इत्येवं रूपेण प्रादर्शि। पाठानां निर्धारणे आवश्यकं साहाय्यमुपभजतां शब्देन्दुशेखरभैरवीभावप्रकाशादिग्रन्थान्तर्गतानाम्पाठानामप्युद्धरणं स्थले स्थले व्यधायि।

लण्डननगरादुपलब्धस्य ख. संज्ञितस्य बृहच्छब्दरत्नहस्तलेखस्य नितरां भ्रान्तिजनकाक्षरवत्तया तत्र तत्राऽक्षरभ्रमदोषेणापि विभाव्यमानाः पाठभेदा यथाबुद्धि संकलिता अत्र टिपण्यां राजन्ते।

एवमेव यत्र ग्रन्थपङ्क्तिगूढार्थपरिज्ञानाय विशिष्टस्य व्याख्यानस्याऽऽवश्यकताऽनुभूता तत्राऽस्माभिस्तादृशं व्याख्यानमपि सम्पाद्य न्यूनतापरिहारेऽपि प्रायत्यतेति

सर्वमिदं गुणग्राहिणां सहृदयानां विपश्चिदपश्चिमानामेतद्ग्रन्थपरिशीलनेनाऽतिरोहितं स्यात्।

अथैवं समुपलभ्यमानैरुपकरणैर्यथामति, यथाशक्ति च परिष्कारमुपनीते सप्रौढमनोरमालघुशब्दरत्ने बृहच्छब्दरत्नग्रन्थे मनुष्यस्वभावसुलभैर्भ्रमप्रमादविप्रलिप्साकरणाऽपाटवादिभिर्हेतुभिरस्मदनवधानादिदोषप्रसूता, मुद्रणयन्त्रसङ्घर्षोत्पन्नाश्च पदवर्णमात्राभङ्गादिका नानाविधास्त्रुटयो याः खलु सम्भवेयुस्ताः सर्वा अप्युदाराशयैर्विद्वद्वरेण्यैः समीकरणीया एव।

ननु विद्वन्निवहैरेकपदे संहत्य विधातुमर्हं, नितान्तं गुरुकृत्यमेतत् प्रौढमनोरमा-बृहच्छब्दरत्न-लघुशब्दरत्न-प्रौढव्याकरणमहाग्रन्थानां सम्पादनं नाम त्रिचतुराक्षरलवलघीयसा चेतसा विदधदहं कथन्नु न भवामि वचनीयोऽभिरूपाणाम् ?

अथाऽप्यप्रकाशितग्रन्थप्रकाशनकौतुकङ्कथङ्कथमपि संवरीतुमसमर्थेन मया केनाप्यदभ्रेण साहसेन पञ्चभिर्वर्षैः साधु सम्पाद्य संस्कृतजगत्युद्भावितोऽयं ग्रन्थो यदि विदुषस्तोषयेन्ननु सफलश्रमोऽहं कृतकृत्यमात्मानं मंस्ये।

## कृतज्ञताप्रकाशः

तदेवं सोत्कण्ठविद्वन्निवहप्रतीक्ष्यमाणक्षिप्राऽऽविर्भावस्य सकलगुणगरिष्ठस्याऽद्य यावदप्रकाशितस्य प्रौढमनोरमालघुशब्दरत्नसमन्वितस्य बृहतः शब्दरत्नस्याऽस्य व्याकरणशास्त्रमहाग्रन्थस्य संस्कृतजगदुपकारबुद्ध्यैव हिन्दू-विश्वविद्यालयतः प्रकाशनायाऽनुमतिं वितरतां नेपालराज्यसंस्कृतग्रन्थप्रकाशनसमितेस्सभापतिपदवीमलंकुर्वतामकारणकारुणिकाणां विद्वज्जनवल्लभ-संस्कृतप्रणयिनां हिन्दू-विश्वविद्यालय-कुलपतीनां न्यायमूर्ति-श्रीएन्-एच्-भगवतीमहाभागानां कृतज्ञतां प्रकाशयन्नहं तेभ्यः, समितेरन्यमहनीयसदस्येभ्यः सर्वेभ्यश्च साधुवादानुपाहरन्नात्मानं बहु मन्ये।

किञ्च बृहतः शब्दरत्नस्यास्तित्वप्राचीनत्वसंशयप्रसंगे युक्तिप्रमाणवचोभिरस्या ग्रन्थप्रकाशनसमितेर्विदुषः सदस्यान् यथावत्परितोष्य तेभ्यो ग्रन्थस्याऽस्य प्रकाशनानुमतिप्राप्तये यथाशक्ति विहिताऽवितथप्रयत्नाः, सम्पादनकार्यसौकर्य्याय इतस्ततो दुर्लभहस्तलेखानामवाप्तौ ग्रन्थभूमिकाविषययोजनादावन्येषु चाऽऽवश्यककार्य्येषु विशिष्टं साहाय्यमाकलयन्तो, निरन्तरनिर्मलसरस्वतीसेवाश्रमसंजातकृशतनवोऽपि गवेषणापूर्णाद्भुतानेकग्रन्थलेखनप्रख्यातवैदुष्यपरिपुष्टयशोविग्रहाः समितेरस्याः संयोजका डा० श्रीवासुदेवशरणाऽग्रवालमहोदयाः, अथ प्रकाश्यमानस्यास्य ग्रन्थस्य विषये समये समये जिज्ञासां प्रकटयन्तो द्राक्सम्पादनाय सततं प्रेरयन्तो, मुद्रिताऽमुद्रितग्रन्थभागानामवलोकने स्वीयामभिरुचिं प्रदर्शयन्तो ग्रन्थभूमिकामिमां साकल्येन सोत्साहमवलोक्याऽस्माकमुत्साहं वर्द्धयन्तो नीतिविचारव्यवहारकुशलाः सहृदयशिरोमणयो गुणैकबद्धादराः सततसमुद्भासितस्मेरमुखश्रियः श्रीशिवनन्दलालदरमहाभागाश्च धन्यवादप्रदानप्रसङ्गेऽस्मिन् सहर्षं स्मर्य्यन्ते, आद्रियन्ते च।

तथा च सुन्दरसामयिकोपयुक्तमुद्रणमसृणकर्गदादिसुव्यवस्थामतिव्ययसाध्यामपि हृष्टेन चेतसा सम्यग्विधायाऽचिरादेव विपुलकायस्यास्य ग्रन्थस्याव्ययीभावसमासान्तं प्रथमं भागं संस्कृतविदुषाम्पुरः समुपस्थापनाय दत्तावधानानां प्रशस्तयशसां प्रख्यातगुप्तवंशावतंसानामेतद्विश्वविद्यालयकोषाध्यक्षाणां श्रीज्योतिर्भूषणमहोदयानां, मुद्रणयन्त्रणव्यवस्थापकानां सुमधुरभाषणमृदुव्यवहारव्यसनिनां, श्रीलक्ष्मीदासगुप्तमहाशयानाञ्चात्र विद्यते महान् समुद्योग इति तेऽपि अस्माकं नितरां धन्यवादार्हा एव ।

ग्रन्थस्याऽस्य सम्पादनाय स्वकीयान् प्राणेभ्योऽपि गरीयसः प्राचीनाननेकान् प्रौढमनोरमालघुशब्दरत्नयोर्हस्तलेखानस्मभ्यं प्रयच्छतां, किञ्च सर्वथा दुष्प्रापस्येदानीन्तनविद्वद्भिरनवलोकितस्वरूपस्य केवलं श्रुतनाम्नो बृहतः शब्दरत्नस्याऽमूल्यं हस्तलेखं मुद्रणपञ्जिका (Press copy) रूपेणोपयोक्तुं दत्तानुमतीनाम्पदेपदे शुद्धपाठनिर्धारणावसरे निर्दिष्टोचितमार्गाणां विलम्बेनाप्युपलब्धेभ्यः सरस्वतीभवनपुस्तकालयीयहस्तलेखेभ्यः पाठभेदानां, वर्द्धितानां पाठानाञ्च सङ्कलने कार्यान्तरव्यापृतेष्वस्मासु कृपया दर्शितविशिष्टोत्साहानां विचित्रप्रतिभाभासितान्तःकरणानां निखिलशास्त्रपारदृश्वनां हैयङ्गवीनहृदयानामाचार्यवर्य्यश्रीगुरुप्रसादशास्त्रिमहाभागानामत्र नाऽभविष्यद्विशिष्टं साहाय्यं तदा नैवेत्थं संस्कृतवाङ्मयाब्धेरमूल्यं ग्रन्थरत्नमिदं प्रकाशतामयास्यदिति परममान्यानां गुरुचरणानामेषां सर्वोऽपि सुरभारतीप्रणयिसार्थोऽधमर्णतां भजत इत्यत्र नास्त्यत्युक्तिलेशः । तदेवं सम्पादनकार्येऽस्मिन् आभ्यन्तरं, बाह्यमपि च सर्वप्रकारकं साहाय्यमाचरतामेषां चरणकमलेषु सश्रद्धं नतिततिमेव सम्पादयन्नात्मानं कृतकृत्यं मन्यामहे ।

## इण्डिया-आफिस-लाइब्रेरी

बहुभ्यो हायनेभ्यः प्राचीनग्रन्थोद्धार-सम्पादनादिकार्येषु दत्तावधानैरस्माभिर्यदाऽपि येषामपि हस्तलेखग्रन्थानामस्मभ्यं प्रेषणाय पत्रेणेकेनैव प्रार्थितास्तदैव पारेसमुद्रं व्यवस्थितस्य प्रथितनाम्न इण्डिया-आफिस-पुस्तकागारस्याधिकारिणः स्वपुस्तकालयव्ययेनैव तेषाममूल्यानां ग्रन्थानां माइक्रोफिल्मप्रतिलिपिं विधाय, सुरक्षायै सुन्दरवेष्टनेन बद्ध्वा च ताननतिदुर्लभान् नितान्तं प्राचीनानपि प्रार्थितहस्तलेखान् द्रागेव सोत्साहं, सहर्षं च प्रेषयन्तस्सदैवाऽस्माकं कार्य्ये नितराम्प्रशंसनीयमहैतुकमनुकरणीयं सहयोगं सम्पाद्याऽस्माकं हृदयानि पर्य्यहार्षुः ।

ततोऽधिगता इमे हस्तलेखा अस्माकं सविधे न स्वल्पसमयमपि तु वर्षचतुष्टयं, वर्षपञ्चकं, ततोऽप्यधिकं वा कालं, कार्य्यसमाप्तिं यावदधिकारिभिर्दत्ताऽनुज्ञाः साध्ववतिष्ठन्त इत्यहो ! सौजन्यातिशयमेतेषाम् । अद्याऽपि नानाविधग्रन्थानामेतत्पुस्तकालयीया दशाधिका हस्तलेखा अस्मद्गृहेषु राजन्तेतराम् ।

परकार्यसाधनैकव्रतिन एतत्पुस्तकालयाधिकारिणो नाऽस्मत्तः कीदृशमपि परिचयपत्रं, प्रतिज्ञापत्रं, धननिक्षेपं वा पुस्तकप्रेषणाऽवसरे कदाचिदप्ययाचिषताऽपि तु

तत्प्रेषणादिव्ययमपि ( Postage) सर्वं स्वयमेव सर्वदा सोत्साहमवक्षतेत्यलौकिक-मौदार्यमेतेषाम् इण्डिया-आफिस-पुस्तकालयाध्यक्षाणां कैर्नु शब्दैः श्लाघामहे ।

विदेशस्थस्याऽस्य पुस्तकालयस्य व्यवस्थापकानां विशेषतः संस्कृतहस्तलेख-पालानां यदि विशिष्टः सहयोगोऽस्माभिस्सह नाऽभविष्यत्तदा नैतद्विधानां लुप्तप्रायग्रन्थ-रत्नानां समुद्धारः, सम्पादनं, प्रकाशनं वा समभविष्यदिति कतिचिद्भ्यो भारतीय-पुस्तकालयेभ्यः खण्डितानामत एव नातिविशिष्टानामपि हस्तलेखानामवाप्तये सर्वविध-प्रयत्नं विधायाऽप्यनुपलब्धफलतया दूयमानचेतोभिरपि विदेशीयानां पुस्तकालयाधि-कारिणां व्यवहारेण सन्तुष्टाऽऽन्तरैरस्माभिः सधन्यवादमेतेषामाभारो सहर्षमुह्यते ।

**सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः ।**
**सर्वे भद्राणि पश्यन्तु. मा कश्चिद् दुःखभाग्भवेत् ॥**

**इति शुभम्**

संस्कृत-महाविद्यालयः,
काशी-हिन्दू-विश्वविद्यालयः,
वाराणसी—५
निर्जलैकादशी, सं० २०२१ वै०

—इत्याशंसमानस्य विनयावनतस्य
**श्रीसीतारामशास्त्रिणः,**
व्याकरणविभागाध्यक्षस्य ।

---

॥श्रीः॥

# अथ सशब्दरत्नप्रौढमनोरमायाः प्रथमभागस्य प्रकरणसूची



## अथ परिशिष्टविषयाणां सूची

---

श्रीगणेशाय नमः । श्रीपतञ्जलये नमः ।

श्रीमद्भट्टोजिदीक्षितविरचिता वैयाकरणसिद्धान्तकौमुदीव्याख्या–

# प्रौढमनोरमा

## तत्पौत्रश्रीहरिदीक्षित-विरचित-बृहच्छब्दरत्न-लघुशब्दरत्नाख्य-टीकाद्वययुता ।

ध्यायं-ध्यायं परं ब्रह्म, स्मारं-स्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥१॥

---

अथ बृहच्छब्दरत्नः

शेषविभूषणमीडे शेषाऽशेषाऽर्थलाभाय ।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥१॥

गूढोक्तिग्रथितां, पितामहकृतां, विद्वत्प्रमोदप्रदां,
भक्त्याऽधीत्य मनोरमां निरुपमाद्रामाश्रमात् सद्गुरोः ॥
तत्त्वाऽज्ञानवशात् परेण कलितान् दोषान् समुन्मूलयन्
व्याचष्टे हरिरेष तां फणिमतान्यालोड्य वैरेश्वरिः ॥२॥

भट्टोजिदीक्षितमुखैः कृतिभिः कृतेषु
ग्रन्थेष्वमी किमु न सन्ति समीहिताऽर्थाः ।
यत्सङ्कलय्य कथिता इह तावतैव
तुष्यन्तु मत्कृतिमिमामवलोक्य धीराः ॥३॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षाऽर्थं, व्याख्यात्रादीनां मङ्गलार्थञ्च निबध्नन्, चिकीर्षितं प्रतिजानीते—ध्यायमित्यादिना । 'सम्पूर्णस्वशास्त्राऽध्ययनम् एकस्मादेव गुरोरि'ति बोधयितुं 'गुरोरि'त्येकवचनम् । 'गिर' इति बहुवचनम् ।

---

अथ लघुशब्दरत्नः

**शेषविभूषणमीडे शेषाऽशेषाऽर्थलाभाय ।**
**दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥१॥**

ध्यायं ध्यायमिति । ध्यात्वा ध्यात्वेत्यर्थः । णमुलन्तमेतत् । परम्=सर्वजगदुपादानम् । कार्यब्रह्म-हिरण्यगर्भ-व्यावृत्तये इदम् । ध्यानं चिन्ताऽपरपर्यायं स्मृत्यनुकूलव्यापाररूपम् । स्मरणं तु तज्जन्यमिति विशेषः । 'गुरोरि'त्येकवचनेन 'सर्वविद्यालाभ एकस्मादेव गुरोरि'ति सूचितम् । 'प्रौढानां—मनो रमयती'त्यर्थिकां मनोरमाम् । प्रौढत्वं च

**हयवरट्** । हकारोपदेशः अट्-अश्-हश्-इण्-ग्रहणेषु हकारग्रहणाऽर्थः । अर्हेण । 'अड्व्यवायेऽपी'ति णत्वम् । देवा हसन्ति । 'भोभगो'

बृहच्छब्दरत्नः

सर्वाऽपेक्षया आत्मनः प्रियत्वात् सर्वप्रियकारित्वेन [1]बहुत्वाऽऽरोपः । यद्वा अहङ्काराऽवच्छिन्ने अध्यस्तानां चक्षुरादीन्द्रियाणां तत्तादात्म्यात् अहमुल्लेख-गोचरता, भेदाऽभेदप्रतीतिश्च । 'अहं शृणोमी'तिवत् 'मम श्रोत्रं शृणोती'त्यपि व्यवहारात् । तत्र चक्षुरादीनां बहुत्वाद् भेद-स्वातन्त्र्ययोर्विवक्षायां 'कुर्म' इति सिद्धम् । अभेदमात्रविवक्षायान्तु एकवचनम् । न च गौणता । 'गौरोऽहमि'त्यादीनां यावद्व्यवहारं बाधाऽभावात् । एवञ्च उक्तरीत्या 'वयम्' इत्यपि बहुवचनम् ।

अत एव 'अशिष्यमि'त्यनुवर्त्य 'अस्मदो द्वयोश्चे'तिसूत्रमपि[2] न कर्त्तव्यमि'ति सूत्राऽर्थः । अत एव 'यूयं गुरवः' 'आचार्याः कथयन्ती'त्यादि सङ्गच्छते ।

न चैवं 'जात्याख्यायामि'ति सूत्रे 'अशिष्यमि'त्यस्य सम्बन्धाऽऽपत्तिः । जाति-व्यक्त्योर्विवक्षाभेदेन प्रयोगद्वयस्य सिद्धत्वात् इष्टाऽऽपत्तेः ।

विवक्षा च प्रयोगाऽधीनैव । एतेन 'यस्मिन् वने एक एव आम्रवृक्षः, तत्राऽपि[3] 'आम्राः सन्ती'ति प्रयोगः स्यात् । एवं 'बहवो[4] वयं ब्रूमः' इत्यपि स्यादि'त्यपास्त-मित्यन्यत्र विस्तरः ।

अट्-अशिति । अम्ग्रहणे तु न प्रयोजनम् । न च 'क् च ह् च कहौ, पुंसः कहौ' इति समासे[5] 'पुमः खय्यम्परे' इति रुत्वप्रवृत्तिरस्त्येवेति वाच्यम् । 'झली'-त्यादिनिवृत्त्या, 'पदस्ये'त्यनुवृत्त्या च 'अन्त'ग्रहणस्य चरिताऽर्थत्वेन मुख्याऽन्त-ग्रहणे मानाऽभावेन, जशो दुर्वारत्वात् । सौत्रत्वादिना 'वषट्कार' इत्यादौ 'कार'प्रत्ययप्रवृत्तेरिव 'स्कोः संयोगाद्योरि'त्यादौ 'कार'प्रत्ययाऽप्रवृत्तेरपि, उक्तलक्ष्ये तदप्रवृत्तौ मानाऽभावाच्च । 'हयवरट्' 'सुट् तिथोरि'त्यादौ अनन्याऽर्थोऽकाराद्यु-

लघुशब्दरत्नः

सकलदर्शनाऽर्थज्ञानपूर्वक-महाभाष्यगूढाऽर्थज्ञान-वत्त्वम् ॥ इण्ग्रहणेष्विति । नन्विदं न्यूनम्, अम्ग्रहणेऽपि ग्रहणात् । फलं तु 'बहुपुम्क्हित्याह' इत्यादौ पुमः खयि (८।३।६) इति रुत्वम् । 'गवित्ययमाह' इत्यादिवत् अपदान्तत्वात् ककारादेर्न जश्त्वमिति चेन्न । सुट्तिथोः (३।४।१०७) इत्यादौ इकाराद्युच्चारणेन शास्त्राऽबोधिताऽजव्यवहितहल्समुदायस्याऽसाधुत्वबोधनात् ।

[1] 'कुर्म' इति बहुत्वमित्यर्थः ।

[2] 'सूत्रं न कर्त्तव्यम्' इति ख. पुस्तकपाठः ।

[3] 'तत्र आम्राः सन्तीति' इति ख. पाठः ।

[4] यत्र एक एव वक्ता तत्रापि त्वदुक्तरीत्या बहुत्वारोपेण 'बहवो वयं ब्रूम' इत्यपि प्रयोगः स्यादित्यर्थः ।

[5] अत्र 'पुंसः कहौ इति षष्ठीसमासे पुम्कहौ' इति रूपं बोध्यम् ।

(८।३।१७)इति रोर्यत्वम्। देवो हसति। 'हशि च' (६।१।११४) इत्युत्वम्। लिलिहिढ्वे-लिलिहिध्वे। 'विभाषेट' (८।३।७९) इति वा ढः।

बृहच्छब्दरत्नः

च्चारणेन अनुशासनाऽबोधिताऽनेकहलां संहितया उच्चारणे असाधुत्वबोधनाच्च। अत एव 'ञमङणनमि'ति मकारप्रत्याख्यानं भाष्यकारोक्तं सङ्गच्छते।

एतेन 'श् ह्' इति समुदायाऽनुकरणे 'तत् श् हित्याहे'त्यादौ 'छत्वममी'ति-वचनेन छत्वस्य प्राप्तत्वात् अमि प्रयोजनमस्त्येवे'ति परास्तम्। त्वदुक्तरीत्या झकार-भकारपरशकारस्याऽपि संभावितत्वेन मकारप्रत्याख्यानाऽनापत्तेः। न च तत्र 'व्रश्चे'ति षत्वं दुर्वारमिति वाच्यम्। हकारेऽपि तस्य दुर्वारत्वेन, त्वदुक्तशङ्काया गर्भस्रावेणैव गतत्वात्।

किञ्चोक्तरीत्या झकार-भकारपरखयोऽपि संभावितत्वेन भाष्यस्य असङ्गत-ताऽऽपत्तिः। न च 'झलां जश् झशी'ति जशो दुर्वारत्वेन खय् नास्तीति वाच्यम्। तस्याऽसिद्धत्वात्। न च 'ने'ति योगविभागेन तदभाव इति वाच्यम्। झकार-भकारयोः परत्वेन 'ङमो ह्रस्वादची'त्यस्याऽऽपत्तौ भाष्यविरोधाऽऽपत्तेः। 'ल्याब्वा-देशे ने'त्यस्य वाचनिकताऽऽपत्तेश्च। व्यवस्थितविभाषया त्वदुक्तोदाहरणे छत्वा-ऽभावस्याऽपि उपपादयितुं शक्यत्वाच्च। 'झभञ्'इत्यादिसूत्रस्थञकाराद्यनुबन्धाना-मपि 'संज्ञापूर्वको विधिरनित्य' इत्याद्याश्रित्य प्रत्याख्यानस्य मयाऽपि सुवचत्वाच्च। 'अगतिकगतिरूपम् अनित्यत्वादिकमाश्रित्य प्रत्याख्यानं न चमत्काराऽऽवहमि'ति चेत्, तर्हि 'ने'ति योगविभागस्याऽपि तद्रूपत्वात् कथं मकारप्रत्याख्यानं चमत्कार-तामावहेत्?। तस्मात् 'क्नमेजन्तः' 'अचः परस्मिन्नि'त्यादिसूत्रस्थभाष्यादि-प्रामाण्यात् लक्ष्यैकचक्षुष्कत्वेन लक्ष्याऽभावकल्पनवत्, अत्राऽपि तदभावकल्पनम् एवोचितम्।

युक्ततरञ्चैतत्। अन्यथा 'मात्रिकैकारौकारौ, चतुर्मात्रिकाऽऽकारादयश्च न लोकवेदयो'रित्यादि'एओङ्'इत्यादिसूत्रस्थभाष्यादिविरोधाऽऽपत्तेः। 'क्-श्-थेत्याहे'-त्यादौ संयोगादिलोपव्यावृत्त्यर्थं 'सङी'ति वचनस्य आवश्यकत्वेन 'परेश्च घाङ्कयो-रि'तिसूत्रस्थभाष्यग्रन्थस्य असङ्गतताऽऽपत्तेश्च। 'पृथक्स्थितिकः' 'दुःस्थितको देवदत्त' इत्यादौ पदान्तसाहचर्येण झलि परतोऽपि अनव्ययस्यैव स्कोर्लोपविधानात्, 'क'साहचर्येण सलोपस्य अखण्डे पदे एव प्रवृत्तेश्च[1] भाष्यं रमणीयमेवेति स्पष्टं सुधियाम्।

लघुशब्दरत्नः

अत एव उच्चैरुदात्तः (१।२।२९) इति सूत्रे भाष्यं-'न पुनरन्तरेणाऽचं व्यञ्जनस्योच्चार-णमपि भवती'ति। 'स्कोरि'त्यादिस्तु सौत्रः[2] प्रयोगः। अत एव अटि हकारप्रयोजनकथना-ऽवसरे भाष्ये शश्छोटि (८।४।६३) इत्युपन्यस्य तदुदाहरणं नोपन्यस्तम्। 'हकारपरशकारा-

[1] 'प्रवृत्तेश्चेति भाष्यं रमणीयमेवेति' इति क. पाठः।

[2] 'सौत्रप्रयोग इति लिखित-क. ख. पुस्तकपाठः।

**हल्**। इदं सूत्रं वल्-रल्-झल्-शल्षु हकारग्रहणाऽर्थम्। रुदिहि। स्वपिहि। 'रुदादिभ्यः सार्वधातुके' (७।२।७६) इति वलादिलक्षण इट्। स्निहित्वा—स्नेहित्वा। 'रलो व्युपधात्' (१।२।२६) इति वा कित्त्वम्। अदाग्धाम्। 'झलो झलि' (८।२।२६) इति सकारलोपः। अलिक्षत्। 'शल 'इगुपधात्' (३।१।४५) इति क्सः[1]।

बृहच्छब्दरत्नः

इदमेव हृदि निधाय—'अड्ग्रहणेषु हकारग्रहणं कर्त्तव्यम्, 'आतोऽटि नित्यं' 'शश्छोटि' 'दीर्घादटि समानपादे'। 'हकारे चेति च वक्तव्यम्'। इहाऽपि यथा स्यात्-'महाँ हि सः' इति भाष्यं, 'शश्छोटी'ति प्रतीकमुपादाय 'हकारपरस्य शकारस्य अभावात् प्रसङ्गोच्चारितमेतदि'ति व्याख्यातं कैयटेन।

हकारे पूर्वग्रन्थे द्वित्वशङ्काया अभावात्, यर्-मध्ये पाठाऽभावेनैव द्वित्वाऽप्रसक्तौ, तक्रकौण्डिन्यन्यायाऽनवताराच्च, 'नेमौ रहौ कार्यिणौ' इति भाष्यस्थं हकारग्रहणं दृष्टान्ताऽर्थमिति तावन्निर्विवादम्। तद्वत् 'शश्छोटी'त्यस्य दृष्टान्ताऽर्थमुपन्यासः। अत एव उदाहृतसूत्रत्वाऽविशेषेऽपि भाष्ये 'शश्छोटी'त्यस्य उदाहरणाऽनुपन्यासः, मध्ये पाठः, अनेकभाष्याऽविरोधश्च सङ्गच्छते इति तदाशयः। 'ऋलृगि'तिसूत्रस्थभाष्यम्-'अपशब्दस्याऽनुकरणम् अपशब्द' इत्यर्थखण्डनपरं, न तु 'अनुकरणं सर्वत्रे'त्यर्थपरम्। उक्तयुक्तेः। न च 'ञमन्ताड्ड' इत्युणादिसूत्रे मकारस्य आवश्यकत्वेन भाष्यम् अयुक्तमेवेति वाच्यम्। 'ड'प्रत्ययस्य सर्वत्र अदर्शनेन आवश्यक-बाहुलकेनैव झकार-भकारान्तेभ्यः प्रत्ययाऽनापत्तेः,[2] [3]ञन्प्रत्याहारेणैव निर्वाहात्। अष्टाध्याय्यां प्रयोजनाऽभावप्रदर्शनव्याजेन 'उणादावेव प्रयोजन'मित्यर्थपरतया भाष्यव्याख्याने, वाच्य-व्यङ्ग्याऽर्थोभयलाभेन, मन्मतेऽतिचमत्कारसम्भवाच्चेति दिक्।

हकाराऽभावे 'लू'लकारस्य[4] वैयर्थ्यमित्याशयेन सूत्रवैयर्थ्यमाशङ्कते–इदमिति। वलिति। एतेन लकारस्याऽपि प्रयोजनमुक्तम्। न च रेफात् पूर्वं हकारः पाठ्यः,

लघुशब्दरत्नः

ऽसम्भवेन 'शश्छोटी'ति प्रसङ्गोच्चारितम्' इति च कैयटेन व्याख्यातम्। 'अमि हकारप्रयोजनम्' इति च भाष्ये नोक्तमिति दिक्॥

**इदं सूत्रमिति**। वलादिप्रत्याहाराश्च रेफेणैव सन्तु। 'हरन्त्यमि'त्यत्र अन्योन्याऽऽश्रयपरिहारस्तु 'रन्त्यं हर्' इति न्यासेन, आवृत्त्या, 'हर्प्रत्याहारबोधकसूत्रसमुदायाऽन्त्यमिदि'त्य-

[1] 'शल इति क्सः' इति लिखितेषु पाठः।
[2] 'प्रत्ययाऽनापत्तौ' इति ख. ग. पाठः।
[3] 'यञ्‌प्रत्याहारेणैव' इति ख. पाठः।
[4] 'हकाराऽभावे 'ल'लकारस्य' इति क. ग. पाठः।

**हलन्त्यम् (१।३।३)। सूत्रेऽन्त्यमिति। 'हलि अन्त्यमि'ति विग्रहे 'सप्तमी'ति योगविभागात्, सुप्सुपा (२।१।४) इति वा समास इति भावः।**

---

बृहच्छब्दरत्नः

वर्-शरादयश्च सञ्ज्ञाः सन्त्विति शङ्क्यम्। '[1]हरिर्हरिरि'त्यादौ अनिष्टाऽऽपत्तेः।

यत्तु 'यवरहडि'तिन्यासे पूर्वहकारेणैव एतयोर्हकारग्रहणसिद्धिरिति। तन्न। 'जही'त्यादौ दीर्घाऽऽपत्तेः[2]।

[3]इदानीमन्योन्याऽऽश्रयपरिहारव्याजेन उभयोः प्रयोजनाऽन्तरमाह— हलि अन्त्यमितीति।

सप्तमीति। अयं भावः—'हलन्त्यमि'ति प्रयोग उक्ताऽर्थे आचार्यस्याऽभिप्रेतः, इत्सञ्ज्ञायां, प्रत्याहारे च निष्पन्ने, प्रवर्त्तमानानां तत्कृतशास्त्राणाम् 'अक्षशौण्ड' इत्यादौ तटस्थे इव उद्देश्यताऽवच्छेदकाऽऽक्रान्तत्वेन प्रवृत्तेः। न च सुप्पदार्थाऽसिद्धत्वेन अस्यामवस्थायाम् अप्रवृत्तत्वेन अनभिप्रेतत्वमिति वाच्यम्। अप्रयोजकत्वात्। 'अक्षशौण्ड' इत्यादीनाम् अनभिप्रेतत्वाऽऽपत्तेश्च। पाणिनिप्रभृतीनां शब्दप्रयोगस्तु न शास्त्रसापेक्षः, लक्ष्यैकचक्षुष्कत्वात्। साधुत्वज्ञानन्तु न शाब्दबोधे हेतुः। अभियुक्तवाक्यत्वेन वा तदनुमितिः। युक्तं चैतत्। अन्यथा व्याकरणशास्त्रविकलानां काऽपि बोधो न स्यात्। तथा वैयाकरणानां व्याकरणादेव साधुत्वबोधे, तदुत्तरकाले च वाक्यार्थबोधे, आत्माऽऽश्रयाद्यापत्तिः। सञ्ज्ञाशब्दे तु सङ्केतबोधकशास्त्राऽपेक्षा। सङ्केतकाऽन्तराऽभावात्। सत्त्वे तु पुनः प्रणयनवैयर्थ्याऽऽपत्तिरित्यलम्[4]। यद्यपि 'सह सुपे'त्यत्राऽपि योगविभागोऽस्ति, तथाऽपि अत्र एकयोगेऽपि समाससिद्धेः, पुनः 'योगविभागादि'ति नोक्तम्।

'सह सुपे'ति सूत्रम् अर्थतो निर्दिष्टम्।

ननु निर्दिष्टपरिभाषा दुर्वारा। किञ्च अगतिकगतिरूपं योगविभागमाश्रित्य अन्योऽन्याश्रयपरिहारेण आचार्याऽऽशयकल्पनं न युक्तम्। अत एव 'हल्' इत्येकदेशाऽऽवृत्तिमाश्रित्य 'हात् ल्' इति पञ्चमीसमासेन परस्पराऽऽश्रयपरिहारकल्पनम्

---

लघुशब्दरत्नः

**र्थेन वा सुकर इति भावः। ग्रहणार्थमिति। 'शषसहरि'त्येव तु नोक्तम्, खरि हकारग्रहणाऽऽपत्तौ 'हरिर्हरती'त्यादौ[5] विसर्गाऽऽपत्तेः। सप्तमीति। अधिकरणकारकस्य कर्त्राद्यन्वयद्वारा क्रियाऽन्वयात् अस्ति सामर्थ्यमिति भावः। अस्य योगविभागस्य भाष्येऽदर्शनादाह-सुप्सुपेतीति।**

---

[1] 'हरिर्हरित्यादौ' इति क. ग. पाठः।

[2] इतोऽग्रे 'आदिशब्दग्राह्यन्तु 'अजूहवदि'त्यत्र 'ओः पुण्यजीत्यापत्तेः' इति ख. पाठः।

[3] 'इदानीम्' इत्यारभ्य 'अन्त्यमितीति' एतत्पर्यन्तः पाठो ग. नास्ति।

[4] अत्र 'वैयर्थ्यापत्तिरित्याद्युक्तम्' इत्यपि पाठः सम्भाव्यते।

[5] 'हरिर्हंसति' इति लिखित–क. ख. ग. पाठः।

यद्वा षष्ठीतत्पुरुषोऽयम् । स्यादेतत्—'हल्' इत्येकदेशस्यैव तन्त्राऽऽवृत्त्येकशेषाऽन्यतमम् अस्तु । 'हस्य ल्' इति च व्याख्यास्यते । सामीप्यं षष्ठ्यर्थः ।

यद्वा माऽस्तु तन्त्रादि । अस्तु समाहारद्वन्द्वो 'हल् च ल् चे'ति । लकारस्य संयोगाऽन्तलोप इति चेत् ।

बृहच्छब्दरत्नः

अपास्तमित्यरुचेराह—यद्वेति । 'ऊदुपधाया' इत्यत्रेव 'षष्ठी स्थाने' इत्यस्य अप्रवृत्तिः ।

तन्त्रेति । तत्र (१) शब्दतन्त्रम् , (२) अर्थतन्त्रं चेति द्वैतम्[१] । सकृत् ताल्वोष्ठपुटादिव्यापारात् शब्दद्वयोच्चारणपक्षे आद्यम् । सकृत् ताल्वोष्ठपुटादिव्यापारात् प्रकाशितैकशब्देन विनिगमकाऽभावात् अनेकाऽर्थबोधे अर्थतन्त्रम् । तद्यथा—'विद्वन्मानसहंस ! वैरिकमले'त्यादौ 'मानसमेव मानसमि'ति श्लिष्टरूपकम् ।

न च अत्र आवृत्तिरिति वाच्यम् । क्रमेण बोधाऽभावात् । तस्यैव हि पुनरनुसन्धानम् आवृत्तिः ।

'मत्स्यस्तिष्ठति गङ्गायां, स्थित्वा पश्य सुरेश्वर'

—इत्यादौ यथा । अत्र हि अवान्तरवाक्यार्थस्य कर्मीभूतस्य पूर्वं बोधा-

लघुशब्दरत्नः

अनेनापि साधनस्याऽगतिकगतिकत्वादाह[२]-यद्वेति । हलः='हलि'तिसूत्रस्य, अन्त्यमिति विग्रह इति भावः । 'षष्ठी स्थाने' (१।१।४९) इत्यस्य च 'ऊदुपधाया गोहः' (६।४।८९) इत्यादाविव, 'गुणानाञ्च परार्थत्वात्' इति न्यायेन वा अप्रवृत्तिरिति बोध्यम् ।

तन्त्रावृत्त्येकशेषान्यतममस्त्विवति । यद्यपीदृशे विषये 'उच्चारयितुस्तन्त्रैकशेषाऽन्यतरेणोच्चारणं, बोद्धुस्त्वावृत्त्या बोध' इत्येवाऽनुभवसिद्धम्, तथापि व्यवस्थितैवाऽन्यतमसत्ताऽनेन[३] बोध्यते इति न दोषः । एकशेषश्च प्रत्याख्यातोऽसहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्तः ।

सामीप्यं षष्ठ्यर्थ इति । 'षष्ठी स्थाने'(१।१।४९)इत्यस्य 'गुणानां च परार्थत्वादि'तिन्यायेन अप्रवृत्तिः । न च 'इको गुणवृद्धी' (१।१।३) इति सूत्रे 'तच्छेष'शब्देन परिभाषयोरपि गुण-गुणिभाव उक्त इति वाच्यम् । 'सार्वधातुकार्धधातुकयोः'(७।३।८४) 'अलोन्त्यस्य'(१।१।५२) 'इको गुणवृद्धी' (१।१।३) इति सूत्रत्रयस्य लक्ष्यसंस्कारकमहावाक्ये विशेष्यविशेषणभाव-

[१] 'द्वैत'मिति ख. पु. नास्ति ।

[२] 'अगतिकगतित्वात्' इति क. ग. पाठः । मुद्रितेष्वपि प्रायः 'अगतिकगतित्वात्' इत्येव पाठः । 'अगतिकत्वात्' इति च क. पाठः । 'अगतिकगतिकत्वात्' इति तु भावप्रकाशानुसारी पाठः । 'स्वार्थे क' इति हि तेन व्याख्यातम् ।

[३] 'सत्ता तेन बोध्यते' इति सर्वेषु लिखितादर्शेषु पाठः । तत्र – तेन ='तन्त्रावृत्त्येकशेषान्यतममस्तु' इति ग्रन्थेनेत्यर्थो बोध्यः । 'अनेन' इति तु भावप्रकाशानुसारी पाठः ।

**मैवम् । आद्ये समासस्य क्लिष्टत्वात् । न हि 'ब्राह्मणकम्बलः' इत्यादौ ब्राह्मणसमीपवर्त्ती अन्यदीयः कम्बलः प्रतीयते ।**

बृहच्छब्दरत्नः

ऽऽवश्यकत्वेन 'स्थित्वे'त्यत्र अधिकरणत्वेन अन्वयाऽर्थं पुनरनुसन्धानात् । अत एव अत्र न तन्त्रमित्यन्यत्र विस्तरः ।

क्लिष्टत्वादिति । क्लेशस्तु 'ङे प्रथमयोरम्' 'लसार्वधातुकम्' 'उदात्तस्वरितयो-रि'त्यादाविव[1]अत्र स्थान्यादेशसम्बन्धबाध एव । लक्ष्यन्तु धत्वे, लत्वे 'उपानल् लुनाती'ति बोध्यम् । न चाऽसिद्धत्वम् । धुडादिषु इत्सञ्ज्ञाऽनापत्तेः । नाऽपि साक्षात् हकारस्थानिकलकाराऽभावेन परिभाषाबाध इति वाच्यम् । 'भविता' 'भवितारौ' इत्यादौ स्वराऽनापत्तेः । प्रथमोपस्थितपरिभाषाप्रवृत्त्यनुरोधेन आदेशादेश-ग्रहणस्य उचितत्वाच्च । अत एव 'ढकि लोप' इत्यत्र ढकूकल्पनं सङ्गच्छते । ध्वनितश्चाऽयमर्थ 'इको गुणवृद्धी' इति सूत्रे भाष्ये ।

अत एव 'फलाऽभावादित्सञ्ज्ञा न स्यादि'ति निरस्तम् । लोपस्यैव सत्त्वाच्च । न च तन्मात्रफलिका इत्सञ्ज्ञा नास्तीति वाच्यम् । मानाऽभावात् । 'अनेकाल् शिदि'त्यादिसूत्रस्थभाष्यादिविरोधाऽऽपत्तेश्च[2] । [3]सु-जस्-श्रमादौ इत्संज्ञा-ऽनापत्तेश्च । न च उपदेशे हकारस्थानिकलकाराऽभावान्न दोष इति वाच्यम् । श्रुत्या प्रकरणबाधात् । न च 'विधौ परिभाषोपतिष्ठते, नाऽनुवादे' इति निषेधः । उक्तवचनस्य, तदनित्यत्वस्य च कल्पनाऽपेक्षया, परिभाषाणाम् अनित्यत्वकल्प-नस्यैव उचितत्वेन, न्यायसत्त्वे मानाऽभावात् । ध्वनितश्चाऽयमर्थः 'ष्यङः सम्प्र-सारणमि'ति सूत्रे भाष्ये । व्यवहितस्याऽपि समीपत्वाऽनपायेन, प्रथमोपस्थितत्वाच्च लणित्यकारस्येत्सञ्ज्ञाऽऽपत्तिः । तथा च तत्त्यागे मानाऽभावेन 'लण्' इतिसूत्रस्थ-लकारेणैव हलादिप्रत्याहाराणामापत्तिः । न च इत्त्वेन प्रत्याहारे ग्रहणाऽनापत्तौ, [4]वर्णायोर्वैयर्थ्यमिति वाच्यम् । तत्सामर्थ्येन इत्त्वेऽपि ग्रहणात् । शास्त्रवैयर्थ्यमात्रेण इष्टाऽर्थकल्पने अन्योन्याऽऽश्रयपरिहारस्य वैयर्थ्याऽऽपत्तेश्चेति वदन्ति ।

ननु ब्राह्मणस्वामिकस्य ब्राह्मणसमीपवर्त्तित्वे इष्टाऽऽपत्तिरेवेत्याशङ्क्याऽऽह— अन्यदीय इति ।

लघुशब्दरत्नः

मादायैव तच्छेषव्यवहारो, न तु गुणगुणिभावेन, [5]परस्पराऽपेक्षत्वेन वेति कैयटेन स्पष्टमुक्तेः । एतन्मूलकतयैव तत्पक्षाऽसम्भवस्य तेनोक्तेश्चेति भावः ॥

क्लिष्टत्वादिति । 'ब्राह्मणस्य कम्बलः' इत्यादौ असत्यपि प्रकरणादौ स्वस्वामिभावादि-प्रतीतिवत्, अनन्तर-समीपादिशब्दप्रयोगमन्तरा सामीप्याद्यप्रतीतेः, तस्य षष्ठ्यर्थत्वाऽभावात् ।

[1] 'विव प्राप्तस्थान्यादेश' इति ख. ग. पाठः । [2] 'भाष्यविरोधापत्तेश्च' इति ख. पाठः ।
[3] 'सुजस्शौश्नमादौ' इति क. ग. पाठः । [4] 'अ-णयोर्वैयर्थ्यम्' इति पा० ।
[5] 'परस्पराऽपेक्षत्वेन चेति' इति क. पाठः ।

**न वा चित्रगुशब्दात्[१] चित्रगवीणां समीपवर्त्ती वृक्षादिः प्रतीयते । अत एव 'अनन्तरादिषु न समासः, अनभिधानादि'ति स्पष्टमाकरे ।**

बृहच्छब्दरत्नः

[१]चित्रगवीनामिति । प्रत्यासत्त्या विभक्त्याक्षिप्तप्रकृतेः [२]कवर्गवदुत्तरपद—समासरूपाया एव ग्रहणेन 'कुमति चे'त्यनेन णत्वं नेत्यादि वक्ष्यामः । आकरेति । 'मतुप्विधायकसूत्रादिस्थे' इति शेषः । न च अस्य बहुव्रीहिमात्रविषयकता[३] । सङ्कोचे मानाऽभावात् । अनभिधानरूपसाधकयुक्तेः उभयत्राऽपि तुल्यत्वाच्च । परस्येव पूर्वस्याऽपि समीपत्वाऽनपाये 'हरन्त्यमि'ति वक्तव्ये 'हलन्त्यमि'ति सूत्रेण तदभावस्य बोधनाच्च । साफल्ये सम्भवति निष्फलत्वकल्पनम् अन्याय्यम् । अत एव अगतिकगतिरूपो मध्यमपदलोपी समासो निरस्तः ।

सामीप्यादौ प्रचुरप्रयोगाऽभावेन 'अभिव्यक्तपदार्था ये' इति न्यायेन समासविधायक'षष्ठी'तिशास्त्राऽप्रवृत्तिरिति ध्वनयन्नाह—किम् (बहुना) इति । [४]'गङ्गातीरः' 'ग्रामकूप' इत्यादौ तु अवयवाऽवयविभावाऽर्थकषष्ठ्या समासः । तीरत्वं न जातिः । मानाऽभावात् । किन्तु अनुद्धृतजलसमीपदेशत्वम् । अत एव निमित्तवशेन

लघुशब्दरत्नः

तत्प्रयोगे तु असामर्थ्यात् षष्ठीसमासाऽप्राप्तिरिति मध्यमपदलोपिसमासे, सौत्रे वा तत्र समासस्य क्लिष्टत्वमिति भावः । तदेतदाह—न हीत्यादिना, तत्राऽनिष्ट इत्यन्तेन ।

चित्रगवीणामिति । कुमति च (८।४।१३) इति णत्वम् । दन्त्यपाठस्तु लेखकप्रमादात् । एवं 'स्त्रीगवीणामि'त्येकशेषप्रकरणान्तस्थकैयटप्रयोगेऽपि बोध्यम् । 'अस्तेरनन्तरे, समीपे वा' इत्यादि भाष्यं तु अनन्तरादिपदाऽध्याहारेण तन्निरूपितसम्बन्धार्ऽथिका, स्थानपदाध्याहारेण तन्निरूपितसम्बन्धार्ऽथिका वा षष्ठीत्यभिप्रायकम् । अत एव मतुप्सूत्रे कैयटेन 'गावोऽस्य सन्त्यनन्तराः' इत्यर्थे मतुप्शङ्कापरभाष्यव्याख्यावसरे 'आनन्तर्यम् अस्त्यर्थवत् प्रकृत्यर्थोपाधिरि'त्युक्तं, न तु तस्य षष्ठ्यर्थत्वेन प्रत्ययार्थत्वमुक्तम् । भाष्यकृता च असामर्थ्यात्तत्र वृत्त्यभाव उक्तः । षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात् क्वाऽसामर्थ्यम् । तस्माद्यत्र षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिः, तत्र अनन्तरादिपदाऽध्याहार एव बोध्यः । तत्र अस्तिग्रहणाऽभावे, तस्य अन्यफलकत्वे वा सूत्राऽनुपात्ताऽस्त्यर्थाऽन्तर्भावेण मत्वर्थीयवत्, बहुव्रीहिवच्च, तथाभूतानन्तर्याद्यर्थाऽन्तर्भावेण 'चित्रा गावोऽस्य सन्त्यनन्तराः' इत्याद्यर्थे बहुव्रीहि-मत्वर्थीयौ न भवतः, अनभिधानादिति मतुप्सूत्रे भाष्ये स्पष्टम् । अनन्तरादेः इदमर्थत्वे 'तस्येदम्' (४।३।१२०) इति शैषिकोऽपि अनभिधानान्नेति तस्येदम् (४।३।१२०) इत्यत्र भाष्ये । तदुक्तम्—अनन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकरे इति । तत्र 'समास'ग्रहणं तद्धितवृत्तेरपि उपलक्षणम् ।

[१] मूले' चित्रगवीनाम्' इति ग. पाठः ।
[२] 'कवर्गवदुत्तरपदाक्षिप्तसमासरूपायाः' इति तु भावप्रकाशे पाठः ।
[३] 'विषयता' इति ग. पाठः ।
[४] 'गङ्गातीरम्' इति ख. पाठः ।

किं बहुना, 'ब्राह्मणस्य कम्बलः' 'चित्रा गावोऽस्ये'ति व्यस्तप्रयोगोऽपि तत्राऽनिष्टः ।

द्वितीयेऽपि संयोगान्तलोपो दुर्लभः । यणः प्रतिषेधाऽऽरम्भात् । तत्प्रत्याख्यानपक्षेऽपि 'झलो झलि' (८।२।२६) इत्यतो झल्ग्रहणमपकृष्य संयोगान्तस्य

---

बृहच्छब्दरत्नः

नद्यादीनामन्यदेशगमने प्रथमसंयुक्तदेशस्य तीराऽव्यवहारो[१], देशाऽन्तरस्य तीरव्यवहारश्च सङ्गच्छते। न चैवं 'तटी'त्यादौ जातिप्रयुक्तो ङीष् न स्यादिति वाच्यम्। 'आकृतिग्रहणे[२]'त्यनेन जातिशब्दस्य सङ्केताऽङ्गीकारादिति वक्ष्यते।

अस्तु वा तीरत्वं जातिः, तस्या उक्तरीत्या जलसमीपदेशनिष्ठताया आवश्यकत्वेन, जलस्याऽपि वाच्यताकोटौ विशेषणतया प्रवेशात् उक्तरीत्यैव[३] अन्वयः। तत्र जले, समीपदेशे च भिन्ना शक्तिः। 'देवदत्तनप्ता'इत्यादौ इव [४]वा एकदेशाऽन्वयः। ससीमक-सारण्यकदेशो ग्रामशब्द इत्यर्थः। 'ग्रामो लब्ध' इत्यादौ तथैव बोधात्। [५]'अक्षधूरन्तः समास' इत्यत्र सामीप्याऽर्थकषष्ठीतत्पुरुष' इति दुराग्रहे तु 'अनेकाल्शिदि'त्यादिसौत्र-सामीप्याऽर्थकबहुव्रीहिवत् भाष्यप्रामाण्याद् बोध्यः।

---

लघुशब्दरत्नः

अनन्तरादिशब्दैः षष्ठीतत्पुरुषादिस्तु भवत्येव। 'ग्रामकूपः' 'गङ्गातीरम्' इत्यादौ समीपे एव अवयवत्वाऽऽरोपेण समासः। स्पष्टा चेयं रीतिः 'मपर्यन्तस्य' (७।३।९१) इति सूत्रे कैयटे।

किं च 'हस्य ल्' इत्यर्थे 'हल विलेखने' इति धातोर्लस्य इत्त्वाऽऽपत्तिः। न च फलाऽभावः ?। 'देवदत्त ! हल्' इत्यादौ[६] ङित्त्वसामर्थ्यादभस्यापि टेर्लोपवत्, लित्त्वसामर्थ्यात् प्रत्ययात्पूर्वत्वाऽभावेऽपि लित्स्वरस्यैव फलत्वस्य[७] वक्तुं शक्यत्वादित्यपि बोध्यम्।

यद्यपि 'हलसीरात्' (४।३।१२४) इति निर्देशेन तस्य नेत्त्वमिति कल्पयितुं शक्यं, तथापि ज्ञापकस्वीकाराऽपेक्षया सूत्राऽऽवृत्तिरेव लघीयसीति दिक्।

---

[१] तीरव्यवहार' इति क. ग. पाठः।

[२] 'आकृतिग्रहणेनेत्यनेन' इति ख. ग. पाठः।

[३] 'उक्तरीत्यैव निर्वाहः' इति क. पाठः।

[४] 'विव एकदेशाऽन्वयः' इति क. पाठः।

[५] 'न चेत्-अक्षधूरन्तः समासः' इति भाष्यप्रयोगः (५-४-७४)।

[६] 'देवदत्त हल' इत्यादौ इति क. पाठः। 'देवदत्त हलतीत्यादौ' इति ख. पाठः। 'देवदत्तस्य हल' इत्यादौ' इति ग. पाठः। 'देवदत्त हलेत्यादौ' इत्यपि च क्वचित् पाठः। तत्र देवदत्तेति सम्बोधनम्। 'हले'ति च लोटो मध्यमैकवचने रूपम्। हे देवदत्त ! त्वं हल=विलिखेत्यर्थः। 'हल्' इति पाठे तु क्विबन्तत्वं बोध्यम्।

[७] 'फलत्वं वक्तुं शक्यमित्यपि बोध्यम्' इति सर्वलिखितादर्शेषु पाठः। भावप्रकाशाऽनुसारेण तु 'शक्यत्वादि'ति पाठोऽत्र धृतः। 'अत्र अपिर्नोचित' इति परे।

**झलो [1]लोपविधानाच्च। किं च पदार्थबोधं विना वाक्यार्थबोधाऽसम्भवेन हल्प्रत्याहारसिद्धेः प्राक् एतत्सूत्राऽर्थाऽबोधे प्रसक्ते तदुद्धाराऽर्थोऽयं यत्नः। अस्यां च अवस्थायां हल्शब्दाऽर्थाऽप्रसिद्धौ द्वन्द्व एव दुर्लभः। सहविवक्षाया**

बृहच्छब्दरत्नः

झलो लोपेति। न च चरमपक्षे निस्तारः। तस्य दूषयिष्यमाणत्वात्। पक्षद्वयैकरूप्याऽर्थं 'पूर्वं पूर्वम् अन्तरङ्गमि'त्याश्रित्य सुब्लोपाऽसिद्धत्वाच्च। वस्तुतस्तु चरमपक्षेण संयोगान्तलोपप्रतिबन्धस्य[2] कर्त्तुमशक्यत्वेऽपि, झल्ग्रहणाऽपकर्षेण तत्प्रतिबन्धो दुर्वारः। यथोद्देशपक्षे तदप्रवृत्तौ तत्प्रवृत्तेरङ्गीकारादित्यादि वक्ष्यामः। अत एव 'ररन्त्यमि'ति न सूत्रितम्। न च य्-वोः संग्रहार्थं 'हलि'त्युक्तमिति वाच्यम्। 'लोपो व्योर्वली'ति लोपेन, लस्येव, प्राक् प्रश्लेषसम्भवात्। 'यरन्त्यमि'त्युक्त्या त्वदभिमताऽर्थसिद्धेश्च।

हल्शब्दार्थाऽप्रसिद्धाविति। 'द्वन्द्वप्रयोगकर्त्तुरि'ति शेषः। द्वन्द्व एवेति। न च असमस्तमेवाऽस्त्विति वाच्यम्। 'संयोगान्तस्य पदान्तस्ये'त्यर्थस्य दूषयिष्यमाणत्वेन, संयोगान्तस्य पदत्वाऽभावेन लोपाऽप्रवृत्तेः।

अत एव 'शषसरि'त्युत्तरं 'ह्' इत्येव सूत्रमस्तु। उपदेशाऽन्त्यत्वात् 'ह्' इत्यस्य इत्सञ्ज्ञा। वलादीनां स्थाने वहादयः संज्ञाः सन्तु। न च 'अन्त्येने'त्यप्रधानतृतीयानिर्देशात् 'स्वस्य चे'त्यनेन अन्त्यहकारस्य ग्रहणाऽनापत्तौ, 'रुदिही'त्याद्यसिद्ध्यापत्तिरिति वाच्यम्। रेफेणैव प्रत्याहारसिद्धौ 'वह्'ग्रहणसामर्थ्येन अप्रधानस्याऽपि परामर्शात्। अत एव 'सर्वनाम्नाम् उत्सर्गतः प्रधानपरामर्शित्वादि'ति मूले 'उत्सर्गत' इत्युक्तम्। 'हलन्त्यमि'तिसूत्रस्थाने 'हहन्त्यमि'ति सूत्रं पाठ्यम्। 'हह्'शब्दोत्तरं 'ह्' इत्यस्य समासाऽभावेऽपि, संयोगान्तलोपात् न परस्पराऽऽश्रय' इत्यपास्तम्।

'एव'शब्दोऽप्यर्थे। तेनाऽर्थवत्त्वाऽभावात् सुबुत्पत्तिर्न स्यादिति बोध्यम्। द्वन्द्वाऽप्राप्तौ हेत्वन्तरस्याऽपि सत्त्वात् पृथगुक्तिः।

सहविवक्षाया असम्भवादिति। यत्तु 'विवक्षा च वक्तुः। सा च 'अस्मात्पदात् इममर्थं जानातु' इतीच्छा। सा च 'आदिरन्त्येने'ति सूत्रप्रणयनात् अनुमीयते। तथा च 'आदिरन्त्येने'तिसूत्रव्यापारात् प्रागपि हल्पदसङ्केतितान् अर्थान् पाणिनिः जानात्येवेति, तत्सम्भवेन 'चाऽर्थे द्वन्द्व' इत्यादीनां प्रवृत्तिरि'ति। तन्न। [3]सामान्यविशेषवाचित्वाऽऽपत्तौ द्वन्द्वाऽनापत्तेः। किञ्च 'तुल्यास्यप्रयत्नम्' 'अणुदित्सवर्णस्ये'ति प्रणयनेन 'अकार-हकारादयो ग्राहका' इत्यर्थस्य ज्ञातत्वेन, 'अइउण्' 'हय-

लघुशब्दरत्नः

**झलो लोपेति। सौत्रलोपाश्रयणे तु मूलोक्तमेव लघु।**

[1] 'लोपविधामात्' इति ङ. पाठः। [2] 'प्रतिबन्धकस्य' इति ख. ग. पाठः।
[3] 'सामान्यविशेषाऽवाचित्वापत्तौ' इति ख.।

**असम्भवात्। तस्मात् यथोक्तमेव न्याय्यम्।**

बृहच्छब्दरत्नः

वरडि'त्यादीनां तदर्थाऽभिप्रायेण प्रणयनाऽऽपत्तेः। न च 'अइउणि'त्यादौ ग्राहकशास्त्राऽप्रवृत्त्या अनभिप्रेतत्वमिति वाच्यम्। 'इको यणची'त्यादावपि दीर्घस्थानिकयणादेशस्य 'अशास्त्राऽर्थताऽऽपत्तेः[1]। 'ल्वादिभ्य' इत्यादिनिर्देशैः इगादिशब्दानां तदभिप्रायेण प्रयोगाऽनुमानात् शास्त्राऽर्थत्वमिति चेत्। तर्हि 'हल्च ल्चे'तिद्वन्द्वप्रयोगेण-शास्त्राऽप्रवृत्तावपि तदभिप्रायेण प्रयोगाऽनुमानात्-शास्त्राऽर्थताऽऽपत्तिर्दुर्वारा। बोद्धृबोधस्तु शक्त्या, लक्षणया वेत्यन्यदेतत्। 'गङ्गायां घोषः' 'यष्टीः प्रवेशये'त्यादौ वक्तृतात्पर्याऽन्यथाऽनुपपत्त्यैव जघन्यवृत्त्या अर्थाऽन्तरकल्पन'मिति सर्वमतम्।

न चेष्टाऽऽपत्तिः। अकारयोः सावर्ण्याऽभावाऽऽपत्तेः। न च हकाराऽकारयोः सावर्ण्याऽभावस्य आचार्यैर्ज्ञातत्वेन, हकारेण अकाराऽग्रहणान्न दोष इति वाच्यम्। एतादृशज्ञाने मानाऽभावात्। न च 'नाज्झलौ' इति सूत्रमेव मानम्। भवदुक्तरीत्या, 'इको यणची'त्यादौ तथा दृष्टत्वाच्च 'अकारतुल्यप्रयत्नस्थानानां, हकारतुल्यप्रयत्नस्थानानां च परस्परं सावर्ण्यं ने'त्यर्थस्य जायमानत्वेन, तद्विषयकज्ञानस्यैव क्लृप्तत्वात्। तस्मिंश्च ज्ञाने हकाराऽकारयोः[2] सावर्ण्याऽभाववत्, अकारयोः सावर्ण्याऽभावस्याऽपि विषयत्वात्। 'भवदुक्तज्ञानाऽनुरोधेन भवदभिमतो 'नाज्झलौ' इत्यस्याऽर्थः, 'नाज्झलौ' इत्यनेन च तज्ज्ञानाऽनुमितिरि'ति परस्पराऽऽश्रयम्। इदमेवाऽभिसन्धाय 'अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वादि'तिपूर्वपक्षस्थभाष्यादिग्रन्थाः। 'इकारसवर्णिनां, शकारसवर्णिनाञ्च परस्परं सावर्ण्यं ने'तिबोधे इकार-शकारयोः सावर्ण्याऽभावस्याऽपि प्रविष्टत्वेन, इकारेण शकारग्रहणाऽनापत्तौ दोषाऽभावेन, शङ्काया एवाऽनुदयेन, समाधानस्याऽप्यसङ्गतताऽऽपत्तौ, सिद्धान्तग्रन्थे एतदनुक्तौ बीजाऽभावेन च, सकलभाष्यग्रन्थस्य दत्तजलाऽञ्जलित्वाऽऽपत्तिः।

किञ्च त्वन्मते 'वर्णानामुपदेशस्तावत्, उपदेशोत्तरकाला इत्सञ्ज्ञा, इत्सञ्ज्ञोत्तरम् आदिरन्त्येनेति प्रत्याहारः, प्रत्याहारोत्तरकालं सवर्णसञ्ज्ञा, सवर्णसञ्ज्ञोत्तरकालम् अणुदित्सवर्णस्य चाऽप्रत्यय इति सवर्णग्रहणमि'ति वाक्याऽपरिसमाप्तिन्यायप्रतिपादकभाष्ये क्रमेण बोद्धृणां बोधस्योपपादितत्वेऽपि, आचार्यैः पूर्वं ज्ञातत्वेन तदभिप्रायेणैव शब्दप्रयोगात्, तदन्यथाऽनुपपत्त्या लक्षणाया आवश्यकत्वे, पूर्वपक्षसिद्धिरेव स्यात्, न सिद्धान्तसिद्धिरिति वदामः।

लघुशब्दरत्नः -

**असम्भवादिति।** न च आद्यन्तौ टकितौ (१।१।४६) इत्यादौ यथासङ्ख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नाऽन्वयमात्रेण सहविवक्षामाश्रित्य यथा द्वन्द्वसाधुत्वं, तथा इहापि प्रथमतो 'लकारो, हल्पदवाच्यश्च इत्'इति सामान्यतो बोधं कल्पितमादाय

[1] 'अशास्त्रतापत्तेः' इति ख. पाठः।

[2] 'हकारयो'रिति क. ख. पाठ.। 'हकाराऽकारयोः' इति ग. पाठः।

बृहच्छब्दरत्नः

तत्र लक्ष्यतावच्छेदकं तद्वाच्य-वाच्यत्वं,[१] तत्सवर्णित्वं वा, तत्तद्व्यक्तित्वं वेत्यन्यदेतत्।

न च 'नाज्झलौ' इति बोधकाले तात्पर्यग्राहकाऽभाव इति वाच्यम्। विभक्ति-व्यत्यासादिवत् आप्तवाक्येनैव तन्निर्णयात्। प्राथमिकबोधस्य ह्रस्वमात्राऽभिप्रायेण कस्य चित्सत्त्वेऽपि, 'अणुदित्'सूत्रबोधोत्तरं तात्पर्यनिर्णये, प्राथमिकबोधस्य अप्रामाण्यकल्पनाच्च। हल्-च ल्-चेत्यत्र हल्पदार्थनिर्णयाऽर्थं तवाऽप्येषैव गतिः। अत एव 'इदम इश्' इत्यादौ 'प्राथमिकविशिष्टविषयकबोधसत्त्वेऽपि, अनुबन्ध-विनिर्मुक्तविषयकबोध[२] औत्तरकालिकः प्रामाणिक' इति ग्राहकसूत्रस्थभाष्यादि-संमतः पन्था इति ङमुट्सूत्रे निरूपयिष्यामः।

उत्सर्गाऽपवादे हि एषैव गतिः। तथा च 'नाज्झलौ' इति निर्देशो दुरुपपादः। न च 'नाऽऽज्झलौ' इति निर्देशेन भाष्योक्तप्रयत्नभेदस्य सूत्रकाराऽभिप्रेतत्वं कल्प्यते इति वाच्यम्। तावताऽपि भाष्यग्रन्थाऽनुद्धारात्। 'नाज्झलावि'तिसूत्रस्य वैयर्थ्या-ऽऽपत्तेश्च। एतेन 'नाज्झलावितिनिर्देशेन[३] अकार-हकारयोः सावर्ण्याऽभावज्ञापनात्, [४]भिन्न-जातीय-ग्रहणाऽभावज्ञापनाद्वा न दोष' इत्यपास्तम्। 'उरण्रपर' इति सूत्रे लृकारग्रहणाऽनापत्तेश्च। तस्मात् 'वर्णानामुपदेशस्तावदि'त्यादिना शास्त्रप्रणयना-ऽन्यथाऽनुपपत्त्या कल्पिताऽऽचार्यज्ञानानां क्रम एव अन्वाख्यायते। उपदेशादिपद-दानेन भाष्यात्तथैव लाभात्। [५]शास्त्रप्रणयनाऽन्यथाऽनुपपत्त्या कल्पितज्ञानेच्छयोः कालाऽन्तरसत्त्वे मानाऽभावाच्च।

यद्वा 'वर्णोपदेशकाले इत्सञ्ज्ञा करिष्यमाणा, अणादिसञ्ज्ञाः करिष्यमाणाः, सवर्ण-सञ्ज्ञा[६] करिष्यमाणा, 'अ'इत्यष्टादशानां सञ्ज्ञा करिष्यमाणा, इत्सञ्ज्ञाकाले वर्णोपदेशः कृतः, अणादिसञ्ज्ञादिकं तु करिष्यमाणमि'त्याद्याचार्याणां ज्ञानकलापः उपजीव्योपजीवकभावेन शास्त्राणां प्रणयनादनुमितो 'वर्णानामुपदेशस्तावदि'त्यादिना

---

लघुशब्दरत्नः

द्वन्द्वसाधुत्वम्, ततो विशेषजिज्ञासायाम् आदिरन्त्येन (१।१।७१) इत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः।

किं च सह विवक्षा=सह वक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनाऽनुपपत्त्या पाणिनेस्ततः

---

[१] 'तत्सवर्णित्वं चेत्यन्यदेतत्' इति क. पाठः।
[२] 'विषयबोधः' इति ग-पाठः।
[३] 'हकारयो'रिति क. ख. पाठः। 'हकाराऽकारयोः' इति ग. पाठः।
[४] 'भिन्नजातीयाऽग्रहणज्ञापनाद्वा' इति क. ख. ग. पाठः।
[५] 'शास्त्रे' इति क–पाठः।
[६] 'सवर्णाऽसवर्णसञ्ज्ञाः' इति ग-पाठः।

बृहच्छब्दरत्नः

प्रतिपाद्यते। 'उत्तरकाले'त्युपादानेन भाष्यग्रन्थाऽर्थस्य तथैव युक्तत्वात्। पक्षद्वयेऽपि 'अइउण्' 'नाज्झलौ' इत्यादौ दीर्घादीनां न ग्रहणं, तत्प्रणयनकाले तदर्थस्यैव अज्ञानेन, 'द्वादशेऽह्नि नाम कर्त्तव्यमि'तीच्छायाः सत्त्वेऽपि, प्रथमादिदिवसे तदर्थाऽभिप्रायेण शब्दाऽप्रयोगस्य, तेन तदप्रतीतेश्च सर्वाऽनुभवसिद्धत्वेन, ह्रस्वाऽभिप्रायेणैव प्रयुक्तत्वात्। 'तस्य परमाम्रेडितमि'त्यस्य पाठात्परत्वेऽपि, पाठक्रमात् आर्थक्रमस्य बलीयस्त्वेन 'नाम्रेडितस्याऽन्त्यस्य तु वे'तिसूत्रात्पूर्वं 'तस्य परमाम्रेडितमि'तिसूत्रस्य 'नाम्रेडिते'तिसूत्रनिरपेक्षतया अर्थवर्णनस्य कर्त्तुं शक्यत्वेन, पक्षद्वयेऽपि न दोषः। अणुदित्सूत्रस्य तु वर्णोपदेशादिसापेक्षत्वेन पूर्वत्वं दुरुपपादम्। इदमेव अभिसन्धाय भाष्यवार्त्तिकयोः-'वर्णपाठ उपदेश इति चेदवरकालत्वात्परिभाषाया अनुपदेशः'। 'वर्णपाठ उपदेश इति चेत् अवरकालत्वात् परिभाषाया अनुपदेशः। किं 'परा सूत्रात् क्रियते' इत्यवरकाला ?। 'ने'त्याह। सर्वथा अवरकालैवे'त्युक्तम्। एवञ्च सति 'हल्शब्दाऽर्थाऽप्रसिद्धौ' इति पितामहचरणोक्तिरनवद्यैवेति सुधीभिर्विभावनीयम्।

किञ्च 'द्वन्द्वप्रयोगेण सहितबोधस्यैव वक्तृतात्पर्यविषयत्वमि'त्यवश्यं वाच्यम्। 'मुखनयनं पश्ये'त्यत्र तु उभयपदार्थज्ञानवतः सहबोधस्यैव सत्त्वेन, न वक्तृतात्पर्यविघातः। एवं च अण्-सवर्णपदार्थसमर्पकत्वेन 'अइउण्' 'नाज्झलौ' इत्यत्र ग्राहकसूत्राऽप्रवृत्तेरिव, इत्पदार्थसमर्पकत्वेन 'हल्' इत्यत्र 'आदिरन्त्येने'ति सूत्राऽप्रवृत्तेः, सङ्केतबोधकशास्त्रात् बोद्धृणां बोधाऽभावेन, आचार्याणां तदभिप्रायेण शब्दप्रयोगो दुर्वचः।

न च 'लकार इत्सञ्ज्ञो भवती'त्यस्य 'आदिरन्त्येने'तिसूत्रस्थेत्पदार्थसमर्पकत्वेऽपि, 'हल्शब्दवाच्यं किञ्चिदित्सञ्ज्ञं भवती'त्यस्य तत्समर्पकत्वे मानाऽभाव इति वाच्यम्। 'तुल्यास्ये'त्यस्य सवर्णपदार्थसमर्पकत्वेऽपि, 'नाज्झलौ' इत्यस्य तत्समर्पकत्वे मानाऽभावस्य तुल्यत्वात्। 'अपवादविषयं परित्यज्ये'तिन्यायेन 'नाज्झलौ' इतिवाक्यार्थबोधं विना 'तुल्यास्ये'त्यस्याऽसम्भव इति चेत्। द्वन्द्वप्रयोगेण सहितबोधस्यैव वक्तृतात्पर्यविषयत्वनिर्णयात्, हल्घटितवाक्यार्थं विना 'ल् इत्संज्ञं भवती'ति वाक्याऽर्थाऽनिष्पत्तेस्तुल्यत्वात्।

किञ्च क्रमोऽपि नियन्तुमशक्यः। किञ्च लकारघटितवाक्यस्य निर्णायकत्वे, अभ्यर्हितत्वेन लकारस्य पूर्वनिपाताऽऽपत्तेः। अपि च हल्पदशक्याऽज्ञानम् अस्मदादिनिष्ठं पाणिनिर्जानाति, उत न ?। नाऽऽद्यः। मुखपदार्थमजानन्तं पुरुषं लक्ष्यी-

---

लघुशब्दरत्नः

पूर्वमपि हल्पदार्थज्ञानात् अक्षतैव, बोद्धृबोधस्तु क्रमेणैवेति वाच्यम्। आद्यन्तौ। (१।१।४६) इत्यादौ यथासङ्ख्यसूत्राऽऽरम्भसामर्थ्येन तथा साधुत्वाऽङ्गीकारेऽपि, अन्यप्रकारेण तस्य साधुत्वकल्पने मानाऽभावात्।

किं च 'श्रोतृणां सह बोधो भवतु' इतीच्छया सह वक्तुमिच्छाया एव सहविवक्षात्वेन,

बृहच्छब्दरत्नः

कृत्य 'मुखनयनं पश्ये'ति वदतः, तन्निष्ठम् अज्ञानं जानतो भवत इव, पाणिनेः अज्ञत्वाऽऽपत्तेः। एतेन अन्त्योऽपि निरस्तः।

अस्मदाद्यज्ञाननिवृत्त्यर्थं प्रवृत्तस्य पाणिनेः आदौ हल्पदविषयकाऽज्ञाननिवृत्त्युपायप्रणयनस्यैवोचितत्वाच्च। 'ल् इत् भवति, 'आदिरन्त्येन सहेते'त्यनेन हल्पदार्थनिर्णये, समासे[1] 'एकप्रसरताभङ्गः' इति मीमांसकप्रसिद्धदूषणस्य वज्रलेपायितत्वाच्च। लोपद्वारेण लक्षणाया एव अन्वाख्यातत्वेन, तस्याः शक्यज्ञानं विनाऽनुपपत्तेः, परस्पराऽऽश्रयस्य दुष्परिहरत्वाच्च। पाणिनिना आदौ विशेषाऽर्थनिर्णयस्य कर्त्तुमशक्यत्वस्य कल्पनाऽपेक्षया, क्लिष्ट-लकारप्रश्लेष-सहिता-ऽनेकबोध-कल्पनाऽपेक्षया च सूत्राऽऽवृत्तेरेव लघुत्वाच्च।

एतेन[2] 'हल्शब्द-वाच्यं किञ्चित्, 'ल्' इति च इत्सञ्ज्ञं भवती'त्याकारकः सहितबोधो वर्ण्यते' इति परास्तम्। किञ्च लकारेत्सञ्ज्ञाप्रवृत्तिसमये 'हल्शब्दवाच्यं किञ्चिदित्संज्ञं भवती'ति वाक्येन अचु इत्सञ्ज्ञा दुर्वारा। अस्याम् अवस्थायां प्रतिबन्धकाऽभावात्। ततः पश्चाद्विशेषाऽर्थबोधेऽपि 'न सम्प्रसारणे' 'स्थानेऽन्तरतम' इत्यादिसूत्रस्थभाष्योक्तरीत्या जातस्य निवृत्तिः कर्त्तुमशक्या। एकसूत्रोपात्तत्वाऽविशेषेण एकदैव लक्ष्यसंस्कारकता[3] युक्ता।

किञ्च 'हल्शब्दवाच्यं किञ्चिदि'त्यर्थस्य यथाश्रुतग्राहिणं प्रति यथाश्रुतग्राहिणा निरूपयितुं शक्यत्वेऽपि, 'न हि निर्विशेषं सामान्यं भवती'ति न्यायात्, नियतशास्त्राऽर्थस्य युक्तत्वाच्च, पदार्थनिर्णयाऽभावे अन्वयस्य वक्तुमशक्यत्वाच्च, प्रकाराऽन्तरेण तन्निर्णये लकारप्रश्लेषो व्यर्थः। स्पष्टं चेदं प्रगृह्यसञ्ज्ञासूत्रे कौस्तुभे।

अपि च—सतः संज्ञिनः सञ्ज्ञाभावप्रतिपादकभाष्येण निर्द्धारितसञ्ज्ञिनोऽपि न्यायसाम्येन [4]तद्भावस्योपपादनेन, वृद्धिसंज्ञासूत्रस्थभाष्यविरोधस्य दुःपरिहरत्वम्। प्रमित्य-नुष्ठानयोर्विरोधाऽऽपत्तेश्च। 'एकत्राऽन्वयित्वरूपाऽङ्गमात्रवैकल्येन सहविवक्षाया अभावेऽपि, द्वन्द्वसमासस्थपदानां द्वन्द्वसमासस्थपदेष्वन्वये 'समूलाकृतजीवेषु हन्कृञ्ग्रह' इत्यादिज्ञापकात् द्वन्द्वसाधुत्वमि'त्याद्यग्रे निरूपयिष्यामः।

---

लघुशब्दरत्नः

श्रोतॄणामपि सहबोध एवोचितः। तादृशेच्छया तेषां तादृशबोधाऽजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तित्वाऽऽपत्तिः। 'मुखनयनं पश्ये' त्यादौ तु न दोषः, उभयज्ञत्वेन ज्ञातं प्रत्येव तादृशशब्दप्रयोगात्। तेन रूपेण ज्ञानं भ्रमः, प्रमा वेत्यन्यदेतत्।

---

[1] अत्र—एकप्रसरता च एकवाक्यता, विशिष्टोपस्थितिर्वा। यथा—'वषट्कर्त्तुः प्रथम भक्ष' इत्यादौ। अत्र 'एकप्रसृताभङ्गः'इति, 'एकप्रसृतताभङ्ग'इति च क-ख-पाठः।

[2] 'हल्पदवाच्यम्'इति क-ख-पाठः।

[3] 'संस्कारता' इति ग पाठः।

[4] 'तदभावस्य' इति क. पाठः।

बृहच्छब्दरत्नः

'साम आकम्' 'इरयो रे' इत्यादौ तु दोषशङ्कैव न। आमादीनाम् उत्पत्तौ अपेक्षितत्वेऽपि, बोधे तदभावात्। अत एव 'हर् न्त्यमि'ति न सूत्रितम्। न च 'रात्सस्ये'ति नियमेन संयोगान्तलोपाऽप्राप्तौ, 'रो री'ति लोपे, 'ढ्रलोपे'इति दीर्घाऽऽपत्त्या, [1]'हारन्त्यमि'त्यस्यापत्तौ गौरवं स्यादिति वाच्यम्। नियमसूत्राणां निषेधमुखेन प्रवृत्तौ 'रेफात्परस्य सकारभिन्न-हलो लोपो ने'त्यर्थे[2] तक्रकौण्डिन्यन्यायेन रेफाऽतिरिक्तहल एव ग्रहणात्। 'ढो ढे लोपः,[3] 'रः खरवसानयोरि'ति न्यासेन सिद्धौ 'रो री'ति पृथक्करणात् अनित्यत्वेन अत्राऽप्रवृत्तेश्च। किञ्च रेफस्थाने भकाराऽनुबन्धं विधाय त्वदुक्तरीत्या भकारप्रश्लेषेणाऽन्योन्याश्रयपरिहारसंभवे, हकारान्तर्भावेन प्रत्याहारकरणेन त्वदुक्तप्रकाराणाम् [4]असाधुत्वबोधनाच्च। तदेतत्सकलमभिसन्धायाऽऽह—तस्माद्यथोक्तमिति( —११ पृष्ठे )।

यत्तु प्राचीनप्रक्रियां व्याचक्षाणमताऽनुयायिन आहुः—'चतुर्दशसूत्र्यां 'शषसरि'त्यन्तं समुदायमुद्दिश्य 'हल्'इत्यनेन हल्सञ्ज्ञाविधानात् [5]'हल्सञ्ज्ञक-रान्तसमुदाये लकारस्य प्रविष्टत्वेन, 'हलन्त्यमि'तिसूत्रेण हलिति लकारस्येत्सञ्ज्ञायां, वलादिप्रत्याहारसिद्धिरि'ति। तन्न। 'ह्' इति सञ्ज्ञयैव इष्टसिद्धौ, गुरुभूतसञ्ज्ञाकरणस्य वैयर्थ्याऽऽपत्तेः। अपि च रान्तसमुदायस्योद्देश्यत्वेन, अज्ञातज्ञापकत्वरूपोपदेशत्वाऽभावेन इत्सञ्ज्ञाऽनापत्तिः। यदि अनेकसूत्रकरणसामर्थ्यात् आवृत्त्यादिना उभयरूपत्वं, तर्हि गौरवं स्फुटमेव। सिद्धान्ते तु आनुपूर्वीविशेषविधानात् उपदेशत्वम्।

किञ्च सञ्ज्ञा-सञ्ज्ञिनोरेकवाक्योपात्तत्वाऽभावात् आसत्त्यभावः। 'प्रत्यय' इत्यादीनान्तु प्रतिसूत्रमनुवृत्तिः। 'ते तद्राजाः' इत्यत्र तु तच्छब्देन परामर्शात् न दोषः। 'हल्' इत्यत्र व्यवहितानाम् अनुवृत्तौ मानाऽभावः। मध्येऽपि सम्बन्धाऽऽपत्तिः, 'अइउणि'त्यादीनामनुवृत्तौ बीजाऽनापत्तिश्चेति दिक्।

एतेन 'गौरवात् सूत्राऽऽवृत्तिर्न युक्ते'त्यपास्तम्। अर्थान्तरा-ऽतिव्याप्त्यादिनिवारणाऽर्थं गौरवस्य अन्यत्र आचार्यैराश्रयणात्। प्रामाणिकगौरवस्य अदोषाच्च।

---

लघुशब्दरत्नः

किं च पाणिनेः पूर्वं हल्पदार्थज्ञानेऽपि तदभिप्रायेण न प्रयोगः। अन्यथा व्याख्यातृपरम्पराऽवगतवक्तृतात्पर्याऽनुपपत्त्या, लट् स्मे (३।२।११८) इति सूत्रस्थकैयटोक्तरीत्या लक्षणया, तन्त्राऽन्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनुमानाद्वा, ततः श्रोतॄणां

---

[1] 'हरन्त्यमिति' इति ख-पाठः।

[2] 'लोपो ने''त्यर्थेन' इति क-पाठः।

[3] 'ढो ढे लोपः', खरवसानयोः' इति ख-पाठः।

[4] 'अशुद्धत्व' इति ग-पाठः।

[5] 'हल्संज्ञाक' इति ख-पाठः।

बृहच्छब्दरत्नः

नन्वेवमपि 'न विभक्तौ तुस्माः' इति वाक्याऽर्थबोधात्पूर्वं 'हलन्त्यमि'त्यस्य लक्ष्यसंस्कारकत्वाऽनुपपत्तिः, 'पूर्वं ह्यपवादा अभिनिविशन्ते, पश्चादुत्सर्गाः' इति प्रातिपदिकाऽर्थसूत्रे भाष्ये उक्तत्वात्। स च अत्र [1]असम्भवी, विभक्तिशब्द-वाच्ययोः [2]सुप्तिङोः, [3]'तु'शब्दवाच्य-तवर्गस्य च बोधे 'आदिरन्त्येने'ति सूत्रस्य अपेक्षणात्। न च 'तुशब्दवाच्यं किञ्चिदस्ती'ति सामान्याऽऽकारेणाऽर्थः पूर्वं वर्णयितुं शक्य एव, विशेषाऽर्थबोधस्तु 'हलन्त्यमि'तीत्सञ्ज्ञोत्तरमिति वाच्यम्। णकारादौ इत्सञ्ज्ञाप्रवृत्तिसमये सङ्कोचे मानाऽभावेन, स्मात्-स्मिनादौ इत्सञ्ज्ञाऽऽपत्तेः।

'न विभक्तौ तुस्माः' इति सूत्राऽऽरम्भसामर्थ्यात् तदभाव इति चेत्।

तत्रेदं प्रष्टव्यम्,—किं मणि-मन्त्रादिन्यायेन दाहादिप्रतिबन्धवत् इत्त्वप्रति-बन्धः, उत सुप्तिङादिसञ्ज्ञाऽनन्तर्भूतवाक्याऽन्तरकल्पनेन, उत शब्दमर्यादया अने-नैव ?। नाऽऽद्यः। प्रतिबध्ये अनियतताऽऽपत्तेः। [4]अनेकवर्णोच्चारणस्य वैयर्थ्यापत्तेश्च। ध्वनितं चेदं 'नवेति विभाषे'ति सूत्रे भाष्ये।

न द्वितीयः। उक्तरीत्या कल्पितवाक्येनैव निषेधसिद्धौ, 'न विभक्तौ' इति सूत्रस्य वैयर्थ्याऽऽपत्तेः। 'यस्मिन् ज्ञापिते यस्य चारितार्थ्यं [5]तत्तेन ज्ञाप्यमि'ति सिद्धान्तात्। 'न विभक्तौ' इतिसूत्रस्याऽबोधेन कल्पकाऽभावाच्च।

एतेन तृतीयोऽपि निरस्तः। निष्पन्ने भोजने 'मा भुक्था' इति वाक्येनेव, पूर्वं निरपवादत्वात् जाताया इत्सञ्ज्ञाया, औत्तरकालिकविशेषाऽर्थबोधकनिषेधेन तदभावस्य उपपादयितुम् अशक्यत्वाच्च।

एतेन 'पूर्वयणि सम्प्रसारणाऽभावबोधकवचनं 'न सम्प्रसारणे' इत्यनेन ज्ञाप्यते' इत्यपास्तम्। सङ्कोचे मानाऽभावेन पूर्वपरयोरभिनिर्वृत्तौ, अनभिनिर्वृत्तौ वा

लघुशब्दरत्नः

बोधसम्भवेन, इतरेतराश्रयस्यैवाऽभावेन[6] तदाशङ्का, 'लश्चेति वक्तव्यमि'त्यादिसमाधान-पर-भाष्याऽसङ्गत्यापत्तेः। न चैवम् अजादिव्यवहारस्याऽपि लक्षणादिनैव उपपत्तौ, आदिरन्त्येन (१।१।७१) इति सूत्रवैयर्थ्यम्। 'क्वचिल्लक्षणादिना बोध' इति सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाऽभावात्, 'नाऽसूया कर्त्तव्या यत्राऽनुगमः क्रियते' इति पङ्क्तिविंशति (५।७।५९) इति सूत्रे भाष्योक्तेः। तस्मात् 'करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेण आचार्यस्य पूर्वम् अप्रयोग' इत्येव कल्पना ज्यायसी।

[1] 'असम्भवा' इति ग-पाठः।
[2] 'सुप्तिङोः स्वशब्दवाच्य' इति क-ख-पाठः।
[3] 'स्वशब्दवाच्यतवर्गस्य' इति खः पाठः।
[4] 'अनेकवर्णोच्चारस्य' इति ग-पाठः। 'वैयर्थ्यापत्तेः' इति ख. शोधितः पाठः।
[5] 'तत्तेन ज्ञाप्यतामिति' इति क-पाठः।
[6] 'अभावे' इति क. पाठः।

बृहच्छब्दरत्नः

लक्ष्यस्य असम्भवेन, वैयर्थ्यस्य दुर्वारत्वेन, ज्ञापकस्य वक्तुमशक्यत्वाच्च। अत एव 'स्थानेऽन्तरतम' इति सूत्रं प्रतिपादकमि'त्युपक्रम्य—'अन्येन निर्वृत्तानाम् अनेन प्रतिपत्तिः। निर्वृत्तप्रतिपत्तौ निर्वृत्तिर्न सिद्ध्यति। सर्वे सर्वत्र प्राप्नुवन्ति। किन्तर्हि उच्यते 'निर्वृत्तिर्न सिध्यती'ति, न साधीयो निर्वृत्तिः सिद्धा भवति ?। न ब्रूमो 'निर्वृत्तिर्न सिध्यती'ति। किं तर्हि ?। इष्टा व्यवस्था न [1]प्रकल्पते। न सर्वे सर्वत्र इष्यन्ते। इदमिदानीं किमर्थं स्यात् ?। अनर्थकं च। 'अनर्थकमि'त्याह। यो हि भुक्तवन्तं ब्रूयात् मा भुक्था इति, किं तेन कृतं स्यादि'ति भाष्योक्तं सङ्गच्छते। तुत्व-विभक्तित्वयोरज्ञानेन 'उक्तसंज्ञा यस्य भाविनी'त्यर्थाऽङ्गीकारेऽपि, अस्यामवस्थायां न निषेधप्रवृत्तिः। अत एव 'उपदेशे इदन्त्यम्', 'अच्' 'अनुनासिकः' इति न सूत्रितम्। अन्यथा 'ऐऔजि'त्यत्र प्रवृत्त्या 'अच् चेत् इत् भवति तर्हि अनुनासिक एवे'तिनियमवाक्याऽर्थनिष्पत्तौ, 'भू'प्रभृतौ दोषाऽभावेन, हल्ग्रहणवैयर्थ्यं स्पष्टमेव। एवञ्च अन्योन्याऽऽश्रयशङ्काऽपि नास्तीति महल्लाघवम्।

न च 'अच्' इति सूत्रेण प्राप्तेत्सञ्ज्ञाया व्यावर्त्तनेन नियमस्य चारितार्थ्ये, व्यवहितनियमे मानाऽभाव इति वाच्यम्। योगविभागसामर्थ्येन तस्य सुलभत्वात्। न च विपरीतनियमाऽऽपत्तिः। 'मिदचोऽन्त्यात्पर' इति ज्ञापकात्। तस्मात् गुरुभूतन्यासकरणे उक्त एव आशयः। एवञ्च सति 'हलन्त्यमि'ति वाक्याऽर्थो दुर्वच इति चेत्।

अत्रोच्यते—[2]'न संप्रसारणे संप्रसारणं' 'न धातुलोप'इत्यादिभिः सामान्याऽपेक्षज्ञापकैर्बोध्याऽर्थस्य 'पूर्वं ह्यपवादा अभिनिविशन्ते' इत्यादेः अत्र प्रवृत्तिरिति तावन्निर्विवादम्। तदर्थं च अपवादाऽन्वेषणमावश्यकम्। एवञ्च तद्वाक्यनिष्पत्त्यर्थं तदभावेऽपि कार्यनिष्पादकत्वमावश्यकम्। न च स्मात्-स्मिन्नादावतिप्रसक्तिः। तस्यामवस्थायां तत्सिद्धेरेवाऽऽकाङ्क्षिततत्वेन अन्यत्र प्रवृत्तेः। 'न सम्प्रसारणे [1]सम्प्रसारणं' 'न धातुलोप' इत्यादिभिः अपवादसिद्ध्युपयोग्यतिरिक्तविषये अपवादबोधं विना प्रवृत्त्यभावबोधनाच्च। न चैवम् 'उपदेशे इदन्त्यमि'त्यस्याऽपि 'पूर्वं ह्यपवादा' इत्यादेः प्रवृत्त्या नियमसूत्रनिष्पत्त्युपयोगिनि 'ऐऔजि'त्यत्रैव प्रवृत्तौ, हल्ग्रहणवैयर्थ्यम्। न चेष्टाऽऽपत्तिः। भाष्यादावप्रत्याख्यानादिति वाच्यम्। ज्ञापकेन अनिष्टवारणे प्रतिपत्तिगौरवाऽऽपत्त्या, 'अह्नष्टखोरेवे'त्येवकारवत् विपरीतनियमशङ्कावारणाऽर्थं हल्ग्रहणस्य सत्त्वात्।

---

लघुशब्दरत्नः

ध्वनितश्चाऽयमर्थो नाऽज्झलौ (१।१।१०) इति सूत्रे अष्टादशानां ग्रहणाऽभावाय 'वर्णानामुपदेशस्तावत्, उपदेशोत्तरकाला इत्सञ्ज्ञा, इत्सञ्ज्ञोत्तरकालः प्रत्याहारः, प्रत्याहारोत्तरकाला सवर्णसञ्ज्ञा, तदुत्तरकालम् अणुदित् (१।१।६९) इति सवर्णग्राहकमि'त्येतेन समु-

---

[1] 'प्रकल्प्येत' इति भाष्ये पाठः। २ 'न संप्रसारणे सम्प्रसारणमि'ति क. ग. नास्ति।

बृहच्छब्दरत्नः

किञ्च 'वृद्धिरादैजि'त्यस्य निरपवादकत्वे निर्णीते, केवलस्य कार्यनिष्पादकत्ववत्, 'उपदेशे इदन्त्यमि'ति सूत्रस्य अपवादसिद्ध्युपयोगिनि प्रवृत्तेः पूर्वम् 'अनुनासिक' इति सूत्रस्य अच्पदार्थबोधाऽभावेन, अपवादकत्वग्राहकाऽभावात्, आद्यसूत्रस्य अर्थनिष्पादकत्वे, अनिष्टविषये प्रवृत्तेर्दुर्वारत्वात्। 'अपवादकत्वे निर्णीते तत्सिद्ध्युपयोगिन्येव प्रवृत्तिः, तत्सिद्ध्युपयोगिन्येव प्रवृत्तौ चाऽपवादकत्वनिर्णय'-इत्यन्योन्याश्रयग्रस्तत्वाच्च। 'हलन्त्यं, 'न विभक्तौ तुस्मा'इत्यत्र तु 'हलन्त्यमि'त्यस्य अपवादसिद्ध्युपयोगिनि प्रवृत्त्यभावेऽपि, 'विभक्तिशब्दवाच्ये 'तु'शब्दवाच्यः, सकारो, मकारश्च इन्न भवती'ति नञ्घटितवाक्यश्रवणात् सकारमकारयोः'हलन्त्यमि'त्यस्यैव प्राप्तत्वाच्च, अव्यवहितपूर्वसूत्राऽपवादकत्वे निर्णीते, 'हलन्त्यमि'त्यस्य उक्तरीत्या तत्सिद्ध्युपयोगिमात्रे प्रवृत्तेर्निष्प्रत्यूहत्वात्।

एतेन 'हरन्त्यमि'ति वक्तव्ये 'हलन्त्यमि'तिसूत्रेण सामीप्यादौ षष्ठीतत्पुरुषाद्यभावबोधनेऽपि, 'उपदेशेऽजनुनासिक इदि'त्यस्य खण्डत्रयकरणे हल्ग्रहणवैयर्थ्याऽनुद्धारेण, ज्ञापकं शिथिलमेवे'त्यपास्तम्। उक्तरीत्या हल्ग्रहणवैयर्थ्यस्य गीर्वाणगुरुणाऽपि निरूपयितुमशक्यत्वात्। अत एव 'हलन्त्यमि'ति सूत्रे 'अन्त्यमि'त्येव आवर्त्तनीयम्। 'अन्त्यमि'त्यनेन लकारस्य इत्सञ्ज्ञायां हल्पदार्थसिद्धिः। ततो 'हलन्त्यमि'त्यस्य बोधः। इदं च नियमाऽर्थम्। तेन'भू'प्रभृतौ न दोष' इत्यपास्तम्। हल्' इति लकारे 'अन्त्यमि'ति सूत्रप्रवृत्तिसमये हल्त्वाऽभावेन, अपवादविरुद्धाऽर्थसम्पादकत्वेन उत्सर्गत्वाऽनापत्तौ, अपवादकत्वस्याऽपि अनापत्तेश्च।

वस्तुतस्तु 'हलन्त्यमि'ति [1]सूत्रं सूत्राऽऽवृत्तिव्याजेन एकदेशाऽऽवृत्त्याद्यभावबोधनाऽर्थम्। न च वैपरीत्यं शङ्क्यम्। फलाऽभावात्। अस्मन्मते तु सामीप्यादौ षष्ठीतत्पुरुषाद्यभावबोधनमेव। एतेन 'उच्यमानेऽपि एतस्मिन्सूत्रे 'न सम्प्रसारणे, तस्मिन्', कुत एतत्—परस्य भविष्यति, न पुनः पूर्वस्येति ?। एकयोगलक्षणं खल्वपि सम्प्रसारणम्। तद्यदि तावत् परम् अभिनिर्वृत्तं, पूर्वमपि अभिनिर्वृत्तमेव। प्रसक्तस्य चाऽनभिनिर्वृत्तस्य. प्रतिषेधेन निवृत्तिः शक्या कर्तुं, नाऽभिनिर्वृत्तस्य। यो हि भुक्तवन्तं ब्रूयान्मा भुक्था इति, किं तेन कृतं स्यात् ?। अथाऽपि पूर्वम् अनभिनिर्वृत्तम्, परमपि अनभिनिर्वृत्तमेव। तत्र निमित्तसंश्रयोऽनुपपन्नः। तथा च पक्षद्वयेऽपि सूत्रमनर्थकमि'ति पूर्वपक्षमभिधाय, 'न सम्प्रसारणे सम्प्रसारणमि'ति ज्ञापकात् वाच्यवृत्त्या, सम्प्रसारणपदलक्षणया यणि निषेधप्रवृत्त्या पूर्वरूपस्य

लघुशब्दरत्नः

दितेन अन्यत्र सवर्णानां ग्रहणं भवति, न स्वस्मिन्, नाऽपि स्वाङ्गे' इत्येवं वाक्याऽपरिसमाप्तिप्रतिपादकभाष्येणाऽपि। अन्यथा तत्तच्छास्त्रप्रणयनाऽनुपपत्त्या पाणिनेस्तथाज्ञानस्य पूर्वमपि सत्त्वेन, आचार्येण तथा प्रयोगे, बोद्धृणामपि क्रमेण तथा बोधे उपपन्ने, किं तेन कृतं स्यात् ?।

[1] 'सूत्रसूत्रावृत्तिव्याजेन' इति ख. पाठः।

बृहच्छब्दरत्नः

वा निषेधेन, अनभिनिर्वृत्तौ वा, [1]अभिनिर्वृत्तौ वा पूर्वयणि सम्प्रसारणाऽभावस्य, परयणि सम्प्रसारणस्य बोधनात्, [2]सूत्रस्याऽर्थवत्त्वे न दोष इति, 'नैष दोष' इत्यादिग्रन्थेन भाष्यकाराद्युक्तं सिद्धान्तवर्णनमपास्तम्। उक्तरीत्या 'वचिस्वपी'त्यादौ 'पूर्वं ह्यपवादे'त्यादिप्रवृत्तौ उपस्थिताऽपवादसिद्ध्य् पयोगिनि परयण्मात्रे शास्त्रप्रवृत्तौ दोषाऽभावेन, लक्षणाया निर्बीजत्वात्। 'न सम्प्रसारणे'इत्यादिप्रामाण्याऽर्थं लक्षणाकल्पनवत् उक्ताऽर्थककल्पनस्योचितत्वाच्च[3]। न चैवमपि स्मात्-स्मिन्नादौ अन्तरङ्गत्वात् इत्सञ्ज्ञा स्यादिति वाच्यम्। वाक्याऽर्थस्य बोधेन 'उपजनिष्यमाणोऽप्यपवाद उपसञ्जातनिमित्तमुत्सर्गं बाधते' इति न्यायेन, अकृतव्यूहपरिभाषया च तदभावस्योपपादयितुं शक्यत्वात्। अत एव 'दधती'त्यादौ अन्तादेशो न। तवर्गग्रहणसामर्थ्यात्परम्परासम्बन्धेन [4]विभक्तिस्थस्याऽपि ग्रहणे न काऽपि दोषशङ्केति मात्सर्यमुत्सार्य सुधीभिराकलनीयम्॥

स्यादेतत्। मध्यगरूपाऽर्थस्य सूत्रे अभावेन विवरण-विव्रियमाणयोर्विरोधः। न च 'सह आ समन्तात् गच्छती'ति व्युत्पत्त्या 'सहेता'शब्द एव मध्यगाऽर्थबोधक इति वाच्यम्। 'एत्येधत्यूठ्सु' इति वृद्धेर्दुर्वारत्वात्। अन्योन्याऽऽश्रय-तत्परिहारादीन् वदता भाष्यकारेण 'कटी-वी'त्यत्र च प्रश्लेषाऽभावस्य बोधनाच्च। अत एव 'हलि'ति प्राचां सञ्ज्ञायाः सत्त्वेन, अन्योन्याश्रयशङ्कैव नास्ती'ति निरस्तम्।

किञ्च प्राचां ग्रन्थे हकारादीन् स्वरूपेण पठित्वा हल्सञ्ज्ञा विहिता, उत 'आदिरन्त्येने'ति सूत्रसमानाऽर्थकवाक्येन ?। नाद्यः। गुरुभूतवचनकल्पने मानाऽभावात्। 'आदिरन्त्येने'ति सूत्रवैयर्थ्याऽऽपत्तेश्च। एतेन अन्त्योऽपि निरस्तः। अन्योन्याऽऽश्रयस्य तदवस्थत्वाच्च। 'हयवरडि'त्यादौ रेफादिभिः प्रत्याहाराऽऽपत्तेश्च। न च सूत्रत्वाद्युपाध्यवच्छिन्नाऽन्त्य एव अत्र 'अन्त्य'शब्देन गृह्यते इति वाच्यम्। आदेरपि तथात्वाऽऽपत्तौ, यणादिसञ्ज्ञाद्यसिद्ध्यापत्तेः। 'हलन्त्यमि'त्यादाविव

---

लघुशब्दरत्नः

**कथं वा नाज्झलौ (१।१।१०) इत्यत्र [5]अष्टादशादीनां ग्रहणवारणं[6] भाष्योक्तं सङ्गतं स्यादिति विभाव्यताम्। तदाह—तस्मादिति—(११ पृष्ठे)।**

---

[1] 'अभिनिर्वृत्तौ वा' इति ख. नास्ति। [2] 'सूत्रस्यार्थवत्वेन' इति ख. पाठः।

[3] इतोऽग्रे—'अत्र शोधपत्रम्—'अभिनिर्वृत्तौ, अनभिनिर्वृत्तौ च 'न सम्प्रसारणे' इतिसूत्रवैयर्थ्यापत्त्या 'पूर्वं ह्यपवादा अभिनिविशन्ते' इति ज्ञापनेन सम्प्रसारणविधानात् पूर्वमपवादसिद्धेरेव आकाङ्क्षितत्वेन, परयण्येव पूर्वं सम्प्रसारणप्रवृत्तिरिति हि तदर्थः। अत एव सर्वनिषेध्यैः सह एकवाक्यतेत्यलम्' इति ख. पाठः।

[4] 'स्थस्यापि संग्रहणे' इति क. ग. पाठः।

[5] 'अष्टादशानां ग्रहणवारणम्' इति क. ख. ग. पाठः।

[6] 'वारणपरं भाष्योक्तम्' इति क. शोधितः पाठः।

**मध्यगानामिति। आद्यन्ताभ्याम् अवयवाभ्याम् अवयवी समुदाय आक्षिप्यते। तस्य च युगपत् लक्ष्ये प्रयोगाऽभावात् तदवयवेषु अवतरन्ती सञ्ज्ञा मध्यगेषु विश्राम्यति, न तु आद्यन्तयोः, संज्ञास्वरूपाऽन्तर्भावेण तयोः**

बृहच्छब्दरत्नः

उपायाऽभावेन तादृशाऽर्थे मानाऽभावाच्च। अत एव 'र'प्रत्याहारसिद्धिरित्याशङ्क्याह—आद्यन्ताभ्यामिति।

अयमर्थः—'परस्मिन् सति यस्मात् पूर्वो नास्ति स आदिः', 'पूर्वस्मिन्सति यस्मात्परो नास्ति सोऽन्त्यः'। न च आद्यन्तशब्दयोरपूर्वा-ऽनुत्तरयोः शक्तिरस्तु इति वाच्यम्। लोके 'अयमादिः' [1]'अन्तो' वे'त्युक्ते 'अवशिष्टमपि किञ्चिदस्ती'ति नियमेन प्रत्ययात्, विशिष्टविषयकबोधस्य आवश्यकत्वात्। अत एव 'आद्यन्तवदेकस्मिन्नि'ति सूत्रस्य उक्तिसंभवः। व्यपदेशिवद्भावमाश्रित्य भाष्ये प्रत्याख्यातमित्यन्यदेतत्। तत्र 'एक एवे'त्यत्र नाऽऽग्रहः। तथा च आदेः परभूताः, अन्त्यात्पूर्वभूताः सर्वे इह गृह्यन्ते। सङ्कोचे मानाऽभावात्। न चैवम् एङादिसञ्ज्ञा अकारादीनाम्, ऐकारादीनां च [2]स्युरिति वाच्यम्। एकार-ङकारयोराद्यन्तत्वाऽनापत्तेः। आद्यन्तयोः अन्यतराऽनुपादाने स्यादेष दोषः। ङकारेत्सञ्ज्ञाबोधकवाक्याऽर्थपर्यालोचनदशायाम् [3]'ऐऔजि'त्यादीनामुपस्थितत्वात्। क्वचिदित्सञ्ज्ञाया अन्त्यस्य सत्त्वेऽपि, सर्वत्र तदभावेन इत्त्वाऽविघातात्। रप्रत्याहारे अग्रिमाणां ग्रहणाऽऽपत्तेश्च। परेषां ग्रहणे सूत्रत्वाद्युपाध्यवच्छिन्नाऽन्त्यरूपेत्त्वस्य सत्त्वाच्च।

नन्वेवमपि 'स्वस्य चे'त्यनुवृत्तिर्व्यर्था, समुदायस्य प्रयोगाऽभावात्, 'आनर्थक्यात्तदङ्गेषु'इति न्यायेन मध्यगेष्विव, आद्यन्तयोरपि प्रवृत्तत्वात्। न च पराऽर्थम् उपादीयमानत्वेन तयोरग्रहणम्, अत एव 'मध्यस्थाऽनुबन्धानाम् अप्रधानत्वात् न ग्रहणमि'ति भाष्याद्युक्तं सङ्गच्छते इति वाच्यम्। इकारादीनां प्रत्याहारद्वये ग्रहणा-

लघुशब्दरत्नः

आद्यन्ताभ्यामिति। अवयवत्वेन बोधकाऽऽद्यन्तशब्दाभ्यामित्यर्थः। तस्य=समुदायस्य। तयोः पारार्थ्येति। सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकाले एव तयोः पारार्थ्यनिर्णयादित्यर्थः। परामर्शित्वादिति। वस्तुतो ज्ञापकादिना अस्यापि न संज्ञाकार्यम्, आद्यन्तशब्दाभ्याम् आद्यन्तघटितसमुदायस्य आक्षेपेण, अन्येषामिव तयोः प्राप्तायाः सञ्ज्ञायाः प्रकारान्तरेण अशक्यवारणत्वात्। स्वशब्दाऽनुवृत्तेश्च न फलम्। भाष्येऽपि एतत्फलितार्थकथनमेव–'स्वस्य च रूपस्ये'ति। सञ्ज्ञास्वरूपत्वं विशिष्टस्याऽस्तु, प्रत्येकं स्वबोध्यत्वं चाऽस्तु,

[1] 'अन्त्यो वा' इति क. ख. पाठः।
[2] 'स्यादिति' इति ग. पाठः।
[3] 'एओङित्यादीनाम्' इति ग. पाठः।

पारार्थ्यनिर्णयादिति भावः।

स्वस्य चेति। 'स्वं रूपम्' (१।१।६८) इत्यनुवृत्तेः। स्वं रूपं च आदेरेव गृह्यते, न अन्त्यस्य। 'अन्त्येने'ति अप्रधानतृतीयानिर्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्।

आद्योच्चारणमिति। यद्यपि 'उपदिश्यतेऽनेने'ति करणव्युत्पत्त्या

बृहच्छब्दरत्नः

ऽनापत्तेरित्याशङ्कामपाकर्त्तुमाह—सञ्ज्ञास्वरूपेति। सङ्केतकाले एव पारार्थ्यनिर्णयोऽस्ति।

[1]स्वं रूपमिति। यत्तु 'प्रत्ययलोपे प्रत्ययलक्षणमि'त्यादिसूत्रस्थभाष्यादौ 'स्वमि'त्यस्य संज्ञासमर्पकत्वमुक्तं, तत्तु उत्तरत्राऽपि तत्त्वाऽऽपत्त्या, 'पूर्वोच्चारितः संज्ञी'ति भाष्यविरोधेन च, पठिताऽनुपूर्व्यैव उपपत्तौ व्यत्यासकल्पनस्य अन्याय्यत्वेन च उपेक्ष्यम्। भाष्यनये तु आदिग्रहणस्य आवृत्तिर्बोध्या, न अन्त्यस्येति। न च अन्तरङ्गत्वात् इत्सञ्ज्ञा-लोपयोः कृतयोः, असंनिधानात् सञ्ज्ञा नेति वाच्यम्। 'लणि'त्यकारप्रवेशाऽऽपत्तेः। वर्णसमाम्नाये अभावेऽपि, अन्त्यशब्देन उपस्थितत्वात् आदेरिवाऽऽपत्तेः। 'आदिरन्त्येने'तिसूत्राऽऽरम्भसामर्थ्येन [2]अन्त्यविषये तद्बाधाच्च।

नाऽपि 'अनुनासिक' इत्यादिनिर्देशात्प्रत्याहारकार्यं नाऽनुबन्धे' इति मूलोक्त-

लघुशब्दरत्नः

को विरोधः ?। यथा अच्च घेः (७।३।११९) इत्यादौ गुणदर्शनेन घिशब्दस्याऽपि घिसञ्ज्ञाबोध्यत्वं तद्वत्। [3]एवञ्च [4]अजादिसञ्ज्ञा स्वसञ्ज्ञिघटकेकारादिष्विव अकारचकारयोरपि प्राप्नोत्येव। किं च स्वशब्देन केवलाऽन्त्यपरामर्शाऽसम्भवेऽपि विशिष्टपरामर्शे न बाधकम्। तत्र समुदाये फलाऽभावात् अवयवयोर्विश्रान्तिं प्राप्स्यति। तस्मात् ज्ञापकादिनैव अन्त्यस्य तत्कार्यं [5]वारणीयम्। (किञ्च[6] 'अप्रधानत्वादि'त्येव सिद्धे 'तृतीयानिर्देशादि'त्यधिकम्) इत्यलम्।

[1] 'स्वरूपमिति' इति क. ग. पाठः।
[2] 'अनन्त्यविषये' इति ग. पाठः।
[3] 'एवम् अजादिसञ्ज्ञा हि' इति क. पाठः।
[4] 'एवञ्च' इति चकारसहितः पाठः। चकाररहितस्तु अपपाठ' इति भावप्रकाशः। तत्र एवञ्च=अविरोधे चेत्यर्थः। लिखितादर्शेषु तु सर्वेषु 'एवम्' इति चकाररहित एव पाठ उपलभ्यते।
[5] 'वारणीयम्। किञ्च अप्रधानत्वादित्येव सिद्धे तृतीयानिर्देशादित्यधिकमित्यलम्' इति सर्वेषु लिखितेषु पाठः। मुद्रितेषु तु सर्वेष्वपि पुस्तकेषु 'तत्कार्यं वारणीयमित्यलम्' इत्येव पाठो दृश्यते।
[6] क्वाचित्कोऽयं लि० पु० पाठः।

**'शास्त्रम् उपदेश' इतिभाष्य-वृत्त्यादिषु व्याख्यातं, तथापि तत् प्रौढिवादमात्रम्। करणे घञो दुर्लभत्वात्। ल्युटा बाधात्। न च घः। असंज्ञात्वात्। 'प्रायेण संज्ञायामि'ति व्याख्यानस्य क्लिष्टत्वात्। 'न हि उपाधेरुपाधिर्भवती'त्यादिना**

बृहच्छब्दरत्नः

रीत्या निर्वाहः, 'प्रत्ययस्थादि'ति सूत्रं हि प्रतिषेधारम्भसामर्थ्यन कृति, तद्धिते च प्रवर्त्तते इति तावन्निर्विवादम्। तत्र 'अनन्तरस्ये'ति न्यायेन'यस्ये'तिलोप एव बाध्यते इति [1]नियमे, 'इको यणची'ति दुर्वारमेव। 'नास्'धातोः क्वुनि 'नासिका'शब्दस्य व्युत्पन्नत्वात्। तथा च लाघवात् 'नास्क' इत्येव वक्तव्यम्। 'येन नाऽप्राप्ति'न्यायेन यणादेश एव बाध्यते' इति पक्षे तु नासाशब्दात्कप्रत्यये 'यस्ये'ति लोपो दुर्वारः। 'वचनसामर्थ्यादुभयं बाध्यते' इति चेत्तर्हि 'प्रत्याहारेष्वितां न ग्रहणमि'त्यर्थज्ञापन-मेवोचितमिति वाच्यम्। न्यायेनैव निवारणसम्भवे, तद्विषये ज्ञापकाऽनुसरणस्य अयुक्तत्वात्।

क्लिष्टत्वादिति। [2]व्यवहिताऽन्वयादिति भावः। भाष्यकृतेति। 'अन्तर्धौ येनाऽदर्शनमि'त्यादाविव 'उभयप्राप्तौ कर्मणी'ति नियमान्न षष्ठी। अवहेलनाच्चेति। अत एव 'तपरोपदेशश्चेत्तपरोच्चारणमि'ति 'एओङ्'सूत्रस्थवार्त्तिके 'उपदेश'शब्दस्य फले लक्षणा, सम्प्रदानव्युत्पत्त्या वा फलबोधकत्वमित्यस्मद्गुरवः। यत्तु 'सौत्रत्वेन

लघुशब्दरत्नः

भाष्येति। तत्र हि 'उपदेश इति किम्, अभ्र आँ अपः, 'प्रत्यक्षमाख्यानमुपदेशो, गुणैः प्रापणमुद्देशः' इति नाऽसावुपदेशः' इत्युक्त्वा उपदेशोद्देशयोर्लोकव्यवहारेण सङ्कीर्णत्वमा-शङ्क्य, 'उपदेशनेऽजनुनासिकः' इति वार्त्तिककृद्दर्शितन्यासस्य खण्डनाय, 'उपदेश इति करणे घञ्, उपदिश्यतेऽनेने'त्युक्तम्। तच्च शास्त्रम्=शासनकरणम्, प्रत्यासत्त्या एतच्छास्त्रीय-धात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययाऽऽदेशरूपम्॥

प्रौढिवादमात्रमिति। वार्तिककृदुक्तन्यासीयाऽर्थस्य कथंचित्सूत्रतोऽपि लाभसम्भवात् न्यासाऽन्तरप्रवृत्तिस्ते वृथैवेति प्रौढ्या बोधयितुमेवं वाद इति भावः। घञ इति। 'अकर्त्तरि च' (३-३-१९) इत्यत्र 'संज्ञायामि'त्यस्य प्रायिकत्वात् तत्प्राप्तिरिति भावः।

बाधादिति। वाऽसरूपविधिस्तु क्तल्युट्तुमुन्खलर्थेषु प्रतिषिद्धः। न च तत्र साहचर्येण भावल्युट एव ग्रहणमिति वाच्यम्। 'ईषत्पानः सोमो भवता' इत्यत्र कर्मणि खल् ने'ति भाष्यादिप्रामाण्येन अत्र साहचर्याऽनाश्रयणादिति भावः।

क्लिष्टत्वादिति। गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकाङ्क्षत्वे, इतराऽन्वयः तस्याऽयुक्त इति क्लेश इति भावः। तदाह-न हीत्यादिना। भाष्यकृतेति। 'अस्याऽर्थस्ये'ति शेषः। एवं च 'उभयप्राप्तौ कर्मणि' (२।३।६६) इति नियमान्न कर्त्तरि षष्ठीति बोध्यम्।

[1] 'इति पक्षे' इति क. ग. पाठः।

[2] 'व्यवहिताऽन्व्ययात्' इति ग. पाठः।

भाष्यकृता अवहेलनाच्च। अत एव घाऽपवादः 'हलश्च' (३।३।१२१) इति घञपि इह न। बाहुलकं तु अगतिकगतिः। अत एव 'प्रक्रियन्ते शब्दा याभिरि'ति करणव्युत्पत्तिरपि परास्ता। तथा च वार्त्तिकम्—

बृहच्छब्दरत्नः

परिहारसम्भवे [1]बाहुलकस्वीकारेण भाष्यकृता करणार्थोपदेशशब्दस्य साधुत्वमङ्गीकृतमि'ति। तन्न। तस्याऽप्रयुक्तत्वात्। सौत्रप्रयोगस्य भावघञन्तेनाऽपि साधयितुं शक्यत्वेनाऽप्रमाणत्वाद्बाहुलकस्वीकरणं भाष्यकृत इत्यर्थस्य संभावितत्वेन, साधुत्वाऽङ्गीकारे मानाऽभावात्। उपदेशपदार्थविचारभाष्यस्योपक्रमस्थस्य न्यायप्राप्तार्थाऽनुवादकस्य [2]प्राबल्याऽनुमानेनोक्ताऽर्थे भाष्यकृतस्तात्पर्याऽभावात्। उद्देशोपदेशयोः समानाऽर्थत्वमङ्गीकृत्य भाष्ये करणव्युत्पत्तेरुक्तत्वेन, तस्योपदेशे इति सूत्रकरणेन प्रौढिवादपरताया आवश्यकत्वे, तस्याऽपि प्रौढिवादपरत्वात्। भावप्रत्ययस्याऽन्तरङ्गत्वाच्च। यदपि 'उद्गातार' इति दीर्घस्येव भाष्यप्रमाण्यात्करणे घञि'ति। तत्रेदं प्रष्टव्यं—भाष्यकारस्य करणे घञुक्तिः पाणिनीयव्याकरणसापेक्षा, उत निरपेक्षा ?। नाद्यः। उक्तरीत्या करणे घञो दुर्लभत्वात्। नान्त्यः। पाणिनीयसूत्रोपन्यासस्याऽसङ्गततापत्तेः। तस्माद्युक्तिविरुद्धेऽर्थे भाष्यकारस्य न तात्पर्यम्। 'न चेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति, यच्च नाम सहेतुकं तन्न्याय्यमि'त्यादिभाष्यग्रन्थैर्वचनाऽऽचारव्यतिरिक्तस्य युक्तिविरुद्धस्याऽप्रमाणत्वबोधनाच्च। अत एव 'सन्न्यायोपन्यासपूर्विकायाः स्मृतेरप्रामाण्यमि'ति मीमांसकाः।

यदपि 'वाऽसरूप'न्यायेन पक्षे घञ् सुलभ' इति। तदपि न। 'क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ती'ति निषेधात्। अत एव 'ईषत्पानः सोमो भवते'त्यत्र कर्मणि खल् ने'ति भाष्यं सङ्गच्छते। किञ्चाऽन्यार्थ-लघुभूत-'ल्युट् चे'तिसूत्रेण 'कर्त्तरि कृदि'त्यस्य बाधे, 'धातुविशेषात्कृत्यविशेष' इतिवत्करणाऽधिकरणयोः सर्वधातुभ्यः, कर्मादौ तु धातुविशेषेभ्य इत्यर्थस्य लक्ष्यबलाल्लाभे, यत्र विहितास्ततोऽन्यत्रापि भव-

लघुशब्दरत्नः

अवहेलनाच्चेति। चो हेतौ। यतोऽवहेलनमतः क्लिष्टत्वमित्यर्थः।

घापवाद इति। 'ल्युडपवादश्चे'त्यपि बोध्यम्। तत्राऽपि 'सञ्ज्ञायामि'त्यनुवृत्तेरिति भावः। अगतिकगतिरिति। न च खनो घ च (३।३।१२७) इति घविधानम् अन्यतोऽपीत्यर्थमित्याकरे स्पष्टम्, तेन अत्र घे सिद्ध्यतीति वाच्यम्। तस्याऽपि अगतिकगतित्वात्। 'भगः पदम्' [3]इत्यादौ यत्र घित्त्वफलं तत्रैव तत्प्रवृत्तेश्च। पदस्य घञर्थे केन सिद्धेर्न तदुदाहरणं, किन्तु क्वाचित्कं वाक्यं तत्।

[1] 'बाहुलकं स्वीकारेण' इति ख. पाठः।

[2] 'प्राबल्यानुमाने' इति क. ग. पाठः।

[3] 'पदादौ' इति क. ख. पाठः।

'अजब्भ्यां[१] स्त्रीखलनाः, स्त्रियाः खलनौ विप्रतिषेधेने'ति। अतो भावे एव[२] प्रत्ययो न्याय्य इति भावः।

बृहच्छब्दरत्नः

न्ती'त्यर्थकेन 'कृत्यल्युटो बहुलमि'त्येतेनैव[३] सिद्धौ,ल्युड्ग्रहणबोधितजघन्यसंकोचक-'करणाधिकरणयोश्चे'ति नियमेन घञोऽप्राप्तेः। एतेन 'प्रक्रियाशब्दे वाऽसरूपन्यायेन करणे श' इत्यपास्तम्। उक्तनियमेन वारणात्। न च 'स्नानीयं चूर्णमि'त्यादौ दोषः। ('[४]कृत्यल्युट' इत्यत्र [५]'कृत्ये'त्यस्य पूर्वनिपातेनाऽभ्यर्हितत्वबोधनात् प्राकृत-[६]घञादीनामेव वारणात्)। किञ्चाऽसरूपपदस्य भिन्नरूपार्थकत्वेन तत्र निरूपका-काङ्क्षायां स्वविषये यस्य सर्वत्र प्रवृत्तिस्तस्यैव ग्रहणेनोत्सर्गापवादे एव 'वाऽसरूप' इत्यस्य प्रवृत्तेः। नहि विप्रतिषेधविषये अन्यतरविषयमात्रे अन्यतरस्य प्रवृत्तिः। सावकाशयोरेव तदङ्गीकारात्। किञ्च ईदृशविषये वाऽसरूपन्यायप्रवृत्त्यङ्गीकारे, सम्बन्धस्याऽपि कल्पने गौरवम्। अपि च 'विप्रतिषेधसूत्रं व्यक्तिपक्षे परमेवेति नियमार्थमि'ति तावन्निर्विवादम्। तत्र च 'वाऽसरूपे'त्यस्य प्रवृत्तौ नियमप्रवृत्तिवैयर्थ्यं स्पष्टमेव। शास्त्रबाधश्च न युक्तः। एतेन 'हलश्चे'ति सूत्रेण ल्युट्सहितो घञ् विधातुमशक्यः, 'क्तल्युडि'ति निषेधादि'त्यपास्तम्। यत्र ल्युटोऽपवादकत्वं, तत्रैवोक्तरीत्या निषेधप्रवृत्तेरुचितत्वात्। अत एव विप्रतिषेधवार्त्तिकानां चारितार्थ्यम्। सर्वञ्चेदं भाष्यकैयटहरदत्तादिग्रन्थे[७] स्पष्टं सूक्ष्मदृशामिति कृदन्ते निरूपयिष्यामः।

यदपि 'अकर्त्तरी'ति सूत्रे 'संज्ञायामि'त्युक्तत्वेन घञोऽप्राप्तौ 'ल्युटा बाधादि'ति न युक्तमि'ति। तदपि न। 'असंज्ञायामि'ति पदच्छेदात्। अव्याप्तिः, प्रत्याख्यानञ्चोभयोः समानम्। यदपि 'भावघञन्ते अर्थाऽसङ्गतिः, आद्योच्चारण-क्रियायामन्त्यत्वाऽसम्भवादि'ति। तदपि न। शब्दद्वारेणाऽर्थात् आमः परत्ववत्,

लघुशब्दरत्नः

किं च [८]'उच्चार्य वर्णानाह-उपदिष्टा इमे वर्णाः' इत्यादिभाष्यात् उपदेशशब्दस्य उच्चारणाऽर्थत्वस्य निर्णयेन, सङ्कीर्णलोकव्यवहारस्य लक्षणयाऽप्युपपत्त्या, भावे घञि

१ 'अजप्भ्याम्' इति लिखितपुस्तके क्वचित् पाठः। 'ङ' पुस्तके तु हरिताललेपेन पकारमुत्सार्य 'अजब्भ्यामि'ति पाठः कृतः।
२ 'भावे प्रत्यय एव न्याय्य' इति घ. ङ. पाठः।
३ 'मित्यनेनैव' इति क. ग. पाठः।
४ अयं पाठः क. नास्ति।
५ 'कृत्ययस्य' इति ग. पाठः।
६ 'घञादीनाम्' इति ग. पाठः।
७ 'ग्रन्थं स्पष्टम्' इति ग. पाठः।
८ 'उच्चार्यं हि' इति तु मुद्रितेषु पुस्तकेषु पाठो दृश्यते।

यत्तु—'धातुसूत्रे'त्यादि पठन्ति। यच्च व्याचक्षते—करणव्युत्पत्त्या

बृहच्छब्दरत्नः

शब्दद्वारेण क्रियायामन्त्यत्वसम्भवात्। [१]भावे घञन्त-देश-शब्देनोपशब्देन च [२]बहुव्रीहेराश्रयणाच्च। तत्र दिशिरुच्चारणक्रियः। 'उच्चार्य वर्णानाह उपदिष्टा इमे वर्णा' इति भाष्यात्। 'उपशब्दस्त्वाद्यर्थक' इति '[३]प्रोपाभ्यामि'ति सूत्रे स्पष्टमाकरे। तेन 'अज्ञातज्ञाप्योच्चार्यमाणे अन्त्यः, अनुनासिकश्च इद् भवती'ति फलितम्।

अतो भावे इति। यत्तु "यदा भावकर्मणोः शस्तदा 'सार्वधातुके यक्' 'रिङ् शयग्लिङ्क्षु'ति रिङादेशः। अन्यत्र तु यगभावेऽपि शे परतो रिङादेशे कृते इयङि'ति 'कृञः श चे'ति सूत्रस्थमनोरमाग्रन्थे 'अन्यत्रे'त्युक्त्या कस्य ग्रहणमिति चिन्त्यमि"त्युक्तं, तत्रेयं चिन्ता—'अकर्त्तरी'त्यनेन कर्तृनिषेधेऽपि 'अन्यत्र'शब्देन सम्प्रदाना-ऽपादानरूपावर्थौ गृह्येते। न च [४]पादादावुणादयो बहुलमित्यस्योक्तत्वेन 'ताभ्यामन्यत्रोणादय' इति निषेध इति वाच्यम्। 'उणादयो बहुलमि'त्यत्र अनियत-शास्त्रार्थताऽऽपत्तेः, सर्वत्र गणपाठानां वैयर्थ्याऽऽपत्तेश्च, "उणादय[५]" इत्यस्य वैयर्थ्याऽऽपत्त्या केचिदविहिता अपि ऊह्याः,

'संज्ञासु धातुरूपाणि, प्रत्ययाश्च ततः परे।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥'

—इत्याद्यर्थप्रतिपादकभाष्यादिग्रन्थैश्च, 'कृवापाजिमिस्वदिसाध्यशूभ्य उणि'-त्यादीनामेव ग्रहणेन निर्णीताऽर्थत्वात्, प्रथमोपस्थिततत्वाच्च तेषामेव [६]ग्रहणादि-त्यन्यत्र विस्तरः।

यत्तु धातुसूत्रेत्यादीति। 'आदि'शब्दग्राह्यन्तु 'गणोणादिवाक्यलिङ्गाऽनुशासनम्।

लघुशब्दरत्नः

बाधकाऽभावः। किं च उपदेशशब्दस्य प्रत्ययादिपरत्वे, तस्यैव 'हलन्त्यमि'त्यत्राऽन्वयेन यत्किञ्चित्समुदायाऽन्त्यस्य वारणसम्भवे, तदर्थम् अन्त्यग्रहणसामर्थ्यादिवर्णनक्लेशो भाष्यकृतो व्यर्थः स्यादिति बोध्यम्। 'उद्देशश्च प्रातिपदिकानां नोपदेशः' इति 'आदेच उपदेशे' (६।१।४५) इति सूत्रे च [७]भाष्ये भावघञन्तस्यैव तस्याऽङ्गीकाराच्चेति दिक्।

[१] 'भावघञन्त' इति ग. पाठः।
[२] 'बहुव्रीहिराश्रयणाच्च' इति ग. पाठः।
[३] 'प्रायोभ्या'मिति क. ग. पाठः।
[४] 'पदादावुणा' इति ग. पाठः।
[५] 'उणादय इय इत्यस्य' इति क. ग. पाठः।
[६] पञ्चपादीस्थप्रत्ययानामेव 'उणादय' इत्यत्र ग्रहणं, न अष्टाध्यायीस्थानामित्यर्थः।
[७] 'सूत्रे भाष्ये' इति चकाररहित एव सर्वेषु लिखितेषु पाठः। भावप्रकाशे तु चकार-सहितः पाठो विवृतः। 'सूत्रस्थभाष्ये' इति ख. पाठः। 'सूत्रे च भाष्ये' इति तु सर्वेषु मुद्रितेषु पाठः।

पूर्वार्द्धोपात्तानाम् उपदेशत्वम्, कर्मव्युत्पत्त्या तु आगमादीनाम् । उणादि-लिङ्गाऽनुशासनयोरपि सूत्रत्वात् सिद्धे, पृथगुपादानं 'गो-बलीवर्द'न्यायेन । एवं गणत्वादेव सिद्धे धातोरपि' इत्यादि ।

अत्रेदं वक्तव्यम्–किम् एषाम् उपदेशसंज्ञा, उत योगमात्रम् ? । नाद्यः । संज्ञायाः शास्त्रकारैरनुक्तेः । 'असंज्ञात्वाद् घप्रत्ययो ने'ति भाष्योक्तेश्च । अस्मदादिकृतसंज्ञायाः शास्त्रव्यवस्थापकत्वे अतिप्रसङ्गाच्च । 'आमोऽमित्त्वम्, अदन्तत्वादि'त्यादि-स्व-पर-ग्रन्थविरोधाच्च । न हि उत्सृष्टाऽनुबन्धस्य आमो न प्रत्ययत्वं, येन मित्त्वं न भवेत् ।

किं चैवं प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वे 'सनः सनेव आदेशोऽस्तु' इत्याशङ्क्य 'उपदेशाऽभावात् इत्संज्ञा न स्यादि'ति भाष्यकैयटोक्तं व्याकुप्येत ।

किञ्च न धातुलोपः (१।१।४) इति सूत्रे 'धातुग्रहणं किम् ?, लूञ् लविता, पूञ् पविता' इति भाष्यम्, 'उपदेशे एव अनुबन्धलोपे कृते, ततो धातुसञ्ज्ञे'त्येवंपरः कैयटग्रन्थश्च विरुद्ध्येत ।

---

बृहच्छब्दरत्नः

आगमप्रत्ययाऽऽदेशा उपदेशाः प्रकीर्त्तिताः' इति । एध, शीङ्, लण्, भवतु, देवट्, आचारेऽवगल्भ, कुक्, टुक्, अनङित्युदाहरणानि ।

आम इति । न च आकारवैयर्थ्यम् । अस्मन्नये निमित्तविघटनद्वारा चरिताऽर्थत्वात् । इत्येवंपर इति । कैयटग्रन्थस्त्वित्थम्—'अनुबन्धो न

---

लघुशब्दरत्नः

धातुसूत्रेत्यादीति ।

'धातुसूत्रगणोणादिवाक्यलिङ्गाऽनुशासनम् ।
आगमप्रत्ययाऽऽदेशा उपदेशाः प्रकीर्तिताः' ॥

उपदेशत्वमिति । उपदेशशब्दव्यवहार इत्यर्थः । धातोरपीति । प्रत्ययेभ्य, उणादेरपीत्यपिशब्दाऽर्थः । 'वाक्य'शब्देन वार्त्तिकम् । शीङ, लण्, चोरट्, उण्, आचारेऽवगल्भ, धुट्, अण्, अनङ इत्युदाहरणानि ।

उपदेशसंज्ञेति । उपदेशपदं योगरूढमेष्विति भावः ।

ननु 'सञ्ज्ञा'शब्देन व्यवहार एवाऽभिमतः । अत आह—आम इत्यादि । नच आकारोच्चारणं व्यर्थम् । तेनाऽस्मत्पक्षज्ञापनस्यैवौचित्यादिति भावः । आदिना 'यकारादी चुञ्चुप्चणपौ' इत्यादिसंग्रहः ।

उपदेशाऽभावादिति । आदेशस्य उपदेशाऽभावादित्यर्थः । ततो धातुसञ्ज्ञेति ।

अपि च [1]'ध्वसोरेद्धावभ्यासलोपश्च (६।४।११९) इति सूत्रे 'लोपश्श्चे'ति द्विशकारको निर्देशः, द्वितीयः शकार इदि'ति [2]अलोऽन्त्यसूत्रस्थभाष्य-कैयटादिकमपि विरुद्ध्येत ।

**बृहच्छब्दरत्नः**

धात्वेकदेशः; यस्मादुपदेशे एवेत्संज्ञा, प्रयोगे तु 'लू'शब्द एव धातुसंज्ञः, केवलमसौ ञित्कार्यं लभते' इति । न चाऽयं ग्रन्थः 'उपदेशे गणे एवेत्संज्ञे'त्येवंपरो योज्य इति शङ्क्यम् । 'गण'शब्देन धातुग्रहणसामर्थ्यात्तद्भिन्नस्यैव ग्रहणात् ।

द्विशकारक इति । 'लोपस्' इति प्रथमान्तं भिन्नं पदम् । 'शू' इति भिन्नं पदम् । पूर्वस्य श्चुत्वेन शः । न च झलूपरसंयोगादित्वात्सलोपः । 'स्कोः संयोगाद्योरि'त्यस्य 'झलो झली'तिवन्निमित्तकार्यिणोरैकपद्ये एव प्रवृत्तेः । पदान्तसाहचर्येण स्कलोपस्याऽनव्यये एव प्रवृत्त्या, कसाहचर्येण सलोपस्याऽखण्डपदे एव प्रवृत्तेश्च । ध्वनितञ्चेदं 'परेश्च घाऽङ्कयोरि'ति सूत्रे भाष्ये इति 'स्कोरि'ति सूत्रे वक्ष्यामः । अत एव 'वासः क्षौममि'त्यादौ न दोषः । विरुध्येतेति । 'श्' इत्यस्य धात्वाद्यन्तत्वा-ऽभावादिति भावः । मन्मते तु लोपस्येव 'श्' इत्यस्याऽप्यज्ञातज्ञाप्यत्वात् 'हलन्त्य-मि'त्यस्याऽत्रोपस्थितत्वेन[3],व्यपदेशिवद्भावेन इत्त्वं सुलभम् । समुदायज्ञापने तात्पर्येण अवयवानां नान्तरीयकत्वात् अज्ञातज्ञाप्यत्वाऽभावेन मनिनादौ मकारस्य नेत्त्वम् । एतेन 'आवृत्त्याऽन्त्यग्रहणस्यचारितार्थ्ये[4] धातुत्वाद्युपाध्यवच्छिन्नाऽन्त्य एव ग्राह्य इत्यत्र न मानमि'त्यपास्तम् । 'इदम इशि'त्यादावनुबन्धविनिर्मुक्तैव पदार्थोपस्थिति-

**लघुशब्दरत्नः**

'लू'शब्द एव धातुसञ्ज्ञकः, केवलमसौ ञित्कार्यं लभते इति भावः । नन्वत्र सूत्रसाहचर्यात् धात्वागमप्रत्ययादिशब्देन तद्बोधकपाणिन्यादिपठिताऽऽनुपूर्वीकाणां ग्रहणम्, तेषां धात्वादि-व्यवहारस्तु भाविसञ्ज्ञाविषयघटितत्वेन, 'धातुपाठ' इत्यादिव्यवहारवदिति चेन्न । 'आद्योच्चारण-विषयाणामि'त्येव सिद्धे एतस्याऽनुपयोगात् । इत एव वाऽरुचेराह[5]—अपि चेति ।

[2]अलोऽन्त्यसूत्रेति । उपधासञ्ज्ञासूत्रेत्यर्थः ।

विरुद्ध्येतेति । तत्र हि 'लोपश्' इति भिन्नं पदम्, 'श्' इति च । पूर्वस्य श्चुत्वेन शः । असन्देहाय झलपरसंयोगादित्वेऽपि स्कोः (८।२।२९) इत्यस्य न प्रवृत्तिः, झलां जश् (८।४।५३) इत्यादौ जश्त्वस्येव । शकारस्य धात्वाद्यन्तत्वाऽभावः स्पष्ट एवेति भावः ।

[1] 'ध्वसोरेद्धावितिसूत्रे' इति ग. घ. पाठः ।

[2] 'अलोन्त्यात्सूत्रे'ति ग. घ. ङ. पाठः मनोरमायां, शब्दरत्ने च ।

[3] 'उपस्थितित्वेन' इति क. ग. पाठः

[4] 'चारितार्थ्यम्' इति क. ग. पाठः

[5] 'इत एव चाऽरुचेराह' इति क. पाठः ।

**न द्वितीयः। योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात्। 'धात्वादिषु करणव्युत्पत्तिः, आगमादिषु ने'ति वैषम्यस्य दुरुपपादत्वाच्च। उपदेशता-प्रयोजक-धातुत्वादिरूपो-पाध्य-वच्छिन्न-समुदाया-ऽन्त्यं हल् इदित्यर्थ' इति स्वग्रन्थविरोधाच्च। पक्षद्वयेऽपि लिङ्गाऽनुशासनस्य प्रकृताऽनुपयोगात्। 'लोपश्चे'ति शकारस्य असंग्रहाच्च।**

---

बृहच्छब्दरत्नः

रि'त्युद्घोषस्तु इत्संज्ञा-लोपशास्त्रपरामर्शमभिप्रेत्येत्यादि वक्ष्यामः। न चैवम् आदेशा-ऽन्त्यत्वेन निर्वाहः। स्थानिनिर्देशाऽभावेनाऽतत्त्वात्, 'ध्वसोरि'त्यादेर्व्यवहितत्वात्, निराकाङ्क्षत्वाच्च। नचैवमपि 'शित्सर्वस्ये'त्यस्याऽप्रवृत्त्या भाष्यं तव मतेऽप्य-सङ्गतमिति वाच्यम्। सौत्रप्रयोगादेव सामीप्याऽर्थकबहुव्रीहेराश्रयणात्। स्पष्टञ्चेदं 'तस्य लोप' इति सूत्रे भाष्ये। 'अनुबन्धाऽनेकान्तत्व'पक्षे 'अनुदात्तौ सुप्पितावि'-त्यादावियमेव गतिः। [1]न चैवमादेशप्रत्ययादीनामनुदात्तत्वाद्यापत्तिः। ल्युल्युलो-ष्टित्त्वेन, द्वयसच्-दघ्नच्-मात्रचां चित्त्वेन च स्वपदोपकारकत्वबोधनात्। प्रकृते तु शकारकरणसामर्थ्यात् भिन्नपदस्थस्य सन्निहितस्योपकारः।

दुरुपपादत्वादिति। उपदेशशब्दस्य सकृदुच्चरितत्वात्, अन्यतरव्युत्पत्त्या सर्वत्र निर्वाहाच्च। स्वग्रन्थेति। देवदत्तत्वादीनां पाचकत्वव्यवहारप्रयोजकत्वाऽभाववत्, यौगिकत्वे धातुत्वादीनां नोपदेशताव्यवहारप्रयोजकत्वम्, अपि त्वन्यस्यैवेति भावः। असङ्ग्रहाच्चेति। उदाहरणतया व्याख्याने तु अस्मन्मतप्रवेशः।

---

लघुशब्दरत्नः

किं च नमोवरिवश्चित्रङः (३।१।१९) इत्यस्याऽसंग्रहोऽत्र पक्षे इत्यपि बोध्यम्। [2]'एषु एतस्य योगरूढिरि'त्युक्ते[3] अस्य परिगणनताया एव लाभात्।

योगस्यैवेति। न तु रूढेरित्यर्थः। परिगणनस्येति। धात्वादिगणनस्येत्यर्थः। वैषम्येति। भाष्यरीत्या करणव्युत्पत्त्यैव सर्वसंग्रहादिति भावः। उपदेशताप्रयोजकेति। योगमात्रस्वीकारे-उपदेशता=उपदेशकरणता, न हि तत्प्रयोजकं धातुत्वादि[4] भवतीति, तद्विरोधः। सञ्ज्ञात्वे तु—उपदेशता=उपदेशशब्दत्वम्। 'उपदेश'शब्दस्य शब्दपरत्वात्। तदवच्छिन्नस्य [5]प्रयोजकं तद्रूढ्यर्थतावच्छेदकतया धातुत्वादि वक्तुं शक्यमिति भावः।

शकारस्येति। न ह्यनेन किञ्चिदुपदिश्यते इति भावः।

---

[1] 'नचैवं देश्यप्रत्ययादीनाम्' इति क. ख. ग. पाठः

[2] 'एषु एतस्य रूढिरित्युक्तेः परिगणनतायाः' इति मुद्रितेषु पाठः।

[3] 'इत्युक्तेः परिगणनतायाः' इति घ. पाठः।

[4] 'धातुत्वादिर्भवति' इति ग. पाठः।

[5] 'प्रयोजकन्तु रूढ्यर्थता' इति तु मुद्रित पाठः। 'प्रयोजकं रूढ्यर्थता' इति घ. पाठः।

आदेच उपदेशे (६।१।४५) उपदेशेऽत्वतः (७।३।६२) इत्यादौ आद्योच्चारणस्यैव [1]उपदेशपदार्थतायाः सर्वसंमतत्वाच्चेति दिक्।

**उपदेशेऽजनुनासिक इत् (१।३।२)।** यद्यपि अत्रोपजीव्यत्वात् अनुनासिकसञ्ज्ञा प्रथमं वक्तुम् उचिता, तथाऽपि 'नासिकाम् अनुगतः' इति योगाऽऽश्रयणेनैव गताऽर्थत्वात्, अनुनासिकसञ्ज्ञासूत्रं मन्दप्रयोजनमि'ति-ध्वनयितुं नेहोपन्यस्तम्।

---

बृहच्छब्दरत्नः

दिगिति। दिगर्थस्तु 'नमोवरिवश्चित्रङ' इत्यत्राऽनिष्टाऽऽपत्तिः। 'अइउण्' 'दाधा घ्वदाबि'त्यादिसूत्रस्थभाष्याऽऽदिविरोधश्च।

नासिकामनुगत इति। इदं च सर्वमतसाधारणम्। पूर्व-परभागयोरन्यतरस्य, सर्वस्य वा नासिकयोच्चारणे तत्त्वात्। 'मुखनासिकाव्यतिरिक्तमन्तरा स्थानमि'ति-मते तु नासिकात्वाऽऽरोपात्तत्त्वम्। अत एव 'मुखनासिके'ति सूत्रं सङ्गच्छते।

'योगाश्रयणेनैवे'त्येवकारेण यमाऽनुस्वारयोरनुनासिकशब्देन व्यवहाराऽर्थं तदाश्रयणमावश्यकमिति ध्वनितम्। नच तादृशव्यवहारे मानाऽभावः। मुखग्रहण-प्रत्याख्यानपरभाष्यस्यैव मानत्वात्। सङ्ख्यावत् महासंज्ञायाः करणेन यौगिका-ऽर्थाऽबाधस्य सूत्रकाराऽभिप्रेतत्वाच्च। एतेन 'मुखनासिके'ति सूत्रं [2]'त्वं नयसी'-

---

लघुशब्दरत्नः

ननु 'उपदिश्यते=ज्ञाप्यते अनेने'ति तदर्थः। धात्वादिभिर्हि प्रयोगो ज्ञाप्यते, तद्वत् अनेनाऽपि शकारेण सर्वाऽऽदेशत्वं ज्ञाप्यते इत्यरुचेराह—आदेच इति। सर्वेति। भाष्यकारादीत्यर्थः। यत्र तु करणव्युत्पत्त्यैव अर्थसङ्गतिः, तत्र अगत्या अस्तु कृत्यल्युटः (३।३।११३) इति बाहुल-कात् ल्युडभावः। यथा 'यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तौ' इत्यादाविति दिक्।

नासिकामनुगत इति। नासिकाम् अभिहत्य वायुना अभिव्यञ्जित इत्यर्थः। प्रातिशाख्य-शिक्षादौ, लोके च तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम्।

अत एव मुखग्रहणप्रत्याख्यानभाष्यध्वनितो यमा-ऽनुस्वारयोः अनुनासिकव्यवहारः सूत्रमते सङ्गच्छते। यरोऽनुनासिके (८।४।४५) इत्यादौ स्वरूपग्रहणाऽभावस्तु 'पशुः' 'अपत्यम्' इत्यादिवदिति बोध्यम्[3]।

मन्दप्रयोजनमिति। 'मन्देषु प्रयोजनमस्ये'ति बहुव्रीहिः। एवंविधयोग-लोक-प्राति-

---

[1] 'उपदेशतायाः सर्वसंमतत्वाच्चेति दिक्' इति ङ पाठः।

[2] 'त्वां नत इत्यादौ' इति ख-पाठः।

[3] 'ध्येयम्' इति घ. पाठः। मुद्रितेष्वपि पुस्तकेषु च 'ध्येयम्' इत्येव पाठो दृश्यते।

**उपदेशे किम्[1] । अत्र आँ अपः । यद्यपीह[1] उञः (१।१।१७) ऊँ (१।१।१८) इत्यत्रेव विधानसामर्थ्यात् नेत्त्वमिति सुवचं, तथाऽपि [2]उत्तरार्थम् अवश्यं कर्त्तव्यम् उपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम् ।**

---

बृहच्छब्दरत्नः

त्यादौ [3]न्याद्यर्थमि'ति परास्तम् । 'तन्मुरारिरि'त्यादौ स्थान-प्रयत्नाभ्यामन्तरतमे चरितार्थत्वेनाऽनुस्वारे प्राप्त्यभावाच्च ।

यत्तु 'यरोऽनुनासिकेऽनुनासिको वे'त्यादौ 'अशब्दसंज्ञे'तिनिषेधेन शब्दस्वरूप-ग्रहणाऽभाव इति 'मुखनासिके'ति सूत्रस्य प्रयोजनमिति बोधयितुं मन्दपदमि'त्याहुः । तन्न । 'स्वं रूपमि'ति सूत्रस्य भाष्ये प्रत्याख्यानात् । 'पशुः' 'अपत्यं' 'सभा राजा-ऽमनुष्य' 'पत्तिमत्स्यमृगान्' 'कालात्' 'अधःशिरसी पदे' इत्यादौ व्यभिचरि-तत्वेन तस्याऽसार्वत्रिकत्वात् । बोध्याऽर्थे कार्यस्याऽबाधेन शब्दे प्रवृत्तौ माना-ऽभावाच्च । ध्वनितञ्चेदं 'संहिताऽवसानयोर्लोकविदितत्वादि'त्यादिभाष्ये इति प्रपञ्चितमस्माभिरन्यत्र । एवञ्च 'कर्मणि द्वितीये'त्यादावर्थसंज्ञायां शब्दग्रहणाऽभावा-ऽर्थं लक्षणया, सप्तमीसमासेन च 'शब्दशास्त्रे या संज्ञा तां विने'ति व्याख्यानं सूत्राऽऽशयवर्णनमात्रमिति ध्येयम् । 'अदसो मादि'तिसूत्रस्थभाष्यपर्यालोचनया 'असुका' इत्यत्र [4]लब्धाऽनुनासिकाऽभावः सूत्रे सत्येव साधयितुं शक्य इति बोधयितुं 'मन्द'पदमिति [5]तु विभावयामः ।

अत्र आँ इति । 'उपदेशे' इति सूत्रबोधात् पूर्वम् 'उदिदि'त्यर्थस्य निरूपयितुम् अशक्यत्वेन[6] अणुदित्सूत्राऽप्रवृत्तिरि'ति कश्चित् । तन्न । परस्परसापेक्षत्वाऽभावेन, अस्यामवस्थायामुदिदित्यर्थाऽज्ञानेऽपि वक्तृनिष्ठसह विवक्षायाः सम्भवेनाऽर्थस्य वक्तुं शक्यत्वात् । अणित्यस्य भिन्नपदत्वेन 'अण् सवर्णान् गृह्णाती'ति वाक्यार्थ-निष्पत्तौ बाधकाऽभावाच्च । सुवचमिति । ननु 'अण् प्रगृह्य इत्', '[7]आङ् छन्दसी'ति

---

लघुशब्दरत्नः

[8]शाख्याद्यनभिज्ञं प्रति सप्रयोजनमित्यर्थः । अत्र आँ अप इति । अत्रेत्सञ्ज्ञायां लोपः स्यादिति भावः । विधानेति । 'इत्' इति वक्तव्ये अनुनासिकविधानसामर्थ्यादित्यर्थः ।

---

१ 'इह' इति ङ. नास्ति ।

२ 'उत्तरार्थं कर्त्तव्यम्' इति ङ. पाठः ।

३ न्यादयः=न्यमङणनाः पञ्च ।

४ अत्र–'भाष्यपर्यालोचनया लब्धः अनुनासिकाऽभाव' इत्यन्वयः ।

५ तुः क-ग-नास्ति ।

६ 'निरूपयितुमशक्यत्वात् । अणित्यस्य' इति क. ग. पाठः ।

७ 'आङ इच्छन्दसि' इति क. ग. पाठः ।

८ 'एवंविधलोकप्रातिशाख्याद्यनभिज्ञम्' इति क. ख. पाठः ।

अच् किम् ? । मनिनो मकारस्य मा भूत् ।

प्रतिज्ञायते इति प्रतिज्ञा । आतश्चोपसर्गे (३।३।१०६) इति कर्मणि अङ् । 'प्रतिज्ञा आनुनासिक्यम् एषामि'ति विग्रहः । एवं च 'प्रतिज्ञासमधिगम्ये प्रतिज्ञाशब्दस्य लक्षणे'ति क्लिष्टं व्याख्यानं नाऽऽश्रयणीयम् । 'पाणिन्युपज्ञं व्याकरणमि'त्यादिष्विव लक्षणां विनैव निर्वाहात् ।

यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टः, तथापि वृत्तिकारा-ऽऽदिव्यवहारबलेन 'यथाकार्यं प्राक् स्थित' इत्यनुमीयते इति भावः ।

---

बृहच्छब्दरत्नः

वक्तव्ये 'अनुनासिक'ग्रहणं तच्छ्रवणाऽर्थमस्तु, उपदेशग्रहणाऽभावे त्वित्संज्ञा केन वार्यतामिति चेन्न। लोपाऽतिरिक्तफलस्याऽसंभवात् । 'एतीति इदि'त्यन्वर्थसंज्ञा-बलाल्लोपफलकत्वस्याऽऽवश्यकत्वाच्च । समधिगम्येति । अधिपूर्वको गमिर्ज्ञानाऽर्थः । 'समि'त्युपसर्गस्तु उत्तमवाची । 'पोरदुपधादि'ति कर्मणि यत् ।

पाणिन्युपज्ञमिति । उपशब्द आद्यर्थकः । कर्मणि अङ् । 'पाणिनेरुपज्ञे'ति कर्तृ-षष्ठ्या समासः । [१]'पाणिन्याश्रिताऽऽद्यज्ञानविषयीभूतं व्याकरणमि'ति शाब्दोऽर्थः । नचाऽत्रापि भावेऽङ्, उपज्ञाशब्दस्य समधिगम्ये लक्षणेति वाच्यम् । कर्मण्यङन्ताऽनु-

---

लघुशब्दरत्नः

नेत्त्वमिति । तत्फललोपस्य सामर्थ्यात् अभावे, इत्त्वमपि फलाऽभावान्नेत्यर्थः ।

ननु 'अभ्र·आँ अटितः' इत्यत्र 'अनेकान्ता अनुबन्धाः' [२]इति अस्थितपक्षे आदितश्च (७।२।१६) इति इट्प्रतिषेधः फलम् । न च लोपाऽभावे 'इत्'इति महासञ्ज्ञाकरणात् संज्ञाऽपि नेति वाच्यम् । महासञ्ज्ञयैव लोपसिद्धया तस्य लोपः (१।३।९) इत्यस्य वैयर्थ्याऽऽपत्तेः, 'इक' इत्यादौ ककारादिश्रवणाऽनापत्तेश्चेति चेन्न । 'अनुबन्धानाम् एकान्तत्वमेवे'ति मुख्यपक्षे दोषाऽभाव इत्याशयात् । तदा हि मुख्ये अवयविनि अन्यपदार्थे बहुव्रीहिः । न च अयमाकारः अटेर्धातोरवयव[३] इत्यदोषात् ।

प्रतिज्ञेति । प्रतिज्ञानविषय[४] इत्यर्थः । प्रतिज्ञाशब्दस्येति । भावाऽङन्तस्येत्यर्थः । क्लिष्टेति । शक्तिग्राहकव्याकरणसत्त्वात्, शक्त्यैव तदर्थबोधसम्भवे, लक्षणाऽऽश्रयणं क्लेश इति भावः । लक्षणां विनैवेति । अत्र लक्षणया व्याख्यानं कुर्वतोऽपि तत्र लक्षणां विना मदुक्त-

---

[१] 'पाणिन्याश्रित आद्य' इति क. ख. पाठः ।

[२] 'अस्थित' इति क्वाचित्कः पाठः ।

[३] 'अट्धातोरवयवः' इति मुद्रितपाठः । विषयशब्दस्य अजहल्लिङ्गत्वात् ।

[४] 'विषयमित्यर्थ' इति सर्वेषु लिखितेषु पाठः । स च अशुद्ध इति कृत्वा मसीहरिताल-लेपादिना स पाठः क्वचित् पश्चात् शोधितोऽपि दृश्यते ।

ननु 'रलयोरि'ति न्यूनम्, टकारस्याऽपि मध्यगतत्वादित्यत आह— प्रत्याहारेष्विति । व्यवह्रियन्ते इति । 'प्रत्याह्रियन्ते = संक्षिप्यन्ते वर्णा यत्रे'ति बाहुलकात् अधिकरणे घञ् । यद्यपि योगमात्रम् अकारादिसञ्ज्ञासु अतिप्रसक्तं, तथापि योगरूढिरिति भावः ।

'प्रत्याहाराश्च एकचत्वारिंशदि'ति प्राञ्चः । 'चतुर्दशसूत्रीस्थैर्हल्भिरिद्भिः कृता, अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदि'ति तस्याऽर्थः । तेन सुप्तिङादी-

---

बृहच्छब्दरत्नः

शासनबोधितमुख्यस्य उपज्ञाशब्दस्य 'उपज्ञोपक्रममि'ति सूत्रे ग्रहणेन त्वदुक्ते नपुंसकत्वाऽनापत्तेः । 'अणुरपि विशेषोऽध्यवसायकर'इति न्यायात् कारकमात्रे लक्षणयैवोपपत्तौ, कारके प्रत्ययविधायकस्य वैयर्थ्याऽऽपत्तेश्च । यत्तु 'कर्मण्यपि प्रत्यये लक्षणैव, लाघवाद्भावे एव शक्तिकल्पनादि'ति । तन्न । बोधकतारूपायाः शक्तेः सर्वत्र सत्त्वात् । व्यापारत्वस्याऽलघुत्वात् । फलस्य धातुलभ्यत्वेन आश्रये शक्तिकल्पनात् । [1]'आश्रयत्वस्याऽखण्डोपाधिरूपत्वात् । आनुशासनिकलक्षणाया युक्तत्वाच्चेति दिक् । घञिति । यत्तु 'बाहुलकस्य [2]अगतिकगतिरूपत्वाद्भावघञन्तात् अर्श आद्यच् न्याय्य' इति । तन्न । तस्याऽपि तत्त्वात् । योगरूढिरिति । 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु ने'ति वार्त्तिके तु तादर्थ्यात्ताच्छब्द्यमिति न्यायेन प्रत्याहारोऽक्षरसमाम्नायः । एकचत्वारिंशदिति । तथा च संग्रहः—'एकस्मान् ङञणवटा, द्वाभ्यां षस्त्रिभ्य एव कणमा स्युः । ज्ञेयौ चयौ चतुर्भ्यो, रः पञ्चभ्यः, शलौ षड्भ्यः' । इति । इदं च'आदिरन्त्येने'ति सूत्रस्याऽनित्यत्वाल्लभ्यते । तत्र च मानं-'शास इदङ् हलोः' 'ऋच्छत्यृताम्' 'परिमाणाख्यायां सर्वेभ्यः' 'इङश्च' 'इको झल्' 'अज्झन-

---

लघुशब्दरत्नः

रीत्यैव व्याख्यातम् । एवं च पूर्वाऽपरविरोधस्तस्येति भावः । न च उभयोर्विधानेऽपि, लाघवात् भावे शक्तिः, कर्मणि लक्षणा, अनुशासनमपि लाक्षणिकाऽर्थाऽनुशासनमेवेति वाच्यम् । लः कर्मणि (३।४।६९) इत्यादीनामपि तथात्वाऽऽपत्तौ 'तिङां कर्त्रादौ शक्तिरि'ति सिद्धान्ताऽसङ्गत्यापत्तेः । व्याकरणस्य अभियुक्तोक्तशक्तिग्राहकत्वस्य भङ्गाऽऽपत्तेश्च ।

टकारस्यापीति । अत्र यद्वक्तव्यं तदन्यत्रोक्तम् । बाहुलकादिति । 'भावघञन्तात् अर्श आद्यच्' इत्यपि बाहुलकात् अविशिष्टमिति भावः ।

एकचत्वारिंशदिति ।

'एकस्मान् ङ-ञ-ण-व-टा, द्वाभ्यां ष-स्त्रिभ्य एव क-ण-माः स्युः ।

---

[1] 'आश्रयस्याऽखण्डोपाधि' इति क. पाठः

[2] 'अगतिकगतिरखण्डोपाधिरूपत्वात्'-पा. । 'अगतिरूपत्वात्' इति क-ग-पाठः ।

नाम्, 'र'प्रत्याहारस्य, 'चयो द्वितीया' इति वार्तिकस्थ'चय्'प्रत्याहारस्य च आधिक्येऽप्यदोषः। यत्तु 'ञमन्ताड्डः' इति, 'यमिञमन्तेष्वनिडेक इष्यते' इति च 'ञम्' वार्तिककृता व्यवहृत' इत्याहुः, तद्भ्रमसाऽभिधानम्। आद्यस्य उणादिसूत्रत्वात्, द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वादित्यास्तां तावत्। एष च सङ्ख्यानियमो नाऽतीवोपयुज्यते इत्युपेक्षितः।

ऊकालोऽज्झ्रस्वदीर्घप्लुतः ( १।२।२७ )। 'ह्रस्व-दीर्घ-प्लुत' इति समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्।

बृहच्छब्दरत्नः

गमां सनि' 'क्रीङ्जीनां णौ' [1]इत्यादि। 'अङ्गादौ, हलादावि'त्यर्थे उभयवैयर्थ्यम्। 'व्यतिशासै' इत्यत्र किन्त्वमेव नास्ति। आटा सहैकादेशस्य स्थानिवद्भावाच्च। 'ऋदृशोऽङी'त्यनेनैव लिटि गुणस्य सिद्धत्वेन, ऋकारान्ते गुणविधानवैयर्थ्यापत्तेश्च। फलाऽभावात्, [2]लृकारान्ताऽभावात्, अनैमित्तिकाऽऽत्त्वप्रवृत्त्या एजन्ताऽभावात्, सामान्यलक्षणेनाऽपि सिद्धत्वाच्च। अत एव ऋकारान्ते न दोषः। इकारान्तोकारान्तेभ्योऽजपोः सत्त्वात्। न च वचनद्वयप्रामाण्याद्विकल्पः। प्रत्याहारग्रहणवैयर्थ्याऽनुद्धारात्। तस्याऽष्टदोषदुष्टत्वाच्च। अनयोर्वाग्रहणेन सिद्धत्वाच्च। धातुग्रहणे दोषाऽभावाच्च। सति च 'इङश्चे'त्यत्र प्रत्याहारे उदाहृतसूत्रद्वयनिर्विषयता स्पष्टैव। अनैमित्तिकाऽऽत्त्वप्रवृत्त्या इङ्ग्रहणवैयर्थ्यं च। क्रीज्योर्ग्रहणस्य वैयर्थ्याऽऽपत्तेः। न च नियमाऽर्थता। विधित्वेनैव चारितार्थ्यात्। [3]'इका' इत्येव सिद्धेश्च।

अत एव 'मय उञो वो वे'त्यत्र न दोषः। 'इणः षीध्वमि'त्यादाविण् परेणैव, 'एच इग् ह्रस्वादेशे' इत्यत्र 'इण्' इति वक्तव्ये इक्ग्रहणात्। 'अचि श्नुधातुभ्रुवां य्वोरि'ति गुरुनिर्देशाच्च। व्याख्यानं च सिद्धान्तेऽपि शरणम्। किं ह्रस्वयोरुत दीर्घयोरुत [4]एकार-चकारयोरिति सन्देहः स्यादेव[5]। 'इट ईटी'त्यत्र न प्रत्याहारः। ईट्साहचर्यात्। अत एव 'आर्द्धधातुकस्येड् वलादेरि'त्यादौ न प्रत्याहार इत्यन्यत्र[1] विस्तरः। सौत्रं पुंस्त्वमिति। ह्रस्वादिपदानां न पुँल्लिङ्गयुक्तानां द्वन्द्वः, नपुंसकयुक्तानां

लघुशब्दरत्नः

ज्ञेयौ च-यौ चतुर्भ्यो, रः पञ्चभ्यः, श-लौ षड्भ्यः। इति तदुक्तेरिति भावः।

सौत्रं पुंस्त्वमिति। यद्यपि इतरेतरयोगेऽपि सौत्रमेकवचनं वक्तुं शक्यं, तथापि

[1] प्रत्याहारसूत्राह्निके (१अ. २आ.) शब्दकौस्तुभे सर्वं स्पष्टमेतत्।
[2] 'ऋकारान्ताऽभावात्' इति क. ख. पाठः।
[3] 'इक इत्येव' इति ग. पाठः।
[4] 'उत रकारवकारयोः' इति ग. पाठः।
[5] 'सन्देहः स्यात् अत 'इट ईटी' इति क. ख. पाठः।

**वां काल इवेति । फलिताऽर्थकथनमिदम् । विग्रहस्तु 'वः कालो'**

---

बृहच्छब्दरत्नः

संज्ञात्वाऽनापत्तेः । किन्तु सामान्ये नपुंसकत्वमङ्गीकृत्य द्वन्द्वः कार्यः । तथा च परवल्लिङ्गतायाः प्राप्तावितरेतरद्वन्द्वेऽपि सौत्रपुंस्त्वस्याऽप्यावश्यकत्वम् । मध्यमपदलोपिसमासे तु समप्रधानतायाश्चाऽनापत्तिः । यद्यपि 'ह्रस्वं लघु' 'दीर्घं चे'त्यत्र ह्रस्व-दीर्घशब्दयोर्नपुंसकत्वं स्पष्टं, तथापि तत्साहचर्यात् प्लुतशब्दो नपुंसकेऽपि बोध्यः । अत एव प्लुतप्रकरणे 'आम्रेडितं भर्त्सने' 'पूर्वं तु भाषायाम्' 'अनुदात्तं प्रश्नान्ताऽभिपूजितयोः' 'स्वरितमाम्रेडिते' इत्यादौ नपुंसकनिर्देशः सङ्गच्छते । अस्मिन्प्रकरणे विधेये सर्वत्र प्रथमायाः सत्त्वात्, स्वरितप्रतिज्ञाबलेन कल्प्यमानप्लुतशब्दे एव नपुंसकता युक्तेति ध्येयम् । अत एवाऽपृक्तं हलिति सङ्गच्छते । 'अपृक्त एकाल् प्रत्यय' इत्यत्र पुंस्त्वस्याऽविवक्षितत्वमि'त्युद्घोषस्याऽत्रैवाऽवसानात् । वस्तुतस्तु 'सौत्रं पुंस्त्वं' 'सौत्रमेकवचनमि'त्यनयोर्न कश्चिद्विशेष इत्याहुः ।

'व्यधिकरणत्वाद् बहुव्रीहिर्न प्राप्नोती'त्याशङ्क्याह-फलितार्थेति । यत्तु 'सूत्रे कालपदद्वयश्रवणाऽऽपत्तेरित्यत आह-फलितार्थेती'ति । तन्न । स्वोच्चारणकालसदृशकाल-पर-कालपदेन 'वां कालो यस्ये'ति च बहुव्रीहेः शक्यत्वात् । तस्याऽपि परम्परासम्बन्धेन अच्सम्बन्धित्वात् ।

यद्यपि 'विग्रहाऽर्थकथनयोरेकत्वमेवे'ति समासस्थमनोरमाग्रन्थात् प्रतीयते, तथापि न तेषां तदभिप्रेतमिति तत्रैव वक्ष्यामः । स्वोच्चारणकाल इति । 'स्व'-शब्द आत्मीयवाची । भावल्युडन्तोच्चारणशब्देन सप्तम्यर्थे बहुव्रीहिः । कालश्चाऽन्यपदार्थः । यद्वा आत्मवाची स्वशब्दः । कालकरणल्युडन्तोच्चारणशब्देन षष्ठीसमासः । ततः 'स्वोच्चारण इव काल' इति समासः । स्वोच्चारणकालसदृशः कालो लक्ष्यते । तत्र च कालेन = कालत्वेन लक्षणा । स च काल एवेत्यतः कालपदोपादानम् । सादृश्यं च कालगतमात्रात्वादिधर्मेण । वस्तुतस्तु अकारा-

---

लघुशब्दरत्नः

'लिङ्गमशिष्यं, लोकाश्रयत्वाल्लिङ्गस्ये'ति तत्र तत्र वार्त्तिकोक्तेर्लिङ्गस्य लौकिकत्वात्, तद्व्यत्ययकल्पनमेवोचितं, न तु शास्त्रीयवचनव्यत्ययकल्पनमिति भावः । फलितार्थेति । 'ऊ'पदेन स्वोच्चारणकाल-सदृश-लक्षणया, 'काल'शब्देन समानाधिकरणबहुव्रीहौ तत् फलतीति भावः ।

'वां कालः' इति तु न विग्रहो, व्यधिकरणत्वात् । तदाह[2] —विग्रहस्त्विति । 'काल' इति जात्याख्यायामेकवचनम् । स्वोच्चारणकाल इति । स्वोच्चारणकालसदृश इत्यर्थः । सादृश्यमूलके कालयोरभेदाऽध्यवसाये तु यथाश्रुतमेव साधु ।

---

[1] 'कालोऽस्येति' इति ग. ङ. पाठः ।

[2] 'अत आह' इति मुद्रितेषु पाठः ।

यस्ये'ति बोध्यः। 'ऊ'शब्देन स्वोच्चारणकालो लक्ष्यते।

आ ये इति। निपाता आद्युदात्ताः ( फिट् सू० ४।१२ ) इति आकार उदात्तः[१]। 'यत्'शब्दस्तु फिट्सूत्रेण[२]। अर्वाङिति। आकार अनुदात्तः।

### बृहच्छब्दरत्नः

दीनां पुरुषभेदेन युगपदुच्चारणे उकारोच्चारणकालस्यैवाऽकाराद्युच्चारणे सत्त्वेन, यथाश्रुते न काऽपि दोषशङ्केति सुधीभिरूह्यम्। काल इति। सामान्यविवक्षया एकवचनम्। अत एव तस्य वैकल्पिकत्वात् 'व' इति बहुवचनम्। भिन्नवचनोच्चारणन्तु पूर्वविग्रहे भिन्नविभक्त्युच्चारणमेवाऽयुक्तमिति बोधयितुम्। 'कृञ्चानुप्रयुज्यते लिटी'तिसूत्रस्थभाष्यविरोधो यथा न भवति तथा 'सुद्ध्युपास्ये'त्यत्र निरूपयिष्यामः। 'स्व'शब्देनाऽत्रोकारव्यक्तिरेव गृह्यते, न जातिः। तत्सम्बन्ध्युच्चारणस्य, कालस्य चाऽसम्भवात्। न च व्यक्तिद्वारा सम्भव इति वाच्यम्। लक्षणायां सम्बन्धे गौरवाऽऽपत्तेः। एवं च स्वोच्चारण इव कालो यस्येत्युपमेयेऽपि तेन सम्बन्धेन कालवृत्तित्वम्। अत एव 'ऊकालोऽजि'त्यत्र वर्णग्रहणे जातिग्रहणात् 'तितउच्छत्रमि'त्यत्र 'दीर्घात्'—'पदान्ताद्वे'ति विकल्पाऽऽपत्तिरि'त्यपास्तम्। किञ्च 'उरजि'त्युक्ते यथाश्रुतेऽज्ग्रहणं व्यर्थम्। उकारस्याऽच्त्वाऽव्यभिचात्। तेन सामर्थ्यात् उसदृश इत्यर्थः। सादृश्यं च न स्थानतः। असम्भवात्। न यत्नतः। व्यभिचारात्। परिशेषात्कालत एव सिद्धे, कालग्रहणं साक्षात् गृह्यमाणेन कालपरिच्छेदाऽर्थम्। पदार्थानां साक्षादन्वये सम्भवति परम्परासम्बन्धकल्पने मानाऽभावात्।

न च कालग्रहणं गृह्यमाणेनैव कालपरिच्छेदार्थं, तेन 'उकालो ह्रस्व' इति प्रथमवाक्येऽण्त्वात्सवर्णग्रहणं नेति वाच्यम्। 'अशब्दसंज्ञे'त्यनुवृत्त्याऽच्सञ्ज्ञयैवोपपत्तौ ह्रस्वसंज्ञासामर्थ्यात्[३] ने'ति भाष्यकृतैव समाहितत्वात्। 'ह्रस्वनद्याप' इति लिङ्गाच्च। बहुव्रीहेरेकवचनान्तत्वादेकत्वविशिष्टस्यैव संज्ञित्वे 'उकालो ह्रस्व' इतिवाक्ये अणुदित्सूत्रप्रवृत्तौ षण्मात्राकालविशिष्टस्याऽसंभवेन, वाक्याऽन्तरसाहचर्येण चोच्चार्यमाणकालस्यैव ग्रहणाच्च। अपि च ह्रस्वादिमहासंज्ञाकरणसामर्थ्यान्न जातिग्रहणम्। तद्धि ह्रस्वादिप्रदेशेषु 'खर्वो ह्रस्वश्च वामन' इत्यादिनैव शक्तिग्रहाद्बोधो भवत्वित्येतदर्थम्। ऊकालोऽजिति सूत्रं तु द्विमात्रादीनां कस्य चिदपेक्षया खर्वत्वाच्छास्त्रे तदभावाऽर्थमात्रम्। अत एव 'कतीनामि'त्यत्राऽन्तरङ्गत्वात् 'ह्रस्वनद्याप' इत्येव नुडित्यग्रे निरूपयिष्यामः।

### लघुशब्दरत्नः

फिट्सूत्रेणेति। अन्तोदात्त इत्यर्थः। जसः सुप्त्वादनुदात्तत्वम्। एकादेश उदात्तेन (८।२।५) इति एकार उदात्त इति भावः। अनुदात्त इति। फिट्स्वरेण अन्तस्योदात्तत्वे,

[१] 'आद्युदात्त' इति ङ. च. पाठः।

[२] 'फिट्स्वरेण अन्तोदात्त' इति ङ. च. पाठः। 'फिषोऽन्त उदात्त' इत्यनेनेत्यर्थः।

[३] 'सामर्थ्याञ्चो ने'ति ख पाठः।

**तस्यादितः (१।२।३२) अतन्त्रमिति। उपेयिवान् (३।२।१०९) इत्यत्र उपसर्ग इव अविवक्षितमित्यर्थः। ननु तत्र 'ईयिवांसमतिस्रिधः'**

---

बृहच्छब्दरत्नः

लोके च व्यक्तावेव खर्वत्वं प्रसिद्धं, न जातौ। वर्णोच्चारणाऽनन्तरं वर्णाऽन्तरोच्चारणे अर्धमात्राकालस्य मध्ये आवश्यकत्वेन द्विमात्राकालकत्वाऽसम्भवाच्चेत्यपि वदन्ति।

प्राञ्चस्तु जातिरेकैकव्यक्तिव्यङ्ग्या, न समुदायव्यङ्ग्या, अभिव्यक्तेरुत्पत्तेर्वा क्षणिकत्वेन, क्रमिकत्वेन च, समुदायस्याऽसम्भवात्। व्यञ्जकज्ञानोत्तरं व्यङ्ग्यज्ञानसत्त्वात्, अकारादौ चारितार्थ्येनाऽव्यवहितोत्तरत्वादिसम्बन्धेन शास्त्राऽप्रवृत्तेश्चेत्याहुः। 'तितउच्छत्रमि'त्यत्र दीर्घसंज्ञायां सत्यामपि न क्षतिः। न च तुग्विकल्पः। अन्तरङ्गत्वेन ह्रस्वलक्षणस्यैव प्रवृत्तेः। किंच दीर्घनिमित्ततुगभावे ह्रस्वलक्षणस्य दुर्वारत्वेन दोषाऽभावात्। अत एव 'गोऽग्रमि'त्यादौ पूर्वरूपादिसिद्धिः। अत एव 'समुदायकार्ये व्यापृतत्वादवयवानां स्वकार्येऽव्यापार' इति परास्तम्। 'छे चे'त्यत्र 'वर्णग्रहणे जातिग्रहणमि'त्यस्य दुर्वारत्वेन समुदायह्रस्वत्वेन तत्त्वादित्यपि वदन्ति।

अत्रेदमवधेयं—ह्रस्वप्रदेशेषु लघुसंज्ञयैव व्यवहारो न कृतः। 'लघोस्तादौ तद्धिते' इति न्यासे षत्वाऽप्राप्तौ [1]'सर्पिष्ट्रमि'त्याद्यसिद्ध्यापत्तेः। 'अततक्षदि'त्यादौ सन्वद्भावाऽर्थं गुरुसंज्ञया लघुसंज्ञाया बाधस्याऽऽवश्यकत्वात्। नचैवं 'भेत्ते'त्यत्र गुणाऽसिद्धिः। प्रत्ययमाश्रित्य गुरुसंज्ञायाः सत्त्वेऽपि, अङ्गस्य लघूपधत्वाऽनपायात्। सिद्धान्ते तु[2] 'पुगन्तलघूपधस्ये'त्यत्र संयोगाऽपरत्वे सति ह्रस्वत्वं लघुत्वम्। तत्र प्रत्यासत्तिन्यायेन संयोगोऽप्यङ्गाऽवयव एव गृह्यते। क्नोः कित्करणं चाऽत्र ज्ञापकम्। षत्वविधौ च नाऽङ्गाऽधिकारः। किंच 'लध्वक्षरं पूर्वं' 'शकुनीनां च लघुपूर्वं' 'ह्रस्वाऽन्तस्ये'त्यादिसूत्रेषु ह्रस्व-लघु-संज्ञायाः प्रयोजनं स्पष्टमेवेत्याहुः।

अविवक्षितमिति। अवयुत्याऽनुवाद इत्यर्थः। तथा च दीर्घप्लुतयोरप्यर्द्धोदात्तबोधकम्। अर्द्धशब्दो न समांऽशवाची, अपि तु लेशवाची। लेशस्तु 'विभाषा छन्दसी'त्यनेन विहितानामेकश्रुत्यादीनां तत्तत्प्रातिशाख्याऽनुरोधेन व्यवस्थावत् कस्यां चिच्छाखायां समांऽशः, कस्यां चिच्छाखायामर्द्धमात्रेति व्यवस्थापनीयम्। अत एव 'अर्धग्रहणं व्यर्थम्[3], 'समं स्यादश्रुतत्वादि'ति परास्तम्।

---

लघुशब्दरत्नः

शेषनिघातेनेति भावः। अभिमुखवाचि अव्युत्पन्नं प्रातिपदिकम्-अर्वाङिति। अविवक्षितमित्यर्थ इति। इदं च वक्ष्यमाणं प्रातिशाख्यं यच्छाखायाम्, तच्छाखास्थवैदिकोदाहरणविषयम्।

---

[1] 'सर्पिष्टमम्' इति क. पाठः। [2] तुः ख. नास्ति।

[3] 'व्यर्थसमं स्यात्, अश्रुतत्वात्' इति क्वचित्पठ्यते।

इत्यादिप्रयोगदर्शनात् अविवक्षाऽस्तु, इह तु अविवक्षायां प्रमाणं किम्—इति चेत्। लक्ष्यदर्शनं, प्रातिशाख्यादिकं चेति गृहाण। तथा हि—'येऽराः' इत्यत्र एकारः, 'तनू-नपात्' 'शची-पतिमि'त्यत्र पदपाठे ऊदीतौ च अर्द्धोदात्तौ' इति सकलबह्वृचप्रसिद्धम्। 'तनू-नपात्'-'शची-पति'शब्दयोः उभे वनस्पत्यादिषु युगपत् (६।२।१४०) इति पूर्वोत्तरपदयोः आद्युदात्तत्वे कृते, अनुदात्तं पदमेकवर्जम् (६।१।१५८) इति शेषनिघातः। पूर्वपदभूतयोः 'तनू-शची'—एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम्—

'जात्यवद्वा, तथा वाऽन्तौ[1] तनू-शचीति पूर्वयोः'। इति

---

बृहच्छब्दरत्नः

प्रातिशाख्यादिकं चेति। 'च'शब्दाऽर्थः—'तस्य'ग्रहणम्। तद्धि स्वरितमात्रग्रहणाऽर्थम्। ह्रस्वग्रहणविवक्षायां स न स्यात्। न च त्रिपादीस्थस्वरितसंग्रहाऽर्थं तदिति वाच्यम्। उक्तकाण्डं प्रति त्रिपाद्यसिद्धत्वाऽभावस्य भाष्यादौ प्रकाराऽन्तरेण साधितत्वात्। न च षष्ठीकल्पनाऽर्थम्। सम्बन्धिशब्देनैव तत्सिद्धेः। अत एव 'तस्य लोप'इतिसूत्रस्थं 'तस्यग्रहणं सर्वलोपाऽर्थमि'त्याकरग्रन्थाः सङ्गच्छन्ते इत्याहुः।

अन्ये तु 'तस्य'ग्रहणमुदात्तोदात्तश्रुतिसमाहारादिस्वरितानां व्यावर्त्त्यमुखेन साधुत्वबोधनाऽर्थम्। तच्छब्दस्य पूर्वपरामर्शकत्वात्। 'समाहारः स्वरित' इति सूत्रे प्रकृतयोरेव ग्रहणात्।

---

लघुशब्दरत्नः

तनूनपाच्छचीपतिशब्दयोरिति। अस्य 'यद्यपी'त्यादिः। शेषनिघात इति। अस्य 'तथापी'ति शेषः। [2]तेन ऊदीतौ अनुदात्तौ प्राप्नुत इति भावः।

जात्यवद्वेति। पूर्वपदभूतयोः 'तनू''शची'शब्दयोरन्तौ जात्यवदिति।

[3]'अतोऽन्यं स्वरितं स्वारं जात्यमाचक्षते पदे'।

—इति लक्षितो[4] जात्यः। 'उदात्त-स्वरितपूर्व-स्वरितात् अन्य, एकपदे स्थितः स्वरितो जात्य' इति तदर्थः। तेन तुल्यं तद्वत्। अस्य[5] अन्त उदात्तश्रुतिक इत्यर्थः।

तथा वा=[6]असंहितवद्वा, संहितवद्वेत्यर्थः।

---

१ 'तथा चाऽन्तौ' इति तु प्राचीनतर-ङ.पुस्तकपाठः।

२ 'तेन' इत्यादिः 'भावः' इत्यन्तोऽयं पाठः 'प्रक्षिप्त' इति साम्प्रदायिकाः।

३ 'अतोऽन्यत्स्वरितम्' इति मुद्रितः पाठः। स चाऽशुद्धः।

४ 'इतिलक्षणलक्षितो जात्यः' इति क. शोधितः पाठः।

५ अस्य=जात्यस्य, अन्तः=उत्तरार्द्धः, उदात्तश्रुतिक इत्यर्थः।

६ 'असंहितवद्वा, वा संहितवद्वेत्यर्थः' इति लिखितेषु पाठः।

तथा स्वरिताऽर्द्धस्य उदात्तत्वे प्रातिशाख्यमपि—

'एकाऽक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ।
तस्योदात्ततरोदात्तादर्द्धमात्राऽर्द्धमेव वा ॥
अनुदात्तः परः शेषः, स उदात्तश्रुति-र्न चेत्— ।
उदात्तं वोच्यते किंचित्, स्वरितं वाऽक्षरं परम्' ॥ इति

अस्याऽर्थः—पूर्वयोः = उदात्तत्वाऽनुदात्तत्वयोः, एकत्र समावेशे सति स्वरितो बोध्यः । 'तस्य = स्वरितस्य, स्वतन्त्रोदात्ताऽपेक्षया उदात्ततरा अर्द्धमात्रा बोध्ये'ति 'क्व वोऽश्वाः' इत्यादिह्रस्वाऽभिप्रायम् । 'अर्द्धं वे'ति दीर्घाऽभिप्रायम् । अनेनैव ह्रस्वस्याऽपि संग्रहात्, व्यापकत्वात् इदमेव आदर्त्तव्य-

---

बृहच्छब्दरत्नः

ध्वनितञ्चेदम् 'उत्तरार्द्धं तु परिशेषादि'त्यादिना मूले । तस्माच्चशब्देन सर्वप्रातिशाख्याऽविरोधरूपं प्रमाणमुपन्यस्यते इत्याहुः । नन्विदं प्रतिशाख्यमुभयविधस्वरितयुक्तशाखाविषयमुताऽन्यतरस्वरितयुक्तशाखाविषयम् ? । नाऽऽद्यः । एतादृशशाखाया अप्रसिद्धत्वात् । नाऽन्त्यः । प्रातिशाख्ये पक्षद्वयस्योक्तत्वादित्याशङ्क्याह-अस्यार्थ इति । उदात्ततरेति । नचैवं स्वतन्त्रोदात्तस्य नीचस्थानत्वेनाऽनुदात्तत्वं स्यादिति वाच्यम् । नीचैर्ग्रहणसामर्थ्येनाऽत्यन्तनीचभागस्य ग्रहणात् । महासंज्ञाकरणेन शिक्षादिप्रसिद्धस्यैव ग्रहणाच्च । नचैवमुच्चैरुदात्त इत्यादीनां वैयर्थ्यम् । भाष्यकृता प्रत्याख्यातत्वेनेष्टाऽऽपत्तेः । ह्रस्वस्यापीति । अपिना दीर्घप्लुतयोर्ग्रहणं बोध्यम् । अत एवाह-व्यापकत्वादिति । अर्द्धमात्राऽपेक्षया समांऽशस्य बहुत्वेन तदुपकारकत्वात्, चरमग्रन्थोपन्यासेन प्राबल्याऽनुमानाच्च । 'प्रातिशाख्यमि'ति समाख्याबलेन

---

लघुशब्दरत्नः

'पद्यांदींस्तु द्व्युदात्तानाम् असंहितवदुत्तरान्' ।

—इत्युत्तरम् अस्य पाठात् । 'असंहितवदि'त्यनेन[1] केवलम् अनुदात्तत्वम् । 'संहित-[2]वदि'त्यनेन [3]अर्द्धाऽनुदात्त-स्वरितकत्वमि'ति तद्भाष्ये स्पष्टम् ।

तथेति । लक्ष्यदर्शनवत्, प्रातिशाख्यमपि प्रमाणमस्तीत्यर्थः ।

स्वतन्त्रोदात्तापेक्षयेति । श्लोके 'उदात्तादि'ति 'स्वतन्त्रोदात्तादि'त्यर्थकमिति भावः ।

---

[1] 'संहितवदि'त्यनेन केवलम् अनुदात्तत्वम्, 'असंहितवदि'त्यनेन उदात्तश्रुतिकत्वं, 'जात्यवदि'त्यनेन अर्द्धाऽनुदात्तस्वरितकत्वमिति तद्भाष्ये स्पष्टम्' इति क. ग. पाठः ।

[2] 'संहितवद्वे'त्यनेन' इति घ. पाठः ।

[3] 'अर्द्धाऽनुदात्तश्रुतिकत्वम्' इति ख. पाठः ।

मिति सूचयितुम् 'एव'कारः । 'अनुदात्त' इत्यादि परिशेषसिद्धाऽर्थकथनम् ।

सः = शेषः, उदात्तश्रुतिः स्यात् । किम् अविशेषेण ? । नेत्याह—'न चेदि'त्यादि । उदात्त-स्वरितपरं विहायेत्यर्थः । शाकल्योऽप्याह—

'अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्वगः ।
उदादायाऽर्द्धमस्याऽथ शिष्टं निघ्नन्ति कम्पितम्' ॥ इति

उदादाय = उदात्तं कृत्वा । 'अर्द्धह्रस्वशब्देन अर्द्धमात्रा लक्ष्यते' इति हरदत्तादिग्रन्थास्तु मताऽन्तरपरतया कथं चिन्नेयाः ।

---

बृहच्छब्दरत्नः

तच्छाखाविषयत्वे लब्धे, तच्छाखायां दीर्घादिष्वपि समांऽशोदात्तकस्वरितस्य पठितत्वाच्चेत्यपि बोध्यम् । अत एव च नोक्तविकल्पाऽवकाशः ।

एवकार इति । वाशब्दस्तु पादपूरणाऽर्थः । यत्तु 'तस्यादित' इति सूत्रं लौकिकस्वरितविभागबोधकमि'ति । तन्न । संकोचे मानाऽभावात् । अर्द्धशब्दस्य लेशवाचकत्वेन सर्वसिद्धेश्चेत्यास्तां तावत् ।

कथं चिदिति । एतदुक्त्या आकरेऽर्द्धह्रस्वशब्दस्य अर्द्धमात्रायां रूढेरुक्तत्वात्, समुदायस्य शक्त्यभावेन लक्षणाया वक्तुमशक्यत्वात्, ह्रस्वपदलक्षणयैवोपपत्तेश्च अयुक्ता एवेति ध्वनितम् ।

---

लघुशब्दरत्नः

एवकार इति । तच्छाखायां दीर्घादिष्वपि समांऽशोदात्तक-स्वरितस्यैव पाठादिति भावः । एतेन 'एतौ पक्षौ वैकल्पिकौ' इत्यपास्तम् । 'वा'शब्दस्तु पादपूरणायेति बोध्यम् ।

अप्राकृत इति । [1]स्वरितविशेष इत्यर्थः । स्वार इति । स्वर एव स्वारः । स्वार्थे अण् । स्वरितोदात्ताभ्यां पूर्ववर्णग इत्यर्थः । लक्ष्यते इति । तदुक्तं भाष्ये—'अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः' इति । हरिरप्याह—

'प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते' इति ।

'अनुपात्तमपि [2]अर्द्धमात्रारूपं प्रमाणमेवोपलक्ष्यते' इत्यर्थं तस्य हेलाराज आह । एवं च लोके, अन्यशाखासु च दीर्घादिष्वपि अर्द्धमात्रैव उदात्तेति भावः ।

मतान्तरेति । प्रातिशाख्योक्तमताऽपेक्षया इतर-वेद-लोक-साधारणमताऽन्तरेत्यर्थः ।

कथंचिदिति । 'लक्ष्यते[3]' इत्यंशपरमिदम् । भाष्यतो रूढिशक्तेरेव प्रतीतेरिति भावः ।

---

[1] 'स्वरित इत्यर्थं' इति ग. पाठः । मुद्रितेऽपि क्वचित्तथैव पाठः ।

[2] 'अनुपात्तमपि मात्रारूपं प्रमाणम्' इति ग. पाठः ।

[3] 'लक्षणेत्यंशपरमिदम्' इति क. ग. पाठः ।

**क्वेति ।** 'किमोऽत्' ( ५।३।१२ ) 'तित्स्वरितम्' ( ६।१।१८५ )। **व इति ।** अनुदात्तं सर्वमपादादौ ( ८।१।१८ ) इत्यधिकारात् अनुदात्तम् ।

**अश्वा इति ।** अशेः क्वनि नित्स्वरेण आद्युदात्तम् । संहितायां तु 'एकादेश उदात्तेनोदात्तः' ( ८।२।५ ) इति ओकार उदात्तः ।

**'ये' 'अरा' इति**—द्वयमपि फिट्सूत्रेण अन्तोदात्तम् । एकादेशस्तु पक्षे स्वरितः, स्वरितो वाऽनुदात्ते पदादौ ( ८।२।६ ) इत्युक्तेः ।

**'मुखं च नासिका चे'ति** विग्रहे प्राण्यङ्गत्वात् एकवद्भावे 'मुखनासिक-मि'ति स्यादत आह—**मुखसहितेति ।**

**तुल्यास्य (१।१।९)।** आस्ये भवम्—आस्यम् । शरीराऽवयवात् यत्, —इत्यभिप्रेत्याऽऽह—**ताल्वादीति ।**

**आभ्यन्तरेति ।** एतच्च 'प्र'शब्दबलाल्लभ्यते । तुल्यास्यं किम् ? । तर्प्ता । अत्र पकारस्य तकारे परे 'झरो झरि' ( ८।४।६५ ) इति लोपो मा भूत् । प्रयत्नग्रहणं किम् ? । वाक् श्चोतति । शस्य लोपो न ।

---

**बृहच्छब्दरत्नः**

आस्ये भवमिति । यद्यप्यास्यशब्दस्य मुखे—आस्यन्दते=अन्नं प्राप्य द्रवी भवतीत्यास्यम्, 'अन्येष्वपी'ति डः, यद्वा अन्नेन द्रवी क्रियते इत्यास्यम्, अन्त-र्भावितण्यर्थात्कर्मणि डः, यथा 'परितः खाता परिखे'त्यादिरीत्या—योगरूढिरस्ति, प्रथमोपस्थितत्वं चाऽधिकं, तथाऽपि वर्णमात्रस्य तत्रैवोत्पन्नत्वेन तद्ग्रहणसामर्थ्या-दभिमताऽर्थलाभः । नचैवमपि जिह्वाऽग्रोपाग्रादीनां ग्रहणं दुर्वारम्, तेषां सर्वत्र समानत्वेन ग्रहणाऽग्रहणे फल-दोषयोरभावात् ।

एतच्चेति । प्रकृष्टो यत्नः प्रयत्नः । प्रकृष्टत्वन्तु वर्णोत्पत्तिप्राग्भावित्वम् । तथाहि नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन् उरःप्रभृतीनि स्थानान्याहन्ति । ततो वर्णाऽभिव्यक्तिः । तत्रोत्पत्तेः प्राक् यदा जिह्वाऽग्रोपाग्र-मध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं सम्यक् स्पृशन्ति, तदा स्पृष्टता । ईषद्यदा स्पृशन्ति

---

**लघुशब्दरत्नः**

इत्युक्तेरिति । 'नोदात्तस्वरितोदयम्' (८।४।६७) इति निषेधस्तु 'उदात्तादनुदात्तस्य' (८।४।६६) इत्यस्यैव, 'अनन्तरस्ये'ति न्यायादिति भावः ।

'आस्य'शब्देन कथं तदवयव-ताल्वादिग्रहणमत आह—आस्ये भवमिति । 'प्र'शब्द-बलादिति । प्रकृष्टो यत्नः प्रयत्नः । प्रकर्षश्च वर्णोत्पत्त्यव्यवहितप्राक्कालिकत्वरूप इति

ञमङणनानामिति। 'नासिका चे'ति चकारेण स्व-स्ववर्गाऽनुकूलं ताल्वादि समुच्चीयते।

[ [1]''अनुस्वारोत्तमा अनुनासिका' इति तैत्तिरीयाणां प्रातिशाख्यम्।

बृहच्छब्दरत्नः

तदा ईषत्स्पृष्टता। समीपाऽवस्थानमात्रेण संवृतता। बाह्यास्तु वर्णोत्पत्तेः पश्चात् मूर्ध्नि प्रतिहते, निवृत्ते प्राणाख्ये वायौ, उत्पद्यन्ते। गलबिलसंकोचात्संवारः। तस्यैव विकाशाद्विवार इत्याद्यूह्यम्। यत्तु 'भाष्ये बाह्यप्रयत्नेषूदात्तादीनामपरिगणितत्वादुदात्तादीनां सवर्णसंज्ञा न प्राप्नोती'त्याशङ्क्य 'अभेदका उदात्तादय' इति समाहितत्वाच्चाऽऽभ्यन्तरत्वमि'ति। तन्न। उदात्तादीनां वर्णोच्चारणकाले एवोपलम्भेनोच्चैरुदात्त इत्यादिभिस्तथैव लाभाच्च, सवर्णसंज्ञायामनुपयोगेन वा, आन्तरतम्यपरीक्षायामुपयोगेन च उदात्तादीनां प्रयत्नशब्देनोपादानेन, 'अनुदात्तादेरञि'त्यादाविव भेदकपक्षस्यैव युक्तत्वाच्च, उदात्तरूपाऽऽभ्यन्तरप्रयत्नभेदेऽपि विवृतरूपाऽऽभ्यन्तरप्रयत्नैक्येन सवर्णसंज्ञाया दुर्वारत्वाच्च, भाष्यस्य प्रौढिवादपरताया आवश्यकत्वे पितामहचरणोक्तेरेव शरणीकरणीयत्वात्। नच यावत्प्रयत्नैक्यं विवक्षणीयमिति वाच्यम्। 'बाह्यप्रयत्नैक्ये आभ्यन्तरप्रयत्नभेदे सावर्ण्याऽभावाऽर्थमाभ्यन्तरप्रयत्नमात्रग्रहणमि'त्यर्थपरभाष्यविरोधाऽऽपत्तेः। 'प्र'शब्दस्य वैयर्थ्याऽऽपत्तेश्च।

'स्थानेऽन्तरतम' इतिसूत्रस्थभाष्यादिपर्यालोचनया शादीनां, वर्गद्वितीयचतुर्थानां च ऊष्मत्वलाभेन, 'विवृतमूष्मणामि'ति वाक्ये शादीनामिव, वर्गद्वितीयादीनामपि ग्रहणस्य दुर्वारत्वेन, वर्गप्रथमाऽपेक्षया द्वितीयचतुर्थानां प्रयत्नाऽऽधिक्यात् सावर्ण्याऽनापत्त्या 'चोः कुरि'त्यादौ तेषामग्रहणाऽऽपत्तेश्च, क-ङादीनां सावर्ण्याऽनापत्तेश्च।

यत्तु प्राचीनप्रक्रियां व्याचक्षाणपौत्रेणोक्तम्–'अनुस्वारयमानाञ्च नासिका स्थानमिष्यते'इति शिक्षायामुक्तत्वेन वर्गपञ्चमानां नासिका करणम्, अतस्तदैक्याऽभावे न काचित्क्षतिरि'ति। तत्रेदं प्रष्टव्यम्–नासिका आस्यबहिर्भूता, उत आस्याऽन्तर्गता। नाऽऽद्यः। कैयटादिग्रन्थविरोधात्। तत्र जिह्वादिव्यापाराऽसम्भवाच्च। नासिकाव्यावृत्त्या चरितार्थत्वेन 'यदि लौकिकमास्यं, किमास्योपादाने प्रयोजनमि'त्यादिभाष्यग्रन्थविरोधश्च। अन्त्ये करणरूपनासिकायामास्यभवत्वेन, आस्यशब्देन ग्रहणात् पूर्वोक्तदोषो वज्रलेपायितः। नचाऽऽस्यशब्देन स्थानमेव गृह्यते इति वाच्यम्।

लघुशब्दरत्नः

भावः। चकारेणेति। अत्र यथा नासिकायाः स्थानत्वं, तथाऽन्यत्र निरूपितम्।

[1] [ ] एतच्चिह्नान्तर्गतः पाठः प्रक्षिप्तः। भैरवी-भावप्रकाशटीकयोरस्य पाठस्योपलम्भात्। लिखितेष्वादर्शेषु प्रायोऽस्याऽभावाच्च। क्वचिल्लिखितेषूपलभ्यमानोऽप्ययं पाठः पश्चात्केन चिद्योजितः, क्वचिच्च हरिताललेपेन निस्सारितश्चेत्यप्यवधेयम्।

'यमा-ऽनुस्वार-नासिक्यानां 'नासिके[1]। अनुनासिकाश्चोत्तमाः' इति कात्यायन-प्रातिशाख्यम्। 'वर्गोत्तमा ङ-ञ-ण-न-मा[2] अनुनासिका भवन्ति, 'च'शब्दात्

बृहच्छब्दरत्नः

सङ्कोचे मानाऽभावात्। वैपरीत्यस्याऽपि सुवचत्वाच्च। 'किं पुनरास्ये भवं, स्थानं, करणं चे'ति भाष्यग्रन्थविरोधाऽऽपत्तेश्च। एतेन 'तुल्य'शब्दसंकोचाऽपेक्षया पश्चादुपस्थिताऽऽस्यशब्दस्य संकोच एव न्याय्य' इत्यपास्तम्। क-ख-ग-घ-ङादीनां स्वरूपतो भेदाऽर्थं स्थानादाववान्तरभेदस्याऽऽवश्यकत्वेन, 'सर्वस्थानसाम्ये सवर्णसंज्ञे'ति पक्षेऽपि आस्यशब्द इव, तुल्यशब्देऽपि सङ्कोचस्याऽऽवश्यकत्वाच्च। भेदे सत्येव तुल्यत्वात्। 'किंचित्स्थानसाम्ये सवर्णसंज्ञे'ति पक्षे 'तुल्य'शब्दे संकोचा-ऽभावाच्च। इदमेवाऽभिप्रेत्य 'यत्समानं तदाश्रयिष्यामः। किं सति भेदे। सतीत्याह। सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम्। कुत एतत्। भेदाऽधिष्ठाना हि सवर्णसंज्ञे'-त्यादि भाष्यकारैरुक्तम्। अत एवाऽवान्तरधर्माऽनादरेण कण्ठत्वादिनैव स्थान-प्रयत्नविवेक आदृतः शिक्षादौ।

वस्तुतस्तु 'नासिकायाः करणत्वमेवे'ति न नियमः। विकल्पाऽसहत्वात्। तथा हि वर्णोत्पत्तौ नासिकायाः करणत्वं पाकक्रियायां काष्ठादीनामिव, उत स्थाल्यादीनामिव ?। नाऽऽद्यः। 'आस्ये—तुल्यदेशप्रयत्नं सवर्णमि'त्यधिकरणत्व-बोधकदेशशब्दसहितवार्त्तिकेन, तद्भाष्येण च विरोधाऽऽपत्तेः। अधिकरणरूप-प्रासादवासिन्याय-प्रतिपादकभाष्येण मुखनासिकयोरधिकरणत्वबोधनाच्च।

अन्त्ये तु स्थानत्वं दुर्वारमेव। तस्माद्यथा भाष्यादौ 'जिह्वामूलीय'पदेन कवर्गस्याऽव्यवहृतत्वात्, 'जिह्वामूले तु कुः प्रोक्तो, दन्त्योष्ठ्यो वः स्मृतो बुधैरि'ति-शिक्षायां 'जिह्वामूल'पदं तत्समीपदेशलक्षकं व्याख्यायते, [3]यथा च 'अयुग्मा वर्ग-यमगा यणश्चाऽल्पाऽसवः स्मृता' इत्यत्र 'सुपां सुलुगि'तिसूत्रस्थभाष्यादिप्रामाण्या-च्चकारस्याऽनुक्तसमुच्चयाऽर्थत्वेनाऽचां ग्रहणं व्याख्यायते, यथा वा 'क्विन्प्रत्ययस्य कुरि'तिसूत्रस्थकैयटादिप्रामाण्यात् 'वर्गचतुर्थानामल्पप्राणताऽपि, दन्त्योष्ठ्य-वकारस्य महाप्राणता चे'ति व्याख्यायते, तथा प्रकृतशिक्षावाक्ये ञादीनामकारादीनां च ग्रहणं बोध्यम्। न चैवं मूलग्रन्थे अकारादीनां नासिकास्थानस्याऽनुक्तत्वेन न्यूनता दोष इति वाच्यम्। शब्दकौस्तुभे पितामहचरणैरुक्तत्वेन दोषाऽभावात्। 'स प्रत्येकमनुनासिकाऽननुनासिकत्वाभ्यां द्विधे'त्यादिग्रन्थेन मूले उक्तप्रायत्वाच्च। ञमङणनानां परस्परं सावर्ण्येन 'त्वं नयसी'त्यादौ पर्यायेण पक्षे 'वा पदान्तस्ये'-

[1] 'नासिका' इति मुद्रितेषु पाठः। लिखितेष्वपि च—'नासिका' इति, 'नासिके' इत्युभयथाऽपि पाठो दृश्यते। तत्र 'नासिके' इत्यस्य नासिकारन्ध्रद्वयमित्यर्थो ध्येयः।

[2] 'ञमङणनाः' इति च. पाठः। मुद्रितेष्वपि तथैव पाठः।

[3] 'यथा वा' इति क. पाठः

'[1]स्वस्थानाद्यपरित्यागेन नासिका स्थानं द्वितीयमेषामित्यर्थः' इति तद्भाष्यं च ]।

**बृहच्छब्दरत्नः**

त्यनेन ङादयो भवन्ति। युक्तञ्चैतत्।- 'तुल्य'शब्दस्याऽन्यूनाऽनधिकपरत्वे, अन्यतरैक्ये यावदास्यभवैक्याऽभावादप्राप्तौ 'प्रयत्न'ग्रहणस्य वैयर्थ्याऽऽपत्तेः।

एतेन 'प्रयत्नस्य पृथगुपादानात् तद्धिताऽन्ताऽऽस्यशब्देन नासिकारूपं करणं न गृह्यते' इत्यपास्तम्। उभयत्राऽपि तुल्यत्वस्य वक्तुं शक्यत्वेन, आनुमनिकवचन-कल्पनाऽऽपत्त्या, सङ्कोचस्याऽन्याय्यत्वेन च विनिगमनाविरहात् सर्वत्र प्रवृत्तौ तात्पर्य-ग्राहकतया प्रयत्नग्रहणस्य व्याख्यातुं युक्तत्वाच्च। द्वन्द्वाऽतिरिक्तपक्षेऽसम्भवाच्च[2]।

नचाऽस्मिन्पक्षे भिन्नस्थानैकप्रयत्नानामास्यभवाऽधिकरणप्रयत्नतुल्यत्वेन संज्ञा दुर्वारेति वाच्यम्। वचनसामर्थ्येन, प्रत्यासत्तिन्याय्याच्च स्थानैक्ये एव प्रवृत्तेः। इदमेवाऽभिसन्धाय 'आस्ये' इत्येकत्वं विवक्ष्यते' इति कैय्यटादयः।

एतेन 'यो यस्याऽन्यूनस्थानप्रयत्नकः स तस्य सवर्णः' इत्यपास्तम्। अशब्दा-ऽर्थत्वाच्च। नचैवं व-लयोः सावर्ण्याऽऽपत्तिः। 'दन्तोष्ठ्य'मिति समासनिर्देशेन समुदितस्य जनकत्वेन, अन्यतरस्य तदभावात्। 'तुल्यौ आस्य-प्रयत्नौ यस्ये'त्यत्र जन्य-जनकभावः षष्ठ्यर्थः। तच्च जनकत्वं न्याय्यत्वात्पर्याप्तमेव गृह्यते। वर्ण-समाम्नाये उभयोरुपादानं, व-लिति भेदेन व्यवहारश्चाऽत्र मानम्। 'उदोष्ठ्यपूर्वस्ये'-त्यादौ ओष्ठ्यादिग्रहणसामर्थ्यादुक्ताऽर्थग्रहणे मानाऽभावाच्च वकारग्रहणं बोध्यम्।

एतेन 'एवमपि अवर्णस्य, एङोश्च सवर्णसंज्ञा प्राप्नोति। प्रश्लिष्टा-ऽवर्णावेतौ। अवर्णस्य तर्हि ऐचोश्च सवर्णसंज्ञा प्राप्नोति। विवृततराऽवर्णा-वेतावि'ति भाष्यमपास्तम्। 'सर्वस्थानसाम्ये सवर्णसंज्ञे'तिवादिनां मतेऽपि भाष्यस्य प्रौढिवादपरताया आवश्यकत्वाच्च।

किञ्चेदं भाष्यम् एजवयवीभूताऽवर्णेन सह सावर्ण्याऽऽपादकम्, उत एज्भिः सह?। नाऽऽद्यः। 'गव्यं' 'नाव्यमि'त्यत्र 'यस्ये'तिलोपप्रसङ्ग' इति कैयटविवरणा-दिग्रन्थविरोधाऽऽपत्तेः। उत्तरभागेन व्यवधानात्। अत एव 'कर्तॄणामि'त्यादौ णत्वार्थं 'व्यवायेऽपी'ति योगविभाग आदृतो भाष्यकारैः। 'उत्तरभागे अवर्ण-सदृश' इति तु भाष्यादिविरोधादनुभवविरोधाच्चोपेक्ष्यम्। नरसिंहवज्जात्यन्तर-त्वेनाऽवयवाऽभावस्य भाष्ये सिद्धान्तितत्वाच्च।

नाऽन्त्यः। 'प्रश्लिष्टाऽवर्णावेतावि'त्यादिहेतूपन्यासवैयर्थ्याऽऽपत्तेः। तद-भावे हेत्वन्तरोपन्यासस्याऽऽवश्यकत्वाच्च। अत एव इवर्णोवर्णयोरेचश्च न

[1] 'स्व-स्व-स्थानाद्यपरित्यागद्वारेण' इति घ. ङ. च. पाठः।

[2] 'पक्षाऽसम्भवाच्च' इति क्वचित्पाठः।

**'एदैतोरि'त्यादौ तपरत्वम् असन्देहाऽर्थं, न तु तत्कालग्रहणाऽर्थम् । तेन प्लुतस्याऽपि सङ्ग्रहः ।**

---

बृहच्छब्दरत्नः

सावर्ण्यम् । एतेन 'एङोरैचोश्च किंचित्स्थानसाम्यस्य सत्त्वेन सवर्णसंज्ञाया दुर्वारत्वात् 'एतयोरेव मिथः सवर्णसंज्ञा प्राप्नोति । नैतौ तुल्यस्थानावि'ति भाष्यं विरुध्येते'त्यपास्तम् । एदैतोरोदौतोश्च[1] एकाऽनुबन्धं कृत्वा, 'एओ-ऐऔजि'ति एकं सूत्रं विधाय, एकजातीयव्यवहारमाश्रित्य सर्वसिद्धौ, गुरुभूतभिन्नाऽनुबन्धकरणेन 'ऐऔजि'ति सूत्रप्रणयनात् एङ्भ्यामैचोर्ग्रहणसिद्धौ, 'ऐऔजि'तिसूत्राऽऽरम्भसामर्थ्यान्न सावर्ण्यमि'ति मूलोक्तं सर्वेषां समानम् । 'एचोऽयवायाव' इत्यत्र 'स्थानेऽन्तरतमपरिभाषयैव निर्वाह' इत्यग्रे निरूपयिष्यामः ।

'न य्वाभ्यामि'ति सूत्रे तु चरमपदे स्वरूपेणैव ऐदौतोः पाठः कर्त्तुं शक्यः । 'वृद्धिरादैच्' 'अदेङ् गुण' इत्यत्र चतुर्णां ग्रहणं सवर्णसंज्ञावादिमतेऽप्यस्त्येव । तपरकरणेन यथोद्देशपक्षस्य बोधितत्वात् । नचैवं संज्ञाद्वयवैयर्थ्यम् । पूर्वसूत्रे अकारसहितत्वेन, इतरसूत्रे आकारसहितत्वेनाऽदोषात् ।

नचैवमुत्तरसूत्रे ऐजनुवृत्त्यैव सिद्धौ एङ्पदवैयर्थ्यम् । संज्ञ्यन्तरोपादानेन अनुवृत्त्यनापत्तेः । आकारस्याऽप्यनुवृत्त्यापत्तेश्च । 'सवर्णसंज्ञायां सत्यामपि [2]ऐचोर्ग्रहणे एङ्ग्रहणं न, विवृततरोच्चारणसामर्थ्यात् । एङ्ग्रहणे तु चतुर्णां ग्रहणमि'ति मतमप्येतेनाऽपास्तम् । कार्यकालपक्षमादाय तपरकरणप्रत्याख्यानपरग्रन्थास्तु 'अच्कावशक्तौ' 'अञ्चतावप्रत्यये' इति योगाऽपेक्षज्ञापनेन सावर्ण्याऽभावसिद्धिरि'त्यभिप्रायेण बोध्या इत्यास्तां तावत् ।

अत्रेदमवधेयम्—सर्वेषां वर्णानामुच्चरणे कण्ठव्यापार आवश्यकः । चवर्गाद्युच्चारणे जिह्वाऽग्रोपाग्रादिभिस्ताल्वाद्यभिघातोऽपि । अकार-हकार-विसर्जनीयानामुच्चरणे तु न । नचैवं कवर्गस्य जिह्वामूलस्थानत्वाऽऽपत्तिः । इष्टाऽऽपत्तेः । आकरे फल-दोषयोरभावान्नोक्तम् । नचैवं कण्ठस्थानानां स्पर्शानां परस्परं सावर्ण्याऽऽपत्तिः । विभिन्नस्थानकथनस्य वैयर्थ्याऽऽपत्तेः । अत्र च ज्ञापकं 'चोः कुरि'तिसूत्रम् । ध्वनितञ्चेदं मूलकृतेत्यलम् ।

**असन्देहार्थमिति ।** प्लुतस्याऽपि तत्स्थानत्वाऽनुभवेन तथैव तात्पर्योन्नयनात् । अत एव 'घटायोन्मीलितं चक्षुः पटं न हि न पश्यती'ति न्यायेनोभयाऽर्थत्वमस्त्विति न शङ्कनीयम् ।

---

लघुशब्दरत्नः

**न तु तत्कालेति ।** एषां शिक्षाद्युक्ताऽर्थाऽनुवादत्वेन अत्र शास्त्रप्रवृत्त्यभावादिति भावः ।

---

[1] चकारः ख. नास्ति ।

[2] 'एचोर्ग्रहणे' इति क. ख. पाठः ।

**पूर्वत्राऽसिद्धम् ( ८।२।१ )। यद्ययं स्वतन्त्रो विधिः स्यात्, तर्हि 'त्रिपादी पूर्वं प्रति असिद्धा' इत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नाऽसिद्धं**

---

**बृहच्छब्दरत्नः**

पूर्वं प्रत्यसिद्धेत्येवेति। 'सूत्रे सप्तम्यन्तात् त्रल्' इति सर्वनामप्रकरणे भाष्यम्। न चाऽस्याऽनधिकारत्वेऽपि त्रिपाद्यां प्रवृत्तेर्दुर्वारत्वेन तत्राऽप्यसिद्धत्वं सुलभमेव। नचैवं सपादसप्ताऽध्याय्यपेक्षया त्रिपाद्यसिद्धत्ववत्स्वात्मानं प्रत्यपि त्रिपाद्यसिद्धत्वं प्रनिपाद्येतेति वाच्यम्। एकस्य वाच्य-वाचकत्वाऽसम्भवात्। सपादसप्ताध्याय्यपेक्षयाऽप्यस्याऽसिद्धत्वाऽऽपत्तौ, त्रिपाद्यसिद्धत्वाऽनापत्तावस्य वैयर्थ्याऽऽपत्तेश्च। न चैवं सपादसप्ताऽध्याय्यामप्यसिद्धत्वं शङ्क्यम्। 'तस्य लोप' इत्यादिनिर्देशात्, विप्रतिषेधसूत्रस्य वैयर्थ्याऽऽपत्तेश्चेति वाच्यम्। आनुमानिकवचनकल्पनगौरवाऽऽपत्त्या उक्तज्ञापकादिनाऽधिकारत्वस्यैव कल्पयितुं युक्तत्वात्।

'मध्ये पाठे बीजाऽनापत्त्या सपादसप्ताऽध्याय्यां, त्रिपाद्यां च न प्रवृत्तिः। विप्रतिषेधसूत्रस्य तु 'आ कडारात्परं कार्यमि'ति पाठे 'परं कार्यमि'त्यनुवृत्त्यर्थं मध्ये पाठः। 'एका संज्ञे'ति पाठे व्यवस्थाऽर्थमाकाङ्क्षायाः सत्त्वादत्र पाठो युक्त एवे'त्यपि वदन्ति।

नच विधित्वे स्वाऽव्यवहितसूत्रस्यैव प्रकृतसूत्रेणाऽसिद्धत्वस्य बोधयितुं शक्यत्वेऽपि, सम्पूर्णत्रिपादिग्रहणे न मानमिति वाच्यम्। [1]तन्मात्रग्रहणे फलाऽभावात्। तत्सम्बद्धतयैव पठितुं युक्तत्वाच्च। विधित्वे दूषणाऽन्तरस्य सत्त्वे बाधकाऽभावाच्च। पूर्वग्रहणेन तूपस्थितत्वाऽविशेषेण सर्वस्य ग्रहणम्।

अधिकारपक्षेऽपीदं तुल्यम्। यत्राऽनुवृत्तिस्तस्याऽसिद्धत्वम्। पूर्वत्वञ्च क्वचित्सपादसप्ताऽध्याय्याः, क्वचित्सूत्राऽन्तरसहिताया वा। तत्र च प्रतिसूत्रं 'पूर्वत्राऽसिद्धमि'त्यनुवर्त्तते। तेन 'परं पूर्वस्मिन्कर्त्तव्ये असिद्धमि'ति 'अमि पूर्वः' 'वा च्छन्दसी'त्यनयोरिव वाक्यभेदेन सम्बन्ध' इति। तन्न। परशब्दाऽऽक्षेपे गौरवात्। 'न मु ने' इत्यत्राऽसिद्धपदस्याऽऽवृत्त्यापत्तेः। प्रतिसूत्रं वाक्यभेदकल्पने गौरवाच्च। पदैक्यवाक्यतायाः सूत्रद्वये आवश्यकत्वाच्च। एतेन 'आगन्तूनामन्ते निवेश' इति-

---

**लघुशब्दरत्नः**

नाऽसिद्धं स्यादिति। ततश्च 'गोधुङ्मानि'त्यादौ घत्व-जश्त्वा-ऽनुनासिकेषु (कृतेषु[2]) भष्भावो न स्यात्। न च अतिदेशाऽन्तरवदस्याऽपि त्रिपाद्यां प्रवृत्तौ न दोषः। सपादसप्ताध्याय्यामपि पूर्वं प्रति पराऽसिद्धत्वाऽऽपत्तेः। मध्ये पाठस्य, विप्रतिषेधसूत्रस्य च सामर्थ्याऽऽश्र-

---

[1] स्वाव्यवहितसूत्रमात्रग्रहणे इत्यर्थः।
[2] 'घत्व-जशत्वाऽनुनासिकेषु कृतेषु भष्भावो न स्यात्' इति लिखितेषु सर्वत्र पाठः, मुद्रितेषु तु 'कृतेषु' इति नास्ति।

**स्यात्। अत आह—अधिकारोऽयमिति। यद्यत्र कार्याऽसिद्धत्वम् इष्येत, तर्हि 'पूर्वत्राऽसिद्धमि'ति 'मनोरथः' इत्यादावुत्वं न स्यात्। परत्वाद् रो रि**

---

**बृहच्छब्दरत्नः**

न्यायेन 'हो ढः—पूर्वत्राऽसिद्धमि'त्यानुपूर्व्याः सम्पत्तौ, उत्तरवाक्ये श्रोत्रगृहीताऽऽनुपूर्व्येव सम्बध्यते' इति निरस्तम्। क्लिष्टत्वाच्च।

तस्मात् 'वाक्यस्य टेः प्लुत उदात्तः' 'दूराद्धूते चे'त्यादीनामिव पदैकवाक्यतया 'ह्रस्याऽसिद्धो ढो भवती'त्यादिरर्थः। असिद्धत्वञ्च शास्त्राऽनिष्पन्नत्वम्। एवञ्चाऽर्थाऽऽपत्तिप्रमाणाच्छास्त्रेऽप्यभावाऽऽरोपो बोधितः। पूर्वत्वं चैतच्छास्त्राऽपेक्षयैव। अयमेव शास्त्राऽसिद्धत्वपक्षः। नचैवम् असिद्धत्वस्याऽविधानेन 'न मु ने' इति निषेधो, 'नलोपः सुप्स्वरे'ति नियमश्चाऽसिद्धत्वस्य न स्यादिति वाच्यम्। 'असिद्धमि'त्यनुवृत्त्या तन्निषेधाऽङ्गीकारात्। विशिष्टविधौ विशेषणविधेः सत्त्वात्। मुत्वविध्यनन्तरं 'न ने' इति वक्तव्ये, 'न ङिसम्बुद्ध्योरि'त्यस्याऽनन्तरं 'न सुप्स्वरसंज्ञातुग्विधिषु कृती'ति वक्तव्ये, 'न मु ने' 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृती'तिकरणेन ईदृशाऽर्थस्योररीकृतत्वाच्च। एतज्ज्ञापकादेव असिद्धत्वविशेषणाऽभावेऽपि विशेष्यांऽशस्य स्थितिः। वस्तुतस्तु 'न मु ने' 'नलोपः सुप्स्वरे'त्यादिभिर्निरूपितविषये विशेष्यमात्रविधिरिति बोध्यते इत्याहुः।

'इणः षः' इत्यादिसूत्रस्थभाष्यबोधिते 'प्रकरणेऽनुवृत्तिरि'तिपक्षे वाक्यभेदेनैव सम्बन्धः। रजतभ्रमोऽनाहार्यः प्रवर्त्तकः, इह तु शास्त्रप्रामाण्यादाहार्यारोपोऽपि शास्त्रप्रवृत्तौ, अप्रवृत्तौ च नियामक' इत्यवश्यमभ्युपगन्तव्यम्।

आरोपितस्याऽपि पारमार्थिके उपायता न विरुद्धा। लिपि-स्थूलाऽरुन्धती-शाखाचन्द्रा-ऽर्थवाद-पञ्चकोशाऽवतरणादीनां लोके, पूर्वोत्तरमीमांसयोश्च सत्त्वात्।

इष्येतेति। कार्ये एवाऽभावाऽऽरोपोऽस्त्विति भावः। वक्रोक्त्या तन्मात्रे अभावाऽऽरोपो दुर्लभः, शब्दात्, अवध्यवधिमतोः साजात्यनियमात्, पूर्वत्वस्य गौणत्वाऽऽपत्तेश्चेति बोधितम्।

परत्वादिति। अयम्भावः—कार्याऽसिद्धत्वपक्षे सूत्रपाठे कार्याऽपाठात् सूत्रोदाहरणं सम्पादयितुं शास्त्रद्वारा परत्वेन लक्ष्ये कार्यप्रवृत्तिरावश्यकी। सिद्धस्य

---

**बृहच्छब्दरत्नः**

यणे तु विनिगमनाविरहात् त्रिपाद्यामपि अप्रवृत्त्यापत्तिरिति भावः। रो रीत्यस्य प्रसङ्गादिति। सिद्धे असिद्धत्वाऽऽरोपात् सूत्रोदाहरणसंपत्त्यै परत्वात् लक्ष्ये कार्यप्रवृत्तेरावश्यकतया, परत्वात् त्रैपादिके कार्ये जाते, तत्र अभावप्रतियोगित्वाऽऽरोपेऽपि, 'देवदत्तहन्तृहत'न्यायेन स्थानिभूतरोः अभावात् हशि च (६।१।११४) इत्यस्य अप्राप्तिरिति भावः। स्पष्टं चेदं प्रकृतसूत्रे, अचः परस्मिन् (१।१।५७) इत्यत्र, षत्वतुकोः (६।१।८६) इत्यत्र च भाष्ये।

(८।३।१४) इत्यस्य प्रसङ्गात्। तथा च 'पूर्वत्राऽसिद्धे नाऽस्ति विप्रतिषेधोऽभावादुत्तरस्ये'ति सिद्धान्तो व्याकुप्येत। 'अमू', 'अमी'इत्यादि च

### बृहच्छब्दरत्नः

असिद्धत्वाऽऽरोपात्। प्रसङ्गादिति। नच तस्याऽसिद्धत्वेन उत्वप्राप्तिः। 'देवदत्तस्य हन्तरी'ति न्यायेन रोरभावात्। एतेन 'स्थानिवद्भावादुत्वं दुर्वारमि'त्यपास्तम्। उक्तरीत्या उक्तलक्ष्ये उत्वे कर्त्तव्ये स्थान्यादेशयोरभावात्। अत एव 'यद्यपि लोपे परत्वात् 'ढ्लोपे पूर्वस्ये'ति दीर्घे, उत्वाऽप्राप्तिस्तथाऽपि 'यस्य च लक्षणाऽन्तरेण निमित्तं विहन्यते, न तदनित्यमि'ति न्यायेनात्वे [1]नित्यत्वमस्त्येवे'त्यपास्तम्। न्यायस्याऽसार्वत्रिकत्वाच्च। स्पष्टञ्चेदमचः परस्मिन्निति सूत्रे भाष्ये।

न्यायाऽनङ्गीकारे दूषणमाह—अमू इति। सपादसप्ताध्यायीस्थकार्यदृष्ट्या उत्वाऽभावेऽपि, पूर्वं तस्य प्रवृत्तत्वेन, 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'तिन्यायेन मकारे विकाराऽभावेन, सन्नियोगशिष्टन्यायेन, दात्परत्वाऽभावेन च पुनरूत्वाऽप्रवृत्तावनिष्टं स्पष्टमेव।

अमी इति। शीभावात्पूर्वम् 'अदसोऽसेर्दादु दो म' इत्यस्य प्रवृत्त्या, शीभावे, आद्गुणे च, दकारात्पर-एकाराऽभावेन 'एत ईद्बहुवचने' इत्यस्याऽप्रवृत्तिः।

### लघुशब्दरत्नः

तथा चेति। शास्त्रस्य, तद्बोध्यकार्यस्य च शास्त्रजज्ञानवेलायाम् असिद्धत्वाऽभावे, रो रि (८।३।१४) इत्यादेः प्रसङ्गे चेत्यर्थः।

व्याकुप्येतेति। ([2]त्वया विप्रतिषेधशास्त्रप्रवृत्तौ निमित्तस्य त्रैपादिकस्य शास्त्रजबोधविषयकार्यस्य, शास्त्रस्य वा असिद्धता[3] वक्तुम् अशक्या, किन्तु लक्ष्ये जातस्य तस्य प्रवर्त्तमानसपादसप्ताध्यायीस्थकार्यदृष्ट्या असिद्धत्वं वाच्यम्। एवं च विप्रतिषेधाऽभावोपपादकहेतोः असिद्धिरिति भावः)। न च ममाऽपि पूर्वपरपदयोः पूर्वपरशास्त्रजन्यबोधविषयकार्यलक्षणया[4] शास्त्रे एव कार्याऽसिद्धत्वमिति वाच्यम्। लक्षणायां मानाऽभावात्, फलाऽभावात्, गौरवाच्च।

ननु मनोरथे दर्शनाऽभावरूपे लोपे अभावाऽऽरोपस्य दर्शनाऽऽरोपरूपत्वेन न दोषः, अभावाऽभावस्य प्रतियोगिरूपत्वादित्यत आह—अमू इत्यादि। 'अद अ औ' 'अद अ अस्'

---

[1] 'उत्वनित्यत्वम्' इति ख. पाठः

[2] सम्पुटान्तर्गतः पाठः प्रक्षिप्त इति ख. पुस्तके नास्ति। ग. पुस्तके तु 'प्रक्षिप्त' इति हेतोः कुण्डलितः।

[3] 'असिद्धता प्रोक्ता' इति क. पाठः।

[4] 'उपस्तिपूर्वपदस्य परशास्त्रजन्यबोधविषयकार्यलक्षणया' इति क. पाठः। 'उपस्थितपूर्वपरशास्त्रयोः पूर्वपरपदयोः' इति शोधितः पाठः। 'स्वजन्यबोधविषयकार्यलक्षणया' इति ख. घ. पाठः।

न सिध्येत्। अत आह–त्रिपादीति। परं शास्त्रमिति च। एतेन 'त्रिपाद्यां विहितं कार्यमसिद्धमि'त्यादिः [1]प्राचो ग्रन्थः परास्तः।

विवृण्वते कण्ठमिति। विवार एषां प्रयत्न इति भावः। वर्ग-

बृहच्छब्दरत्नः

न चोत्वे 'एत ईद्बहुवचने' इत्यस्य वैयर्थ्यम्। शास्त्राऽसिद्धत्वपक्षे चारितार्थ्येन लाघवेन तत्पक्षस्यैव ज्ञापयितुं युक्तत्वात्। अत एव 'अविद्यमानवत्पदाऽनुवृत्त्यैव सिद्धौ, 'असिद्धमि'ति व्यर्थमि'त्यपास्तम्। शब्दाऽर्थयोः कल्पनाऽभावेनाऽर्थाऽधिकारस्याऽभ्यर्हितत्वात्, प्रयोगाऽसमवायिनोऽविद्यमानवद्भावाऽनापत्तौ, मूलोक्त-दोषाणां वज्रलेपायितत्वात्।

किञ्च अविद्यमानवत्पदाऽनुवृत्तौ तत्सम्बद्धो विकल्पोऽप्यनुवर्त्तेत। 'नलोपः सुप्स्वरे'ति सूत्रं लाघवान्नित्याऽर्थमेव स्यादिति महदनिष्टं स्पष्टमेव। न च शास्त्र-मात्राऽसिद्धत्वपक्षे कार्याऽसिद्धत्वाऽभावेन 'गुडलिड्मानि'त्यादि न सिध्येदिति वाच्यम्। शास्त्राऽसिद्धत्वद्वारैव कार्याऽसिद्धत्वप्रतिपादनात्। शास्त्राऽसिद्धत्वे कार्यस्य विधायकाऽभावादेवाऽर्थादभावस्य सिद्धत्वात्। कार्याऽसिद्धत्वपक्षे तु लक्ष्ये कार्यस्याऽभावेऽपि, शास्त्राऽभावस्य वक्तुमशक्यत्वम्।

यत्तु 'पूर्वत्र ने'त्येव सूत्रणीयम्। 'पूर्वस्मिन् कर्तव्ये परं ने'त्यर्थस्य सुलभत्वादि'ति। तन्न। 'सुश्लोका३ इती'त्यादौ बहिरङ्गनिषेधेन अन्तरङ्ग-प्लुतादीनां निषेधस्य कर्त्तुमशक्यत्वात्। 'मनोरथ' इत्यादौ निषेध एककाल-प्रवृत्तिके चरिताऽर्थः। तथा च 'औजढदि'त्याद्यसिद्धिः। निषेधे त्वादेशे प्लुतः श्रूयेत। सिद्धान्ते तु 'इति'शब्दसमभिव्याहारात्पूर्वं निर्विघ्नत्वेनाऽन्तरङ्गत्वात् प्लुते जाते, त्रिमात्रेऽपि असिद्धत्वेन द्विमात्रबुद्धेरप्रतिघातान्न दोषः। 'न हि[2] रजत-भ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयती'ति युक्तम्। नचैवमूर्णुधातौ 'पूर्वत्राऽसिद्ध-

लघुशब्दरत्नः

इत्यवस्थायाम् उत्वे[3] कृते जातस्योत्वस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्या असिद्धत्वेऽपि, पूर्वरीत्या अकाराऽभावेन पररूपाद्यनापत्तिः। मुत्वस्याऽसिद्धत्वनिषेधसामर्थ्यात् एतद्विषये उक्तन्याया-ऽप्रवृत्तिरिति चेत् ?। तेन शास्त्राऽसिद्धत्वमेव ज्ञापयितुं युक्तम्। एवं शीभावात् पूर्वम् अदसोऽसेः (८।२।८०) इति मुत्वे, दात्परैकाराऽभावेन एत ईत् (८।२।८१) इति सूत्रमपि व्यर्थं सत् अत्रैव ज्ञापकमस्तु। न च तौ सत् (३।२।१२७) इत्यादिनिर्देशैर्देवदत्तहन्तृहतन्यायो-

[1] 'प्राचां ग्रन्थः' इति मुद्रिते पाठः।

[2] 'तर्हि रजत' इति ख. पाठः।

[3] 'मुत्वे कृते' इति ख. पाठः। 'उत्वे कृते' इति क. शोधितः पाठः। ग. घ. तु 'मुत्वे कृते' इति नास्ति। भावप्रकाशे 'परत्वान्मुत्वे कृते इति शेष' इति पाठस्य उपलम्भात् क्वाचित्कोऽयं पाठः।

**यमगा इति। वर्गगा, यमगाश्चेत्यर्थः। कादय इति। लोकप्रसिद्ध-**

बृहच्छब्दरत्नः

मद्विर्वचने' इत्यस्याऽनित्यत्वाऽऽश्रयणेऽपि, मूर्द्धन्ययुक्ते दन्त्यत्वबुध्या द्वित्वप्रवृत्तौ खण्डद्वये णकारः श्रूयेतेति वाच्यम्। पदस्यैव विभज्याऽन्वाख्यानेन लिडाद्युत्पत्तेः पूर्वं णत्वस्य वक्तुमशक्यत्वात्। ध्वनितञ्चेदं प्रगृह्यसंज्ञाप्रकरणे भाष्ये।

एतेन चवर्गतृतीयसहिताऽभ्यासयुक्तम्‌'औजिढदि'ति व्याख्यातम्। हकार-स्थानिकढलोपस्याऽसिद्धत्वेन हकारबुद्ध्या 'कुहोश्चुरि'ति चुत्वप्रवृत्तौ, 'हलादिः शेष' इति ढकारनिवृत्तौ रूपसिद्धेः। 'पूर्वत्राऽसिद्धमद्वित्वे' इत्यस्याऽऽश्रयणे ढकारादेरेव द्वित्वस्य प्रवृत्तत्वात्, तस्यैवाऽभ्यासत्वेन अभ्यासे हलोपप्रवेशे मानाऽभावेन, 'कुहोश्चुरि'त्यप्रवृत्तिः स्पष्टैवेत्यादि वक्ष्यामः।

यमगाश्चेति। यत्तु 'वर्गपञ्चमयुक्ताः प्रथमादयो यमा' इति विवरणकारादि-भिरुक्तत्वेन 'यमगा' इति न युक्तमि'ति। तन्न। अयोगवाहत्वप्रतिपादकेन 'हयवरडि'तिसूत्रस्थभाष्येण, केवलनासिक्यत्वपरेण 'यमाऽनुस्वराणामेवे'ति 'मुख-नासिके'तिसूत्रस्थभाष्येण, 'परं घ्नन्ती'त्यादावानुनासिक्यप्रवृत्त्या नैव दोषो, नैव प्रयोजनमि'तिभाष्याऽन्तरेण च सह विरोधाऽऽपत्तेः। अत एव प्रातिशाख्ये 'स्पर्शा यमा अननुनासिकाः स्वान्यपरेषु स्पर्शष्वनुनासिकेष्वि'त्यत्र 'स्वान्यपरेषु' इत्युक्तम्। अत एव च 'प्रदोधुवच्छ्मश्रुषु' इत्यत्र यमं निषेद्धुमारब्धे 'न स्पर्शस्योष्मप्रकृतेः परस्ताद्यमाऽऽपत्तिरि'ति सूत्रे परस्ताच्छब्दः प्रयुक्तः। किञ्चैवं निषेधो व्यर्थः। मकारयुक्तचवर्गद्वितीयस्य सत्त्वेन निषेध्याऽभावात्। पाणिनीयशिक्षायामपि —

लघुशब्दरत्नः

ऽनित्य इति वाच्यम्। 'हते देवदत्ते तद्धन्तरि हतेऽपि नोन्मज्जनं, हतत्वाऽऽरोपे तु सुतराम्, हन्तुमुद्यतस्य हनने तु उज्जीवनमस्त्येवे'ति न्यायशरीरम्। 'तौ' इत्यादौ वृद्धिहन्तुः[1] पूर्वसवर्ण-दीर्घस्य हननोद्यमसजातीयं प्रसङ्गमात्रं, न तु हननस्थानीया लक्ष्ये प्रवृत्तिरिति, न तत्रा-ऽस्य न्यायस्य विषय इति, तेन अस्य अनित्यत्वबोधनाऽसम्भवात्। स्पष्टं चेदं[2] स्वादिष्वसर्व-नामस्थाने (१।४।१७) इति सूत्रे कैयटे। प्रकृते तु निरधिष्ठानाऽऽरोपाऽसम्भवेन हननसजातीयं प्रयोगे कार्यप्रवर्त्तनम् आवश्यकमेवेत्यन्यत्र विस्तरः।

परास्त इति। 'विहितं कार्यमि'त्यध्याहारे गौरवाच्च। किञ्च त्रिपादी शास्त्रं, तद्धि[3] विधाने करणं, न त्वधिकरणम्। 'त्रिपाद्यां विद्यमानेन शास्त्रेण विहितं कार्यमि'ति व्याख्याने तु अत्यन्तं क्लिष्टतेत्यपि बोद्धव्यम्।

लोकप्रसिद्धेति। 'त्रिभिश्च मध्यमैर्वर्गैरि'ति भाष्यपर्यालोचनया क–ख–ग–घ–ङ

[1] 'वृद्धिं हन्तुं पूर्वसवर्णदीर्घस्य' इति क. ख. पाठः।

[2] 'स्वादिष्वसर्वनाम इति सूत्रे' इति घ. पाठः।

[3] 'तद्विधाने' इति प्रायो लिखितेषु पाठः।

पाठाऽपेक्षमिदम्, चतुर्दशसूत्र्यां माऽवसानत्वाऽयोगात्। अर्द्धविसर्गेति। सादृश्यमुच्चारणे, लेखने च बोध्यम्।

ऋऌवर्णयोरिति। 'आ च आ च रलौ, तौ च तौ वर्णौ चे'ति विग्रहः।

---

बृहच्छब्दरत्नः

'स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः।
यादयश्च स्मृता ह्यष्टौ, चत्वारश्च यमाः स्मृताः'॥

—इति यमानां पृथग् गणनात् स्पष्टमेव वर्णाऽन्तरत्वम्। 'कुंखुंगुंघुमि'ति-न्यासादावुदाहृतं, [1]'कचटतपाः कुरि'त्यादि परिभाषणात्। एतेनाऽयुग्मत्वमपि व्याख्यातम्।

एतेन 'यमस्य परसदृशत्वमि'त्यपास्तम्। उक्तसङ्ख्याया असङ्गतताऽऽपत्तेः। प्रथमोपस्थितत्यागे मानाऽभावाच्च। सादृश्यञ्च प्रयत्नैक्येन। इयञ्च यमोत्पत्ति-रखण्डपदे एव। यद्वा यमस्य पूर्वाऽवयवत्वम्। तथा ऋक्तन्त्रव्याकरणस्य छान्दोग्य-लक्षणस्य प्रणेता औदव्रजिरसूत्रयत्—'अनन्त्याऽन्तसंयोगे मध्ये यमः पूर्वस्य गुण' इति। 'पूर्वस्य भक्त इत्यर्थ' इति तद्व्याख्यातारः। भाष्यस्वरसोऽप्येवमेव।

अत एव 'नक् नमनमि'त्यादौ न दोषः। इदमेव हृदि निधाय 'वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये' इत्युक्तं मूले। 'वर्गविद्यमानाऽऽद्य-चतुःसम्बन्धि-पञ्चमे परे' इत्यादिरर्थः। तत्र परत्वमाद्यचतुरपेक्षयैवेत्यादि बोध्यम्।

मावसानेति। कादिविशिष्ट-माऽवसानत्वा-ऽयोगादित्यर्थः।

रलाविति। 'ऋ ऌ औ' इत्यत्र 'ऋत्यक' इति प्रकृतिभावे, 'ऋतो ङी'ति गुणे, 'रलावि'ति रूपम्। नचाऽकृतव्यूहपरिभाषया प्रकृतिभावाऽप्रवृत्तिरिति वाच्यम्। गुणप्रवृत्तावपि स्थानिवद्भावेन प्रकृतिभावस्य प्रवृत्तियोग्यतायाः सत्त्वेन उक्तपरिभाषाया अप्रवृत्तेः, स्थानिवद्भावे पूर्वसम्बन्धिविधेरेव निमित्तकोटौ प्रवेश इत्यर्थस्य वक्ष्यमाणत्वात्। न च 'न पदान्ते'ति निषेधः। प्रकृतिभावस्य विकाराऽभावमात्रतात्पर्यकत्वेन [2]पदचरमाऽवयवत्वाऽभावात्। अत एव 'नान्त' इति पाठेन सह फलैक्यम्। अत एव

---

लघुशब्दरत्नः

इत्यादीनामप्यनादित्वमिति भावः। उच्चारणेति। पादमात्रिकौ इमौ इति भावः। लेखने चेति। अर्द्धवृत्तद्वयाऽऽत्मकलिपित्वादिति भावः।

रलाविति। 'ऋ ऌ औ' इति स्थिते ऋत्यकः (६।१।१२८) इति प्रकृतिभावेन दीर्घाऽभावे, गुणे, यणि च 'रलौ' इत्यस्य सिद्धिः। 'उश्च उल् च ऋलोरि'ति पाठः। 'रलोरि'ति पाठे आगन्तुना अकारेण निर्देश इति बोद्धव्यम्।

---

[1] 'कचटतथाः' इति क. ख. पाठः।

[2] 'यमौदवरभावत्वयवत्वाऽभावात्' इति क. ख. पाठः। स च अशुद्धः।

'उश्च उल् च '[1]ऋ-लोः, तयोर्वर्णयोरि'ति वा । 'प्रथमाऽन्तेन, परिनिष्ठित-

**बृहच्छब्दरत्नः**

'ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धेऽपि तदनुकर्षणाऽर्थश्चकारः। स हि तदभावे तदर्थ'इति न्यासकारोक्तं सङ्गच्छते। न चैवं यणादेशस्याऽप्यनापत्तिः। 'ऋत्यक' इति सूत्रे 'अती'त्यनुवृत्त्या प्रत्यासत्तिन्यायाऽऽश्रयणेन ऋकारस्य 'अत्'निमित्तक-कार्यस्यैव वारणात्। न च स्थानिवद्भावेन ऋकारस्याऽत्त्वमस्त्येवेति वाच्यम्। अन्त-र्वर्त्तिविभक्त्या पदत्वेन 'न पदान्ते'ति निषेधप्रवृत्तेः। वस्तुतस्तु 'ऋत्यक' इत्यस्य वैकल्पिकत्वेनाऽप्रवृत्तावप्यकृतव्यूहपरिभाषया सवर्णदीर्घो न। न च विभक्त्युत्पत्तेः पूर्वं गुणस्याऽप्रवृत्तौ, दीर्घस्य प्रवृत्तत्वेन, दीर्घे च तपरकरणेन गुणस्याऽप्रवृत्तत्वेनोक्त-परिभाषाया विषयाऽभाव इति वाच्यम्। 'सौत्थितिरि'त्यादावपि तद्धितोत्पत्तेः पूर्वं वृद्धेरप्राप्तौ, दीर्घस्य प्रवृत्तत्वेनोक्तन्यायाऽप्रवृत्तौ समर्थग्रहणस्य वैयर्थ्याऽऽपत्तेः।

दीर्घोत्तरं वृद्धिप्रवृत्त्या पूर्वसवर्णांऽशस्य विनाशेनोक्तन्यायप्रवृत्तिरिति चेत्। तर्हि प्रकृतेऽपि यणप्रवृत्त्या न्यायप्रवृत्तिरिति दृष्टिर्दीयताम्। यणादेशस्य तु गुणात्पूर्वं प्रवृत्तौ, अप्रवृत्तौ च न कश्चिद् दोषः। नचाऽकृतव्यूहपरिभाषया गुणाऽप्रवृत्तिरिति किं न स्यादिति वाच्यम्। उक्तरीत्या दीर्घाऽप्रवृत्तेर्निमित्तविनाशाऽभावात्। बहिरङ्गकृतनिमित्तविनाशस्यैव धर्मिग्राहकमानेन निमित्तत्वकल्पनाच्च। 'वार्णादाङ्गं बलीय' इत्यस्य बाधे मानाऽभावाच्च। 'युगपत्प्रवृत्तौ परिभाषाप्रवृत्तिरि'त्यत्र न किंचिन्मानमिति दिक्।

ऋलोरिति। अत्र ऋकारपूर्वपदकः, अकारसहितरेफपूर्वपदको वेति पाठद्वयं दृश्यते। तत्र प्रकृतिभावे परयणादेशे प्रथमः पक्षः। द्वितीयस्तु असाम्प्रदायिक एवेति ध्येयम्।

प्रथमान्तेनेति। इतराऽनन्वितपदस्य व्युत्पादनात्, पदसंस्कारपक्षे प्रातिपदि-काऽर्थमात्रे प्रथमैवोचिता। किञ्च वाक्यसंस्कारपक्षेऽपि परिनिष्ठितस्याऽर्थप्रदर्शन-पर-लौकिकविग्रहे प्रकृतिभागमात्रं व्याख्येयं, न तु समासोत्तरविभक्तिरपि। न हि षष्ठी षष्ठ्या व्याख्येया। तत्र प्रातिपदिकाऽर्थव्याचिख्यासायां प्रथमया विग्रहः केन वार्यते। अपि चैकार्थीभावाऽऽपन्नविशिष्टाऽर्थस्याऽन्यत्राऽन्वयस्य विवक्षितत्वेन, [2]असमस्तप्रकृत्याद्युत्पन्नविभक्त्या व्याख्यातुमशक्यत्वाच्च। अन्यांऽशे तु गत्यन्तरा-

**लघुशब्दरत्नः**

तयोर्वर्णयोरिति। पूरणगुण (२।२।११) इति निषेधस्तु षष्ठीसमासस्य, न तु कर्मधारस्य। बहुलग्रहणेन [3]तदभावस्तु भाष्योदाहृतविषये एव, नाऽन्यत्रेति भावः।

प्रथमान्तेनेति। प्रथमोपस्थितत्वादिति भावः। अयं पक्षः अनेकमन्यपदार्थे (२।२।

[1] 'रलोः' इति ङ. च. पाठः।

[2] असमस्तपुस्त्याद्युत्पन्नविभक्त्या' इति क. ख. पाठः।

[3] 'तदभावो भाष्योदाहृतविषये एव 'इति तु मुद्रितेषु पाठः।

विभक्त्या वा विग्रह' इति सिद्धान्तात्। ऋत्यकः (६।१।१२८) इति प्रकृतिभावः।

**नाज्झलौ (१।१।१०)।** आकारसहित इति। अत्र च कालसमयवेलासु (३।३।१६७) इत्यादिनिर्देशः प्रश्लेषे लिङ्गम्। न चैवमपि

---

बृहच्छब्दरत्नः

ऽभावेन किंचित्साम्येन व्याख्यानं बोध्यम्। अत एव 'हरितकीं भुङ्क्ष्व राजन् मातेव हितकारिणीमि'त्यादिप्रयोगाः सङ्गच्छन्ते। स्पष्टञ्चेदं कौस्तुभे।

वस्तुतस्तु पदाऽन्तरनिमित्तविधिविषये पदसंस्कारपक्षे तु न समासाऽर्थप्रतिपादनमात्रे तात्पर्यं, किन्त्वन्यत्राऽपि। विवरणं तु सर्वत्रैकाऽर्थीभावकृतविशेषरहितमित्यत आह—परिनिष्ठितेति। स्पष्टञ्चेदम् 'अनेकमन्यपदार्थे' 'तत्पुरुषे तुल्यार्थे'त्यादिसूत्रे भाष्यादौ।

अत एव 'पूरणगुणे'ति समानाधिकरणेन षष्ठीमासनिषेधोऽपि सङ्गच्छते। अत एव 'एकविभक्ति चाऽपूर्वनिपाते' इत्यस्य विषयलाभः। एतेन 'चित्रगुरि'त्यादौ सम्बन्धस्याऽभिहितत्वात्प्रथमा, तथेहाऽपि स्यादि'त्यपास्तम्। बहिर्भूतपदार्थनिरूपितसम्बन्धस्य समासेनाऽभिधातुमशक्यत्वाच्च। प्रथमपक्षेऽपि सङ्ख्याया अन्तर्भावात् परिनिष्ठितरूपे द्विवचनाऽनुत्पत्तिरूपदोषस्य तुल्यत्वात्। 'पञ्चकं प्रातिपदिकार्थ' इति पक्षे प्रातिपदिकेन सङ्ख्यादिविभक्त्यर्थानामुक्तत्वेऽपि, यथा स्वादयस्तथाऽस्मिन् पक्षेऽपीति चेत्। तर्हि तुल्य एव समाधिः। किञ्च बहुव्रीहेः 'अनेकमन्यपदार्थे'इतिसूत्रेण विशिष्य विधानाद्विभक्तिं विनापि सम्बन्धस्य बोधनेन षष्ठ्या अप्राप्तावपि, 'चार्थे द्वन्द्व' इति सूत्रस्य सत्त्वेन द्वन्द्वप्रयोगस्य साधारणतया विभक्तिं विना सम्बन्धस्य वक्तुमशक्यत्वात्। विग्रहे विभक्तेः समासोत्तरसजातीयाया एवोपस्थितत्वात्प्रवेशः।

लिङ्गमिति। उक्तनिर्देशादेव सावर्ण्याऽभावस्य कल्पने तु आनुमानिकवचनकल्पनापातः। पदविभागमात्रतात्पर्यकल्पने तु न किञ्चिद्गौरवम्।

---

लघुशब्दरत्नः

२४) इति सूत्रे भाष्ये। परिनिष्ठितेति। अत्र च एकविभक्ति चाऽपूर्वनिपाते (१।२।४४) इति ज्ञापकम्। अन्यथा 'मालामतिक्रान्त' इति विग्रहे अतिपदस्याऽपि नियतविभक्त्यन्तत्वेन 'एकविभक्ती'त्यस्य व्यावर्त्त्याऽलाभः। एकस्य अनियतविभक्तित्वे हि तद्वारणाय 'एकविभक्ती'ति सार्थकम्। परिनिष्ठितविभक्त्या समासे तु 'अतिक्रान्तम्' 'अतिक्रान्तेने'त्यादिक्रमेण तस्य अनियतविभक्तिकत्वं स्पष्टमेव। अत एव तत्पुरुषे तुल्यार्थ (६।२।२) इति सूत्रे भाष्ये 'परमे कारके,' 'परमेण कारकेणे'त्यादौ अतिप्रसङ्गमाशङ्क्य, प्रतिपदोक्तपरिभाषया समाहितमिति भावः।

अत्र चेति। सूत्रे इत्यर्थः। प्रश्लेषे=आकारप्रश्लेषे, 'निर्देशा लिङ्गमि'त्यन्वयः। निर्देशेन आकार-हकारयोः सावर्ण्याऽभावबोधका-ऽऽनुमानिकवचन-कल्पनाऽपेक्षया प्रश्लेषे एव

'यिया३सो'[1] इत्यादौ गुरोरनृतः (८।२।८६) इति प्लुतात् आकारात् परस्य सनः सस्य षत्वं स्यादेवेति वाच्यम्। 'आश्व आ३श्वेति द्वन्द्वे, सवर्ण-दीर्घेण दीर्घात् परत्र प्लुतोऽपि प्रश्लिष्यते' इति व्याख्यानात्। यणादिक-मिति। 'शीतल'शब्दे सवर्णदीर्घ 'आदि'शब्दाऽर्थः।

अत्रेति। अत्रैवेत्यर्थः। यद्यपीति। ग्रहणकशास्त्रस्य अद्याऽपि

---

बृहच्छब्दरत्नः

षत्वमिति। नचाऽसिद्धत्वाद् ढत्वस्यैव प्रवृत्तिर्युक्तेति शङ्क्यम्। 'हो ढ' इति सूत्रदृष्ट्या लुतस्याऽसिद्धत्वात्। ढत्वे सत्यपि षत्वस्य दुर्वारत्वाच्च।

शीतलशब्दे इति। शकारस्य ईकारे परतः सवर्णदीर्घो न। शीङ्-शप्प्रभृतिषु शकारोच्चारणवैयर्थ्याऽऽपत्तेः। अत एव 'डउ'प्रत्ययेऽपि सन्धिर्नेति सिद्धान्तः। यत्तु 'अकः सवर्णे दीर्घ' इतिसूत्रे अक्ग्रहणसामर्थ्येन दीर्घवारणं कर्त्तुं शक्य'मिति। तन्न। उत्तराऽर्थत्वेन सामर्थ्याऽयोगात्। किञ्चाऽत्रेदं प्रष्टव्यम्--पठितेषु अत्तु उताऽन्यधर्माऽनधिकरणेषु ? नाऽऽद्यः। 'दण्डाऽऽढकमि'त्याद्यसिद्ध्यपात्तेः। नाऽन्त्यः। अत्वादिरूपधर्माणां सर्वत्र सत्त्वेन लक्षणस्यैवाऽसम्भवाऽऽपत्तेः। 'विरुद्धधर्माऽनधिकरणत्वमि'ति तु चिन्त्यमेव। मानाऽभावात्। अनुस्वारादौ हल्त्वा-ऽच्त्वयोः सत्त्वेनाऽविरुद्धत्वाच्च।

अत्रैवेति। ग्राहकसूत्रे एवेत्यर्थः। एवं तपरसूत्रेऽपि परेणाऽण्ग्रहणम्। अर्था-ऽधिकारस्याऽभ्यर्हितत्वात्। वस्तुतस्तु सङ्ख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वात्, 'अतो भिस ऐस्' इति ज्ञापकाच्च 'वृद्धिरादैच्' 'दिव उदि'त्यादौ सावकाशेन

---

लघुशब्दरत्नः

तात्पर्यकल्पनं लघीय इति भावः। व्याख्यानादिति। एवं व्याख्याने मानं तु प्रयत्नभेदेन नाज्झलौ (१।१।१०) इत्येतत्प्रत्याख्यानपरं भाष्यम्। तद् ध्वनयन्वक्ष्यति—'सूत्रं मास्त्विति भाष्ये स्थितमि'ति। शीतलशब्दे इति। शस्य ईकारे परे, 'दधी'ति इकारस्य शकारे परे चेत्यर्थः। न च शीङः शकारोच्चारणेन तच्छकारस्य ईकारे न दीर्घ इति वाच्यम्। शीतलशब्दे शीङोऽभावात्। किन्तु 'श्या'धातोः क्ते द्रवमूर्तिस्पर्शयोः श्यः (६।१।२४) इत्यनेन सम्प्रसारणे, श्योऽस्पर्शे (८।२।४७) इत्युक्तेर्नत्वाऽभावे च निष्पन्नात् 'शीत'शब्दात् सिध्मादित्वात् लचि 'शीतल'शब्द इत्यदोषात्। 'शीत'शब्दो हि सिध्मादिषु गणरत्ने, वृत्तौ च पठ्यते। किं च तेन अपूर्ववचनकल्पनाऽपेक्षया सूत्रोदाहरणत्वमेव तस्य युक्तमिति भावः।

अत्रैवेति। ग्राहकसूत्रे एवेत्यर्थः। अत्र च उर्ऋत् (७।४।७) इति सूत्रे तपरत्वं मानम्। तद्धि चुरादिण्यन्तात् कृतधातोर्लुङि 'अचीकृतदि'त्यत्र दीर्घऋकारस्य[2] स्थाने ह्रस्व एव

---

[1] 'पिपा३सो' इति मुद्रिते पाठः।

[2] 'दीर्घर्कारस्य' इति क्वचित्पाठः।

बृहच्छब्दरत्नः

तपरसूत्रेण 'अदेङि'त्यादौ अणुदित्सूत्रस्य परत्वेन बाधसिद्धावणूग्रहणाऽनुवृत्तिः निष्फला। 'स्वं रूपमि'त्यनुवृत्तेः समुदायोपदेशे तात्पर्येण, विशिष्टाद्विभक्त्युत्पत्त्या च अवयवस्य संज्ञात्वाऽसम्भवात् अणुदित्सूत्रं न प्रवर्त्तते इति तत्त्वम्।

ननु ग्राहकसूत्रे परेणैवाऽण्ग्रहणे मानाऽभावः। न चोपसर्गादृतीति तपरकरणं मानमिति वाच्यम्। लृकारग्रहणेन चारितार्थ्यादिति चेन्न। 'उरदि'ति तपरकरणस्यैव प्रमाणत्वात्। तद्धि दीर्घस्थाने ह्रस्वाऽऽदेशाऽर्थम्। पूर्वेणाऽणूग्रहणे तु तस्य स्थानिवत्त्वप्रसक्तिरेव नास्ति, किं तेन। नच तपरसूत्रेण लृकारग्रहणाऽर्थमिति वाच्यम्। 'स्थानेऽन्तरतम'इति परिभाषया तस्य वारणेन तदग्रहणे दोषाऽभावात्। न चैवमपि भाव्यमानतया तद्वैयर्थ्यम्। तपरत्वाऽभावे आदेशाऽन्तरनिवृत्त्यर्थत्वेन अतत्त्वात्। लाघवाऽनुरोधेन विधेयस्याऽनुवाद्यस्वरूपोपलक्षणपरताऽऽपत्तेर्ग्राहकसूत्रस्य दुर्वारत्वात्। कृते तु तपरत्वे भाव्यमानत्वमित्यन्यदेतत्।

'उरण् रपरः' 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' 'केऽणः' 'अणोऽप्रगृह्यस्ये'त्यत्र तु न परेण। अच्ग्रहणेनैवोपपत्तावणूग्रहणस्य वैयर्थ्याऽऽपत्तेरित्याहुः।

तन्न। लाघवाऽभावात्। 'कर्त्रर्थमि'त्यादौ रेफद्वयश्रवणाऽर्थत्वेन चारितार्थ्याच्च। नच 'रो री'ति नित्यो लोपः। यणादेशस्य बहिरङ्गपरिभाषयाऽसिद्धत्वात्। अणूग्रहणस्य 'लाकृतिरि'त्यादौ लपरता फलमित्यस्याऽपि वक्तुं शक्यत्वाच्च। न च'मातृणामि'त्यादिव्यावृत्तिः फलमिति वाच्यम्। परेणाऽणूग्रहणे 'नामी'ति दीर्घस्याऽपि रपरत्वाऽऽपत्त्या ऋकारान्ताऽङ्गाऽभावात्। न चोपधायाश्चेतिसूत्रव्यावृत्त्यर्थमिति वाच्यम्। तद्व्यावृत्तिमात्रप्रयोजनत्वे तत्रैव धातुग्रहणस्य कर्त्तुं युक्तत्वात्। 'कॄ' 'तॄ' इत्यनयोरनुकरणे 'ग्रो यङि' 'जॄव्रश्च्योः क्त्वी'तिनिर्देशादेवेत्त्वाऽभावो बोध्यः। धातुग्रहणे कृते 'किरश्च पञ्चभ्य' इतिसूत्रस्थेत्त्वसाधनाऽर्थं ह्येषैव गतिः। 'प्रकृतिवदनुकरणमि'त्यतिदेशेन धातुत्वेऽपि 'धातोः स्वरूपग्रहणे तत्प्रयये कार्यविज्ञानमि'तिपरिभाषया धातुप्रत्ययनिमित्ताऽङ्गत्वाऽभावेनाऽप्राप्तेः। अत एव 'घृतस्पृग्भ्यामि'त्यादौ 'अनुदात्तस्य चर्दुपधस्ये'त्यमागमो न। 'ढ्रलोपे' 'केऽण'इत्यत्राऽपि परेण अणूग्रहणे 'अचश्चे'ति परिभाषयैव सिद्धावणूग्रहणं व्यर्थमेव स्यात्। ननु 'बृहू उद्यमने' अस्मात्तृचि, ऊदित्त्वादिडभावे, गुणे, ढत्व-धत्व-ष्टुत्व-ढलोपेषु कृतेषु रेफस्य स्थानसाम्यात् दीर्घे ऋकारे, ढलोपस्याऽसिद्धत्वादुपधायाश्चेतीत्त्वे, गुणे[1] 'बेढे'ति'

लघुशब्दरत्नः

यथा स्यादित्येतदर्थम्। पूर्वेण अत्र अण्ग्रहणे तु उद्देश्येन, विधेयेन च[2] ऋकारेण अनण्वात् भिन्नकालाऽग्रहणेन, न तस्य स्थानित्वं, न वा आदेशत्वं प्रसक्तमिति व्यर्थं तत्स्यात्। न च तपरसूत्रेण लृकारग्रहणार्थं तत्, स्थानेऽन्तरतमपरिभाषया ऋकारस्थाने[3] तस्य वारणेन तद्-

१ 'बर्ढा' इति रूपन्तु तत्र इष्टम्।

२ चकारः क्वचित् नास्ति।

३ 'ऋकारस्य स्थाने' इति ग. पाठः।

अनिष्पत्तेरिति भावः।

बृहच्छब्दरत्नः

यथा स्यादित्येतदर्थमि'ति चेन्न। 'तृतीये'तिनिर्देशात् परेणाऽणूग्रहणे 'हल' इत्यत्राऽप्यस्यैवाऽणूग्रहणस्याऽनुवृत्तेः सम्प्रसारणे कृते दीर्घः स्यात्। स्थानप्रयत्नाभ्यामन्तरतमे अचि चरिताऽर्थे हलि अप्रवृत्तेश्च। अन्तरङ्गत्वेन गुणप्रवृत्त्या दोषाऽभावाच्च। 'केऽण' इत्यत्राऽप्यच इत्युपस्थितस्याऽबाधाय पूर्वेणाऽणूग्रहणस्य युक्तत्वात्। 'अणोऽप्रगृह्यस्ये'त्येतदपि न परेण। अनुनासिकत्वस्य हलामसम्भवेन, 'अप्रगृह्यस्ये'ति पर्युदासेन हलो व्यावर्त्तनेन वा अणूग्रहणस्य वैयर्थ्याऽऽपत्तेः। न चाऽणूग्रहणसामर्थ्येन पर्युदासबाधः। तस्य पूर्वेणाऽप्युपपन्नत्वात्।

अनिष्पत्तेरिति। तद्वाच्यवाच्यत्वस्य लक्ष्यताऽवच्छेदकस्याऽभावाल्लक्षणा वक्तुमशक्येत्यर्थः। स्यादेतत्—ग्राहकसूत्रस्य, सवर्णसंज्ञायाश्च 'नाज्झलावि'तिसूत्रोपजीवकत्वे न किञ्चिन्मानम्। विशेषशास्त्रपरामर्शे सामान्यशास्त्रस्य तदितरविशेषे तात्पर्यकल्पनेऽपि उक्ताऽर्थे मानाऽभावात्। न चैवं शकारयोरसावर्ण्याऽऽपत्तिः। द्वित्वलोपयोर्वैकल्पिकत्वेन परश्शतादौ दोषाऽभावेनेष्टाऽऽपत्तेरिति।

अत्राऽऽहुः—एकवाक्यतैवाऽत्र युक्ता। निषेधसूत्राणां 'क्ङिति चे'ति सूत्रे भाष्यकारैः परिभाषात्वाऽङ्गीकारात्। उक्तञ्च हरिणा—

'अनेकाऽऽख्यातयोगेऽपि वाक्यं न्यायाऽपवादयोः।
एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम्'॥ इति।

'नाऽऽज्झलौ' 'प्रातिपदिकार्थे'त्यादिसूत्रस्थभाष्यादौ पूर्वमपवादवाक्याऽर्थस्योक्तत्वाच्च। युक्तरञ्चैतत्। अन्यथा अकारयोः सावर्ण्याऽनापत्तेः। किंच 'अणुदित्' 'नाज्झलावि'तिसूत्रात्पूर्वमिकारादिषु संज्ञाप्रवृत्तिसमये अज्झलोरपि प्रवृत्तत्वेन 'भुक्तवन्तं प्रति ब्रूयात् मा भुक्था' इति वाक्यस्येव 'स्थानेऽन्तरतम' इतिसूत्रस्थभाष्योक्तरीत्या निषेधवाक्यस्य वैयर्थ्याऽऽपत्तेः। तदानीं 'नाज्झलावि'तिसूत्रप्रवृत्तिमङ्गीकृत्य अज्झलूव्यतिरिक्तविषता कल्प्यते, तर्हि आकारप्रश्लेष आवश्यकः।

अणुदित्सूत्रोत्पत्त्यनन्तरमाकाराद्यन्तर्भावेन द्वितीयवाक्याऽर्थवर्णनं न युक्तम्। उक्तदोषाऽनिस्तारात्। गौरवाच्च। पुनः प्रवृत्तौ बीजाऽभावाच्च।

लघुशब्दरत्नः

ग्रहणे फलाऽभावात्। न चैवं ज्ञापितेऽपि भाव्यमानत्वात् सवर्णग्रहणाऽप्रसक्तेस्तद्वैयर्थ्यम्। तपरत्वाऽभावे आदेशाऽन्तरनिवृत्त्यर्थत्वेन स्वरूपाऽभ्यनुज्ञानाऽर्थतया अपूर्वबोध्यत्वाऽभावेन अविधेयत्वात्। कृते तु तपरत्वे भाव्यमानताऽपीत्यन्यदेतत्।

अनिष्पत्तेरिति। 'वर्णानामुपदेशस्तावत्, तदुत्तरकालम् इत्सञ्ज्ञा, तदुत्तरकालम्[1]

[1] 'तदुत्तरम्' इति मुद्रितः पाठः।

बृहच्छब्दरत्नः

नन्वेवम् 'इको यणचीत्या'दीनामपि 'नाज्झलावि'तिवाक्यार्थनिष्पत्तिकाले प्रतिबन्धकाऽभावेन वर्णसमाम्नायपठितमात्राऽन्तर्भावेन वाक्याऽर्थोत्पत्तौ, ग्राहकसूत्रे निष्पन्ने, भवदुक्तरीत्या वाक्यार्थाऽन्तरकल्पनाया अभावेन, दीर्घादिषु यणादिकं दुर्लभम्। न च ग्राहकसूत्राऽऽरम्भसामर्थ्यात्तत्कल्पनमिति वाच्यम्। उक्तदोषाऽऽपत्तेः। 'अस्य च्वौ' इत्यादौ सावकाशत्वाच्च। न चाऽस्याऽपि ह्रस्वाऽकारमात्रमादाय पूर्वं वाक्याऽर्थबोधः। अकारस्य स्वरूपपरत्वे मानाऽभावेन, अर्थपरत्वे बाधस्य सत्त्वेन वाक्याऽर्थाऽनिष्पत्तेः। न च 'स्वं रूपमि'त्यस्य प्रवृत्तिः। 'अशब्दसंज्ञे'ति निषेधात्। अत एवाऽणुप्रत्याहारसिद्धेः प्राक् ग्राहकसूत्रादौ नाऽस्य प्रवृत्तिः। 'अस्य च्वौ'इत्यादौ श्रुताऽकारादौ चारितार्थ्येन 'अणुरपि विशेषोऽध्यवसायकर'इतिन्यायात् टि-घु-भाद्येकदेश इव [१]अश्रुतेकारादौ प्रवृत्तौ मानाऽभावाच्च। अत एव 'प्रथमचरमे'त्यादिकं स्वार्थिकाऽणन्ते 'प्राथम'शब्दादौ नेति चेत्। 'ल्वादिभ्य' इत्यादिनिर्देशेन वर्णसमाम्नायपठितमात्राऽन्तर्भावेन वाक्याऽर्थाऽनङ्गीकारादित्याहुः।

यत्तु 'हकाराऽकारयोरेकजात्याक्रान्तत्वाऽभावेन सावर्ण्ये सत्यपि द्युतिर्ने'ति। तन्न। अणुदित्सूत्रस्य दुर्वारत्वात्। नचाऽऽकृतिपक्षेऽणग्रहणं न कार्यमिति वाच्यम्। 'नाज्झलौ' इति सूत्रस्य वैयर्थ्याऽऽपत्तेः। अणग्रहणं कुर्वत्सूत्रकारमते प्रश्लेषस्य सत्त्वाच्च। ऋकाराऽग्रहणे लृकारग्रहणाऽनापत्त्या तस्याऽऽवश्यकत्वाच्च।

न च सावर्ण्यविधानसामर्थ्यात्तद्ग्रहणम्। 'होतृ-लृकार' इत्यादौ सवर्णदीर्घप्रवृत्त्या, 'इकोऽसवर्णे' इत्यस्याऽप्रवृत्त्या च चरिताऽर्थत्वात्।

न च अणस्थाने ऋग्रहणं कार्यम्। न च गम्लृप्रभृतीनाम् लृदितानामृदित्कार्यप्रवृत्तिः। पृथगनुबन्धकरणं[२] तु लृदित्त्वप्रयुक्ताऽङादेशस्य ऋदित्त्वप्रवृत्त्या चरिताऽर्थमिति वाच्यम्। अनित्यत्वेन निर्वाहादिति वाच्यम्। ईषत्स्पृष्टऋलृ-

लघुशब्दरत्नः

'आदिरन्त्येने'ति प्रत्याहारः, तदुत्तरकाला सवर्णसञ्ज्ञा, तदुत्तरकालम् अणुदित् (१।१।६९) इति, एतेन समुदितेन अन्यत्र सवर्णानां ग्रहणम्' इति वाक्याऽपरिसमाप्तिन्यायादित्यर्थः।

अयं भावः—आदिरन्त्येन (१।१।७१) इति प्रत्याहारसिद्धौ, नाऽज्झलौ (१।१।१०) इत्येतद्वाक्याऽर्थबोधे सति, निर्णीतैतद्विषयपरिहारेण सवर्णपदबोध्यत्वनिश्चये,[३] अणुदित् (१।१।६९) इत्यनेन तावतां ग्रहणं बोधनीयम्। अन्यथा बाधकसम्भावनया 'तुल्यास्य'सूत्रजशक्तिग्रहे अप्रामाण्यसन्देहेन तच्छास्त्रजबोधाऽनापत्तिः। न च एतद्वाक्याऽर्थबोधतः[४] प्राक् तन्निश्चय इति।

[१] 'अश्रुताऽऽकारादौ' इति ख. पाठः।

[२] 'करणे तु' इति क. ख. पाठः।

[३] 'बोध्यनिश्चये' इति इति तु सर्वलिखितपुस्तकपाठः

[४] 'वाक्यार्थबोधात् प्राक्' इति मुद्रितेषु पाठः।

बृहच्छब्दरत्नः

ग्रहणाऽर्थम् लृकारोपदेशस्य स्थापयिष्यमाणत्वेन, अनित्यत्वे मानाऽभावात्। अनित्यत्वमादाय सूत्रप्रत्याख्यानस्याऽप्रयोजकत्वाच्च। एतेन 'लृवर्णस्य ऋवर्णवद्ग्रहणं वाच्यः, सावर्ण्यन्तु नोपसङ्ख्येयमि'ति परास्तम्। सर्वत्राऽतिदेशस्य प्रवृत्तौ निरुक्तदोषस्य[1] दुर्वारत्वात्। स्वरसन्धिप्रकरणे एव प्रवृत्तौ लृकारग्रहणस्याऽन्याऽर्थत्वेन 'क्लृप्तृ[2]' इत्यादौ द्विर्वचनाद्यसिद्धेः। 'उरण् रपर' इत्यत्र लृकारग्रहणाऽनापत्तेश्च। न च कार्यकालपक्षेण निस्तारः। यथोद्देशपक्षे दोषस्योद्धटत्वात्। उपदेशोत्तरमतिदेशप्रवृत्तेरङ्गीकारेण'उरण् रपर' इति सूत्रेण ऋकारे लपरताऽऽदेशस्य अनिर्देशेन, लृकारे रपरताऽऽदेशस्य च प्रसङ्गाच्च।

न चैवमपि 'ऋगुदित्सवर्णस्ये'त्येव सूत्र्यताम्। 'अप्रत्ययग्रहणं, 'नाज्झलौ' इति सूत्रं च न कार्यमिति वाच्यम्। सम्प्रसारणविधौ सूत्रस्य, [3]'ऋलृ' इत्याद्यर्थं चाऽप्रत्ययस्य, ऋकारषकारयोः, लृकारसकारयोश्च सावर्ण्याऽभावार्थं निषेधवचनस्य चाऽऽवश्यकत्वेन लाघवाऽभावात्। किञ्च यथा लोके 'इह मुण्डो भवे'त्यादिक्रमेण एकस्याऽनेकधर्मोपदेशेऽपि तत्तद्देशभेदेन धर्मा व्यवतिष्ठन्ते, तथेहाऽपि 'कर्मण्यण्' इत्यत्रैव णित्त्वं, 'चरेष्ट' इत्यत्र टित्त्वं, 'गापोष्टगि'त्यत्र टित्त्वकित्त्वम्, 'अ साम्प्रतिके' इत्यादौ तु नैकमिति सिद्धान्तः। अत एव जातिपक्षे 'अ प्रत्ययादि'त्यादौ न दीर्घादीनां ग्रहणम्। एवम् 'अस्य च्चौ' इत्यादावप्यापत्तिरिति सूत्रप्रणयनमावश्यकम्।

नचैवम् 'अस्य च्चौ'इत्यादावनणुत्वाद् ग्राहकत्वं न स्यादिति वाच्यम्। 'अ अ' इतिशास्त्रान्ते प्रत्यापत्तिवचनेन सर्वेषां विवृतत्वप्रतिज्ञाया बोधनात्। तस्मात्सामर्थ्येन ग्राहकसूत्रप्रवृत्तेः। वर्णसमाम्नाये विवृतत्वादेरविशेषणतया तस्याऽप्यणुत्वाच्च। न हि मुण्डत्वजटिलत्वादिवद्देशभेदेनाऽनुपात्ताः, स्वरूपमात्राऽनुवादेन विहिता अपि 'श्यामो दीर्घश्चतुर्बाहुरि'त्यादयो व्यवतिष्ठन्ते। दीर्घत्व-ह्रस्वत्वादीनां वर्णनिष्ठत्वाऽङ्गीकाराद् भेद एवेति स्पष्टं तपरसूत्रे आकरे। अपि च 'अस्य च्चौ'इत्यादौ व्यापकजातिनिर्देशः, 'त्यदादीनाम' इत्यादौ व्याप्यजातिनिर्देश इत्यस्य नियामकाऽभावे सङ्करोऽपि स्यात्। न चाऽनुवाद्यविशेषणं, विधेयविशेषणं च ग्रहैकत्व-पश्वेकत्ववदविवक्षितं, विवक्षितं चेति मीमांसकमर्यादया निर्वाहः। एवं हि 'अस्य च्वौ' इत्यादौ व्यापकजातेरपि अविवक्षाऽऽपत्तेः। मीमांसकोक्तस्य अविवक्षा-

लघुशब्दरत्नः

यत्तु—'निषेधवाक्याऽर्थबोधात् पूर्वं विधेर्वाक्याऽर्थबोध एव ने'ति। तन्न। पदार्थोपस्थितौ वाक्याऽर्थबोधे बाधकाऽभावात्। निषेधस्य प्रतियोगिज्ञानोपपादकतया विध्यपेक्षत्वेऽपि, विधेस्तद-

[1] 'निरूपितदोषस्य' इति ख. पाठः।

[2] 'क्रम' 'क्लम' ? इत्यादौ' इति ख. पाठः।

[3] 'ऋ-लि'इत्याद्यर्थं च' इति ख. पाठः।

'हो ढ' इत्युपलक्षणम्, 'रमासु' इत्यत्र षत्वं, 'वागाशीरि'त्यत्र झयो हः (८।४।६२) इति आकारस्य घकारः, 'दासीष्टे'त्यादौ दादेः (८।२।३२) इति घत्वं च नेति बोध्यम्। यदि तु 'विवृतमूष्मणामि'त्यत्र 'ईषदि'-

बृहच्छब्दरत्नः

बीजस्य वाक्यभेदस्येहाऽभावेन अविवक्षाविरह इति चेत्, तर्हि व्याप्यजातेरपि अविवक्षायां किं प्रमाणमिति विभावनीयम्। 'उपेयिवाननाश्वाननूचानश्च' 'आर्द्धधातुकस्येड् वलादेः' इत्यादाविव लक्ष्याऽनुरोधात्तथा आश्रीयते इति यद्यपि वक्तुं शक्यं, तथापि नैतद्बलेन ग्राहकशास्त्रप्रत्याख्यानं चमत्कारमावहतीति दिक्।

यत्तु 'विवृतकरणाः स्वरास्तेभ्य ए-ओ, ताभ्याम् ऐ-औ, ताभ्यामप्याकारः, संवृतोऽकार' इति शिक्षावाक्यात् प्रयत्नभेदस्य सत्त्वेन सावर्ण्याऽप्राप्तिरेवे'ति। तन्न। विवृततरस्याऽपि विवृतत्वाऽनपायेन संज्ञाया दुर्वारत्वात्। पाणिनीयशिक्षायां 'स्वराणामूष्मणां चैव विवृतं करणं स्मृतमि'त्युक्तत्वेन अकारस्य विवृतत्वेन दोषस्य स्फुटत्वात्। 'अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथे'त्युक्तत्वेन तदर्थस्य तत्संमतत्वबोधनाच्च। ध्वनितञ्चेदम् 'अइउणि'ति सूत्रे भाष्ये, स्पष्टीकृतं च कौस्तुभे पितामहचरणैः।

रमास्वित्यत्रेति। न च संयोगान्तलोपः शङ्क्यः। 'अनन्तरा' इति पदमावर्त्य 'अन्तं रातीत्यन्तरः। न अन्तर आ अस्ये'ति व्याख्यानेन, यकारादिसाहचर्येण आत्वाऽनधिकरणीभूतहलां ग्रहणेन च आकारान्ते संयोगसंज्ञाऽभावस्योपपादयितुं शक्यत्वात्। स्त्र्यर्थनिमित्तकटापो बहिरङ्गत्वेनाऽसिद्धत्वाच्च। एतेन ढत्वशङ्काऽपि निरस्ता। 'नाऽजानन्तर्ये' इति निषेधेन षत्वप्रवृत्तिर्युक्तैव।

घकार इति। हप्रयत्नबोधकवाक्ये ग्राहकसूत्रेण आकारस्याऽपि ग्रहणेन [1]हकार-घकारयोरिव आकार-घकारयोः प्रयत्नसाम्यमस्त्येव। स्वनिष्ठगुणसादृश्येनाऽऽदेशस्य नियन्तुमशक्यत्वेऽपि, स्वग्राहकनिष्ठगुणसादृश्येन आदेशस्य नियन्तुं युक्तत्वात्। 'अणुरपि विशेषोऽध्यवसायकर' इति न्यायेन नियतशास्त्राऽर्थस्य युक्तत्वात्। अचामल्पप्राणताऽङ्गीकारेऽपि[2] 'न्यायसाम्येन अनिष्टाऽऽपत्तेः स्पष्टत्वाच्च।

लघुशब्दरत्नः

पेक्षत्वे मानाऽभावाच्च। रमास्वित्यत्र षत्वमिति। सर्वस्याऽपि एकया युक्त्या वारणेन आपाद्यमानेऽर्थे न्यायाऽनावरावेवमुक्तम्।

[1] 'हकारयोरिव आकारयोः' इति ख. पाठः।

[2] अत्र 'अन्यापत्त्या' इति 'अनायत्या' इति वा पाठः सम्भाव्यते।

त्यनुवर्त्य, 'स्वराणां चे'त्यत्र निवर्त्य प्रयत्नभेदो[1] व्याख्यायते, तदा नाज्झलौ (१।१।१०) इति सूत्रं माऽस्त्विति भाष्ये स्थितम्।

वृद्धिरादैच् (१।१।१)। ऐच् इह द्विमात्र एव, तात्परत्वात्। तेन

---

**बृहच्छब्दरत्नः**

भाष्ये स्थितमिति। अत एव 'स्वराणामूष्मणामि'ति विभिन्नविभक्तिकनिर्देशः कृतः। नचैवमपि ईषच्छुक्लस्याऽपि शुक्लत्ववत् विवृततरस्याऽपि विवृतत्वाऽनपायेन सवर्णसंज्ञा दुर्वारैवेति वाच्यम्। 'अवान्तरधर्मपुरस्कारेणैव संज्ञायाः प्रवृत्तिरि'ति भाष्याशयात्। 'सामान्यधर्मपुरस्कारेणैव विवृतत्वमेवे'ति सूत्रमतम्। न चैवं चवर्ग-यकारयोः, टवर्ग-रेफयोः, तवर्ग-लकारयोः सावर्ण्याऽऽपत्तिः। 'स्पृष्टं प्रयत्नं स्पर्शानाम्, ईषत्स्पृष्टमन्तःस्थानामि'ति विषयविभागकथनसामर्थ्यात् अप्रवृत्तेः।

अत एव इकारादिभिरेचां[2] न सावर्ण्यम्। 'स्वराणामूष्मणां चे'ति पठित्वा 'तेभ्योऽपि विवृतावेङौ, ताभ्यामैचौ तथैव चे'ति पठितत्वेन अवान्तरधर्मभेदकथनात्।

वृद्धिरादैच्। अत्र 'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्। तच्छब्द, एवकारश्च स्यादुपादेयलक्षणमि'त्यभियुक्तोक्तेस्तथैवाऽनुभवाच्च, पाठक्रमादर्थक्रमस्य बलीयस्त्वेन 'आदैच् वृद्धिरि'त्यानुपूर्वीकल्पनाद् बोध इत्याहुः।

'वृद्धिरादैजि'त्यानुपूर्वी तु ग्रन्थादौ मङ्गलाऽर्था। वर्णसमाम्नायस्तु महेश्वरेण प्रोक्तः। केचित्तु 'पाणिनिप्रणीत एव। उणादिपाठवन्नाऽष्टाध्याय्यामन्तर्भावः। 'माहेश्वराणी'त्यत्र आगताऽर्थे, लब्धाऽर्थे एव तद्धित' इत्याहुः। अपरे तु 'अष्टाध्याय्यामेवाऽन्तर्भावः। वृद्धिशब्दस्तु ग्रन्थमध्ये मङ्गलाऽर्थं सूत्रादौ पठित' इत्याहुः।

'स्वेच्छया संज्ञाः क्रियन्ते' इति पक्षं विहाय 'व्यवहाराय नियमः क्रियते' इति पक्षे 'वृद्धिशब्देन आदैच एव बोधव्या' इत्यर्थस्य सत्त्वेन, आद्येऽपि कार्यकालपक्षाऽऽश्रयणे 'मृजेर्वृद्धिः' 'वृद्धिशब्देन आदैच उच्यन्ते' इत्यर्थस्य सत्त्वेन यथाश्रुतमेव[3] साधु।

अपरे तु 'कार्यकालपक्षे 'यत्र वृद्धिशब्दस्तत्राऽऽदैच उपतिष्ठन्ते', 'यत्राङ्गशब्दस्तत्र 'यस्मात्प्रत्ययविधिस्तदादी'त्यंशः, प्रत्यये इत्यंशश्चोपतिष्ठते'इत्याद्यर्थो 'वृद्धिरादैच्' 'यस्मात्प्रत्ययविधिरि'त्यादीनाम्। तत्र 'वृद्धिरि'त्यादीनां [4]प्राथम्यमेव।

---

**लघुशब्दरत्नः**

भाष्ये स्थितमिति। अनेन आकारप्रश्लेषे मानं दर्शितम्।

---

[1] 'प्रयत्नभेदेन व्याख्यायते' इति च. पाठः।

[2] 'एचोः' इति वा पाठः।

[3] 'यथाक्रममेव साधुः' इति क. पाठः।

[4] 'प्राथम्यमेव युक्तम्' इति वा पाठः स्यात्।

'कृष्णैकत्वमि'त्यत्र त्रिमात्रो न। एवमुत्तरसूत्रेऽपि। तेन 'गङ्गोदकमि'-त्यादौ त्रिमात्रो न।

---

बृहच्छब्दरत्नः

उक्तशब्दोपस्थितेः शाब्दबोधाऽङ्गत्वात्, 'मृजेर्वृद्धिः' 'उरदि'त्यादिप्रदेश-वाक्ये तद्वाचकपदकल्पनयाऽर्थोपस्थित्यङ्गीकारेऽपि न दोषः।

आदैचादीनामुपस्थाप्यानामुपस्थापकसमानविभक्तिकत्वम्। 'प्रत्यये' इत्यादि-सप्तम्यन्तानां तु न। 'यस्मात्प्रत्ययविधिरि'त्यादौ सप्तम्यन्तपाठस्य वैयर्थ्या-ऽऽपत्तेः। प्रथमायाः साधुत्वमात्रेणोपपत्तेः। अत एव प्रथमान्तपदोपस्थाप्या-ऽर्थस्योपस्थितपदविशेषणतयैव सम्बन्धः। सप्तम्यन्तं तु अन्यविशेषणतयाऽपि।

अत एव च 'अल्लोपोऽन' इत्यादौ कार्यकालपक्षे उपस्थितोऽपि 'यस्मात् प्रत्ययविधिस्तदात्यदी'त्यंशो 'भस्ये'त्यनेन समानाधिकरणतया सम्बध्यते। 'यचि' 'प्रत्यये' इत्यंशस्तु अनो विशेषणमि'ति भाष्याद्युक्तं सङ्गच्छते। अस्मिन्पक्षे यथा ज्योतिष्टोम-राजसूयादिशब्दतो यागविधावेव यागसामानाधिकरण्यात् यागनामधेयत्वाऽवगतिः, न तु वाक्याऽन्तरेण, तथा 'मृजेर्वृद्धिरि'त्यादावेव वृद्ध्यादिशब्दानां नामधेयत्वाऽवगतिः। 'वृद्धिरादैजि'त्यादिकं तु 'इको गुणवृद्धी' इतिवदुपस्थापकम्। उपस्थाप्यस्योपस्थापकेन वृत्त्या बोधनात्परं संज्ञासूत्रत्वव्यव-हारः। अस्मिन्पक्षे तपरकरणमसन्देहाऽर्थमात्रम्। विधिवाक्येन वृद्धिसंज्ञाविशिष्टा-नामादैचां भाव्यमानत्वेन सवर्णग्रहणाऽप्राप्तेः। न च 'उरदि'त्यत्र 'यस्मात् प्रत्ययविधिरि'त्यस्येव 'वृद्धिर्यस्याचामादिरि'त्यादावादैचामुपस्थितौ सवर्णग्रहणं दुर्वारमिति वाच्यम्। तादृशलक्ष्याऽभावेनेष्टाऽऽपत्तेः। अनेकशक्तिकल्पनाऽऽपत्तेः। क्वचिद्विधिवाक्यस्योपजीव्यत्वेन प्राधान्यात्तत्र निर्णीताऽर्थग्रहस्यैवोचितत्वाच्च।

यद्वा 'उर्भवती'त्यादौ भवनक्रियायामुकारादीनां कर्तृत्वेन विधीयमानत्ववत् आदैजुपतिष्ठते इत्यर्थस्य सत्त्वेन 'वृद्धिरादैजि'त्यत्र आदैचां विधीयमानत्वमस्त्येव। 'इको गुणवृद्धी'इत्यत्र तु शब्दपरत्वान्नार्थस्य विधीयमानत्वमिति यावद्बाधं साधु।

यत्तु 'अशब्दसंज्ञे'त्यनुवर्त्तते। तेन 'शब्दसंज्ञायां ने'त्यर्थात् ग्राहकसूत्रा-ऽप्रवृत्तिरि'ति। तन्न। 'अशब्दसंज्ञे'त्यस्य प्रथमाऽन्तत्वात् तदर्थे [1]शब्दाऽधिकारा-ऽऽपत्तेः, 'उच्चैरुदात्त' इत्यादौ दोषाऽऽपत्तेश्चेति ध्वनयितुमाह— तात्परत्वादिति।

एतेन 'उच्चैरुदात्त' इत्यारभ्य द्वादशसूत्री इत उत्कृष्य 'उदात्तादनुदात्तस्य स्वरित' इत्यस्मादुत्तरत्र पाठ्ये'ति भाष्यादौ सिद्धान्तितत्वेन अजनुवृत्तौ माना-ऽभावः। किञ्च हल्व्यतिरेकेणाऽचामुच्चैस्त्वादीनामुपलम्भेन, तदुपरागवशादेव हल्षूपपत्तौ साक्षादुच्चैस्त्वाद्यकल्पनात्, 'स्वरविधौ व्यञ्जनस्याऽविद्यमानत्व-मि'त्यस्य सत्त्वेन हलन्तत्वेऽपि क्षत्यभावाच्च, 'स्वरविधावि'त्यत्र विधिग्रहण-

---

[1] 'तपंन्यशब्दाधिकारापत्तेः' इति तु लिखिते पाठः।

**भूवादयो धातवः (१।३।१)। 'भूश्च वाश्चे'ति द्वन्द्वः। 'आदि'शब्दयो-र्व्यवस्था-प्रकारवाचिनोरेकशेषः। 'भूवौ आदि येषामि'ति बहुव्रीहिः। भूप्रभृतयो, वासदृशाः। सादृश्यञ्च क्रियावाचकत्वेनेत्यभिप्रेत्याऽऽह–क्रियावाचिन इति।**

**क्रियावाचिनः किम्? । 'याः पश्यसी'त्यादौ धातुत्वं मा भूत्। सति हि तस्मिन्, आतो धातोः (६।४।१४०) इति स्यात्।**

---

बृहच्छब्दरत्नः

सामर्थ्येन स्वरे कर्त्तव्ये, स्वरनिमित्तके कार्ये च कर्त्तव्ये परिभाषाप्रवृत्तेः स्वीकारादि'त्यपास्तम्। एवमपि प्रकृते लघुभूतोपायेनैव सिद्धावनुवृत्तिरूपगुरुभूतोपायस्याऽयुक्तत्वात्। ननु संज्ञायास्तात्परत्वेऽपि संज्ञिनां तदभावात् कथं त्रिमात्रव्यावृत्तिः। न च सामर्थ्यम्। उच्चारणाऽर्थत्वेन, असन्देहाऽर्थत्वेन च 'तरती'त्यादौ पर्यायेण अरारोर्व्यावृत्त्यर्थत्वेन पूर्वाऽर्थतया च चारितार्थ्यादिति चेन्न। 'वृद्धिरादैजात्' 'अदेङ् गुणः' 'एङन्त् गुणः' इति स्पष्टतया वक्तव्ये मध्ये पाठेनोभयाऽर्थत्वज्ञापनात्। 'सहिवहोरोदवर्णस्ये'ति ज्ञापकसिद्धः पञ्चमीसमासोऽप्यस्मिन्नंशे प्रमाणम्।

वस्तुतस्तु प्रत्याहारे तद्वाच्यवाच्ये निरूढलक्षणायाः सत्त्वेन एजादिशब्दानामेवोपस्थापकत्वान्न कश्चिद् दोषः। दीर्घाणाम् 'ऐच्'शब्दसवर्णित्वन्तु परम्परासम्बन्धेन। 'तत्कालस्ये'त्यस्य तु अनधिककालके तात्पर्यम्। अत एव 'अतो भिस ऐसि'त्यादौ विशिष्टाद्विभक्त्युत्पत्तिदर्शनेन विशिष्टस्य संज्ञात्वम्। 'तत्कालस्ये'ति तच्छब्देन विशिष्टपरामर्शेऽपि न दोषः। न्यूनत्वन्तु अर्द्धमात्राऽपेक्षया, नाऽधिकम्। 'ऋत इद् धातोरि'त्यत्राऽतपरह्रस्वऋकारनिर्देशेनैवोपपत्तौ 'ऋत' इत्यस्य वैयर्थ्याऽऽपत्तेः। एवञ्च तात्परप्रत्याहारे तद्वाच्यवाच्ये, तद्वाच्यतुल्यकालके लक्षणेति बोध्यम्। 'उपसर्गाद्दती'ति तपरकरणेन विभक्तितकारे सूत्राऽप्रवृत्तिर्ज्ञाप्यते। 'ऋदोरबि'त्यत्र दकार एवेत्यन्यत्र विस्तरः।

वासदृशा इति। नचैवं 'वा' इत्यस्य धातुत्वं न स्यादिति वाच्यम्। प्रयोगभेदेन भेदमाश्रित्य सादृश्यस्योपपादनात्। अत एव 'स्वरप्रतिरूपकाश्चे'ति सङ्गच्छते। 'याति-वाती'ति निर्देशश्चाऽत्र मानम्।

याः पश्यतीति। नचाऽन्तरङ्गलोपाऽपेक्षया स्त्र्यर्थनिमित्तकटापोऽसिद्धत्वम्। अजादिप्रत्ययनिमित्तत्वेनाऽतत्वात्। 'नाऽजानन्तर्ये' इति निषेधाच्च। नाऽपि लोपे प्रतिपदोक्तपरिभाषाप्रवृत्तिः। आकारस्य प्रतिपदोक्तत्वात्। वर्णग्रहणे

---

लघुशब्दरत्नः

सादृश्यं चेति। 'वा'धातौ 'वा'सादृश्यं च प्रयोगभेदेन बोध्यम्। आतो धातोरिति स्यादिति। न च स्त्र्यर्थनिमित्तक-टापो बहिरङ्गाऽसिद्धत्वम्। 'नाऽजानन्तर्ये' इति निषेधात्।

बृहच्छब्दरत्नः

अप्रवृत्तेश्च। अत एव 'पपुष' इति रूपसिद्धिः। अत एव च भूवादिसूत्रे प्रतिपदोक्तपरिभाषाया अप्रवृत्तिः। कार्यकालपक्षे लोपविधायकेन सहैकवाक्यत्वात्, विकल्पाऽर्थक'वा'शब्दे दोषाच्च। अत एव 'आतोऽनाप' इति वार्त्तिककारमते 'क्रियावाचिन' इति विशेषणं व्यर्थमि'त्यपास्तम्। नाऽपि सत्ताद्यर्थनिर्देशो नियामकः। तद्रहितधातुपाठस्य भूवादिसूत्रे भाष्ये ध्वनितत्वात्। 'अलंक्रियते' 'प्रजयति' 'केशान्[1]पवती'त्यादौ धातुत्वाऽनापत्तेश्च। फलस्याऽपि क्रियात्वमस्त्येव।

साध्यत्वञ्च क्रियात्वम्। तत्त्वन्तूद्देश्यत्वेन, अवधित्वेन वाऽनन्वयित्वम्। तच्च 'पचती'त्यत्रैव हिरुगित्यादावस्ति। 'पचति' 'पाकं करोति' 'कृतिरि'त्यादौ स्मृतिनिष्ठवैजात्यस्याऽऽनुभविकत्वात्। न च हिरुगादीनामव्ययसंज्ञाविधानसामर्थ्यात् धातुसंज्ञाया बाध इति वाच्यम्। धर्मिपरत्वे क्रियावाचकत्वाऽभावेन धातुसंज्ञाया अप्रवृत्तौ सुब्लोपाद्यर्थमव्ययसंज्ञायाः सावकाशत्वात्। न चैवं सिद्धान्ते विकल्पार्थक-'वा'शब्दस्य धातुत्वाऽऽपत्तिः। भ्वादिसाहचर्येण अंशद्वयबोधकस्यैव ग्रहणात्। अस्त्यादावप्यंशद्वयमस्त्येवेति अग्रे निरूपयिष्यामः। वाशब्दस्तु विकल्पमेवाऽऽह, न तु तदनुकूलव्यापारम्।

केचित्तु 'साध्यत्वं सुबुपात्तजनकाऽन्वयित्वं विवक्षणीयम्। यद्वा स्वप्रागभावाऽधिकरणाऽवृत्तित्वम्। उक्तञ्च हरिणा—

'यावत्सिद्धमसिद्धं वा साध्यत्वेनाऽभिधीयते।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते' ॥ इति

अत एव कर्मकर्त्तरि विक्लित्तावेव कारकाणामन्वयः। तन्मात्रवाचकस्य च धातुत्वम्। न हि विपूर्वककल्पधातूपात्तविकल्पं विकल्पाऽर्थक'वा'शब्द आहे'त्याहुः।

---

लघुशब्दरत्नः

ततोऽपि बहिर्भूत-संख्या-निमित्तक-विभक्ति-निमित्तक-भसञ्ज्ञा-निमित्तकत्वेन लोपस्य बहिरङ्गत्वाच्च। ([2]अर्थनिमित्तकबहिरङ्गत्वस्य अभावाच्च)। नाऽप्ययं लाक्षणिकः,

'नकारजावनुस्वार-पञ्चमौ झलि धातुषु।
सकारजः शकारश्चे, षाट्टवर्गस्तवर्गजः' ॥

—इत्यभियुक्तोक्तेर्म्वादिषु लाक्षणिकानामपि दर्शनेन, तद्विषये तत्परिभाषाया अप्रवृत्तेः। 'आतो धातोः (६।४।१४०) इत्यत्र प्रतिपदोक्त आकारो गृह्यते' [3]इति तु वक्तुमप्यशक्यम्, 'पशुषः' इत्यसिद्ध्यापत्तेः। 'पशुं सनोती'ति विट्। विड्वनोः (६।४।४१) इत्यात्त्वम्। 'आतोऽनापः' इति वार्त्तिकमते तु विकल्पाऽर्थकनिपात-'वा'शब्दस्य धातुत्वे, प्रातिपदिकत्वाऽभावात् सुबभावे, पदत्वाऽनापत्तिर्दोषः। क्रियात्वञ्च—साध्यत्वेन प्रतीयमानत्वम्। साध्यत्वञ्च उत्पाद्यमानत्वमेवेत्यन्यत्र विस्तरः।

---

[1] 'केशान् वपति' इति पाठः स्यात्।

[2] 'अर्थनिमित्तकबहिरङ्गत्वस्याऽभावाच्च' इति क. पाठः।

[3] 'इत्यपि वक्तुमशक्यम्' इति ग. पाठः।

भ्वादयः किम् ? । 'हिरुक्' 'पृथगि'त्याद्यव्ययानां, 'शिश्ये' इति भावाऽर्थतिङन्तस्य च मा भूत् ।

[1]स्तम्भ्वादीनाम् उदित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते । चुलुम्पा-

बृहच्छब्दरत्नः

तद्रीत्याऽऽह—शिश्ये इति । लकारेषु अष्टाध्याय्यां लिट एवाऽऽदौ विधानात्तदुक्तिः । कालेऽपि धात्वर्थत्वमस्त्येव । अत एव 'वर्त्तमानादीनां द्योत्यत्वमि'ति वैयाकरणैकदेशिनः । केषां चित् लकाराणां कालाऽवाच्यत्वेन भावाऽर्थकलकारे दोष दुरुद्धर एवेत्याहुः ।

स्तंभ्वादीनामिति । न च धातुत्वाऽभावेऽपि सुबुत्पत्तौ उगित्करणं नुमाद्यर्थमिति वाच्यम् । क्रियाया असत्त्वभूतत्वेन लिङ्गसङ्ख्याकारकाऽनन्वयित्वात्

लघुशब्दरत्नः

हिरुगित्यादि । एषां क्रियासमानाधिकरणत्वात्, लिङ्गाद्यनन्वयित्वाच्च [2]एतदर्थस्य क्रियात्वमित्यभिमानः । एषाम् अव्ययेषु पाठस्तु अप्रातिपदिकत्वेऽपि अकजर्थः स्यात् । एतेन 'तेषु पाठसामर्थ्यात् धातुत्वाऽभाव' इत्यपास्तम् ।

नन्वेषां क्रियाऽऽकाङ्क्षादर्शनेन न क्रियावाचकत्वमत आह—शिश्ये इति । कालोऽपि धात्वर्थ एवेति न क्रियावाचकत्वहानिः । तस्य च धातुत्वे आदेच उपदेशे (६।१।४५) इति आत्वं स्यात् । तद्धि अनैमित्तिकम्, धातुत्वनिमित्तकञ्चेति स्पष्टमेव । अत्र च[3] प्रत्ययस्यैव धातुत्वाऽऽपत्तिर्बोध्या । तिङन्तस्य तु उपदेशाऽभावात् न आत्वप्रसक्तिरित्याहुः ।

ननु [4]षष्ठे तत्र सूत्रे धातुग्रहणाऽसम्बन्ध उक्तो भाष्ये इति न तद् धातुत्वनिमित्तकम् । किं च 'अशिती'ति प्रसज्यप्रतिषेधेऽपि [5]शित्परत्वयोग्यस्यैव आत्वविधानात्[6]न अत्र [7]आत्वप्रसक्तिः । अपि च वासादृश्यम् अन्याऽनभिहितक्रियावाचकत्वेनेति न दोषोऽत आह—चेति । सूत्रशेषभाष्योक्तेषु 'आणवयति' [8]वट्टयत्यादिषु धातुत्वे शास्त्रविषयतया साधुत्वाऽऽपत्तिरिति तद्व्यावृत्तये तदिति भावः ।

[1] 'स्तंभ्वादीनाम्' इति लिखिते पाठः ।

[2] 'तदर्थस्य' इति मुद्रित. लिखित ग. घ. पाठः ।

[3] अयं चकारो लिखितेषु क्वापि नास्ति ।

[4] 'षष्ठे तत्र सूत्रे' इति क. ख. ग. पाठः । तत्र='आदेच उपदेशे' इत्यर्थः । भैरवीभावप्रकाशयोरपि च 'तत्र' इत्येव पाठ आदृतः । 'षष्ठे प्रकृतसूत्रे' इति मुद्रितेषु पाठः ।

[5] 'शित्प्रत्ययपरत्वयोग्यस्यैव' इति पाठोऽत्र बोध्य' इति भावप्रकाशकृतः ।

[6] 'विधानात् नात्वप्रसक्तिः' इति क. पाठः । 'विधानात् नाऽत्र प्रसक्तिः' इति ख. ग. पाठः । 'नाऽत्र प्रसक्तिः' इति च भावप्रकाशकृदादृतः पाठः । अत्र='शिश्ये' इत्यत्रेत्यर्थः ।

[7] 'आत्व' इति क्वाचित्कः पाठः ।

[8] 'वट्टयतीत्यादिषु च' इति मुद्रितेषु पाठः । 'वड्ढ्यत्यादिषु' इति च क्वचित् पाठः ।

दीनां तु 'बहुलमेतन्निदर्शनमि'ति गणसूत्रेण सङ्ग्रहः ।

**चादयः (१।४।५७) अद्रव्यार्थाः किम् ? । 'पशुः' । लिङ्गसंख्याऽन्वितं द्रव्यम् । इह तु स्यादेव—'लोधं नयन्ति पशु मन्यमानाः' । 'पशु' इति सम्यगर्थे ।**

---

बृहच्छब्दरत्नः

सुबुत्पत्तेरभावात् । अत एव 'स्तभ्नोतिकल्पमि'त्यादावुत्सर्गत एकवचनं, सामान्येन नपुंसकता चेति सिद्धान्तः । वस्तुतस्तु 'सार्वधातुके विकरणविधानादि'त्यपि वदन्ति ।

**चुलुम्पादीनामिति ।** आदिना[1]आवट्टि-विक्लवत्यादयो गृह्यन्ते ।

**अद्रव्यार्था इति ।** नाऽयं पर्युदासः । किन्तु प्रसज्यप्रतिषेधः । अत एव वातीति वाः । विप्रातीति विप्रः । इह क्रियाविशिष्टद्रव्यवाचकतया निषेधसिद्धिः । अन्यथा क्रियाकारकसमुदायस्य सत्त्वभिन्नत्वेन समुदायस्य निपातसंज्ञा दुर्वारा । 'निश्चयेन पातयन्ति ते निपाता' इत्यन्वर्थसंज्ञाबलेनाऽऽक्षिप्ताऽर्थस्य प्रादिभिर्विशेषणेन निपातसंज्ञायां तदन्तविधेः सुलभत्वात् । अवयवस्याऽनिपातत्वेऽपि तदन्तविधिना अव्ययसंज्ञाया दुर्वारत्वाच्च । न च द्रव्यवाचकपशुशब्दे पशुत्वस्याऽपि भानेन तत्र लिङ्गाद्यनन्वयेन निपातसंज्ञाया दुर्वारत्वेन वचनसामर्थ्यादसत्त्वमात्राऽर्थकत्वविवक्षणात्पर्युदासे न दोष इति वाच्यम् । 'पशुना यजेते'त्यादौ जातावेव लिङ्गाद्यन्वयस्य पूर्वमीमांसासिद्धत्वात् । नचैवं पदैकदेशानां चादीनां संज्ञाऽऽपत्तिः । अर्थवत्परिभाषयैव वारणात् । पादपूरणाऽर्थानान्तु प्रातिपदिकसंज्ञावन्निपातसंज्ञाऽपि वाचनिकी ।

**सम्यगर्थ इति ।** 'लुब्धमृषिं नयन्ति पशु मन्यमाना' इति निरुक्तग्रन्थे अनुस्वारसहितपशुशब्दपाठोऽसाम्प्रदायिकः । लोधशब्दाऽर्थनिर्णयाऽर्थं तस्य प्रवृत्तत्वेन पशुशब्दस्याऽन्यथा पाठे मानाऽभावात् । उपक्रमादिना तथैव निर्णयात् । अत एव 'लोधमि'त्यनवगतमि'ति तद्भाष्ये व्याख्यातम् । द्वितीयाऽन्तसन्निधौ पशुशब्दे पठनीये क्रियासन्निधौ पाठस्याऽदृष्टाऽर्थताऽऽपत्तेश्च । 'लोधं नयन्ति पशु मन्यमाना'

---

लघुशब्दरत्नः

**उदित्करणेनेति (६३ पृ०) ।** इदमुपलक्षणम्, तत्प्रकृतिकक्त्यनुवादेन अङ्विधानेन, सार्वधातुके परे विकरणविधानेन च धातुत्वम् । जुचङ्क्रम्य (३।२।१५०) इत्यत्र पठित–जोः, जपजभ (७।४।८६) इत्यत्र पठित'पसः,' 'ऋति'प्रभृतीनां च केषाञ्चित् धात्वधिकारविहितकार्योद्देश्यत्वाद् बोध्यम् । एतैश्च स्थितस्य तेषां पाठस्य भ्रंशोऽनुमीयते इति भावः ।

**मैत्रेयाद्यन्यसंमतं समाधिमाह—बहुलमिति ।** **सम्यगर्थे इति ।** न च 'लुब्धमृषिं

---

[1] 'आदिनाऽऽवट्टि-विक्लवत्यादयः' इति पाठो लिखितेषु ।

उपसर्गाः (१।४।५९)। 'निस्,' 'दुस्,' इति सान्तौ, निसस्तपतौ (८।३।१०२) इति निर्देशात्। 'अयोगवाहानाम् अविशेषेणे'ति प्रकरणे 'निष्कृतं' 'दुष्कृतमि'त्युदाहृत्य 'इदुदुपधस्य सकारस्य यो विसर्जनीय' इति भाष्यकारोक्तेश्च। उपसर्गस्याऽयतौ (८।२।१९) इति सूत्रे वामनोऽप्येवम्।

निरः कुषः (७।२।४६) सुदुरोरधिकरणे (वा.) इति निर्देशात्

बृहच्छब्दरत्नः

इत्यत्र विभक्तिरहितत्वा-ऽऽद्युदात्तत्वसहित-पाठेन निपातत्वनिर्णयाच्च। 'निपाता आद्युदात्ता' इति फिट्सूत्रात्। अव्ययाद्विभक्तेर्लुकः सत्त्वात्। चतुष्पाज्जाति-विशेषवाची पशुशब्दस्त्वन्तोदात्तः, पुँल्लिङ्गश्च। 'पशूस्ताँश्चक्रे' इत्यादौ तथैव पाठात्। स्पष्टञ्चेदं प्रकृतसूत्रे हरदत्तग्रन्थे, 'दृशिर् प्रेक्षणे'इति धातौ माधवग्रन्थे च।

निर्देशादिति। 'अभिनिसः स्तनः' 'निसो गते' 'निसो देशे' इति सूत्र-वार्तिकमपि बोध्यम्।

सुदुरोरिति। इदञ्च 'अन्ताऽत्यन्ताऽध्वे'तिप्रकरणस्थं वार्त्तिकम्। 'सुदुरोः प्रतिषेध' इति वार्त्तिकाऽन्तरमपि प्रमाणत्वेन बोध्यम्। नन्वेवं 'यत्तु 'दुःषुणोति' 'दुःषेधती'त्यादि प्राञ्च उदाजहुः, तच्चिन्त्यम्। 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधा-दि'ति मनोरमाग्रन्थो विरुध्येत, दुसो निषेधाऽभावेन उक्तरूपाणां निर्विघ्नत्वा-दिति चेत्।

अत्र वदन्ति—'एकाच उपदेशेऽनुदात्तादि'ति सूत्रादनन्तरं 'निरः कुषोऽनिष्ठा-यामि'ति वाच्यम्। न च 'अनिष्ठायामि'ति पर्युदासेन कृत्येवेदं प्रवर्त्ततेति वाच्यम्। स्पष्टप्रतिपत्तये 'नेड् वशि कृती'त्यस्याऽग्रे पठनीये, इह पाठस्य वैयर्थ्याऽऽपत्त्या, प्रत्ययत्वेन सादृश्यग्रहणात्। 'तीषसहे'त्यत्र विकल्पाऽनुवृत्तौ मण्डूकाऽनुवृत्तिश्च नाऽऽश्रयणीयेत्यपरमनुकूलम्। नच 'कृसृभृ' इति सूत्रे क्रादिनियमात् 'निश्रुकोषिथे'-त्येव रूपं स्यात्। यथान्यासे तु न। 'निषेधप्रापितस्यैवाऽयं नियम' इत्यर्थस्य वक्ष्यमा-णत्वादिति वाच्यम्। 'विकल्पप्रापितस्याऽप्ययं नियम' इतिवादिनां मते यथान्यासे दुर्वारत्वेनेष्टाऽऽपत्तेः। नियमस्य सजातीयत्वेनोपसर्गाऽनिमित्तनिषेधस्यैव ग्रहणा-च्चेत्यादि वक्ष्यते। एवञ्च सान्त-रान्तनिमित्तविधौ अन्यतरमादाय रूपाऽन्तरं नाऽस्तीत्यस्मिन्नर्थे मानम्। अत एव 'सुदुरोरधिकरणे' इत्यादावेकजातीयफलकल्पने लाघवम्। 'उपसर्गस्याऽयतौ' इति सूत्रे तु [1]'सान्तरान्तरूपाऽन्यतरस्य निमित्तकोटौ

लघुशब्दरत्नः

नयन्ति पशुं मन्यमानाः' इति निरुक्ते 'पशुमि'ति सानुस्वारपाठात् तत्र 'पशु' इति लुप्त-विभक्तिकं सत्त्ववाचीति वाच्यम्। 'लोधमि'ति अनवगतमि'ति तद्भाष्योक्त्या तन्मात्र-

[1] 'सान्तरान्ततया तयोः अन्यतरस्य' इति ख.पाठः।

**रेफान्तावपीति तत्रैव सूत्रे हरदत्तः ।**

## इति संज्ञाप्रकरणम् ।

---

बृहच्छब्दरत्नः

अप्रवेशेन रूपभेदोऽस्त्येव । अत एव 'निलयते' 'दुलयते' 'निरयते' 'दुरयते' इत्यादिप्रयोगसिद्धिः । सान्ते रुत्वस्याऽसिद्धत्वेन लत्वाऽप्राप्तेः ।

[1]यत्तु 'उपसर्गस्याऽयतौ' इतिसूत्रे 'अयतौ' इत्यस्य रेफविशेषणत्वेऽपि वचन-सामर्थ्यादेकवर्णव्यवधाने 'पलायते' इत्यत्र लत्वं भवत्येव । न च 'स्रायते' इत्यादि-रवकाशः । तत्राऽपि स्थानिवद्भावेन व्यवधानाऽनपायादि'ति भाष्यकारोक्तं विरुध्येत । 'निरयते' [2]'दुरयते' इत्यादौ वचनस्य चारिताथ्यात् ।

यत्तु कैयटहरदत्तादिभिरुक्तं—'यद्येतावत्प्रयोजनं स्यात्, 'निर्दुरोरयतौ'इत्येव ब्रूयादि'ति । तन्न । 'निरायययति' 'दुरायययती'त्यादौ ण्यर्थविशेषणत्वेन अयतिं प्रति उपसर्गत्वाऽभावेऽपि लत्वाऽऽपत्तेरि'ति ।

तन्न । बहुलक्ष्यसंस्काराऽनुरोधेन, श्रुतत्वाच्च 'अयतौ' इत्यस्योपसर्गविशे-षणत्वस्यैव न्याय्यत्वात् । 'स्रायते' इत्यत्र श्रुतिकृतव्यवधानाऽभावेन वचनस्य चारितार्थ्ये 'पल्ययते' [3]इत्यत्राऽप्रवृत्त्यापत्त्या भाष्यस्य प्रौढिवादपरत्वात् । अत एव 'घ्नन्ती'त्यत्र कुत्वं, 'हननमि'त्यत्र नेति स्पष्टं भाष्यादौ ।

इति संज्ञेति । 'अ अ' इत्याद्युपन्यासस्तु प्रासङ्गिकः । एतेन 'अइउण्' इत्याद्युपन्यासो न युक्तः, एतेषां क्रमविधायकत्वात् । तत्फलन्तु 'यमां यमी'त्यादौ यथासङ्ख्यविज्ञानादिकमि'त्यपास्तम् । 'राज्ञः क च' 'अलोऽन्त्यस्य' 'लः कर्मणि च भावे चे'ति 'तिप्तस्झी'त्यादीनामिव 'अइउण्' इत्येषाम् 'आदिरकारोऽन्त्येन णकारादिना सहितः सन् आद्यन्ताभ्यामाक्षिप्तमध्यगयोरिकारोकारयोरकारस्य च संज्ञे'त्यर्थस्यैकवाक्यतया निष्पन्नत्वात् , वृत्तिपरिच्छेदकत्वेन संज्ञासूत्रत्वाच्चेत्यन्यत्र विस्तरः ।

## इति संज्ञाप्रकरणम् ।

---

निर्णायके निरुक्ते, पशुशब्दांशे अन्यथा पाठे मानाऽभावात् । स्पष्टं चेदं प्रकृतसूत्रे हरदत्तग्रन्थे, 'दृश्'धातौ माधवग्रन्थे चेति दिक् ।

वामनोऽप्येवमिति । तत्र हि 'दुस् सान्तः' इति तेनोक्तम् ।

इति संज्ञाप्रकरणम् ।

---

[1] अस्य द्वितीय-'तन्न' इत्यनन सहाऽन्वयः ।

[2] 'दुरयते' इति क. नास्ति ।

[3] 'इत्यत्राऽप्रवृत्त्या भाष्यस्य' इति ख पाठः ।

# अथ परिभाषाप्रकरणम् ।

**इको गुणवृद्धी ( १।१।३ ) गुणवृद्धिशब्दाभ्यामिति । एतच्च पूर्वसूत्राभ्यां गुण-वृद्धिपदे अनुवर्त्त्य 'गुणो वृद्धिरिति ये गुण-वृद्धी' इति योजनया लभ्यते । तेनेह न, दिव औत् (७।१।८४) । द्यौः । त्यदादीनामः,**

लघुशब्दरत्नः

इको गुणवृद्धी । नन्वेतत्सूत्रमङ्गस्येत्यादिवदधिकाराऽर्थमेव किं न स्यादिति चेन्न । एवं हि सति 'इको गुणवृद्धी ने'ति नञा संयुज्यैव पठेत्, 'सर्वस्य द्वे' 'पूर्वत्राऽसिद्धमि'-त्यादिवत् । न ह्युत्तरसूत्रोपस्थितिकत्वाऽविशेषे किञ्चित् संयुज्य, किञ्चिद् विभज्य पठितुमुचितम् । वैरूप्ये हेत्वभावात् । 'प्रत्ययः' 'परश्च'त्यादौ तु पारार्थ्याऽविशेषेऽपि विधेयभेदाद्युक्त एव विभागः । 'एकाचो द्वे प्रथमस्य' 'अजादेर्द्वितीयस्ये'त्यादौ तु उत्तरत्रैकादेशाऽनुवृत्तिः, उद्देश्यभेदादिकं च बीजम् । नाऽपीदं विधिसूत्रम् । तत्तद्विधीनां वैयर्थ्याऽऽपत्तेः । पुनर्गुण-वृद्धि-ग्रहणवैयर्थ्याऽऽपत्तेश्च । 'षष्ठी स्थानेयोगे'त्यस्य 'यदनुक्रान्तं यत्र स्थानषष्ठी तन्न बाध्यमि'त्यर्थस्याऽप्यङ्गीकृतत्वेन दोषाऽभावाच्च । पूर्वोत्तरसाहचर्येण [1]परशास्त्रोपकारकत्वस्यैव निर्णयाच्च । 'इक्' इत्यस्य शब्दपरत्वे शङ्काया एवाऽभावाच्चेत्यन्यत्र विस्तरः । एतच्चेति । यत्तु 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे लक्षणप्रतिपदोक्तपरिभाषया दिक्शब्दमुच्चार्य विहितसमासस्य यथा ग्रहणं, तथाऽत्राऽपि 'गुण-वृद्धि-शब्दाभ्यां विहित-गुण-वृद्ध्योर्ग्रहणमि'ति । तन्न । अर्थाऽनवबोधात् । तथाहि लाक्षणिकत्वं विलम्बोपस्थितिकत्वम् । प्रतिपदोक्तत्वं च शीघ्रोपस्थितिकत्वम् । अस्ति च 'दिङ्नामाऽन्यन्तराले' इति समासविधानकाले दिक्शब्दत्वज्ञानम् । तं विना समासविधायकस्याऽप्राप्तेः । 'अनेकमन्यपदार्थे' इति समासप्रवृत्तिकाले न उत्तरादिशब्दवाच्यवाचकानामुपस्थितिः, समासप्रवृत्तौ निमित्तत्वञ्च नेति परिभाषाप्रवृत्तिः सूपपादा । 'त्यदादीनाम' इत्यादौ तु पदपर्यालोचनदशायामेव 'पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षम' इति वाक्यपदीयोक्तरीत्या 'मिदेर्गुण' इत्यादाविव विधानकाले एव गुणादिशब्दानामुपस्थितेः सत्त्वेन बहिरङ्गत्वं न । शब्दवृत्त्योपस्थितत्वेनाऽत्वादिरूपेणैव विधानात् । गुण-वृद्धि-शब्दाभ्यामेव विधानाऽभावाच्च इक्परिभाषाया नोपस्थितिरित्यलम् ।

वस्तुतस्तु वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्त्तते इति तत्त्वम् । अनुवर्त्येति । तयोश्चाऽर्थाऽधिकाराच्छब्दपरत्वम् । 'इक' इति सूत्रे त्वर्थपरता ।

तेनेति । 'अचश्चे'ति सूत्रे ह्रस्वादिग्रहणाऽनुवृत्तिप्रयोजनन्तु 'दिव उत्' 'अष्टन आ विभक्तौ' इति बोध्यम् ।

लघुशब्दरत्नः

**योजनयेति । यद्यपि तदनुवृत्त्यैव सिद्धे, सामर्थ्यात् शब्दव्यापाराऽऽश्रयणेन लभ्यते**

[1] 'परशास्त्रोपकारत्वस्यैव' इति ख. पाठः ।

(७।२।१०२) [1]सः, इमम् ।

**षष्ठ्यन्तमिति ।** सूत्रे षष्ठ्यन्तस्य अनुकरणात् शब्दस्वरूपपरतया नपुंसकात् सोर्लुगिति[2] भावः ।

**पदमिति ।** तच्च सम्भवति सामानाधिकरण्ये 'इगन्तस्याऽङ्गस्ये'-त्यादिक्रमेण सम्बध्यते । मिदेर्गुणः (७।३।८२) मृजेर्वृद्धिः (७।२।११४) इत्यादौ तु सामानाधिकरण्याऽसम्भवात् 'मिदि-मृज्योरवयवस्य इक' इति सम्बध्यते ।

यत्तु–'इक एव स्थाने स्तः' इति प्राचा व्याख्यातम्, यच्च तट्टीका-

---

बृहच्छब्दरत्नः

इक एवेति । 'सार्वधातुकाऽऽर्द्धधातुकयोः' 'सिचि वृद्धिः परस्मैपदेषु' इत्यादौ अलोन्त्यपरिभाषया अङ्गाऽन्त्यस्येकोऽनिकश्च गुणवृद्धयोः प्रसक्तयोः 'इक एवे'ति नियमोऽनेन क्रियते इति भावः ।

---

लघुशब्दरत्नः

मूलोक्तार्थः, तथाऽपि मन्दबुद्धिसाधारण्येन स्फुटत्वाय एवमेवोक्तम् । स इति । अत्र नैव स्यादिति भावः । इममिति । अत्र इकारस्यैव स्यात्, न तु अन्त्यस्येति भावः ।

सोर्लुगिति । अत एव दीर्घो नेति भावः । तच्चेति । 'इक' इति पदं चेत्यर्थः । अनेन 'अत्र सूत्रे पदोपस्थितिपक्ष' इति सूचयति । अचो ञ्णिति (७।२।११५) ओर्गुणः (६।४।१४६) [3]इत्यादौ तु न अस्याः प्रवृत्तिः, लिङ्गस्य श्रुत्यपेक्षया दुर्बलत्वेन प्रथमतः श्रौताऽच्पदार्थाऽऽदिघटितवाक्यार्थबोधे वृत्ते, निर्दिष्टस्थानिकत्वेन उपस्थितस्याऽपि 'इक्'पदस्य वाक्यार्थेऽनन्वयात्[4] । सार्वधातुक (७।३।८४) इत्यादौ तु तदुपस्थितिं विना स्थान्याकाङक्षा-शान्त्यभावेन बोध एव नेति विशेषः । एवञ्च पदश्रुतिनिमित्तैषा पदैकवाक्यतया अन्वयवती अन्तरङ्गा । स्थानषष्ठीत्वनिर्णय उपस्थिताऽलोऽन्त्यपरिभाषाया अनन्त्यस्य गुणव्यावृत्तये वाक्यैकवाक्यतया अन्वय इति, बहिरङ्गा सा । तदाह—इगन्तस्याङ्गस्येत्यादि[5] ।

मिदिमृज्योरवयवस्येति[6] । एवं च स्थानषष्ठीत्वाऽभावनिर्णयेन अलोऽन्त्यस्य (१।१।५२) इत्यस्य प्रवृत्तिरेव नेति भावः ।

---

[1] 'इमं, सः, पन्थाः' इति ङ पाठः । 'सः, इमम्' इति च तत्रैव शोधितः पाठः । 'सः' 'इमं', 'पन्थाः' इति च. पाठः । तत्र 'पन्था' इति हरिताललेपेन निरस्तश्च ।

[2] 'नपुंसकत्वात्सोर्लुक्' इति क. ख. ग. पाठः । 'नपुंसकात्सोर्लुक्' इति ङ. च. पाठः ।

[3] 'इत्यादौ तु लिङ्गस्य श्रुत्यपेक्षया' इति क. ख. ग. पाठः । अग्रे च 'वाक्यार्थे अनन्वयः' इति पाठः । 'नास्याः प्रवृत्ति'रिति पाठः घ. पुस्तके, मुद्रितेषु च ।

[4] 'अनन्वयः' इति क. ख. ग. पाठः ।

[5] 'इगन्ताङ्गस्येत्यादि' इति घ. पाठः ।

[6] 'मिदि' इति क्वचिन्न ।

कृतोक्तम् 'अनियमप्रसङ्गे नियमाऽर्थमिदमि'त्यादि, तत्सर्वं भाष्यविरोधात् उपेक्ष्यम्। तच्छेषपक्षं दूषयित्वा पदोपस्थितिपक्षस्यैव भाष्ये समर्थितत्वादि-

बृहच्छब्दरत्नः

तच्छेषेति। यद्यपि नियमपक्षो न तच्छेषपक्ष इति स्फुटमेव, तथाऽपि तच्छेष-पक्षदूषण-दूषितत्वमस्त्येव। 'मिदेर्गुण' इत्यादावनिक एव प्राप्तत्वेन नियमाऽप्रवृत्तेः।

'तच्छेषे'त्यत्र बहुव्रीहि-तत्पुरुषौ बोध्यौ। 'सार्वधातुकार्द्धधातुकयोरि'त्यत्र 'अङ्गस्य सार्वधातुकार्द्धधातुकयोर्गुणो भवती'त्यवान्तरवाक्यार्थबोधोत्तरं 'स्वस्वनिमि-त्तवशादुपस्थिते गुणवृद्धी इकः स्थाने स्तः,' 'षष्ठीनिर्दिष्टाऽन्त्यादेश' इत्यर्थकं परिभा-षाद्वयम्। तदेकवाक्यतया महावाक्याऽर्थप्रतिपादने विशेषणविशेष्यभावे विवादः। तत्र 'अङ्गस्ये'ति पूर्वमेवाऽन्त्यमलं नीतम् 'अङ्गाऽन्त्यस्य गुण'इति, पश्चादिका अन्त्यो विशेष्यते तदेकपरिभाषा शेषभूता। पश्चादुपस्थितत्वात्, भेदकत्वाद्वा। यदि पूर्व-मिका अङ्गस्य विशेषणात्तदन्तविधिः 'इगन्तस्याऽङ्गस्ये'ति, [1]स च भवन् अलोऽन्त्य-स्येति, तदा द्वितीयः पक्षः। 'मिदेर्गुण' इत्यादौ तु महावाक्याऽर्थाऽसम्भवेन, विनि-गकाऽभावेन च द्वयोः परित्यागे, वृद्धि-गुणौ सर्वादेशौ स्याताम्, तथा च 'मेद्यती'-त्यादिरूपाऽसिद्धिः। इदमेव तच्छेषपक्षे[2] दूषणम्। यत्तु 'इको गुणवृद्धी' 'अलो-ऽन्त्यस्ये'ति परिभाषयोरेकवाक्यत्वं तच्छेषशब्दार्थ' इति। तन्न। 'राजकीयमि'त्यादौ अलोऽन्त्यपरिभाषाया अप्रवृत्त्यापत्तेः। भिन्नदेशे पठितयोः परस्परनिराकाङ्क्षयोः विधिसूत्रोपकारकयोरेकवाक्यताया उपपादयितुमशक्यत्वाच्च।

पदोपस्थितिरिति। तथा च तस्य पदैकवाक्यतयाऽन्वयोऽन्तरङ्गः। 'इको गुणवृद्धी' इति परिभाषाप्रवृत्तौ पदार्थोपस्थितिमात्रं निमित्तम्। 'विधीयेते' इति मूलग्रन्थस्तु अनुवादे प्राप्त्यभावात्फलिताऽर्थकथनपरतया बोध्यः। अलोन्त्यपरि-भाषा तु विधिवाक्येष्ववान्तरवाक्याऽर्थं बुध्द्वा तदैकवाक्यतया सम्बध्यते इति तदन्वयो बहिरङ्गः। अवान्तरवाक्याऽर्थबोधं विना स्थानषष्ठ्या निर्णेतुमशक्य-त्वात्। एवन्तु 'अलोन्त्यस्ये'त्यस्य लिङ्गाऽभावादेवाऽप्रवृत्तिरिति फलितम्।

अत एव 'अलोऽन्त्यस्ये'त्यत्र पदोपस्थितिरितिपक्षे दोषो दुर्वार'इति परास्तम्। भाष्यादावनुक्तत्वाच्च। 'आदेः परस्ये'त्यत्र 'अलः' इत्यस्याऽर्थपरताऽनापत्तेश्च।

लघुशब्दरत्नः

नियमार्थमिदमिति। तत्तद्विधायकैर्विहितयोर्गुणवृद्धयोः अलोऽन्त्यस्य (१।१।५२) इतिवत् इदमपि स्थानिनियमाऽर्थमिति तदाशयः। तत्सर्वं भाष्येति। द्वयोर्नियमयोः सार्वधातुक

[1] 'ततः स च' इति क्व चित्पठ्यते।

[2] 'पक्षदूषणम्' इति ख. पाठः।

त्याहुः। तच्छेषपक्षेऽपि दूषणोद्धारस्तु शब्दकौस्तुभे स्पष्टीकृतोऽस्माभिः।

---

**बृहच्छब्दरत्नः**

अननुवृत्तौ असमस्तकरणवैयर्थ्याऽऽपत्तेश्च। 'द्वीपमि'त्यत्र अप्शब्दस्येत्त्वाऽऽपत्तेश्च। पदद्वयस्योपस्थाप्यत्वात् तदन्वस्य वाच्यत्वेन बहिरङ्गत्वाऽनपायाच्चेति दिक्।

दूषणोद्धार इति। 'पुगन्तलघूपधस्ये'त्यत्र न बहुव्रीहिगर्भो द्वन्द्वः, गौरवात्, किन्तु तत्पुरुषगर्भ-समाहारद्वन्द्वात् षष्ठी। नच 'दमापयती'त्यत्राऽतिप्रसङ्गः। 'पुकि विवक्षिते अन्त्यस्य गुण' इत्यर्थाऽऽश्रयेण आकारे गुणाऽप्रवर्त्तनात्। 'चतुर्मुखः' 'कुण्डं रथेने'त्यादौ अनुनासिक-परसवर्णाऽप्रवृत्तेरिव गुणाऽप्रवृत्तेः। अन्तरङ्गत्वेन यलोपप्रवृत्तेश्च। 'क्नोपयती'त्यत्र 'चेलेः क्नोपेरि'ति निर्देशात्समाधेयम्। 'अत उपधाया' इति वृद्धेर्दुर्वारत्वाच्च। अत एव 'यापयती'त्यत्र न दोषः। सन्निपातपरिभाषया सिद्धेश्च। 'मृजेर्वृद्धिरि'त्यत्र 'अच' इत्यपकृष्यते। नचैवम् 'अमार्ट्' इत्यत्र वृद्धिप्रसङ्गः। 'अन्त्यबाधेऽन्त्यसदेशस्ये'तिन्यायात्। अङ्गाऽऽक्षिप्तेन प्रत्ययेनाऽचो विशेषणाच्च। अत एव तदपवादपक्षे न दोषः। तुनाऽरुचिर्बोधिता। 'भिन्न'-मित्यादौ इग्लक्षणत्वाऽभावेन गुणनिषेधाऽनापत्तिः। अथ च'त्रसिगृधिधृषिक्षिपेः क्नुः' 'मृडमृदगुध' 'रुदविदमुख' इति कित्त्वसामर्थ्येन अनिग्लक्षणत्वेऽपि निषेध' इति ज्ञाप्यते, तर्हि पदोपस्थितिपक्ष एव ज्ञाप्यताम्। एवं हि ज्ञापकमूलकं वाक्याऽन्तरं न कल्प्यमिति लाघवम्। एतेन 'मृष्ट' इत्यत्र 'अचि क्ङिती'ति योगविभागमाश्रित्य

---

**लघुशब्दरत्नः**

(७।३।८४) इत्यादौ अविरोधेन 'इग्रूपस्य अन्त्यस्ये'त्यर्थो वाच्यः, 'अन्त्यस्य इक' इति वा। उभयथाऽपि द्वयोर्विशेष्यविशेषणभावसत्त्वात् तच्छेषपक्षे पर्यवसानम्। 'सः=अलोऽन्त्यस्य (१।१।५२) इति नियमः, शेषः=विशेषणमस्ये'ति तदर्थः। 'तस्य=अलोऽन्त्यस्य (१।१।५२) इत्यस्य [१]अयं विशेषणमि'ति वा। एवञ्च मिदेर्गुणः (७।३।८२) इत्यादौ परस्परविरोधात् अनयोस्त्यागे, सर्वाऽऽदेशगुणाऽऽपत्त्या तद्विरोध इति भावः। तदाह—तच्छेषपक्षमिति (६९ पृ०)।

दूषणोद्धारस्त्विति। मिदेः (७।३।८२) इत्यत्र 'मिद ईर्मिदिः, तस्ये'ति व्याख्यानान्न दोषः। पुगन्त (७।३।८६) इत्यत्र 'पुकि अन्तः' 'लघ्वी उपधे'ति व्याख्येयमित्यादि भाष्योक्त-दूषणोद्धारस्त्वित्यर्थः। [२]न च 'यापयति' 'क्ष्मापयती'त्यादौ दोषः। गुणे कृते वृद्ध्या रूपसिद्धेः। अत एव समयाच्च यापनायाम् (५।४।६०) इति निर्देशः सङ्गच्छते। तदाह—कौस्तुभे स्पष्टीकृत इति। नन्वेवं तर्हि किमर्थं प्राचां पक्ष उपेक्षित इति चेत्। शृणु—लघू-

---

[१] 'अयम्' इति घ. नास्ति।

[२] 'न च यापयतीत्यत्र दोषः। संनिपात-परिभाषया वारणात्। गुण कृते वृद्ध्या अदोषाच्च। अत एव 'क्ष्मापयती'त्यत्र न दोषः। अत एव समयाच्च यापनायाम्' इति घ. पाठः।

अचां मध्य इति। यत्तु प्राचोक्तम् 'अन्त्यादचः पर' इति। तन्न। शे मुचादीनाम् (७।१।५९) इत्यादौ अन्त्यस्य अचोऽसम्भवात्।

तस्यैवान्तावयव इति। तेन 'त्रपूणी'त्यादौ अङ्गस्य नान्तत्वेन दीर्घः सिद्धः। परादित्वे स न सिध्येत्। अभक्तत्वे तु 'वहंलिहः' इत्यत्र

---

बृहच्छब्दरत्नः

नियमान्न दोषः' इति परास्तम्। गौरवाऽऽपत्तेः, विपरीतनियमाऽऽपत्तेश्च। 'ऋद्दशोऽङि गुणः' 'स्थूलदूर' इत्यादौ पठिताऽऽनुपूर्वीमादाय समाधेः कर्त्तुमशक्यत्वाच्च।

यत्तु 'इक इत्यस्याऽर्थपरत्वमङ्गीकृत्य 'गुणवृद्धी इकः स्थाने स्त' इत्यर्थाऽङ्गीकारेऽपि स्थानषष्ठ्याः प्रवृत्तौ निमित्तत्वे मानाऽभावेन, पदजन्यपदार्थोपस्थितेरेव प्रवृत्तौ निमित्तत्वे बाधकाऽभावेन चाऽलोन्त्यपरिभाषाऽपेक्षया 'इको गुणवृद्धी' इत्यस्याऽन्तरङ्गत्वमस्त्येवेति न कश्चिद् दोष' इति। तन्न। 'गुणवृद्धी इकः स्थाने स्त' इत्यवान्तरवाक्यार्थोत्पत्तिकाले 'मिदेः स्थाने गुणो भवती'त्याद्यवान्तरवाक्यार्थानामनुत्पत्तौ मानाऽभावादुक्तपक्षे एवाऽन्तर्भावाऽऽपत्तेरिति दिक्। सूत्रद्वयाऽनुवृत्त्यैव सिद्धौ गुणवृद्धिग्रहणफलन्त्वग्रे निरूपयिष्यामः। अन्त्यस्येति। 'अनिदितामि'ति ज्ञापकात् इदित्सु दोषाऽभावेऽप्यत्राऽलोन्त्यपरिभाषया अन्त्यस्य स्यादिति भावः। न च मित्करणसामर्थ्यादन्त्याऽङ्गविकलस्य प्रवृत्तिरस्त्विति वाच्यम्। 'अच' इत्यङ्गविकलस्य प्रवृत्तेरापादयितुं शक्यत्वात्। मित्करणस्य 'ज्ञानानी'त्यादौ चरितार्थत्वाच्च।

न च सूत्रे इव प्राचां विवरणेऽपि 'अच' इति निर्धारणे षष्ठी, जातौ चैकवचनमिति वाच्यम्। 'पर' इत्यस्याऽन्त्यादित्यत्राऽन्वयेन व्यवहिताऽन्वयाऽऽपत्तेरित्यलं क्षुद्रोपद्रवेण।

यद्यपि 'शे मुचादीनामि'त्यादीनां 'मिदचोऽन्त्यात्पर' इत्यनेन सह एकवाक्यता युक्ता, तथाऽपि 'रुधादिभ्यः श्नमि'त्यत्र भिन्नवाक्यतैवेति तिङन्ते निरूपयिष्यामः। तेन यमुद्दिश्य मिद्विहितस्तदवयवत्वेन,[1] अन्त्याचोऽवयवत्वेन वा। नचैवम्

---

लघुशब्दरत्नः

पद्यांशे इक्परिभाषाऽनुपस्थितौ अनिग्लक्षणत्वाद् 'भिन्नमि'त्यादौ गुणनिषेधाऽनापत्तिभिया स उपेक्षित इति। क्नोः कित्त्वस्य अनिग्लक्षणत्वेऽपि गुणनिषेधप्रवृत्तिज्ञापकत्वाऽऽश्रयणे तु तस्य पदोपस्थितिपक्षज्ञापकत्वमेवोचितमिति दिक्।

इत्यादाविति। आदिना झलन्तलक्षणो नुम्, इदितो नुम् (७।१।५८) इत्यादि च। अचोऽसम्भवादिति। नुमो मित्त्वं तु 'ज्ञानानी'त्यादौ चरितार्थमिति, मुचादौ अन्त्यस्यैव स्यादिति भावः। दीर्घः सिद्ध इति। 'तत्'शब्देन यस्य विहितः स समुदायः परामृश्यते इति भावः। यद्यपि 'तस्याऽन्त्याऽचः' इति व्याख्यानेऽपि 'भविते'त्यादौ तासवयवेटो लघू-

---

[1] 'तच्च तदवयवत्वेन, अन्त्याऽचोऽवयवत्वेन वा' इति पाठः स्यात्।

वहाभ्रे लिहः (३।२।३२) इति खशि, अरुर्द्विषद् (६।३।६७) इति मुमि, मोऽनुस्वारो न स्यात्, अपदान्तत्वात् ।

यत्तु—'अभक्तत्वे 'त्रपूणि' इति दीर्घो न स्यादिति, तत् 'तदादिग्रहणं स्यादिनुमर्थमि'त्यङ्गसंज्ञासूत्रस्थवार्त्तिकेनैव दूषितप्रायम् ।

**स्थानेयोगेति ।** 'स्थानेन योगोऽस्या' इति विग्रहः । निपातनात् एत्वम् ।

---

**बृहच्छब्दरत्नः**

अङ्गस्य नान्तत्वं दुरुपपादम् । अवयवाऽवयवस्य समुदायाऽवयवत्वात् । नचैव-मुत्तरपदस्याऽपि नान्तत्वेन 'पञ्चारत्नीनी'त्यादौ द्विगुस्वराऽनापत्तिरिति वाच्यम् । उत्तरपदस्य शब्दादनुपस्थितत्वात् । किञ्चाऽन्तरङ्गत्वान्नुमः पूर्वं स्वरस्य प्रवृत्तेः । अकृतव्यूहपरिभाषा तु न प्रवर्त्तते । अत एव 'धानाशष्कुलिनी' 'निर्वाराणसिनी' इत्यादौ ह्रस्वसिद्धिरि'ति कश्चित् । निपातनादिति । पूर्वोत्तराऽन्वयि । तथाच व्यधिकरणबहुव्रीहिसिद्धिः । यत्तु 'अन्तरङ्गत्वात्, 'स्थानिवदादेश' इति ज्ञापकाच्च स्थानरूपाऽर्थलाभे 'षष्ठी स्थानेयोगे'ति सूत्रं 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'त्यर्थपर-मित्याहुः । तन्न । 'स्वं रूपमि'तिसूत्रेण, प्रकाराऽन्तरेण वा 'जराया जरसन्यतरस्या-मि'त्यादौ पठितानुपूर्व्या एव वृत्त्योपस्थितत्वेन, तत्रैव सुबर्थाऽन्वयेनाऽधिकानुपूर्व्याः प्राप्त्यभावेनोक्तन्यायसिद्धौ सूत्रवैयर्थ्यात् । नच 'येन विधिस्तदन्तस्ये'ति सूत्रेण तदन्तस्याऽपि वृत्त्योपस्थितत्वेन तत्रापि विभक्त्यर्थाऽन्वय आवश्यक इति वाच्यम् । 'जरारूपाऽङ्गस्य स्थाने' इत्यर्थमुपजीव्य 'येन विधिरि'ति सूत्रस्य प्रवृत्तत्वेन तद्-विरोधेनाऽवयवद्वारा निर्जरादिशब्दानां स्थानित्वकल्पनेऽपि, अनुच्चारितवर्णनिवृत्तौ मानाऽभावात् । अत एव 'उदोष्ठ्यपूर्वस्ये'त्यादावोष्ठ्यादिकं पदार्थैकदेश[1]ऋका-रादीनां विशेषणम् । अत एव सागमकस्याऽऽदेशाऽप्रवृत्तिः । स्थानिवद्भावे तु

---

**लघुशब्दरत्नः**

पधाऽङ्गाऽवयवत्वेन प्राप्तस्य गुणस्य दीधीवेवीटाम् (१।१।६) इति निषेधाऽऽरम्भेण, लोक-व्यवहारेण च अवयवाऽवयवस्य समुदायाऽवयवत्वाऽङ्गीकारात् अत्र न दोषः, तथाऽपि तथा न व्याख्यातम्, 'पञ्चाऽरत्नीनी'त्यादौ पदस्य विभज्याऽन्वाख्याने उत्तरपदस्याऽपि नान्तत्वा-ऽऽपत्तौ, इगन्त (६।२।२९) इति स्वराऽनापत्तेरिति स्पष्टं भाष्यादौ ।

'त्रपूणी'त्युपलक्षणम्, 'ता ता पिण्डानामि'ति नलोपसिद्धेः । 'तानि तानि' इत्यर्थे शेश्छन्दसि (६।१।७०) इति शेर्लोपे तदुदाहरणम् ।

**स्थानेनेति ।** स्थानशब्दाऽर्थेनेत्यर्थः । 'तन्निरूपितसम्बन्धः षष्ठ्यर्थो, न तु तद्रूपः सम्बन्धस्तदर्थ' इति–अनेन ध्वनयति । एत्वमिति । व्यधिकरणबहुव्रीहिरपि अत एवेति बोध्यम् ।

---

[1] 'ऋकारादीनां स्थानित्वकल्पने विशेषणम्' इति ख-पाठः ।

**अनेकविधमिति । स्थाना-ऽर्थ-गुण-प्रमाणकृतमित्यर्थः । बलीय- इति । तेन 'चेता' 'स्तोता' इत्यत्र प्रमाणत आन्तर्यवान् अकारो नेति भावः ।**

**'तस्मिन्' इति सप्तम्यन्तानाम् अनुकरणम् । 'निः'शब्दो नैरन्तर्यपरः ।**

---

**बृहच्छब्दरत्नः**

स्थानिबुद्ध्यैवाऽऽदेशे कार्यप्रवृत्त्या न 'निर्दिश्यमानस्ये'ति न्यायबाधः । अस्तु वा भाष्योक्तरीत्या 'षष्ठी स्थानेयोगे'तिसूत्रनिष्पन्ना, वचनरूपा वा 'निर्दिश्यमानस्ये'ति परिभाषा । सा च बहिरङ्ग-'पदाऽङ्गाऽधिकारे' इत्यादीनां बाधिकेत्यवश्यम् अभ्युपगन्तव्यमित्यन्यत्र विस्तरः ।

स्थानार्थेति । 'वतण्डी चाऽसौ युवतिश्चे'ति विग्रहे वतण्डाऽपत्यवाचिनो 'वतण्डी'शब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति । 'पाक' इत्यत्र 'चजोः कु घिण्ण्यतोरि'त्यनेन चकारस्याऽल्पप्राणस्याऽघोषस्य[1] तादृश एव ककारः । 'अमुम्' 'अमू' इत्यादौ 'अदसोऽसेरि'ति ह्रस्वस्य ह्रस्वो, दीर्घस्य दीर्घ उकारः । यत्तु भाष्ये 'अनान्तर्यमेवाऽऽन्तर्यमि'त्युक्तं, यच्च व्याख्यातृभिः–'चतुर्विधमान्तर्य'मित्यत्र न मानमस्ति, प्रत्युत 'सोष्मणः सोष्माणः' इति भाष्यात्, 'ऐचोश्चोत्तरभूयस्त्वादि'ति- भाष्याच्च अनियम एव लभ्यते' इत्युक्तम्, तत्सर्वम् 'उरण् रपर' इतिसूत्रेण प्रसङ्गा- ऽवस्थायामेव रत्वस्य विधानात्, 'सोष्मण' इति भाष्येण गुणकृताऽऽन्तर्यस्य, 'ऐचोश्चोत्तरभूयत्वादि'ति भाष्येण स्थानकृताऽऽन्तर्यस्य चोपपादितत्वाच्चोपेक्ष्यम् ।

तस्मिन्निति निर्दिष्टे पूर्वस्य । 'तस्मिन्नि'ति न शब्दपरम् । फलाऽभावात् । न च 'तस्मिन्नणि चे'त्यत्रैवोपस्थितिः फलम् । व्यावर्त्याऽभावात् । न च 'हे यौष्माकीण ! अस्मभ्यं देहि' 'हे आस्माकीन, युष्मभ्यं [2]ददाती'त्यादि व्यावर्त्यम् । 'एङ्ह्रस्वात्सम्बुद्धेरि'त्यादाविवाऽङ्गाऽऽक्षेपेण निर्वाहात् । तत्र च निरूपकाऽपेक्षा- यामाक्षेपकखञणोः सम्बन्धः । पूर्वग्रहणस्यैवाऽत्र कर्त्तुं युक्तत्वाच्च । इतिशब्देनाऽर्थ- परत्वाच्चेति मनसि निधायाऽऽह–सप्तम्यन्तानामिति । 'सप्तम्यन्तार्थानामि'त्यर्थः ।

---

**लघुशब्दरत्नः**

गुणप्रमाणेति । प्रमाणस्य ह्रस्वत्वादेर्गुणत्वेऽपि, 'ब्राह्मणवसिष्ठ'न्यायेन पृथगुक्तिः । 'गुण'शब्देन उक्तत्रितयाऽतिरिक्तं धर्ममात्रम् । तेन 'अनान्तर्यमेव एतयोरान्तर्यमि'त्यादि- स्थानेऽन्तरतमसूत्रस्थभाष्येण न विरोधः । अन्तरतमाऽभाव एव गुणविधौ ऋकाराऽकारयोः सादृश्यमिति तदर्थः ।

बाह्यानां विवारादीनां साक्षात् वर्णाऽवृत्तित्वेऽपि औपचारिकं गुणत्वं बोध्यम् ।

अनुकरणमिति । 'अची'त्यादिसप्तम्यन्ताऽर्थकस्य स्वतन्त्र'तत्'शब्दस्य निर्देशः,

---

[1] 'घोषस्य' इति क. ख. पाठः ।

[2] 'ददामि'ति इति क. ख. पाठः ।

१०

**दिशिः उच्चारणक्रियः। 'अचि यण्' इत्युक्ते अव्यवहिते, व्यवहिते च सति**

बृहच्छब्दरत्नः

'अची'त्याद्यर्थपरं 'तस्मिन्नि'ति। तथा च परिभाषोपस्थितौ सप्तम्यन्तमेव लिङ्गम्। इदमेवाऽभिसन्धाय सूत्रविवरणे-'सप्तमीनिर्देशेन विधीयमानमि'त्युक्तं मूले।

अचि यणित्युक्ते इति। मूले संहिताऽधिकारस्थ-परिभाषाविषयीभूतस्य प्रथम-मुपन्यासेनाऽत्रोपन्यासः। अयम्भावः-'इको यणि'त्यादौ 'यस्य च भावेने'ति सप्तमी। अश्रूयमाणक्रियत्वादन्तरङ्गत्वादस्त्यर्थलाभः। यद्वा औपश्लेषिकेऽधिकरणे सप्तमी। यद्यप्युक्तरीत्या सप्तम्यन्तानामचीत्यादीनां 'यण् भवती'त्यादिभावनायामेवाऽन्वयः, तथापि पूर्वशब्देन न भावना गृह्यते। तस्या अर्थरूपत्वेन शब्देन सह पौर्वापर्या-ऽसम्भवात्। इक्शब्दोत्तरषष्ठ्या बोधितसम्बन्धस्य 'पूर्वस्ये'त्यनेनाऽनुवादे लाघवाच्च।

एतेन 'तद्विशेषणं यणादिकमि'त्यपास्तम्। लक्ष्यसंस्कारवेलायां तदभावेन दैशिकपौर्वापर्याऽसम्भवाच्च। तेषां कार्यस्याऽविधानाच्च। किन्तु तद्विशेषणम् इगादिकं गृह्यते। ततोऽधिकन्तु मानाऽभावान्न गृह्यते इति परिषायास्तात्पर्यात्[१]।

इदमेवाऽभिसन्धाय 'अचीत्यादिकमिगादीनां विशेषणमि'ति प्राचां व्यवहारः। भावनाऽपि मुख्यविशेष्यैव गृह्यते। अत एव 'क्ङिति चे'ति सूत्रे 'गुणः कृताऽऽत्म-संस्कारः प्रधानोपकाराय महते प्रभवती'ति न्यायेन'इको गुणवृद्धी क्ङिति सति प्राप्नुत' इति प्राप्तिक्रियायामन्वये, निर्दिष्टपरिभाषाया अप्रवृत्तौ [२]'सिद्धसाध्यसमभिव्याहारे सिद्धं साध्याये'ति न्यायेन निमित्तत्वपर्यवसानमिति पितामहचरणाः।

इदमेवाऽभिप्रेत्य 'विधौ परिभाषा, नाऽनुवादे' इत्युद्घोषः। 'इको यणची'त्यादौ विवक्षितेऽर्थे सप्तम्या लक्षणा, तत्र च प्रकृतसूत्रं तात्पर्यग्राहकमि'त्यपि वदन्ति।

'यत्तु 'सति-सप्तमीपक्षे न परिभाषाप्रवृत्तिरि'ति 'श्नान्नलोप' इति सूत्रभाष्योक्तं, तत्तु 'अनुनासिकस्ये'ति सूत्रात् 'क्ङिती'त्यनुवर्त्तते। 'क्ङिति सती'त्यर्थः। भ्रमः

लघुशब्दरत्नः

न स्वरूपपरम्, व्याख्यानात्, बहुलक्ष्यसंस्काराऽनुरोधाच्च। सप्तमी तु 'सप्तम्यन्तानामेव तच्छब्दार्थत्वमि'ति बोधनाय, तद्बोध्याऽर्थस्य 'निर्दिष्टे' इत्यनेन सामानाधिकरण्याय चेति भावः। शब्दाऽर्थकत्वेन तु अनुकरणत्वव्यवहार इति बोध्यम्।

दिशिरुच्चारणेति। अत एव 'जनपदे लुप्' (४।२।८१) इत्यादौ न दोषः। न हि अर्थ उच्चारितो, नाऽपि शब्दस्य निरन्तर इति भावः। अचि यणित्युक्ते इति। 'अचि उपश्लिष्टस्य यणि'त्युक्ते इत्यर्थः। इदं संहितायाम् (६।२।७१) इति सूत्रे भाष्ये स्पष्टम्।

[१] 'तात्पर्यम्' इति क. पाठः।

[२] 'सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यते' इति परिभाषास्वरूपम्।

**प्राप्तम् 'अव्यवहिते एवे'ति, पूर्वस्य, परस्य च प्राप्तं 'पूर्वस्यैवे'ति च**

बृहच्छब्दरत्नः

शित्करणसामर्थ्यात्, उत्तरसूत्रे 'क्ङिति'ग्रहणसामर्थ्यात् पूर्वत्र निर्दिष्टपरिभाषाया अप्रवृत्तिः। सत्ता च प्रथमाऽतिक्रमे कारणाऽभावेन, नलोपस्थानिकनकारात्पूर्वेवेत्यभिप्रायेण प्रकृतमात्रविषयत्वात्, पूर्वपक्षस्थत्वात्, मानाऽभावाच्चोपेक्ष्यम्।

व्यवहिते चेति। अन्यसहित उपश्लेषः, संहिता चाऽस्त्येवेति भावः। अत एव तीरादीनां व्यवधानेऽपि प्रवाहमादाय 'गङ्गायां[1] घोषः' 'गङ्गासम्बन्धी घोष' इत्यादिव्यवहाराः सङ्गच्छन्ते। 'इगचोरेवोपश्लेषः', 'इगचोरेव संहिते'त्यत्र न किञ्चिन्मानम्। अत एव 'कीरि'त्यादावित्त्वं, सुबुत्पत्तिश्च, 'आदर्शेने'त्यादौ णत्वाऽभावाऽर्थमुपायाऽन्तरकल्पना चेत्यादि सङ्गच्छते।

व्यवधानञ्चाऽत्र न वर्णशून्य-काल-कृतं व्यावर्त्त्यम्। 'तस्मिन्नि'त्यादिना वर्णस्यैवोपस्थितत्वात्। एतेन 'वर्णाऽन्तरेणेति निर्मूलमि'त्यपास्तम्। संहिताऽधिकारेण तु [2]वर्णशून्यकालकृतं व्यवधानं व्यावर्त्त्यते। सामर्थ्यात्। संहिताशब्दस्य विशकलितेषु अप्रसिद्धत्वाच्च। एतदधिकारबहिर्भूतानां वर्णशून्यकालव्यवाये प्रवृत्तिर्निर्विघ्नैव। अत एव 'अग्नाविष्णू इत्यग्नाविष्णू' इत्यादाववग्रहेऽप्यानङादयः, 'अग्निमीळे' इत्यत्र पदविभागेऽपि निघातः, 'ते नो रासन्तामि'त्यादौ नसादयश्च सिध्यन्ति। अत एव 'गतमहो, रात्रिरेषा' '[3]शुभास्ते नो भवन्त्वि'तिलौकिकोदाहरणे अशक्त्यादिना कालव्यवायेन पठ्यमानेऽपि नाऽसाधुत्वमिति बोध्यमित्याद्यग्रे निरूपयिष्यामः।

ननु लाघवादव्यवहितस्यैव ग्रहणं भविष्यति, किं निर्दिष्टपदेन। नच 'जनपदे लुबि'त्यादिवारणाऽर्थम्, निःशब्दो बहिर्भावे वर्त्तते, शब्दाच्च शब्द एव बहिर्भूत इति वाच्यम्। 'स्वं रूपमि'ति परिभाषाया [4]अत्र प्राप्त्या तयैव वारणात्। अर्थेन पौवापर्याऽसम्भवाच्च। जनपदवाचिनि लक्षणायां मानाऽभावाच्च। लुप्स्थानिभूतप्रत्ययस्याऽर्थाऽऽकाङ्क्षायां तत्रैवाऽन्वयस्य युक्तत्वाच्च। 'तस्मिन्नितिशब्दे पूर्वस्ये'तिन्यासेनेष्टसिद्धेश्चेति चेन्न। बहुलद्व्यसंस्काराऽनुरोधेन व्यवहितस्याऽप्यापत्तेः। 'अचः परस्मिन्पूर्वविधौ' इत्यत्र व्यवहितस्याऽपि ग्रहणात्। स्पष्टतया नियमद्वयलाभाऽर्थं तथोक्तत्वाच्च। अत एव 'रषाभ्यामि'त्यादौ 'व्यवायेऽपी'ति योगविभागेन निर्दिष्टाऽङ्गबाधेऽपि, व्यवहितगर्भ उत्तरांऽशः प्रवर्त्तते एव। तदाह—पूर्वस्यैवेति। नेयं स्थानषष्ठी। तत्तद्विधिवाक्यरेव सम्बन्धस्य निर्धारितत्वेन, 'षष्ठी स्थाने' इत्यस्याऽप्राप्तत्वात्। एवञ्च 'अतः सकाशात् आने सति मुगागम' इति सूत्राऽर्थे निष्पन्ने,

[1] 'गङ्गायां घोषः' इति ख. नास्ति।

[2] 'वर्णशून्यदत्तं कालकृतं' इति क. ख. पाठः।

[3] 'पयस्ते' इति क. ख. पाठः।

[4] 'अप्राप्त्युपायेऽवधारणात्' इति क. ख. पाठः।

**नियम्यते। 'अव्यवहितस्ये'ति तु फलितार्ऽर्थकथनम्।**

बृहच्छब्दरत्नः

आगमिसन्देहे प्राप्ते, 'इको यणची'त्यत्रैव पूर्वसम्बन्धित्वं निर्णीयते। आर्थिका अवयवाऽवयविकल्पनाऽपि श्रुतशब्दाऽविरोधेनैवेत्याद्यग्रे निरूपयिष्यामः।

अत एव 'सुबामन्त्रिते' 'गाङ्कुटादिभ्य' इत्यादौ न दोषः। एतेन भाष्यकारोक्तषष्ठीप्रक्लृप्तिपक्षो निरस्तः। षष्ठीपदाऽनुवृत्तौ गौरवाच्च। 'आने मुगि'त्यत्र 'आगन्तूनामन्ते सन्निवेश' इति न्यायेन 'अत' इत्यस्य सप्तम्यन्तोत्तरत्वात्, [1]व्यवहितत्वाच्च, तत्प्रतिपादके लक्षणाऽऽपत्तेश्च। 'इको यणची'त्यादौ षष्ठ्याः श्रुतत्वेन परिभाषाप्रवृत्त्यनापत्तेश्च। न च षष्ठीमनूद्य निर्दिष्टांऽश एव विधीयते इति वाच्यम्। 'आने मुक्' 'शि तुगि'त्यादौ षष्ठीकल्पनाऽनापत्तेः। क्वचिदुद्देश्यत्वं, क्वचिद्विधेयत्वमिति वैरूप्यकल्पनञ्च निर्मूलम्। एवञ्च 'नेड् वशि कृति' 'तस्मान्नुडची'त्यादौ 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषाप्रवृत्तिः सुलभा।

नियम्यते इति। अयम्भावः– 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'त्यादिभिः प्रतियोगम् उपस्थित्यभावेऽपि अनिष्टविषयेषु व्यावर्त्यते।

अत एवोक्तं 'षष्ठी स्थानेयोगे'ति सूत्रे भाष्ये—'अधिकारो नाम त्रिप्रकारकः। कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति। यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माऽभिज्वलयती'ति। अत्र च 'अधिकारशब्देन परिभाषोच्यते' इति कैयटे स्पष्टम्। 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति सङ्ग्राहकवाक्यात् 'इको यणची'त्यादीनामर्थविशेषव्यवस्थापकानि वाक्यान्युपप्लवन्ते। तेषाञ्च 'वान्तो यि प्रत्यये' इत्याद्यवान्तरवाक्यैरेकवाक्यता। 'यि प्रत्यये अव्यवहिते ओदौतोरवावौ', 'अव्यवहिते उदः परस्य स्थास्तम्भोरि'त्यादिवाक्याऽर्थः। स्पष्टञ्चेदं 'स्थानेऽन्तरतम' इत्यादिसूत्रे भाष्यकैय्यटयोः। उभयथाऽपि व्यवहितादौ अप्रवृत्त्या 'नियम्यते' इत्युक्तिरव्याहतैव।

यद्यपि परिभाषा विध्यङ्गभूताः, ताभिरुपस्कृतो विधिर्निष्पन्नमूर्तिकः सन्नुदाहरणेषु प्रवर्त्तते। तथा च सति व्यवहितादौ न प्रवृत्तिः, अत एव 'चतुर्मुख' इत्यादावनुनासिको न, 'एतन्मुरारिरि'त्यादौ मकारादिव्यावृत्त्यर्थं 'स्थानेन्तरतम'-परिभाषया उपस्कारस्याऽऽवश्यकत्वेन रेफस्य व्यक्तिपक्षेऽपि लक्ष्याऽभावः, तथापि 'यदि परिभाषासूत्रं न स्यात्तदा केवल एव विधिरुदाहरणेषु प्रवर्त्तेत, तथा च व्यवहितादावपि प्रवृत्तिः स्यात्, सा चाऽनेन व्यावर्त्यते' इत्यभिप्रायेण 'नियम्यते' इत्युक्तम्।

अत एव भाष्ये परिभाषाणां नियमतया व्यवहारः कृतः। परिभाषाणां

लघुशब्दरत्नः

फलितेति। **सप्तम्यन्ताऽर्थे अव्यवहिते षष्ठ्यन्तार्थोऽपि अव्यवहित एवेति भावः।**

[1] 'अव्यवहितत्वात्' इति क. पाठः।

**परस्य यदिति। 'तस्मादित्युत्तरस्याऽऽदेरि'ति तु न सूत्रितम्।**

बृहच्छब्दरत्नः

न परिसङ्ख्याविधिरूपनियमत्वम्, अपि तु 'व्रीहीनवहन्ती'तिवदार्थनियमत्वम्। अत एव च 'संज्ञा च परिभाषा च विधिर्नियम एव चे'तिकारिकायां परिभाषापदं पृथक् पठितमिति प्रपञ्चितमस्माभिः सूत्रशिरोमणौ। षष्ठ्यन्त-सप्तम्यन्तयोः सामानाधिकरण्यमयुक्तमित्याशङ्क्याऽऽह—फलितार्थेति (७६ पृष्ठे)।

तस्मादित्युत्तरस्यादेरिति। तत्र 'आदेरि'ति पृथक् वाक्यम्। तत्र 'उत्तरस्ये'त्यनुवर्त्तते। सा च स्थानषष्ठी। 'षष्ठी स्थाने' इत्यस्य प्राप्तेः। 'स्थाने' इत्यनुवर्त्तनाच्च। अन्यत्र फलाऽभावात् 'स्थाने' इत्यर्थाद्वा लब्धम्। तत्र चाऽयमर्थः—'पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसम्बन्धि, उत्तरस्य स्थाने विधीमानमादेर्बोध्यम्'। वाक्यभेदसामर्थ्यात् आदेरित्यंशं विनाऽपि 'गाङ्कुटादिभ्य'इत्यादावंशाऽन्तरस्य प्रवृत्तिः।

इदञ्च 'तस्मादित्युत्तरस्याऽऽदे'रि'त्यसमस्तन्यासकरणेन ज्ञाप्यते। न चैवमादेरित्यंशस्याऽपि अंशाऽन्तरं विनाऽपि 'नित्यं ङित' इत्यादौ प्रवृत्तिर्दुर्वारेति वाच्यम्। 'आदेरि'तिवाक्याऽर्थबोधकाले तस्योत्पन्नत्वेन त्यागाऽयोगात्। प्रत्यासत्त्या पूर्ववाक्यप्रापिताऽऽदेशस्यैव ग्रहणाच्च। यथान्यासेऽपि तन्त्रादिना, परशब्दाऽनुवर्त्तनाद्वा उक्ताऽर्थाऽऽश्रयणम्। ध्वनितञ्चेदं 'च्लेः सिच्' 'अनेकाल् शिदि'त्यादौ भाष्य-कैय्यटयोः। 'नित्यं ङित' इत्यत्र 'धातोरि'त्यस्य यथा न सम्बन्धस्तथाऽग्रे निरूपयिष्यामः।

न सूत्रितमिति। 'स्वं रूपं शब्दस्याऽशब्दसंज्ञे'ति सूत्रात्पूर्वमि'ति शेषः। न च 'अनेकाल् शित्सर्वस्ये'ति सूत्रात्पूर्वमि'ति शेषः। 'अनेकाल् शिदि'ति सूत्रस्य परत्वेन इष्टसिद्धौ 'आदेरित्यंशस्ये'त्याद्यग्रिमग्रन्थविरोधात्। वस्तुतस्तु 'अनेकाल् शिदि'तिसूत्रात्पूर्वं सूत्रयितुमेवाऽशक्यम्। 'निर्दिष्ट'ग्रहणाऽनुवृत्त्यनापत्तेः। 'ङिच्चे'त्यादिसाहचर्येण 'सप्तमी-पञ्चमीनिर्देशे षष्ठीनिर्दिष्टयोः पूर्व-परयोः स्थाने कार्यं बोध्यमि'त्यर्थाऽऽपत्तेश्च। 'स्वं रूपं शब्दस्याऽशब्दसञ्ज्ञा', 'अणुदित्सवर्णस्य चाऽप्रत्ययः', 'तपरस्तत्कालस्ये'त्यत्र 'निर्दिष्टस्ये'त्यस्य सम्बन्धाऽर्थं तत्र पाठस्याऽऽवश्यकत्वाच्च। यत्तु 'तस्मादित्युत्तरस्ये'त्यस्य 'अनेकाल् शित्सर्वस्ये'त्यनेन बाधः स्यात्। तथा च 'ब्राह्मणा अष्टौ' इत्यत्र ब्राह्मणशब्दोत्तरजस[1] औशापत्तिरि'ति। तन्न। जश्शस्भ्यामाक्षिप्तप्रकृतेरङ्गस्य च सन्निधानात् 'अष्टन्'रूपस्यैव ग्रहणात्।

लघुशब्दरत्नः

न सूत्रितमिति। 'स्वं रूपम् (१।१।६८) इत्यतः प्रागि'ति शेषः। तत्र 'आदेरि'ति पृथग् वाक्यम्। तत्र 'उत्तरस्ये'ति अनुवर्तते। स्थानषष्ठी चेयम्। 'पञ्चमीनिर्देशेन यत् कार्यं तत् उत्तरसम्बन्धि,' 'उत्तरस्य स्थाने विधीयमानं च आदेर्बोध्यमि'ति वाक्याऽर्थद्वयम्।

[1] 'जश्शसोरौशापत्तिः' इति ख. पाठः।

**'आदेरि'त्यंशस्य सर्वाऽऽदेशबाधकत्वाऽऽपत्तेः। सिद्धान्ते तु परत्वात् सर्वाऽऽदेशत्वं बाधकमित्यनुपदमेव वक्ष्यति।**

**अनेकाल् (१।१।५५)। शित उदाहरणम्—इदम इश् (५।३।३)। इतः।**

---

बृहच्छब्दरत्नः

'सर्वस्ये'त्यस्य प्रवृत्तावपि किम् पूर्वस्य, उत परस्येति सन्देहस्य सत्त्वेन परिभाषाप्रवृत्तेरावश्यकत्वेन, युक्तत्वेन च बाधस्य निरूपयितुमशक्यत्वाच्च। विषयभेदेन विरोधाऽभावाच्च। 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'तस्मादित्युत्तरस्ये'ति-सूत्रद्वयाऽविषये[1] 'अनेकाल् शित्सवस्ये'त्यस्याऽचारितार्थ्याच्च। चारितार्थ्ये तु यथान्यासे वैपरीत्यं दुर्वारमिति दिक्।

इत इति। नन्वत्र कार्याऽभावादित्सञ्ज्ञाया अप्रवृत्तौ अनेकाल्त्वादेव सिद्धौ किं शिद्ग्रहणेन। नच 'घ्वसोरेद्धावभ्यासलोपश्चे'ति लोपस्य सर्वाऽऽदेशाऽथम्। 'नानर्थकेऽलोन्त्यविधिरि'त्यनेन सिद्धत्वात्। नचाऽनभ्यासविकारेष्विति निषेधः। लोपस्याऽविकारत्वात्। अत एव [2]'लोपाऽऽगमवर्णविकारे'ति भाष्यं सङ्गच्छते। 'लोपो यी'ति प्रकृते पुनर्लोपग्रहणेन सर्वाऽऽदेशस्य सिद्धत्वाच्च। 'लोप-शि'ति हलन्तप्रकृतिकप्रथमान्तमङ्गीकृत्य ङमुट्न्यायेन संज्ञिनोऽपि शित्त्वात्, अभावस्य सर्वाऽऽदेशतायाः सिद्धत्वेनोपधासञ्ज्ञासूत्रस्थभाष्योक्तरीत्या द्वितीयेत्सञ्ज्ञकशकारकरणसामर्थ्येन उक्तन्यायेनाऽभावस्याऽप्यनेकाल्त्वाऽऽपत्तौ शिद्ग्रहणवैयर्थ्याऽनुद्धाराच्च। न च 'नानुबन्धकृतमनेकाल्त्वमि'ति ज्ञापनार्थमि'ति भाष्यकाराद्युक्तं युक्तम्। इत्सञ्ज्ञाया एवाऽभावेनाऽनुबन्धत्वाऽभावाज्ज्ञापनशैथिल्यात्। अनेकान्तपक्षे फलाऽभावाच्च। एकान्तपक्षेऽन्तरङ्गत्वेनेत्सञ्ज्ञालोपयोः प्रवृत्तत्वेन अनेकाल्-

---

लघुशब्दरत्नः

**वाक्यभेदसामर्थ्याच्च 'आदेरि'त्यंशं विनाऽपि क्व चित् अंशाऽन्तरप्रवृत्तिः। 'आदेरि'त्यंशस्तु अनुवृत्तोत्तरस्येत्यस्य आवृत्त्या 'परत्वबोधकशब्देन यत्र विधानं तत्रैवे'ति नित्यं ङितः (३।४।९९) इत्यादौ न प्रवर्त्तते इति भावः।**

**वक्ष्यतीति। न च अनेकाल् (१।१।२५) इत्यतः पूर्वमेव तस्मिन्निति निर्दिष्टे पूर्वस्य (१।१।२३)तस्मादित्युत्तरस्याऽऽदेः (१।१।२४) इति सूत्रे कुतो न पठिते इति वाच्यम्। 'आदेरि'त्यंशे 'षष्ठी स्थाने' इत्यस्य असम्बन्धे आज्जसेरसुक् (७।१।५०) इत्यादावपि तस्य प्रवृत्त्यापत्तेः। सम्बन्धे मध्ये 'तस्मिन्निति' 'तस्मादिति'—अनयोरपि तत्सम्बन्धे, तयोरपि आगमविषये अप्रवृत्त्यापत्तेरिति दिक्।**

---

[1] 'सूत्रद्वयविषये' इति ख. पाठः।

[2] 'वर्जविकारेति' इति क. ख. पाठः।

यत्तु—वृत्तिकृता जश्शसोः शिः (७।१।२०) इत्युदाहृतम्। तन्न। सर्वाऽऽदेशतायाः प्राक् शित्त्वस्यैव अभावात्[1]। तत्र हि डा-णलोरिव आनुपूर्व्यादनेकाल्त्वेनैव[2] सर्वाऽऽदेशत्वमिति सिद्धान्तः।

---

**बृहच्छब्दरत्नः**

त्वाऽभावाच्च।

न च लोपरूपकार्यस्य सत्त्वेनाऽसिद्धो हेतुः। अत एव 'टकः कित्त्वेनाऽकारस्य गुणाऽभावसिद्धावाकारनिवृत्त्यर्थमिको गुणवृद्धी इति सूत्रं न कार्यमि'ति भाष्यकारोक्तं सङ्गच्छते इति वाच्यम्। तत्राऽग्रे कार्यस्य सम्भावितत्वेन वर्णचारितार्थ्येऽपि, प्रकृते तदभावेन वैयर्थ्याऽऽपत्तेः। न चाऽन्तरङ्गत्वात्पूर्वमित्संज्ञालोपयोः प्रवृत्तौ तदनुरोधेन 'निषादस्थपत्यधिकरण'न्यायादभस्याऽपि टेर्लोप इतिवत् अधात्वधिकारस्थस्याऽपि सार्वधातुकसंज्ञाप्रवृत्तिः। अत एव काम्यचि 'लुप्तनिर्दिष्टादिरूपो यत्न इत्संज्ञाऽभावार्थमि'ति सिद्धान्त इति वाच्यम्। सार्वधातुकसंज्ञाप्रवृत्तिमात्रेण फलाऽभावात्संज्ञाया अप्रवृत्तेः। एतेन[3] 'संज्ञाकरणसामर्थ्यान्निमित्तवैकल्येऽपि कार्याणां प्रवृत्तिरि'ति निरस्तम्। पूर्वं लोपमात्रबाधस्यैव लघुत्वाच्चेति चेन्न। कार्याऽभावेन पूर्वमित्संज्ञाया अनापत्तेः।

नचाऽनेकाल्त्वात्सर्वादेशे शकारस्येत्संज्ञाऽनापत्तिः[4]। 'अन्त्यो यो हल् स उपदेशे इत्संज्ञो भवती'ति सूत्रार्थात्। उपदेशाऽन्त्यत्वन्तु आर्थसमाजग्रस्तम्। अधिकरणकारकस्य प्रधानीभूतक्रियायामन्वयस्योचितत्वात्। 'उप देशो यस्मिन्नि'ति बहुव्रीहिणा काल उच्यते। स्पष्टञ्चेदं 'तस्मिन्निति'सूत्रे भाष्यकैय्यटयोः।

अभावादिति। आदेशे जाते प्रत्ययाऽऽदित्वेन इत्संज्ञा-लोपयोः कृतयोः एकाल्त्वेऽपि न दोषः। उपजीव्यविरोधाऽऽपत्तेः। अत एव 'कर्त्त'त्यत्र न सर्वादेशत्वम्।

डाणलोरिवेति। आदेशस्य प्रत्ययाऽधिकारे पाठेऽपि षष्ठीनिर्देशात्स्थानिसम्बन्धलाभेन निराकाङ्क्षत्वेन 'परश्च'त्यस्याऽनुपस्थितौ, तत्सहचरितत्वात् संज्ञाऽनपेक्षणाच्च 'प्रत्यय' इत्यस्याऽप्यनुपस्थितौ, औपदेशिकप्रत्ययत्वाऽभावः। न चैवं श्नमोऽपि तन्न स्यादिति वाच्यम्। 'तृणह इमि'ति निर्देशेन तत्रैव तत्स्वीकारात्।

---

**लघुशब्दरत्नः**

डाणलोरिवेति। आदेशानां प्रत्ययाऽधिकारे पाठेऽपि वाक्याऽर्थबोधोत्तरमेव प्रत्ययत्व-

---

[1] 'अलाभात्' इति मुद्रितः पाठः।

[2] एवकारो मुद्रितेषु नास्ति।

[3] 'अनेन' क. ख. पाठः।

[4] 'इत्सञ्ज्ञापत्तिरि'ति क. ख. पाठः।

**इत्यादाविति।** 'आदि'शब्देन अतो भिस ऐस् (७।१।९) इति गृह्यते। **परत्वादिति।** अत एव 'आदेः परस्य (१।१।५४) इति पृथक् क्रियते' इत्युक्तम्। 'उत्तरस्ये'त्यंशस्तु औश्-ऐसोरपि प्रवर्त्तते एव।

यत्तु–प्राचा 'आदेरि'ति सूत्रं विवृण्वता 'पञ्चमीनिर्देशेने'त्याद्युक्तं, तत् असम्बद्धमिति स्पष्टमेव।

**परनित्येति।** परात् नित्यं यथा—'तुदति,' 'रुणद्धि'। परमपि लघूपधगुणं बाधित्वा श-श्नमौ। तथा रन्धेर्णिच्—रन्धयति। परामपि उपधावृद्धिं बाधित्वा रधिजभोः (७।१।६१) इति नुम्। न च सोऽपि शब्दाऽन्तरप्राप्त्याऽनित्य इति वाच्यम्। कृताऽकृतप्रसङ्गमात्रेणाऽपि क्वचि-

---

**बृहच्छब्दरत्नः**

अत एव 'मिदचोऽन्त्यात्पर' इत्यत्र पुरस्तादपवादन्यायाऽप्रवृत्तिः। न चैवमकजादौ दोषः। 'न यासयोरि'ति ज्ञापकेनाऽन्यदेशबोधकपदघटितविधिविधेयानां प्रत्ययत्वस्याऽपि ज्ञापनात्। ध्वनितञ्चेदं भाष्ये सूक्ष्मदृशाम्। अत एव 'पपाचे' त्यादिसिद्धिः। अन्यथा 'अर्वणस्तृ' इत्यादाविवाऽनेकाल्त्वाऽनापत्तौ, सर्वाऽऽदेशताऽनापत्तिः। न चैवम् अनुबन्धानां वैयर्थ्यम्। 'अवयवेऽचरितार्थं लिङ्गं समुदाये विशेषणमि'ति-न्यायेन चारितार्थ्यस्य स्पष्टत्वात्। नन्वेवं 'चुटू' इत्यत्रोपदेशे इत्यनुवर्त्तते, उत न?। नाऽऽद्यः। डाणलोरुपदेशे प्रत्ययादित्वाऽभावेनेत्संज्ञाऽनापत्तेः। नाऽन्त्यः। चुञ्चुप्-चणपादीनां यादित्वेऽपीत्संज्ञाऽऽपत्तेरिति चेन्न। चुञ्चुबादीनां यकारोच्चारणसामर्थ्येनेत्त्वाऽप्राप्तेः। 'चुटुषः प्रत्ययस्ये'ति वक्तव्ये भिन्नकरणेनाऽनित्यत्वज्ञापनाच्च।

शब्दान्तरप्राप्त्येति। नचाऽनित्यत्वे इष्टाऽऽपत्तिः। न च परत्वात् वृद्धिः स्यादिति वाच्यम्। 'वृध्द्यौत्त्वतृज्वद्भावे'त्यनेन पूर्वविप्रतिषेधेन नुमः सिद्धत्वादिति वाच्यम्। साहचर्येण विभक्तिनिमित्तानामेव तत्र ग्रहणात्। स्थानिवत्सूत्रे कार्याऽतिदेशाऽङ्गीकारेण, शास्त्राऽतिदेशपक्षेऽपि व्यक्तिपक्षे लक्षणानां भिन्नत्वेन च, कृताऽकृतप्रसङ्गित्वरूपनित्यत्वाऽभावात्। यद्यपि 'शब्दाऽन्तरस्ये'ति षष्ठ्यन्तमाकरे पठ्यते, तथाऽपि 'शब्दाऽन्तरात्, शब्दाऽन्तरे च प्राप्नुवन्नपि विधिरनित्यो

---

**लघुशब्दरत्नः**

ज्ञानेन उपदेशे णकारे इत्त्वाऽप्रवृत्तेः। तदुत्तरं लक्ष्ये प्रवृत्तिकाले इत्त्वेऽपि अनेकाल्त्वाऽक्षतेरिति भावः। प्रवर्त्तत एवेति। उपपादितमेतत्।

शब्दान्तरप्राप्त्येति। यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिः, तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताऽकृतप्रसङ्गित्वं प्रसिद्धमिति भावः।

कृताकृतेति। व्यक्तिविशेषाऽनाश्रयणेनेत्यर्थः। 'वृध्द्यौत्त्वतृज्वद्भावे'त्यस्य तु अत्र

न्नित्यताऽभ्युपगमात् । अन्तरङ्गं यथा—'उभये देवमनुष्याः' । इह प्रथमचरम (१।१।३३) इति परमपि विकल्पं बाधित्वा सर्वादीनि (१।१।२७) इति सर्वनामसञ्ज्ञा, विभक्तिनिरपेक्षत्वेनाऽन्तरङ्गत्वात् । अपवादोऽपि यदि अन्यत्र

---

**बृहच्छब्दरत्नः**

भवती'ति बोध्यम् । मूलयुक्तेस्तुल्यत्वात् । ध्वनितश्चेदं 'शदेः शित' इति सूत्रे भाष्ये, स्पष्टीकृतश्च 'नेर्विश' इति सूत्रे कौस्तुभे ।

उभये इति । न च सर्वाऽर्थवाचकत्वस्य पूर्वसूत्रे निमित्तकोटिप्रवेशेन समत्वमिति वाच्यम् । उत्तरत्राऽपि तस्याऽऽवश्यकत्वात् । न च प्रथमादि-साहचर्येण सर्वादिष्वपठित एव ग्राह्य इति वाच्यम् । सर्वाऽऽर्थवाचक-नेम-शब्दस्याऽपि ग्रहणाऽनापत्तेः । गुरुभूतस्य पूर्वनिपातकरणेन साहचर्याऽनाश्रयणाच्च ।

नाऽप्ययचः प्रत्ययाऽन्तरत्वम् । 'उभयी'त्यत्र ङीबनापत्तेः । 'टिड्ढा-णञि'तिसूत्रे प्रत्याहारे तु तयबादिग्रहणवैयर्थ्याऽऽपत्तेः । स्वरूपस्य शास्त्रे प्रसिद्धत्वान्निराकाङ्क्षत्वेन, प्रत्याहारग्रहणे मानाऽभावाच्चेति सूत्राऽऽशयः ।

यत्तु 'प्रत्याहारे यत्तदेतत्किमादिभ्यो ङीबापत्तिरि'ति दूषणमाहुः । तन्न । साहचर्येण प्रत्ययानामेव ग्रहणात् । 'आदिरन्त्येने'ति सूत्रे 'सह'शब्दोपादानेन अन्त्य-स्याऽन्त्यन्ताऽप्राधान्यबोधनान्मध्यगतानामादिसदृशानामेव ग्रहणमिति कश्चित् । अत एव 'बहुयुवेत्यादौ' 'अन उपधालोपिन' इति विकल्पो न । भविषयेऽन्तरङ्गेण 'सम्प्रसारणाच्चे'ति पूर्वरूपेण अल्लोपस्य बाधात् । न चाऽत्राऽसिद्धपरिभाषाप्रवृत्ति-रिति भ्रमितव्यम् । 'नाऽजानन्तर्ये'इति निषेधस्य जागरूकत्वात् । तस्मात् 'अन्तरङ्ग-

---

**लघुशब्दरत्नः**

न प्राप्तिः । साहचर्येण विभक्तिनिमित्तानामेव वृद्ध्यादीनां तत्र ग्रहणात् । नित्यत्वेनैव सिद्धे वाचनिकपूर्वविप्रतिषेधाऽऽश्रयणे फलाऽभावाच्चेति दिक् ।

[1]अन्तरङ्गत्वादिति । भाष्ये तु 'अयच्प्रत्ययान्तरं, न तु तयबादेशः । 'उभयी'त्यत्र ङीप् तु 'मात्रजि'ति प्रत्याहाराऽऽश्रयणेन साधितः । एवञ्च उभयशब्दे विकल्पस्य प्राप्तिरेव

---

[1] 'अन्तरङ्गत्वादिति । ननु किं कार्यकालपक्षे इदमुच्यते, यथोद्देशे वा ? । नाद्यः । 'सर्वादीनी'त्यस्याऽपि 'जसः शी'त्यनेनैकवाक्यतापन्नतया विभक्तिसापेक्षत्वात् । नाऽन्त्यः । तथा हि विभक्त्युत्पत्तेः प्रागेव'भविष्यति किञ्चिदनया कार्यमि'त्यभि-सन्धिमात्रात् तत्प्रवृत्तौ जातायां, ततो विभक्त्युत्पत्तौ, विकल्पस्यैव प्राप्त्या, युगपत् उभयप्राप्त्यभावेन एतन्न्यायविषयाऽभावादिति चेत् । सत्यम् । 'पूर्वं प्रवृत्तमपि अन्तरङ्गं पश्चात्प्रवर्त्तमानाद् बहिरङ्गाद् बलीयः, तस्य निवर्त्तकमि'त्यपि परिभाषाऽर्थ' इत्यभिमानात् । अत एव 'भाष्ये तु अयच् प्रत्ययाऽन्तरम्' । इति लिखितेषु अधिकः पाठः । स च प्रायः कुण्डलितश्च क. ख. ग. घ. पुस्तकेषु ।

चरिताऽर्थस्तर्हि अन्तङ्गेण बाध्यते एव। तद्यथा—'अयजे इन्द्रम्' 'ग्रामे इह' 'सर्वे इत्थम्'। अत्र अन्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते। स च यद्यपि यण्-गुणयोरपवादः, तथाऽपि समानाश्रये चरितार्थः। तथा च वार्त्तिकम्—'इण्-ङि-शीनाम् आद्गुणः सवर्णदीर्घत्वादि'ति।

असिद्धमिति। तेन 'पचावेदमि'त्यादौ[1] 'एत ऐ' (३।४।९३) इति ऐत्वं न।

अकृतव्यूहा इति। यद्यपि 'कृतमपि वा[2] कार्यं निवर्त्तयन्ती'ति परि-

बृहच्छब्दरत्नः

बहिरङ्गयोरन्तरङ्गमि'ति परिभाषाऽन्तरमभ्युपगन्तव्यम्। अत्र च ज्ञापकम् 'ओमाङोश्चे'ति आङ्ग्रहणम्। तद्धि 'खट्वा आ ऊढ' इत्यत्र परमपि सवर्णदीर्घं बाधित्वा 'धातूपसर्गयोः कार्यमन्तरङ्गमि'त्यन्तरङ्गत्वाद् गुणे कृते वृद्धिप्राप्तौ सत्यां [3]पररूपं यथा स्यादिति क्रियते। स्पष्टञ्चेदं 'सम्प्रसारणाच्चे'ति सूत्रे भाष्ये। न चेयं परिभाषा विप्रतिषेधसूत्रे भाष्ये प्रत्याख्यातेति वाच्यम्। लौकिकन्यायसिद्धायाः प्रत्याख्यातुमशक्यत्वात्। 'नाऽजानन्तर्ये' इतिन्यायबोधकभाष्यविरोधेन तद्-भाष्यस्य प्रौढिवादपरत्वाच्च। चरितार्थ इति। 'उपसञ्जनिष्यमाणोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते' इति क्वचित्पठ्यमानन्यायस्त्वचरितार्थविषयः, [4]समानाऽन्तरबाधितप्राबल्यविषयश्च, बाधकाऽविषयनिमित्तविषयश्च। अन्यथा अन्तरङ्गन्यायस्य निर्विषयताऽऽपत्तेरित्यादि प्रपञ्चितमस्माभिः कौस्तुभप्रकाशे।

नन्वनयैव सिद्धौ किम् असिद्धपरिभाषयेत्याशङ्क्याऽऽह—पचावेदमिति। न हि गुणप्राप्तिकाले ऐत्वं प्राप्नोति, येन पूर्वोक्तन्यायेन सिद्धिः स्यादित्याहुः।

अपरे त्वाहुः,—'मानाऽभावात्, गौरवात्, विप्रतिषेधसूत्रभाष्यविरोधाच्च न न्यायद्वयम्। न च 'अयजे इन्द्रमि'त्यादौ 'नाऽजानन्तर्ये' इति निषेधः। बहिरङ्ग-कार्यप्रवृत्तेः पूर्वं यत्राऽन्तरङ्गकार्यस्य प्रवृत्त्ययोग्यता, अन्तरङ्गनिष्ठम् अजानन्तर्यञ्च,

लघुशब्दरत्नः

ने'ति उक्तम्। अन्तरङ्गस्य बलवत्त्वे ज्ञापकम् अन्यत्र प्रपञ्चितम्। बाध्यत एवेति। निरवकाशत्वरूपस्य बलवत्त्वबीजस्य अभावात्[5]।

तेनेति। पूर्वा तु अन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तावेवेति भावः।

[1] 'इत्यादौ एत ऐत्वं न' इति मुद्रितेषु पाठः।

[2] 'कृतमपि वा निवर्त्तयन्ति' इति 'कृतमपि कार्यं निवर्त्तयन्ति' इति घ. ङ. च. पाठः।

[3] 'परं रूपम्' इति क. ख. पाठः।

[4] 'समानान्तरे' इति ख. पाठः।

[5] इतोऽग्रे 'यद्वा स्वस्थानिकेनैव येन नाऽप्राप्तिन्यायो, नाऽन्यस्थानिकेनाऽपीति न तद्बाध इति भावः' इति पाठो लिखितेषु दृश्यते। स च कुण्डलितोऽपि।

भाषाऽन्तरं पठ्यते, फलं च तुल्यम् । तथाऽपि 'अकृते'त्येव लघु । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि'ति न्यायादिति भावः । न कुर्वन्तीति । यथा 'निषेदुषीमि'त्यादौ क्वसोः इटम् अन्तरङ्गत्वात् प्राप्तमपि 'भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यती'त्यालोच्य न कुर्वन्तीत्यर्थः ।

## इति परिभाषाप्रकरणम् ।

---

### बृहच्छब्दरत्नः

तत्र निषेध इति ।

अकृतेत्येवेति । अत्र च ज्ञापकं 'चौ' इति सूत्रं, 'गोरतद्धितलुकी'ति सूत्रे 'तद्धित'ग्रहणञ्च । तद्धि 'राजगवीयती'त्यादौ टच् यथा स्यात् । उक्तपरिभाषाया अभावेऽन्तरङ्गत्वात् टच्सिद्धौ किं तेन । 'अदो जग्धिर्ल्यप्ति किती'ति सूत्रस्थल्यब्ग्रहणमपि मानम् । 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते' इत्यादिवचनानामुक्तवचने एवाऽन्तर्भावः । स्पष्टञ्चेदं 'समर्थानां प्रथमाद्वे'ति सूत्रे भाष्ये ।

लघ्विति । एवञ्चाऽसिद्धवदत्राभादित्यादिसूत्रस्थकैय्यटादिग्रन्थाः 'कृतमपि शास्त्रं निवर्त्तयन्ती'त्येतत्परिभाषाया अभावपरतयैव व्याख्येया इति भावः ।

अन्तरङ्गत्वादिति । एवञ्चाऽन्तरङ्गपरिभाषाया अपवादिकेयमिति भावः । समर्थपदविधीनामन्यत्रोपन्यासस्तु कार्यकालपक्षे ।

## इति परिभाषाप्रकरणम् ।

---

### लघुशब्दरत्नः

[1]न कुर्वन्तीत्यर्थ इति । यदि तु 'सेदुषः' इत्यादौ पदावधिके [2]अन्वाख्याने 'सेद्-वस्-असि'ति स्थिते इट्-सम्प्रसारणयोः प्राप्तौ, प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् पूर्वं सम्प्रसारणे, वलादित्वाऽभावात् इटः प्राप्तिरेव न । लक्ष्याऽनुरोधाच्च अत्र पदावधिकमेव अन्वाख्यानमिति तत्सिद्धिरित्युच्चते, तदा एषा परिभाषा निष्फलेति बोद्धचम् । अत एव एषा भाष्ये न क्वाऽपि व्यवहृतेत्यन्यत्र विस्तरेण निरूपितम् ।

## इति परिभाषाप्रकरणम् ।

---

[1] 'न कुर्वन्तीत्यर्थ इति' । यदि तु 'सेदुषी'मित्यादौ पूर्वमिटि, ततः सम्प्रसारणे, 'नाजानन्तर्ये' इति निषेधात् बहिरङ्गपरिभाषाया अप्रवृत्त्या यणि, बहिरङ्गतयैव सम्प्रसारणाऽसिद्धत्वेन वल्परत्वात् यस्य लोपे तत्सिद्धिरित्युच्यते, तदा एषा परिभाषा निष्फलेति ध्येयम्' । इति लिखितेषु प्रायः कुण्डलितः पाठः ।

[2] 'चान्वाख्याने' इति ख. पाठः ।

# अथ अच्सन्धिप्रकरणम् ।

**इको यणचि (६।१।७७)।** प्रत्याहारग्रहणेषु तद्वाच्य-वाच्ये [1]निरूढ-लक्षणा। दीर्घाज्जसि च (६।१।१०५) इति ज्ञापकात्, ल्वादिभ्यः (८।२।४४) [2]इत्यादिनिर्देशाच्च ।

**बृहच्छब्दरत्नः**

**इको यणचि।** ननु 'इचो यणयवायावोऽची'त्येव सूत्र्यताम् । सर्वस्थानसाम्ये चारितार्थ्येनाऽधिकस्थानके, न्यूनस्थानके वा आदेशानामप्रवृत्तेः । न च 'परिभूये'-त्यादौ 'वान्तो यि प्रत्यये' इति वान्ताऽऽदेशप्रसङ्गः, वादेशस्याऽपि व्यपदेशिवद्भावेन वान्तत्वादिति वाच्यम् । 'धातोस्तन्निमित्तस्यैवे'ति नियमादिति चेन्न । 'तोष्ट्यते' 'हूहूयति' 'भानूयती'त्यादौ दोषस्य दुर्वारत्वात् ।

ननु दीर्घेषु यणादेशो दुर्लभः, तेषां प्रत्याहारेष्वपाठात् । न च प्रत्याहारेषु पठितैस्ते उपस्थाप्यन्ते इति वाच्यम् । प्रतिबन्धकाऽभावेन 'नाज्झलावि'ति-वाक्याऽर्थोत्पत्तिकाले, 'इको यणचीत्या'दीनामपि निष्पन्नत्वेन, 'नाज्झलावि'त्यत्रेव 'इको यणची'त्यादावपि 'आदिरन्त्येने'तिसूत्रनिष्पत्तिकाले ग्राहकसूत्रस्याऽनिष्पन्न-त्वेनेकारादीनां तदपरत्वात्[3] । इक्शब्दादिबोध्य-ह्रस्वेकारादिबोध्य-दीर्घेकारादिबोधा-त्पूर्वं ह्रस्वेकारादिमात्राऽन्तर्भावेन वाक्याऽर्थाऽनिष्पत्तौ मानाऽभावात्, जनिता-ऽन्वयबोधात् नैराकाङ्क्ष्येण, दीर्घकाराद्यन्तर्भावेन वाक्यार्थाऽन्तरकल्पने माना-ऽभावाच्च । गौरवाच्च । सवर्णिनां प्रकृतवाक्यघटितपदजन्यपदार्थोपस्थितेरभावेन शाब्दबोधविषयत्वस्य दुरुपपादत्वाच्च । प्रकृतिवृत्त्युपस्थाप्यत्वाऽभावेन प्रत्ययाऽर्था-ऽन्वयाऽनापत्तेश्चेत्यत आह—प्रत्याहारेति । स्ववाच्यसवर्णित्वं न लक्ष्यताऽवच्छे-दकम् । 'पुमः खय्यमपरे' इत्यादौ दोषाऽऽपत्तेः । यत्तु 'ह्रस्वेकारादीनां तद्वाच्य-

**लघुशब्दरत्नः**

ननु व्यक्तिपक्षे इक्पदोपस्थाप्योकारादिभिर्दीर्घादिग्रहणं न स्यात्, [4]'उच्चारितशब्द एव प्रत्यायको, नाऽनुच्चारितः' इति अणुदित् (१।१।६९) सूत्रे भाष्योक्तेः । न च उच्चा-रितस्यैव प्रत्यायकत्वे, रहसि पुस्तकम् ईक्षमाणस्य बोधाऽनापत्तिरिति वाच्यम् । तत्रापि पुस्तकद्रष्टुः स्वीयसूक्ष्मोच्चारणसत्त्वादित्यत आह–प्रत्याहारग्रहणेष्विति । एतेन 'दीर्घे-कारादेर्ग्राहकशास्त्रबलेन इकारादिभिर्बोधेऽपि, तेषाम् इक्पदवृत्त्या अनुपस्थितत्वेन तदुत्तरप्रत्य-यार्थाऽनन्वयाऽऽपत्तिरि'त्यपास्तम् । वृत्तिप्रयोज्योपस्थितिसत्त्वेन अदोषाच्च ।

[1] 'निरूढा लक्षणा' इति मुद्रितः पाठः ।
[2] 'इति निर्देशाच्च' इति मुद्रितः पाठः ।
[3] 'तदा परत्वात्' इति क. ख. पाठः । 'तैरनुपस्थानात्' इति पाठो भवेत् ।
[4] 'उच्चारित एव शब्दः' इति मुद्रितः पाठः ।

**तेन इक्शब्देन [१]षट्षष्टिर्गृह्यन्ते। यण्शब्देन सप्त। भाव्यमानत्वेन सवर्णाऽग्राहकत्वेऽपि, गुणानाम् अभेदकत्वेन अनुनासिकानामपि यवलानां**

### बृहच्छब्दरत्नः

त्वेन युगपद् वृत्तिद्वयविरोध' इति। तन्न। 'गङ्गायां मीन-घोषौ स्त' इत्यादौ तदङ्गीकारात्[२], ह्रस्वानां तद्वाच्यवाच्यत्वेन लक्ष्यताऽवच्छेदकाऽऽक्रान्तत्वात्। अत एव 'घटी भवती'त्यादावीत्त्वम्।

षट्षष्टिरिति। यद्यपि गान-रोदनादौ चतुर्मात्रेकारादयो दृश्यन्ते, तथापि लौकिक-वैदिक-प्रयोगेऽभावादेवमुक्तम्। वस्तुतस्तु प्रक्रियादशायां तेषां सत्त्वे मानाऽभावेनोक्तसङ्ख्या युक्तैव। अत एव 'एकश्रुत्यादीनामाधिक्यान्नेदं युक्तमि'त्यपास्तम्। 'उदात्तादीनामविभागेनाऽवस्थानमेकश्रुतिरि'त्याकरे उक्तत्वेन आधिक्याऽभावाच्च। अत एव 'अनुदात्ततरादीनामाधिक्यं दुर्वारमि'त्यपास्तम्।

भाव्यमानत्वेनेति। विधीयमाने अणुदित्सूत्रस्य निषेधेन तद्वाच्यवाच्यत्वस्य लक्ष्यताऽवच्छेदकस्याऽप्रसिद्धत्वेन लक्षणा वक्तुमशक्येति भावः। 'तद्वाच्यसदृशवाच्यत्वं लक्ष्यताऽवच्छेदकमि'ति मते ग्राहकत्वमस्त्येवेति बोधयितुमपिशब्दः।

अभेदकत्वेनेति। न चैवं सप्तसङ्ख्योपादानं विरुध्यत इति वाच्यम्। शास्त्रे

### लघुशब्दरत्नः

ननु अणुदित् (१।१।६९) सूत्रं व्यर्थम्। न च प्रत्याहाराणाम् आद्यवर्णेषु चरितार्थम्। अन्यसवर्णानामिव तत्सवर्णनामपि लक्षणयैव ग्रहणसिद्धेः। न च अस्य च्वौ (७।४।३२) इत्यादौ चारितार्थ्यम्। व्यक्तिपक्षे अस्य प्रत्याहारसूत्रस्थतो भेदेन अण्त्वाऽभावादिति स्पष्टम् अणुदित् (१।१।६९) सूत्रे भाष्ये इति चेन्न। लक्ष्यताऽवच्छेदकज्ञानाऽर्थमेव तच्चारितार्थ्यात्।

'प्रत्याहारे'त्युपलक्षणम्, 'तद्वाच्यवाच्ये'ति च। अस्य च्वौ (७।४।३२) इत्यादावपि स्वसदृशवाच्येषु लक्षणाऽवश्यकत्वात्। अणुदित्सूत्रगृहीतलक्ष्यताऽवच्छेदकिका लक्षणा विधीयमानाऽतिरिक्तविषयैव,[३] 'अप्रत्यय' इत्युक्तेः। अत एव त्यदादीनामः (७।२।१०२) इत्यादौ न स्वसदृशवाच्येषु लक्षणा। नाऽज्झलौ (१।१।१०) अणुदित् (१।१।६९) इत्यत्र तु न लक्षणा। तद्बोधकाले लक्ष्यताऽवच्छेदकाऽग्रहादिति भावः। तत्र प्रमाणमाह—दीर्घादिति। अक्पदीयाऽकारेण स्वसवर्णग्रहणेऽपि, तत्र नाऽदिचि (६।१।१०४) इत्येव सिद्धमिति भावः। तेन=लक्षणाऽङ्गीकारेण।

भाव्यमानत्वेनेति। विधीयमानविषये लक्षणाऽभावस्याऽनुपदमुक्तत्वादिति भावः। अभेदकत्वेनेति। शास्त्रे उच्चारितगुणानां भेदकत्वाऽभावेऽपि, स्वरूपकृतभेदमादाय

[१] 'षट्षष्टिर्गृह्यन्ते' इति ल. मुद्रिते च पाठः। 'गृह्यते' इति क. पाठः।

[२] 'तदङ्गीकाराच्च' इति ख. पाठः।

[३] 'विषये एव' इति मुद्रितः पाठः।

**ग्रहणात् । अतो नाऽस्ति यथासङ्ख्यम् ।**

**न च लक्ष्याऽर्थबोधात्पूर्वभाविनं शक्याऽर्थबोधमादाय यथासङ्ख्य-**

---

**बृहच्छब्दरत्नः**

गुणस्याऽविवक्षितत्वेऽपि, वस्तुगत्या स्वरूपकृतभेदस्य दुर्वारत्वेनोक्तसङ्ख्याया निष्प्रत्यूहत्वात् । सानुनासिकरेफाऽभावस्तु प्रत्याहाराह्निके भाष्ये स्पष्टः । अत्र च ज्ञापकम् 'अनङुदात्त' इत्युदात्तग्रहणम् । अन्यथा उदात्तमेवोच्चारयेदिति वृद्धि-सञ्ज्ञासूत्रे भाष्यकारः ।

ननु 'चतसर्याद्युदात्तनिपातनं करिष्यते' इति षाष्ठभाष्यविरोधः । अत्राहुः— 'विभाषाऽच्छन्दसी'त्यत्र नञः प्रश्लेषेण लोके ऐच्छिकैकश्रुत्य-त्रैस्वर्ययोर्विधानेन, आद्यपक्षमभिप्रेत्य षाष्ठभाष्यम् । द्वितीयपक्षमभिप्रेत्य आद्यभाष्यम् । स्वस्वरूपेणो-पात्तस्य नान्तरीयकत्वेनाऽविवक्षासम्भवादुदात्तग्रहणस्य ज्ञापकत्वात् । न च 'विभाषाऽच्छन्दसी'त्यनेन पक्षे त्रैस्वर्यं मानाऽन्तरप्राप्तं व्यवस्थाप्यते, नाऽपूर्वं विधीयते इति तावन्निर्विवादम् । एवञ्चाऽस्थ्यादीनामाद्युदात्तत्वेनाऽन्त्याऽऽदेश-स्याऽनङः स्थान्यनुरूपे अनुदात्ते एवोच्चारणीये, उदात्तोच्चारणं विवक्षिताऽर्थं भविष्यति, किमुदात्तग्रहणेनेति वाच्यम् । लक्ष्ये स्थान्यादेशभावसत्त्वेऽपि लक्षण-वाक्ये तदभावेन 'फिषोऽन्त[1] उदात्त' इति वचनेनाऽकारोदात्तत्वस्यैव युक्तत्वात् । नकाराऽकारस्तूच्चारणाऽर्थ एव, न प्रातिपदिकाऽवयवः । 'परमाऽस्थि'शब्दा-दावन्तोदात्तो अनुदात्तगुणकस्थानित्वाऽभावाच्च । वस्तुतस्तु इण्निषेधस्य एकग्रहण-सामर्थ्यात्,स्थानिवद्भावाच्च 'चतस्रः पश्ये'त्यादौ दोषाऽभावेन चतसर्याद्युदात्त-निपातनादिप्रतिपादकभाष्यस्य प्रौढिवादपरत्वाऽऽवश्यकत्वे 'एकश्रुत्या सूत्रपाठ' इति पक्षो निर्मूल एव । न चैवम् 'एरजि'त्यादौ पक्षेऽनुनासिकप्रसङ्गः । लक्ष्या-ऽनुरोधेनाऽत्र गुणभेदपक्षस्यैवाऽङ्गीकारादित्यन्यत्र विस्तरः ।

**न च लक्ष्यार्थबोधेति ।** यथासङ्ख्यसूत्रस्य व्यक्तिसाम्ये इव धर्मसाम्येऽपि प्रवृत्तिः । अत एव 'स्यतासी लृलुटोरि'त्यत्र न दोषः । तथा च शक्त्या इगादि-शब्दोपस्थाप्यैकारादावित्वादिजातीनामिव'इ'इत्यादिशब्दानामपि वाच्यतासम्बन्धेन

---

**लघुशब्दरत्नः**

सप्तत्वसङ्ख्या न विरुध्यते । यदि तु अणुदित्सूत्रे अण्ग्रहणात् यण्विषये गुणानां भेदक-तैवोचितेति विभाव्यते, तदाऽपि चत्वारो यण इति, यथासङ्ख्यम् असङ्गतमेव । [2]एतद्ध्वन-यन्नाह—अतो नास्तीति । तत्खण्डने एवाऽऽग्रहो, न तु सप्तत्वसङ्ख्यायामिति भावः ।

**शक्यार्थबोधमादायेति ।** त्वादिभ्यः (८।२।४४) इत्यादिनिर्देशोहिततात्पर्या-ऽनुपपत्तिग्रहस्य तत्सत्त्वे एव सम्भवेन स बोध आवश्यकः । तत्र च यथासङ्ख्यसहायेन

---

[1] 'फिषोऽन्तोदात्तः' इति क. ख. पाठः ।

[2] 'तद्ध्वनयन्नाह' इति मुद्रितः पाठः ।

मस्त्वित्ति वाच्यम्। एवमपि तृतीय-चतुर्थाभ्याम् ऋकार-ऌकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ, ऌवर्णानां रेफाऽऽदेशस्य, ऋवर्णानां लादेशस्य च प्रसङ्गात्। तस्मादिह स्थानेऽन्तरतमः (१।१।५०) इति सूत्रेणैव इष्टसिद्धिरित्यभिप्रेत्याऽऽह—स्थानत आन्तर्यादिति।

---

बृहच्छब्दरत्नः

प्रकारतया भानं, शाब्दबोधे शब्दस्याऽपि भानाऽङ्गीकारात्। तथा च दीर्घादिषु यणादेशाऽर्थं लक्षणया लक्ष्याऽर्थबोधाऽङ्गीकारेऽपि तादृशधर्ममादायैव यथासङ्ख्यप्रवृत्तौ इकारशब्दवाच्यानां 'य'शब्दवाच्याः, उशब्दवाच्यानां 'व'शब्दवाच्या इत्याद्यर्थाऽङ्गीकारे न दोष इति भावः। एवमपीति। अपिना जातिपक्षः समुच्चीयते। 'इत्वजातेर्यत्वजातिरि'त्याद्याश्रयणेऽपीत्यर्थः।

तृतीयेति। 'ऋ'शब्दवाच्यानां 'र'शब्द वाच्याः, 'ऌ'शब्दवाच्यानां 'ल'शब्दवाच्या' इत्यर्थः स्यात्। जातिपक्षेऽपि 'उरण् रपर' इत्याद्यनुरोधेन [1]'ऋग्रहणे ऌग्रहणमावश्यकम्। तस्मादिति। अत एव साऽनुनासिक-निरनुनासिकव्यवस्था चोपपन्ना भवति। ध्वनितञ्चेदं 'यथासङ्ख्यम्' 'उञ' इत्यादिसूत्रे भाष्ये। न चैवं 'लाकृतिरि'त्यादौ वकारप्रसङ्गः। समुदितस्थानत्वेन वकारस्याऽदन्त्यस्थानत्वात्।

---

लघुशब्दरत्नः

वाक्याऽर्थे निष्पन्ने, ल्वादिभ्यः (८।२।४४) इत्यादिनिर्देशाल्लक्षणया जायमाने पुनर्वाक्यार्थबोधे, लक्षितदीर्घादीनां स्ववाचकाऽन्वयिन्येवाऽन्वय इति भावः।

स्थानेऽन्तरतमसूत्रेणैवेति। व्यक्तिपक्षे व्यक्तीनामानन्त्येन सङ्ख्याज्ञानाऽभावात् यथासङ्ख्याऽसम्भवात्, लक्ष्याऽसिद्धेश्चेति भावः।

परे तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सर्वझकारदीनां ग्रहणं दुरुपपादम्। न हि तत्र लक्षणा वक्तुं शक्या, लक्ष्यताऽवच्छेदकाऽग्रहात्। एवञ्च तत्र प्रत्याहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो, नाऽन्यथा। एवं च 'अइउण्' इत्यादावपि जातिनिर्देश एवोचितः, अर्द्धजरतीयस्याऽनौचित्यात्।

अत एव अणुदित्सूत्रे भाष्ये प्रत्याहारेषु 'अस्य च्वौ' इत्यादौ च उक्ताम् अनुपपत्तिमाशङ्क्य जात्याश्रयणमेव कृतम्। यथासङ्ख्यसूत्रञ्च व्यक्तिसाम्ये इव धर्मसाम्येऽपि प्रवर्तते। स्यतासी ऌलुटोः (३।१।३३) इत्यादौ यथा।

नाऽप्यत्र पक्षे ऋकारादौ लकाराद्यापत्तिः। ऌत्वादिजातेर्ऋकारादावभावात्। न च जातिपक्षे अणुदित्सूत्रे अण्ग्रहणप्रत्याख्याने उपसर्गादृति (६।१।९१) इत्यादौ ऋकारेण ऌकारग्रहणाय सावर्ण्यवचनस्थाने ऌवर्णस्य ऋवदतिदेशात् ऌकारे रेफाऽऽपत्तिरिति वाच्यम्। क्ऌप्तशिखाऽर्थं तस्याऽतिदेशस्याऽनित्यत्वाऽऽवश्यकत्वात्।

---

[1] 'ऋपग्रहणे' इति ख. पाठः।

**अनचि च (८।४।४७)। द्वे वेति। यरोऽनुनासिकः (८।४।४५) इति[1] सूत्रात् वाग्रहणम् अनुवर्त्तते इति नाऽज्झलौ (१।१।१०) इति सूत्रे कैय्यटः। एवं च सर्वत्र शाकल्यस्य (८।४।५१) इति सूत्रम्, तत्प्रपञ्चभूतं पूर्वोत्तरसूत्रद्वयं च नाऽऽरम्भणीयमिति भावः।**

---

बृहच्छब्दरत्नः

अन्यूनाऽनतिरिक्तलाभेन अस्याऽग्रहणाच्च। कैय्यट इति। भाष्यस्वरसोऽप्येवमेव।

द्वयञ्चेति। यत्तु 'नादिन्याक्रोशे पुत्रस्ये'ति सूत्रे लिङ्गविशिष्टपरिभाषया पुत्रीशब्दस्याऽपि ग्रहणे 'पुत्र्यादिनी'त्यादौ [2]नित्यनिषेधे प्राप्ते विकल्पाऽर्थं 'त्रिप्रभृतिषु' इति सूत्रमावश्यकमि'ति। तन्न। लिङ्गप्रत्ययरहिते 'पुत्रादिनी'त्यादौ [3]पुत्रशब्दनिष्ठाऽकारमादाय 'त्रिप्रभृतिष्वि'ति सूत्रस्य दुर्वारत्वेन, निषेधवैयर्थ्याऽऽपत्त्या [4]तद्विषये अप्रवृत्तेः। न हि 'त्रिप्रभृतिष्वि'त्यनेन हलामेव ग्रहणमित्यत्र प्रमाणमस्ति। किञ्च 'पुत्रशब्दस्य न द्वे स्त' इति यथाश्रुतं न युक्तम्। पुत्रशब्दस्य द्वित्वाऽप्रवृत्तेः। किन्तु तदवयवपरः। अत एव 'उभयत[5] आश्रयणे नाऽन्तादिवदि'त्यस्य न विषयः। तथा च प्राधान्यात् 'आदिनी'ति यर एव विशेषणम्। एवञ्च 'पुत्रादिनी'त्यत्र रेफमात्रव्यवधाने चरितार्थो विधी रेफयकारव्यवधाने कथं प्रवर्त्तेत। अपि च 'पुत्र्याः शाकटायनस्ये'ति वक्तव्ये 'त्रिप्रभृतिष्वि'ति सूत्रं व्यर्थमेवेति दिक्।

यत्तु 'वा हतजग्धयोरि'त्यपि व्यर्थमि'ति। तन्न। 'आक्रोशे पुत्रस्ये'त्यस्य सत्त्वेन नियमाऽर्थत्वात्। 'स्त्रीप्रत्ययाऽन्त-हत-जग्धयोरेव विकल्पः' इत्येतदर्थं

---

लघुशब्दरत्नः

तत्पक्षे अण्ग्रहणप्रत्याख्यानेऽपि 'अप्रत्ययः' इत्यंशो वाक्यभेदेन विधीयमाने जातिग्रहणप्राप्तसवर्णग्रहणनिषेधकः, तपरसूत्रवदिति 'त्यदादीनामः' (७।२।१०२) इत्यादौ न दोषः।

एवञ्चाऽत्र यण्पदेन जात्याश्रयणेनाऽपि न सवर्णबोधनमिति स्वौजस् (४।१।२) इत्यादौ अनुनासिकस्थानेऽपि निरननुनासिक एव। अत एव स्थानेऽन्तरतमः (१।१।५०) इति सूत्रे भाष्ये अस्य तदुदाहरणत्वमाशङ्क्य 'यथासङ्ख्यम् (१।३।१०) इत्यनेनाऽपि सिद्धमि'त्युक्तम्। तेनाऽत्र तयोः फलाऽविशेष उक्तः।

उञः (१।१।१७) इति सूत्रे नव्यानां प्रमाद एव। न च झलादिषु झकारादिभी रूपसादृश्येन सर्वझकारादिप्रतीतिरिति वाच्यम्।[6] अगादिष्वपि किञ्चित्सादृश्यमाश्रित्य दीर्घादी-

---

[1] 'इति पूर्वसूत्रात्' इति क. पाठः।
[2] 'इत्यादौ निषेधे' इति ख. पाठः।
[3] 'पुत्रशब्दनिष्ठमाकारम्' इति क. ख. पाठः।
[4] 'तद्विषयप्रवृत्तेः' इति ख. पाठः।
[5] 'उभयत आश्रये' इति ख. पाठः।
[6] 'अणादिष्वपि' इति क. पुस्तके शोधितः पाठः।

यत्तु दीर्घादाचार्याणाम् (८।४।५२) इतिसूत्रे 'आचार्य'ग्रहणं पूजार्थमित्यभिप्रेत्य 'वाक्क्' [1]'वाक्'इति भाष्योदाहृते विकल्पे उपपत्तिचिन्ताऽर्थं क्लिश्यन्ते, तन्मुधैव। पूजाऽर्थतायाः प्रामाणिकैरनुक्तेः। त्रिप्रभृतिषु(८।४।५०) इति सूत्रे 'शाकटायन'ग्रहणस्याऽपि तथात्वाऽऽपत्तेः। न चेष्टाऽऽपत्तिः। 'संस्स्कर्ते'ति त्रिसकारपरकैय्यटहरदत्तादिग्रन्थविरोधात्। स्वग्रन्थविरोधाच्च। अत एव

बृहच्छब्दरत्नः

तस्य सत्त्वात्। न चाऽस्य पुँल्लिङ्गेऽपि प्रवृत्तिरिति भ्रमितव्यम्। 'नादिन्याक्रोशे पुत्रस्ये'तिसूत्रे उपसङ्ख्यानात् तद्विषये एव प्रवृत्तेः। 'अचो रहाभ्यां द्वे', 'नाऽचि च', 'आदिन्याक्रोशे पुत्रस्ये'ति सूत्रयितव्ये नञ्द्वयोपादानेन वैयर्थ्यशङ्कायुक्तोत्तरनञ्घटितवाक्यस्य 'नादिन्याक्रोशे पुत्रस्ये'त्यस्याऽनित्यत्वबोधनेन, पुंसि अप्रवृत्तेः। न च स्त्रीप्रत्ययाऽन्ते एवाऽप्रवृत्तिरस्त्विति वाच्यम्। भाष्यविरोधाऽऽपत्तेः। एतेन 'हतादिशब्दं विहाय भाष्ये स्त्रीप्रत्ययाऽन्तोपन्यासे बीजं चिन्त्यमि'त्युक्तिरेव चिन्त्या। ङीप्प्रकृतिभूतयोः 'पुत्रहत''पुत्रजग्ध'शब्दयोर्गौरादिपाठात् ङीषित्याहुः। न चैवं 'दीर्घादाचार्याणाम्' 'त्रिप्रभृतिष्वि'त्यनयोरपि नियमाऽर्थत्वं शङ्क्यम्। शास्त्रवैयर्थ्याऽऽपत्तेः।

क्लिश्यन्ते इति। तथा हि 'दीर्घादाचार्याणामि'ति सूत्रे 'अनची'त्यनुवर्त्तते। तच्च भाष्योदाहरणात्, 'नाऽची'ति वक्तव्ये गौरवाच्च शब्दाऽधिकाराऽऽश्रयणेन पर्युदासवृत्त्या हल्परमिह सम्पद्यते। तेन 'हल्येव नित्यनिषेधो, नाऽवसाने' इति।

अनुक्तेरिति। यत्तु प्राचीनप्रक्रियां व्याचक्षाणपौत्रा आहुः—'नादिनी'त्यत्र 'अनचि चे'त्यस्य, 'शरोऽची'त्यत्र 'अचो रहाभ्यामि'त्यस्य प्राप्तिर्वृत्तिकारैरुक्ता, 'त्रिप्रभृतिषु' 'सर्वत्र शाकल्यस्ये'तिसूत्रद्वये प्राप्तिमनुद्भाव्य 'दीर्घादाचार्याणामि'त्यत्र 'अनचि चे'ति प्राप्तिरुद्भाविता हरदत्तमिश्रैः। तेषां हि अयमाशय उन्नीयते—निषेध-

लघुशब्दरत्नः

नामपि [2]ग्रहणोपपत्तौ, अणुदित् (१।१।६९) सूत्रस्य 'तद्वाच्यवाच्ये'त्यस्य च वैयर्थ्याऽऽपत्तेः। ल्वादिभ्यः (८।२।४४) इत्यादिनिर्देशानाम् ईषत्सादृश्येनाऽपि ग्रहणमित्यर्थज्ञापकताया युक्तत्वात्।

तदप्युक्तम् 'अइउण्'सूत्रे भाष्ये–'रूपसामान्याद्वा सिद्धम्' इति। अणुदित्सूत्रे अण्ग्रहणन्तु प्रत्याहाराद्यवर्णेषु णकारादिभिश्चिह्नैः 'प्रत्याहारसूत्रस्थोऽयमि'ति प्रत्यभिज्ञासत्त्वादुपायाऽन्तरपरम्। 'आचार्याः कृत्वा न निवर्त्तन्ते' इति न्यायात्। इदमेवाऽभिप्रेत्य तत्रत्यम् अण्ग्रहणं प्रत्याख्यातं भाष्ये इत्याहुरिति दिक्।

क्लिश्यन्त इति। 'अनची'त्यनुवर्त्य पर्युदासपरतया 'हलि पर एव नित्यनिषेध'

[1] 'वाक्, वाक्क्' क. मुद्रितेषु च पाठः।

[2] 'दीर्घादीनामपि ग्रहणोपपत्तेः। ल्वादिभ्यः' इति क. पाठः। घ. पुस्तके 'अणुदित्सूत्रस्य, तद्वाच्यवाच्येत्यस्य च वैयर्थ्यापत्तेः' इति पाठः कुण्डलितः।

**प्रातिशाख्यभाष्येऽपि 'आ त्वा रथमि'ति मन्त्रे [1]तकारस्य द्वित्वविकल्प उदाहृतः। माधवेन च 'आस्स्ते' इत्यत्र सकारस्य द्वित्वविकल्प उक्तः। एवञ्च 'धात्त्रंशः' इत्यत्र तकारस्य द्वित्वम् असदि'त्युक्तिरेव असतीति दिक्।**

**बृहच्छब्दरत्नः**

विकल्पविधायके प्राप्त्युद्भावनं नाऽऽवश्यकम्। अप्राप्तविषयस्याऽपि [2]विकल्पस्य सम्भवात्। नित्यनिषेधे तदुद्भावनमावश्यकमि'ति। तदज्ञानविजृम्भितम्। विकल्पेन निषेधेऽपि निषेधप्रकरणे पाठेन नञुल्लेखस्याऽऽवश्यकत्वे, प्राप्त्युद्भावनस्याऽऽवश्यकत्वात्। माधवादिविरोधेन वृत्त्यादिग्रन्थानां त्यक्तुं शक्यत्वाच्च। 'आचार्य'ग्रहणं कुर्वतः सूत्रकारस्येहाऽनुकूलत्वात्।

नचाऽऽचार्यग्रहणस्य विकल्पाऽर्थत्वे शाकल्यग्रहणाऽनुवृत्त्यैव सिद्धिरिति वाच्यम्। 'शाकटायन'ग्रहणाऽनुवृत्त्यैव सिद्धौ 'शाकल्य'ग्रहणस्याऽपि पूजार्थताऽऽपत्तेः। न चेष्टाऽऽपत्तिः। 'आचार्यैस्तु 'सर्वत्र शाकल्यस्ये'ति पाक्षिकनिषेधेनाऽपि फलसिद्धेः 'वा' इति नाऽनुवर्त्तितमि'ति प्रक्रियाप्रकाशेन सह विरोधाऽऽपत्तेः। विधेर्निर्विषयत्वाऽऽपत्तेश्च। [3]स्वमतप्रच्युत्यभावाऽर्थं तदङ्गीकारे तु सममस्माकम्।

वस्तुतस्तु 'त्रिप्रभृतिष्वि'ति सूत्रत्रयेण न द्वित्वनिषेधविकल्पो विधीयते, अपि तु विकल्पस्यैव मतभेदप्राप्तव्यवस्था बोध्यते। अपि च 'अनन्तरस्य विधिर्वा भवति, प्रतिषेधो वे'ति न्यायाऽप्राप्तिं बोधयितुं, 'पुत्रादिनी', 'अप्सराः' 'दात्रमि'त्यादौ वार्त्तिकप्राप्तद्वित्वस्य न निषेध इति बोधयितुं वा सूत्राणामुल्लेख [4]इति वृत्त्याद्याशयो वक्तुं शक्यः। न्यायाऽप्राप्तिरिष्टाऽनुरोधेन सामर्थ्यात्, वार्त्तिकाऽनिषेधो ज्ञापकादित्यन्यदेतत्। न चैवम् 'इन्द्र' इत्यत्र वार्त्तिकोक्तद्वित्वाऽनिषेध इति बोधयितुं 'त्रिप्रभृतिष्वि'ति सूत्रेऽपि द्वित्वप्राप्त्युल्लेख आवश्यक इति वाच्यम्। 'इन्द्र' इत्यादौ नकार-षकारयोर्द्विर्वचनाऽभाव' इति मिश्रग्रन्थेन द्वित्वप्राप्त्युल्लेखस्य कृतप्रायत्वात्। किञ्च आचार्यग्रहणस्य पूजाऽर्थकत्वे 'भ्राष्ट्रमि'त्यादौ विकल्पाऽर्थं 'त्रिप्रभृतिष्वि'तिसूत्रस्याऽऽश्यकत्वेन 'भ्राष्ट्रमि'त्युदाहरणपरवृत्तिग्रन्थस्य यथाश्रुतत्वेनैवोपपत्तौ 'दीर्घादाचार्याणामि'त्यस्याऽसिद्धत्वात्, त्रिप्रभृतिष्वयमेव प्रतिषेधो भवतीति मन्यते' इति मिश्रोक्तं भङ्क्त्वा व्याख्यानं विरुध्येतेत्यास्तां तावत्।

दिगिति। दिगर्थस्तु 'वाक्' 'वाक्क्' इति भाष्योदाहरणविरोधः। न चोक्त-

**लघुशब्दरत्नः**

**इति व्याख्यानेनेति भावः। विकल्प उक्त इति। एवञ्च सर्वत्र शाकल्यस्य (८।४।५१) इतिवत् इदमपि प्रपञ्चाऽर्थमिति भावः।**

[1] 'तकारद्वित्वविकल्पः' इति क. ख. पाठः।

[2] 'विकल्पसम्भवात्' इति क. पाठः।

[3] 'स्वमतप्रच्युतभावार्थम्' इति क. ख. पाठः।

[4] 'इत्याद्याशयो वक्तुं शक्यः' इति ख. पाठः।

**स्थानिवदादेशः।** (१।१।५६) 'धात्व-ङ्ग-कृ-त्तद्धिता-ऽव्यय-सुप्-तिङ्-पदादेशाः' इति प्राचोक्तम्। तत् किं परिगणनम्, उदाहरणमात्रं वा ?। नाऽऽद्यः। सिच्-क्स-चङ-ङादीनां, श्नाऽऽदेशस्य शानचश्चासङ्ग्रहाऽऽपत्तेः।

बृहच्छब्दरत्नः

रीत्या निर्वाहः। मण्डूकाऽनुवृत्त्यादेरप्रामाणिकत्वात्। नन्वेवमपि चर्त्वे, द्वित्वे, पूर्वककारस्य 'झलां जश् झशी'ति जशो दुर्वारत्वेन भाष्यप्रयोगो न युक्त एवेति चेन्न। झश्परत्वसम्पादनाऽर्थं चर्त्वाऽसिद्धत्वस्याऽऽवश्यकत्वेन गकारे फलाऽभावात् अप्रवृत्तेः। 'पर्जन्यवल्लक्षणप्रवृत्तिरि'ति तु शास्त्रदृष्ट्या प्रयोजनसम्भावनायामेव। किञ्च 'खरि चे'ति दुर्वारम्। न च 'वाऽवसाने' इति चर्त्वस्याऽसिद्धत्वेन खर्परत्वं नास्तीति वाच्यम्। प्राप्ताऽप्राप्तविवेकेन 'आगन्तूनामन्ते निवेश' इति न्यायेन परवद्-द्वितीयवर्ण-मात्रोत्पत्तेरङ्गीकृतत्वेन चर्त्वेनोत्पत्तेरभावात्। अत एव प्रकरणाऽसिद्धत्व-सूत्राऽसिद्धत्वपक्षयोः फलैक्यम्। केचिदीदृशे विषये पूर्वत्र गकारमेवेच्छन्ति।

धात्वङ्गेति। 'भव्यम्' 'केन' 'प्रकृत्य' 'अद्यतनम्' 'अधोऽधः' 'रामाय' [1]'भवताम्' 'वः' इत्याद्युदाहरणानि। न च अङ्गग्रहणेनैव सिद्धौ 'धातु'ग्रहणं व्यर्थम्। आर्द्धधातुके विवक्षिते विधानात्।

सिजिति। प्रयोजनन्तु प्रत्ययत्वादिलाभः। न चाऽधिकारात्तत्सिद्धिः। उक्तोत्तरत्वात्। [2]आदिना त्वीटो ग्रहणम्। यत्तु अव्ययग्रहणं विभक्तिलुकि स्थानिवद्भावाऽभावज्ञापनाऽर्थम्। न च फलाऽभावः। 'सुराजानौ' इत्यादौ पदत्वाऽभावस्यैव सत्त्वात्। 'उत्तरपदत्वे चाऽपदादिविधौ' इति तूक्तसिद्धा-

लघुशब्दरत्नः

असतीति। यत्तु नादिनी (८।४।४८) इत्यादौ वृत्तौ अनचि (८।४।४७) इति प्राप्तिमुद्भाव्य त्रिप्रभृतिषु (८।४।५०) सर्वत्र (८।४।५१) इत्यनयोः प्राप्तिमनुद्भाव्य, पुनः दीर्घात् (८।४।५२) इत्यत्र अनचि (८।४।४७) इति प्राप्तिरुद्भाविता हरदत्तेन। तस्याऽयमाशयः,—'निषेधविकल्पे प्राप्त्युद्भावनं नाऽऽवश्यकम्। तद्विकल्पे विधिविकल्पस्य फलितत्वेन, विधेरेव अप्राप्तविषयविकल्पसम्भवात्। नित्यनिषेधे तु तदुद्भावनमावश्यकमि'ति।

तन्न। विकल्पेऽपि निषेधप्रकरणात् नञुल्लेखस्याऽऽवश्यकत्वेन प्राप्त्युद्भावनस्य आवश्यकत्वात्। 'मध्ये नञोऽसम्बन्धो, मण्डूकाऽनुवृत्तिरग्रे' इत्यत्र मानाऽभावाच्च। सर्वत्र (८।४।५१) इति सूत्रे 'अस्य द्वित्वमात्रनिषेधकते'ति बोधयितुं तदनुल्लेखाच्च। 'त्रिप्रभृतिषु (८।४।५०) इत्येतद्विषये नकार-षकारयोर्द्विर्वचनाऽभावः' इति मिश्रग्रन्थेन प्राप्त्युल्लेखस्य कृतप्रायत्वाच्च। वृत्ति-हरदत्तयोः 'नादिन्या' (८।४।४८) शरोऽचि (८।४।४९) इत्यनयोरपि प्राप्त्युल्लेखस्य बहुषु पुस्तकेषु अनुपलम्भाच्चेति दिक्।

चङ्ङादीनामिति। आदिना चिण्। न केवलं च्ल्यादेशानामेवाऽसङ्ग्रह इत्याह—

[1] 'भवतात्' इति क. पाठः।

[2] 'आदिना त्वाटो ग्रहणम्' इति ख. पाठः।

नाऽन्त्यः। अव्ययस्य अङ्ग-पदाभ्यां पृथग्ग्रहणवैयर्थ्यात्। 'प्रस्तुत्ये'ति

बृहच्छब्दरत्नः

ऽर्थकथनम्। तदयुक्तमिति ध्वनयन्नाह—श्नादेशस्येति। तथा च 'स्कुभाने'त्यादौ हेर्लुकः सत्त्वेन असिद्धिः। चेन 'मातापितरौ' इत्यादीनां संग्रहः। एतेन 'द्वैराश्येनोक्तौ, प्रथमपक्षे अव्ययग्रहणवैयर्थ्याऽनुक्तौ च बीजं चिन्त्यमि'त्युक्तिरेव चिन्त्या।

अव्ययस्येति। न च 'न लुमताऽङ्गस्ये'ति निषेधेनाऽङ्गत्वमेव[1] दुर्लभमिति वाच्यम्। अङ्गसञ्ज्ञाया अङ्गनिमित्तकार्यत्वाऽभावेन निषेधाऽप्रवृत्तेः। अत एव 'पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलम्—'तद्धितार्थे'ति समासे, ठकः 'अध्यर्धपूर्वे'ति लुकि, 'लुक्तद्धितलुकी'ति स्त्रीप्रत्ययलुकि, स्वमोर्लुकि,—'पञ्चक्रोष्टृ' इति प्रयोगसिद्धिः। स्पष्टञ्चेदं 'युवोरनाकौ' 'तृज्वत्क्रोष्टुः' 'स्त्रियाञ्चे'ति सूत्रे भाष्यकैय्यटपदमञ्जर्यादौ।

नचैवं 'वृषण्वस्वश्वयोरि'त्यनेन भत्वात् 'वृषण्वसुरि'त्यादौ अन्तर्वत्तिनीं विभक्तिमाश्रित्य अङ्गत्वेन 'अल्लोपोऽन' इति स्यादिति वाच्यम्। अङ्ग-भ-सञ्ज्ञाऽऽक्षिप्तयोः प्रत्यासत्तिन्यायेन एकत्वाऽङ्गीकारादत्राऽप्रवृत्तेः।

एतेन 'कारीषगन्धीपुत्र' इत्यादौ 'हल' इत्यनेनैव दीर्घसिद्धौ 'सम्प्रसारणस्ये'ति-सूत्रवैयर्थ्यमि'त्यपास्तम्। 'हल' इति दीर्घस्योत्तरपदाऽनिमित्तकत्वेन अन्तरङ्गत्वात्, उत्तरपदनिमित्तकसम्प्रसारणस्याऽसिद्धत्वेन अप्रवृत्तेश्च।

नन्वेवं मृज्धातोर्यङ्लुकि 'मर्मृष्ट' इत्यादौ 'मृजेर्वृद्धिरि'ति वृद्धिर्दुर्वारा।

लघुशब्दरत्नः

आऽऽदेशस्येति। तदभावे हि 'अवादिषातामि'त्यत्र इट् न स्यात्, क्सादेः कादीनाम् इत्त्वं न स्यात्, [2]शानचः शस्य च तन्न स्यात्, 'मा हि दर्शदि'त्यादौ अङि गुणो न स्यादिति भावः।

ननु सिजादीनां प्रत्ययाऽधिकारे पाठात् श्नम्वत् प्रत्ययत्वमस्तीति न स्थानिवत्त्वोपयोगः। न च तेषां प्रत्ययत्वे च्लिविधानं व्यर्थम्। मन्त्रे घस (२।४।८०) इति सूत्रे चङ-अङ-सिचामिति त्रयाणां ग्रहणे गौरवाऽऽपत्तेः। सिचो लुकि, तद्विषये आदिः सिचः (६।१।१८७) इति स्वराऽऽपत्तेश्चेति भाष्यकैयटयोः स्पष्टमित्यरुचेराह—चेति। तेन 'अग्रहीदि'त्यादाविडादेशस्य ईटोऽसङ्ग्रह इत्यर्थः। इदमुपलक्षणम्—अव्ययस्य पदात् पृथग्ग्रहणवैयर्थ्यमपि दोष इति बोद्धयम्।

अव्ययस्येति। अत्र त्वस्यैव दोषत्वमिति भावः।

नन्वव्ययस्याऽङ्गत्वे फलाऽभावेन, प्रत्ययस्य लुका लुप्तत्वेन च, तदप्राप्त्या कथं तेनाऽव्ययसङ्ग्रहोऽत आह—पदेति। तत्त्वं च ततः परस्य निघाताऽर्थमावश्यकम्। प्रत्ययलक्षणेन सुबन्तत्वाच्च तत्त्वमिति भावः।

[1] 'अङ्गत्वं दुर्लभमिति वाच्यम्' इति ख. पाठः।

[2] 'शानचः शस्य चेत्त्वं न स्यात्' इति क. घ. पाठः। स च हरिताललेपेन तत्रैव 'तन्न स्यादि'ति केनाऽपि शोधितः।

**वृत्तिकारोक्तं तदुदाहरणमपि मन्दम्। क्त्वामात्रस्य अनव्ययत्वात्। कृत्त्वेन सिद्धत्वाच्च, इत्याशयेनाऽऽह—आदेश इति।**

**अनल्विधाविति किम्?। तेन, तस्मात्, तस्य, तस्मिंश्च विधौ मा भूत्। तत्र अला विधौ यथा—व्यूढोरस्केन। अत्र सकारस्य स्थानिवत्त्वेन विसर्गवत् अट्त्वमाश्रित्य अड्व्यवाये (८।४।२) इति णत्वं प्राप्तम्।**

---

बृहच्छब्दरत्नः

त्वदुक्तरीत्या प्रत्ययलक्षणेन अङ्गत्वात्। 'क्ङिति चे'ति निषेधस्तु न प्रवर्त्तते। 'न लुमताऽङ्गस्ये'ति निषेधस्य दुर्वारत्वेन प्रत्ययलक्षणाऽभावादिति चेन्न। 'क्ङिती'तिनिमित्तपरतया वर्णितत्वेन प्रत्ययलक्षणाऽनपेक्षणात्। 'परिमृड्भ्यामि'त्यादौ वृद्ध्यभावाऽर्थं 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमि'त्यस्यावश्यकत्वेन प्रकाराऽन्तरेणाऽपि प्रत्ययस्य निमित्तकोटौ प्रवेशेन 'न लुमते'तिनिषेधस्य दुर्वारत्वाच्च।

एतेन 'मृजेर्वृद्धिरि'त्यस्याऽङ्गाऽधिकारे पाठेन प्रत्ययोत्पत्त्यनन्तरं प्रवृत्तिरिति तावन्निर्विवादम्। स च प्रत्ययः, 'न केवला प्रकृतिः प्रयोक्तव्या, [1]नाऽपि केवलप्रत्यय' इति निषेधबोधितमृजप्रकृतिक एवेति न परिभाषाया अत्रोपयोग' इत्यपास्तम्। मृजेरिव तदन्तस्याऽपि ग्रहणात्। ध्वनितञ्चेदं भाष्ये। अत एव 'अर्व गर्व' इत्यादौ त्रादेशो न। तत्राऽपि 'असौ' इति पर्युदासेन प्रत्ययस्य ग्रहणादिति निरूपयिष्यामः।

अनव्ययत्वादिति। समुदायस्याऽव्ययत्वेऽपि आदेशाऽभावः। ननु जहत्स्वार्थवृत्तौ क्त्व आनर्थक्यात् 'सर्वे सर्वपदादेशा' इति न्यायेन 'प्रस्तु-त्वा' इत्यस्य स्थाने 'प्रस्तुत्य' इत्यादेश इत्यभिप्रायेणेदमुक्तमिति चेन्न। प्रक्रियादशायां जहत्स्वार्थवृत्तेरङ्गीकारात्। [2]अत एव 'सुपन्थाः' इत्यादिसिद्धिः। प्रकृते तुक्सिद्धिश्च।

---

लघुशब्दरत्नः

सिद्धत्वाच्चेति। अत एवाऽत्र तुक्। न च 'सर्वे सर्वपदाऽऽदेशाः' इति न्यायेन 'प्रस्तु-त्वा' इत्यस्य स्थाने 'प्रस्तुत्ये'त्यादेशे, तस्याऽव्ययत्वसिद्धिरिति वृत्त्याशय इति वाच्यम्। 'अर्थवत्येव स्थानित्वमि'ति तात्पर्येण क्त्वोऽपि अर्थवत्त्वेन तादृशस्थान्यादेशभावकल्पने मानाऽभावादिति दिक्।

अनल्विधाविति किमिति। विधिग्रहणविशिष्टं किमर्थमिति प्रश्नः। णत्वं प्राप्तमिति। न च सकारे स्वतोऽड्भिन्नत्वसत्त्वात् 'अड्भिन्नव्यवाये ने'ति निषेधात् कथं णत्वप्राप्तिरिति वाच्यम्। अतिदिश्यमानधर्मविरुद्ध-स्वाश्रयधर्म-प्रयुक्तकार्याऽभावस्य अतिदेशस्वभाव-

---

[1] 'नाऽपि केवलप्रत्ययः' इति पाठः ख. नास्ति।

[2] 'अत एव च' इति क. पाठः।

**अलः परस्य–'द्यौः', 'पन्थाः'। हल्ङ्याादिलोपो न। अलो विधौ–द्युकामः। वलि लोपो न।**

बृहच्छब्दरत्नः

द्युकाम इति। ननु वत्वस्याऽशास्त्रीयत्वेनाऽतिदेशाऽप्रवृत्तिः[1]। अत एव 'घसस्तासौ नित्याऽनिट्त्वाऽभावात्थलि नित्यमिडि'त्याकरोक्तं सङ्गच्छते इति चेत्। अत्र वदन्ति—'स्थानिवदि'त्यत्र कार्य-शास्त्रयोर्विनिगमकाऽभावादतिदेशः। कार्यस्य प्राधान्यात्, शास्त्रस्य प्रत्यासन्नत्वात्, तयोर्लक्ष्याऽनुरोधेन व्यवस्था। अत एव 'शब्दाऽन्तरस्य प्राप्नुवन् विधिरनित्यो भवति' 'कृताऽकृतप्रसङ्गी नित्यः' 'परिवीरि'-त्यत्र परत्वाद्दीर्घ' इत्याद्याकरोक्तं सङ्गच्छते।

यत्तु 'अतिदिश्यमानानां कार्याणामुत्पत्तिदेश एव देशः। अतिदिश्यमान-कार्याणां तत्तद्विधिसापेक्षत्वेन प्रथमोपस्थितत्वेन, लाघवेन च तथैव युक्तत्वात्। अत एव 'एनीमाचष्टे एतयती'त्यत्र पुंवद्भावे टिलोपः। 'णाविष्ठवदि'त्यत्रैवोत्पत्य-ऽङ्गीकारे तु आभीयत्वेनाऽसिद्धत्वं दुर्वारमि'ति। तन्न। शास्त्रस्य प्रथमोपस्थित-त्वेन विनिगमकस्य नियन्तुमशक्यत्वात्। कार्ये स्वतः परत्वाऽभावेन, परशास्त्र-विहितपरत्वस्य[2] चाऽभावेन कार्याऽतिदेशे, उक्तदोषाऽनिस्ताराच्च।

एतेन 'इनादीन् बाधित्वा परत्वाज्जरसि'ति ग्रन्थोऽपि व्याख्यातः। कार्य-ञ्चाऽत्र न जरसादिरूपमेव, किन्तु शास्त्रविहितम्। तेन 'रामाय' 'काभ्यामि'-त्यादौ सुप्त्वा-ऽङ्गत्व-प्रत्ययत्वादीनामतिदेशेन लाभादुपदेशेनैव दीर्घः। अयमेव च व्यपदेशोऽतिदेशशब्देन व्यवह्रियते। यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तावतिदेश-प्रवृत्तिर्मृग्यते, तन्निमित्तं शास्त्रीयमेव गृह्यते। कार्यमपि तथैव। संन्निहितत्वात्। वत्वन्तु शास्त्रीयमेव। 'स्वं रूपमि'ति, 'अणुदिदि'ति च परिभाषणात्।

नचैवमपि वस्-नसादौ प्रातिपदिकत्वं दुर्वारम्, प्रत्ययान्तत्वस्याऽशास्त्रीयत्वेना-ऽतिदेष्टुमशक्यत्वात्। 'पञ्चसखे'त्यादौ तु न दोषः। लोपस्य स्थानिवद्भावेन सुप्तिङ्न्त्वात्। तदन्तत्वस्य आर्थसमाजग्रस्तत्वादिति वाच्यम्। 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमि'त्यस्य सत्त्वेन प्रत्ययान्तत्व-सुबन्तत्वा-

लघुशब्दरत्नः

**सिद्धत्वात्। इदञ्च असिद्धवत्सूत्रे कैय्यटे स्पष्टम्।**

**द्युकाम इति। यद्यपि वत्वं हल्त्वाद्यपेक्षया विशेषधर्मः, तथाऽपि एतद्वाक्योपप्लुते 'वकारवद्वुकार' इतिवाक्ये उपात्तधर्माऽपेक्षया न [3]तस्य तत्त्वम्, सूत्रक्लृप्तस्थान्यादेशभावमादायैव एतत्कृतवाक्योपप्लवादिति भावः।**

[1] 'अतिदेशाऽप्राप्तिः' इति ख. पाठः।

[2] 'परत्वस्य वाऽभावेन' इति ख. पाठः

[3] 'तस्य' इति लिखितेषु नास्ति।

अलि विधौ—यजेः क्तः—क इष्टः। हशि च (६।१।११४) इत्युत्वं न। अल् चेह स्थान्यवयव एव गृह्यते। तेन 'रामाये'त्यादौ सुपि च (७।३।१०२) इति दीर्घः [1]सिद्ध्यति। तद्विधौ हि यञादित्वमाश्रितम्। यञ् च आदेशाऽवयवो, न तु स्थान्यवयव इति। तदेतत्सकलमभिप्रेत्याऽऽह-

बृहच्छब्दरत्नः

दीनामपि शास्त्रीयत्वमेवेति दिक्।

नन्वेवमपि वत्वस्य हल्त्वाद्यपेक्षया विशेषधर्मत्वेनाऽतिदेशाऽप्राप्तिः, 'सामान्याऽतिदेशे विशेषाऽनतिदेश' इति सिद्धान्तात्। अत एव 'ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमि'त्युक्ते माठरादिविशेषकार्यं नाऽतिदिश्यते। अत एव च 'आशंसायां भूतवच्चे'तिसूत्रे भूतसामान्ये विहितयोर्लुङ्-निष्ठयोरेवाऽतिदेशो, न तु भूतविशेषविहितयोर्लङ्-लिटोरपी'ति सिद्धान्तः।

नन्वयं सिद्धान्तः 'उपस्थितसामान्यधर्मैस्तदाक्षिप्तव्यापकधर्मैश्च विध्याकाङ्क्षापूरणे सति, अनुपस्थितस्य विशेषस्य ग्रहणे प्रमाणाऽभाव' इति तर्कमूलकः। 'स्थानिवदादेश' इत्यत्र तु स्थानित्वधर्मोपस्थितिः। न च तन्निमित्तकार्यमस्ति। तथा चाऽतिदेशसामर्थ्यादन्येषां ग्रहणे, विनिगमकाऽभावात् सर्वेषां ग्रहणमिति दृष्टान्त-दार्ष्टान्तिकयोर्महद्वैषम्यम्।

अथ 'स्थानिवदादेश' इति सङ्ग्राहकवाक्याल्लक्ष्यसंस्कारकाणि वाक्यानि उपप्लवन्ते, 'हन्तिवद् वधिर्भवति', 'तसूवत् ताम् भवति' 'क्त्वावत् ल्यब्भवती'-त्यादि। न चैवं हन्तित्वादीनामप्यतिदेशाऽनापत्तिः, 'धातुवद् वधिर्भवती'त्याद्याकारकाणामतिदेशवाक्यानां कल्पयितुं शक्यत्वेन एतेषां विशेषधर्मत्वादिति वाच्यम्। 'स्थान्यादेशविधायकवाक्ये हन्तित्वस्यैवोद्देश्यतावच्छेदकत्वेन तमादायैव वाक्यकल्पनाया उचितत्वादि'ति विभाव्यते, तर्हि 'वकारवदुकारः', 'विसर्गवत् सकारः', 'यकारवद् इकारः' इत्यतिदेशानामापत्तौ, ब्राह्मण्यनिमित्तकार्यवद्,

लघुशब्दरत्नः

क इष्ट इति। यद्यपीदं रूपम् उत्वे, गुणे, अवादेशे च, पाक्षिकलोपेन सिद्ध्यति, तथाऽपि पक्षे 'कविष्ट' इति स्यात्। 'कयिष्ट' इति चेष्यते इति भावः।

स्थान्यवयव एवेति। उपलक्षणमेतत्। स्थानिरूपोऽपीति बोद्धव्यम्। अत एव 'आदेशिनि अल्याश्रीयमाणे प्रतिषेधः' इति भाष्ये उक्तम्।

न तु स्थान्यवयव इति। अतः प्रत्ययत्वं स्थानिवत्त्वेन भवत्येवेति भावः।

[1] 'सिद्धः' इति मुद्रितेषु पाठः।

**न तु स्थान्यलाश्रय इति। आश्रयणं चेह यथाकथंचित्, न तु प्राधान्येनैवेत्याग्रहः। तेन 'प्रपठ्ये'त्यत्र वलादिलक्षण इण् न।**

**तन्निषेधादिति। स्थानिवत्त्वनिषेधादित्यर्थः।**

**[1]अचः। (१।१।५७) अल्विध्यर्थमिति। तेन 'वव्रश्चे'त्यत्र**

**बृहच्छब्दरत्नः**

वत्वनिमित्तलोपाऽऽपत्तौ, मनुष्यत्वनिमित्तकार्यवत् सामान्यधर्मनिमित्तककार्यस्य च दुर्वारताऽऽपत्तौ, 'अनल्विधौ' इति उक्तोदाहरणव्यावृत्त्यर्थमावश्यकम्।

न चैवमप्युत्तरग्रन्थो न युक्तः, सेट्कस्याऽवलादित्वेन विशेषत्वादिति वाच्यम्। 'न ल्यपी'ति सूत्रेण विशेषधर्माणामप्यतिदेशज्ञापनात्। तद्धि किति परतो विहितमीत्वं निषेद्धुमारभ्यते। तन्निष्ठं कित्त्वञ्च क्त्वाविशेषधर्मः।

न चैवमपि 'अनल्विधावि'ति निषेधस्य दुर्वारत्वेन वैयर्थ्यम्। 'अनेकान्ता' इति पक्षे अनुबन्धानां स्थान्यल्त्वाऽभावात्। एकान्तपक्षेऽप्यन्तरङ्गेण लोपेन आदेशसम्बन्धात् प्रागेव अनुबन्धानामपहारात्।

यत्तु 'सेर्ह्यपिच्चे'ति 'अपिद्'वचनं ज्ञापकमि'त्याहुः। तन्न। न्यायप्राप्तेऽर्थे ज्ञापकोपन्यासस्याऽयुक्तत्वात्। 'शृणीहि विश्वतः प्रति' इत्यादावन्तरङ्गपरिभाषया प्राप्ताऽनुदात्तबाधेन चरितार्थत्वाच्चेत्याहुः।

'विधि'ग्रहणमपि विशेषाऽतिदेशज्ञापकम्। तद्धि 'विधिमात्रे निषेधो यथा स्यादि'त्येतदर्थम्। अन्यथा षष्ठ्यन्तोक्तौ सर्वनिर्वाहे किं 'विधि'शब्देन। अत एव कित्त्वादीनमशास्त्रीयत्वेऽपि न दोषः। नन्वेवमपि 'द्युकाम' इत्ययुक्तमेव। अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वेन 'दिव उदि'त्यस्याऽप्रवृत्तेः। अत एव 'त्रिदिवेशा दिवौकस'[2] इत्यमरः सङ्गच्छते' इति चेन्न। मानाऽभावात्। 'द्युप्रागपागुदगि'तिसूत्रविरोधाच्च। अमरकोशे तु 'दिव'शब्दम् अदन्तमाश्रित्य वृध्या 'दिवौकस' इति रूपं बोध्यम्। पररूपे 'दिवोकस' इत्यपीत्यन्यत्र विस्तरः।

**वव्रश्चेति।** यद्यपि 'दीर्घोऽकित' इति सूत्रस्थ'किद्'ग्रहणेन अभ्यासकार्ये समावेशो ज्ञाप्यते, तथापि युगपत्प्रमित्यनुष्ठानयोरसम्भवेन, क्रमप्रवृत्तौ नियामकाऽपेक्षायाम् 'उभयेषां'ग्रहणसामर्थ्येन पूर्वमभ्याससम्प्रसारणे, परत्वाद् 'उरदि'त्यनेन अरादेशे,

**लघुशब्दरत्नः**

**'अग्रहीदि'त्यादौ 'ग्रहोऽलिटि' (७।२।३७) इत्यनेन इट एव दीर्घविधानान्नाऽल्त्वेन तस्य स्थानितेति, तद्वृत्तीट्त्वाऽऽश्रयस्य सिचो लोपस्य सिद्धिरिति बोध्यम्।**

**यथाकथंचिदिति। व्याख्यानादिति भावः।**

[1] 'अचः' इति प्राचीनलिखितादर्शेषु नास्ति।

[2] 'दिवोकसः' इति क. ख. पाठः।

**वस्य सम्प्रसारणं न। उरदत्त्वस्य स्थानिवत्त्वेन सम्प्रसारणतया न सम्प्रसारणे (६।१।३७) इति निषेधात्। न च उरदत्त्वं परनिमित्तं नेति**

बृहच्छब्दरत्नः

'हलादिः शेष' इत्यनादेर्निवृत्तिः। युगपत्प्रवृत्तावपि 'हलादिः शेष' इत्यर्थस्य जागरूकत्वेन विनश्वरमुखैव रेफोत्पत्तिः, 'उरण् रपर' इति परिभाषाया एव वा न प्रवृत्तिः। किञ्च 'उरदि'त्यादौ वैयधिकरण्येनैव सम्बन्धः, 'अकिद्'ग्रहणेन समावेशवत्, तस्याऽपि ज्ञापनात्। अन्यतरज्ञापने चारितार्थ्यस्य निरूपयितुमशक्यत्वादित्याद्यग्रे निरूपयिष्यामः।

न च 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति न्यायेन निर्वाहः। युगपत्प्रवृत्त्ययोग्यत्वे धर्मिग्राहकमानेन न्यायप्रवृत्तेः। 'सकृत्प्रवृत्त्या, युगपत्प्रवृत्तेश्च, परस्य सम्प्रसारणे कृते, पूर्वस्य यत्र सम्प्रसारणपरत्वं भावि, तत्र पूर्वस्य सम्प्रसारणं ने'त्यर्थो ज्ञाप्यते। प्रकारान्तराणि तु आकरग्रन्थादनुसन्धेयानि।

वस्तुत उक्तन्यायप्रवृत्तावपि नाऽत्र क्षतिः। न च 'न सम्प्रसारणे' इतिनिषेधवैयर्थ्यम्। 'पूर्वं परस्य यणः सम्प्रसारणमि'ति ज्ञापनाऽर्थमिति मूले एवोक्तत्वात्। तथा च 'न सम्प्रसारणे' इति सूत्रं 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति न्यायाऽनुवादकमि'ति तेषामाशयः।

वस्तुतस्तु 'विविचतुः' 'विविधतुरि'त्यादौ 'ग्रहिज्ये'ति [1]सम्प्रसारणोत्तरं द्वित्वप्रवृत्त्या 'लिट्यभ्यासस्योभयेषामि'ति लक्षणाऽन्तरेण प्राप्तसम्प्रसारणनिषेधाऽर्थं 'न सम्प्रसारणे' इति सूत्रमावश्यकम्। न च 'लिटी'ति यणो विशेषणादाद्यस्य न भविष्यतीति वाच्यम्। यणोऽनुपस्थितेः। 'सम्प्रसारण'पदेनोपस्थितिस्तु पदार्थैकदेशत्वान्न विशेषणाऽर्हा। अत एव 'उवाय' 'ऊयतुरि'त्यादिसिद्धिः।

न च 'ग्रहिज्ये'ति सूत्रे 'वयि'ग्रहणसामर्थ्यात्तत्सिद्धिरिति वाच्यम्। 'लिटि वयो य' इति सूत्रे 'इह किञ्चित् त्रपोरि'ति न्यायेन लिड्ग्रहणसामर्थ्येन अन्यत्राऽपि [2]क्वचिद् वयेः प्रयोगज्ञापनेन चारितार्थ्यात्। वचनद्वयस्य प्रामाण्येन विकल्पस्याऽपि वक्तुं शक्यत्वाच्चेत्यन्यत्र विस्तरः। सम्प्रसारणपूर्वरूपस्य सम्प्रसारणत्वं तु 'हलः' 'न सम्प्रसारणे' इति ज्ञापकात्।

निषेधादिति। ननु 'विधिरि'त्यत्र भावे किप्रत्ययः, 'पूर्वस्ये'ति कर्मणि षष्ठी, उत कर्मणि किप्रत्ययः, 'पूर्वस्ये'ति स्थानषष्ठी। उभयथाऽपि 'न सम्प्रसारणे' इति निषेधे कर्त्तव्ये स्थानिवद्भावाऽप्रवृत्तिः। यत् मानान्तरेणाऽप्राप्तं येन ज्ञाप्यते स तत्कर्मको विधिः। अत एव 'इको यणची'ति यणिवधिरि'त्यादिशास्त्रकृतां

[1] 'सम्प्रसारणात्तरम्' इति क. ख. पाठः।

[2] 'क्वचिद्वयोः' इति ख. पाठः।

१३

**वाच्यम् । अङ्गाऽऽक्षिप्ते प्रत्यये परे तद्विधानात् । 'प्रागभ्यासविकारेभ्योऽङ्गाऽधिकारः' इति पक्षं दूषयित्वा 'आ सप्तमसमाप्तेरि'ति पक्षस्य[1] आकरे सिद्धान्तितत्वात् ।**

बृहच्छब्दरत्नः

व्यवहारः । 'व्रीहिभिर्यजेते'त्यादिर्द्रव्यादिविधिरि'ति मीमांसकोद्घोषः । एवञ्च नाऽयं स्थानिभूतादचः पूर्वकर्मको विधिः, नाऽपि पूर्वस्य स्थाने इति चेन्न ।

'पूर्वस्ये'ति शेषषष्ठ्याः सत्त्वात् । अनुवादे परिभाषाणामनुपस्थानात् । अत एव अणन्तद्विवचने 'श्रायसौ' 'गौमतौ' इत्यादौ नुमादयो न । एकादेशस्य परादिवद्भावेनाऽण्निरूपिताऽङ्गत्वस्य सुब्निरूपिताऽङ्गत्वमस्त्येवेति भाष्याद्याशयस्तु 'अनागमकानां सागमका आदेशा'इत्याश्रित्य 'पूर्वस्य स्थाने'इत्यपि व्याख्यातुं शक्यमिति । तन्न । न्यायसाम्येन 'सर्वे सर्वपदादेशा' इत्यस्यैवाऽऽश्रयणाऽऽपत्तौ, अचः स्थानिवत्त्वाऽभावेन, सूत्रस्य निर्विषयताऽऽपत्तेः । आगमाऽऽगमिभावे 'सर्वे सर्वपदादेशा' इति नास्ती'त्यग्रे निरूपयिष्यामः ।

किञ्च 'पूर्वविधौ' इत्यत्र आनुमानिकस्थान्यादेशभावग्रहे मानाऽभावः ।

अत एव पूर्वसूत्रे आदेशग्रहणं चरितार्थम् । एतेन 'आदेशग्रहणाऽनुवृत्तिसामर्थ्यात्तल्लाभ' इति निरस्तम् । 'अच' इत्यत्राऽप्युक्तन्यायेन 'षष्ठी स्थाने'-इत्यस्याऽप्रवृत्तौ योग्यताबलेन तल्लाभाऽर्थं तस्य चारितार्थ्याच्च । न च 'स्थाने'-पदाऽनुवृत्त्यैव तल्लाभः । उभयोरनुवृत्तौ मानाऽभावात् । अत एवोत्तरसूत्रे 'द्विवचने'ग्रहणं चरितार्थम् । तद्धि 'अचि ने'ति द्वित्वनिषेधे कर्त्तव्ये स्थानिवत्त्वनिषेधाऽर्थमिति दिक् ।

अङ्गाक्षिप्त इति । आक्षेपश्चाऽत्राऽनुमानम् । कार्यकालपक्षमादाय अङ्गसञ्ज्ञासूत्रेण सहैकवाक्यत्वे तदुपात्तप्रत्ययस्यैव निमित्तत्वमिति वा । स्पष्टञ्चेदं 'ष्यङः सम्प्रसारणम्' 'अङ्गस्य' 'युवोरनाकौ' इत्यादावाकरग्रन्थे ।

सिद्धान्तितत्वादिति । नन्वत्र 'प्रागभ्यासविकारेभ्योऽङ्गाऽधिकारः' इत्यस्मिन् पक्षेऽपि अभ्यासेन प्रत्ययाऽऽक्षेपो भविष्यती'ति चेन्न । 'धिन्विकृण्व्योर चे'त्यादिसूत्रस्थभाष्योक्तरीत्या सहविधाने परस्परनिमित्तत्वाऽभावेन [2]'बभ्रुः', 'जह्रुः' 'ययीः' 'पपीः' इत्यादावभ्यासे [3]प्रत्ययनिमित्तत्वाऽभावेन, यङ्लुगन्ते प्रत्यय-

लघुशब्दरत्नः

दूषयित्वेति । 'अङ्गस्य (६।४।१) इति सूत्रे भाष्ये' इति शेषः । एतदसिद्धञ्चैव दूषयित्वेत्यर्थः । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

[1] 'पक्षस्यैव' इति मुद्रितः पाठः ।

[2] 'बभ्रुः' इति क. ख. पाठः ।

[3] 'सत्यपि निमित्तत्वाऽभावेन' इति ख. पाठः ।

बृहच्छब्दरत्नः

परत्वाऽभावेन च, 'सन्यङोरि'त्यत्र षष्ठ्याः सत्त्वेन च, स्थानिवद्भावप्रवृत्त्युपयोगि-प्रत्ययपरत्वस्याऽऽक्षेप्तुमशक्यत्वात्। अत एव 'पादशतस्ये'ति सूत्रे 'लोप'-वचनं चरितार्थम्। अन्यथा वुना सह विधानेन, सुबन्तात्तद्धितोत्पत्तेश्च [1]समस्त-प्रकृतेः सत्त्वाच्च 'यस्ये'तिलोपे इव परनिमित्तत्वाऽऽपत्तौ तद्वैयर्थ्यं स्पष्टमेव। किन्तु साऽभ्यासस्य प्रत्ययाऽन्तत्वमात्रमाक्षेप्तव्यम्। न च 'बभ्रुरि'त्यादौ षाष्ठद्वित्वा-ऽभावेनाऽभ्याससञ्ज्ञैव नास्तीति वाच्यम्। अभ्यासलोपाद्यनापत्त्या 'धात्वधिकारीये द्वित्वे' इत्यर्थाऽङ्गीकारादित्यादि वक्ष्यते। अभ्याससञ्ज्ञायां प्रत्ययाऽनुपादानेन न तदेकवाक्यतयाऽपि प्रत्ययलाभः। न च 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवती'ति भाष्यपठितवचनेन स्थानिवद्भावप्रवृत्तियोग्यप्रत्ययलाभ इति वाच्यम्। धातुसञ्ज्ञकसमुदायस्योद्देश्यकोटावप्रवेशेन परिभाषाया अप्रवृत्तेः। 'क्वचिच्छ्रुत्या धातुप्रत्यये, अधातुप्रत्यये च परत्वे सति, तन्निमित्तीकृत्य यस्य प्रवृत्तियोग्यता, तत्रैव परिभाषाप्रवृत्तिरि'त्यर्थस्य 'भ्रौणहत्ये'ति धर्मिग्राहकोपन्यासेन 'मृजेर्वृद्धिरि'ति-सूत्रे भाष्ये ध्वनितत्वाच्च। अत एव 'द्युतिस्वाप्योरि'ति सम्प्रसारणं यङ्लुकि भवत्येवे'ति माधवादयः।

न चैवं 'हेरचङी'ति सूत्रस्याऽपि यङ्लुकि प्रवृत्त्यापत्तिः। न च 'अचङी'ति-पर्युदासेनाऽपि प्रत्ययस्य निमितत्त्वेनाऽऽश्रयणान्न दोष इति वाच्यम्। एवं हि 'अचङी'त्यस्य [2]वैयर्थ्याऽनापत्त्या ण्यधिकग्रहणे ज्ञापकताऽनापत्तेरिति वाच्यम्। ण्यधिकस्याऽग्रहणे केवलहिनोतेः पर्युदासवृत्त्या प्रत्ययपरत्वस्य निरूपयितुमशक्य-त्वेन वैयर्थ्यस्य स्पष्टत्वात्। तस्मात् 'अचङी'त्यस्य ण्यधिकस्य ग्रहणं, यङ्लुकि कुत्वाऽभावश्चेति प्रयोजनद्वयं बोध्यम्।

न चैवम् 'अभ्यासे चर्चे'त्यस्य लिण्निमित्तत्वाऽनापत्तौ 'बभणतुरि'त्यादा-वेत्त्वाऽभ्यासलोपौ दुर्वाराविति वाच्यम्। प्रकृतोदाहरणे लिण्नमित्ताऽऽभ्यासे जायमानत्वेन यथाकथञ्चिल्लिण्निमित्तत्वात्। ईदृशाऽर्थग्रहणे फलि-भजिग्रहणं ज्ञापकम्। तच्च सिद्धत्वायाऽऽवश्यकमिति स्पष्टमाकरे।

एतेन 'उपसर्गात्सुनोती'ति सूत्रे श्तिपा निर्देशेनाऽभ्यासनिमित्तकार्याणां तन्निमित्तप्रत्ययपरत्वे एव प्रवृत्तिर्ज्ञाप्यते। स हि 'अभिसोषवीती'त्यादौ षत्वाऽभावाऽर्थः। तत्र हि भवदुक्तरीत्याऽभ्यासनिमित्तप्रत्ययपरत्वाऽभावेऽपि 'स्थादिष्वभ्यासेने'तिनियमस्य दुर्वारत्वेनेष्टसिद्धौ किं तेने'ति परास्तम्।

अभ्यासनिमित्तकार्याणां यङ्लुक्यभावाऽऽपत्तेः। प्रकाराऽन्तरेण प्रत्ययपरत्वे 'न लुमताऽङ्गस्ये'ति निषेधस्य दुर्वारत्वेन प्रत्ययलक्षणस्य दुर्लभत्वात्। 'एत्येधत्यूठ्सु' इत्यादौ धातुनिर्देशे श्तिपा निर्देशस्य दृष्टत्वेनाऽऽनुमानिकगुरुभूतवचनकल्पने

[1] 'समस्तप्रकृतः' इति ख. पाठः।
[2] 'वैयर्थ्योनापत्त्या' इति क. ख. पाठः।

बृहच्छब्दरत्नः

दृढतरप्रमाणाऽभावाच्च। 'स्तौति-स्तोभती'ति शितपा निर्देशे फलाऽभावाच्च। ध्वनितञ्चेदं तिङन्तमनोरमायाम्।

'अभ्यासाच्चे'त्यत्र हन्तिसम्बन्ध्यभ्यासहेतुना आक्षिप्ते स्वघटितसमुदायनिष्ठप्रत्ययाऽन्तत्वे, हन्तिनिष्ठाऽङ्गत्वेनाऽऽक्षिप्ताऽव्यवहितप्रत्ययपरत्वे च प्रत्ययस्य प्रत्यासत्तिन्यायेन ऐक्यात् 'जिहननीयिषती'त्यादौ कुत्वं ने'ति स्पष्टं भाष्ये।

यत्तु 'अभ्यासहेतुना स्वघटितसमुदायनिष्ठप्रत्ययाऽन्तत्वमाक्षिप्तं, तत्र च प्रत्ययस्य प्रकृत्याकाङ्क्षायां, हन्प्रकृतेश्च प्रत्ययाऽऽकाङ्क्षायां हन्रूपस्य, अभ्यासाऽऽक्षिप्तस्य च ग्रहणान्न दोष' इति। तन्न। हन्तिवत् तद्घटितसमुदायस्याऽप्युपस्थितत्वेन तस्याऽपि प्रकृतित्वेन ग्रहणापत्तेः। तस्याऽपि प्रकृतित्वेन प्रत्ययाऽऽकाङ्क्षायाः सत्त्वाच्च। अत एव 'लिट्यभ्यासस्योभयेषां' 'व्यथः' 'द्युतिस्वाप्योरि'ति न सूत्रितम्। तथा हि सति अङ्गाऽधिकारबहिर्भावेन प्रत्ययाऽऽक्षेपाऽनापत्तावुक्ताऽर्थाऽभावेन 'दुद्योतकीयिषति' 'सिष्वापकीयिषती'त्यादौ सम्प्रसारणाऽऽपत्तेः।

नचैवमपि 'व्यथो लिटी'तिसूत्रस्याऽत्र पाठो व्यर्थ इति वाच्यम्। उत्तरत्र 'लिटी'त्यनुवृत्त्यर्थमत्र पाठात्। हलादिः शेषबाधनाऽर्थत्वाच्च। अन्यथा परत्वेन, 'दीर्घोऽकित' इति सूत्रस्थाऽकिद्ग्रहणेन अभ्यासकार्ये समावेशस्य ज्ञापनाच्च, हलादिः शेषेण यकारनिवृत्तौ, वकारस्य सम्प्रसारणप्रसङ्गः। अत एव उभयेषांग्रहणं चरिताऽर्थमिति स्पष्टमाकरे।

एतेन 'लाघवाऽभावेन प्रथमोपस्थितस्थलत्यागे न बीजमि'ति हरदत्ताद्युक्तमपास्तम्। नचैवं 'व्यदिद्युतदि'त्यत्र चङोऽभ्यासनिमित्तत्वेन, णिचस्तदनिमित्तत्वात् 'द्युतिस्वाप्योरि'ति सम्प्रसारणाऽनापत्तिरिति वाच्यम्। 'द्युतिस्वाप्योरि'त्यत्र समाहारद्वन्द्वगर्भ-द्वन्द्वा-ऽऽश्रयणेन दोषाऽभावात्। इकारेण [1]इकाराऽन्तोपस्थितद्युतेरेव ग्रहणात्। इकारश्च णिच एव गृह्यते। 'स्वापि'साहचर्यात्। स्वापिश्च न नामधातुः। द्युतिसाहचर्यात्। ध्वनितञ्चेदं भाष्य-पदमञ्जर्योः।

ननु 'ह्वायकमिच्छति ह्वायकीयति', ह्वायकीयतेः सनि 'जिह्वायकीयिषती'त्यत्र 'अभ्यस्तस्य चे'तिसूत्रेण अङ्गाऽधिकारे पाठाऽभावात् सम्प्रसारणाऽऽपत्तिरिति चेन्न। 'ह्वः सम्प्रसारणमि'ति सूत्रस्य पृथक्करणसामर्थ्येन 'अभ्यासनिमित्ते प्रत्यये परे, अभ्यासनिमित्तप्रत्ययप्रकृतिकस्य[2] वा ह्वयतेः सम्प्रसारणमि'त्यर्थबोधनात्। न चैवं 'हलादिः शेष' इत्यत्र प्रत्ययाऽऽक्षेपे 'बिभेदे'त्यादौ 'न धातुलोप' इति गुणनिषेधाऽऽपत्तिः। न च 'आर्द्धधातुके' इति इको विशेषणान्निस्तारः। [3]'लोलुव' इत्यादौ उवङः पूर्वं निषेधस्य चारितार्थ्येन, उवङि कृते तदनापत्तेः। 'मरीमृज' इत्यसिद्ध्यापत्तेश्चेति वाच्यम्। 'धातोर्लोपो यस्मिन्नि'ति सप्तम्यर्थे बहुव्रीहेर्विधानेन 'तस्मिन्निति निर्दिष्टे'-

---

[1] 'इकारात्तोपस्थितद्युतेरेव' इति ख. पाठः।

[2] 'प्रकृतेर्वा' इति ख. पाठः।

[3] 'लोलुयिव इत्यादौ' इति क. ख. पाठः।

किं च पूर्वसूत्रेण स्थानिप्रयुक्तमतिदिश्यते, न त्वादेशप्रयुक्तं वार्यते।

बृहच्छब्दरत्नः

इतिपरिभाषया गुणवृद्धिनिमित्ताऽऽर्द्धधातुकाऽव्यवहितपरकलोपसत्त्वे एव प्रवृत्तेः। प्रकृते चोत्तरखण्डेन व्यवधानान्न दोषः। किञ्च 'शेष'शब्दस्य स्थितिमात्रवाचकत्वेन, इतरनिवृत्तेरार्थिकतया निषेधाऽप्रवृत्तिः। प्रत्यासत्तिन्यायेन शाब्दलोपस्यैव ग्रहणात्। अपि च इतरनिवृत्तिपूर्वकाऽवस्थानवाचित्वेऽपि निवृत्तेर्विशेषणतया भानान्न दोषः। गौणमुख्यन्यायेन मुख्यलोपस्यैव ग्रहणात्। अत एव 'अत्र लोपोऽभ्यासस्य', 'हलोऽनादेः', 'खयि शरः', 'ह्रस्व' इति न सूत्रितमित्यलम्।

न त्वादेशेति। नन्वेवम् 'अपचत् तण्डुलानि'त्यादौ प्रातिपदिकत्वं स्यात्। स्थानिवद्भावेन प्रत्ययत्वेऽपि, स्वतोऽप्रत्ययत्वेन प्रत्ययाऽन्तभिन्नत्वाऽनपायात्। सनादिषु विनिगमनाविरहेण सिद्धप्रथमोपस्थितप्रत्ययत्वस्य आरोपमात्रेणैव सिद्धेः। वतिघटितवाक्येन तादृशाऽर्थस्यैव बोधनाच्च। अत एव 'गाङ्कुटादि'सूत्रे 'तद्वदतिदेशेऽकिद्विधिप्रसङ्ग' इति भाष्यकाराद्युक्तं सङ्गच्छते। 'अप्रत्यय' इति तु पर्युदास इति सिद्धान्तः। एवं '[1]विस्कन्नाभ्यामि'त्यत्र षत्वाऽऽपत्तिः। न च प्रत्ययत्वस्यैवाऽतिदेशेन प्रत्ययत्वाऽवच्छिन्नप्रतियोगिताकभेदराहित्यान्न प्रातिपदिकत्वमिति वाच्यम्। प्रत्ययत्वाऽवच्छिन्नप्रतियोगिताकभेदराहित्यस्य, प्रातिपदिकत्वाऽभावस्य वा अशास्त्रीयत्वेन तस्मिन्कर्त्तव्ये प्रत्ययत्वाऽतिदेशस्य वक्तुमशक्यत्वात्। सन्निहितत्वादिना शास्त्रीयधर्मस्येव, [2]शास्त्रीयकार्यस्यैव ग्रहीतुमुचितत्वात्। स्पष्टञ्चेदमाकरग्रन्थे।

युक्ततरञ्चैतत्। अन्यथा कित्त्वाऽतिदेशमात्रेणैव कित्त्वाऽवच्छिन्नप्रतियोगिताकभेदराहित्यात् लघुभूतपर्युदासाऽऽश्रयणे 'सिसृक्षती'त्यत्र अमागमाऽप्राप्तौ भाष्यकृतः प्रसज्यप्रतिषेधाऽवलम्बनस्य निर्बीजत्वाऽऽपत्तेः। न चाऽत्राऽपि प्रसज्यप्रतिषेधाऽऽश्रयणेनैव निस्तार इति वाच्यम्। सर्वत्र वाक्यभेदाऽसमर्थसमासाऽऽश्रयणे गौरवाऽऽपत्तेः। किञ्च समासनियमाऽबाधाय बाध्यविशेषचिन्ताया आवश्यकत्वे येन नाऽप्राप्तिन्यायेन, मध्येऽपवादन्यायेन, अनन्तरस्येति न्यायेन च [3]पृथक् कृद्ग्रहणेन 'अप्रत्यय' इति निषेधस्य बाधाऽऽपत्तौ दोषस्य स्पष्टत्वाच्चेत्यग्रे निरूपयिष्यामः। 'वेः स्कन्देरनिष्ठायामि'त्यादीनां तिङन्ते आपत्तेश्च।

न च 'कृती'ति वक्तव्ये 'अनिष्ठायामि'त्युक्तिसामर्थ्यात् षत्वं नेति वाच्यम्। 'स्कन्द'धातूत्तरं निष्ठाया आदेशाऽभावज्ञापनेन चारितार्थ्यात्। अत एव 'किरश्च पञ्चभ्यः' 'क्षियो दीर्घात्' 'भुवो वुगि'त्यादिनिर्देशाः सङ्गच्छन्ते। इत्त्वाद्यर्थं 'प्रकृतिवदनुकरणमि'त्यनेन धातुत्वाऽतिदेशस्याऽऽवश्यकत्वे त्वद्रीत्या प्रातिपदिकत्वा-

[1] 'विस्कन्नाभ्याम्' इत्यत्र ह्यात्वापत्तिः' इति ख. पाठः।

[2] 'शास्त्रीयकार्यस्यव च' इति क. पाठः।

[3] 'धधकृद्ग्रहणेन' इति ख. पाठः।

बृहच्छब्दरत्नः

ऽभावाऽऽपत्तौ सुबनापत्तिः। ध्वनितञ्चेदं 'क्षियो दीर्घादि'ति सूत्रे भाष्ये।

तथा 'जघाने'त्यादौ प्रकृतिभागस्य अधातुत्वेन प्रातिपदिकत्वाऽऽपत्तिः। किञ्च 'उवयिथे'त्यत्र [1]अतिदेशप्राप्त-तासौ-नित्याऽनिट्त्वस्य अशास्त्रीयत्वेन शास्त्रीयेऽभावस्य दुर्वारताऽऽपत्तौ 'नित्यमिडि'त्याकरग्रन्थानां दत्तजलाञ्जलित्वाऽऽपत्तिः। किञ्च 'आरोपितत्वं नञर्थ' इत्यस्य वक्ष्यमाणत्वेन आरोपितप्रत्ययत्वं चाऽस्ति, तस्मात्प्रातिपदिकसञ्ज्ञा दुर्वारेति चेत्।

अत्र वदन्ति—वत्करणसामर्थ्येन अतिदिश्यमानविरुद्धस्वाश्रयप्रयुक्तकार्यस्य[2] त्वभाव एव। 'स्थान्यादेश' इत्येतावतैव वत्यध्याहारेण, जघन्यवृत्त्या वाऽऽभिमताऽर्थसिद्धेः। न च प्रत्ययाऽध्याहारो न क्वाऽपि दृष्ट इति वाच्यम्। प्रत्ययोहस्य मीमांसायां प्रसिद्धत्वात्। ऊहा-ऽध्याहारयोः पर्यायवचनत्वात्।

स्थानिपदञ्च तृतीयाऽन्तम्। ध्वनितञ्चेदं गाङ्कुटादिसूत्रे भाष्ये। न च 'स्थानी [3]आदेशरूपं प्रतिपद्यते' इति वाक्याऽर्थः स्यादिति वाच्यम्। तत्तदादेशविधायकैरेव गताऽर्थत्वात्। नाऽपि विपरीतो वाक्याऽर्थोऽस्तु, वचनद्वयप्रामाण्याद्विकल्पः। 'वा लिटी'त्यस्य वैयर्थ्याऽऽपत्तेः। 'विभाषा लुङ्लृङोरि'त्यादौ वाग्रहणवैफल्याऽऽपत्तेश्च। अस्ति-भूभ्यां रूपद्वयसिद्धौ 'अस्तेर्भूरि'त्यस्य वैयर्थ्याऽऽपत्तेश्च।

नन्वत्र सञ्ज्ञासूत्राणामेवोपलम्भात् 'स्थानी आदेशस्य सञ्ज्ञा स्यात्', 'आदेशः स्थानिनः सञ्ज्ञा स्यादि'ति वा वाक्याऽर्थः स्यात्। तथा च वधेरेवाऽऽत्मनेपदं स्यात्। हन्तेः शब्दसञ्ज्ञात्वेन 'स्वं रूपमि'त्यस्याऽप्रवृत्तेः। न चैवम् 'आङो वधयम' इत्येव ब्रूयात्, अकारस्य विवक्षितत्वात् 'वध हिंसायामि'ति भौवादिस्य न ग्रहणमिति वाच्यम्। सकलहन्त्यादेशसङ्ग्रहार्थेन चारितार्थ्यात्। अत एव 'आजघ्ने' इत्यादिसिद्धिः। द्वितीये तु 'अस्यतिवक्ती'त्यत्र चक्षिङः, गाङ्कुटादिसूत्रे 'गाङि'ति वचनसामर्थ्यात् इङ्-गाङोः, 'गमेरिडि'त्यत्र इणिङिकाञ्च ग्रहणाऽऽपत्तेरिति चेन्न। वत्करणाऽभावाऽधीनलाघवाऽनुरोधेन प्रकरणाऽन्तरे एव पठितुं युक्तत्वात्। न चैवं 'षष्ठी स्थानेयोगा' इत्यस्याऽननुवृत्तौ 'षष्ठीनिर्दिष्टस्य स्थाने आदेश' इत्यर्थाऽनापत्तौ कादिषु अणादिकृतं स्यादिति वाच्यम्। शादीनां शित्करणेन तदभावस्य सिद्धत्वात्। 'अलोऽन्त्यस्ये'त्यस्य सत्त्वेन 'राज्ञः क चे'त्यादावनः स्थानित्वे मानाऽभावात्। अत एव 'अज्झलादेशोऽजादेशो ने'ति सिद्धान्तः सङ्गच्छते। प्रथमपादे परिभाषाणामतिदेशानाञ्च पाठाच्च।

किञ्च 'न पदान्ते'तिसूत्राऽऽरम्भसामर्थ्याददतिदेशः। एतेन 'विपरीताऽतिदेशवारणार्थम्, उत्तरसूत्रे अभावाऽतिदेशाऽर्थञ्च वतिनिर्देश' इत्यपास्तम्। 'मथुरायां

---

[1] 'अतिदेशप्राप्त' इति क. नास्ति।

[2] 'स्वाश्रयस्य त्वभाव एव' इति क. पाठः।

[3] 'आदेशरूपाम्' इति क. ख. पाठः।

बृहच्छब्दरत्नः

पाटलिपुत्रवद्व्रीहय' इत्युक्ते भावाऽभावयोरुभयोरपि बोधेन अभावाऽतिदेशाऽर्थं यत्नाऽनपेक्षणाच्च ।

वस्तुतस्तु लघुभूतवत्करणमादाय आदेशग्रहणस्यैव वैयर्थ्याऽऽपादनं युक्तम् ।

यत्तु 'आदेशग्रहणम् आनुमानिकाऽऽदेशसङ्ग्रहाऽर्थम् । 'स्थानिवदि'त्येतावतैव सम्बन्धिशब्दमहिम्ना तल्लाभात् । यथा 'पितृवदि'त्युक्ते 'पुत्र' इति गम्यते । तत्फलन्तु 'एरुरि'त्यत्र । अत्र हि इकारेण इकारान्तः स्थानी, उकारेण उकारान्त आदेशश्चाऽनुमीयते । प्रसङ्गाऽर्थकषष्ठ्याः सत्त्वात् । अर्थवत्येव स्थान्यादेशभावविश्रान्तेः । यद्वा 'सर्वे सर्वपदादेशा' इतिवचनाऽनुरोधेन इकारोकाराभ्यां तदन्तं लक्ष्यते । दृष्टा चेयम् अजहल्लक्षणा वर्णवाचिषु 'हलश्चेदुपधादि'त्यादौ ।

यद्वा उक्तवचनेन 'अर्थवदि'त्यस्योपस्थितौ इकारोकाराभ्यां विशेषणात्तदन्तविधिः । तेन तिङन्तत्वप्रयुक्तपदत्वसिद्धिः । 'आर्द्धधातुकस्येड्वलादेरि'त्यादौ स्थानषष्ठ्या अभावेन, 'आद्यन्तौ टकितौ' इत्याद्यनेकपदेषु जहल्लक्षणाऽऽपत्त्या च 'सर्वे सर्वपदादेशा' इति न्यायबाधः । न च अनित्यत्वम्[१] । 'रेखागवय'न्यायेन व्युत्पादनात् । अर्थाऽऽपत्तिप्रमाणेन, वाक्याऽन्तरकल्पनया[२] वा पदादेशत्वम् । अष्टाध्यायीपठित–लघुभूतन्यास–बोधित–स्थान्यादेशभावमादाय स्थानिवद्भावस्य चारितार्थ्येनाऽत्राऽप्रवृत्तिः । 'अणुरपि विशेषोऽध्यवसायकर' इति न्यायात् ।

एतेन 'स्थानिवद्भावे स्थानिबुद्ध्यैव कार्यप्रवृत्त्या 'निर्दिश्यमानस्ये'तिपरिभाषाया बाधाऽभावेन 'अनागमकानां सागमका आदेशा' इत्युक्तत्वेन स्थानिवद्भावादागमसहितस्य पिबाद्यादेशानां दुर्वारत्वेन 'लावस्थायामडि'ति भाष्यसिद्धान्तो न युक्त' इति मन्दोक्तमपास्तम् । 'आगमा अनुदात्ता' इत्यादेर्निर्विषयताऽऽपत्त्या उक्ताऽर्थस्य प्रक्रियादशायामनाश्रयणात् ।

यत्तु 'आनुमानिकस्थान्यादेशभावस्यैव ग्रहणेन इकारोकारयोर्न स्थान्यादेशत्वमि'ति । तन्न । मानाऽभावात् । अत एव 'इग्यणः सम्प्रसारणम्', 'आगमा अनुदात्ताः' 'अचः परस्मिन्नि'त्यादीनामुक्तिसम्भव' इति ॥ तन्न । 'सर्वस्ये'त्यनुवृत्त्यैव सिद्धेः । अत एव 'योगविभागसामर्थ्यादनुसंहारद्वयनिषेधे, प्रत्ययानां प्रकृत्यर्थाऽन्वितस्वार्थबोधकत्वमि'ति व्युत्पत्त्या सर्वादेशस्य सिद्धत्वेऽपि 'नाऽनेकाल्शिदि'ति न सूत्रितम् । तस्मात् आदेशग्रहणेन वाक्यभेदेन अतिदिश्यमानविरुद्धाऽऽदेशप्रयुक्तकार्याऽभावो बोध्यते ।

अत एव 'आदेशोऽनल्विधौ स्थानिवदि'ति न सूत्रितम् । तथा सति 'आदेश' इति वाक्ये 'स्थानिवदि'त्यस्य सम्बन्धो दुर्घटः स्यात् ।

'अनल्विधौ' इति तु वचनसामर्थ्यादुभयोः शेष इति न कश्चिद् दोषः ।

---

[१] 'न चाऽनित्यत्वं च रेखागवय' इति ख. पाठः ।

[२] 'कल्पानया' इति क. ख. पाठः ।

'नायकः'[१] 'पावक' इत्यादौ एचोऽयवायावः (६।१।७८) इत्यादीनामप्रवृत्ति-प्रसङ्गात्। अनेन तु वार्यते। शब्दाऽधिकारमाश्रित्य 'भावाऽभावयोरुभयोरपि

बृहच्छब्दरत्नः

एतेन 'अला विधौ व्यूढोरस्केने'ति न युक्तम्, 'अट्कुप्वाङि'ति नियमस्य अन्य-व्यवायनिमित्तकस्य स्वाऽऽश्रयस्य दुर्वारत्वादि'त्यपास्तम्। अट्त्वा-ऽन्यत्वयो-र्विरोधेनाऽलाभात्।

एतेन 'सूत्राऽऽरम्भेऽपि 'न ल्यपी'ति ज्ञापकाऽनुसरणमावश्यकम्। एवञ्च 'युष्मदस्मदोरनादेशे' इति ज्ञापकात् 'स्थानिवदादेश' इत्यंशः सिद्धः। 'अदो जग्धि-रि'ति सूत्रस्थं ल्यब्ग्रहणम् 'अनल्विधौ' इतीममंशं ज्ञापयति, 'अप्राधान्येनाऽप्य-लाश्रयणे निषेध' इत्यंशश्च। वस्तुतस्तु ल्यब्ग्रहणं ज्ञापकसिद्धाऽर्थस्याऽनित्यत्व-मात्रं ज्ञापयति। तेन 'गोः पूर्वणित्त्वाऽऽत्त्वस्वरप्रतिषेधो वक्तव्य' इत्यपि सिद्धम्। 'युष्मदस्मद्भ्यां ङसोऽशि'ति शित्करणम् आनुमानिकाऽऽदेशग्रहणं ज्ञापयति। न च 'स्थानिवदादेश' इत्युत्तराऽर्थमिति वाच्यम्। तत्सूत्रे एव पठितुं युक्तत्वा-दि'ति निरस्तम्। उक्तरीत्या 'स्थानिवदादेश' [२]इति योगस्याऽऽवश्यकत्वात्। आनुमानिकवचनकल्पने लाघवाऽभावाच्च। 'अनल्विधौ' इत्यंशस्तु ज्ञापकस्य प्रकरणाऽपेक्षत्वसम्भावनाव्यावृत्त्यर्थश्च। एतदेव च सकलमभिसन्धाय भगवता भाष्यकारेणोक्तम् 'आरभ्यमाणेऽप्यस्मिन् सूत्रे' इति। अत एव 'तद्वदतिदेशे तद-भाववद्विधिप्रसङ्ग' इति शङ्कायाः, तत्समाधानस्य च प्रथमोपस्थितस्थानिवत्सूत्रे एव कर्त्तुं युक्तत्वेन, तत्त्यागे बीजं चिन्त्यमि'त्युक्तिः परास्ता। 'गाङ्कुटादि'सूत्र-विषये तु प्रसज्यप्रतिषेधेनैवोक्तदोषवारणमिति बोधयितुमाशङ्कितमिति मात्सर्य-मुत्सार्य सुधीभिराकलनीयम्।

वार्यते इति। ननु स्थानिवद्भावेन लोपनिमित्तकार्याऽभावे 'नाग्लोपी'ति-निषेधो न स्यात्, तथा च प्रत्याहारग्रहणं व्यर्थम्, 'इदुदुपधादिभ्योऽनभिधाना-ण्णिजने'ति स्पष्टमाकरे इति चेन्न। उक्तज्ञापकादेव लोपबोधकशब्दनिमित्तकार्ये, आदेशनिमित्तकार्यप्रवृत्तेर्ज्ञापनात्।

लघुशब्दरत्नः

अनेन तु वार्यत इति। 'स्थानिनि सति यद्भवति तदादेशेऽपि भवति', 'तत्र सति यन्न भवति तदादेशेऽपि न भवती'त्यर्थात्। [३]'अजादेशोऽच्कार्यं लभते, न लभते चे'ति वाच्योऽर्थः। तत्रोपपत्तिमाह—शब्देति। पूर्वसूत्रे स्थानिवत्पदस्य तद्वत्कार्यं लभते इत्ये-तन्मात्राऽर्थकस्य इहोभयाऽर्थकत्वात्तदाश्रयणमिति भावः।

[१] 'पावकः' इति लिखितेषु नास्ति।

[२] 'इत्यस्यावश्यकत्वात्' इति क. पाठः।

[३] 'अजादेशोऽज्वत्कार्यं लभते' इति क. पाठः।

अतिदेशोऽयमि'ति स्वीकारात्। न पदान्त (१।१।५८) इति सूत्रे यलोप-दीर्घादिग्रहणं चेह लिङ्गम्। अत एव 'गणयती'त्यादौ न वृद्धिः। स्थानिनि सति अभवन्त्यास्तस्या आदेशेऽप्यभावाऽतिदेशात्। उक्तं च 'काममति-दिश्यतां वा सच्चाऽसच्चाऽपि, नेह भारोऽस्ति' इति।

---

बृहच्छब्दरत्नः

यत्तु 'पूर्वशब्दमुच्चाय विहितकार्यं एव वार्यते' इति। तन्न। माना-ऽभावात्। 'आर्द्धधातुकनिमित्तधातुलोपे परतः', 'धातुलोपनिमित्ताऽऽर्द्धधातुके परतश्चे'त्यर्थाऽङ्गीकारेऽपि पूर्वशब्देन विहितत्वाऽनपायेन 'न धातुलोप' इति सूत्रस्थ-भाष्यविरोधाऽऽपत्तेश्च। अत एव 'अचः परस्मिन्नि'तिसूत्रे पदान्तसंयोगादिलोपे कर्त्तव्ये स्थानिवद्भावो भाष्यवार्त्तिककाराभ्यामङ्गीकृतः। ध्वनितश्चेदं हलन्त-कौमुद्याम्। अत एव ऋधातोर्यङ्लुकि 'आरती'त्यत्र माधवाद्युदाहृतो 'ढ्रलोपे' इति दीर्घश्चिन्त्य' इत्यपास्तमि'त्यग्रे निरूपयिष्यामः।

यलोपदीर्घादिग्रहणञ्चेति। यलोपश्च दीर्घश्च यलोपदीर्घौ। सूत्रे प्रथमोपात्त-त्वेन प्रथमोपस्थितत्वेनाऽभ्यर्हितत्वात् पूर्वनिपातः। तत 'आदि'शब्देन बहुव्रीहिः। तत्र यलोपादीनामुपादानं भाष्यमते। भाष्यकारेण 'पूर्वत्राऽसिद्धे न स्थानिवदि'त्य-भ्युपगम्य तेषां[१] प्रत्याख्यानात्। न चैवमपि सवर्णा-ऽनुस्वारयोरपि प्रत्याख्यानेना-ऽनुपपत्तितादवस्थ्यमिति वाच्यम्। स्वरमादाय 'आदि'शब्दस्य व्याख्यातुं शक्यत्वात्। 'सवर्णाऽनुस्वारयोर्ज्ञापनाऽर्थम् अवश्यकर्त्तव्यते'ति मताऽन्तरस्या-ऽनुपदमेव वक्ष्यमाणत्वाच्च। न चैवं द्विर्वचनत्यागे बीजाऽभाव इति वाच्यम्। 'अनची'ति प्रसज्यप्रतिषेधस्य सत्त्वेन स्थानिप्रयुक्तकार्यलाभात्, पदान्त-वरे-ग्रहणवत्तस्याऽऽवश्यकत्वात्।

न वृद्धिरिति। 'न च सिद्धान्तेऽपि 'क्लिलुगुपधे'ति निषेधस्य जागरूकत्वेन स्थानिवद्भावो दुर्लभ इति वाच्यम्। उपधासञ्ज्ञायां निषेधेऽपि, तन्निमित्तकार्ये निषेधप्रवृत्तौ मानाऽभावेन, स्थानिवद्भावात् ञ्णिदादिप्रत्ययपरत्वाऽभावेन, वृद्धे-

---

लघुशब्दरत्नः

यलोप-दीर्घादीति। यलोपदीर्घावादी येषामित्यर्थः। यलोपादयो, दीर्घादयश्चेति यावत्। तेन स्वरादीनामपि सङ्ग्रहः। 'यलोपादी'त्येव सिद्धे एवमुक्तिर्वैचित्र्याय। न हि यलोपादिविषये भावाऽतिदेशप्रसक्तिरिति भावः।

न वृद्धिरिति। अत उपधायाः (७।२।११६) इति वृद्धिर्नेत्यर्थः। 'क्विलुगुपधात्वे'ति-निषेधस्तूपधात्वनिमित्तकप्रत्ययविधावेव, नाऽन्यत्रेति भाष्ये स्पष्टम्।

---

[१] तेषाम्=यलोप-स्वराऽतिरिक्तानां दीर्घादीनां त्रैपादिकानामित्यर्थः। 'यातिः' इत्यत्र लोपो व्योरिति यलोपस्तु सापादिकः। एवं 'चिकिर्षकः' इत्यत्र लित्स्वरोऽपि। 'अन्येषामि'ति-पाठो वा अत्रोचितः।

स्यादेतत्–पूर्वत्वस्य साऽवधित्वेन संनिहितस्यैव अवधित्वमुचितम्। संनिहितं चेह त्रयम्–स्थानी, आदेशो, निमित्तं च। तत्र न तावत् स्थानी अवधिः। तस्याऽऽदेशेनाऽपहारात्। नाप्यादेश-निमित्ते। 'वैयाकरणः' इत्यत्र ऐकारस्य आयादेशाऽऽपत्तेरित्याशङ्क्याऽऽह–अचः पूर्वत्वेन दृष्टस्येति। पूर्वत्वमुपलक्षणं, न तु विशेषणमिति भावः। एतेन 'अचः पूर्वत्वविज्ञानादैचोः सिद्धम्' इति वार्त्तिकं व्याख्यातम्।

**न पदान्त (१।१।५८)।** पदस्य चरमावयव इति। वृक्षं वेतीति वृक्षवीः। [१]वृक्षं वातीति वृक्षवाः। तमाचष्टे वृक्षव्। विच्।

---

बृहच्छब्दरत्नः

रप्राप्तेरि'ति कश्चित्। 'उपधानिमित्तप्रत्ययविधावेव निषेध' इति तु भाष्य-वार्त्तिकाऽऽरूढः [२]पन्थाः।

वृक्षं वेतीति। 'वृक्षं वृश्चती'ति क्विप्। वृक्षवृश्चमाचष्टे [३]णिच्' इति कैय्यटोक्तं चिन्त्यम्। 'ऊठ्-सम्प्रसारण-वलोप-षत्वानां प्रसङ्गात् णिजेवाऽत्र नास्ती'ति स्पष्टमाकरे। टिलोपोत्तरम् उपधावृद्धिर्नेत्यग्रे निरूपयिष्यामः।

विजिति। यत्तु 'वलोपविषये विज् ने'ति। तन्न। निर्हेतुकसाध्याऽसिद्धेः। वक्ष्यमाणरीत्या वलोपविषयत्वाऽभावाच्च। युक्तञ्चैतत्। अन्यथा 'न धातुलुक्यची'त्येव कुर्यात्। एतेन 'यस्य हल' इत्यत्र 'यस्ये'ति योगं विभज्य 'अत' इत्यनुवृत्त्या, अलोन्त्यपरिभाषया वा लोलुवादावतो लोपे, व्यञ्जनमात्रस्य लुकि, स्थानिवद्भावेन गुणाद्यप्रवृत्तौ, 'न धातुलोप' इतिसूत्रं न कार्यमिति भाष्यं विरुध्ये-

---

लघुशब्दरत्नः

आयादेशापत्तेरिति। यणः स्थानिवत्त्वेनाऽच्त्वादिति भावः। पूर्वत्वं चाऽत्र व्यवहिता-ऽव्यवहितसाधारणम्। स्वरे निषेधात्। अतो यण्निमित्ताऽऽकाराऽपेक्षयाऽपि ऐकारस्य पूर्वत्वमस्तीति तत्पक्षेऽप्ययं दोष इति भावः।

आदेशेनाऽऽपहारात् कथं स्थानिनोऽवधित्वमित्यत आह–उपलक्षणमिति।

'अन्त'शब्दस्य चरमाऽवयववाचित्वम्। 'विधि'शब्दो भावसाधनः। कर्मषष्ठ्या समासेन 'पदचरमाऽवयवे कर्त्तव्ये' इत्येवं व्याख्याने फलमाह–वृक्षमिति। विजिति। क्विपि तूठ् स्यादिति भावः।

---

[१] 'वृक्षम्' इति क्व चिन्नास्ति।

[२] 'यथा' इति क. ख. पाठः।

[३] 'णिच् टि' इति क. ख. पाठः।

ते'ति परास्तम्। उवङ आदिष्टादचः पूर्वत्वेन स्थानिवद्भावाऽप्रवृत्तेः 'लोलुवः' [१]'जङ्गमः', 'मरीमृजः' 'दरीदृशः', 'सनीस्रंस' इत्यादौ गुणो-पधालोप-पाक्षिकवृद्ध्यादीनां दुर्वारत्वेन च भाष्यस्य प्रौढिवादपरत्वात्।

अथ स्थानिद्वाराऽनादिष्टादचः पूर्वत्वम्, 'अङ्गकार्ये कृते पुनर्नाऽङ्गकार्यं' 'संज्ञापूर्वको विधिरनित्यः' '[२]व्यवस्थितविभाषे'त्याश्रित्य यथाकथञ्चित् प्रयोगसाधनं तर्हि '[३]धिन्वि'धातोर्विचि 'सुधी'त्यादावपि न क्षतिः। 'गॄ'धातोर्यङि 'निजेगिर्यअजि'ति स्थिते लत्वस्याऽसिद्धत्वात् 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति न्यायेन लुक इव तदुपजीव्यानां धर्मिग्राहकमानेन समासादीनामपि ग्रहणात्, सङ्कोचे मानाऽभावेन 'लुक्'शब्देन लुङ्मात्रस्य ग्रहणाच्च, 'न यासयोरि'तिसूत्रे हरदत्तादिभिरप्येवमेवोक्तत्वाच्च, भाष्यनये अजादेशत्वेन स्थानिवद्भावस्य दुर्वारत्वात् 'अचि विभाषे'त्यस्याऽसिद्धत्वेन 'ग्रो यङी'ति नित्यलत्वाऽऽपत्तिः।

न च 'पूर्वत्राऽसिद्धे न स्थानिवदि'तिनिषेधः शङ्क्यः। [४]'तस्य दोषः संयोगादिलोपलत्वणत्वेष्वि'ति निषिद्धत्वादित्यप्याहुः।

यत्तु 'दरीदृश' इत्यत्र लाक्षणिकत्वादङो गुणो न। यङस्तु अकार उपदेशवेलायां न प्रत्ययः। यकारे लुप्ते नाऽसौ ङकारविशिष्टो, न वा श्रूयते। किन्तु [५]तर्कैकगोचरत्वात् लाक्षणिको विलम्बोपस्थितिक' इति। तन्न। 'अनङी'तिपर्युदासाऽनापत्तौ [१]'जङ्गम' इत्यत्र 'गमहने'त्युपधालोपाऽऽपत्तेः। न चाऽनङीतिपर्युदासेन श्रूयमाणेऽजादावेव लोप इति वाच्यम्। प्रकृतेऽङोऽश्रूयमाणत्वेन पर्युदासवृत्त्या श्रूयमाणत्वेन[६] सादृश्यस्य ग्रहीतुमशक्यत्वात्। 'जङ्गमक' इत्यादौ परत्वात् 'यस्य हल' इत्यस्य प्रवृत्तत्वेन प्रतिपदोक्ताऽङोऽश्रूयमाणत्वाच्च।

किञ्चेदृशलाक्षणिकत्वाऽऽश्रयणेन ङित्त्वाऽभावस्याऽप्यापत्तौ लोलुवाऽऽदौ गुणादिप्रवृत्तिर्दुर्वारा। ईदृशप्रत्ययत्वस्याऽप्यनाश्रयणे लोलुवादावुवङाद्यसिद्धिः। 'वरे'ग्रहणेनेदृशविषये कार्यप्रवृत्तेर्ध्वनितत्वाच्च।

अपि च 'दरीदृशक' इत्यादावर्थवत्यङि चरितार्थत्वेन, [७]अनर्थके विकरणे गुणाऽनापत्तिः। तस्मात् 'सञ्ज्ञापूर्वको विधिरनित्य' इत्याद्याश्रित्य गुणाद्यभावो यथान्यासेऽप्यावश्यकः।

---

[१] 'जगमः' इति क. ख. पाठः।
[२] 'व्यवस्थिते लवृत्त्या सितविभाषेत्याश्रित्य' इति ख. पाठः।
[३] 'भिन्वि' इति क. ख. पाठः।
[४] 'तस्य दोषः संयोगादिलोपलत्वेष्विति' इति क, ख. पाठः।
[५] 'तर्केकगोचरत्वात्' इति क. ख. पाठः।
[६] 'सादृश्यं ग्रहीतुम्' इति क. ख. पाठः।
[७] 'अनर्थके चिकरणे' इति क. ख. पाठः।

**इह लोपो व्योः (६।१।६६) इति वलोपो न। स्थानिवत्त्वात्। न च न पदान्त (१।१।५८) इति निषेधः। इह विधेयस्य लोपस्य पदाऽनवयव-**

बृहच्छब्दरत्नः

एतेन 'गुणादाविष्टाऽऽपत्तिरि'ति मन्दप्रतारणमपास्तम्। सूत्राऽनारम्भे 'कथं मरीमृजक' इत्याशङ्क्य 'अल्लोपस्य स्थानिवत्त्वान्न दोष' इति वदता भाष्यकारेण ईदृशे अङि ङकारविशिष्टाऽकारमाश्रित्य-प्रवृत्त-कार्या-ऽभावस्य ध्वनितत्वाच्च। आलोपस्तु प्रवर्त्तते एव, वरेग्रहणसामर्थ्यादि'ति वदन्ति।

यत्तु 'द्रोढे'त्यादावपि निषेधः स्यादि'ति। तन्न। ढलोपस्याऽसिद्धत्वात्। [1]ढलोपस्य वर्णनिमित्तत्वेऽपि आर्द्धधातुकनिमित्तत्वाऽभावाच्च।

अपरे तु 'अनारम्भो वे'ति ब्रुवता [2]विकल्प्य, सूत्रं न प्रत्याख्यातमेवे'त्याहुः। अत एवोठ्विनिर्मुक्तवलोपोदाहरणाऽसम्भवेन 'लोपो व्योरि'ति सूत्रे वकारग्रहणं न कार्यमिति 'वलोपाऽप्रसिद्धिः, 'ऊठ्भाववचनादि'त्यादिना भाष्येण सिद्धान्तितत्वात् वान्तेभ्यो विज्नेति निर्णीयते' इति परास्तम्। 'अनारम्भो वे'ति विकल्पस्योक्तत्वात्। व्याख्यातञ्चैवमेवोपाध्यायैः। अत एव 'देदेती'ति रूपमाहुः। णिचः पूर्वत्र तु क्विबेव। न च तमाश्रित्य ऊठ्प्रसङ्गः। बहिर्भूतणिजपेक्षया टिलोपस्याऽसिद्धत्वात्।

पदानवयत्वादिति। 'न पदान्ते'ति सूत्रे 'विधि'शब्दो भावसाधनः। अन्तशब्दश्चरमाऽवयववाची। कर्मषष्ठ्या च समास इति भावः। नन्वपदत्वादित्येव युक्तम्, 'अचः परस्मिन्नि'तिसूत्रेण णिलोपस्य स्थानिवत्त्वेन भत्वादिति चेन्न। सूत्रे सप्तमीतत्पुरुषाऽभावः, समीपवाच्यन्तशब्दाऽभावश्चेति बोधयितुमुभयोरुल्लेखात्। तदङ्गीकारे तु 'गतिकारकोपपदानामि'ति सुबुत्पत्तेः प्राक् समासविधानात् 'उत्तरपदत्वे चाऽपदादिविधौ' इति प्रत्ययलक्षणनिषेधात्, आदेशानामवयवत्वाच्च 'गोऽचा' 'कानि सन्ती'त्यादौ दोषो दुर्वारः। किञ्च लोपस्याऽनवयवत्वेन निषेधाऽप्रवृत्त्या, टिलोपस्थानिकत्वेन च लोपाऽप्रसक्त्या च, भत्वस्य भावाऽभावरूपत्वाऽभावाच्च, कार्यं विना सञ्ज्ञाया अप्रवृत्तेश्च, पूर्वविधित्वाऽभावेन स्थानिवद्भावाऽप्रवृत्तौ [3]च 'पदत्वादि'ति हेतोरसिद्धत्वाऽऽपत्तेरित्याहुः।

न चैवमपीदमसङ्गतम्, 'पादस्य लोपोऽहस्त्यादिभ्य' इत्यस्य समासान्तप्रकरणे पाठादिति वाच्यम्। तत्प्रकरणे पाठसामर्थ्येन गौणाऽर्थस्याऽऽश्रयणेऽपि, प्रकृतसूत्रस्य 'कानि सन्ती'ति मुख्योदाहरणे चारितार्थ्येनाऽत्राऽप्रवृत्तेः। अत एव

लघुशब्दरत्नः

**स्थानिवत्त्वादिति। णिलोपस्य, टिलोपस्य वा स्थानिवत्त्वादित्यर्थः।**

[1] 'उलोपस्य' इति क. ख. पाठः।

[2] 'विकल्पसूत्रम्' इति क. ख. पाठः।

[3] 'प्रवृत्ता च' इति क. ख. पाठः।

त्वात्। 'पदान्तस्य स्थाने विधौ ने'ति व्याख्याने तु नेदं सिध्येत्।

बृहच्छब्दरत्नः

भाष्ये 'पूर्वविधाविति किमर्थमि'त्याशङ्क्य 'हे गौरि'ति प्रत्युदाहृतम्।

पदान्तस्य स्थाने इति। पदान्तस्थानिकाऽऽदेशप्रापकाऽतिदेशः, तत्प्रतिबन्धकीभूताऽऽदेशश्च निषिध्यते इति भावः।

व्याख्याने त्विति। विधिशब्दः कर्मसाधनः, स्थानषष्ठ्या च समास इति भावः। अत्र तुनाऽरुचिर्बोधिता। तद्बीजन्तु बहिरङ्गत्वम्, कर्मधारयसमासाऽऽश्रयणे विधिशब्दस्य पूर्वनिपाताऽऽपत्तिः, षष्ठीसमासे द्विर्वचनादिष्वनन्वयः, सवर्णग्रहणवैयर्थ्यञ्च।

यत्तु कर्मसाधने 'षडिक' इत्यसिद्धिः, षडङ्गुलिशब्दाद् 'बह्वचो मनुष्यनाम्न' इति ठचि, 'ठाजादावूर्ध्वमि'ति ङ्गुलिशब्दस्य लोपे, 'यस्येति चे'त्यकारलोपे, षषः षकारः पदान्तत्वेन सिद्ध[1] इति तस्य कार्ये कर्त्तव्ये स्थानिवत्त्वनिषेधात् षकाराऽन्तस्यैव भसंज्ञा स्यात्। तथा च जश्त्वं न स्यादिति भाष्यादावुक्तम्।

तन्न। 'न पदान्ते'ति सूत्रदृष्ट्या जश्त्वस्याऽसिद्धत्वेन पदान्तस्थाने विधेरभावेन निषेधाऽप्रवृत्तेः। पदान्तस्य स्थाने विधौ कर्त्तव्ये निषेधेऽपि, भसंज्ञायां तदभावाच्च। ननु 'पदान्तस्य स्थाने विधौ' इत्यनेन तत्प्रतिबन्धकीभूतोऽपि विधिर्गृह्यते, अस्ति चाऽत्र पदान्तस्थाने विधेयस्य [2]डकारस्य प्रतिबन्धकीभूतायाः षान्तनिष्ठभसंज्ञायाः प्रतिबन्धकीभूतोऽयं स्थानिवद्भाव इति चेन्न। 'कानि सन्ती'त्यादौ चारितार्थ्यादुक्ताऽर्थग्रहणे मानाऽभावात्। अकारान्तनिष्ठायाः शाब्दत्वाच्च।

एतेन 'डकारसाधकीभूताया अकारान्तनिष्ठभसञ्ज्ञायाः साधको यः स्थानिवद्भावः' इत्यपास्तम्। डविधौ निमित्तत्वेनाऽनाश्रयणात्। अकारात्पूर्वभागस्याऽन्तवर्त्तिनीं विभक्तिमाश्रित्य जश्त्वस्य निर्विघ्नत्वाच्च। अत एव 'जशिति निषेधः 'पूर्वत्राऽसिद्धीयेने'ति निषेधश्च न। 'जशि कर्त्तव्ये स्थानिवद्भावो ने'त्यथस्य निष्पन्नत्वेन प्रत्यासत्तिन्यायात् जश्सम्बन्धिन एव ग्रहणेन, प्रतिबध्यप्रतिबन्धकभावनिष्पाद्य-निष्पादकभावा-ऽतिरिक्तसम्बन्धस्याऽसम्भवेनोक्तरीत्याऽप्रवृत्तेः। किञ्चैवं भावसाधनपक्षेऽपि 'षडिक' इत्यसिद्धिः। न च पूर्वमेव डकारस्य निष्पन्नत्वान्नेदानीं विधिरिति वाच्यम्। भसञ्ज्ञाया अपि सम्भावितत्वेन 'अकृतव्यूह'परिभाषया[3] 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति न्यायाच्च तदप्रवृत्तेः। ध्वनितञ्चेदं पञ्चमे हरदत्तग्रन्थे। 'द्वितीयादच ऊर्ध्वं लोपविधायकवचनप्रामाण्यात् स्थानिवद्भाव' इति तु पक्षद्वयेऽपि समानम्।

[1] 'सिद्धमि'ति क. ख. पाठः।

[2] 'ङकारस्य' इति क. ख. पाठ।

[3] 'परिभाषायाः' इति क. ख. पाठः।

'सुबन्ताण्णिच्' इति हरदत्तादिमते अन्तर्वर्त्तिसुपा पदत्वात् । न च 'इष्ठवत्' इत्यतिदिष्टेन णिचि भत्वेन पदत्वबाधः । [1]णिचो लुप्तत्वात् ।

---

बृहच्छब्दरत्नः

किञ्चैवं कर्मसाधनपक्षेऽपि दोषाऽनापत्तिः । न च पदान्तत्वेन सिद्धस्य भत्वात् षकाररूपाऽऽपत्तिर्विधेयेति दोषो दुर्वार इति वाच्यम् । द्विर्वचनादिसाहचर्येण पदान्तस्य स्थाने विधेयस्य शास्त्रीयस्यैव ग्रहणात् । अत एव भावसाधनविधिशब्दाऽऽश्रयणे 'वेतस्वानि'त्यादौ पदसंज्ञायां चरमवर्णे पदान्तत्वस्याऽपि निष्पन्नत्वेन 'न पदान्ते'ति निषेधो दुर्वार इति भाष्याद्युक्तमपास्तम् । भावप्रत्ययोल्लेखे बीजाऽभावात् । निर्मूलत्वाच्च । 'आमलकी'त्यादौ यथोद्देशपक्षाऽऽश्रयणेऽपि स्थानिवद्भावनिषेधस्य पदसञ्ज्ञायां दुर्वारत्वेन जश्त्वाऽऽपत्तेश्च ।

अपि च 'यथैवाऽन्यानि पदकार्याणि उपप्लवन्ते रुत्वं, जश्त्वञ्च, एवमिदमपि कार्यमुपप्लोष्यते[2], 'किं, भसञ्ज्ञा नामे'ति भाष्यकारोक्तरीत्या भावसाधनेऽपि भसञ्ज्ञायां निषेधो दुर्वारः । वस्तुतस्त्विदं भाष्यं चिन्त्यमेव । विधेयाऽन्तरोपादाने पूर्वविधेयस्य सर्वत्र निवृत्तेर्दर्शनात् । जातस्य निवृत्तेरयोगेन, 'आ कडारादि'तिनियमेन च समावेशस्य वक्तुमशक्यत्वाच्च । समावेशस्यदोषग्रस्तत्वाच्चपर्यायस्याऽप्यापादयितुं शक्यत्वाच्च ।ध्वनितञ्चेदम् ' आ कडार'सूत्रे भाष्ये इत्यलं प्रसक्ताऽनुप्रसक्तविचारेण ।

'वृक्षवि'त्यत्र टिलोपमात्रं णिचि परतोऽतिदिश्यते, न केवलभत्वं, फलाऽभावात् । श्रूयमाणे णिचि च लोपाऽभावस्तु भोसादिसाहचर्यान्नेत्यग्रे निरूपयिष्यामः । 'स्रग्विन्'शब्दाण्णिचि तु 'विन्'लोपो, भत्वञ्चाऽतिदिश्यते इति विशेषः ।

नेदं सिध्येदिति (१०९ पृष्ठे) । न चेष्टाऽऽपत्तिः । 'वृक्षवयतेरप्रत्ययः, वृक्षव् करोती'त्याष्टमिकभाष्यविरोधाऽऽपत्तेः । न च 'प्रातिपदिकाण्णिजि'ति पक्षे न दोष इति वाच्यम् । भाष्यप्रयोगे पाक्षिकत्वकल्पनस्याऽयुक्तत्वात् । हरदत्तेति । अन्ये तु कर्मसमर्पकात् प्रातिपादिकादेव णिजुत्पत्तिं वदन्ति । अयञ्च पक्षो न युक्त इति तिङन्ते निरूपयिष्यामः । अन्तर्वर्त्तिसुपेति । यत्तु 'स्वादिष्वि'ति पदत्वमिति । तन्न । इष्ठनि अदृष्टत्वेन, असम्भावितत्वेन चाऽतिदेष्टुमशक्यत्वात् ।

पदत्वादिति । न च 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति वाच्यम् । पूर्वं वान्तेऽप्रवृत्तत्वात् । 'अन्तरङ्गानपी'तिन्यायेन, फलाऽभावेन च पूर्वमप्रवृत्तेश्च ।

---

लघुशब्दरत्नः

नन्वस्य पदत्वाऽभावात् कुतोऽसिद्धिरत आह–सुबन्तादिति । अन्तर्वर्त्तिसुब्निमित्तकपदत्वस्य एकदेशविकृतन्यायेन वान्तेऽपि सत्त्वमिति भावः ।

---

[1] 'णेर्लुप्तत्वात्' इति मुद्रितेषु पाठः ।

[2] 'उपपलोष्यते' इति क. ख. पाठः ।

बृहच्छब्दरत्नः

'न पदान्ते'तिनिषेधनिमित्ताया भिन्नत्वाच्च। तथा चाऽनतिदिष्टभत्वेन विप्रकृष्टोत्तरकालप्राप्तनिषेधनिमित्तपदसंज्ञाया बाधो वक्तुमशक्य इति भावः।

णिचो लुप्तत्वादिति (११० पृष्ठे)। न च निषेधप्रतिबन्धनद्वारा[1]वलोपाऽभावरूपकार्यस्य सत्त्वेन पूर्वविधित्वात् 'अचः परस्मिन्नि'त्यतिदेशेन भत्वं सुलभमिति वाच्यम्। निषेधवाक्यं विना विधिवाक्यस्य प्रमित्यङ्गीकारेऽपि, अनुष्ठापकत्वस्य विधिनिषेधयोरेकवाक्यतयैवाऽङ्गीकारात्त्वदुक्ताऽर्थस्य गीर्वाणगुरुणाऽपि निरूपयितुमशक्यत्वात्। ध्वनितञ्चेदं 'नाज्झलौ' इति सूत्रे भाष्यादौ।

वस्तुतस्तु 'न लुमताऽङ्गस्ये'ति सूत्रस्थभाष्यकैयटाद्युक्तरीत्या निषेधस्य विध्युन्मूलकत्वात् प्राबल्येन, तदुपजीव्यप्रतिबन्धोऽतिदेशेन कर्त्तुमशक्यः। अत एव तसिलादिषु जातीय-देशीयग्रहणं चरितार्थम्। अन्यथा 'दर्शनीयजातीये'त्यादौ 'पुंवत्कर्मधारये'त्यस्य चरितार्थत्वेन, 'पाचकजातीत्ये'त्यादौ परत्वेन 'न कोपधाया' इति निषेधं बाधित्वा, 'पुंवत्कर्मधारये'त्यनेन पुंवद्भावसिद्धौ, किं तद्ग्रहणेन ?। किञ्च निषेधोपजीव्य-पद-प्रतिबन्धकीभूताऽतिदेशे कर्त्तव्ये निषेधस्य दुर्वारत्वम्। एतेन 'टिलोपस्य स्थानिवद्भावेन वस्य पदान्तत्वाऽभावात् पदान्तस्थाने विधेयाऽभावान्न दोषः। किञ्च द्विर्वचनादिसाहचर्येण विधेयस्य भावरूपस्यैव ग्रहणान्न दोषइत्यपास्तम्। अर्थद्वयकल्पने गौरवाच्च[2]। अत एव च[3] 'रै'शब्दादाचक्षाणाऽर्थे णिचि, आशीर्लिङि, 'णि'लोपस्य स्थानिवद्भावनिषेधेन '[4]रायो हली'त्यात्वम्। अत एव 'अष्टन आ विभक्तौ' इति सूत्रे 'सुपी'तिवक्तव्ये, विभक्तिग्रहणं चरिताऽर्थम्। अनेकलक्ष्यसंस्कारकता चेत्यधिको गुणः। [5]'रै'शब्दादाचारक्विप् तु 'इको गुणवृद्धी' इतिसूत्रस्थभाष्यप्रामाण्यान्नेति तत्त्वम्। 'अष्टन्'शब्दादपि आचारक्विप् न। 'अष्टनो दीर्घादि'तिसूत्रस्थभाष्यात्। अस्तु वा विभक्तिग्रहणस्य चारितार्थ्यं, तथापि तिङि आत्वाऽभावे न किञ्चिन्मानमित्यलम्।

अत एव 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे 'तत्करोती'त्यादिरस्यैव प्रपञ्च' इत्यादि निरस्तम्। 'पटुकृतः पटित' इत्यादौ कार्यकालपक्षमादाय टिलोपादीनामसिद्धत्वमिति शरणीकर्त्तव्यम्। 'असस्रजदि'त्यादौ श्रूयमाणे णिचि[6] पदत्वस्य, तन्निमित्तककुत्वादेश्च बाधात्। लुप्ते णिच्यपि[7] भ्रष्टाऽवसरत्वान्न प्रवृत्तिः। अत एव

---

१ 'द्वारैव लोपाऽभावरूप' इति ख. पाठः। तत्र 'द्वारा च' इत्यपि पाठः सम्भाव्यते।

२ गौरवात्' इति ख. पाठः

३ 'अत एव 'रे' शब्दात्' इति ख. पाठः।

४ 'रायो लेत्यात्त्वम्' इति ख. पाठः

५ 'रे' शब्दात्' इति ख. पाठः'

६ 'णिच्यपि पदत्वस्य' इति क. पाठः

७ 'भ्रष्टावसरन्यायात्' इति क. पाठः

न च प्रत्ययलक्षणम् । वर्णाऽऽश्रयत्वादिति भावः ।

द्विर्वचनादौ चेति । यलोपादय 'आदि'शब्दग्राह्याः । 'वरे' इति तु 'वरे योऽजादेशः स न स्थानिवदि'ति व्याख्येयम् । सहविवक्षाऽभावेऽपि निपातनाद् द्वन्द्वः, सप्तम्यलुक् च ।

---

बृहच्छब्दरत्नः

'पूर्वस्ये'ति वक्तव्ये 'प्रातिपदिकस्ये'ति चरिताऽर्थम् । तद्धि सर्वत्र प्रवृत्त्यर्थम् । महासञ्ज्ञाकरणेन तथैव प्रतीतेः । 'अकृतव्यूह'परिभाषा तु न सार्वत्रिकी ।

वर्णाश्रयत्वादिति । यद्यपि प्राधान्यात् 'इष्ठवदि'ति कार्याऽतिदेश एवेति घण्टाघोषः, तथाऽपि स्वादित्वमात्रविरहप्रयुक्तभसञ्ज्ञाविरहे श्रूयमाणे णिच्यतिदेशस्य चरिताऽर्थत्वेन, स्वादित्वा-ऽजादित्वविरहे लुम्रणिचि अतिदेशस्याऽप्रवृत्तिः । यद्यपि वार्तिककृन्मते अप्राधान्येन अलाश्रयणे प्रत्ययलक्षणाऽर्थं प्रत्ययलक्षणसूत्रं, तथाऽपि भाष्यकृन्मते प्रत्ययलक्षणसूत्रं नियमाऽर्थमित्यभिप्रायेणोक्तम् ।

वार्तिककृन्मतेऽपि फलानामन्यथासिद्धिं निरूप्य भाष्यकृता नियमार्थत्वस्थापनेन सर्वत्र प्रवृत्तौ मानाऽभावाच्च । अत एव 'एकदेशविकृतन्यायेन भत्वं दुर्वारमि'त्यपास्तम् । स्थानिविरहे कार्यप्रवृत्तिबोधनेऽपि 'निमित्ताऽन्तरविरहे कार्यप्रवृत्तिरि'त्यर्थबोधने मानाऽभावाच्च ।

वरे योऽजादेश इति । केचित्तु 'वर-ई' इति ईकारं प्रश्लिष्य, ईकारे परतो विधौ न स्थानिवत् । तत्फलन्तु 'आमलक्याः फलम् आमलकम्', स्थानिवद्भावेन 'यस्ये'ति लोपो न । एवञ्च 'पञ्च इन्द्राण्यः, अग्नाय्यश्च देवता अस्येति पञ्चेन्द्रः,

---

लघुशब्दरत्नः

प्रत्ययलक्षणमिति । स्थानिवत्त्वेन प्रत्ययनिमित्तं कार्यमित्यर्थः ।

वर्णाश्रयत्वादिति । 'णाविष्ठवत्' इत्यनेन 'यचि भमि'ति शास्त्रस्यैवाऽतिदेशः । तच्च वर्णाऽऽश्रयम् । एवं च स्थानिवत्त्वस्याऽप्रसक्तिः । कार्याऽतिदेशेऽपि 'यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तिस्तन्निमित्ताऽतिरिक्तसर्वनिमित्तकत्वम् अतिदेशस्याऽपी'त्यङ्गीकाराद्वर्णाऽऽश्रयत्वाऽक्षतिः । प्रत्ययलक्षणसूत्रन्तु भाष्यकृता 'प्रत्ययस्य यत्राऽसाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमि'ति नियमाऽर्थत्वेन स्थापितं, न त्वप्राधान्येनाऽलाश्रयणे विध्यर्थमिति भावः । न च अचः परस्मिन् (१।१।७५) इति णिलोपस्य स्थानिवत्त्वेन भत्वं सुलभमिति वाच्यम् । णिलोपस्येव टिलोपस्याऽपि स्थानिवत्त्वाऽऽपत्तौ वान्ते भत्वस्य दुर्लभत्वेन तत्र पदत्वाऽनिवृत्तेः । 'प्रकल्प्य चाऽपवादविषयमि'ति न्यायेन निषेधविषये तत्प्रतिबन्धाय स्थानिवत्त्वाऽप्रवृत्तेश्च ।

'हरदत्तादिमते' इत्यनेनाऽरुचिर्बोधिता । तद्बीजं तु 'अयं पक्षो न [१]सूत्रवार्तिकभाष्यसंमत इति, प्रातिपदिकात्तदुत्पत्तौ पदत्वाऽभाव' इति । 'चरमाऽवयवे कार्ये' इति व्याख्याने

---

[१] 'सूत्रभाष्यवार्त्तिके'ति क. पाठः ।

**अथोदाहरणानि । पदान्ते—कानि सन्ति, कौ स्तः । द्विर्वचने—**

बृहच्छब्दरत्नः

पञ्चाऽग्निः' । अत्र प्रश्लेषाऽभावे ङीषूसंनियुक्त आनुग्, ऐकारश्च श्रूयेत । न च संनियोगशिष्टन्यायेन निवृत्तिः । परनिमित्ताया ङीषूनिवृत्तेः पूर्वयोः आनुग्-ऐकारयोर्निवृत्तौ कर्त्तव्यायाम् 'अचः परस्मिन्नि'ति स्थानिवत्त्वादित्याहुः ।

तन्न । भाष्य-वार्त्तिकाऽनारूढत्वात् । सप्तम्यन्ताऽभावे 'वरे परतः, ईकारे च परत' इत्यर्थस्य लब्धुमशक्यत्वाच्च । 'क्विलुगुपधे'तिवचनेन सिद्धत्वाच्च । 'जश्चर्षु' इत्येव सिद्धे 'विधि'ग्रहणेन द्वन्द्वाऽऽश्रयणस्य बोधितत्वेन सूत्राऽऽक्षरैरेव क्रोडीकृतत्वाच्च । अत एव 'पञ्च गार्ग्यायण्यो देवता अस्य पञ्चगार्ग्य' इत्यत्र ङीषो लुकि 'ष्फ'प्रत्ययस्य लुक्सिद्धिः[१] । 'लुकी'ति निषेधाऽकरणे तु ङीषो लुकः स्थानिवद्भावेन, तद्धितलुकः परत्वाऽभावान्न स्यात् । न च त्वदुक्तरीत्या निस्तारः । ईकारपरविधेरभावात् ।

एवं 'पञ्चभिः श्वश्रूभिः क्रीतः पञ्चश्वशुर' इत्यादौ अकारोकारलोपः स्यात् । अपि च 'ईकारे परतो विधौ न स्थानिवदि'त्यङ्गीकारे 'ऐनेयः' 'श्यैनेय' इत्यादौ 'यस्ये'ति लोपे, नकारनिवृत्त्यापत्तिः । न च 'स्थानिवदादेश' इत्यनेन [२]स्थानिवद्भाव इति वाच्यम् । नकारस्य पूर्वमेव निष्पन्नत्वेन कार्याऽभावात् । निवृत्त्यभावरूपकार्यस्याऽशास्त्रीयत्वात् । न च ङीब्-नकारयोः सहविधानेन, ईकारपरविधेरभावेन निषेधाऽप्रवृत्तिरिति वाच्यम् । आनुगैकारयोर्ङीषा सह विधानेन 'पञ्चेन्द्र' इत्यादौ दोषाऽऽपत्तेः ।

कानि सन्तीति । न चाऽनादिष्टादचः पूर्वत्वविरहादेव न स्थानिवदिति वाच्यम् । 'वाक्यादुद्धृत्य पदानि संस्क्रियन्ते' इति पक्षे अनादिष्टादचः पूर्वत्वात् । न हि पदाऽन्तरनिरपेक्षमेव पदमिह शास्त्रे संस्कार्यमिति नियमः । 'युष्मद्युपपदे' इत्यादेरसङ्गतिप्रसङ्गात् । संस्कारश्च क्रमेण । युगपदसम्भवेन तत्त्यागे बीजाऽभावात् । नन्वेवं 'कदश्व' इत्यत्र 'कोः कत्तत्पुरुषेऽची'त्यनेन कदादेशो न स्यात् । व्यपदेशिवद्भावेन पदान्तविधित्वात् । अत एव 'सूत्राऽन्ताट्ठगि'त्यादिकं 'व्यपदेशि-

लघुशब्दरत्नः

फलन्तु 'एषो यन् हसती'त्यादौ यणः स्थानिवत्त्वात् 'एतत्तदोः (६।१।१३२) इति सुलोपाऽभावः । इणः शतरि यन्निति रूपम् । उत्वे च न स्थानिवत् । अनेन निषेधादिति तत्त्वम् ।

कानि सन्तीति । वाक्यसंस्कारपक्षे एतत् । तत्र पक्षे पूर्वोपस्थितनिमित्तकत्वरूपाऽन्तरङ्गत्वमादाय अन्तरङ्गाणां पूर्वं प्रवृत्तेः इकारादेः स्थानिभूतादचः पूर्वत्वं द्रष्टव्यम् । एतन्मूलकमेव 'वाक्यसंस्कारपक्षे श्रुतवर्णक्रमेणैव लक्ष्यसंस्कार' इति वदन्ति ।

[१] 'लुक्सिद्धः' इति ख. पाठः ।
[२] 'न स्थानिवद्भावः' इति ख. पाठः ।

१५

सुध्द्युपास्यः। वरे–यायावरः। यश्च यङः (३।२।१७६) इति वरच्। अतो लोपः। स च आतो लोप इटि च (६।४।६४) इत्यालोपे कर्तव्ये

बृहच्छब्दरत्नः

वद्भावोऽप्रातिपदिकेने'ति निषेधादिना सूत्रशब्दादौ ने'ति भाष्याद्युक्तं सङ्गच्छते इति चेन्न। द्विर्वचनादिसाहचर्येण वर्णस्थानिकपदचरमाऽवयवस्याऽग्रहणात्[१]। ध्वनितञ्चेदं पूर्वसूत्रे भाष्ये।

'पदचरमाऽवयवे कर्त्तव्ये स्थानिवद्भावो ने'त्यत्र सङ्कोचे मानाभावात् चरमाऽवयवसाधकः, प्रतिबन्धकश्च स्थानिवद्भावो निषिध्यते। तत्राद्युदाहरणन्तु मूले स्पष्टम्। द्वितीये तु 'रै'शब्दस्य आख्यानण्यन्तस्याऽऽशीर्लिङि बोध्यम्। न च यलोपादिसाहचर्येण प्रतिबन्धक एव निषिध्यते इति वाच्यम्। 'कानि सन्ती'त्युदाहरणपरभाष्यविरोधाऽऽपत्तेः। परनिपातयोग्यस्य पूर्वनिपातकरणेन अन्याऽर्थाऽनुपस्थितौ स्वार्थबोधनद्वारा साहचर्याऽनाश्रयणबोधनाच्च। 'वरे' इत्यस्य विजातीयस्य मध्ये पाठेन साहचर्याऽभावाच्च।

न चैवमपि द्विर्वचनसाहचर्येण तथात्वाऽऽपत्तिः। 'पुत्रम् आ समन्तात् अत्तुं शीलं यस्याः सा पुत्राऽऽदिनी'त्यत्र आङा सह सवर्णदीर्घे, तस्य स्थानिद्भावेन 'नादिन्याक्रोशे पुत्रस्ये'ति निषेधाऽप्रवृत्तौ, द्वित्वप्रवृत्तेः सत्त्वेन, प्रापकोदाहरणस्याऽपि सम्भवात्। 'नादिनी'ति सूत्रे विनिगमकाऽभावात् आङ्पूर्वकोऽनाङ्पूर्वकश्च 'आदिनी'शब्दो गृह्यते। न च निरूपितरीत्या विध्यन्तरप्रतिबन्धनद्वारा प्रापकस्थानिवद्भावनिषेधे मानाऽभावेन उक्तोदाहरणे अप्राप्तिरिति वाच्यम्। विध्यन्तरप्रापणद्वारा प्रतिबन्धकस्थानिवद्भावस्याऽपि ग्रहणे मानाऽभावेन 'द्विर्वचन'ग्रहणस्य वैयर्थ्याऽऽपत्त्या तादृशाऽर्थग्रहस्याऽत्राऽऽवश्यकत्वात्।

वस्तुतस्तु 'क्ङिति च''न धातुलोपः' 'नाज्झलौ' इत्यादिसूत्रस्थयुक्तिसिद्धभाष्यादिप्रामाण्येन निषेधवाक्येन सहैकवाक्यत्वे सति विधेर्लक्ष्यसंस्कारकत्वमि'त्युपपादनान्न दोषलेश इत्यलम्।

सुधिति। न च असिद्धपरिभाषयाऽसिद्धत्वम्। अजानन्तर्यस्य सत्त्वात्। 'वव्रश्चतुरि'त्यादावपि द्विर्वचनं भवत्येव। कैयटस्य तु प्रमाद एव।

यायावर इति। न च 'पूर्वमल्लोपः, ततो यलोप'इति क्रमस्य सत्त्वेन अकारेण आर्द्धधातुकत्वाद्यलाभात् कथमतिदेशप्रवृत्तिरिति वाच्यम्। सम्भावनामात्रेण तत्प्रवृत्तेः, 'यदि पूर्वं यलोपः स्यात्तदा अकारेण प्रत्ययत्वं लब्धं स्यादि'ति। अत्र मानं 'वरे'ग्रहणमेव। फलन्तूत्तरोदाहरणम्[३]। अत एव 'काभ्यामि'त्यादौ कार्यकाल-

[१] 'ग्रहणात्' इति क. पाठः।

[२] 'वरव्रतुः' इति क. ख. पाठः।

[३] उत्तरोदाहरणं=यातिरित्युदाहरणम्।

न स्थानिवत्। यलोपे—यातिः। यातेर्यङन्तात् क्विच्। अतो लोपः। यलोपः। अल्लोपस्य स्थानिवत्त्वादातो लोपः। यलोपः। न च पुनरालोपः शङ्क्यः। 'चिणो लुङ्'न्यायेन [1]आलोपस्याऽसिद्धत्वात्, स्थानिवद्भावाच्च। स्वरे—चिकीर्षकः। [2]सनोऽतो लोपो लिति (६।१।१९३) इति ककारेकारस्य उदात्तत्वे कर्त्तव्ये न स्थानिवत्।

बृहच्छब्दरत्नः

पक्षेऽतिदेशेन दीर्घः। न चैवम् अल्लोपस्य अल्लोपे कर्त्तव्ये 'असिद्धवदत्राऽऽभादि'-त्यसिद्धत्वम्। समानाश्रये तत्प्रवृत्तेः।

'वरे योऽजादेशो न स्थानिवदि'त्युक्त्या यल्लोपाऽऽल्लोपयोः प्रवृत्त्यप्रवृत्त्योः सिद्धत्वेन यलोपे उदाहरणाऽन्तरमाह—यातिरिति।

असिद्धत्वादिति। यङ्निरूपिताऽङ्गस्योभयत्राऽपि तुल्यत्वादिति भावः। 'एकस्यैव भेद' इत्यर्थबोधनार्थं 'चिणो लुङ्न्यायेने'त्युक्तम्। 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति न्यायोऽप्यत्राऽनुसन्धेयः।

चिकीर्षक इति। लित्त्वन्तु 'कारक' इत्यादौ सावकाशम्। इदमेव च ज्ञापकम् 'अचः परस्मिन्नि'ति सूत्रे 'पूर्व'शब्देन व्यवहितस्याऽपि ग्रहणे। स्वरविधौ व्यञ्जनस्याऽविद्यमानवद्भावेऽपि स्थानिवद्भावे तदभावात्[3]। निर्दिष्टपरिभाषा तु अनुवादे न प्रवर्त्तते। यद्यवयवद्वारा समुदायस्याऽपि कार्यभाक्त्वेन, तस्य चाऽव्यवहितपूर्वत्वमस्त्येवेति विभाव्यते, तर्हि इष्टाऽनुरोधेनैव पूर्वसूत्रे व्यवहिताऽव्यवहित-परः पूर्वशब्द इति बोध्यम्। 'प्रवाहणस्याऽपत्यं प्रवाहणेयः'। 'प्रवाहणस्य ढे' इत्यस्य

लघुशब्दरत्नः

न स्थानिवदिति। तेन अतो लोपो नेति भावः। न च 'पूर्वम् अल्लोपस्ततो वलि लोप' इति क्रमसत्त्वात् अकारेणाऽऽर्द्धधातुकत्वाद्यलाभात् कथमतिदेशेन तल्लाभः। सम्भावनामात्रेणाऽपि तल्लाभस्य 'वरे'ग्रहणेन ज्ञापनात्। अस्ति चाऽत्राऽपि—'यदि पूर्वं यलोपः स्यात्तदा अकारेण प्रत्ययत्वं लब्धं स्यात्' इति सम्भावना। फलं तु 'यातिरि'त्यादिसिद्धिरिति दिक्। क्विजिति। क्विच्क्वौ च संज्ञायाम् (३।३।१७४) इत्यनेन। क्तिन् तु न। अप्रत्ययात् (३।३।१०२) इत्यनेन बाधात्।

न स्थानिवदिति। स्थानिवत्त्वे हि स्वराऽप्रवृत्तिरेव स्यात्। अकारस्य तु न। स्वविधौ स्थानिवत्त्वनिषेधात्। लित्त्वन्तु 'कारक' इत्यादौ सावकाशमिति भावः।

[1] 'आतो लोपस्याऽसिद्धत्वात्' इति मुद्रितः पाठः।

[2] 'सनोऽल्लोपः' इति ङ. पाठान्तरम्।

[3] तदभावात् = अविद्यमानवद्भावाऽभावात्।

**सवर्णाऽनुस्वारयोः–शिण्ढि । ([1]शिंषन्ति) । दीर्घे–प्रतिदीव्ना ।**

### बृहच्छब्दरत्नः

वैकल्पिकत्वात् पूर्वपदस्य वृद्धिर्न । तत इञि–'प्रावाहणेयिः' । अत्र णत्वस्याऽसिद्धत्वात् 'अल्लोपोऽन' इति प्राप्नोति । न चाऽत्र त्वदुक्तरीत्या निर्वाहः । 'प्रावाहण'-शब्दस्य स्थानिभूतादचः पूर्वत्वेन अदृष्टत्वात् । अवयवस्य कार्यित्वेन ग्रहणे तु व्यवहितपूर्वत्वमस्त्येव ।

वस्तुतस्तु 'अचः परस्मिन्नि'ति सूत्रे आनुमानिकस्थान्यादेशभावस्य[2] ग्रहणं न । ध्वनितं चेदम् 'आभात्'सूत्रप्रत्याख्यानपरभाष्येण । भाष्ये तु 'आकर्षिक' इत्युदाहृतम् । तदापाततः । छ्लो लित्त्वसामर्थ्यात्स्थानिवद्भावे कृते व्यवधाने[3] सत्यपि लित्स्वरस्य सुवचत्वात् । [4]'घ्नन्ती'त्यादौ कुत्ववदीदृशे विषये 'उत्तरस्ये'त्यङ्गविकला 'तस्मादित्युत्तरस्ये'ति परिभाषा प्रवर्त्तते एवेति प्रागेव प्रपञ्चितं न विस्मर्त्तव्यम् । 'अखट्वक' इत्यादौ स्थानिवद्भावेन 'ह्रस्वान्तेऽन्त्यात्पूर्वमि'ति तु न । 'स्वरे कर्त्तव्ये लोपरूपाऽजादेशस्यैव स्थानिवद्भावनिषेध' इति सिद्धान्तात् ।

सवर्णेति । ननु 'सवर्ण'ग्रहणं व्यर्थम् । अनुस्वारस्य आदिष्टादचः पूर्वत्वात् । न च 'ईयतुरि'त्यादौ यणादेशस्य स्थानिवद्भावेन सवर्णदीर्घव्यावृत्त्यर्थं सवर्णपदम् । न च दीर्घविधानसामर्थ्यान्नेति वाच्यम् । ह्रस्व-यणोर्बाधनेन

### लघुशब्दरत्नः

शिण्ढीति । नन्वत्राऽनुस्वारस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वाऽप्रवृत्तिः । न चाऽस्मादेव ज्ञापकात् तस्याऽशास्त्रीयत्वेऽपि स्थानिवत्त्वेन तत्त्वम् । फलाऽभावात् । तद्घटितसन्निवेशाऽपेक्षस्य ततः पूर्वत्वस्य अतिदेशसहस्रेणाऽप्यतिदेष्टुमशक्यत्वाच्च । भोभगो (८।३।१७) इति सूत्रस्थभाष्यरीत्या तस्य स्थानिभूताऽल्वृत्तिधर्मत्वेन 'अनल्विधौ' इति निषेधाच्च । विशेषणतयाऽनाश्रयणाच्च । भाष्ये 'पूर्वत्राऽसिद्धे' इत्यवष्टभ्य[5] वरे—यलोप—स्वर—भिन्नानां द्विर्वचनादीनां ग्रहणस्याऽत्र प्रत्याख्यानेन, तस्य च णत्वे प्रतिप्रसवेन, अत्र स्थानिवत्त्वेन परसवर्णाऽभावस्यैव लाभादिदमुदाहरणं चिन्त्यम् ।

'णत्वग्रहणे च प्रतिप्रसवार्त्तिके लक्षणप्रतिपदोक्तपरिभाषा ने'त्युपपादयिष्यते ।

किं च दीर्घादाचार्याणाम् (८।४।५२) इत्युत्तरम् अनुस्वारस्य ययि (८।४।५८) वा पदान्तस्य (८।४।५९) तोर्लि (८।४।६०) उदः स्था (८।४।६१) झयो हो (८।४।६२)

[1] 'शिंषन्ति' इति प्रायो लिखितेषु वर्द्धितः पाठः । 'शिण्ढि, शिंषन्ती'ति मूले पाठः' इति च भावप्रकाशे वैद्यनाथः ।

[2] 'स्थान्यादेशभावग्रहणं न' इति ख. पाठः ।

[3] 'स्थानिवद्भावकृतव्यवधाने सत्यपि' इति ख. पाठः ।

[4] 'प्रतीत्यादौ' इति ख. पाठः ।

[5] 'इत्यवष्टम्भेन' इति क. ख. ग. पाठः ।

बृहच्छब्दरत्नः

चरिताऽर्थत्वात्। यदि अणुरपि विशेषो नाऽवधार्येत, तर्हि सर्वं बाध्येत। अस्ति चेह विनिगमकम् अनन्तरत्वम्।

किञ्च दीर्घविधानसामर्थ्याद्दीर्घविनाशकविधेरभावो बोध्यः। तथा च दीर्घविधानसामर्थ्यात् ह्रस्वयणोरभावे'[1] 'ई-अतुरि'ति रूपं स्यात्। अत एव 'उपेयिवानि'ति सूत्रे मनोरमायां 'दीर्घ इणः किती'ति दीर्घे कृते, तत्सामर्थ्यात्सवर्णदीर्घाऽभाव इति पक्षाऽऽश्रयणादि'ति ग्रन्थे 'पक्ष'पदोपादानमिति वाच्यम्। यण इव ह्रस्वस्याऽपि पूर्वं प्रवृत्त्या 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'तिन्यायेन पुनरप्रवृत्तौ, [2]दीर्घविधानेन दीर्घबाधस्याऽस्याऽऽवश्यकत्वात्।

किञ्च 'सवर्णनिमित्तकविधौ न स्थानिवदि'त्यर्थस्य वक्तुमशक्यत्वे, यलोपादिसाहचर्येण 'सवर्णे कर्त्तव्ये' इत्यर्थस्यैवोचितत्वात्। प्रतिपदोक्तपरिभाषया, अनुस्वारादिसाहचर्येण च त्रैपादिकस्य 'अनुस्वारस्य ययि परसवर्ण' इत्यस्यैव ग्रहणाच्च। किञ्च 'पूर्वस्यैव विधिः पूर्वविधिरि'ति समासेन पूर्वपरयोर्विधौ स्थानिवद्भावाऽप्रवृत्तेः। अत एव 'विधि'ग्रहणं चरितार्थम्। अन्यथा 'पूर्वस्ये'त्येतावदुक्तौ 'कार्यित्वेन, निमित्तत्वेन वे'ति व्याख्यानेन [3]समासद्वयफललाभात्। विधिग्रहणे सत्यपि 'पूर्वस्मात् निमित्तत्वेनाऽऽश्रितादि'ति व्याख्येयमेव। अन्यथा 'हे गौरि'त्यत्र गकारात्परस्य विधौ वृद्धेः स्थानिवद्भावेन 'एङ् ह्रस्वादि'ति सम्बुद्धिलोपः स्यात्।

वस्तुतस्तु पञ्चमीसमासः प्रत्याख्यात एव। स्पष्टञ्चेदं विप्रतिषेधसूत्रे, 'अचः परस्मिन्नि'ति सूत्रे च भाष्यकैय्यटयोः। न चैवमपि यणादेशात्पूर्वं दीर्घो दुर्वार इति वाच्यम्। 'वार्णादाङ्गमि'त्यस्य[4] प्रवृत्तेः। यणादेशरूपनिमित्तविनाशसामग्र्या अपि सम्भावितत्वेन 'अकृतव्यूह'परिभाषाया दुर्वारत्वाच्चेति चेत्। अत्रोच्यते- सवर्णग्रहणम् 'अनादिष्टादचः पूर्वत्वस्य अशास्त्रीयत्वेऽपि स्थानिवद्भावेनाऽतिदेश' इत्यस्मिन्नर्थे मानम्। न चैवं 'ब्राह्मणकण्डूतिरि'ति न सिध्येत्। कण्डूयतेः क्तिचि, अल्लोपस्य स्थानिवत्त्वेन उवङि, धातुत्वाऽभावे यणि वा, उक्तरीत्या स्थानिवद्भावात्

---

लघुशब्दरत्नः

**शश्छोऽटि (८।४।६३) इति षट्सूत्रीपाठोत्तरं झलां जश् झशि (८।४।५३) अभ्यासे चर्च (८।४।५४) खरि च (८।४।५५) वाऽवसाने (८।४।५६) अणोऽप्रगृह्यस्य (८।४।५७) इति पञ्चसूत्र्याः पाठ' इति भाष्यसंमताऽष्टाध्यायीपाठपक्षे परसवर्णदृष्टच्या झलां जश् झशि (८।४।५३) इत्यस्य, झरो झरि (८।४।६५) इत्यस्य चाऽसिद्धत्वेन ययुपरत्वाऽभावात्तदप्राप्तेरिति चेत्। सत्यम्। पादयतेः क्विपि 'पाद्भसती'त्यादौ झयो ह (८।४।६२) इति पूर्वसवर्णे**

---

[1] 'रं अतुरि'ति क. ख. पाठः।

[2] 'दीर्घविधानेन दीर्घवाक्यस्यावश्यकत्वात्' इति क. पाठः।

[3] 'समासद्वयफलाभात्' इति क. ख. पाठः।

[4] 'इत्यस्याऽप्रवृत्तेः' इति ख. पाठः।

बृहच्छब्दरत्नः

ऊठ्-वलोपयोरभावे, आतिदिष्टरूपाऽऽपत्तिरिति वाच्यम्। 'न पदान्ते'ति सूत्रे 'कण्डूतिरि'ति भाष्योदाहरणेन अनित्यत्वस्य[१] ज्ञापनात्। 'आतोऽनुपसर्गे कः' इति सूत्रे 'कविधौ सर्वत्र प्रसारणिभ्यो ड' इति वार्त्तिकस्य, तत्प्रघट्टकभाष्यस्य च पर्यालोचनयाऽपि एवमेव लभ्यते।

न च 'सवर्ण'ग्रहणं 'सवर्णस्य सवर्णस्थान्यनुस्वारे एव कर्त्तव्ये स्थानिवत्त्वाऽभावः, न केवलाऽनुस्वारे' इति नियमाऽर्थं किं न स्यादिति वाच्यम्। अनुस्वारग्रहणस्य वैयर्थ्याऽऽपत्तेः। एवञ्च 'सवर्णाऽनुस्वारयोरावश्यकत्वे 'पूर्वत्राऽसिद्धे न स्थानिवदि'त्यनेनैव सिद्धे, 'द्विर्वचनादीनि[२] न कर्त्तव्यानि, वरेयलोपस्वरवर्जमि'ति भाष्ये सवर्णाऽनुस्वारग्रहणमपि बोध्यम्।

अपरे तु 'स्थानिद्वारा अनादिष्टादचः पूर्वत्वज्ञापने फलाऽभावः। न च 'समाद्ये'त्यत्र 'ण्यल्लोपावि'ति पूर्वविप्रतिषेधेन णिलोपे, ततः प्रत्ययलक्षणेन वृद्धावेकदेशविकृतन्यायेन जग्ध्यादेशप्रसङ्गः, एवं 'घान्यादि'त्यत्र वधाऽऽदेशप्रसङ्ग इति वाच्यम्। अन्तरङ्गत्वेन वृद्धेर्दुर्वारत्वात्। पूर्वविप्रतिषेधस्तु समानविषयत्वे एव। किञ्चैकदेशविकृतन्यायेन स्थानिनिष्ठाऽतिदिश्यमानहन्तित्वाऽदित्वयोरनादिष्टादचः पूर्वत्वात्। किञ्चेदृशे विषये स्थानिवद्भावस्य, तदनित्यत्वस्य च कल्पनाऽपेक्षया लाघवेन जग्ध्यादेशाद्यभावोपायकल्पनमेवोचितम्। 'अदो जग्धिर्ल्य'प्ति किती'ति साहचर्यात् ल्यपि ण्यन्तस्याऽग्रहणम्। एवं 'हनो वध लिङी'त्यत्राऽपि 'लुङी'ति साहचर्यान्न दोषः।

किञ्च 'लिङी'ति विवक्षितसप्तमी। सा च विवक्षा प्रत्यासत्तिन्यायेन श्रूयमाणाद्धातोरेव। तथा च 'समाद्ये'त्यत्र ल्यबुत्पत्तेः पूर्वं णिचः श्रूयमाणत्वेन न तद्धातूत्तरं ल्यब्विवक्षा। ल्यबुत्पत्तौ च विवक्षा नास्त्येव। सिद्धेः प्रतिबन्धकत्वात्। स्पष्टञ्चेदं स्थानिवत्सूत्रे भाष्ये। 'लोलुव' इत्यादावुवङो गुणनिषेधाऽर्थं 'न धातुलोप' इति सूत्रं कृतमेव। तस्माद्यथाश्रुतं भाष्यं रमणीयमेवेत्याहुः।

एतेन 'हरित'शब्दात् आचक्षाणाऽर्थकणिजन्ताद्क्विपि 'हरिल्लुनाती'त्यादौ 'तोर्ली'ति कर्त्तव्ये प्राप्तस्थानिवद्भावः सवर्णग्रहणेन निषिध्यते। न च 'पूर्वत्राऽसिद्धीये न स्थानिवदि'त्यनेनैव सिद्धमिति वाच्यम्। 'तस्य दोषः संयोगादिलोप-

---

लघुशब्दरत्नः

**पञ्चमीसमासेन प्राप्तस्थानिवद्भाववारणाऽर्थत्वात्। 'हरित'शब्दात् आचक्षाणण्यन्तात् क्विपि 'हरिद्धसती'त्यादौ उक्तरीत्या प्राप्तस्य तस्य वारणाऽर्थत्वाच्च। अत्राऽल्लोपस्याऽपि तत्प्राप्त्या 'क्वौ लुप्तमि'त्यस्य विषय एव न। 'हरिन्नमती'त्यादौ अनुनासिके तद्व्यावृत्त्यर्थत्वाच्च। 'हयवरट्'सूत्रभाष्यरीत्या तत्र सवर्णग्रहणाऽपकर्षेण तस्याऽपि सवर्णविधित्वादित्यन्यत्र विस्तरः।**

---

[१] 'अनित्यत्वज्ञापनात्' इति ख. पाठः।

[२] 'द्विर्वचनादीति' इति क. ख. पाठः।

जशि—सग्धिश्च मे। अदनं ग्धिः। अदेः क्तिनि बहुलं छन्दसि (२।४।३९) इति घस्लादेशः। घसिभसोर्हलि (६।४।१००) इत्युपधालोपः। झलो झलि (८।२।२६) इति सलोपः। धत्वम्। घस्य जश्त्वम्। सहस्य सः (६।३।७८) इति सूत्रात् 'स' इत्यनुवर्त्तमाने समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केषु (६।३।८४) इति सूत्रेण सः। चरि—जक्षतुः।

संयोगान्तस्य (८।२।२३)। तदन्तस्येति। अलोऽन्त्यपरिभाषयेति भावः। यद्यपि विशेषणेन तदन्तविधिलाभात् 'संयोगस्ये'त्येव सूत्रयितुमुचितम्, तथाऽपि 'प्रत्येकं संयोगसञ्ज्ञे'ति पक्षे 'दृषत्करोती'त्यादौ लोपं वारयितुं 'संयोगावन्तौ यस्ये'ति द्विवचनाऽन्तेन समासलाभाऽर्थमन्त-

---

बृहच्छब्दरत्नः

लत्वणत्वेष्वि'ति निषेधादि'ति परास्तम्। प्रतिपदोक्तत्वस्यैव ग्रहणाच्च। एवञ्च संयोगादिलोपसाहचर्यमपि न विरुध्यते। अत एव बह्वच्कस्य पूर्वनिपातः।

शिषन्तीति। न च बहिरङ्गपरिभाषयाऽसिद्धत्वम्। यथोद्देशपक्षाऽऽश्रयणात्। बहुलं छन्दसीति। सादेशोपधालोपाऽर्थं छान्दसत्वस्याऽऽवश्यकत्वादेवमुक्तम्। प्रकृतरूपस्य धात्वन्तरादपि सिद्धेः। समानस्येति। 'सग्धिः स्त्री सह भोजनमि'त्यमरकोशात्तु सहाऽर्थः प्रतीयते। 'छान्दसा अपि क्वचिद्भाषायां भवन्ती'त्याश्रित्य समर्थनीयम्। केचित्तु पृषोदरादिपाठादुपधालोपमिच्छन्ति।

संयोगावन्ताविति। भाष्यग्रन्थस्त्वित्थं, 'नैवं विज्ञायते—संयोगोऽन्तो यस्येति तदिदं संयोगाऽन्तं, संयोगाऽन्तस्ये'ति। कथन्तर्हि ?। 'संयोगावन्तौ यस्य तदिदं संयोगाऽन्तं, संयोगाऽन्तस्ये'ति। न चेदं भाष्यं 'संयोगपदं लुप्तषष्ठीद्विवचनाऽन्तमि'त्यर्थमात्रपरमिति वाच्यम्। 'नैवमि'त्यादिशब्दानां, विग्रहस्य, परिनिष्ठितरूपप्रदर्शनस्य चाऽसङ्गतताऽऽपत्तेः। तन्मात्रप्रदर्शने कर्त्तव्ये अधिकप्रदर्शने बीजाऽनापत्तेश्च।

---

लघुशब्दरत्नः

सूत्रेण स इति। 'सग्धिः स्त्री सहभोजनमि'त्यमरात् सहस्य सादेश इति प्रतीयते। 'झलो झलि (८।२।२६) इति सिच एव लोप' इति पक्षे छान्दसो वर्णलोपो बोध्यः। स्पष्टं चेदं धि च (८।२।२५) इति सूत्रे भाष्ये। लोके तु 'सग्धिरि'त्यसाध्वेवेति बोध्यम्।

विशेषणेन='पदस्ये'त्यधिकारप्राप्तविशेषणेन 'संयोगस्ये'त्यनेन। एकत्वसङ्ख्येति। अभेदैकत्वसङ्ख्येति तदर्थः। सङ्ख्यासामान्याऽभाव इति यावत्। विग्रहे एकवचनन्तु औत्सर्गिकं, सुबन्तत्वसम्पत्तिमात्रफलकमिति समर्थसूत्रे भाष्ये स्पष्टम्।

**ग्रहणम् । 'वृत्तौ हि उपसर्जनानामेकत्वसङ्ख्या औत्सर्गिकी, द्वित्वादिकन्तु [1]'यत्नलभ्यमि'ति भाष्ये स्थितम् ।**

बृहच्छब्दरत्नः

भाष्ये इति । अत्राऽरुचिबीजन्तु 'संयोग' इति महासञ्ज्ञाकरणसामर्थ्येन अन्वर्थत्वविज्ञानात् समुदायस्यैवेति स्पष्टं भाष्यादौ । अत एव 'भक्ते'त्यादौ 'संयोगे गुरु' इति गुरुसञ्ज्ञा न । अत एव क्नोः कित्करणं चरिताऽर्थम् ।

किञ्च 'स्कोः संयोगाद्योरि'त्यत्र कर्मधारयः, उत षष्ठीतत्पुरुषः ? । नाऽऽद्यः । 'आदि'शब्दस्य पूर्वप्रयोगाऽऽपत्तेः । अन्त्यपक्षेऽपि—'पदान्ते झलि चे'ति विशेषणं संयोगस्य, उत स्कोः ?। नाऽऽद्यः । सविशेषणत्वेन समासाऽनापत्तेः ।

अन्त्येऽपि—पूर्ववृत्तित्वं व्यवहितम्, उताऽव्यवहितम् ? । नाऽऽद्यः । '[2]सेवकलगि'त्यादौ सकारादीनां लोपाऽऽपत्तेः । नाऽन्त्यः । 'भूयादि'त्यादौ पूर्वं सुटः सकारलोपाऽऽपत्तौ तस्य असिद्धपरिभाषया असिद्धत्वेन, 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति न्यायेन च यासुटः सकारलोपाऽनापत्तेः ।

न च 'वर्णग्रहणे जातिग्रहणमि'ति शङ्क्यम् । सत्वजातेः संयोगाद्यवयवत्वाऽसम्भवेन, लोपस्थानित्यत्वाऽसम्भवेन च न्यायस्याऽत्राऽप्रवृत्तेः ।

अपि च 'निर्यायादि'त्यादौ 'वाऽन्यस्य संयोगादेरि'त्यादिकं दुर्वारम् । न च 'वाऽन्यस्य संयोगादेरि'त्युक्तया 'संयोगात्परो य आकारस्तदन्ताऽङ्गन्तस्ये'त्यर्थलाभेनेष्टसिद्धावादिग्रहणसामर्थ्यात् द्विवचनान्तेन समास इति वाच्यम् । एवमपि आकारविशेषणे 'निर्यायादि'त्यादौ दोषस्य दुर्वारत्वात् ।

खट्वाशब्दादावाचारक्विपि दोषाऽऽपत्तेश्च । न चोपदेशग्रहणाऽनुवृत्त्या निस्तारः । 'आतो लोप इटि च', 'ईद्यती'ति सूत्रयोर्नामधातावप्रवृत्त्यापत्तेः । संयोगस्याऽवयवत्वबोधनद्वारा अङ्गविशेषणत्वबोधनेन चारितार्थ्याच्च । संयोगसञ्ज्ञासूत्रे भाष्यकृता स्पष्टतयाऽभिहितत्वाच्च । एतेन 'संयोगाभ्यामि'तिन्यासेन सर्वेष्टसिद्धावादि ग्रहणं चिन्त्यप्रयोजनमि'ति परास्तम् । 'छादेर्घे'तिसूत्रस्थभाष्याद्युक्तरीत्या 'निर्ग्लेयादि'त्यादौ एत्वाद्यनापत्तेश्चे'त्यपि वदन्ति । प्रकृतसूत्रे च 'अन्त'पदं 'न लोपः प्रातिपदिका न्तस्ये'त्यादाविव न्यायाऽनुवादकम् ।

स्थितमिति । 'अन्त'पदसामर्थ्येनोक्ताऽर्थं वर्णयता भाष्यकारेण अन्तग्रहणस्याऽन्यप्रयोजनाऽभावो बोधित इति भावः । एतेन 'संयोगे'ति लुप्तषष्ठ्यन्तं

लघुशब्दरत्नः

भाष्ये स्थितमिति । संयोगसञ्ज्ञासूत्रस्थे इत्यर्थः । एवं च प्रत्येकं संयोगसञ्ज्ञापक्षस्य 'अनन्तरा' इति सूत्राऽक्षरस्वारस्यविरोधेन, फलाऽभावेन च असङ्गतत्वमिति तत्रैव भाष्ये ध्वनिततया अत्रत्यमन्तग्रहणं व्यर्थमेव, न तु फलाऽन्तरेऽभिनिवेशः कार्य इति भावः ।

[1] 'प्रयत्नलभ्यम्' इति मुद्रितेषु पाठः ।
[2] 'ओलस्जी' धातोरूपमिदम् । 'सेवकमक्' इति वा पाठः । 'मस्ज्'धातोरूपम् ।

यण इति वाचनिकम्। यद्वा वाच्यो = व्याख्येयः। व्याख्या च द्वेधा। झलो झलि (८।२।२६) इत्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयते इति, अन्तरङ्गे लोपे कर्त्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा।

---

बृहच्छब्दरत्नः

पदम्। तच्च 'पदस्ये'ति चाऽन्तविशेषणम्। अत्र चाऽन्तग्रहणं मानमि'ति परास्तम्। लक्ष्याऽभावाच्च। अत एव 'नुदविदे'ति सूत्रे 'शुषः [1]क' इत्यादिबहुयोगविच्छिन्नस्य कथमनुवृत्तिरि'त्याशङ्क्य 'अन्यतरस्यान्न ध्याख्ये'ति संहितापाठे नकाराऽन्तरप्रश्लेष' इत्युक्तं भाष्ये। 'हलो यमामि'ति लोप' इति हि तस्याऽऽशयः। त्वदुक्तरीत्या तु संयोगाऽन्तलोपेनैव सिद्धे, संहितापाठपर्यन्तं नोपन्यसेत्। संहितायामपि 'हलो यमामि'ति लोपस्याऽसिद्धत्वेन संयोगान्तलोपेनैव भाव्यम्। 'न लोपः प्रातिपदिकान्तस्ये'ति तु न शङ्क्यः। अन्तग्रहणसामर्थ्येन मुख्याऽन्तग्रहणात्। 'त्रः [2]सङ्ख्याया' इत्यादिनिर्देशाच्च। अत एव 'द्विशकारको निर्देश' इति भाष्यं सङ्गच्छते। तव मते संयोगान्तलोपस्य दुर्वारत्वेन 'लुप्तनिर्दिष्टो वकार' इतिवत् 'लुप्तनिर्दिष्टः शकार' इति ब्रूयात्।

एतेन सरूपसूत्रे 'पृथक् सर्वेभ्यो विभक्तावेकशेष' इति पक्षे 'वृक्षस्स्' इति प्रसज्येते'त्याशङ्क्य, 'संयोगाऽन्तलोपात्सिद्धमि'ति भाष्ये उक्तत्वेन 'संयोगेति लुप्तषष्ठ्यन्तं पदमि'ति परास्तम्। 'वृक्षौ च वृक्षौ च वृक्षा' इत्याद्यसिद्ध्यापत्त्या भाष्यस्य प्रौढिवादपरताया आवश्यकत्वात्। 'हल्ङ्याबि'ति लोपपरतया कैय्यटेन व्याख्यातत्वाच्च। '[3]हलोर्लोप' इति सूत्रयितुमुचितम्। 'पदस्ये'त्यस्याऽनुवर्त्तनेन 'हलोरि'त्यस्य विशेषणत्वेन हल्द्वयचरमाऽवयवकस्ये'त्यर्थलाभादित्याहुः।

---

लघुशब्दरत्नः

यत्तु 'संयोगे'ति लुप्तषष्ठीकम्, तच्च, 'पदस्ये'ति च अन्तविशेषणम्। 'संयोगाऽन्तस्य सतः पदान्तस्ये'त्यर्थः[4]। एतदमर्थमन्तग्रहणमिति। तन्न। तादृशलक्ष्याऽभावात्। अत एव ध्वसोः (६।४।११९) इति सूत्रे 'द्विशकारको निर्देश' इति भाष्ये उक्तम्। त्वद्रीत्या संयोगाऽन्तलोपस्य दुर्वारत्वेन शकारद्वयाऽभावात्तदसङ्गतिः स्पष्टैव।

अपकृष्येति। तच्च षष्ठ्या विपरिणम्य, वाक्यभेदेन सम्बध्यते। तेन पूर्ववाक्यस्य क्वचित् अझल्यपि प्रवृत्तिः। उत्तरवाक्येन च तस्य क्वाचित्कत्वं ज्ञाप्यते। तेन च नाऽतिप्रसङ्गः। ध्वनितं चेदम् अमो मश् (७।१।४०) इत्यत्र भाष्ये। तत्र हि मद्वयात्मकम्

---

[1] 'छषः कारत्यादि' इति क. ख. पाठः।

[2] 'सङ्ख्यायाम्' इति ख. पाठः।

[3] 'हलो लोपः' इति ख. पाठः।

[4] 'पदान्तस्येत्यर्थमन्तग्रहणम्' इति मुद्रितः पाठः।

न च षाष्ठी असिद्धपरिभाषा त्रिपादीस्थत्वेनाऽसिद्धमन्तरङ्गं लोपं न पश्यतीति वाच्यम्। कार्यकालपक्षाऽभ्युपगमात्।

न च 'नाऽजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति निषेधः। तस्याऽनित्यत्वात्। उत्तरकालप्रवृत्ते लोपे अजानन्तर्याऽभावाच्च। तथा च वार्त्तिकं—'संयोगाऽन्तस्य लोपे यणः प्रतिषेधः। न वा, झलो लोपात्। बहिरङ्गलक्षणत्वाद्वा' इति।

इह यथोद्देशपक्षे आद्यं वार्त्तिकद्वयम्, तृतीयं तु कार्यकालपक्षे इति विवेकः। यत्त्वाहुः—'वार्त्तिककृतो वचनं, प्रत्याख्यानप्रकारद्वयन्तु भाष्यकृत' इति। तन्निर्मूलम्। मतभेदे प्रमाणाऽभावात्।

यदप्याहुः—काव्यं, कलत्रं, शाल्वं चाऽऽचक्षाणः—काव्, कलत्, शाल्। अदभ्रयतेः अधबिति। तदपि न। पक्षत्रयेऽपि संयोगाऽन्तलोपस्य दुर्लभ-

---

बृहच्छब्दरत्नः

कार्यकालेति। प्रधानाऽन्तरङ्गशास्त्रदेशस्थत्वेन, षष्ठाऽध्याये बोधकशास्त्रसत्त्वेऽपि तद्देशस्थत्वं नास्तीत्यर्थः।

अनित्यत्वादिति। अत्र च मानं 'केऽण' इति निर्देशः। तत्र हि 'क-इ-अण' इति स्थिते, अन्तरङ्गत्वाद् गुणः, न तु परत्वात्। लक्ष्यगतपरत्वमादाय यणादेशस्याऽपि परत्वात्। एवञ्च परस्परप्रतिबन्धादुभयोरभावे प्राप्ते, उक्तनिर्देश उक्ताऽर्थे ज्ञापक' इत्याहुः। मतभेद इति। एवञ्च मुनेरज्ञानं कल्प्यं स्यादिति भावः।

ननु प्रातिपदिकाण्णिजुत्पत्तौ बहिर्भूतसुपोऽपि निमित्तकोटौ प्रवेशेन बह्वपेक्षत्वेन संयोगान्तलोपस्य बहिरङ्गत्वात्तद्दृष्ट्या अल्लोप-णिलोपयोरसिद्धत्वाऽनापत्तौ चरमपक्षे संयोगाऽन्तलोपो दुर्वार इत्याशङ्क्याह—आद्यपक्षद्वयेति।

---

लघुशब्दरत्नः

आदेशं विधाय, शित्त्वं प्रत्याख्यातम्। 'एकस्य मस्य संयोगाऽन्तलोप' इति च कैय्यटेन व्याख्यातम्। अनित्यत्वादिति। तत्र च ज्ञापकं केऽणः (७।४।१३) इति निर्देशः। 'क इ अण' इति स्थिते लक्ष्यगतपरत्वमाश्रित्य प्राप्त इकारस्य यण् असिद्धपरिभाषया तत्र व्यावर्त्यते। 'अन्तरङ्गं बलीय' इति परिभाषाऽन्तरं नास्त्येवेति भावः।

वस्तुतः ओमाङोश्च (६।१।९५) इत्याङ्ग्रहणादनित्यमिदम्। तद्धि 'शिव आ इही'ति-स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनाऽन्तरङ्गत्वाद् गुणे वृद्धिबाधनाऽर्थम्। [1]अस्या उदाहरणन्तु—'अक्षद्यूरि'ति। अन्यथा अन्तरङ्गे यणि ऊठ् असिद्धः स्यात्।

मतभेद इति। 'न वे'ति 'वा'शब्दस्वारस्येन वचनाऽऽरम्भवादिन एव प्रत्याख्यान-

---

[1] अस्याः=नाजानन्तर्यपरिभाषायाः।

त्वात्। आद्यपक्षद्वयैकरूप्याऽर्थं 'पूर्वं पूर्वमन्तरङ्गं, परं परं बहिरङ्गमि'ति अल्लोप-णिलोपयोरसिद्धत्वस्य सुवचत्वात्। अत एव कातन्त्रपरिशिष्टे-शुक्लयतेः क्विपि 'शुक्ल्' इत्युदाहृतम्। वान्तयोः क्विपि ऊठो दुर्वारत्वात्। न च स्थानिवत्त्वम्। क्वौ विधिं प्रति तन्निषेधात्। विचि लोपो व्योः (६।१।६६) इति [1]लोपस्य प्रसङ्गाच्च। गिरिवेशमयतेस्तु क्विपि यणः

---

**बृहच्छब्दरत्नः**

'यणः प्रतिषेधो वाच्यः, न वा झलो लोपादि'ति पक्षद्वयैकरूप्यायेत्यर्थः।

केचित्तु 'सुबन्ताण्णिच्', प्रातिपदिकाद्वा णिजि'ति पक्षद्वयैक्यायेत्यर्थः। 'सुबन्ताण्णिजि'ति पक्षे 'अल्पाऽपेक्षमन्तरङ्गमि'त्यर्थाऽऽश्रयणेऽपि अल्लोपाद्यसिद्धत्वस्य दुर्वारत्वेन उक्ताऽर्थाऽऽश्रयणे प्रातिपदिकाण्णिजुत्पत्तावपि न क्षतिरित्याहुः।

न चैक्ये मानाऽभावः। अविरोधे सम्भवति विरोधकल्पनस्याऽन्याय्यत्वात्। एतत्पक्षवादिन इतरपक्षाऽज्ञानवत्, निर्बीज-फलाऽज्ञानकल्पनाऽऽपत्तेश्च। अष्टदोषदुष्टविकल्पाऽऽपत्तेश्च। परस्परविरोधेनैकस्याऽपि लक्ष्यसंस्कारकताऽनापत्तेश्च। एकस्यैव शब्दस्य साधुत्वा-ऽसाधुत्वाऽऽपत्तौ पुण्य-पाप-जनकताऽऽपत्तेश्च। 'नवेति विभाषे'तिसूत्रस्थभाष्यविरोधाऽऽपत्तेश्च। अत एव 'आ कडारादेका सञ्ज्ञा' 'अङ्गस्य' 'धातोः' 'असिद्धवदत्राऽऽभादि'त्यादावेकफलाऽर्थे क्लेश आदृतो भाष्यकारैः।

ऊठ इति। 'काव्य'शब्देऽपि संयोगान्तलोपस्याऽसिद्धत्वेन 'लोपो व्योरि'ति लोपे, वान्तत्वमस्त्येवेति भावः।

प्रसङ्गाच्चेति। इदञ्च 'काव्य'शब्दे। 'शाल्व'शब्दे तु स्थानिवद्भावस्य दुर्वारत्वात्।

---

**लघुशब्दरत्नः**

प्रकारो, भाष्यकृत्तु 'तर्हि वक्तव्यं, न वक्तव्यमि'त्यादिशब्दैरेव प्रत्याचष्टे इति सर्वं वार्तिककृत एवेति भावः। कावित्यादि। संयोगाऽन्तलोपादिति भावः।

ननु 'पूर्वपूर्वस्थानिकम् अन्तरङ्गमि'त्यर्थो न भाष्यसंमतः, किन्तु [2]'पूर्वपूर्वनिमित्तकमि'त्येव। किञ्च प्रातिपदिकात् णिजुत्पत्तेरेव भाष्यसंमततया बहिर्भूतसुब्निमित्तकसंयोगाऽन्तलोपोऽपि बहिरङ्ग इत्यरुचेराह—वान्तयोरिति। काव्ये यलोपे स्थानिवत्त्वनिषेधात् लोपो व्योः (६।१।६६) इति कृते वान्तत्वमिति, ऊठ् दुर्वारः। अन्त्ये च स्वत एवेति, तत्र वलोपं बाधित्वा ऊठ् दुर्वार इत्यर्थः। विचीति। 'काव्यशब्दे' इति शेषः। यलोपे स्थानिवत्त्वनिषेधात्। एवं च प्राचीनोक्तं संयोगान्तलोपोदाहरणत्वमयुक्तमिति भावः। शाल्वे तु अल्लोपादेः स्थानिवत्त्वान्न तत्प्रसक्तिरिति बोध्यम्।

---

[1] 'लोप' इति लिखितेषु नास्ति।
[2] 'पूर्वनिमित्तकमित्येव' इति लिखितेषु पाठः।

प्रतिषेधाऽर्थं वचनाऽऽरम्भपक्षे 'गिरिवेडि'त्युचितम्। प्रत्याख्यानपक्षे तु मान्तमेवेति दिक्।

बृहच्छब्दरत्नः

मान्तमेवेति। यत्त्वनेकपक्षाऽनुरोधेन 'गिरिवेडि'त्येवोचितम्। चरमपक्षे 'बह्वपेक्षं बहिरङ्गमि'त्यस्याऽऽश्रयणे प्रातिपदिकाण्णिजुत्पत्तौ 'म'लोपस्य सुलभत्वादि'ति। तन्न। झल्ग्रहणाऽपकर्षपक्षफलैक्यार्थं 'पूर्वं पूर्वमन्तरङ्गमि'त्याद्यर्थस्याऽप्याश्रयणेन चरमपक्षेऽपि मान्तप्रयोगस्य सत्त्वेन अनेकपक्षाऽनुगुण्यस्याऽत्राऽविशिष्टत्वात्। क्लृप्ता चेयं व्यवस्था आद्ययोः पक्षयोः फलैक्ये।

एतेन 'सिद्धान्तचरमपक्षस्य प्राबल्याऽनुमानात् अमान्तत्वमेवोचितमि'ति परास्तम्। हेत्वनुपन्यासाच्च। न च चरमग्रन्थोपन्यासो हेतुः। अप्रयोजकत्वात्। मानाऽन्तरेण सिद्धप्राबल्यकस्य उत्सर्गतश्चरमग्रन्थे उपन्यासः। न चैवं यणि प्रतिषेधाऽऽरम्भपक्षाऽपेक्षया झल्ग्रहणाऽपकर्षपक्षस्य प्राबल्यं न स्यादिति वाच्यम्। लाघवेन, त्रिमुनिसंमतत्वेन च तत्सिद्धेः। न च 'झल' इत्यपकर्षस्य सूत्रसंमतत्वे पूर्वत्रैव कृतं स्यादिति वाच्यम्। 'संयोगान्तस्य लोप' इति सूत्रप्रणयनकाले झलन्ते एव प्रवृत्तिरित्यर्थस्य अस्मृतत्वेनाऽदोषात्। उत्तरसूत्रप्रणयनकाले स्मृतत्वेऽपि, पूर्वत्र पठितेनोत्तरत्रोपकारवत्, उत्तरत्र पठितेन पूर्वत्रोपकारस्य कर्त्तुं शक्यत्वेन, पठिताऽनुपूर्व्या भङ्गकल्पनं नोचितमित्याशयस्य सत्त्वात्। स्पष्टञ्चेदं पस्पशायां भाष्य-कैय्यटयोः। ईदृशाऽर्थस्याऽऽश्रयणे अपकर्षादिबोधकभाष्यवार्त्तिकग्रन्था एव मानम्। अत्र च सूत्रमपि प्रमाणत्वेनोपलभ्यते। अत एव 'झलि झल' इति न सूत्रितम्। सप्तम्यन्तेन व्यवधाने पूर्वत्राऽन्वयाऽनापत्तेः। अत एव च 'मत' इति वक्तव्ये 'अतोऽमि'ति सूत्रितम्। तद्धि 'अमि'ति च्छेदाऽर्थम्। तेन 'ज्ञानमि'त्यादौ 'म'द्वयश्रवणं न। न चैवं 'तितउभ्यामि'त्यत्र संयोगाऽन्तलोपस्याऽप्राप्तौ संयोगसंज्ञायां हल्ग्रहणं व्यर्थमेवेति वाच्यम्। 'तितउ देवे'त्यादौ दोषस्य दुर्वारत्वात्। विजातीये प्रवृत्त्यनङ्गीकारे तु 'पचन्ति'त्यादौ संयोगान्तलोपाऽनापत्तौ सर्वोपप्लवः स्यात्।

ननु लाघवात्, त्रिमुनिसंमतत्वाच्च चरमपक्षस्याऽपि प्राबल्यं स्यात्। अपूर्ववचनाऽकरणाल्लाघवं स्पष्टमेव। भाष्यवार्त्तिकयोरुपन्यस्तत्वात्, असिद्धपरिभाषायाम् [१]ऊडादिग्रहणस्य ज्ञापकत्वाच्चेति चेत्। सत्यम्। अविरोधे सम्भवति विरोध-

लघुशब्दरत्नः

मान्तमेवेति। अस्य 'प्राप्नोती'ति शेषः। तस्मात्तत्पक्षेऽपि वाक्यभेदेन व्याख्याय 'गिरिवेडि'त्येव। अन्यथा आरम्भ-प्रत्याख्यानयोः फलभेदः स्यादिति भावः।

दिगिति। दिगर्थस्तु संयोगाऽन्तलोप-संयोगादिलोप-विषयकतयाऽऽरब्धस्य 'यणः प्रतिषेध' इति वचनस्य संयोगाऽन्तलोपविषयकस्य 'झलो लोपादि'ति प्रत्याख्यानम्। अत एव

[१] 'झलादिग्रहणस्य' इति क. ख. पाठः।

**इति पक्ष इति। पक्षद्वयस्याऽपि भाष्ये स्थितत्वादिति भावः।**

बृहच्छब्दरत्नः

कल्पनस्याऽन्याय्यत्वेन, चरमपक्षाऽनुरोधेन, झल्ग्रहणाऽपकर्षस्य व्याख्यातुमशक्यत्वेन च, अन्तरङ्गबहिरङ्गयोरनेकत्वेन च तन्निर्णयाऽर्थमन्याऽपेक्षायाः सत्त्वाच्च। चरमपक्षप्रवृत्तौ, अप्रवृत्तौ च झल्ग्रहणाऽपकर्षपक्षप्रवृत्त्यप्रवृत्त्योर्नियामकत्वाऽऽवश्यकत्वे 'तद्धेतोरेवाऽस्तु किन्तेने'ति न्यायेन झल्ग्रहणाऽपकर्षस्यैव [1]लक्ष्यसंस्कारकत्वकल्पनात्, चरमपक्षस्य प्राबल्येऽपि क्षत्यभावात्।

किञ्च 'दध्यत्रे'त्यादौ यणो द्वित्वाऽर्थं यथोद्देशपक्षस्याऽऽवश्यकत्वेन तत्पक्षे [2]तस्योक्तिसम्भवाऽभावाद् गृहीतपक्षविरोधेनाऽप्राबल्यम्। 'देविष्यती'त्यादिसिद्ध्युपायस्य 'स्यतासी लृलुटोरि'त्यादिसूत्रस्थभाष्यकैय्यटाद्युक्तस्य सर्वप्रयोगे लृलुटोरर्थवत्त्वेऽपि, सूत्रे निमित्तकोटावनाश्रयणेन सर्वप्रयोगे पदद्वयस्याऽभावात्सूत्रे निमित्तकोटावभावाच्च यणादेशस्यैवाऽन्तरङ्गताऽऽपत्तौ भाष्योदाहृतलक्ष्यस्याऽसङ्गतताऽऽपत्तेश्च। पाक्षिकत्वेनाऽयुक्तत्वाच्च।

एतेन 'उरण् रपर' इति सूत्रे अण्ग्रहणप्रयोजनकथनाऽवसरे 'आनङोऽपि रपरत्वं स्यादि'त्यर्थकं 'होतापोताराव'ति भाष्यमुपादाय 'रेफस्य संयोगान्तलोपे कृते तस्याऽसिद्धत्वान्नलोपो न स्यादि'ति कैय्यटोक्तमपास्तम्। पक्षत्रयेऽपि संयोगान्तलोपस्य दुर्लभत्वात्। उत्तरपदनिमित्तकस्य आनङः संयोगान्तलोपे अन्तरङ्गे असिद्धत्वात्, रेफनकारश्रवणदोषस्यैव भाष्याऽभिप्रेतत्वाच्च। 'द्विषन्तप' इत्यादौ पक्षद्वये संयोगान्तलोपस्य सत्त्वेन यथोद्देशपक्षाऽऽश्रयणान्नाऽसिद्धत्वम्। अत एव 'न विभक्तौ तुस्मा' इति सूत्रस्थस्य 'दानीमि'त्यत्र लुप्तनिर्दिष्टो यकार' इति भाष्यस्य संयोगान्तलोपपरतया व्याख्यानमपास्तम्। 'थमुप्रत्ययस्योदित्करणेन 'न विभक्तौ' इत्यस्याऽनित्यत्वे ज्ञापितेऽपि, प्राग्दिशीयेष्वप्रवृत्तेरज्ञापितत्वात्। 'हलन्त्यमिती'त्संज्ञा, 'तस्य लोप' इति लोप' इत्यर्थपरतया भाष्यस्य व्याख्यातुं शक्यत्वाच्च।

एतेन 'अभ्र वभ्र चर गत्यर्थाः' इत्यत्र 'वभ्र'धातोर्यङ्लुकि, लङि, तिप्-सिपो-'र्हल्ङ्यादि'लोपे, संयोगान्तलोपे च 'झलां जशोऽन्ते' इति जश्त्वं, चर्त्वं, 'अवावप्'

लघुशब्दरत्नः

तत्र 'संयोगान्तलोपो झलो लोप' इति भाष्ये व्याख्या कृता। 'बहिरङ्गलक्षणत्वाद्वा' इत्यस्य तु 'बहिरङ्गो यणादेशोऽन्तरङ्गो लोप' इति व्याख्यानेन, वार्त्तिकस्वारस्येन चेदृशानां लक्ष्याणामनभिधानमेव। वस्तुतस्तृतीयं वार्त्तिकं विसर्जनीयसूत्रभाष्ये कार्यकालपक्षमुपक्रम्य 'अयुक्तोऽयं परिहारो[3] बहिरङ्गलक्षणत्वाद्वे'त्यनेन दूषितमित्यलम्।

[1] 'लक्ष्यसंस्कारकत्वे' इति क. ख. पाठः।

[2] 'तस्योक्तिसम्भवात्' इति ख. पाठः।

[3] 'न वा (झलो लोपात्,) बहिरङ्गलक्षणत्वाद्वा' इति मुद्रितेषु पाठः।

चत्वारि रूपाणीति। यत्तु वदन्ति–धकार-यकारोभयद्वित्वे, उभयोः पुनर्द्वित्वे, लोपविकल्पे, अन्यतरद्वित्वे, अनुभयद्वित्वे च[1] नव रूपाणि। तथा हि—एकधं त्रिधा,–एकयं, द्वियं, त्रियं च। एवं द्विधं, त्रिधं च

बृहच्छब्दरत्नः

'अवावबि'त्यादिमाधवोक्तमपास्तम्। पक्षद्वयैकरूप्याऽर्थं 'पूर्वं पूर्वमन्तरङ्गमि'त्यस्याऽऽश्रयणेन चरमपक्षेऽपि संयोगान्तलोपस्य दुर्लभत्वात्।

वस्तुतस्तु 'पूर्वं पूर्वमन्तरङ्गमि'त्यस्याऽनाश्रयणे चरमपक्षेण संयोगान्तलोपप्रतिबन्धस्य कर्त्तुमशक्यत्वेऽपि, झल्ग्रहणाऽपकर्षपक्षेण तत्प्रतिबन्धो दुर्वारः। न च चरमपक्षे तदभाव एवेति वाच्यम्। मानाऽभावात्। झल्ग्रहणाऽपकर्षपक्षे तदभावस्याऽप्यापत्तौ, असिद्धपरिभाषाया अभावे, 'पचावेदमि'त्याद्यसिद्ध्यापत्तेश्च। यथोद्देशपक्षाऽर्थं झल्ग्रहणाऽपकर्षपक्षस्याऽप्यावश्यकत्वाच्च। 'सुद्ध्युपास्य' इत्यादौ तु कार्यकालपक्षे उभयोः प्रवृत्तिः। न हि एतावता अन्यतरेणाऽन्यतरस्य प्रत्याख्यानम्। न चैवं 'विविडि'त्यादौ झल्ग्रहणाऽपकर्षण संयोगान्तलोपप्रतिबन्धस्य कर्त्तुमशक्यत्वेऽपि, अल्लोपस्याऽसिद्धत्वेन चरमपक्षेण तत्प्रतिबन्धो दुर्वार इति वाच्यम्। 'अल्पाऽपेक्षमन्तरङ्गम्' 'अन्तःकार्यमन्तरङ्गमि'ति पक्षयोः, कार्यकाल-यथोद्देशपक्षयोश्च परस्परविरुद्धयोरन्यतरपक्षाऽऽश्रयणस्याऽऽवश्यकत्वे अन्यपक्षफलैक्याऽर्थम् 'अल्पाऽपेक्षमन्तरङ्गमि'त्यस्य, यथोद्देशपक्षस्य[2] चाऽऽश्रयणस्य युक्तत्वात्। न ह्येतावता चरमपक्षबाध इत्यग्रे निरूपयिष्यामः।

न चैवं वचनेन प्रतिषेधस्य कर्त्तुमशक्यत्वेऽपि झलग्रहणाऽपकर्षणात्तत्प्रतिबन्धस्य दुर्वारत्वेन 'गिरिवेडि'त्युचितमि'ति प्रागुक्तो ग्रन्थोऽसङ्गतः स्यादिति वाच्यम्। प्राप्तिं विना निषेधस्यैवाऽसम्भवेन यथोद्देशमादाय बहिरङ्गपरिभाषाया अप्रवृत्तिः, झल्ग्रहणाऽपकर्षाऽभावश्चेत्यर्थस्याऽऽवश्यकत्वात्। वचनसाध्याऽर्थस्य अपकर्षादिनैव साधनेन [3]तदुपमर्दनाऽर्थमेव तस्य प्रवृत्तत्वात्। 'यणः प्रतिषेध' इति वार्त्तिके यणूपदं [4]झल्परम्. झल्ग्रहणाऽपकर्षेण प्रत्याख्यानात्।

लघुशब्दरत्नः

उभयद्वित्वेति। द्विधं, द्वियमेकम् (१)। पुनर्द्वित्वे त्रिधं त्रियम् (२)। अन्यतरेति। एकधं, द्वियं, त्रियं च (३–४), एकयं द्विधं, त्रिधं च, (५–६), द्वयोरपि द्वित्वे, अन्यतरस्य पुनर्द्वित्वे द्विधं, त्रियञ्च (७), त्रिधं द्वियं च (८) अनुभयद्वित्वे एकधम्, एकयम् (९)। लोप-

[1] 'अनुभयद्वित्वे' इति पाठो मुद्रितेषु त्रुटितः।
[2] 'यथोद्देशपक्षस्य वा' इति ख. पाठः।
[3] 'तदुपमर्दार्थमेव' इति क. ख. पाठः।
[4] 'अझल्परम्' इति ख. पाठः।

त्रिधेति। न चाऽन्तरङ्गे द्वित्वे बहिरङ्गस्य यणोऽसिद्धत्वम्। 'त्रैपादिके-ऽन्तरङ्गे बहिरङ्गपरिभाषा न प्रवर्त्तते' इति विसर्जनीयसूत्रे भाष्य-कैयटयो-र्व्यवस्थापितत्वादिति।

अत्रेदं वक्तव्यम्—पुनर्द्वित्वमशुद्धम्, 'एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्त्तते' इति एकः पूर्वपरयोः (६।१।८४) इति सूत्रे भाष्ये सिद्धान्तितत्वात्।

बृहच्छब्दरत्नः

एवञ्च पक्षत्रयेऽपि संयोगान्तलोपो न। [1]अयञ्चाऽर्थो 'मान्तमेवे'त्येवकारेण सूचितः। 'गिरिवेडि'त्युचितमि'ति तु परसन्तोषमात्रम्। उत्तरग्रन्थस्य तदुपमर्द-नाऽर्थमेव प्रवृत्तत्वात्। 'मो नो धातोरि'ति तु न प्रवर्त्तते इत्यग्रे निरूपयिष्यामः। इदमेव सकलमभिसन्धाय 'न वा झलो लोपादि'[2]त्यत्राऽपूर्ववचनाऽभावबोधको नञुल्लेखः,[3] उत्तरत्र तदनुल्लेखश्चेति सुधीभिर्विभावनीयम्।

सिद्धान्तितत्वादिति। तत्र हि 'एकग्रहणं न कर्त्तव्यमि'ति सिद्धान्तितम्। नन्वेतदयुक्तम्, अनेकस्थानिकत्वेन स्थानिसमसङ्ख्याकाऽऽदेशकल्पनाऽऽपत्तेः। अत एव 'रदाभ्यां निष्ठा तो नः' (इति सूत्रे), 'उभौ साऽऽभ्यासस्ये'ति सूत्रे च आदेशद्वयलाभः। न च 'साऽभ्यासस्ये'त्युक्तया [4]स्थानिद्वयमात्रलाभे 'उभौ' इत्यादेश-द्वयाऽर्थमेव भविष्यतीति भाष्योक्तरीत्या निर्वाह इति वाच्यम्। 'साऽभ्यासस्ये'त्ये-वोक्तौ [5]प्रधानाऽन्वये 'अभ्याससहितनकारस्ये'त्यर्थे रमागमेन रोपधयोरिव

लघुशब्दरत्नः

विकल्पा-ऽन्यतरद्वित्वयोः समफलता। सम्भवमात्रेण तु तदुक्तिः।

एकः पूर्वपरयोरिति। तत्र हि यथा–'अनयोः पूलयोः कटं कुरु' इत्यादौ एकवाक्य-तयैव बोधात् एकत्वविवक्षणेनोभयसम्बन्ध्येककटकरणप्रतीतिः, तथा 'आदचि पूर्वपरयो-र्गुण' इत्यादावपि द्वन्द्वनिर्देशात्, विधेयगतसङ्ख्याविवक्षणाच्चोभयोः स्थाने एक एवाऽऽदेशो भविष्यतीत्येकग्रहणं प्रत्याख्याय, शङ्कितम्–शास्त्राऽधिकारिणः पुरुषान् प्रति प्रवृत्तं संस्कारकं तत्तच्छास्त्रं प्रतिपुरुषमेकवाक्यतया सकृदेवाऽर्थबोधकं, यथा आधानेनाऽग्नीन् संस्कुर्यादित्यर्थकं 'वसन्ते ब्राह्मणोऽग्नीनादधीते'ति वाक्यं प्रतिब्राह्मणं सकृदेवाऽर्थबोधकं, सकृदेव स्वविषये प्रवर्तकं च, अत एव पुनः पुनर्नाऽऽधानादिसंस्कारः, तथा व्याकरणशास्त्रस्य 'अवर्णदचि पूर्व-

[1] 'अयमेवाऽर्थं' इति वा पाठः।
[2] 'इत्यत्र पूर्वम्' इति क. पाठः।
[3] 'नञ उल्लेखः' इति क. पाठः।
[4] 'स्थानिद्वयमा(त्र ?)लाभे' इति क. ख. पाठः।
[5] 'प्राधानान्वये' इति क. ख. पाठः।

बृहच्छब्दरत्नः

अभ्यासस्य निवृत्त्यापत्तेः। विशिष्टस्य स्थानित्वेन [1]स्थानिद्वयाऽलाभाच्च। अभ्यासे पूर्वसूत्रेणैव सिद्धावभ्यासोत्तरखण्डे एव पूर्वसूत्राऽप्रवृत्तौ तक्रकौण्डिन्यन्यायेन णत्वाऽभावाऽऽपत्तेश्च। [2]अभ्यासेऽपि णद्वयाऽऽपत्तेश्च। मन्मते तु स्थानिसमसङ्ख्याकाऽऽदेशकल्पनेन न काचिद्दोषशङ्का। विभावितश्चेदमष्टमे भाष्य-कैय्यटयोः।

न चैवम् 'उभावि'त्यनेनैव उभयोः स्थानित्वे सिद्धे 'साऽभ्यासस्ये'तिपदवैयर्थ्यमिति वाच्यम्। 'प्राणिणिषती'त्यादेः 'पूर्वत्राऽसिद्धमद्विर्वचने' इति न्यायेन पूर्वसूत्रेण णत्वे, द्वित्वे, रूपस्य सिद्धत्वेन इदं सूत्रमुक्तन्यायाऽनित्यत्वज्ञापनाऽर्थमि'ति सिद्धान्तहानाऽऽपत्तेः। वचनबाधे मानाऽभावेन 'प्राग अनिती'त्यादौ यथा कथञ्चिदनितित्वं प्रत्युपसर्गत्वमादाय वचनस्य चारितार्थ्यात्। एवञ्च 'उभौ' इत्यनेनोभयोः स्थानित्वे, त्वदुक्तरीत्या एकणकारेण रमागमन्यायेनोभयोर्निवृत्तौ, उभयत्र पर्यायेण णकाराऽऽपत्तिः। [3]तस्मादेकाऽऽदेशसम्पादनाऽर्थम् एकग्रहणमावश्यकम्। 'साम आकमि'त्यत्राऽपि सामामोः [4]स्थानित्वम्। 'इरयो रे'

---

लघुशब्दरत्नः

परयोर्गुणो भवति, गुणवान् शब्दश्च साधुर्भवति, स च प्रयोक्तव्य' इत्येतावत्पर्यन्तं व्यापारात्, तत्संस्कृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्राऽर्थस्य करणात्, मालेन्द्रादिप्रयोगो न स्यादतस्तत्तल्लक्ष्यविषयवाक्योपप्लवेन वाक्यभेदोऽवश्यं वाच्यः, तद्वत्पूर्वपरविषयेऽपि स्यादिति, तत्र एकग्रहणमावश्यकमिति। तत्र 'गुणो भवती'त्याद्यंशो लक्ष्यसंस्कारफलक एव, यथा आधानम् अग्निसंस्कारकम्। शास्त्रतात्पर्यविषयप्रयोगविधिश्च पुरुषसंस्कारक एवेति तदाशयः।

ततः सिद्धान्तितम्—'यथा नित्य-नैमित्तिक-काम्य-विधीनां तदकरणजन्यप्रत्यवायपरिहाराय, फलाय च वाक्यभेदेन तत्तद्विषयकशास्त्रोपप्लवात् [5]पुनः पुनः प्रवर्त्तकत्वम्, तथा ममाऽप्यसाधुप्रयोगे प्रत्यवायश्रवणान्नित्यसमत्वं प्रयोगविधेः। 'एकः शब्दः सम्यक् ज्ञातः, शास्त्राऽन्वितः, सुष्ठु प्रयुक्तः,[6] स्वर्गे लोके कामधुग्भवती'त्यनेन काम्यत्वं चेति, तत्तद्विषयाऽनन्तवाक्योपप्लवेन भवत्येव मालेन्द्रादिप्रयोग' इति। एवं प्रयोगविध्यंशस्य नित्य-काम्यत्वव्यवस्थापनेन गुणविध्यंशस्य शुद्धसंस्काराऽर्थत्वमेवोक्तम्। एवं च तस्याऽऽधानादिवदेवाऽग्निस्थानीयलक्ष्येषु सर्वेषु प्रवृत्तावपि, एकाऽग्नाविवैकलक्ष्ये नाऽऽवृत्तिरिति, पूर्वपरयोनाऽऽदेशद्वयप्रसक्तिरिति तत्तात्पर्यम्। एवं च स्पष्टमेव पूर्वपक्ष-सिद्धान्तयोरयं न्यायः संस्कारकविधिविषये सिद्धान्तित इति भावः। संप्रसारणाच्च (६।१।१०८) इति सूत्रे भाष्येऽपि स्फुटोऽयम्।

---

[1] 'स्थानिद्वयोलाभाच्च' इति क. ख. पाठः।
[2] 'अभ्यासेऽपि णद्वयापत्तेश्च' इति क. नास्ति।
[3] 'तस्मादनेकादेश' इति क. ख. पाठः।
[4] 'स्थानित्वेन' इति क. ख. पाठः।
[5] 'पुनःपुनः' इति घ. पाठः। 'पुनः प्रवर्त्तकत्वम्' इति मुद्रितेषु, क. पु. च पाठः।
[6] 'सुप्रयुक्तः' इति क. पाठः।

बृहच्छब्दरत्नः

इति च क्रमेणाऽनेकादेशविधानमस्त्येव। युगपदादेशद्वयं नाऽऽपाद्यम्, युगपत्स्थानिद्वयस्याऽलाभात्। तथा च भाष्यग्रन्थोऽनुपपन्न इति चेत्।

अत्रोच्यते—'एक'ग्रहणाऽभावे अनेकादेशप्राप्तेर्निरूपयितुमशक्यत्वेन एकग्रहणवैयर्थ्याऽनुद्धारः। न हि 'अवर्णादचि पूर्वपरयोः स्थाने गुणो भवती'त्युक्ते अनेकाऽऽदेशप्रसङ्गः। उपात्तैकवचनस्य त्यागे मानाऽभावात्। विधेयत्वेन प्राधान्यात् तद्गतसङ्ख्याया विवक्षितत्वाच्च। कपिञ्जलाऽधिकरणन्यायेन परिच्छेदकसङ्ख्याऽपेक्षायां प्रथमोपस्थितत्वेनैकत्वसङ्ख्याया ग्रहीतुमुचितत्वाच्च। गुणाऽनुरोधेन प्रधानाऽऽवृत्तेरयुक्तत्वाच्च। 'अनयोर्मृत्पिण्डयोर्घटं कुरु' इत्यादौ लोके तथा दर्शनाच्च। [1]तस्मादनेकन्यायबाधकल्पनाऽपेक्षया एकग्रहणं प्रत्याख्याय 'उभौ साऽभ्यासस्ये'त्यादौ गत्यन्तरकल्पनमेवोचितम्।

स्यादेतत्—'एत्येधत्यूठ्स्वि'त्यादौ 'अवर्णादेतौ वृद्धिः' 'अवर्णादेधतौ वृद्धिरि'त्यादिवाक्यानि भिन्नानि। न हि एतावता उक्तन्यायबाध इति तावन्निर्विवादम्। एवम् 'आद्गुण' इत्यादावपि 'अवर्णादचि पूर्वस्य गुणः' 'अवर्णादचि परस्य गुण' इत्यादिवाक्यभेदः।

यद्यपि पूर्व-परयोरेकस्मिँल्लक्ष्ये सम्भवस्तथापि ईदृशविषये वाक्यभेद इत्येकग्रहणेन ज्ञाप्यते। अत एव 'रदाभ्यामि'त्यत्र एकवाक्यतया व्याख्यातुं शक्यत्वेऽपि, एकस्मिँल्लक्ष्ये तकार-दकारयोः सत्त्वेऽपि, वाक्यभेदकल्पना। एवम् 'उभौ साभ्यासस्ये'ति वाक्यात् 'अनितेरभ्यासनकारस्य णकारो भवति,' 'अभ्यासोत्तरखण्डनकारस्य च णकारो भवती'ति लक्ष्यसंस्कारकवाक्यद्वयं कल्प्यते। एवञ्चाऽत्राऽनेकाऽऽदेशनिवर्त्तकमेकग्रहणम् आवश्यकमिति चेन्न। वाक्याऽर्थद्वयेनाऽपि स्थानेऽन्तरतमपरिभाषाया ऐकार्थ्याऽनुरोधेन, विध्योरेकविषयत्वे लाघवाच्च, प्रकरणे सर्ववाक्यानां सार्थक्याऽनुरोधाद् द्विर्वचनबलेन प्रत्येकं स्थानित्वेऽपि, द्वन्द्वसमासेन साहित्यस्याऽवगमात्, अन्यतररहितस्याऽन्यतरस्य स्थानित्वाऽभावाच्च एकसङ्ख्याकाऽऽदेश एवेत्येकग्रहणवैयर्थ्याऽनुद्धारः। अत एव 'भ्रस्जो रोपधयोरि'त्यत्र न दोषः। 'रदाभ्यां निष्ठातो न' इत्यादौ गत्यन्तरकल्पनैवोचिता।

स्यादेतत्–'एक'ग्रहणम् असकृच्छास्त्रप्रवृत्तिं ज्ञापयति। तथा च साम्प्रतिकाऽभावे भूतपूर्वगतेर्न्याय्यत्वेन, भौतपूर्विकं निमित्तसद्भावं ग्रहीत्वा पूर्वं प्रवृत्तावपि, पुनः प्रवृत्त्या आदेशाऽन्तरप्राप्तेः सत्त्वेन, तद्व्यावृत्त्या एकग्रहणसार्थक्यं स्पष्टम्। एवञ्च 'भिन्नमि'त्यादौ 'रदाभ्यामि'ति सूत्रेण एकनकारनिष्पत्तौ, भौतपूर्विकं निमित्तसद्भावं गृहीत्वा द्वितीयनकारनिष्पत्तिः। एवम् 'उभौ साभ्यासस्ये'त्यत्राऽप्यूह्यम्।

किञ्चैवं सति 'उभौ'ग्रहणं न कर्त्तव्यं भवति, 'साऽभ्यासस्ये'त्युक्त्यैव पुनः प्रवृत्त्येष्टसिद्धेः। न च तक्रकौण्डिन्यन्यायेनाऽभ्यासस्य न स्यादिति वाच्यम्।

[1] 'तस्मादनेकन्यायाऽबाध' इति क. ख. पाठः।

**अन्यथा द्वित्वानामानन्त्याऽऽपत्तेः ।**

बृहच्छब्दरत्नः

स्वस्य बाधाऽयोगात्, एकग्रहणसामर्थ्येन न्यायस्य बाधाच्चेति चेन्न । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः । अत एव रमागमद्वयं न । भौतपूर्विकनिमित्तसद्भावग्रहणवत्, एकहल्व्यवहिताऽन्त्यात्परत्वग्रहणस्याऽऽपादयितुं शक्यत्वात् । 'अनचि चे'त्यादीनां पुनरप्रवृत्त्या फलस्य स्पष्टत्वाच्च । मानन्तु 'रदाभ्यामि'त्यत्र 'पूर्वस्य च द' इत्यत्र वाक्यभेदमङ्गीकृत्य 'पूर्वत्राऽसिद्धमि'ति सूत्रेण '[1]पूर्वं तकारस्य नकारः, तत उत्तरवाक्येन दकारस्ये'ति व्याख्याय, 'उभौ साभ्यासस्ये'त्यत्र विनिगमनाविरहेण तन्त्रादिना 'उभौ'ग्रहणं स्थान्यनेकत्वा-ऽऽदेशाऽनेकत्वपरतया व्याख्याय च, एकग्रहणं न कर्त्तव्यमि'ति वदन्भाष्यकर एवेति पितामहचरणानामाशय इति वयं विभावयामः ।

एतेन 'आधानादीनां यथा सकृदनुष्ठानं, तथा गुणादीनामेकस्मिन् प्रयोगे अनुष्ठानं स्यात्, तथा च प्रतिपुरुषमेक एव सुशब्दः स्यात्, अन्ये अपशब्दाः स्युरि'त्याशङ्क्य, ज्योतिष्टोमादिदृष्टान्तेन 'प्रतियोगं प्रवृत्तिरि'ति सिद्धान्तितम् एकः 'पूर्वपरयोरि'ति सूत्रे भाष्ये । 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'त्यस्य तु न गन्धलेशः[2] । किञ्च आधानादिशास्त्रदृष्टान्तेन गुणादीनां प्रतिप्रयोगं प्रवृत्त्यभावशङ्का चेत्, 'अनचि चे'त्यादीनामेकस्मिन्नेव लक्ष्ये सकृत्प्रवृत्तौ चारितार्थ्येन, पुनः प्रवृत्तिर्न स्यादित्यपि शङ्काऽन्तरं बोध्यम् । परिहारस्तु उभयोरपि समान' इत्यपास्तम् । गौरवाच्च ।

किञ्च प्रतिपुरुषमाधानादिशास्त्रप्रवृत्तेरिव प्रतिप्रयोगं यणादिशास्त्राणां दुर्वारत्वेन शङ्कोत्थानाऽथ मीमांसकमतरीत्या[3] इकारादिव्यक्तीनामेकत्वात् । जातिपक्षेऽपि कस्मिंश्चिल्लक्ष्ये यणादीनां प्रवृत्तौ [3]इत्वादिव्यक्तौ [4]इत्वादिजातीनां संस्कृतत्वान्न पुनर्लक्ष्याऽन्तरे प्रवृत्तिरिति शङ्काकर्त्तुराशयः कल्प्यः । तस्मिंश्च कल्पिते सिद्ध एव न्यायः । 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो, ज्ञेयः' 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवती'त्यादिश्रुतिभिर्व्याकरणस्य [5]नित्यत्वादीनां प्रतिपादनेन, सन्ध्यावन्दन-ज्योतिष्टोमादीनामिव एकत्वे मानाऽभावात्, विनिगमकाऽभावाच्च सर्वत्र प्रवृत्तिरिति सिद्धान्तकर्त्तुराशय इत्यन्यदेतत् ।

अन्यथा । भाष्योक्तप्रत्याख्यानमङ्गीकृत्य असकृच्छास्त्रप्रवृत्तौ ज्ञापकतया वर्णने ।

द्वित्वानामानन्त्यापत्तेरिति । द्वित्वविधीनामानन्त्यापत्तेरित्यर्थः । अयम्भावः— 'अनचि चे'ति वाक्यार्थनिष्पत्त्यनन्तरं लक्ष्यविचारे 'दध्यत्र', 'सुद्ध्युपास्यः', 'मध्वरिरि'त्यादीनि विनिगमकाऽभावात् सर्वाण्येकधकारकाण्येवोपस्थितानि,

---

[1] 'पूर्वतकारस्य' इति ख. पाठः ।

[2] 'इत्यस्य तु न गन्धले । किञ्च' इति क. ख. पाठः ।

[3] 'इकारादिविभक्तौ एकारादिव्यक्तीनाम्' इति क. पाठः ।

[4] 'इत्त्वादिप्रवृत्तौ' इति क. ख. पाठः ।

[5] 'अनित्यत्वादीनाम्' इति ख. पाठः ।

**न च झरो झरि ( ८।४।६५ ) इति, हलो यमाम् ( ८।४।६४ ) इति च लोपेन निर्वाहः । लोपस्य वैकल्पिकत्वात् । कथमन्यथा 'त्रिधं, त्रियं चे'ति भवदुक्तिः सङ्गच्छेत[1] ।**

---

**बृहच्छब्दरत्नः**

न द्व्यादिधकारयुक्तानि, तेषामुक्तवाक्याऽर्थबोधात्पूर्वं [2]मानाऽन्तरेणाऽसिद्धेः । पुनः प्रवृत्तौ बीजाऽभावाच्च । गौरवाच्च । मानाऽन्तरसिद्धद्व्यादिधकारघटितलक्ष्यस्य तु एकधकारघटित'सुध्युपास्य'इत्याद्युपस्थितिसमकालिकोपस्थितिकत्वेन तत्समकक्षतया, 'अनचि चे'त्यादिसूत्राणि प्रवर्त्तन्ते एव ।

एतेन 'जातिपक्षे दोषेऽपि व्यक्तिपक्षे न दोष' इत्यपास्तम् । तेषां युगपत्प्रवृत्तेरेव युक्तत्वात् । अस्यामवस्थायां तादृशलक्ष्याऽभावेन तद्विषयलक्षणकल्पने मानाऽभावाच्च । 'लक्ष्यत्वे तद्विषयकवाक्यकल्पना, क्लृप्ते वाक्ये च लक्ष्यत्वमि'त्यन्योन्याऽऽश्रयाच्च । अत एव 'उदवोढामि'त्यादौ न वृद्धिः । अत एव 'तत्प्रत्ययस्य चे'ति सूत्रं चरिताऽर्थम् । अन्यथा तद्विषयकवचनसामर्थ्येन अन्तर्भूततद्धितनिमित्तवृद्धेरिव, बहिर्भूततद्धितनिमित्तवृद्धेरपि 'प्रवाहणस्य ढे' इत्यनेन बाधितुं शक्यत्वेन वैयर्थ्यं स्पष्टमेव । न चैवं 'शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः' इत्यादिवैयर्थ्यम्, शाला-शालीयशब्दयोः, पठति-पिपठिषत्योरेककालिकोपस्थित्यभावादिति वाच्यम् । 'छप्रत्ययाऽन्तस्य प्रातिपदिकसञ्ज्ञा भवति' 'सन्नन्तस्य धातुसञ्ज्ञा भवती'त्यादिवाक्यानां सुप्-तिङ्प्रत्ययविधाविव, छप्रत्यय-सन्प्रत्ययविधावपि उपस्थितत्वेन, 'अक्षान्दीव्यती'ति द्वितीयाया इव, छ-सन्प्रत्ययादीनामपि कल्पनाऽऽपत्त्या निषेधस्याऽऽवश्यकत्वात् । [3]यथा चाऽपवादपर्यालोचने सामान्यशास्त्रस्य तदितरविषयता कल्प्यते, तथा निषेधपर्यालोचनया कार्यकालपक्षेऽपि उक्तसञ्ज्ञाविधायकानां छसन्-विधिव्यतिरिक्तविषयता, ईदृशे विषये यथोद्देशपक्षाऽऽश्रयणं च कल्प्यते ।

---

**लघुशब्दरत्नः**

वैकल्पिकत्वादिति । एवञ्च पक्षे द्वित्वानामानन्त्याऽऽपत्त्या परिनिष्ठितत्वाऽभावाऽऽपत्तिः । न च त्वदुक्तरीत्या आनन्त्याऽऽपत्तिप्रयुक्तम् अपरिनिष्ठितत्वम् असकृत्प्रवृत्तौ बाधकमिति लभ्यते, तच्च नाऽत्र, द्वित्वस्य वैकल्पिकत्वेन यावच्छक्ति द्वित्वसहितप्रयोगस्य परिनिष्ठितत्वसम्भवात्, अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकाऽनाक्रान्तत्वं हि परिनिष्ठितत्वमिति वाच्यम् । 'आनन्त्यापत्तेरि'त्यस्य चतुष्पञ्चादि-धकार-यकाराणामापत्त्या, 'त्रिधमि'त्यादि-त्वदुक्तमर्यादाभङ्गाऽऽपत्तेरित्यर्थात् । तद् ध्वनयन् वक्ष्यति—नवत्वोक्तिरसङ्गतैवेति ।

'आनन्त्याऽऽपत्तिरेव तन्न्यायबीजमि'ति तु न युक्तम्, 'उदवोढामि'त्यादौ 'उद् 'अवह्

---

[1] 'सङ्गच्छते' इति मुद्रितेषु पाठः ।
[2] 'मानान्तरेण सिद्धेः' इति क. पाठः ।
[3] 'यथा अपवादपर्यालोचने' इति ख. पाठः ।

बृहच्छब्दरत्नः

अतएव सन्नन्तादन्यप्रत्यये सन् भवत्येव। 'णिजन्तानां धातुसंज्ञे'ति वाक्यानां [1]'लडाद्युत्पत्त्यर्थं कल्प्यमानानां सनादिविधौ प्रवृत्त्यभावे मानाऽभावात्। सञ्ज्ञानां कार्याऽर्थत्वेन कार्यकालपक्षस्यैवाऽभ्यर्हितत्वमिति स्पष्टं प्रगृह्यसञ्ज्ञासूत्रे कैय्यटे। ध्वनितञ्चेदं कौस्तुभे पितामहचरणः। अत एव 'घटत्वत्वमि'त्यत्र [2]त्वप्रत्यययाऽन्तात् त्वप्रत्ययो भवत्येव। 'यूनि लुगि'ति सूत्रस्थ'ग्लौचुकायन' इति प्रयोगे तु यूनि फिनभावो वैकल्पिकत्वादिति बोध्यम्।

यद्वा द्वित्वानामानन्त्यापत्तिरेव दूषणमनेन ग्रन्थेनोच्यते। न चेष्टाऽऽपत्तिः। परिनिष्ठितत्वाऽभावाऽऽपत्तेः। लाघवात्प्रथमप्रवृत्तावेव विश्रान्तेर्युक्तत्वात्।

यत्त्वाहुः-आनन्त्याऽऽपत्तिरुक्तन्याये बीजं, न च सा प्रकृतेऽस्ति, द्वित्वस्य वैकल्पिकत्वात्, यावच्छक्ति द्वित्वसहितप्रयोगस्य परिनिष्ठितत्वे, तेनैव शास्त्रस्य कृताऽर्थत्वात्। अत्र च मूलम् 'इरयो रे' इतीटि कृतेऽपि रेभावाऽर्थं द्विवचनमिति।

अत्रेदं वक्तव्यम्-'आनन्त्याऽऽपत्तिर्बीजमि'ति तावन्न युक्तं, 'काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते काशकृत्स्ना ब्राह्मणी'त्यत्र 'अण्योऽकार'इतिव्याख्यानेन द्वितीयस्याऽणो लुप्तत्वेन प्राप्त्यभावेऽपि, प्रथमस्याऽणः स्त्रियामुत्पन्नत्वेन प्राप्तो ङीप् उक्तन्यायेन ने'ति भाष्याद्युक्तं विरुध्येत। न ह्यत्राऽऽनन्त्यापत्तिः। ङीपि सति अदन्तत्वाऽभावेन, एकेन ङीपा[3] स्त्रीत्वस्य बोधितत्वाच्च, पुनरप्रवृत्तेः।

अपि च 'सहिवहोरोदवर्णस्ये'त्यत्र [4]ढत्वलोपादीनां निमित्तत्वेन आश्रयणादसिद्धत्वाऽभावेन, परत्वात् ढत्वलोपादिप्रवृत्तौ 'वढ' इति स्थितौ, परत्वादोत्वे, सम्प्रसारणपूर्वत्वे च, उक्तन्यायेन ओत्त्वस्य पुनरप्रवृत्तौ 'अवर्णग्रहणं न कर्त्तव्यमि'ति भाष्योक्तं विरुध्येत। आनन्त्याऽऽपत्तेरभावात्।

---

लघुशब्दरत्नः

स् ताम्' इत्यवस्थायां सिज्लोपादेरसिद्धत्वात्सिचि वृद्धावोकारे 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनर्वृद्धिर्ने'ति सिचि वृद्धिः (७।२।१) इतिसूत्रस्थभाष्यविरोधात्। आनन्त्यापत्तेस्तत्राऽभावात्।

एतद्भाष्यप्रामाण्येन विकारकृतभेदेन न लक्ष्यभेदाऽऽश्रयणम्। समः सुटि (८।३।५) इति सूत्रं चाऽस्यां मानम्। अन्यथा 'समो वा लोपमि'त्यनेन अन्त्यलोपे, पुनर्द्वित्वेन त्रिसकारस्याऽपि [5]सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। इरयो रे (६।४।७६) इति सूत्रे 'इरयोरि'ति द्विवचनन्तु स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वाऽप्राप्त्या तत्प्राप्तये, इति न तदस्यां मानम्। न च तत्र

---

[1] 'लङाद्युत्पत्त्यर्थम्' इति क. ख. पाठः।

[2] 'त्वप्रत्ययान्तत्वे प्रत्ययो भवत्येव' इति क. ख. पाठ।

[3] 'एकङीपा' इति क. पाठः।

[4] 'ढ्लोपादीनाम्' इति क. पाठः।

[5] 'सिद्धया एतद्वैयर्थ्यम्' इति मुद्रितः पाठः।

बृहच्छब्दरत्नः

ननु सिज्लोपस्याऽसिद्धत्वेन ढलोपनिमित्तढकारपरत्वाऽभावात् ओत्त्वाऽप्रवृत्तौ 'उदवोढामि'त्याद्यसिद्ध्यापत्त्या भाष्यं प्रौढिवादपरमेव। न च वचनसामर्थ्यान्नाऽसिद्धत्वमिति वाच्यम्। 'वोढा' 'सोढे'त्यादौ सिज्लोपाऽविषये वचनस्य चारितार्थ्यादिति चेत्। अत्रोच्यते-'ढ्रलोपे' इत्यत्र लाघवात्तत्पुरुषः। परत्वन्तु 'खरवसानयोरि'तिवद् बुद्धिकृतम्। न चाऽनीयरि, 'चचारे'त्यादौ च[1] दोष इति वाच्यम्। प्रतिपदोक्तपरिभाषया 'रो री'त्यादेरेव ग्रहणात्। वस्तुतस्तु 'ओत्त्वविषये त्रिपादी नाऽसिद्धे'ति सामान्यतो ज्ञाप्यते इति भाष्याऽऽशयः।

एतेन 'पूर्वत्राऽसिद्धीयमद्वित्वे' इत्युक्तत्वेन पूर्वं 'झलां जशि'त्यस्य प्रवृत्त्या, लक्ष्यभेदोऽस्त्येवे'ति मन्दप्रतारणमपास्तम्। अत एव 'उदवोढामि'त्यादौ सिचि वृद्धौ, वर्णग्रहणसामर्थ्येन ओकारे, पुनर्वृद्धिर्ने'ऽत्याकरोक्तं सङ्गच्छते। न च तत्र तपरकरणसामर्थ्याद् वृद्धिर्नेति वाच्यम्। मानाऽभावात्। शब्दाऽऽधिक्यमात्रेणाऽर्थकल्पने वृद्धिसत्ताया एव ज्ञापयितुं युक्तत्वात्। तकारोच्चारणसामर्थ्येन श्रुता-ऽजघन्यप्रमाणोपस्थितसङ्कोचस्याऽन्याय्यत्वेन 'तत्कालस्ये'ति पदोत्तरम् एवकाराऽध्याहारेण शास्त्राऽन्तरप्राप्तसवर्णा-ऽतत्कालव्यावर्त्तनेऽपि, तत्कालाऽसवर्णव्यावर्त्तने मानाऽभावाच्च। 'यत्रैवकारस्ततोऽन्यत्राऽवधारणमि'ति न्यायात्। 'अदेङ् गुण' इत्यादौ तथा क्लृप्तत्वाच्च। पूर्वरूपस्याऽप्यनापत्तौ उक्तभाष्यविरोधाऽऽपत्तेश्च। वर्णग्रहणवत् तपरकरणस्य पञ्चमीसमासज्ञापनेन चारितार्थ्याच्च। असन्देहाऽर्थत्वाच्चेति सुधीभिरूह्यम्। यदप्युक्तम् 'न च सा प्रकृते'त्यादि। तदपि न। 'ग्रहोऽलिटि दीर्घ' इति सूत्रे 'आगमाऽन्तरविधानमि'त्याशङ्क्य, ह्रस्वेट्प्रयुक्तं कार्यं दीर्घेटि चाऽङ्गीकृत्य, प्रतिषिद्धस्य पुनर्विधाने दीर्घत्वाऽभावः—'वुवूर्षते' 'विवरिषते' विवरीषते' इतिभाष्येण सनि इटि प्राप्ते, 'वृतो वे'त्यनेन पक्षे [2]ईटि च प्रसक्ते, 'सनि ग्रहगुहोश्चे'त्यनेनोभयस्मिन्निषिद्धे, 'इट् सनि वे'ति पक्षे इड् विधीयते। ततः पुनरीटो विधानाऽभावाद्दीर्घ ईकारः पक्षे न श्रूयेते'ति कैय्यटग्रन्थेन च सह विरोधाऽऽपत्तेः।

अत एव 'असिद्धवत्'सूत्रे 'युटो यणि सिद्धत्वविधायकवार्त्तिकप्रत्याख्यानाय 'व्यञ्जनात्परस्य एकस्याऽनेकस्योच्चारणे विशेषाऽभावेन युड्विविधानसामर्थ्याद् यण् ने'ति भाष्योक्तं सङ्गच्छते। वैकल्पिके 'लक्ष्ये लक्षणस्य सकृदि'ति न्यायाऽप्रवृत्तौ,

लघुशब्दरत्नः

सहिवहोरोत् (६।३।११२) इति तपरत्वसामर्थ्यान्न वृद्धिरिति वाच्यम्। अशाब्दत्वात्। अतत्कालव्यावृत्तेरेव तेन शब्दमर्यादया लाभात्। एतेन 'सुद्ध्युपास्ये पूर्वं धस्य द्वित्वे, जश्त्वे, लक्ष्यभेदात्पुनर्द्वित्वमि'त्यपास्तम्। पूर्वमकारस्य, इदानीमोकारस्येति लक्ष्यभेदस्य 'उदवोढामि'त्यादावपि सत्त्वेनोक्तभाष्यविरोधात्। विकाराऽन्याऽऽनुपूर्व्यैक्येन लक्ष्यैक्यं तु ममाऽप्यस्त्येवेति दिक्।

[1] चकारः ख. नास्ति।
[2] 'इटि च' इति क. ख. पाठः।

बृहच्छब्दरत्नः

यणि, युट्पक्षे द्वित्वे त्रियकारकं, युडभावे यणि, द्वित्वे, पुनर्द्वित्वे, त्रियकारकमि'ति व्यञ्जनात्परस्यैकस्याऽनेकस्योच्चारणे विशेष इत्यन्यत्र स्वोक्तपक्षाऽन्तरे परिहारस्य कर्त्तुं शक्यत्वेन, पक्षाऽन्तरोल्लेखस्य निर्बीजत्वाऽऽपत्तिः।

अत एव 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरि'तिसूत्रस्थं 'दत्ता च कारीषगन्ध्या च दत्ताकारीषगन्ध्ये', 'दत्ता च गार्ग्यायणी च दत्तागार्ग्यायण्यौ'। 'द्वौ ष्यङौ, द्वौ ष्फौ प्राप्नुत' इति भाष्यम्, 'तत्र 'यस्येति चे'त्यकारलोपे कृते, द्वौ यकारौ श्रूयेयाताम्, 'हलो यमामि'ति विकल्पितो लोपः। यद्यपि 'यणो मय' इति द्विर्वचनेनाऽत्र भाव्यं, तथाऽपि पक्षे यकारत्रयश्रवणप्रसङ्ग' इति कैय्यटश्च सङ्गच्छते।

एतेन 'आष्टमिकद्वित्वस्य स्थाने द्विर्वचनत्वेन व्यक्तिभेद' इत्यपास्तम्। एकस्य विधिविषयतायां लाघवाच्च। अतिरिक्ताऽऽदेशकल्पनस्य गौरवाच्च। आनुपूर्वीभेदस्यैव शब्दभेदे नियामकत्वेन स्थान्यादेशयोर्भेदस्य निरूपयितुमशक्यत्वाच्च। 'द्वे' इत्यस्य सङ्ख्येयपरत्वेन शब्दद्वयस्योच्चारणसाध्यत्वेन, तद्बुद्ध्यारोहस्याऽऽवश्यकत्वे, तदध्याहारेण कारकविभक्तेर्न्याय्यत्वाच्च।

अत एव षाष्ठद्वित्वे 'द्विः प्रयोगो द्विर्वचनमि'ति सिद्धान्तः। न चैवम् आष्टमिकपदद्वित्वेऽपि स्यादिति वाच्यम्। तत्र फलदोषयोः सत्त्वेन गौरवस्याऽङ्गीकारात्। 'सर्वस्य द्वे' इति सूत्रस्थ-'सर्वस्ये'तिपदेन स्थाने द्विर्वचनस्य बोधनेन, भेदकार्यबोधनाच्च। अत एव 'समः सुटी'ति सूत्रं सार्थकम्। त्वदुक्तरीत्या द्वित्वेन द्विसकारस्य, पुनर्द्वित्वेन त्रिसकारस्य च सिद्धत्वात्, सूत्रवैयर्थ्यं स्पष्टमेव।

न चाऽनुनासिकसहितरूपाऽर्थमिति वाच्यम्। 'समो वा लोपमेके' इत्यनेनैव सिद्धत्वात्। एकसकारकरूपाऽर्थं तद्वचनस्याऽऽवश्यकत्वात्।

न च तत्सूत्रकाराऽसंमतमेवेति वाच्यम्। 'अप्रतिषिद्धमनुमतं भवती'तिन्यायविरोधात्। वार्त्तिकादिसंमताऽर्थानां सूत्राऽक्षरैस्तत्र तत्र ध्वनितत्वाच्च। अन्यकृतवचनानामत्राऽऽश्रयणस्य 'ओमाङोश्चे'तिसूत्रस्थभाष्यादौ स्पष्टतयाऽभिधानाच्च।

एतेन 'अन्यदीयवचनमादाय सूत्रकारस्य अन्याऽर्थे तात्पर्य्यं न क्वाऽपि दृष्टमि'ति परास्तम्। 'इको गुणवृद्धी' इति सूत्राऽभावेऽपि 'मृजेर्वृद्धिरि'त्यत्र 'अच' इत्यपकृष्याऽन्त्यस्य व्यावृत्तिरित्युक्त्वा, क्ङिति इग्लक्षणत्वाऽभावेन निषेधाऽप्रवृत्तिमाशङ्क्य'अचि क्ङिती'ति व्याकरणाऽन्तरस्थवचनमाश्रित्य अचि क्ङिति तात्पर्यस्य भाष्ये वर्णितत्वात्। 'छ्वोः शूडि'ति सूत्रे 'क्विब्वची'तिवार्त्तिकमादाय 'अज्झनगमां सनी'त्यनेन क्विपि दीर्घाऽभावस्य भाष्यकृतैव साधितत्वाच्च। 'प्रत्येकं संयोगसञ्ज्ञा'-पक्षे 'वाऽन्यस्य संयोगादि'ति वक्तव्ये 'आदि'ग्रहणसामर्थ्येन द्विवचनाऽन्तेन समासलाभ इत्यर्थपरभाष्यकैय्यटादिग्रन्थविरोधाऽऽपत्तेश्च। 'वस्वेकाजाद्धसामि'ति सूत्रे 'कृतद्वित्वानामेकाचाम्, आकारान्तानाञ्च ग्रहणमि'त्यर्थपरभाष्यादिग्रन्थविरोधाऽऽपत्तेश्च। चिरि-जिर्यादिभ्य आमभावस्य, दरिद्रातेरालोपाऽभावस्य च सूत्रमते सत्त्वात्।

**किञ्चैवं सति सर्वस्य द्वे (८।१।१) इति द्वित्वमपि पुनः पुनः प्रवर्त्तेत। अत एव लिटि धातोः (६।१।८) इति सूत्रे 'अनभ्यास'ग्रहणं भाष्ये प्रत्याख्यातम्। 'सन्नन्तात्, यङन्ताद्वा णिचि, चङि, द्वित्वाऽभावार्थं**

---

**बृहच्छब्दरत्नः**

अत एव घट-घटीग्रहणाल्लिङ्गविशिष्टपरिभाषाऽनित्या, 'मातरि षिच्चे'त्येव सिद्धौ गौरादिषु 'मातामही'शब्दपाठः तत्प्रयुक्तङीष् अनित्य इति बोधनाऽर्थ' इत्याकरग्रन्थश्च सङ्गच्छते। अत एव 'समः सुटी'ति सूत्रं व्यर्थमेवे'त्यपास्तम्। सति प्रयोजने वैयर्थ्यस्याऽनुचितत्वात्। 'विभाषा द्वितीयातृतीयाभ्यामि'त्येतन्न वक्तव्यं भवती'तिवत्, 'समः सुटी'त्येतन्न वक्तव्यं भवती'ति भाष्यकृताऽनुक्तत्वाच्च।

नन्वेवम् [1]'आसन्' इत्यत्र 'जनसने'ति सूत्रस्थभाष्योक्तरीत्या विप्रतिषेधे असिद्धत्वाऽभावेन परत्वात् 'श्नसोरल्लोप' इत्यल्लोपे, ततोऽसिद्धत्वादाटि, 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति न्यायेन लोपाऽप्रवृत्तौ, तपरकरणं व्यर्थमिति चेन्न। अस्मदुक्तन्यायाऽनङ्गीकारेऽपि 'असिद्धवदत्राऽऽभादि'त्यस्य अनित्यत्वाऽऽश्रयणेऽपि, आटोऽप्राप्तौ सार्थक्यस्योपपादयितुमशक्यत्वात्। श्नसाहचर्येण आटो लोपाऽप्राप्तेश्च। चिणो लुङ्न्यायेन पूर्वप्रवृत्तेरसिद्धत्वेन अस्मदुक्तन्यायाऽङ्गीकारेऽपि दोषाऽभावाच्च। 'चित्रायां जाता चित्रे'त्यादौ स्त्रीरूपाऽर्थस्य [2]भिन्नत्वात्, अर्थभेदेन शब्दैक्याऽभावाच्च न दोषशङ्का। 'इरयोरि'ति द्विवचनन्तु लाक्षणिकस्याऽपि 'रे'भावाऽर्थम्। तदेतत्सकलमभिसन्धायाऽऽह—**किञ्चैवं सतीत्यादि।**

**लक्षणस्य** सकृत्प्रवृत्त्यनङ्गीकारे 'लुनीहि लुनीहीत्येवाऽयं लुनाती'त्यादौ क्रियासमभिहारस्येव, वीप्सादीनामप्यनेकधोक्तत्वं[3] स्यादिति भावः। अत एव 'अनभ्यासग्रहणं कुर्वतः सूत्रकृतोऽयं न्यायो नाऽभिमत' इति मन्दप्रतारणमपास्तमि'ति ध्वनयन्नाह—**अत एवेत्यादि।**

**प्रत्याख्यातमिति।** [4]यत्तु—'अनभ्यासग्रहणाऽभावे समुदायैकाज्द्विर्वचनाऽसिद्धिरि'ति। तत्रेदं प्रष्टव्यम्—एकस्मिन्प्रयोगे सर्वाऽवयवानां युगपद् द्विर्वचन-

---

**लघुशब्दरत्नः**

इति द्वित्वमपीति। **एतेन 'आष्टमिकवर्णद्वित्वं, स्थाने द्वित्वमिति लक्ष्यभेदोऽस्ती'ति परास्तम्। पदद्वित्वस्याऽप्यावृत्त्यापत्तेः। [5]वस्तुतस्तत् षाष्ठद्वित्ववन्न स्थाने द्विर्वचनमित्यन्यत्र निरूपितम्। प्रत्याख्यातमिति। 'अनभ्यासप्रतिषेधोऽनर्थकः, छन्दसि वावचनात्, नोनूयते-**

---

[1] असधातोर्लङि बहुवचने रूपमिदम्।
[2] 'अभिन्नत्वात्' इति ख. पाठः।
[3] 'अनेकथोक्तत्वम्' इति क. ख. पाठः।
[4] 'यत्त्वाहुः' इति क. पाठः।
[5] 'वस्तुतस्तु षाष्ठ' इति क. घ. पाठः।

**तदि'ति तु कैयटादिभिरुक्तम्। तस्मादिह त्यज वा पञ्चमादीनि रूपाणि,**

बृहच्छब्दरत्नः

प्रसङ्गः,[१] उत पर्यायेण, उत प्रयोगभेदेन ?। नाऽऽद्यः। प्रमित्यनुष्ठानाऽसम्भवात्। न च एकोऽवयवोऽच् युगपदनेकाऽवयवत्वेन शक्यो निरूपयितुम्। तत्कथं युगपत्प्रमीयताम् ?। अप्रमितं वा कथमनुष्ठीयताम्। न हि एकस्मिन्नेकाऽचि द्विरुच्यमाने [२]तदैवाऽन्यदेकाच् शक्यो द्विर्वक्तुम्। [३]'वाचः क्रमे वृत्तिरि'ति न्यायेनाऽचोऽप्राप्तौ, अवयवाऽन्तरस्यैकाच्त्वाऽभावात्। द्वित्वे कृते तस्य प्रथमत्वाऽभावेनाऽप्राप्तेश्च। एतेन तृतीयोऽपि निरस्तः। प्रथमोपस्थितत्यागे मानाऽभावात्। किञ्च पक्षत्रये समुदायस्याऽप्युपस्थितत्वेन तद्विषयकशास्त्रत्यागे मानाऽभावः। न चाऽवयवानामुपस्थितत्वेन विनिगमनाविरहः। समुदायद्वित्वेन अवयवानामप्यनुग्रहात्। न चाऽन्यनिमित्तद्वित्वे लिण्णिमित्तद्वित्वाऽभावार्थं तदिति वाच्यम्। लोके लक्ष्याऽभावात्। छन्दसि तु वाचनेन द्वित्वस्य वैकल्पिकत्वाच्च।

कैय्यटादिभिरिति। तथा च अत्राऽकर्त्तव्यपरं भाष्यं व्याख्येयमिति भावः।

यत्तु 'उभयोरुत्तराऽर्थत्वेऽनभ्यासग्रहणं प्रत्याख्याय, 'तदेतद्धातुग्रहणं सांन्यासिकं तिष्ठतु तावदि'ति तत्स्थापनपरं भाष्यं विरुध्येत। तस्मात्सन्नन्तात्, यङन्ताद्वा णिचि, चङि, द्वित्वं भवत्येवे'त्याहुः। तन्न। 'पपीः' 'ययीरि'त्यादिसिद्ध्यर्थं 'पूर्वोऽभ्यास' इत्यस्य 'धात्वधिकारीयद्वित्वे' इत्यर्थस्याऽऽवश्यकत्वेन, तल्लाभाऽर्थं 'लिटि धातोरि'ति सूत्रे धातुग्रहणमावश्यकम्, 'अनभ्यासस्ये'ति तु पराऽर्थमेवेति भाष्याऽऽशयात्। यदि 'धातोरि'त्यस्य उत्तरत्राऽपि प्रयोजनं, तर्हि अस्तु। न ह्येतावता 'अनभ्यासस्ये'त्यनेन साम्यम्। समीचीनाऽर्थक'सं'शब्दपूर्वकसूत्र-

लघुशब्दरत्नः

**र्नोनावेत्यादौ न दोषः' इति भाष्यम्। 'एकस्यैकाचो द्वित्वे कृते [४]एकाज्व्यपदेशे हेतोरचो द्विरुक्तत्वात्, अनेन न्यायेनाऽचः पुनः पुनर्द्वित्वाऽप्राप्तौ, अवयवाऽन्तरस्य एकाच्त्वाऽभावेन तदप्रवृत्तौ तद्वचर्थमि'ति च तदाशयः कैय्यटेनोक्तः।**

**कैयटादिभिरिति। अत्राऽरुचिबीजन्तु भाष्यप्रामाण्येन तेषामनभिधानम्। स्तौतिण्योः (८।३।६१) इति सूत्रस्थः 'सोषुप्यतेः सन् सोषुपिषते' इति भाष्यप्रयोगोऽपि छान्दस**

[१] 'द्वित्वप्रसङ्गः' इति ख पाठः।

[२] 'तदेव' इति क. ख. पाठः।

[३] 'वाचः क्रमवृत्तिः' इति 'वाचुःक्रमवृत्तिः' इति च. क. ख. पाठः।

[४] 'एकाज्व्यपदेशहेतोः' इति समस्तोऽपि पाठ' इति भावप्रकाशे।

स्वीकुरु वा[1] रूपाऽऽनन्त्यमिति। नवत्वोक्तिरसङ्गतैव। सकारद्वित्वेनाऽष्टौ,[2] विसर्गद्वित्वेन षोडशेति त्वन्यदेतत्।

**बृहच्छब्दरत्नः**

वाचि 'न्यास'शब्दोच्चारणेनाऽयमर्थो ध्वनितः। स्वीकुर्विति। 'तुष्यतु दुर्जन'-न्यायेनेदमुक्तम्। अत एव एकवचनप्रयोगः। तदेव ध्वनयन्नाह-नवत्वेति।

नन्वेवमपि 'कृञ्चाऽनुप्रयुज्यते लिटी'ति सूत्रे लिड्ग्रहणाऽभावे अन्यपरप्रयोग-माशङ्क्य 'एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति,' तद्यथा-गोषु स्वामी, अश्वेषु च[3]। न भवति-'गोषु चाऽश्वानां स्वामी'त्युक्तत्वेन धकारद्वित्वाऽभावे अन्येषां द्वित्वस्य वक्तुमशक्यत्वेन उक्तसङ्ख्या दुरुपपादैवेति चेत्। अत्रोच्यते-इदञ्चैकनिमित्तकार्ये, एकविधेये च प्रवर्त्तते। तथैव दृष्टान्त-दार्ष्टान्तिकयोर्लाभात्। 'यथाविध्यनुप्रयोगः पूर्वस्मिन्नि'ति सूत्राऽऽरम्भसामर्थ्याच्च। लिटि एकनिमित्तत्वन्तु कालमादाय। अत एव 'सर्वस्य द्वे' इति सूत्रे 'पूर्वं द्विर्वचन-मि'त्यङ्गीकारे 'द्रोग्धा-द्रोग्धे' त्यादौ घत्व-ढत्वयोरापत्तिरि'ति दूषणमभिहितं भाष्य-कारेण। अस्मन्मते तु घत्वस्य वैकल्पिकत्वेन, पक्षे शास्त्राऽन्तरेण ढत्वस्य[4] प्रवृत्त-त्वात्, एकनिमित्तत्वाऽभावाच्च न दोषः। अत एव 'गोषु स्वामिनः स्वामी, गोषु स्वामिनः प्राव्राजीदि'त्यादिप्रयोगा भवन्त्येव।

यत्तु 'इदं सन्देहे प्रवर्त्तते, 'स्वामी अश्वानां, गोषु' इत्युक्ते अधिकरणत्व-स्याऽपि प्रतीतेरि'ति। तन्न। सर्वत्रैव सन्देहस्य सत्त्वेन सप्तम्यन्तप्रयोगस्यैवो-च्छेदाऽऽपत्तेः। सन्देहनिवर्त्तकसामग्र्यां तादृशप्रयोगस्य दुर्वारत्वाच्च। दार्ष्टान्तिके सन्देहाऽभावेन भाष्यविरोधाच्च।

यदपि 'खादिरप्रयोगे प्रमादात् खादिरप्रचारे, तदभावे पालाशस्य न ग्रहणं, किन्तु सजातीयप्रतिनिधेरेव। तदपि न। वचनस्य सत्त्वेन प्रकृते विजातीय-

**लघुशब्दरत्नः**

इत्याहुः। रूपानन्त्यमिति[5]। रूपाऽऽधिक्यमित्यर्थः। तदाह—नवत्वोक्तिरसङ्गतैवेति।

सकारद्वित्वे(ने)ति। अच्परयत्त्वाऽवच्छिन्नं ह्यस्य लक्ष्यम्। तत्रैकस्मिन् धकारे प्रवृत्तावपि, तादृशे सकारे लक्ष्यभेदात्पुनः प्रवृत्तिर्भवत्येवेति भावः। एवं सम्प्रसारणादिविधौ यण्त्वाऽवच्छिन्नमुद्देश्यमिति लक्ष्यभेदाद्यावदुद्देश्यं पुनः प्रवृत्तिर्भवत्येवेति, न न सम्प्रसारणे (६।१।३७) इत्यादेर्वैयर्थ्यमिति बोध्यम्।

[1] 'रूपाणामानन्त्यमि'ति क. पाठः। 'रूपानन्त्यमि'ति मुद्रितः पाठः।
[2] 'सकारद्वित्वेन अष्ट' इति क. पाठः।
[3] 'अश्वेषु चे'त्येव भवति' इति बृहच्छेखरे पाठः।
[4] 'उत्वस्य' इति क. ख. पाठः।
[5] 'रूपाणामानन्त्यमिति' इति क. पाठः।

यदप्युक्तं 'त्रैपादिके अन्तरङ्गे' इत्यादि। तदपि न। 'नार्कुटः' 'नार्पत्यः' इत्यत्र विसर्गवारणाय वृद्धेरसिद्धत्वस्य तत्रैव भाष्ये स्पष्टत्वात्। 'संयोगाऽन्तलोपे यणः प्रतिषेध' इत्यस्य बहिरङ्गत्वेन प्रत्याख्यातत्वात्। स्वयमपि

---

बृहच्छब्दरत्नः

स्याऽभावे मानाऽभात्। 'वैकल्पिकानामादितोऽवधारणमि'ति वचनबोधितदोषस्य प्रतिनिध्यग्रहणे तत्र सत्त्वाच्च। 'पालाशस्य खादिरप्रयोगे अङ्गत्वाऽभावाच्चे'ति स्पष्टं पितामहचरणकृतमीमांसासर्वस्वे।

नन्वेवमपि 'इको यणची'त्यत्राऽन्योन्याऽऽश्रयः, सञ्ज्ञया विधिः, विहितानाञ्च संज्ञे'ति। 'संयोगादेरातो धातोर्यण्वत' इत्यादावनुवाद्यत्वेन यणप्रत्याहारस्यैव ग्रहणं, 'स्त्यानं' 'यानमि'त्यादौ यण्सञ्ज्ञायाः प्रवृत्तावपि तदन्तर्गतयकारस्तत उत्कृष्य इह विधातुमशक्यः। तथा च यण्शब्दादेशाऽऽपत्तौ 'सुद्ध्य् उपास्य' इत्याद्यसिद्धिर्दुष्परिहरैवे'ति। अत्र वदन्ति 'इको यणची'त्यादिभिर्न यकारादयो भाव्यन्ते, शब्दानां नित्यत्वात्। किन्तु सिद्धयकारादीनां साधुत्वमात्रमन्वाख्यायते। एवं 'डः सि धुडि'त्यादौ 'आद्यन्तौ टकितौ' 'तस्मादित्युत्तरस्ये'ति परिभाषाप्रवृत्तौ 'डकारात्परस्य सकारस्याऽऽद्यवयवो धकारः साधुरि'ति वाक्यार्थ' इति।

तन्न। अश्रुतसाधुत्वस्य विधेयत्वकल्पने, श्रुतयणादीनां त्यागे मानाऽभावात्। प्रयोगाऽसमवायिनां साधुत्वस्य विधातुमशक्यत्वेन, [1]धुडादीनां विधेयाऽऽवश्यकत्वेन सर्वत्रैकरूप्यस्योचितत्वाच्च।

न चैवं 'तव्यत्तव्याऽनीयर' इत्यादाविष्टप्रत्ययविभागो न स्यादिति वाच्यम्। असत्यमेव प्रकृतिप्रत्ययविभागं, तदर्थञ्चाऽऽश्रित्य 'रेखागवय'न्यायेन सत्यस्य पदस्य व्युत्पादनात्, तदनुरोधेन प्रत्ययादिविभागकल्पनायाः सत्त्वेनाऽदोषात्। स्पष्टञ्चेदम् 'आद्यन्तौ टकितावि'ति सूत्रे भाष्ये।

एतेन 'अवङादीनामेव विधेयत्वे 'अवङादिकं स्फोटायनादिभिः प्रयुक्तं, तस्मात्प्रयोक्तव्यमि'त्यर्थाऽऽपत्तौ, विकल्पाऽनापत्तिरि'ति परास्तम्। साधुत्वस्याऽपि विधेयत्वे 'स्फोटायनादिभिरवङादीनां साधुत्वमङ्गीकृतं, तस्मात्सर्वैरङ्गीकर्त्तव्यमि'त्यर्थस्याऽप्यापादयितुं शक्यत्वेन, विकल्पाऽनापत्तेस्तुल्यत्वात्।

किञ्चाऽवङादिनिष्ठं साधुत्वं, तत् [2](कैश्चित्) ऋषिभिः स्वीकृतं, न सर्वैरिति स्मृत्यन्तराऽनुसन्धानद्वारेण साधुत्वस्यैव विकल्पाऽऽपत्तिः। स्पष्टञ्चेदं 'नवेति विभा-

---

लघुशब्दरत्नः

तदपि नेति। 'यथोद्देशपक्षे' इत्यनुक्त्वा सामान्येन यदुक्तं तदपि नेत्यर्थः।

---

[1] 'त्वडादीनाम्' इति क. ख. पाठः।

[2] अयं पाठः क. ख. नास्ति।

तथैवाऽनूदितत्वाच्च। तस्मादिह यथोद्देशपक्षो ग्राह्यो, बहिरङ्गपरिभाषाया अप्रवृत्तये। तथा च भाष्ये मयः परस्य यणो द्वित्वे 'दध्ध्यत्रे'त्युदाहृतम्।

न चैवमपि इकोऽसवर्णे (६।१।१२७) इति शाकलेन रूपाऽन्तरमस्त्विति वाच्यम्। समासे तन्निषेधात्। [1]न च नित्यसमासे एव तन्निषेध इति

---

बृहच्छब्दरत्नः

षे'ति सूत्रे भाष्ये। एतेन 'साधुत्वविशिष्टं यणादिकं विधीयते' इत्यपास्तम्। लक्षणायां मानाऽभावाच्च। तस्मात्सत्यगवयाऽनुरोधेन कल्पितरेखागवये पुच्छादिकल्पनावज्ज्ञाप्यसत्य-पदाऽनुरोधेन कल्पिते प्रकृति-प्रत्ययविभागादिकल्पना। एवञ्चाऽवङवङ-भावविशिष्टपदे स्फोटायनोऽवङः स्मर्त्ता, अन्यो नेति स्मृत्यन्तराऽनुसन्धानद्वारेण विकल्पं व्याख्याय, पक्षे तदभावो बोध्यः। अत एव यणादिविधानेऽपि न शब्द-नित्यत्वहानिः। यथा 'चं लिख,' 'चकारस्त्रुटित' इत्यादिव्यवहारात्, लिपावेव शब्दत्वभ्रमवतां, तत्रैव वाचकत्वाऽभिमानजुषां बालानां, भेदग्रहवतां पण्डितानाञ्च ज्ञाप्यज्ञानाऽर्थं पुस्तकमुपयुज्यते, एवं प्रकृति-प्रत्ययादिविभागे पारमार्थिकत्वाऽभिमानवतां बालानां, 'पारमार्थिकपदे न प्रकृत्यादिविभागः, किन्तु तज्ज्ञापनाऽर्थं कल्पितपदे' इति वदतां पण्डितानाञ्च सल्लघूपायेन ज्ञाप्यज्ञापनाऽर्थं प्रकृत्यादिविधान-मावश्यकम्। नचैवं [2]साध्वनुशासनत्वभङ्गः। 'यदिह परिनिष्ठितं, तत्साध्वि'ति-श्रुताऽर्थाऽऽपत्तिकल्प्यवाक्यात्तत्सिद्धेरि'त्यादि वक्ष्यामः। तस्माद् यणूशब्दादेशो दुर्वार एवेति चेत्। अत्राऽऽहुः—समानप्रकारकत्वेनाऽतिप्रसङ्गभङ्गाऽभ्युपगमेन, सामान्यलक्षणप्रत्यासत्त्या वा, सादृश्याऽऽख्यसम्बन्धेन वा[3] संनिहिताऽसंनिहितानां सर्वेषां यकारादीनां यणादिशब्दवाच्यताग्रहणं, 'तस्मादित्युत्तरस्ये'त्यादिनिर्देशै-र्भाविसञ्ज्ञाविज्ञानं चाऽऽश्रयणीयमिति[4] प्राचीनग्रन्थपरिशीलनशालीन एव विभावयन्तु।

तन्निषेधादिति। अत्र च ज्ञापकम् 'इको यणेव क्वचिद्यथा स्यादि'त्यर्थकम् इग्ग्रहणम्। इकि यणादेशस्तु ह्रस्व-दीर्घपदाऽनुवृत्त्यैव सिद्धः। न चैवं प्लुतस्य यणोऽप्राप्तिः। 'अप्लुत'शब्दस्य पर्युदासवृत्त्या ह्रस्व-दीर्घपरत्वेन तत्कार्याऽतिदेशात्।

---

लघुशब्दरत्नः

तस्मादिहेति। 'यणो मय' इत्यत्रेत्यर्थः। 'विसर्जनीयसूत्रभाष्यात्तु कार्यकालपक्षेऽपि त्रिपाद्यां तदप्रवृत्तिरिति लभ्यते। मूलन्तु कैय्यटाऽनुसारेणे'ति परे।

---

[1] 'न च नित्यसमासे निषेध इति वाच्यम्' इति घ. ङ. पाठः।
[2] 'साधुत्वानुशासनत्वभङ्गः' इति ख. पाठः।
[3] 'सम्बन्धेन वाऽसम्बन्धेन वा' इति ख. पाठः।
[4] 'आश्रयणीयः' इति क. ख. पाठः।

वाच्यम्। भाष्ये 'नित्य'ग्रहणस्य प्रत्याख्यातत्वात्। यथोत्तरं मुनीनां प्रामाण्यात्।

नन्विह यणेव दुर्लभः, 'सुधी'शब्दस्य ध्यायतेः सम्प्रसारणेन निष्पन्नत्वेन सम्प्रसारणाच्च (६।१।१०८) इति पूर्वरूपाऽऽपत्तेरिति चेन्न। 'संप्रसारणपूर्वत्वे

---

बृहच्छब्दरत्नः

इदमेवाऽभिसन्धाय 'अप्लुत इत्युक्ते अप्लुत एव विधीयेते'ति मूलकारेणोक्तम्। 'अप्लुत' इत्युक्ते प्लुत एव निषिध्येते'ति वृत्तिकाराद्युक्तमयुक्तम्। अनुकरणनिष्ठम्[1] 'इति'शब्दपरत्वमेव आश्रित्य अप्राप्तनिषेधेनाऽनुकार्ये प्राप्तस्य प्लुतस्य निवारयितुमशक्यत्वात्। किञ्चाऽसमर्थसमासाऽऽपत्तेरित्याहुः।

'इकोऽसवर्णे' इत्यस्य येन नाप्राप्तिन्यायेन यणपवादकत्वे निर्णीते, असवर्णग्रहणसामर्थ्येन असवर्णमात्रे प्रवृत्तिबोधनद्वारा, 'इको यणची'त्यस्य पदान्तेऽपि प्रवृत्त्या, सामर्थ्यात् 'इकोऽसवर्ण' इत्यस्य वैकल्पिकत्वे लब्धे, 'शाकल्य'ग्रहणेन 'इकोऽसवर्णे' इत्यस्य क्वचिदप्रवृत्तिर्ज्ञाप्यते। यद्वा 'प्लुतप्रगृह्या अचि नित्यमि'तिसूत्रस्थ'नित्य'ग्रहणेन शाकलसूत्रस्य व्यवस्थितविभाषाऽऽश्रयणात् क्वचिदप्रवृत्त्या उक्ताऽर्थलाभः। ध्वनितञ्चेदं भाष्ये।

प्रत्याख्यातत्वादिति। तथा च नित्यपदस्याऽवयुत्याऽनुवादत्वं कल्प्यम्। नन्वेवमपि संहिताया अविवक्षितत्वे रूपाऽन्तरं दुर्वारम्। न च 'नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते' इत्युत्तरार्द्धेन नित्यत्वं बोधितमिति वाच्यम्। 'समासे चाऽथ वाक्ये च सा विवक्षामपेक्षते' इत्याकारकोत्तरार्द्धस्यैव सत्त्वात्। तत्र समासे, वाक्ये चाऽनित्यत्वमित्यर्थस्यैव प्राप्तत्वात्। किञ्च 'नित्या समासे' इति पाठे 'समास'ग्रहणं व्यर्थम्, एकपदत्वादेव समासे संहितानित्यत्वसिद्धेः। अत एव 'भूवादय' इति सूत्रे भाष्यकारेणोक्तम् 'अथाऽसंहितया निर्देशः-'भू-आदय' इति भवितव्यमि'ति।

अत्रोच्यते-'समासे चाऽथ वाक्ये चे'ति पाठेऽपि 'समासे' इति पदस्य पूर्वाऽन्वयः। अत एव पाठभेदे फलैक्यम्, 'अथ'शब्दश्च सङ्गच्छते। 'एकपदे' इत्यत्र एकग्रहणसामर्थ्यात्, 'समास'ग्रहणसामर्थ्याच्च अखण्डस्यैव ग्रहणान्न 'समासे' इत्यस्य वैयर्थ्यम्। अखण्डत्वञ्च[2] पदरूप-पूर्वोत्तराऽवयव-रहितत्वम्। अत एव 'राजीयती'त्यादौ पूर्वखण्डस्य पदत्वेऽपि न दोषः। अत एव 'अग्रे-अग्रे सूदम' इत्यादौ संहिता न नित्या। अखण्डपदत्वाऽभावात्। ध्वनितञ्चेदं षष्ठे भाष्य-कैय्यटयोः। धातुसञ्ज्ञासूत्रस्थभाष्यादिकं चिन्त्यमेवेत्यन्यत्र विस्तरः।

---

[1] 'अनुकरणनिष्ठ इति' इति क. ख. पाठः।

[2] 'पदत्वाऽभावावदुत्तरखण्डत्वम्' इति बृहच्छेखरोक्तिः। सैव च शोभना।

समानाऽङ्गग्रहणमि'ति वार्त्तिकोक्तेः। सम्प्रसारणस्थानिकस्याऽतथात्वाच्च[1]। न चैवमपि न भूसुधियोः (६।४।८५) इति यण्निषेधः शङ्क्यः। आङ्गत्वेन प्रत्यये परत एव तस्य प्रवृत्तेः। 'अनन्तरस्ये'ति न्यायेन एरनेकाचः

बृहच्छब्दरत्नः

समानाङ्गेति। 'सम्प्रसारण-निमित्त-प्रत्यय-निमित्ताऽङ्गे अच्-सम्प्रसारणयोः संनिधाने पूर्वरूपमि'त्यर्थः।

सम्प्रसारणेति। सम्प्रसारणशब्दवाच्यो हि द्विविधः। शास्त्रे एकः सम्प्रसारणशब्देनोत्पन्नः, यथा 'ध्यायतेः सम्प्रसारणञ्चे'ति। द्वितीयः पूर्वरूपादि-[2]संशब्दनेनोत्पन्नः। आद्यस्य औपदेशिकं सम्प्रसारणत्वं, द्वितीयस्य आतिदेशिकम्। अत एव 'हल' इति सूत्रं सार्थकम्। अत एव 'यून' इत्यत्र 'यु-उ-अन्-असि'ति-स्थिते अन्तरङ्गत्वात् 'सम्प्रसारणाच्चे'त्येकादेशं बाधित्वा, जातेऽपि सवर्णदीर्घे, न क्षतिः। न च 'अकः सवर्णे' इति कर्त्तव्ये 'असिद्धं बहिरङ्गे'तिपरिभाषया असिद्धत्वं सम्प्रसारणस्येति शङ्क्यम्। 'नाऽजानन्तर्ये' इति निषेधात्। न च शब्दपरविप्रतिषेधेन पूर्वं 'सम्प्रसारणाच्चे'ति पूर्वरूपं शङ्क्यम्। 'अप्रतिपत्तिर्वा, उभयोस्तुल्यत्वात्'। 'नित्यः परयणादेशः परश्चाऽसौ, व्यवस्थया। युगपत्सम्भवो नास्ति, बहिरङ्गेण सिध्यति। अल्लोपात् एकादेशः' इत्यादि 'विप्रतिषेधे परं कार्यम्' 'अचः परस्मिन् पूर्वविधौ' इत्यादिसूत्रस्थ-भाष्य-वार्त्तिकादिविरोधेन लक्ष्यगतपरत्वमादाय विप्रतिषेधसूत्राऽप्रवृत्तेः। प्रकृते तु न कोऽपि, (दोषः[3])। 'सुधी'शब्दे सम्प्रसारण-पूर्वरूपोत्तरं दीर्घस्य जायमानत्वात्। अत एव 'इग्यणः सम्प्रसारणमि'ति सूत्रं चरिताऽर्थम्। तद्धि 'स्थाने' इत्यपकृष्य साक्षाद्यण्स्थानिके-ग्ग्रहणाऽर्थम्। '[4]लसार्वधातुकमनुदात्तम्' इत्यादाविव परम्पराऽऽदेशग्रहणस्येष्टत्वे तु 'ष्यङः सम्प्रसारणं' 'सम्प्रसारणाच्चे'त्यादौ 'यण इक्', 'यण इकश्चे'त्यादिप्रणयनेन सिद्धे[5]

लघुशब्दरत्नः

सम्प्रसारणस्थानिकस्येति। 'स्थाने जातस्ये'ति शेषः। साक्षात्सम्प्रसारणस्थानिक-पूर्वरूपादेः हलः (६।४।२) इत्यारम्भसामर्थ्यादल्विधौ स्थानिवत्त्वाऽङ्गीकारेऽपि पूर्वरूपोत्तरं प्रवृत्तस्य हलः (६।४।२) इति दीर्घस्य स्थानिवद्भावेन सम्प्रसारणत्वे मानाऽभाव इति भावः।

[1] 'अतथात्वादिति के चित्। तन्न। यून इत्यस्याऽसिद्धेः' इति ङ. पाठः। स च तत्रैव मसीपातेन अपसारितश्च।

[2] 'सञ्ज्ञाशब्देनोत्पन्नः' इति क. पाठः।

[3] अयं पाठः क. ख. नास्ति।

[4] 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः' (६।१।१८६) इति पाणिनिसूत्रम्।

[5] 'सिद्धे' इति पाठः क. ख. नास्ति।

(६।४।८२) इति, ओः सुपि (६।४।८३) इति च सूत्रद्वयेन प्राप्तस्यैव निषेधाच्च।

**धात्रंश इति।** अत्र रेफस्य द्वित्वं न, द्वित्वप्रकरणे 'रहाभ्यामि'ति-साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधात्[1]। 'सुध्युपास्यः' इत्यादौ तु

---

**बृहच्छब्दरत्नः**

सूत्रवैयर्थ्यं स्पष्टमेव। न च 'यून' इत्यत्र 'न सम्प्रसारणे' इति निषेधाऽनापत्तिः। 'अचः परस्मिन्नि'ति स्थानिवत्त्वेन सम्प्रसारणपरत्वात्। न चैवमपि व्यवधानान्न प्रवृत्तिरिति वाच्यम्। 'सम्प्रसारणग्रहणसामर्थ्येन व्यवधानेऽपि प्रवृत्तिरि'त्यर्थस्य भाष्याऽऽरूढत्वादिति 'द्विर्वचनेऽची'ति सूत्रे प्रपञ्चयिष्यामः।

द्वित्वप्रकरणे इति। ननु यत्र [2]निमित्तत्वं श्रुतं, तत्र च कार्यित्वस्य बाधोऽस्तु, [3]प्रकरणे कार्यित्वबाधे न किञ्चिन्मानम्। अत एव 'ह्य्यनुभव' इत्यादौ रेफस्य 'अनचि चे'ति द्वित्वं वारयितुम् अर्थाऽधिकाराऽऽश्रयणेन, 'अचो रहाभ्यामि'ति सूत्रे उक्तन्यायेनैव पर्युदस्य, रेफवर्जितयरो यत्त्वेन[4], तस्यैव इहाऽनुवृत्तिरि'त्युक्तं कौस्तुभे।

अत्र ब्रूमः—भाष्ये 'हयवरडि'ति सूत्रे 'मद्र्ह्रदः' 'भद्रह्रद' इत्यत्र द्विर्वचनमाशङ्क्य उक्तन्यायेन' नेमौ रहौ कार्यिणौ' इत्यादिना समाहितम्। तत्र मद्र-भद्रयो-रुल्लेखो व्यर्थः। न च हकारस्याऽचः परत्वसम्पादनाऽर्थम्। नञुल्लेखेनैव सिद्धेः।

किञ्च 'अचो रहाभ्यामि'ति सूत्रे वाक्यद्वयस्य सत्त्वेन, प्रकृते हकारघटित-वाक्येन द्वित्वप्रवृत्तावपि, तद्वाक्ये रेफस्याऽश्रवणेन उक्तन्यायाऽप्रवृत्तौ, भाष्यस्या-ऽलग्नकताऽऽपत्तेः। अपि च 'ऌणि'ति सूत्रे 'उरण् रपर' इत्यत्राऽण् परेण णकारेण, 'कर्त्रर्थमि'त्यादौ रेफद्वयश्रवणाऽर्थमि'त्याशङ्क्य 'हलो यमां यमी'ति लोपो भविष्यती'-

---

**लघुशब्दरत्नः**

द्वित्वं नेति। 'यणो मय' इति प्राप्तं नेत्यर्थः। द्वित्वप्रकरणे इति। तथा च भाष्यम्—'रेफस्याऽनुनासिक-परसवर्ण-द्विर्वचनप्रतिषेधो वक्तव्यः। स्वर्नयति। कुण्डं रथेन। मद्रह्रदः। [5]भद्रह्रदः। न वक्तव्यः। रेफोष्मणां सवर्णा न सन्ति। नैमो रहौ कार्यिणौ। किन्तर्हि ?। निमित्तं द्विर्वचनस्ये'ति। अन्यथा वचनाऽऽरम्भे द्विर्वचनमात्रस्य निषेधेन, फलभेदे प्रत्याख्यानाऽनापत्तेः। साक्षाच्छ्रुतेन=विशेषशब्दबोधितेन। यत्र यत्र द्वित्वनिमित्तत्वं तत्र सर्वत्र वाक्याऽन्तरेण अनचि (८।४।४७) इत्यनेन कार्यित्वप्रसक्तेरनवकाशेन तेन भाष्य-प्रामाण्यात् सामान्यत एव द्वित्वकार्यित्वं बाध्यते इति भावः।

---

[1] 'बाधनात्' इति ङ. पाठः।

[2] 'निमित्तत्वं कार्यित्वस्याऽबाधोऽस्तु' इति ख. नास्ति।

[3] प्रकरणे='यणो मय इत्यादावित्यर्थः।

[4] 'यरः परत्वेन' इति ख. पाठः।

[5] 'भद्रह्रदः' इति वा, 'मद्रह्रद' इति वा क. घ. नास्ति।

**स्थानित्वेन निमित्तत्वमिकः तस्मादित्युत्तरस्य (१।१।६७) इत्यादिनिर्देशाज्ज्ञापकान्न बाध्यते' इति कैयटः। तकारस्य तु[1] द्वित्वं भवत्येवेत्युक्तम्।**

बृहच्छब्दरत्नः

त्युक्त्वा, 'रो री'ति नित्यो लोपो भविष्यती'ति भाष्ये समाहितमिति तावन्निर्विवादम्। इदञ्च 'यणो मयो द्वे वाच्ये' इति द्वित्वाऽप्रवृत्तावेव सङ्गच्छते। तत्प्रवृत्तौ रेफद्वयश्रवणस्य दुर्वारत्वात्। न चेदं भाष्यं द्वित्वाऽभावपक्षमादायैव प्रवृत्तमिति वाच्यम्। द्वित्वपक्षेऽपि रेफत्रयश्रवणप्रसङ्गेन तत्त्यागे बीजाऽनापत्तौ शङ्काग्रन्थे न्यूनताऽऽपत्तेः।

नच द्वित्वे जातेऽपि 'रो री'ति लोपो भविष्यतीति भाष्याऽऽशयः कल्प्यः। न च द्वित्वस्याऽसिद्धत्वम्। 'पूर्वत्राऽसिद्धीयमद्वित्वे' इति निषेधादिति वाच्यम्। 'धात्रंश' इत्यत्र रूपद्वयमि'ति मूलकृत्सिद्धान्तस्य निर्विवादत्वात्। असिद्धत्वस्य दुर्वारत्वाच्च। 'द्वित्वे कर्त्तव्ये असिद्धत्वं ने'त्येवंपरतयैवाऽऽकरे वर्णितत्वात्। न हि प्रकृते द्वित्वं कर्त्तव्यं, किन्तु लोपः। अत एव 'निर्य्यायादि'त्यत्र 'अचो रहाभ्यामि'तिद्वित्वेऽप्येवं न। स्पष्टञ्चेदं संयोगसञ्ज्ञासूत्रे भाष्य-कैय्यटयोः।

अपि च 'रो री'ति लोपाऽभावमादाय शङ्काग्रन्थस्य वर्णयितुं युक्तत्वात्, अन्यथा रपरत्वशङ्काया असङ्गतत्वाऽऽपत्तेः। बाधादिति। यद्यपीह लक्ष्यव्यक्तिभेदेन उभयं सम्भवति, तथापि तक्रकौण्डिन्यन्यायेन सामान्यतः प्राप्तं विशेषप्राप्तेन बाध्यते।

कैय्यट इति। तस्याऽयमाशयः—व्यक्तिपक्षे हि प्रतिलक्ष्यम् असकृल्लक्षणं प्रवर्त्तते। यद्वा प्रतिलक्ष्यं भिन्नानां सर्वेषां लक्षणानां तन्त्रेणोच्चारणम् 'इको यणची'ति। ततश्च इकामपि तात्पर्यतो निमित्तत्वप्रतिपादनाददोषः।

न चैवं 'श्रीश' इत्यादावपि यण्प्रसङ्गः। व्यक्तिपक्षे 'विप्रतिषेधे परमेवे'तिनियमबलेन तद्व्यक्तिविषयकशास्त्रस्यैव विरहकल्पनात्।

लघुशब्दरत्नः

न बाध्यत इति। इदं च व्यक्तिपक्षेऽप्यावश्यकम्। अन्यथा अकः सवर्णे (६।१।१०१) इत्येतत्पर्यालोचनया 'श्रीशः' इत्यादिविषयकयण्शास्त्राऽभावकल्पनवत्, संग्राहकवाक्ये इकः स्थानित्वश्रवणात्तद्विषयकलक्षणाऽभावस्यैव कल्पनं स्यादिति स्पष्टम् इको यणचि(६।१।७७) इत्यत्र कैय्यटे।

कैय्यट इति। अत्राऽरुचिबीजन्तु अत्र स्थानित्वस्य नाऽनवकाशत्वं, 'मध्वत्रे'त्यत्र निमित्तत्वाऽप्राप्त्या तत्र स्थानित्वस्य चारितार्थ्यात्। तक्रकौण्डिन्यन्यायोऽप्यनवकाशविषय एवेति स्पष्टं तद्धितेष्वचाम् (७।२।११७) इति सूत्रे भाष्ये। तदप्राप्तियोग्यविषयाऽभावरूपं चाऽनवकाशत्वमेतद्विषये। न च तक्रकौण्डिन्यन्यायो विधेयविषय एव,

[1] 'द्वित्वम्' इति मुद्रितेषु नास्ति।

तच्च वेति, अतोऽत्र रूपद्वयम् । 'लाकृतिरि'ति त्वेकमेव ।

**हलो यमाम्** (८।४।६४)। लोपः स्याद्वेति। झयो हः (८।४।६२) इत्यतोऽन्यतरस्यामित्यनुवृत्तेः । एतच्च लण्सूत्रे भाष्ये स्पष्टम् ।

**माहात्म्यमिति** । अत्र मलोपो नेत्यर्थः ।

'हलो यरां यरि सवर्णे लोप' इति तु न सूत्रितम् , 'आध्नोत्', 'मूर्ध्नः' 'शार्ङ्गम्, 'आर्त्नी' इत्यादौ रेफात्परस्य लोपाऽऽपत्तेः ।

---

## बृहच्छब्दरत्नः

एवमपवादविषयेऽपि। 'परिहृत्य चाऽपवादविषयं तत उत्सर्गोऽभिनिविशते' इति न्यायात्। जाति-व्यक्तिपक्षौ च लक्ष्याऽनुरोधेन व्यवस्थिताविति ।

**एकमेवेति** । यण्प्राग्वर्त्तियर्द्वित्वप्रयुक्तरूपाऽभावोऽनेन बोध्यते । तस्यैव पूर्वमुपक्रान्तत्वात्। यत्तु 'उरण् रपर' इति सूत्रे 'अज्ग्रहणेनैवोपपत्तौ अण्ग्रहणसामर्थ्यात् पूर्वेणे'ति लण्सूत्रे भाष्ये उक्तत्वेन ईदृशप्रयोगाऽभाव' इति । तन्न । स्वोपन्यस्त-'ऋत इद्धातोरि'ति सूत्रस्थ-'धातोरि'ति प्रमाणस्य त्यागे बीजाऽभावेन भाष्यस्य प्रौढिवादपरत्वात्। अत एव '[1]इको यडची'ति न सूत्रितम्। किञ्च यथाश्रुतभाष्यप्रामाण्ये तु 'गौका', 'नौका', 'अग्नेः', 'वायोरि'त्यादीनामप्यभावाऽऽपत्तौ सर्वोपप्लवः स्यात्।

**सवर्णे लोप इति**। 'झरो झरी'ति न वक्तव्यमिति भावः। **आर्त्नी इति**। धनुषः कोटिद्वयमुच्यते। आङ्पूर्वक-सौत्र-'ऋ'धातोर्बाहुलकात् निप्रत्ययः। द्विवचनाऽन्तमेतत्। अमरे तु 'अर्त्तिः पीडाधनुःकोट्यो'रि'ति नकाररहितः पाठो दृश्यते। तत्राऽपि केचिद्दीर्घमाकारमाहुः।

---

## लघुशब्दरत्नः

'विशेषविहितेन सामान्यविहितं बाध्यते' इत्यभियुक्तव्यवहारादिति वाच्यम् । अपूर्वबोध्यत्वेन निमित्तत्वादेरपि विधेयत्वात् । न हि निमित्तवत् तत्त्वमपि मानाऽन्तरसिद्धमिति दिक् ।

**एकमेवेति** । यण्-तत्प्राग्वर्त्ति-यरोः[2] द्वित्वप्रयुक्तरूपभेदाऽभावादिति भावः । वकारस्तु नाऽत्र, अन्यूनाऽनतिरिक्तस्थानकाऽऽदेशलाभेन, अधिकस्थानकस्याऽप्रवृत्तेः । लण्सूत्रस्थभाष्यविरोधेनेदृशानामनभिधानमिति तत्त्वम् ।

**आर्त्नी इति** । आङ्पूर्वात् ऋतेर्बाहुलकान्निप्रत्ययः । धनुषः कोटी उच्येते । 'आर्त्तिः पीडाधनुष्कोट्योरि'त्यमरे नकाररहितः पाठो दृश्यते । 'अर्त्तिरि'ति पाठान्तरम् । 'वार्त्तिकेने'त्यनेन तस्य वाचनिकत्वं सूचितम् ।

---

[1] अत्र 'यवरडि'ति यट् प्रत्याहारः ।

[2] 'यण्-तत्प्राग्वर्त्तियरः' इति क. घ. पाठः ।

**वान्तो यि** (६।१।६९)। **यकारादाविति।** 'विशेषणमात्माऽन्तस्य सञ्ज्ञा स्यादि'त्येतदर्थकस्य येन विधिः (१।१।७२) इति सूत्रस्याऽपवादभूतेन 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वार्त्तिकेनाऽयमर्थो लभ्यते।

**आदौतोरिति।** पूर्वसूत्रे तयोरेव वान्तौ प्रति स्थानित्वेन निर्णीतत्वादित्यर्थः। ननु 'गव्यूतिरि'त्यत्र हलि सर्वेषाम् (८।३।२२) इति, लोपः

---

**बृहच्छब्दरत्नः**

**वार्त्तिकेनेति।** अयञ्चाऽर्थो 'येन विधिरि'ति सूत्रे 'आदिरन्त्येने'ति सूत्रात् 'आदि'ग्रहणाऽनुवृत्त्या, 'इले'ति तृतीयाऽन्ताऽनुवृत्त्या च, 'तस्मिन्नि'त्यनुवृत्त्या च लभ्यते। इत्-पदेन च अलो लक्ष्यन्ते इत्याहुः।

'यान्तप्रत्ययस्याऽसम्भवेन प्रथमाऽतिक्रमे कारणाऽभावादुक्तपरिभाषाया इदमेव ज्ञापकमि'ति त्वपरे। तन्न। गव्याऽऽदिशब्देभ्य आचारक्विबन्तेभ्यो लिटि, आमि, अतो लोपे, 'गव्याञ्चकारे'त्यादौ यान्तप्रत्ययस्य सम्भवात्। न च स्थानिवद्भावः। 'येन विधिस्तदन्तस्ये'ति सूत्रप्रवृत्तिसामर्थ्येन श्रुतिकृतयान्तस्यैव ग्रहणात्। अत एव 'ढकि लोप' इत्यत्र ढक्कल्पनम्। अन्यथा ढकोऽभावेन [1]निर्दिष्टपरिभाषाबाधे 'गाङ्गेय-पितृष्वसे'त्यादौ लोपाऽऽपत्तिः।

अत एव 'ङित्त्वसामर्थ्यादभस्याऽपि टेर्लोप' इति सिद्धान्तसिद्धिः। 'गो'शब्दादाचारक्विबन्ताद् यङि, लिटि, आमि, 'धातोस्तन्निमित्तस्यैवे'ति नियमान्न वान्तादेश इत्याहुः। 'स्थानेऽन्तरतम' इति प्रथमान्तपाठे[2]-ऽन्तरतमाऽनन्तरऽतमाऽऽदेशप्रवृत्तौ परिभाषासंस्कृतविधिर्लक्ष्यसंस्कारकः, अन्यत्र तु केवलविधिरेव। तथा च 'ओदौतोरि'त्युक्तिरसङ्गतेत्यत आह-पूर्वसूत्रे इति। वान्तज्ञानाऽर्थं [3]पूर्ववाक्याऽर्थज्ञानस्याऽऽवश्यकत्वेन स्थानिनोऽपि तेनैव निर्णयः।

**निर्णीतत्वादिति।** स्थानत आन्तर्यादिति भावः। नन्वेवमपि एदैतोः कण्ठ्य-तालव्यत्वाऽविशेषेण, ओदौतोः कण्ठ्योष्ठ्यत्वाऽविशेषेण च एदैतोराययौ, ओदौतोराववौ च दुर्वाराविति चेत्। अत्राहुर्भाष्यकाराः—'संवृताऽवर्णस्य संवृताऽवर्णो, विवृताऽवर्णस्य विवृताऽवर्ण' इति।

तदपरे न क्षमन्ते। शिक्षायाम्, 'एओङ्'सूत्रस्थभाष्यादौ च एचां विवृततरत्वबोधनेन, तदवयवीभूताऽकारस्य संवृतत्वस्य वक्तुमशक्यत्वात्। वस्तुतोऽकाराऽभावाच्च। 'अ अ' इति सूत्रस्य 'एचोऽयवायाव' इति सूत्रदृष्ट्याऽसिद्धत्वेन

---

**लघुशब्दरत्नः**

**पूर्वसूत्रे इति।** वान्तज्ञानाय तत्पर्यालोचनस्याऽऽवश्यकत्वाविति भावः।

---

[1] 'निर्दिष्टबाध-गाङ्गेय-पितृष्वसेय' इति क. पाठः।

[2] 'अन्तरतमानामन्तरतमादेशप्रवृत्तौ' इति क. पाठः।

[3] 'पूर्वं वाक्यार्थ' इति क. पाठः।

**शाकल्यस्य (८।३।१९) इति वा लोपः स्यादित्याशङ्क्याह-वान्त इत्यत्रेति ।**

---

**बृहच्छब्दरत्नः**

संवृताऽकारसहिताऽऽदेशस्य अविधानेन 'स्थानेऽन्तरतम' इति परिभाषया निर्णयस्य कर्त्तुमशक्यत्वाच्च । कार्यकालपक्षेऽप्यत्रोपस्थित-'स्थानेऽन्तरतम'परिभाषादृष्ट्या संवृताऽऽदेशस्याऽसिद्धत्वाच्च। इदमेवाऽभिसन्धाय 'अस्य चाऽष्टाध्यायीं प्रती'-त्यादिमूले 'सम्पूर्णामि'त्युक्तम्। तस्मात् 'स्वल्पक्लेशोच्चारणयुक्तस्य स्वल्पक्लेशोच्चारणवान्', 'अधिकक्लेशोच्चारणयुक्तस्य अधिकक्लेशोच्चारणवान्' । ध्वनितञ्चेदं कैय्यटे सूक्ष्मदृशामिति बोध्यम्। यत्तु यथासङ्ख्यसूत्रेणैव निर्णयः। न च सङ्ख्यासाम्यं नाऽस्तीति वाच्यम्। शक्याऽर्थबोधमादाय तत्सम्भवात्। जातिपक्षे दोषाऽभावाच्च।

नन्वेवं मूले यथासङ्ख्यसूत्रं कुतो नोपन्यस्तमिति चेत्। 'स्थानाऽऽख्यप्रमाणादेव सिद्धिरि'ति बोधयितुमि'ति। तन्न। उदात्तगुणयुक्तानामनुदात्तगुणयुक्तादिव्यावृत्त्यर्थं 'स्थानेऽन्तरतम' इत्यस्याऽऽवश्यकत्वात्।

केचित्तु तन्त्राऽऽदिना 'स्थानेऽन्तरतम' इति सूत्रे सप्तम्यन्तपाठमपीच्छन्ति। न चैवं 'रदाभ्यां निष्ठातो न' इति सूत्रे 'त'ग्रहणाऽऽनर्थक्यमिति वाच्यम्। 'स्थानेऽन्तरतमः' 'आदेः परस्ये'त्यनयोर्यथोद्देशपक्षाऽऽश्रयणे परत्वेन, 'आदेः परस्ये'त्यस्य प्रवृत्तौ 'चरितमि'त्याविकारस्य नत्वाऽऽपत्तेः। न च 'भिन्नमि'त्यादावुभयोरपि अविरोधसम्भवेन कार्यकालपक्ष एवाऽऽश्रयणीय इति वाच्यम्। 'चरितमि'त्यत्रेव 'भिन्नवद्ध्यामि'त्यत्राऽपि नत्वाऽनापत्तेः। 'यथा तृतीयास्तथा पञ्चमा'इति वचनेन तत्राऽपि विरोधस्य सत्त्वात्। अत एव 'कुण्डं रथेन' 'चतुर्मुख' इत्यादौ परसवर्णाऽनुनासिकाऽभावोऽपि सुलभः। 'इको यणची'त्यादौ दोषस्य स्फुटत्वेनाऽयुक्तोऽयं पक्ष[1] इत्याहुः। नन्विति। 'न हि कार्यी निमित्तत्वेने'ति न्यायस्तु नेह प्रवर्त्तते। भाष्ये वकारे[2] परतो बहुशो लोपदर्शनात्। विशेषश्रुतेन कार्यित्वेन निमित्तत्वबाधाऽऽपत्तौ 'वली'-त्यस्य वैयर्थ्याऽऽपत्तेश्च। उक्तरीत्या सर्वत्र निमित्तत्वबाधाऽऽपत्तौ 'व्योरि'ति-निर्देशे प्रथमोपस्थितयकारस्य[3] प्राथम्यत्यागे बीजाऽनापत्तेश्च। नन्वेवं 'विष्ण इहे'-त्यत्राऽपि न स्यात्। वचनाऽन्तरेणाऽऽदेशविधानन्तु 'गव्यूतिरि'त्यत्राऽप्यविशिष्टम्।

अत्र ब्रूमः—'वान्तो यि प्रत्यये' इति सूत्रे 'वान्तो यी'ति योगविभागेन 'गव्यूतिरि'त्यत्राऽवादेशः[4]। वार्त्तिकन्तूक्तसिद्धाऽर्थाऽनुवादमात्रम्। अत एव [5]'यि प्रत्यये वान्त' इति न सूत्रितम्। अत एव च 'वान्त'ग्रहणं चरिताऽर्थम्। न च तदभावे 'चेयमि'त्यादावतिप्रसङ्गः। 'क्षय्यजय्यौ' इति योगं विभज्य 'कण्ठ्यतालव्यस्य चेद्भवति, क्षिज्योरेवे'ति नियमात्। 'क्षिज्योः शक्याऽर्थे एवे'ति

---

[1] 'अयुक्तः पक्ष' इति क. पाठः।

[2] 'चकारे परतो' इति क. पाठः। ख. तु अयं पाठः त्रुटितः।

[3] 'वकारस्य' इति क. पाठः।

[4] 'वान्तादेशः' इति क. पाठः।

[5] 'यूत्यवान्त' इति ख. पाठः।

**लव्यमिति। लुनातेरचो यत्। सार्वधातुकार्द्धधातुकयोः (७।३।८४) इति गुणः। अवश्यलाव्यमिति। ओरावश्यके (३।१।१२५) इति ण्यत्।**

बृहच्छब्दरत्नः

द्वितीयसूत्राऽर्थः। ननु 'क्षीष् हिंसायां' 'क्षि क्षये' 'जि जये' इति धातुभ्यो[1] यति 'ईद्यती'तीत्त्वे, गुणे च 'क्षेयं' 'जेयमि'त्यत्र यान्ताऽऽदेशो न स्यात्। इष्टाऽऽपत्तेः। अत एव 'क्षिज्योरेवैच' इति भाष्यं सङ्गच्छते। 'भाष्यप्रामाण्येन धातुत्रयस्य शक्यार्थे वृत्तिरेव ने'ति तु कश्चित्। अस्तु वा 'गव्यूतिरि'त्यत्र [2]वचनाऽन्तरेणाऽवादेशः, तथाऽपि वकारप्रश्लेषेण बोधितवलोपाऽभावस्य यादिप्रत्यये, केवलप्रत्यये वा प्रवृत्तौ, वैयर्थ्याऽऽपत्तेर्याद्यंशे एव प्रवर्त्तते। तत्त्यागे मानाभावात्, प्रथमोपस्थितत्वाच्च। 'विष्ण इहे'त्यादौ तदभावाल्लोपः। ननु 'विष्णवे' इत्यादौ 'तस्य लोप' इति लोपो दुर्वारः। न चोच्चारणवैयर्थ्यम्। उक्तरीत्या चरिताऽर्थत्वादिति चेत्। न। 'गवि च युक्ते' 'यतोऽनाव' इत्यादिनिर्देशस्य सामान्याऽपेक्षज्ञापकत्वेनाऽदोषात्। वार्त्तिके प्रश्लेषपक्षे तु 'इति यवयोर्लोपो न, उच्चारणसामर्थ्यादि'ति मूलग्रन्थ आवादेशाऽभिप्रायेणोपायाऽन्तरपरतया व्याख्येयः।

अचो यदिति। ननु 'भवनं भूः' इति भूधातोः क्विपि, भुवे हितमिति 'उगवादिभ्यो यदि'ति यति, 'ओर्गुण' इति ओकारे, 'भोयमि'त्यत्र वान्ताऽऽदेशाऽऽपत्तिरिति चेन्न। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्।

यत्तु 'उरण् रपर' इति सूत्रे भाष्यादौ 'स्थाने'शब्दद्वयमिहाऽनुवर्त्तते। तत्रैकं 'उः स्थाने योऽणि'ति स्थानसम्बन्धलाभाय। द्वितीयन्तु 'प्रसङ्गाऽवस्थायामेव रपरो भवती'ति कालाऽवधारणाऽर्थमि'त्युक्तम्। तन्न। गौरवात्। 'उः स्थाने योऽणि'त्यनूद्य रपरत्वमात्रविधानेनाऽदोषात्।

न च [3]'किरती'त्यादौ रपरत्वे सिद्धे, 'कृतिरि'त्यादौ तत्तद्विधिभिरन्तरतमपरिभाषासंस्कृतैः ऋवर्णस्यैव विधानेन दोषाऽभावेऽपि, गुणवृद्ध्योर्दोषस्तदवस्थ एव। आन्तर्यतो मात्रिकस्य मात्रिके गुणे 'कर्त्ते'त्यादि यद्यपि सिध्यति, तथापि 'तरिते'त्यादौ एङ् एव स्यात्, [4]तथा अविशेषात् वृद्धित्रयेऽपि प्रवृत्ते, आकारस्याऽण्त्वाद्रपरत्वे कृते, 'कारकः' 'तारक' इत्यादि यद्यपि सिध्यति, तथापि 'कायक' 'तावक' इत्याद्यनिष्टमापद्येतेति वाच्यम्। स्थानकृताऽऽन्तरतम्येन इकारोकारयोश्चारितार्थ्येन, ऋकारे एङ्चोरप्रवर्त्तनात्। न चैवं प्रमाणकृताऽऽन्तरतम्येन 'कर्त्ता' 'कारक' इत्यादौ चारितार्थ्यात्, अकाराऽऽकारौ 'तरिता' 'तारक' इत्यादौ न प्रवर्त्ते-

[1] 'धातुत्रयेभ्यो' इति क. ख. पाठः।
[2] 'वचनाऽन्तरेणैवादेशः' इति ख. पाठः।
[3] 'किरत्यादौ' इति ख. पाठः।
[4] 'तथा च' इति क. पाठः।

**क्षय्यमिति ।** शकि लिङ् च ( ३।३।१७२ ) इति चात् कृत्याः । **क्षेयमिति ।** अर्हे कृत्यतृचश्च ( ३।३।१६९ ) [1]इति यत् ।

**हर एहीति ।** इह ओमाङोश्च (६।१।९५) इति पररूपं प्राप्तम् ।

**उरण् रपरः (१।१।५७) ।** **आन्तरतम्यादिति ।** रेफशिरस्कस्य 'अर्' इत्यस्य रेफद्वारा ऋकारेण स्थानसाम्यादित्यर्थः । **पक्षे द्वित्वमिति ।** ऋधेर्धस्येति भावः ।

**लोपो वेति ।** झयो होऽन्यतरस्याम् (८।४।६२) इति सूत्राद्विकल्पाऽनुवृत्तेः । एतच्च नाज्झलौ (१।१।१०) इति सूत्रे भाष्य-कैयटयोः स्पष्टम् । प्राचस्तु विकल्पाऽनुवृत्तेरनुक्तेर्न्यूनता । यदपि व्याख्यातृभिः—शरोऽचि

बृहच्छब्दरत्नः

यातामिति वाच्यम् । गुण-वृद्धिविधौ प्रमाणकृताऽऽन्तरतम्यस्य अनाश्रयणात् । अत एव 'चेते'त्यादौ गुणादिसिद्धिः । किञ्च जातिपक्षमाश्रित्य 'ऋत्वजात्यवच्छिन्नस्य कोऽन्तरतम' इति परीक्ष्यते, 'अत्वजात्यवच्छिन्नश्च कस्ये'ति, तदा अनुरूपप्रतिसम्बन्धिराहित्येनैव तयोरान्तर्यम् । इदमेवाऽभिसन्धाय 'अनान्तर्यमेवैतयोरान्तर्यमि'ति भाष्यकारैरुक्तमि'त्यादि वदन्ति । तन्न । कथञ्चिदुक्तपक्षस्योक्तिसम्भवेऽपि 'क रेफपरत्वं,' 'क लकारपरत्वमि'ति व्यवस्थाया दुरुपपादत्वात् । अस्मन्मते तु सूपपादैवेति ध्वनयन्नाह—रेफशिरस्कस्येति । 'ग्रो यङि' 'अचि विभाषे'ति-प्रमाणमेतत्पक्षे एवेति ध्येयम् । एवञ्च अरारादिरूपेण विधानाद् रेफस्य स्थान्यवयवकाऽवयवत्वस्यैव निर्णयात्, अभक्तत्वादिशङ्काया अभावेन, तद्व्यावृत्त्यर्थं यत्नाऽन्तरं नाऽऽश्रयणीयमित्यलम् ।

ऋधेरिति । वाक्यसंस्कारपक्षे 'कृष्ण ऋध् ती'त्यस्यामवस्थायां 'झषस्तथोर्धोऽध' इत्यस्याऽसिद्धत्वेन, गुणेन ऋकारनाशेन द्वित्वाऽप्रवृत्तौ च गुण एव । तस्मिंश्च

लघुशब्दरत्नः

ऋधेर्धस्येति । न च 'द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमि'त्यर्थकेन 'पूर्वत्राऽसिद्धमद्वित्वे' इत्यनेन धातुधकारस्य जश्त्वे, 'दस्ये'ति वक्तुमुचितमिति वाच्यम् । फले विशेषाऽभावेन तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वम्, अनन्तरं वा द्वित्वे, रूपे विशेषोऽस्ति, तदनन्तरं जश्त्वप्रवृत्तेः सत्त्वात् । यत्र पूर्वत्राऽसिद्धप्रवृत्तौ, तन्निषेधे वा फले विशेषस्तत्रैवाऽस्याः परिभाषात्वेन प्रवृत्तेरित्यन्यत्र[2] विस्तरः । यद्वा धस्य =[3]धस्थानिकस्येत्यर्थ इति दिक् ।

नाज्झलाविति सूत्रे इति । 'हयवरट्सूत्रशेषे चे'त्यपि बोध्यम् । अनुक्तेरिति ।

[1] 'इति कृत्यः' इति लिखितेषु पाठः ।

[2] 'इत्यन्यत्र विस्तरः । यद्वा धस्य=धस्थानिकस्येत्यर्थ इति दिक्'इति पाठः क. नास्ति ।

[3] 'तत्स्थानिकस्य' इति मुद्रितः पाठः ।

( ८।४।४६ ) इति [1]ज्ञापकमभिप्रेत्य तत्र संवादाऽर्थं भाष्यमुपन्यस्तम्— 'अनुवर्त्तते विभाषा, शरोऽचि यद्वारयत्ययं द्वित्वमि'ति । तन्न । तदुत्तर-भाष्ये एव उक्तज्ञापकस्य दूषितत्वात् । लोपस्य हि नित्यत्वे अचो रहाभ्याम् ( ८।४।४५ ) इति द्वित्वं लोपाऽपवादः स्यात् । तथा च शरोऽचि (८।४।४६) इत्यस्य सार्थक्यं स्पष्टमेव । तस्माद्विकल्पाऽनुवृत्तौ ज्ञापकाऽन्तर-मनुसर्त्तव्यम् । भाष्यकारादिव्याख्यानमेव वा शरणम् ।

द्वित्वलोपयोरिति । यत्तु 'द्वित्वविधानसामर्थ्याद् द्वावेव शिष्येते'

---

बृहच्छब्दरत्नः

सति 'द्वित्वे कर्त्तव्ये असिद्धत्वं ने'त्यर्थस्य सत्त्वेन 'पूर्वत्राऽसिद्धमद्वित्वे' इति न्यायेन, परत्वाद्वक्ष्यमाणरीत्या 'आगन्तूनामन्ते निवेश' इति न्यायेन द्विर्वचनविधिविधेयस्यो-त्तरत्रैवोत्पत्तेः, झषानन्तर्यस्य विघातेन 'अकृतव्यूह'परिभाषया धत्वाऽप्रवृत्तौ, जश्त्वाऽप्रवृत्तेश्च, द्विर्वचने सति 'धस्ये'त्युक्तिः सम्यगेव ।

अपवादः स्यादिति । द्वित्वाऽऽरम्भसामर्थ्याल्लोपो न स्यादिति भावः ।

ज्ञापकान्तरमिति । ग्राहकसूत्रस्थाऽण्ग्रहणम् । तद्धि 'सँय्यन्ते'त्यादौ यादीनां सानुनासिकानां द्वित्वाऽर्थम् । लोपस्य नित्यत्वे(तु) व्यर्थमेव स्यात् । यद्यपि गुणाना-मभेदकत्वेनैव सानुनासिकानां द्वित्वसिद्धेः, अज्ग्रहणमेव कर्त्तुं युक्तं, तथापि 'गुणा भेदका' इत्यपि पक्षं ज्ञापयितुम् 'अण्'ग्रहणम् । न हि 'एकेन एकमेव ज्ञाप्य-मि'ति नियमः, किन्तर्हि, यावताऽनुपपन्नं तत्सर्वं ज्ञाप्यम् ।

नन्वेवमपि 'हलो यमां यमी'त्यत्र विकल्पाऽनुवृत्तिरस्तु, 'झरो झरी'त्यत्र विकल्पाऽनुवृत्तौ न किञ्चिदपि[2] ज्ञापकमित्यरुचेराह—भाष्यकारादीति ।

---

लघुशब्दरत्नः

हलो यमाम् (८।४।६४) इत्यत्र, झरो झरि (८।४।६५) इत्यत्र चेति भावः । ज्ञापकमिति । उभयत्राऽपि विकल्पाऽनुवृत्ताविति भावः । लोपस्य हीति । लोपमात्रस्येत्यर्थः । लोपापवाद इति । आरम्भसामर्थ्यादिति भावः ।

ज्ञापकान्तरमिति । अणुदित् (१।१।६९) सूत्रस्थमण्ग्रहणम्, 'हलः परस्य यरो लोपो वैकल्पिक' इति सामान्याऽपेक्षमाश्रयणीयमिति भावः ।

तस्य हलो यमाम् (८।४।६४) इति विशेषाऽपेक्षत्वे आह—व्याख्यानमेव वेति । यदि तु हलो यमाम् (८।४।६४) इत्यत्र विकल्पं सिद्धं कृत्वा, द्वित्वस्य तद्विषये चरितार्थ्येन

---

[1] 'ज्ञापकमुपन्यस्य तत्संवादार्थम्' इति मुद्रितेषु पाठः ।
[2] 'न किञ्चिज्ज्ञापकम्' इति क. पाठः ।

इति। तन्न। लोपस्य वैकल्पिकत्वेन द्वित्वस्य पक्षे चरितार्थत्वात्। त्रिधमिति। 'यणो मय' इति लक्षणाऽन्तरेण पुनर्द्वित्वे तु चतुर्धमपि बोध्यम्।

एत्येधत्यूठ्सु (६।१।८९)। 'अत्र 'एची'त्यनुवर्त्तते। तच्च एतेरेव विशेषणं, न त्वेधतेः, अव्यभिचारात्। नाऽप्यूठः, [1]'असम्भवादि'ति

बृहच्छब्दरत्नः

लक्षणाऽन्तरेणेति। 'प्रकरणे प्रकरणमसिद्धमि'ति पक्षस्य सत्त्वेन, 'पूर्वत्राऽसिद्धमद्विर्वचने' इति निषेधाच्च, 'कार्यैक्ये विप्रतिषेधसूत्राऽप्रवृत्तिरि'ति मताऽन्तरस्य सत्त्वाच्च वचनयोर्युगपत्प्रवृत्तिः।

तत्र यद्यपि 'द्वे' इति शब्देन द्वयोः प्रतीतिः, तथापि प्रयोगसमवायिनाम् अन्यवर्णानामिव एकधकारस्य सिद्धत्वेन एकस्यैवोत्पत्तिस्तात्पर्यविषयभूता। सा च परत्रैवेति न नियमः। 'तस्मादित्युत्तरस्य' 'परश्चे'त्यादिसामर्थ्यात्। अत एव 'पूर्वोऽभ्यास' इति महासञ्ज्ञाकरणबलेन बोधितस्य पुनः पठितत्वरूपप्रवृत्तिनिमित्तस्याऽबाधः। न चैवं पूर्वत्रैवोत्पत्तिः स्यादिति वाच्यम्। 'तस्य परमाम्रेडितमि'ति महासञ्ज्ञाकरणबोधिताऽर्थस्य बाधाऽऽपत्तेः। 'अकृतव्यूह'परिभाषा तु न प्रवर्त्तते, तस्या असार्वत्रिकत्वात्। 'द्विःप्रयोगो द्विर्वचनमि'त्यस्याऽऽश्रयणाच्च। स्वविधिविधेयत्वयोग्याऽभावमादायैव निमित्तसञ्ज्ञायाः सर्वत्र ग्रहणेन अन्यतरेणोत्पत्तेर्वक्तुं शक्यत्वेन 'अकृतव्यूह'परिभाषाया अप्रवृत्तेश्च।

फलोपहितप्रवृत्त्यभावेन 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'तिन्यायो न प्रवर्त्तते। एवञ्च वार्त्तिकानां सूत्रपाठैकदेशतुल्यतायाः सर्वसंमतत्वेन 'वचने वचनमसिद्धमि'ति पक्षाऽऽश्रयणे, 'पूर्वत्राऽसिद्धमद्विर्वचने'इत्यस्य[2] अनित्यत्वाऽऽश्रयणे, विप्रतिषेधसूत्रप्रवृत्तौ वा, क्रमेण द्वित्वप्रवृत्तावपि न दोषः।

लघुशब्दरत्नः

झरो झरि (८।४।६५) इत्यत्र तदनुवृत्तौ शरोऽचि (८।४।४९) इति ज्ञापकनुपन्यस्यते, तदा सम्यगेव। परन्तु प्राचां भाष्यसंमतिलेखः प्रामादिकः, तद्भाष्यस्योभयविषयतया प्रवृत्तेः।

असम्भवादिति। न च 'आ अवतीति औः, जनस्य औः-जनौरि'त्यादौ अवेः क्वौ, ऊठि आद्गुणे परादिवत्त्वेन ऊठ्त्वात्सम्भवोऽस्ति। न च वृद्धिरेचि (६।१।८८) इति सिद्धिः। ओमाङोश्च (६।१।९५) इत्यनेन बाधात्। अनेन तु सामर्थ्यात्तद्बाध्यत इति वाच्यम्। तस्याऽनभिधानादित्याशयात्। किं च ओमाङोः (६।१।९५) इत्येतद्बाधकल्पनाऽपेक्षया सामर्थ्येन, लक्ष्याऽनुरोधेन च [3]'एची'त्यस्याऽसम्बन्धकल्पनैवोचिता।

[1] असम्भवादिति प्राञ्चः' इति मुद्रितेषु पाठः।

[2] 'अद्विर्वचनमित्यस्य' इति क. ख. पाठः।

[3] 'एचीत्यसम्बन्धकल्पनैवोचिता' इति लिखितेषु पाठः।

वृत्तिकारः । अत्र कैयटः—'एधतेरपि विशेषणम्, 'मा भवान्प्रेदिधदि'त्यत्र व्यभिचारसम्भवात्[1] । यद्यपीदं कैयटपुस्तकेषु प्रायेण न दृश्यते, तथाऽपि क्वचिद् दृश्यत एव । न च णौ चङि (७।४।१) इति ह्रस्वे कृते नाऽयमेधतिरिति वाच्यम् । एकदेशविकृतस्याऽनन्यत्वात् ।

न चैवमपि अजादेर्द्वितीयस्य ( ६।१।२ ) इति 'धि'शब्दस्य स्थाने 'धिधि'शब्दाऽऽदेशे सति, वस्नसोरिव प्रकृति-प्रत्यय-विभागसंमोह इति

---

बृहच्छब्दरत्नः

अत एव 'साधुत्वमात्रं विधीयते' इति पक्षाऽङ्गीकारेऽपि न दोषः । 'प्रथमधकारस्यैव 'ऋधु'धात्वाद्युपदेशेन साधुत्वं बोध्यते, न द्वितीयस्य,' 'द्वित्वविधानेन परस्यैव साधुत्वं बोध्यते, न प्रथमस्ये'त्यत्र विनिगमकाऽभावेन, 'स्वविधिबोधितसाधुत्वाऽऽश्रयीभूतवर्णाऽभावमादायैव मानाऽन्तरप्राप्तस्वनिमित्तासत्ते'त्यर्थस्य[2] पूर्वमुपपादितत्वेन धकारोत्तरधकारस्य यर्-मय्-शब्दाभ्यां ग्रहणेन प्रत्ययप्राग्वर्त्तितृतीयधकारस्याऽपि तत्सिद्धिः ।

किञ्च 'निर्वाराणसिनी' इत्यादौ 'गोस्त्रियोरुपसर्जनस्ये'ति सूत्रेण [3]तु साधुत्वाऽनुशासनस्याऽसिद्धत्वेन, असाधोः प्रवेशाऽयोगात्, ह्रस्वत्वसाधुत्वसिद्धिः, एवं प्रकृतेऽपि 'असिद्धं बहिरङ्गमन्तरङ्गे' 'विप्रतिषेधे' इत्यादिवचनैरुक्तक्रमेणैव साधुत्वविधानस्य तात्पर्यविषयभूतत्वाऽनुमानात् । अत एव 'आद्यन्तौ टकितौ' इति सूत्रस्थभाष्योक्तपक्षयोर्न फलवैलक्षण्यमित्यास्तां तावत् । 'वर्णग्रहणे जातिग्रहणस्य सत्त्वेन धकारद्वयस्याऽपि यर्-मय्-शब्देन ग्रहणान्न दोष' इत्यपि वदन्ति ।

संमोह इति । न च एकदेशविकृतन्यायप्रवृत्तिरिति वाच्यम् । स्थानिवद्भावमादाय उक्तन्यायस्य प्रत्याख्यानात् । एधतेरादेशाऽभावेन तदप्रवृत्तेः । 'कृष्णर्द्धिरि'त्यादौ तु 'पूर्वपरयोरि'ति द्विवचनबलादुभयोः स्थानित्वम् । प्रकृते तु समुदायस्येति स्पष्टम् ।

---

लघुशब्दरत्नः

ह्रस्वे कृते इति । 'वृद्धेः पूर्वमि'त्यादिः । वार्णपरिभाषयेति भावः ।

अनन्यत्वादिति । न च अचः परस्मिन् (१।१।५७) इति स्थानिवत्त्वेन एजादित्वं सुलभम् । पूर्वपरविधित्वात् । पूर्वस्यैव विधौ हि सः । 'मध्येऽपवाद'न्यायेन आद्गुणं बाधित्वा इहैव स्यात् । 'उपैधते' इत्यादौ तु परत्वात् पररूपमेव स्यादिति भावः ।

संमोह इति । एधतेरादेशाऽभावेन न स्थानिवत्त्वेन तत्त्वम् ।

---

[1] 'व्यभिचारात्' इति मुद्रितः पाठः ।

[2] 'निमित्ते सत्ता' इति ख. पाठः ।

[3] 'नुम्साधुत्वाऽनुशासनस्य' इति क. पाठः ।

वाच्यम्। 'द्विःप्रयोगो द्विर्वचनं षाष्ठमि'ति षाष्ठभाष्ये सिद्धान्तितत्वात्। अन्यथेहैव णिलोपो न स्यात्। 'जिघांसती'त्यादौ सनः सकारेण

---

**बृहच्छब्दरत्नः**

णिलोप इति। न च 'णेरनिटी'ति सूत्रस्य 'ण्यन्तस्याऽङ्गस्य लोप' इत्यर्थः, अलोऽन्त्यपरिभाषयाऽन्त्यस्य, एवञ्च प्रकृते न दोष इति वाच्यम्। अणिजन्त-समुदायाऽऽदेशस्याऽन्ते सत्त्वेन अणिजन्तत्वात्। यदि सकलस्याऽऽदेशो णिचः स्यात्तर्हि स्थानिवद्भावेन णिच्त्वात्, णिजन्ताऽङ्गत्वमार्थसमाजग्रस्तं स्यात्। प्रकृत्यादि-प्रत्ययाऽन्त-समुदाया-ऽऽदेशस्तु दुर्लभः। 'अजादेर्द्वितीयस्ये'त्यधिकारात्। न च 'सर्वे सर्वपदाऽऽदेशा' इति न्यायेन 'इधि' इत्यस्य स्थाने 'इधिधि' इत्यादेशः, स्थानिनो ण्यन्तत्वेन, आदेशेऽपि स्थानिवद्भावेन ण्यन्तत्वं सुलभमिति वाच्यम्। 'पूर्वोऽभ्यासः' 'अभ्यासे चर्चे'त्यादीनां निर्विषयताऽऽपत्त्या 'अजादेर्द्वितीयस्ये'त्या-दीनां भङ्क्त्वा व्याख्याने मानाऽभावाच्च, प्रक्रियादशायामुक्तन्यायाऽनाश्रयणात्। श्रुत-लघुभूत-स्थान्यादेशभावे चारितार्थ्येन अत्र स्थानिवद्भावाऽप्रवृत्तेश्च।

किञ्च 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'ति परिभाषया, अलोन्त्यपरिभाषया च 'णेरनिटी'त्यस्य 'अङ्गस्याऽन्त्यो यो णिस्तस्य लोप' इत्यर्थो निष्पन्नः। तथा चाऽन्ते णिचोऽसत्त्वेन लोपाऽप्राप्तिः। न हि वस्-नसादिषु अन्ते सुबस्ति। न च अलोऽन्त्यपरिभाषाविषये उक्तपरिभाषायाः प्रवृत्तौ 'तासस्त्योर्लोप' इत्यादौ दोष इति वाच्यम्। अलोऽन्त्यपरिभाषाया वैयर्थ्याऽऽपत्त्या निरूपितविषये अन्त्याऽल-भिप्रायेण व्याख्यानेन, प्रकृते अप्रवृत्तौ मानाऽभावात्। 'कारणे'त्यादावुभयो-रपि समावेशसम्भवात्। परस्परमाकाङ्क्षितयोरेकवाक्यतया युक्तत्वात्। 'अनेकाल् शित्सर्वस्ये'त्यत्र तथा क्लृप्तत्वाच्च। एतेन 'अ'शब्दात् नपुंसके नुमि 'आनी'त्यादावाद्गुणो दुर्वार' इत्यपास्तम्।

'पूर्वपरयोरि'ति पूर्वशब्देन 'आदि'ति पञ्चम्यन्तं गृह्यते इति तावन्निर्विवादम्। तथा च 'पूर्वस्ये'ति षष्ठ्या अल्समुदायोत्तरं सत्त्वेन 'अलोऽन्त्यस्ये'ति दुर्वारम्। नकारस्तु नोच्चार्यमाणाऽन्तः, अपि तु अनुमीयमानस्याऽन्त इति, 'निर्दिश्य-मानस्ये'ति परिभाषया न दोषः। ध्वनितञ्चेदम् 'उरण् रपर' इत्यादिसूत्रस्थभाष्य-कैय्यटयोः। अत एव 'पचमान' इत्यत्र न दीर्घः। वस्तुतस्तु 'यदागमा' इति न्यायो वर्णग्रहणे न प्रवर्त्तते। न स्यादिति। हन्त्यवयवहकाराऽभावादिति भावः।

---

**लघुशब्दरत्नः**

न स्यादिति। न च णेरनिटि (६।४।५१) इत्यस्य 'ण्यन्तस्याऽङ्गस्य लोप' इत्यर्थः, स च 'अलोऽन्त्य'परिभाषया अन्त्यस्य, एवं च प्रकृते न दोषः, 'सर्वे सर्वपदादेशा' इति न्यायेन 'इधी'त्यस्य 'इधिधी'त्यादेशसत्त्वेन, स्थानिनो ण्यन्ततया, आदेशेऽपि स्थानिवद्भावेन ण्यन्तत्वस्य सुलभत्वादिति वाच्यम्। अलोऽन्त्यपरिभाषया, निर्दिश्यमानपरिभाषया च णेरनिटि

विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यात् ।

न चाऽन्तरङ्गत्वात् प्रथमं चङि ( ६।१।११ ) इति द्वित्वे कृते, ह्रस्वो न भवत्येवेति वाच्यम् । ओणेर्ऋदित्करणेन बहिरङ्गस्याऽपि णौ चङि (७।४।१) इति ह्रस्वस्य प्रथमं प्रवृत्तिरिति ज्ञापितत्वात् ।

अत्र माधवः—'मा भवान् प्रेदिधदि'त्यत्र नाऽतिप्रसङ्गः, ण्यन्तस्य शब्दाऽन्तरत्वात् एधतिग्रहणेनाऽग्रहणात् । अत एव हि न भाभूपूकमिगमि (८।४।३४) इत्यत्र 'ण्यन्तानां च भादीनामुपसङ्ख्यानमि'त्युक्तम् । तत्रैव 'शब्दाऽन्तरत्वादप्राप्तावुपसङ्ख्यानमि'ति कैयट-न्यासकार-हरदत्तादिभिः सर्वैरेवोक्तम् । किञ्च ण्यधिकस्याऽपि ग्रहणे उपसर्गात्सुनोति ( ६।१।६१ ) इत्यत्र 'अभिषावयती'त्युदाहृत्य 'ण्यन्तेन अभेर्योगात्, सुनोतिं प्रत्यनुपसर्गत्वात् कथं षत्वमि'त्याशङ्क्य अभेः प्रकृत्यर्थविशेषकत्वेन समाधानं भाष्यकाराद्युक्तमसङ्गतं स्यात् । न च हेरचङि ( ७।३।५६ ) इति लिङ्गात् 'प्रकृतिग्रहणे ण्यधिकस्याऽपि ग्रहणमि'ति भ्रमितव्यम् । ज्ञापकस्य कुत्वमात्रविषयकत्वात् । तथा च वार्त्तिकम्—'हेश्चङि प्रतिषेधाऽऽनर्थक्यमङ्गा-

---

बृहच्छब्दरत्नः

अन्तरङ्गत्वादिति । अल्पपदाऽर्थाऽपेक्षत्वादिति भावः । 'नित्यत्वादि'त्यपि बोध्यम् ।

हेरचङीति । 'हिनोतेरभ्यासादुत्तरस्य कवर्गाऽऽदेशो भवती'ति सूत्राऽर्थः । लक्ष्यन्तु 'जेघीयते' । ग्रहणमिति । अन्यथा 'प्राजिहयदि'त्यत्र प्राप्तिरेव नाऽस्ति, किं निषेधेन ?। कुत्वमात्रेति । तेन 'प्रजिघाययिषती'ति णिजन्तात्सनि कुत्वं सिद्धम् ।

---

लघुशब्दरत्नः

(६।४।५१) इत्यस्य 'ण्यन्तस्याऽङ्गस्याऽन्त्यो यो निर्दिश्यमानो णिस्तस्य लोप' इत्यर्थेन दोषात् । अन्ते णेरसत्त्वात् । सूत्रन्तु 'आद्यादि'त्यादौ चरितार्थमिति भावः ।

[1]कुत्वं च न स्यादिति । हन्त्यवयवहकाराऽऽभावात् । सन्सम्बन्धिसकारवैशिष्ट्याऽभावे तु स्थानिवत्त्वेन कुत्वं स्यादपीति भावः ।

अन्तरङ्गत्वादिति । चङ्पर-णि-निमित्त-ह्रस्वाऽपेक्षया चङ्मात्रनिमित्तत्वेनाऽल्पपदार्थाऽपेक्षत्वादित्यर्थः । भाष्ये तु नित्यत्वमात्रमेव द्वित्वस्योक्तम् ।

ज्ञापितत्वादिति । इदं च णौ चङि (७।४।१) इति सूत्रे भाष्ये स्पष्टम् ।

असङ्गतं स्यादिति । सुनोतिग्रहणेन सावयतेरपि ग्रहणेन शङ्काया एवाऽभावादिति

---

[1] 'कुत्वं न स्यादिति' इति क. पाठः ।

ऽन्यत्वात्, ज्ञापकन्तु चङोऽन्यत्र ण्यन्तेऽपि कुत्वभावस्ये'ति। तस्मात् युक्तिविरोधात्, भाष्य-वार्त्तिक-वृत्ति-न्यासादिग्रन्थैः, पूर्वाऽपरस्वग्रन्थेन च विरोधादुपेक्ष्योऽयं कैयट' इति।

अत्रेदं वक्तव्यम्—अस्तु विशिष्टस्य शब्दाऽन्तरत्वं, तावताऽपि प्रकृतिभागस्य एधरूपत्वं [1]केनाऽपगतमिति परिभाव्यताम्[2]। न हि 'उपैधते' इत्यादौ तिङन्तस्यैधरूपता नाऽस्तीति प्रकृत्यंशे सा हीयते। तथा च—उपसर्गात्सुनोति (८।३।६५) इति सूत्रे वार्त्तिकं—'सिद्धं त्ववयवाऽनन्यत्वादि'ति। यत्तु 'अभिषावयती'त्यत्र भाष्यादिविरोधोद्भावनं, तद्विपरीतम्। यतः प्रकृतेः सुनोतिरूपाऽनपायात् कैयटमते सिद्धा यथोक्तव्यवस्था। त्वन्मते तु

बृहच्छब्दरत्नः

परिभाव्यतामिति। यत्तु 'परिभावस्तिरस्क्रिये'ति कोशेन तिरस्काराऽर्थस्य बोधनादर्थाऽनुपपत्तिः। एतेन 'तदुक्तीः परिभाव्ये'ति मूलकारोक्तिरपि निरस्ते'त्याहुः। तन्मन्दम्। 'इति'शब्दस्य हेत्वर्थकत्वेन तच्छब्देन प्राचां परामर्शेन त्वदुक्ताऽर्थे क्षत्यभावात्। नामलिङ्गाऽनुशासनस्यैव कोशे प्रक्रान्तत्वेन 'परि'पूर्वकभूधातोस्तिरस्काराऽर्थाऽबोधनात्। सर्वत्र तत्सत्त्वे मानाऽभावाच्च। 'परिभवती'त्यत्र तिरस्काराऽर्थबोधस्तु 'पचती'त्यत्रेव व्याकरणादिना। 'परौ भुवोऽवज्ञाने' इतिविशेषणेन अन्याऽर्थस्य बोधनाच्च। एतेन 'मनसा परिभाव्य किञ्चिदि'तिश्रीहर्षप्रयोगो व्याख्यातः। विरोध इति। न चैवं प्रकृतिभागस्याऽनन्यत्वेन णिजन्ते[3] कुत्वप्राप्तौ

लघुशब्दरत्नः

भावः। अवयवानन्यत्वादिति। ण्यन्ताऽवयवस्य सुनोतेः सुनोतिभिन्नत्वाऽभावादिति तदर्थः। सुनोतिरूपानपायादिति। सुनोतित्वाऽनपायादित्यर्थः। असङ्गतैवेति। 'ण्यन्तेनाऽभेदयोगादि'ति शङ्का, प्रकृत्यर्थविशेषकत्वेन समाधानरूपा च व्यवस्था असङ्गतैव स्यात्, त्वदुक्तरीत्या ण्यधिके षत्वाऽप्राप्तेरित्यर्थः। तदेवाह—को हीति[4]।

[1] 'केनाऽपहृतमित्यवधार्यताम्' इति मुद्रितादर्शेषु पाठः।

[2] अवधार्यताम्' इति मुद्रितः पाठः। 'परिभाव्यताम्' इति बृहच्छब्दरत्नधृतः पाठः।

[3] 'कुत्वाऽप्राप्तौ' इति क. पाठः।

[4] इतोऽग्रे—'इत्यभिप्रेत्येति। अनेनाऽरुचिर्बोधिता। तद्बीजन्तु वृत्तिग्रन्थाऽसङ्गत्यभावः। तथा हि—'इणीकारादौ प्रतिषेध' इति वार्त्तिके एधत्यनुपादानात्, 'मा भवान् प्रेदिधदि'त्यादीनाम् अनभिधानम्। 'एत्येधत्योरेचीति विशेषणमि'ति भाष्यन्तु एधत्यंशे उपरञ्जकतया विशेषणत्वेनोपपन्नम्। प्राग्लिखितकैयटस्तु बहुषु पुस्तकेषु अनुपलम्भात् अप्रामाणिक इति दिक्' इति क्वचित्पाठः।

रूपाऽन्तरत्वेन ण्यधिकस्याऽग्रहणादसञ्ज्ञैव प्रागुक्तव्यवस्था स्यात् । को हि एधयति-सावयत्योर्विशेषो, यदेधतेर्ण्यधिकस्याऽग्रहणं[१], सुनोतेस्तु ग्रहणमि'ति ? ।

यदपि ण्यन्तभादीनामुपसङ्ख्यानमुपन्यस्तं, तदपि नाऽस्माकं प्रतिकूलम् । विशिष्टस्य शब्दाऽन्तरत्वेन, प्रकृत्यंशस्य तु णिचा व्यवधानेन उपसङ्ख्यानस्य आवश्यकत्वात् । अत एव न तत्रत्यन्यासादिभिः, स्वोक्त्या वा विरोधः । प्रत्युत तवैव विरोधः । [२]षाष्ठे भाष्य-वार्त्तिकयोः 'एत्येधत्योः' (६।१।८९) इति योगं विभज्य 'एची'ति विशेषितत्वात् । तस्मादिह वृत्तिग्रन्थो, माधवग्रन्थश्चाऽसञ्ज्ञ एवेत्यभिप्रेत्य व्याचष्टे—एजाद्योरिति ।

अक्षौहिणीति । 'ऊहोऽस्त्यस्या ऊहिनी, अक्षाणामूहिनी'ति विग्रहः ।

बृहच्छब्दरत्नः

'अचङी'ति प्रतिषेधस्याऽऽवश्यकत्वे, भाष्यवार्त्तिकाद्युक्तज्ञापकता न सङ्गच्छते इति वाच्यम् । अङ्गाऽभ्यासेन तन्निमित्तप्रत्ययस्याऽऽक्षेपाण्णिजन्ते प्राप्त्यभावात् । 'एत्येधत्योरि'ति । द्विवचनप्रामाण्यात्, एधतिसाहचर्येण च अप्रश्लिष्टसानुबन्धकस्य ग्रहणमित्याहुः ।

असञ्ज्ञ एवेति । अत एव 'उपैधयते' इत्यत्र वृद्धिरिति भावः ।

नन्वेवमूठोऽपि विशेषणं सम्भवति, 'विश्वौह' इति मूलोदाहृते एव व्यभिचारात्, 'विश्वमावहती'त्यादावूठि 'शिवेही'त्यादाविव 'धातूपसर्गयोः कार्यमन्तरङ्गमि'ति न्यायेन आद्गुणे, एजादित्वसम्भवाच्चेति चेन्न । 'ओमाङोश्चे'त्यस्य दुर्वारत्वात् । अत एव ऊठोऽल्पाऽच्तरत्वेऽपि न पूर्वनिपातः । ऊठं मर्यादीकृत्य 'एची'त्यस्याऽनुवृत्तिरिति बोधयितुं तथोक्तम् । किञ्च शसादिनिमित्त-भसञ्ज्ञा-निमित्त-कोठ्-निमित्तकत्वेन गुणस्य धातूपसर्गमात्रनिमित्तकत्वाऽभावेन बहिरङ्गत्वेन सवर्णदीर्घस्य दुर्वारत्वम् । वस्तुतस्तु साहचर्यादाङा सहैकाऽऽदिष्टस्य ऊठ्ग्रहणाऽभावेन दोषशङ्कैव नेत्यलम् ।

विग्रह इति । ननु वाक्येन सञ्ज्ञाऽनवगमान्नित्यसमासत्वेन विग्रहो नोचित इति चेन्न । सञ्ज्ञानिमित्त-समासा-ऽभावात् । यत्र हि सञ्ज्ञानिमित्तः समासस्तत्र

लघुशब्दरत्नः

विग्रह इति । समस्यमानपदस्वरूपबोधक[३] इत्यर्थः । तत इनाविति । 'अत

[१] 'एधयतेर्ण्यधिकस्याऽग्रहणम्' इति क. पाठः ।
[२] 'षष्ठे' इति ङ. पाठः ।
[३] 'बोधकमित्यर्थः' इति क. घ. पाठः ।

**परिमाणविशेषविशिष्टा सेना अक्षौहिणी। पूर्वपदात्सञ्ज्ञायाम् ( ८।४।३ ) इति णत्वम्।**

**यत्तु प्राचा विगृहीतम् 'अक्षाणामूहः=समूहः[1] सोऽस्त्यस्या'इति। तदपि 'ऊहिनी'शब्देन षष्ठीतत्पुरुष' इत्येवंपरतयैव कथं चिन्नेयम्। 'ऊह'शब्देन समासे, तत इनौ तु वृद्धिर्न स्यात्, अन्तरङ्गेण गुणेन बाधात्। अपवादभूताया अपि वृद्धेः 'ऊहिनी'शब्देन विग्रहे चरिताऽर्थत्वात्। [2]यथोक्तं प्राक्**

बृहच्छब्दरत्नः

तत्समानाऽर्थकं वाक्यं न, वाक्ये समासनिमित्ताऽभावात्। प्रकृतसमासनिमित्तं हि सुबन्तसहितषष्ठ्यन्तं, तच्च विग्रहेऽप्यस्ति, अतो विकल्पो वक्तुं शक्य एव। अत एव 'रथेन तरति' 'द्रुरिव नासिका अस्य' 'अनुगतानि लोमानि यस्य स' 'प्रतिगतानि लोमानि यस्ये'त्यादिविग्रहकथनं रथन्तराऽऽदिशब्दानामाकरोक्तं सङ्गच्छते।

वस्तुतस्तु नित्यसमासे समासाऽर्थबोधकं वाक्यं न। समस्यमानपदाऽर्थबोधकपदप्रयोगस्तु भवत्येव। एतेन 'वाप्यामश्वो वाप्यश्वः' 'सञ्ज्ञायामि'तिसमास' इति 'ईदूतौ च सप्तम्यर्थे' इति सूत्रस्थभाष्य-कैय्यटादिग्रन्था व्याख्याताः।

बाधादिति। ननु इनुत्पत्तौ अपवादविषयस्य सत्त्वेन अन्तरङ्गमपि गुणं बाधित्वा 'उपसञ्जनिष्यमाणोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते' इतिन्यायेन वृद्धिरेव सेत्स्यति, अत एव 'दधती'त्यादावन्तरङ्गोऽप्यन्तादेशो नेति चेन्न। कृतसन्धिकार्यात्तद्धितोत्पत्तेः सत्त्वेन गुणप्रवृत्तेरावश्यकत्वात्।

किञ्चोक्तन्यायस्याऽपवादवैयर्थ्ये एव प्रवृत्तेः। अपि चोक्तवचनस्य अकृतव्यूहपरिभाषायामेवाऽन्तर्भावात्, अपवादविषयाऽभावस्याऽपि निमित्तकोटौ प्रवेशात्। तस्याश्च गुणप्रवृत्तिकाले 'ऊहिनी'शब्दाऽभावेन वृद्धेरप्राप्तौ, निमित्तविनाशाऽभावः। गुणोत्तरञ्च उभयत आश्रयणे अन्तादिवद्भावाऽभावान्नैव प्रवृत्तिः। 'न धातुलोप' इत्यस्य 'धात्वंशलोपनिमित्ताऽऽर्द्धधातुकनिमित्ते गुणवृद्धी ने'त्यर्थाऽङ्गीकारे तु 'मेद्यते' इत्यत्राऽन्तरङ्गगुणाऽप्रवृत्तिर्युक्तैव। 'णेरनिटी'ति सूत्रेण निमित्तविघातस्य स्पष्टत्वात्। न च स्थानिवद्भावः। लोपाऽऽदेशनिमित्त-निषेधस्याऽपि दुर्वारत्वात्। 'दधती'त्यादौ तु 'अदभ्यस्तादि'ति सूत्राऽऽरम्भसामर्थ्यादन्ताऽऽदेशो न। प्रकृते तु न सामर्थ्यमिति ध्वनयन्नाह—अपवादेति।

लघुशब्दरत्नः

**इनिठनौ (५।२।११५) इति विहिते इत्यर्थः। अन्तरङ्गेणेति। प्रथमप्रवृत्तिकेनेत्यर्थः। समर्थग्रहणेन कृतसन्धिकार्यादेव तद्धितोत्पत्त्या, तद्विषये अकृतव्यूहपरिभाषाया अप्रवृत्तेः। तस्या**

[1] 'समूह' इति ङ. नास्ति।

[2] 'तथा चोक्तं प्राक्' इति मुद्रितेषु पाठः।

'इण्-ङि-शीनामाद्गुणः सवर्णदीर्घत्वादि'ति ।

स्वादीरेरिणोः । 'इरेरिण्योरि'ति क्वाचित्कोऽपपाठः, 'स्वैरी'ति णिन्यन्तस्य अस्त्रियां वृद्ध्यभावप्रसङ्गात् । 'स्वैरिणी'त्यत्र तु ङीपः प्रागभागमादाय वृद्धिर्बोध्या । यत्तु व्याचख्युः—'लिङ्गविशिष्टपरिभाषये'ति । तन्निष्फलम् ।

---

बृहच्छब्दरत्नः

निष्फलमिति । नन्वत्र 'समर्थः पदविधिरि'ति परिभाषोपस्थानेन 'स्व'शब्देरिन्शब्दयोः पूर्वोत्तरपदभावे एव वृद्धिप्रवृत्तौ 'स्वैरिणी'त्यत्र ङीबन्तस्योत्तरपदत्वेन लिङ्गविशिष्टपरिभाषोपन्यस्येति चेन्न । समर्थपरिभाषायाः प्रवृत्तौ परस्पराऽन्वयरूपसामर्थ्यस्य ग्रहेऽपि, विशिष्टेऽन्वयात् 'लिङ्गविशिष्ट'परिभाषाऽऽश्रयणस्य वैयर्थ्याऽनुद्धारात् ।

किञ्च 'एङि पररूपमि'त्यादावप्युद्देश्यकोटौ पदगन्धस्य प्रविष्टत्वेन परिभाषाप्रवृत्तौ 'प्रेजते' इत्याद्यसिद्ध्यापत्तेः । 'समर्थः पदविधिरि'ति परिभाषाया भाष्यादावेकार्थीभावपरत्वेन व्यवस्थापनात् । 'एकस्मिन् समासे प्रवृत्तिरि'त्यर्थस्य यथाकथञ्चिल्लाभेऽपि 'ईरादीनामुत्तरपदत्वे एव प्रवृत्तिरि'त्यस्मिन्नर्थे मानाऽभावाच्च । 'तिष्ठतु कुमारी, च्छत्रं देवदत्तस्ये'त्यादौ 'पदान्ताद्वे'ति तुग्विकल्पस्य कैय्यट-हरदत्तादिभिः स्वीकृतत्वेन, षष्ठाऽध्यायमारभ्य परिभाषाया अप्रवृत्तेरावश्यकत्वाच्च ।

अत एव 'ऋते च तृतीयासमासे' 'ओत्वोष्ठयोः समासे वा' 'समासेऽङ्गुलेः सङ्गः' इत्यादौ समासग्रहणस्य, 'समानवाक्ये निघाते'त्यादिवचनस्य च चारितार्थ्यम् । अत एव 'आगच्छ हे हरेऽव मां देवे'त्यादौ पूर्वरूपादिकम् ।

एतेन 'गतिर्गतौ' इति सूत्रे 'गतावि'ति व्यर्थं, क्रियां प्रति गतित्वात् । क्रिया च धातुवाच्या । कृदन्ते सगतौ, अगतौ च कृत्स्वरादिभिर्गतेर्निघातः सिद्ध एव । अगतौ तिङन्ते 'तिङि चोदात्तवती'त्यनेनैव सिद्धम् । न च 'आ मन्द्रैरिन्द्र हरिभिर्याहि'त्यादौ दोषः । न च 'यत्क्रियायुक्ता' इति न्यायेन निर्वाहः । परस्य कस्य चिन्निमित्तत्वेनाऽनुपादानादिति वाच्यम्[1] । 'पदस्ये'त्यधिकारेण समर्थपरिभाषोपस्थानात् । 'येन गतेः सामर्थ्यं, तं प्रति गतित्वविज्ञानादि'त्याकरोक्तं परास्तम् । 'स्वादीरेरिणोरि'त्यस्य समासे प्रवृत्तिः, 'गतिरि'ति सूत्रस्य वाक्ये

---

लघुशब्दरत्नः

असत्त्वाच्चेति भावः । चरितार्थत्वादिति । तद्घटकोहिनीशब्दस्य कल्पितार्थेनाऽपि अर्थवत्त्वाऽभावेन तत्रैतत्सूत्राऽप्रवृत्तेश्चेत्यपि बोध्यम् ।

---

[1] 'निमित्तत्वेनानुपादाऽनुपादानात्' इति ख. पाठः ।

**प्रादूहोढोढ्येषैष्येषु । 'अत्र 'ऊह'शब्दः कैश्चित्प्रक्षिप्तः । भाष्यादौ तु न दृश्यते'इति प्राञ्चः । इदानीन्तनपुस्तकेषु तु भाष्य-वार्त्तिकयोरूहशब्दो**

---

बृहच्छब्दरत्नः

प्रवृत्तिरि'त्यत्र वैषम्ये बीजाऽभावाच्च । अनुदात्तवति तिङन्ते निघातस्य दुर्वारत्वाच्च । न च 'तिङि चोदात्तवती'ति नियमादिष्टसिद्धिः । विपरीतनियमस्याऽप्यापत्तेः ।

किञ्च परिभाषाऽऽश्रयणं व्यर्थमेव, सञ्ज्ञानियमपक्षे गतित्वाऽभावादेव प्राप्त्यभावात् । व्यवधानञ्च विजातीयेनैव [1]व्यावर्त्त्येत । 'देवदत्तात्पर' इत्यादौ तथैव प्रतीतेः । आवश्यकञ्चेदं प्रयोगनियमपक्षेऽपि । अत एव 'अभ्युद्धरती'त्यादौ न दोषशङ्का । अपि च समर्थपरिभाषाऽऽश्रयणेऽपि[2] 'आ मन्द्रैरि'त्यादौ दोषो दुरुद्धरः । मन्द्रादिकरणकेन्द्रकर्तृकयाने अन्वयस्य सत्त्वेन, आयाने इन्द्रादीनामन्वयस्य सत्त्वेन च समुदायं प्रति, तद्द्वारा मन्द्रशब्दं प्रति च गतित्वाऽनपायात् । अत एव 'अभ्युद्धरती'त्यादौ सूत्रप्रवृत्तिः । गतेः क्रियासापेक्षत्वेन तद्वाचकसमभिव्याहारस्य आवश्यकत्वं लोकवेदसाधारणम् । 'परभूताऽव्यवहित एव प्रयोगो गृह्यते' इति चेत् । तर्हि 'गतौ' इति प्रत्याख्यानाऽर्थं परिभाषाऽऽश्रयणं व्यर्थमिति परिभाव्यताम् । किञ्च 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' 'एकतिङ् वाक्यमि'त्यादिवचनैः तिङन्तस्य निमित्तत्वमुपात्तमेव । अपि च 'सगतिरपी'त्यनुवृत्त्या चाऽयमर्थो लभ्यते । कैय्यटादिग्रन्थास्त्वापातरमणीया एव ।

एतेन 'हे स्व ! ईरोऽस्ति, ईरस्य प्रिय ईरप्रियः, स्वस्य ईरप्रियः स्वैरप्रियः,' 'ईरश्च घटश्च ईरघटौ, स्वस्य ईरघटौ स्वैरघटावि'त्यादौ न वृद्धिरि'ति परास्तम् । अत एव 'दन्त्योष्ठ्य' इत्यादिप्रयोगाः, 'प्रवत्सतरकम्बलवसनाऽर्णे'त्यादिनिर्देशाश्च सङ्गच्छन्ते । एतेन 'ईरिग्रहणं शक्यमकर्त्तुम् । कथं स्वैरीति ?। इनिनैतन्मत्वर्थीयेन सिद्धम्, स्वैरोऽस्याऽस्तीति स्वैरी'ति भाष्यग्रन्थः परास्तः । 'स्वैरिघटौ' इत्याद्यर्थं तस्याऽऽवश्यकत्वात् । किञ्च 'अस्य ईरः एरः'[3] 'स्वैर' इत्यादेः 'वृद्धिरेची'त्यनेनैव सिद्धौ 'ईरि'ग्रहणमात्रप्रत्याख्याने बीजाऽनापत्तेः । रूढिशब्दत्वात् अवयवाऽर्थेऽनादरः । सर्वं चेदं 'स्वेन ईरितुं शीलमस्ये'ति भाष्याऽनारूढविग्रहं वदता मूलकृता ध्वनितमित्यास्तां तावत् । ननु 'स्वं रूपं शब्दस्ये'ति सूत्रे रूपग्रहणं माऽस्तु । न च आत्मीयवाचकस्वशब्दस्याऽपि[4] ग्रहणाऽऽपत्तौ स्वरूपवत् अर्थस्याऽपि सञ्ज्ञित्वाऽऽपत्तिरिति वाच्यम् । प्रतीतावुपदेशाऽनपेक्षत्वात्, असाधारणत्वात्, अन्तरङ्गत्वात्, नियतोपस्थितिकत्वाच्च स्वरूपस्यैव ग्रहणादिति चेन्न । रूपग्रहणेन

---

[1] 'व्यावर्त्तते' इति, 'व्यावर्त्त्यते' इति वा क. पाठः ।

[2] अपिः ख. नास्ति ।

[3] 'स्वस्य एरः स्वैर इत्यादेः' इति पाठोऽत्रोचितः ।

[4] 'आत्मीयवाचकशब्दस्यापि' इति ख. पाठः ।

दृश्यत एव । नानर्थकस्येति । उपस्थितस्याऽर्थस्य शब्दं प्रति विशेषणत्वसम्भवे [1]त्यागाऽयोगादिति भावः ।

सीरदेवस्त्वाह—'भ्रश्च (८।२।३६) इति सूत्रे राजेः पृथग् 'भ्राजि'ग्रहणमिह ज्ञापकमि'ति ।

बृहच्छब्दरत्नः

उक्तन्यायानां शब्दाऽर्थविषये अप्रवृत्तेर्ज्ञापनात् । विभावितञ्चेदं स्वरूपसूत्रे[2] भाष्य-कैय्यटयोः । तत्राऽर्थस्यैव विशेष्यत्वेन प्रतिपादनात् स्वशब्दाऽर्थत्वम् । तथा च 'अग्नेर्ढगि'त्यादौ शब्दोऽर्थश्च सञ्ज्ञीति फलितम् । अत एव 'स्वं रूपमि'तिभिन्नविभक्तिनिर्देशः, स्वं'ग्रहणं च चरितार्थम् ।

ननु 'अग्नेर्ढगि'त्यादावर्थग्रहणं व्यर्थम्, 'प्रातिपदिकादि'त्यधिकारात्, अर्थेन पौर्वापर्याऽसम्भवाच्च । यत्र तु अर्थे सम्भवस्तत्र सूत्राऽऽरम्भेऽपि 'पशुः' 'अपत्यमि'त्यादौ अर्था एव गृह्यन्ते इत्याशयेनाऽऽह—उपस्थितेति । तथा च 'स्वं रूपमि'तिसूत्रमेव अर्थवत्परिभाषायां मूलम् । अत एव 'घरूपकल्प' 'उपसर्गे घोः कि'रित्यत्र अर्थस्य शब्दरूपत्वात् विशेषणत्वेनाऽन्वये मानाऽभावेन घशब्देन [3]तरप्तमपोश्च ह्रस्वस्य, दाधाभ्यो घुधातोश्च[4] किप्रत्ययस्य च प्राप्त्यभावाऽर्थम् 'अशब्दसंज्ञे'ति निषेध आरभ्यते । एतेन 'अग्नेर्ढगि'त्यादौ अलौकिकव्युत्पत्त्या उपस्थिताऽर्थस्य अन्वयाऽसम्भवेन सामर्थ्यात्, बहुलक्ष्यसंस्काराऽनुरोधेन अग्न्यर्थकशब्दमात्रग्रहणाऽऽपत्तौ, 'स्वं रूपमि'तिसूत्राऽऽरम्भ इत्युक्तिसम्भवेऽपि, सञ्ज्ञाशब्दे सञ्ज्ञासूत्राऽऽरम्भसामर्थ्यात् शब्दाऽग्रहणस्य सुलभत्वेन, 'अशब्दसञ्ज्ञे'त्यस्योक्तिसम्भवं कथञ्चिदपि न पश्याम' इति मन्दोक्तमपास्तम् ।

लौकिकव्युत्पत्त्या विशेष्यतया उपस्थितस्य अर्थस्य पौर्वापर्याऽसम्भवेन[5], 'प्रातिपदिकादि'त्यनेनोपस्थितशब्दस्य अग्निशब्दोपस्थितलौकिकाऽर्थेन सह अभेदाऽन्वयाऽसम्भवाच्च तत्सम्बन्ध्युपस्थितशब्दे कार्यं प्रवर्त्तते । तथा चेदं सूत्रम् 'अर्थविशिष्टे शब्दे प्रवर्त्तते' इत्यर्थस्य बोधनाऽर्थम् । अत एव 'प्राचाम्' 'उदीचाम्' 'अपत्यमि'त्यादौ न दोषः । अर्थे कार्यस्याऽबाधात् । 'दाधा घ्वदाप्' 'स्वं रूपमि'त्युभयोरपि शास्त्रीयत्वेन कार्यकालपक्षे बाधाऽनापत्तौ, 'ई हल्यघोरि'त्यादौ 'दाधा घ्वि'त्यस्य चारितार्थ्येन च 'अशब्दसंज्ञे'त्युक्तम् । तदाह—उपस्थितेति'—इत्याहुः ।

लघुशब्दरत्नः

ज्ञापकमितीति । भ्राजौ राजेरपि सत्त्वेन राजिग्रहणेनैव सिद्धेस्तद्ग्रहणं सत् ज्ञापक-

[1] 'तत्त्यागाऽयोगात्' इति ङ. शोधितः पाठः ।
[2] 'सूत्रभाष्ये' इति ख. पाठः ।
[3] 'रसमयाश्च' इति क. ख. पाठः ।
[4] 'युधातोश्च' इति क. ख. पाठः ।
[5] 'पौर्वापर्यसम्भवेन' इति ख. पाठः ।

**नन्वेतदयुक्तम्, फणादिना राजिना साहचर्य्यात्तथाभूतस्यैव षत्वाऽर्थतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेत्। [1]तन्न। 'विभ्राट्' 'विभ्राजि'ति रूपद्वयं हि साध्यं, तच्च व्रश्चादिसूत्रे 'राजृ' इति पठित्वाऽपि सुसाधम्। एकस्य भ्राजतेः ऋकारस्य प्रागपि दातुं शक्यत्वात्–'ऋभ्राज' इति। भ्राजभास (७।४।३) इति विकल्पस्य वाचनिकतया, ऋकारस्य आत्मनेपदमात्रफलकताया वक्ष्यमाणत्वेन तत्स्थाने अकारस्य सुपठत्वाच्च। तस्मात् सीरदेवोक्तं**

बृहच्छब्दरत्नः

फणादिनेति। ननु परिभाषाऽभावे भ्राज्येकदेशस्याऽपि राजिग्रहणेन ग्रहणात्, राजेः फणादित्वमेव कथं[2] निर्णीयते, 'फणादिना राजिना साहचर्यादि'त्याकरग्रन्थास्तु परिभाषामङ्गीकृत्य प्रवृत्ता, इति न तत्साम्यमिति चेन्न। साहचर्यात्, भ्राजिग्रहणसामर्थ्येन च धातुसञ्ज्ञकराजतेर्ग्रहणेन फणादित्वस्य निर्णयात्।

राजृ इतीति। ऋकारपाठसामर्थ्याद्धातुरूपो, धात्वेकदेशश्च गृह्यते इति भावः। गुणानामभेदकत्वेन 'राट्' 'विभ्राडि'त्यादौ राजृत्वम् एकदेशविकृतन्यायेन, भूतपूर्वगत्या वा। अत एव 'तदनुबन्धकग्रहणे' इति परिभाषया भ्राज्येकदेशस्य ग्रहणं न स्यादि'ति परास्तम्। अनुनासिकोच्चारणे मानाऽभावेन, गौरवाच्च अनुबन्धत्वाऽभावात्। एतेन 'अनुबन्धनिर्देशेन यङ्लुकि 'राराष्टी'त्यादौ षत्वं न स्यादि'ति नव्योक्तमपास्तम्। [3]यथान्यासेऽपि गणकार्यत्वात् षत्वाऽनापत्तेश्च।

अकारस्येति। नन्वेवं 'भ्राजभासे'ति सूत्रस्थं भ्राजिग्रहणं व्यर्थम्, अनुबन्धद्वयेन रूपद्वयस्य सिद्धत्वादिति चेत्। अत्राहुः—'भ्राजि'ग्रहणं 'भ्राजि'घटितसमुदायो-

लघुशब्दरत्नः

**मिति भावः। तथाभूतस्यैवेति। फणादेरेवेत्यर्थः। राजृ इति पठित्वेति। न चैवमनुबन्धनिर्देशात् 'राराष्टी'त्यादौ यङ्लुकि षत्वं न स्यादिति वाच्यम्। यङ्लुकश्छान्दसत्वात्। 'श्तिपा शपे'त्यस्याऽनित्यत्वाच्च। भाष्ये तस्याऽनुक्तत्वाच्च। एतेन 'फणादित्वेन ग्रहणे गणेन ग्रहणाद्यङ्लुकि न स्यादि'त्यपास्तम्। गणेन निर्देशाऽभावाच्च। 'राट्' 'विभ्राट्' इत्यादौ राजृत्वन्तु भूतपूर्वगत्या। 'रा'शब्दपूर्वक'जृ'धातोः क्विपि निष्पन्न'राजृ'शब्दे[4] नपुंसके न षत्वं, सूत्रे 'राजृँ' इत्यनुनासिकस्य पाठात्। सुपठत्वाच्चेति। एवञ्च भ्राजभास (७।४।३) इति सूत्रे 'भ्राजि'ग्रहणं न कार्यमिति बोध्यम्। सीरदेवोक्तमिति। अत्राऽरुचिबीजन्तु व्रश्चादि-**

[1] 'तन्न' इति क्वचिन्नास्ति।

[2] 'निर्णीनेः' इति क. ख. पाठः।

[3] 'अन्यथा यथान्यासेऽपि' इति ख. पाठः।

[4] 'राजृशब्दे'इति ह्रस्वघटितः क. घ. पाठः। क्वचिद् 'राजॄ' इति दीर्घपाठः।

ज्ञापकमपि सम्यगेव ।

प्रैष्य इति । 'एष'साहचर्याद् एष्योऽपि अनव्ययं गृह्यते । तेन ण्यन्तादिषेः क्त्वो ल्यपि पररूपमेव, न तु वृद्धिः—'प्रेष्य गतः' ।

प्रवत्सतर । अत्र कालापाऽनुसारिणो 'वत्सर'शब्दमपि पठित्वा, 'वत्सरे देयमृणं वत्सरार्णमि'त्युदाहरन्ति । अपरे तु–'वत्स'शब्दमपि पठन्ति । तत्सर्वं भाष्यादिविरुद्धम् ।

अन्तादिवच्च (६।१।६)। इह 'एकः पूर्वपरयोरि'त्यनुवर्त्तते, यथासङ्ख्यं

बृहच्छब्दरत्नः

पलक्षणाऽर्थम् । तेन 'काण्यादीनां वे'ति वार्त्तिकाऽर्थः क्रोडीकृत' इति ।

सम्यगेवेति । अफणादेः षत्वाऽभावस्य, फणादेः षत्वस्य च लघुभूतोपायेनैव सिद्धौ, 'भ्राजि'ग्रहणरूपगुरुभूतोपायाऽऽश्रयणम् अर्थवत्परिभाषाज्ञापनरूपतृतीयफलाऽर्थमिति भावः । ननु परिभाषायां ज्ञापितायामपि भवदुक्तरीत्या 'भ्राजि'-ग्रहणवैयर्थ्यमेवेति चेन्न । 'रा'शब्द'जृ'शब्दयोः शब्दपरयोः समाहारद्वन्द्वे षत्वाऽऽपत्तेः । अन्येऽपि लाक्षणिका बोध्याः । न च लक्षणप्रतिपदोक्तपरिभाषया निस्तारः । अर्थवत्परिभाषाया इवोक्तपरिभाषाया अपि बाधाऽऽपत्तेः । ऋकारान्तरूपस्य प्रयोगे सत्त्वेनाऽत्रैवाऽऽपत्तेश्च ।

ज्ञापकस्य विशेषाऽऽपेक्षत्वेन 'अर्थवदि'त्यत्र प्राशस्त्ये मतुप् । तेन सञ्ज्ञाभूतोढशब्देन[1] समासे न वृद्धिः । गौणमुख्यन्यायोऽप्येतन्मूलक एव । द्वन्द्वगर्भतत्पुरुषे 'प्रौढ-घटौ' इत्यत्र वृद्धिरुक्तरीत्या निर्विघ्नैव ।

प्रेष्य गत इति । न चाऽत्र ल्यबपेक्षया अन्तरङ्गत्वात्पररूपं भविष्यतीति वाच्यम् । पदद्वयाऽऽपेक्षत्वेन समत्वात् । 'अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते' इति न्यायाच्च । वार्णादाङ्गस्य बलीयस्त्वाच्च ।

अन्तादिवच्च । अत्र अन्ता-ऽऽदिशब्दाभ्यामुपस्थितावेकाऽऽदेशस्थानिनौ गृह्येते । तयोस्तद्घटकीभूतसमुदायाऽपेक्षया तत्त्वात् । गतार्थमिति । न च 'उभयत आश्रयणे नाऽन्तादिवद्भाव' इति निषेधे निषेध्यसमर्पणाऽर्थम् । अत एव 'अभीयादि'त्यादौ ह्रस्वाऽभावसिद्धिः । अत्र हि [2]उपसर्गत्वे-ण्त्व-लाभाऽर्थमुभयाऽऽश्रयणमिति वाच्यम् । 'उभयत आश्रयणे न [3]स्थानिवदि'त्याकारकवचनस्यैव

लघुशब्दरत्नः

साहचर्येण धातुसञ्ज्ञकराजेर्ग्रहणं स्यादिति 'भ्राजि'ग्रहणस्याऽऽवश्यकत्वम् । किञ्च भ्राजन्तर्गतराजेर्न ऋकाराऽनुबन्धत्वं, तस्य समुदायाऽनुबन्धत्वादिति । भाष्यादिविरुद्धमिति । तद-

[1] 'संज्ञाभूत-ऊढशब्देन' इति ख. पाठः ।
[2] 'उपसर्गत्व-इण्त्वलाभार्थम्' इति क. ख. पाठः ।
[3] 'उभयत आश्रयेण न स्थानिवत्' इति क. पाठः ।

**चेत्यभिप्रेत्याऽऽह–पूर्वस्यान्तवदिति। स्थानिवत्सूत्रेणैव गतार्थमिदं सूत्रम्। न च 'अल्विध्यर्थमिदमि'ति भ्रमितव्यम्। अस्याऽपि अल्विधावनिष्टत्वात्।**

बृहच्छब्दरत्नः

युक्तत्वात्। अथ स्थान्यादेशभेदेनाऽतिदेशवाक्यानां भेदात्, तेषां च प्रवृत्तौ क्रमस्य नियन्तुमशक्यत्वेन युगपत्प्रवृत्तिः। यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तिस्तन्निमित्तवैकल्यविरहसम्पादनम् अतिदेशस्य फलम्। एकादेशे 'पूर्वपरयोरि'तिद्विवचनबलात्प्रत्येकं स्थानित्वम्। अत एव 'कृष्णर्द्धि'रित्यादौ रपरत्वम्। एवञ्च 'अन्तादिवच्चे'तिसूत्रबोधिताऽतिदेशद्वयस्य युगपत्प्रवृत्त्या 'अभीयादि'त्यादौ कार्याऽभावान्नोभयोः प्रवृत्तिः। अन्यतराऽतिदेशेनाऽन्यतरनिमित्तसम्पादनेऽपि, अन्यतरनिमित्तवैकल्यात् [1]ह्रस्वाऽप्रवृत्तेः। अन्यतराऽतिदेशात्पूर्वमन्यमन्यतराऽतिदेशस्य प्रवृत्तिः स्यात्तदा ह्रस्वप्रवृत्तिः सम्भाव्येत। वस्तुतस्तु तदपि न। प्रथमप्रवृत्ताविुक्तदोषस्य दुर्वारत्वात्। इदमेवाऽभिसन्धाय 'उभयत आश्रयणे नान्तादिवदि'तिन्यायसिद्धमिति भाष्यकारादय' इति ब्रूषे, तर्हि स्थानिवद्भावद्वयस्याऽपि अप्रवृत्त्या सिद्धं नः समीहितम्। वस्तुतस्तु उभयोः स्थाने जातस्य एकादेशस्य स्थानिवद्भावेन, अन्तादिवद्भावेन वा [2]धर्मद्वयलाभेऽपि, उपसर्गात्परत्वस्य तासौ नित्याऽनिट्त्वादिवदशास्त्रीयत्वेनाऽतिदेष्टुमशक्यत्वात्, परत्वाद्यनिमित्तकशास्त्रीयकार्याऽतिदेशमात्रेणाऽतिदेशस्य चारितार्थ्येन च भाष्यादिग्रन्थाश्चिन्त्या एवेत्यन्यत्र विस्तरः।

अनिष्टत्वादिति। अत एव 'तद्वदि'ति न सूत्रितम्। तच्छब्देन पूर्वपरयोरेव परामर्शेनोपस्थितत्वादेकादेशस्थानिनोरेव ग्रहणाऽऽपत्तौ, [3]तन्मात्रेऽनिष्टाऽतिदेशोऽपि सम्भाव्येत। यत्त्वाहुः–'क्षीरपेण' 'जीनः' 'जानू अस्ये'त्यादौ उत्तरपदविभक्त्योः, सम्प्रसारणा-ऽसम्प्रसारणोश्च एकादेशस्य पूर्वाऽन्तत्वेन, निपाता-ऽनिपातैकादेशस्य परादिवद्भावेन णत्व-दीर्घत्व-प्रगृह्यत्वाऽर्थम्, [4]उत्तरार्थञ्च सूत्रमि'ति।

लघुशब्दरत्नः

नुक्तत्वादिति भावः।

गतार्थमिदमिति। 'पूर्वपरयोरि'ति द्विवचननिर्देशेनोभयोरपि प्रत्येकं स्थानित्वादिति भावः। एवं च 'प्रार्च्छती'त्यादौ विसर्गवारणाय ज्ञापकाऽऽश्रयणमपि न कार्यं, यतस्तत्र स्थानिवत्त्वेन रेफान्ते पदत्वं दुर्लभं, तस्य तत्स्थानिधर्मत्वाऽभावात्। आनुमानिकवचनकल्पनया 'प्र-ऋच्छी'त्यस्य प्राच्छर्दिशे तु समुदाये 'प्र'शब्दधर्माणां स्थानिवत्त्वेन लाभेऽपि, 'प्रारि'त्यत्र तदलाभेन, रेफे पदान्तत्वस्य दुर्लभत्वादिति बोध्यम्।

[1] 'ह्रस्वापत्तेः' इति ख. पाठः।

[2] 'वा धर्मद्वयलाभेऽपि' इति क. ख. पाठः।

[3] 'तन्मात्रनिष्ठाऽतिदेशोऽपि' इति ख. पाठः।

[4] 'उत्तरार्थञ्च' इति ख. नास्ति।

अन्यथा 'अयजे इन्द्रमि'त्यत्र सवर्णदीर्घाऽऽपत्तेः। तथा च वार्त्तिकम्—'न वा अताद्रूप्याऽतिदेशात्' इति।

न विसर्ग इति। एतच्च 'सुखार्त्त' इत्यादावपि तुल्यम्। अत्र च कार्यकालपक्षे बहिरङ्गत्वादसिद्धत्वमपि बोध्यम्। न च 'नाऽजानन्तर्ये'

---

बृहच्छब्दरत्नः

तन्न। एकाच्त्वस्य श्रुत्या ग्रहणेनाऽतिदेशाऽनपेक्षणात्। समासचरमाऽवयवभूतोत्तरपदत्वस्य स्वत एव सत्त्वात्। तदंशे स्थानिवद्भावस्य वक्तुं शक्यत्वाच्च। 'जानू अस्ये'त्यत्राऽपि निपातत्वमतिदेष्टुं शक्यमेव। अज्झल्समुदाये तस्य सत्त्वात्। वस्तुतः 'स्वरप्रतिरूपकाश्चे'त्यनेन चाद्यन्तर्गणपठितेन सत्त्वभिन्नाऽर्थकत्वात् औपदेशिकनिपातत्व-प्रगृह्यत्वे बोध्ये। पदैकदेशानां तु निरर्थकत्वान्न दोष इत्याहुः। 'जीन' इत्येकं [1]प्रयोजनं न योगाऽऽरम्भं प्रयोजयति। 'हल' इति ज्ञापकादेव सिद्धत्वाच्च। 'पदान्तपदाद्योरि'ति वचनमावश्यकमेव। 'पदे'त्यनुवृत्त्या सूत्राऽऽक्षरैरेव वचनाऽर्थसाधने [2]योगविभागवत्करण-सार्थक्यं तु न कथञ्चिदपि। अपदसम्बन्धिनोरभावेनोक्ताऽर्थलाभ इत्यपि वदन्ति।

वस्तुतस्तु 'षत्वतुकोरसिद्ध' इति सूत्रम् असिद्धपरिभाषाबोधिताऽसिद्धत्वाऽनुवादकम्। लाघवात्। फलन्तु 'नाजानन्तर्ये' 'अकृतव्यूहा' इति परिभाषाबोधनम्। एवञ्च 'वृक्षेच्छत्रमि'त्यादौ दोषाऽभावान्न तन्निवृत्तये यत्नः कार्य इत्यग्रे निरूपयिष्यामः। सिंहावलोकनन्यायेनाह–एतच्चेति। पूर्वत्राऽनुपन्यासे पक्षाऽन्तरोपन्यासव्याजेन बीजमाह—अत्र चेति। नाजानन्तर्ये इति। अत्र च 'षत्वतुकोरसिद्ध'

---

लघुशब्दरत्नः

न वेति। 'वर्णाऽऽश्रये विधावन्तादिवद्भावप्रतिषेधो वाच्य' इत्यस्य प्रत्याख्यानमेतत्। 'न वा वक्तव्यं, ताद्रूप्यस्य=वर्णमात्रवृत्तिधर्मस्याऽनेनाऽतिदेशाऽभावादि'ति तदर्थः। 'पूर्वस्य, परस्य च समुदायस्याऽन्ताऽऽदिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्व-सुबन्तत्व-प्रत्ययत्वादयस्ते कृतैकादेशस्याऽपि भवन्ती'त्यर्थात्। अत एव तुक्यसिद्धवचनं चरितार्थम्। अन्यथा 'अधीत्ये'त्यादौ [3]ह्रस्वत्वप्रयुक्ततुक्सिद्धेरसिद्धवचनवैयर्थ्यं स्पष्टमेव। अत एव 'खट्वाभिरि'त्यत्रैस् नेति दिक्। अत्र चेति। 'सुखार्त्त' इत्यत्र, 'प्रार्च्छती'त्यत्र चेत्यर्थः। आद्ये [4]विशिष्य 'ऋत'शब्द-तृतीयासमाससापेक्षत्वेन, अन्त्ये उपसर्गत्व-धातुत्वादिसापेक्षत्वेन वृद्धेर्बहिरङ्गत्वादिति भावः।

---

[1] 'प्रयोजनं योगारम्भं प्रयोजयति' इति ख. पाठः।

[2] 'योगविभागवत्यकरणाऽर्थसार्थक्यम्' इति क. ख. पाठः।

[3] 'ह्रस्वप्रयुक्ततुक्सिद्धेः' इति क. पाठः।

[4] 'विशिष्य ऋतशब्दस्य तृतीयासमास' इति मुद्रितेषु, घ. पुस्तके च पाठः।

**इति निषेधः। 'यत्राऽन्तरङ्गे, बहिरङ्गे वा अचोरानन्तर्यं, तत्रे'ति हरदत्तपक्षे तत्प्राप्तावपि, 'यत्र पश्चात्प्रवर्त्तमाने [1]अजानन्तर्यमि'ति कैयटमते निषेधाऽप्रवृत्तेः[2]। बह्वपेक्षत्वेन बहिरङ्गायां वृद्धावजानन्तर्यसत्त्वेऽपि, पश्चात्प्रवर्त्तमाने**

---

बृहच्छब्दरत्नः

इति सूत्रस्थं षत्वग्रहणं मानम्। 'कोऽसिचदि'त्यादौ बहिरङ्गपरिभाषया एकादेशस्याऽसिद्धत्वे षत्वाऽप्रवृत्तौ किन्तेन। हरदत्तेति। अनेनाऽत्राऽस्वरसः सूचितः। तद्बीजन्तु 'संयोगान्तस्य लोपः' 'न धातुलोप' इत्यादिसूत्रस्थभाष्यादिविरोधः। 'पचावेदमि'त्याद्यसिद्धिश्च। पश्चात्प्रवर्त्तमाने इति। यद्यपि षत्वविधौ इणूग्रहणं, तत्तु परेणैव, तथापि तेष्वचामन्तर्भावोऽस्त्येव।

कैय्यटमते 'अचोरि'ति द्वित्वम् अविवक्षितमिति ध्वनयन्नाह—अजानन्तर्यमिति। एकवचनान्तेन समासः। क्वचित्तु 'अच आनन्तर्यमि'त्यसमस्तपाठः। न चैवं 'पचावेदमि'त्यसिद्धिः। 'एत ऐ' इत्यस्य अचः स्थाने जायमानत्वेऽपि, अच आनन्तर्यस्य निमित्तत्वाऽभावात्। ध्वनितञ्चेदं 'क्नमेजन्त' इति सूत्रे भाष्ये। एतेन 'षत्वतुकोरसिद्ध' इति सूत्रस्थतुग्ग्रहणमपि मानमि'ति मन्दप्रतारणमपास्तम्। 'अकृतव्यूह'परिभाषाया दुर्वारत्वाच्च। 'प्रेत्ये'त्यादौ धातूपसर्गयोः कार्यत्वेन एकादेशस्यैवाऽन्तरङ्गत्वाच्च। न चेदं गृह्यमाणधातूपसर्गविषयकमिति वाच्यम्। मानाऽभावात्। 'सम्प्रसारणाच्चे'ति सूत्रस्थभाष्यविरोधात्। 'धातोस्तन्निमित्तस्यैवे'ति सूत्रे वृत्त्याद्युदाहृतस्य 'ओयते' इत्यस्याऽसङ्गतताऽऽपत्तेश्चेत्याहुः। न चोपाध्यायमते 'शतानी'त्यत्र नुमोऽसिद्धत्वेन षट्सञ्ज्ञाया अप्राप्तौ 'उपदेशग्रहणं कर्त्तव्यमि'त्यादिभाष्यवार्त्तिकं विरुध्येतेति वाच्यम्। तस्य प्रौढिवादपरताया आवश्यकत्वात्। सङ्ख्यासापेक्षत्वेन षट्सञ्ज्ञाया बहिरङ्गत्वाच्च। सञ्ज्ञायाः कार्याऽपेक्षत्वेन समत्वाच्च।

---

लघुशब्दरत्नः

अचोरानन्तर्यमिति। अचोऽजानन्तर्यनिमित्तमित्यर्थः। पश्चात्प्रवर्त्तमाने इति। अन्तरङ्गे इत्यर्थः। अत्र च षत्वतुकोः (६।१।८६) इति [3]सूत्रस्थं 'तुक्'ग्रहणं ज्ञापकम्। अन्यथा 'अधीत्ये'त्यादौ ल्यप्प्रवृत्तये पूर्वं समासे जाते, तत्र संहिताया नित्यत्वात् ल्यबुत्पत्तिपर्यन्तमप्यसंहितया अवस्थानाऽसम्भवेन एकाऽऽदेशे, ल्यपि, तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयाऽपेक्षैकादेशस्य बहिरङ्गतया असिद्धत्वेन, तद्वैयर्थ्यं स्पष्टमेव। तत्र पश्चात्प्रवर्त्तमाने तुकि अचोऽन्यानन्तर्यनिमित्तकार्यत्वान्न दोषः। अजानन्तर्यमिति। अचोऽन्यानन्तर्यमित्यर्थः।

---

[1] 'अच आनन्तर्यम्' इति घ. ङ. पाठः।

[2] 'निषेधाऽप्राप्तेः' इति मुद्रितेषु पाठः।

[3] 'सूत्रस्थतुग्ग्रहणम्' इति घ. पाठः।

[1]विसर्गे तदभावात्। उपसर्गेणेति। 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसञ्ज्ञा' इत्युक्तत्वादिति भावः। प्रार्षभीयतीति। शरोऽचि (८।४।४९) इति द्वित्वनिषेधः। प्रेजत इति। एजृ दीप्तौ। कम्पनाऽर्थस्तु परस्मैपदी। 'एजते = कम्पते' इति तु प्राचां व्याख्यानं प्रामादिकमेव।

'एङ्चेङि'त्येव सिद्धे 'पर'ग्रहणमुत्तराऽर्थम्।

---

बृहच्छब्दरत्नः

ननु 'प्रगत ऋषभः प्रर्षभ' इत्यादौ ऋकारादिधातुयोगाऽभावेऽप्यन्तर्भूत-क्रियामादाय उपसर्गत्वमस्त्येवेत्याशङ्क्याह—यत्क्रियेति। अयम्भावः–'उपसर्गाः क्रियायोगे' इति सूत्रे योगग्रहणसामर्थ्येन यस्याऽर्थे प्रादीनामन्वयः, तं प्रत्येवोप-सर्गत्वम्। प्रकृते च उपसर्गत्वम् ऋकारादिनिमित्तमेव। प्रत्यासत्तेः। अत एव 'प्रभूत ऋद्धः प्रर्द्धः' इत्यत्र न। निपातसञ्ज्ञा तु क्रियायोगं विनाऽप्यस्ति। तेन 'प्रगत आचार्यः प्राचार्य' इत्यत्राऽव्ययपूर्वपदप्रकृतिस्वरः। अत एव–'प्रादय' इति पृथक् सूत्रितम्। न चैवं 'न माङ्योगे' इति सूत्रे 'अजादीनामटा सिद्धमि'-त्युक्त्वा 'अटश्चे'ति सूत्रं विधाय, 'अस्वपो हसती'त्यत्र वृद्धिमाशङ्क्य 'धातौ' इत्यपकर्षेण समाहितम्, एवं सति सार्थक्ये, योगविभागे मानाऽभावात् प्रकृति-भावबाधे न किञ्चिन्मानमिति वाच्यम्। पूर्वसूत्रे एव कर्त्तव्यत्वेन ईदृशाऽर्थ-फलस्याऽपि सुवचत्वात्। अत एव 'उभयोः शेष' इत्यादिभाष्येण सह न विरोधः।

प्रार्षभीयतीति। यत्तु 'प्र ऋषभः[2] प्रर्षभः, तमिच्छति प्रार्षभीयती'त्याहुः। तन्न। प्रत्ययग्रहणपरिभाषया 'ऋषभ'शब्दस्याऽसुबन्तत्वात्। धातुसञ्ज्ञा तु 'ऋषभीय'शब्दस्यैव, उपसर्गस्य पृथक्करणात्। किञ्चोपसर्गत्वमपि दुरुपपादम्। अत एव 'परिवृढय्ये'त्यादौ' ल्यबर्थं प्रादिसमासः। प्रकृत्येकदेशद्वारकस्य विशिष्टेन साम-र्थ्यस्य कृत्सु सर्वत्र वाच्यत्वात्। अजहत्स्वार्थायां वृत्तौ धातुसञ्ज्ञाप्रयोजकप्रत्यय-प्रकृत्या समानाऽर्थः पर्यादिरित्याहुः। 'ऋषभादिशब्देषु आख्यानण्यन्तेषु सुबन्ता-ण्णिजि'ति पक्षे वैकल्पिकवृद्ध्यादिकं बोध्यम्। 'शरः खय' इत्यत्र निमित्तत्वेन कार्यित्वबाधान्न द्वित्वमित्याद्युक्तमिति ध्वनयन्नाह–शरोऽचीति। उभयोरपि कार्यि-त्वेन न्यायाऽविषय इति भावः। एङ्चेङित्येवेति। यद्यप्यान्तरतम्यादेङ् सिद्धस्तथा-

---

लघुशब्दरत्नः

यत्क्रियेति। यदर्थक्रियायुक्ता इत्यर्थः। इत्युक्तत्वादिति। 'भाष्यकारादिभिरि'ति शेषः। उत्तरार्थमिति। तेन 'अद्यर्यात्', 'भिन्द्युः,' 'पचन्ती'त्यादिसिद्धिः। 'अतो गुणे इत्युत्तरार्थमि'ति क्वाचित्कोऽपपाठः।

---

[1] 'विसर्गे' इति मुद्रितेषु त्रुटितमासीत्।
[2] 'प्रर्षभ' इति ख. नास्ति।

'रूप'ग्रहणन्तु चिन्त्यप्रयोजनम्। 'एङि पर' इत्येव सिद्धेः। यथा

बृहच्छब्दरत्नः

ऽपि पक्षे ऐजपि स्यादित्येङ्ग्रहणम्। यथासङ्ख्येन स्थानत आन्तरतम्याच्च एङो व्यवस्था।

परग्रहणमुत्तरार्थमिति। न च 'ओमाङोश्चे'त्यत्र एङनुवृत्त्यैव सिद्धिः। [1]ईषदर्थक—आङा सह 'ऋषभ'शब्दस्य समासे 'अद्य-अर्षभः अद्यर्षभ' इत्यादावकारादेशाऽर्थं परग्रहणस्याऽऽवश्यकत्वात्। 'अतो गुणे इत्युत्तरार्थमि'ति क्वाचित्कोऽसाम्प्रदायिकः पाठः। सोऽपि कथञ्चित् स्थापनीय इत्याग्रहश्चेत्, तर्हीत्थं स्थाप्यताम्-परग्रहणे कृतेऽपि 'अद्यर्षभ' इत्यत्र ओमाङोश्चे'त्यनेन नेष्टसिद्धिः। परत्वेन दीर्घप्रसङ्गात्। यत्तु उपाध्याया आहुः—'प्रतिपदबिधेर्बलवत्त्वात्पररूपमि'ति। तन्न। सर्वसंमतप्रतिपदविधित्वस्येहाऽभावात्। 'मध्येऽपवाद'न्यायेन वृद्धिबाधस्यैव युक्तत्वाच्च।

यत्तु मिश्रा आहुः—'चकारेण पुनर्विधानाद् दीर्घो बाध्यते' इति। तन्न। मध्येऽपवादन्यायेन 'आटश्चे'ति वृद्धिवाधस्यैव युक्तत्वात्। न च 'आटश्चे'तिचकारस्य पुनर्विधानाऽर्थत्वस्वीकारान्नैवमिति वाच्यम्। वचनद्वयप्रामाण्येन विकल्पस्यैव युक्तत्वात्। 'औस्त्रीयदि'त्यत्र 'उस्यपदान्तादि'ति बाधेन चरितार्थत्वाच्च। वाचनिकपररूपाऽङ्गीकारे तु ममाऽपि न दोषः! 'ऊस्यपदान्तादि'ति सूत्रं पाठ्यम्। पूर्वपरस्थाने उकारादेशो विधेयः। न चैवं लाघवाऽभावः। असाधारणमिदं न प्रयोजनमित्याशयस्य सत्त्वात्। न चैवम् 'अतो गुणे' इत्यत्राऽपि 'अगुणे' इतिच्छेदः, 'अतो गुणे परतः पूर्वपरयोः स्थाने अकारः स्यादि'ति व्याख्येयमिति वाच्यम्। 'पचन्ती'त्यादिसिद्धात्रप्येङ्समुच्चयबोधक'च'शब्दाऽभावेन[2] 'पचे' इत्याद्यसिद्ध्यापत्तेः। एतेन 'एङाद्यभावेऽपि पररूपाऽर्थत्वेन 'पर'ग्रहणसामर्थ्याद् दीर्घबाध' इति निरस्तम्। उत्तराऽर्थत्वेन चारितार्थ्यादिति मात्सर्यमुत्सार्य सुधीभिराकलनीयम्।

चिन्त्येति। यत्तु भाष्यादौ प्रयोजनमुक्तं, तत्तु न यथास्थितसूत्रसन्दर्भे इत्युपेक्षितम्। यत्र पूर्वपराऽनुकूलाऽऽदेशः सम्भवति, तत्र परस्यैव यद्रूपं तादृशा-

लघुशब्दरत्नः

चिन्त्यप्रयोजनमिति। न च 'शिवाये'त्यत्र अणोऽप्रगृह्यस्य (८।४।५७) इत्यनुनासिकत्वे, तदनुकरणे, ततः परम् 'ओमि'त्यस्य ओमाङोश्च (६।१।९५) इति पररूपे अनुनासिकाऽभावार्थं 'परस्य यादृशं रूपं तादृशं यथा स्यादि'ति 'रूप'ग्रहणम्। स्पष्टं चेदम् 'ऐऔजि'त्यत्र भाष्ये, कैय्यटे चेति वाच्यम्। तृज्वत्क्रोष्टुः (७।१।९५) इति सूत्रभाष्योक्तरीत्या गुणस्य

[1] अत्र 'ईषदर्थकेन आङा सह' इत्युचितः पाठः।

[2] 'एङसमुच्चयबोधकशब्दाऽभावेन' इति ख. पाठः।

'अमि पूर्वः' (६।१।१०७) इति। नियोगोऽवधारणमिति। यदाहुः—

'अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः।
एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत् ॥ इति।

एतेन 'नियोजनं नियोगो = व्यापारः' इति व्याख्यानं परास्तम्। 'यदैव

बृहच्छब्दरत्नः

ऽऽदेशो नेष्ट एव। अत एव 'सुब्रह्मण्योमि'त्यत्र 'ओमाङोश्चे'ति पररूपे स्वरितत्वम्' इति भाष्याद्युक्तं सङ्गच्छते। यत्तु 'शिवाये'त्यत्र 'अणोऽप्रगृह्यस्ये'त्यनुनासिके, तदनुकरणे, ततः परम् 'ओमि'ति प्रयोगे 'ओमाङोश्चे'ति पररूपे अनुनासिकाऽभावाऽर्थं परग्रहणमि'ति। तन्न। 'इति'शब्दं विनाऽनुकरणत्वस्य वक्तुमशक्त्वात्। 'ओमाङोश्चे'त्यत्र 'अभिव्यक्तपदार्था ये' इति न्यायेन अर्थपरस्यैव ग्रहणात्। तत्साहचर्यात् शब्दभिन्नाऽर्थपराऽवयवस्यैव ग्रहणाच्च। अत एव 'ओमाङोश्चे'ति सूत्रस्थम् आङ्ग्रहणं ज्ञापकम् 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदि'ति परिभाषाया' इति भाष्यकारोक्तं सङ्गच्छते। अन्यथा 'एही'त्यस्याऽनुकरणे [2]'शिव एही'त्यादौ चारितार्थ्ये ज्ञापकता न स्यादिति स्पष्टमेव। न च 'रूप'ग्रहणं योगविभागेन परग्रहणा-

लघुशब्दरत्नः

शब्दत्वादिवद् रूपत्वाऽभावेन रूपग्रहणेनाऽव्यावृत्तेः। 'रूप'शब्देन च श्रावणज्ञानविषयोऽवयवसंस्थानवान्। अत एव तृज्वत्सूत्रे 'न हि स्वरो रूपवानि'त्युक्तम्। 'वर्णरूपाऽवयवसंस्थानमेव शब्दस्य रूपं, [3]तद्वत्तयैव 'शब्दस्य रूपमि'ति व्यवहारः, स्वरस्तु न तद्वानिति, शब्दत्वादिवन्न स शब्दस्य रूपमि'ति तदर्थः। तत्र सूत्रे 'रूपाऽतिदेशे स्वराऽतिदेशो न स्यादि'त्युपक्रम्येदमुक्तम्। 'परः किंगुणको भवती'त्याकाङ्क्षायां 'स्थानिगुणक' इति लभ्यते। तत्रोभयगुणकस्याऽसम्भवादेकस्थान्यन्तरतमत्वात्, तद्गुणकस्यैवोपस्थित्या च तस्यैव सिद्धेश्च। 'पर'शब्देन प्रयोगस्थस्योपस्थितस्य ग्रहणं, प्रयोगे च गुणो भेदक एव। शास्त्रे परमुच्चारितो गुणोऽभेदको, न तु प्रयोगे इति, परशब्देनोपस्थिताऽननुनासिकस्यैवैकस्थान्यन्तरतमत्वाद्विधिः।

यत्र तु स्थानिद्वयगुणकसम्भवस्तत्र स एव। अत एव 'स्वरिताऽन्त–'सुब्रह्मण्या'शब्दस्य निपातत्वादुदात्तेन ओंशब्देन ओमाङोश्च (६।१।९५) इत्येकादेशः 'सुब्रह्मण्योमि'ति स्वरित' इति तस्यादित (१।२।३२) इति सूत्रे भाष्य-कैय्यटयोरुक्तम्।

'ऐओजि'ति सूत्रे 'एकादेशे आद्गुणः ( ६।१।८७ ) इत्यादौ दीर्घग्रहणं कर्त्तव्यं, त्रिमात्र-चतुर्मात्रा आदेशा मा भूवन्नि'ति वार्त्तिककृतोक्ते, अकः सवर्णे (६।१।१७१) इत्यत्र योगविभागेन 'एकः पूर्वपरयोः (६।१।८४) इति यो निर्दिष्टः स दीर्घ' इति व्याख्याने 'पचन्ती'त्यत्र

[1] अत्र 'नावक्लृप्तौ यदा दृष्टः' इति पठितव्यं, तेन न च्छन्दोभङ्गः।
[2] 'शिवे एहीत्यादौ' इति क. ख. पाठः।
[3] यद्वत्तयैव' इति क. पाठः।

पूर्वं ज्वलने शरीरं', 'ममैव जन्माऽन्तरपातकानाम्' इत्यादिप्रयोगविरोधात्, उदाहृतवृत्तिस्थश्लोकविरोधात्, लङः शाकटायनस्यैव (३।४।१११) तपस्तपः-कर्मकस्यैव (३।१।८८) इत्यादिसौत्रप्रयोगविरोधाच्च। यत्तु 'श्लोकवार्त्तिक-मिदमि'त्याहुः। तद्भ्रमसात्।

शकन्ध्वादिष्विति। शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः। अत [1]आह–तच्च टेरिति। यदि तु 'आत्' इत्यधिकारात् अकारस्यैवेष्येत[2], तर्हि 'मनीषा' [3]'पतञ्जलिरि'ति न सिद्ध्येत्।

केचित्तु मनः-पतच्छब्दयोः पृषोदरादित्वादन्त्यलोपे अकारस्यैव पररूप-माहुः। शकानां—देशविशेषाणाम्, अन्धुः = कूपः—शकन्धुः। कर्कणां

बृहच्छब्दरत्नः

ऽनुवृत्त्या वार्त्तिकाऽर्थक्रोडीकरणाऽर्थमिति वाच्यम्। 'सर्वत्र लोहितादिकतन्तेभ्य' इत्यादिनिर्देशेन तत्सङ्ग्रहात्। श्लोकेति। यत्तु 'वृत्तौ भवं वार्त्तिकमि'त्याहुः। तन्न। 'भाष्य'पदस्याऽनन्वयाऽऽपत्तेः। 'वार्त्तिक'शब्दस्य यौगिकत्वेन पूर्वनिपाता-ऽऽपत्तेश्च। 'शकन्ध्वादीनां पररूपमि'त्यर्थे सप्तम्यनुपपन्नेत्यत आह—शकन्ध्वादिविषय इति। 'तच्च टेरि'ति सामर्थ्यलभ्यमिति ध्वनयितुमाह—अत इति। आहुरिति।

लघुशब्दरत्नः

दोषमाशङ्क्य एकदेशिनोक्तं–'रूपग्रहणात् परस्य यादृशं रूपमि'त्यादि भाष्ये। तत्तु[4] ह्रस्वत्वस्य रूपत्वाऽभिमानेन। सिद्धान्ते तु स्पष्टाऽर्थमेव रूपग्रहणमिति तत्रैव भाष्ये सूचितम्।

इको गुण (१।१।३) इति सूत्रस्थकैय्यटस्तु चिन्त्य एव। तत्र हि—'इक्परिभाषाऽभावे 'जनेर्गुणोऽनुनासिकः स्यादि'ति शङ्किते, 'पररूपेण शुद्धो भविष्यती'ति भाष्ये उक्तम्। तस्य मदुक्तरीत्या उपपत्तेः[5]। 'ऐऔजि'ति सूत्रस्थकैय्यटस्तु पूर्वपक्षोपपादकत्वान्न [6]स्वार्थे साधक इति दिक्। 'नाऽवक्लृप्तौ यदे'ति पाठे न च्छन्दोभङ्गः। तद्भ्रमसादिति। 'वृत्तौ भवमि'ति व्याख्याने 'वार्त्तिक'शब्दस्य पूर्वनिपाताऽऽपत्तिरित्याहुः। विषये इति। 'शकन्ध्वादिष्वि'ति विषयसप्तमीति भावः। अत [7]आहेति। ईदृशव्याख्यानतो लब्धमाहेत्यर्थः। आहुरिति। अत्राऽरुचिबीजन्तु 'वचनद्वयव्यापारो व्यर्थः,पृषोदरादित्वाट्टिलोपेनैव सिद्धेरि'ति। देशविशेषाणा-

[1] 'अत एवाह' इति मुद्रितेषु, लिखितादर्शेषु च क्वचित् पाठः।
[2] 'अकारस्यैवेष्यते' इति मुद्रितेषु पाठः।
[3] 'पतञ्जलिरित्यादि' इति घ. पाठः। मुद्रितेषु तु पतञ्जलिरि'ति पाठो नास्ति।
[4] 'ह्रस्वस्य रूपत्वाऽभिमानेन' इति क. घ. पाठः।
[5] 'उपपत्तेरिति दिक्' इत्येव क. पाठः।
[6] 'स्वार्थसाधकः' इति घ. पाठः।
[7] 'अत एवाह' इति मुद्रितेषु पाठः।

राज्ञाम्—अन्धुः। बदरीवाची तु 'कर्कन्धू'शब्दो दीर्घान्तः 'अन्दूदृम्भू' इत्यादिना उणादिषु वक्ष्यते।

अटतीति अटा। पचाद्यच्। कुलस्य अटा—कुलटा। ईष उञ्छे, ईष गत्यादिषु, आभ्यां गुरोश्च हलः (३।३।१०३) इति अप्रत्यये ईषा। मनस ईषा मनीषा। हलस्य ईषा हलीषा = लाङ्गलदण्डः। मूर्द्धन्योपधः। यस्तु—

'प्रभुशङ्करयोरीशः स्त्रियां लाङ्गलदण्डके।'

—इति रभसकोशात् तालव्योपधस्तस्मिन् परे आद्गुणः (६।१।८७) इत्येव भवति—हलेशा। पतन् अञ्जलिर्यस्मिन् नमस्कार्यत्वादिति पतञ्जलिः।

मार्तण्ड इति। केचिदत्र सवर्णदीर्घमेवाऽऽहुः[1]। 'परा मार्ताण्ड-मास्यत्', 'पुनर्मार्ताण्डमाभरत्,' 'विश्वो मार्ताण्डोऽव्रजदि'त्यादिवैदिकप्रयोगा-स्तेषामनुकूलाः। ओत्वोष्ठयोरिति। अकारस्य, ओत्वोष्ठयोश्चैकत्र समासे स्थितौ सत्यामिदं प्रवर्त्तते। तेनेह न–'वृषलसुतौष्ठव्रणस्ते' इति।

'अव्यक्त'शब्दं व्याचष्टे–ध्वनेरिति। अनुकरणस्येति। परिस्फुटा-ऽकारादिवर्णस्येति भावः। तस्य चाऽनुकरणत्वं किञ्चित्साम्येन बोध्यम्।

यत्तु प्राचोक्तम्—'अतः किम्?। दकारान्ते मा भूदि'ति। यच्च व्याख्यातं-'दकारान्त इति रूपाऽन्तरोपलक्षणं 'वटक्,' 'मरुत्' इत्यादेरपी'ति।

---

**बृहच्छब्दरत्नः**

अत्राऽरुचिबीजन्तु 'पृषोदरादित्वेन टिलोपसिद्धेर्वचनद्वयव्यापारो व्यर्थ' इति।

सत्यामिति। प्रत्यासत्तिन्यायादिति भावः। एतेन 'ओत्वोष्ठयोरुत्तरपदत्वे प्रवृत्तिरि'ति निरस्तम्। बहुलद्वयसंस्कारकताऽनापत्त्या 'उत्तरपदाऽवयवयोरोत्वो-ष्ठयोरि'त्यर्थस्यैव युक्तत्वात्। अत एव 'दन्त्योष्ठ्यो वः स्मृतो बुधैरि'ति शिष्टप्रयोगः

---

**लघुशब्दरत्नः**

मिति। 'देशविशेष'शब्दस्य यौगिकत्वेन जातिवाचकत्वाऽभावाद् विशेषणानां चाऽजातेः (१।२।५२) इति न निषेध इति बोध्यम्।

कुलस्याऽटेति। कर्मणः शेषत्वविवक्षायां षष्ठी। अन्यथा कर्मण्यणि '[2]कुलाटी'ति स्यात्। किंचित्साम्येनेति। तदभावे हि भग्नदन्ताद्युच्चारिताऽव्यक्तशब्दे एव स्यात्। अव्यक्तत्वं चाऽर्थबोधाऽजनकत्वेनाऽपि वक्तुं शक्यमित्याहुः।

---

[1] 'सवर्णदीर्घमाहुः' इति मुद्रितेषु पाठः।

[2] 'कुलाटीति स्यादिति भावः' इति मुद्रितेषु पाठः।

**तन्निःसारम्। प्रश्नस्य, 'दान्त' इत्युत्तरस्य च निरालम्बनत्वात्।**

**यत्तु व्याचख्युः—'अतो गुणे (६।१।९७) इत्यतोऽत इत्यनुवर्त्त्य शब्दाऽधिकाराऽऽश्रयणात्सिद्धमि'ति प्रश्नः। 'यदा जश्त्ववशाद् दान्तत्वं, तदाऽपि स्यात्। पुनरद्ग्रहणे तु '[1]श्रौततान्तत्वस्य विवक्षणान्नेत्युत्तरमि'ति। तच्चिन्त्यम्। जश्त्वशास्त्रस्याऽसिद्धत्वेन पररूपस्यैव प्रवृत्तेः। नाम्रेडितस्य (६।१।९९)**

---

बृहच्छब्दरत्नः

सङ्गच्छते। निरालम्बनत्वादिति। प्रश्ने तत्त्वन्तु सिद्धान्तदूषणाऽतिरिक्तदूषणवत्त्वम्। [2]तच्च अन्त्येप्रवृत्त्या[3] स्पष्टमेव। न च अच्छब्दोपादानेऽपि अन्त्यस्य दुर्वारमिति वाच्यम्। 'नाऽनर्थकेऽलोऽन्त्यविधिरि'ति निषेधात्। यत्तु 'पूर्वपरयोरि'त्यत्र समुदायस्य षष्ठीनिर्दिष्टत्वात्, 'अन्त्यस्य तु वे'ति ज्ञापकाच्च नाऽन्त्याऽऽदेश' इति। तत्तु सम्पूर्णाऽनुकरणे प्रवृत्त्या 'वृषाकप्यग्निकुसितकुसीदानामुदात्त' इत्यादावनिष्टाऽऽपत्तेः, 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति व्युत्पत्तिविरुद्धत्वात्, 'कृष्णर्द्धिरि'त्याद्यसिद्धिप्रसङ्गात्, उपधासञ्ज्ञासूत्रस्थभाष्यविरोधात्, आम्रेडितस्य परगर्भितत्वेन 'आदेः परस्ये'त्यस्य दुर्वारत्वेन निषेध-विकल्पयोरिष्टव्यवस्थाऽनापत्त्या च, 'अन्त्यस्ये'त्यस्य वैयर्थ्याऽभावाच्च उपेक्ष्यम्। उत्तरे तत्त्वं तूत्तराऽन्तरसहितत्वम्। तच्च दर्शितरीत्या स्पष्टमेव। तच्चाऽयुक्तम्। प्रश्नकर्त्तुरुत्तरदातुश्च अज्ञानकल्पनाऽऽपत्तेः। एतेन व्याख्यानग्रन्थोऽप्यपास्तः। उपात्तलक्ष्ये एव दोषस्य स्पष्टत्वेन रूपाऽन्तरपर्यन्तधावनस्य निर्बीजत्वात्। अत एत 'व्याख्यानग्रन्थे दोषाऽनुक्तेर्न्यूनते'ति मन्दोक्तमपास्तम्।

प्रवृत्तेरिति। न च कार्यकालपक्षे इतिशब्दाऽनपेक्षत्वेन अन्तरङ्गत्वाज्जश्त्वमिति वाच्यम्। 'नाजानन्तर्ये' इति निषेधात्। ननु 'अत्'ग्रहणसामर्थ्यात्

---

लघुशब्दरत्नः

निरालम्बनत्वादिति। 'अद्'ग्रहणं तद्भिन्नव्यावृत्त्यर्थमित्यर्थस्य बालैरपि सुज्ञेयत्वेन'अतः किमि'ति प्रश्नस्य, 'दान्ते मा भूत्, वटक्, मरुदित्यत्र च मा भूदि'त्युत्तरस्य च निरालत्वम्बनत्वमित्यर्थः। शब्दाधिकारेति। तदाश्रयणात् 'अच्छब्दस्ये'त्यर्थो भविष्यतीति भावः। तदापि स्यादिति। एकदेशविकृतन्यायेनाऽच्छब्दत्वादिति भावः। जश्त्वशास्त्रस्येति। 'अनुकार्याऽनुकरणयोर्भेदे पदान्ततया जश्त्वेऽपी'त्यादिः। तदसिद्धत्वेन अत एव सत्त्वादिति भावः।

ननु पुनरद्ग्रहणाद् जश्त्वाऽसिद्धत्वमपि बाद्धयतामत आह—नाम्रेडितेति।

---

[1] 'श्रौत' इति लिखितेषु नास्ति।

[2] तच्च=अतिरिक्तदूषणवत्त्वं चेत्यर्थः।

[3] 'तच्च मितदन्त्ये प्रवृत्त्या' इति. क. ख. पाठः।

इति निषेधे 'पटत्पटदिती'त्युदाहरणस्याऽसम्बद्धत्वाऽऽपत्तेश्च । तत्र हि भवदुक्तरीत्या प्राप्तिरेव नास्ति । दान्तत्वात् ।

एतेना'ऽनुकार्याऽनुकरणयोरभेदविवक्षया विभक्त्यभावेन 'गवित्यय-माहे'तिवदपदत्वात् 'पटत् इती'त्यत्र जश्त्वं ने'ति ग्रन्थोऽपि प्रत्युक्तः। उत्तरग्रन्थविरोधात् । [1]जश्त्ववशान्नस्याऽसिद्धतया पररूपेणैव बाधाच्च ।

ननु तदपि नित्यं, तथा च कथं पररूपविरहेण प्रयोग इति चेन्न। '[2]अलौकिकं प्रक्रियावाक्यमिदमि'ति स्वयमेव व्याख्यातत्वात् । संहिताया

बृहच्छब्दरत्नः

जश्त्वाऽविषयेऽनुकार्याऽनुकरणयोरभेदविवक्षायामेव अस्य प्रवृत्तिरिति चेन्न। 'पटि'-त्येकदेशाऽनुकरणेनेष्टसिद्धौ, रूपाऽन्तरस्य त्वदुक्तरीत्या सूत्राऽऽरम्भेऽपि दुर्वारत्वात्, सूत्रवैयर्थ्याऽऽपत्तेः। अपदान्ताऽधिकारेणैव सिद्धौ अद्ग्रहणस्य वैयर्थ्याऽनु-द्धाराच्च। पररूपेणैवेति। तथा च 'अपदत्वादि'ति हेतूपन्यासो न युक्त इति भावः। एतेनाऽत्र पौनरुक्त्यमित्यपास्तम् ।

अविवक्षायामिति। अत्र च मानं 'संहितायामि'ति वचनमेव। तद्धि असंहितायां यणादिनिवृत्त्यर्थम्। तत्र कालव्यवधानेनाऽनुष्ठितानां ज्योतिष्टोमादीनां फलाऽजनक-त्ववत्, कालव्यवहिततया उच्चारितानां दध्यादिशब्दानां भ्रमाऽऽपादकानाम् 'एकः शब्दः सम्यग् ज्ञात' इत्यादिश्रुतिभिः फलजनकत्वबोधने मानाऽभावेन, तादृश-शब्दस्याऽसाधुत्वात् शास्त्राऽप्रवृत्तौ, संहिताऽधिकारस्य वैयर्थ्याऽऽपत्तौ, तादृशकाल-व्यवेतस्याऽपि साधुत्वाऽबोधनद्वारा [3]तद्व्यावर्त्तकतया संहिताऽधिकारः सार्थकः। तत्र कालव्यवायोऽपि नाऽनियतः, संहिततयोच्चारणे सर्वत्राऽर्द्धमात्राकालस्य सत्त्वेन

लघुशब्दरत्नः

उदाहरणस्य=वृत्त्यादिस्थस्य। अनुकार्यानुकरणयोरिति। सर्वत्र जश्त्वप्राप्त्योदाहरणा-ऽसम्भवाऽऽशङ्कायां ह्येतदुक्तं तैरिति बोध्यम्। उत्तरग्रन्थेति। 'नाम्रेडितस्ये'त्यस्य 'पटत्पट-दिती'त्युदाहरणपरग्रन्थेत्यर्थः। ननु स ग्रन्थो जश्त्वाऽसिद्धत्वेन योज्य इति चेत्। तत्राऽऽह— जश्त्वेति। तस्याऽसिद्धतया पररूपेणैव भवितव्यमिति, जश्त्वस्याऽप्रवृत्तिलक्षणो बाधः। एवं च[4] 'यदा जश्त्ववशाद्दान्तत्वमि'ति ग्रन्थाऽसङ्गतिरिति सेयमुभयतः [5]स्पाशा रज्जुरिति भावः।

[1] 'जश्त्वस्याऽसिद्धतया' इति मुद्रितः पाठः।
[2] 'अलौकिकप्रक्रियावाक्यमिदमिति' इति लिखितेषु पाठः।
[3] 'तद्व्यावृत्ततया' इति क. ख. पाठः।
[4] चकारः क. नास्ति।
[5] 'उभयतः पाशा' इति घ. पाठः।

अविवक्षायां तत्सम्भवाच्चेति दिक् ।

---

**बृहच्छब्दरत्नः**

तदपेक्षयाऽधिको मात्राकाल एव। अत एव 'अर्द्धमात्राकालो, मात्राकालोऽवग्रह' इति विरुद्धाऽर्थप्रातिशाख्ययोरविरोधः। अत एव 'मुहूर्त्तादिव्यवधाने नाऽर्थबोधो, नाऽपि साधुत्वमि'ति वृद्धाः। अयमेव 'संहिताया अविवक्षायामि'त्यस्याऽर्थः। न हि संहितयोरुच्चारणे संहिताया अविवक्षेति। अत एव 'सम्बुद्धौ शाकल्यस्येतावनार्षे' इति सूत्रं चरितार्थम्। तत्राऽवग्रहबोधकप्रमाणेन स्वविषये संहितानित्यत्वबोधकस्य बाधः।

दिगिति। दिकर्थस्तु गुरुभूतशब्दाऽधिकारे प्रमाणाऽभावः। किञ्च 'स्वं रूपमि'त्यस्य दुर्वारत्वेन, जश्त्वे कृते अकारोत्तरतकाराऽभावेन, प्राप्त्यभावात्। जश्त्वे 'अत्'शब्दस्य स्थानित्वे मानाऽभावाच्च। अपि च 'नाम्रेडितस्य तस्तु वे'तिवक्तव्ये 'अन्त्य'ग्रहणसामर्थ्येन 'अव्यक्ते'ति सूत्रे तान्तत्वस्य अविवक्षणमावश्यकम्। ध्वनितश्चाऽयमर्थः 'एकाचो न श्रदिती'त्यत्र जश्त्वशास्त्राऽनुपन्यासेन मूलकृता। न च अत्राऽस्तु अविवक्षा, पूर्वत्र न किञ्चिन्मानमिति वाच्यम्। निषेधसंनियोगशिष्टतया विकल्पविधानस्यैव मानत्वात्। अन्यथा 'आम्रेडितस्याऽन्त्यस्ये'तिसूत्रयित्वा, 'ने'त्येव सूत्रयेत्। आम्रेडितविषये 'आम्रेडितस्याऽन्त्यस्ये'त्यनेन 'अव्यक्ते'ति सूत्रस्य बाधः। यद्वा योगविभागसामर्थ्येन 'अनन्तरस्ये'तिन्यायं बाधित्वा आम्रेडिते उभयोरपि निषेधः। एतावान् परं विशेषः'-अव्यक्ते'ति सूत्रस्य अनाम्रेडिते चरितार्थत्वेन, आम्रेडितविषये नित्यतया निषेधः। 'आम्रेडितस्ये'त्यस्य अचरितार्थत्वेन षोडशीग्रहणाऽग्रहणन्यायेन विकल्पः।

एतेन 'अत' इति न ह्रस्वाऽकारनिर्देशः, 'अतो गुणे' इत्यत एव तदनुवृत्तेः, 'नाऽऽम्रेडितस्ये'ति ज्ञापकाच्च, तत्र प्रतिपत्तिलाघवाय 'अद' इति निर्देश्यमि'ति प्रश्नाशयः। उत्तरस्य च-'दकारान्ताऽनुकरणे तत्र मा भूदित्यर्थ' इति परास्तम्। तपरसूत्रे दकारप्रश्लेषे प्रतिपत्तिलाघवाऽभावाच्च। तान्ताऽनुकरणे अप्राप्त्यापत्तेश्च। तत्र तान्तत्वस्य अविवक्षायामपि, तकारभिन्न-तवर्गा-ऽन्तस्यैव ग्रहणम्। सजातीयग्रहणसम्भवे उपलक्षणेन विजातीयग्रहणे मानाऽभावात्। अत एव 'हल्ग्रहणेन तुग्रहणेनैव सिद्धौ अन्त्यग्रहणं व्यर्थ'मित्याद्यपास्तम्। एवञ्च [1]'वटदि'त्यादौ पररूपं संहिताविवक्षायां भवत्येवेत्यास्माकीनः पन्थाः। 'एकाचो न श्रदिती'त्यत्र जश्त्वशास्त्राऽनुपन्यासेन दोषशङ्का तु मन्दैव। पररूपनिषेधोदाहरणप्रतिपिपादयिषया

---

**लघुशब्दरत्नः**

दिगिति। दिगर्थस्तु 'अपदान्तादि'त्यनुवृत्त्यैव जश्त्वविषये व्यावृत्तिसिद्धेः, पुनरद्ग्रहणं व्यर्थमेव। एतेन 'पुनरद्ग्रहणं श्रौततान्तत्वविवक्षाद्वारा जश्त्वाऽविषये अभेदविवक्षायामेव

---

[1] 'वटात्' इति क. ख. पाठः।

**अकः सवर्णे ( ६।१।१०१ )। अचि पर इति। यदा तु ऊष्मणाम् ईषद्विवृतत्वमाश्रित्य नाज्झलौ ( १।१।१० ) इति सूत्रं प्रत्याख्यायते, तदेह 'अची'ति नाऽनुवर्त्तनीयम्। 'अकोऽकि दीर्घ' इति सुवचम्।**

बृहच्छब्दरत्नः

प्रवृत्तत्वात्। अन्यथा 'सुद्ध्युपास्यः' 'वाप्यश्व' इत्यादौ सुप्समासादिशास्त्राऽनुपन्यासेन सर्वेषां न्यूनताऽऽपत्तेः। उत्तरसूत्रोदाहरणे प्रासङ्गिकजश्त्वशास्त्रोपन्यासस्तु प्राचां पूर्वाऽपरविरोधप्रदर्शनाऽर्थः। यदा त्विति। अत्राऽरुचिबीजन्तु प्रयत्नभेदाऽङ्गीकारेऽपि उत्तराऽर्थमनुवर्त्त्यम्। [1]न च मण्डूकाऽनुवृत्तिः। मध्ये अनन्वयाऽभावेन तस्या अयुक्तत्वात्।

सुवचमिति। 'अक्'शब्देन अकारादीनां क्रमेणोपस्थितत्वाद् यथासङ्ख्यसूत्रस्य प्रवृत्तिः। सञ्ज्ञाशब्दे यथासङ्ख्यसूत्रप्रवृत्त्यर्थं सूत्राऽन्तरस्थक्रमग्रहणात्। 'ऊकालोऽजि'ति सूत्रे नाऽपि शक्तिग्राहकम्। कोशादिनैव तत्सिद्धेरित्याद्यग्रे निरूपयिष्यामः। तथा च अक्शब्देन अकाराऽष्टादशभेदोपस्थित्यनन्तरम् इकाराद्यष्टादशभेदोपस्थितिः। अष्टादशभेदेषु परं न क्रमेणोपस्थितिः। तेषां क्रमेण क्वचिदप्यपाठात्। अणुदित्सूत्रे क्रमस्याऽनपेक्षणाच्च। अतो 'मतीशः', 'मध्वरिरि'त्यादौ दीर्घतदभावयोः सिद्धिः। इदञ्च 'परस्मैपदानां णलि'त्यादौ यथासङ्ख्यं ब्रुवता, 'संयन्ते'त्यादौ निरनुनासिके सानुनासिकलोपं ब्रुवता भाष्यकारेण ध्वनितम्। अत एव 'इको यणची'त्यादीनां विविक्तविषयलाभः।

ननु 'दधि-ऋकार' इत्यादावादेशवारणाऽर्थम् 'ऋति ऋ वे'त्यादौ सवर्णपदमावश्यकमिति चेत्। अत्रोच्यते—'ऋतः ऌति ऋ वा' 'ऌ वा' इत्याकारकं वचनद्वयं पाठ्यम्। द्वितीयवचने [2]'ऋत' इत्यस्य, 'ऌती'त्यस्य चाऽनुवृत्तिः। पूर्ववचनस्य च ऋऌवर्णयोः सावर्ण्येन 'होतृ-ऋकार' इत्यादौ प्रवृत्तिः। न चैवं 'होतृ-ऌकारः' 'होतृ-ऋकार' इत्यादौ ईषत्स्पृष्ट-ऋकारऌकारौ दुर्वाराविति वाच्यम्। यथास्थितसूत्र-वार्त्तिकेऽपि दुर्वारत्वेनेष्टाऽऽपत्तेः। वस्तुतस्तु वचनद्वयकरणसामर्थ्याद् द्विरेफवति मूर्द्धस्थानयुक्ते ईषत्स्पृष्ट-ऋकारस्य, दन्त्यस्थानसम्बन्धवति ऌकारस्य च चरितार्थत्वेनाऽदोषः। एवञ्च 'ऋति' 'ऌती'त्यपि न वक्तव्यं भवतीति महल्लाघवम्। न चैवं 'होतृ-ऌकार' इत्यत्र विवृतऋकारोऽपि न स्यादिति वाच्यम्। 'ऌ वे'ति-

लघुशब्दरत्नः

यथा स्यात्, न तु भेदविवक्षायां जश्त्वविषये इत्यर्थकमि'त्यपास्तम्। ममाऽद्ग्रहणन्तु शब्दाऽधिकाराऽनित्यत्वज्ञापनाऽर्थमिति दिक्। सुवचमिति। जातिपक्षाऽऽश्रयणे यथासङ्ख्येनेष्टसिद्धेरिति भावः। एवंरीत्या यथासङ्ख्यम् इको यणचि (६।१।७७) इत्यत्राऽपि बोध्यमिति

[1] 'ल च मेडकानुवृत्तिः' इति क. ख. पाठः।
[2] 'अत इत्यस्य' इति क. ख. पाठः।

बृहच्छब्दरत्नः

वार्त्तिके विकल्पविधानसामर्थ्यात्प्रवृत्तेः। न च विकल्पोक्तिः 'होतृ-लृकार' इति-रूपाऽर्थमस्त्विति वाच्यम्। संहिताया अविवक्षायां रूपसिद्धेः। प्रकृतिभावेन सिद्धेश्च। 'वे'त्यनुवृत्त्यैव सिद्धौ पुनर्वेत्यनुवृत्त्या भावरूपाऽऽदेशस्यैव बोधनाच्च। न चैवं यः कश्चिदादेशोऽस्त्विति वाच्यम्। दीर्घप्रकरणे विहितत्वेन तत्सञ्ज्ञकस्यैवा-ऽपेक्षितत्वात्। न चैवम् आकारादिरादेशो भविष्यतीति वाच्यम्। तेषाम् अत्यन्तवैसादृश्यात्। न च विवृतलृकार एवाऽनेन समुच्चीयते इति वाच्यम्। सवर्णसञ्ज्ञासूत्रस्थकैय्यटादिभिस्तस्याऽनङ्गीकारात्। प्रकृति-प्रत्यया-ऽऽगमाऽऽ-देशा-ऽनुबन्धेषु आचार्यैरऽव्यवहृतत्वेन, प्रयोगेषु अदर्शनेन च तदभावकल्पनाच्च। 'स्वरा विंशतिरेकश्चे'ति शिक्षायाम् अपरिगणनाच्च। अत एव सवर्णसञ्ज्ञासूत्रे, 'अकः सवर्णे' इति सूत्रे च 'लृति लृ वे'ति वार्त्तिकस्योदाहरणद्वयमेवोपन्यस्तं भगवता भाष्यकारेण। एतेन 'पूर्वसदृशो दीर्घो भवती'त्यर्थेनैव इष्टसिद्धौ 'प्रथमयोः पूर्व-सवर्ण' इति सूत्रे 'सवर्ण'ग्रहणं व्यर्थमि'त्यपास्तम्। 'गमॄनि'त्यादौ ऋकाररूप-दीर्घाऽर्थं तस्याऽऽवश्यकत्वात्। अत 'ऋलृवर्णयोः सावर्ण्यं न सूत्रसम्मतमि'ति मन्दोक्तमपास्तम्। 'अप्रतिषिद्धमनुमतं भवती'ति न्यायविरोधाच्च।

वस्तुतस्तु 'पूर्वपरयोरि'ति द्विवचनबलेन उभयोरपि स्थानित्वबोधनान्मूर्द्ध-स्थानयुक्तस्थानिनोऽबाधेन, अधिकप्रवेशेऽपि विवृतो भवत्येव। अत एव भाष्योक्तं प्रत्याख्यानं सङ्गच्छते। तथा हि 'ऋलृगि'ति सूत्रे उभयोरप्येकप्रयत्नत्वे माना-ऽभावेन, अन्यतरवैयर्थ्याऽऽपत्तेश्च एकस्य विवृतत्वम्, एकस्य ईषत्स्पृष्टत्वम् अवश्य-मभ्युपगन्तव्यम्। ऋलृवर्णयोः सावर्ण्यविधिरपि विनिगमकाऽभावाद् द्वयोरपि। न च ईषत्स्पृष्टविवृतयोरपि स्यादिति वाच्यम्। प्रथमोपस्थितस्थानैक्याऽभावे एव वार्त्तिकप्रवृत्तेः। तत्र ऋकारवैयर्थ्यशङ्काया अनुदयात्, उकारसाहचर्याच्च विवृ-तत्वम्। अत एव 'उरण्रपर' इत्यत्राऽण्त्वाद् ग्रहणकशास्त्रप्रवृत्तिः। यद्यपि ऋदित् लृदित्ग्रहणेषु अणि, अनणि च तपरसूत्रप्रवृत्त्या ऋदित्सु लृदित्कार्यस्य, लृदित्सु ऋदित्कार्यस्य दुर्वारत्वं, तथापि पृथगनुबन्धकरणेन, विजातीयव्यवहारकरण-सामर्थ्यान्नेति सर्वेषां समानम्। ईषत्स्पृष्टलृकारेण ईषत्स्पृष्टऋकारः, लृकारः। अस्तु वा अयोगवाहेषु पाठः। अत एव 'होतॄकारः' 'होतॣकारः' इत्यत्र वार्त्तिक-विधेययोः ऋकार-लृकारयोरच्त्वं, तत्स्थाने तत्प्रयत्नकप्लुतसिद्धिश्च। प्लुतविधौ 'अचश्चे'ति परिभाषाया उपस्थितत्वात्, प्लुतसञ्ज्ञाया अच्सञ्ज्ञासापेक्षत्वाच्च। तत्र दीर्घशब्दवाच्यताया उभयोरपि सत्त्वात् सूत्रेणैव 'होतृ ऋकार' इत्यत्र विवृतत्व-रेफद्वययुक्तत्वयोरन्यतरस्यैव ग्रहणे मानाऽभावात्सिसाधयिषितं रूपद्वयं सिद्धम्।

न च 'रेफद्वययुक्तत्वमि'त्यनेन स्थानत आन्तर्यस्यैव फलितत्वे, 'यत्राऽनेक-विधमान्तर्यमि'त्यनेन रेफद्वययुक्त एव स्यादिति वाच्यम्। रेफद्वययुक्तत्वस्य प्रत्येक-मभावेन, विवृतगुणस्य तु प्रत्येकं सत्त्वेनाऽऽधिक्याद् बाधितुमशक्यत्वात्। गुणकृताऽऽन्तरतम्येनाऽपि न स्थानत आन्तरतम्यस्य बाधः। अन्यत्र प्रबलत्वेन निर्णीतस्य समत्वौचित्यात्। न च रेफद्वययुक्तत्वे मानाऽभावः। मात्राकालिक-

**वर्णद्वयं द्विमात्रमिति । यत्तु प्राचा व्याख्यातं—'दीर्घे प्राप्ते ह्रस्व ऋकारः, लृकारश्च विधीयते' इति । तद्भाष्य-कैयटादिविरोधादुपेक्ष्यम् ।**

**एङः पदान्तात् (६।१।१०९) । ङसिङसोश्च (६।१।११०) इत्यस्याऽऽरम्भादस्य पदान्तविषयत्वे लब्धे, उत्तरार्थं पदान्तादिति स्पष्टार्थमिहैव कृतम् ।**

**सर्वत्र विभाषा गोः ( ६।१।१२२ ) यद्यपि 'छन्दसी'ति न प्रकृतं, तथाऽपि यजुष्युरः (६।१।११७) । इत्यादिप्रक्रमाच्छन्दस्येवेदमिति सम्भाव्येत,**

बृहच्छब्दरत्नः

रेफस्याऽप्रसिद्धत्वेन द्विमात्रत्वसम्पादनाऽर्थमुक्तकल्पनाया एवोचितत्वात् । [1]तत्समुदितस्येषत्स्पृष्टत्वमेव । त्रिमात्रे ईषत्स्पृष्टे ऋकारे तु रेफत्रयं, चतुष्टयं वा । शेषं प्राग्वत् । विवृतऋकारे तु रेफसदृशो भागः पूर्वमल्पः, उत्तरत्राऽच्सदृशो भागो बहुः । एवं दीर्घ-प्लुतयोरपि बोध्यम् । ध्वनितञ्चेदं प्रत्याहाराऽऽह्निके भाष्ये । एतेन 'आद्यस्य मध्ये द्वौ रेफौ' इत्यादिमूलग्रन्थो व्याख्यातः । एवं 'होतृ-लृकार' इत्यत्र रेफवत्तासादृश्येन विवृतो दीर्घः, लकारवत्तासादृश्येन त्वीषत्स्पृष्टो लृकारः । न च शब्दपरविप्रतिषेधेन लृकाराऽऽन्तरतम्यमेव व्यवस्थाहेतुरिति वाच्यम् । लक्ष्यगतपरत्वमादाय विप्रतिषेधसूत्राऽप्रवृत्तेः । ऋकारस्याऽपि स्थानित्वेन तदनुकूलाऽऽदेशस्याऽप्युचितत्वाच्च । अत एव 'स्थानसाम्यात्, प्रयत्नसाम्यात्, अन्तरङ्गत्वाच्च विवृत-ऋकार एव स्यादि'ति निरस्तम् । 'स्थानसाम्यस्योभयत्राऽपि अविशिष्टत्वे दुर्बलप्रयत्नसाम्येन व्यवस्थायाः कर्त्तुमशक्यत्वात् । दीर्घस्योभयाऽऽश्रितत्वेनाऽन्तरङ्गत्वाऽभावाच्च । ईषत्स्पृष्ट-ऋकार-लृकारयोर्ह्रस्वमात्रस्थानिकैकादेशे[2], तत्स्थानिकप्लुते च [3]साधुत्वं, नाऽन्यत्र । अत एव 'गम्लृ'शब्दात्षष्ठीबहुवचने दीर्घो विवृत ऋकार इत्यादि बोध्यम् । अत एवोत्तरवार्त्तिकस्य लृकारद्वये न प्रवृत्तिः । एवञ्चोक्तरीत्यैव अनिष्टविषये प्राप्त्यभावेन सूत्रस्थपदसम्बन्धोऽप्यनावश्यक इति ध्येयम् । स्पष्टञ्चेदं भाष्यसिद्धान्तपरिशीलनशालिनाम् ।

लघुशब्दरत्नः

सूचितम् । तद्भाष्येति । तुल्यास्य (१।१।९) सूत्रस्थभाष्येत्यर्थः । तत्र हि अकः सवर्णे (६।१।१०१) इति सूत्रेणैतद्वार्त्तिकाऽन्यथासिद्धिरुद्भाविता ।

आरम्भादिति । 'अपदान्ताच्चेन्ङसिङसोरेवे'ति नियमादिति भावः । उत्तरार्थमिति । इकोऽसवर्णे (६।१।१२७) इत्याद्यर्थमित्यर्थः[4] । स्पष्टार्थमिति । 'विभक्तौ चेन्ङसिङसोरेवे'ति नियमशङ्कावारणाऽर्थमिति भावः ।

[1] 'शाशात् समुदितस्य' इति क. ख. पाठः ।
[2] 'ह्रस्वमात्रस्थानिकैकादेश'इति क. ख. पाठः ।
[3] 'स्थानित्वम्' इति क. पाठः । [4] 'इत्यर्थः' इति मुद्रितेषु नास्ति ।

**अतः 'सर्वत्रे'त्युक्तम् । तद्व्याचष्टे—लोके वेदे चेति । इह 'एङ' इत्यनुवर्त्य 'एङन्तस्य गोरि'ति व्याख्येयम् । तेनेह न—'चित्रग्वग्रमि'ति । प्रतिपदोक्तस्य एङो ग्रहणान्नेह—'हे [1]चित्रगोऽग्रम्' ।**

---

### बृहच्छब्दरत्नः

ननु 'नान्ते'ति पाठे अनन्तरत्वात्पूर्वरूपस्यैव निषेधः स्यात्, न यणादेशस्येति मनसि निधायाऽऽह—प्रतिपदोक्तेति । यद्वा 'प्रकृत्ये'ति पाठे 'गोरि'ति षष्ठ्या अनन्वयात् अन्तग्रहणमनुवर्त्यं, सामर्थ्यलभ्यं वा । तच्चोपदेशिकाऽन्तपरम् । एतेन 'उत्तरार्थं षष्ठीनिर्देशस्य सत्त्वेन अत्र प्रथमया विपरिणाम' इति परास्तम् ।

प्रथमाऽन्तस्य उत्तरत्र षष्ठ्या विपरिणामस्य युक्तत्वादित्याशनेनाऽऽह—प्रतिपदोक्तेति । एङ्ग्रहणाऽनुवृत्तिसामर्थ्यात्, अन्त्यग्रहणाऽनुवृत्तिसामर्थ्याद्वा प्रतिपदोक्त एङ् गृह्यते इति भावः । अत एव 'गोः पूर्व-णित्त्वा-ऽऽत्त्व-स्वरप्रतिषेधो वक्तव्य' इति स्थानिवद्भावनिषेधवार्त्तिकं नाऽऽरम्भणीयम् । यद्यपि अवङादेशविधायकयोः 'अवङ् स्फोटायनस्य' 'इन्द्रे चे'त्युत्तरसूत्रयोः प्रकारद्वयमपि वक्तुमशक्यं, तथापि निषेधप्रकरणसाहचर्यात्, 'अनन्तरस्ये'ति न्यायाच्च यणिभन्नाऽपवादकत्वं निर्णीयते । यद्वा 'सर्वत्रे'ति सूत्रे एङन्तप्रतिपदोक्तगोशब्दाऽर्थस्य निर्णीतत्वेन, अर्थाऽधिकारात्तस्यैवाऽनुवृत्तिः । अत एव 'गवाऽग्रं' 'गवेन्द्र' इति बहुव्रीहौ व्युत्पत्त्यव्युत्पत्तिपक्षभेदेन व्यपदेशिवद्भावात् प्रातिपदिकत्व-प्रत्ययत्वनिमित्ताऽन्तोदात्ताऽऽद्युदात्तयोः प्राप्तत्वेन, अवङ् कदा चिदन्तोदात्तोऽपि स्यादित्याशङ्क्य स्वरसिद्ध्यर्थम् अगागमो वक्तव्यः, तस्य च आगमत्वेन अनुदात्तत्वान्न दोष इतिवार्त्तिककारैरुक्तम्, आद्युदात्तनिपातनेन भाष्यकारैः प्रत्याख्यातम् । इदञ्च 'चित्रग्विन्द्रः' 'चित्रग्वग्रमि'त्यत्र अवङभावे एव सङ्गच्छते । अन्यथा रूपभेदाऽऽपत्तेर्भाष्यवार्त्तिकादिग्रन्था असङ्गताः स्युः ।

नन्वेवमपि 'चित्रगो अग्रं' 'चित्रगो इन्द्र' इत्यादौ अवङस्वीकारे किं मानमिति चेत् । अत्रोच्यते—आद्युदात्तनिपातनेन अक्प्रत्याख्यानपरभाष्यस्यैव मानत्वात् । अत्र अकि आमन्त्रितस्वरेण आद्युदात्तत्वात्, अवङि गकाराऽकारस्य सति शिष्टोदात्तत्वादिति स्वरभेदात् । न च 'गवाक्ष' इत्यादौ अवङ आद्युदात्तत्वस्य

---

### लघुशब्दरत्नः

इत्यनुवर्त्यैति । 'षष्ठ्या विपरिणमय्ये'त्यपि बोध्यम् । प्रतिपदोक्तस्येति । एङ्ग्रहणाऽऽवृत्त्येति भावः । प्रतिपदोक्तपरिभाषया वा । वर्णग्रहणे तदप्रवृत्तिज्ञापकस्य तदनित्यतामात्रज्ञापकत्वम् । ध्वनितं चेदम् ओत् (१।१।१५) सूत्रे भाष्ये । एङः पदान्तात् (६।१।१९) इत्यत्र तु हलोऽनन्तराः (१।१।७) इत्यादिनिर्देशान्न प्रतिपदोक्तग्रहणम् । अत्र च स्थानिवत्सूत्रस्थं भाष्यं मानमित्यन्यत्र विस्तरः ।

---

[1] 'हे चित्रगो अग्रम्' इति ङ. पाठः ।

प्रकृतिभाव इति। प्रकृत्याऽन्तःपादम् (६।१।११५) इति सूत्रात्प्रकृत्येत्यनुवृत्तेः। यद्यपि भाष्ये इको गुणवृद्धी (१।१।३) इति सूत्रे 'नान्तःपादमि'ति पाठः स्थितः। पाष्ठभाष्येऽप्येवम्। तथापि शाकलसूत्रे (६।१।१२७) 'ह्रस्वश्चे'ति चकारेण प्रकृत्येत्यनुकृष्यते' इति भाष्यदर्शनात् 'प्रकृत्याऽन्तःपादमि'ति पाठोऽपि साधुरेव। 'ने'ति पाठे तु सर्वत्र (६।१।१२२) इति सूत्रेण पूर्वरूपमेव [1]विकल्प्यते [2]इत्यवधेयम्।

अवङ् स्फोटायनस्य (६।१।१२३)। अत्राऽपि 'एङन्तस्य गोरि'ति

---

बृहच्छब्दरत्नः

श्रवणं मा भूदिति तस्योपदेशिवद्भावो वाच्य इति, समासाऽन्तोदात्तादिव आमन्त्रिताऽऽद्युदात्तादपि प्राक् अवङ्स्वरप्रवृत्तौ,[3] पश्चादामन्त्रितस्वरे, स्वरभेदाऽभाव इति वाच्यम्। समानकालप्रवृत्तिकस्य परत्वेन प्रथमं प्राप्तस्य समासस्वरस्य प्रागप्रवृत्त्या उपदेशिवद्भावस्य चारितार्थ्येन, अवङः पूर्वप्रवृत्तौ, अन्तरङ्गस्याऽऽमन्त्रितस्वरस्याऽप्रवृत्तौ मानाऽभावात्। चकारेणेति। स च ह्रस्वाऽभाव-प्रकृतिभावाऽर्थः। भाष्यन्तु ह्रस्वपक्षे तदभावपरं, न तु चकारप्रत्याख्यानपरमित्याहुः।

प्रकृत्यान्त इति। प्रकृतिशब्दः स्वभाववाची, कारणवाची वा। 'दुस्त्यजा प्रकृतिः' 'दध्नः क्षीरं प्रकृतिरि'त्यादौ तथा दर्शनात्। अत एव 'सुजाते अश्वसूनृते' इत्यत्र न पूर्वरूपं, नाऽप्ययादेशः। 'सर्वत्रे'ति सूत्रे विभक्तिविपरिणामेनाऽन्वयः, अन्तःपदाऽनुवृत्तिर्वा नेतीति। अस्मिन्पक्षे 'प्लुतप्रगृह्या' इत्यादावध्याहारेणाऽन्वयः। 'अन्तःपादमव्यपरे' इति सूत्रे 'देवदत्तहन्तरि हत'न्यायाऽऽश्रयणम्। इदमेव बोधयितुं 'सर्वत्रे'ति सूत्रात्पूर्वम् 'अथ प्रकृतभाव' इति ग्रन्थो नोपन्यस्तो मूलकारेण। किञ्चाऽनुवृत्त्यर्थमत्रोपन्यास इति ध्वनयन् व्याचष्टे—अत्रापीत्यादिना।

---

लघुशब्दरत्नः

पूर्वरूपमेवेति। पूर्वरूपमपीत्यर्थः। 'गोशब्दस्य यद्यत्प्राप्तं तन्ने'ति व्याख्यानेन [4]'नाऽन्तः पादमि'त्यनेनेव पूर्वत्वादिकं विकल्पेन [5]निषिध्यते इत्यर्थः। तेन अवादेशोऽपि न।

एङन्तस्य गोरिति। 'प्रतिपदोक्तस्यैङ' इत्यपि बोध्यम्। ननु गोरग्वचनं [6]स्वरसिद्धयर्थम्, अन्यथा अवङः कदा चिदन्तोदात्तोऽपि स्यात्' इति एतत्सूत्रस्थभाष्यप्रामाण्याच्चित्रग्वप्र-

---

[1] 'विकल्प्येत' इति क्वचित्पाठः।
[2] 'विकल्प्येतेत्यवधेयम्' इति मुद्रितः पाठः।
[3] 'अवङ्स्वरे प्रवृत्ते' इति क. ख. पाठः।
[4] 'नान्तः पादमित्यनेनैव' इति मुद्रितेषु, लिखितेषु च पाठः।
[5] 'निषिध्येतेत्यर्थः' इति मुद्रितः पाठः।
[6] 'गवाग्रे स्वरसिध्यर्थम्' इति भाष्ये पाठः।

२३

व्याख्येयम्। 'अगि'ति सूत्रयितुमुचितम्। विभाषाऽनुवृत्तेः 'स्फोटायन'ग्रहणं पूजाऽर्थम्। गवीति। यत्तु प्राचा 'गवे' इति प्रत्युदाहृतम्। तन्न। सत्यप्यवङि अतो गुणे (६।१।७७) इति पररूपेण रूपसिद्धेः। न च सत्यवङि ङेर्यादेशः स्यात्, स्त्रियां तु टाप् स्यादिति वाच्यम्। सन्निपातपरिभाषया यादेश-टापोः

---

बृहच्छब्दरत्नः

स्फोटायनेति। स्फोटः अयनं यस्य। स्फोटप्रतिपादक इत्यर्थः। 'स्फौटायन' इति पाठे तु नडादित्वम्, अश्वादित्वं वा कल्प्यम्। पररूपेणेति। एकादेशे सन्निपातपरिभाषा तु न प्रवर्त्तते। सिद्धान्ते 'गवाग्रमि'त्यादौ तथैवाऽङ्गीकारात्।

टाप्स्यादिति। ननु टाबपवादो 'जातेरस्त्री'ति ङीष् स्यादिति चेन्न। सन्निपात-परिभाषया तदप्रवृत्तेः। अत एव गोशब्दस्य स्त्रीत्वेऽपि 'गवादने'त्यादौ[1] टाप् भव-त्येवेत्यभियुक्ताः। 'या-से'त्याद्यनुरोधेन टापि परिभाषाया अप्रवृत्तिरित्याशयः।

सन्निपातेति। अत्र च मूलं 'वाऽचि ह्रस्वश्चे'त्येव सिद्धौ 'वामि' 'ङिति

---

लघुशब्दरत्नः

मि'त्यत्र अवङभावोऽस्तु, तत्र अगवङो रूपे विशेषस्य स्पष्टत्वात्, 'चित्रगोऽग्रमि'त्यत्र अवङभाव-कल्पने किं मानमिति चेन्न। उपदेशे आद्युदात्तत्वनिपातनेनाऽवङन्यासस्थापनपरभाष्यस्य मान-त्वात्। 'चित्रगो'शब्द आमन्त्रिताऽऽद्युदात्तत्वेन अन्ताऽनुदात्तः। तत्र[2] अकि तस्य आगमाऽनुदात्तत्वे, उभयोरनुदात्तयोरेव श्रवणं स्यात्। आद्युदात्तत्वनिपातने तु गकाराऽकारस्योदात्तस्येति विशेषः स्पष्टः। न च 'गवाक्ष' इत्यादाववङ आद्युदात्तस्य श्रवणं मा भूदिति, तस्योपदेशिवद्भावो वाच्य इति, समासान्तोदात्तादिव आमन्त्रिताऽऽद्युदात्तादपि प्राग् अवङस्वरप्रवृत्तौ, पश्चादामन्त्रितस्वरे, स्वरभेदाऽभाव इति वाच्यम्। 'गवाक्ष' इत्यादौ समानकालप्रवृत्तिकस्य परत्वेन प्रथमं प्राप्तस्य समासस्वरस्य [3]प्रागप्रवृत्त्या उपदेशिवद्भाववचनचारितार्थ्येन, अङ्गसञ्ज्ञासापेक्ष-बहिरङ्ग-गुणा-ऽपेक्षया अन्तरङ्गत्वात्पूर्वमेवाऽऽमन्त्रितस्वरप्राप्त्या, तदप्रवृत्तिसम्पादनेऽस्य सामर्थ्याऽभावात्। तद् ध्वनयन्नाह—अगितीत्यादि। यथान्यासे तु आद्युदात्तनिपातनो-पदेशिवद्भावयोः करणे गौरवादस्यौचित्यमिति भावः।

स्थानिवत्सूत्रे भाष्येऽप्युक्तं—'गोः पूर्वत्वे स्थानिवत्त्वप्रतिषेधो वक्तव्यः। चित्रग्वग्रम्। सर्वत्र विभाषा गोः (६।१।१२२) इति पूर्वत्वं प्राप्नोति। नैष[4] दोषः। 'एङ' इति वर्त्तते, तत्र 'अनल्विधौ' इति प्रतिषेधो भविष्यति। एवं तर्हि 'चित्रगोऽग्रमि'त्यत्र प्राप्नोती'ति। अत्र 'पूर्वत्व'शब्देन तदपवादप्रकृतिभावा-ऽवङौ, विनिगमनाविरहात्। सर्वत्र (६।१।१२२) इति अवङः (६।१।१२३) इत्यस्याप्युपलक्षणम्। अत एव 'प्रकृतिभावे' इति त्यक्त्वा 'पूर्वत्वे'

---

१ 'मपादनोरावा प्रसित्येवेत्यभियुक्ताः' ? इति क. ख. पाठः।

२ 'अगि' इति साम्प्रदायिकाः पठन्ति।

३ 'प्रागप्रवृत्तौ' इति मुद्रितः पाठः।

४ 'नैष दोष' इति क. नास्ति। भाष्ये तु वर्त्ततेऽयं पाठः।

सुसमाधानत्वात् । न च सा अनित्येति वाच्यम् । तावताऽप्यौत्सर्गिक-तत्प्रवृत्त्या इष्टसिद्धेः ।

गवाक्ष इति । 'गवाम् अक्षीवे'ति विग्रहः । अक्ष्णोऽदर्शनात् (५।४।७६) इत्यच् समासान्तः । वातायने रूढोऽयम् । पुंस्त्वं लोकात् ।

इन्द्रे च (६।१।१२४) । आरम्भसामर्थ्यान्नित्यमिदम् । 'इन्द्रे च नित्यमि'ति पाठस्तु भाष्याऽसंमतत्वादुपेक्षितः ।

एहि कृष्णेति । दूराद्धूते च (८।२।८४) इति प्लुतः । यत्तु

---

बृहच्छब्दरत्नः

ह्रस्वश्चे'ति सूत्रद्वयम् । तद्धि 'भ्रूणामि'त्यादौ नुट् स्यादित्येतदर्थम् । नुटि आम्त्वस्याऽविनाशेऽपि अजादित्वस्य विनाशात् ।

इष्टसिद्धेरिति । यत्तु 'गवे' इति न ङयि सिद्धं रूपं, किन्तु ङौ आपाद्यम् । तथा च 'ङौ 'गवे' इति स्यादित्यध्याहारेण योज्यमि'ति । तन्न । ईदृशाऽध्याहारेणाऽन्वयस्य काऽप्यदर्शनात् । स्वायत्ते शब्दप्रयोगे अपशब्दोच्चारणस्याऽयुक्तत्वाच्च । सन्निपातपरिभाषया गुणाऽप्रवृत्तौ न्यायाऽनुगृहीतरूपाऽऽपादनस्यैव युक्तत्वाच्च ।

वातायनेति । प्राण्यवयवत्वे तु अवङ् न । इदञ्च 'शाच्छोरन्यतरस्यामि'-त्यादिसूत्रे भाष्ये स्पष्टम् ।

इन्द्रे च । भाष्येति । यद्यपि क्वचिद्भाष्यपुस्तके 'इन्द्रे' इति सप्तम्यन्तमेव पठ्यते, तथापि तत्सूत्रैकदेशाऽनुवादपरतयैव व्याख्येयम् । 'खरि चे'त्यादाविवाऽनुवृत्त्यर्थं 'च'शब्दस्याऽऽवश्यकत्वेन तत्सहितपाठ एव युक्तः । यद्यप्यत्राऽऽकरग्रन्थे षष्ठीतत्पुरुषोत्तर-षष्ठीतत्पुरुषे अवङर्थं क्लेश आदृतः, तथापि तन्मुधैव । वाक्ये

---

लघुशब्दरत्नः

इत्युक्तं वार्त्तिके, भाष्ये च । 'चित्रगो'शब्दस्य लाक्षणिकत्वेऽपि स्थानिवत्त्वात्प्राप्तौ, तत्प्रतिषेधः कृतः । एङः प्रतिपदोक्तत्वाऽऽश्रयणे तु तन्न कार्यमिति लाघवमिति दिक् ।

टाप्स्यादिति । ङीष उपलक्षणमिदम् । इष्टसिद्धेरिति । 'गवी'त्यस्य स्थाने 'गवे' इति स्यादि'ति तद्ग्रन्थव्याख्यानमपि [1]नाऽञ्जसम् ।

भाष्याऽसंमतत्वादिति । [2]'इन्द्रे इति सामर्थ्यान्नित्यमि'ति तदुक्तेरिति भावः ।

प्लुत इति । प्रकृतिभाववचनसामर्थ्यादिव प्लुतस्य तत्र नाऽसिद्धत्वमिति भावः । उपलक्षणेति । एवं चाऽसत्यप्याह्वाने भवतीति भावः ।

---

[1] 'न समञ्जसम्' इति मुद्रितेषु पाठः ।
[2] 'इन्द्रे चेति' इति घ. पाठः । स च भावप्रकाशादिविरुद्धः ।

'कृष्णा ३ एही'ति प्राचोक्तम्। तन्न। दूराद्धूते च ( ८।२।८४ ) इत्यादौ वाक्यस्य टेः ( ८।२।८२ ) इत्यधिकारात्।

चक्रयत्रेति। इह स्कोः ( ८।२।२९ ) इति कलोपो न। यणः काय-कालपक्षे बहिरङ्गपरिभाषया असिद्धत्वात्, स्थानिवद्भावाच्च। 'पूर्वत्राऽसिद्धीये ने'ति तु नास्ति, 'तस्य दोषः संयोगादिलोपे'त्याद्युक्तेः।

दूराद्धूते च ( ८।२।८४ )। हूतम्-आह्वानम्। तच्च सम्बोधनमात्रो-पलक्षणमित्यभिप्रेत्याह–दूरात्सम्बोधन इति। उपलक्षणतया व्याख्यानस्य फलमुदाहरति–सक्तून् पिबेत्यादि।

गुरोरनृतः ( ८।२।८६ )। 'अपि'शब्दो गुरोरगुरोश्च टेः प्लुताऽर्थः।

बृहच्छब्दरत्नः

गोशब्दस्य इन्द्रशब्दपरत्वाऽसम्भवेन समासाऽऽक्षेपेऽपि, इन्द्रशब्दस्योत्तरपदत्वा-ऽऽक्षेपे मानाऽभावादित्याहुः। 'स्कोः संयोगाद्योरि'ति सूत्रे 'झल' इत्यनुवर्त्तते। 'झलः पूर्वौ यौ सकार-ककारौ, झलन्तो यः संयोग' इति चाऽर्थ' इत्याकरः। तद्-वृथेति ध्वनयन्नाह–इहेति।

सम्बोधनेति। इदञ्च 'अतो रोरप्लुतादप्लुते' इत्यादिसूत्रे भाष्ये ध्वनितम्। स्पष्टञ्च वृत्ति-हरदत्तग्रन्थयोः। 'सम्बोधनाऽधिकरणवाक्यसम्बन्धिटेः प्लुत' इत्युक्ते सम्बोधनस्य वाक्याऽन्तत्वम् आर्थसमाजग्रस्तम्। तच्च सम्बोधनं 'सम्बोधने चे'ति-शास्त्रव्युत्पादितमेव। तच्च अविशेषात्पित्रादिसङ्केतितदेवदत्तादिप्रकृतिकं, पाचक-शब्दादिप्रकृतिकं च।

गुरोरगुरोश्चेति। 'अपि'शब्दस्य यथाप्राप्तसमुच्चयाऽर्थत्वात्। 'गुरोरनृत' इति सूत्रे अपिशब्दबोध्यादिरपि 'गुरोरनृत' इति साहचर्यात् अनृद्रूप एव गृह्यते। एतेन 'सर्वप्लुतविधीनां वैकल्पिकत्वेन 'गुरोरनृत' इत्यस्याऽभावे टिप्लुतविधायक-प्रवृत्तेः, टिप्लुतविधायकाऽभावे 'गुरोरनृत' इत्यस्य प्रवृत्तेः सिद्धत्वेन 'अपि'शब्दो व्यर्थ' इत्यपास्तम्।

न चैवम् एकैकग्रहणं व्यर्थमिति वाच्यम्। सर्वेषां भावपक्षे समुच्चयवारणार्थं तस्य सत्त्वादित्याहुः। गुरोः समुच्चये तु अन्त्यलघौ सूत्राऽप्रवृत्तिः। सन्नियोग-शिष्टन्यायात्। किञ्च अनन्त्यस्य गुरोरनेन प्लुते, अन्त्यस्य 'प्रत्यभिवादेऽशूद्रे' 'दूराद्धूते च' 'अनुदात्तं प्रश्नाऽन्ताभिपूजितयोरि'त्यादीनां दुर्वारत्वेन 'यावदुद्देश्यं विधेयसम्बन्ध' इति न्यायमाश्रित्य अनेनैव प्लुतसिद्धौ 'अनन्त्यस्यापी'त्यस्य वैयर्थ्या-

लघुशब्दरत्नः

एहीत्यादिरिति। वाक्यस्य टेः (८।२।८२) इत्युक्तेरिति भावः।

बृहच्छब्दरत्नः

ऽऽपत्तेः। तथा च 'वाक्यस्य टेरि'त्यधिकारेण अन्त्यस्यैव गुरोर्ग्रहणे सूत्रवैयर्थ्यं स्पष्टमेव। तस्मादपिशब्दसमुच्चेतव्याऽर्थे सर्वत्रोद्देश्यनिष्ठधर्माऽभावोऽवश्यमभ्युपगन्तव्यः। एकैकग्रहणन्तु एतद्विधिविहितानां पर्यायाऽर्थम्। टिसमुच्चयबोधने तु तक्रकौण्डिन्यन्यायेन प्राप्तबाधाऽभावबोधनद्वारा तस्याऽपि विहितत्वमस्त्येव।

ननु 'अनुदात्तं पदमेकवर्जमि'ति परिभाषणात्समावेशाऽनापत्तौ किमेकैकग्रहणेनेति चेन्न। अन्त्याऽनुदात्तविषये चारितार्थ्यात्। किञ्च एकग्रहणस्य विधीयमानोपलक्षणाऽर्थत्वेन 'तवै चाऽन्तश्च युगपदि'त्यादिविधेयाऽनेकाऽबाधवदत्राऽप्यापत्तेः[१]। तव्यतस्तित्त्वेन उक्तपरिभाषायास्त्रिपाद्यामप्रवृत्तेः, शङ्कैवाऽयुक्तेति तत्त्वम्। इदञ्च 'न सुब्रह्मण्यायामि'ति सूत्रे भाष्ये ध्वनितम्।

यत्तु 'इदं सूत्रं पूर्वशेषभूतं, न प्रकरणविषयमि'ति। तन्न। 'अनुदात्तं प्रश्नान्ताऽभिपूजितयोरि'त्यादिसूत्रविषयेऽपि भाष्यकृता प्रवृत्तेरङ्गीकृतत्वात्। न चैवम् 'अद्याऽमावास्येत्यात्था३' इत्यादौ 'निगृह्याऽनुयोगे चे'त्यादिसूत्रविषये प्रवृत्तिः स्यादिति वाच्यम्। 'दूराद्धूते' इत्यनुवर्त्तनेन सम्बोधने प्रवृत्तेः। अत एव सम्बोधनपदस्थस्यैवाऽनन्त्यस्य गुरोर्ग्रहणम्। अत एव 'इदं सूत्रं वाक्यस्य टेरेतत्सम्बद्धतयैव पठितुं युक्तमि'त्यपास्तम्।

वस्तुतस्तु पूर्वविषये एवाऽस्य प्रवृत्तिः। उपस्थितत्वात्। अत एव 'अपि'-शब्दसमुच्चेतव्यस्य 'वाक्यस्य टेरि'त्यर्थस्य सर्वत्रैकरूप्यतया लाभेन महल्लाघवम्। 'अनुदात्तं प्रश्नाऽन्ता-ऽभिपूजितयोरि'त्यत्र लाघवाद् गुणमात्रं विधीयते। 'दूराद्धूते च' 'अनन्त्यस्याऽपि प्रश्नाऽऽख्यानयोरि'त्यादिना सिद्धत्वात्। अनन्त्यस्य टेराख्यानं च अभिपूजितत्वमेवेति भाष्यारूढं व्याख्यानाऽन्तरं त्वग्रे निरूपयिष्यामः। अत एव 'चिदिति चोपमार्थे' इति सूत्रे प्लुतसमावेशार्थश्चकारः सार्थकः। 'स्वरितमाम्रेडितेऽसूयासंमती'त्यादिसूत्रविषये 'गुरोरनृत' इति सूत्रस्य प्रवृत्तिरि'ति भाष्यादिग्रन्थाश्चिन्त्या एव। 'स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु' 'आम्रेडितं भर्त्सने' इति सूत्रद्वयं 'वाक्यादेरामन्त्रितस्ये'त्यादिविहितद्वित्वविषये एव प्रवर्त्तते इति तत्रैव निरूपयिष्यामः। न चैवं दूरात्सम्बोधनविषयकप्रश्नान्ताऽभिपूजिते 'एचोऽप्रगृह्यस्ये'-त्यस्याऽप्रवृत्तिः। 'अदूराद्धूते' इत्युक्तत्वेन 'दूराद्धूते' इतिसूत्राऽविषये' इत्यर्थलाभात्। 'एचोऽप्रगृह्यस्ये'ति सूत्रेण तु मानाऽन्तरेण प्राप्तप्लुतस्य स्थानिमात्रं समर्प्यते। अत एव 'एचोऽप्रगृह्यस्ये'ति सूत्रे उदात्तपदमनुवर्त्तमानम् इदुतोर्विधीयमानयोरेव विशेषणम्। प्लुतस्तु यथाविषयम् अनुदात्तादिस्वरक इति भाष्ये स्पष्टमिति वाच्यम्। 'प्रश्नाऽन्ता-ऽभिपूजित-विचार्यमाण-प्रत्यभिवाद-याज्याऽन्तेषु' इति परिगणनेन 'अदूराद्धूते' इत्यस्य प्रत्याख्यानात्।

वस्तुतस्तु 'अदूराद्धूते' इत्यस्य प्रत्याख्यानं न युक्तम्। 'अदूराद्धूते' इति न

[१] 'विधेयाऽनेकाऽबोधवत् अत्राऽप्यापत्तेः' इति ख. पाठः।

**देवदत्तेति।** अस्य 'एही'त्यादिः। **एवमग्रेऽपि।**

**सर्वः प्लुत इति।** तथा च अग्नीत्प्रेषणे परस्य च ( ८।२।९२ ) इति सूत्रे भाष्यम्–[1]"सर्वः प्लुतः साहसमनिच्छता[2] विभाषा कर्त्तव्यः' इति। साहसम् = शास्त्रत्यागः, तदनिच्छता[3]। 'शास्त्रम् अनुरुन्धानेनाऽपीत्यर्थ' इति

बृहच्छब्दरत्नः

वक्तव्यमि'त्यनुक्तत्वेन भाष्यात् तथैव लाभात्। न दूराद्धूतपदं सम्बोधनपरं, नाऽपि 'दूराद्धूते'चेति सूत्रपरम्। लक्षणायां मानाऽभावात्। तेन दूरात्सम्बोधन-दूराह्वानविशिष्टा-ऽभिपूजिताऽर्थे 'स्वागच्छ भो धर्ममाणवक अग्निभूते पटो' इत्यत्र 'एचोऽप्रगृह्यस्ये'ति सूत्रं न प्रवर्त्तते' इति सुधियां पन्थाः।

'देवदत्त' इति सम्बोधनाऽन्तम्। अन्यस्याऽसम्भवात्। 'दूराद्धूते' इत्यनुवृत्तेश्च। तच्च क्रियाऽन्वयि, क्रियावाचकं च, श्रुतम्, अश्रुतं वा। अन्त्ये अर्थाऽध्याहारः, शब्दाऽध्याहारो वा। स चादौ, अन्त्ये वा। प्रकृते च आदौ तिङन्त-शब्दाऽध्याहार एव। 'वाक्यस्य टेः' 'एकतिङ् वाक्यमि'त्युक्तत्वादिति ध्वनयन्नाह-अस्येति। मूले 'एही'त्यस्याऽनुपन्यासस्तु 'एही'त्यस्य प्लुतभाक्त्वाऽभावबोधनाऽर्थम्। तद्बीजन्तु अग्रे स्फुटी भविष्यति। ननु एवं 'कृष्णा३एही'ति प्राचोदाहृते 'प्रसीदे'त्यध्याहारेण 'कृष्णे'त्यस्य वाक्याऽन्तत्वमस्त्येवेति चेन्न। 'एही'त्यस्य वैयर्थ्याऽऽपत्तेः। वैषम्ये बीजाऽनापत्तेश्च।

**तथा चेति।** न हि 'प्राचामि'ति विभाषया भावाऽभावरूप एवार्थ उच्यते, किन्तु 'अन्यदेवे'त्यर्थोऽपि। अतः 'अग्नीदग्नीन्विहरे'त्यत्र 'अग्नीत्प्रेषणे' इतिसूत्र-स्याऽप्रवृत्तिरिति स्पष्टं भाष्ये। अत एव 'क्लृ३प्तशिखे'त्यादौ प्रतिषेधविषये प्लुत-सिद्धिः। अत एव च अनेन प्रत्यभिवादवाक्ये अकारः, आकारो वा पाक्षिको विधीयते। तथा चोक्तं मनुना—

'आयुष्मान् भव सौम्ये'ति वाच्यो विप्रोऽभिवादने।
अकारश्चाऽस्य नाम्नोऽन्ते, वाच्यः पूर्वोऽक्षरः प्लुतः'॥ इति।

'आकारश्चे'ति पाठान्तरम्। 'पूर्वोऽक्षरः प्लुत' इत्यनेन वाक्यभेदेन प्लुतोऽपि विधीयते। पूर्वत्वं च विधेयाऽकाराऽपेक्षया। इदञ्च सन्ध्यक्षराऽतिरिक्तविषयकम्। तत्र हि 'एचोऽप्रगृह्यस्ये'त्यादिना विशेषाऽन्तरस्य विधानात्। 'भवे'त्यर्थपरम्। आकारस्य आगमत्वम् अन्त्यशब्देन बोध्यते, एचः पूर्वशब्देन यथा। 'प्राचामि'ति न प्रकरणशेषभूतं, किन्तु 'प्रत्यभिवादे' इत्यारभ्य 'गुरोरनृत' इत्यन्तानामेव। तस्यैवोपस्थितत्वात्। अत एव अत्र करणं चरितार्थम्। अत एव 'विभाषा पृष्ट-

[1] 'सर्व एव प्लुतः साहसमनिच्छता विभाषा' इति भाष्ये पाठः।

[2] 'साहसमनिच्छताऽपि' इति मुद्रितमनोरमापाठः।

[3] 'तदनिच्छताऽपि' इति मुद्रितमनोरमापाठः।

बृहच्छब्दरत्नः

प्रतिवचने हेरि'ति सूत्रे 'विभाषा'ग्रहणं चरितार्थम्। ध्वनितश्चाऽयमर्थो 'अपर आहे'त्युक्त्या अरुचिबोधनेन भाष्यकारेणेत्याहुः।

नन्वेवमपि 'भोराजन्ये'ति वचनं व्यर्थम्। विकल्पस्य उक्तरीत्यैव सिद्धेः, प्लुतस्याऽपि 'प्रत्यभिवादे' इत्यनेनैव सिद्धेरिति चेन्न। नामगोत्रप्रयोगे एव तद्विधानात्। भोःशब्दस्याऽनामत्वात्। वर्मादीनान्तु नाम्नि अनन्तर्भावः। 'शर्माऽन्तं ब्राह्मणस्य, वर्माऽन्तं क्षत्रियस्ये'त्यादिना नामोद्देशेन तद्विधानात्। अत एव 'द्व्यक्षरं, चतुरक्षरं वा नाम कुर्यादि'त्यादीनां न निर्विषयत्वम्। अत एव शर्मान्ते प्लुतो न। 'वा'शब्दो व्यर्थ एवेत्याहुः।

वस्तुतस्तु 'भो'इत्येव वार्त्तिकं सुवचम्। इतरत्र सूत्रेणैव सिद्धेः। तथा हि 'प्रत्यभिवादवाक्यान्ते नामगोत्रयोः प्लुत'इत्यर्थस्तु न वाचनिकः। किन्तु न्यायसिद्धः। अभिवादनं तावन्नामगोत्राभ्यामेव। तदुक्तं मनुना--'असौ नामाऽहमस्मीति स्वनाम परिकीर्तयेदि'ति। अत्र 'नाम'पदं गोत्रस्याऽप्युपलक्षणम्। 'गार्ग्यहं भोः' 'आयुष्मती भव गार्गी'ति भाष्योदाहरणात्। 'प्रत्यभिवादन'शब्दस्तु न प्रत्युक्तिमात्रपरः। आशीर्बोधकवाक्ये एव प्रसिद्धत्वात्। तद्यथा 'अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुरि'ति। तत्र प्रतिशब्दस्याऽऽभिमुख्याऽर्थत्वेन अभिवादनघटकीभूतशब्दघटकत्वमेवेति निर्विवादम्। प्लुतस्तु प्रधाने कार्यसम्प्रत्ययात् अभिवादनकर्त्रर्थवाचिनोर्नाम-गोत्रयोरेव। आख्यातवाच्यायाः क्रियाया यद्यपि शाब्दं प्राधान्यं, तथापि संस्कारकत्वेन विवक्षितत्वात् अप्रधानतैव। किञ्च 'पदस्ये'त्यस्य 'प्रत्यभिवादे' 'इत्यस्य विशेषणत्वात्, प्रत्यासत्तिन्यायाच्च अभिवादनकर्त्रर्थवाचकस्यैव ग्रहणम्। अपि च प्रत्यभिवादनम् अभिवादनकर्त्तुः सन्तोषाऽर्थम्। सन्तोषश्च प्रत्यभिवादनवाक्यश्रवणोत्तरम्। तदर्थं च तद्बोधकशब्दस्य विलम्बेनोच्चारणम्। तदर्थं च प्लुतस्तत्रैव। [1]एवञ्च तस्य वाक्याऽन्तत्वमावश्यकम्। 'वाक्यस्य टेरि'त्यधिकारात्। तत्र च न नामपदेन बोधकः पाचकादिशब्दः। 'द्वादशेऽहि पिता नाम कुर्यात्' 'शर्माऽन्तं ब्राह्मणस्ये'त्याद्युक्तं प्रथमोपस्थितत्वाद् गृह्यते। 'द्व्यक्षरं, चतुरक्षरं चे'ति तु शर्मादिरहितशब्दविषयकम्। एवञ्च—

'सगोत्रनामशर्माऽहं भवत्यन्तेऽभिवादये'।
इत्येतद्भाषणं यत्तन्मन्त्रे स्यादभिवादनम्'॥

—इति भरद्वाजोक्तरीत्या मन्त्रपददानेन कर्माऽङ्गीभूताऽभिवादनोत्तरप्रत्यभिवादने शर्मादिघटितत्वेऽपि उक्तरीत्या प्लुतो भवत्येव। अन्यत्र शर्मादिप्रयोगस्य ऐच्छिकत्वेनाऽभावेऽपि देवदत्तादीनां प्लुतः। अत एव वृत्ति-भाष्ययोः, उदाहरणप्रत्युदाहरणयोः शर्मादिशब्दराहित्येऽपि दोषाऽभावः। पूर्वोक्तस्मृतिषु सञ्ज्ञापर्यायनामपदेन प्रथमोपस्थितत्वात् स्मृतिबोधितपित्रादिसङ्केतितमेव गृह्यते। वार्त्तिके 'राजन्यविशामि'ति तु विकल्पवदनुवादकमात्रम्। एवं सम्बोध्यमानदेवदत्तस्याऽपि

[1] 'एवं तस्य' इति ख. पाठः।

हरदत्तः। 'वैकल्पिकेषु अनुष्ठानक्लेशं धर्माऽऽधिक्यफलकमपि अशक्तत्वात् अनिच्छतेत्यर्थ' इत्यन्ये।

एतेन 'द्वैपायनो विरहकातर आजुहाव पुत्रेति' इति भागवतं व्याख्यातम्। प्लुतस्य वैकल्पिकत्वात् (१)। किं च 'इह पुत्रशब्दस्यवाक्याऽन्तत्वं नास्ती'त्यपि सुवचम्, आख्यातप्राग्वर्तिनोऽप्यनुकरणसम्भवात् (२)। अपि च अस्तु प्लुतः, प्रकृतिभावस्तु वैकल्पिकत्वान्माऽस्तु। तथा च ई३चाक्रवर्मणस्य (६।१।१३०) इति सूत्रे भाष्यम्—'ईग्रहणेन नाऽर्थः, वशा३इयं, वशेयमि'ति। प्लुतप्रकृतिभावः सर्वोऽपि चाक्रवर्मणमते नास्तीति

---

**बृहच्छब्दरत्नः**

प्रवृत्तिनिवृत्तिबोधनद्वारा संस्कार्यत्वात् आर्थप्राधान्येन, 'दूराद्धूते चे'त्यादिसूत्राणामपि सम्बोध्यमानदेवदत्तादिबोधकशब्दस्य वाक्यान्ते सत्येव प्रवृत्तिः। 'गुरोरनृत' इति सूत्रे प्राधान्यात्, उपस्थितत्वाच्च अनृतो गुरुः सम्बोध्यमानबोधकदेवदत्तादिपदाऽवयवीभूत एव गृह्यते। सञ्ज्ञाशब्दो 'दूराद्धूते चे'त्यादौ पित्रादिसङ्केतित एव गृह्यते इति नाऽऽग्रहः। सङ्कोचे मानाऽभावात्। स्पष्टञ्चेदमत्रैव मनोरमाग्रन्थे सूक्ष्मदृशाम्। वैकल्पिकत्वादिति। 'अप्लुतवद्भावस्ये'ति शेषः। सर्वोऽपीति। इतिशब्दपरः, अनितिशब्दपरश्चेत्यर्थः। अयमेवाऽर्थः 'उभयत्र विभाषेयमि'त्युक्त्या मूले प्रदर्शितः। भाष्यनये नित्यविधिर्विकल्पविधेर्निरवकाशत्वाद्बाधकः। चतुर्थेति। केचित्तु क्रियावाचकशब्दरहितमेवाऽनुकार्यं 'पुत्रे'ति शब्दोच्चारणम्। तथा च 'एकतिङ् वाक्यम्' 'वाक्यस्य टेरि'त्युक्तत्वेन प्लुतप्रसङ्ग एव नास्तीत्याहुः।

---

**लघुशब्दरत्नः**

हरदत्त इति। कैयटोऽप्येवम्। अत्र पक्षे [1]विभाषा पृष्ट (८।२।९३) इत्यत्र 'विभाषा'ग्रहणमवयुत्याऽनुवादः। 'अविद्वांसः प्रत्यभिवादे' इत्यादि पस्पशास्थं भाष्यमपि वैकल्पिकेषु भावाऽनुष्ठानौचित्येन शास्त्राऽज्ञाननिन्दापरं बोध्यम्। आख्यातप्रागिति। 'पुत्र एही'ति वाक्यस्थस्येत्यर्थः। अनुकरणे [2]दूराद्बोधकत्वाऽभावाच्चेत्यपि बोध्यम्। वैकल्पिकत्वादिति। अस्य अप्लुतवद्भावस्य वैकल्पिकत्वेन तत्पक्षे अस्याऽभावेन तत्त्वमित्यर्थः। प्लुतप्रकृतिभाव इति। तस्य मते अप्लुतवद्भावोक्तेरिति भावः। एतेन 'चाक्रवर्मणस्याऽऽचार्यस्याऽप्लुतवदि'त्येव भाष्योक्तेरिदं सर्वं चिन्त्यमि'त्यपास्तम्। प्रकारान्तरेणाऽप्यप्लुतवद्भावो-

---

[1] 'विभाषेत्यत्र विभाषाग्रहणम्' इति क. पाठः। 'पृष्ट' इति हरिताललेपेन तत्र निःसारितम्।

[2] 'दूराद्बोधकत्वाऽभावाच्च' इति क. पाठः। 'दूरात्सम्बोधकत्वाऽभावाच्च' इति घ. पाठः। 'दूरात्सम्बोधनत्वाऽभावात्' इति मुद्रितः पाठः।

भावः (३)। अपि च-इह [1]'प्रकृतिभावो दुर्लभ एव, अप्लुतवदुपस्थिते (६।१।१२९) इति सूत्रात्। 'उपस्थितं नामाऽवैदिक इतिशब्दः, तस्मिन्परे प्लुतोऽप्लुतवत्स्यात्' इति हि तस्याऽर्थः (४)। –एवं[2] चतुर्धाऽपि निर्वाहे स्पष्टे 'आर्षः प्रयोग' इति श्रीधरोक्तिर्नाऽऽदर्त्तव्या।

द्विवचनमिति। सुप्तिङन्तम् (१।४।१४) इत्यन्तग्रहणेन 'सञ्ज्ञा-विधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति ज्ञापितत्वादिति भावः। तेनेह न–

---

बृहच्छब्दरत्नः

तेनेह नेति। ननु 'अग्नी३ इती'त्यादौ प्लुते प्रगृह्यसञ्ज्ञा न प्राप्नोति, ईदूतो-रनण्त्वात्। जातिपरो निर्देश इति चेत्[3]। तपरसूत्रस्य दुर्वारत्वेन दोषाऽनुद्धारात्। असन्देहाऽर्थं तपकरणमिति चेत्। एवमपि 'घटायोन्मीलितं चक्षुः पटं [4]न हि न पश्यती'ति न्यायेन प्लुतं व्यावर्त्तयेदेव। न च 'तपरसूत्रम् अणि नियमाऽर्थम्, अनणि विध्यर्थमि'ति सिद्धान्तविरोध इति वाच्यम्। व्यक्तिपक्षे उपपादयितुं शक्यत्वेऽपि, जातिपक्षे उपपादयितुमशक्यत्वात्। किञ्च 'अकुर्वहि' इत्यत्र ह्रस्वेऽतिप्रसक्तिः। उपात्तव्यक्तेर्विशेषणत्वेनाऽऽश्रयणं, गुणाऽन्तरयुक्ते तु अभेदक-पक्षान्न दोष इति चेत्। तर्ह्युक्तदोषाऽनुद्धारः।

न च 'प्लुतप्रगृह्या' इत्येकवाक्यताऽऽपन्नप्रगृह्यसञ्ज्ञां प्रति प्लुतस्याऽसिद्धत्वान्न दोषः। न च 'प्लुतः प्रकृत्ये'त्यनेन स्वरसन्धिप्रकरणे प्लुतस्य सिद्धत्वज्ञापनाद् दोष इति वाच्यम्। प्लुतशब्देन तत्स्थानिनो लक्षणया सर्वसामञ्जस्यात्। लक्ष्यता-ऽवच्छेदकञ्च न प्लुतस्थानित्वं, किन्तु स्थानिनिष्ठतद्रूपत्वम्। न चैवं लक्षणैव दोष इति वाच्यम्। श्रुताऽर्थाऽऽपत्तिमूलकवाक्याऽन्तरकल्पनाऽपेक्षया तस्या एवाऽभ्यर्हितत्वात्। अस्तु वा विशेषाऽपेक्षं ज्ञापकम्—'सिद्धः प्लुतः प्लुतत्वप्रयुक्त-प्रकृतिभावे, न तु प्रगृह्यत्वप्रयुक्तप्रकृतिभावे' इति वाच्यम्। एवमपि प्लुतस्य सिद्धत्वेन 'अप्रगृह्यस्ये'त्यस्याऽप्रवृत्तौ, अनुनासिकप्रवृत्तिर्दुर्वारैवे'ति।

अत्राऽऽहुर्भाष्यकाराः–'यथोद्देशं सञ्ज्ञापरिभाषमि'त्याश्रयणात् प्रगृह्यसञ्ज्ञां प्रति प्लुतस्याऽसिद्धत्वेन, त्रिमात्रेऽपि द्विमात्रबुद्धेरप्रतिघातात् सिद्धा सञ्ज्ञा अनुकार्ये। अनुकरणे तु 'प्रकृतिवदनुकरणमि'त्यतिदेशादि'ति। नन्वेवमपि

---

लघुशब्दरत्नः

ऽत्रेत्याह—अपि चेति। अवैदिक इति। अस्य पुराणस्थत्वेनाऽवैदिकत्वं स्पष्टमेव।

---

[1] 'प्रकृतिभावोऽपि' इति मुद्रितेषु पाठः।

[2] 'एवञ्च चतुर्द्धाऽपि' इति ङ. पाठः।

[3] 'चेन्न' इति क. ख. पाठः।

[4] 'न हि' इति पाठः क. नास्ति।

**कुमार्योर्वध्वोश्चाऽगारं कुमार्यगारं, वध्वगारमि'ति। स्पष्टं चेदं भाष्यादौ। 'द्विवचनाऽन्तं प्रगृह्यं स्यादि'ति तु प्राचः प्रमाद एव।**

**हरी एताविति। इह शाकलं न। प्लुतप्रगृह्याः ( ६।१।१२५ ) इत्यत्र नित्यग्रहणादित्युक्तम्। अत्र वृत्तिकारः-'मणीवादीवां प्रतिषेधो वक्तव्यः'**

---

बृहच्छब्दरत्नः

प्लुतस्याऽसिद्धत्वे प्लुतात्पूर्वमेव प्रगृह्यसञ्ज्ञायाः प्रवृत्तौ, प्लुते कृते, तमेव द्विमात्रत्वेन पश्यन्त्या अपि सञ्ज्ञायाः पुनः प्रवृत्तौ बीजाऽभावेन, 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति न्यायेन च उक्तदोषो दुर्वार एव। न च स्थानिवद्भावेन लाभः। 'ईदूदेद् द्विवचनं प्रगृह्यमि'तिसूत्रविहित-ईकाराऽन्तद्विवचनरूपप्रगृह्यत्वस्य अल्विधित्वादिति चेत्। अत्रोच्यते-सञ्ज्ञायाः कार्याऽर्थत्वेन कार्यसम्भावनायामेव प्रवृत्तिः। प्लुतस्य तु पदाऽन्तरसम्बन्धात् पूर्वमेव अन्तरङ्गत्वात् प्रवृत्तिः, न तत्काले प्रगृह्यसञ्ज्ञाकार्यसम्भावना।

न चैवं 'प्रणिदापयती'त्यत्र पुकि कर्त्तव्ये णत्वस्याऽसिद्धत्वेन अप्राप्तत्वात्, तन्निमित्तघुसञ्ज्ञाया अप्रवृत्तौ, पुकि कृते, णत्वं न स्यात्, दारूपस्याऽऽनर्थक्यादिति वाच्यम्। पुकः पूर्वं णत्वप्रवृत्तियोग्यतायाः सत्त्वेन घुसञ्ज्ञाप्रवृत्तौ बाधकाऽभावात्। 'धातूपसर्गयोः कार्यमन्तरङ्गमि'ति न्यायेन पूर्वं णत्वप्रवृत्तेश्च। 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति न्यायोपन्यसनन्तु पुकि कृते घुत्वाऽभावात् 'अकृतव्यूह'परिभाषया पूर्वं णत्वं न स्यादि'ति शङ्कानिरासाऽर्थम्। दैपः पित्त्वेन, 'दो दद्घोरि'ति 'दो'ग्रहणेन च लक्षणप्रतिपदोक्तपरिभाषाया, निरनुबन्धकपरिभाषायाश्च यथा बाधस्तथा अर्थवत्परिभाषाया अपीत्यङ्गीकारे पुको दारूपाऽन्ताऽवयवत्वेन 'दा'ग्रहणेन ग्रहणाच्च, पुकि कृतेऽपि घुसञ्ज्ञा निर्विघ्नैव।

'प्रनिदारयती'त्यादौ तु न। रेफस्य दारूपाऽवयवत्वे मानाऽभावात्। प्रसङ्गाऽवस्थायामेव रपरत्वेन रेफात्पूर्वं 'दा'रूपाऽलाभाच्च। 'दाधा घ्वदाबि'तिसूत्रे 'दृ' 'धृ' इत्यनयोरनुकरणे आत्त्वाऽलाभेनाऽग्रहणाच्च। 'अदाबि'ति निषेधस्तु वान्तस्यैवेत्यादि भाष्ये स्पष्टम्। न चैवमपि प्लुतात्प्रागपि सञ्ज्ञाप्रवृत्तिर्दुर्वारा, कृते प्लुते अनुनासिकप्रवृत्तेरेव फलत्वादिति वाच्यम्। सञ्ज्ञाया अप्रवृत्तावपि तल्लाभात्। प्रगृह्यत्वप्रयुक्तपर्युदासस्य विधिस्पृष्टत्वेन फलत्वौचित्येन पश्चात्तत्प्रवृत्तेरेव युक्तत्वाच्च। एतेन 'अग्नी३ इती'त्यादौ स्वरसन्धिप्रवृत्तिरेव फलमि'त्यपास्तम्। 'प्रगृह्यम्' इति महासञ्ज्ञाकरणेन सन्ध्यभावप्रयोजकत्वस्याऽऽवश्य-

---

लघुशब्दरत्नः

कुमार्योरिति। अत्र हि प्रत्ययलक्षणेन द्विवचनाऽन्तत्वं, श्रुत्या च ईदन्तत्वमस्तीति भावः। इदं च 'द्विवचनान्तमीदन्तमि'त्यर्थे। 'ईदन्तं यद् द्विवचनं, तदन्तमि'त्यर्थे तदन्तविध्यसम्भव एव दोषो बोध्यः। इत्युक्तमिति। 'मूले' इति शेषः।

इति पठित्वा मणीव, रोदसीव, दम्पतीव, जम्पतीवेत्युदाजहार। तच्च मुनित्रयाऽनुक्तत्वात् अप्रमाणमि'ति कैयट-हरदत्तादयः।

एवं स्थिते—'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सरतौ मम' इति भारतप्रयोगं समर्थयते—इवार्थे इति। वशब्द इति। 'वं प्रचेतसि जानीयादिवाऽर्थे च तदव्ययम्' इति मेदिनी। 'व वा यथा तथैवैवं साम्ये' इत्यमरग्रन्थ-व्याख्याऽवसरे 'शात्रवं व पपुर्यशः' इति कालिदासप्रयोगस्याऽभियुक्तैरुदाहृत-त्वात्, 'कादम्बखण्डितदलानि व पङ्कजानि' इत्यादिदर्शनाच्चेति भावः।

यत्तु पाठाऽन्तरं—'वद्वा यथा तथा' इत्यादि। तदयुक्तम्। नामलिङ्गा-ऽनुशासनप्रक्रमे [1]तद्धितस्य वतेरननुगुणत्वात्। अपत्य-समूहादिपर्यायमध्ये अण्-फिञ्-वुञादीनामनुक्तेश्च।

**अदसो मात्** (१।१।१२)। इह एकारो नाऽनुवर्त्तते। असम्भवादित्य-भिप्रेत्याऽऽह—ईदूताविति। ननु ऊकाराऽनुवृत्तिर्व्यर्था, स्त्रियौ, फले वा 'अमू आसाते' इत्यत्र पूर्वेणैव सिद्धेः, मुत्वस्याऽसिद्धत्वेऽपि एकाराऽन्तत्वा-दत आह—रामकृष्णाविति। पुंसि पूर्वेण न सिध्यति, औकारान्तत्वादिति भावः। अदसो मात् (१।१।१२) इति सूत्रं प्रति तु मूत्व-मीत्वे नाऽसिद्धे। आरम्भसामर्थ्यात्। एकारोऽपीति। तथा च [2]एकाराऽननुवृत्तितात्पर्यग्रह-फलकं माद्ग्रहणमिति भावः।

---

**बृहच्छब्दरत्नः**

कत्वात्। न चैवं कार्यकालपक्षप्रवेशः। 'कार्यविशेषपुरस्कारेण सञ्ज्ञाप्रवृत्तौ कार्यकालपक्षः, कार्यमात्रपुरस्कारेण सञ्ज्ञाप्रवृत्तौ यथोद्देशपक्ष' इति कैय्यटादिभि-रत्रैव व्याख्यातत्वात्। 'ईदूदेदि'त्यत्र दीर्घात्परत्र प्लुतोऽपि प्रश्लिष्यते। तेन कार्यकालपक्षेऽपि न दोष' इत्यस्मत्पितामहचरणाः।

ववायथेति। 'वं प्रचेतसि जानीयादिवाऽर्थे च तदव्ययमि'ति मेदिनीव्याख्या-ऽवसरे 'सत्यभामा' 'भामे'तिवदिवाऽर्थे 'व'शब्दप्रयोग इत्याहुः। आरम्भसामर्थ्यादिति।

---

**लघुशब्दरत्न**

शात्रवं वेति। शात्रवं यश इवेत्यर्थः। 'व वे'त्यादिकोशप्रदर्शनेन 'व'शब्द 'इव'पर्यायः स्वतन्त्र एव, न तु सत्या-भामादिवत् एकदेश इति सूचयति। 'विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्यः' इति वचनेन तादृशस्थले तथाकल्पनेऽपि, अखण्डे पदे[3] तथात्वे मानाऽभावात्।

---

१ 'तद्धितवतेः' इति मुद्रितः पाठः।

२ 'एकाराननुवृत्तितात्पर्यग्रहणफलकम्' इति मुद्रितेषु पाठः।

३ 'अखण्डे पदे तत्त्वे' इति क. शोधितः पाठः।

**अत्रेदं चिन्त्यम्—'ईदूत्सप्तम्यर्थे प्रगृह्यम्', 'अदसः', 'एच्च द्विवचनम्' इत्येव कुतो न सूत्रितम्। एवं हि पूर्वसूत्रस्थम् ईदूद्ग्रहणम्, प्रकृतसूत्रे माद्ग्रहणं च माऽस्तु। एकदेशाऽनुवृत्तिक्लेशोऽपि नेति।**

### बृहच्छब्दरत्नः

ननूत्व-मत्वयोरसिद्धत्वादयादीनां दुर्वारता। न च 'अदसो मादि'त्यस्य वैयर्थ्यम्। अनुनासिकपर्युदासेन चरितार्थत्वात्। अत्रोच्यते—कार्यकालपक्षे 'प्लुतप्रगृह्या अचि नित्यमि'ति सूत्रे यावतां प्रगृह्यसञ्ज्ञा विहिता, ते सर्वे तेन रूपेणोपस्थिताः। एवञ्च 'अदसो मादि'ति सूत्रोपस्थितिसामर्थ्यादयादयो न भवन्ति। अत एव 'अक्षैर्दीव्यती'त्यादौ 'कर्मणि द्वितीयेति' सूत्रे 'दिवः कर्म चे'ति-सूत्रोपस्थितिसामर्थ्यात् पक्षे द्वितीयाऽपी'त्याकरः। एतेन 'शास्त्राऽसिद्धत्वाऽङ्गीकारे मुत्वात्पूर्वमेव अयादीनां प्रवृत्तेः 'अदसो मादि'ति सूत्रेण निवारणं कर्तुमशक्य-मि'त्यपास्तम्। 'आसाते' इत्यादिपदाऽन्तरसम्बन्धात्पूर्वं मुत्वादिप्रवृत्तेर्दुर्वारत्वा-च्च। किञ्च वाक्यसंस्कारपक्षे 'पूर्वत्राऽसिद्धम्' 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनयो-र्दुर्वारत्वेन [1]'परस्परमसिद्धत्वबोधना'द्विप्रतिषेधे परं कार्यमि'ति सूत्रेणोत्वमत्वयो-र्दुर्वारत्वम्। न च 'नाजानन्तर्ये' इति निषेधः। 'वृक्ष इहे'त्यादिसिद्ध्यर्थमीदृशे विषये निषेधाऽप्रवृत्तेः पूर्वमुपपादितत्वात्। एवञ्च 'सकृद्गती'ति न्यायादयादयो न भवन्ति। अपि च 'अदसो मादि'ति सूत्राऽऽरम्भसामर्थ्यादपि अयादयो न।

न चाऽनुनासिकपर्युदासेन चारितार्थ्यम्[2]। अनुनासिकविधावेव 'अप्रगृह्या-

### लघुशब्दरत्नः

आरम्भसामर्थ्यादिति। ननु कार्यकालपक्षे अनुनासिकप्रतिषेधेन चारितार्थ्यम्। [3]तत्पक्षे हि सञ्ज्ञाशास्त्रस्य न पृथग् बोधकत्वम्। पूर्वत्राऽसिद्धम्(८।२।१) इति चाऽतिदेशः कार्या-र्थः। कार्यज्ञानञ्च वाक्याऽर्थबोधोत्तरमिति यद्देशे वाक्याऽर्थबोधस्तद्देशस्थत्वमेव तस्य। किञ्च अधिकारः सः। एवं च मुत्वदृष्ट्या अनुनासिकविधेरसिद्धत्वेन तदेकवाक्यताऽऽपन्नसञ्ज्ञाया अपि तद्दृष्ट्या असिद्धतया, मुत्वशास्त्रेऽनुवृत्त-'पूर्वत्राऽसिद्धमि'त्यत्रत्यपूर्वशब्देनत देकवाक्तता-ऽऽपन्नस्य अदसो मात् (१।१।१२) इत्यस्य ग्रहीतुमशक्यत्वम्। एतेन 'कार्यकालपक्षेऽपि पाठकृत-पूर्वत्वस्याऽनपगमेन सञ्ज्ञां प्रत्यसिद्धत्वं दुर्वारमि'त्यपास्तमिति चेत्। न। 'अप्रगृह्याऽदस' इति न्यासेनैव सिद्धौ, सामान्यसञ्ज्ञासूत्रकरणसामर्थ्येन प्लुतप्रगृह्याः (६।१।१२५) इत्यत्राऽप्युपस्थित्या, तत्सामर्थ्येनाऽसिद्धत्वबाधात्। [4]'हेऽसुका' 'असुके'त्यादौ व्यवस्थितविभाषाऽऽश्रयणात्, तयो-रनभिधानाद्वा सूत्रमतेऽपि नाऽनुनासिक इत्याशयात्। स्पष्टं चेदं भाष्ये।

१ 'परस्परप्रसिद्धत्वबोधनात्' इति क. ख. पाठः।

२ 'चारितार्थ्ये' इति क. ख. पाठः।

३ 'तत्र पक्षे हि' इति घ. पाठः।

४ "हे ऽसुकाऽसुका' इत्यादौ' इति घ. पाठः।

शे ( १।१।१३ )। छान्दसमपीदं सन्दर्भशुद्ध्यर्थमुक्तम्। वस्तुतस्त्वनुकरणाऽर्थतया लोकाऽर्थमपि सम्भवत्येव। 'त्वे रायः' 'मे रायः' इत्यादौ 'त्वे इति', 'मे इति' इत्यनुकरणे प्रयोजनलाभात्। अस्मे इति। अस्मभ्यमित्यर्थः। भ्यसः सुपां सुलुक् (७।१।३९) इति 'शे' आदेशः। शेषे लोपः।

---

बृहच्छब्दरत्नः

ऽदस' इत्येव सिद्धौ, सूत्रवैयर्थ्याऽऽपत्तेः। 'असुका३' इत्यत्र सञ्ज्ञापूर्वकविधेरनित्यत्वान्न प्रवृत्तिः। ध्वनितश्चेदं भाष्ये।

अपरे तु 'अप्रगृह्याऽदो म्वोरि'त्येव ब्रूयात्। 'प्रगृह्यसञ्ज्ञकस्याऽदःसम्बन्धीकारोकारयोश्च ने'त्यर्थः। एवञ्च साक्षान्निषेधेन प्रतिपत्तिलाघवं, मात्रालाघवञ्च स्फुटम्। किञ्च 'प्रगृह्यमि'ति महासञ्ज्ञाकरणबलेनाऽन्वर्थत्वविज्ञानात् 'प्रकर्षेण अविनाशिबुद्ध्या गृह्यते इति प्रगृह्यमि'ति विज्ञानेन[1] प्रकृतिभावप्रयोजकत्वमवश्यं विज्ञेयम्। एवञ्च तत्सामर्थ्यादयाद्यप्रवृत्तिरित्याहुः। 'त्वे इति मेइत्य'नुकरणे इति। 'प्रकृतिवदनुकरणं भवती'त्यत्र शास्त्राऽतिदेश'इति पक्षे उपदेशेनैव शयादेशः,प्रगृह्यत्वञ्च बोध्यम्। वस्तुतस्तु 'त्वे राय' इत्यादावनुकार्ये फलाऽभावान्न प्रगृह्यसञ्ज्ञायाः प्रवृत्तिः। एवम् 'ईदूतौ च सप्तम्यर्थे' इति सूत्रे [2]च बोध्यम्। प्रत्युदाहरणन्तु 'प्रियः सूर्ये प्रियो अग्ना भवाति'। 'अग्ना' इति 'अग्नि'शब्दात्परस्याः सप्तम्या 'डा' आदेशः। पदकारैः प्रगृह्येषु 'इति'शब्दस्य नियमितत्वेनाऽत्राऽपि प्रगृह्यत्वप्रसङ्गः। एतेन 'आर्षग्रहणाऽनुवृत्त्या च्छन्दस्येव प्रवर्त्तते' इति वदन्तः परास्ताः। मुनित्रयोक्तिं विना च्छान्दसत्वकल्पनेऽतिप्रसङ्गात्। एकादेशाऽनुवृत्तेरयुक्तत्वाच्च। उक्तरीत्या लौकिकोदाहरणानां सम्भवात्। पदकारैस्तथैव प्रयुज्यमानत्वाच्च। 'ययी' 'वातप्रमी'त्यादीनां सप्तम्यन्तानां लोकेऽर्थपराणां सम्भवाच्च।

यत्तु 'सप्तम्या प्रकृतिराक्षिप्यते। तथा च 'सप्तम्यर्थे विद्यमाना या प्रकृतिः'। एवं च लोपे एव भविष्यति, नैकादेशे' इति। तन्न। सप्तम्या प्रकृतेराक्षेप इव सप्तम्यन्तस्याऽप्याक्षेपेण, तस्या एव सञ्ज्ञिनीत्वे मानाऽभावात्। अनेकलक्ष्यसंस्कारकत्वेन युक्तत्वाच्च। यद्यपि 'वाप्यामश्वो वाप्यश्व'इत्यादौ वाप्यादिपदानामाधेयाऽर्थवृत्तित्वेऽपि, 'अधिकप्रवेशे न तु तद्धानिरि'ति न्यायेन सप्तम्यर्थवृत्तित्वाऽनपायात्

---

लघुशब्दरत्नः

छान्दसमिति। 'शे' आदेशस्य च्छान्दसत्वादिति भावः। मे इतीत्यनुकरण इति। 'प्रकृतिवदनुकरणमि'त्यतिदेशेन पदत्वात् पदान्तत्वप्रयुक्तः प्रकृतिभावस्तत्र। तेनाऽतिदेशेन प्रगृह्यत्वन्तु न। 'त्वे राय' इत्यादावनुकार्ये फलाऽभावेन प्रगृह्यत्वाऽप्रवृत्त्या, तदनुकरणे अतिदेशेन असिद्ध्या, उपदेशप्रवृत्तिरेव वाच्येति भावः।

---

[1] 'मिति ज्ञानेन' इति ख. पाठः।

[2] चकारः ख. नास्ति।

प्रगृह्यसञ्ज्ञा दुर्वारा। अथाऽजहत्स्वार्था वृत्तिरिति पक्षे उपसर्जनपदं न स्वार्थमात्रे पर्यवस्यति, किन्तु तत्संसृष्टे प्रधानाऽर्थे, 'अर्थ'ग्रहणसामर्थ्यात्सप्तम्या एव योऽर्थस्तस्मिन्नित्यर्थात्, यावानर्थः सप्तम्याऽभिधीयते आधेयाऽसंसृष्टः, सर्वत्राऽन्वययोग्यो, निष्कृष्टाऽधिकरणरूपस्तावन्मात्रस्येह ग्रहणमिति, वृत्तिप्रविष्टे न भविष्यतीति चेन्न। अर्थग्रहणाऽभावे 'ईदूदेद् द्विवचनमि'तिवच्छतत्वात् 'ईदूदन्ता या सप्तमी'त्यर्थाऽऽपत्तौ 'ययी' 'पपी'त्यादावेवैकादेशस्य परादिवद्भावेन सञ्ज्ञाऽऽपत्तेः। एवं 'हरिषु' इति सप्तम्यन्तस्य 'उ'निपातेन, 'अ'निपातेन वा सहैकादेशे।

न च जहत्स्वार्थायां वृत्ताववयवानामानर्थक्येन सप्तम्यर्थवृत्तित्वाऽभावान्न दोष इति वाच्यम्। 'अथाऽजहत्स्वार्थायां वृत्तौ दोष एव। अजहत्स्वार्थायां च न दोषः। समुदायाऽर्थोऽभिधीयते' [1]इति भाष्यग्रन्थेन विरोधाऽऽपत्तेः। 'सुपन्थाः' इत्यादिसिद्ध्यर्थं प्रक्रियादशायामजहत्स्वार्थवृत्तेरेव युक्तत्वाच्चेत्युक्तम्। तदपि न। 'सप्तम्यर्थमात्रवृत्तिरि'त्यर्थाऽनन्तर्भूते[2] 'ईदूतौ च सप्तम्यन्ते[3]' इति वक्तव्ये, 'ईदूतौ च सप्तम्यर्थे' इति न्यासकरणेनाऽव्याप्त्यतिव्याप्तिवारणेन सारत्वाऽनुमानात्। जहत्स्वार्थायां फलैक्यलाभाच्च, 'सप्तम्यन्तं सप्तम्यर्थमात्रवृत्तिरि'त्यर्थाऽङ्गीकरात्।

यदप्युक्तम् 'अनाङि'त्यनुवृत्त्या आङ्सदृशस्य प्रातिपदिकस्य ग्रहणान्न 'ययी'त्यादौ सूत्रप्रवृत्तिरि'ति। तदपि न। मण्डूकाऽनुवृत्ति-शब्दाऽधिकार-कल्पने प्रमाणाऽभावात्। 'गौरी' इत्यादीनां प्रातिपदिकत्वाऽभावात्सूत्राऽप्रवृत्तौ भाष्यविरोधाच्च। एकादेशस्य पूर्वाऽन्तत्वाच्च। सुबन्तत्वेन सादृश्यस्य वक्तुं शक्यत्वाच्च। यदपि वदन्ति- 'ईदूतौ सप्तमी'त्येव लुप्तेऽर्थग्रहणाद्भवेत्। पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते। वचनाद्यत्र दीर्घत्वं, तत्राऽपि सरसी यदि। ज्ञापकं स्यात्तदन्तत्वे, मा वा पूर्वपदस्य भूत्' इति वार्त्तिकम्। अस्याऽर्थः—सप्तम्या लोपे सञ्ज्ञा भवत्वित्येतदर्थमर्थग्रहणम्। न च सर्वत्र पूर्वसवर्ण-दीर्घयोः कृतयो रूपसिद्धौ, लोपो न कार्य इति वाच्यम्। आडाद्यापत्तेः। सप्तम्याः काऽप्यभावेन वचनसामर्थ्यात्सञ्ज्ञाविधावपि तदन्तविधिर्भविष्यति, किमर्थग्रहणेन। न च हलन्ते 'इयाडियाजीकाराणामुपसङ्ख्यानमि'तिवार्त्तिकेन ईकारादेशे सावकाशतेति वाच्यम्। तादृशलक्ष्याऽभावात्। न च 'दृतिं न शुष्कं सरसी शयानमि'ति लक्ष्यमस्तीति वाच्यम्। सृधातोरसुनः सत्त्वेन 'सरसी'शब्दस्याऽऽद्युदात्तत्वप्रसङ्गात्। पठ्यमानन्त्वन्तोदात्तम्। तस्मात् 'सरसी'ति ङीषन्ताल्लुगेषितव्यः। अत एवोक्तं—यदीति। असन्दिग्धे सन्दिग्धवचनमेतत्— 'शास्त्राणि चेत्प्रमाणं स्युरि'ति यथा। 'कासारः सरसी सर' इत्यमरः। एवं सति प्रगृह्यसञ्ज्ञाप्रकरणे प्रत्ययलक्षणाऽभावे ज्ञापकं 'पूर्वपदे वा मा भूदि'त्येतदर्थमिति भाष्यादौ स्थितम्। इदञ्च 'पपी' 'ययी'त्यादिशब्दानां सप्तम्येकवचने प्रयोगाऽभाव-

---

[1] 'इति भाष्यग्रन्थविरोधापत्तेः' इति क. ख. पाठः।

[2] 'इत्यर्थाऽन्तर्भूते' इति क. ख. पाठः।

[3] 'सप्तम्यन्ते' इति क. ख. पाठः।

**निपात (१।१।१४)। 'अनाङि'ति पर्युदासादेव अज्रूपनिपाते लब्धे, निपातग्रहणमुत्तरार्थं, स्पष्टार्थमिहैव कृतम्। आ एवमिति। [1]पूर्वप्रक्रान्त-**

बृहच्छब्दरत्नः

कल्पने एव सङ्गच्छते'इति। तदपि न। 'मा वा पूर्वपदस्य भूदि'ति निर्दुष्टचरमग्रन्थोपन्यस्तसिद्धान्तस्योपपादयितुं शक्यत्वेन, लक्ष्याऽभावे मानाऽभावात्। 'ईदूतौ च ङ्यर्थे' इति वक्तव्ये ओस-सुपोरादेशे सूत्रप्रवृत्तेर्बोधनाच्च। ङ्यन्त-'सरसी'-शब्दाऽङ्गीकारेऽपि 'इयाडियाजीकाराणामि'ति वार्त्तिकाऽऽरम्भसामर्थ्येन हलन्ते आदेशस्य ध्वनितत्वाच्च। सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावेन 'कुमार्यगारमि'त्यादौ दोषाऽभावाच्च। उक्ताऽर्थे ज्ञापितेऽपि प्रकृतसूत्रस्य लुप्ते वचनसामर्थ्यादेव प्रवृत्तौ, 'अर्थ'ग्रहणवैयर्थ्याऽनुद्धारेण, ज्ञापकस्य शिथिलत्वाच्च। 'वाप्यामिवाऽऽचरति वापीयति कूपे' इत्यादावपि 'वाप्यश्व' इत्यादाविवाऽर्थाऽन्तरोपसङ्क्रमात्प्रगृह्यसञ्ज्ञाऽभावाऽर्थमर्थग्रहणस्य वक्तुं शक्यत्वेन, 'मा वा पूर्वपदस्य भूदि'ति ग्रन्थस्याऽप्युपलक्षणपरतया व्याख्यानस्याऽऽवश्यकत्वाच्चे'त्यपि कश्चित्।

अत्रेदमवधेयम्—'गौरी ईश्वर' इत्यादौ 'स्वामीश्वराऽधिपतिदायादे'ति सूत्रविहितसप्तम्याः 'सुपां सुलुगि'ति लुकि सति, लक्ष्ये सूत्रं प्रवर्त्तते। तत्सङ्कोचे मानाऽभावात्। यद्यपि सप्तम्या आधारे शक्तिः, आधारत्वञ्च शक्यताऽवच्छेदकं, तथापि सप्तम्या[2]अधिकरणसञ्ज्ञकस्याऽऽधारविशेषस्य प्रतीत्या, तस्यैव सप्तम्यर्थत्वम्। एवञ्च 'गौरी अधिशेते' इत्यादौ द्वितीयाया लुकि प्रगृह्यसञ्ज्ञा न। अधिकरणसञ्ज्ञायाः कर्मसञ्ज्ञया बाधात्। लक्षणप्रतिपदोक्तपरिभाषया सप्तमीविधायकसूत्रोपात्तसप्तम्यर्थस्यैव ग्रहणाच्च। प्रत्यासत्तिन्यायेन सप्तमीप्रतिपाद्ये एव प्रवृत्तेश्चेत्यलम्। 'अत्रेदं चिन्त्यमि'ति मनोरमाग्रन्थस्तु 'ईदूदेद् द्विवचनं प्रगृह्यमि'ति सूत्रदेशमभिप्रेत्य। 'ईदूतौ च सप्तम्यर्थे' इति सूत्रदेशे पाठे तु प्रगृह्यपदं 'शे' इति सूत्रे बोध्यमि'ति विकल्पाऽनुवृत्तिवादिनः।

अनाङिति पर्युदासादेवेति। यत्तु 'अनाङि'ति न पर्युदासः, किन्तु प्रसज्यप्रतिषेधः। 'आ उ ओ' इत्यत्र आङ्नाङोर्निपातयोरेकादेशस्य 'अनाङि'ति प्रतिषेधे प्राप्ते, प्रतिप्रसवाय 'ओदि'ति सूत्रमि'त्यर्थकेन 'प्रतिषिद्धाऽर्थोऽयमारम्भ' इति भाष्यग्रन्थेन बोधितत्वात्। पर्युदासे तु पूर्वसूत्रेणैव सिद्धावसङ्गतमिदमिति स्पष्टमेवे'त्याहुः। तन्न। 'अदोभवदि'त्यादिसिद्ध्यर्थं प्रतिपदोक्तौकारस्यैव ग्रहणमित्यर्थस्याऽनुपदमेव भाष्ये सिद्धान्तितत्वात्। 'ओषु यातमि'त्यादौ 'ओदि'ति सूत्रस्याऽप्राप्तत्वेन 'एवं तर्हि एकनिपाता इमे, अथवा प्रतिषिद्धार्थोऽयमारम्भ'इति भाष्योक्तपक्षयोः 'ओ'इत्यस्य पदकारैरैकपद्येन पाठात्, 'ओदि'ति सूत्रस्य स्वल्पविषयताऽऽपत्तेश्च, सखण्डपक्षाऽऽश्रयणे फलाऽभावाच्च प्रथमपक्षस्यैव प्राबल्याऽनुमानेन, सानुबन्धकोञा सह एकादेशे 'उञ

[1] 'पूर्वं प्रक्रान्तस्य वाक्यार्थस्य' इति मुद्रितः पाठः।
[2] 'अधिकरणसञ्ज्ञाकस्य' इति क. पाठः।

**वाक्यार्थस्याऽन्यथात्वद्योतकोऽयमाकारः । 'पूर्वमित्थं नाऽमंस्थाः, इदानीं त्वेवं मन्यसे' इत्यर्थः । आ एवं किलेति । स्मरणद्योतकोऽयमाकारः । वाक्येत्यादि । तथा च भाष्यम्—**

बृहच्छब्दरत्नः

ऊँ' इत्यस्य दुर्वारत्वेन, निरनुबन्धेन सह एकादेशे उत्वरूपनिपातस्याऽल्विधित्वेना-[1]ऽतिदेष्टुमशक्यत्वात्, समुदाये आङ्त्वस्याऽपि सत्त्वाच्छङ्काया एवाऽनुदयेन च, 'प्रतिषिद्धाऽर्थोऽयमि'ति भाष्यस्य प्रौढिवादपरत्वेनाऽर्थाऽव्यवस्थापकत्वेन, लाघव-तर्कसहितपर्युदासत्यागे मानाऽभावात्।

एतेन 'वासुदेवादिवाचकस्य 'अ'शब्दस्य आङा सहाऽव्ययीभावे, 'आ आत्-अम्', ततस्तत्पुरुषे 'अव्ययादाप्सुप' इति लुकि, असमस्ते वा 'आ-इत'[2] इत्यत्र 'अनाङि'ति प्रसज्यप्रतिषेधेन प्रगृह्यसञ्ज्ञानिषेधात्-'एत' इति रूपम्। किञ्च पर्युदासे 'अमि'ति रूपं न स्यात्, प्रगृह्यसञ्ज्ञया 'अमि पूर्व' इत्यस्य बाधात्। न च द्वितीय-पक्षे 'नाऽव्ययीभावादि'ति निषेधः। येन नाप्राप्तिन्यायेनाऽव्ययीभावोपजीव्याऽव्यय-त्वनिमित्तकलुकूनिषेधसन्नियोगशिष्टतया अम्विधानेऽपि, पूर्वाऽन्तनिमित्तकाऽव्यय-निमित्तकलुको निषेधाऽभावेन, तत्सन्नियोगशिष्टाऽमोऽप्राप्तेरि'ति परास्तम्। उत्तर-खण्डस्य, समस्तस्य च सत्त्ववाचित्वेन निपातत्वाऽभावात्। आङ्त्वस्यैव निपात-त्वेन पूर्वान्तत्वेनाऽतिदेशेऽतिदिश्यमानविरुद्धस्वाश्रयधर्मस्य निवृत्तेरुक्तत्वेनाऽऽङ्-भिन्नत्वाऽभावात्पर्युदासेऽपि रूपसिद्धेश्च। 'अन्तादिवच्चे'ति सूत्रन्तु स्थानिवत्सूत्र-स्यैव प्रपञ्चः। यद्वा पर्युदासेनैव निपातत्वे लब्धे निपातग्रहणं निपात एव यो निपातः, औपदेशिक इति यावदित्यर्थलाभाऽर्थम्। प्रकृते चाऽऽतिदेशिकनिपातत्वस्य सत्त्वान्न दोषः। यद्वा 'अजि'त्येकत्वविवक्षयैव एकाजित्यर्थलाभे 'एक'ग्रहणम् 'एक एव योऽच्, स्थानिरूपेणाऽपि न द्वितीय' इत्येतदर्थम्। तथा च प्रकृते न दोषः। न चैकग्रहणा-ऽभावे वर्णग्रहणे जातिग्रहणस्य सत्त्वेन 'अ-इ-उ अपेही'त्यादौ समुदायस्य प्रगृह्यसञ्ज्ञा स्यादिति वाच्यम्। समुदाये निपातत्वाऽभावात्। समुदायसञ्ज्ञयाऽवयवानाम-ननुग्रहेणाऽवयवानामपि दुर्वारत्वेन क्षत्यभावाच्च। अत एव 'निर्ग्लेयादि'त्यादा-वेत्त्वादिसिद्धिः। न चैवं 'जातु उ अस्य जानू अस्ये'त्यादावपि प्रगृह्यत्वाऽनापत्तिः। न चेष्टाऽऽपत्तिः। भाष्यविरोधाऽऽपत्तेरिति वाच्यम्। एकादिष्टस्याऽपि चादिगण-पठित'स्वरविभक्तिप्रतिरूपकाश्चे'त्यस्य दुर्वारत्वेनौपदेशिकनिपातत्वात्। त्वदुक्तोदा-हरणे तु 'असत्त्वे' इति निषेधात्। ननु 'अ-इ-उ अपेही'त्यत्राऽवयवानां 'निपात

लघुशब्दरत्नः

**अन्यथात्वेति । अनभिमतत्वेत्यर्थः । तदाह-नामंस्था इति । स्मरणेति । विस्मृतस्य**

[1] निर्देष्टुमशक्यत्वात्' इति ख. पाठः ।

[2] 'अ–इत' इति क. ख. पाठः

ईषदर्थे, क्रियायोगे, मर्यादाऽभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्य-स्मरणयोरङित् ॥ इति।

अत्र अङिल्लक्षणे एव तात्पर्यं, लाघवात्। अन्यस्य ङित्त्वन्तु अर्थसिद्धम्। 'ईषदर्थे' इत्यादिस्तु अवयुत्याऽनुवादः। एवं च 'अभ्र आँ अपः' इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य ङित्त्वात् आङोऽनुनासिकश्छन्दसि (६।१।१२६) इति प्रवर्त्तते इति भावः।

ओत् (१।१।१५)। निपातः किम्?। देवोऽसि। वायवायाहि।

---

बृहच्छब्दरत्नः

एकाजनाङि'ति प्रगृह्यत्वेऽपि, प्रकृतिभावो दुर्लभः, 'न हि कार्यी निमित्तत्वेनाऽऽश्रीयते' इति न्यायेन अप्रगृह्याऽच एव निमित्तत्वादिति चेन्न। 'प्लुतप्रगृह्या' इति वचनेन प्रगृह्यमात्रग्रहणस्य बोधितत्वान्न्यायाऽप्रवृत्तेः। स्वरूपतो भेदेन कार्यिणो निमित्तत्वाऽभावाच्च।

मर्यादेति। समाहारद्वन्द्वः। आगमशास्त्रस्याऽनित्यत्वान्नुमभावः।

सप्तम्यर्थवृत्तेरिति। इदञ्च निरुक्तग्रन्थे स्पष्टम्। अधिकरणे सप्तमी। 'विभक्त्यर्थविहिताऽव्ययीभावाऽभावश्च छान्दसत्वादि'ति ध्येयम्।

ओत्। ननु 'अनदः अदः समभवत् अदोऽभवदि'त्यादौ प्रगृह्यसञ्ज्ञा दुर्वारा। न च लक्षणप्रतिपदोक्तपरिभाषया, गौणमुख्यन्यायेन वा[१] निस्तारः। वर्णग्रहणे तस्या अप्रवृत्तेः। वर्णप्राधान्ये माऽस्तु परिभाषा, विशेषणत्वे तु स्यादेवेति चेन्न। 'आदेच उपदेशेऽशिती'ति सूत्रस्थोपदेशग्रहणवैयर्थ्याऽऽपत्तेः, 'ह्वावामश्चे'ति सूत्रे 'ह्वा'ग्रहणस्य वैयर्थ्याऽऽपत्तेः, 'क्रापयती'त्यत्र पुगागमाऽनापत्तेश्च।

न च 'अनाङि'त्यनुवृत्त्या पर्युदासाऽऽश्रयणेन प्रतिपदोक्तानामेव ग्रहणमिति वाच्यम्। एवमपि निपातसञ्ज्ञायाः प्रतिपदोक्तत्वेन 'गोपयसोर्यत्' 'गमेर्डोरि'त्यनुशासनेन प्रतिपदोक्तत्वात् 'अगौर्गौः समभवत्[२] गोऽभवदि'त्यादौ दोषस्य दुर्वारत्वात्। विशिष्टरूपोपादाने एव गौणमुख्यन्यायाऽङ्गीकारात्, तत्रैवाऽर्थोपस्थितेः सत्त्वेन न्यायाऽऽकाङ्क्षितत्वात्। यत्तु 'पदकार्येष्वयं न्यायो, न प्रातिपदिककार्येषु'

---

लघुशब्दरत्नः

स्मरणविषयताद्योतक इत्यर्थः। मर्यादाऽभिविधाविति। अत्र मध्यमपदलोपी समासः। तत्सहिते अभिविधावित्यर्थः। सप्तम्यर्थेति। तद्वृत्तित्वं च तस्य निरुक्ते स्पष्टम्। अव्ययीभावाऽभावश्च श्रुतौ छान्दसत्वाद् बोध्यः।

---

१ 'न्यायेन च' इति वा पाठः सम्भाव्यते।
२ 'गो-अभवदित्यादौ' इति क. पाठः।

२५

**सम्बुद्धौ (१।१।१६)** । ऋषिर्वेदः, 'तदुक्तमृषिणे'त्यादौ तथा दर्शनादित्यभिप्रेत्याऽऽह—**अवैदिके इति** । **सम्बुद्धौ किम्** ? । **'अहो इति'** । अत्र

बृहच्छब्दरत्नः

इत्याहुः । तन्न । इत्वनुपन्यासात् । 'युष्मद्युपपदे' इत्यादौ प्रातिपदिककार्याणामेव सत्त्वेन धर्मिग्राहकमानविरोधाच्च । 'सञ्ज्ञा-श्वशुरस्याऽपत्यं श्वाशुरिरि'त्यत्र 'राजश्वशुराद्यदि'तिवत् 'अत इञि'त्यस्याऽप्यप्रवृत्त्यापत्तेश्च । 'गौर्ब्रूते' 'गां पाठये'त्यादौ वाहीकनिष्ठकर्मत्वादिविवक्षायां वृद्धद्यात्त्वाऽनापत्तेश्च । प्रगृह्यत्ववृद्धद्यात्त्वयोर्वैलक्षण्याऽनिरूपणाच्च । 'गोऽभवदि'त्यादौ पूर्वरूपाऽनापत्तेश्च । त्वदुक्तरीत्या पूर्वसूत्रेऽपि गौणमुख्यन्यायस्य दुर्वारत्वेनोक्तविचारस्य भाष्यवार्त्तिककाराभ्यां तत्रैव कर्त्तुं युक्तत्वेन, तत्त्यागे बीजाऽनापत्तेश्चेति कौस्तुभे पितामहचरणाः ।

अत्रेदमवधेयम्—गौणत्वम् अप्रसिद्धत्वं, गौण्या अर्थबोधकत्वं वा । आद्यः पक्षो विशिष्टरूपोपादाने एव । द्वितीयपक्षस्तु पदाऽन्तरनिमित्ते विशिष्टरूपोपादाने । यथा—महदात्त्वे । पदाऽन्तरसम्बन्धे सत्येव गौणाऽर्थत्वाऽभिव्यक्तेः । कृभ्वस्तियोगे 'च्वि'प्रत्ययविधानाच्च । तत्र यद्यपि मुख्याऽर्थपुरस्कारेणैव गौणेऽर्थे प्रयोगात्, च्विप्रत्ययविधायकशास्त्रेणेदृशप्रवृत्तेर्बोधनाच्च, अप्रसिद्धत्वाऽभावात् प्रथमपक्षस्याऽप्रवृत्तिः, द्वितीयस्य तु पदाऽन्तरनिमित्तत्वाऽभावादप्रवृत्तिः, तथापि लाघवाऽर्थं 'विशिष्टरूपोपादानाऽभावादि'त्येकहेतुनैवोभयोर्निराकरणं कृतम् । एतेन 'अमहान् महान्भवति' 'त्वद्भवाम्यहमि'त्यादौ 'सान्तमहतः संयोगस्य' 'प्रत्ययोत्तरपदयोश्चे'त्यादिकं न प्रवर्त्तते'त्यादिकमपास्तम् । प्रसिद्धत्वेनाऽऽद्यन्यायस्य, प्रत्ययनिमित्तत्वेऽपि पदाऽन्तरनिमित्तत्वाऽभावाद् द्वितीयस्य चाऽप्राप्तेरिति चेन्न । 'अनाङि'त्यनुवर्त्तते, तेन पर्युदासवृत्त्या प्रतिपदपठिता निपाता गृह्यन्ते । ईदृशश्च सर्वोऽपि प्रतिपदोक्तः । 'ओषु यातमि'त्यत्राऽखण्डपक्षस्यैवाऽभिप्रेतत्वात् ।

न चैवं पूर्वसूत्रेण[1] 'अनिः इः अभवत् ई अभवदि'त्यादौ प्रगृह्यत्वं न स्यादिति वाच्यम् । शब्दाऽधिकाराऽऽश्रयणेन पूर्वसूत्रे ईदृशाऽर्थस्याऽग्रहणात् । ध्वनितश्चेदं भाष्य-वार्त्तिकयोः । इदमेवाऽभिप्रेत्य भाष्ये 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि'त्याद्युक्तम् । नाऽनेन परिभाषोपन्यास इति भ्रमितव्यम् । स्पष्टा चेयं रीतिः 'ति विंशतेर्डिती'ति सूत्रे भाष्य-कैय्यटयोः । च्विप्रत्ययाऽन्तप्रयोगस्त्वारोपिताऽर्थमादायैवेत्यन्यत्र विस्तरः ।

सम्बुद्धौ । सम्बुद्धौ मात्राकालव्यवायेन वर्णोच्चारणे संहिताया अभावः । अर्द्धमात्राकालव्यवायेनोच्चारणे संहिता । तत्र वाक्यस्य साधुत्वमुभयत्र । एकपदादीनान्तु अन्त्ये एव । तथा चाऽन्त्ये प्रकृतिभावाऽर्थं प्रकृतसूत्रमित्याद्यग्रे निरूपयिष्यामः ।

[1] अत्र—'न इः=कामः-अनिः, अनिः=अकामः इः=कामः अभवत्-ई अभवदि'त्यर्थो बोध्यः ।

परत्वाद्विकल्पो मा भूत् । यत्तु ओत् (१।१।१४) इत्यत्र निपाताऽनुवृत्तेः, इह च सम्बुद्धिग्रहणस्य प्रत्युदाहरणं वृत्त्यादावुक्तं-'गवित्ययमाहे'ति । तन्न । तत्र प्रगृह्यसञ्ज्ञासत्त्वेऽपि प्रकृतिभावाऽप्रसक्तेः । 'इकोऽसवर्णे (६।१।१२७) इत्यत्र हि

---

### बृहच्छब्दरत्नः

परत्वादिति । न च ओत्सम्बद्धनिपाताऽनुवृत्तिः शङ्क्या । पुनः 'ओदि'त्युक्त्या तत्सामर्थ्यादेवाऽननुवृत्तेः । निपाताऽनुवृत्तौ निरवकाशत्वादपवादत्वमेव स्यादित्यर्थाऽधिकाराऽऽश्रयणेऽपि[1] दोषाच्च । न च पूर्वसूत्रे ओदन्तस्य कार्यितया, प्रकृतसूत्रे विशेष्याऽसन्निधानेन तदन्तविधिविरहादोकारमात्रस्य कार्यितया, भिन्नविषयत्वे कथं विप्रतिषेध इति वाच्यम् । नुम्नुटोरिव विषयभेदेऽपि फलविरोधेन विप्रतिषेधसम्भवात् । अर्थाऽधिकारपक्षे ओकाराऽन्तस्य सञ्ज्ञित्वाच्च । 'आ कडारादि'त्यस्य तु न प्रवृत्तिः । सञ्ज्ञाया एकत्वात् । समावेशेऽपि विकल्पफलस्य

---

### लघुशब्दरत्नः

अत्र परत्वादिति । न च एतदभावे नित्यविधिर्दुर्वारः, 'इति'शब्दाऽतिरिक्ते ओत् (१।१।१५) इत्यस्य, निपाताऽतिरिक्ते सम्बुद्धौ (१।१।१६) इत्यस्य चारितार्थ्येन, सामर्थ्याऽभावात् एवञ्च फले अविशेष इति वाच्यम् । परत्वेन विकल्पप्रवृत्तौ अभावपर्यन्तमप्यस्य व्यापारेण, सकृद्गतिन्यायेन [2]नित्यस्य [=[2]ओत्(१।१।१५)इत्यस्य] तदभावे अप्रवृत्तेः । अत एव न यदि (३।२।११३) विभाषा साकाङ्क्षे (३।२।११४) इति सूत्रे 'निषेधीयोभयत्र विभाषे'तिसङ्गच्छते । अन्यथा परत्वादेतत्प्रवृत्तावप्यनेन निषेधाऽभावे, पूर्वसूत्रस्य दुर्वारत्वेन, सा दुर्लभा स्यात् । न च आकडारसूत्रेणाऽन्यत्र सञ्ज्ञानां बाध्यबाधकभावाऽभावस्य ज्ञापितत्वेन 'परत्वाद्विकल्प' इत्यसङ्गतमिति वाच्यम् । सञ्ज्ञाया एकत्वात्, ज्ञापकस्य च विशेषाऽपेक्षत्वेन सञ्ज्ञाभेदविषयत्वादिति भाव' इति केचित् । परे तु 'ओत् (१।१।१५) इत्यस्य इतिशब्दनिरपेक्षत्वेन अन्तरङ्गत्वमिति, परत्वम्[3] अयुक्तम् । सम्बुद्धौ (१।१।१६) इति तु निपातपदाऽननुवृत्तये । अन्यथा ओदन्तनिपातस्यैव इतौ विकल्पाऽऽपत्तिः । [4]नित्य-विकल्पविध्योर्युगपत्प्रवृत्तावपि विरोधाऽभावेन 'परत्वादि'त्यस्याऽसङ्गतेश्च[5] । एवं च 'परत्वादि'त्यस्य उत्कृष्टत्वात्, अपवादत्वादित्ये-[6]वार्थः । ओद्ग्रहणाऽनुवृत्त्यैव सिद्धे पुनरोद्ग्रहणेनाऽपि तन्निवृत्तिसिद्धौ, वैचित्र्याऽर्थमेव सम्बुद्धि-

---

[1] 'इत्यर्थाश्रयणेऽत्र दोषाच्च' इति क. ख. पाठः ।
[2] 'नित्यस्य तदभावेऽप्रवृत्तेः'इति लिखितेषु पाठः । 'ओत्' इत्यस्य' इति च मुद्रितःपाठः । लिखितेषु तु नास्ति ।
[3] 'परत्वं न युक्तम्' इति मुद्रितः पाठः ।
[4] 'नित्यविकल्पयोः' इति क. पाठः ।
[5] चकारो मुद्रितेषु नास्ति ।
[6] 'इत्यर्थः' इति मुद्रितेषु पाठः ।

पदान्तग्रहणमनुवर्त्तते' इत्याकरे स्पष्टम् । एवं च प्लुतप्रगृह्याः ( ६।१।१२५ ) इति सूत्रेऽपि[1] तत्सम्बन्ध आवश्यकः । 'गव्' इति च न पदम् । अनुकार्याऽनुकरणयोरभेदविवक्षया अर्थवत्त्वाऽभावेन विभक्तेरनुत्पादात् ।

बृहच्छब्दरत्नः

दुर्वारत्वाच्च । न हि 'ओदि'ति सूत्रस्याऽभावरहितप्रगृह्यसञ्ज्ञा शाब्दोऽर्थः । नित्यादिग्रहणाऽभावात् । अपि तु प्रगृह्यसञ्ज्ञामात्रम् । तस्य मानाऽन्तरेण विकल्पेऽपि न हानिः । एतेन 'पक्षे ओदिति सूत्रप्रवृत्तिरि'त्यपास्तम् । विकल्पवाचकपदेन पक्षेऽभावबोधनादप्रवृत्तेः । अत एव सम्बुद्धिग्रहणं चरिताऽर्थम् । एतेन 'अन्तरङ्गत्वात् 'इति'शब्दनिरपेक्षत्वेन 'ओदि'ति सूत्रेणैव भाव्यमि'त्यपास्तम् । 'ओदि'त्यस्य निपातसञ्ज्ञानिमित्तत्वेन समत्वाच्च । उक्तरीत्या प्रगृह्यसञ्ज्ञाया अन्वर्थत्वविज्ञानेन प्रगृह्यत्वस्य प्रकृतिभावप्रयोजकत्वात् । परभूताऽनिमित्तत्वस्योभयत्राऽप्यविशिष्टत्वाच्चेति दिक् । 'त्रपो इती'त्यादौ गुणवत् 'न लुमते'तिनिषेधस्याऽनित्यत्वेन प्रगृह्यत्वाऽङ्गीकारे, 'सम्बुद्धौ परे' इति व्याख्यानेऽपि न क्षतिरितिं ध्येयम् । आवश्यक इति । सम्बन्ध-सम्बन्धाऽभावो-भयकल्पनाऽऽपत्त्या मण्डूकप्लुतेरन्याय्यत्वादिति भावः । ध्वनितञ्चेदम् 'अदसो मादि'ति सूत्रे भाष्ये ।

अनुत्पादादिति । अत एव तच्छ्रवणं न । न च 'नैकधे'त्यादाविव 'सुप्सुपे'तिसमासेन निस्तारः । 'इति'शब्दस्य प्रकाराऽर्थत्वेन 'उपसर्जनमि'ति महासञ्ज्ञाकरणबलात्पूर्वनिपाताऽऽपत्तेः । 'ग इत्याहे'त्यापत्तेश्च । 'अव्ययमि'ति विभक्तसूत्रेण परत्वान्नित्यसमासाऽऽपत्तौ 'तस्मिन्नि'त्यादिसौत्र-भाष्यादिप्रयोगाणामसङ्गतताऽऽपत्तेश्च । 'अव्ययमि'ति वाक्ये तु तृतीयाऽन्तसुप्पदेन तक्रकौण्डिन्यन्यायेनाऽनव्ययस्यैव ग्रहणात् 'नैकधे'त्यादौ न दोषः ।

यत्तु 'गोभ्यां' 'गोभिः' 'गोक्षीरमि'त्यादिलक्ष्यवर्त्ति'गो'शब्दाऽनुकरणे 'प्रकृतिवदनुकरणं भवती'त्यतिदेशेन पदत्वं सुलभमेवे'त्याहुः । तच्चिन्त्यम् । 'यत्तदेतेभ्य'

लघुशब्दरत्नः

ग्रहणमित्याहुः । आवश्यक इति । अन्यथा इकोऽसवर्णे (६।१।१२७) इत्यत्र मण्डूकाऽनुवृत्त्यापत्तिः । सा च सम्बन्ध-तदभावो-भयकल्पनाऽऽपत्त्या अन्याय्येति भावः ।

अनुत्पादादिति । अत एव तस्याः श्रवणं न । अभेदविवक्षापदार्थश्चाऽर्थवत्सूत्रे निरूपयिष्यते । न च लिङ्गसर्वनामनपुंसकताऽभ्युपगमेन उत्पन्नाया विभक्तेर्लुक् । ह्रस्वाऽऽपत्तेः । न च 'सुप्सुपे'ति समासेन निर्वाहः । इतिशब्दस्य शब्दस्वरूपपरतातात्पर्यग्राहकत्वेन तेनैकार्थीभावरूपसामर्थ्यस्य दुरुपपादत्वात् । न च 'गोभ्यां' 'गोक्षीरमि'त्याद्येकदेश'गो'शब्दाऽनुकरणे ऋलृक्सूत्रभाष्योक्तेन 'प्रकृतिवदनुकरणमि'त्यतिदेशेन पदत्वं सुलभमिति वाच्यम् । क्षियो दीर्घात्

[1] अपिः मुद्रितेषु नास्ति ।

**उञः ( १।१।१७ )। निपात एकाज् ( १।१।१४ ) इति प्राप्ते विभाषेयम्। ऊँ (१।१।१८)। अनुनासिक इति। तेनाऽस्मिन् परे यरोऽनुनासिकः ( ८।४।४५ ) इति विकल्पः। 'यदेतनूँ इति पठसि, यदेतदूँ इति वा, तद्दीर्घमि'त्यादि। एतदर्थमेव तत्राऽनुनासिकग्रहणम्। अन्यथा 'यरो**

बृहच्छब्दरत्नः

इत्यादौ त्यदादिघटितैतच्छब्दविरहप्रयुक्ततया 'त्यदादीनाम' इत्यस्याऽप्राप्तौ, 'प्रकृतिवदनुकरणं भवती'त्यतिदेशस्य तत्प्रवृत्तिबोधनेन चारितार्थ्यात्। यस्मात्स्वादिप्रत्ययविधिस्तस्य, स्वादिप्रत्ययस्य, तल्लोपस्य च विरहप्रयुक्तपदत्वस्याऽप्राप्तत्वे, अतिदेशेन प्रकृतिसत्ताबोधनेऽपि, स्वादिप्रत्यय-तल्लोपयोः सत्ताबोधनस्य कर्त्तुमशक्यत्वात्, उभयविरहप्रयुक्ताऽप्राप्तपदत्वस्याऽतिदेष्टुमशक्यत्वात्।

अत एव स्थानिवद्भावेन 'अवधीदि'त्यादौ नाऽऽत्मनेपदम्। अत एव 'अनुकार्याऽनुकरणयोरभेदादेव पदत्वाऽलाभ' इत्यपास्तम्। अभेदबोधनेन भेदप्रयुक्ताऽर्थवत्त्व-निमित्त-प्रातिपदिकसञ्ज्ञाया अभावेऽपि, [1]शब्दाऽन्तरनिष्ठधर्मवैशिष्ट्यस्य बोधयितुमशक्यत्वाच्च। ध्वनितश्चाऽयमर्थ इनातोः प्रत्याख्यानपरभाष्येण। 'त्वे इति' 'मे इती'त्यनुकरणे तु अनुकार्याऽनुकरणयोरभेदविवक्षयैव सुबभावः। सुबन्ताऽनुकरणस्य सत्त्वेन 'प्रकृतिवदनुकरणमि'त्यतिदेशात्पदत्वलाभः। अतोऽनुकार्याऽनुकरणयोर्भेदपक्षेऽपि 'अप्रत्यय' इति निषेधात्प्रातिपदिकत्वं न। न च 'अप्रत्यय' इति पर्युदासस्य सत्त्वेन प्रत्ययाऽन्तभिन्नत्वाऽनपायाद्दोषो दुर्वार इति वाच्यम्। 'त्वे' इत्यादावनुकार्ये आतिदेशिकप्रत्ययत्वस्य सत्त्वेन दोषध्रौव्यात्। 'स्थानिवदादेश' इत्यादेशग्रहणसामर्थ्येनाऽतिदिश्यमानविरुद्धकार्याऽभावस्य बोधनान्न दोष इति चेत्। तर्हि अनुकरणेऽपि 'प्रकृतिवदनुकरणमि'त्यनेन तस्याऽप्यतिदेशाद्दोषाऽभावः। 'मामकी तनू' इत्यत्र 'मामकी' इत्याद्यनुकरणे भेदविवक्षया[2] सुबुत्पत्तावपि, 'प्रकृतिवदनुकरणमि'त्यतिदेशेन, हल्ङ्यादिसूत्रेण, 'सुपां सुलुगि'ति सूत्रेण वा लोपः। 'अतिदेशेन विनिगमनाविरहेण शास्त्र-कार्ययोर्लाभ' इति पूर्वमुपपादितत्वात्।

'उञ इती'ति सूत्रेण कल्प्यं पदं न यथाश्रुतं, किन्तु विकल्पमात्रपरम्। अन्यथा शाकल्यस्यैव मते प्रगृह्यत्वे, 'ऊँ' आदेशे च, इतरेषां मते उभयोरभावे[3],परिनिष्ठित-'उ इती'ति रूपाऽनापत्तिः। तद्ध्वनयन्व्याचष्टे-निपात एकाजितीति। एतदर्थमेवेति।

लघुशब्दरत्नः

(८।२।४६) इति सूत्रभाष्योक्तेन तदतिदेशाऽनित्यत्वेन तदप्रवृत्तिमाश्रित्याऽपि सुसाधत्वेन, असाधारणप्रयोजनत्वाऽभावादिति भावः। एतदर्थमेवेति। एतदर्थमपीत्यर्थः। अनितेः

[1] 'धर्मवैशिष्ट्यबोधयितुम्' इति क. ख. पाठः।
[2] 'भेदविवक्षायाः' इति क. ख. पाठः।
[3] 'उभयोरभावेऽपि' इति क. ख. पाठः।

अमि अम्वा' इत्येवाऽवक्ष्यत् ।

**मय उञो वो वा ( ८।३।३३ )** । मयः परस्येति । 'परादि'ति तु प्राचः प्रमादः । 'षष्ठीनिर्दिष्टस्य ह्यादेशा उच्यन्ते' इति भाष्यात्, आदेशविधौ स्थानिनः षष्ठ्या एव न्याय्यत्वाच्च । असिद्धत्वादिति । अत एवेदं वत्वं त्रिपाद्यां विधीयते । प्रकृतिभावमात्रबाधनाऽर्थत्वे हि इको यण् ( ६।१।७७ ) इत्यनन्तरं 'मय उञो वा' इत्येवाऽवक्ष्यत् । यणं चाऽन्ववर्त्तयिष्यत् ।

---

बृहच्छब्दरत्नः

एतज्जातीयाऽर्थमेवेत्यर्थः । [1]अन्यार्थञ्चेति यावत् । प्रसङ्गाद्विधिकोटिस्थाऽनुनासिकग्रहणस्याऽपि प्रयोजनमुक्तम् । तेन अनितेः क्विपि सम्बुद्धौ 'आन् [2]चिनोती'त्यत्र 'नश्छवीति रुत्वे' 'अत्राऽनुनासिक' इति पूर्वस्याऽनुनासिकत्वे, 'यदेतनाँश्चिनोति'[2] 'कमलँ आँश्चिनोती'[3]त्यादौ न दोष इति बोध्यम् ।

अन्यथेति । न चैवं यथासङ्ख्याऽऽपत्तिः । तस्याऽसार्वत्रिकत्वेन 'आन्महतः' 'सन्महदि'त्यादिनिर्देशैरेव परिहर्त्तुं शक्यत्वात् । यत्तु 'हयवरडि'ति यकारमारभ्य विधिकोटौ प्रत्याहारे न दोष' इति । तन्न । 'कमलॅं नमनं' 'कमलमँयमि'त्यादौ निरनुनासिकलकारादीनामेवाऽऽपत्तेः । विधीयमानत्वेन सवर्णाऽग्रहणात् । प्रकृतिभावमात्रेति । 'किमु उक्तमि'त्यत्र सवर्णदीर्घस्तु प्रकृतिभावेन बाधितः । अवक्ष्यदिति । न चैवमपि सन्निपातपरिभाषयाऽनुस्वारो दुर्लभः । अनुस्वारस्याऽसिद्धत्वेन सन्निपातविघाताऽभावात् ।

'उञ ऊँ' इत्येकसूत्रे तु शाकल्यग्रहणाऽननुवृत्तौ 'ऊँ इती'त्येकमेव रूपं स्यात् ।

---

लघुशब्दरत्नः

क्विपि सम्बुद्धौ 'आन् चिनोषी'त्यत्र नश्छवि (८।३।७) इति रुत्वे, अत्रानुनासिकः (८।३।२) इति पूर्वस्याऽनुनासिके, 'यदेतनाँश्चिनोषि' 'कमलँ आँश्चिनोषी'त्यत्राऽपि फलसत्त्वात् ।

अवक्ष्यदिति । न चैवंन्यासे यथासङ्ख्याऽऽपत्तिः । तस्याऽसार्वत्रिकत्वात् । आन्महतः (६।३।४६) इत्यादिनिर्देशाच्चेति भावः । पूर्वोक्ते 'कमलाँश्चिनोषी'त्यत्र लस्य नकाराऽऽपत्तिवारणाय विधेयकोटौ 'अनुनासिक' इति । विधेयकोटौ यकारमारभ्य प्रत्याहारे तु विधेयविषये सवर्णग्रहणाऽभावेन पूर्वोक्ते निरनुनासिक-लस्यैवाऽऽपत्तिरिति, यथान्यासमेव साधु ।

इत्येवावक्ष्यदिति । न चाऽत्राऽपि न्यासे सन्निपातपरिभाषयाऽनुस्वाराऽप्राप्तिरिति वाच्यम् । त्रिपाद्यां तथा पाठेन सन्निपातपरिभाषाऽनित्यत्वस्याऽपि ज्ञापनादिति भावः ।

---

[1] 'अजमर्थं चेति यावत्' इति क. ख. पाठः ।

[2] 'अत्र सर्वत्र 'चिनोषी'त्येवयुक्तः पाठः ।

[3] 'चिनोती'ति तु क्वाचित्कोऽपपाठ'इति भावप्रकाशः ।

इह मय उञ इतौ परे [1]अष्टाविंशती रूपाणि । तथा हि 'उञः' ( १।१।१७ ) इति प्रगृह्यत्वे–'किमु इति' (१) । वत्वपक्षे–'किम्विति' (२) । 'ऊँ'आदेशे'किमूँ इति' (३) । आदेशस्य स्थानिवत्त्वेन मय उञः (८।३।३३) इतिप्रकृतिभावाऽपवादभूते आन्तरतम्यादनुनासिके वकारे-'किम्विँति' ( ४ )। अनुनासिका–ऽननुनासिकयोर्वकारयो'र्मयो यण' इति द्वित्वस्य, मकारस्य अनचि च ( ८।४।८७ ) इति द्वित्वस्य च विकल्पेन वत्वपक्षे रूपाऽष्टकम् (८)। तदभावे द्वयमिति दशकम् (१०)। प्रगृह्यसञ्ज्ञाविरहपक्षेतु मय उञ (८।३।३३) इति वत्वस्याऽसिद्धत्वात् इको यणचि ( ६।१।७७ ) इति यणेव । तस्य सिद्धत्वान्मोऽनुस्वारे, वा पदान्तस्य ( ८।४।५९ ) इति परसवर्णपक्षे, अनुनासिका-ऽननुनासिक-वकारद्वयोपेतमेकादशं रूपम् (११)। अनुनासिकस्य द्वित्वे, हलो यमाम् (८।४।६४) इति लोपस्य वैकल्पिकत्वादकरणे, त्रिवकारं द्वादशं रूपम् ( १२ )। परसवर्णाऽभावपक्षेऽनुस्वारस्य

---

**बृहच्छब्दरत्नः**

स्थानिवद्भावेन 'निपात एकाजनाङि'ति प्रगृह्यत्वात् । दीर्घोच्चारणन्तु असंहितायां चरिताऽर्थम् । यदि शाकल्यग्रहणस्याऽनुवृत्तिः, तदा 'विती'ति रूपं न स्यात् । न च 'ऊँ इती'तिरूपस्य सूत्रभाष्यादिसंमतनिरनुबन्धकोकारमादाय सिद्धत्वेन, शाकल्याऽनुवृत्तिसामर्थ्यात्पक्षे 'विती'ति रूपं भविष्यतीति वाच्यम् । साऽनुबन्धकस्य रूपाऽनापत्तेः । तथा च मयः परत्वे प्रकृतिभावाऽपवादकीभूत-'मय'इति वत्वे, मकारसहित-निरनुनासिक-वकार-सिद्धिः । अत एव 'ऊँ' इति सूत्रे प्रगृह्यग्रहणमात्रमनुवर्त्तते, तच्च स्थानिविशेषणम्, आदेशविशेषणं वे'ति निरस्तम् । 'शाकल्यग्रहणं, प्रगृह्यग्रहणञ्चेत्युभयमपि नाऽनुवर्त्तते' इति न शङ्कनीयम् । अप्रगृह्यपक्षे संहितानिमित्तत्वाऽभावेनाऽन्तरङ्गत्वात्, 'ऊँ' आदेशे, 'इको यणची'ति यणादेशे, अनुस्वारसहितसानुनासिकवकारप्रसङ्गः, 'इकोऽसवर्णे' इति पाक्षिकह्रस्वप्रसङ्गश्च । तत्सर्वं हृदि निधायाऽऽह—इह मय इति । मयः परत्वाऽभावे निरनुनासिकवकारयुक्त-'विती'तिरूपाऽसिद्धिः, सानुनासिकवकारयुक्तरूपाऽऽपत्तिश्चेत्यपि दूषणं बोध्यम् । एतेन 'ऊँ' इति सूत्रे शाकल्यग्रहणमात्रमनुवर्त्तते' इति निरस्तम् । ध्वनितञ्चेदं भाष्य-

---

**लघुशब्दरत्नः**

अनुनासिके वकारे इति । इदं कैयटाऽनुरोधेन । मय उञः (८।३।३३) इत्यत्र विधीयमानस्य सवर्णग्राहकत्वाऽभावेनाऽनेन[2] सानुनासिकविधानाऽभावेन कथमत्र सः । अन्यथा इवमो

---

[1] 'अष्टाविंशति-रूपाणि' इति मुद्रितेषु पाठः ।
[2] 'अनेन' इति क. नास्ति ।

**यर्त्त्वात्पाक्षिके द्वित्वे द्वे (२)। सङ्कलनया चतुर्दश (१४)। इतिशब्देकारस्य अणोऽप्रगृह्यस्य (८।४।५७) इत्यनुनासिकविकल्पादष्टाविंशतिरिति (२८)।**

**इत्यच्सन्धिः।**

## अथ हल्सन्धिप्रकरणम्।

**स्तोः श्चुना (८।४।४०)। 'स्तोरि'ति समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्। श्चुनेति। सहयुक्ते ( २।३।१९ ) इति सूत्रे 'विनाऽपि तद्योगं तृतीये'ति**

---

बृहच्छब्दरत्नः

कैय्यटयोः। 'मय उञ' इति सूत्रे बहुलक्ष्यसंस्काराऽनुरोधान्न धातोर्ग्रहणम्।

इत्यच्सन्धिः।

सौत्रमिति। 'तृतीयादिषु' इति सूत्रेणेत्यर्थः। 'श्चुरि'ति पदद्वयमि'ति कश्चित्। 'श्चुने'ति न कर्त्तरि तृतीया। तदन्वययोग्यक्रियाया असम्भवात्, मानाऽभावाच्च। एतेन 'करणादावि'त्यपास्तम्। अवान्तरव्यापाराऽभावाच्च। न च सम्बन्ध एव व्यापारः। हेतु-करणत्वयोरभेदाऽऽपत्तेः। कारकमात्रस्य करणत्वाऽऽपत्तेश्च। 'श्चुकरणकः स्तोः स्थाने श्चुर्भवती'त्यर्थाऽपत्तौ 'लवनमि'त्यादौ दोषाऽऽपत्तेश्च। अप्रसिद्धत्वाच्च। एकलदयवृत्तित्वं तु न वचने प्रविष्टमित्याशङ्क्याऽऽह-सहयुक्ते इति। 'सह'शब्दोऽयमस्ति तुल्ययोगे, यथा 'शिष्येण सहोपाध्यायः पठति'। अस्ति च विद्यमानवचनः-'सहैव पुत्रैर्दशभिर्भारं वहति गर्दभी'ति यथा। 'सहयुक्तेऽप्रधाने' इति [1]सूत्रन्तु विनिगमकाऽभावादुभयत्राऽपि प्रवर्त्तते। [2]शाब्दक्रियासम्बन्धाऽभाव-रूपाऽप्राधान्यस्योभयत्राऽपि सत्त्वात्। तुल्ययोगवाची तु प्रकृते न गृह्यते, शिष्य-स्याऽऽर्थसम्बन्धप्रतीतिवदार्थस्थान्यादेशसम्बन्धाऽऽपत्तौ [3]निमित्तनिवृत्त्यापत्तेरित्या-

---

लघुशब्दरत्नः

मस्याऽनुनासिकोऽकारः[4] स्यात्। अत एवेदृशे विषये गुणानामभेदकत्वपक्षाऽनाश्रयणमिति चिन्त्यम्। **इति स्वरसन्धिः।**

विनापि तद्योगमिति। साहित्यं च योगक्रियायाम्। एतदिति। संयोग इति तदर्थः। 'सत्या'[5] 'भीम' इतिवन्निर्देशः। संयोगश्चाऽव्यवहितयोरेवेति 'चित्तं' 'कटु तैलमि'त्यादौ

---

१ 'सूत्रे तु' इति क. ख. पाठः।

२ 'शब्दक्रिया' इति क. ख. पाठः।

३ 'निमित्त-निमित्त-निवृत्त्यापत्ते' इति ख. पाठः।

४ 'अनुनासिको वँकारः' इति क. पाठः।

५ 'सत्या भामे'तिवन्निर्देश' इति मुद्रितः पाठः।
'सत्या' 'भीम' 'इतिवन्निर्देश' इति क. घ. पाठः।

वक्ष्यते। योगे इति। एतदध्याहारलभ्यम्। अत्र स्थान्यादेशयोर्यथासङ्ख्यम्। निमित्त-कार्यिणोस्तु न। शात् ( ८।४।४४ ) इति ज्ञापकात्। अल्पाच्तरम् (२।२।३४) इत्यादौ तु सौत्रत्वात् श्चुत्वं न। 'तत्-ज्ञानमि'त्यादौ तु भवत्येव। 'स्तोः श्चौ 'श्चुरि'ति सुवचम्। न च तस्मिन्निति निर्दिष्टे ( १।१।६६ ) इति परिभाषोपस्थानेन 'यज्ञः' 'याच्ञे'त्यादि न सिध्येत्। शात् ( ८।४।४४ ) इति लिङ्गेन तस्या इहाऽनुपस्थानाऽभ्युपगमात्।

---

बृहच्छब्दरत्नः

शयेन व्याचष्टे—एतदिति। विद्यमानवाचिसहशब्दयोगे उभयोरेकाऽधिकरणत्व-प्रतीतेः सत्त्वेन एकाऽर्द्धमात्राकालाऽधिकरणत्वाऽसम्भवेन त्यागेऽपि, मात्राकाला-ऽधिकरणत्यागे मानाऽभावेन 'चयनमि'त्यादौ व्यवहिते न प्रवर्त्तते।

यद्वा आर्थप्रधानक्रियाऽन्वयित्वं 'पुत्रेण सह स्थूलो दृश्यते,' 'शिष्येण सहो-पाध्यायस्य गौरस्ती'त्यादाविव त्यज्यते, 'तस्माच्छसो न' इत्यादिनिर्देशादिति ध्वनय-न्नाह—एतदिति। 'स्तोरि'त्यस्य निरूपकत्वेन, कर्त्तृत्वेन वा योगशब्दं प्रत्यन्वयः। तस्यैव सामर्थ्यात्, क्लृप्तषष्ठ्यन्तत्वेन च स्थानित्वम्। न चैवं योगशब्दोपात्तक्रियां प्रति 'श्चुने'ति तृतीयान्तस्य करणत्वेन,हेतुत्वेन वाऽन्वयोऽस्त्विति वाच्यम्। 'धनेन च स्त्रीपुरुषयोर्योग' इत्यादाविव निरूपकत्वादिनाऽन्यस्याऽन्वयाऽऽत्तेः। 'स्त्रिया सह पुरुषस्य योग' इत्यादाविव तस्यैवाऽर्थतो निरूपकत्वादिकं, तर्हि 'सहयुक्ते' इत्यस्यैव विषयः सम्पन्न इति दिक्।

यथासङ्ख्यमिति। 'अनन्त्यश्च भवेत्पूर्वो ह्यन्त्यश्च परतो यदी'त्यादिपर्यालोचनया 'त-थ-द-ध-न्ने'त्यानुपूर्व्या अनादित्वस्याऽऽवश्यकत्वेन, [2]तमादाय 'परस्मैपदानां णलि'-त्यादाविव वर्गांऽशेऽपि यथासङ्ख्यसूत्रप्रवृत्तिः। बाह्यप्रयत्नाऽऽन्तरतम्येन 'स्थाने-ऽन्तरतम'परिभाषया निर्वाहे तु सकार-शकारांशेऽप्याभ्यन्तरप्रयत्नाऽऽन्तरतम्येन,

---

लघुशब्दरत्नः

न दोषः। यथासङ्ख्यमिति। 'त-थ-द-ध-नें'त्यादेरप्यनादितया तमादाय परस्मैपदानां णल् (३।४।८४) इत्यादौ सूत्राऽन्तरस्थक्रमेणेव यथासङ्ख्यमिति भावः। च्वादिशब्दैश्च[3]अनादि-सिद्ध-लोकप्रसिद्ध-क्रमेणैवोपस्थितिरिति तात्पर्यम्।

ननु[4] 'तत्-ज्ञानमि'त्यादौ श्चुयोगाऽभावान्न स्यादत आह—तज्ज्ञानमिति। ज-ञयोगे तयोच्चारणमात्रं, न त्विदं वर्णाऽन्तरमिति भावः। अनुपस्थानेति। पूर्वत्वांऽशाऽनुपस्थाने-

---

[1] 'श्चु' इति निर्विसर्गः ङ. छ. पाठः।
[2] 'तामादाय' इति क्वचित् पाठः।
[3] 'अनादिलोकप्रसिद्ध' इति क. पाठः।
[4] 'तज्-ज्ञानमित्यादौ' इति मुद्रितः पाठो मूले, टीकायाञ्च।

**ष्टुना**( ८।४।४१)। इहाऽपि कार्यि-निमित्तयोर्यथासङ्ख्यं न। तोष्षि ( ८।४।४३ ) इति ज्ञापकात्। 'ष्टौ ष्टुरि'त्युचितम्[1]। 'ईड्ढे' 'ईट्टे' इत्यादौ न पदान्तात् ( ८।४।४२ ) इति ज्ञापकान्न दोषः। **सर्पिष्टममिति**। ह्रस्वात्तादौ ( ८।३।१०१ ) इति षत्वम्।

**प्रत्यये भाषायामिति**। यत्तु प्राचा 'मयटि नित्यमि'ति पठितम्। यच्च हलन्तप्रकरणे 'षण्णां, षड्णामि'त्युदाहृतम्। यच्च 'यरोऽनुनासिके ( ८।४।४५ ) इति वाऽनुनासिक' इति तत्र व्याख्यातं, तत्सर्वं भाष्यविरोधादुपेक्ष्यम्। **यवादिगण इति**। यत्तु भत्-त्तसौ मत्वर्थे (१।४।१८–१९) इति संहितया पाठे 'तसौ' इति तात्पूर्वं दकारं प्रश्लिष्य, भत्वेनाऽप्येतत्

बृहच्छब्दरत्नः

स्थानाऽऽन्तरतम्येन निर्वाहः सुकरः। अत एव यथासङ्ख्यसूत्रं मूले नोपन्यस्तमि'ति ध्येयम्। यत्तु'तज्ज्ञानमि'त्यादौ चुत्वं न, वर्णाऽन्तरत्वेनैवाऽनुभवेन,'ज्ञोर्ज्ञ'इत्यनेनाऽऽदेशान्तरस्यैवोभयोः स्थाने विधानेन च जत्वाऽभावात्। न च स्थानिवद्भावः। अल्विधित्वादि'ति। तन्न। 'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मता' इत्यादिशिक्षादावपि परिगणितत्वेन वर्णाऽन्तरत्वे मानाऽभावात्। किञ्चाऽस्तु वर्णाऽन्तरत्वं, तद्विधायकं च 'ज्ञोर्ज्ञ' इति वचनं, तथापि जकारनिमित्तकार्यप्रवृत्तिरावश्यकी। अत एवेदं वचनं त्रिपाद्यां पाठ्यम्, तस्य चाऽसिद्धत्वात् हलादिःशेषेण ञकारनिवृत्तौ, 'जज्ञौ' इत्यादिसिद्धिः। एतेन 'ज्ञाधातौ जकार-ञकारयोगे मानाऽभाव' इत्यपास्तम्। धातुषु मानाऽन्तरबोधितवर्णस्यैव स्थापयिष्यमाणत्वाच्च। तत्सर्वं हृदि निधायाऽऽह—तज्ज्ञानमित्यादाविति (२०१ पृष्ठे)। तस्याः=पूर्वत्वश्रुतेः। तच्च शकारटवर्गांऽशे एवेति नाऽऽग्रहः। ज्ञापकस्य योगाऽपेक्षत्वात्। अव्यवहितत्वांऽशोपस्थितिरस्त्येव, बाधकल्पने मानाऽभावात्।

लघुच्छब्दरत्नः

त्यर्थः। तेन 'चितमि'त्यादौ न दोषः। षत्वमिति। न च षस्य पदान्ते जश्त्वं भविष्यतीति [2]तद् व्यर्थमिति वाच्यम्। षत्वस्याऽसिद्धत्वेनाऽस्य जश्त्वाऽभावात्।

भाष्येति। 'प्रत्यये' इत्येव तत्र पाठादिति भावः। दकारमिति। चर्त्वेनेति भावः। 'मृत्'शब्दस्य यवादिगणे पाठे न मानमि'ति तत्र झयः(८।२।१०)इति वत्वे, [3]मृद्वानि-

[1] 'ष्टौ ष्टुरिति सुवचम्' इति मुद्रितेषु पाठः।
'ष्टौ ष्टु' इति निर्विसर्गः ङ. पाठः।

[2] 'तद्वैयर्थ्यमिति' क. पाठः।

[3] 'मृन्मानित्यस्याऽसिद्धचापत्तेः' इति क्वचिन्मुद्रिते पाठः।

समाधातुं शक्यम् ।

उदः स्था (८।४।६१)। अनुस्वारस्य ययि (८।४।५८) इत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते, एकदेशे स्वरितत्वप्रतिज्ञानादित्याशयेनाऽऽह—पूर्वसवर्णः स्यादिति। अघोषस्येत्यादि । एतेन

---

बृहच्छब्दरत्नः

समाधातुं शक्यमिति । एतदुत्तरम् "इति केचित् । तन्न । 'मृन्मानि'त्यादावतिप्रसङ्गात्" इति ग्रन्थो दृश्यते। स तु दुष्टप्रक्षिप्तो बोध्यः। तस्मात् 'झय' इति वक्त्वे 'मृद्वानि'ति भवति। केचित्तु 'ककुद्मन्त' इत्यत्रेव 'मृनि'त्यत्राऽपि यवादिगणे प्रकृतिप्रत्ययोभयपाठाद्विकाराऽभाव' इत्याहुः ।

अधिकारे यत्र प्रकृतवाक्यार्थाऽन्वययोग्याऽर्थस्य प्रकरणादुपस्थितिस्तत्र शब्दमात्रकल्पना। अन्यत्र त्वर्थस्याऽपि। अत एव पराऽपेक्षया पूर्वस्य प्राबल्यम्। प्रकृते तु न प्रकरणादर्थोपस्थितिः। 'परसवर्ण' इत्यस्य समस्तत्वेनैकार्थीभावाऽङ्गीकारात्, 'पूर्वस्ये'ति षष्ठ्यन्ताऽन्वयाऽयोगात्। अत एव 'राजपुरुषो देवदत्तस्ये'ति नेति स्पष्टं समर्थसूत्रे भाष्ये इत्याशङ्क्याह—निष्कृष्येति। एकदेशे इति। 'परसवर्ण'-पदे स्वरितत्वप्रतिज्ञाया उत्तरत्राऽनुवृत्त्यर्थत्वेन चारितार्थ्येऽपि, 'सवर्ण'पदेऽपि स्वरितत्वप्रतिज्ञानमुक्ताऽर्थलाभाऽर्थम्। अत एव 'पूर्वस्ये'त्यस्याऽन्वयः सुलभः।

---

लघुशब्दरत्नः

त्येवेति तात्पर्यम् । "इति केचित् । तन्न । 'मृन्मानि'त्यादावतिप्रसङ्गात्"—इति तु [1]क्वाचित्कोऽसाम्प्रदायिकः पाठः ।

ननु सवर्णपदमधिकम्। 'परसवर्ण' इत्यत्रैकार्थीभावाऽऽपन्नस्याऽन्यत्र सम्बन्धो वक्तुमशक्यः। न च 'पूर्वस्ये'त्यस्य सम्बन्ध्याकाङ्क्षायां यत्किञ्चित्सम्बन्धिकल्पनाऽपेक्षया पूर्वत्रोपस्थिताऽर्थवाचकपदाऽध्याहारौचित्यात्तल्लाभः। [2]चुटू (१।३।७)इत्यादावादेरप्येवमेव सम्बन्धोपपत्तौ, [3]तत्र-तत्र स्वरितत्वप्रतिज्ञाया वैयर्थ्याऽऽपत्तेः। न च स्वरितत्वप्रतिज्ञासामर्थ्यादिकदेशाऽनुवृत्तिः। तोर्लि (८।४।६०) इत्यत्र समुदायाऽनुवृत्त्या तस्याश्चारितार्थ्यादित्यत आह—अनुस्वारस्येत्यादि। एकदेशे इति च। [4]पकारमात्रे स्वरितत्वप्रतिज्ञयैव तोर्लि(८।४।६०) इत्यादावनुवृत्तिसिद्धौ, पुनः[5] सकारांऽशे तत्प्रतिज्ञया तावतोऽप्यंशस्य उत्तरत्राऽनुवृत्तिरिति भावः।

---

[1] 'असाम्प्रदायिकः' इति घ. नास्ति ।

[2] 'चूटू इत्यादौ इत्पदादेरपि एवमेव' इति क. घ. शोधितः पाठः ।

[3] 'तत्र' इत्येकमेव मुद्रितेषु वर्त्तते ।

[4] पकाररमात्रे=परसवर्णपदघटकपकारे ।

[5] सकारांऽशे='सवर्ण'पदघटकसकारे इत्यर्थः ।

'सस्य तकार' इति प्राचां ग्रन्थाः प्रत्युक्ताः। यदपीह 'चयो द्वितीयाः शरी'-त्यस्योपन्यसनम्, तदतिरभसात्।

**तच्छिव इति।** यत्तु प्राचा 'तत्-शिव' इत्यत्र जश्त्वे कृते, 'खरि च' ( ८।४।५५ ) इत्युक्तम्। तन्न। तदो दान्तत्वेन जश्त्वोपन्यासवैयर्थ्यात्।

यत्तु तत्पौत्रेणोक्तं—'तदो वाऽवसाने ( ८।४।५६ ) इति चर्त्वे कृते, पश्चाच्छिव इत्यनेन सम्बन्धे, झलां जशोऽन्ते ( ८।२।३९ ) इति जश्त्वे, खरि च ( ८।४।५५ ) इति चर्त्वमि'ति। तदतिस्थवीयः। जश्त्वं प्रत्यवसाने

---

**बृहच्छब्दरत्नः**

प्रत्युक्ता इति। महाप्राणघटिताऽऽन्तर्यत्यागे बीजाऽभाव इति भावः। न च थकारस्य 'खरि चे'ति चर्त्वं शङ्क्यम्। उक्तदोषाऽनिस्तारात्। त्रिपाद्यां परत्वेना-ऽसिद्धत्वात्। खरो निमित्तत्वेन तद्व्यतिरिक्तस्यैव कार्यित्वेन ग्रहणाच्च। बहिरङ्गत्वेना-ऽसिद्धत्वाच्च।

ननु 'उत्पूर्वत्वे स्कन्देश्छन्दस्युपसङ्ख्यानम्' 'अघ्न्ये दूरमुत्कन्द'। 'रोगे चे'ति वक्तव्यम्'। 'उत्कन्दो रोग' इति भाष्यं विरुध्येत। न च छान्दसत्वात्तकार इति वाच्यम्। चरमवार्त्तिकस्याऽऽरम्भसामर्थ्येन लोकेऽपि प्रवृत्तेर्युक्तत्वात्। न च सकाररहित-कन्दतिमादाय 'उत्कन्द' इति प्रयोगसिद्धौ वचनवैयर्थ्यम्। तकारद्वय-श्रवणाऽनापत्तेः। स्कन्दतेरपि रोगविषये प्रयोगस्य दुर्वारत्वेनाऽनिष्टनिवारणेन चारितार्थ्याच्चेति चेन्न। पूर्ववार्त्तिके तकारप्रश्लेषेणाऽदोषात्।

यत्तु 'अघोषस्ये'ति न्यूनम्। श्वास-विवारयोस्त्यागे मानाऽभावात्। अत एव 'घोषवत' इत्यादिभवदुक्तिः सङ्गच्छते' इति। तन्न। समनियतधर्माणामन्यतम-ग्रहणे बाधकाऽभावात्। विनिगमनाविरहेण स्वरूपप्रदर्शनपरतया त्रितयग्रहणे त्वत्य-भावाच्च। रभसादिति। 'चयो द्वितीया' इत्यस्य भाष्ये 'नादिन्याक्रोशे पुत्रस्ये'त्यत्र पठितत्वेन [1]तत्वस्याऽसिद्धत्वादिति भावः। अत एव च 'ङः सि तुट्'इति न सूत्रितम्।

---

**लघुशब्दरत्नः**

तदतिरभसादिति। चयोऽभावात्। दीर्घादाचार्याणाम्(८।४।५२) इत्युत्तरम् अनु-स्वारस्य ययि (८।४।५८) वा पदान्तस्य (८।४।५९) तोर्लि (८।४।६०) उदः स्था (८।४।६१) झयो हो (८।४।६२) शश्छोऽटि (८।४।६३) इति षट्सूत्रीपाठोत्तरं, झलां जश् झशि (८।४।५३) अभ्यासे चर्च (८।४।५४) खरि च (८।४।५५) वाऽवसाने (८।४।५६) अणोऽप्रगृह्यस्य (८।४।५७) इति पञ्चसूत्र्याः पाठे भाष्यसंमते थस्य चर्त्वेऽपि तस्याऽसिद्धत्वात्,[2] शर्परत्वाऽभावाच्चेति भावः।

चर्त्वमिति। ततः श्चुत्वे शश्छोऽटि (८।४।६३) इति प्रक्रियेति भावः।

---

[1] तत्वस्य=तकारस्येत्यर्थः।

[2] 'तस्याऽसिद्धत्वाच्च' इति क. घ. पाठः। 'शर्पराऽभावाच्च' इति क. पाठः।

चर्त्वस्याऽपवादत्वात् । जश्त्वे शिवशब्दाऽनपेक्षणाच्च । भाविन्यवसानभङ्गे वाऽवसाने (८।४।५६) इत्यस्य पूर्वमप्रवृत्तेश्च । प्रवृत्तस्य वा निवृत्ति-सम्भवात् । तदुक्तम्—'अकृतव्यूहाः पाणिनीया' इति, 'कृतमपि[1] शास्त्रं निवर्त्तयन्ती'ति च । अन्यथा 'हरिरयमि'त्यत्राऽपि भवदुक्तरीत्या[2] प्रवृत्तो विसर्गः केन वार्यताम् ? । अथ 'तनोतीति तदि'ति क्विबन्तं ब्रूषे, एवमपि जश्त्वेन दकारोऽस्तु । 'चर्त्वे कृते [3]चुत्वमि'ति तु न न्याय्यम् । [3]चुत्वं प्रति

---

बृहच्छब्दरत्नः

चर्त्वस्याऽपवादत्वादिति । तथा च बाधितस्य पुनः प्रवृत्तिरयुक्ता । चर्त्वशास्त्र-वैयर्थ्याऽऽपत्तिश्च । न चैवं 'राम'शब्दे जश्त्वोपन्यासाऽनन्तरं चर्त्वोपन्यासस्त्वदुक्तो-ऽसङ्गतः स्यादिति वाच्यम् । पूर्वं 'वाऽवसाने' इति चर्त्वेऽपि, तदभावे जश्त्वस्य दुर्वारत्वेन, तस्मिन्कृते 'वाऽवसाने' इति चर्त्वस्याऽपि[4] प्रवृत्त्या तद्ग्रन्थे दोषा-ऽभावात् । न च चर्त्वाऽभावपक्षस्योपक्रान्तत्वेन तत्र चर्त्वोऽपन्यासो न युक्त इति वाच्यम् । तकारे चर्त्वाऽभावपक्षेऽपि दकारे तत्पक्षस्य वक्तुं शक्यत्वात् । वस्तुतस्तु 'वाऽवसाने'इति चर्त्वस्याऽसिद्धत्वात्पूर्वं जश्त्वोपन्यास एव युक्तः । न च चर्त्वस्य वैयर्थ्यम् । जश्त्वे कृते तस्य सावकाशत्वात् ।

---

लघुशब्दरत्नः

चर्त्वस्यापवादत्वादिति । एवञ्च तत्र कृते जश्त्वाऽप्रवृत्तिरिति भावः । न च जश्त्वे कृते चर्त्वस्य चारितार्थ्येन,[5] तस्याऽसिद्धत्वादपवादत्वे न मानमिति वाच्यम् । तत्कालेऽवश्य-प्राप्तत्वेन[6] येन नाप्राप्तिन्यायेनाऽपवादत्वस्य सुलभतयोक्तरीतेरसम्भवात् ।

एतदेवाऽभिप्रेत्य मिदचोऽन्त्यात् (१।१।४७) सूत्रे भाष्ये उक्तम्—'सत्यपि सम्भवे बाधनं भवती'ति । अन्यथा 'कौण्डिन्याय तक्रमि'त्यनेन 'ब्राह्मणेभ्यो दधी'ति प्राप्तदधिदान-स्याऽपि बाधो न स्यात् । तद्दानोत्तरं, तत्पूर्वं वा तद्दानस्य चारितार्थ्यात् । अत एव अजादे-र्द्वितीयस्य (६।१।२) इति सूत्रे 'प्रथमद्विर्वचनोत्तरमस्य चारितार्थ्येन प्रथमद्विर्वचनस्याऽनेन बाधो न स्यादि'त्याशङ्क्य 'सत्यपि सम्भवे' इति न्यायेन बाधकत्वमुक्तं भाष्ये । एवं च दयते-र्दिगि (७।४।९) इति सूत्रस्थकैयटादिग्रन्था 'असम्भवे एव बाधकते'ति वार्त्तिकाऽनुसारेण प्रवृत्ता, अयुक्ता एवेति बोध्यमिति भावः । केन वार्यतामिति । एवं चेदृशविषये वाक्यसंस्कार-

---

[1] 'कृतमपि कार्यम्' इति घ. पाठः ।
[2] 'त्वदुक्तरीत्या' इति छ. मुद्रितेषु च पाठः ।
[3] 'श्चुत्वम्' इति मुद्रितेषु पाठः ।
[4] 'प्रवृत्त्यास्तद्ग्रन्थे' इति क. ख. पाठः ।
[5] 'तस्याऽसिद्धत्वात्' इति हि असाम्प्रदायिकः पाठः ।
[6] 'अवश्यं प्राप्तत्वेन' इति मुद्रितः पाठः ।

**चर्त्वस्याऽसिद्धत्वात्।** यत्तु न मु ने ( ८।३।३ ) इत्यत्र 'ने'ति योगं विभज्याऽसिद्धत्वमिह ने'त्याहुः। तदपि न। असिद्धत्वेऽपि रूपसिद्धौ निर्बाधायां, योगविभागस्याऽगतिकगतिभूतस्येहाऽऽश्रयणे प्रमाणाऽभावात्।

**आक्रंस्यत इति।** आङ उद्गमने (१।३।४०) इति तङ्। स्नुक्रमोः (७।२।३६) इति नेट्।

**समसम्बन्धी विधिरिति।** 'समकमकं विधानमि'ति तु नोक्तम्। अनुवाद्ययोरपि यथासङ्ख्यस्येष्टत्वात्। समूला-ऽकृत-जीवेषु हन्-कृञ्-ग्रहः ( ३।४।३६ ) इत्यत्र यथा।

---

**बृहच्छब्दरत्नः**

चर्त्वस्याऽसिद्धत्वादिति। न च छत्वोपन्यासाऽनन्तरं चुत्व-चर्त्वोपन्यासो मूले कथं कृत इति वाच्यम्। 'कृते' इत्युक्त्या छत्वात्पूर्वमेव चुत्वप्रवृत्तेर्ध्वनितत्वात्। 'दीर्घादाचार्याणाम्' 'अनुस्वारस्य ययि परसवर्णः' 'वा पदान्तस्य, 'तोर्लि' 'उदः स्थास्तम्भोः पूर्वस्य' 'झयो होऽन्यतरस्यां', 'शश्छोटि' 'झलां जश् झशि', 'अभ्यासे चर्च', 'खरि च' 'वाऽवसाने' 'अणोऽप्रगृह्यस्याऽनुनासिकः' 'हलो यमां यमि लोप' इत्यानुपूर्व्या भाष्यादिसंमतत्वेन छत्वाऽनन्तरं चर्त्वोपन्यासस्याऽयुक्तत्वाच्च। 'कृते' इत्यस्य 'देहलीदीपक'न्यायेनोभयत्राऽप्यन्वये बाधकाऽभावाच्च। एतेन 'हेर्धि; जश्त्वं, ष्टुत्वं, 'झरो झरी'ति वा ढलोपः, अनुस्वार-परसवर्णौ, 'शिण्ढी'ति भवदीयग्रन्थवत्, अस्मदीयग्रन्थोऽपि प्रक्रियाप्रदर्शनपरो, न क्रमपर' इति मन्दोक्तमपास्तम्। [१]भवदीय-ग्रन्थे 'कृते' इत्युक्तत्वात्। उक्त-वक्ष्यमाणरूपाणां प्रक्रियाप्रदर्शने तात्पर्येण क्रमस्याऽस्मदीयग्रन्थे त्यागाच्च। अत एव च 'झलां जशोऽन्ते' इति जश्त्वमपि 'जश्त्व'शब्देन बोध्यमित्याहुः। यथासङ्ख्यस्येति। 'यथासङ्ख्ये'त्येकदेशेन सूत्रं गृह्यते। 'यथासङ्ख्य'-त्यादिस्त्वत्र प्रकृतिरित्यर्थः। इष्टत्वादिति। सूत्रात्तथैव लाभादिति भावः। अनुदेश-

---

**लघुशब्दरत्नः**

पक्षेणैव साधुत्वाऽन्वाख्यानमिति स्वीकृत्याऽकृतव्यूहपरिभाषा त्याज्येति चेत्। इष्टाऽऽपत्तिरिति बोध्यम्। अन्ये तु 'पदसंस्कारे 'हरिः[२] अस्ती'ति सविसर्गमपि साध्वेव, सत्यभिधाने[३]। परिभाषाया भाष्ये अदर्शनादित्याहुः। प्रमाणाऽभावादिति। योगविभोगस्य [४]भाष्येऽदर्शनेन अप्रामाणिकत्वाच्चेत्यपि बोध्यम्। यथासङ्ख्यस्येति। ख्यान्तैकदेशेन सूत्रस्य ग्रहणं बोध्यम्।

---

[१] 'भवदीयग्रन्थं कृते'इत्युक्तत्वात्' इति क. ख. पाठः।

[२] 'हरिः अयम्' इति घ. पाठः।

[३] यथा 'हरिः ॐ' इति प्रयोगः साधुरिति बोध्यम्।

[४] 'भाष्ये अदर्शनात्, अप्रामाणिकत्वाच्चेत्यपि बोध्यम्' इति क. घ. पाठः।

ङ्णोः ( ८।३।२८ )। कुक्टुकोः पूर्वाऽन्तत्वात् 'प्राङ्क्साये' इत्यत्र सात्पदाद्योः ( ८।३।१११ ) इति षत्वं न। 'सुगण्ट्साये' इत्यत्र न पदान्ताट्टोः ( ८।४।४२ ) इति ष्टुत्वं न।

'पुष्करे = तीर्थविशेषे सीदती'ति पुष्करसत्। तस्याऽपत्यं-पौष्करसादिः-आचार्यः। बाह्वादित्वादिञ्। अनुशतिकादित्वादुभयपदवृद्धिः।

ङः सि धुट् ( ८।३।२९ )। 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्, परत्वादि'त्यभिप्रेत्याऽऽह—सस्येति। 'सी'ति सप्तमीनिर्देशस्तु लाघवाऽर्थः।

---

बृहच्छब्दरत्नः

पदन्तु[1] सम्बन्धपर्यायवचनम्। यद्यपि स्थानाऽऽख्यप्रमाणादेव सिद्धिस्तथापि 'परस्मैपदानामि'त्यादौ सूत्राऽन्तरस्थक्रममादाय सम्बन्धबोधनाऽर्थं सूत्रम्। न हि 'परस्मैपदानामि'ति सूत्रे 'परस्मैपद'शब्देन तिबादीनां क्रमेणैवोपस्थितिरित्यत्र मानमस्ति। अत्र 'स्वरितेने'त्यपकृष्यते। तेन 'ख्यत्यात्परस्ये'त्यत्र न स्थानाऽऽख्यलौकिकप्रमाणस्याऽपि प्रवृत्तिः। अपकर्षसामर्थ्यादित्यन्यत्र विस्तरः।

पुष्कर इति। छन्दसि तु प्रातिशाख्याऽनुरोधात् पदान्ते न प्रवृत्तिः।

ङः सि। 'ङ' इति पञ्चमी, प्रथमोपस्थितत्वात्। एवं 'नश्चे'त्यत्राऽपि। अत्र न तावत् सप्तमी-पञ्चम्योर्युगपत्प्रकल्पकत्वम्। कार्यित्व-निमित्तत्वयोर्युगपदसम्भवात्। 'एकः पूर्वपरयोरि'ति ज्ञापकाच्च। न च पर्यायेण। आवृत्त्यापत्तेः। किञ्च कथञ्चिदपि निर्णयस्य कर्तुं शक्यत्वेनाऽष्टदोषदुष्टविकल्पस्याऽयुक्तत्वादिति ध्वनयन्नाह—उभयेति। परत्वादिति। यद्यपि कार्यकालपक्षे परिभाषयोर्न परत्वं, नाऽपि सकारस्याऽऽगमित्वबोधकपञ्चमीनिर्देशस्य परत्वं, तथाऽपि प्रधानीभूताऽऽगमित्वाऽऽश्रयबोधकशब्दयोर्मध्ये 'सी'ति शब्दस्य परत्वमस्त्येवेति भावः। 'सी'ति सप्तम्यन्तस्य 'ङ' इति पञ्चम्यन्ताऽपेक्षया परत्वात्, आगमसन्निहितत्वाच्चाऽऽगमित्वमित्यर्थः। 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति सूत्राऽपेक्षया 'तस्मादित्युत्तरस्ये'त्यस्य परत्वादि'ति वाऽर्थः। षष्ठीप्रक्लृप्त्यभावपक्षेऽप्यार्थिकाऽवयवाऽवयविभावकल्पनस्य

---

लघुशब्दरत्नः

परत्वादिति। तस्मिन् (१।१।६६) इति सूत्राऽपेक्षया तस्मात् (१।१।६७) इत्यस्य परत्वादित्यर्थः। 'ङकारात्सकारे धुडि'त्यर्थे तस्मिन् (१।१।६६) इत्यस्य प्रवृत्तौ, उपस्थितङकारस्याऽऽगमित्वं, 'तस्मादि'त्यस्य प्रवृत्तावुपस्थितस्य सस्य तत्त्वमि'त्यसम्भवरूपविरोधे, परत्वेन व्यवस्थेति सस्याऽऽगमित्वनिर्णय इति भावः। स्पष्टं चेदं तस्मिन् (१।१।६६)इति सूत्रे भाष्ये।

लाघवार्थ इति। षष्ठ्याः प्रयोगे एव कर्त्तव्ये इत्यर्थः।

---

[1] 'अनुदेशपदे तु' इति क. ख. पाठः।

**षट्त्सन्त इति। धुटश्चर्त्वेन तकारः। यत्त्वाहुः—'चयो द्वितीया' इति पक्षे तस्य थ' इति। तन्न। चर्त्वस्याऽसिद्धत्वात्। अत एव धुडभावे 'षट् सन्त' इत्यत्र टस्य ठो न। टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश (१६)। 'खयः शरः' इति सकारद्वित्वे द्वात्रिंशत् (३२)। न च तत्र चर्त्वस्याऽसिद्धत्वं शङ्क्यम्। 'पूर्वत्राऽसिद्धीयमद्वित्वे' इत्युक्तेः। न च शरोऽचि ( ८।४।४९ ) इति (द्वित्व)निषेधः शङ्क्यः। तस्य सौत्रद्वित्वमात्रविषयत्वात्। अत एव 'शरः खय' इति वार्तिकस्य 'वत्सरः' 'अप्सरा' इत्युदाहरणं[१] भाष्ये स्थितम्। धुटः परा-**

---

बृहच्छब्दरत्नः

श्रुतशब्दाऽविरोधेनैव [२]युक्तत्वात्। नियतशास्त्राऽर्थस्य युक्तत्वेन 'अणुरपि विशेषोऽध्यवसायकर' इति न्यायात्। ननु 'ङ' इत्यस्य सन्दिग्धत्वेन, 'सी'ति निर्देशस्याऽसन्दिग्धत्वेन प्रथमाऽतिक्रमणेन वैपरीत्यं युक्तमित्याशङ्क्याह—सीतीति। 'सप्तमीनिर्देशो लाघवाऽर्थः, षष्ठीबाधनाऽर्थो वे'ति सन्देहस्याऽत्राऽपि तुल्यत्वादिति भावः। इत्युक्तेरिति। न च[३]द्वित्वमात्रे एवाऽयं निषेध इति वाच्यम्। विनाप्रमाणं सङ्कोचस्याऽन्याय्यत्वात्। 'न मु ने' 'संयोगाऽन्तलोपो रोरुत्वे' इत्यादिसिद्धकाण्डसाहचर्येण, लाघवाच्च 'द्विर्वचनाऽपेक्षया परशास्त्रं नाऽसिद्धमि'त्यर्थस्यैव कल्पनाच्च।

ननु 'धुक् ङः सी'त्येव सूत्रमस्तु, विधेयस्य प्रथमोपादानात्सन्निहितत्वाच्च डकारस्यैवाऽऽगमित्वम्। 'सी'ति सप्तमी यथाश्रुतैवेत्याशयेनाऽऽह—धुटः परादित्वमिति।

अत एवेति। 'चयो द्वितीया' इत्यस्य प्रातिशाख्याऽनुरोधेन वेदे अपदान्ते एव प्रवृत्तिरिति हलन्ते स्फुटम्। एवञ्च 'वेदलोकयोरैक्याऽर्थं लोकेऽपि व्यवस्थितविभाषया पदान्ते द्वितीयाऽऽदेशो ने'ति वादिनां मतेनेदम्। पुरुषभेदेन व्युत्पत्तिवैचित्र्यात् टान्त-तान्तयोः सङ्ख्याबोधे[४] कारणताया आवश्यकत्वे, अन्यतरस्य भ्रमत्वकल्पनम् उभयोरपि समानम्। वस्तुतः पारमार्थिकवाक्यशक्त्यङ्गीकारेण पूर्वाऽन्तत्वे, परादित्वे वा शक्तताऽवच्छेदकभेदो नास्तीति भावः। अवग्रहस्तु न पदत्वनिबन्धनः। अप-

---

लघुशब्दरत्नः

चर्त्वस्याऽसिद्धत्वादिति। अत एव 'तुडि'ति नोक्तम्। अत एव=चर्त्वस्याऽसिद्धत्वादेव।

ननु 'धुक् ङः सी'त्यस्तु, सप्तमी च यथाश्रुतैव। 'ङ' इति च षष्ठ्यन्तम्। परमार्थतो वाक्यशक्त्यङ्गीकारेण पूर्वाऽन्तत्वे, परादित्वे वा न शक्तताऽवच्छेदकभेदोऽत आह—धुटः परादित्वमिति। श्चोततिरुपदेशे सादिः। श्चुत्वस्य धुटि सिद्धत्वेऽपि, तुकि अद्वित्वात्

---

[१] 'इत्युदाहरणं भाष्ये दत्तम्' इति लिखितेषु पाठः।

[२] 'युक्तत्व' इति निर्विभक्तिकः क. ख. पाठः।

[३] 'द्वित्वभाक्त्वे एवाऽयम्' इति क. ख. पाठः।

[४] 'सङ्ख्याबोधने कारणतायाः' इति क. पाठः।

दित्वं न पदान्तात् (८।४।४२) इति ष्टुत्वनिषेधाऽर्थम्। अत एव वक्ष्यमाणस्तुगिहैव न कृतः। यत्त्वाहुः—'एवमपि प्रक्रियालाघवाऽर्थं तुडेव कर्त्तुमुचित' इति। तन्न। 'चयो द्वितीयाः' इति पक्षे थकाराऽऽपत्तेः। 'श्चुत्वं धुटि सिद्धं वाच्यम्'। अटतीति अट् श्चोतति। इह धुट् न।

शि तुक् (८।३।३१)। 'शी'ति सप्तमी पूर्वत्र कृतार्थाया 'न' इति पञ्चम्याः षष्ठीं कल्पयतीत्याह—नस्येति।

ननु प्रकृतो धुडेवाऽस्तु, किं तुका?। मैवम्। शश्छोऽटि (८।४।६३) इत्यस्य हि 'पदान्ताज्झयः परस्य शस्य छ' इत्यर्थ आकरे स्थितः। एवञ्च धुटः परादित्वात् 'सञ्च्छम्भुरि'त्यत्र छो न स्यात्, विपूर्वाद्रपेरौणादिके शप्रत्यये 'मध्वश्चोतन्त्यभितो विरप्शमि'त्यादौ यथा। अतः पूर्वाऽन्तस्तुक् कृतः।

नन्वेवं 'कुर्वञ्श्शेते' इत्यत्र पदान्तस्य (८।४।३७) इति णत्वनिषेधो

---

बृहच्छब्दरत्नः

देऽपि दर्शनात्। [1]वस्तुतस्तु अवग्रहे संहिताऽभावाद् धुडाद्यभावः। [2]शीतीति। द्वयोरचरिताऽर्थत्वे लाघवाऽनुरोधेन निरर्थकविभक्त्युच्चारणं युक्तमिति भावः। षष्ठीं कल्पयतीति। इदं च प्राचामनुरोधेन। अस्मन्नये तु षष्ठ्यर्थं कल्पयतीति बोध्यम्। तद्बीजन्तु पूर्वमेवोक्तम्।

[3]धुडेवास्त्विवति। 'श' इति षष्ठ्यन्तमेव कर्त्तव्यमिति भावः। पूर्वोक्तमतरीत्या 'शि तुगि'ति यथान्यासेऽपि द्वितीयाऽऽदेशा न भवन्त्येवेत्याशयः। आकर इति। तथा च लोके छत्वरहित एव 'विरप्शमि'ति प्रयोगः साधुरिति भावः। निषेधो न स्यादिति। न च पदान्तादिग्रहणेन 'यदागमे'ति परिभाषया समुदायग्रहणान्निषेधो भविष्यत्येवेति वाच्यम्। वर्णग्रहणे उक्तन्यायाऽप्रवृत्तेः। 'नान्तस्य पदस्ये'ति शाब्दाऽर्थस्य सत्त्वेन समुदायाऽवयवत्वात्। समुदायस्य कार्याऽनारम्भकत्वेऽवयव-

---

लघुशब्दरत्नः

'सन् श्चोतती'त्यत्र तुक् नेति बोध्यम्। षष्ठीं कल्पयतीति। न च 'शी'ति सप्तमीनिर्देशो लाघवार्थः। द्वयोरचरिताऽर्थत्वे लाघवेनाऽन्यविभक्त्युच्चारणं युक्तं, न त्वन्यथेत्याशयात्। धुडेवास्त्विवति। 'शी'ति च षष्ठ्यर्थे इति भावः।

विरप्शमिति। छान्दसाऽर्थमपि बहुशः सूत्रकृतो यत्नदर्शनादिति भावः।

---

१ 'वस्तु' इत्येव क. ख. पाठः।
२ 'शातीति' इति क. ख. पाठः।
३ 'धुक्-डेवास्तु' इति क. ख. पाठः।

न स्यादिति चेन्न। कार्यकालपक्षे बहिरङ्गत्वेन तुकोऽसिद्धत्वात्। [1]यथोद्देशे तु स्तोः श्चुना (८।४।४०) इति योगो विभज्यते। 'ने'ति वर्तते, 'ण' इति च। 'स्तोः श्चुना योगे णत्वं न स्यात्'। नकाराऽर्थमिदम्। सकारग्रहणं, वर्गग्रहणं चोत्तराऽर्थम्। ततः 'श्चुरि'ति। पूर्वमनुवर्तते। एवं नश्च (८।३।३०) इति सूत्रे 'कुर्वन्त्सीदती'त्यत्र 'पदान्तस्य (८।४।३७) इति

---

बृहच्छब्दरत्नः

कार्यस्य दुर्वारत्वाच्च। न हि 'आगमरहितो नकारो नशब्देन ग्रहीतुं च शक्यते' इत्यत्र मानमस्ति। आनर्थक्यन्तु सर्वत्राऽविशिष्टम्। ध्वनितञ्चेदं प्रकृतसूत्रे भाष्ये। ङमुट्सूत्रस्थभाष्यग्रन्थस्तु चिन्त्य एवेति सुधियो विभावयन्तु। णत्वं न स्यादिति। श्चुत्वस्याऽसिद्धत्वन्तु वचनसामर्थ्यान्नेति बोध्यम्।

वर्गग्रहणं वेति। 'वर्ग'शब्देन द्विवचनाऽन्तेन समासः। चेन शस्य सङ्ग्रहः। 'ङः सि धुडि'त्यादौ सर्वत्र 'उपदेशे' इति वचनात् सूत्राऽन्तर्गतेष्वेव धुडादिशब्देषु इत्सञ्ज्ञा प्रवर्त्तते। लोपस्तु तत्राऽऽनुपूर्व्याद्बाधितोऽपि पदस्वरूपपर्यालोचनायां प्रवृत्तः। तत्तत्पदज्ञानमप्यनुबन्धविनिर्मुक्तमेव। ततः 'स्वं रूपमि'ति सञ्ज्ञाबलात् जायमाना पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैव भवति। तथा च 'इदम इशि'त्यादौ-अण्त्वात्सवर्णग्रहणं प्राप्तम् 'अप्रत्यय' इत्यनेन निषिध्यते' इति भाष्यकारादिभिरुक्तम्। अत एव चतुर्दशसूत्र्यामुच्चारणाऽर्थाऽकारस्येव इत्सञ्ज्ञकानां पदपर्यालोचनायामेव 'लोपश्च बलवत्तर' इति न्यायेनाऽपहारात्, इतराऽन्तर्भावेणैव सञ्ज्ञा प्रवर्त्तते' इति सिद्धान्तः। अत एव 'चोः कुरि'त्यादौ चकारककारादीनां सञ्ज्ञात्वम्। 'उदिदि'त्यत्र त्वतद्गुणसंविज्ञानो बहुव्रीहिः।

युक्तञ्चैतत्। अन्यथोक्तरीत्या उकारस्य निवृत्तत्वेन सूत्रस्याऽसम्भवदुक्तिकत्वाऽऽपत्तेः। समुदायसवर्णिनामप्रसिद्धत्वेन क्लिष्टकल्पनाऽऽश्रयणाऽऽपत्तेश्च। इदञ्च 'अलोऽन्त्यात्पूर्व उपधे'ति सूत्रे, 'तस्मिन्निति निर्दिष्टे' इति सूत्रे च कैय्यटग्रन्थे स्पष्टम्।

किञ्च 'ङ्याप्प्रातिपदिकात्प्रातिपदिकाऽर्थबहुत्वे जस्प्रत्ययः परो भवती'ति-वाक्ये निष्पन्ने, पदजन्यपदार्थोपस्थितौ, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वेन, आकाङ्क्षा-योग्यतादेः कारणत्वेन च, जश्-प्रत्ययपदयोरभेदाऽन्वय आवश्यकः। तथा च जशि प्रत्ययपदवाच्यतायाः[2] सिद्धत्वेन 'चुट्' इत्यादीनां प्रवृत्तिर्दुर्वारा। एवञ्च सञ्ज्ञासूत्रप्रवृत्त्यनुरोधेनाऽन्तरङ्गत्वादित्सञ्ज्ञा-लोपयोः कृतयोर्निरनुबन्धकप्रत्ययविधाने आचार्यतात्पर्यं कल्प्यते।

---

लघुशब्दरत्नः

णत्वं न स्यादिति। एतद्दृष्ट्या श्चुत्वस्याऽसिद्धत्वं तु न। वचनसामर्थ्यादिति भावः।

---

[1] 'यथोद्देशपक्षे स्तोः श्चुना' इति मुद्रितः पाठः।

[2] 'वाच्यतासिद्धत्वेन' इति क. ख. पाठः।

णत्वप्रतिषेधो धुटः परादित्वे प्रयोजनमि'ति प्राचां ग्रन्थोऽपि यथोद्देशपक्षे बोध्यः। यत्तु वदन्ति—'इदं प्रयोजनं बहिरङ्गपरिभाषया गताऽर्थत्वात्प्रत्युक्त-मि'ति। तत्पाक्षिकम्, 'त्रिपादीस्थेऽन्तरङ्गे [1]बहिरङ्गपरिभाषेयं न प्रवर्त्तते' इति 'सुध्युपास्य' इत्युदाहरणे स्वोक्त्या सह विरुद्धं चेत्यास्तां तावत्।

सञ्छम्भुरिति। इह श्चुत्व-तुकोरसिद्धतामाश्रित्य नश्छवि (८।३।७) इति रुत्वं न[2] शङ्क्यम्। छत्वस्याऽसिद्धत्वात्।

ङमो ह्रस्वात् (८।३।३२) ङम् प्रत्याहारः। सञ्ज्ञायाञ्च च कृतं

---

बृहच्छब्दरत्नः

अत एव 'उद्भिदा यजेते'त्यादौ 'उद्भिदभिन्नयागकरणिका भावनाविधिरि'ति-मीमांसकोक्तसिद्धान्तः सङ्गच्छते। पूर्वमुद्भिद्यागयोरभेदाऽग्रहे त्वेककरणाऽवरुद्ध-भावनायामन्यकरणस्य निवेशाऽयोगेन सिद्धान्तसिद्धिर्न स्यादिति स्पष्टमेव। 'नाऽनुब-न्धकृतमसारूप्यमि'ति [3]सिद्धान्तोऽप्युक्तयुक्तिमूलक एवेति ध्येयम्। अपि च 'यत्र श्रुतस्य विधेयत्वे यावता इत्सञ्ज्ञाप्रवृत्तियोग्यता, तत्र लक्ष्यसंस्कारकवाक्येऽनुबन्धविनिर्मुक्ता पदार्थोपस्थितिरि'ति 'ददातिदधात्योर्विभाषे'ति 'विभाषा'ग्रहणेन ज्ञाप्यते। [4]तद्धि 'श्याद्व्यधे'तिसूत्रविहित-पक्षे-णप्रत्ययाऽर्थम्। न च 'वाऽसरूप'न्यायेन तत्सिद्धिः। उभयोः सरूपत्वात्। एतेन 'चित्रा अस् गो असि'त्यलौकिकं विग्रहवाक्यं न युक्तम्, 'अन्तरङ्गानपी'ति न्यायेन दीर्घादीनामिव, 'चुटू' इत्यादीनामपि बाधेन, 'चित्रा जसि'त्यस्यैव युक्तत्वादि'त्यपास्तम्। 'स्वौजसमौडि'त्यनेनोक्तरीत्या जसित्यस्या-ऽविहितत्वात्। 'यत्र[5] लुकः पूर्वमन्तरङ्गकार्यस्य प्रवृत्तावप्रवृत्तौ च विशेषस्तत्रैव धर्मिग्राहकमानेन न्यायप्रवृत्तिरि'ति वादिनां मते दोषशङ्कैव न। 'ङमुट्' 'धुडि'त्यादौ विशिष्टाद्विभक्त्युत्पत्तिस्त्वित्सञ्ज्ञालोपशास्त्राऽपरामर्शऽवान्तर-वाक्याऽर्थ—प्राथमिक-बोधे विशिष्टस्य विषयतया तस्यैवाऽर्थवत्त्वमादाय। अत एवाऽनुबन्धानां, 'चुटू' इत्यादीनाञ्च चारितार्थ्यम्। न च तादृशबोधस्याऽपि सूत्राऽभिप्रेतत्वेन प्रामाण्या-ऽऽपत्तिरिति वाच्यम्। अनुबन्धाऽऽसङ्गाऽर्थं तस्य सत्त्वेनोपायस्थानाऽऽपन्नत्वेनोत्तर-

---

लघुशब्दरत्नः

त्रिपाद्यां सर्वथा परिभाषाऽप्रवृत्तौ पक्षद्वयेऽपीदमेव समाधानम्। यथोद्देशपक्षे इति। कार्यकाले त्वसिद्धत्वान्न दोषः, पूर्वान्तत्वेऽपीति भावः।

सञ्ज्ञायाम् = 'ङमि'ति प्रत्याहाररूपायाम्।

---

[1] 'परिभाषेयं न' इति लिखितेषु पाठः। बहिरङ्गपदं तत्र नास्ति।

[2] 'नाऽऽशङ्क्यम्' इति घ. ङ छ. पाठः।

[3] 'सिद्धान्तो उक्तयुक्ति' इति क. ख. पाठः।

[4] अत्र—'तद्धि पक्षे श्याद्व्यधवधेतिसूत्रविहितणप्रत्ययार्थम्' इति पाठो भवेत्।

[5] 'यत्र' इति, 'च' इति च क. ख. नास्ति।

**टित्त्वं सामर्थ्यात् सञ्ज्ञिभिः सम्बध्यते। तेन यथासङ्ख्यं ङुट्-णुट्-नुटः प्रवर्त्तन्ते। नित्यग्रहणं विस्पष्टाऽर्थम्। हे मपरे (८।३।२६) इति, मय उञो वो वा (८।३।३३) इति च विकल्पद्वयस्य मध्ये पाठादेव नित्यत्वलाभात्।**

बृहच्छब्दरत्नः

कालेऽप्रामाण्यकल्पने बाधकाऽभावात्। अन्यो हि पश्चादुपतिष्ठते, न तु प्रयुज्यते इति कथं ततो विभक्तिः क्रियताम्। विभक्त्यर्थाऽन्वयस्तु 'आनर्थक्यात्तदङ्गेषु' इति-न्यायेन। इत्सञ्ज्ञाकार्यमप्येवमिति ध्वनयन्नाह—ङमित्यादि। ङमुट्शब्दे उकार उच्चा-रणाऽर्थः। न चोक्तरीत्या 'वैयाकरण' इत्यादौ चित्स्वरः स्यादिति वाच्यम्। 'आदि-रन्त्येने'ति सूत्रप्रवृत्त्या उपस्थापके एव चकारस्य चारितार्थ्येन वैषम्यात्।

यद्वा धुडादौ माऽस्तु सूत्रान्तर्गतेष्वित्सञ्ज्ञा, किन्तु फलप्रत्यासत्तेः पदार्थेष्वेव साऽस्तु। नैते उपदिष्टा इति चेत्। न ते फलभाज इति तुल्यम्। सामर्थ्यात्परम्परा-[1]सम्बद्धे फलमिति चेत्। सञ्ज्ञाऽपि तत्रैवाऽस्तु, सामर्थ्यादिति तुल्यम्। उपदेशा-ऽन्त्यत्वं हि प्रत्याय्येष्वसम्भवात्तत्प्रत्यायकनिष्ठमाश्रीयते। उक्तज्ञापकेन तु 'नाऽनुबन्ध-कृतमसारूप्यमि'त्येव ज्ञाप्यते। अत एव 'हृरि ङि 'अधी'त्यलौकिकं प्रक्रियावाक्य-मि'त्युक्तं मूले। ध्वनितश्चाऽयमर्थोऽनेकाल् शित्सर्वस्ये'ति सूत्रे भाष्ये। न चैतत् ऐजादिष्वस्ति। प्रत्याय्ये चकाराऽभावात्। ङमुट्शब्दे त्ववयवीभूतङमुशब्देनाऽनु-बन्धविनिर्मुक्तानां ङकार-णकार-नकाराणामुपस्थितावप्युपस्थापके कथञ्चिदपि टकारस्याऽचरितार्थत्वेन मूलकारोक्तरीतिरेव शरणीकरणीयेति सुधीभिरूह्यम्।

यत्तु 'ङमः पर उट् यस्मिन् सोऽयं ङमुडि'ति बहुव्रीह्याश्रयणेन ङुट्-णुट्-नुट उपस्थ्याप्यन्ते' इति। तन्न। व्यधिकरणबहुव्रीहेरन्याय्यत्वात्। असामर्थ्याच्च।

यत्तु—'आद्यन्तौ टकितौ'इति सञ्ज्ञासूत्रम्। 'इत्सञ्ज्ञौ टकारककारावाद्यन्तयोः सञ्ज्ञेति' सूत्राऽर्थः। 'इट्' 'पुगि'त्यादौ तु बहुव्रीहिः। एवञ्च 'ङम्—उट्=आदिर्यस्ये'-ति बहुव्रीहिसमासाद्यथासङ्ख्यन्यायेन ङकाराद्यादेश' इति। तन्न। इडादिस्वरूपाणां विधेयत्वाऽभावेनोपदेशाऽन्त्यत्वाऽभावादित्सञ्ज्ञाया अप्राप्तेः। 'इत्'पदेनेत्सञ्ज्ञा-प्रवृत्तियोग्यो देशविशेषो लक्ष्यते' इत्याद्याकरग्रन्थानां दत्तजलाञ्जलित्वाऽऽपत्तेश्च।

लघुशब्दरत्नः

विकल्पद्वयस्य मध्ये इति। 'विभाषामध्ये च ये विधयस्ते नित्या' इति [2]पूङः क्त्वा च (१।२।२२) इति सूत्रे भाष्योक्तेरिति भावः। न च तन्मध्ये पाठेन नित्यत्वकल्पने तन्मध्य-पतितानां नपरे नः (८।३।२७) इत्यादीनामपि नित्यत्वाऽऽपत्तिः। स्वरितत्वबलादनुवृत्तस्य पुनर्वाग्रहणान्निवृत्तौ कल्प्यमानायां, स्वाऽनन्तरे एव तत्कल्पनेनोपपत्तावन्यत्र[3] तत्कल्पने माना-

[1] 'परम्परासम्बन्धे' इति क. ख. पाठः।

[2] 'न क्त्वा सेडि'तिसूत्रे' इति 'क्वाचित्कोऽपपाठ' इति भावप्रकाशे वैद्यनाथः।

[3] 'अन्यत्र कल्पने' इति क. पाठः।

**सुगण्णीश इति। ण्यल्लोपौ न स्थानिवत्।[1] पूर्वत्राऽसिद्धे तन्निषेधात्।**

बृहच्छब्दरत्नः

किञ्च 'कंसाट्टिठन्नि'त्यादाविडादेः 'कंस'शब्दस्योपस्थिततया तदादेर्विधानाऽऽपत्तौ, तस्य प्रत्ययतया परदेशो आपत्तेः। न ह्यत्र 'परश्चे'त्यनेन प्रकृतसूत्रं बाधितुं शक्यम्। विषयभेदात्। अत एवाऽस्मिन्पक्षे 'षष्ठी स्थानेयोगे'ति सूत्रस्य न बाधः। परिभाषापक्षे देशव्यवस्थापकं, सञ्ज्ञापक्षे तु विधेयपदाऽर्थनिर्णायकम्। 'परश्चे'त्यस्य तु विधेयपदार्थेन सामानाधिकरण्येनाऽन्वयः। 'ऐकागारिकडि'त्यादौ दोषाऽऽपत्तेश्च। अपि च—'मिदचोऽन्त्यात्पर' इति साहचर्यात्पदान्त-टकार-ककारयोर्ग्रहणेन सिद्धौ इत्पदस्य वैयर्थ्याऽऽपत्तेश्च। किञ्च 'आटश्चे'त्यत्राऽनन्वयाऽऽपत्तेः। 'सानुबन्धकनिर्देशे औपदेशिकरूपमनुबन्धविशिष्टं गृहीत्वा 'एकदेशविकृत'न्यायेन, भूतपूर्वगत्या वा लक्ष्ये प्रवृत्तिरि'ति 'क्तक्तवतू' इति सूत्रस्थभाष्याऽऽरूढं, युक्तिसिद्धञ्च। न च सा रीतिः प्रकृते वक्तुं शक्या। किञ्च 'अड्डुदात्त' इत्यादावसमासेऽनिष्टस्वराऽऽपत्तेः। समासे 'उदात्त'शब्दस्य विशेषणत्वेन पूर्वनिपाताऽऽपत्तेश्च। 'आडजादीनामि'त्यत्राऽनुवृत्त्यनापत्तेश्च। अनुवृत्तस्य श्रूयमाणेन बहुव्रीह्यसम्भवेनाऽनिष्टाऽऽपत्तेश्च। 'यासुट् परस्मैपदेषूदात्त' इत्यत्र दोषाऽनुद्धाराच्च। अपि च 'इडि'त्यादौ बहुव्रीह्याश्रयणं व्यर्थम्। अन्तरङ्गतत्पुरुषेणैवाऽभिमताऽर्थसिद्धेः। 'रेखागवय'न्यायेन नित्यशब्दव्युत्पादनन्तु सर्वेषां समानम्। ध्वनितञ्चेदं शब्दकौस्तुभे सूक्ष्मदृशामिति दिक्।

विकल्पद्वयस्येति। यत्त्वेवं 'नपरे न' इत्यादीनां नित्यत्वाऽऽपत्तिरि'ति। तन्न। 'नपरे न' इत्यत्र विकल्पाऽननुवृत्तावग्रेऽपि विच्छेदादननुवृत्त्यापत्त्या हेतोरसिद्धत्वाऽऽपत्तेः। यदपि 'विकल्पात्पूर्वं [2]पाठेन नित्यत्वसिद्धिरि'ति। तदपि न। विकल्पाऽननुवृत्त्यैव नित्यत्वसिद्धिरि'त्यर्थे पितामहचरणोक्तेरेव युक्तत्वात्।

ण्यल्लोपाविति। पाक्षिकपञ्चमीसमासमभ्युपगम्योच्यते। न चैवं हल्ङ्यादिलोपाऽनापत्तिः। संयोगाऽन्तलोपेन निर्वाहात्। समासाऽङ्गीकारे बाधकाऽभावाच्च।

तन्निषेधेति। 'तस्य दोषः संयोगादिलोपे'त्यत्र लत्वसाहचर्येणाऽऽदेशस्यैव[3]

लघुशब्दरत्नः

ऽभावात्। तस्मादुत्तरत्र वाग्रहणसामर्थ्यात्पूर्वसूत्रे एव [4]पूर्ववाग्रहणस्य निवृत्तिरिति भावः।

तन्निषेधादिति। 'तस्य दोष' इत्यस्य तु न प्राप्तिः। लत्वसाहचर्येणाऽऽदेशणत्वस्यैव ग्रहणात्[5]। पञ्चमीसमासस्याऽनित्यत्वाच्चेत्यपि बोध्यम्।

परादित्वमिति। 'ततः परस्याऽच' इति व्याख्यानेनेत्यर्थः। 'ङम' इत्यस्य षष्ठ्य-

[1] 'पूर्वत्राऽसिद्धे निषेधात्' इति ङ. छ. पाठः।
[2] 'पूर्वपाठेन' इति क. ख. पाठः।
[3] 'आदेशणत्वस्यैव' इति लघुशब्दरत्नधृतः पाठः।
[4] 'पूर्व' इति मुद्रितेषु नास्ति।
[5] इतोऽग्रे-'पूर्वविध्यभावात्' इति क. वर्द्धितः पाठः।

ङमुटः परादित्वं 'कुर्वन्नास्ते' इत्यत्र णत्वप्रतिषेधाऽर्थम्। अत एव 'ङमो ह्रस्वादचि ङ्मुड्' इति नाऽसूत्रि[1]। परं णत्वं प्रति पूर्वस्य द्वित्वस्य[2] सिद्धतया णत्वाऽऽपत्तेरि'ति प्राञ्चः। यत्त्वाहुः—'बहिरङ्गपरिभाषया गताऽर्थत्वादुभयमपि असङ्गतमि'ति। तदपि पाक्षिकम्। 'राज्ञ' इत्यत्रैव यथोद्देशे [3]त्रैपादिकेऽन्तरङ्ग-परिभाषाविरहस्योक्तत्वेन प्राचां ग्रन्थस्य सौष्ठवात्। कथमन्यथा द्वियं, त्रियं च स्वयमेवोक्तमिति दिक्।

ननु 'परमदण्डिनावि'त्यादावन्तर्वर्त्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न। 'उत्तरपदत्वे चाऽपदादिविधावि'ति प्रत्ययलक्षणप्रतिषेधात्। अत एव 'परमवाचौ' 'परमगोदुहौ' 'परमलिहावि'त्यादौ कुत्व-घत्व-ढत्वादीनि न।

---

बृहच्छब्दरत्नः

ग्रहणात्। ङमुटः परादित्वमिति। 'ङमि'ति नैषा पञ्चमी, किन्तु षष्ठी। 'ङमन्तस्य पदस्य ह्रस्वात्परो ङमुडि'ति सूत्राऽर्थः। न चैवं पदादौ ङमुट् स्यादिति वाच्यम्। ह्रस्वा-

---

लघशब्दरत्नः

न्तत्वमाश्रित्य 'ङमन्तपदाऽवयवस्य ह्रस्वात्परस्य ङमो ङमुट्, अजादौ पदे' इत्यर्थेन पूर्वादित्वमेव कुतो न कृतम्। पदस्य (८।१।१६) इति च मादुपधाया (८।२।९) इत्यादाविवाऽवयवषष्ठी। 'अजादौ पदे' इत्युक्तेः 'म्ना अभ्यासे' इत्यतः शतरि 'मनन्नि'त्यादावनन्त्यस्य नेति भावः।

बहिरङ्गपरिभाषयेति। नुटो बहिरङ्गतयाऽसिद्धत्वादित्यर्थः। उभयम्=ङमुटः परादित्वं,'द्वे' इति सूत्राऽकरणं च। पाक्षिकम्=कार्यकालसम्बन्धि। दिगिति। दिगर्थस्तु 'तत्परिभाषायास्त्रिपाद्यामभाव एव। किञ्च यदि 'यदागमा' इति न्यायेनाऽऽगमानामागमि-धर्मवैशिष्ट्यमपि [4]बोद्धचते, तेन[5] नकाराद्यवयवनस्याऽपि पदान्तत्वाण्णत्वनिषेधसिद्धि-रि'त्युच्यते[6], तर्हि 'ह्रस्वात्परस्य [7]ङमन्तस्य पदस्याऽचि परे ङमुडि'त्येवाऽर्थस्तथा सति स्यान्न प्रागुक्त इति ([8]स्याच्चाऽति)महदनिष्टमि'ति। स्पष्टञ्चेदं सर्वं भाष्ये।

प्रत्ययलक्षणप्रतिषेधादिति। इदञ्च प्रकृतसूत्रे भाष्ये स्पष्टम्।

---

[1] 'न सूत्रितम्' इति छ. शोधितः पाठः।

[2] 'द्वित्वस्ये'ति मुद्रितेषु नास्ति।

[3] 'त्रैपादिकेऽन्तरङ्गे परिभाषाविरहस्य' इति क. ख. पाठः।

[4] 'बोध्यते इति' इति मुद्रितः पाठ।

[5] 'पूर्वनकाराद्यवयव-नस्याऽपि' इति घ. पाठः। परन्तु तत्र हरिताललेपेन 'पूर्वे'ति-निस्सारितम्।

[6] 'निषेधसिद्धिरुच्यते' इति क. पाठः।

[7] 'ङमन्तपदस्य' इति मुद्रितः पाठः। [8] अयं मुद्रितेषु पाठः।

यत्तु प्राचा 'उञि च पदे (८।३।२१) इत्यतः 'पदे' इत्यनुवर्त्य 'अजादेः पदस्ये'ति व्याख्यानान्ङमुण् ने'त्युक्तं, तदनेन प्रत्युक्तम्। इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाऽप्यनुसर्त्तव्यत्वात्।

बृहच्छब्दरत्नः

त्परत्वाऽसम्भवात्। ह्रस्वश्च प्रत्यासत्तिन्यायात् ङमन्तपदाऽवयव एव गृह्यते। टित्त्वेनाऽऽक्षिप्त आगमी चोपस्थितङमेवेति भावः। परादित्वे सूत्रसंमतिं दर्शयन्नाह–अत एवेति (-२१४ पृष्ठे)। पदे इति। न चैवं 'पदस्ये'ति नाऽनुवर्त्यमिति वाच्यम्। 'दण्डिनित्याहे'त्यादावनुकार्याऽनुकरणयोरभेदविवक्षया [1]सुबुत्पत्त्यभावे-ङमुडापत्तेः। एवञ्च मध्येऽपि 'पद'पदाऽनुवृत्तिरस्त्येवेति बोध्यम्। अत एव 'नश्चे'ति सूत्रे 'नकारान्तात् सस्ये'ति विवरणं सङ्गच्छते। एतेन 'पदपदाऽनुवृत्तिरयुक्त'ति परास्तम्। उत्तराऽर्थं तस्याऽवश्यकत्वेनाऽत्राऽप्यावश्यकत्वात्। ननु 'ङः सि धुडि'त्यादौ कुतो नैवं व्युत्पादितमिति चेन्न। एकजातीयस्याऽर्थस्यैकत्र व्युत्पादनेनैवाऽन्यत्र तदवगमात्। उक्तरीतेरिति। उत्तरपदस्य पदत्वे कर्त्तव्ये प्रत्ययलक्षणं न, पदादिविधौ तु निषेधो न। पदादिविधिश्च प्रतिपदोक्तत्वात् 'सात्पदाद्योरि'त्येव गृह्यते। यद्वा 'अपदादिविधौ' इति पर्युदासः। 'पदान्तसम्बन्धिविधौ कर्त्तव्ये' इत्यर्थः। अस्ति निमित्तकोटौ पदान्तत्वस्य प्रवेशः,–'ङमन्तं यत्पदमि'त्युक्तेः। अत एव 'परमगर्दभौ' 'परमबुधावि'त्यादौ भष्भावो न। न चैवमपि बहुच्पूर्वे 'बहुदण्डिनावि'त्यादौ दोषो दुर्वार इति वाच्यम्। 'बहुच्पूर्वस्य ने'ति वचनाऽन्तरेण निषेधात्। अत एव 'बहुसेचावि'त्यादौ कुत्वं न।

ननु विभक्त्यर्थाऽन्वयाऽर्थं तदन्तस्य 'ङम्'पदेन वृत्त्योपस्थितेरावश्यकत्वे, ङमि ह्रस्वाऽन्वयो न स्यात्, 'पदार्थः पदार्थेऽन्वेति, न तदेकदेशे' इति व्युत्पत्तेरिति चेन्न। ङम्पदस्यैव ह्रस्वपरङमन्ते वृत्तेः कल्पनात्। ह्रस्वपदञ्च तात्पर्यग्राहकम्। युक्तञ्चैतत्। 'ङम्रूपं पदमि'त्यर्थमुपजीव्य 'येन विधिरि'ति सूत्रस्य प्रवृत्तत्वेन, तस्यामवस्थायां ङमि 'ह्रस्वादि'त्यस्याऽन्वये बाधकाऽभावेन, [2]क्लृप्ताऽर्थाऽबाधेनैव तदन्तग्रहस्योचितत्वात्। ध्वनितञ्चेदमाकरे। एवञ्च 'पदे' इत्यनुवृत्तिर्न कार्या। 'पदे ग्रहणमुत्तराऽर्थमि'ति मूलग्रन्थस्तु प्राचामनुरोधेन बोध्यः।

वस्तुतस्तु [3]'पदे' ग्रहणम् 'अची'त्यस्य विशेषणत्वसम्पादनेन 'यस्मिन्विधि-

लघुशब्दरत्नः

अनुसर्त्तव्यत्वादिति। यदि तु स निषेधः 'अपदादिविधौ' इति पर्युदासेन पदान्तत्वनिमित्तके विधावेवेति न लुमता (१।१।६३) इति सूत्रे भाष्ये स्पष्टम्, किञ्चोत्तरपदस्य कार्यित्वे

[1] 'कबुत्पत्त्यभावे' इति क. ख. पाठः।
[2] 'कृत्याऽर्थाऽबाधेनैव' इति क. ख. पाठः। 'प्रकृत्याऽर्थाऽबाधेनैव' इति पाठः स्यात्।
[3] 'पदेग्रहणसवीत्यस्य' इति क. ख. पाठः।

**समः सुटि** (८।३।५)। यद्यपि मोऽनुस्वारेण सिद्धं, तथाऽप्यनुनासिकत्व-त्रिसकारकत्वसिद्ध्यर्थमिदम्।

**अत्रानुनासिकः** (८।३।२)। अयमधिकारो, विधिर्वेति द्वैतम्। आद्ये 'अत्र'ग्रहणमनर्थकम्। अधिकारादेव रुप्रकरणलाभात्। 'तु'शब्दस्तु

---

बृहच्छब्दरत्नः

स्तदादावल्ग्रहणे' इति परिभाषाप्रवृत्त्या अजादिपदग्रहणाऽर्थम्। तेन वासुदेवादिवाचकाऽकारादिषु परेषु ङमुण्न। न चाऽत्रापि व्यपदेशिवद्भावेनाऽजादिपदमस्त्येवेति वाच्यम्। अनुवृत्तिसामर्थ्येन न्यायाऽप्रवृत्त्या मुख्याऽजादिपदस्यैव ग्रहणात्। एतच्च 'न लुमते'ति सूत्रे कौस्तुभे द्रष्टव्यम्।

'सुगण्णीशौ' इत्यादौ भाष्यादिनये उत्तरखण्डस्य पदत्वाऽभावेन ङमुडभावाऽर्थं 'पदे' इत्यनुवृत्तिः। न चैवं 'प्रत्यङ् उ आत्मे'त्यादौ ङमुट् न स्यादिति वाच्यम्। 'मय उञो वो वे'ति सूत्रे 'मय उञ' इति योगं विभज्य 'अची'त्यनुवर्त्त्य, तस्य सुसाधत्वात्। न चैवं 'किमु उक्तमि'त्यादौ ङमुडापत्तिः। ङम उत्तरस्याऽच एव ङमुट्सम्बन्धस्य पूर्वसूत्रे क्लृप्तत्वात्, अत्र 'ङम' इत्यनुवर्त्त्य ङमा मयो विशेषणत्वाच्चाऽत्राऽप्रवृत्तेः। अत एव 'ङमो ह्रस्वादि'त्यस्मात्पूर्वं 'मय उञो वे'ति न सूत्रितम्। अत एव नित्यः। न च 'हलि सर्वेषामि'त्यस्य 'वृक्षव्भ्यामि'त्यादावप्रवृत्त्यापत्तिः। भोसादिसाहचर्येण विभक्त्यनवयवीभूतहल्ग्रहणेनेष्टाऽपत्तेः। 'लिट्सु' इत्यादौ 'डः सि धुडि'त्यादिप्रवृत्तेरिष्टत्वेन मण्डूकप्लुतेरङ्गीकाराच्च। 'उञि च पदे' इति सूत्रे 'पदे' इत्यस्योपादानन्तु 'निपात'-'महाव्याहृति'ग्रहणादेरिव प्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनाऽर्थमात्रम्।

द्वैतमिति। आद्ये अवधित्वेन पूर्वत्वे रुस्थानिनो ग्रहणम्। रोः, अनुनासिकस्य च सहैव विधानेन रोरवधित्वेन ग्रहीतुमशक्यत्वात्। द्वितीये तु रुरेव।

अधिकारादेवेति। न चैवं रुविधिभिन्नेऽपि सम्बन्धः स्यादिति वाच्यम्।

---

लघुशब्दरत्नः

एव तत्प्रवृत्तिः, अत एव 'माषकुम्भवापेने'त्यादौ पदव्यवायेऽपि (८।४।३८) इति [1]निषेधसिद्धिरित्युच्यते, तदा प्राचीनोक्तम् 'अजादेः पदस्ये'ति व्याख्यानमेव शरणम्। स्पष्टं चैवंव्याख्यानं प्रकृतसूत्रे, उञि च पदे (८।३।२१) इत्यत्र च भाष्ये। 'तेन निषेधेन सिद्धमि'तिप्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्यास्तान्तावत्[2]।

त्रिसकारकत्वेति। न च पुनर्द्वित्वेन तदपि सिद्धम्। 'लक्ष्ये लक्षणस्ये'ति न्यायात्। अत्र[3] चेदमेव ज्ञापकं बोद्धयम्। अनर्थकमिति। इदमुपलक्षणम्, 'प्रतिसूत्रमावृत्तौ गौरवं

---

[1] 'प्रतिषेधसिद्धिरित्युच्यते' इति क. घ. पाठः।

[2] 'तावत्' इति लिखितेषु नास्ति।

[3] 'अत्र चेदमेव ज्ञापकं बोध्यम्' इति पाठो लिखितेषु नास्ति।

अधिकारपक्षे परस्मात्कार्यिणो विशेषद्योतनाऽर्थः—'परस्य नित्यं रुत्वं, पूर्वस्य तु वाऽनुनासिक' इति । विधिपक्षे व्यर्थः । 'वा'ग्रहणं स्पष्टाऽर्थम्। अनुनासिकात्पर (८।३।४) इति ज्ञापकादेव सिद्धेः । न हि विकल्पं विना 'अनुनासिकाऽभावपक्षे' इति सम्भवति । इदमेव ध्वनयितुं वृत्तौ 'तु-वे'ति शब्दौ नोक्तौ ।

**अनुनासिकात्** (८।३।४) । ल्यब्लोपे पञ्चमीत्याह—अनुनासिकं विहायेति। एवञ्च संसर्गवद्विप्रयोगस्याऽपि विशेषाऽवगतिहेतुत्वात् [1]'अवत्सा धेनुरानीयतामि'त्यत्रैव सम्भाविताऽऽनुनासिक्यगुणक एव

---

बृहच्छब्दरत्नः

इष्टाऽऽपत्तेः। विधिपक्षेऽपि रुप्रकरणे तात्पर्यात्। अत एव 'समः सुटी'त्यादौ सकारविधानेनैवेष्टसिद्धौ 'सम्पुङ्कानां सो वक्तव्य' इति वचनं न कार्यमि'ति भाष्यकृतोक्तं सङ्गच्छते। लाभादिति। न च 'अत्र'ग्रहणं रुप्रकरणादग्रेऽनुवृत्त्यभावाऽर्थमिति वाच्यम्। अन्यत्रेवाऽत्राऽपि मानाऽन्तरेण लब्धुं शक्यत्वात्। 'अनुनासिकादि'ति नेयं दिग्योगलक्षणा पञ्चमी। 'अनुस्वारपराऽनुनासिकः पूर्वस्य तु वे'ति न्यासेन सिद्धे, 'अनुनासिकात्परोऽनुस्वार' इति सूत्रस्य वैयर्थ्याऽऽपत्तेरित्याशयेनाऽऽह—ल्यब्लोप इति ।

एवञ्चेति । 'पूर्वस्ये'त्यस्याऽनुवृत्त्या 'पर'शब्दयोगेन पञ्चम्या विपरिणाम' इति क्लिष्टकल्पना नाऽऽश्रयणीयेति भावः। धेनुरिति। यत्तु 'धेनुशब्दो गोरेव वाचक' इति। तन्न। व्यावर्त्तकयोरेव [2]विशेषण-विशेष्यभावस्य दृष्टत्वेन विशेषण-विशेष्य-

---

लघुशब्दरत्नः

चे'त्यपि बोद्धव्यम्। स्पष्टार्थमिति। अनेन 'तु'ग्रहणमधिकारपक्षेऽपि 'परस्य रुस्ततः पूर्वस्याऽनुनासिक' इत्यर्थस्य स्पष्टं बोधनाऽर्थं, 'वा'शब्दवदिति सूचितम्। विधिपक्षे 'अत्र'ग्रहणन्तु 'एतद्रुप्रकरणे' इत्यर्थलाभाऽर्थम्। वस्तुतोऽत्राऽधिकारत्वमेवोचितम्। मतुवसो रु (८।३।१) इति सूत्रे कृतयोः 'वन उपसङ्ख्यानम्' 'विभाषा भवत्' इत्यनयोरुदाहरणे भाष्येऽनुनासिकाद्यनुच्चारणात्। विधित्वे तु तत्र प्रवृत्तिर्दुर्वारैव। अधिकारत्वे तूत्तरत्रैव प्रवृत्तिः। स्पष्टं चेदं वृत्ताविति तत्त्वम्। [3]ल्यब्लोपे इति। दिग्योगलक्षणा तु न। 'अत्राऽनुस्वारपराऽनुनासिकः पूर्वस्य तु वे'ति न्यासेन सिद्धौ 'अनुनासिकात्पर' (८।३।४) इत्यस्य वैयर्थ्याऽऽपत्तेरिति भावः। परशब्देनैवेति। प्रसिद्धावेवकारः। ([4]अयमनवयवः। अवयवे प्रमाणाऽभावात्)।

---

[1] 'अवत्सा आनीयताम्' इति च. पाठः ।

[2] 'विशेषणविशेष्यभावस्याऽऽदृ(त)त्वेन' इति क. ख. पाठः ।

[3] 'ल्यपूलोपे' इति क. घ. पाठः ।

[4] ()एतदन्तर्गतोऽयं पाठः क्वाचित्कः । मुद्रितेषु तु नास्ति ।

उपस्थितत्वादाकाङ्क्षितत्वाच्चाऽवधित्वेन सम्बध्यते इत्यभिप्रेत्याऽऽह–रोः पूर्वस्मादिति। अनुस्वारागम इति। आगमत्वञ्च परशब्देनैव लभ्यते, पूर्वौ तु ताभ्यामैच् ( ७।३।३ ) इत्यत्र पूर्वशब्देनैचोरिवेति भावः।

**विसर्जनीयस्य** ( ८।३।३४ )। खरीति। एतच्च मण्डूकप्लुत्या खरवसानयोः ( ८।३।१५ ) इति सूत्रादनुवर्त्तते। नन्वनुस्वारस्याऽनच्त्वात्

बृहच्छब्दरत्नः

शब्दयोस्तत्रैव शक्तेर्युक्तत्वाच्च। 'पोटायुवती'त्यादिसूत्रे पूर्वोत्तरसाहचर्येण 'धेनु'-शब्देऽपि तथैव युक्तत्वाच्च। 'गोधेनुरि'त्यादौ कर्मधारयाऽनापत्तौ मुनिवचनविरोधाऽऽपत्तेः। एतेन 'गोनिष्ठोऽसाधारणो धर्म उच्यते' इति मन्दप्रतारणमपास्तम्। 'गौर्धेनुरि'त्यादावभेदबोधाऽनापत्तेश्च। श्वशुरादिपदानामप्यसाधारणधर्मे शक्त्यङ्गीकारे विशिष्टव्याकोपाऽऽपत्तेश्च। कोशे 'गौरि'त्युपादानमवयुत्याऽनुवादः। ध्वनितञ्चेदं 'दामहायनान्ताच्चे'ति सूत्रे भाष्ये। स्पष्टीकृतञ्च 'शास इदङ्हलोरि'ति सूत्रे कैयट-हरदत्तादिग्रन्थे। तद्धितमनोरमास्वरसोऽप्येवमेवेत्याहुः। परशब्देनेति। अवयवत्वन्तु न। 'पर'शब्दस्याऽवयववाचकत्वाऽभावात्। अत एव प्रत्ययस्य नाऽवयवत्वम्।

विसर्जनीयस्य सः। विसर्जनीयेन आक्षिप्तनिमित्तमात्रे [१]प्रवृत्तिः, उत कचिदेव?। तत्राऽऽद्ये 'रो रि' 'खरवसानयोः सः' 'रोः सुपि' 'शर्परे विसर्जनीय' इत्यादि 'इडाया वे'त्यन्तं पाठ्यम्। एवञ्च सति रेफमात्राऽनुवृत्त्या सर्वेष्टसिद्धौ 'खरवसानयोरि'तिसूत्रस्थ–'विसर्जनीय'पदस्य, 'विसर्जनीयस्य स' इति सूत्रस्य च वैयर्थ्याऽऽपत्तिः। 'भोभगो' इत्यादिसूत्रसन्दर्भस्तु 'इडाया वे'त्यस्याऽग्रे पाठ्यः, न तु 'शर्परे' इत्यस्मात्पूर्वम्। 'मोऽनुस्वार' इत्यत्र 'हली'त्यस्य, 'शर्परे' इत्यत्र रेफग्रहणस्य च कर्त्तव्यताऽऽपत्तौ गौरवाऽऽपत्तेः। 'प्रातरत्रे'त्यादौ 'भोभगो' इत्यस्य व्यावृत्त्यर्थं रुग्रहणं कर्त्तव्यमेव। तथा च लाघवमस्त्येव। 'सुपी'ति नियमेन सत्वाऽभावेऽपि, 'वा शरी'त्यनेन पाक्षिकविसर्गो दुर्वारः।

किञ्च 'विसर्जनीयः' 'खरी'ति सूत्रद्वये कर्त्तव्ये अवसानग्रहणम् अवसाने विसर्जनीयस्यैव श्रवणाऽर्थम्। अस्मिन्पक्षे ये विसर्गस्थानिका आदेशास्ते रेफस्थानिकाः फलिताः। तथा च 'तिरसोऽन्यतरस्यामि'ति सूत्रे 'अन्यतरस्याम्'ग्रहणेन सत्वाऽभावे 'कुप्वोः ⌣क⌣पौ चे'ति भवत्येव। एतावान्परं विशेषः–चकारेणाऽपूर्वो

लघुशब्दरत्नः

मण्डूकेति। 'एकदेशे स्वरितत्वप्रतिज्ञयें'त्यपि बोध्यम्। अत एवाऽवसाने न सः। पूर्वेण संनिकर्षरूपा संहिता त्ववसानेऽप्यस्त्येव। अत एव संहिताऽधिकारेऽवसानकार्यपाठः

[१] 'निमित्तमात्रे वृत्तिः' इति क. ख. पाठः। आक्षिप्तपदं तत्र नास्ति।

ततः परस्य द्वित्वं न स्यादेवेत्याशङ्कयाह—अनुस्वारविसर्गेत्यादि। अकारोपरीति। यदि त्विकारोपरि पठ्येरन्, तर्हि 'पयःसु' 'यशःसु' इत्यादौ 'इणः परस्ये'ति षत्वं स्यादिति भावः। अच्त्वादिति। न चैवं 'हरिः कर्त्ता' 'हरिं स्मरेदि'त्यादौ यणादिप्रसङ्गः। त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात्। अनुस्वारस्यापि द्वित्व इति। 'अपि'शब्दात्ककारस्य। वचना-

बृहच्छब्दरत्नः

विसर्गो विधीयते, यथान्यासे तु स्थानित्वेन प्राप्तविसर्ग एव स्थाप्यते' इति। तन्न। 'मध्येऽपवाद'न्यायेन 'शर्परे विसर्जनीय' इत्यनेन सत्वस्यैव बाधाऽऽपत्तौ ‸क‸ पयोः श्रवणाऽऽपत्तेः। 'ने'त्येवोक्तौ रेफश्रवणाऽऽपत्तिः। किञ्च 'चतुर्षु' इत्यादौ[1] ([2]रेफस्य विसर्गाऽऽपत्तिः। 'रो रि'त्यतो 'र' इत्यस्यैवाऽनुवृत्तेः)।

यदि त्विति। अत एव 'पुंस्वि'त्यादावुकारं निमित्तीकृत्याऽनुस्वारव्यवधाने षत्वमाशङ्क्य नुम्स्थानिकाऽनुस्वारस्यैव 'नुम्विसर्जनीये'ति सूत्रे ग्रहणान्ने'ति भाष्यकारोक्तं सङ्गच्छते। प्रयोजनं-'संस्कर्ता' 'उरःकेण' उरःपेण' 'वृक्ण' इत्यादौ द्वित्वणत्वादिकम्। न च 'अनन्त्यश्च भवेत्पूर्वो ह्यन्त्यश्च परतो यदि। तत्र मध्ये यमस्तिष्ठेत्सवर्णः पूर्ववर्णयोरि'ति नारदीयशिक्षायामुक्तम्। अत्र सवर्णः=सदृशः। 'पूर्ववर्णयोरि'ति द्वित्वमविवक्षितम्। 'यज्ञ' इत्यादावचः परत्वेन द्वित्वाज्जकारद्वयसत्त्वेऽपि, 'ज्मया', 'अत्र वसवोऽवन्तु देवा' इत्यादौ तदभावादि'ति तद्व्याख्यातारः। इदञ्च द्वित्वे सत्येव सङ्गच्छते। तत्तु न सम्भवति। 'अचि ने'ति द्वित्वनिषेधादिति वाच्यम्। उक्तशिक्षावचनसामर्थ्यादेव यम्परत्वे द्वित्वम्। यद्वाऽयोगवाहानां वर्णसमाम्नाये पाठस्य ज्ञापकसिद्धत्वेनाऽसार्वत्रिकत्वान्न दोष इत्याहुः।

यणादीति। 'आदि'शब्देन 'हरिः कर्त्ते'त्यादौ पूर्वसवर्णदीर्घः। 'हरिं स्मरेदि'त्यादौ तु पूर्वसवर्णदीर्घो नाऽऽशङ्क्यः, 'अजाद्योः प्रथमाद्वितीययोरि'त्यर्थाऽङ्गीकारेण उभयाऽऽश्रयणेऽन्तादिवद्भावाऽभावात्। न च 'हरीनि'त्यादौ शसः पूर्वसवर्णदीर्घाऽऽपत्तिरिति वाच्यम्। मताऽन्तरे 'आदेः परस्ये'त्यस्य दुर्वारत्वादिति निरूपयि-

लघुशब्दरत्नः

सङ्गच्छते। षत्वं स्यादिति। अत एव 'पुंस्वि'त्यादावुकारं निमित्तीकृत्याऽनुस्वारव्यवधाने षत्वमाशङ्क्य, 'नुम्स्थानिकाऽनुस्वारस्यैव नुम्विसर्जनीय (८।३।५८) इति सूत्रे ग्रहणान्ने'ति भाष्यं सङ्गच्छते। इकाराद्युत्तरं पाठे हि अनुस्वारमिणं गृहीत्वा षत्वं दुर्वारं स्यादिति भावः।

यणादीति। [3]हरिः कर्त्ते'त्यत्र पूर्वसवर्णदीर्घ 'आदि'शब्दार्थः। 'अयं पाठोऽनित्यः।

[1] अयं पाठः क. ख. खण्डित एवोपलभ्यते।

[2] अयं पाठोऽत्राऽस्माभिः पूरितः।

[3] 'हरिः कर्त्ते'त्यत्र आदिना पूर्वसर्णदीर्घः' इति घ. पाठः। 'हरिः कर्त्तेत्यत्र' इति पाठो मुद्रितेषु नास्ति।

**न्तरेणेति।** अचो रहाभ्याम् ( ८।४।४६ ) इति कृतेऽपि 'यणो मय' इति भवत्येवेति भावः।

**पुमः खयि** ( ८।३।६ )। पुंसः संयोगान्तलोपे कृतेऽवशिष्टभागस्येद-मनुकरणम्। **पर्युदासादिति।** इदुदुपधस्य ( ८।३।४१ ) इति षत्वविधायके सूत्रे इति भावः। 'अप्रत्ययस्य यो विसर्ग' इति वैयधिकरण्येन व्याचक्षाणानां प्राचां मतेनेदम्। वक्ष्यमाणरीत्या सामानाधिकरण्येनाऽन्वये तु षत्वप्राप्ताविति बोध्यम्।

---

### बृहच्छब्दरत्नः

ष्यामः। 'हरिं जयती'त्यादौ 'झलां जश् 'झशी'ति जश्त्वन्तु न। स्थानप्रयत्नाभ्या-मन्तरतमेऽन्यत्र चरिताऽर्थत्वात्।

षत्वप्राप्ताविति। इदञ्चाऽनुनासिकपक्षे बोध्यम्। अनुस्वारपक्षेतु ⌣क⌣ पयो-रेव प्रवृत्तिः। अत एव 'पुम्-मुहुसोः षत्वप्रतिषेध' इति वचनेन नेष्टसिद्धिः। किन्तु सकारविधानेनैव। पुंस्शब्दात्त्वप्रत्यये सकारलोपे रुत्वादौ 'ह्रस्वात्तादावि'ति षत्वं भवत्येव। 'सम्पुम्कानामि'ति वचनेन [1]विसर्गस्थानिकेदुदुपधस्येति षत्वनिवृत्ता-वपि, प्रकरणबहिर्भूतषत्वाऽनिवृत्तेः।

यत्तु 'इदुदुपधस्ये'ति सूत्रे 'पुम्मुहुसोः षत्वप्रतिषेध' इति वचनस्य पठितत्वे-ऽप्यत्रोक्तरीत्या फलाऽभावात् 'ह्रस्वात्तादौ' इति सूत्रे बोध्यमि'त्याहुः। तन्न। 'मुहु-स्कामे'त्यादौ 'इदुदुपधस्ये'ति षत्वाऽऽपत्तेः। 'मुहुष्कमि'त्यादौ षत्वाऽनापत्तेश्च। किञ्च 'ह्रस्वात्तादौ' इति षत्वनिषेधार्थं वचनस्याऽऽश्यकत्वेन तेनैव सङ्कोचे माना-ऽभावेन, अत्र पाठेन वा 'इदुदुपधस्ये'ति षत्वाऽभावसिद्धौ, सादेशाऽभावे 'पुंस्कामा'-इत्यत्र 'इदुदुपधस्ये'ति षत्वं प्रसज्येते'ति प्रकृतसूत्रस्थभाष्यं विरुध्येत। षत्वाद्य-

---

### लघुशब्दरत्नः

[2]अट्कुप्वाङ (८।४।२) इति सूत्रेऽनुस्वारोपलक्षणनुम्ग्रहणात्। अत एव 'हरिं जयती'त्यादौ झलां जश् झशि (८।४।५३) इति नेति बोद्धव्य'मिति कश्चित्। भवत्येवेति। एकस्य द्वितीयोच्चारणस्यैकेन साधुत्वबोधनं, तयोर्मध्ये परस्य द्वितीयोच्चारणस्याऽन्येन साधुत्वबोधन-मिति भावः।

वक्ष्यमाणरीत्येति। 'प्रत्ययरूपो यो विसर्ग' इति व्याख्यादर्शरीत्येत्यर्थः। वस्तुतस्तद-सङ्गतम्। 'कविभिः कृतमि'त्यादौ षत्वाऽऽपत्तेः[3]। एतच्च 'अन्वये तु' इति तुनाऽरुचिबोधकेन

---

[1] 'विसर्गस्थानिक-इदुदुपधस्येति' इति क. ख. पाठः।

[2] 'अट्कु' इति सूत्रे' इति क. पाठः।

[3] 'दोषापत्तेः' इति मुद्रितः पाठः।

ख्याञादेश इति। आदेशो हि उपदेशे ख्शादिः। असिद्धप्रकरणे णत्वाऽनन्तरं ख्शाञः शस्य यत्वं विकल्प्यते। तेन 'सुप्रख्येन निर्वृत्तं सौप्रख्यं, तत्र भवः सौप्रख्यीयः'। यत्वस्याऽसिद्धत्वात् धन्वयोपधाद् (८।२।१२१) इति वुञ् ने'त्यादिप्रयोजनान्याकरे स्थितानि। एवञ्च यत्वस्याऽसिद्धतयाऽम्परत्वाऽभावात् पुमः खयि (८।३।६) इति रुत्वं नेत्यर्थः।

पुंख्यानमिति। चक्षिङो ल्युट्। ख्याञादेशः। नन्वादेश इह दुर्लभः, 'वर्जने प्रतिषेधः' 'असनयोश्चे'ति वार्त्तिकादिति चेत्। सत्यम्। 'बहुलं तण्यन्नवधकगात्रविचक्षणाऽजिराऽऽद्यर्थमि'ति वार्त्तिके बहुलग्रहणात् समाधेयम्। तथा च ख्शादित्वप्रयोजनगणने[1] वार्त्तिकं-'रुविधिः—पुंख्यान-मि'ति[2], 'णत्वं—पर्याख्यानमि'ति[2]। 'निष्ठानत्वम्-[2]आख्यातमि'ति च। शकारेण व्यवधानात् कृत्यचः (८।४।२९) इति णत्वं न। तथा 'आख्यातमि'त्यत्र संयोगादेरातः (८।२।४३) इति नत्वं न। यत्वस्याऽसिद्ध्या यण्वत्ताविरहात्। एवञ्च न ध्याख्या (८।२।५७) इति सूत्रे 'ख्या'ग्रहणं न कर्त्तव्यमिति भावः। न च 'ख्या प्रकथने' इत्येतदर्थं तदिति वाच्यम्। तस्य सार्वधातुक-मात्रविषयत्वात्। अत्र च 'सस्थानत्वं नमः ख्यात्रे' इत्युत्तरवार्त्तिकं प्रमाणम्। 'सस्थान' इति जिह्वामूलीयस्य प्राचां सञ्ज्ञा। स इह न। शर्परे विसर्जनीयः

---

बृहच्छब्दरत्नः

भावाऽर्थं सादेशो [3]षत्वनिषेधो मास्त्वित्याशये तु न का चिद्दोषशङ्का। 'तस्य भाव-स्त्वतलावि'तिसूत्रस्थ-'पुंस्त्वमि'तिभाष्यप्रयोगस्त्वनुस्वारपक्षे बोध्यः। न च 'ह्रस्वा-दि'ति सूत्रे न वर्णनिर्देशः, किन्त्वकारसहितः, अत एवाऽऽदिग्रहणं चरिताऽर्थमिति

---

लघुशब्दरत्नः

सूचितम्। यदा तु 'सूतेः सस्य पकारोऽन्त्यस्य ह्रस्वो, म्सुः प्रत्यय' इति स्त्रियाम् (४।१।३) इति सूत्रभाष्य-कैयटोक्तव्युत्पत्तिस्तदा सस्य लोपे मस्यैव प्रत्ययत्वमिति, व्याख्यादर्शोक्त-सामानाधिकरण्येऽपि षत्वाऽप्राप्तिरेव। 'पातेर्डुम्सुन्नि'ति व्युत्पत्तिमादाय तु मूलमिति दिक्।

शकारेणेति। यत्वाऽसिद्धत्वादिति भावः। न कर्त्तव्यमिति। यत्वाऽसिद्ध्या यण्वत्ताविरहेण नत्वाऽप्राप्तेरिति भावः। अत्र चेति। ख्यातेः सार्वधातुकमात्रविषयत्वे इत्यर्थः। सञ्ज्ञेति। एवञ्च तदुत्तरभावप्रत्ययेन सस्थानशब्द उच्यते। तेन स्ववाच्यो

---

[1] 'गणनवार्त्तिकम्' इति मुद्रितः पाठः।
[2] भाष्येतु 'पुंख्याने' 'आख्याते' इत्यादिः सप्तम्यन्त एव पाठः।
[3] 'षत्वप्रतिषेधो मास्तु' इति क. ख. पाठः।

( ८।३।३५ ) इत्यस्य [1]प्रवृत्तेरित्यर्थः।

यदि तु[2] स्वतन्त्रोऽपि धातुरार्द्धधातुके इष्येत, तदा जिह्वामूलीयस्य दुर्वारतयेदं वार्त्तिकमसङ्गतं स्यात्। यत्तु हरदत्तमाधवादिभिरुक्तं—'ख्याधातुरपि ख्शादिः, यत्वविधिरप्युभयसाधारण' इति। तच्चिन्त्यम्। भाष्ये चक्षिङ एवोपक्रमात्, सार्वधातुकेऽपि [3]ख्शादिप्रयोगाऽऽपत्तेश्च। न चेष्टाऽऽपत्तिः। माधवेन 'आर्द्धधातुकेष्वेवाऽयं ख्शादिरि'त्युक्तत्वात्, सार्वधातुकेऽनभिधानस्यैव शरणीकर्त्तव्यत्वाऽऽपत्त्या गौरवग्रस्तत्वाच्चेत्यास्तां तावत्।

स्यादेतत्। बहवः पुमांसोऽस्मिन् कुले 'बहुपुम् ख्याती'त्यत्र रुत्वं स्यात्। उरःप्रभृतिषु पुम्शब्दस्यैकवचनाऽन्तस्यैव पाठान्नेह कप्। सार्वधातुके च ख्यातेः प्रयोगो निर्बाध एवेति चेत्। इष्टाऽऽपत्तेः। संहितायाः अविवक्षायान्तु रुत्वं नेति स्पष्टमेव। यत्तु प्राचा 'ख्याधातौ नेति केचिदि'त्युक्तं, तत्र यदि ख्याञादेशे इत्यर्थस्तर्हि 'के चिदि'त्यनुचितम्। स्वतन्त्रे धातौ चेत्तर्हि सार्वधातुकविषयेऽपि निषेधः स्यात्। न चेष्टाऽऽपत्तिः। निर्मूलत्वात्।

चक्रिँस्त्रायस्वेति। यत्तु प्राचा 'त्राही'त्युक्तं, तत्र परस्मैपदमयुक्तम्।

---

**बृहच्छब्दरत्नः**

वाच्यम्। 'निष्ठ्यः' 'बहिष्ट्वमि'त्याद्यसिद्धयापत्तेः। तस्मादादिग्रहणं न्याय-प्राप्ताऽर्थाऽनुवादकमात्रम्। वस्तुतस्तु 'तादौ च निती'त्यादाविवाऽऽदिग्रहणस्यौ-पदेशिकत्वेन ष्ठ्यु-ष्ठ्युलोस्तुटि षत्वं नेति यावद्बाधं साधु। परस्मैपदमिति। आत्वस्या-ऽप्युपलक्षणम्। आचारक्विपीति। नन्वेवमप्युपदेशे यो ङित्तदन्तत्वाऽनपायेनाऽऽत्मने-

---

**लघुशब्दरत्नः**

जिह्वामूलीयो वार्त्तिके लक्ष्यते, 'कुत्वं कस्मान्न भवती'त्यत्रेवेति भावः। [4]क्शादिरिति। प्रयोगे चर्त्वप्रवृत्तिरिति भावः। इत्युक्तत्वादिति। एवं च माधवो नेष्टाऽऽपत्तिं कर्त्तुमर्ह इत्यर्थः। अनभिधानस्यैवेति। ख्शादेरनभिधानस्यैवेत्यर्थः। गौरवेति। ख्शादित्वं स्वी-कृत्याऽनभिधानस्वीकाराऽऽपेक्षया, तदस्वीकृत्यैव ख्यातेरार्द्धधातुकेऽनभिधानस्यैव स्वीकारे लाघव-मिति भावः। 'रुत्वमि'त्युपलक्षणं जिह्वामूलीयस्य, षत्वस्य च—'नमः ख्याति,' 'निःख्याती'त्यादौ।

---

[1] 'प्रवृत्तेरिति भावः' इति मुद्रितेषु पाठः।

[2] मुद्रितेषु 'तुः' खण्डितः।

[3] 'क्शादिप्रयोगापत्तेश्च' इति घ. ङ. पाठः।

[4] 'क्शादीति पाठे प्रयोगे चर्त्वप्रवृत्तिरिति भावः' इति मुद्रितेषु पाठः।

त्रायतेर्ङित्त्वात् । त्रायत इति त्राः । स इवाऽऽचरेत्यर्थे कर्त्तरि क्विन्तादाचार-क्विपि वा बोध्यम् । प्रशानिति । प्रपूर्वात् शाम्यतेः क्विप् । अनुनासिकस्य क्वि ( ६।४।१५ ) इति दीर्घः । मो नो धातोः ( ८।२।६४ ) इति नः । तस्याऽसिद्धत्वान्नलोपो न ।

नॄन्पे (८।३।१०)। पकारोपरि अकार उच्चारणाऽर्थः । तेन 'नॄः पुनाती'-त्यादि सिद्धम् । उभयथर्क्षु ( ८।३।८ ) इत्यतः 'उभयथे'त्यनुवृत्तेर्विकल्पः फलित इत्याशयेनाऽऽह—रुः स्याद्वेति ।

कुप्वोः (८।३।३७)। सूत्रे खर्परत्वाद्विसर्गः । जिह्वामूलीयस्य खत्वात् ।

---

बृहच्छब्दरत्नः

पदं दुर्वारमेवेति चेन्न । धातोराक्षेपे सिद्धे भूवादिसूत्राद्धातुपदाऽनुवृत्त्या 'धातुरेव यो धातुर्न नामधातुरि'ति व्याख्यानेन दोषाऽभावात् । 'अनुदात्तेत्त्वसाहचर्येण ङित्त्वस्यौपदेशिकत्वे लब्धे, 'उपदेश'ग्रहणमुपदिश्यमानाऽर्थपरम् । स च विशेषण-सामर्थ्यात्प्रथमोपस्थिताऽनुपसर्जनीभूत एव गृह्यते । तेन नामधातुषु ने'ति कश्चित् । सर्वथा 'उत्पुच्छयते' इत्यादौ न दोषः । ध्वनितञ्चेदं लोहितादिसूत्रे ककार-षकार-प्रत्याख्यानं कुर्वता भाष्यकारेण । एतेन ऊधन्य'शब्दे नामधातावात्मनेपदाऽर्थतया चारितार्थ्येन तातङ्न्यायेन सर्वाऽऽदेशो दुर्वार' इति शङ्का समाहिता । तस्मात् 'ऊङ् च गमादीनामि'त्यादाविव स्पष्टाऽर्थमेव ङित्त्वमिति निरूपयिष्यामः ।

ननु 'शानयती'त्यादिसिद्ध्यर्थं चुरादित्वमावश्यकमिति निर्विवादम् । तस्मा-ण्णिचि, तदभावे वा अप्रत्यये कृते 'अप्रशानि'ति षष्ठ्यर्थे प्रथमे'त्याहुः । तन्न । 'कृन्मे-जन्त' इति सूत्रस्थभाष्यविरोधेन क्विब्विचोरनुत्पत्तेः, नलोपाऽऽपत्तेश्चेति ध्वनयन्नाह-–प्रपूर्वादित्यादि । खर्परत्वादिति । इदमेव च ज्ञापकमयोगवाहानां वर्णसमाम्नाये पाठस्य ।

---

लघुशब्दरत्नः

त्रायतेर्ङित्त्वादिति । अत्र 'त्रायतेरि'त्युक्त्या सत्यपि परस्मैपदे 'त्राये'त्यस्य [1]प्राप्त्या 'त्राही'त्यस्याऽसिद्धिः सूचिता । आचारक्विपि वेति । नामधातौ मूलधात्वादे-ङित्त्वाद्याश्रित्य अनुदात्तङित (१।३।१) इत्यादेः प्रवृत्तिर्नेत्यभिमानः । अत एव 'त्राहि मां पुण्ड-रीकाक्षे'ति सङ्गच्छते इति भावः । 'आर्षं तत्र तदि'त्यन्ये । शाम्यतेरिति । न तु 'शान तेजने' इत्यस्य[2] । तस्य पदान्ते नलोपेन नान्तत्वाऽसम्भवादिति भावः । न च 'अप्रशानि'ति-पर्युदासेन नान्तग्रहणे सिद्धे, 'न' इति व्यर्थमिति वाच्यम् । अस्य लक्षणवशसंपन्ननान्तत्वेन पर्युदासेनाऽपि लक्षणवशसम्पन्ननकारान्तानां मान्तानामेवाऽऽपत्तेः ।

ननु कुप्वोः (८।३।३७) इत्यत्र जिह्वामूलीयस्य खर्त्वाद्विसर्गे, तस्य सत्वे, सश्रवणा-

---

[1] 'प्राप्तेः' इति क. पाठः ।
[2] 'इत्यतः' इति मुद्रिते पाठः ।

'खर्परे शरी'ति विसर्गस्य लोपः। जिह्वामूलीयस्य शर्त्वात्। वा शरि (८।३।३६) इति विसर्ग एव वा। आदेशयोः क-पावुच्चारणाऽर्थौ। चाद्विसर्ग इति। यत्तु प्राचा 'चाद्विकल्प' इत्युक्तम्। तन्न। ᳲकᳲपाभ्यां मुक्ते[१] विसर्जनीयस्य सत्वप्रसङ्गात्।

**कानाम्रेडिते** (८।३।१२)। 'कान् कानी'ति वाच्ये 'आम्रेडित'ग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यात्, इह मा भूत, 'कान् कान् पश्यसी'ति। अत्र एकः किं शब्दः प्रश्ने, द्वितीयः क्षेपे। 'कान् = कुत्सितान् पश्यसी'त्यर्थः।

**कस्कादिषु च** (८।३।४८)। अत्र प्राचा 'एषु विसर्जनीयस्य ᳲकᳲपौ ने'त्युक्तम्। नाऽसौ सूत्राऽर्थः। ᳲकᳲपयोरस्वरितत्वात्, नञश्चाऽप्रकृतत्वात्। किन्त्वार्थिकाऽर्थकथनं तदिति ध्वनयन्नाह— ᳲकᳲपयोरिति। कौतस्कुत इति। 'कुतः कुत आगत' इत्यर्थे अव्ययात्त्यपि प्राप्ते गणपाठसामर्थ्यादण्।

---

बृहच्छब्दरत्नः

ध्वनयन्निति। 'कुप्वोः ᳲकᳲपौ चे'त्यनेन नाऽपूर्वो विसर्गो विधीयते, किन्तु स्थानिभूत एव विसर्गः पक्षे स्थाप्यते। तस्य चाऽऽदेशे विधीयमाने [२]पक्षप्राप्त ᳲकᳲपयोरेवाऽपवादः फलित इति भावः। अयञ्च विधिः 'कुप्वोः ᳲकᳲपौ चे'त्यनेन पक्षे स्थाप्यमाने विसर्गे न प्रवर्त्तते। 'कुप्वोःᳲकᳲपौ चे'त्यत्र योगविभागेनैव पक्षे विसर्गे सिद्धे, चकारेण पुनर्विधानेन, अर्थाऽधिकाराच्च विकाराऽभावबोधनात्।

---

लघुशब्दरत्नः

ऽपत्तिरत आह—सूत्रे इत्यादि, शर्त्वादित्यन्तेन। विसर्गलोपश्च सत्वाऽपवादः। एवञ्च सूत्रे निर्विसर्गपाठ इति भावः। सविसर्गपाठेऽप्याह—वा शरीति। स च सत्वाऽपवादः। 'खर्परे' इति च[३] वैकल्पिकमिति भावः। उच्चारणार्थाविति। तयोरुच्चारणस्य तौ विनाऽभावेन[४] नान्तरीयकतया तयोरुच्चारणं, न तु तयोर्विधेयत्वम्। किन्तु तन्मात्रे तयोर्लक्षणा, व्याख्यानादिति भावः। चाद्विकल्प इति। निपातानामनेकार्थत्वाच्चशब्दो विकल्पाऽर्थ इति तदाशयः। सत्वप्रसङ्गादिति। चाऽनुकृष्टविसर्गस्तु सत्वाऽपवाद इति नाऽस्माकं दोष इति भावः। गणपाठसामर्थ्यादिति। एतेन 'पञ्चम्यन्तात्स्वार्थे [५]तसिल्विधानेनाऽव्यया-

---

[१] 'विसर्गस्य' इति मुद्रितः पाठः।

[२] 'पक्षे प्राप्त' इति क. पाठः।

[३] चकारः क. नास्ति। 'खर्परे इत्यस्य वैकल्पिकत्वादिति भावः' इति घ. पाठः।

[४] 'असम्भवेन' इति मुद्रितः पाठः।

[५] 'तसिविधानेन' इति क. पाठः।

**सर्पिष्कुण्डिकेति।** नित्यं समासे (८।३।४५) इत्येव सिद्धे, इह पाठस्य प्रयोजनन्तु तत्रैव वक्ष्यते। **सेनासुरेति।** यदि[1] हि च्छस्य तुक् स्यात्, तर्हि च्छस्य चर्त्वे सति चद्वयं स्यात्। सन्निपातपरिभाषया चर्त्वाऽप्रवृत्तौ तु च्छकारोपरि चकारः श्रूयेतेति भावः।

## इति हल्सन्धिः।

---

**बृहच्छब्दरत्नः**

सकारादिसहित-गणे-पाठसामर्थ्यात्कॅ्पयोरपवाद इत्यप्याहुः। **गणपाठसामर्थ्यादिति।** एतेन 'उत्सर्गतः प्रथमैकवचनमि'ति सिद्धान्तादण् दुर्लभ' इत्यपास्तम्। 'सर्वासां विभक्तीनामेकवचनमि'ति पक्षे दोषाऽभावाच्च। **यदि हीति।** 'पदान्ताद्वे'ति सूत्रे 'दीर्घात्' 'छे चे' त्यनुवर्त्तते। वस्तुतस्तु 'छे चे'ति सूत्रे 'अच' इतिच्छेदः। सौत्रत्वाद्विसर्गलोपः। एवञ्च 'दीर्घात्पदान्ताद्वे'त्येकमेव सूत्रम्। ध्वनितञ्चेदम् 'इको यणचि' 'उपसर्गाद्दति धातौ' इत्यादौ भाष्ये। 'दीर्घादि'ति योगविभागेनैव सिद्धे, सौत्रत्वं न कल्प्यमि'ति मूलाशयः। इदञ्च 'एओङ्'सूत्रे भाष्ये स्पष्टम्।

**श्रूयेतेति।** एतेन 'पदान्ताद्वे'ति विकल्पात्तुगेवाऽत्र नास्ती'त्यपास्तम्। कैय्यटादिविरोधात्। सिद्धान्ते तु चकारोपरि छकारः श्रूयते। तदुत्पत्तिक्रमस्तु मूले स्पष्टः। नचाऽकारस्य पदान्तत्वाऽभावात्तदवयवतकारेऽपि पदान्तत्वाऽभावेन जश्त्वाऽप्रवृत्तौ, मूलग्रन्थोऽयुक्त इति वाच्यम्। 'न छ्यति'। 'छो छेदने'। 'सुपी'ति कः। 'न च्छायते'। 'अन्येष्वपी'ति ड' इति व्युत्पत्तिद्वयस्य 'त्रिष्वाऽऽगाधात्प्रसन्नोऽच्छ' इत्यमरव्याख्याने मुकुटादौ प्रदर्शितत्वेनाऽकारस्य पदान्तत्वात्। 'स्वच्छयती'ति व्युत्पत्तिस्तु न्यासे स्पष्टैव। तुगागमस्य हलादिःशेषेण निवृत्तिस्तु न। लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः। अत एव[2] तुगादिकं चरिताऽर्थमित्यन्यत्र विस्तरः।

## इति हल्सन्धिः।

---

**लघुशब्दरत्नः**

**त्सर्गतः** प्रथमैकवचनोत्पादेन पञ्चम्यन्तत्वाऽभावात् 'तत आगत' इत्यर्थे कथमणि'त्यपास्तम्। 'अव्ययानामि'ति टिलोपः। **सन्निपातेति।** असिद्धविषयेऽपि सा प्रवर्त्तते। यद्वा पूर्वत्र कर्त्तव्येऽसिद्धत्वेऽपि, तत्र कृते उत्तरस्याऽसिद्धत्वे मानाऽभाव इति, नाऽसिद्धत्वेन सन्निपातपरिभाषाप्रवृत्तिप्रतिबन्धः शक्य[3] इति भावः। वैकल्पिकेष्वपि भावाऽनुष्ठानस्यैवौचित्यं, फलाऽऽधिक्यायेति तात्पर्यम्।

## इति हल्सन्धिः।

---

[1] 'यदीह छस्य' इति साम्प्रदायिकाः पठन्ति।

[2] 'तुगादिकम्' इति क. ख. पाठः।

[3] 'शङ्क्य' इति मुद्रितेषु पाठः।

## अथ विसर्गसन्धिप्रकरणम् ।

**शर्परे (८।३।३५)। सत्वादेरयमपवादः। यदि तु 'शर्परे ने'त्येवोच्येत, तर्हि प्रकृते सत्वे निषिद्धेऽपि, कुप्वोः ᳲकᳲपौ स्यातां—'वासः क्षौमम्,'**

---

बृहच्छब्दरत्नः

शर्परे। ननु 'शरी'त्येवोच्यतां, किं परग्रहणेन। न च 'खरी'त्यस्य निवृत्तिः सम्भाव्येतेति वाच्यम्। 'वा शरी'त्यस्य वैयर्थ्याऽऽपत्तेः। एतेन समुच्चयोऽपि निरस्तः। चकाराऽभावाच्च। न च 'खर्परे शरी'ति वैपरीत्यं स्यादिति वाच्यम्। 'खर्परे शरि वा विसर्गलोपो वक्तव्य' इत्यस्य वैयर्थ्याऽऽपत्तेः। न च 'वा शरी'ति सूत्रे एव 'शर्परे खरी'त्यर्थोऽऽपत्तिरिति वाच्यम्। 'खरी'त्यनुवृत्तौ मानाऽभावात्, प्रकृतसूत्रे 'खरी'त्यस्याऽसम्बद्धत्वादिति चेत्। अत्रोच्यते—'खर्परे शरी'ति व्यत्यासवारणाऽर्थं परग्रहणम्। न च 'खर्परे शरि वा विसर्गलोपो वक्तव्य' इत्यस्य वैयर्थ्यम्। लोपविकल्पसामर्थ्येन पक्षे सत्वप्रवृत्तेरभ्युपगमात्। न च 'वा शरी'त्यनेन सिद्धिः। हल्परशरि अप्रवृत्तिज्ञापनेन चारितार्थ्यादित्याहुः।

नेत्येवोच्येतेति। यत्तु 'विसर्जनीयस्य सोऽशर्परे' इत्येव सिद्धे योगविभागो व्यर्थ' इति। तन्न। प्रसज्यप्रतिषेधे वाक्यभेदस्य सत्त्वेन लाघवाऽभावात्। असमर्थसमासश्चाऽधिको दोषः। पर्युदासे तु हल्परखर्येव प्रवृत्त्यापत्तिः। उत्तरसूत्रे 'चाद्विसर्ग' इत्यर्थो न लभ्येत। मन्मते तु 'कुप्वोः ᳲकᳲपौ चे'त्यत्र चकारेण 'सत्वं ने'त्यनुकृष्यते। तत्सामर्थ्यात्पक्षे सत्वनिषेधेऽर्थाद्विसर्गसिद्धिः। यद्वा 'कुप्वोरि'ति योगो विभज्यते। 'ने'ति, 'विसर्जनीयस्य स' इति चाऽनुवर्त्तते। 'कुप्वोर्विसर्जनीयस्य सो ने'त्यर्थः। ततः—'ᳲकᳲपौ च'। योगविभागसामर्थ्याच्चकारकरणाच्च [1]निषेधसमुच्चयः। एतेन 'प्रतिषेधविषये 'कुप्वोः ᳲकᳲपौ चे'त्यस्य चारितार्थ्येन, 'येन नाप्राप्ति'न्यायस्य वक्तुमशक्यत्वेन, 'नॄँः पाही'त्यादौ सत्वं स्यादि'त्यपास्तम्। निषेधविषयेऽपि प्रवृत्तियोग्यतायाः सत्त्वेनोद्देश्यतावच्छेदकाऽऽक्रान्तत्वाद् येन नाऽप्राप्तिन्यायस्य दुर्वारत्वात्। फलोपहितोत्सर्गप्रवृत्तौ न्यायाऽङ्गीकारे असम्भव एव।

स्यातामिति। यत्तु 'यथान्यासे 'कुप्वोरि'ति योगं विभज्य कुप्वोर्विसर्गस्य विसर्गविधानेन ᳲकᳲपयोर्निवृत्तिरि'ति। तन्न। 'कुप्वोरि'ति सूत्रं प्रति'ᳲकᳲपौ चे'ति

---

लघुशब्दरत्नः

नेत्येवोच्येतेति। कुप्वोः (८।३।३७) इत्यत्राऽपि चेन 'सत्त्वं ने'त्येवाऽनुकृष्टव्यमिति

---

[1] 'निषेधेन समुच्चयः' इति ख. पाठः।

**'अद्भिः प्सातमि'ति । विसर्जनीयवचनात्तु विकारमात्रं बाध्यते इत्याशयेनाह–न त्वन्यदिति । तदेव स्फुटयति—इहेति ।**

### बृहच्छब्दरत्नः

सूत्रस्याऽसिद्धत्वेन निवारयितुमशक्यत्वात् । योगविभागसामर्थ्यादसिद्धत्वाऽभावे तु 'वृक्षः पचती'त्यादौ दोषाऽऽपत्तेः । न च 'शरी'त्यनुवृत्त्या निस्तारः । 'कवर्गपवर्गपरे शरी'त्यर्थस्याऽऽपत्तेः । न च 'शर्परे' इत्यनुवृत्त्या न दोष इति वाच्यम् । वचनविपरिणामे मानाऽभावात् । मध्ये असम्बन्धेन मण्डूकाऽनुवृत्त्यापत्तेश्च ।

विकारमात्रं बाध्यते इति । यत्तु 'विसर्जनीय एवे'ति नियमादि'त्याहुः । तन्न । परिसङ्ख्याविधिकल्पने मानाऽभावात् । न्यायेनैव तदभावसिद्धेश्च । तथा हि—येन-नाऽप्राप्तिन्यायेन 'कुप्वोः ≍क≍पौ चे'ति सत्वस्यैवाऽपवादः । शर्परे विसर्जनीयाऽऽदेशे तु न प्रवृत्तिः । अर्थाऽधिकारेण 'खरवसानयोरि'त्यस्यैव ग्रहणात् ।

ननु मा भूदपवादत्वेन बाधः, परत्वेन बाधस्तु दुर्वार एवेति चेन्न । असिद्धत्वात् । 'शर्परे विसर्जनीय' इति सूत्रं सत्वस्यैवाऽपवादकम् । एवञ्च 'उरःख्यः' 'उरःसः' 'सर्पिःख्यः' 'सर्पिस्स' इत्यादौ 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरि'ति वचनेन सुबुत्पत्तेः प्राक् समासेऽपि 'शर्परे' इति विसर्ग एव । उक्तरीत्या 'सोऽपदादौ' 'इणः ष' इत्यादीनामप्रवृत्तेः । 'सोऽपदादौ' 'इणः ष' इति येन नाऽप्राप्तिन्यायेन ≍क≍पयोरेव बाधकं, न तु 'शर्परे विसर्जनीय' इत्यस्य । एवं 'तिरसोऽन्यतरस्यामि'त्यादावपि बोध्यम् । 'न त्वन्यदि'ति तु फलितम् । ध्वनितञ्चेदं 'विसर्जनीयस्य स' इति सूत्रे भाष्ये । 'कुप्वोः ≍क≍पौ चे'ति सूत्रस्थभाष्यन्तु कथञ्चिन्नेयमिति दिक् ।

### लघुशब्दरत्नः

भावः । स्यातामिति । [1]सत्वनिषेधे खरवसानयोः (८।३।१५) इति [2]विहितस्य विसर्गस्य सत्त्वादिति भावः । विकारमात्रमिति । तत्सामर्थ्याच्चाऽनेन तस्यैव प्रत्यापत्तावपि, न ताविति भावः । एतेन 'एतद्विहितस्य स्थानेऽपि तौ स्याताम् । किञ्चाऽस्यैव तौ स्याताम् । 'खरवसानयोः' (८।३।१५) इति विहितस्य त्वेतयोरसिद्धत्वात् 'विसर्जनीयस्य (८।३।३४) इति सत्वमेव स्यादि'त्यपास्तम् । अर्थाऽधिकारेण खरवसानयोः (८।३।१५) इति विहितविसर्गस्यैवाऽतिदेशाच्च । 'विसर्जनीयस्य सोऽशर्परे' इति तु न सूत्रं कृतम् । वा शरि (८।३।३६) इत्यनेन सत्वस्य विकल्पेन सिद्धावपि, कुप्वोः (८।३।३७) इत्यत्र 'अशर्परे' इत्यनुवृत्त्या तयोः शर्परेऽप्रवृत्तावपि, कुप्वोः (८।३।३७) इति सूत्रे चाद्विसर्गलाभाऽनापत्तेः ।

[1] अत्र-'सत्वनिषेधे विसर्जनीयस्य 'खरवसानयोरि'ति विहितस्यैव सत्वाऽर्थेन अधिकारात् 'खरवसानयोरि'ति सूत्रविहितस्य तावादेशौ' इति मतेऽपि तौ स्याताम् । 'खरवसानयोरि'ति विहितविसर्गस्य सत्त्वादिति भावः' इति क्वचित्पाठः ।

[2] 'विहितविसर्गस्य' इति मुद्रितेषु पाठः ।

**सोऽपदादौ (८।३।३८)। अपदाद्योरिति। सूत्रे तु व्यत्ययेन एकवचनम्। यदि तु खर् विशेष्यते-'अपदादौ खरी'ति, तदा यथाश्रुतं साधु। किन्तु 'खरी'ति मण्डूकप्लुत्याऽनुवर्त्यमिति क्लेशः। न चाऽनुवृत्तेरुत्तरत्राऽपि**

---

बृहच्छब्दरत्नः

व्यत्ययेनेति। लाघवाऽर्थमेकवचननिर्देश इति भावः। [1]'कर्मणो रोमन्थतपोभ्या-मि'त्यत्र 'प्रत्येकं सम्बन्धाच्चैकवचनमि'त्याकरग्रन्थानामयमेवाऽऽशयः[2]। सह-विवक्षायां द्वन्द्वविधानेन साहित्यस्यैवाऽन्वयिताऽवच्छेदकत्वात्। 'द्वित्वमन्वयिता-ऽवच्छेदकमि'ति वादिनां मतेऽपि सममेतत्। अत एव 'पण्डितौ देवदत्त-यज्ञदत्तौ' 'देवदत्तश्च यज्ञदत्तश्च गच्छत' इत्यादेरिव, 'गच्छति-गच्छति देवदत्तयज्ञदत्तावि'त्या-दिकं नेत्यादि वक्ष्यते। एतेन 'देवदत्तश्च, यज्ञदत्तश्च, विष्णुमित्रश्च पचन्ती'त्यादा-विवाऽन्वयः, न चेदं वाक्यमयोग्यमिति वाच्यम्, 'युष्मद्युपपदे' इत्यादिसूत्रेषु भाष्यादावुक्तत्वादि'ति परास्तम्। प्रत्येकं पर्यवसन्नैकत्वप्रकारकबोधविशेष्येष्वपि मिलितेषु सङ्ख्याऽन्तराऽन्वये बाधाऽनिरुक्तेः। आख्यातोपात्ताऽऽश्रये [3]सर्वेषाम् अविशेषेणाऽन्वयस्य युक्तत्वात्। एतेन 'एते' इत्यध्याहारं वदन्तः प्रत्युक्ताः। त्वदु-क्तरीत्याऽध्याहृतेनाऽप्यन्वयस्य दुरुपपादत्वात्। तत्राऽन्वयप्रतिपादकयुक्त्यैवा-ऽत्राऽन्वयस्योपपादयितुं शक्यत्वाच्च। ध्वनितं चेदम् 'अथवैकयोगः करिष्यते' इति-'इको गुणवृद्धी' इति सूत्रस्थभाष्ये। प्रकृते तु बाधकं स्पष्टमेव। अत एव 'कुप्वो-रि'त्यत्र 'खरी'त्यनुवृत्तावपि बाधकाऽभावेन मण्डूकप्लुतिर्नाऽस्त्येवे'ति निरस्तम्। यत्तु 'कुप्वोरि'ति षष्ठी, षष्ठ्यर्थश्चाऽन्तर्गतत्वम्—'कुप्वन्तर्गते खरी'त्याहुः। तन्न। कारकविभक्तिमादाय क्रियाऽन्वये सम्भवति षष्ठ्यन्तत्वमादाऽश्रुतसुबन्ता-ऽन्वयस्याऽयुक्तत्वात्। शाब्दाऽन्वयाऽनुरोधेन प्रथमोपस्थितसूत्रे व्यत्यासकल्पनमेव न्याय्यम्। एतेन 'खरि विद्यमानयोः कुप्वोरि'ति परास्तम्। विद्यमानक्रियाऽध्याहारे गौरवात्। अप्रधानक्रियायामन्वयस्याऽयुक्तत्वात्। शब्दाऽधिकाराऽऽपत्तेश्च।

क्लेश इति। समस्तैकदेशाऽनुवृत्तिः, सन्निहितत्यागश्च[4] क्लेशाऽन्तरं बोध्यम्। उत्तरत्रेति। तृतीय-चतुर्थ-पञ्चम-व्यावृत्त्यर्थमिति भावः।

---

लघुशब्दरत्नः

व्यत्ययेनेति। सौत्रत्वादिति भावः। इति क्लेश इति। किञ्च 'पूस्तरे'त्यादौ षत्वादिवारणाय कुप्वोः (८।३।३७) [5]इत्यप्यनुवर्त्त्य 'तदन्तर्गते खरी'ति व्याख्याने सुतरां

---

[1] पदमञ्जर्यां हरदत्तोक्तिरियम्। 'प्रत्येकसम्बन्धात्' इति तत्र पाठः।

[2] आकरग्रन्थाः=पदमञ्जर्यादयः।

[3] 'सर्वेषामविशेष्येष्वन्वयस्य' इति क. ख. पाठः।

[4] 'क्लेशान्तरे बोध्ये' इत्यपि पाठोऽत्र सम्भाव्यते।

[5] 'इत्यनुवर्त्त्य' इति मुद्रितेषु पाठः।

आवश्यकता । खरं विना विसर्गस्य दुर्लभत्वेन तदनुवृत्तेर्निष्फलत्वात् ।

'पाश-कल्प-क-काम्येष्वि'ति वृत्तिः । सम्भवप्रदर्शनमेतन्न तु परिगणनम् । अन्यस्याऽसम्भवात् । प्रातःकल्पमिति । अधिकरणशक्तिप्रधानस्याऽपि 'प्रातः'शब्दस्येह वृत्तिविषये शक्तिमत्परत्वम् । 'दोषाभूतमहः' 'दिवाभूता रात्रिरि'तिवत् । गीः काम्यतीति । इह इणः षः (८।३।३९) इति षत्वं न ।

बृहच्छब्दरत्नः

निष्फलत्वादिति । एवञ्च 'शर्परे विसर्जनीय' इति सूत्रे 'शर्परे' इति बहुव्रीहौ आक्षिप्त-'खरी'त्यस्य विशेष्यत्वम् । यद्वाऽवध्यवधिमतोः साजात्याद्वर्ण एव विशेष्यः । वस्तुतस्तु 'कुप्वोरि'त्यनुवृत्तिरेव युक्ता, न तु 'खरी'त्यस्य विशेष्यत्वम् । 'गीश्वरः' 'गीस्तरः' 'सर्पिःषु' इत्यादौ षत्वाऽऽपत्तेः । 'पाश-कल्प-क-काम्येष्वि'ति सम्भवप्रदर्शनं तु 'कुप्वोरि'त्यनुवृत्तावेव सङ्गच्छते । तदेव ध्वनयन्नाह—सम्भवेति । [1]अन्यस्येति । इदञ्च वृत्तिकाराऽऽशयवर्णनमात्रम् । अत एव 'वृत्तिरि'ति स्वरूपग्रहणम् । अत्राऽरुचि-बीजन्तु 'उरः'पूर्वकात् काधातोः[2], पाधातोश्च 'क'प्रत्यये, 'गतिकारकोपपदानामि'ति वचनेन सुबुत्पत्तेः पूर्वं समासे अन्यस्याऽपि सम्भवात् । 'उरःकेणे'त्यादौ 'धनक्रीते'-त्यादाविवोक्तवचनस्याऽनित्यत्वेन सुबन्तेन समासे सत्वाऽभावो बोध्यः ।

प्रातःकल्पमितीति । एतेन 'उपपयस्काम्यति' 'उपपयस्कल्पमि'त्यादिसकारसहिताः प्रयोगा निरस्ताः । अव्ययीभावस्याऽव्ययत्वेनोक्तनिषेधस्य दुर्वारत्वात् । यत्तु 'लुङ्मुखस्वरोपचारेष्वि'ति परिगणनेन नाऽन्यकार्येऽव्ययीभावस्याऽव्ययत्वम् । 'उप-चार'शब्देन 'अतः कृकमी'तिसूत्रविहितःसकारो गृह्यते । स च निवर्त्त्यत्वेन प्रयोजन-मिति स्पष्टं भाष्ये' इति । तन्न । सूत्रवैयर्थ्याऽऽपत्तिहेतुना परिगणनस्य भाष्ये दूषितत्वात् । परिगणनव्यावर्त्त्येषूक्तसत्वनिषेधस्याऽपरिगणितत्वाच्च । 'परमयशःकार' इत्याद्यर्थमनुत्तरपदस्थस्येत्यस्याऽऽवश्यकत्वेन परिगणने 'उपचार'ग्रहणं कुर्वत उक्ति-सम्भवाऽभावाच्च । यत्तु 'अनव्ययस्ये'त्यस्य पर्युदासादव्ययभिन्नोत्तरपदाऽवयव-त्वेन सत्वं भवत्येवे'ति । तन्न । 'प्रातःकल्पमि'त्यादौ दोषाऽऽपत्तेरित्याहुः । षत्वं नेति । इदञ्च 'गीःकाम्यति' 'पूःकाम्यती'ति विसर्गसहितभाष्योदाहरणाल्लभ्यते ।

लघुशब्दरत्नः

क्लेश इत्यपि बोद्धव्यम् । अन्यस्याऽसम्भवादिति । अयं भावः—'अपदे' इत्येव कुप्वोः (८।३।३७) इत्यनुवर्त्त्य 'यस्मिन्विधिरि'ति परिभाषया 'क-प-वर्गादौ अपदे' इत्यर्थेन सिद्धे, 'आदि'ग्रहणम् 'अपदस्यैवाऽऽदिरि'त्यर्थलाभार्थम् । तेन 'उरः कायती'ति विग्रहे सुबुत्पत्तेः पूर्वं समासेऽपि 'उरःकेणे'त्यादौ न सत्वम् । 'आदि'ग्रहणसामर्थ्येन, तल्लब्धाऽवधारणेन च पवत्व-योग्यप्रातिपदिकाऽनवयवस्यैव ग्रहणादि'ति । शक्तिमत्परत्वमिति । अव्ययत्वन्तु भूतपूर्वगत्या

[1] 'अन्यस्येति' इति ख. नास्ति ।

[2] 'कै गै शब्दे' इति पठितात् 'कै' धातोरित्यर्थः ।

तत्राऽपि 'काम्ये रोरेवे'त्यस्याऽनुवृत्तेः। यदि तु तत्रैवेदं पठ्येत, तर्हि षत्वमात्रप्रतिषेधेऽपि, पूर्वेण सत्वं स्यात्।

**इणः षः** (८।३।३९)। पूर्वस्याऽपवादः। इदं सूत्रं, 'स' इति च द्वयमप्युत्तरत्राऽनुवर्त्तते। [1]तेन 'यथासम्भवम् इणः परस्य षः, अन्यस्य स'

---

लघुशब्दरत्नः

'अनव्ययस्ये'ति तु न सम्बध्यते उत्तरत्र।

पूर्वस्येति। न च 'सर्पिष्पाशमि'त्यादौ षत्वम् 'इदुदुपधस्ये'त्यनेनैव सिद्धं, किमनेनेति वाच्यम्। 'गीष्पाशमि'त्याद्यसिद्धेः। 'सूत्रे सूत्रमसिद्धमि'त्यस्मिन्पक्षे षत्वस्याऽसिद्धत्वेन सत्वप्रसङ्गाच्च। कर्त्तारं, सयं, स्मृतांश्च सुनोतीति 'कर्त्तृसुत्' 'सेसुत्', 'स्मृतोसुत्'। तेभ्य आचक्षाणणिचि टिलोपे 'कर्त्तृष्कल्पं, 'सेष्कं' 'स्मृतोष्काम्यती'त्याद्यर्थमावश्यकत्वाच्च। [2]स्यत्यादीनां वा क्विपि रूपाणि बोध्यानि। अत एव 'इक इति नोक्तम्। 'इच' इति तु वक्तुमुचितम्।

यत्तु अस्मिन्प्रकरणे 'इदुदुपधस्ये'त्यादिभिः सत्वमेव विधीयते, तस्यैव 'इणः ष' इत्यनेन षः। 'अपदादावि'ति चाऽत्र न सम्बध्यते। 'कुप्वोरि'ति तु सम्बध्यते एव। न च 'स' इति करणे गौरवमिति वाच्यम्। 'इण' इति पञ्चम्या अनुवृत्त-'स' इति-प्रथमायाः षष्ठीकल्पनात्। 'स' इति प्रथमाऽन्तस्याऽनुवृत्तावपि चकाराद्यभावेन उभयोर्विधेयताया अभावे, प्राप्ताऽप्राप्तविवेकेन च, षकारस्य स्थान्याकाङ्क्षायाः सत्त्वेन च सकारस्यैव तत्त्वेन सम्बन्धाच्चे'ति। तन्न। सम्पुङ्कानां सादेशे षत्वाऽऽपत्तेः। न च सकारोच्चारणसामर्थ्यान्नेति वाच्यम्। 'पुंस्पुत्र' इत्यादावनुस्वारपक्षेऽर्धविसर्गादिव्यावृत्त्या चारितार्थ्यात्। न च 'अनन्तरस्ये'ति न्यायेन 'सोऽपदादावि'ति विहितसकारस्यैवाऽयमादेश इति वाच्यम्। 'इदुदुपधस्ये'त्यादिसूत्रविहितसकारस्याऽऽदेशाऽनापत्तेः। किञ्चोक्तसूत्राणामसिद्धत्वात्तद्विषये आदेशो दुर्लभः। न च प्रकरणे प्रकरणमसिद्धं, न योगे योगः, प्रकरणस्यैवाऽर्थवत्त्वेन तेषामानर्थक्यादिति वाच्यम्। प्रकरणैक्ये सामान्यविशेषभावादिना बाध्यबाधकभाववच्छास्त्रीयाऽसिद्धत्वस्याऽपि दुर्वारत्वात्। 'प्रकरणे प्रकरणमसिद्धमि'त्यस्मिन्पक्षे मानाऽभावाच्च। न च 'उपसर्गादसमासेऽपी'ति सूत्रस्थम् 'असमासेऽपी'ति ग्रहणं ज्ञापकम्। तद्धि पूर्वपदाऽधिकारनिवृत्तिद्योतनमुखेन समासाऽसमासयोः [3]प्रवृत्त्यर्थम्।

---

लघुशब्दरत्नः

बोद्धव्यमिति भावः। षत्वं नेति। सत्वं नेत्यपि बोद्धव्यम्। तत्रापि=षत्वविधावपि। एवं चाऽत्र पाठात्, तत्राऽनुवृत्तेश्च उभयमपि नेति बोद्धव्यम्।

---

[1] 'तेन' इति मुद्रितेषु नास्ति।

[2] 'स्मत्यादीनां वा' इति क. ख. पाठः।

[3] 'प्रवृत्त्यर्थे' इति क. ख. पाठ।

इति विवेकः। पुरः [1]प्रवेष्टव्या इति। पॄ पालन-पूरणयोः। भ्राजभास (३।२।१७७) इत्यादिना क्विप्। तदन्ताज्जस्। जसन्ततां स्फुटीकर्तुं 'पूः' 'पुरावि'त्युपन्यस्तम्।

इदुदुपधस्य(८।३।४१)। 'इदुतौ उपधे यस्य समुदायस्य, तस्याऽवयवो

बृहच्छब्दरत्नः

'पूर्वपदात्सञ्ज्ञायामि'ति नियमेनाऽसञ्ज्ञायामसमासे न स्यात्, तदर्थमावश्यकम्[2]। योगे योगस्याऽसिद्धत्वे तु नियमेन [3]तद्व्यावृत्तिः कर्तुमशक्येति वैयर्थ्यं स्पष्टमेवेति वाच्यम्। 'समानपदे' इत्यत्राऽखण्डपदस्यैव ग्रहणेन 'पूर्वपदात् सञ्ज्ञायामि'त्यस्य विध्यर्थत्वात्। विपरीतनियमस्याऽपि दुर्वारताऽऽपत्तेश्च। गकारव्यवधाने प्रतिषेधाऽर्थं तस्याऽऽवश्यकत्वाच्च। 'मध्येऽपवाद'न्यायस्य दुर्वारत्वेन 'उपसर्गादसमासेऽपी'त्यस्य नियमेन व्यावृत्तेः कर्तुमशक्यत्वाच्च। किञ्च 'पूर्वपदादि'त्यनुवृत्त्या, 'पूर्वप्रकरणसाहचर्याच्च समासे एव प्रवृत्तिः', 'परसाहचर्यादसमासे एव प्रवृत्तिरि'ति शङ्काद्वयवारणाऽर्थमसमासेऽपीत्यस्य सत्त्वाच्च। अपि च 'उच्चैष्कं' 'दुष्काम्यती'त्यादौ षत्वाऽनापत्तेः। न च 'काम्ये रोरेवे'तिवत् 'अनव्ययस्ये'त्यपि 'इणः ष' इत्यत्र सम्बध्यते इति भ्रमितव्यम्। सुजन्तस्य 'द्वि'स्त्रिरि'त्यनेन सादेशे, 'इणः ष' इत्यनेन षत्वाऽनापत्त्या भाष्यविरोधाऽऽपत्तेः। 'इणः ष' इतिसूत्रे 'विसर्जनीयस्ये'ति षष्ठ्यन्ताऽनुवृत्तेरावश्यकत्वे 'स' इति प्रथमाऽन्तस्य स्थानित्वाऽनापत्तेश्च। 'स' इति प्रथमाऽन्तस्योत्तरत्र विधेयतया पुनरन्वये शब्दाऽधिकाराऽऽपत्तेश्च। तत्सर्वं हृदि निधायाऽऽह–इदं सूत्रमित्यादि (–२३०पृष्ठे)। 'इणः ष' इति सूत्रे 'स' इत्यनुवृत्तस्य विधेयत्वे मानाऽभावेनोत्तराऽर्थतैवेति [4]भावः।

उपधे इति। तत्त्वञ्चाऽन्यपूर्वकाऽनुत्तरक-वर्णाऽपेक्षया पूर्वत्वम्। प्रकृते तु 'पदस्ये'त्यधिकारात्, शब्दप्रस्तावाच्च विसर्गरूपचरमाऽवयवपूर्ववृत्ति इत्त्वम् उत्त्वञ्चेत्–उपधात्वम्। ततो बहुव्रीहेर्विसर्गेऽवयवाऽयविभावेनैव सम्बन्धः। तादृशस्य सम्बन्धस्य पूर्वमुपस्थितत्वात्। एतेन 'विसर्जनीयस्याऽभेदेन सम्बन्धे, 'येन विधिरि'ति सूत्रेण तदन्तविधौ, 'विसर्जनीयाऽन्तस्य इदुदुपधस्ये'त्यर्थो युक्त' इति मन्दोक्तमपास्तम्।

लघुशब्दरत्नः

समुदायस्येति। अलोऽन्त्यात् (१।१।६५) इति सूत्रेऽवयववाचकाऽन्त्यशब्देन समुदायस्याऽऽक्षेपेण उपधात्वस्य समुदायनिरूपितत्वादिति भावः। 'इदुदुपधस्य विसर्गाऽन्तस्य

[1] 'प्रष्टव्या' इति लिखितेषु पाठः।

[2] 'आवश्यकी' इति क. ख. पाठः।

[3] 'तदि'ति क. ख. नास्ति।

[4] 'उत्तरार्थं तवेति भावः' इति क. ख. पाठः।

**यो विसर्जनीय' इति वैयधिकरण्येन सम्बन्धः। 'अप्रत्ययस्ये'ति तु 'अप्रत्ययो यो विसर्ग' इति सम्बद्ध्यते। सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वात्। न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्। 'अग्निः करोती'त्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः। न चाऽतिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम्। 'अप्रत्ययस्ये'तिनिषेधेनैव सिद्धत्वज्ञापनात्। अत एव 'अग्नि-रि'त्यादौ रोर्विसर्गः सिद्ध्यति। अन्यथाऽपदान्तत्वान्न स्यात्। विसर्गविधिस्तु 'पुनरि'त्यादौ चरिताऽर्थः। ज्ञापकश्च विशेषाऽपेक्षम्। तेन अचः परस्मिन् (१।१।५७) इति त्रिपाद्यां न प्रवर्त्तते। एवञ्च 'पूर्वत्राऽसिद्धे न स्थानिवदि'ति-सिद्धान्त उक्तयुक्तिमूलको, न तु वाचनिक' इतिप्रपञ्चितं शब्दकौस्तुभेऽस्माभिः।**

---

बृहच्छब्दरत्नः

अप्रत्यय इति। लाघवात्पर्युदासः स्यादिति। रोरसिद्धत्वेनाऽऽदेशाऽभावात् स्थानिवद्भावाऽप्रवृत्तेः। सान्ते तु फलाऽभावः। तथा च 'प्रत्ययभिन्नस्य विसर्गस्य ष' इति सूत्राऽर्थः। असिद्धत्वमिति। स्थानिनः, आदेशस्य च, शास्त्रीयकार्यस्य चाऽभावेन स्थानिवद्भावाऽप्रवृत्तिरिति भावः। ज्ञापनादिति। न चेदं ज्ञापकं कुप्वोः परत इति भ्रमितव्यम्। ज्ञापकस्य सामान्याऽपेक्षत्वात्। तदेव ध्वनयन्नाह—अत एवेति। विसर्गविधिस्त्विति। सिद्धस्थानिनि विसर्गविधेश्चरिताऽर्थत्वेनाऽतिदेशं प्रति-असिद्ध-स्थानिनि 'अग्निरि'त्यादौ विसर्गो न प्रवर्त्तते। तथा च 'खरवसानयोर्विसर्जनीय' इत्यस्य सामर्थ्यान्न प्रवृत्तिरिति भावः। उपायाऽन्तराण्यप्यन्यत्र मूले भविष्यन्ति।

ननु 'पूर्वत्राऽसिद्धे न स्थानिवदि'त्यस्य वाचनिकत्वाऽभावे 'तस्य दोषः संयोगादिलोपलत्वणत्वेष्वि'ति कस्याऽयं निषेध इत्यत आह—प्रपञ्चितमिति। 'न मु ने'-

---

लघुशब्दरत्नः

पदस्ये'ति सामानाधिकण्येनाऽन्वयः। षत्वन्तु अलोऽन्त्यस्य (१।१।५२) इत्यनेन विसर्गस्ये'-त्यन्ये। व्याख्यादर्शोक्तरीत्याऽऽह—अप्रत्ययो य इति। तत्प्रसिद्धेरिति। विसर्गस्य प्रत्ययत्वप्रसिद्धेरित्यर्थः। न स्यादिति। रोरसुप्त्वेन पदत्वाऽप्रवृत्तेरिति भावः।

चरितार्थ इति। ननु तत्राऽपि 'पुनर् सि'त्यवस्थायां जातपदत्वस्याऽतिदेशेनैव सुलोपे कृते आनयनमिति को विशेषः। न चैकदेशविकृतन्यायेन सिद्धिः। 'अग्निरि'त्यत्राऽपि सम-त्वात्। न च 'अग्निरि'त्यत्र आदेशस्य, अतिदेशलभ्यकार्यस्य चाऽसिद्धत्वम्, अत्र तल्लभ्यकार्य-स्यैवेति विशेष इति वाच्यम्। सर्वथाऽतिदेशाऽपेक्षणेन तस्याऽकिञ्चित्करत्वात्। किञ्च रुत्वाऽसिद्धत्वेन 'अग्निरि'त्यत्र पदत्वं सुलभम्। किञ्च विसर्गस्थान्यल्रूपरेफवृत्तिप्रत्ययत्वस्य स्थान्यल्धर्मत्वेन तदतिदेशाऽप्रवृत्तिरिति, प्रत्ययरूपो विसर्गो दुर्लभः। स्पष्टा चेयं रीतिः भोभगो (८।३।१७) इति सूत्रे भाष्ये। किञ्चैवं[1] सामानाधिकरण्ये 'असोरि'ति वक्तव्ये

---

[1] 'किञ्च सामानाधिकरण्ये' इति क. पाठः।

नन्वेवं 'मातुः कार्यमि'त्यादौ षत्वं स्यादिति चेन्न। कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठेन 'ङसिङसोरत उकारात्परस्य विसर्गस्य[1] षत्वं ने'ति

बृहच्छब्दरत्नः

इत्यत्र 'ने'ति योगविभागेन स्थलत्रयेऽसिद्धत्वाऽभावबोधनान्न्यायसिद्धम्। अत एव सिद्धकाण्डसङ्ग्रहः। अत एव[2] चाऽन्यत्राऽप्यसिद्धत्वाऽभावात् 'विन्यतुरि'त्यादौ यथोद्देशपक्षे स्थानिवद्भावेन 'उपधायाञ्चे'ति दीर्घाऽभावः। 'स्वरदीर्घयलोपेषु

लघुशब्दरत्नः

'अप्रत्यय'ग्रहणं व्यर्थं स्यात्। किञ्चैवं नित्यं समासे (८।३।४५) इति सूत्रे 'अनुत्तरपदस्थस्ये' त्यस्य वैयर्थ्यम्। 'परमसर्पिःकुण्डिके'त्यादावनेन षत्वस्य दुर्वारत्वात्। किञ्चैवं नित्यं समासे (८।३।४५) इति सूत्रस्थभाष्याऽसङ्गतिः। तथा हि—'अथाऽव्युत्पन्नं प्रातिपदिकं सर्पिरादि, ततो नित्ये प्राप्ते, 'इसुसोः सामर्थ्ये (८।३।४४) इति विभाषा आरम्यते' इति हि तत्रोक्तम्। 'प्रत्ययत्वपर्याप्त्यधिकरणभिन्नस्ये'त्यर्थे तु व्युत्पत्तिपक्षेऽपि नित्यषत्वप्राप्तेः 'अथाऽव्युत्पन्नमि'-त्यादेरसङ्गतिः स्पष्टैव। अत्र भाष्ये 'अथे'ति यद्यर्थे। तेन 'सर्पिषा' 'यजुषे'त्यादौ षत्वसिद्धये व्युत्पत्तिपक्ष एव, न त्वसाविति सूचितम्। तस्मादत्र प्रत्ययपदं तत्सम्बन्धिपरम्। 'प्रत्यय-सम्बन्धिभिन्नस्य विसर्गस्ये'त्यर्थ उचितः। अत एव 'कविभिः कृतमि'त्यादौ न दोषः। नित्यं समासे (८।३।४५) इति सूत्रस्थाऽनुत्तरपदस्थस्येत्यस्य, कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्य च एतदर्थज्ञापकतैवोचितेति चेत्। सत्यम्। व्याख्यादर्शाऽनुसारेणैतद्ग्रन्थसत्त्वात्। तद् ध्वनयन्वक्ष्यति—'नाऽतीवादर्त्तव्यमि'ति।

न प्रवर्त्तत इति (२३२ पृष्ठे)। अत एव 'तिरश्चे'त्यादौ सस्य श्चुत्वसिद्धिः। एतच्च इष्टाऽनुरोधेन संयोगादिलोप-लत्व-णत्वाऽतिरिक्तविषयम्। तेन तत्र स्थानिवत्त्वं भवत्येवेति 'तस्य दोष' इत्याद्यपि न वाचनिकमिति भावः।

मातुः कार्यमिति। सिद्धान्तव्याख्यानेऽप्यत्र दोषः। तथा हि–सकारसन्निधावकारो नैव प्रत्ययः, समुदायनिवेशित्वात्प्रत्ययत्वस्येति, तदादेशस्य उरः प्रत्ययत्वाऽभावेन, विसर्गस्य तत्सम्बन्धित्वाऽभावात्। यस्तु उत्वे कृतेऽवशिष्टः सकारः प्रत्ययसञ्ज्ञकः, स लुप्त एव। न च अन्तादिवच्च (६।१।८५) इत्यस्य 'पूर्वस्य, परस्य समुदायस्य अन्ताऽऽदिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते एकादेशविशिष्टस्याऽपी'त्यर्थात् 'उर्सि'त्यत्र प्रत्ययत्वस्य सुलभतया, एकदेशविकृतन्यायेन 'उरि'त्यस्य प्रत्ययतया न दोष इति वाच्यम्। त्रिपाद्या असिद्धत्वेन तत्राऽन्तवत्त्वाऽप्रवृत्तेः। स्थानिवत्त्वेन तु न निर्वाहः। उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाऽभावात्। प्रत्ययसम्बन्धित्वन्तु न स्थानिवत्त्वलभ्यम्। अशास्त्रीय-त्वात्। 'सर्वे सर्वपदादेशा' [3]इति न्यायेन तु 'मातृ असि'त्यस्य [4]स्थानित्वेऽपि, 'असि'त्यस्य

[1] 'विसर्गस्य' इति लिखितेषु नास्ति।
[2] 'अत एव वाऽन्यत्रापि' इति ख. पाठः।
[3] तुः मुद्रितेषु नास्ति। 'इत्यनेन तु' इति क. ख. पाठः।
[4] 'स्थानिवत्त्वेऽपि असित्यस्य स्थानिवत्त्वाऽलाभेन' इति क. घ. पाठः।

ज्ञापनात् । एवञ्च 'अप्रत्ययस्ये'त्येतदपि व्यधिकरणमेवे'ति हरदत्तोक्तं नाऽतीवाऽऽदर्त्तव्यम्। मातुरिति। अत्र हि ऋत उत् (८।१।१११) इत्येकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम्। आकरे तु[१] 'एकादेश-निमित्तादि'ति प्रचुरः पाठः[२] । तत्र 'एकादेशशास्त्रं निमित्तं यस्य उकारस्य,

बृहच्छब्दरत्नः

लोपाऽजादेश[३] एव न स्थानिवदि'ति दीर्घग्रहणञ्चेह लिङ्गम् । ध्वनितञ्चेदं तिङन्तकौमुद्याम् । नाऽतीवेति । अत एव [४]'सर्पिष्कल्पे'त्यादौ षत्वसिद्धिः । व्यधिकरणपक्षाऽङ्गीकारे तु व्युत्पत्तिपक्षे प्रतिषेधो दुर्वारः। न च प्रत्ययभिन्न-

लघुशब्दरत्नः

स्थानित्वाऽलाभेन 'उर्सि'त्यस्य प्रत्ययत्वम् अलभ्यमि'ति । एतदेवाऽभिप्रेत्य प्रकृतसूत्रे, उरण् रपरः (१।१।५१) इति सूत्रे च भाष्ये उक्तम्–'इह कस्मान्न भवति-'पितुः करोति', 'अप्रत्य-यस्ये'ति षत्वं प्राप्नोति। 'अप्रत्ययविसर्जनीयस्ये'त्युच्यते, प्रत्ययविसर्जनीयश्चाऽयम् । लुप्यतेऽत्र प्रत्ययविसर्जनीयो 'रात्सस्य (८।२।२४) इति' । 'लुप्यतेऽत्रे'त्यादेरयमर्थः-'प्रत्ययविसर्जनीयत्वेन यस्तवाऽभिमतः स लुप्यते=न दृश्यते, स्थानिनः प्रत्ययस्यैव [५]'लोपादिती'ति बोद्धचम् ।

ज्ञापनादिति । त्रिपाद्यामप्यन्तवत्त्वप्रवृत्तिज्ञापनद्वारेति भावः । अत एव 'अमी' 'क्षीरपेणे'त्यादौ मीत्व-णत्वे सिद्धचतः । अत्रैकारस्य अदस्सम्बन्धित्वं, 'पे' इत्यस्यैकाजुत्तरपदत्वं चाऽन्तवद्भावाऽऽधीनमिति बोद्धचम् ।

व्यधिकरणमेवेति । [६]'प्रत्ययसम्बन्धी यो विसर्गस्तस्य ने'त्यर्थ इति तद्भावः। अगत्या च वाक्यभेदा-ऽसमर्थसमास-वैयधिकरण्याऽन्वय-रूप-दोषत्रय-सहनमिति तदभिमानः । नातीवेति । वैयधिकरण्याऽन्वयफलस्य 'कविभिः कृतमि'त्यादेः 'प्रत्ययसम्बन्धिभिन्नस्य विसर्ग-स्ये'त्येवंलक्षणया सामानाधिकरण्येनाऽपि सङ्ग्रहसम्भवादिति भावः । व्याख्यादर्शोक्तसामाना-धिकरण्ये तु लेशतोऽपि तदादराऽभावात् 'अतीवे'त्यसङ्गतमेव [७]स्यादिति, अनेनोक्तव्याख्याया एव स्वाऽभिमतत्वं सूचितवानित्यलम् । परम्परयेति । एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्गस्यैकादेशशास्त्रनिमित्तकत्वमिति भावः। प्रचुरः पाठ इति । 'ओषधीस्कुधी'त्यादौ

१ 'एकादेशशास्त्रनिमित्तात्' इति मुद्रितः पाठः । स च भाष्यवार्त्तिकादिषु नोपलभ्यते ।

२ तथा हि 'इदुदुपधस्य चाऽप्रत्ययस्ये'ति सूत्रे, 'उरण् रपर' इत्यत्र च वार्त्तिकं–'भ्रातुष्पुत्र-ग्रहण ज्ञापकम्—एकादेशनिमित्तात्षत्वप्रतिषेधस्य' । तत्र भाष्येपि—'यदयं कस्का-दिषु भ्रातुष्पुत्रशब्दं पठति तज्ज्ञापयत्याचार्यो न एकादेशनिमित्तात्षत्वं भवती'ति । 'एकादेशपदे लक्षणा' । 'एकादेशः='एकादेशशास्त्रम्' इति च कैयटोद्द्योतौ ।

३ 'लोपाऽऽदेश एव'इति क.ख.पाठः । ४ 'सर्पिष्कृत्ये'ति ख. पाठः ।

५ 'लोपादितीति बोध्यमि'तिपाठ' इति भावप्रकाशः ।

६ 'प्रत्ययस्य सम्बन्धी' इति मुद्रितेषु पाठः ।

७ 'असङ्गतं स्यादिति' इति क. पाठः ।

तस्मादि'त्यर्थः। मुहुः‿कामेति। इह कुप्वोः‿क‿पौ (८।३।३७) इति प्रवर्त्तते। वृत्तौ 'मुहुस्कामे'ति क्वचित् सकारः पठ्यते, तत्प्रामादिकमि'ति हरदत्तः।

बृहच्छब्दरत्नः

समुदायाऽवयवत्वेन षत्वं सेत्स्यतीति वाच्यम्। 'अग्निः करोती'त्यादौ दोषाऽऽपत्तेः। 'प्रत्ययाऽवयवभिन्नस्ये'त्यर्थस्तु न युक्तः। 'प्रत्यय'पदं प्रत्ययपरं, नञ् तु भेदपर्यवसायी, एवञ्च त्वदुक्तोऽर्थो न शब्दमर्यादया लभ्यः। 'सर्पिष्कल्पे'-त्याद्यसिद्धेश्च। एतेन 'अप्रत्ययग्रहणसामर्थ्यादीदृशाऽर्थकल्पनमि'त्यपास्तम्। किञ्च सामानाधिकरण्यपक्ष एव ज्ञाप्यताम्। न चाऽत्र विकल्पः शङ्क्यः। न चैवं 'परमसर्पिष्कुण्डिके'त्यत्राऽपि विकल्पाऽऽपत्तिः। 'अनुत्तरपदस्ये'ति योगं विभज्य सूत्रद्वयस्याऽपि निषेधादिति वाच्यम्। 'व्यपेक्षारूपमेव सामर्थ्यं गृह्यते' इति-भाष्ये उक्तत्वात्। उत्तरसूत्रे 'समासे' इत्युक्तत्वेन, नित्यग्रहणेन च व्यपेक्षारूप-सामर्थ्यग्रहणस्यैवोचितत्वाच्च[1]। अत एवैतस्य पदादि-कवर्ग-पवर्गादावेव प्रवृत्तिः, तत्साहचर्यात् 'नित्यं समासे' इत्यस्याऽपि तत्रैव प्रवृत्तिरि'ति व्याख्यातारः। नाऽपि 'इदुदुपधस्ये'ति सूत्राऽरम्भसामर्थ्येनाऽव्युत्पत्तिपक्ष एवाऽऽश्रीयते। न च पूर्वोक्तरीत्या 'हविष्कृतं' 'मधुष्कृतमि'त्यादौ चारितार्थ्यम्। 'र्वोरुपधाया' इति-दीर्घस्य दुर्वारत्वेन 'आशीःकृतं' 'सजूःकृतमि'त्यादाविव तपरत्वेनैव वारणात्। अत एव 'पुमः खय्यम्परे' इति सूत्रे 'अम्परे किम्, पुंक्षीरमि'ति सङ्गच्छते। व्युत्पत्तिपक्षे तु 'घसः किच्चे'ति इरनि, कित्त्वादुपधालोपे, 'खरी'ति चर्त्वस्या-ऽसिद्धत्वेन खय्परत्वमेव नास्तीति वाच्यम्। सर्वत्राऽव्युत्पत्तिपक्षाऽङ्गीकारे 'सर्पिषा' 'यजुषे'त्यादौ षत्वाऽनापत्तेः। समानाऽधिकरणपक्षस्यैव ज्ञापयितुं युक्तत्वाच्च। [2]न चाऽत्र षत्वं नेष्टमेवेति वाच्यम्। अव्युत्पत्तिपक्षे दुर्वारत्वात्। स च 'अतः कृकमी'ति सूत्रे कमिग्रहणेनैव सिद्धे कंसग्रहणेन ज्ञाप्यते। न च दन्त्याऽन्तकसेरेवेदं भविष्यतीति वाच्यम्। 'प्रत्ययस्य लुकूश्लुलुप'इत्यादिसूत्रस्थकैयटहरदत्तादि-प्रामाण्येन तस्येदृशे विषये प्रयोगाऽभावाऽनुमानात्। सन्देहे संस्कारकत्वेन शास्त्र-प्रवृत्तेरेव युक्तत्वात्। 'यथालक्षणमप्रयुक्ते' इति भाष्याच्च। न चैवमपि 'इणः ष'

लघुशब्दरत्नः

शसा एकादेशे 'कःकरत्करतिकृधि' (८।३।५०) इति षत्वनिवृत्तिश्च तत्फलमुक्तम्। मूले तु तस्य फलस्य च्छान्दसत्वात्, छन्दसि वा प्र (८।३।४९) इत्यत इणः षः (८।३।३९) इत्यस्य निवृत्त्याऽदोषाच्च षष्ठयन्तमेव पठितमिति दिक्। प्रामादिकमिति। पदादित्वेन सोऽपदादौ (८।३।३८) इत्यस्याऽप्राप्तिरिति[3] भावः।

[1] 'सामर्थ्यग्रहस्यैवोचितत्वाच्च' इति ख. पाठः।

[2] 'न च षत्वं नेष्टमेवेति वाच्यम्' इति क. ख. पाठः।

[3] 'अप्राप्तेरिरिति भावः' इति मुद्रितेषु पाठः।

बृहच्छब्दरत्नः

इत्यनेन सिद्धिरिति वाच्यम्। 'अप्रत्ययस्ये'ति योगविभागेन[1] षत्वमात्रं निषिध्यते' इति न्यासकारादिभिरुक्तत्वात्। अत एव 'चतुष्कपाल' इत्यादौ षत्वसिद्धिः। न चैवम् 'अयोगवाहानामविशेषेणे'ति प्रकरणे 'इदुदुपधस्य सकारस्य यो विसर्ग' इति भाष्योक्तं विरुध्येतेति वाच्यम्। 'विसर्गस्य पाठाऽभावेनोपधात्वाऽसम्भवेन [2]तत्तत्स्थानिनिमित्तमुपधात्वं ग्राह्यमि'त्यत्र तात्पर्यात्। 'स' इत्यननुवर्त्तनाच्च। भाष्योक्तपक्षाऽन्तरे रेफाऽन्ते दुर्वारत्वाच्च। 'स' इत्यस्याऽवयुत्याऽनुवादत्वात्। विसर्गपाठस्य [3]सिद्धान्तितत्वेनाऽत्र दुर्वारत्वाच्च। अत एव च व्यपेक्षाविरहे षत्वसिद्धावपि व्यपेक्षायां नित्याऽर्थमेव 'सर्पिष्कुण्डिका'शब्दपाठः। तस्याऽयमर्थः—'इदुदुपधस्ये'ति नित्यं षत्वं बाधित्वा 'इसुसोः सामर्थ्ये' इति विकल्पेन षत्वं प्राप्तम्, तद्बाधनाऽर्थं कस्कादिषु 'सर्पिष्कुण्डिका'शब्दस्य पाठः। एवञ्च प्रतिप्रसवविधित्वञ्च भवतीति महल्लाघवमित्याहुः। नन्वेवमपि 'हरिभिः कृतं' 'सख्युः पाक' इत्यादौ षत्वं दुर्वारम्। न चेष्टाऽऽपत्तिः। 'असोरि'त्येव सिद्धे अप्रत्ययग्रहणस्य वैयर्थ्याऽऽपत्तेरिति चेत्। अत्र वदन्ति-'इणः ष' इति सूत्राऽनन्तरम् 'इदुदुपधस्ये'ति सूत्रे पठनीये, 'तिरसोऽन्यतरस्यामि'ति सूत्रात् प्राक् विजातीयषत्वप्रकरणमध्ये पाठेन 'अन्यतरस्यामि'त्यपकर्षो ज्ञाप्यते। सा च न सार्वत्रिकी विभाषा, उत्तरसूत्रवैयर्थ्याऽऽपत्तेः, किन्तु व्यवस्थितविभाषा। तेन क्वचिदप्रवृत्तिरेव। अत एव 'तिरसोऽन्यतरस्यामि'त्युत्तरमेव 'इदुदुपधस्ये'ति पाठ्यम्। स्वरितत्वप्रतिज्ञाबलादेव 'अन्यतरस्यामि'त्यनुवृत्तिसिद्धेः। न चाऽव्यवहितत्वेन 'तिरसोऽन्यतरस्यामि'तिसूत्रे गतिग्रहणाऽनुवृत्तिरिति वाच्यम्। इष्टाऽऽपत्तेः। 'मण्डूकप्लुतिर्नास्ती'त्यपरमनुकूलम्। अननुवृत्तौ त्वस्वरितत्वेनैव तत्सिद्धेरि'त्यपास्तम्। 'तिरसोऽन्यतरस्यामि'ति सूत्रे 'अन्यतरस्यामि'त्यस्य यथाश्रुताऽर्थत्वेन, 'इदुदुपधस्ये'त्यत्र व्यवस्थितविभाषापरत्वेन, 'द्विस्त्रिरि'ति सूत्रे यथाश्रुताऽर्थत्वेन, शब्दाऽधिकारद्वयाऽऽपत्तेः। अत एव 'चतुःपञ्चाशदि'त्यादौ षत्वाऽभावः सिद्धः। 'इदुद्भ्यामि'ति वक्तव्ये उपधाग्रहणवत्, अप्रत्ययग्रहणमपि बोध्यम्।

वस्तुतस्तु अप्रत्ययग्रहणं विसर्गरूपप्रत्ययमात्रग्रहणाऽर्थम्। तेन पूर्वोक्तसूत्राऽन्तरविषये निषेधः। एवमुपधाग्रहणं समस्यमानपदार्थाऽतिरिक्ताऽन्यपदार्थबोधनाऽर्थम्। तेन 'इः करोति' 'उः करोती' त्यत्र षत्वं न। एतेन 'एकादेशशास्त्रनिमित्तकस्य न षत्वमि'त्यानुमानिकवचनस्याऽऽवश्यकत्वेन सामानाधिकरण्याऽन्वये क्व लाघवमि'त्यपास्तम्। वाक्यभेदा-ऽसमर्थसमास-वैयधिकरणाऽन्वय-दोषत्रयाऽभावेन लाघवस्य स्फुटत्वाच्च। 'तिष्ठतु सर्पिः, पिब त्वमुदकमि'त्यत्र षत्वस्येष्टत्वे वैयधिकरण्याऽन्वयाद्यङ्गीकारे व्युत्पत्तिपक्षे निषेधाऽप्रवृत्तिरभ्युपगन्तव्या, अनिष्टत्वे

---

[1] 'योगविभागे तु' इति ख. पाठः।

[2] 'ततः स्थानिनिमित्तम्' इति क. ख. पाठः।

[3] 'असिद्धान्तितत्वेन' इति कः पाठः।

**द्विस्त्रिश्चतुरिति । (८।३।४३) । इह द्वि-त्रिभ्यां सुजन्ताभ्यां साहचर्या-च्चतुःशब्दोऽपि सुजन्त एव ग्रहीष्यते। कृत्वोऽर्थग्रहणन्तु[1] ज्ञापकं--'साहचर्यं**

बृहच्छब्दरत्नः

व्युत्पत्तिपक्षे विधेः क्वाचित्कत्वमभ्युपगन्तव्यमिति 'अन्यतरस्यामि'त्यपकर्ष उभयोः समानः। यद्वा इदुपधसाहचर्येण उदुपधोऽपि अपञ्चमी-षष्ठी-तिङन्त-तद्धिताऽवयवो गृह्यते। उदुपधसाहचर्येण इदुपधः—अतृतीयाऽवयवो गृह्यते। अतो न कश्चिद्दोषः। ध्वनितश्चाऽयमर्थ 'उरण् रपर' [2]इत्यादिसूत्रे भाष्ये इत्यास्तां तावत्।

सुजन्ताभ्यामिति। यद्यप्युक्तरीत्या [3]द्वित्रिशब्दयोरसुजन्तयोरपि सम्बन्धः, तथापि द्वित्रिशब्दनिष्पादकलक्षणे [4]द्विस्त्रिशब्दाऽवयवयोर्द्वित्रिशब्दयोर्ग्रहणे[5] 'अणुरपि विशेषोऽध्यवसायकर' इति न्यायेन लक्षणप्रतिपदोक्तपरिभाषया सुजन्तयोरेव ग्रहणम्। ध्वनितश्चेदं भाष्ये सूदमदृशाम्। केचित्तु 'द्विस्त्रिःसाहचर्यात्सङ्ख्यावाचकपदोत्तरवर्णोऽन्तश्चतुःशब्दो गृह्यते। 'चतुः'शब्दसाहचर्यात्सुजन्तावेव द्विस्त्रिःशब्दावि'त्याहुः। ज्ञापकमिति। एतेन 'कृत्वोऽर्थे' इत्येव सूत्रमस्तु, द्विस्त्रिश्चतुर्ग्रहणं मास्त्वि'ति निरस्तम्। न च 'कृत्वोऽर्थे' इति सूत्राऽनन्तरं 'चतुर' इति न्यासेन नित्यषत्वबाध इति वाच्यम्। 'कृत्वोऽर्थे' इत्यस्याऽनुवृत्तौ मानाऽभावेनाऽकृत्वोऽर्थेऽपि नित्यषत्वबाधाऽऽपत्तेः। किञ्च 'पञ्चकृत्वः पचती'त्यादौ दोषाऽऽपत्तेः। न च 'इदुदुपधस्ये'त्यनुवृत्त्या निस्तारः। मण्डूकाऽनुवृत्तौ मानाऽभावात्। 'कृत्वोऽर्थे विसर्गस्ये'त्यन्वयाऽऽपत्तौ दोषस्य स्पष्टत्वाच्च। 'कृत्वोऽर्थे' इत्यस्याऽसिद्धत्वेन 'इदुदुपधस्ये'ति षत्वाऽऽपत्तेश्च। एतेन 'सुच' इत्येव सूत्रणीयमि'त्यपास्तम्। 'पदस्ये'त्यनुवृत्त्या 'परमद्विःकरोती'त्यादौ षत्वाऽनापत्तेश्च। समुदायस्याऽसुजन्तत्वात्। अवयवस्य 'उत्तरपदत्वे चे'ति निषेधेनाऽपदत्वात्।

लघुशब्दरत्नः

साहचर्यमिति। न च 'रामलक्ष्मणौ' इत्यादौ दृष्टसाहचर्यसम्बन्धस्याऽभिधानियामकत्वं दृष्टम्, न चैषां क्वाऽपि साहचर्यसम्बन्धो गृहीत इति कथमेतदिति वाच्यम्। पञ्चम्यपाङ्परिभिः (२।३।१०) इत्यनेन लक्षणादिद्योतकपरियोगे पञ्चमीशङ्कायां, 'यद्यप्ययं परिर्दृष्टाऽपचारो वर्जने चाऽवर्जने च, अयं खल्वपशब्दोऽदृष्टाऽपचारो वर्जनाऽर्थ एव कर्मप्रवचनीयस्तस्य कः सहायो भवितुमर्हति, अन्यो वर्जनाऽर्थात्, यथाऽस्य गोः सहायेनाऽर्थ इति गौरेवाऽऽनीयते, नाऽश्वो, न गर्दभ' इति कर्मप्रवचनीययुक्ते (२।३।८)इति सूत्रस्थभाष्येण 'सदृशाना-

[1] तुः घ. मुद्रितेषु त्रुटितः।

[2] 'इति सूत्रे' इति क. पाठः।

[3] 'द्विस्त्रिशब्दयोः' इति क. पाठः।

[4] 'द्विस्त्रिशब्दार्थयोः' इति ख. पाठः।

[5] 'ग्रहणेन' इति ख. पाठः।

न सर्वत्र व्यवस्थापकमि'ति। तेन दीधीवेवीटाम् (१।१।६) इत्यत्र धातु-साहचर्येऽपि आगमस्य इटो ग्रहणम्। उभयत्र विभाषा चेयम्। 'चतुरि'त्यस्य इदुदुपधस्य (८।३।४१) इति प्राप्ते,[1] इतरयोरप्राप्ते। न च तयोरपि इसुसोः सामर्थ्ये (८।३।४४) इत्यनेन सिद्धिः शङ्क्या। इसः प्रत्ययस्य, अर्थवतश्च

**बृहच्छब्दरत्नः**

दीधीवेवीटामिति। अत एव आगमाऽपेक्षया प्रकृतेरभ्यर्हितत्वात् दीधीङः पूर्वनिपातः। इटोऽपि धातुत्वे प्रकृतित्वाऽविशेषेऽल्पाच्तरत्वात्पूर्वनिपातः स्यात्। अनेकज्ञापकोपन्यासे इयमेव गतिः। ज्ञापकाऽन्तराऽऽश्रयणे तु 'क्त्वोऽर्थ'ग्रहणं व्यावर्त्तकतया चरिताऽर्थम्। 'ज्ञापकसिद्धं न सर्वत्रे'ति ज्ञापनाऽर्थमिति च तत्राऽऽकरे स्पष्टम्। न च तत्र 'दीङ् क्षये' 'धीङ्अनादरे', 'वेञ् तन्तुसन्ताने' 'वी गत्यादिषु' एतेषामेव ग्रहणमिति वाच्यम्। लघ्वक्षरत्वेन इटः पूर्वनिपातयोग्यत्वात्। किञ्च शक्तिद्वयज्ञानसापेक्षाऽवयवप्रसिद्ध्यपेक्षया समुदायप्रसिद्धेर्बलवत्त्वात्। किञ्च चतुर्णां ग्रहणेऽभिप्रेतेऽसन्देहार्थमन्यथैव लक्षणं ब्रूयात्।

प्रत्ययस्येति। ननु व्युत्पत्तिपक्षे वक्तुं शक्यत्वेऽपि, अव्युत्पत्तिपक्षे सर्पिरादिशब्देऽपीसुसोरनर्थकत्वम्, अप्रत्ययत्वञ्च तुल्यमिति चेन्न। 'द्विः करोती'त्यादावयवश उत्पन्नत्वेन लाक्षणिकत्वात् 'इसुसोः सामर्थ्ये' इत्यस्याऽप्रवृत्तेः सूपपादत्वात्। अत एव 'सख्युः पाक' इत्यादौ षत्वं न। वस्तुतस्तु शब्दप्रतिपिपादयिषया प्रवृत्तस्याऽऽचार्यस्य व्युत्पत्तिपक्षे एव तात्पर्य्यम्। एवञ्च व्युत्पत्तिपक्षे यत्राऽर्थवत्त्वं, प्रत्ययत्वञ्च तत्रैव शास्त्रप्रवृत्तिर्नाऽन्यत्र। तथा च क्वाचित्काऽव्युत्पत्तिपक्षेऽपि व्यवस्थितविभाषाऽऽश्रयणादप्रवृत्तिर्बोध्या। न चैवं प्रत्ययग्रहणपरिभाषया 'परमसर्पिः करोती'त्यादौ षत्वाऽनापत्तिरिति वाच्यम्। अवयवस्यैव इसन्तत्वेन शास्त्रप्रवृत्तेर्निर्विघ्नत्वात्। 'अनुत्तरपदस्थस्ये'ति प्रतिषेधेन उक्तपरिभाषाया अप्रवृत्तेर्ज्ञापितत्वाच्च। अत एव 'कुण्डपरिमाणपरिच्छेद्यं सर्पिरि'त्यर्थे 'प्रातिपदिकार्थे'ति सूत्रेण प्रथमायां 'सर्पिः कुडवमि'त्यादौ न वैकल्पिकं षत्वम्। अत एव 'कुडव'शब्दस्य [2]सर्पिरादौ लक्षणयैवोपपत्तौ, 'परिमाण'ग्रहणं न कर्त्तव्यमि'ति-'तिङ्समानाधिकरणे प्रथमे'त्येतल्लक्षणं करिष्यते' इति वार्त्तिकबोधिताऽर्थेन सह

**लघुशब्दरत्नः**

मेव प्रयोगे सहायत्वमि'त्यर्थस्य प्रतिपादनेनाऽक्षतेः। परिभाषायां 'सहचरित'शब्देन सदृशस्यैव ग्रहणम्। सहचरस्य भावः साहचर्यम्। सहचरणञ्च सदृशयोरेवेति 'साहचर्य'शब्देन सादृश्यमुच्यते। सदृशयोरेव सहविवक्षा, तयोरेव च सहप्रयोगः। 'रामलक्ष्मणौ' इत्यादावपि सादृश्यमेव नियामकमिति दिक्। अर्थवतश्चेति। 'प्रतिपदोक्तस्य चे'त्यपि बोद्धव्यम्।

१ 'इतरयोस्त्वप्राप्ते' इति मुद्रितः पाठः।

२ 'सर्पिषादौ' इति क. ख. पाठः।

तत्र ग्रहणात् । चतुष्कपाल इति । इदुदुपधस्य (८।३।४१) इति नित्यं षः ।

व्यपेक्षाविरहेऽपीति । 'तिष्ठतु सर्पिष्कुण्डिकामानये'त्यादावित्यर्थः ।

व्यपेक्षायामिति । 'इदं सर्पिष्कुण्डिकाया' इत्यत्रेत्यर्थः । यत्तु पारायणिका आहुः—'कस्कादिषु सर्पिष्कुण्डिकादीनां पाठ उत्तरपदस्थत्वेऽपि षत्वार्थ' इति । तद्भाष्यविरोधादुपेक्ष्यम् । अयःसहितेति । न त्वयसो विकारः । जानपद (४।१।४२) इति ङीष्प्रसङ्गात् । अयस्कर्णीति । अय इव कर्णौ यस्याः । नासिकोदरौष्ठ (४।१।५५) इत्यादिना ङीष् ।

---

**बृहच्छब्दरत्नः**

न विरोधः । न ह्यस्मिन्पक्षे षत्वं लभ्यम् । 'सर्पिः कालकमि'त्यत्रेव 'समानाधिकरणम् असमर्थवद्भवती'त्यनेन निषिद्धत्वात् । न चैवं 'सापेक्षमसमर्थवद्भवती'त्यस्य सत्त्वेन 'ब्राह्मणस्य सर्पिष्करोती'त्यादौ षत्वं न स्यादिति वाच्यम् । उक्तवचनस्य समासादावेव प्रवृत्तत्वात् । 'समानाधिकरणमि'ति [1]वचनन्तु षत्वे एव प्रवर्त्तते । न चैवं 'सर्पिष्पीयते' इत्यादौ षत्वं न स्यादिति वाच्यम् । धातुसहचरितप्रत्ययाऽभिधाने 'अधात्वभिहितमि'ति वचनेन साधितत्वात् । स्पष्टञ्चेदं समर्थसूत्रे भाष्ये । अत एव 'पेचुः काष्ठैरि'त्यादौ षत्वं न । 'इस्-साहचर्येणाऽतिङन्तस्यैव ग्रहणाच्च । ध्वनितञ्चेदं 'नित्यं समासे' इति सूत्रे भाष्ये ।

उपेक्ष्यमिति । किञ्च यस्मिन् ज्ञापिते यस्य प्रवर्त्तकत्वेन, निवर्त्तकत्वेन वा चारितार्थ्यं, तत्तेन ज्ञाप्यम् । अत एव 'अप्लुतादि'ति विशेषणे तु तत्सामर्थ्यान्नाऽसिद्धत्वमि'ति मूलग्रन्थेन'अप्लुतादि'ति विशेषणं प्रत्येवाऽसिद्धत्वाऽभावो[2] बोध्यते इत्याहुः । तथा च प्रकृते पूर्वपदसहितसर्पिःशब्दस्याऽपठितत्वेन वैयर्थ्यस्य दुर्वारत्वेन फलाऽन्तरस्यैव वाच्यत्वात् । समासैकदेशपाठे तु न किञ्चिन्मानम् । 'अनुत्तरपदस्थस्ये'त्यनुवृत्तेः, कस्कादिगण-पूर्वो-त्तरसाहचर्याच्च । वस्तुतस्तु 'अप्लुतात्'

---

**लघुशब्दरत्नः**

नित्यं ष इति । भाष्यप्रामाण्येनाऽत्राऽव्युत्पत्तिपक्षस्यैवाऽङ्गीकारेण, 'व्युत्पत्तिपक्षे प्रत्ययसम्बन्धित्वात्कथं षत्वमि'ति न शङ्क्यम् । अत एव चतुष्पाद्भ्यो ढञ् (४।१।१३५) इत्यादिनिर्देशसङ्गतिः । इत्यर्थ इति । अत्रत्यं तत्त्वं पूर्वं [3]सूचितम् । तद्भाष्येति । 'अनुत्तरपदस्थस्येति किम् ? । 'परमसर्पिःकुण्डिके'ति नित्यं समासे (८।३।४५) इति सूत्रस्थभाष्येत्यर्थः । आबन्तप्रयोगसूचितमर्थं स्फुटप्रतिपत्तये आह—न त्वयस इत्यादि ।

**इति विसर्गसन्धिः ।**

---

[1] 'वचनं षत्वे एव' इति ख. पाठः । [2] 'सिद्धत्वाऽभावो बोध्यते' इति क. पाठः ।
[3] 'अन्यत्र निरूपितं च' इति घ. च. पाठः ।

**अधःशिरसी (८।३।४७)।** एतयोरिति। सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोद्धया। अधस्पदमिति। मयूरव्यंसकादित्वात्समासः। शिरस्पदमिति। षष्ठीसमासः।

इति विसर्गसन्धिः।

## अथ स्वादिसन्धिप्रकरणम्।

**ससजुषो रुः (८।२।६६)।** 'पदस्ये'त्यनुवृत्तं स-सजूर्भ्यां विशेष्यते। विशेषणेन तदन्तविधिः। न च सजूःशब्दांऽशे 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती'ति निषेधः शङ्क्यः। तस्य प्रत्ययविधिविषयत्वात्। 'सान्तं, सजुष्शब्दान्तं च यत्पदं, तस्य रुः स्यात्, स चाऽलोऽन्त्यस्य'। एवं स्थिते फलितमाह—पदान्तस्येति। सजुष्शब्दस्येति। 'तदन्तस्य पदस्ये'-त्यर्थः। तेन 'सजुष' इत्यादौ नाऽतिप्रसङ्गः। न च 'सजूरि'त्यत्राऽव्याप्तिः, 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधादिति वाच्यम्। येन विधिः (१।१।७२) इति सूत्रे शब्दकौस्तुभेऽस्य प्रत्याख्यातत्वात्। 'व्यपदेशिवद्भावो-

---

**बृहच्छब्दरत्नः**

'अप्लुते' इति विशेषणद्वयं प्लुताऽसिद्धत्वाऽभावप्रतिपादनद्वारा तपरकरणकृतप्लुत-व्यावृत्त्यनुवादकम्।

इति विसर्गसन्धिः।

प्रत्याख्यातत्वादिति। अस्याऽप्रत्याख्याने 'ग्रहणवता प्रातिपदिकेने'ति परि-भाषाया निर्मूलत्वं स्यादिति भावः। न च 'सपूर्वाच्चे'ति सूत्रं मूलम्, अन्यथा

---

**लघुशब्दरत्नः**

तस्य प्रत्ययविधीति। अत एव येन विधिः (१।१।७२) इति सूत्रे भाष्ये प्रत्यय-विधिभिन्ने अप्तृन् (६।४।११) इत्यादौ गृह्यमाणप्रातिपदिकेनाऽपि तदन्तविधिप्रतिपादनं, 'स्वसा' 'परमस्वसे'त्युदाहृतं च सङ्गच्छते। अस्य 'समासप्रत्ययविधौ' इति निषेधाऽनुवादकताया एव युक्तत्वाच्च। यत्तु 'अस्य ज्ञापकं सपूर्वाच्च (५।२।८७) इति सूत्रम्। अन्यथा पूर्वादिनिः (५।२।८६) इत्यत्र तदन्तविधिनैव सिद्धे, किन्तेन' ?। तत् 'प्रत्ययविधौ प्रतिषेध' इत्यस्यैव ज्ञापकमिति वक्तुं शक्यम्। अत एव तदन्तविधिसूत्रभाष्ये 'समासे'त्यादिनिषेधवदस्य न कथनमिति बोद्धयम्। प्रत्याख्यातत्वादिति। [1]अस्याः फलाऽभावात्। सूत्रान्ताट्ठक् (४।२।६०) दशान्ताड्डः (५।२।४५) इत्यादावन्तग्रहणसामर्थ्येन व्यपदेशिवद्भावाऽप्रवृत्तेरिति भावः। ननु एकगोपूर्वात् (५।२।११) इत्यस्य केवलैकशब्द-गोशब्दयोरप्रवृत्त्यर्थं साऽऽवश्यकी,

---

[1] 'अस्याः' इति लिखितेषु नास्ति।

ऽप्रातिपदिकेने'ति, 'ग्रहणवते'ति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमि'ति

बृहच्छब्दरत्नः

'पूर्वादिनिरि'त्यत्र तदन्तविधिनैव सिद्धे किमनेनेति वाच्यम्। त्वदुक्तपरिभाषया पूर्वशब्देऽनापत्तेः। 'समास-प्रत्ययविधौ प्रतिषेध' इति वचनेन तदन्तविधेर्निषिद्धत्वाच्च। न चोक्तवचनस्य विशेष्यविशेषणभावव्यत्यासमात्रे तात्पर्येण तदन्तविधिः सुलभो, भयाढ्यादाविवेति वाच्यम्। प्रातिपदिकस्याऽत्र विशेष्यत्वे तात्पर्य्यग्राहकाऽभावेन दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यात्। किञ्च 'सूत्राऽन्ताट्ठक्' 'दशाऽन्ताड्डः' इत्यादावन्तग्रहणसामर्थ्यादेव व्यपदेशिवद्भावाऽप्रवृत्तौ 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति परिभाषाया वैयर्थ्याऽऽपत्तेः। अप्रत्ययविधौ 'येन विधिरि'ति सूत्रे 'स्वस्ये'त्यनुवृत्त्या केवलेऽपि दुर्वारत्वेन व्यपदेशिवद्भावप्रवृत्तावक्षतेश्च। 'इष्टादिभ्यश्चे'तिसूत्रे 'अनिष्टी'ति प्रयोगसाधनाऽर्थं 'पूर्वादिनिः' 'सपूर्वाच्चे'ति योगविभागस्य चारितार्थ्येन ज्ञापकमपि दुर्निरूपम्। एतेन 'पूर्वाऽन्तादि'ति वक्तव्ये 'सपूर्वाच्चे'ति सूत्रं ज्ञापकमि'त्यपास्तम्। 'दिव उत्सूत्रे' इति बहुव्रीहिसमासः। सूत्रसमुदायश्चाऽन्यपदाऽर्थः। अत एव 'दिव उदित्यत्रे'ति नोक्तम्। एवञ्च 'इन्द्रे चे'ति सूत्रे कैयटग्रन्थे, 'दिव उदि'त्यत्र हरदत्तग्रन्थे इत्युक्तम्। अत एव 'चित्रगुः' 'विमलद्युभ्यामि'त्यादिप्रयोगाः सिद्धाः। 'येन विधिरि'ति सूत्रे भाष्ये प्रत्ययविधिभिन्ने गृह्यमाणप्रातिपदिकेन तदन्तविधेर्बहुशो दर्शितत्वेन 'समासप्रत्ययविधौ प्रतिषेध' इति निषेधाऽनुवादकत्वमेव युक्तम्। 'तत्रैव सर्वत्र 'स्वस्ये'त्यनुवृत्त्यादिनैव सिद्धौ सूत्रोपात्ताऽन्तशब्दे एव व्यपदेशिवद्भावनिषेध' इति वदता कैय्यटेन तद्विषयत्वं स्पष्टमेवोक्तम्। अत्राऽरुचिबीजन्तु 'पारमगोपुच्छिकं' 'गौपुच्छिकमि'त्यादाविष्टप्रत्ययाऽनापत्तिः। 'आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठगि'ति [1]सूत्रस्य पर्युदासवृत्त्या प्रत्ययविधिविषय-

लघुशब्दरत्नः

सूत्रान्तात् (४।२।६०) दशान्तात् (५।२।४५) इत्यर्थं च। तत्राऽन्तग्रहणन्तु प्रत्ययविधौ तदन्तग्रहणनिषेधात्तदन्ते प्रवृत्त्यर्थमावश्यकमिति, न तत्सामर्थ्याद् व्यपदेशिवद्भावाऽप्रवृत्तिर्वक्तुं शक्या। न च भयाऽऽढयादाविव सूत्रान्तात् (४।२।६०)इत्यादौ विशेषण-विशेष्यभावव्यत्यासेन सिद्धे, अन्तग्रहणसामर्थ्यं सूपपादमिति कौस्तुभोक्तरीत्या निर्वाहः। 'समासप्रत्ययविधावि'त्यादीनां सूत्रशब्दादेर्विशेष्यत्वे तात्पर्यग्राहकत्वस्य [2]सत्त्वेन, विपरीतस्य तस्य वक्तुमशक्यत्वात्।

न चाऽस्यां मानाऽभावः। पूर्वात्सपूर्वादिनिः (५।२।८६) इत्येकयोगे[3] एव कर्त्तव्ये पृथग्योगकरणस्य मानत्वात्। न च इष्टादिभ्यः (५।२।८८) इत्यत्राऽनुवृत्त्यर्थं तथा पाठः, अत एव 'अनिष्टी'त्यादिसिद्धिरिति वाच्यम्। ज्ञापकपरभाष्यप्रामाण्येन'अनिष्टी'त्यादिप्रयोगाणाम् अनिष्टत्वात्। एकयोगेऽपि तत्रैव स्वरिततवबलेन तावत एवोत्तरत्राऽनुवृत्तौ बाधकाऽभावाच्च।

[1] 'ठगिति सूत्रे' इति क. ख. पाठः।

[2] 'तात्पर्यग्राहकस्य सत्त्वेन' इति क. ख. घ. पाठः।

[3] 'इत्येकयोगेन सिद्धे पृथक्' इति मुद्रितेषु पाठः।

दिव उत् ( ६।१।१३१ ) सूत्रे कैयट-हरदत्ताभ्यामुक्तत्वाच्च । एवं च 'परमसजूर्भ्यामि'त्याद्यपि निर्बाधम् । एवं स्थिते 'इह सजुष्शब्देन तदन्तविधिर्ने'ति प्राचामुक्तिरापातत इत्यवधेयम् ।

**भोभगो** (८।३।१७) । **असन्धिः सौत्र इति** । भगो-अघोशब्दयोरोकारस्य, अकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः । यदि तु 'भोस्' 'भगोस्' 'अघोस्' इति सान्तं, रान्तं वाऽनुकृत्य 'भो' इत्यादीनां त्रयाणामलोऽन्त्यस्य यः स्यात्, अपूर्वस्य रोश्चे'ति व्याख्यायते, तर्ह्यसन्धिर्न्याय्य एव । युक्तं चैतत् । अन्यथा 'विभोरिदं,' 'सुप्रभा गौर्यस्य स सुप्रभगुः, तस्य सुप्रभगोरिदं' 'रघोरिदमि'त्यत्राऽपि यत्वाऽऽपत्तेः । भवति ह्ययं भोशब्दादिपूर्वो रुः ।

---

बृहच्छब्दरत्नः

त्वात् । प्रसज्यप्रतिषेधमाश्रित्य निषेधकत्वकल्पने तु स्फुटमेव गौरवम् । ध्वनितञ्चेदम् 'असमासे निष्कादिभ्य' इति सूत्रे भाष्यकैय्यटयोः । एतेन 'सर्वादेः, सादेश्च लुग्वक्तव्य' इति सर्वशब्दे न प्रवर्त्तते' इत्यपास्तम् । परिभाषाप्रत्याख्यानस्यैव भाष्यसंमतत्वात् । एतेन 'नान्तादसङ्ख्यादेर्मडि'ति उक्तन्याये सामान्याऽपेक्षज्ञापकमि'त्यपास्तम् । 'एकगोपूर्वाट्ठञ् नित्यमि'त्यत्र तु गोशब्दसाहचर्याट्ठन्नेति बोध्यम् । यदि त्विति । अशब्द-पूर्वशब्दयोर्बहुव्रीहिः । ततो द्वन्द्वः । स्थानषष्ठीत्वन्तु सर्वत्र । ननु सान्ताऽनुकरणे वार्त्तिकोक्तानां ग्रहणं न स्यादित्यत आह—रान्तं वेति । एवञ्च 'भोभगोअघो' इत्यत्र तन्त्रादिना भवदादिप्रकृतिकाः सम्बुद्धौ निपात्यन्ते । एवञ्च 'विभाषा भवदि'ति वार्त्तिकं न कार्यम् । न्याय्य एवेति । ओकाराऽन्ताऽनुकरणे शास्त्रबाधे मानाऽभावात्, लाघवाच्च सन्धिरेव न्याय्य इति भावः ।

---

लघुशब्दरत्नः

व्यपदेशिवद्भावस्य प्रातिपदिके निषेधस्वीकारादेव नान्तादसङ्ख्यादेः(५।२।४९)इति चरिताऽर्थम् । अन्यथा 'पञ्चम' इत्यादावपि व्यपदेशिवद्भावेन सङ्ख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेत्यरुचेराह—व्यपदेशिद्भाव इत्यादि । [1]दिव उत्सूत्र इति । 'दिव उत्सूत्रं यत्रे'ति बहुव्रीहिणा तत्सूत्रघटिते पादे इत्यर्थः । एवं च दिव उत् (६।१।१३१) इति सूत्रे हरदत्तेन, इन्द्रे च (६।१।१२४) इति सूत्रे कैयटेनोक्तमिति भावः । येन विधिः (१।१।७२) इति सूत्रे कैयटेन 'सूत्रोपात्ताऽन्ताऽऽदिशब्दविषयताऽस्ये'ति वदता स्पष्टमेव प्रत्ययविधिविषयतोक्ता । असमासे निष्कादिभ्यः (५।१।२०) इति सूत्रे भाष्ये, कैयटे च स्पटमनयोः प्रत्ययविधिविषयतोक्तेति दिक् । इत्याद्यपीति । आदिना 'सजूर्भ्यामि'ति ।

ननु सान्ताऽनुकरणे 'विभाषा भवदि'त्यादि[2]-वार्त्तिक-निष्पन्नानां ग्रहणं न स्यादत आह—रान्तं वेति । कृतरुत्वाऽनुकरणमित्यर्थः । अलोऽन्त्यस्येति । न च 'भो राजसे'

---

[1] अयं पाठो लिखितेषु आदर्शेषु नास्ति । [2] 'विभाषा भवदिति' इति मुद्रितः पाठः ।

न चाऽत्र भोशब्दादेर्लाक्षणिकत्वादग्रहणम्। 'विभाषा भवद्भगवदघवतामोच्चाऽवस्ये'ति वार्त्तिकेन निष्पन्नानां भवदादिप्रकृतिकानां भोशब्दादीनामपि लाक्षणिकत्वाऽविशेषात्। अनर्थकत्वमप्युभयत्र तुल्यम्। रुविशिष्टानामेवाऽर्थवत्त्वात्।

ननु रोरुकारस्याऽनुबन्धत्वाद्रेफमात्रं विसर्गस्य स्थानि, तथा च 'अनल्विधावि'ति स्थानिवद्भावो न स्यादित्याशङ्क्याह—न ह्ययमिति। यथा-'अग्रहीदि'त्यत्र ग्रहोऽलिटि (७।२।३७) इति दीर्घस्य स्थानिवद्भावेनेट्त्वात् इट ईटि (७।२।२८) इति प्रवर्त्तते, एवमिहाऽपि विसर्गस्य रुत्वाद्यत्वं प्रवर्त्तेतेति भावः। तथा च स्थानिवत्सूत्रे भाष्यं-'विशिष्टं ह्येषोऽनलमाश्रयते

**बृहच्छब्दरत्नः**

विशिष्टमिति। यत्तु 'मूले 'देवाः सन्ती'ति प्रत्युदाहृतं, तत्र 'सन्ती'त्यस्योपन्यासे न किञ्चिद्बीजम्। न चाऽवसाने संहिताऽधिकारादेव न भविष्यति, अवसानसञ्ज्ञया संहितासञ्ज्ञाया बाधात्, 'सन्निकर्षः संहिते'तीयता सिद्धे 'पर-' ग्रहणेन पूर्वपरयोः सन्निकर्षस्य प्रतिपादनाच्चेति वाच्यम्। सञ्ज्ञिभेदेन बाध्यबाधकभावाऽयोगात्। 'अग्निचिल्लुनाती'त्यादावसंहितायां 'तोर्ली'त्यादिव्यावृत्त्यर्थं संहिताऽधिकारस्याऽऽवश्यकत्वे, मध्ये सम्बन्धाऽऽपत्तौ, 'अणोऽप्रगृह्यस्ये'त्यादीनामवसाने अप्रवृत्त्यापत्तेश्च। मण्डूकप्लुत्याश्रयणे प्रमाणाऽभावाच्च। वस्तुतस्तु पुरुषभेदेन सन्निकर्षस्याऽव्यवस्थितत्वेऽपि सर्वाऽपेक्षया न्यूनस्याऽर्द्धमात्राकालव्यवायस्य सन्निकर्षस्य सूत्राऽऽरम्भसामर्थ्याद् ग्रहणे सिद्धे 'पर'ग्रहणं व्यर्थमेव। अवसाननिमित्तकार्याणां पूर्वसन्निकर्षमात्रे प्रवृत्तिः, तत्र विधिसामर्थ्यात्, तथापि 'इ'शब्दस्य नपुंसके प्रथमैकवचने 'इ' इत्यत्राऽनुनासिकाऽभावार्थं 'पर'ग्रहणम्। अत्र हि व्यपदेशिवद्भावेन स्वस्य स्वेनैव सन्निकर्ष इति नोत्कृष्टत्वम्। ध्वनितञ्चेदं 'विसर्जनीयस्ये'ति सूत्रे भाष्ये। इदञ्च यथान्यासमेवाऽभ्युपगम्योक्तम्। प्रथमे भाष्ये तु सूत्रद्वयं प्रत्याख्यातमेव। किञ्च स्थानिवद्भावोपन्यासो न युक्तः, अपरनिमित्तकत्वेनाऽन्तरङ्गत्वाद्वचनद्वयेन परस्परमसिद्धत्वेन परत्वाच्च यत्वस्यैव पूर्वं प्राप्तेरि-'ति। तन्न। यथोद्देशपक्षे असिद्धपरिभाषाया अप्राप्तेः। शब्दविशेषनिमित्तकत्वेन यत्वस्य बहिरङ्गत्वाच्च। पूर्वोत्तरसाहचर्येण परनिमित्तकत्वाच्च। उत्तराऽर्थमनुवृत्तस्य 'खरी'त्यस्य निमित्ताऽनुक्तावाकाङ्क्षायाः सत्त्वेन सम्बन्धा-

**लघुशब्दरत्नः**

इत्यादौ 'रो रि' (८।३।१४) इति लोपे (कृते,[1]) एकदेशविकृतन्यायेन भोःशब्दत्वादन्त्यस्य-ओकारस्य यत्वाऽऽपत्तिरिति वाच्यम्। तेषामभिधाने 'एषां रोः, अपूर्वस्य च रोरि'ति व्याख्या-

[1] 'कृते' इति लिखितेषु नास्ति।

**इटं नामे'ति । इतोऽपि हेतो'र्घत्वङ्गे'त्यादिपरिगणनमशुद्धमित्यवधेयम् ।**

**निपाता इति । भोभगो (८।३।१७) इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र बोध्याः । तथा च 'विभाषा भवद्भगवदि'ति वार्त्तिकं नाऽऽश्रयणीयम् । अन्यथा पुँल्लिङ्गैकवचनमात्रे 'भो हरे' इत्यादिसिद्धावपि, 'भो हरिहरौ,' 'भो विद्वद्वृन्द,' 'भो गङ्गे' इत्यादि न सिद्ध्येदिति भावः ।**

---

बृहच्छब्दरत्नः

ऽऽपत्तेरिति दिक् । यदि तु यत्वविधौ 'र' इत्यनुवृत्त्य रो रेफस्यैव यत्वं विधीयते, तदा रेफत्वस्याऽल्विधित्वेन स्थानिवद्भावाऽयोगादशूग्रहणं न कार्यमिति भाष्ये स्थितम् । गणत्वादिति । यत्तु 'स्वरविभक्तिप्रतिरूपकाश्चे'ति वचनान्निपातत्वे सिद्धे गणे पाठकल्पनमन्याय्यमि'त्याहुः । तन्न । वार्त्तिकाऽभावे विभक्तिप्रतिरूपकत्वाऽभावेन हरदत्तादिमते ईदृशप्रकारस्यैव युक्तत्वात् । स्वरादिसाहचर्येणाऽसमस्तमेव विभक्तिशब्देन गृह्यते । एतेन 'युगपत्' 'कुपदि'त्यादीनां पाठो व्यर्थः, 'युगे पतती'-त्यादिव्युत्पत्त्याश्रयणेन विभक्त्यन्तप्रतिरूपकत्वादि'त्यपास्तम् । यत्तु 'भूधातोर्विचि तत्प्रतिरूपकत्वमस्त्येवे'ति । तन्न । 'अचः परस्मिन्नि'ति सूत्रे भाष्य-कैय्यटादौ तदभावस्योक्तत्वात् । यदि दीर्घकारान्तमात्राऽभिप्रायेणैव भाष्यं व्याख्यायते, तर्हि स्वराऽन्तरबाधेन निपातप्रयुक्तस्वराऽर्थः पाठः । 'भगो-अघो'शब्दयोस्तु गणपाठादेव सिद्धिरित्याहुः । भो विद्वद्वृन्देति । नपुंसके लुका लुप्तत्वेन, स्त्रियां 'विभक्तौ लिङ्गविशिष्टा-

---

लघुशब्दरत्नः

नेनाऽदोषो बोध्यः । अत्र पक्षे 'अघो'शब्दाऽन्तद्वन्द्वे षष्ठ्याः सौत्रो लुग्बोद्ध्यः । अवधेयमिति । यदि ग्रहोऽलिटि (८।२।२८) इति सूत्रे इटः स्थानित्वेन निर्देश इति तत्राऽनलाश्रयणं, प्रकृते तु विसर्गे रेफस्यैव स्थानित्वाद्वैषम्यम्, 'अनल्विधौ' इत्यस्य 'स्थान्यल्वृत्तिधर्माऽऽश्रये, स्थानिसम्बन्ध्यल्वृत्तिधर्माऽऽश्रये च ने'त्यर्थः । तत्र[१] स्थान्यल्रेफवृत्ति रुत्वं स्थानिवत्त्वेन दुर्लभम् । अल्विधित्वात् । स्पष्टं चेदं प्रकृतसूत्रे भाष्ये इत्युच्यते, तदा 'पयःस्वि'त्यत्र यत्ववारणाय 'अशी'ति । तत्र हि रोः सुपि (८।३।१६) इति विसर्गः । नियमशास्त्राणाञ्च विधिमुखेनैव प्रवृत्तिरिति, तत्र र्रुविशिष्टः स्थानीति तद्वृत्तिरुत्वस्य स्थानिवत्त्वेन लाभः सुकरः । यदि तु रोः सुपि (८।३।१६) इत्यत्राऽपि 'र' इत्यनुवर्त्त्य रो रेफस्यैव तेन विसर्गस्तदा अश्ग्रहणमुत्तराऽर्थं [२]सत् स्पष्टार्थमिहैव कृतमित्यवधेयम् । तत्रेति । चादिष्वित्यर्थः । वार्त्तिकं नाश्रयणीयमिति । 'भो' इत्यादिप्रयोगाणां निपातैरेव सिद्धेः । निपातानामपि सम्बोधनाऽन्तभवदादिसमानाऽर्थकत्वात्सम्बोधनविभक्त्यन्तत्वेनाऽऽमन्त्रितत्वमस्ति । 'भवदादी'त्यत्र 'भोः'शब्दस्याऽप्यादिना ग्रहणात् 'तत्र भो' इत्यादिसिद्धिरिति भावः । अन्यथा=साधारणानामभावे ।

भो विद्वद्वृन्देति । नपुंसके सोर्लुका लुप्तत्वेन वार्त्तिकाऽप्रवृत्तेरिति भावः ।

---

[१] 'अत्र' इति क. पाठः ।

[२] 'उत्तराऽर्थं स्पष्टार्थमिहैव' इति लिखितेषु पाठः । 'सत्' इति लिखितेषु नास्ति ।

एतच्च [1]वृत्तिकार-हरदत्ता-ऽऽदिमतेनोक्तम्। भाष्यस्वरसरीत्या तु 'विभाषे'त्यादिवार्त्तिकमारब्धव्यमेव। किन्तु निपातोऽपि भोःशब्दोऽस्ति, तेन द्विवचनादौ, स्त्री-नपुंसकयोश्च न दोषः। युक्ततरं चैतत्। 'हे[2] भवन्नि'तिवत् 'हे भो' इति प्रयोगस्याऽपीष्टत्वात्। तस्य च वार्त्तिकाऽऽरम्भे एव सिद्धेः। 'स्युः प्याट्पाडङ्गहैहेभोः' इत्यमरोक्तानान्तु[3] सम्बोधनाऽर्थानां निपातानां सह प्रयोगाऽयोगात्। किञ्च 'अत्र भवान् हरिः' 'तत्र भवान्' 'ततो [4]भवान्'

### बृहच्छब्दरत्नः

ऽग्रहणमि'तिनिषेधेन ङीपा व्यवधानात्सम्बुद्धिपरत्वाऽभावात्, तकारश्रवणाऽऽपत्त्या चाऽसिद्धिः स्पष्टैव। भाष्यस्वरसेति। अयम्भावः—भाष्ये स्पष्टतया प्रत्याख्यानस्याऽनुपलम्भेन'अप्रतिषिद्धमनुमतं भवती'ति न्यायादारभ्यता लभ्यते। किञ्च 'स्वरविभक्तिप्रतिरूपकाश्चे'ति वचनेन निपातत्वमि'ति वदता भाष्यकारेण वार्त्तिकाऽऽरम्भः स्पष्टतयाऽभिहितः। सन्निहितवार्त्तिकोक्तविभक्त्यन्तप्रतिरूपकत्वमादायैव भाष्यव्याख्याया उचितत्वात्। न च 'विभाषा भवद्भगवदघवतामि'ति वार्त्तिकस्याऽसिद्धत्वम्। गणपाठस्य भिन्नप्रस्थानत्वेन 'पूर्वत्राऽसिद्धमि'त्यस्याऽप्रवृत्तेः। 'स्वरविभक्तिप्रतिरूपकाश्चे'ति चाद्यन्तर्गणसूत्रम्। भावघञन्त'पाक'शब्दस्थप्रकृतिप्रत्यययोरिव निपाता-ऽनिपातयोः समान एवाऽर्थः। अत एव द्विवचनादौ निपातप्रयोगान्न दोष इत्यर्थपरं भाष्यं सङ्गच्छते। [5]लिङ्गसङ्ख्याऽनन्वयित्वेनाऽसत्त्वाऽर्थकत्वं निपातस्य, अन्यस्य तु नेति विशेषोऽस्त्येव। अन्यविशेषग्रहणे तु न किञ्चिन्मानम्। अत एव क्रियाऽर्थकशत्रन्तभवच्छब्दस्य ग्रहणं न। एवञ्चोकाराऽनुबन्धसाहचर्यमपि

### लघुशब्दरत्नः

भो गङ्गे इति। विभक्तौ लिङ्गविशिष्टाऽग्रहणात् ङीपा व्यवधानाद्भवतः सम्बुद्धिपरत्वाऽभावेनेति भावः। स्युः प्याडिति। अस्य 'निपातमात्राऽङ्गीकारे' इत्यादिः।

ननु निपातोऽप्ययं भवच्छब्दसमानाऽर्थ एवेति 'हे भो' इत्यस्य नाऽसङ्गतिः। अत एव [6]भाष्यकैयटयोः वार्त्तिकसिद्धविभक्त्यन्तप्रतिरूपकमव्ययमि'त्युक्तम्। विभक्त्यन्तप्रतिरूपकत्वं [7]च शब्दतोऽर्थतश्चेत्यन्यत्र स्पष्टम्। किञ्च 'व्यतिलुनीते' इत्यादिवदेतयोरपि सहप्रयोगसम्भव इत्यरुचेराह—किञ्चेति।

---

[1] 'वृत्तिहरदत्तादिमतेनोक्तम्' इति मुद्रितः पाठः।

[2] 'हे भगवन्' इतिवत्' इति घ. पाठः।

[3] तुः घ. नास्ति, मुद्रितेष्वपि नास्ति।

[4] 'ततो भवान्' इति मुद्रितेषु नास्ति।

[5] 'लिङ्गे'त्यारभ्य 'ग्रहणं न' इत्यन्तः पाठः ख. त्रुटितः।

[6] 'भाष्यकैयटयोर्वार्त्तिकसिद्धविभक्त्यन्तप्रतिरूपके'ति मुद्रितेषु पाठः। 'वार्त्तिकसिद्ध' इति क. नास्ति।

[7] चकारः क. नास्ति।

इतिवत् 'तत्र भो' इत्याद्यपि वार्त्तिके सत्येव सिद्ध्यति। इतराभ्योऽपि दृश्यन्ते (५।३।१४) इति सर्वविभक्त्यन्तात् त्र-तसोर्भवदादियोगे एवेष्टत्वात्।

किञ्चाऽऽमन्त्रितत्वे पदात्परस्याऽऽष्टमिकनिघातः, 'आमन्त्रितं पूर्वम्' (८।१।७२) इत्यविद्यमानवद्भाव[1]:, आम एकान्तरम् (८।१।५५) इति विधिः, वाक्यादेरामन्त्रितस्य (८।१।८) इति द्विर्भावः, सुबामन्त्रिते (२।१।२) इति

---

बृहच्छब्दरत्नः

न विरुध्यते। आमन्त्रितत्व इति। न च प्रकृत्या सम्बोधनरूपाऽर्थस्योक्तत्वेऽपि 'हे पचमाने'तिवत्सम्बोधनाऽर्थक'भो'शब्दनिपातस्याऽप्यामन्त्रितसञ्ज्ञायाः सत्त्वेन निघातः सुलभ इति वाच्यम्। अन्तरङ्गत्वेन 'निपाता आद्युदात्ता' इत्यस्य दुर्वारत्वात्। युष्मत्साहचर्येण द्रव्यवाचकाऽऽमन्त्रितस्य लिङ्गसङ्ख्याऽन्वितस्य ग्रहणाच्च। अत एव युष्मदस्मदादेशप्रकरणं समाप्य 'तिङो गोत्रादीनी'ति सूत्रात्पूर्वम् 'आमन्त्रितमि'ति प्रथमान्तं [2]लघुभूते निपातप्रकरणे वक्तुमुचितमि'त्यपास्तम्।

[1]आविद्यमानेति। निषेधविशिष्टोऽविद्यमानवद्भाव इत्यर्थः। निपातस्य तु द्रव्यवाचित्वेन सामान्यवचनत्वेऽपि लिङ्गाद्यन्वयित्वाऽभावेन सामानाधिकरण्याऽभावात् 'नामन्त्रिते' इति निषेधो न। अत एव समानाधिकरणग्रहणमि'ति स्पष्टं भाष्ये। एतेन 'आमन्त्रिते'ति महासञ्ज्ञाकरणादसत्त्वाऽर्थके सञ्ज्ञा ने'त्यपास्तम्। आम इति। 'विभाषा'ग्रहणाऽनुवृत्त्या व्यवस्थितविभाषाऽऽश्रयणेन निपाते न प्रवर्त्तते' इति वादिनां मतेनेदम्। वाक्यादेरिति। 'एकं बहुव्रीहिवदि'तिसाहचर्यादनव्ययमेवाऽऽमन्त्रितं गृह्यते' इति मतेनेदमुच्यते।

सुबामन्त्रित इति। 'भो देवदत्त' इत्यादौ वार्त्तिकाऽनाश्रयणे पराऽङ्गवद्भावो न स्यात्। 'अव्ययानां प्रतिषेधो वक्तव्य' इति निषेधात्। तथा च [3]षाष्ठं समुदायस्याऽऽमन्त्रिताऽऽद्युदात्तत्वं न स्यात्। न च भोशब्दस्य निपातत्वादाद्यु-

---

लघुशब्दरत्नः

पदात्परस्येति। इदञ्च न भोःशब्दे फलम्। उभयोरपि भोःशब्दयोः [4]सम्बोधनाऽर्थत्वेन सम्बोधनप्रथमान्तत्वेनाऽऽमन्त्रितत्वात्। किन्तु 'तिष्ठसि भगो,' 'तिष्ठसि अघो' इत्यादौ 'भगवन् अघवन् तिष्ठसी'त्यर्थके आमन्त्रितस्य (८।१।१९) इति निघातसिद्धिः। निपातयोस्तु तयोः सम्बोधने शक्तौ मानाऽभावेन सम्बोधनप्रथमान्तत्वाऽभावेनाऽऽमन्त्रितत्वाऽभावात्। 'भगो तिष्ठसी'त्यादौ अविद्यमानवत्त्वम्। 'आम् भगो देवदत्त' इत्यादौ एकान्तरता। 'भगो-भगो आगच्छे'त्यादौ द्विर्भावः। 'धनेन भगो' इत्यादौ[5] पराऽङ्गवत्त्वमिति भावः।

---

[1] 'आविद्यमानवद्भाव' इति बृहच्छब्दरत्नसंमतः पाठः।

[2] 'लघुभूते निपातप्रकरणे' इति क. पाठः। [3] 'षाष्ठसमुदायस्य' इति ख. पाठः।

[4] 'सम्बोधनार्थत्वेन' इति मुद्रितेषु त्रुटितम्। [5] 'पराङ्गत्वम्' इति मुद्रितेषु पाठः।

पराङ्गवद्भावश्चेत्यादि सर्वं सिद्ध्यति, न त्वन्यथेति दिक्। 'भगो' 'अघो' इति निपातावपि यदि प्रामाणिकौ, तर्हि स्तां नाम। आमन्त्रितकार्यसिद्धिस्तु वार्त्तिकाऽऽयत्तैवेति सुधीभिराकलनीयम्। यत्तु वदन्ति—'सकारान्तानेवैतान् निपातानास्थाय रुत्वौत्त्वे भाष्ये प्रत्याख्याते' इति। तदतिरभसात्।

स्यादेतत्। निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन्, प्रतिपदोक्त-

---

बृहच्छब्दरत्नः

दात्तत्वेन,उत्तरत्र'आमन्त्रितस्ये'ति निघातेन चेष्टसिद्धिः। पूर्वस्याऽविद्यमानवद्भावात्। निषेधस्तु निपाते उक्तरीत्यैव न। 'षष्ठ्यामन्त्रितकारकवचनमि'ति [1]तु नाऽऽश्रीयते। यद्वा 'राज्ञो देवदत्तस्य भो' इत्यादौ पराङ्गवद्भावान्निघातसिद्धिः। '[2]तन्निमित्तग्रहणं कर्त्तव्यमि'ति वार्त्तिकन्तु न कार्यम्। समर्थपरिभाषयैव 'समर्थ'पदाऽनुवृत्त्या शब्दाऽधिकारेण, व्यपेक्षारूपसामर्थ्यकल्पनेन [3]वा अतन्निमित्ते वारणात्। अत एव '[4]ऋतेन मित्रावरुणावृतावृधावृतस्पृशे'त्यत्र 'मित्रावरुणावि'त्यस्य पराऽङ्गवद्भावः। तेन च 'ऋतावृधावि'त्यस्य निघातसिद्धिः। अन्यथा द्वितीयपदादित्वेन तदनापत्तिः। न चैवम् 'ऋतेने'त्यस्याऽपि स्यादिति वाच्यम्। 'आशाथे' इत्यर्थकक्रियायामन्वयेन कारकाणां परस्परमनन्वयात्। 'मित्रावरुणावृतावृधावि'त्यनयोस्त्वाकाङ्क्षितत्वात्पार्ष्ठिकाऽन्वयोऽस्त्येव। स्पष्टञ्चेदं भाष्य-कौस्तुभयोः।

इत्यादीति। आदिना 'विभाषितं विशेषवचने' इति बोध्यम्। तत्रापि 'समानाधिकरण'ग्रहणमनुवर्त्तते। 'आमन्त्रितसञ्ज्ञाऽभाव'वादिनां मते तु यथाश्रुतमेव रमणीयम्। यदि प्रामाणिकाविति। 'भो'शब्द इव कोशे, [5]भाष्यादौ चाऽनुक्तत्वेन प्रामाणिकत्वाऽभावोऽपि शक्यते वक्तुमिति भावः। स्यादेतदिति।

---

लघुशब्दरत्नः

यदि प्रामाणिकाविति। 'यदी'त्यनेनेदं सूचितं,—'तौ न प्रामाणिकावि'ति। अत एव भाष्ये 'विभाषा भवदि'ति व्याख्याय, 'भो ब्राह्मणाः' 'भो ब्राह्मणी'त्यस्यैवाऽसिद्धिमाशङ्क्य अव्ययमेष 'भोः'शब्दो, विभक्तिप्रतिरूपकत्वादि'त्येवोक्तम्। एवं च 'भगो हरिहरावि'त्याद्यसाध्वेव। तदतिरभसादिति। 'भोभगो' (८।३।१७) मतुवसोः (८।३।१) इति सूत्रयोरस्यार्थस्य

---

[1] 'तुः' ख. नास्ति।
[2] इदं वार्त्तिकं भाष्ये पठ्यते। 'मद्राणां राजन्' इति च तदुदाहरणम्।
[3] 'तन्निमित्ते वारणात्' इति क. ख. पाठः।
[4] 'ऋतेन मित्रावरुणावृतावृधावृतस्पृशा। ऋतुं 'बृहन्तमाशाथे' (ऋक्. १. २. ८)।
[5] 'भाष्यादौ वा' इति ख. पाठः।

त्वात्, न तु सम्बुद्ध्यन्ताः, लाक्षणिकत्वादिति चेत्। मैवम्। स्वरितेनाधिकारः (१।३।११) इत्यत्र 'अधिकः कारोऽधिकार' इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात्। भुवश्च महाव्याहृतेः (८।२।७१) इतिसूत्रे 'महाव्याहृति' ग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनाऽर्थमि'ति हरदत्ताद्युक्तेश्च। न चैवमपि '[१]प्रभोरिदमि'त्यादावतिव्याप्तिः। परस्परसाहचर्येण निपातानां, वार्त्तिकोक्तानां च ग्रहणेऽप्यन्येषामग्रहणात्।

---

बृहच्छब्दरत्नः

इदञ्च 'रान्ताऽनुकरणाऽतिरिक्तपक्षे[२], 'रान्ता एव निपाता[३]' इति पक्षे वा[४] बोध्यम्। लक्षणवशसम्पन्नरान्तस्याऽनुकरणे तूभयोरपि लाक्षणिकत्वाद्दोषशङ्कैव न। स्वरितेनेति। 'भगोस्-अघोस्शब्दौ निपातौ न स्त' इतिवादिनां मते तु तयोः साहचर्यात् 'भोस्'-शब्दो वार्त्तिकोक्तो गृह्यते, 'लक्षणप्रतिपदोक्त'परिभाषया निपातोऽपीति तावद्युक्तिसहम्, [५]निपाता-ऽनिपातप्रयोगे यत्वस्य स्वीकृतत्वेन भाष्याऽऽरूढञ्च। एवञ्च 'भगोस्-अघोस्-शब्दौ निपातावपी'ति वादिनां मतेऽपि सर्वेषां ग्रहणमावश्यकम्, अविरोधस्य युक्तत्वादिति भावः। अत एव प्रागुक्तपक्षयोरप्यविरोधः।

न चैवमिति। इदञ्चौकारान्ताऽनुकरणे बोध्यम्। सान्त-रान्ताऽनुकरणे त्वर्थवत्परिभाषयैव निर्वाहः।

---

लघुशब्दरत्नः

भाष्येऽस्पृष्टत्वादिति भावः। उभयग्रहणादिति। [६]वार्त्तिकबोधितसाधुत्वानामपि कुलटाया वा (४।१।१२७) इत्यादौ कार्याऽन्तरबोधनाय सूत्रकृताऽनुवादस्य करणादिति भावः। हरदत्तेति। एवञ्चाऽनित्यत्वात्तदप्रवृत्तावुभयोर्ग्रहणसिद्धिरिति भावः। 'विभाषा भवदि'ति-वार्त्तिके 'भो ब्राह्मणाः' 'भो ब्राह्मणि' इत्यसिद्ध्याशङ्कायाम् 'अव्ययमेष भोःशब्द' इति सिद्धान्तेन उभयोरत्र ग्रहणलाभादिति बोध्यम्।

परस्परसाहचर्येणेति। तेन चाऽर्थवतामेव ग्रहणमिति भावः। 'अर्थवत्परिभाषये'त्यपि बोध्यम्। अन्येषाम्=अनर्थकानाम्। 'सान्त-रान्ताऽन्यतराऽनुकरणमि'ति पक्षे प्रसिद्ध्या 'भो'इत्यादिपूर्वक[७]-रेफान्तानामर्थवतां ग्रहणस्य न्याय्यतया 'भो' इत्याद्योकारान्ताऽनुकरणपक्षेऽपि वार्त्तिकनिष्पन्नानां, निपातानां चैकदेशभूतभोशब्दादीनामेव ग्रहणमिति भावः। अत्रेदन्तत्त्वं,-

---

[१] 'प्रभोरित्यादौ' इति मुद्रितेषु पाठः।

[२] अस्य—'लक्षणवशसम्पन्नरान्ताऽनुकरणाऽतिरिक्तानुकरणपक्षे' इत्यर्थः।

[३] अलाक्षणिका रान्ता निपाता इत्यर्थः।

[४] 'वा' इति ख. नास्ति।

[५] 'अनिपात'पदं ख. नास्ति।

[६] 'वार्त्तिकाऽबोधित' इति क. पाठः।

[७] 'रेफान्तानामेव अर्थवताम्' इति मुद्रितः पाठः।

**व्योर्लघु (८।३।१८)।** लघुप्रयत्नतरः = लघूच्चारणतरः। स चाऽऽन्तरतम्याद्वस्य वः, यस्य य इत्याह—**वयाविति**।

**ओतो गार्ग्यस्य (८।३।२०)।** **ओकारादिति**। यत्तु 'ओकारान्तादङ्गादि'ति प्राचा व्याख्यातम्। तन्न। अङ्गस्याऽप्रकृतत्वात्, असम्भवाच्च। न ह्युदाहरणेष्वोकाराऽन्तमङ्गमस्ति।

**हलि सर्वेषाम् (८।३।२२)।** **यकारस्येति**। वकारस्तु नाऽनुवर्त्तते। भो-भगो-अघोपूर्वस्याऽसम्भवात्। अपूर्वस्तु यद्यपि सम्भवति—'वृक्षव्करोती'ति,

---

बृहच्छब्दरत्नः

वस्य व इति। 'हरिं वाती'ति [1]हरिवाः, तमाचष्टे ([2]हरिव्), 'हरिव् अच्युते'त्यादावादेशो न। 'भो-भगो-अघो-अपूर्वस्ये'त्यनुवृत्तेः। एवं 'लोपः शाकल्यस्ये'त्यत्राऽपि बोध्यम्। 'ओतो गार्ग्यस्ये'त्यत्र तु 'अपूर्वस्ये'त्यंशो न सम्बध्यते। असम्भवात्। 'भो-भगो-अघो' इत्यंशस्तु सम्बध्यते एव। 'उञि च पदे' इत्यत्र तु 'अपूर्वस्ये'त्यंशोऽपि। अत एव 'स्मृतोव् अच्युते'त्यादौ न दोषः, मण्डूकाऽनुवृत्तिकल्पनञ्च नेत्यपरमनुकूलम्। मूले 'पदान्तस्ये'त्युक्त्याऽयमेवाऽर्थो बोध्यते इति ध्येयम्। तत्र लोप-लघुप्रयत्नाऽऽदेशयोर्विधानसामर्थ्यात् पर्याये सिद्धे, 'शाकल्य'ग्रहणम् अलघुप्रयत्ने लोपविकल्पाऽर्थम्। 'व्योरि'त्यनुवृत्त्याऽलघुप्रयत्नस्यैवोपस्थितत्वात्। न च 'शाकटायन'ग्रहणाऽनुवृत्त्या निस्तारः। तन्मतेऽलघुप्रयत्नयोर्व्योरभावात्। अत एव 'उत्तरसूत्रे गार्ग्यग्रहणं पूजाऽर्थं, विकल्पस्य पूर्वसूत्रेण सिद्धत्वादि'ति भाष्यकारादयः। तेषामयम्भावः—'गार्ग्यस्य मते लोपो, नाऽन्येषामि'ति। विकल्पाऽङ्गीकारेऽप्यन्येषां मध्ये शाकल्यस्य तु न प्रवेशः। तेन पूर्वसूत्रे लोपस्यैव स्मृतत्वात्। अत एव पूजाऽर्थ([2]क)त्वे गार्ग्यस्य, शाकल्यस्य च न स्वमतात्प्रच्युतिः। एतेन 'ऋतो भारद्वाजस्ये'ति सूत्रस्थभाष्यविरोधात् 'ओतो गार्ग्यस्ये'तिसूत्रस्थं भाष्यं चिन्त्यमि'त्युक्तिः परास्ता। न चैवं 'हलि सर्वेषामि'ति सूत्रे 'सर्वेषां'ग्रहणं व्यर्थम्, विकल्पस्य विच्छिन्नत्वादेवाऽननुवृत्तिसिद्धेरि'ति वाच्यम्। शाकटायनमते विहितलघुप्रयत्नतरस्याऽपि लोपाऽर्थं 'सर्वेषामि'त्यस्य सत्त्वात्। तद्धि यकार-वकारमात्रग्रहणाऽर्थम्, ऋषिमात्रग्रहणाऽर्थं वा। स च नित्य एव। वृक्षव्करोतीति। 'वृक्षव्-सु' 'वृक्षव्-भ्यामि'त्यत्र भोसादिसाहचर्येण विभक्त्यनवयवीभूतहल्येव

---

लघुशब्दरत्नः

रान्तानामेवाऽनुकरणं, सूत्रे सन्ध्यभावो न्याय्य एवेति भाष्यस्वरसः। लघूच्चारणतरः=लघुतरोच्चारणः।

---

[1] 'हरिवा' इति निर्विसर्गः क. ख. पाठः।
[2] अयं पाठः क. ख. नास्ति।

३२

तथापि तत्र लोपाऽप्रसङ्गः। 'अशी'त्यनुवर्त्त्य अशा हलो विशेषणात्। 'वृक्षव् हसती'त्यादि त्वनभिधानादसाध्वित्याहुः। 'गव्यमि'त्यत्र तु पदान्तत्वं नाऽस्ति। 'गव्यूतिरि'त्यत्र तु वकारप्रश्लेषान्न वलोप' इत्युक्तम्। ननु 'देवा नम्या' इत्यादौ लोपो व्योः (६।१।७६) इत्येव सिद्धम्। मैवम्। तं प्रति यत्वस्याऽसिद्धत्वात्। 'देवा यान्ती'त्यत्र वल्परत्वाऽभावाच्च। अहोरात्र इति। रात्राह्नाहाः (२।४।२९) इति पुंस्त्वम्। अहरादीनामिति। उभयत्राऽप्यादिशब्दः प्रकारे। तेन [1]'स्वर्चक्षा [2]रथिरः सत्यशुष्मः,' 'विप्रः कविः [3]काव्येनाऽस्वर्चना' इत्यादि ग्राह्यम्।

तृढः, वृढ इति। ऊदित्वेन वेट्कत्वात् यस्य विभाषा (७।१।१५)

बृहच्छब्दरत्नः

प्रवर्त्तनान्न दोषः। यत्तु 'उञि च पदे' इति सूत्रा'त्पदे' इत्यनुवर्त्तनेन 'हलादौ पदे' इत्यर्थान्न दोष' इति। तन्न। मण्डूकप्लुत्या ङमुट्सूत्रे एव सम्बन्धाऽङ्गीकारात्। ध्वनितञ्चेदं भाष्ये। एवं श्रूयमाणे णिच्यपि भोसादिसाहचर्यात् शाकल्यसूत्रेण लोपाऽभावः। करोत्यादिसमभिव्याहारस्तु भोसादीनां सम्भवत्येव, 'हे भोः करोति घटमि'त्यादौ यथेत्यलम्। इत्याहुरिति। अत्राऽरुचिबीजन्त्वनभिधाने प्रमाणाऽभावः। न च 'न पदान्ताः परेऽणः सन्ती'ति लण्सूत्रस्थं भाष्यं प्रमाणमिति वाच्यम्। 'कर्त्तृ' 'अग्ने' 'वायो' [4]'ग्रयावि'त्यादीनामभावाऽऽपत्तेः। 'अणोऽप्रगृह्यस्ये'त्यत्र [5]'पर्युदासेन हलो व्यावृत्तिसिद्धौ परेणाऽणग्रहणं व्यर्थमित्यर्थपरभाष्यस्य सत्त्वाच्च[6]। तस्माद्वकाराऽनुवृत्त्या लोपो भवत्येव।

लघुशब्दरत्नः

हलो विशेषणादिति। स्पष्टं चेदं भाष्ये। इत्याहुरिति। हरदत्तादयः। वकारलोपे ततस्तदर्थाऽनवगतेरित्यर्थः। एवं च करोत्यादिपरेऽपि तत एव लोपो न भविष्यतीति अशा हलो विशेषणं[7] व्यर्थमेवेति सूचितम्। भाष्यमपि तदेकदेश्युक्तिरेव। 'न पदान्ताः परेऽणः सन्ती'ति [8]लण्सूत्रस्थभाष्यविरोधाच्च।

[1] 'स्वर्चक्षो' इति मुद्रितः पाठः।
[2] 'रथिनः' इति लिखितेषु पाठान्तरम्।
[3] 'काव्येन स्वर्चनाः' इति क्वचित् पाठान्तरम्।
[4] अस्फुटोऽयं पाठः। 'पत्यौ' 'पायौ' इति वा ख. पाठः।
[5] 'पर्युदासे' इति क. ख. पाठः।
[6] 'भाष्यसत्त्वाच्च' इति क. ख. पाठः।
[7] 'व्यर्थमिति सूचितम्' इति घ. च. पाठः।
[8] 'लण्सूत्रभाष्यविरोधाच्च' इति क. घ. पाठः।

इति निष्ठायां नेट्। ढत्व-धत्व-ष्टुत्व-ढलोपाः। यत्तु प्राचा प्रत्युदाहृतं–'दृढ' इति। तन्न। तत्र ढलोपस्यैवाऽभावात्। तथा हि–दृढः स्थूलबलयोः(७।२।२०) इति सूत्रेण दृंहेर्नकार-हकारयोर्लोपः, तकारस्य ढत्वञ्च निपात्यते, न तु असिद्धकाण्डस्थढत्वस्येह प्रवृत्तिः। दादेर्धातोः (८।२।३२)इति घत्वेन बाधात्। न च इडभावो, ढत्वञ्च निपात्यतां, धत्व-ष्टुत्व-ढलोपास्तु भविष्यन्त्येवेति वाच्यम्। तथा सति 'परिदृढय्ये'त्यत्र ल्यपि लघुपूर्वात् (६।४।५६) इति णेरयादेशो न स्यात्। [1]'पारिदृढी कन्ये'त्यत्र अणिञोः (४।१।७८) इति ष्यङ् च स्यात्, ढलोपस्याऽसिद्धत्वेन गुरूपोत्तमत्वादि'ति भाष्ये स्थितम्।

यत्तु प्राचा व्याख्यातं–'दृंहेरेवेदं निपातनम्। 'दृह वृद्धावि'ति तु प्रकृत्यन्तरम्। तस्य निष्ठायामागमशास्त्रस्याऽनित्यत्वादिडभावे, वा द्रुह (८।२।३३) इत्यत्र 'वे'ति योगविभागात्पक्षे घत्वाऽभावे, [2]ढत्वे, ढलोपे च

---

**बृहच्छब्दरत्नः**

स्यादिति। न चेष्टाऽऽपत्तिः। न च निपातनवैयर्थ्यम्, विकल्पस्येष्टत्वादिति वाच्यम्। तस्याऽष्टदोषदुष्टत्वात्। किञ्च दृंहेरिव बृंहेरप्यागमशास्त्रस्याऽनित्यत्वेन इडभावे सिद्धे, इण्निषेधप्रकरणे 'दृढः स्थूल-बलयोरि'त्यस्याऽसङ्गतताऽऽपत्तेः। किञ्च त्वदुक्तरीत्या 'ढत्वसिद्धावसिद्धत्ववारणाय ढलोपो निपात्यते' इति भाष्ये वक्तुं युक्तम्। तस्माद्वामनादिरीत्या दृहेरपि निपातनम्। तदनङ्गीकारे कैय्यटाद्युक्तरीत्या इडादिकमभ्युपगम्य रूपाऽन्तरं वा स्वीकर्त्तव्यम्। 'निपातनाऽनङ्गीकारेऽपि समानरूपत्वमि'ति दुराग्रहे तूक्तदोषो दुर्वार एवेत्यास्तां तावत्।

यत्तु 'दृढ' इत्यादावुत्तरपदत्वाऽभावान्न दीर्घ' इत्याहुः। तन्न। पूर्वग्रहणस्य वैयर्थ्याऽऽपत्तेः। अत एव 'पुना रमते' इत्यादौ दीर्घसिद्धिः। अन्यथा-उत्तरपदशब्दस्य चरमाऽवयवे रूढत्वेन न स्यात्। वस्तुतस्तूत्तरपदाऽधिकारस्य विच्छिन्नत्वात्, ढसाहचर्येण सर्वत्र प्रवृत्तेश्च, 'पूर्व'ग्रहणं पूर्वमात्रदीर्घाऽर्थम्। तेन 'अजघां' इत्यादौ रोरसिद्धत्वं नेत्यादि स्पष्टं मूले।

---

**लघुशब्दरत्नः**

इडभावो, ढत्वं चेति। चेन नलोपसङ्ग्रहः। ढलोपा इति। ढो ढे लोपः (८।३।१३) इत्येतद्दृष्ट्या ष्टुत्वन्तु नाऽसिद्धं, सामर्थ्यादिति भावः। भाष्ये स्थितमिति।

---

[1] 'पारिदृढी कन्ये'ति च 'अणिञोरि'ति ष्यङ स्यात्' इति घ. ङ. पाठः।

[2] 'ढत्वे' इति ध. पाठः।

प्रत्युदाहरणमिदं द्रष्टव्यमि'ति । तन्न । उभयोरपि निपातनाऽभ्युपगमात् । तदाह वामनः—'अथ दृहिः प्रकृत्यन्तरमस्ति, तस्याऽप्येतन्निपातनं नलोपवर्जमि'ति । युक्तं चैतत् । अन्यथा हि अस्माण्णेरय् न स्यात्, ष्यङ् च स्यात् । **उत्वमेवेति** । सिद्धा-ऽसिद्धयोरतुल्यबलत्वेन विप्रतिषेधे परम् (१।४।२) इत्यस्याऽप्रवृत्तौ, निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः । तदुक्तं—'पूर्वत्राऽसिद्धे नाऽस्ति विप्रतिषेधोऽभावादुत्तरस्ये'ति । एतेन 'विभक्तिकार्यं प्राक्, पश्चादुत्व-मत्वे' इत्यादि व्याख्यातम् ।

सूत्रे 'सु' इति पृथक्पदं लुप्तषष्ठीकमित्याह—**एतत्तदोर्यः सुरिति** । 'एतत्तदर्थगतसङ्ख्याऽभिधायी यः सुस्तस्ये'त्यर्थः । 'एतत्तदोर्विहित' इति व्याख्याने तु 'परमस ददाति' 'परमैष ददाती'त्यादौ न स्यात् । अर्थद्वारकसम्बन्धाऽऽश्रयणे लिङ्गन्तु 'अनञ्समासे' इतीति[1] बोध्यम् ।

**अकोः किमिति** । साकच्कयोः शब्दाऽन्तरत्वादप्रसङ्ग इति प्रश्नः । **एषक इति** । 'अकोरि'ति प्रतिषेध एव 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषां ज्ञापयतीति भावः । **बहुलग्रहणेति** । अत एव लोपं विना

---

**बृहच्छब्दरत्नः**

अर्थद्वारकेति । 'एतत्तदोरनन्तर' इति व्याख्यानेऽपि न का चित्क्षतिः । न च गौणेऽतिव्याप्तिः । 'अक' इति पर्युदासेन प्रधानस्यैव ग्रहणात् । हल्ङ्यादिलोपेन सिद्धत्वाच्च । 'सु' इति प्रथमैकवचनमेव गृह्यते । उत्तरत्र तस्यैव सम्भवेन अनुनासिकोकारविशिष्टत्वकल्पनात् । अत एवेति । नियमाऽऽश्रयणन्तु लोके लोपे

---

**लघुशब्दरत्नः**

'दृढः स्थूल (७।२।२०) इति सूत्रे' इति शेषः । द्रष्टव्यमितीति । ष्यङि,[2] णेरयभावे चेष्टाऽऽपत्तिरिति भावः । उभयोरपीति । 'त्वदवलम्बभूतेन वृत्तिकृते'ति शेषः । तदाह—वामन इति । अत्राऽरुचिबीजन्तु [3]'दृंहेर्नकार-हकार-लोपाऽर्थमि'ति भाष्यविरोधः । 'अनिदितो [4]दृहेस्तु दृहितमित्येवेष्यते' इति कैय्यटविरोधश्चे'ति । किञ्च प्रसादोक्तरीत्या[5] दृंहेरपि इडभाव-ढत्वयोः सिद्धाविण्निषेधप्रकरणे 'दृढ' इति निपातनस्य व्यर्थत्वमित्यलम् ।

अभावादुत्तरस्येति । आहार्याऽभावाऽऽरोपादित्यर्थः । लिङ्गमिति । विहितविशेषणे

---

[1] 'इति बोध्यम्' इति तु सर्वत्र पाठः ।

[2] 'णेरयाऽभावे च' इति मुद्रितः पाठः ।

[3] 'दृंहेर्हकार-नकारयोः' इति घ. पाठः । 'दृंहेर्नकार-हकारलोपार्थम्' इति क. पाठः ।

[4] 'दृंहेस्तु' इति क. पाठः ।   [5] 'दृहेरपि' इति मुद्रितेषु पाठः ।

**पादपूरणेऽपि क्व चिद्भवति–'साऽस्मा अरम्'। 'सः–अस्मै' इति च्छेदः।**

**इति स्वादिसन्धिः।**

---

बृहच्छब्दरत्नः

सत्येव पादपूरणे लोपो, नाऽन्यत्रेत्येतदर्थमिति भावः। एतेन 'बहुलग्रहणाल्लोपस्य क्वाचित्कत्वं कल्पमि'त्यपास्तम्। छन्दस्यभावदर्शनेन लक्षणानां क्वाचित्कत्वकल्पनाया अन्यत्राऽदृष्टत्वात्।

साऽस्मा अरमिति। लोपाऽभावेऽपि पूर्वरूपस्य दुर्वारत्वेन पादपूरणमस्त्येवेति भावः। न च 'प्रकृत्याऽन्त' इति प्रकृतिभावः शङ्क्यः। प्रातिशाख्याऽनुरोधेनाऽस्याऽत्राऽप्रवृत्तेरिति मूले उत्तरत्र स्पष्टत्वात्।

**इति (बृहच्छब्दरत्ने) स्वादिसन्धिः॥**

---

लघुशब्दरत्नः

तद्वैयर्थ्यं स्पष्टमेवेति भावः। सास्मा अरमिति। 'सोऽस्मा अरमि'ति सन्धावपि [1]पादपूर्त्तेः। न च प्रकृत्याऽन्तःपादम् (६।१।११५) इति [2]पूर्वरूपस्याऽभावे न पादपूर्त्तिः। 'सोऽयमागादि'-त्यादाविवाऽत्रापि प्रातिशाख्येन सिद्धेः। एवञ्चाऽवधारणपरतया न व्याख्येयम्, 'सोऽहमाजन्मे'त्यादौ बहुलग्रहणेन क्व चिदप्रवृत्त्याऽपि सिद्धेरिति तात्पर्यम्। [3]विस्तरस्तु अस्मत्कृते शब्दरत्ने, मदन्तेवासिकृते शब्देन्दुशेखरादौ द्रष्टव्यः।

**इति स्वादिसन्धिः।**

**[4]इति दीक्षित-भट्टोजि-पौत्र-दीक्षित-हरिकृते**
**लघुशब्दरत्ने मनोरमा-व्याख्याने**
**पञ्चसन्धिप्रकरणम्।**

---

[1] पादपूर्त्तिः' इति क. पाठः।
[2] पूर्वरूपस्याऽभावेन न पादपूर्त्तिः' इति मुद्रितेषु पाठः।
[3] अयं घ. च. पाठः।
[4] इयं क. ख. ग. ध. पुष्पिका।

# अथाजन्तपुँल्लिङ्गप्रकरणम् ।

**अर्थवदधातुः (१।२।४५)। प्रत्ययं प्रत्ययान्तं चेति। सूत्रे तन्त्रादिना उभयं विवक्षितमिति भावः। तथा हि प्रत्ययस्यैव पर्युदासे 'कृत्तद्धिते'ति सूत्रेण तद्धिताऽन्तस्य सञ्ज्ञाविधानं व्यर्थं स्यात्। न च**

बृहच्छब्दरत्नः

तद्धितान्तस्येति। कृद्ग्रहणन्तु 'लिडि'त्यादावधातुरिति निषेधबाधनाऽर्थम्। न चैवम् 'अस्याऽपत्यम् इरि'त्यादौ 'प्रत्ययस्य ने'ति निषेधबाधनाऽर्थं तद्धितान्तस्य सञ्ज्ञाविधानमस्तु। प्रत्ययस्याऽतथात्वात्। 'अ-अस् इ' इत्यलौकिकवाक्ये सुब्लोपात्पूर्वं प्रवृत्तायाः सञ्ज्ञाया एकदेशविकृतन्यायेन सुलभत्वाच्च। 'लिह् क्वी'त्यस्यामवस्थायां सञ्ज्ञाया नैव प्रवृत्तिः। फलाऽभावात्, विलोपस्य परत्वेनाऽन्तरङ्गत्वेन, नित्यत्वेन च पूर्वं प्रवृत्तेश्च। न चैवमपि नियमाऽर्थमेवाऽस्त्विवति वाच्यम्। नियमस्य सजातीयताऽऽपत्तौ धातुप्रकृतिकप्रत्ययाऽन्तवारणाऽनापत्तेः। 'पाचक' इत्यादौ सञ्ज्ञाऽभावाऽऽपत्तेश्च। न च बाध्यसामान्यचिन्तायाम् 'अधातुरि'ति निषेधस्येव कृद्ग्रहणेन तद्धितान्तनियमस्याऽपि बाधोऽस्त्विवति वाच्यम्। समासनियमस्याऽपि बाधाऽऽपत्तेः। न च 'लिडि'त्यादावपि प्रत्ययलक्षणेन [1]तद्धितभिन्नप्रत्ययाऽन्तस्य ने'तिनियमबाधस्याऽऽवश्यकत्वे बाध्यविशेषचिन्ताऽऽश्रयणेऽपि 'पाचक' इत्यादौ सञ्ज्ञा भविष्यत्येवेति वाच्यम्। 'न ङिसम्बुद्ध्योरि'ति ज्ञापनेन प्रत्ययलक्षणेनोक्तनियमाऽप्रवृत्तेर्ज्ञापितत्वात्। 'लिडि'त्यादौ पूर्वसूत्रेणाऽपि प्रातिपदिकसञ्ज्ञाया अप्राप्तत्वेन कृद्ग्रहणप्राप्तेः पूर्वं व्यावर्त्यविषयस्याऽसम्भावितत्वेन, तद्धितनियमाऽप्रवृत्तौ 'अणुरपि विशेषोऽध्यवसायकर' इति न्यायात् 'पाचक' इत्यादौ कृद्ग्रहणस्य मन्थरं प्रवृत्त्या परेण तद्धितनियमेन बाधाच्च। किञ्च 'अधातुरि'ति पर्युदासस्य सत्त्वेन धातौ विधिनिषेधाऽभावात् 'लिडि'त्यादौ सावकाशस्य कृद्ग्रहणस्य परत्वेन तद्धितनियमेन बाधस्योचितत्वात्।

अपि च 'घटोऽस्ति हे युवते', 'घटोऽस्ति हे पारमकारीषगन्ध्ये' इत्यादिवाक्ये

लघुशब्दरत्नः

व्यर्थं स्यादिति। न चास्याऽपत्यम्–'इः' '[2]इयानि'त्यादौ प्रत्ययत्वप्रयुक्तनिषेधबाधनेन तच्चरितार्थम्। 'अ अस् इ' इत्यवस्थायां प्रवृत्तसञ्ज्ञाया एकदेशविकृतन्यायेन

[1] 'तद्धितभिन्न प्रत्ययलक्षणेन प्रत्ययान्तस्य नेति'. इति. ख. पाठः। तत्र 'प्रत्ययलक्षणेने'ति मध्ये लेखकप्रमादात्पतितमित्याभाति।

[2] 'इियानि'ति अयं क. ख. पाठः।

तत्राऽपि तदन्तं न ग्राह्यमिति वाच्यम्। 'अर्थवदि'त्यनुवृत्तिसामर्थ्यात्तदन्तग्रहणात्[1]। प्रशंसायां हि मतुप्। एकार्थीभावेन लौकिके प्रयोगे

---

**बृहच्छब्दरत्नः**

समासप्रयुक्तनियमं परमपि बाधित्वा लाघवाद्विध्यर्थमेव स्यात्। न च समुदायस्य तद्धिताऽन्तत्वं नाऽस्तीति वाच्यम्। अनुपसर्जनस्त्रीप्रत्यये तदादिनियमस्य निषिद्धत्वात्। यदि तद्धितग्रहणमौपगवादावेव प्रवर्त्तते, लाघवात्, बाधस्याऽन्याय्यत्वाच्चेति चेत्तर्हि वैयर्थ्यं स्पष्टमेवेति दिक्।

तदन्तं न ग्राह्यमिति। 'सुप्तिङन्तं पदमि'ति सूत्रस्थाऽन्तग्रहणेन सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्ताऽग्रहणस्य बोधितत्वात्। ननूक्ताऽर्थे ज्ञापितेऽपि प्रत्ययमात्रस्य सञ्ज्ञायां प्रदेशेषु [2]'पद'शब्देन प्रत्ययग्रहणेन 'सञ्ज्ञाविधौ प्रत्ययग्रहणे' इति परिभाषया तदन्तग्रहणादिष्टसिद्धौ 'सुप्तिङन्तमि'ति सूत्रस्थाऽन्तग्रहणं व्यर्थमेवेति चेन्न। पदशब्दस्य प्रकृतावपि शक्तत्वेन, प्रत्ययमात्रग्रहणाऽभावेन, पदशब्देन 'सञ्ज्ञाविधौ प्रत्ययग्रहणे' इतिपरिभाषया तदन्तविधेर्दुर्लभत्वात्। इदञ्च 'उगितश्चे'तिसूत्रे भाष्ये स्पष्टम्। नन्वेवम् 'औपगव' इत्यादौ पूर्वसूत्रविहितविशिष्टसञ्ज्ञयैव सुब्लोपस्येव सुबुत्पत्तेरपि सिद्धत्वेन प्रत्ययमात्रस्य सञ्ज्ञायां फलाऽभाव इति चेन्न। 'बहुपटव' इत्यादौ सुबापत्तेः। समासनियमेन विशिष्टस्य सञ्ज्ञाऽनापत्तेश्च। 'दण्डिनी' दण्डिनौ' 'दण्डिन' इत्यादौ प्रत्ययोद्देश्यसुब्लोपे समुदायोद्देश्यसुबुत्पत्तावपि नलोपाऽऽपत्तेश्च। प्रकाराऽन्तरेणाऽस्मदभिमताऽर्थसाधने मूले दोषाऽभावाच्च। एतेन 'अधातुरतिप् प्रातिपदिकं' 'कृत्समासश्च' इत्येव सूत्र्यताम्, 'तिप्तस्झी'त्यारभ्य सुपः पकारेण प्रत्याहारः, तन्त्रादिना 'तिप्, तिबन्तं च वर्जयित्वेत्यर्थ' इति परास्तम्। विकरणाऽन्ते दोषाऽऽपत्तेश्चेति यथान्यासमेव रमणीयम्।

अर्थवत्त्वं द्विविधं—पारमार्थिकं, काल्पनिकञ्च। आद्यन्तु पदे, वाक्ये वा। द्वितीयं तदवयवे। प्रत्ययोपादानादाद्यस्याऽसम्भवः। द्वितीये तु न[3] व्यभिचारीत्याशङ्क्याह—प्रशंसायामिति। 'रूपवान् ब्राह्मण' इत्यादाविवेति भावः।

एकार्थीभावेनेति। विशेषणसामर्थ्यात् पारमार्थिकप्रत्यासन्नमर्थवत्त्वं गृह्यते। प्रशस्तसमीपत्वेनाऽन्याऽपेक्षया प्रशस्तत्वात्। कृत्तद्धितशब्दौ च प्रत्ययग्रहणपरिभाषया

---

**लघुशब्दरत्नः**

सुलभत्वात्। एकार्थीभावेनेति। न चैतत्प्रत्ययमात्रस्य। तन्मात्रे एकार्थीभावाऽभावादिति भावः। एकार्थीभावश्च यस्य प्रातिपदिकसञ्ज्ञा चिकीर्षिता तन्मात्रवृत्तिरेव ग्राह्यः। तेन 'पञ्चनावप्रिय' इति समास-घटक-'पञ्चनावे'त्यस्य तद्धितान्तत्व-समासत्वयोरपि न प्रातिपदिकत्वम्।

---

[1] 'तदन्तग्रहात्' इति क. पाठः।

[2] पदेशब्देन' इति क. ख. पाठः।

[3] 'न व्यभिचार' इति 'द्वितीयन्तु न व्यभिचारी' इति वाऽत्र पाठः संभाव्यते।

प्रसिद्धत्वश्च प्रशंसामूलम्। न चाऽर्थवदित्यस्य पूर्वसूत्रे चरिताऽर्थता। धातु-प्रत्ययपर्युदासेनैव तल्लाभात्। तस्मात् 'प्रत्ययाऽन्तं च वर्जयित्वे'त्युचितमेव। यदि तु प्रत्ययो न पर्युदस्येत, तर्हि सात्पदाद्योः (८।३।१११) इति सूत्रे 'साति'ग्रहणं व्यर्थं स्यात्।

अर्थवदिति किम्?। 'धनं' 'वनमि'त्यादौ प्रतिवर्णं सञ्ज्ञा मा भूत्। तस्याश्च सत्यां स्वादयः स्युः। ननु सङ्ख्या-कर्मादेरभावान्न भविष्यन्तीति चेन्न। [1]'एकवचनमुत्सर्गतः करिष्यते' इति सिद्धान्तात्, हुं-फडादिभ्य इव सोर्दुर्वारत्वात्। न चाऽर्थवद्ग्रहणपरिभाषयाऽनर्थके न स्यादिति वाच्यम्।

बृहच्छब्दरत्नः

तदन्तेऽप्युक्ताविति भावः। अत एव 'वाक्दृषदप्रिय' इत्यादौ तद्धिता-ऽन्तत्वात्प्रातिपदिकत्वं न। सुप्प्राग्वर्तितद्धितान्तमात्रस्य प्रयोगाऽभावेन प्रशस्ता-ऽर्थवत्त्वाऽभावात्। व्यर्थं स्यादिति। तत्सामर्थ्येनाऽऽनुमानिकवचनकल्पनाऽपेक्षया-ऽत्रैव तत्कल्पनं युक्तमिति भावः। न च प्रकृति-प्रत्यययोः सुबन्तत्वेन समासः शङ्क्यः। बहुचश्चित्त्वस्य वैयर्थ्याऽऽपत्तेः। मानाऽन्तरत्वे दोषाऽभावाच्च।

प्रतिवर्णमिति। 'एकाज्द्विर्वचन'न्यायस्य तु नाऽयं विषयः, समुदायकार्येणा-ऽवयवानामननुग्रहात्। आनुमानिकवचनकल्पनेन वारणमयुक्तम्। नन्वर्थवत्त्वेनैव

लघुशब्दरत्नः

प्रियशब्दाऽन्त एव तत्रैकार्थीभावो, न तु तन्मात्रे इत्यदोषात्। न च क्विबन्ते दोषः, तत्र धातोरेव विशिष्टाऽर्थबोधकत्वेनाऽर्थवद्द्वितीयाऽभावेन पृथगर्थानामेकोपस्थितिजनकत्वरूपैकार्थी-भावाऽभावादिति वाच्यम्। अलौकिके वाक्ये कल्पितैकार्थीभावस्य तत्राऽप्यारोपेणाऽदोषात्। व्यर्थं स्यादिति। अनेन प्रत्ययपर्युदासे मानमुक्तम्। सातेः प्रातिपदिकत्वे हि तत औत्स-र्गिकैकवचने, तस्याऽपि सुबन्तत्वेन पदत्वे, पदादित्वादेव निषेधसिद्धेस्तद्वैयर्थ्यमिति भावः। सोर्दुर्वारत्वादिति। तस्य च समुदायप्रातिपदिकत्वेन तदवयवत्वाल्लुक्। समुदायसञ्ज्ञा चा-ऽन्तरङ्गत्वादवयवेभ्यः प्रातिपदिकत्वात्सुपि सति प्रवर्त्तते, इति तस्य तदवयवत्वमक्षतम्। 'पचति', 'ध्वनती'त्यादौ नाऽवयवानां सा। धातु-प्रत्ययाऽन्त-पदयोस्तदवयवपरत्वेन, तत्र तन्नि-षेधात्। तस्मादव्युत्पन्नप्रातिपदिकाऽवयवेभ्यस्तदुत्पत्तिरापाद्या। 'धन'शब्दस्य 'धिनोतेर्धनमि'ति-व्युत्पत्तिपक्षे तु वनाद्युदाहरणं बोद्धव्यम्। ध्वनितं चेदं भाष्य-कैय्यटयोः। तस्मान्नलोपाद्या-पत्तिर्दोषः। इदमव्ययेभ्य इव तेभ्योऽपि [2]सुप एकवचनाऽभ्युपगमेन। [3]वस्तुतस्तु तदुत्पत्तिः सत्येव

[1] 'उत्सर्गत⁐करिष्यते' इति क. पाठः।

[2] 'सुब्वचनाभ्युपगमेन' इति क. ख. पाठः। 'सुबेकवचनाभ्युपगमेन' इति ग. पाठः। 'औत्सर्गिकैकवचनाऽभ्युपगमेन' इति घ. पाठः।

[3] 'यदि तु' इति लिखितेषु पाठः।

तस्या विशिष्टरूपोपादानविषयत्वात्। 'अधातुरि'त्यादिपर्युदासबलेन यद्यपि अर्थवत्त्वं लभ्यते, तथाऽप्युत्तराऽर्थं तदि'त्युक्तम्। एतच्च सुप्तिङन्तम् (१।४।१४) इति सूत्रे भाष्ये ध्वनितम्।

यत्त्वाहुः—'पर्युदासो नाऽर्थवत्त्वं गमयति, अनर्थकयोरपि धातु-प्रत्यययोर्दर्शनात्—'अधीते,' 'यावक' इति। अधिपूर्वस्यैवेङः प्रयोगाद्विशिष्ट एवाऽर्थवान्, न तु केवलः। 'इङ् अध्ययने' इत्याद्यर्थनिर्देशस्तु अवयवे

बृहच्छब्दरत्नः

सादृश्यं, नाऽन्यधर्मेणेत्यत्र न किञ्चिन्मानमित्याशङ्क्याह—एतच्चेति। एवञ्चाऽर्थवत्पदसामर्थ्यवर्णनं भाष्योक्तं सङ्गच्छते। 'अनेकाऽर्थसम्भवेऽभियुक्तव्याख्यानस्यैव प्रामाण्यमि'ति लण्सूत्रे आकरे स्पष्टम्। अत एव'असत्त्वाऽर्थकत्वेनाऽपि सादृश्यसम्भवाद्घटादौ प्रातिपदिकत्वं न स्यादतोऽर्थवद्ग्रहणमि'ति मन्दोक्तमपास्तम्। बहुलक्ष्यसंस्काराऽनुरोधेनोक्तरीत्यैव सादृश्यग्रहणस्योचितत्वाच्च। [1]'औपगव' इत्यादौ प्रकरणात्प्रत्ययाऽर्थे एव लिङ्ग-सङ्ख्या-कारकाऽन्वयस्य सत्त्वेन 'अप्रत्यय' इति पर्युदासत्वे[2] त्वदुक्तार्थाऽसम्भवाच्च। उभयोरेकाऽर्थताया युक्तत्वाच्च।

लघुशब्दरत्नः

गमके, यथाऽव्ययेभ्य उत्पत्तौ अव्ययादाप्सुपः (२।४।८२) इति गमकम्, नाऽन्यत्र, [3]'एकवचनमि'त्यादिमहासञ्ज्ञाकरणात्। प्रकृते तु न तथा गमकम्। अत एव ङ्याप् (४।१।१) इति सूत्रे प्रातिपदिकाऽधिकाराऽभावे तिङन्तेभ्यस्तदुत्पत्तिमाशङ्क्य एकत्वादीनामुक्तत्वान्नेति समाहितं भाष्ये। त्वद्रीत्यौत्सर्गिकमेकवचनं दुर्वारमेव। ([4]प्रकृतसूत्रस्थमिदं भाष्यन्त्वेकदेश्युक्तिः)। अत एवाऽग्रे भाष्येऽर्थवत्पदस्य 'दशदाडिमानी'त्यादिपदसमुदायो निरर्थको व्यावर्त्यत्वेन प्रदर्शितः। तत्र हि सुपो धातु (२।४।७१) इत्यस्य प्राप्तिरिति, तदेवाऽस्य मुख्यं व्यावर्त्यम्। 'पचतःकल्पमि'त्यादौ तत्प्रवृत्तौ रूपप्सूत्रस्थं भाष्यं गमकम्। समासग्रहणकृतनियमस्तु अर्थवत्समुदायविषयक इति भाष्ये स्पष्टमिति, न तेनाऽस्य व्यावृत्तिरिति दिक्।

यद्यप्यर्थवत्त्वमिति। व्याख्यानादर्थवत्त्वेनैव सादृश्यं गृह्यत इति भावः। उक्तमिति। एतेनेदमुक्तमेव पुनर्दार्ढ्यायोच्यते इति सूचितम्। भाष्ये इति। एवं हि तत्र भाष्यम्—'अर्थवदि'ति वर्त्तते, कृत्तद्धिताऽन्तं चैवाऽर्थवत्, न केवलाः कृतस्तद्धिता वेति, कृत्तद्धितेति सूत्रेऽन्तग्रहणं न कार्यमि'ति। [5]'अर्थवद्ग्रहणाऽनुवृत्तिसामर्थ्यादिव चेदृशाऽर्थलाभ' इति कैय्यटः।

[1] 'अत एव औपगवः' इति, ('तत अतोपगव' इति वा) ख. पाठः।
[2] 'पर्युदासे' इति क. पाठः।
[3] 'एकवचनमिति' इति ग. घ. पाठः।
[4] अयं क. ग. घ. पाठः। मुद्रितेषु नास्ति।
[5] 'अर्थवद्ग्रहणसामर्थ्यादिव' इति क. ख. पाठः।

३३

समुदायाऽर्थाऽऽरोपात् । एवं कन्नप्यनर्थकः । 'याव'शब्दादपि तदर्थप्रतीतेः । ओषधेश्च विभक्तावप्रथमायाम् (६।३।१४२) अकर्त्तरि च कारके (३।३।१९) इति विभक्ति–कारकग्रहणाभ्यां 'नञिवयुक्त'न्यायस्याऽनित्यत्वकल्पनाच्चे'ति ।

अत्रेदं वक्तव्यम्—'धातुरनर्थक' इति तावद्व्याहतम् । क्रियावाचकत्वं विना धातुत्वाऽयोगात् । आरोपितं तदिति चेत् । सत्यम् । तावतैवेष्टसिद्धेः । 'प्रकृति-प्रत्ययविभागः, तत्तदर्थविभागश्च सर्वः कल्पित एव । परमाऽर्थतस्तु स्फोट एवाऽर्थवानि'ति सिद्धान्तात् । उक्तश्च हरिणा—

बृहच्छब्दरत्नः

तत्तदर्थेति । 'तस्य—तस्ये'ति वीप्सायां द्विर्वचनम् । ततः 'तस्य—तस्य अर्थ-विभाग' इति षष्ठीसमासे, विभक्तिलुकि, उक्तप्रयोगसिद्धिः । केचित्तु 'तस्ये'त्यर्थे 'तदि'ति विभक्तिप्रतिरूपकमव्ययम्, शेषं प्राग्वदि'त्याहुः ।

कल्पित एवेति । आत्मबोधकपञ्चकोशादिवत्कल्पितत्वम् । एतेन 'प्रकृति-प्रत्यय-विभागादेः काल्पनिकत्वे शशविषाणकल्पतया नित्यस्फोटात्मकज्ञानाऽसम्भव' इत्यपास्तम् । 'रेखागवय'न्यायेन ज्ञापकत्वसम्भवाच्च ।

स्फोट इति । स्फुटत्यर्थोऽस्मादिति स्फोटः । पदं, वाक्यं च वाचकमित्यर्थः । तथा हि 'गामानये'त्यादौ पदैः [1]पदार्था उच्यन्ते, वाक्येन वाक्याऽर्थः । अत एव 'घटः, कर्मत्वम्, आनयनं, कृतिरि'त्यत्र शक्तिग्रहशालिनां बोधः । स[2] एव विपरीतव्युत्पन्नः । अत एव 'देवदत्तः पचती'ति वाक्यात्कृतिप्रकारकदेवदत्त-विशेष्यकबोधो न मीमांसकानाम् । भावनाविशेष्यकबोधश्च न नैयायिकानाम् । समभिव्याहारस्य कारणत्वे सिद्धो वाक्यस्फोटः । घटादिपदार्थ(बोधे[3] घटादि-

लघुशब्दरत्नः

समुदायार्थारोपादिति । तेन तन्मात्रस्य क्रियावाचित्वनिबन्धनधातुत्वसिद्धिरिति भावः । तत्=क्रियावाचकत्वम् ।

तत्तदर्थविभागश्चेति । 'तस्य—तस्ये'ति कृतद्विर्वचनेन षष्ठीसमासे, 'स सोऽर्थविभाग' इति कर्मधारये वा, विभक्तिलुकि इदं साधु । एतेन 'अन्याऽन्यप्रादुर्भावादि'ति अपादाने पञ्चमी (२।३।२८) इति सूत्रस्थभाष्यप्रयोगोऽपि व्याख्यातः । सुबन्तत्वमपि द्विःप्रयोगपक्षे इव स्थाने-द्विर्वचनपक्षेऽप्याद्याऽन्यशब्दे प्रकृतित्वबुद्ध्या, अन्त्य-'स्य'शब्दे प्रत्ययत्वबुद्ध्या सूपपादम् । सर्व इति । धातूपसर्गविभागो, वृत्तिष्वेकार्थीभावश्चैवमेवेति भावः । स्फोट एवेति । पदरूपो,

[1] 'पदार्थ उच्यते' इति क. पाठः ।

[2] ईदृशशक्तिग्रहशाली पुमान् विपरीतव्युत्पन्न इत्यर्थः ।

[3] अयं पाठः क. ख. नास्ति ।

बृहच्छब्दरत्नः

पदनिष्ठ)बोधकतारूप-पदशक्ति-ज्ञानकारणभावस्येव, विशिष्टवाक्याऽर्थबोधे पदसमभिव्याहाररूप–वाक्य-निष्ठ–बोधकतारूप–वाक्यशक्तिज्ञानस्याऽपि हेतुत्वकल्पनात्। विशिष्टशक्तिग्रहस्तु तदादिवत्, 'कारकविभक्ति-विशिष्ट-पद-धातुपदयोर्विशिष्टयोस्तत्कारकविशिष्टक्रियाबोधकत्वमि'ति सामान्यतः। अनन्तरं पदविशेषसमभिव्याहारे सति तात्पर्यवशात्पदाऽर्थविशिष्टक्रियाविशेषबोधः[१]। प्रागविज्ञातेऽपि 'हरिद्रायां नद्यां घोष' इत्यादि श्रुतं, तदानीमेव शक्तिग्रहः, तदानीमेव लक्षणया तत्सम्बन्धितीरप्रत्ययवत्तदानीमेव चाऽर्थे वाक्यशक्तिग्रहः।

यद्वा तात्पर्यज्ञानरूपामेवोपस्थितिमादाय [२]शक्तिग्रहस्तात्कालिक एव। 'वाक्यस्य वाक्याऽर्थे लक्षणे'ति वादिनां मतेऽपि सममेतत्। तथा च विषयतासम्बन्धेन शाब्दबोधमात्रे शक्तिज्ञानस्य, ज्ञायमानशक्तेर्वा हेतुत्वकल्पनेन लाघवम्। एतेन 'पदानां पदार्थेष्विव, वाक्यस्य वाक्याऽर्थे शक्तिपक्षे, पदाऽर्थानामिव वाक्याऽर्थस्य स्मरणमेव स्यान्न त्वनुभवः। सम्बन्धिज्ञानतयैव पदज्ञानवत्तदुपयोगादि'ति निरस्तम्। पूर्वं शक्तिग्रहाऽनङ्गीकारेण दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यात्। पठितपद्यस्य पुनः पठने तज्जन्यशाब्दबोधे स्मृतित्वाऽऽपत्तेश्च।

वस्तुतस्तु न तावद्वाक्याऽर्थप्रतीतिरनुभवः, स्वर्गनरकादिकं शृण्वतोऽपि 'स्वर्गं, नरकं चाऽनुभवामी'त्यप्रतीतेः। पदाऽर्थबोधो न स्मरणम्, 'अयमर्थो न स्मृतस्त्वदुच्चारितपदाद् बुद्ध' इत्यनुभवविरोधात्। पदार्थज्ञाने तत्ताऽनुलेखाच्च। तत्तोल्लेखे, नियमभङ्गेनाऽत्र प्रमोषकल्पने चाऽतीव गौरवम्। किञ्च स्मार्य-स्मारकताऽतिरिक्तमूलभूतसम्बन्धकल्पनाऽऽपत्तेः।[३] 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमि'ति स्मारकत्वमेव सम्बन्धः। हस्तिपकादिषु तथा दर्शनात्। पदपदाऽर्थयोस्तु बोध्यबोधकताऽतिरिक्तसम्बन्धकल्पने न किञ्चिन्मानम्। बोधकताऽतिरिक्तशब्दशक्त्यभावस्य वक्ष्यमाणत्वात्। किञ्च[४] पदार्थबोधोऽप्यवान्तरवाक्याऽर्थबोधवच्छाब्दबोध एव। शब्दजन्यत्वाऽविशिष्टत्वात्। 'शाब्दयामी'त्यनुव्यवसायाच्च। परन्त्विदं ज्ञानं नाऽनुभवरूपम्। अज्ञाताऽर्थत्वाऽभावात्। तस्मात्स्मृत्यनुभवाऽतिरिक्तं ज्ञानं प्रमाणबलादायातमङ्गीकार्यम्। अस्तु वा पदाऽर्थबोधः स्मरणं, तथाऽपि बोधकताऽतिरिक्ता शक्तिः परं नोचितैवेत्याहुः। यत्तु 'पदानामेवाऽन्वयांऽशे शक्तिः, पदार्थांऽशे शक्तिकल्पनस्याऽऽवश्यकत्वेन तस्या एव तद्विषयकत्वकल्पने लाघवादि'ति। तन्न। 'इतराऽन्वितो घटः', 'इतराऽन्वितं कर्मत्वमि'त्येवाऽऽपत्तेः, न 'घटीयं कर्मत्वम्'।

लघुशब्दरत्नः

**वाक्यरूपो वेत्यर्थः। लोकानां तत्रैव शक्तिग्रहेण बोधादिति भावः। अत एव तस्य परमार्थ-**

[१] 'क्रियाविशेषबोधस्तु' इति ख. पाठः। [२] 'शक्तिज्ञानग्रह' इति ख. पाठः।
[३] 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं, न तु स्मारकत्वमेवेति सम्बन्ध' इति क. पाठः।
[४] 'यत्तु पदार्थबोधोऽपि' इति ख. पाठः।

बृहच्छब्दरत्नः

तथा शक्त्यनङ्गीकारात्। प्रागुक्तसमभिव्याहारकार्यकारणभावाऽङ्गीकारे तु प्रस्थितं पदशक्त्या। किञ्च घटबोधितस्याऽप्यन्वयस्य द्वितीयया बोधनेन शक्त्यावृत्त्यापत्तिः। अपि चाऽन्वयस्याऽपि प्रातिपदिकार्थेऽन्तर्भावात्‘शेषे षष्ठी’त्यस्य निर्विषयताऽऽपत्तेः। ‘नीलो घट’ इत्यादौ षष्ठ्यापत्तेः। ‘राज्ञो धनमि’त्यादौ प्रथमाऽऽपत्तेश्च। ध्वनितं चेदं भाष्ये। अपि च ‘नाऽनुमितं, न साक्षात्कृतं, किन्तु शब्दादवगतमि’त्यनुभवाऽनुरोधेनैव शब्दप्रामाण्यं यथाऽङ्गीक्रियते, एवं ‘संसर्गो वाक्याऽर्थ’ इत्यनुरोधेन वाक्यवृत्त्योपस्थाप्यत्वमवश्यमभ्युपगन्तव्यम्। अन्यथा पदानामपि पदाऽर्थेषु शक्तिर्न सिद्ध्येत्। घटादिपदेषु [1]चरमवर्णानां शक्त्या, अन्येषां तात्पर्यग्राहकत्वेन चोपपत्तेः। किञ्च पदार्थेष्वपि वाक्यस्यैव शक्तिः स्यात्। युक्ततरं चैव तत्। ‘गामानये’त्यादौ समुदाये व्युत्पन्नानां समुदायादेव बोधस्याऽनुभवसिद्धत्वात्। प्रथमव्युत्पत्तेर्व्यवहाराऽधीनतया सम्पूर्णस्य वाक्यस्य प्राथमिकशक्तिग्रहस्य निर्विवादत्वाच्च। न चाऽऽवापोद्वापाभ्यामवयवशक्तिनिर्णये तस्यां भ्रमात्वकल्पनमिति वाच्यम्। असञ्जातविरोधित्वेनौत्तरकालिकस्यैव प्रमात्वकल्पनात्[2]। ‘हरेऽवे’त्यादावेकादेशादिस्थले विनिगमनाविरहेण, कैश्चित्पूर्वरूपादिस्थले परलोपाद्यभ्युपगमेन व्याकरणानां कलहेऽवयवशक्तेर्दुरुपपादतया, प्राथमिकविशिष्टशक्तिग्रहे प्रमात्वकल्पनस्याऽऽवश्यकत्वाच्च। न च विशिष्टशक्त्यङ्गीकारे विशेषणाऽन्वयो न स्यादिति वाच्यम्। तत्सहितस्यैव वाक्यत्वात्। तदविवक्षायान्तु न दोषः। न च तत्र शक्तिभ्रमाद्बोधः। सर्वमतसिद्धलघुभूतबोधकताऽतिरिक्तायाः शक्तेरभावात्। पदपदार्थघटितायाः शक्तेर्भ्रमत्वाऽयोगाच्च। शक्तिकार्यस्य बोधस्य जायमानत्वेन स्वकल्पितन्यायाऽऽभासमात्रेण भ्रमत्वकल्पने बीजाऽभावाच्च। फलाऽभावाच्च। सर्वपूज्य-सर्वकर्तृ-परमेश्वरवाचकशक्तिकल्पनेऽन्येषां शक्तिभ्रमादेव बोधोपपत्तौ सर्वेषां शब्दानां शक्तिकल्पनाऽनापत्तेश्च। एतेन ‘भाषाशब्दानां न शक्तिरि’त्यपास्तम्।

यत्तु ‘भाषाणामनेकत्वाद्विनिगमनाविरहान्न शक्ति’रिति। तन्न। प्रत्येकमादाय विनिगमनाविरहस्याऽविशिष्टत्वात्। किञ्च संस्कृते एकत्वं किमेकाऽऽकारत्वं, सर्वजनव्यवहारयोग्यत्वं वा ?। नाऽऽद्यः। महाराष्ट्रभाषाया [3]अन्यदेशे व्यवहारेऽप्येकाऽऽकारत्वात्। द्वितीयेऽपि ‘सर्वजन’शब्देन तद्विदो गृह्यन्ते, उत सर्वेऽपि ?। आद्ये भाषाया अप्यविशिष्टत्वात्। द्वितीये संस्कृतेऽपि तदभावात्। अपण्डितैस्तेन व्यवहारस्य कर्तुमशक्यत्वात्।

ध्वनितश्चाऽयमर्थः ‘समानायामर्थाऽवगतावि’त्यादिभाष्येण। प्रक्रियादशायान्तु बोधवैलक्षण्यमस्त्येव। शक्त्या बोधे साक्षाच्छब्देनाऽर्थस्मरणम्। लक्षणायान्तु स्मृताऽर्थेनाऽर्थान्तस्मरणम्। गौण्यान्तु तन्निष्ठगुणसमानजातीयगुणवत्तासम्बन्धेन तत्राऽऽरोपः। अत एव ‘रघु’-‘यदु’शब्दयोरपत्ये लक्षणया साधुत्वं,

[1] ‘चरमवर्णशक्त्या’ इति ख. पाठः। [2] ‘अप्रमात्वकल्पनात्’ इति क. पाठः।
[3] ‘अन्यदेशेऽव्यवहारेऽपि’ इति ख. पाठः।

**बृहच्छब्दरत्नः**

सिंहशब्दस्य गौण्या। अत एव 'गौणमुख्ययोर्मुख्ये कार्यमि'त्यादिव्यवहाराः सङ्गच्छन्ते। स्पष्टं चेदं 'पुंयोगादाख्यायामि'त्यादौ भाष्यादिग्रन्थे इत्याद्यन्यत्र विस्तरः।

एतेन 'तिवादिस्मारितलकारादीनां बोधकत्वमि'त्यपास्तम्। लकार[1]मजानतां बोधाऽनापत्तेः। स्थानिनामनन्तत्वाच्च। तं विनाऽपि निर्वाहाच्च। अव्यवहृतत्वाच्च। स्मारकताऽवच्छेदकस्यैव शक्तताऽवच्छेदकत्वकल्पने लाघवाच्च। ननूत्पत्तेरभिव्यक्तेर्वा एकदाऽसम्भवेन वर्णसमूहरूपवाक्यज्ञानाऽसम्भव इति चेन्न। उत्तरवर्णप्रत्यक्षसमये तस्मिन्नव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्व([2]पूर्व)वर्णवत्त्वम्, एवं तदुत्तरवर्णप्रत्यक्षकाले[3]उपस्थितविशिष्टतद्वर्णवत्त्वं तस्मिन् सुग्रहमिति तादृशाऽऽनुपूर्वीघटितपदत्वस्येव, वाक्यत्वस्याऽपि सुग्रहत्वात्। अयमेव सखण्डवाक्यस्फोटादिशब्देनोच्यते। तत्र वर्णोऽप्येक एव। अनन्तवर्णकल्पने मानाऽभावात्। [4]तद्वर्णोत्पादकत्वेनाऽभिमतवायुसंयोगनिष्ठतद्वर्णजनकताऽवच्छेदकवैजात्यमादायैवोदात्तोऽनुदात्तो, ह्रस्वो, दीर्घस्तारो, मन्द्र इत्यादाविव, 'ककारो' 'गकार' इत्यादिप्रतीतिवैलक्षण्याऽसम्भवात्। अत एव 'सोऽयं गकार' इत्यादिप्रतीतिः। एवञ्चाऽव्यवहितोत्तरत्वसम्बन्धेन 'व'वत्त्वं टकारे गृह्यते। एतादृशपदज्ञानकारणतायाम् अविवादात् पर्यायेष्वपि परेषामिवाऽस्माकं तदवच्छेदिका आनुपूर्वीत्यनुपदमेवोक्तम्। तदर्थज्ञापकत्वज्ञानञ्च[5] ममाऽपि समम्। तच्च चरमवर्णश्रवणे एव। न च गत्वाऽवच्छिन्नप्रतियोगिताकभेदाऽभावस्तद्विषयः। व्यक्त्यतिरिक्तगत्वाऽनङ्गीकारात्। भिन्नेषु घटादिषु घटत्वाऽवच्छिन्नप्रतियोगिताकभेदाऽभावस्य सत्त्वात् 'सोऽयमि'तिप्रतीत्यापत्त्या व्यक्त्यभेदस्यैव तत्र विषयत्वस्याऽवश्यकल्प्यत्वाच्च। व्यक्त्यंशाऽभेदस्याऽपि भासमानस्य विनाबाधकं त्यागाऽयोगाच्च। न चोत्पत्तिप्रतीतिरेव बाधिका। प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेर्वर्णेष्वनुभवविरुद्धत्वात्। अत एव 'वर्णमुच्चारयती'ति प्रत्ययो, न तू'त्पादयती'ति। उच्चरितत्वञ्च ताल्वोष्ठसंयोगादिजन्याऽभिव्यक्तिविशिष्टत्वम्। किञ्चाऽभिव्यञ्जकनिष्ठोत्पत्त्यादेः परम्परासम्बन्धेन वर्णनिष्ठत्वेन प्रतीतेः, तादृशसम्बन्धेनैव वर्णनिष्ठत्वाऽभ्युपगमाच्च न भ्रमत्वम्। साक्षात्सम्बन्धांऽशे लाघवाद्भ्रमत्वं कल्प्यते। अत एव नील-पीतादिशब्देषु गुणिपरेषु परम्परासम्बन्धेन जातेरेव प्रवृत्तिनिमित्तत्वमित्यङ्गी चक्रुः। न च गकार-हकारयोरैक्यप्रतीत्यापत्तिः, भिन्नप्रतीत्यनापत्तिश्चेति वाच्यम्। व्यञ्जकविशिष्टयोर्भिन्नत्वेन दोषाऽभावात्। व्यवहारदशायामौपाधिकभेदस्याऽङ्गीकारात्, विशेष्यांऽशमादाय अभेद इष्ट एव।

ननु 'स्त्रीप्रभवोऽयं' 'शुकप्रभवोऽयमि'ति प्रतीतिस्तच्छ्रवणात्तदनुमानं च न

---

[1] 'अजानतो बोधाऽनापत्तेश्च' इति क. पाठः। [2] अयं पाठः ख. नास्ति।
[3] 'उपस्थितिविशिष्ट' इति क. पाठः।
[4] 'तत्तद्वर्ण' इत्युभयत्र क. पाठः। [5] 'तदर्थज्ञानञ्च' इति ख. पाठः।

बृहच्छब्दरत्नः

स्यादिति चेन्न। स्त्री-शुकादि-जन्यताऽवच्छेदकताल्वोष्ठसंयोगे, तदभिघातज-वायौ वा, तत्संयोगे वा विद्यमानवैजात्यस्य परम्परासम्बन्धेन स्फोटेऽङ्गीकृतत्वेनाऽदोषात्। तथा च प्रागनुभूतेनेदानीन्तनाऽनुभूतस्याऽभेदसिद्धौ 'तावत्कालस्थिरं चैनं कः पश्चान्नाशयिष्यती'ति न्यायेन नित्यतैव। अयमेवाऽखण्डवाक्यस्फोटः।

कः पदार्थोऽसाविति चेत्। भावः। काऽन्तर्भवतीति चेत्। त्वत्परिभाषितेषु द्रव्यादिषु माऽन्तर्भूत्। न ह्येतावता प्रमाणसिद्धं प्रत्याख्यातुं शक्यते। अनियत-पदाऽर्थवादे गौरवमिति चेत्। व्यक्तीयत्ता तवाऽपि नास्ति। [1]उपाधीयत्ता तु सर्वैः सुवचा, नित्यत्वाऽनित्यत्वादिना विभजनात्। विभाजकोपाधयस्तु घटविभाजको-पाधिवदनावश्यकाः।

यद्यप्यनन्ता एव वर्णा नित्याः, ह्रस्वत्वदीर्घत्वादिकन्तु वर्णनिष्ठमेवेति, 'अतो भिस ऐसि'त्यादिभिर्दीर्घादिष्वैसादिकं न। 'अभ्यासाऽर्थे द्रुता वृत्तिः, [2]प्रयोगाऽर्थन्तु मध्यमा। शिष्याणामुपदेशाऽर्थे[2] वृत्तिरिष्टा विलम्बिते'ति वृत्तित्रयसत्त्वेनाऽन्य-तमवृत्तौ तपरकरणे कृतेऽपि, [3]वृत्त्यन्तरे ऐसादिकं भवत्येव, तेषां ध्वनिनिष्ठत्वाऽङ्गी-कारादिति तपरसूत्रे भाष्ये उक्तम्। 'कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमि'ति च तत्र-तत्रोक्तं, तथाऽपि लाघवात्, पस्पशायां 'येनोच्चारितेने'त्येकवचननिर्देशाच्चाऽत्रैव तात्पर्यमिति कल्प्यते। प्रक्रियादशायां परमस्याऽनाश्रयणम्। के चित्त्वनन्तवर्णा-ऽङ्गीकारेऽप्येकं[4] पदमेकं वाक्यमिति प्रतीत्या वर्णाऽभिव्यङ्ग्यः स्फोटः। न चैकत्वप्रतीतिरौपाधिकी। पटेऽपि तथात्वाऽऽपत्तावयव्यसिद्ध्यापत्तेः।

जातिस्फोटवादिनस्त्वित्थमाहुः—'वायुसंयोगादावेव कत्वादिकमस्तु। यद्वा वर्णस्थले ध्वनिरप्यवश्यमभ्युपगन्तव्यः। न च तदुत्पादकशङ्खाद्यभावे[5] तदसम्भव इति वाच्यम्। दूरतो [6]वर्णाऽग्रहणे ध्वनिग्रहणस्याऽनुभवसिद्धत्वात्। वर्णोच्चारण-स्थले तत्तत्स्थानस्य जिह्वाया ईषदन्तःप्रतिघाते[7] वर्णाऽनुपलब्धेर्ध्वन्युपलब्धेश्च दर्शनाज्जिह्वाऽभिघातज-वायुकण्ठसंयोगादेर्ध्वनिजनकत्वकल्पनात्। तस्य च वर्णो-त्पत्तिस्थले सत्त्वात्तत्रैव प्रतिबध्यप्रतिबन्धकभावकल्पना स्यादिति विपरीतं गौरवञ्च। ([8]एवञ्च) तेषामेव कत्वाद्यधिकरणतया वर्णत्वसिद्धौ कृतं तदतिरिक्तस्फोटेन। 'सोऽयं

---

लघुशब्दरत्नः

त्वम्, लोके बोधजनकत्वात्। शास्त्रेण प्रकृति-प्रत्ययविभागव्युत्पादनेन विशिष्टपदस्यैव, तत्तदर्थबोधनद्वारा विशिष्टे पदे विशिष्टाऽर्थबोधकत्वमेव बोध्यते।

---

[1] 'जातीयत्ता' इति क. पाठः।
[2] 'प्रयोगार्थे' इति, अग्रे-'उपदेशार्थे' इति च क. पाठः।
[3] 'तदन्यतरे' इति क. पाठः।
[4] 'एकपदम्' इति क. ख. पाठः।
[5] 'शृङ्गाद्यभावेन' इति क. पाठः।
[6] 'वर्णग्रहणे' इति ख. पाठः।
[7] 'अन्तःपाते' 'अन्तर्घाते' इति वा. ख. पाठः।
[8] 'एवञ्च' इति ख. नास्ति।

'उपायाः शिक्षमाणानां बालानामुपलालनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' ।।इति ।

कथमन्यथा इङो द्विर्वचनम्, अडादयश्च स्युः। तथा च प्रत्याहाराह्निके 'अर्थवन्तो वर्णा' इति प्रघट्टके 'अध्येति' 'अधीते' इत्यत्रेकारोऽर्थवानि'ति भाष्ये स्पष्टमेवोक्तम्। एवं कन्प्रत्ययोऽप्यर्थवानेव। स्वार्थिकानां प्रकृत्यर्थे नैवाऽर्थवत्त्वात्। कल्पनामात्रमिदमिति चेन्न। उक्तोत्तरत्वात्। नैषा कल्पना शास्त्रकृत्संमतेति चेन्न। द्वितीयतृतीयचतुर्थतुर्याणि (२।२।३) इति सूत्रे पूरणात्स्वार्थेऽन्प्रत्ययस्य पूरणाऽर्थताया भाष्यकारैरेवोक्तत्वात्। प्रत्ययः (३।१।१) इति महासञ्ज्ञां कुर्वतः सूत्रकृतोऽपि संमतमेवेदम्।

यदपि 'ओषधेश्चे'त्यादि। तदपि न। अनित्यत्वेऽप्यौत्सर्गिकप्रवृत्त्या इष्ट-

---

**बृहच्छब्दरत्नः**

गकार' इति प्रतीतिस्तु 'सोऽयं दीप' इत्यादाविव सादृश्यात्तत्त्वाऽध्यवसायेन बोध्या। एवमप्यनेकेषां वर्णानां न शक्तत्वम्। किञ्च 'आकृत्यधिकरण'न्यायेन शक्यत्वमिव शक्तत्वमपि जातेरेव। सा च जातिरव्यवहितोत्तरत्वसम्बन्धेन घत्वविशिष्टं टत्वम्। यद्वा 'इदं घटपदमि'तिप्रतीत्या घटपदज्ञानत्वेन कारणत्वे कारणताऽवच्छेदककोटिप्रविष्टतया चाऽनेकवर्णनिष्ठजातिविशेष आवश्यकः। न च वर्णाऽऽनुपूर्व्यैव प्रतीतिकारणत्वयोर्निर्वाहः। घटत्वादेरपि संयोगविशेषविशिष्टमृदैवाऽन्यथासिद्ध्यापत्तेः।

वस्तुतस्तु जातिस्तदवच्छिन्नं चैतन्यं ब्रह्मस्वरूपमेव। तस्य चौपाधिकभेदेन भेदात् 'सरो' 'रस' इत्यादौ प्रतीतिवैलक्षण्यम्। यद्यपि 'स्थानिवदादेशः' 'स्थानेऽन्तरतमः', 'यथासङ्ख्यम्' 'अर्थवदधातुः' 'स्वं रूपमि'त्यादिसूत्रेषु, पस्पशाऽह्निकप्रत्याहाराऽऽह्निकयोश्च भाष्यकैयटादौ वर्णस्फोटादिपक्षा दृश्यन्ते, तथाऽपि जातिस्फोट एव तात्पर्यमि'ति पितामहचरणकृतवैयाकरणमतोन्मज्जनादौ।

प्रकृतमनुसरामः। अडादय इति। 'प्रातिष्ठते'त्यादौ। वार्त्तिकमते [1]आटोऽभावमभ्युपगम्य चोक्तम्। त्रपो इति। 'एङ्ह्रस्वादि'ति सूत्रे भाष्ये गुणाऽभावोऽपि दृश्यते।

---

**लघशब्दरत्नः**

'उपलालना' इत्यस्य 'भवन्ती'ति शेषः। न तु वास्तवा इति भावः। तदाह—असत्ये इति। आरोपिते इत्यर्थः। लोकानां तत्तच्छब्दजन्यबोधाऽनुपयोगित्वात्तत्त्वम्। सत्यं=विशिष्टशक्त्या बोधकं पदादीत्यर्थः। स्युरिति। 'अधिजगे' 'अध्यगीष्टे'त्यादौ। अर्थवत्त्वादिति। आरोपिताऽर्थवत्त्वादित्यर्थः। शास्त्रकृत्=भाष्यकृदादिः। संमतेति। 'तद्धितविषये' इति शेषः।

---

[1] 'अटोऽभावम्' इति ख. पाठः।

सिद्धेः। इष्टस्थलेऽप्यप्रवृत्तौ न्यायस्य निर्विषयत्वाऽऽपाताच्च। अनित्यत्वज्ञापनस्य कथं चिदावश्यकत्वेऽर्थवद्ग्रहणस्यैव ज्ञापकत्वसम्भवाच्च। उत्तराऽर्थस्याऽपि 'इह किञ्चित्त्रपो' इति न्यायेन इह करणस्य सफलत्वौचित्यात्। ओषधेश्च (६।३।१४२) इत्यादौ विभक्ति-कारकग्रहणयोरेवेत्थं सति प्रत्याख्यानसम्भवाच्चेति दिक्।

अधातुरिति किम्?। अहन्। नलोपो मा भूत्। न च कार्यकालपक्षे

---

बृहच्छब्दरत्नः

सम्भवाच्चेति। प्रत्याख्यानाऽभावे पदद्वयवत्पदत्रयमप्युक्ताऽर्थबोधकमस्त्विति भावः। न ह्येकाऽर्थस्यैकमेव बोधकमिति नियमोऽस्ति। न चैवमर्थवत्पदसामर्थ्यात्प्राशस्त्याऽर्थलाभ इत्यर्थपरभाष्यविरोध इति वाच्यम्। [1]स्वरितत्वप्रतिज्ञासामर्थ्यवर्णनपरतया भाष्यस्य सुयोजत्वात्। पूर्वसूत्रे चारितार्थ्यं वदतस्तवाऽप्युक्तरीतेरावश्यकत्वाच्च। दिगिति। दिगर्थस्तु 'अधातुरप्रत्यय' इति पर्युदास, उत प्रसज्यप्रतिषेधः?। नाऽऽद्यः। पर्युदासेनाऽर्थवत्त्वलाभ इत्यर्थाऽपेक्षया 'नञिवयुक्त'न्यायाऽनित्यत्वेनाऽर्थवत्पदेनैवाऽर्थवत्त्वलाभ इत्यर्थे विशेषाऽभावात्। नाऽन्त्यः। वाक्यभेदाऽसमर्थसमासकल्पने मानाऽभावात्। न च कार्यकालेति। यत्तु 'यथोद्देशपक्षेऽपि प्रत्ययाऽन्तत्वस्य भावित्वेन'उपसञ्जनिष्यमाणोऽप्यपवाद' इतिन्यायेनाऽकृतव्यूहपरिभाषया च सञ्ज्ञाया अभावस्योपपादयितुं शक्यत्वेन 'कार्यकालपक्षे' इति विशेषणवैयर्थ्यमि'त्याहुः। तन्न। पूर्वं फलाऽभावेन सञ्ज्ञाया अप्रवृत्तावीदृशे विषये कार्यकालपक्षस्यैव युक्तत्वात्। ध्वनितश्चाऽयमर्थः प्रगृह्यसञ्ज्ञाप्रकरणे भाष्ये। न च सुबुत्पत्तिः। सङ्ख्या-कारकादेरनन्वयात्। हनादीनां धातुप्रत्यये कार्यविधानेन तैर्बाधानाच्च। 'प्रत्ययः' 'परश्चे'त्यत्राऽव्यवहितपरत्वबोधनाच्च। न चाऽन्तरङ्गत्वादुत्सर्गतः कृतैकवचनस्य लोपसम्भवेन नोक्तदोष इति वाच्यम्। एवमपि प्रयोजना-

---

लघुशब्दरत्नः

औत्सर्गिकप्रवृत्तौ हेतुमाह—इष्टस्थलेऽपीति। चः पञ्चम्यर्थहेतुत्वाऽनुवादकः। कथञ्चिदिति। अनेन तदनावश्यकत्वमेवेति ध्वनयति। ननूत्तरत्र चरिताऽर्थस्य कथं ज्ञापकत्वमत आह—उत्तरार्थस्यापीति। इकोऽचि (७।१।७३) इति सूत्रे अज्ग्रहणस्योत्तराऽर्थतामुक्त्वा भाष्ये उक्तम्–'इह किञ्चित्त्रपो' इति। न लुमता (१।१।६३) इति निषेधाऽनित्यत्वज्ञापनद्वारा 'त्रपो' इत्यत्र गुणः फलमिति तदर्थः। इत्थं सतीति। लघुनाऽनेनैवाऽनित्यत्वज्ञापनमाश्रित्य न्यायाऽनुसरणेन तयोः प्रत्याख्यानसम्भव इति भावः। नलोप इति। सुबुत्पत्तिस्तु नोक्ता, भूवादयः (१।३।१) इत्यस्य लविधौ, तिबादिविधौ चोपस्थितेर्निरवकाशतया अपवादैस्तिबादिभिर्बाधात्। कार्यकालपक्षे इति। न च यथोद्देशेऽपि प्रत्ययाऽन्तत्वस्य भावित्वेनाऽकृतव्यूहपरिभाषया, फलाऽभावेन च सञ्ज्ञाया अप्रवृत्तिरितिवाच्यम्। अकृतव्यूहपरिभाषाया अनित्यत्वात्,

---

[1] 'स्वरितप्रतिज्ञा' इति क. ख. पाठः।

प्रत्ययाऽन्तत्वेन पर्युदासोऽस्त्विति वाच्यम्। प्रत्ययलक्षणेनोक्तपर्युदासाऽप्रवृत्तेर्न ङिसम्बुद्धयोः (८।२।८) इति निषेधेन ज्ञापितत्वात्। कथमन्यथा 'राजे'त्यादौ नलोपः स्यात्। अप्रत्ययः किम्?। 'हरिषु', 'करोषि'। अत्र

बृहच्छब्दरत्नः

ऽनुक्तेः। न च सुबन्तनिमित्तपदत्वमाश्रित्य नलोपः प्रयोजनम्। तस्य सर्वत्र प्रसक्तौ 'हनः सिच्' 'अनुदात्तोपदेशे'त्यादीनां वैयर्थ्याऽऽपत्तेः। तिङन्तनिष्ठपदत्वं निमित्तीकृत्य [1]प्रवृत्तिस्तु क्काचित्की।

पर्युदासोऽस्त्विति। 'अप्रत्यय'इति पर्युदासेन प्रत्ययाऽन्तभिन्नं, प्रत्ययाऽन्त-[2]सदृशं वोच्यते। तत्र प्रत्ययाऽन्तभिन्नत्वेन, प्रत्ययाऽन्तसदृशत्वेन वा बोधः। यद्वा यावन्तः प्रत्ययाऽन्तभिन्नास्तेषां तेन तेन रूपेणोपस्थितिः, तथा च 'अहन्नि'त्यत्र लोपस्य स्थानिवद्भावेन प्रत्ययत्वादार्थसमाजग्रस्तप्रत्ययाऽन्तत्वेन प्रातिपदिकत्वं न भविष्यतीति भावः। प्रत्ययलक्षणेनेति। प्रत्ययलक्षणसूत्रेण स्थानिवद्भाव एव विधीयते। अत एव 'स्थानिवत्सूत्रेणैव सिद्धे प्रत्ययलक्षणसूत्रमल्विध्यर्थं नियमाऽर्थमि'ति-भाष्योक्तं सङ्गच्छते। तथा चाऽशास्त्रीये प्रातिपदिकत्वाऽभावे कर्त्तव्येऽतिदेशो नेति भावः। ज्ञापितत्वादिति। न च कृदन्तत्वात्प्रवृत्तिः। 'अप्रत्यय' इत्यनुवृत्तेः। ध्वनितं चेदं भाष्ये। यत्तु 'सुब्लोपनिमित्तप्रत्ययलक्षणं ने'त्यस्मिन्नर्थे मानं, विशेषाऽपेक्षत्वात्, एवञ्च 'अहन्नि'त्यत्र तिङ्लोपनिमित्तप्रत्ययलक्षणस्य 'अप्रत्ययान्तस्ये'ति-निषेधे कर्त्तव्ये दुर्वारत्वेनाऽधातुपर्युदासो न कार्य' इति। तन्न। उक्तरीत्या एकवचनोत्पत्तेर्दुर्वारत्वेन 'हन्ति' 'भवती'त्यादौ 'नश्छव्यप्रशान्' 'एङः पदान्तादि'त्याद्यापत्तेः। किञ्च सत्ताद्यर्थमात्रप्रतिपादनविवक्षायां सुबन्तप्रयोगाऽऽपत्तिः।

अप्रत्ययः किमिति। यत्तु 'अप्रत्यय' इति पर्युदासादर्थवत्त्वे लब्धे 'उत्तराऽर्थत्वेऽपीह किञ्चित्रपो' इति न्यायेनाऽर्थवत्पदेनैकार्थीभावरूपाऽर्थवत्त्वस्य ग्रहणाद्धातु-प्रत्यय-पर्युदासो न कार्य' इति। तन्न। पर्युदासाऽभावे [3]उक्तकल्पनाऽनापत्तेः।

लघुशब्दरत्नः

असत्त्वाच्च। 'भविष्यति किं चित्फलमि'त्यभिसन्धिमात्रेणाऽत्र पक्षे सञ्ज्ञायाः प्रवृत्तेः प्रगृह्यसञ्ज्ञाप्रकरणे कैयटेनोक्तत्वाच्च। 'यथोद्देशपक्षेण पर्युदासे लक्ष्यसिद्धेः शङ्कासमाधाने अत्र निर्दले। न हि व्यवस्थितयोः पक्षयोरन्यतरेण लक्ष्ये सिद्धे, पक्षाऽन्तरेण शङ्काऽप्युचितेत्यर्थस्य प्रगृह्यसञ्ज्ञाप्रकरणे भाष्ये ध्वनितत्वादि'ति कश्चित्।

कथमन्यथेति। न च 'राजे'त्यादौ कृदन्तत्वात्प्रवृत्तिः। तत्राऽपि 'अप्रत्यय' इत्यस्य सम्बन्धात्। अत एव 'दाक्षी', 'दिदृक्षू' इत्यादौ परादिवद्भावेन न सुपो लुक्। न च

[1] 'प्रकृत्यप्रवृत्तिस्तु' इति ख. पाठः।
[2] 'सदृशं चोच्यते' इति क. पाठः।
[3] 'उक्तकल्पनाऽऽपत्तेः' इति ख. पाठः।

**सुप्-सिपोर्मा भूत्। अप्रत्ययाऽन्तः किम् ? । तत्रैव विभक्तिविशिष्टयोर्मा भूत्। न चाऽन्तवद्भावेन 'काण्डे' 'कुड्ये' इत्यादौ प्रातिपदिकत्वं स्यादेव, तथा च ह्रस्वो नपुंसके (१।२।४७) इति ह्रस्वत्वं, सोरुत्पत्तिश्च स्यादिति वाच्यम्। कार्यकालपक्षेणेष्टसिद्धेः।**

---

बृहच्छब्दरत्नः

'यस्मिन् ज्ञापिते यस्य चारिताऽर्थ्यं तत्तेन ज्ञाप्यमि'ति सिद्धान्तात्। उत्तरसूत्रेऽन्यस्याऽसम्भवेन कृत्तद्धितप्रत्ययाऽर्थाऽपेक्षया तस्यैव प्रशस्तत्वात्, कृत्तद्धितपदेन तदन्तस्याऽपि प्रतिपादयितुं शक्यत्वात्। [1]उत्तरसूत्रे तद्ग्रहेऽपि प्रकृतसूत्रे तद्ग्रहे मानाऽभावात्। पारमाऽर्थिकाऽर्थवत्त्वमात्रग्रहणे तस्य पदे, वाक्ये एव सम्भवेन सूत्रस्याऽसम्भवदुक्तिकत्वाऽऽपत्तेः। 'अहन्' 'व्यतिसे' इत्यादौ धातु-प्रत्यय-रूपपदे पारमाऽर्थिकाऽर्थवत्त्वस्य सम्भवेन धातुप्रत्ययपर्युदासस्याऽऽवश्यकत्वाच्च। अत एवाऽर्थवत्सूत्रे [2]"अर्थवत्त्वं सर्वं गृह्यते' इति कौस्तुभे पितामहचरणाः। ह्रस्वत्वमिति। न च नपुंसकत्वाऽभावान्न दोष इति वाच्यम्। वैयाकरणपरिभाषितलिङ्गस्य प्रातिपदिकतुल्यत्वेनाऽतिदेष्टुं शक्यत्वात्। वस्तुतस्तु 'ह्रस्वो नपुंसके' इत्यस्य 'वाच्यत्वसम्बन्धेन नपुंसके वर्त्तमानस्ये'त्यर्थोऽङ्गी क्रियते। तच्च 'काण्डे' इति समुदायस्याऽस्त्येव, अतस्तदंशे नाऽतिदेशाऽपेक्षेति बोध्यम्।

कार्यकालपक्षेणेति। परादिवद्भावेनैकाऽऽदेशस्य प्रत्ययत्वात्प्रत्ययाऽन्तत्वमार्थसमाजग्रस्तमस्तीति भावः। नन्वन्तादिवत्सूत्रेण स्थानिवद्भाव एव विधीयते। अत एव 'स्थानिवद्भावेनैव सिद्धे 'अन्तादिवच्चे'ति सूत्रं न कार्यमि'ति भाष्योक्तं

---

लघुशब्दरत्नः

[3]सुब्लोपविषयमेव ज्ञापकम्। 'असति बाधके प्रमाणानां सामान्ये पक्षपात' इत्यर्थस्याऽपि ज्ञापनात्। अन्यथा सूत्रोपस्थित-ङि-सम्बुद्धि-मात्रविषयता स्यादिति राजपुरुषाऽसिद्धिः। स्पष्टा चेयं रीतिः सार्वधातुकमपित् (१।२।४) इत्यत्र भाष्ये। प्रकृतसूत्रभाष्ये चेदं स्पष्टम्। अत्र[4] सुप्सिपोरिति। तयोः प्रातिपदिकत्वे, तत्सामर्थ्यादौत्सर्गिकैकवचने, तच्छ्रवणाऽऽपत्तिः। विभक्त्यर्थस्य लिङ्गं प्रति स्वरूपाऽयोग्यत्वेन न नपुंसकत्वाऽऽश्रयो विभक्तिलुक्। तत्सत्त्वे तु पदादित्वेन षत्वनिषेधाऽऽपत्तिर्दोष इति भावः। तत्रैवेति। [5]अत्राऽप्यौत्सर्गिकैकवचनाऽऽपत्तिः, सुपो धातु (२।४।७१) इति लुगापत्तिश्च, 'पचेरन्नि'त्यादौ नलोपाऽऽपत्तिश्चेति भावः। स्यादेवेति। पूर्वं विभक्त्युत्पत्तये जातस्याऽतिदेशेन विभक्त्यन्ते बुद्धिरिति भावः।

---

[1] 'उत्तरसूत्रे' इति क. ख. नास्ति।

[2] 'अर्थवन्तः सर्वे गृह्यन्ते' इति क. पाठः।

[3] 'सुप्लोप' इति लिखितेषु पाठः।

[4] 'अत्र' इति क. नास्ति।

[5] 'तत्राऽपि' इति क. पाठः।

**यथोद्देशेऽपि विभक्त्येकादेशो नाऽन्तवत्। सप्तम्यधिकरणे च (२।३।३६) इत्यादिनिर्देशात्। ह्रस्वो नपुंसके (१।२।४७) इति सूत्रे प्रातिपदिकग्रहणं वा [१]उक्तेऽर्थे सामान्याऽपेक्षं ज्ञापकमस्तु।**

---

बृहच्छब्दरत्नः

सङ्गच्छते। एवञ्चोक्तज्ञापकादेवाऽतिदेशलब्धप्रत्ययत्वं निमित्तीकृत्य 'अप्रत्ययस्ये'ति-पर्युदासस्याऽप्रवृत्तत्वेन प्रातिपदिकत्वात्कथं कार्यकालेनैवेष्टसिद्धिरित्यत आह—यथोद्देशेऽपीति। तथा च पक्षद्वयेऽपि ज्ञापकादेवेष्टसिद्धिरिति भावः। [२]एतेन 'दाक्षी' इति द्विवचने तद्धिताऽन्तत्वनिमित्ता सञ्ज्ञा दुर्वारे'ति परास्तम्। उत्तरत्राऽपि 'अप्रत्ययाऽन्तस्ये'त्यनुवृत्तेः स्वीकृतत्वात्। तत्र च सामर्थ्यात्तद्धितभिन्नप्रत्ययस्यैव ग्रहणात्। अत एव कार्यकालपक्षे 'राजकुमारी'त्यत्र विध्यर्थं समासग्रहणम्। न चैवमप्यतिदेशेन प्रत्ययाऽन्तत्वेऽपि स्वस्य प्रत्ययाऽन्तभिन्नत्वाऽनपायेन प्रातिपदिकत्वं दुर्वारमिति वाच्यम्। आदेशग्रहणसामर्थ्येनाऽतिदिश्यमानविरुद्धकार्यकारित्वाऽभावस्य पूर्वं सिद्धान्तितत्वात्।

सामान्येति। तेन प्रातिपदिककार्यमात्रस्याऽभावः। न च तिङन्तव्यावृत्त्या चरिताऽर्थम्। तस्य लिङ्गाऽप्रतिपादकत्वात्। अत एव 'वारिणी' इत्यादौ न दोषः। न च द्विकपक्षे लिङ्गस्य प्रत्ययेनैव प्रतिपादनाद्दोषो दुरुद्धर एवेति वाच्यम्। लक्ष्याऽनुरोधेनाऽत्र द्विकपक्षाऽनङ्गीकारात्[३]। 'शी' इति दीर्घोच्चारण-सामर्थ्येन वारणाच्च। 'प्रातिपदिकमि'त्यनुवृत्त्या सिद्धे सामर्थ्यस्य सुवचत्वाच्च।

---

लघुशब्दरत्नः

यथोद्देशेऽपीति। अपिना कार्यकालपक्षेऽपि। न हि तत्र पक्षे उपदेशेनैवैकवाक्यता, नाऽतिदेशेनेत्यत्र मानमस्तीति[४] अतिदेशैकवाक्यतयैव ह्रस्वप्राप्तेः सुवचत्वात्। [५]प्रातिपदिकग्रहणं वेति। नपुंसकवृत्तित्वस्य प्रातिपदिकधर्मत्वात् 'नपुंसके वर्त्तमानस्ये'त्यर्थेनैव प्रातिपदिकलाभे सिद्धे, तस्य व्यर्थत्वादिति भावः। [६]उक्तेऽर्थे=विभक्त्येकादेशस्याऽन्तवत्त्वाऽभावे। सामान्याऽपेक्षमिति। अन्यथा ह्रस्व एव न स्यात्। स्वाद्युत्पत्तिस्तु स्यादेवेति भावः। यद्यपीदं प्रातिपदिकग्रहणं सत्त्वप्रधानप्रातिपदिकग्रहणाऽर्थं, तेनाऽत्र न ह्रस्वः, मूलोक्ताऽर्थे ज्ञापिते चारिताऽर्थ्यं दुर्निरूपञ्च, सङ्ख्याकर्माद्ययोगात्स्वाद्युत्पत्तिरपि न, औत्सर्गिकमेकवचनमपि न[७], गमकं विना तदनुत्पत्तेः, सुपो धातु (२।४।७१) इति लुगपि न, धातुसाहचर्येण सुप्तिङितरसमभिव्याहृतस्यैव तेन लुग्विधानात्, एवं च प्रत्ययाऽन्तपर्युदासो न कार्य[८] इति सूत्रेशेषे भाष्ये ध्वनितम्,

---

[१] 'उक्ताऽर्थे' इति मुद्रितः पाठः।    [२] 'एतेन' इति क. ख. नास्ति।
[३] इतिः मुद्रितेषु त्रुटितः। [४] 'अङ्गीकारात्' इति ख. पाठः। [५] 'प्रातिपदिकेति' इति क. पाठः।
[६] 'उक्तेऽर्थे इति। विभक्त्येकादेशस्याऽन्तवद्भावाऽभावे' इति क. पाठः।
[७] एतदग्रे—'तथा सति सर्वतः सोरुत्पत्त्या 'स्वन्तं पदमि'त्येव सिद्धे, तिङादिग्रहणेन विभक्त्यन्तेभ्यस्तदनुत्पत्तेः। गमकं विना तदनुत्पत्तेश्च' इति क. घ. पाठः।
[८] 'कर्त्तव्य' इति मुद्रितेषु पाठः।

यत्तु वदन्ति—'प्रत्ययपर्युदासो न कर्त्तव्यः, प्रत्ययाऽन्तपर्युदासेनैव गताऽर्थत्वात्, व्यपदेशिवद्भावेन तस्याऽपि प्रत्ययाऽन्तत्वादि'ति। तन्न। प्रत्यय-ग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणात्, केवलस्य चाऽतथात्वात्। अन्यथा

बृहच्छब्दरत्नः

प्रत्ययग्रहणे इति। अयञ्चाऽर्थोऽङ्गसञ्ज्ञासूत्रे 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये' इति योगविभागाल्लभ्यते। परिभाषेयम्। 'प्रत्यये गृह्यमाणे यस्मात्तस्य विधिस्तदादि गृह्यते' इत्यर्थः। एतेन—'यस्मात्प्रत्ययविधिरि'ति ग्रहणं न कार्यम्। न च 'स्त्री ईयती'त्यादावतिव्याप्तिः। वतुपः स्त्रीशब्दादविधानेऽपि सोर्विधानेन, 'विधि'ग्रहणे कृतेऽपि दोषाऽनुद्धारात्। 'यस्येति'लोपस्याऽसिद्धत्वेनेयङोऽप्राप्तौ दोषाऽभावाच्च। 'तदादि'ग्रहणमपि शक्यमकर्त्तुम्। न च 'वदामी'त्यादौ दीर्घो न स्यादिति वाच्यम्। 'अतो दीर्घो यञी'ति सूत्रस्याऽऽरम्भसामर्थ्यादेव प्रवृत्तेः। 'प्रत्यये' इत्यपि व्यर्थम्। प्रकृतिमात्रस्याऽपि व्यपदेशिवद्भावेन तदादित्वेनाऽङ्गसञ्ज्ञा-सिद्धेः। 'यस्मात्प्रत्ययविधिरि'त्यनेनैव तस्य निमित्तत्वलाभाच्चे'ति परास्तम्। परिभाषायां पदानामावश्यकत्वात्। इकारशब्दस्य द्विवचने 'ई' इत्याकारके परत एकादेशस्य परादिवद्भावेन प्रत्ययत्वादङ्गत्वे 'स्त्री'शब्दस्येयङापत्तेश्च। उत्तरदले आद्येकाररहितपाठे तु 'यन्ती'ति रूपमिणः शतरि बोध्यम्। अत एव 'भनक्ती'-त्यादावतो दीर्घो यञीति दीर्घो न। पै वै गतौ, आभ्यां यङ्लुकि 'पापामि' 'वावामी'त्यादावतो दीर्घो यञीति सूत्रं चरिताऽर्थम्। प्रत्यासत्तिन्यायेनैकस्यैव प्रत्ययस्य ग्रहणेनाऽऽद्यो दोषो न युक्तः। एतेन 'प्रत्यये' इत्यपि व्यर्थमि'त्याद्यपास्तम्। किञ्च 'प्रत्यये' इति सप्तम्यन्ताऽभावे अङ्गसञ्ज्ञायाः प्रत्ययाऽन्ते, ततोऽप्यधिकेऽपि प्रवृत्तत्वेन प्रत्ययस्य निमित्तत्वाऽभावेनाऽङ्गेन प्रत्ययाऽऽक्षेपाऽनापत्तौ, 'वव्रश्चे'त्याद्य-सिद्ध्यापत्तेः। 'देवदत्त ओदनमपाचीदि'त्यादौ देवदत्ताऽऽदिशब्दात्पूर्वमडाद्यापत्तेश्च।

एतेन 'प्रत्यासत्त्या लुङादिनिमित्ताऽङ्गत्वस्य ग्रहणेन दोषाऽभावात् 'प्रत्यये' इति सप्तम्यन्तं सुत्यजमि'त्यपास्तम्। अङ्गसञ्ज्ञायाः प्रत्ययनिमित्तत्वाऽभावेन तन्निरूपिताऽङ्गत्वस्याऽप्रसिद्धत्वात्। एतेन 'प्रत्ययविशिष्टस्य, ततोऽप्यधिकस्य वा माभूदि'ति मूलग्रन्थो व्याख्यातः। तदन्तत्वन्तु प्रत्ययाऽऽक्षिप्तस्य धातु-प्रातिपदिका-द्यवयवकसमुदायस्य प्रत्ययेन विशेषणात् 'येन विधिरि'ति सूत्रेण लभ्यते।

अतथात्वादिति। यस्माद्विहितत्वं तदादित्वाऽभावादित्यर्थः। न हीदं व्यप-देशिवद्भावेन लब्धुं शक्यम्। एतेनोक्तन्यायस्याऽधिकग्रहणाऽभावे एव तात्पर्यमस्तु, न तु व्यपदेशिवद्भावबाधे, मानाऽभावादयुक्तत्वाच्चे'ति निरस्तम्। तद् ध्वनयन्नाह-—अन्यथेति। सञ्ज्ञाविधौ तदन्तांऽशाऽभावेऽपि 'यस्माद्विहित' इत्यंशोऽस्त्येवेति

लघुशब्दरत्नः

'पचेरन्' 'सर्वस्मिन्नि'त्यादौ नकारोच्चारणसामर्थ्येन न नलोपः, तथाऽप्येतावत्क्लिष्टकल्पनाऽपेक्षया लाघवात्प्रत्ययाऽन्तपर्युदास एवोचित इति भावः। अतथात्वादिति। यस्माद्विहितस्तदादि-

त्वदुक्तरीत्या सुप्तिङोरपि तदन्तत्वात् पदत्वं स्यात्। तथा च 'हरिषु' 'करोषी'त्यादौ षत्वं न स्यात्। सात्पदाद्योः (८।३।१११) इति निषेधात्।

'अधातुप्रत्ययावि'ति सिद्धे नञ्द्वयोपादानं स्पष्टाऽर्थम्। महासञ्ज्ञाकरणं श्रुत्यनुरोधात्। तथा चाऽऽथर्वणे पठ्यते—'को धातुः, किं प्रातिपदिकं, कः प्रत्यय' इति। डित्थादीन्यव्युत्पन्नानीहोदाहरणम्। 'अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमि'ति प्राञ्चः। यत्तु 'व्युत्पत्तिपक्षेऽपि निपाताऽर्थम्, अनुकरणाऽर्थं चेदमि'ति हरदत्तेनोक्तम्। तच्चिन्त्यम्। तत्राऽपि प्रकृत्यादिकल्पनसम्भवात्। वस्तुतस्तु व्युत्पत्तिपक्षेऽपि 'बहुपटव' इत्याद्यर्थं सूत्रम्। न चैवं 'बह्वच्पूर्व' इत्येव सूत्र्यतामिति वाच्यम्। 'मूलकेनोपदंशमि'त्यादौ

---

लघुशब्दरत्नः

त्वस्याऽशास्त्रीयत्वेन व्यपदेशिवद्भावाऽलभ्यत्वादिति भावः। निषेधादिति। यद्यपि व्यपदेशिवद्भावेनैकाच्त्वादेरिवाऽस्याऽप्यशास्त्रीयस्याऽतिदेशेन लाभसम्भवः, अत एव 'भवतो'त्यादौ भवतेः [1]शब्निरूपिताऽङ्गत्वसिद्धिः, 'व्यतिसे' इत्यादौ 'से' इत्यस्य पदत्वसिद्धिश्च, [2]'इरि'त्यादौ कार्यकालपक्षे तद्धिताऽन्तत्वनिबन्धनप्रातिपदिकत्वसिद्धिश्च, युवाऽपत्ये तत इञन्तत्वनिबन्धनफक्सिद्धिश्च, तथाऽप्यसहाय एव व्यपदेशिवद्भावो, न तु ससहाये, तेनेतराऽवयवे तदप्रवृत्तिः। स्पष्टा चेयं रीतिः आदेच उपदेशे (६।१।४५) इत्यत्र कैयटे। अत एव सभासंनयने व्यपदेशिवद्भावेन आकारस्य नाऽऽदित्वं, दरिद्राधातावाकारस्य नाऽन्तत्वम्। तथा सति वृद्धत्वप्रयुक्तश्छः, इवर्णाऽन्तत्वप्रयुक्तोऽच्प्रत्ययश्च स्यात्। ततोऽत्र न किंचिद्वैषम्यम्। लोकेऽपि [3]बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठ-कनिष्ठादिव्यवहारः। विजातीयकन्यादिसत्त्वे [4]तु एकस्मिन्नपि तथा व्यवहारो भवत्येवेति बोध्यम्। अत एव 'हरिण्वि'त्यादौ सोः पदत्वं न। 'निजौ चत्वार एकाच' इति भाष्यन्तु 'एकस्मिन्नि'त्यस्याऽपर्यालोचनयैकदेश्युक्तिरिति तात्पर्यम्। वस्तुतस्तु पर्युदासेनैवाऽर्थवत्त्वे लब्धे, अर्थवद्ग्रहणादत्र सूत्रेऽपि विभक्तीतराऽनपेक्षयाऽर्थबोधकत्वमर्थवत्त्वं गृह्यते। एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वमिवेदमप्यलौकिके आरोपितमस्तीति 'दक्ष अस् इ' इत्यवस्थायां प्रातिपदिकत्वाऽक्षतिः। तदा प्रत्ययस्य प्राप्तिरेव नेति केवलप्रत्ययपर्युदासो व्यर्थः। ध्वनितं चेदं प्रत्ययपर्युदासाऽनुक्त्या भाष्ये। सुप्तिङन्तम् (१।४।१४) इति सूत्रस्थ-भाष्य-कैय्यटयोरप्यत्रैव तात्पर्यमिति बोध्यम्।

इत्याद्यर्थमिति। अन्यथा विभक्त्यन्तस्योदात्तता स्यात्। प्रातिपदिकत्वे तु पूर्वं विभक्तिलुकि टकारोकारस्योदात्तत्वे, पुनर्जसि, टकाराऽकारोदात्तत्वसिद्धिरिति भावः।

---

[1] 'शप्निरूपित' इति लिखितेषु पाठः।

[2] 'इः' 'इयानि'त्यादौ' इति लिखितेषु पाठः।

[3] 'बहुपुत्रवत्त्वे' इति क. पाठः।

[4] तुः क. नास्ति।

**कृदन्तत्वेनाऽतिप्रसङ्गात्। न च समासग्रहणं नियमाऽर्थमिति निस्तारः। अर्थवत्सूत्राऽऽरम्भं विना समासग्रहणस्य नियमार्थत्वाऽयोगादिति दिक्।**

**कृत्तद्धितसमासाश्च (१।२।४६)। 'अर्थवदि'त्यनुवर्त्तते। तत्सामर्थ्या-त्तदन्तविधिः। न हि जहत्स्वार्थायां वृत्तौ कृतां, तद्धितानां चाऽर्थोऽस्ति। भूतपूर्वगतिलभ्यस्तु न प्रशस्तः। अजहत्स्वार्थायामपि न प्रत्ययमात्रेणा-ऽर्थपर्यवसानमित्यभिप्रेत्याऽऽह—कृत्तद्धितान्ताविति। 'लिट्' 'धुगि'-त्यादौ 'अधातुरि'ति, 'कर्त्ते'त्यादौ 'अप्रत्ययाऽन्तमि'ति पर्युदासे प्राप्ते, कृदन्ते विधिरयम्। नियमार्थमिति। न च प्रत्ययाऽन्तत्वेन पर्युदासे प्राप्ते**

---

बृहच्छब्दरत्नः

भावः। दिगिति। दिगर्थस्तु 'घटोऽस्ति हे युवते' इत्यस्य तद्धिताऽन्तत्वेन प्रातिपदिक-सञ्ज्ञा दुर्वारा। किञ्च 'बहुच्पूर्वमि'ति न्यासे लाघवाऽभावः। अर्थवत्पदस्यो-त्तराऽर्थमावश्यकत्वात्। अपि च 'बहुपटवस्तिष्ठन्ती'ति वाक्यस्य सञ्ज्ञा दुर्वारा। समुदायस्य बहुच्पूर्वत्वात्। अत एव प्रत्ययान्तत्व-सुबन्तत्व-तिङन्तत्वादिव्यवहा-राणामतिप्रसङ्गवारणाऽर्थं 'प्रत्ययग्रहणे यस्मात्प्रत्ययो विहितस्तदन्तस्य ग्रहणमि'ति-वचनमारभ्यते। न ह्यत्र तादृशं वचनमस्ति[१]। पदाऽन्तरदानेन दोषवारणे तु सुतरां गौरवमित्यलम्। ननु भाषाशब्दानामपि बोधकतारूपायाः शक्तेः सत्त्वात् प्रातिपदिकत्वं स्यादिति चेन्न। [२]तन्निमित्तकार्ये कृते वर्णानां न्यूनाऽधिकभावे, भाषात्वभङ्गाऽपत्तेः। साध्वनुशासनाच्च।

कृदन्ते विधिरयमिति। पूर्वसूत्रे पर्युदासस्य सत्त्वेन धातुप्रत्ययाऽन्ते विधिनिषेध-योरभावात् कृद्ग्रहणमविशेषादुभयत्राऽपि प्रवर्त्तते इति भावः। प्रसज्यप्रतिषेधे तु 'मध्येऽपवाद'न्यायेन, 'अनन्तरस्ये'ति न्यायेन च, 'येन नाऽप्राप्ति'न्यायेन च 'प्रत्ययाऽन्तस्य ने'ति निषेधबाधेन चारितार्थ्ये, 'निषेधाश्च बलीयांसो भवन्ती'ति-न्यायेनाऽधातुनिषेध एव कृद्ग्रहणस्य बाधकः स्यात्।

---

लघुशब्दरत्नः

कृदन्तत्वेनेति। न च समासविकल्पविधानस्य वैयर्थ्यम्। समासे एकस्वरश्रवणं, समासाऽभावे प्रातिपदिकत्वे तु पूर्वोत्तरपदयोर्भिन्नस्वरश्रवणमिति विशेषात्। 'दधि-उपदंशमि'-त्यादौ पक्षे प्रकृतिभावप्रवृत्तेरपि फलस्य वक्तुं शक्यत्वाच्च।

तत्सामर्थ्यादिति। अन्यथा सञ्ज्ञाविधित्वान्न स्यात्। न प्रत्ययमात्रेणेति। प्रकृतेरपेक्षणादिति भावः। [३]अधातुरितीति। कर्तृरूपाऽर्थस्याऽधिकस्य भानेऽपि, क्रिया-

---

[१] 'मस्तीति' क. ख. पाठः।

[२] 'तन्निमित्तकार्ये कृतवर्णानाम्' इति क. ख. पाठः।

[३] 'अधातुरिति' इति मुद्रितः पाठः।

विध्यर्थमस्त्विति शङ्क्यम् । वाक्यस्याऽप्रत्ययाऽन्तत्वात् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात् । ननु स्त्रीप्रत्यये तदादिनियमो निषिद्धः, एवञ्च 'राजकुमारी'त्यादौ विध्यर्थमस्त्विति चेन्मैवम् । अन्तरङ्गस्याऽपि ह्ल्ङ्यादिलोपस्य लुग्विषयेऽप्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्तेः । तत्र चाऽप्रत्ययाऽन्तत्वेन प्रवृत्तायाः सञ्ज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात् । अत एव 'गोमत्प्रिय' इत्यादौ नुमादयो न ।

बृहच्छब्दरत्नः

निषिद्ध इति । एतदर्थप्रतिपादकं 'स्त्रीप्रत्यये चाऽनुपसर्जनेने'ति वचनमेव 'ष्यङः सम्प्रसारणमि'ति सूत्रे भाष्यकृता पठ्यते । केचित्तु 'अङ्गसञ्ज्ञाविभक्तसूत्रे 'नेयङुवङ्स्थानावस्त्री'त्यतो'ऽस्त्री'त्यनुवर्त्त्य शब्दाऽधिकाराऽऽश्रयणेनाऽर्थपरत्वं सम्पाद्य, 'गौणमुख्य'न्यायेन, 'स्त्र्याख्यावि'त्यनुवर्त्त्य वा, प्रधानस्यैव ग्रहणादुक्ताऽर्थलाभ' इत्याहुः । एतेन 'कृद्ग्रहणे' इति परिभाषायाः कृत्सामान्यग्रहणे, कृद्विशेषग्रहणे वा यथा प्रवृत्तिस्तथा स्त्रीप्रत्ययसामान्यग्रहणे, स्त्रीप्रत्ययविशेषग्रहणे [1]वाऽस्याः प्रवृत्तिः । एवञ्च शङ्कैवाऽयुक्ते'ति मन्दोक्तमपास्तम् । 'गतिरनन्तर' इति सूत्रे कृद्ग्रहणपरिभाषाया उत्पन्नत्वेन धर्मिग्राहकमानबलादुक्ताऽर्थलाभेऽपि 'स्त्रीप्रत्यये' इति वचनस्य सङ्कोचकल्पने मानाऽभावात् । तद्धिताऽधिकारे 'ति'प्रत्ययपाठस्य वैयर्थ्याऽऽपत्तेश्च । स हि 'कुयुवतिरि'त्यादौ प्रातिपदिकत्वे सिद्धेऽपि, तद्धिताऽन्तत्वेन प्रातिपदिकत्वलाभाऽर्थम् । तेन 'फिषोऽन्त उदात्त' इत्यस्य पुनः प्रवृत्त्या पूर्वपदप्रकृत्तिस्वरबाधनम् । इदञ्च तदादिनियमाऽभावे एव सङ्गच्छते । एतेन 'लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताऽधिकार उत्तराऽर्थ' इति हरदत्ताद्युक्तमपास्तम् । सति प्रयोजने आचार्यस्याऽज्ञानकल्पनस्याऽयुक्तत्वादित्याह—सुलभत्वादिति । यत्तु 'स्त्रीप्रत्यये चाऽनुपसर्जनेने'ति वचनस्य प्रवृत्त्यङ्गीकारेऽकृतव्यूहपरिभाषया पूर्वमपि सञ्ज्ञा-

लघुशब्दरत्नः

वाचकत्वाऽक्षत्या धातुत्वाऽक्षतेरिति भावः । स्त्रीप्रत्यये इति । अनुपसर्जनस्त्रीप्रत्यये इत्यर्थः । तस्य येन केनाऽपि रूपेण ग्रहणे तन्निषेध [2]इत्यभिमानः शङ्कितुः । राजकुमारीति । नन्वत्र प्रातिपदिकत्वस्य न फलं, लिङ्गविशिष्टपरिभाषयैव तत्कार्यसिद्धेरिति चेन्न । प्रातिपदिकत्व-तद्वचाप्य-धर्माणां लिङ्गप्रत्ययरहिते दृष्टानां तद्विशिष्टेऽनयाऽतिदेशेन, तस्या अत्राऽप्रवृत्तेः । न हि [3]ङीब्रहिते 'राजकुमारे'त्यादौ तदस्ति । ङ्याब्ग्रहणं त्वन्याऽर्थमिति वक्ष्यते । शङ्कित्रभिमानाऽनुसारेणैवोत्तरयति—अन्तरङ्गस्यापीति । [4]सुलभत्वादिति ।

[1] 'चाऽस्याः' इति वा पाठः ।

[2] 'इत्यभिप्रायः' इति क. पाठः ।

[3] ङीप्रहिते' इति क. पाठः ।

[4] 'सुलभत्वादिति' । यथोद्देशे इदम्' इति क. ध. नास्ति ।

लुकः प्रागन्तरङ्गप्रवृत्तौ तु स्युरेव । नन्वेवमपि असमर्थमासे दश दाडिमादि-

बृहच्छब्दरत्नः

ऽनापत्तिः। किञ्च पूर्वं प्रवृत्तायाः सञ्ज्ञाया 'एकदेशविकृत'न्यायेन सत्त्वेऽपि, [1]'कार्य-कालपक्षेऽत्र दोषो दुरुद्धर एव, सुब्विध्येकवाक्यताऽऽपन्नसञ्ज्ञायाः प्रत्ययाऽन्तत्वेना-ऽप्रवृत्तेरि'ति। तन्न। पूर्वं सुब्विशिष्टस्य सञ्ज्ञायाः क्रियमाणत्वेन, तादृशसमुदाये प्रत्ययाऽन्तत्वस्य कालत्रयेऽप्यभावादुक्तपरिभाषाया अप्रवृत्तेः। लक्ष्याऽनुरोधेन यथोद्देशपक्षस्यैवाऽङ्गीकारात्। कृत्तद्धितसूत्रे 'प्रत्ययाऽन्त'पदस्याऽनुवर्त्तनाच्च।

अपि चैकदेशविकृतन्यायः स्थानिवत्सूत्रस्यैवाऽर्थः। स्थानिवत्सूत्रे तु प्राधान्या-त्कार्याऽतिदेश एव। प्रातिपदिकसञ्ज्ञाऽपि शास्त्रीयं कार्यमेव। कार्यकालपक्षस्तु 'कार्यप्रवृत्तिसमये कार्यविधायकैकवाक्यताऽऽपन्नस्य सञ्ज्ञाविधायकस्य प्रवृत्ति-रि'त्येव। सा चोपदेशेनैवेत्यत्र सङ्कोचे न किञ्चिन्मानम्। अतिदेशवाक्यस्याऽप्येक-वाक्यतायाः सुवचत्वात्, 'दिवः कर्म च' 'गतिबुद्धि' 'कर्त्तुरीप्सिततममि'त्या-दीनामनेकेषां 'कर्मणि द्वितीये'त्यादिभिरेकवाक्यताया दृष्टत्वात्। एवञ्चैकदेश-विकृतन्यायेन सञ्ज्ञाप्रवृत्तावपि, कार्यकालपक्षे दोषो दुरुद्धर एवेति तत्र-तत्राऽऽकर-ग्रन्थाः परास्ता' इत्याहुः। तच्चिन्त्यम्। अतिदेशेन हि पूर्वसञ्ज्ञाया आरोप-मात्रम्। सा च सञ्ज्ञा सुब्लुग्विध्येकवाक्यताऽऽपन्ना। तस्या आरोपेऽपि सुब्दुर्लभ एवे'त्याहुः। यदपि क्विबन्त'कुमारी'शब्देन 'गतिकारकोपपदे'तिवचनात्सुबुत्पत्तेः प्राक् समासे, प्रत्ययाऽन्तत्वात्पूर्वसूत्राऽप्रवृत्तिरि'ति। तन्न। उपसर्जनस्त्रीप्रत्यये तदादिनियमात्, 'कृद्ग्रहणे' इति परिभाषया कृदन्तत्वेन सिद्धेश्च।

लुकः प्रागिति। लुक्शब्देन चाऽत्र तत्प्रयोजकीभूताः समासादय उच्यन्ते। 'अन्तरङ्गानपी'ति न्यायोऽप्येवमेव। स्युरिति। नन्वकृतव्यूहपरिभाषया नुमादयो न भविष्यन्ति, हल्ङ्यादिलोपस्तु दुर्वार एव, समासात्पूर्वं लुकः प्राप्त्यभावेन, लोप-निमित्तविनाशाऽभावात्, लोपे, समासे च तद्विषये लुकोऽप्रवृत्तत्वेन सुतरां निमित्त-विनाशाऽभावाच्च, अत एवाऽल्लोपोऽन इति सूत्रे तपरकरणं चरिताऽर्थम्।

लघुशब्दरत्नः

यथोद्देशे इदम्। यदि त्वस्य निषेधस्य प्रत्ययग्रहणपरिभाषाशेषत्वम्, एवञ्च यथा सा प्रत्यय-ग्रहणे एव, न तु प्रत्ययाऽप्रत्ययग्रहणे इति उगितश्च (४।१।६) इति सूत्रे भाष्ये स्पष्टं, तथाऽयं निषेधोऽपि स्त्रीप्रत्ययमात्रग्रहणे, न तु स्त्रीप्रत्ययाऽस्त्रीप्रत्ययग्रहणे[2] इत्युच्यते, तदा न दोषः। समुदायस्य प्रत्ययाऽन्तत्वाऽभावादिति दिक्।

असमर्थसमासे इति। 'असूर्यम्पश्या' इत्यादावित्यर्थः। धर्मिग्राहकेति। प्राति-

[1] 'कार्यकालपक्षेऽपि' इति क. ख. पाठः।

[2] इतोऽग्रे 'अत-एव 'घटोऽस्ति हे युवते' इत्यादौ तद्धितान्तत्वेन न प्रातिपदिकत्वम्। समासग्रहणकृतनियमेन परत्वाद्बाधाच्च इत्युच्यते' इति क. घ. कुण्डलितः पाठः।

वदनर्थके विध्यर्थमस्त्विवति चेन्न। 'अर्थवदि'त्यस्याऽनुवृत्तेरुक्तत्वात्। कथं तर्हि असमर्थसमासे सञ्ज्ञेति चेत्। धर्मिग्राहकमानादेवेति गृहाण।

---

**बृहच्छब्दरत्नः**

त्वदुक्तन्यायस्तु नाऽस्त्येवेति चेन्न। हल्ङ्याब्यादिसूत्रे परस्परसाहचर्येण सुतिसीनानामेव ग्रहणेन सुप्त्वजात्याक्रान्ते तस्मिन्नेव प्रयोगे लुकः प्राप्तत्वेनाऽकृतव्यूहपरिभाषाया दुर्वारत्वात्। अत एव 'समर्थग्रहणं परिभाषायां ज्ञापकमि'ति भाष्यकारोक्तं सङ्गच्छते। अत एव 'गोमत्प्रिय' इत्यादौ नुमादयो न। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति परिभाषा त्वकृतव्यूहपरिभाषाऽपेक्षया भिन्नैवे'ति कश्चित्।

अनुवृत्तेरिति। न च कृत्तद्धितयोरेव विशेषणम्। सङ्कोचे मानाऽभावात्। द्वन्द्वसमासाऽनापत्तेश्च[१]। न ह्यन्यतमस्य पाण्डित्ये 'देवदत्त-यज्ञदत्त-विष्णुमित्राः पण्डिता' इति प्रयुज्यते। साहित्यविशिष्टैकपदोपस्थाप्यत्वाऽविशेषेण सर्वत्राऽन्वयस्योचितत्वादि'ति वक्ष्यते। अत एव 'पूर्वशालाप्रियः' 'पूर्वघटप्रिय' इत्यादौ 'द्वन्द्वतत्पुरुषयोरुत्तरपदे' इतिवचनेनाऽवाऽन्तरतत्पुरुषे प्रातिपदिकत्वेनैकपदे, पदत्रये वाऽर्थवत्त्वेऽपि, पदद्वयेऽर्थवत्त्वकल्पने मानाऽभावात्। साहचर्येण प्रशस्ताऽर्थवत्त्वस्यैव ग्रहणाच्च। न चैवमर्थवद्ग्रहणाऽनुवृत्तेः सामर्थ्यात्प्रशंसायां मतुबिति पूर्वोक्तं विरुद्धचेत। उपरञ्जकतया यथाश्रुताऽर्थप्रतिपादकेनाऽपि कृत्तद्धितयोरन्वयसम्भवादिति वाच्यम्। 'कृत्तद्धितौ,' 'समासश्चे'ति भिन्नसूत्रद्वये कर्त्तव्ये, एकसूत्रेणोपरञ्जकतया विशेषणाऽन्वयाऽभावस्य बोधनात्।

असमर्थेति। तत्त्वञ्च परस्परमनन्वयात्। न च पार्ष्ठिकाऽन्वयोऽस्त्विवति वाच्यम्। तस्योपपादयितुमशक्यत्वात्। साकाङ्क्षितविषयकस्य तस्य सर्वत्र कल्पने मानाऽभावात्, फलाऽभावात्, गौरवाच्च। न चैकक्रियाऽन्वयित्वमेव सामर्थ्यम्। असमर्थसमासोच्छेदाऽऽपत्तेः। 'कुतः सर्वो मृत्तिकया' 'घटो न भवती'-त्यादौ समासाऽऽपत्तेश्च। न च सूर्यपदेन तत्कर्मकक्रियाया लक्षितत्वेनाऽन्वयोऽस्तीति वाच्यम्। चकारादेरिव दृशेरपि प्रयोगाऽनापत्तेः। धर्मिग्राहकेति। 'समर्थः पदविधिरि'ति परिभाषया समासस्याऽप्राप्तत्वेन तदंशे ज्ञापकस्याऽऽवश्यकत्वे सुबुत्पत्तावपि तदेव ज्ञापकमाश्रयणीयम्। न च 'असूर्यललाटयोरि'त्यादौ 'सुपी'त्यधिकारात्तत्सिद्धिरिति वाच्यम्। असम्भवेन तदसम्बन्धात्। मन्मते तु सञ्ज्ञाप्रवृत्तिनिमित्तमपि प्रत्ययविधायकेनैव विधीयते, अत एव प्रकृत्यैकदेशे सुबर्थाऽन्वयः।

---

**लघुशब्दरत्नः**

पदिकसञ्ज्ञा—धर्मः, तद्धर्मी-असमर्थसमासः, [२]ग्राहकमानं—खश्विधायकम्। अन्यथा परस्पर-

---

[१] चकारः क. ख. नास्ति।

[२] 'ग्राहकं मानम्' इति मुद्रितेषु पाठः।

**असूर्यललाटयोः (३।२।३६) [1]इत्यनेन हि असूर्यशब्दे उपपदे खश् विधीयते। उपोच्चारितं पदं चोपपदम्। पदञ्च सुप्तिङन्तमिति।**

बृहच्छब्दरत्नः

असूर्यशब्दे उपपदे इति। एतेन 'द्वितीयाऽन्तस्योपपदत्वमि'ति वदन्तः परास्ताः। न हि द्वितीयान्तं सप्तम्या निर्दिष्टं, येनोपपदसञ्ज्ञां लभेत। अन्वर्थसञ्ज्ञाबलादधिकारसामर्थ्यात्तत्प्रकृतिकसमुदायस्य सुबन्तत्वम्। एतेन असूर्यादिशब्दानां तत्प्रकृतिकसुबन्ते लक्षणायाः सत्त्वात्तदन्तस्योपपदत्वमि'त्यपास्तम्। लक्षणायां मानाऽभावात्, अनुवृत्त-'सुपी'तिपदे एव लाघवात् सुप्प्रकृतौ[2] लक्षणाया युक्तत्वात्। 'कर्मण्यणि'त्यादौ तदभावेनैकरूप्यस्यैव न्याय्यत्वाच्च। एतेन 'स्तम्बेरम' इत्यत्राऽधिकरणत्वात् सप्तमी, कारकत्वात्प्रकृतिस्वरश्चे'ति 'कारके' इति सूत्रस्थाऽऽकरग्रन्था[3] व्याख्याताः। न चैकाऽऽदेशस्य पूर्वाऽन्तत्वेनोपपदत्वादेव सिद्धिरिति वाच्यम्। कार्यकालपक्षे दोषस्योद्धटत्वात्। अर्थसञ्ज्ञायाः सत्त्वेन सुपोऽपि वाच्यकोटौ प्रवेशेन उभयत आश्रयणेऽन्तादिवद्भावाऽभावाच्च। किञ्च सप्तमीस्थत्वमशास्त्रीयमकाराऽन्तनिष्ठं पूर्वाऽन्तत्वेन लब्धुमशक्यम्। अत एव 'स्तम्बशब्दत्वं पूर्वाऽन्तत्वेन, उपपदसञ्ज्ञा तूपदेशेनैवे'ति निरस्तम्। यत्तु 'पञ्चकप्रातिप्रदिकाऽर्थपक्षे प्रातिपदिकमात्रोपपदेऽणादिव्यावृत्त्यर्थं महासञ्ज्ञाकरणमि'ति। तन्न। कर्मादिद्योतकविभक्त्यसमभिव्याहारे प्रातिपदिकेन तस्य वक्तुमशक्यत्वात्। समीपवाच्युपशब्दोपादानाद्व्यवहितेऽपि 'मा भूवन्नि'त्यादावुपपदत्वमस्त्येव। पाठक्रमादार्थक्रमस्य बलवत्त्वेन क्रियायामन्वयादव्यवहितत्वमस्त्येवेत्यग्रे निरूपयिष्यामः। 'कुम्भकार' इत्यादीनामलौकिकविग्रहे षष्ठ्या एव प्रवेशः। कृत्प्रकृत्यर्थं प्रति कर्मत्वात्। अतएवाऽऽक्रोशविवक्षायां 'षष्ठ्या आक्रोशे' इत्यलुकि 'कुम्भस्य-कार' इति भवत्येव। ध्वनितं चेदमुपपदमतिङिति सूत्रे भाष्ये। 'उपपदमतिङि'ति सूत्रे 'उप'शब्देन-उपपदप्रकृतिकसुबन्तमुपपदञ्च सुबन्तं गृह्यते इति वक्ष्यामः। नन्वेवमपि शशशृङ्गादिसमासानां निरर्थकानां प्रातिपदिकसञ्ज्ञाऽर्थं समासग्रहणमावश्यकमिति। अत्रोच्यते—अनिर्वचनीयख्यातेरङ्गीकारेण तत्र-तत्राऽनिर्वचनीयं शृङ्गादिकमस्त्येव। यद्वा शश-शृङ्गादिशब्दानां विशकलितं प्रसिद्धं शश-शृङ्गादिकमारोपितसम्बन्धं शक्यं,

लघुशब्दरत्नः

मसम्बन्धेनैकार्थीभावाऽभावात्समासो दुर्लभः स्यात्। असूर्यशब्दे इति। तत्प्रकृतिके सुबन्ते इत्यर्थः। 'सुपी'त्यधिकारात्, 'उपपदमि'ति महासञ्ज्ञाकरणाच्च। तदेतदाह—पदञ्चेत्यादि। शशशृङ्गादिपदानाञ्च बौद्धे तस्मिन् शक्तिरिति न तदर्थमपि समासग्रहणमिति बोध्यम्।

[1] 'इति हि' इति लिखितेषु पाठः। 'अनेन' इति तु तत्र नास्ति।

[2] 'सुप्रकृतौ' इति क. ख. पाठः।

[3] 'कैयटादय आकरग्रन्थपदेनाऽत्र ग्राह्याः। 'समावेशस्य च प्रयोजनं—'स्तम्बेरम' इत्यादावधिकरणत्वात्सप्तमी, कारकत्वात्कृदन्तस्योत्तरपदस्य प्रकृतिस्वर' इति हि कैयटः।

नियमशरीरमाह—यत्र संघाते इत्यादि । 'पूर्वो भाग' इत्युपलक्षणम् । 'उत्तरस्तु प्रत्ययो ने'त्यपि बोध्यम् । अन्यथा 'जन्मवानि'त्यादौ सञ्ज्ञा न

बृहच्छब्दरत्नः

गवादिष्वनुभूतं विषाणं शशमस्तकवर्त्तितया बुद्ध्योत्प्रेक्ष्य तस्यैवाऽभिधानाय शशविषाणादिशब्दानां प्रयोगात् । अतः पूर्वसूत्रेणैव सिद्धिः । यदि वास्तवसम्बन्धेन बहिः सन्तमर्थं शब्दा अभिदधीरंस्तर्हि 'घटोऽस्ति' 'घटो नाऽस्ती'ति च प्रयोगो न स्यात् । पदार्थसत्त्वे पौनरुक्त्यात्, तदभावे बाधनात् । अत एव 'अस्य सूत्रस्य शाटकं वये'त्यादि सङ्गच्छते । 'कमलवनोद्घाटनं कुर्वते' इत्यादौ कर्त्तृगामित्वविवक्षायामात्मनेपदमि'त्याकरग्रन्थानामयमेवाऽऽशयः । अस्मिन्नर्थे 'तदाद्याचिख्यासायामि'ति सन्प्रयोगोऽपि मानम् । किञ्चाऽर्थवत्त्वं बोधकत्वम् । तच्च शशशृङ्गादावक्षतम् । अत एव 'अक्षौहिणी' 'रथन्तरा'दिशब्दाऽवयवानां प्रातिपदिकत्वम् । अत एवेदृशविषये समासादिविधायकशास्त्राणां प्रवृत्तिः । अत एव 'प्रातिपदिकमि'ति महासञ्ज्ञाकरणञ्चरिताऽर्थम् । 'बोधकशब्दमात्रे इयं सञ्ज्ञे'ति हि तदर्थः । एतेन 'वेदेऽपि महासञ्ज्ञया व्यवहारः किमर्थं कृत' इति प्रश्ने मूकतैवोत्तरमि'ति मन्दोक्तमपास्तम् । वेदाऽक्षराणामध्ययनादावदृष्टोत्पत्त्यर्थमावश्यकत्वाच्च । शाब्दबोधे न बाधज्ञानं प्रतिबन्धकं, नाऽप्ययोग्यतानिश्चयः प्रतिबन्धको, नाऽपि योग्यताः निश्चयः कारणम् । अत एव मिथ्याऽभिशाप-गालिदान-रूपकादि-काव्यज-सुखाद्यनुभवः, व्युत्थं प्रति शब्दो न मूकस्तत्खण्डनाऽर्थं प्रवृत्तिश्च ।

एतेन [1]'एष वन्ध्यासुतो याती'त्यादौ पदार्थोपस्थितिमात्रं, न शाब्दबोध' इति नैयायिकोक्तमपास्तम् । सुखाद्युत्पत्तौ प्रवृत्ताविव विशिष्टज्ञानस्यैव हेतुत्वात् । सर्वत्रैव तथात्वाऽऽपत्तौ शब्दप्रामाण्योच्छेदाऽऽपत्तेश्च । 'शाब्दयामी'त्यनुभवविरोधाऽऽपत्तेश्च । 'वह्निना सिञ्चेदि'त्यत्र प्रवृत्तिः परं नाऽऽपाद्या, प्राक्तनबाधेनाऽप्रामाण्यशङ्कायामेव जायमानज्ञानाऽजननात्, तच्छून्यज्ञानस्यैव प्रवृत्तावुपयोगिनोऽसत्त्वात् । एतेन 'नैनं छिन्दन्ति शस्त्राणि, नैनं दहति पावकः । न चैनं क्लेदयन्त्यापो, न शोषयति मारुत' इत्यादि व्याख्यातम् । शशशृङ्गाऽऽदिपदेषु पदप्रकारक एव बोधः, शाब्दबोधे शब्दस्याऽपि विशेषणतया भानाऽङ्गीकारात् । तत्र 'इदं कचिच्छक्तं, साधुपदत्वादि'त्याकारकस्तद्ग्रहो हेतुः । स च शक्याऽनुपस्थितावपि भवतीत्यन्यत्र विस्तरः ।

उत्तरस्तु प्रत्ययो नेति । पूर्वभागप्रकृतिकप्रत्ययाऽभावोऽत्र विवक्षितः । तेन

लघुशब्दरत्नः

यत्र सङ्घाते इतीति । 'अर्थवती'ति शेषः । सजातीयाऽपेक्षनियमस्यौचित्यादिति बोद्धव्यम् । 'प्रत्ययो ने'त्यस्य पूर्वभागप्रकृतिकप्रत्ययो नेत्यर्थः । तेन 'राजा-इयानि'त्यादौ न दोषः ।

जन्मवानित्यादाविति । तत्र पूर्वभागस्य पदत्वादिति भावः । ननु तद्धितग्रहण-

[1] 'एष' इति क. ख. नास्ति ।

स्यात्। तद्धितग्रहणस्य औपगवादौ कृताऽर्थत्वात्। पूर्वो भागः पदमिति किम्?। बहुज्विशिष्टस्य प्रातिपदिकसञ्ज्ञा यथा स्यात्। तेन 'बहुपटव' इत्यत्र प्रथमजसो लुकि, 'बहुपटु'शब्दस्य चित्स्वरे, पुनर्जसि, उपोत्तमोदात्तत्वं सिद्ध्यति। यद्वा प्रकृतिप्रत्ययभावाऽनापन्नसंघातविषयको नियमोऽस्तु। न चाऽऽद्यपक्षे 'राजपुरुषावि'त्यादौ 'पुरुषावि'त्यादेः सञ्ज्ञा स्यादिति वाच्यम्।

**बृहच्छब्दरत्नः**

'राजा-इयानि'त्यत्र[१] प्रातिपदिकत्वं न। पूर्वो भागः पदमितीति। 'पद'शब्देन चाऽत्रोत्तरभागोद्देश्यकभिन्नोत्तरखण्डाऽर्थाऽन्वयि अर्थवद् गृह्यते। तेन 'गवित्ययमाहे'-त्यादौ 'गो' इत्यादीनां सुबन्तत्वाऽभावेऽपि न समुदायस्य प्रातिपदिकत्वम्। 'नास्तिक' इत्यत्र तु 'नास्ती'त्यखण्डो निपातः। 'निपातसमुदायात्प्रत्यय' इति पक्षे नञ्मात्रस्य पूर्वखण्डे [२]क्रियमाणेऽप्युत्तरखण्डाऽर्थाऽन्वयित्वाऽभावेन न दोषः। अत एव [३]'वृषण्वसुः' 'वृषणश्व' इत्यत्र समासे 'वृषण्वस्वश्वयोरि'त्यनेन भत्वात् [४]सर्वसमासे पूर्वभागस्य पदत्वाऽभावेनेदृशाऽर्थस्य दुर्लभत्वादि'त्यपास्तम्।

पुरुषावित्यादेरिति। 'उत्तरपदत्वे चाऽपदादिविधावि'ति प्रत्ययलक्षणनिषेधेन,

**लघुशब्दरत्नः**

सामर्थ्यम्। तत्राऽऽह—तद्धितेति। तत्र पूर्वभागस्य [५]भत्वात्। 'पूर्वो भागः पदमि'त्यत्र च पदशब्देन पदसञ्ज्ञकग्रहणमिति भावः।

नन्वत्र पक्षे 'गवित्ययमाहे'त्यादौ दोषः, 'गो' इत्यादीनां सुबन्तत्वाऽभावेन पदत्वाऽभावात्, 'वृषण्वसुरि'त्यादिसमासे, पूर्वभागस्य भत्वेन तत्साजात्येन 'पूर्वो भागः पदमि'त्यर्थ-लाभाऽसम्भवश्चेत्यत आह—यद्वेति। प्रकृतसूत्रे भाष्ये तु 'अर्थवत्समुदायानां समासग्रहणं नियमाऽर्थमि'त्युक्तम्। [६]अत्र तन्त्रेण षष्ठीतत्पुरुषः, कर्मधारयश्च। तत्र षष्ठीसमासे 'अर्थवदि'-त्यस्य स्वातन्त्र्येणाऽपि प्रयोगाऽर्हाऽर्थवदित्यर्थः। 'गवित्ययमाहे'त्यादावनुकरणस्याऽनितिपरस्याऽपि प्रयोगसत्त्वेन तत्त्वमस्त्येव। प्रकृति-प्रत्यय-समुदायस्य तु न व्यावृत्तिः। प्रत्ययस्य स्वातन्त्र्येण प्रयोगाऽर्हाऽर्थवत्त्वाऽभावात्। सरूपसूत्रे भाष्ये 'सुबन्तानामित्यनेनेदमेवोपलक्ष्यते' इति स्पष्टमेव कैयटेनोक्तमिति बोद्धव्यम्। [७]पुरुषावित्यादेरिति। तत्पूर्वभागस्य 'उत्तरपदत्वे चेति

१ अस्य–'राजा-इयानि'ति समुदायस्य प्रातिपदिकत्वाऽऽपत्तिर्नेत्यर्थः।

२ 'क्रियमाणेऽपि' इति क. ख. पाठः। भावप्रकाशे तु नास्ति।

३ 'वृषण्वसुः' इति ख. नास्ति।

४ 'सर्वेति। सर्वेषु समासेषु पूर्वभागस्य पदत्वाऽभावः, क्वचिद्भत्वेन व्यभिचारादित्यर्थः।

५ 'भत्वात्। पूर्वो भागः पदमिति। अत्र च पदशब्देन' इति रीत्या लिखितेषु पाठः।

६ 'तत्र' इति क. घ. पाठः।

७ 'पुरुषावित्यादेरिति। तस्य तत्प्रकृतिकप्रत्ययत्वाऽभावादिति भावः। **वाक्यस्येति'** इति क. ग. घ. पाठः। 'परस्य तत्प्रकृतिकप्रत्ययत्वाऽभावादिति भावः। तत्पूर्वभागस्योत्तरपदत्वे चेति निषेधेनाऽपदत्वादिति बोध्यम्। **'अर्थवत्त्वेनैवेति'** इति घ. पाठः।

अर्थवत्त्वेनैव वारणात्। प्रत्ययाऽर्थो हि विशिष्ट एवाऽन्वेति, न तूत्तरपदाऽर्थमात्रे, येन 'पुरुषावि'त्यस्याऽर्थवत्त्वं स्यात्।

नियमफलमाह—तेनेत्यादि। नन्वेवमपि 'मूलकेनोपदंशमि'त्यादौ वाक्यस्य सञ्ज्ञा दुर्वारा, कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणादिति चेन्मैवम्। समासग्रहणकृतनियमेन परत्वाद्बाधात्। एवञ्च 'कृत्तद्धिते'तिसूत्रे कृद्ग्रहणपरिभाषा नोपतिष्ठत एव, निष्फलत्वादिति तत्त्वम्।

---

### बृहच्छब्दरत्नः

भाष्ये 'असर्वनामस्थाने यची'ति पदत्वमात्रस्य निषेधेन, जहत्स्वार्थायां वृत्तावानर्थक्याच्च दोषशङ्केति भावः।

वाक्यस्य सञ्ज्ञेति। न च समासविकल्पसामर्थ्यान्नेति वाच्यम्। व्यवहितविपरीत-प्रयोग-सम्पादनेन चारितार्थ्यात्। किञ्च प्रातिपदिकत्वे शकाराऽकारस्योदात्तत्वेऽपि, 'गतिकारकोपपदात्कृदि'त्युत्तरपदप्रकृतिस्वरेण 'लिती'ति [१]'द'शब्दाऽकारस्योदात्तत्वस्य पक्षेऽभावसम्पादनेन समासविकल्पस्य चारितार्थ्यात्। दध्युपदंशादौ 'न समासे' इति निषेधस्य[२] पक्षेऽप्रवृत्त्यर्थं तस्याऽऽश्यकत्वाच्च। स्पष्टञ्चेदं 'पुंयोगादाख्यायामि'ति सूत्रे भाष्य-कैय्यटयोः।

समासग्रहणेति। यत्तु 'पर्युदासेनैवाऽर्थवत्त्वे लब्धेऽर्थवद्ग्रहणमर्थवानेव योऽर्थवानित्येतदर्थलाभाऽर्थम्। तेनाऽर्थवदवयववाक्यस्य ने'ति। तन्न। त्वदुक्ताऽर्थस्याऽशब्दाऽर्थत्वात्, 'बहुपटव' इत्याद्यसिद्ध्यापत्तेश्च। परत्वाद्बाधादिति। ननु 'नियमस्य निषेधमुखेन प्रवृत्तिरि'ति पक्षे लक्षणया 'वाक्यस्य ने'त्यर्थस्य निष्पन्न-

---

### लघुशब्दरत्नः

निषेधेनाऽपदत्वात्, परस्य तत्प्रकृतिकप्रत्ययत्वाऽभावादिति भावः। अर्थवत्त्वेनैवेति। [३]उत्तरपदस्य [४]कार्यित्वाऽभावेन तन्निषेधाऽप्रवृत्तेश्चेत्यपि बोध्यम्। वाक्यस्येति। कृदन्तत्वादिति भावः। तदाह—कृदिति। न चाऽस्य भुजौ करणत्वेनोपदंशं प्रति न कारकत्वम्। मूलकस्योपदंशे कर्मत्वेनाऽप्यन्वयो[५], विभक्तिस्तु प्रधानाऽनुरोधिकरणत्वकृता तृतीयैवेति तं प्रत्यपि कारकत्वमित्याशयात्। परत्वाद्बाधादिति। नियमस्याऽर्थतो निषेधेऽपि तात्पर्येणाऽर्थवत्सूत्राऽपवादस्याऽस्य परत्वेन कृदन्तत्वप्रयुक्तस्याऽपि निषेधे तात्पर्यादिति भावः। निषेधानां बलवत्त्वाच्चेत्यपि बोद्धव्यम्। निष्फलत्वादिति। स्पष्टं चेदं पुंयोगात्

---

[१] 'दध्युपदंशमि'त्यत्र दकाराऽकारस्येत्यर्थः।

[२] निषेधस्य = 'इकोऽसवर्णे' इति प्रकृतिभावनिषेधस्येत्यर्थः।

[३] 'उत्तरस्य पदस्य' इति ख. पाठः।

[४] 'कार्यित्वाऽभावेनेत्यपि बोध्यम्' इति ख. पाठः। क. ग. घ. तु. नाऽस्त्ययं पाठः।

[५] अपिः क्वचित्पुस्तके त्रुटितः।

**यत्तु वदन्ति—'समासग्रहणं न नियमाऽर्थं, किन्तु विद्ध्यर्थमेव। अर्थवत्त्वं हि वृत्तिमत्त्वम्। वृत्तिश्च द्विधा। शक्तिर्लक्षणा च। न च सा समासेऽस्ती'ति। अत्रेदं वक्तव्यं—सिद्धान्ते तावदेकाऽर्थीभावाऽभ्युपगमाद्-**

बृहच्छब्दरत्नः

त्वेन, 'येन नाऽप्राप्ति'न्यायेनाऽर्थवत्सूत्राऽपवादभूतस्य परत्वेन कृत्तद्धिताऽपवादकत्वेनेष्टसिद्धावपि, 'विधिमुखेन प्रवृत्तिः, [1]सामान्यशास्त्रसङ्कोचकता चे'ति पक्षे 'कुम्भकारे'ति समासे कृद्ग्रहणस्य प्राप्तावपि[2], 'येन नाऽप्राप्ति'न्यायेनाऽर्थवत्सूत्रसङ्कोचकल्पनेऽपि, कृत्तद्धिताऽन्तसङ्कोचकल्पने मानाऽभावेनोक्तदोषो दुर्वार एवेति चेत्। अत्राहुः–विधिमुखेन प्रवृत्तावपि[3], सङ्कोचस्यांऽशे बाधस्य सत्त्वेन [4]तद्बाधकस्य विप्रतिषेधसूत्रस्य प्रवृत्त्या कृद्ग्रहणसङ्कोचोऽपि सुलभ एव। 'येन नाप्राप्ति'न्यायस्येवाऽनन्तरस्येति न्यायस्याऽपि दुर्वारत्वाच्च। यद्वा लक्ष्याऽनुरोधेनाऽत्र 'निषेधमुखेन प्रवृत्तिरि'त्येव पक्ष आश्रीयते। यत्तु 'समाससाहचर्येण [5]वृत्त्यप्रविष्टवर्णाऽघटिततद्धिताऽन्तस्यैव ग्रहणेन 'घटोऽस्ति हे युवते' इत्यादौ दोषाऽभावः। कृत्साहचर्यान्नियतप्रयोगविषयकम्, एकार्थीभावसामर्थ्ययुक्तं वा गृह्यते' इति। तन्न। 'सुन्दरयुवतिः' 'युवतिः सुन्दरी'त्यादितद्धितेऽनियतप्रयोगेण साहचर्यस्य वक्तुमशक्यत्वात्। समर्थपरिभाषायाः पदविधित्वाऽभावेनाऽप्राप्तौ 'पाचक एधामासे'त्यादौ प्रातिपदिकसञ्ज्ञाऽनापत्तेश्च। 'यज्ञदत्तस्य मूलकस्योपदंशनं, यः स्पर्शनं च कृत्वा भुङ्क्ते' 'देवदत्तवन्मूलकेनोपदंशं भुङ्क्ते, स्पर्शनञ्च कृत्वे'ति प्रयोगवारणाऽर्थमेकार्थीभावस्य समुदाये आवश्यकत्वेन, 'उपदंशस्तृतीयायामि'त्यादौ समर्थपरिभाषाया दुर्वारत्वेन च साहचर्येणाऽवारणाच्च। 'गामानये'त्यादावर्थवत्सूत्रस्य वारणाऽर्थं 'समास'-नियमस्याऽऽवश्यकत्वाच्च। एकार्थीभावेति। 'ऋद्धस्य राज्ञः पुरुषो, भार्यायाश्च घटश्चे'त्यादेरिव, 'ऋद्धस्य राजपुरुषो, भार्यायाश्च, घटश्चे'त्याद्यनिष्टवारणाऽर्थं

लघुशब्दरत्नः

(४।१।४८) इति सूत्रे भाष्य-कैयटयोः। न च सा समासे इति। नाऽपि वाक्ये इति बोद्धयम्। एकार्थीभावेति। एकोपस्थितिनियामिका [6]समुदायशक्तिरेवैकार्थीभाव इति भावः। एवं समासे वृत्तिः सिद्धा। वाक्येऽपि शक्तिरस्ति। विशेषण-विशेष्यभावांऽशे

[1] 'सामान्ये शास्त्रसङ्कोचकता वा' इति क. ख. पाठः।

[2] 'प्राप्ता षष्टि येन नाप्राप्तिन्यायेन' इति क. ख. पाठः।

[3] 'प्रवृत्तावेष्टि' इति क. ख. पाठः।

[4] 'तद्वीधकस्य' इति क. ख. पाठः।

[5] 'वृत्त्यप्रविष्टवर्णघटित' इति ख. पाठः।

[6] 'समुदायशक्तिरेवाऽत्रैकार्थीभाव' इति मुद्रितेषु पाठः।

वृत्तिर्नास्तीति बाधितमेव। मीमांसकमतेऽपि लक्षणाऽस्त्येव। यदाहुः—'सर्वत्रैव हि वाक्याऽर्थो लक्ष्य एवेति च स्थितमि'ति। अथ नैयायिकरीत्योच्येत, तदपि न। 'बहुपटव'इत्याद्यसिद्धेः। तद्धितग्रहणं तद्विशिष्टपरमिति चेन्न। 'पचतकी'त्यादावतिव्याप्तेः। किञ्चैवं कृद्ग्रहणपरिभाषया 'मूलकेनोपदंशमि'त्यादावतिव्याप्तिर्दुर्वारैवेत्यास्तां तावत्।

चकारोऽनुक्तसमुच्चयाऽर्थः। तेन 'निपातस्याऽनर्थकस्य प्रातिपदिकसञ्ज्ञा वक्तव्ये'ति गताऽर्थम्। येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम्—'अवद्यति'। अनुकरणेषु तु अनुकार्येण सहाऽभेदविवक्षायामर्थवत्त्वाऽभावादेव न प्रातिपदि-

बृहच्छब्दरत्नः

भेदसंसर्गादौ वृत्तिरावश्यिकेत्यादि वक्ष्यामः। इत्यादाविति। आदिनोक्तपदघटितवाक्येऽपि दोषो बोध्यः। किञ्चैवं कृद्ग्रहणेति। न चाऽर्थवत्सूत्रस्यैव कृद्ग्रहणस्याऽप्यर्थवत्त्वाऽभावेनाऽप्राप्तिरिति वाच्यम्। 'पाचक' इत्यादावप्यर्थवत्त्वाऽभावेन सञ्ज्ञाऽनापत्तौ नैयायिकैरुत्तरसूत्रेऽर्थवत्सम्बन्धस्य वक्तुमशक्यत्वात्।

नास्तीति। द्योत्याऽर्थे वृत्त्या बोधकत्वस्याऽपि सम्भवेन सूत्रेणैव सिद्धेः। सा च वृत्तिः स्वस्य, परस्य वा। इवाऽऽदिशब्दे एव शक्तिग्रहशालिनामिवाऽऽदिशब्देभ्यो बोधात्स्ववृत्तिरेव। 'शरैरुस्रैरिवे'त्यादाविवशब्दसमभिव्याहारे उस्राऽऽदिपदानां तत्सदृशे लक्षणे'तिवादिनां मते परवृत्त्येति बोध्यम्। परत्वञ्चाऽत्र स्वाऽनुच्चारणेऽविनाश्यत्वम्। अत एव 'धनमि'त्यादौ वर्णानां न प्रातिपदिकत्वम्। समुदायसम्पादने चरिताऽर्थत्वेन वृत्त्याधायकत्वरूप-तात्पर्यग्राहकत्वा-ऽभावाच्च।

अभेदविवक्षायामिति। अयं भावः—'अर्थवत्सूत्रेऽर्थवत्त्वं वृत्तिविषयबोधकत्वम्। शब्दस्य च न वृत्तिविषयत्वं, मानाऽभावात्। आश्रयत्वेनैतदुस्थितिसिद्धेः। तथा च

लघुशब्दरत्नः

तच्छक्तेरर्थवत्सूत्रभाष्यादावुक्तत्वात्। लक्षणेति। वृत्तौ, वाक्ये चेति भावः। असिद्धेरिति। समासे इव तद्धितेऽपि शक्ति-लक्षणयोरभावादिति भावः। पचतकीत्यादाविति। न च पूर्ववर्त्तित्वोत्तरवर्त्तित्वाभ्यामेव वैशिष्ट्यं निवेशनीयम्। विनिगमनाविरहेण मध्यवर्त्तित्वस्याऽपि ग्रहणाऽऽपत्तेरित्याशयात्। किञ्च 'बहुपटवस्तिष्ठन्ती'ति वाक्यस्याऽपि सञ्ज्ञाऽऽपत्तिः। एवं=समासग्रहणस्य नियमार्थत्वाऽभावे। न [1]चाऽत्राऽर्थवत्त्वाऽभावाद्वारणम्। न्यायनये उत्तरसूत्रे तदसम्बन्धात्। तृतीयाप्रभृतीनि (२।२।२१) इति तु स्वरे विशेषाऽर्थम्। अभेदविवक्षायामिति। [2]सादृश्यमूलकाऽभेदविवक्षायामित्यर्थः। अनुकरणञ्च [3]स्वसादृश्येना-

[1] 'अत्र' इति मुद्रितेषु नास्ति।

[2] 'सादृश्यमूलाऽभेदविवक्षायाम्' इति सर्वत्र पाठः। ग. पुस्तके तु ककारोऽत्र वर्द्धितः।

[3] 'स्व' इति क. नास्ति।

कत्वम् । 'भू सत्तायामि'ति यथा ।

बृहच्छब्दरत्नः

सम्बन्धस्योभयनिरूप्यत्वेन सम्बन्धिद्वयोपस्थापकत्वाऽविशेषाद्धटत्वाद्यवच्छिन्न-शक्त्यैव घटादिवच्छब्दस्याऽप्युपस्थितौ सत्यामर्थबोधने तात्पर्ये सति विशेषणतया शब्दो भासते । तदभावे तु विशेष्यतयैव । यद्वा शब्दस्य ज्ञानसामान्यसामग्र्या, ज्ञायमानविषयेण वोपस्थितिः । अत एव प्रत्यक्षादावपि शब्दभानमङ्गी चक्रुः । आकाङ्क्षादिवशाद्वाक्याऽर्थस्य शाब्दबोधे भानवन्नियमेन शब्दस्य भानाद्वृत्त्या-ऽनुपस्थितत्वेऽपि न शाब्दबोधविषयत्वाऽनुपपत्तिः । तत्र तात्पर्याऽऽकाङ्क्षादिवशाद् 'गौर्नित्या' 'गौरनित्ये'त्यादाविव स्वातन्त्र्येण, विशेषणत्वेन वा भानम् । प्रपञ्चयि-ष्यते चैतद् 'धातुसम्बन्धे प्रत्यया' इति सूत्रे । अनुकरणत्वञ्च स्वाऽभिन्नशब्दमात्र-तात्पर्यकोच्चारणविषयत्वम् । शब्दशब्देनाऽनुकरणत्वमिति स्पष्टमेव । न च शब्दमात्र-तात्पर्यकस्य गणे पाठेऽपि क्रियावाचकस्य गणे पाठाऽभावाद्धातुसञ्ज्ञा न स्यादिति वाच्यम् । आनुपूर्वीभेदस्यैव शब्दभेदे नियामकत्वात् । सादृश्येन तत्त्वाऽध्यव-सायाच्च । अत एव नानाऽर्थव्यवस्था । साधुत्वस्याऽर्थविशेषपुरस्कारेणैव सत्त्वात् असाधोरनुकरणे शब्दपरे साधुत्वं, नाऽर्थपरेऽनुकार्ये इत्यादि वक्ष्यामः । न चैवं शब्दपरत्वेऽप्यर्थवत्त्वनिमित्ता सञ्ज्ञा दुर्वारा । फलोपहितवृत्त्याऽर्थबोधकत्वस्य विवक्षितत्वात् । एतेन 'भू सत्तायामि'त्यादौ तिबाद्युत्पत्तिर्दुर्वारे'ति निरस्तम् । फलोपहितक्रियावाचकस्यैव धातुसञ्ज्ञासूत्रे विवक्षितत्वात् । यद्वा स्वसदृशशब्द-मात्रतात्पर्यकोच्चारणविषयत्वम् । अतो न का चिदनुपपत्तिः ।

यत्तु 'प्रकृतिवदनुकरणमि'त्यतिदेशेन धातुत्वात्सुबभाव' इति । तन्न । अतिदेशस्य वैकल्पिकत्वेन समाधानाऽन्तरस्याऽऽवश्यकत्वात् । 'शब्दमात्रतात्पर्यके'-त्यत्र शब्दशब्देन वर्णरहितो ध्वनिरप्युच्यते । अत एव च 'पटदित्याद्दे'त्यत्र पटच्छब्दाऽनुकरणं, ध्वनेर्वेति द्वैतम् । ध्वनिमात्राऽनुकरणे वर्णोच्चारणन्त्वानुष-ङ्गिकम् । अत एव 'अव्यक्ताऽनुकरणस्ये'त्यादि सङ्गच्छते । एतेन 'अपदं न प्रयुञ्जीते'ति निषेधादसाधुत्वमि'ति निरस्तमि'ति सुधीभिरूह्यम् । 'अभेदपक्षो वाचनिक एवे'त्यपरे ।

भू सत्तायामिति । नन्वभेदपक्षेऽपि 'अनुकरणं चाऽनितिपरमि'ति गतित्वे, निपातत्वे चाऽव्ययत्वे रूपद्वयं सिद्ध्यत्येवेति चेन्न । सञ्ज्ञानियमपक्षे दोषा-ऽभावात् । प्रयोगनियमपक्षेऽपि 'अनुकरणं चाऽनिती'ति सूत्रं क्रियायोगे प्रवर्त्तते'

लघुशब्दरत्नः

ऽनुकार्यमुपस्थापयति । तथोपस्थितस्य शाब्देऽन्वयप्रतियोगित्वं व्युत्पत्तिवैचित्र्यात् । एवञ्च वृत्त्याऽर्थबोधकत्वरूपाऽर्थवत्त्वाऽभाव[1] इति भावः । अत एव 'भू सत्तायामि'त्यादिनिर्देशाः सङ्गच्छन्ते । तदाह—भू इति । 'अपदं न प्रयुञ्जीते'त्यस्य अपरिनिष्ठितमित्यर्थः । अस्य

[1] 'अर्थवत्त्वाऽभावादिति भाव' इति क. पाठः ।

भेदविवक्षायान्तु सञ्ज्ञा स्यादेव 'भ्रुवो—वुगि'ति यथा।

लिङ्गविशिष्टस्येति। लिङ्गबोधकप्रत्ययविशिष्टस्याऽपीत्यर्थः। परिभाषायाः प्रयोजनन्तु—'अयस्कुम्भी'। अतः कृकमि (८।३।४६) इति सत्वम्। तद्धि कंसादिषूत्तरपदेषु विधीयते। किञ्च 'कुमारीमाचष्टे कुमारयति'।

बृहच्छब्दरत्नः

इति तावन्निर्विवादम्। पूर्वसूत्रे तथैव निर्णीतत्वेनाऽर्थाऽधिकाराऽऽश्रयणादित्यन्यत्र विस्तरः। भेदविवक्षायामिति। अर्थवत् शब्दस्याऽपि वृत्तिविषयत्वम्। 'तत्र केवलशब्देऽपि शक्तिरेवे'ति प्रामाणिकाः। अत एव 'ऋलृगित्याहे'त्यादौ न दोषः। न च लक्षणया निर्वाहः। शक्त्यभावात्। न च वर्णानां क्वचिच्छक्तत्वमिति वाच्यम्। शक्यसम्बन्धाऽग्रहेऽपि तद्बोधाद्विनिगमनाविरहेण निर्णयस्य कर्त्तुमशक्यत्वेन सर्वेषां लक्षकत्वाऽऽपत्तेः। समासनियमेन, समुदायस्य वृत्तित्वाऽभावेन च समुदायस्य प्रातिपदिकसञ्ज्ञाऽनापत्तेश्च। अर्थभेदाच्छब्दभेदेनाऽनयोर्भेदः। अत एव ध्वनिमयत्व-वर्णमयत्वादि-विरुद्धधर्मवत्त्वसिद्धिः। अस्मिन्पक्षे धातुत्वं–क्रियावाचकत्वे सति, गणपठितशब्दवाच्यत्वम्। द्वावपि पक्षौ लक्ष्याऽनुरोधेन व्यवस्थिताविव्यन्यत्र विस्तरः।

लिङ्गबोधकेति। न च 'विभक्तौ लिङ्गविशिष्टाऽग्रहणमि'ति निषेधः। [1]अन्यविहितविभक्तिनिमित्तकार्येऽस्याः प्रवृत्तत्वात्। ननु ङीषः प्राग्भागमादायैव सत्वं भविष्यतीत्याशङ्क्याऽऽह–तद्धीति। 'समासस्ये'त्यनुवृत्त्या, 'अनुत्तरपदस्ये'त्यनुवृत्त्या[2]वा विसर्गाऽन्तस्य पूर्वपदत्वबोधनादुत्तरपदस्याऽऽक्षेपेण प्रत्यासत्तिन्यायात्कंसादिरूपस्यैव ग्रहणादिति भावः। ननु बहुलक्ष्यसंस्काराऽनुरोधेन कंसादिघटितोत्तरपदस्यैव ग्रहणं युक्तमित्यरुचेराह—किञ्चेति। कुमारीमाचष्ट इति।

लघुशब्दरत्नः

चाऽस्मादेव लिङ्गात्परिनिष्ठितत्वम्। भेदविवक्षायामिति। अर्थवत् शब्दोऽपि वृत्तिविषय एवैतत्पक्षे इति भावः। अयं पक्षो मतौ छः सूक्त (५।२।५९) इति सूत्रे भाष्ये। अनयोश्च लक्ष्याऽनुरोधाद्व्यवस्थेति दिक्।

विशिष्टस्यापीत्यर्थ इति। प्रातिपदिकत्व-तद्व्याप्य-धर्माणां लिङ्गप्रत्ययविशिष्टेऽतिदेशादिति भावः। स्पष्टं चेदं बहुव्रीहेरूधसः (४।१।२५) इत्यत्र भाष्ये। इयञ्च प्रातिपदिकसामान्यग्रहणे, तद्विशेषग्रहणे च। तद् ध्वनयन्नाह—अयस्कुम्भीति। किंचेत्यादि च। उत्तरपदेष्विति। अत्र च ङ्यन्तमुत्तरपदमिति भावः।

[1] 'अन्यविभक्तिनिमित्तकार्ये' इति ख. पाठः।

[2] 'अनुवृत्त्या वा' इति भावप्रकाशे पाठः। 'अनुवृत्त्या च' इति क. ख. पाठः।

'णाविष्ठवदि'ति टिलोपः। एवं 'यामिनयन्त्यहानी'त्यत्राऽऽचारे क्विबपि फलम्।

ङ्याब्भ्यां प्रागिति। तेन लोहिनिका आर्यका च सिद्ध्यति। तथा हि—स्वार्थिकत्वेनाऽन्तरङ्गः, परश्च लोहितान्मणौ ( ५।४।३० ) इति कन् ङीपं बाधेत। ततो 'लोहितिके'त्येव स्यात्। इष्यते तूभयम्। ङीब्ग्रहणसामर्थ्यात्तु ङ्यन्तात्कनि रूपद्वयं सिद्धम्। वर्णादनुदात्तात्

बृहच्छब्दरत्नः

कुमारीशब्दश्चाऽत्र न वयोविशिष्टस्त्रीवाची, अपि तु औषधिवाची[१] नित्यस्त्रीलिङ्गः। अत एव प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कत्वाऽभावान्न पुंवद्भावः। वयोवाचिकुमारीशब्दे तु पुंवद्भावोऽपि प्रयोजनम्। णिच् तु 'तत्करोति तदाचष्टे' इत्यनेन। 'तदि'ति द्वितीयाऽन्तोपलक्षणम्। 'तदि'त्यनेन कर्मसमर्पकं प्रातिपदिकमुच्यते। 'प्रातिपदिकाद्धात्वर्थे' इति वचनस्यैवाऽयं प्रपञ्च' इति वादिनां मते तु णिजपि फलं बोध्यम्।

लोहिनिकेति। 'लोहिनितरे'त्यपि फलं बोध्यम्। आतिशायनिकप्रकरणे 'तादी घः' 'पितौ घ' इति वा वक्तव्ये, 'तरप्तमपौ घ' इतिन्यासेन स्वार्थिकतरपोऽपि बोधनाद्रूपद्वयमिति। तथा च 'लोहिताल्लिङ्गबाधनं वे'ति न कर्त्तव्यम्। नन्वेवं 'युवन्'शब्दात्तिप्रत्ययात्पूर्वं ङीबुत्पत्तिः प्राप्नोति। ततः 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणमि'ति परिभाषया 'ति'प्रत्यये 'यूनीतिरि'ति स्यात्। न चैकेन स्त्र्यर्थस्योक्तत्वात्तिप्रत्ययो न स्यादिति वाच्यम्। कुण्डोध्नी'त्यादावनङा स्त्र्यर्थस्योक्तत्वेऽपि ङीपुत्पत्तेः सिद्धान्तसिद्धत्वात्। अत एव 'कृदिकारादक्तिन' इत्यत्र

लघुशब्दरत्नः

टिलोप इति। इदमुपलक्षणं पुंवत्त्वस्य, णिचश्च। सामान्यग्रहणेऽपि प्रवृत्तेरेवाऽनया परिभाषया ङ्याप्-ग्रहणवैयर्थ्यं भाष्ये शङ्कितम्। न च 'दृष्टा माला', 'दृष्टा गौरी'तिसमुदायस्याऽनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावात् ङ्याबन्तत्वेन, ततः सुबुत्पत्त्यर्थं तदस्तु। लिङ्गविशिष्टपरिभाषया तु नाऽत्र सिद्धिः। ङ्याब्रहितस्य 'दृष्टा माल' इत्यादेः समुदायस्य प्रातिपदिकत्वाऽभावेन तदतिदेशाऽप्रवृत्तेः। एवञ्च 'आम्! दृष्टा माला देवदत्ते'त्यादावेकपदाऽन्तरितत्वेनैकाऽन्तरताऽऽपत्तिरिति वाच्यम्। एतद्भाष्यप्रामाण्येन, प्रातिपदिकसाहचर्येण च पृथगर्थोपस्थापक-विभक्त्यन्ता-ऽनवयवक-ङ्याबन्तस्यैव ग्रहणेनाऽदोषात्। प्रत्येकमपि पदत्वसत्त्वेनैकान्तरत्वाऽभावाच्च। उत्तरसञ्ज्ञायाः पूर्वसञ्ज्ञाबाधकत्वात्। नियमाऽर्थन्तु न। [२]त्यूङन्ते दोषाऽऽपत्तेः। कुत्साद्यर्थकस्वार्थिकानां कुत्सिते (४।३।७४) इति सूत्रस्थभाष्योक्तरीत्या ङ्याबन्तादुत्पत्तेः सिद्धत्वादत्यन्तस्वार्थिके फलमाह—तथा हीत्यादिना। स्वार्थिकत्वेन=

[१] 'औषधिजातिवाची' इति भावप्रकाशे पाठः।

[२] 'ऊङन्ते' इति क. ख. ग. घ. शोधितः पाठः। 'ती'ति प्रक्षिप्तः पाठः। तिप्रत्ययस्य तद्धिताऽधिकारे पठितत्वेन प्रातिपदिकत्वात्सुबुत्पत्तेः। अन्यथा तद्धिताऽधिकारपाठवैयर्थ्यं स्पष्टमेव' इति घ. टिप्पणी। भावप्रकाशे तु 'त्यूङन्ते'इत्येव पाठ आदृतः।

( ४।१।३९ ) इत्यस्य वैकल्पिकत्वात्। आर्यशब्दात्तु न सामिवचने ( ५।४।५ ) इत्यत्र ज्ञापयिष्यमाणोऽत्यन्तस्वार्थिकोऽपि कन् [१]'आप्'ग्रहण-सामर्थ्यात्पूर्वं न प्रवर्त्तते। तेन [२]उदीचामातः स्थाने यकपूर्वायाः ( ७।३।४६ ) इतीत्त्वविकल्पः सिद्धयति।

स्यादेतत्। एवं सति 'बहुगोमत्के'ति न सिद्ध्येत्, [३]बहुगोमच्छब्दात् कपः प्रागुगिल्लक्षणङीप्प्रसङ्गादिति चेन्मैवम्। 'अकृते एव समासेऽलौकिक-

बृहच्छब्दरत्नः

'अक्तिन' इति पर्युदासश्चरिताऽर्थ इति चेन्न। स्त्र्यधिकारस्थप्रत्ययाऽन्तात् [४]स्त्र्यधि-कारस्थप्रत्ययाऽभावस्य [५]'सर्वत्र'ग्रहणेन ज्ञापनात्। तद्धि 'आवट्यायनी'त्यादौ 'प्राचां ष्फ तद्धित' इति सूत्रेण [६]चापं बाधित्वा 'ष्फ'प्रत्ययाऽथम्। त्वद्रीत्या तु चापि सत्यप्येकादेशस्य पूर्वाऽन्तत्वेनोक्तपरिभाषया 'ष्फ'प्रत्ययस्य सिद्धत्वेन तद्वैयर्थ्यं स्पष्टमित्यादि निरूपयिष्यामः।

प्रसङ्गादिति। अन्यपदार्थस्योक्तत्वेन स्त्रीत्वयोगात्। द्योतकप्रत्ययं विना प्रातिपदिकेन वक्तुमशक्यत्वात्। तदनुक्तौ तु प्रकृतेर्बहुव्रीहिसमासत्वाऽनापत्तौ, प्रत्ययानां समासाऽन्तत्वाऽनापत्तिः। लिङ्गरहिताऽन्यपदार्थे वृत्तिस्तु न। माना-ऽभावात्। तथा च [७]'अन्त'पदेनाऽवयवत्वबोधनात्। निरर्थकसमासाऽन्तेन सह एकार्थीभावकल्पना तु गीर्वाणगुरुणाऽपि निरूपयितुमशक्येति भावः। एतेन 'बहुकुमारीके'त्यादावकृतव्यूहपरिभाषया ह्रस्वो ने'त्यपास्तम्। एवेति। ङ्याप्-

लघुशब्दरत्नः

अत्यन्तस्वार्थिकत्वेन। 'परश्चे'त्यभ्युच्चयः। एवञ्च 'लोहितालिल्ङ्गबाधनं वे'ति न वक्तव्यमिति भावः। विकल्पः सिद्धयतीति। अन्यथा 'आर्य'शब्दात्कनि समुदायोत्तरटापैव लिङ्गसम्बन्ध-बोधनसम्भवादेकाज्द्विर्वचनन्यायेन[८] समुदायादेव टापि, कनः पूर्वं टाबभावे, आतः स्थानि-कत्वाऽभावाद्विकल्पाऽसिद्धिरिति[९] भावः।

ङीप्प्रसङ्गादिति। अन्यपदार्थस्य स्त्रीत्वादिति भावः। अकृत एवेति। इदं

१ 'आब्ग्रहण' इति मुद्रितेषु पाठः।
२ 'उदीचामात स्थाने' इति विसर्गरहित एव लिखितेषु पाठः। तत्र 'खर्परे शरी'ति वा विसर्गलोपो बोध्यः।
३ 'बहुगोमच्छब्दात्' इति मुद्रितेषु त्रुटितम्। ४ 'अधिकारस्थ' इति क. ख. पाठः।
५ 'सर्वत्र लोहितादिकतन्तेभ्य' इत्यत्र सर्वत्रग्रहणेनेत्यर्थः।
६ 'आवटयाच्च' इति सूत्रविहितं चापमित्यर्थः।
७ 'समासान्त' इत्यत्र अन्तपदेनेत्यर्थः।
८ 'एकाच्द्विर्वचनन्यायेन' इति चकारघटितो लिखिताऽऽदर्शेषु पाठः।
९ 'विकल्पाऽसिद्धेरिति भावः' इति क. पाठः।

प्रक्रियावाक्ये एवोत्तरपदस्याऽवयवीभूय समासाऽन्तः प्रवर्त्तते' इति वक्ष्यमाणत्वात्। 'स च विभक्तेः पुरस्तादि'त्येके। 'परस्तादि'ति पक्षे तु 'तद्धितान्त-

---

**बृहच्छब्दरत्नः**

ग्रहणे कृतेऽकृते चोक्तसिद्धान्त आवश्यक इति बोधयितुमेवकारद्वयोपादानम्। अवयवीभूयेति। इदञ्च [1]'चरमाऽवयववाच्यन्तशब्दोपादानसामर्थ्याल्लभ्यते। अन्यथा 'समासादि'त्येव ब्रूयात्। पुरस्तादित्येके इति। अत्राऽरुचिबीजन्तु 'घकालतनेषु कालनाम्न' इत्येतन्मूलक-'सुबन्तात्तद्धितोत्पत्तिरि'ति-सिद्धान्तविरोधः। सुब्रहितस्याऽनुत्तरपदत्वञ्च। 'पक्षे' इत्युपादानादस्मिन् पक्षेऽप्यरुचिर्बोधिता। तद्बीजन्तु 'समासान्ता' इत्यन्तशब्दबलात्सुपः परस्ताज्जायमानेऽपि, सुबन्तादिपदेन[2] कबन्तस्य ग्रहणेन, बहुव्रीह्यादीनां प्रवृत्तेः सुलभत्वेन, कबुत्तरं पुनः सुप्करणं व्यर्थम्।

---

**लघुशब्दरत्नः**

गोस्त्रियोः (१।२।४६) इति सूत्रे भाष्ये स्पष्टम्। 'समासान्ताः (५।४।६८) इत्यत्र तादर्थ्यात्ताच्छब्द्यमि'ति हि तत्र भाष्यम्। 'अलौकिके प्रक्रियावाक्ये एवे'त्यस्य 'प्रवर्त्तते' इत्यनेनाऽन्वयः। क्व प्रवर्त्तते, तत्राऽऽह—उत्तरपदस्येति। 'अनन्तरमि'ति शेषः। 'अवयवीभूये'त्यस्य 'प्रक्रियावाक्यस्ये'त्यादिः। एतत्सर्वं[3] स्वरूपकथनम्। अवयवत्वे प्रमाणमाह—समासान्त इति। तच्छब्दवाच्यत्वादिति भावः। 'समासस्यैवाऽयमन्ताऽवयव' इति अन्तः (६।२।९२) इति सूत्रे भाष्ये स्पष्टम्।

इत्येके इति। अत्राऽरुचिबीजन्तु 'समासाऽर्थवाक्यस्याऽऽन्त' इति गोस्त्रियोः (१।२।४८) इति सूत्रस्थभाष्यस्य वाच्याऽर्थविरोधः। न हि[4] सुब्रहितं समासाऽर्थं, किन्तु तद्विशिष्टमेव। किञ्च ततः पूर्वं कपि, ततः समाससञ्ज्ञायां, सुब्लुकि, टापि, 'बहुचर्मिके'-त्यादावापः सुपः परत्वाद् इत्वाऽनापत्तिः। तत्र विभक्त्यन्तेऽन्यपदार्थबोधकत्वाऽऽरोपेण[5] स्त्रीत्वबोधकत्वस्य तदन्तेऽसत्त्वात् 'सुब्लुकः[6] पूर्वं कबन्ताट्टाबि'ति वक्तुमशक्यमि'ति।

परस्तादिति पक्षे त्विति। न च विशिष्टस्य सुबन्तत्वाऽभावेन 'सुबन्तात्तद्धित' इति सिद्धान्तविरोधः। तेषामतिरिक्ताऽर्थाऽभावेन 'परिपूर्णम्पदमि'ति न्यायाऽविषयतया, तस्य सिद्धान्तस्य समासाऽन्तविषयेऽभावात्। एवं[7] समासाऽन्तेषु 'ङ्याप्प्रातिपदिकादि'त्यस्याऽसम्बन्ध एव। तस्यामवस्थायां वाक्यस्य प्रातिपदिकत्वाऽभावादिति भावः। तद्धितान्तत्वा-

---

[1] 'चरमवाच्यन्त' इति ख. पाठः।

[2] 'सुबन्तादिपदे' इति क. ख. पाठः।

[3] 'सर्वम्' इति मुद्रितेषु त्रुटितम्।

[4] 'सुपूरहितम्' इति क. पाठः।

[5] अत्र 'बोधक'पदं मुद्रितेषु त्रुटितम्।

[6] 'सुप्लुकः' इति क. पाठः।

[7] 'एवञ्च' इति सर्वेषु लिखितेषु पाठः। 'एवम्' इत्येव पाठ इति भावप्रकाशः।

बृहच्छब्दरत्नः

तथा च समासाऽन्तविशिष्टस्यैवाऽन्यपदार्थे उपसङ्क्रान्तत्वात् 'बहुगोमत्के'त्यादौ ङीप् न। 'बहुकुमारीके'त्यादौ ह्रस्वश्च न। 'बहुचर्मिके'त्यादावित्त्वसिद्धिश्च। 'अभाषितपुंस्काच्चे'ति[1] सूत्रविहितं कपि 'अखट्विका', 'अखट्वके'त्यादावित्त्वञ्च। एवञ्च 'युवजानिरि'त्यत्राऽपि बोध्यम्। [2]ङित्करणसामर्थ्यादाकारनिवृत्तिरिति विशेषः। अत्र मूले 'उत्तरपद'शब्द उत्तरसुबन्तपरः। अस्यामवस्थायां रूढेरसम्भवात्। नन्विदं समासाऽन्तानामलौकिकविग्रहवाक्ये एव प्रवर्त्तने सङ्गच्छते, तत्रैव किं मानमिति चेन्न। 'समासाऽन्ता' इति बहुवचननिर्देशेनैकशेषाऽनुमानादनेकविधिसामर्थ्येन पूर्वं प्रवृत्तेः। ([3]एतेन) अत एव 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच्, 'द्वित्रिभ्यां' इति षः... डजबहुगणादि'ति डचश्चित्करणं चरिताऽर्थम्। समासोत्तरं प्रवृत्तौ तु डचं बाधित्वा परत्वेन 'बहुव्रीहौ प्रकृत्या पूर्वपदमि'त्यस्य प्रवृत्तौ, ततो डचि, [4]प्रत्ययस्वरेणैवेष्टसिद्धौ, चित्त्ववैयर्थ्यं स्पष्टमेव। न च विरोधाऽभावेन विप्रतिषेधोऽयुक्त इति वाच्यम्। एवमपि पूर्वं डच्प्रवृत्तौ मानाऽभावात्। 'आद्युदात्तश्च' 'अनुदात्तं पदमेकवर्जमि'त्यनयोरधिकार-परिभाषयोः सत्त्वेन डज्विधिनैवोभयोर्विधानेन विरोधस्य स्पष्टत्वाच्च। [5]तेन 'महाधुरे'त्यादौ बहुव्रीहिस्वरः।

अत्रेदमवधेयम्—प्रत्यासत्तिन्यायेन 'शरत्प्रभृतिभ्य' इत्यादिपञ्चमीनिर्देशात् समासादिपदानां समासार्थोत्तरपदे लक्षणायाः सत्त्वेन समासान्तविधावुभयोरपि उद्देश्यकोटौ प्रविष्टत्वेन समासस्योत्तरपदस्य च 'यस्मात्प्रत्ययविधिरि'त्यादिभिरङ्ग-भ-पद-सञ्ज्ञानां प्रवृत्तिः सुलभा। अत एव 'न कपी'तिसूत्रं सार्थकम्। अत एव 'केऽण' इति सूत्रे साऽनुबन्धकत्वेऽपि कपो ग्रहणमिति ध्येयम्। 'समासाऽर्थोत्तरसुबन्ताऽवयवत्वं समासाऽन्तानामि'ति पूर्वनिरूपितः सिद्धान्तः प्रत्यासत्तिन्यायेन समास-बहुव्रीह्यादिपदमुच्चार्य विहितकार्ये एव। 'गोस्त्रियोरि'ति ह्रस्वस्तु समासनिमित्ते एव। कृत्रिमाया उपसर्जनसञ्ज्ञाया ग्रहणात्। अत एव 'कुमारीवाऽऽचरन् ब्राह्मणः कुमारी'त्यत्र ह्रस्वो न। स्त्रीप्रत्ययोऽप्युपसर्जनस्त्र्यर्थसमवेतस्त्रीत्वबोधक एव गृह्यते इत्यादि वक्ष्यामः। अन्यकार्ये तु सनादिवत्प्रकृतिपरभूता अनवया एव। अत एव तस्मिन् परतो-ऽङ्ग-भ-पदसञ्ज्ञादि([6]प्रवृत्तिरिति)भावः। अत एव 'कल्याणधर्मा' 'बहुचर्मिके'त्यादावल्लोप-नलोपादिसिद्धिः। अत्र च 'शरत्प्रभृतिभ्यः' इत्यादिपञ्चमीनिर्देशा, 'न कपी'ति सूत्रञ्च मानम्। वस्तुतस्तु मूलोक्त एव सिद्धान्तो युक्तः, भाष्यादिप्रामाण्यात्। 'न कपी'ति [7]ज्ञापकाद्विशिष्टेऽङ्ग-

---

[1] 'सूत्रविहितकपि' इति क. ख. पाठः।

[2] 'जायाया निङि'त्यत्र निङो ङित्करणादित्यर्थः।

[3] अयं पाठोऽधिक इति भाति।

[4] 'प्रत्ययस्य स्वरेण' इति ख. पाठः।

[5] 'तत्र महाधुरा इत्यत्र' इति ख. पाठः।

[6] अयं पाठः क. ख. त्रुटितः।

[7] 'ज्ञापकाद्विशिष्टस्य' इति क. ख. पाठः।

त्वात्सुब्लुकि, पुनः सुपि चाऽकृते[1] समास' इति सिद्धान्तः।

बृहच्छब्दरत्नः

भ-पदसञ्ज्ञानां प्रवृत्तिरित्यलम्। अत एव 'नञ्सुभ्यामि'त्यत्रोत्तरपदस्य कार्यित्वाऽऽश्रयणेऽपि 'अनृच' इत्यादावन्तोदात्तत्वसिद्धिः। अत एव 'कपि पूर्वमि'ति सूत्रं सार्थकम्। न च 'समासस्यैवे'त्यनुवृत्त्यैवेष्टसिद्धिरिति वाच्यम्। 'नञ्सुभ्यामि'त्यस्य पञ्चम्यन्तत्वेनाऽनन्वयाऽऽपत्तेः। 'नञ्सुभ्यां परं यदुत्तरपदं तदन्तस्य समासस्ये'त्यर्थाऽऽश्रयणे तु 'अनृच' इत्यादौ दोषाऽऽपत्तेश्च। 'तद्घटितसमासस्ये'त्यर्थाऽऽश्रयणे त्वतिप्रसङ्गस्याऽस्पष्टत्वाच्च[2]। 'समासस्ये'त्यनुवृत्तौ फलाऽभावाच्च। 'समासस्ये'त्यस्य विशेषणत्वेनाऽऽश्रयणे बाधकाऽभावाच्च। ध्वनितञ्चेदं 'प्रत्ययस्थात्' 'गोस्त्रियोरुपसर्जनस्ये'त्यादौ भाष्ये। [3]तस्मादायादयो भवन्ति। कस्मिन्नर्थे?। स्वार्थे। ननु चोक्तं तत्र समासाऽन्तेषु दोष इति। समासान्ता अपि स्वार्थिकाः। उभयोः स्वार्थिकयोः परत्वात्समासान्ता भविष्यन्ती'ति भाष्ये 'परत्वात्=उत्कृष्टत्वादि'त्यर्थो बोध्यः। कैयटस्य तु महान् प्रमाद इति स्पष्टमेव तत्त्वविदाम्। 'रात्राह्नाहाः पुंसी'ति सूत्रे अहन्निर्देशेन साहचर्यात्कृतसमासान्ते एव प्रवृत्त्येष्टसिद्धावह्नादिग्रहणसामर्थ्येनाऽकृतसमासान्तेन कृतसमासान्तग्रहणाऽभावो ज्ञाप्यते। अत एव चेदम्प्रथमका इत्यादौ 'इदमेतद्भ्यः प्रथमपूरणयोः क्रियागणने' इति सूत्रेण कप्प्रत्ययात्पूर्वमुदात्तत्वसिद्धिः। समुदायाऽवयवन्त्वन्त्ववयवाऽवयवः समुदायाऽवयव इति न्यायात्। 'अकाराऽन्तोत्तरपदो द्विगुः स्त्रियामि'ति वचने अकारः समासान्ताऽनवयवीभूत एव गृह्यते, [4]द्विगूत्तरपदग्रहणात्। [5]'द्विधुरी' 'द्विपुरी'त्यादि भाष्यप्रयोगात्साधु। अत एव 'पञ्चगवं' 'दशगवमि'त्यादिसिद्धिरित्यग्रे निरूपयिष्यामः।

लघुशब्दरत्नः

दिति। 'प्रातिपदिकत्वेने'ति शेषः। पुनः सुपि[6] चाऽकृते इति। प्रत्ययलक्षणेन सुबन्तत्वात् समाससञ्ज्ञा। कपस्तद्वाक्याऽवयवत्वेन तद्ग्रहणेन तदन्तस्य ग्रहणम्। 'सुपि च कृते' इति क्वाचित्कः पाठः प्रामादिकः। [7]यद्यपि तत्र पाठे अलौकिकविग्रहवाक्येऽप्यन्य-

[1] 'पुनः सुपि च कृते' क. च. पाठः। स च घ. पुस्तकादौ 'पुनः सुपि त्वकृते' इति लघुशब्दरत्नाऽनुसारेण शोधितः। 'पुनः सुपि चाऽकृते' इति तु लघुशब्दरत्नाऽनुसारी पाठः।

[2] 'अस्पृष्टत्वाच्च' इति क. पाठः। 'अतिप्रसङ्गस्येष्टत्वाच्च' इति वा पाठः।

[3] 'तस्मादावादयो भवन्ति' इति क. ख. पाठः।

[4] 'द्व्युत्तरपद' इति क. ख. पाठः। [5] अत्र क. ख. पुस्तकयोर्ग्रन्थस्त्रुटितः।

[6] 'पुनः सुपि त्वकृते' इति पाठः क.पुस्तके। सच तत्रैव 'पुनः सुपि चाऽकृते' इतिशोधितः।

[7] 'यद्यपि' इत्यारभ्य 'तथापि' इत्यन्तः पाठो लिखिताऽऽदर्शेषु नाऽस्त्येव। पश्चात्तु कैश्चिदयं पाठो वर्द्धितः क. ख. पुस्तकयोः।

तस्मादन्तरङ्गादपि तद्धितात्प्राक् ङ्यापोः प्रवृत्त्यर्थं ङ्याब्ग्रहणमिति स्थितम्। यत्त्वाहुः—'आब्ग्रहणं स्पष्टाऽर्थमि'ति, तदनेन प्रत्युक्तम्। वस्तुतस्तु

---

**बृहच्छब्दरत्नः**

वस्तुतस्त्विति। ननु 'दृष्टा माला' 'दृष्टा गौरी'त्यादौ वाक्यात्सुबुत्पत्त्यर्थं तदस्तु। न च 'लिङ्गविशिष्ट'परिभाषाया दुर्वारत्वेनेष्टाऽऽपत्तिरिति वाच्यम्। 'लिङ्गविशिष्टप्रातिपदिकस्ये'त्यर्थादिति चेत्। अत्रोच्यते–प्रातिपदिकमध्ये पदाऽन्तर-प्रवेशस्य कर्त्तुमशक्यत्वेन तत्साहचर्यात्तथाभूतङ्याबन्तयोर्ग्रहणम्। न हि 'दृष्टा देवदत्त माला' 'दृष्टा देवदत्त गौरी'त्यादाविव 'घटो' 'रमा' 'गौरी'त्यादौ पदा-ऽन्तरप्रक्षेपः शक्यो मध्ये कर्त्तुम्। न च नियमाऽर्थमस्त्विति वाच्यम्। 'युवतिका' 'ब्रह्मबन्धूतरे'ति भाष्याद्युदाहृत-त्यूङन्तप्रकृतिकतद्धिता-ऽसङ्गतताऽऽपत्तेः। नन्वेवं प्रातिपदिकग्रहणमपि व्यर्थम्। 'परश्चे'त्यनेन प्रकृतेराक्षेपात्। यत्तु भाष्या-दावुक्तम्—'अनुदात्तादेश्चे'त्यत्र विभक्तिमन्तरेण सामर्थ्याऽनवगमात्, 'तस्ये'त्य-नुवर्त्तनात्सुबन्तात्तद्धितोत्पत्तेश्च 'अनुदात्तादेरि'त्यस्य सुबन्तविशेषणताऽऽपत्तौ, 'सर्वस्य विकारः सार्व' इत्यत्राऽञ् न स्यात्। 'सर्वस्य सुपी'त्यनेनाऽऽद्युदात्त-त्वात्। प्रातिपदिकाऽधिकारे तु तस्यैव विशेषणे न दोषः। 'सर्व'शब्दस्योञ्छादिषु पाठेनाऽन्तोदात्तत्वनिपातनादि'ति। तन्न। 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते' इति न्यायेन तद्धितोत्पत्तेः पूर्वं 'सर्वस्य सुपी'त्यस्याऽप्रवृत्तेरिति कौस्तुभे पितामहचरणाः। यत्तु 'सर्वस्तोम' इत्यत्र लुगाद्युदात्तयोः समावेशेनाऽविरोधाल्लुका [1]'आद्युदात्तत्वस्य न बाध' इति। तन्न। विरोधे एव प्रवृत्तौ मानाऽभावात्। तद्धित-निमित्तलुका बाधस्य दुर्वारत्वाच्च। 'न लुमताऽङ्गस्ये'ति सूत्रस्थभाष्यपठितवचनेन

---

**लघुशब्दरत्नः**

पदार्थाऽन्तर्भाविणैकाऽर्थीभावाऽऽरोपात्स्त्रीत्वसत्त्वेन पूर्वं टापि, [2]ततः सुपि, आपः सुपः परत्वा-ऽभावाद् 'बहुचर्मिके'त्यत्रेत्वसिद्धिरस्ति, तथाऽपि तदुत्पत्तिपर्यन्तं समाससञ्ज्ञाया अप्रवृत्तौ मानाऽभावात्। न च सुबन्तत्वाऽभावः। अनेन सुपा समुदायस्य सुबन्तत्वेऽपि, उत्तरपदमात्रस्य तत्त्वाऽभावात्। पूर्वपदस्य सुबन्ततायाः प्रत्ययलक्षणेनैवोपपाद्यत्वात्। एवञ्च पूर्वं तत्करणे फलाऽभावः। बहिर्भूतसङ्ख्याकारकसापेक्षसुपस्तस्यामवस्थायां तदनभिव्यक्त्याऽप्रवृत्तेश्च। वस्तुतस्तु तद्धिताऽन्तत्वनिमित्त-प्रातिपदिकसञ्ज्ञा-समकालमेव विरोधाऽभावेन तत्पूर्वभागस्य समाससञ्ज्ञेति बोध्यम्। यौगपद्याऽसम्भवे एव शास्त्राणां क्रमप्रवृत्त्यङ्गीकारादिति दिक्।

यत्त्वाहुरिति। [3]'ङी'ग्रहणन्तु 'लोहिनिके'त्यर्थमिति तद्भावः। अनेनेति।

---

[1] 'आद्युदात्तत्वस्य बाध' इति क. ख. पाठः।

[2] 'पश्चात्सुबिति' इति क. पाठः।

[3] 'ङीप्' इति क. ग. पाठः।

**बृहच्छब्दरत्नः**

'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इति न्यायेन 'सुपी'तिसप्तम्याः षष्ठ्यर्थे कल्पनेनाऽङ्गकार्यत्वाऽभावेन च 'न लुमते'त्यस्याऽप्रवृत्तौ समावेशस्य सत्त्वेऽपि, पूर्वं प्रवृत्तेर्दुरुपपादत्वाच्च। किञ्च 'लुक्'शब्दस्य लुक्प्रयोजकीभूतसमासादिपरत्वस्याऽऽवश्यकत्वेन 'दास्याःपुत्र' इत्यादावाक्रोशे यण्-समासयोः समावेशदर्शनेनाऽऽक्रोशादन्यत्राऽपि समावेशाऽऽपत्तेः। यथाकथञ्चिद्भेदाऽङ्गीकारे तु प्रकृतेऽपि तुल्यम्। यत्तु अन्तरङ्गानपीति न्यायोऽकृतव्यूहपरिभाषायामनन्तर्भूत, उताऽन्तर्भूतः? । नाऽऽद्यः। 'अन्तरङ्गानपी'ति न्यायेनाऽऽद्युदात्तस्यैव 'सु-उत्थित' इत्यत्र दीर्घाऽप्रवृत्तौ, तत्प्रवृत्तिबोधनेन 'समर्थ'पदसार्थक्येऽकृतव्यूहपरिभाषायां ज्ञापकं न स्यात्। नाऽन्त्यः। लुक्यपि प्रवृत्तत्वेन निमित्तविनाशाऽभावेनोक्तन्यायाऽप्रवृत्तेरि'ति। तदज्ञानविजृम्भितम्। 'अन्तरङ्गानपी'ति न्यायेन लुक्प्रयोजकीभूत-कृत्तद्धितसमादीनां स्वाऽव्यवहितपूर्वप्रवृत्ताऽन्तरङ्गाऽपेक्षयैव प्राबल्यं बोध्यते। उपस्थितत्वात्। [1]'सूत्थित' इति दीर्घस्तु तद्धितप्रकृतिकसुबुत्पत्तेः पूर्वं प्रवृत्तस्तद्धितेन बाधितुमशक्य' इति 'समर्थ'ग्रहणं ज्ञापकमेव।

किञ्च'अन्तरङ्गानपी'ति न्यायो लुक्स्थानीभूतप्रत्ययनिमित्तकार्यस्यैव बाधकः। उपस्थितत्वात्। अत एव 'अन्तरङ्गानपी'ति न्यायेनोञ्छादिपाठात्, सर्वादिपाठाद्वा विहितमन्तोदात्तत्वं न प्राप्नोती'ति निरस्तम्। किञ्च 'सर्वस्य सुपी'त्याद्युदात्तप्रवृत्त्यङ्गीकारे प्रातिपदिकाऽधिकारे कृतेऽपि 'सर्वेषां विकारः सार्व' इति न सिद्ध्येत्। 'प्रातिपदिकविशेषणत्वेन सुबन्ताऽविशेषणत्वान्न दोष' इति चेत्। 'गर्गादिभ्यो यञि'त्यादौ 'तस्ये'त्यनुवर्त्तमानस्या[2]ऽनन्वयात्सिद्धान्तेऽपि तत्प्रकृतिकलक्षणायाः सर्वत्र तद्धितादिविधावावश्यकत्वेन 'अनुदात्तादेश्च'त्यत्रा'ऽनुदात्तादिप्रकृतिकात् सुबन्तादि'त्यर्थाऽऽपत्तौ ममाऽपि सुबन्ताऽविशेषणत्वस्य तुल्यत्वात्। प्रकृतोदाहरणेऽनुदात्तादिप्रकृतिकसुबन्तत्वाऽभाव[3] इति चेत्तर्हि प्रकृतोदाहरणे 'अनुदात्तादिप्रातिपदिकाऽभाव' इति मयाऽपि वक्तुं शक्यम्। 'प्रातिपदिकाऽधिकारसामर्थ्यात्तत्तत्स्वराऽभावेऽपि तत्तत्स्वरनिमित्तप्रत्यय' इति चेत्तर्हि 'सर्वशब्दस्याऽन्तोदात्तपाठसामर्थ्यात्प्रकृतिस्वरनिमित्तप्रत्यय' इति मयाऽपि सुवचम्। नन्वन्तोदात्तपाठे मानाऽभाव इति चेन्न। तवाऽपि दोषस्य तुल्यत्वात्। भाष्यग्रन्थः, 'सार्व' इत्यत्वन्तप्रयोगश्च मानमि'ति तूभयोरपि समानम्।

किञ्च लुगाद्युदात्तयोः समावेशो बहुव्रीहावेव। अन्यथा 'सुपी'त्यस्य वैयर्थ्याऽऽपत्तेः। प्रथमोपस्थिततत्पुरुषं विहाय 'सर्वस्तोमः' 'अतिरात्र' इति बहुव्रीहिमुदाहरन् भाष्यकारोऽपि मानम्। एवञ्च सति प्रातिपदिकाऽधिकारो वृथैवेति चेत्। अत्र ब्रूमः—वाक्याऽर्थे कुत्सादियोगस्य वक्तुं शक्यत्वेन वाक्यात्तद्धितो-

---

[1] 'उत्थित' इति दीर्घस्तु' इति क. ख. पाठः।

[2] 'अनुवर्त्तमानाऽनन्वयात्' इति क. ख. पाठः।

[3] 'अनुदात्तादिप्रकृतिसुबन्तत्वाऽभावः' इति क. ख. पाठः।

ङ्यापोर्ग्रहणं माऽस्तु। 'सुबन्तात्तद्धितोत्पत्तिरि'ति [1]हि निष्कर्षः। सुपः प्रागेव च

बृहच्छब्दरत्नः

त्पत्तौ, तदन्तस्य प्रातिपदिकत्वे सुब्लुकि चाऽनिष्टं स्पष्टमेव। किञ्च 'पचतिकल्पमि'त्यादाविव धात्वादिभ्य एकवचनमात्रोत्पत्तिर्दुर्वारा। न च 'घकालतनेष्वि'तिज्ञापकेन निर्वाहः। कदा चित्सुबन्तस्याऽपि प्रकृतित्वेनाऽनुत्पत्तेरभावात्। अपि च 'गवित्ययमाहे'त्यादावनुकार्याऽनुकरणयोरभेदविवक्षायामपि सुबाद्यापत्तिः। आक्षेपेण लिङ्गसङ्ख्याकारकाऽन्वययोग्याऽर्थप्रतिपादकप्रातिपदिकरूपप्रकृतिलाभवत् प्रातिपदिकभिन्नाऽनुकरणस्याऽऽप्याक्षेपसम्भवात्। 'गौरित्याहे'त्यादौ भेदविवक्षायां शब्दमात्रे सुबर्थाऽन्वयदर्शनेन तद्धर्माऽऽक्रान्तत्वात्। किञ्च 'पश्य मृगो धावती'त्यादौ द्वितीयादिकं दुर्वारम्। सिद्धान्ते तु प्रातिपदिकत्वाऽभावान्न दोष इति यथान्यासमेव रमणीयम्।

निष्कर्ष इति। ननु 'स्तनकेशवती स्त्री स्यादि'त्यादिलक्षणलक्षितं लिङ्गं तावद्व्याकरणे आश्रयितुमशक्यम्। 'दारानि'त्यादौ नत्वाद्यभावप्रसङ्गात्। 'तटः' 'तटी' 'तटमि'त्यादौ लिङ्गत्रयनिबन्धनकार्याणामसिद्धिप्रसङ्गाच्च। किन्तूपचयाऽपचय-स्थितीनामेव पुंस्त्व-स्त्रीत्व-नपुंसकत्वादिव्यवहारः। अवस्थात्रयस्य पदार्थमात्रे साक्षात्परम्परया वा सत्त्वात्। अत एवाऽऽत्मनि सर्वस्याऽध्यस्तत्वेनोपचयादीनां परम्परासम्बन्धेन सत्त्वाल्लिङ्गयोगः। 'व्यवहारकाले चोपचयाऽऽदीनां सत्त्वे'ति नाऽऽग्रहः, तेन भूतं, भाविनमुपचयाऽपचयमादाय प्रयोगो युज्यते। 'न हीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते' इति भाष्यात्तथैव लाभात्। उपचया-ऽपचयोरपि स्थितेः सत्त्वेन स्थितिमात्रविवक्षायां नपुंसकत्वम्। [2]इदमेवाऽभिसन्धाय 'सामान्ये नपुंसकमि'त्युद्घोषः। एतेन 'उपचयाऽपचयादेर्विरुद्धस्यैकत्र समावेशाऽयोगादेकस्य त्रिलिङ्गताऽनापत्त्योपचयादीनां क्षणिकत्वाऽभ्युपगमे युगपद्व्यवहाराऽनापत्त्या च, 'आत्मा' 'ब्रह्मे'त्यादावविकारिण्यसम्भवाच्च शब्दनिष्ठमेव लिङ्गमि'ति परास्तम्। किञ्च लिङ्गस्य शब्दनिष्ठत्वेऽपि 'मध्वादिशब्दानां माक्षिकादौ पुं-नपुंसकत्वं, चैत्रादौ शुद्धपुंस्त्वमि'ति व्यवस्थाऽनापत्तिः। यदि कोश-लिङ्गाऽनुशासनबलात्स्थितिविशिष्टोऽपि माक्षिकवाचकः, उपचयविशिष्ट एव चैत्रादिवाचकः, एवं 'स्वशब्द-उपचयविशिष्ट आत्मनि, त्रितयविशिष्ट आत्मीये' इति व्यवस्थाऽङ्गीक्रियते, तर्हि 'लिङ्गस्याऽर्थनिष्ठत्वेऽपि कोशादिबलात् स्थितिरूपोऽर्थोऽपि माक्षिकादिनिष्ठः, उपचय एव तु चैत्रादिनिष्ठ उच्यते' इत्यर्थस्याऽपि वक्तुं

लघुशब्दरत्नः

[3]'आर्यके'त्यसाधनेनेत्यर्थः। सुबन्तात्तद्धितोत्पत्तौ, प्रागेव ङ्यापोः प्रवृत्तौ च बीजमाह—

[1] 'हिः' मुद्रितेषु त्रुटितः।

[2] 'इदमेव सन्धाय' इति क. ख. पाठः।

[3] 'आर्यकेत्यस्य असाधनेनेत्यर्थ' इति मुद्रिते पाठः।

बृहच्छब्दरत्नः

शक्यत्वेन, लिङ्गस्य शब्दनिष्ठत्वाऽऽग्रहो मुधैव। एवञ्च 'तृतीयादिषु' इत्यादौ 'भाषितपुंस्क'शब्दस्य 'प्रवृत्तिनिमित्तैक्ये भाषितपुंस्क' इत्यर्थः सुगम इति ध्येयम्। पुंसादिशब्दानां [1]शब्दपरत्वं वाच्य-वाचकयोरभेदात्। न हि निमित्ते सति न्यायान्नाऽनिष्टम्। इदञ्च लिङ्गं शाब्दबोधे न भासते इति सर्वतन्त्रसिद्धम्। तथाऽनुभवाऽभावात्। शाब्दबोधे भासमानं लौकिकलिङ्गन्तु न टाबादिनिमित्तम्। उक्तदोषाऽऽपत्तेः। इदमेव सकलमभिसन्धाय सरूपसूत्रादौ भगवता भाष्यकारेणोक्तं—'तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यं कश्चित्स्वकृतान्त आस्थेय' इत्यादि। एवञ्च 'वस्तुतस्त्वि'त्यादिमनोरमाग्रन्थ, एवं तदर्थप्रतिपादकभाष्यादिग्रन्थाश्च न युक्ता इति चेत्। अत्रोच्यते—पुंसादिशब्दानामुपचयादौ वृद्धि-गुण-नद्यादिवच्छास्त्रीयः सङ्केतः। तत्र टि-घु-भादिवल्लघुभूतसञ्ज्ञाकरणस्य युक्तत्वेन, एवंगुरुभूतसञ्ज्ञाकरणसामर्थ्येन लौकिकस्याऽपि ग्रहणेन 'आङो नाऽस्त्रियां' 'तस्माच्छसो नः पुंसि' 'ह्रस्वो नपुंसके' इत्यादिभिः शास्त्रीये, लौकिके च कार्यं विधीयते। तत्र लौकिकेऽसम्भवे शास्त्रीये लिङ्गे प्रवर्त्तते। तत्सम्भवे तु तत्रैव। पुंसादिसङ्केतानां सङ्ख्यासञ्ज्ञाया इवाऽर्थाऽन्तरसङ्ग्रहार्थं प्रवृत्तत्वेऽप्यर्थाऽन्तरनिरासाऽर्थमप्रवृत्तत्वेन लौकिकलिङ्गस्य पुंसादिशब्दवाच्यत्वेन, लोक-शास्त्रोभयसंमतत्वेनाऽभ्यर्हितत्वात्। एवञ्च स्त्रियां 'पशून्' 'पशुना' इत्यादिप्रयुक्ते शास्त्रीयलिङ्गे 'ना'भावादिकम्। पुंपशौ प्रयुक्ते तु लौकिकलिङ्गे एव। अत एव 'पशुना यजेते'त्यत्र 'पुंस्त्वस्य विवक्षितत्वान्न स्त्रिया याग' इति मीमांसकोद्घोषः सङ्गच्छते।

एतेन 'छागो वा मन्त्रवर्णादि'ति षष्ठाऽन्त्याऽधिकरणन्यायेन पुंस्त्वस्य नियमो बोध्यः। छागशब्दस्याऽकाराऽन्तस्य स्त्र्यव्यक्तावप्रयोगेण लौकिकपुंस्त्वविशिष्टे पारिभाषिके शक्तत्वादि'ति निरस्तम्। शास्त्रीयलिङ्गबोधस्य पूर्वं दूषितत्वात्। विशिष्टशक्तिकल्पनस्य गौरवग्रस्तत्वाच्च। अत एव शास्त्रीयं लिङ्गं न टाबादिवाच्य, किन्त्वर्थनिष्ठमात्रेण विवक्षितं सत्कार्योत्पत्तौ प्रयोजकम्। टाबादयस्तु स्वार्थे एव। लौकिकलिङ्गन्तु वाच्यं, द्योत्यं वेत्यादि वक्ष्यामः। तत्र लौकिकलिङ्गभानस्य शाब्दबोधे सर्वसंमतत्वेन 'स्वार्थद्रव्ये'त्यादिभाष्यकारोक्तरीत्या स्वार्थद्रव्यप्रयुक्तकार्योत्तरं सङ्ख्याकारककार्यप्रवृत्तेः पूर्वं लिङ्गप्रयुक्तकार्यप्रवृत्तेर्बोधितत्वेन, तत्साहचर्याच्छास्त्रीये लिङ्गेऽपि तथैव प्रवृत्तिरि'ति मनोरमाग्रन्थो युक्त एवेति सूरय एव विभावयन्तु। नन्वयं निष्कर्षो न्यायमूलकः, तद्धिताऽर्थसम्बन्धाऽपेक्षया सुबर्थसङ्ख्यादिसम्बन्धस्याऽन्तरङ्गत्वात्। युक्तरञ्चैतत्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वेन पूर्वं जात्यादिज्ञानं, ततो धर्मित्वेन प्रधानत्वाल्लिङ्गाद्यपेक्षया पूर्वं तस्यैवाऽऽकाङ्क्षितत्वात्तदवच्छिन्नं द्रव्यं बुध्यते। सङ्ख्याकारकयोर्भिन्नपदार्थाऽपेक्षत्वात् स्वमात्राऽपेक्षधर्मरूपलिङ्गस्य पूर्वमाकाङ्क्षा। विजातीयक्रियारूपपदार्थाऽपेक्षया

[1] 'शब्दे परत्वम्' इति क. ख. पाठः।

बृहच्छब्दरत्नः

अवान्तरधर्मसंज्ञानाऽनपेक्षभेदाऽपेक्षत्वेन सङ्ख्या प्रथममुपस्थितैव। तत [1]इतरा-ऽन्वयाऽर्थं विभक्त्यर्थाऽऽकाङ्क्षा। तच्च कारकमकारकं वा। एवं हि परिपूर्णाऽर्थस्य कुत्सादिभिर्योगः। स्वार्थादयो हि द्रव्यस्य कुत्सादिहेतवो भवन्ति। एवञ्च [2]पूर्वपदार्थनिमित्तकार्यस्याऽल्पपदार्थाऽपेक्षत्वेनाऽन्तरङ्गत्वमस्त्येव। एवञ्च लिङ्गादीनां प्रत्ययाऽर्थत्वाऽङ्गीकारेऽप्यन्तरङ्ग-बहिरङ्गभावः सुलभः। अयञ्च क्रमः सर्वप्रतिपादनतात्पर्यविषयः। यत्र तु केवलधर्मिमात्रप्रतिपादने तात्पर्यं, तत्र स एव प्रातिपदिकाऽर्थः। अत एव 'प्रकृष्टप्रकाशश्चन्द्र' इति लौकिकोदाहरणे, [3]'सत्यं ज्ञानमि'ति वैदिकोदाहरणे चाऽखण्डार्थत्वमि'ति स्पष्टमुत्तरमीमांसायाम्। इदञ्चाऽर्थवति तद्धिते एव वक्तुं शक्यम्। अत्यन्तस्वार्थिकतद्धितानां न्त्वन्तरङ्गत्वात् प्रातिपदिकादुत्पत्तौ बाधकाऽभावेन ङ्याब्ग्रहणमावश्यकमिति चेत्। अत्रोच्यते- स्वार्थिकतद्धितानां सुप-स्त्रीप्रत्ययाऽपेक्षया पूर्वमुत्पन्नत्वेऽपि, बाधकाऽभावः। तद्धितोत्पत्त्यनन्तरमार्यादिशब्दानामर्थवत्त्वाट्टाबादीनां दुर्वारत्वेन रूपद्वयस्य सिद्ध-त्वात्। न च तद्धितोत्तरं स्त्रीप्रत्ययेन स्त्रीत्वस्योक्तत्वान्न तद्धितात्पूर्वं टाबादिरिति वाच्यम्। वैपरीत्यस्याऽपि प्राप्तेः। विनिगमनाविरहादुभयत्रोत्पत्तेर्युक्तत्वाच्च[4]। यदि क्रामिक्युत्पत्तिः स्यात्तदाऽन्यतराऽभाव उपपादयितुं शक्यः। यदि वा प्रकृत्यर्थाऽपेक्षया प्रत्ययाऽर्थोऽधिकः स्यात्तदा प्रत्ययाऽर्थेन सह प्रकृत्यर्थस्यै-कार्थीभावाऽऽपन्नत्वेन प्रकृतिवाचकाट्टाबादिकं[5] न स्यात्। अत्यन्तस्वार्थिके तु न किञ्चिद्बाधकम्। इदञ्च 'न सामिवचने' 'कर्त्तृकर्मणोः कृती'त्यादिसूत्रेषु वृत्ति-पदमञ्जर्योर्ध्वनितम्। यद्वा [6]प्रकृत्यर्थाऽपेक्षयाऽतिरिक्तो वाच्यो, द्योत्यो वा माऽस्तु, प्रकृत्यर्थस्तु द्योत्योऽस्त्येव। अत एवैतस्याऽत्यन्तस्वार्थिकशब्देन व्यवहार आकरोक्तः सङ्गच्छते। स्वस्याः=स्वकीयायाः प्रकृतेरर्थः स्वार्थः, तत्र भवः= स्वार्थिकः। अत एव चाऽप्रत्यय इति पर्युदासेनैवाऽर्थवत्त्वे लब्धेऽर्थवद्ग्रहण-मन्याऽर्थमित्याकरोक्तं सङ्गच्छते। अत एव च 'प्रत्यय' इति महासञ्ज्ञाकरणमि'-त्युक्तम्। एवं सति प्रकृत्यर्थो [7]लौकिक एव ग्राह्यः। प्राधान्यात्। स च लिङ्ग-सङ्ख्या-कारकादियुक्त एवेति स्त्रीप्रत्ययस्य पूर्व प्रयोगः सिद्धः।

यद्वा 'निष्कर्ष' इत्यत्र 'घकालतनेषु कालनाम्न' इत्यनेन सुबन्तात्तद्धितो-त्पत्तेर्ज्ञापनादि'ति हेतुर्बोध्यः। अनर्थकतद्धितानां पूर्वं प्रवृत्तत्वेऽपि, ज्ञापकात्सुबपेक्षया, सुपः प्रागेव ङ्यापौ प्रवर्त्तेते इत्यत्र 'स्वार्थादी'त्यादिर्हेतुरित्यलम्[8]।

---

[1] 'इतराऽन्वयाऽर्थे' इति क. ख. पाठः। [2] 'पूर्वपूर्वं' इति क. पाठः।

[3] 'सत्यज्ञानम्' इति क. ख. पाठः।

[4] 'उभयार्थोत्पत्तेर्युक्तत्वाच्च' इत्यपि पाठः सम्भाव्यते।

[5] 'प्रकृतिवाचकाद्यचादिकम्' इति क. ख. पाठः।

[6] 'प्रकृतिप्रत्ययाऽर्थाऽपेक्षया' इति क. पाठः।

[7] 'अलौकिक:' इति क. पाठः।

[8] 'हेतुरलम्' इति क. ख. पाठः।

ङ्यापौ प्रवर्त्तेते। स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादित्यवधेयम्।

**सुङस्योरिति।** सोरुकारः अर्वणस्त्रसौ (६।४।१२७) इत्यत्र विशेषणाऽर्थः। 'असौ'त्युक्ते हि असकारादावित्यर्थः स्यात्। तथा च 'वाजमर्वत्सु पय उस्त्रियासु' इति न सिध्येत्। ङसेरिकारो युष्मदस्मद्भ्यां

---

**बृहच्छब्दरत्नः**

ङ्यापाविति। स्त्रीप्रत्ययमात्रोपलक्षणम्। अत एव भाष्यकाराद्युक्तं ङ्याप्ग्रहणस्य, 'त्यूङोर्ग्रहणं कर्त्तव्यमि'ति वार्तिकस्य च प्रत्याख्यानं सङ्गच्छते। उक्तयुक्त्या 'ब्रह्मबन्धूतरा' 'युवतिके'त्यादावूङ्टापोस्तिटापोश्चोत्पत्तेर्निरूपयितुं शक्यत्वात्। 'युवतिके'त्यत्र पुंवद्भावेन'ति'प्रत्ययाऽभाव' इति वदतो हरदत्तस्य महान्प्रमाद इति पुंवद्भावप्रकरणे निरूपयिष्यामः। न चेदं भाष्ये न प्रत्याख्यातमेवेति भ्रमितव्यम्। 'कथं कालिका,' 'कथं हरिणिके'त्यादिभाष्यस्यैव मानत्वात्। तत्राऽत्यन्तस्वार्थिक'क'प्रत्ययादेरप्युक्तयुक्त्या स्त्रीप्रत्ययाऽपेक्षया न पूर्वं प्रवृत्तिः, प्रवृत्तौ वा मध्ये स्त्रीप्रत्ययस्य दुर्वारत्वमिति वक्तुं शक्यते, तथाऽपि परिहाराऽन्तरमेवाऽऽदृत-

---

**लघुशब्दरत्नः**

स्वार्थादीति। स्वार्थ-द्रव्य-लिङ्ग-सङ्ख्या-कारकेत्यर्थः। स्वार्थः-प्रवृत्तिनिमित्तम्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्पूर्वं जात्यादिज्ञानं, ततो धर्मित्वेन प्रधानत्वाल्लिङ्गादिभिरप्याकाङ्क्षितत्वात्तदाश्रयज्ञानं, ततः स्वमात्राऽपेक्षत्वाल्लिङ्गस्य ज्ञानं, ततो [1]विजातीयक्रियाऽपेक्षकारकाऽपेक्षया सजातीयपदार्थाऽपेक्षसङ्ख्यायाः प्रथममुपस्थित्या तज्ज्ञानं, ततः कारकरूपविभक्त्यर्थाऽऽकाङ्क्षा, तन्निवृत्तौ हि बहिर्भूतकुत्सादियोग इति कुत्सिते (५।३।७४) इति सूत्रे भाष्ये स्पष्टम्। एवञ्च ज्ञानक्रमाऽनुरोधेनैव तत्तत्प्रयुक्तकार्यप्रवृत्तेरौचित्येन क्रमिकत्वं स्पष्टमेव। यद्यपि लोकानां बोधो न क्रमेण, तथाऽपि शास्त्रप्रक्रियायां शास्त्रकृत्कल्पितोऽयं क्रमः। अर्थवदुद्देशेन प्रातिपदिकत्वविधानात्, प्रातिपदिकोद्देशेन लिङ्गादौ ङीबादिविधानादित्यादि[2] बोद्धव्यम्। अत एव घकालतनेषु (६।३।१७) इति चरिताऽर्थम्। स्पष्टं चेदम् अचः परस्मिन् (१।१।५७) इत्यत्र भाष्य-कैयटयोः। एवं चैतन्न्यायसिद्धार्थाऽनुवाद एव [3]ङ्याब्ग्रहणम्। अत्यन्तस्वार्थिकानारभ्य तस्य [4]निवृत्तेरुक्तन्यायविषयाऽभावात्समासाऽन्तेषु न दोषः। अत्यन्तस्वार्थिके कनि 'आर्यिके'त्येव, यद्यभिधानमस्ति। 'लोहिनिके'त्येतत्सिद्ध्यर्थञ्च 'लोहिताल्लिङ्गबाधनं वे'ति कार्यमेवेति भावः। स्पष्टञ्चेदं सूत्रशेषे भाष्ये इत्यन्यत्र

---

[1] 'विजातीय-क्रियाकारकाऽपेक्षया' इति क्वचिन्मुद्रिते पाठः।

[2] 'इति बोध्यम्' इति मुद्रितः पाठः।

[3] 'ङ्याप्ग्रहणम्' इति क. ख. ग. घ. पाठः।

[4] 'तस्य निवृत्तेः, उक्तन्यायविषयाऽभावाच्च' इति मुद्रितेषु पाठः। स चाऽयुक्तः। 'निवृत्तौ हेतुमाह-'उक्तन्याये'ति। 'तेषामर्थाऽभावेनोक्तन्यायविषयत्वाऽभावादितिभाव' इति भावप्रकाश—भैरवीटीका-विरोधात्।

ङसोऽश् (७।१।२७) इत्यत्राऽस्य ग्रहणं मा भूदिति। यदि तु एकवचनस्य च (७।१।३२) इत्यत्र पञ्चम्या इत्यनुवृत्तेः परिशेषादन्यस्य ङसोऽत्र ग्रहणं भविष्यतीत्युच्यते, तर्हि टाङसिङसाम् (७।१।१२) इत्येतदर्थः। जश्शसो-र्जकारशकारौ जसः शी (७।१।१७) तस्माच्छसो नः (६।१।१०३) इत्यनयो-र्विषयविभागाऽर्थौ। अन्यतरस्य निरनुबन्धकत्वमेवाऽस्त्विति चेन्न। जसो जकाराऽभावे 'औ' इत्यस्याऽऽव् स्यात्। ततश्च प्रत्ययस्य वकाराऽन्तताऽपि सम्भाव्येत। एवं शसः शकाराऽभावे औटो डित्त्वं सम्भाव्येत। अतोऽसन्देहार्थं तत्करणौचित्यात्। औटष्टकारः 'सुडि'ति प्रत्याहाराऽर्थः। 'टा'टकारस्तु टाङसि (७।१।१२) इति विशेषणाऽर्थः। ङेप्रभृतीनां ङकारो घेर्ङिति (७।३।१११) इति विशेषणाऽर्थः। पकारस्तु प्रत्याहाराऽर्थः। एवञ्च सर्वेषां सफलत्वेऽपि 'सञ्ज्ञाऽर्थाः' इति प्राचो ग्रन्थोऽसङ्गत एव। 'सम्यग् ज्ञानं सञ्ज्ञा, तदर्थाः = विशेषणाऽर्था इति यावदि'ति भङ्क्त्वा व्याख्यानेऽपि क्लिष्टत्वमेवे-त्युपेक्षितम्।

[1]सुपः (१।४।१०३)। तिङस्त्रीणि त्रीणि (१।४।१०१) इति सूत्रात् 'त्रीणि त्रीणी'ति पदं, तान्येकवचन (१।४।१०२) इत्यादिसूत्रञ्च सम्पूर्णमनु-

बृहच्छब्दरत्नः

मित्यन्यदेतत्। एवञ्च 'युवन्'शब्दात्तिप्रत्यये दोषशङ्कैव न। 'घकालतनेष्वि'ति-ज्ञापकस्य विशेषाऽपेक्षतया लिङ्गाऽबोधकतद्धितस्यैव ग्रहणेन लिङ्गयोगात्पूर्वं सङ्ख्या-कारकादेः सम्बन्धाऽभावाच्चेति 'ति'प्रत्ययस्य सुबन्तादनुत्पत्तेरित्यास्तां तावत्। यदि त्विति। तदनुवृत्तिस्तृतीयादिव्यावृत्त्यर्थमवश्यमपेक्षिता। डित्त्वमिति। तथा च डाऽऽदेशे इवाऽभत्वेऽपि टिलोपाऽऽपत्तिरिति भावः। टाटकारस्त्विति। तत्फलन्तु 'सुपां सुलुगि'ति सूत्रेणाऽऽकारादेशे इनाऽऽदेशाऽभावः। ङितीति। इदमेव 'ङिती'ति पदम् 'आण्नद्या' इत्यादावनुवर्त्तते। सम्पूर्णमनुवर्त्तते इति। अत्राऽऽहुः-'सुप' इत्यावर्त्तते। 'त्रीणि त्रीणि प्रथममध्यमोत्तमा' इत्यनुवर्त्तते। 'प्रथममध्यमो-

लघुशब्दरत्नः

विस्तरः। पञ्चम्या इत्यनुवृत्तेरिति। तृतीयाव्यावृत्तये इति भावः। टाङसीति। तत्रेकाराऽनुच्चारणे इष्टस्य यथासङ्ख्यस्याऽनापत्तिरिति भावः। डित्त्वमिति। ततश्च टिलोपः स्यादिति भावः। विशेषणार्थं इति। तत्फलन्तु सुपां सुलुक् (७।१।३९) इति सूत्रेण आकाराऽऽदेशे इनाऽऽदेशाऽभावः। घेर्ङितीति। न च 'घेः सुपि गुण' इत्येवाऽस्तु,

[1] 'सुप' इति ख. ग. घ. ङ. नास्ति।

वर्त्तते इति व्याचष्टे—सुपस्त्रीणित्रीणीत्यादिना। एकश इति। एकैकमित्यर्थः। सङ्ख्यैकवचनाच्च (५।४।४३) इति वीप्सायां प्रथमान्ताच्छस्। यत्तु प्राचा 'एकैकश' इत्युक्तम्। तदयुक्तम्। शसैव वीप्साया उक्तत्वेन द्विर्वचनाऽयोगात्। 'येन नाप्राप्ति'न्यायेन द्विर्वचनाऽपवादः शसि'ति सिद्धान्तात्।

यत्त्वाहुः—'सर्वस्य द्वे (८।१।१) इत्यत्र 'एकैकशो ददाती'ति भाष्यप्रयोगात्, तान्येक (१।४।१०२) इतिसूत्रे 'एकश' इति सूत्रकारनिर्देशाच्चोभयं

---

बृहच्छब्दरत्नः

त्तमा' इत्यनेन प्रथमाद्वितीयादयः शब्दा लक्ष्यन्ते। प्रथमादयः सर्वे[1] स्त्रीलिङ्गाः। 'मध्यमा'शब्देन द्वितीयाशब्दो लक्ष्यते। 'उत्तमा'शब्देन तृतीयादिशब्दाः। 'सुपस्त्रीणि त्रीणि वचनानि प्रथमा-द्वितीया-तृतीया-चतुर्थी-पञ्चमी-षष्ठी-सप्तमी-सञ्ज्ञकानि भवन्ति'। महासञ्ज्ञाकरणञ्चाऽत्र मानम्। तस्य तु न पूर्वसूत्रे प्रयोजनम्। एतेन 'आवृत्तौ, लक्षणायां न मानमि'ति मन्दोक्तमपास्तम्। द्वितीय-'सुप' इतिसूत्रस्य तु मूलोक्त एवाऽर्थः। तत्रैकवचनसञ्ज्ञादिभिः [2]प्रथमाद्वितीयादिसञ्ज्ञानां बाधाऽभावाऽर्थं 'तानी'त्यस्याऽनुवृत्तिः। एतेन 'तानीत्यस्याऽनुवृत्तौ प्रयोजनं चिन्त्यमि'ति मन्दोक्तमपास्तम्। 'प्राचां सञ्ज्ञे'ति मूलग्रन्थस्तु पक्षाऽन्तराऽभिप्रायेण। 'प्रातिपदिकाऽर्थलिङ्गपरिमाणवचनमात्रे' इत्यादिप्रकरणे प्रथमा-द्वितीयादयः शब्दाः [3]प्रातिपदिकप्रकृतिकस्त्रीलिङ्गशब्दवाच्यप्रत्ययपरा इति तावन्निर्विवादम्। तत्र विभक्तिसञ्ज्ञायाः सत्त्वात्, प्रथमोपस्थितत्वाच्च 'स्वौजसमौडि'ति सूत्रोपात्ता एव गृह्यन्ते। तत्र प्रथमादयः शब्दाः 'समं स्यादश्रुतत्वादि'तिन्यायेन, प्रत्येकमेकवचनद्विवचनवहुवचन इत्यन्वर्थमहासञ्ज्ञात्रयविधानेन च सञ्ज्ञित्रयकल्पनाया उचितत्वेन त्रिकपराः। एवं च प्रथमादयः शब्दाः 'प्रथमा लक्ष्मीः'[4] 'द्वितीया गौरी'त्यादाविव लोकप्रसिद्धा एव, न साङ्केतिका इति कौस्तुभे पितामहचरणा इति दिक्।

---

लघुशब्दरत्नः

जसि च (७।३।१९) इति नियमात्तु नाऽङिति प्रवृत्तिरिति वाच्यम्। 'पतय' इत्यर्थं 'जसि चे'त्यस्याऽऽवश्यकत्वात्।

तान्येकेति। तत्राऽनुवृत्त-'तानी'त्यस्य लब्धव्याकरणाऽन्तरोक्तप्रथमादिसञ्ज्ञानीत्यर्थः।

---

[1] 'दयः सर्वे स्त्रीलिङ्गाः' इति क. ख. पाठः।

[2] 'प्रथमादिद्वितीयादि' इति ख. पाठः।

[3] 'प्रातिपदिकप्रकृतिके' इति क. ख. पाठः।

[4] 'लक्ष्मी' इति निर्विसर्गः क. ख. पाठः।

साध्वि'ति। तन्न। उदाहृतभाष्यस्याऽन्यविषयत्वात्। 'यत्र तद्धितेनाऽनुक्ता वीप्सा भवति, तत्र द्विर्वचनमि'त्युपक्रम्य हि 'तद्यथा-एकैकशो ददाती'ति-भाष्ये उदाहृतम्। व्याख्यातञ्च कैयटेन-'अल्पाऽर्थोऽप्येकशब्दोऽस्ति, तस्य वीप्सायां द्विर्वचने बह्वल्पार्थात् (५।४।४२) इति शस्प्रत्यय' इति। न चैषोऽर्थः प्रकृते सम्भवतीत्यास्तान्तावत्। राम इति। 'सञ्ज्ञाशब्दोऽय-मव्युत्पन्न' इति पक्षेऽर्थवत्सूत्रेण प्रातिपदिकसञ्ज्ञा। 'करणाऽधिकरणयोश्चे'-त्यधिकारे घाऽपवादेन हलश्च (३।३।१२१) इति घञा 'रमन्तेऽस्मिन्नि'ति-व्युत्पादने तु 'कृत्तद्धिते'ति सूत्रेणेति विवेकः।

**सरूपाणामेकशेष एकविभक्तौ (१।२।६४)। एकविभक्तौ**

---

**बृहच्छब्दरत्नः**

अल्पेति। तत्र परत्वाद् द्विर्वचनं, ततः शसिति भावः। न चाऽर्थनिरपेक्ष-त्वेनाऽऽदावन्तरङ्गत्वाच्छसिति वाच्यम्। तस्याऽपि कारकाद्विधानेन, मङ्गलादि-रूपाऽर्थाऽपेक्षणेन च तदभावात्। एतेन 'अइउणि'ति सूत्रस्थम् 'ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्वा तया सर्वे ते सहस्रदक्षिणाः सम्पन्ना' इति भाष्यं व्याख्यातम्। अल्पाऽल्पायेत्यर्थः। ब्राह्मणेष्वल्पत्वन्तु गोविक्रयणात्, गोपरि-पालने शक्त्यभावाच्च बोध्यम्। यद्वा 'एके'ति प्रधानाऽर्थकैकशब्दस्य सम्बोधनम्। 'एकश' इत्यस्य तु प्रत्येकमर्थः। एतेनोक्तभाष्यप्रामाण्यात्स्वार्थिकशसप्रत्ययकल्पनेन 'एकैकश' इति साधुरिति निरस्तम्। स्वार्थे द्विर्वचन-विभक्तिलोप-कल्पनेनाऽपि भाष्यस्योपपन्नत्वेन, स्वार्थिकशस्प्रत्ययकल्पने मानाऽभावाच्च। किञ्च स्वार्थिक-शसोऽन्तरङ्गत्वेन द्वित्वात्पूर्वं प्रवृत्त्या, शसन्तस्य द्विर्वचनाऽऽपत्तौ, त्वदुक्तप्रयोगा-

---

**लघुशब्दरत्नः**

वीप्सायां द्विर्वचने इति। शसः कारकाद्विधानेन, मङ्गलाऽमङ्गलरूपाऽर्थाऽपेक्षणेन च बहिरङ्गतया, द्विर्वचने कृते शसिति भावः। यद्यपि क्वचिदुक्ताऽर्थानामपि प्रयोगो भवति, तथाऽपि 'यत्र तद्धितेनाऽनुक्ता वीप्सा भवति, तत्र द्विर्वचनं, यथा 'एकैकशो ददाती'त्यादि-भाष्योक्त्या, 'अल्पाऽर्थकैकशब्दाद्वीप्सायां द्विर्वचने बह्वल्पार्थात् (५।४।४२) इति शसि'ति-कैयटोक्त्या च प्रकृते तद्वक्तुमशक्यम्। न चैवम् 'ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा, तया ते सर्वे सहस्रदक्षिणाः सम्पन्ना' इति अइउण्सूत्रस्थभाष्ये 'एकैकश' इति प्रयोगा-ऽसङ्गतिरिति वाच्यम्। 'एके'ति प्रधानाऽर्थकसम्बोधनसत्त्वेन 'एकश' इत्यस्य 'प्रत्येकमि'त्यर्थ-कत्वेनाऽदोषात्। एतद्भाष्यप्रामाण्येन स्वार्थिकद्विर्वचनकल्पनाऽपेक्षया मदुक्तस्यैव न्याय्यत्वात्। किञ्च नाऽयं भाष्यप्रयोगः, किन्तु 'गौण्यप्युत्तरा सङ्ख्या पूर्वां सङ्ख्यां बाधते' इत्यत्र श्रौतो वा, स्मार्त्तो वाऽयं व्यवहारो दृष्टान्तत्वेनोक्तो भगवतेति, तत्र च्छान्दसत्वान्न दोषः, 'एकैकशः पितृसंयुक्तानि'त्यादिवदिति दिक्। रमन्तेऽस्मिन्निति। 'योगिन' इति शेषः।

यानीति। विभक्तिः सारूप्ये उपलक्षणं, न त्वेकशेषे निमित्तम्। एवञ्चाऽनैमित्तिकत्वेनाऽन्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्त्तते। यद्येतन्नारभ्येत, तर्हि प्रत्येकं विभक्तिः स्यात्, द्वन्द्वश्च प्रवर्त्तेत। आरब्धे त्वेकशेषेऽनेकसुबन्तविरहाद् द्वन्द्वस्याऽप्राप्तिरेव फलिता भवतीति भावः। सरूपाण्येवेति। एतच्च [1]उत्तरसूत्रस्थस्यैवकारस्येहाऽनुकर्षणाल्लभ्यते। तेन मातृशब्दयोर्जननी-

---

**बृहच्छब्दरत्नः**

ऽसिद्धिर्दुष्परिहरैव। यत्तु 'क्वचिदुक्ताऽर्थानामपि प्रयोगस्य सत्त्वेनोभयोर्वीप्साबोधकत्वे न क्षतिरि'ति। तन्न। क्वचिदुक्ताऽर्थानां प्रयोगेऽपि[2] सर्वत्र तत्सत्त्वे मानाऽभावात्। अत एव 'यत्र तद्धितेनाऽनुक्ता वीप्सा तत्र द्विर्वचनमि'ति-भाष्यकारोक्तं सङ्गच्छते इत्यलम्।

लभ्यते इति। तथा च 'नित्य'ग्रहणाऽनुवृत्त्यैव सिद्धौ तत्सामर्थ्याद्विभक्तित्वाऽवच्छेदेन वैरूप्याऽभावस्य विवक्षणान्न दोष इति भावः। न चैकविभक्ताविंत्युपादानसामर्थ्याद्विभक्तित्वाऽवच्छेदेन सारूप्यविवक्षणादुक्तदोषो नेति वाच्यम्। 'एकविभक्तावि'त्यस्याऽभावे 'हरिण' 'हरित'शब्दयोरप्येकशेषाऽऽपत्तेः। स्त्रीप्रत्यये वैरूप्याऽभावस्य सत्त्वात्। हरिणस्त्रीवाचक'हरिणी'शब्दस्य, हरितवर्णविशिष्टस्त्रीवाचक'हरिणी'शब्दस्य चैकशेषाऽनापत्तेश्च। पुंवद्भावेनाऽन्यत्र वैरूप्यात्। किञ्च सञ्ज्ञाभूत-'दार'शब्दस्य, स्त्रीवाचक'दार'शब्दस्य चैकशेषाऽनापत्तिः। अन्यतरस्य एकवचन-द्विवचनयोः प्रयोगाऽभावेन विभक्तित्वाऽवच्छेदेन सारूप्याऽभावात्। एवकाराऽपकर्षे तु वैरूप्याऽभावे तात्पर्यान्न दोषः। प्रमाणाऽन्तरमप्यनुपदमेव निरूपयिष्यामः। न चैवमपि मातृशब्दयोरेकशेषो दुर्वारः,अङ्गकार्यत्वेन दीर्घादीनामसिद्धत्वादिति वाच्यम्। सारूप्ये विभक्तेरुपलक्षणत्वेनाऽऽश्रयणेन तदंशे समत्वात्। एकशेषे विभक्तेर्निमित्तत्वेनाऽनाश्रयणादन्तरङ्गत्वात्पूर्वं प्रवृत्तिर्निर्विघ्नैव। किञ्च तदंशे सामर्थ्यान्न्यायबाधेऽप्यंशाऽन्तरे तद्बाधकल्पने न किञ्चिन्मानम्। लौकिकप्रयोगस्य ग्रहणान्न दोषशङ्केत्यपि वदन्ति।

---

**लघुशब्दरत्नः**

इति भाव इति। एतावतैव 'द्वन्द्वाऽपवाद एकशेष' इति व्यवहार इति भावः। एतेनैकशेषाऽऽरम्भफलमपि निरूपितं द्वन्द्वनिवृत्तिरूपम्। उत्तरसूत्रस्थस्येति। वृद्धो यूना (१।२।६५) इतीत्यर्थः। अनुकर्षणादिति। अनु=पश्चात्, कर्षणात्=आकर्षणादित्यर्थः। क्व चित् 'अपकर्षणादि'त्येव[3] पाठः।

---

[1] 'उत्तरसूत्रस्थैवकारस्य' इति मुद्रितेपु पाठः।

[2] 'उक्तार्थानामप्रयोगेऽपि' इति क. ख. पाठः।

[3] 'इत्यपि पाठः' इति मद्रितः पाठः।

वाचि-परिच्छेत्तृवाचिनोर्नैकशेषः । 'मातृभ्यामि'त्यादौ सारूप्येऽपि औजसादिषु

बृहच्छब्दरत्नः

मातृभ्यामित्यादाविति । आदिना 'माते'ति प्रथमैकवचनं बोध्यम् । यत्तु'तैरि'-त्युक्ते स्त्र्यर्थस्य, 'ताभिरि'त्युक्ते पुमर्थस्याऽनवगमादनुप्रयोगविरोधान्नैकशेष' इति । तन्न । 'घटावि'त्युक्ते 'घटपटावि'त्यर्थाऽनवगमेन 'सरूपाणामि'त्यस्य वैयर्थ्या-ऽऽपत्तेः । प्रयोगाऽन्तराऽऽपादनवदनुप्रयोगाऽन्तरस्याऽऽपाद्यत्वाच्च । 'त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानी'त्यनेन 'तैरि'त्युक्ते स्त्र्यर्थाऽवगमाच्च । अनुप्रयोग-विरोधेऽपि एकशेषस्य दुर्वारत्वाच्च । यत्तु 'परिच्छेत्तृवाची 'मातृ'शब्दो न स्त्रीलिङ्गः । ङीबापत्तेः । नच स्वस्रादिप्रयुक्तो निषेधः । साहचर्येण ससम्बन्धिक-जननीवाचकस्यैव तत्र ग्रहणात् । अन्यत्र तु 'पुमान् स्त्रिया' 'नपुंसकमनपुंसके' इति सूत्राभ्यामेकशेषो दुर्वार' इति । तन्न । भाष्यादिप्रामाण्येन साहचर्याऽनङ्गी-कारात् । 'पुमान् स्त्रिये'त्यादौ 'विभक्तौ' इत्याद्यनुवृत्त्या[१] 'तदितरकृतविशेषाऽभावे[२]

लघुशब्दरत्नः

नैकशेष इति । भ्यामादावपीत्यर्थः । भ्यामि स्त्रीपुंसयोस्ताभ्यामित्यनुप्रयोगस्य समत्वात् । एतेन 'अनुप्रयोगविरोधादत्र नैकशेष' इत्यपास्तम् । पुमान्स्त्रिया (१।२।६७) इत्येकशेषोऽपि न । तत्राऽप्येकविभक्तौ सरूपाण्येवेत्यनुवृत्तेः । अत एव 'प्रातिपदिकैकशेषे मातृ-मात्रोः प्रतिषेधो वक्तव्य' इति वार्त्तिककृतोक्तम् । ननु वार्तिके 'प्रातिपदिकैकशेषे' इत्ययुक्तम् । विभक्त्यन्तानामेकशेषेऽपि जननीमातृ-धान्यमात्रर्थके 'मातृभ्यां देहि, मातृभ्याञ्चे-' त्यत्र प्रतिषेध आवश्यकः । न च तत्पक्षे इष्टाऽऽपत्तिः । 'किमुच्यते प्रातिपदिकानामेकशेष इति, न पुनर्यस्याऽपि विभक्त्यन्तानामेकशेषस्तेनाऽपि प्रतिषेधो वक्तव्यः स्यात्, तस्याऽपि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि—'[३]मातृभ्यां मातृभ्याञ्चे'ति । 'अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेकशेषेणे'ति भाष्योक्तेरिति वाच्यम् । सूत्रव्याख्यानपक्षभेदेनैकलक्ष्यस्य साधुत्वाऽसाधुत्वयोरनौचित्यात् । अत एव 'अथ मतमेतदि'ति प्रतीकमुपादाय 'अभ्युपगमवादेन त्वेतदुच्यते' इति कैयटादिभिर्व्याख्यातमिति चेन्न । ईदृशविरुद्धमभ्युपेत्यैव वार्त्तिके तदुक्तेः । अत एव तदुत्तरम्—'एवञ्च कृत्वा चोद्यते' इत्युक्तं भाष्ये । अस्य 'प्रातिपदिकानामेकशेष इत्यादी'ति शेषः । अनेन चाऽस्य पूर्वपक्षवार्त्तिकत्वं स्फुटमेवोक्तम् । तत्र मातृग्रहणं विभक्तौ विरूपाणामुपलक्षणम् । अयञ्च पूर्वपक्षः प्रातिपदिकैकशेषस्य 'एकविभक्तावि'ति पदाऽभावे एवोपपत्तिं मत्वा कृतः । तदभावे हि 'यानि सरूपाणि तेषामेकशेष एवे'त्यर्थ एव प्राप्नोति । प्रयोगमात्राऽवच्छेदेन सारूप्यस्य हरिण-हरित-प्रकृतिक-'हरिणी'शब्दादौ तद्धिते वैरूप्येणाऽसम्भवा-त्प्रयोगसामानाधिकरण्येनैव सारूप्यस्य ग्राह्यतया, तस्याऽत्राऽपि सत्त्वात्प्राप्तस्य स निषेधः ।

१ 'एकविभक्तौ सरूपाण्येव' त्यस्याऽनुवृत्तिस्तत्रेत्यर्थः :

२ 'विशेषाऽभावः' इति क. ख. पाठः ।

३ 'मातृभ्यां च मातृभ्यां चेति' इति क. पाठः । मुद्रितेषु तु 'मातृभ्यां चेति' इत्येव पाठः ।

३८

वैरूप्यात् । एक एवेति । एतच्च सहविवक्षायामेव प्रवर्त्तते । 'इतरेतरयोग-द्वन्द्वस्य विषये' इति यावत् । यत्र हि अनेकस्याऽर्थस्य मिलितस्येतराऽन्वयः स तथाभूतोऽस्य विषयः । इदश्च इदितो नुम् धातोः (७।१।५८) इति-

---

**बृहच्छब्दरत्नः**

सरूपाणां विभक्तौ' इति सूत्राऽर्थाच्च । 'सरूपाणामि'ति पदस्याऽर्थद्वयपरत्वेन उत्तरत्राऽपि तथैव युक्तम् । एतावान् परं विशेषः—'सरूपाणामि'ति सूत्रे पृथक्तया निमित्तत्वम्, उत्तरत्र तु समुच्चयेने'ति कश्चित् । ननु 'विभक्तौ' इत्यस्य सारूप्यमात्र-विशेषणे उद्देश्यकोटौ पदगन्धस्याऽप्यप्रविष्टत्वेन[1] 'समर्थः पदविधिरि'ति परिभाषाया अप्रवृत्तौ एकत्राऽन्वयाऽभावेऽप्येकशेषाऽऽपत्तिरित्याशङ्क्याह-एतच्च सहेति । एतेन 'इन्द्रो मरुत्वान् मघवे'त्यादि समर्थितम् । एकशेषाऽकरणेन सहविवक्षाऽभावस्या-ऽनुमानात् । 'ततः संप्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ' इत्यादौ नाऽऽत्मनेपदादिकम् । कर्मव्यतिहारादीनामविवक्षितत्वादि'त्याकरग्रन्थानामयमेवाऽऽशयः । एतेन 'शब्द-स्वरूपपरत्वेन भिन्नाऽर्थत्वान्नैकशेष' इत्यपास्तम् । सर्वेषां शब्दपरत्वेऽभिमता-ऽर्थाऽसिद्धेः । 'प्रसिद्धशब्दस्यैवाऽर्थपरत्वमि'ति तु रिक्तं वचः । समान-विभक्तिकत्वेन भेदाऽन्वयस्याऽव्युत्पन्नत्वात् । अभेदस्य बाधाच्च । प्रसिद्धत्वस्य निर्णेतुमशक्यत्वाच्च । 'विनायको विघ्नराज-द्वैमातुर-गणाऽधिपाः । अप्येकदन्त-हेरम्ब-लम्बोदर-गजानना' इत्यादौ तत्तद्वाच्यत्वेन लक्षणया भिन्नरूपाऽर्थबोधान्नैकशेषः । एतेन 'शाब्दबोधे शब्दस्याऽपि भानमि'ति वादिनां मते सर्वत्रैव भिन्नाऽर्थत्वस्य सत्त्वेन 'विरूपाणामि'तिवार्त्तिकवैयर्थ्याऽऽपत्त्या शब्दाऽतिरिक्त-भिन्नाऽर्थ-त्वाऽभाव-विवक्षाया आवश्यकत्वे 'वक्रदण्डावि'त्यादावविवैकशेषो दुर्वार' इत्यपास्तम् ।

---

**लघुशब्दरत्नः**

अत एवाऽग्रे विभक्तेः सारूप्ये उपलक्षणत्वमाश्रित्य तत्पक्षस्थापनेन तत्खण्डनं कृतमिति एवकाराऽपकर्षो भाष्ये ध्वनितः । तं विना तावन्मात्रेण तत्खण्डनाऽयोगात् । एतेन 'एकविभक्ता-वि'त्याक्र्त्य 'एकविभक्तौ सरूपाणामेकविभक्तौ विवक्षितायामेकशेष' इत्यर्थे 'यस्यां विभक्तावेक-शेषस्तस्यां विभक्तौ सरूपाणामि'त्यर्थस्य प्रत्यासत्त्या लाभेन, भ्यामादावेकशेषो, नौजसादाविति वार्त्तिकं व्यर्थमिति तदाशय' इत्यपास्तम् । वार्त्तिकमते भ्यामादावपि तदभावस्य प्राप्तत्वाच्चेति दिक् । एतच्चेति । एकशेषविधायकं चेत्यर्थः । ध्वनितं चेदं 'पृथक् सर्वेषां विभक्तिपराणा-मेकशेष' इति पक्षे, 'विभक्त्यन्तानामेकशेष' इति पक्षे च, 'द्वन्द्वप्रतिषेधो वक्तव्य' इत्याशङ्क्य, 'अनवकाश एकशेषो द्वन्द्वं बाधिष्यते' इति ग्रन्थेन भाष्ये । इतरेतरेति । [2]एकवच्चाऽस्या-ऽन्यतरस्याम् (१।२।६९) इत्यनेन एकशेषविषयपदानां समाहारेऽवृत्तिबोधनादिति भावः ।

इतरान्वय इति । एकरूपेणैकरूपाऽवच्छिन्ने इतरत्राऽन्वय इत्यर्थः । इदित इति । अत्र

---

[1] 'पदगन्धस्याऽप्रविष्टत्वेन' इति ख. पाठः ।

[2] 'नपुंसकमनपुंसकेनैकवच्चाऽस्यान्यतरस्याम्' ( १।२।६९ ) इति सूत्रेणेत्यर्थः ।

लिङ्गाल्लभ्यते, न्यायाच्च। तथा हि–'यः शिष्यते स लुप्यमानाऽर्थाऽभिधायी'ति-स्थिते श्रूयमाणैकशब्दोपस्थितं सर्वमविशेषादैकरूप्येणैवाऽन्वेतुमर्हति। यद्वा पूर्वसूत्रात् 'द्वन्द्वे' इत्यनुवर्त्त्य 'द्वन्द्वे प्रसक्ते सती'ति व्याख्येयम्।

स्यादेतत्। 'द्वन्द्वे कृते सती'त्यर्थोऽस्तु। मैवम्। 'पन्थानौ' 'पन्थान' इत्यादौ समासान्ताऽऽपत्तेः। 'करौ' 'करा' इत्यादौ एकवद्भावाऽऽपत्तेः। 'सर्वे'

बृहच्छब्दरत्नः

'वक्रदण्डावि'त्यादौ वाच्यत्वस्य संसर्गतया भानाऽङ्गीकारेण एकशेषसत्त्वेऽपि, प्रकृते वाच्यत्वस्य प्रकारतया भानाऽभ्युपगमेनाऽप्रवृत्तेः।

लिङ्गादिति। सहभावस्य भेदघटितत्वेनाऽन्यपदार्थे उपसङ्क्रमेण परस्पराऽन्वयाऽभावाच्च सहविवक्षानिमित्तकैकशेषाऽभावः। असहविवक्षायामेकशेषाऽऽपत्तौ अभिमताऽर्थसिद्धये 'ईद्धातोरि'ति सूत्रं प्रणेतुं युक्तम्। 'इकार इत्सञ्ज्ञको यस्य धातोस्तस्य नुमि'ति भावः। 'अर्हती'तिविशेषणमप्येकपदोपस्थाप्यत्वाऽविशेषेण सर्वत्राऽन्वेति। 'अर्थप्रकाशकौ देवदत्त-यज्ञदत्तौ', 'पुष्पवन्तौ चे'त्यादौ तथैव क्लृप्तत्वात्। द्वन्द्वे प्रसक्ते इति। अत्र च 'द्वन्द्व'शब्देन समाहारद्वन्द्वोऽपि गृह्यते। सङ्कोचे मानाऽभावात्। न चैवं नपुंसकताऽऽपत्तिः। समाहारद्वन्द्वे एवाऽनुशासनात्। एकवचनन्तु साहित्यस्य विशेष्यत्वादर्थप्राप्तम्। अत एव 'तपर' इत्यादौ-एकशेषेणाऽर्थद्वयपरते'त्याकरग्रन्थाः सङ्गच्छन्ते। अत एव 'न ब्राह्मणं हन्यादि'त्यादौ 'प्रत्यर्थं शब्दनिवेश' इतिपक्षे न दोषः। 'इतरेतरयोगद्वन्द्वस्य विषये इति यावदि'ति-ग्रन्थस्तु सूत्राऽन्तरविषयकः, प्रकृतोदाहरणविषयको वा। अत एव 'घटघटमि'ति[1] न। 'एकवच्चाऽस्यान्यतरस्यामि'ति सूत्रेण विशेषसूत्राणामप्रवृत्तिर्ज्ञाप्यते। अत एव 'गार्ग्यः पिते'त्यादि न व्यर्थं साधु[2]। एतेन 'गङ्गायां मीनघोषौ स्त' इत्यत्र युगपद्-द्वयमङ्गीकर्त्तॄणां मते द्विवचनं[3] न स्यादि'त्यपास्तमिति मनोरमामण्डनेऽस्मत्पितृचरणाः।

समासान्तापत्तेरिति। नन्वितरनिवृत्तौ सत्यां 'पन्थानावि'त्यादौ द्वन्द्वत्व-समासत्वादीनामतिदेशेन प्रवृत्तिरि'ति तावन्निर्विवादम्। एवञ्च सति समासाऽन्तानां प्रवृत्तिरेव न। 'समासाच्चतद्विषयादि'ति सूत्रात् 'समासे इत्यनुवर्त्तते'तेन[4] मुख्यसमासे

लघुशब्दरत्नः

ह्यभेदेन परस्पराऽन्वयाद्भेदघटितसाहित्यनिमित्तैकशेषाऽप्रवृत्तिरिति भावः। ऐकरूप्येणैवेति। पुष्पवन्तपद इवेति भावः। द्वन्द्वे प्रसक्ते इति। विभक्त्युत्पत्तौ सत्यां तत्प्रसक्तिर्बोद्धव्या।

एकवद्भावापत्तेरिति। एवं चेतरेतरयोगविषयाऽभावेन एकशेषाऽनापत्तिरिति भावः।

[1] 'घटमिति न' इति ख. पाठः। [2] 'साधुः' इति ख. पाठः।
[3] 'द्विवचनं स्यात्' इति क. ख. पाठः।
[4] अत्र 'समासात्' इत्यत्र विभक्तिविपरिणामेन 'समासे' इति प्रकृतेऽर्थ इति भावः।

'सर्वेषामि'त्यादौ द्वन्द्वे च ( १।१।३१ ) विभाषा जसि ( १।१।३२ ) इत्यनयोरापत्तेश्चेति दिक् ।

यत्तु प्राचा 'राम राम औ' इति स्थिते' इत्युक्तम्, '[1]एक एव शिष्यते,' 'एकविभक्तौ परत' इति च। तत्रेत्थमुक्तिसम्भवः—'राम राम' इत्यत्राऽवयवयोरिव समुदायस्याऽपि प्रातिपदिकसञ्ज्ञाऽस्ति, मिलितेनाऽर्थवत्त्वात् । न चाऽर्थवत्त्वेऽपि समासग्रहणस्य नियमाऽर्थत्वान्नैवमिति वाच्यम् । 'यत्र समुदाये पूर्वो भागः पदं, तद्विषयको नियम' इत्युक्तत्वात् । 'बहुपटव' इत्याद्यनुरोधेन नियमस्य सजातीयविषयताया औचित्याच्च । तथा चैकाज्द्विर्वचनन्यायेन समुदायप्रातिपदिकादेव द्विर्वचनाद्युत्पत्तिः । तावताऽप्यवयवाऽर्थानां सङ्ख्याऽन्वयेनाऽनुग्रहसम्भवात् । नन्वेवं 'रामकृष्णावि'त्यादिष्वपि द्वन्द्वं विनैव समुदायाद्विभक्तिः स्यादिति चेन्मैवम् । द्वन्द्वविधावनेकं सुबन्तमित्यस्याऽनुवृत्त्या एकाज्द्विर्वचनन्यायस्य बाधादिति दिक् । इत्थमुक्तिसम्भवे सत्यपि

---

**बृहच्छब्दरत्नः**

एव प्रवृत्तिरित्यष्टमे निर्णीतत्वादिति चेत् । अत्रोच्यते-समासान्तानामलौकिकवाक्ये प्रवृत्तिः, तदुत्तरं चौपदेशिकसमासप्रवृत्तिः । इतरनिवृत्तौ सत्यामतिदेशप्रवृत्तावपि न निमित्तहानिः । किञ्चैतादृशाऽऽतिदेशिकसमासो न समासग्रहणेन व्यावर्त्यः । सर्वत्र सुब्लोपे 'एकदेशविकृत'न्यायेनैव समासत्वादिति दिक् ।

विभाषा जसीति । यत्तु 'जसः शी'ति सूत्रे 'वे'ति वक्तव्ये 'विभाषा जसी'तिसूत्रेणै'कशेषे द्वन्द्वकार्याऽभावबोधनान्न दोष' इति । तन्न । अस्मन्नये तात्पर्यग्राहकत्वेन चारितार्थ्यात् । एवञ्च वाक्याऽन्तरकल्पना नास्तीति महल्लाघवम् । उत्तराऽर्थत्वेन 'विभाषा जसी'त्यस्याऽऽवश्यकत्वाच्च । 'जात्याख्यायामि'ति सूत्रेणैकस्मिन्नर्थेऽतिदेशेन बहुवचनविधानेऽपि एकशेषाऽभावात्सूत्रं सावकाशमि'त्यपि वदन्ति । दिगिति । दिगर्थस्तु द्वन्द्वप्रकरणे एवैकशेषप्रकरणं कर्त्तुं युक्तम् ।

---

**लघुशब्दरत्नः**

इत्यनयोरिति । जसः शी (७।१।१७) इत्यत्र 'वे'ति वक्तव्य, विभाषा जसि (१।१।३२) इति तुद्भूताऽवयवभेदविवक्षया बहुवचने, एकशेष-द्वन्द्वयोरभावात्तत्र विकल्पवारणाय, उत्तरार्थं चेति भावः । सजातीयेति । स्वातन्त्र्येण प्रयोगाऽर्हत्वेन साजात्येऽपि न दोषः । एतत्पूर्वभागस्य विभक्त्युत्पत्तिमनपेक्ष्य स्वातन्त्र्येण प्रयोगाऽनर्हत्वात् । अनुग्रहसम्भवादिति । अत एव न प्रत्येकं तदुत्पत्तिः । बाधादिति । अन्यथा द्वन्द्वोच्छेदो, नलोपाद्यसिद्धिश्चेति भावः ।

---

[1] 'एक एव शिष्यते' इति मुद्रितेषु नास्ति ।

'समुदायादेकविभक्तौ परत' इति पक्षः किमर्थमुपेक्षित इति चेत् । शृणु । अस्मिन्पक्षे 'मातृ-मातारौ' इत्यादावप्येकशेषः स्यात् । नन्वेकविभक्तावित्यावर्त्य, एवकारं चाऽनुकृष्य 'एकविभक्तौ यानि सरूपाण्येवे'ति व्याख्येयमिति चेन्न । आवृत्तौ मानाऽभावात् । विभक्तेरेकशेषस्य विशेषणत्वे फलाऽभावाच्च ।

---

### बृहच्छब्दरत्नः

बाधादिति । तत्फलन्तु समासान्त-नलोपादि-सिद्धिः । एकशेषः स्यादिति । यत्तु 'विभक्तिकार्ये कृते वैरूप्यान्न दोष' इति । तन्न । अङ्गसञ्ज्ञाद्यनपेक्षत्वेनाऽन्तरङ्गत्वादेकशेषस्य पूर्वं प्रवृत्तेः । 'सरूपाणामि'त्यादिनिर्देशैरेकशेषस्य विभक्तिनिमित्त-कार्याऽपवादकत्वाच्च । फलाऽभावादिति । ननु प्रत्यासत्तिन्यायेन 'यस्यां विभक्तावेकशेषस्तस्यामेव सारूप्यमि'त्यर्थलाभ एव फलम् । (अत[1] एव) 'प्रातिपदिकानामेकशेषे मातृ-मात्रोः प्रतिषेधो वक्तव्यः, न पुनर्यस्याऽपि विभक्त्यन्तानामेकशेषस्तेनाऽपि मातृ-मात्रोः प्रतिषेधो वक्तव्यः स्यात्, तस्याऽपि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि,—'मातृभ्यां मातृभ्याञ्चे'ति । अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेवैकशेषेण, प्रातिपदिकानामेवैकशेषे दोषो भवती'ति भाष्यं सङ्गच्छते' इति । अत्राऽऽहुः—'मत'शब्दोपादानेनेदृशाऽर्थस्य भाष्याऽनभिप्रेतत्वाऽनुमानात् । गुरुभूतेऽर्थे तात्पर्याऽकल्पनाच्च । परिच्छेत्तृवाचिनपुंसकस्य, सञ्ज्ञाभूतनपुंसकस्य च [2]'मातृणी' इत्यादौ सरूपत्वेनैकवचनेऽप्येकशेषस्योपपादितत्वेन, जननीवाचिपरिच्छेत्तृवाचिनोरेकवचने सरूपत्वेन च, प्रथमोपस्थितत्वेन तस्यैवोदाहर्त्तुं युक्तत्वे, तृतीयापर्यन्तधावनस्य निर्बीजत्वाच्च । किञ्च औजसादौ किञ्चिदंशे वैरूप्यसत्त्वेऽपि अंशाऽन्तरे सारूप्यस्याऽपि सत्त्वात्तमादायैकशेषो दुर्वारः । 'सरूप'पदन्तु 'गिरिघटावि'त्यादावेकशेषव्यावृत्त्या चरिताऽर्थम् । एवकाराऽपकर्षेणाऽस्मदुक्ताऽर्थाऽऽश्रयणे तु भ्यामादौ नैव प्रवृत्तिः । किञ्च 'मातृ-मात्रोः प्रतिषेधो वक्तव्य' इति वार्त्तिकस्य सर्वत्र प्रवृत्तत्वेन सूत्रकारमतेऽपि व्याप्तिन्यायाऽऽश्रयणमेव युक्तम् । ध्वनितञ्चेदम् 'अभ्युपगमवादोऽयमि'ति वदता कैयटेन ।

---

### लघुशब्दरत्नः

यानि सरूपाण्येवेति । 'तेषामेकविभक्तौ परत एकशेष' इति शेषः । मानाऽभावादिति । भाष्येऽनुक्तत्वादिति भावः । किञ्चाऽऽवृत्तौ प्रत्यासत्तिन्यायेन 'यस्यां विभक्तावेकशेषस्तस्यां विभक्तौ यानि सरूपाण्येव तेषामि'त्यर्थाऽऽपत्त्या भ्यामादावेकशेषाऽऽपत्तिः । 'प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्य' इति वार्त्तिकेन भ्यामादावपि तदभावस्यैव

---

[1] 'अत एव' इति क्वचिदपि नास्ति । परन्तु योग्यत्वादत्र स्थापितः ।
[2] 'मातृणी'त्यादौ' इति क. ख. पाठः ।

न च 'पयः पयो जरयती'त्यादिव्यावृत्तिः फलम् । 'सहविवक्षायामि'त्यस्याऽऽवश्यकत्वात् । अन्यथा 'पयः पयो नयती'त्यत्र गौण-मुख्य-कर्मणोरेकशेषाऽऽपत्तेः । 'देव-देव' इत्यादावतिप्रसङ्गाच्च । प्रत्युत आवृत्त्या उभयविशेषणत्वे 'भिन्नाणां समूहो भैक्षमि'ति न सिद्ध्येत् । तथा हि—[१]'भिक्षा भिक्षा भिक्षा

### बृहच्छब्दरत्नः

पयः पयो जरयतीति । ननु एकशेषाऽऽरम्भेण शास्त्रीयस्य प्रत्यासन्नत्वात् द्वन्द्व एव बाध्यते, न लौकिकं वाक्यमिति चेन्न । आवृत्तिफलकथनस्याऽसङ्गतताऽऽपत्तेः । इत्यादीति । आदिना 'पयसा पयो जरयती'ति बोध्यम् । व्यावृत्तिः फलमिति । विरुद्धकारकबोधकविभक्तेः समुदायात्कर्त्तुमशक्यत्वादिति भावः । आवश्यकत्वादिति । तल्लाभस्तु 'द्वन्द्वे' इत्यनुवर्त्तनात्, ज्ञापकात्, न्यायाच्चेत्यनुपदमेव निरूपितम् । [२]पयः पयो नयतीति । नन्वत्र विरुद्धयोर्गौण-मुख्य-कर्मणोः समुदायादुत्पन्नद्वितीयया कथं लाभ इति चेन्न । विरुद्धाऽर्थयोरेकशब्दोपादानाऽर्थमेकशेषाऽऽरम्भात् । स च विनिगमनाविरहात् प्रकृति-प्रत्यययोः सहविवक्षापरं नास्ति । एकसम्बन्धेनाऽन्वयाऽभावात् । अत एवेदृशे विषये द्वन्द्वोऽपि नेत्यग्रे निरूपयिष्यामः । सहविवक्षाया अनिमित्तत्वे द्वन्द्वविषय इव तत्पुरुषादिविषयेऽपि प्रवृत्तिः स्यादित्याह—देवदेव इति । अत एव 'इदितो नुम् धातोरि'ति सूत्रं सङ्गच्छते । अन्यथा बहुव्रीहौ उभयोरपि प्रथमाऽन्तत्वेन विभक्तेरेकशेषविशेणत्वेऽपि, सहविवक्षाया अभावेऽपि, दोषः स्पष्ट एव । न सिद्ध्येदिति । एवञ्च 'पञ्च गावो धनं यस्य [३]स पञ्चगवधन' इत्यपि बोध्यम् । यत्तु 'अनेकबोधकादेकस्मादणि न दोष' इति । तन्न । एकशेषप्रकरणवैयर्थ्याऽऽपत्तेः । 'घटघटौ' इत्यादिवत् पाक्षिका-

### लघुशब्दरत्नः

इष्टत्वाऽनुमानात् । फलमिति । समुदायादेकविभक्तेरभावात् । विभक्तेर्लुका लुप्तत्वाच्चेति भावः । सहविवक्षायामिति । सा च समुदायस्य एकाऽर्थनिरूपितैककारकाऽऽवेशे एव भवतीति भावः । गौणमुख्यकर्मणोरिति । उभयोरपि कर्मत्वेन तत्र समुदायादेकविभक्तेः कर्त्तुं शक्यत्वेन, विभक्तिपदेन [४]व्यावर्त्त्याऽसम्भवेन 'सहविवक्षायामि'त्यावश्यकमिति भावः ।

नन्वत्राऽपि लुकि विभक्तिपरत्वाऽभाव इत्यरुचेराह—देवदेव इति । असहविवक्षायामप्येकशेष-तत्पुरुषादिविषयेऽपि तदापत्तिरिति भावः । तत्राऽपि समुदायादेकविभक्तेः सत्त्वात् । नन्वनेकबोधकैकभिक्षाशब्दादणि 'भैक्ष'सिद्धिरस्तीत्यत आह—तथा हीत्यादि । एकशेषाऽऽरम्भे

[१] 'भिक्षा ३ आम् अ' इतिरीत्या घ. ङ. पाठः ।
[२] 'पयो नयती'ति क. ख. पाठः ।
[३] 'स' इति क्वचिन्नास्ति ।
[४] 'व्यावृत्त्यसम्भवेन' इति क. पाठः ।

आम् अ' इति स्थिते 'अन्तरङ्गानपि विधीन् [1]बहिरङ्गोऽपी'ति लुकि कृते, विभक्ति-परत्वाऽभावादेकशेषो न स्यात् । [2]लुका लुप्ते प्रत्ययलक्षणाऽभावात् । किञ्च [3]'रामावि'त्यादौ परत्वान्नित्यत्वाच्च वृद्धिरेचि (६।१।८८) इत्येकादेशे कृते,

---

बृहच्छब्दरत्नः

ऽनिष्टस्य दुर्वारत्वाच्च । यदपि 'अचः परस्मिन्नि'ति स्थानिवद्भावान्न दोष' इति । तदप्यापाततः । अज्झलादेशत्वात् । लुकि तन्निषेधात् । परनिमित्तत्वा-ऽभावाच्च । एकशेषपदाऽर्थस्य स्थिति-निवृत्त्युभयघटितत्वेन स्थानिवद्भावाऽप्रवृत्तेः । 'पूर्वस्यैव विधौ स्थानिवद्भाव' इत्यङ्गीकाराच्च । एतेन [4]'एकादेशेऽपि स्थानि-वद्भावात् प्रवृत्तिः सुलभे'त्यपास्तम् । 'विभक्त्यव्यवहितस्यैव स्थितिरि'त्यस्मिन्नर्थे मानाऽभावेन, तस्याऽपि कदाचिन्निवृत्तौ, विभक्तेरपि तदापत्तौ, द्विवचने 'राम' इत्यस्याऽप्यापत्तेश्च । 'हरि-हरि-हरीनि'ति[5] ह्रस्वेकारसहितरूपस्याऽऽपत्तेश्च । स्थानिवत्सूत्रे हि कार्याऽतिदेशो, न रूपाऽतिदेश इति स्पष्टमाकरे । ईदृशे विषये स्थानिवद्भावाऽङ्गीकारे तु भिन्नाऽर्थयोर्मात्रोरेकशेषाऽऽपत्तिः, भिन्नाऽर्थकपादशब्दानां शसि पदादेशे एकशेषाऽनापत्तिश्चेति यत्किञ्चिदेतत् । एतेन 'एकशेषो हीतरनिवृत्ति-

---

लघुशब्दरत्नः

एकशेषं विना तादृशस्य ज्ञानाऽसम्भव इति भावः । विभक्तिपरत्वाऽभावादिति । [6]परत्वान्नित्यत्वाच्चाऽऽदिवृद्धौ सारूप्याऽभावाच्चेत्यपि बोद्धव्यम् । [7]'अविरविक'न्यायेन समाधानन्तु लक्षणैकचक्षुष्कैर्दुर्ज्ञेयम् । न च समर्थग्रहणेन परिनिष्ठितप्रातिपदिकात्तद्धितोत्पत्तेः पूर्वमेक-शेषे,[8] पश्चात्तद्धित इति वाच्यम् । [9]'प्रातिपदिकाऽधिकारे किं तत्समर्थं, कृतवर्णानुपूर्वीकमि'ति-[10]भाष्यात् प्रातिपदिकसम्बन्धिवर्णमात्राऽऽश्रय-तत्सम्बन्धिवर्णनिमित्तकार्येण परिनिष्ठितत्वस्यैवा-ऽऽश्रयणात् । अत एव अश्विमानण् (४।४।१२६) इति सङ्गच्छते । अन्यथा प्रकृत्यंशे

---

१ 'बहिरङ्ग इति लुकि कृते' इति मुद्रितेषु पाठः ।

२ 'लुका' इति मुद्रितेषु नास्ति ।

३ 'रामरामौ' इत्यादौ' इति, 'रामराम औ' इत्यादौ' इति च क. घ. पाठः ।

४ 'एकादेशोऽपि' इति क. ख. पाठः ।

५ 'ह्रस्वेकार-(र)हित' इति क. ख. खण्डितः पाठः ।

६ 'परत्वात्' इति ग. नास्ति । 'नित्यत्वादादिवृद्धौ' इत्येव तत्र पाठः ।

७ 'अवि:' इत्यादिः 'दुर्ज्ञेयम्' इत्यन्तो ग्रन्थो लिखितेषु नास्ति । ख. तु पश्चात्केनापि योजितः ।

८ 'एकशेष': इति घ. पाठः ।

९ 'प्रातिपदिकाधिकारात्' इति मुद्रितेषु पाठः । 'प्रातिपदिकाधिकारेण, किं तत्समर्थं, कृतवर्णानुपूर्वीकमिति भाष्याच्च' इति क. पाठः । 'प्रातिपदिकाधिकारेण' इति णकारे हरिताललेपेन 'प्रातिपदिकाधिकारे' इति पाठः शोधितो घ. पुस्तके ।

१० 'भाष्याच्च' इति क. पाठः ।

विभक्तिपरत्वाऽभावादेकशेषो न स्यात्। उभयत आश्रयणेऽन्तादिवद्भावाऽभावादिति दिक्। यत्तु प्राचा व्याख्यात्रा पक्षाऽन्तरमुपन्यस्तं—'सविभक्तिकानामेकशेष' इति। तन्न। निवर्त्तमानानां विभक्त्या सहैव निवृत्तावपि, शिष्यमाणे एकवचनश्रवणप्रसङ्गात्।

अथोच्येत—'युगपदधिकरणवचनतायां द्विवचन-बहुवचनान्तानामेकशेषः। द्वन्द्वोऽप्येवम्। तथा हि-अजहत्स्वार्थायां वृत्तौ एकैकमनेकाऽर्थाऽभिधायि, परस्परसमभिव्याहारात्। तथा चाऽलौकिके द्वन्द्वैकशेषयोः प्रक्रियावाक्ये

**बृहच्छब्दरत्नः**

पूर्वकमवस्थानम्। तत्राऽवस्थानस्य प्राप्तत्वेन, निवृत्तावेव तात्पर्यमिति न कश्चिद्दोष' इति मन्दप्रतारणमपास्तम्। दिगिति। दिगर्थस्तु समुदायस्य वृत्तिमत्त्वाऽभावात् प्रातिपदिकत्वं दुर्लभम्, सरूपसमुदायस्य लोके अप्रयुज्यमानत्वेन, एकशेषसूत्रस्याऽन्यथा व्याख्यातुं शक्यत्वेन, शक्तत्वे मानाऽभावात्। किञ्च 'विभक्तिः सारूप्येणाऽऽश्रीयते, अनैमित्तिक एकशेष' इति भाष्यविरोधः। अपि च अवयवेभ्यः सुबुत्पत्तिर्दुर्वारा, समुदायाद्विभक्त्युत्पत्त्याऽवयवानां सङ्ख्याऽन्वयरूपाऽनुग्रहसम्भवेऽपि हुंफडादिवद्विभक्तिसहितप्रयोगरूपाऽनुग्रहस्याऽसम्पादनेन 'एकाचूद्विर्वचन'-न्यायाऽप्रवृत्तिः। किञ्चोत्तरभागोद्देश्यक-प्रत्यय-भिन्नार्थवत्पूर्वभागकस्य समासभिन्नस्य ने'त्यर्थकेन समासनियमेन प्रातिपदिकसञ्ज्ञाया न प्रवृत्तिः ([1]इति)।

प्रक्रियावाक्ये इति। द्वन्द्वैकशेषयोरिव तत्प्रक्रियावाक्येऽपि युगपदधिकरण-

**लघुशब्दरत्नः**

दीर्घश्रवणं स्यात्। उभयत इति। 'विभक्तौ परतो यतः प्रत्ययविधिस्तस्यैकशेष' इत्यर्थात्तदाश्रयणमिति भावः। अचः परस्मिन् (१।१।५७) इति तु न। लोकसिद्धतन्त्राऽनुवादकत्वादस्य शास्त्रस्याऽनुवादसामर्थ्यादेव द्वन्द्वनिवर्त्तकस्य शास्त्रीयविधित्वाऽभावात्। अनयाऽपि रीत्याऽन्तवद्भावाऽप्रवृत्तिरित्यन्यत्। यदि तु एकदेशविकृतन्यायेन प्राग्दीव्यतोऽण् (४।१।८३) इति सूत्रस्थभाष्यप्रामाण्यात् स्थानषष्ठचबोधितविकारस्याऽपि ग्रहणम्, अशास्त्रीयस्य च तेनाऽतिदेशस्तदा मान्तस्य तेन न्यायेन तत्प्रकृतितया, 'औ' इत्यस्य च प्रत्ययत्वेनाऽदोषः। अत एव तस्य पदत्वसिद्धिः[2]। अत एव 'श्रायसावि'त्यत्रैकादेशे कृते नुममाशङ्क्य अचः परस्मिन् (१।१५७) इति स्थानिवत्त्वेन परिहृतं भाष्ये इत्युच्यते, तर्हि वैरूप्यादेकशेषो न स्यात्। 'विरूपाणामि'त्यनेन तत्साधने तु न दोष इत्यलम्।

युगपदधिकरणेति। युगपत् अधिकरणानां=द्रव्याणां वचनं यैः पदैस्तद्भावे इत्यर्थस्तदाह—एकैकमित्यादि। अलौकिके इति। तत्रैव द्वन्द्वादिप्रवृत्तिसत्त्वात्,

[1] दिगर्थसमाप्तिसूचक इति क. ख. नास्ति।

[2] इतोऽग्रे 'विशिष्टे प्रत्ययाऽन्तत्वस्यैव प्रत्यभिज्ञानेन, तत्पूर्वभागे प्रकृतित्वप्रत्यभिज्ञासम्भवात्' इति घ. अधिकः पाठः।

द्विवचन-बहुवचनयोरेव प्रवेशात् 'विभक्त्यन्तानामेकशेष' इति पक्षो निर्बाध एवे'ति । तदपि न । जहत्स्वार्थायां वृत्तौ तदयोगात् । पक्षाऽन्तरेऽपि प्रथम-प्रवृत्तस्यैकवचनस्य त्यागाऽयोगात् । अन्यथा षष्ठीतत्पुरुषाद्युच्छेदाऽऽपत्तेः । तत्राऽपि पूर्वपदस्योत्तरपदार्थे उपसंक्रमेण षष्ठ्याद्ययोगात् । तथा च भाष्यं-

बृहच्छब्दरत्नः

वचनता स्वीक्रियते, परस्परसमभिव्याहारस्य तत्राऽपि सत्त्वात्, द्वन्द्वादिप्रवृत्तेस्तत्रैव सत्त्वेन तत्कल्पनाया आवश्यकत्वाच्च । यथा शत्राद्वौ द्वितीयादिसामानाधिकरण्यं दृष्ट्वा लकारे तत्कल्पना । 'अन्यपदार्थे' इत्यादिसौत्राऽनुवादेनैव देवताविग्रहवत् तत्सिद्धेश्चेत्यादि वक्ष्यामः ।

ननु विशिष्टशक्तिरूपजहत्स्वार्थापक्षस्तु विशेषणाद्यनन्वयाऽर्थं कल्प्यमानोऽपि प्रक्रियादशायां नाऽऽद्रियते, समासविधायकानामसङ्गतताऽऽपत्तेः, 'सुपन्था'इत्यादा-वात्वाद्यनापत्तेश्चेत्यत आह-पक्षान्तरेपीति । प्रथमप्रवृत्तस्येत्यर्थः । युगपदधिकरण-वचनतानिमित्तद्वन्द्वैकशेषयोरलौकिकविग्रहवाक्ये प्रवृत्तत्वेन, तत्र युगपदधिकरण-वचनताकल्पनम् । तत्प्रवृत्तिश्च सुबुत्पत्यनन्तरम् । सुबुत्पत्तिकाले युगपदधिकरण-वचनताकल्पकस्य परस्परसमभिव्याहारस्य चाऽभावान्न द्विवचनाद्युत्पत्तिः । किञ्च 'अयमेकोऽयमेक इमौ द्वौ' इत्यपेक्षाबुद्धेः सत्त्वेनैकत्वसङ्ख्यायाः प्रथमोपस्थिति-सत्त्वेनाऽवयवेभ्य एकवचनोत्पत्तिर्दुर्वारा । द्विवचनादिविधानं त्वस्मन्नये, तन्त्रेण प्रयोगे च चरिताऽर्थमित्यलम् । उपसङ्क्रमेणेति । अजहत्स्वार्थायां वृत्तावेकार्थीभावा-ऽभ्युपगमेनैकाऽर्थपरताऽभ्युपेया । परस्परसमभिव्याहारस्य तुल्यत्वेन युगपदधि-करणवचनताया दुर्वारत्वात् । बोधस्तु विशेषणविशेष्यभावाऽऽपन्न एव । अत एव विशेषणाद्यनन्वयः । 'दर्शनीयाया माता दर्शनीयामाते'त्यादौ यथा न पुंवद्भाव-

लघुशब्दरत्नः

तत्राऽपि तत्कल्पनादिति भावः । 'रामकृष्णावि'त्यादौ 'विरूपाणामपी'त्येकशेषस्तु न । द्वन्द्वविधानसामर्थ्यन तत्प्राक्कालिकस्यैव समानाऽर्थत्वस्य तत्र निमित्तत्वात् । एवञ्चैकस्य विभक्त्यन्तस्य निवृत्तावपरस्य तद्विशिष्टस्य श्रवणमिति भावः ।

पक्षान्तरेऽपीति । अयं भावः—'अलौकिके तत्कल्पनेऽपि, प्रत्येकं सुबुत्पत्त्यनन्तर-मेव [1]तत्कल्पनात् । तदनन्तरमेव तत्कल्पकद्वन्द्वैकशेषयोः प्रवृत्तेः । [2]एवं चाऽन्तरङ्गत्वादुत्पन्नै-कवचनत्यागेन द्विवचनाद्युत्पत्तौ मानाऽभाव' इति । उत्तरपदार्थे उपसंक्रमेणेति । उपसंक्रमश्च तदालिङ्गितस्यैव स्वार्थस्योपस्थितिः । सा च विभक्त्यर्थसम्बन्धाद्यन्तर्भविर्णवेति तस्योक्त-

[1] तत्कल्पना' इति घ. पाठः ।

[2] 'एवञ्च ततः प्राक् परस्परसमभिव्याहाराऽभावेन अन्तरङ्गत्वादुत्पन्नैकवचन-त्यागेन' इति क. पाठः ।

'सेयं युगपदधिकरणवचनता दुःखा च, दुरुपपादा चे'ति ।

यदपि व्याचख्युः—'व्यक्तिपक्षे यावद्व्यक्ति तत्तच्छब्दप्रयोगे प्राप्ते,

बृहच्छब्दरत्नः

स्तथाऽग्रे वक्ष्यामः। दुःखा चेति। दोषाऽऽक्रान्तत्वादिति भावः। द्वन्द्वैकवद्भावप्रकरणस्य नियमाऽर्थताऽनुपपत्तिः। सर्वत्रैव च द्विवचन-बहुवचनयोः प्रसङ्गे एकवचनविधानेन चारितार्थ्यात्। 'चार्थे द्वन्द्व' इति न्यासविरुद्धत्वाच्च। किञ्च वृद्धव्यवहाराद्धि शब्दाऽर्थाऽध्यवसायः। न च प्लक्षशब्दस्य न्यग्रोधाऽभिधायित्वं लोके दृश्यते। न च लक्षणा। न्यग्रोधशब्देन तल्लाभात्।

दुरुपपादा चेति। प्रमाणाऽभावादित्यर्थः। न च परस्पराऽन्वयाऽभावेनैक-शेष-समासौ न स्यातामिति वाच्यम्। 'चार्थे द्वन्द्व' इत्यादिवचनसामर्थ्यादेव प्राप्तेः। साहित्यबोधनद्वारा परस्पराऽन्वयपूर्वकैकार्थीभावस्येतरेतरयोग-समाहारयोरेव निरूपयितुं शक्यत्वेन, समुच्चयाऽन्वाचययोः प्राप्त्यभावात्। एतेन 'अङ्ग-वङ्ग-कलिङ्गा' इत्यादौ 'तद्राजस्य बहुषु तेनैवाऽस्त्रियामि'त्यनेन लुक् न स्यादि'त्यपास्तम्। 'तद्राजस्य लुक् भवति, बहुत्वेऽर्थे, तच्चेद्बहुत्वं तद्राजाऽर्थेनैव कृतं चेदि'त्यर्थाऽङ्गी-कारे युगपदधिकरणवचनतानङ्गीकारेऽपि लुकः सूपपादत्वाच्च। तद्राजाऽर्थश्च प्रकरणे ऐकरूप्याऽर्थमपत्यरूप एव गृह्यते। अत एव 'अङ्गस्य प्रतिकृतयः आङ्गा' इत्यादौ लुङ् नेत्यादि वक्ष्यामः। सर्वथाऽपि युगपदधिकरणत्वचनतामादाय लौकिके-ऽलौकिके च विभक्तिप्रवेशो न युक्तः[१]।

यावद्व्यक्तीति। 'प्रत्यर्थं शब्दनिवेशादि'ति न्यायादिति भावः। आकृतीति। आकृत्या एकत्वादेक एव प्रयोगः। ततो व्यक्तेर्लक्षणया, आक्षेपाद्वा बोधेऽपि-

लघुशब्दरत्नः

तया तदनापत्तौ तदुच्छेद इति भावः। दुःखा चेति। वृद्धव्यवहारस्य शब्दाऽर्थनिश्चय-हेतुत्वम्। [२]न च प्लक्षशब्दस्य न्यग्रोधाऽभिधायित्वं वृद्धव्यवहारे दृश्यते। न्यग्रोधशब्देन तल्लाभाच्च न लक्षणाऽपि। 'प्लक्षन्यग्रोधावि'त्यादौ बोधाऽऽवृत्त्यननुभवाच्च।

दुरुपपादा चेति। न च द्विवचनाद्यनुपपत्तिस्तदुपपादिका। समासस्योद्भूतावयव-भेदसमुदायाऽभिधानशक्तिमत्त्वाद् द्विवचनादिसिद्ध्या, तदनुपपत्तेस्तदुपपादकत्वाऽभावात्। समुच्चयाऽन्वाचययोः समासस्याऽसामर्थ्येनैव वारयिष्यमाणतया न तदापत्तिरेतदुपपादिका। न चाऽन्यत्रोपपादयितुमशक्यत्वेऽपि, एकशेषे 'कस्य शेष' इत्यत्र विनिगमकाऽभावात्सर्वेषां सर्वाऽर्थत्वमावश्यकम्। तथा सत्येकशेषस्यैव वैयर्थ्याऽऽपत्तेः। तस्मादेकशेषज्ञानोत्तरं शास्त्र-वासनावतां तच्छक्तिज्ञानं, न तु ततः प्रागपीति न दोषः।

[१] 'युक्तो न' इति ख. पाठः।

[२] 'न च प्लक्षस्य' इति क. ख. पाठः।

एकस्यैव प्रयोगो यथा स्यादिति सूत्रम् । आकृतिपक्षे तु एकेनैवाऽऽकृत्यविनाभूताऽनेकव्यक्तिलाभादनर्थकमि'ति । तन्न । व्यक्तिपक्षेऽपि 'न ब्राह्मणं हन्यादि'त्यत्र ब्राह्मणशब्देनेव एकेनाऽप्यनेकस्य तन्त्रेण सुवचत्वात् । अन्यथा जातिपक्षेऽपि 'वासेन सम्यक् क्षमयोश्च तस्मिन्नि'त्यादिनानार्थाऽनुरोधेन

---

बृहच्छब्दरत्नः

अन्तरङ्गसंस्कारो न निवर्त्तते । व्यक्तिद्वारा च लिङ्ग-सङ्ख्या-कारकादीनां[1] जाताववाऽन्वयः; व्यक्तावेव वा । तथैव कार्यकारणभावाऽङ्गीकारात् । अविनाभूतेति । तादात्म्यसम्बन्धाऽऽपन्नेत्यर्थः ।

क्षमयोश्चेति । ननु 'क्षमा'पदशक्यताऽवच्छेदकतयोभयसाधारणो धर्मः कल्प्यतामिति वाच्यम् । पृथिवीत्वादिरूपेण बोधस्याऽनुभवसिद्धत्वात्तथा कार्यकारणभावस्याऽऽवश्यकत्वे, कल्प्यमानधर्मेणाऽपि कार्यकारणभावाऽन्तरकल्पने गौरवाऽऽपत्तेः । न च 'शाब्दबोधे शब्दस्याऽपि भानमि'ति वादिनां मते जात्यादिवत् शब्दस्याऽपि व्यक्तौ प्रकारतया भानाऽभ्युपगमेनोभयसाधारणीभूतो धर्मः शब्द एवाऽस्त्विति वाच्यम् । '[2]शब्दांऽशप्रमोषे तदप्रकारके विध्यर्थमेकशेषसूत्रमि'त्यर्थस्य निरूपयितुं शक्यत्वात् । शक्तेः पद-पदाऽर्थघटितत्वेनैकसम्बन्धेनाऽनेकाऽर्थवृत्तित्वाऽभावाच्च । अत एव 'सैन्धव'पदस्य अश्वे सैन्धवपदवाच्यत्वेन शक्तिग्रहे,

---

लघुशब्दरत्नः

आकृत्यविनाभूतेति । नियमेनाऽऽकृतिसम्बद्धेत्यर्थः । '[3]ब्राह्मणशब्देनेवे'ति पाठः । न हि तत्रैकशेषः । तावद्ब्राह्मणशब्दज्ञानाऽसम्भवात् । [4]तस्मात्तत्र तन्त्रेण यथा निर्वाहस्तथाऽन्यत्राऽपीति भावः । 'न ब्राह्मणमि'त्येकवचनं त्वार्षम् । तन्त्रेण सुवचत्वादिति । अयं भावः—'भाष्ये[5]अर्थावथौं प्रति यत्, अर्थानर्थान्प्रति च यत्तदपि प्रत्यर्थमेवे'त्युक्तम् । एवञ्च एकेनाऽनेकाऽर्थबोधनमपि प्रत्यर्थमेवेति, एकेनैव ब्राह्मणपदेनाऽनेकार्थबोधनं तत्र । अन्यथाऽविद्यमानायाः शक्तेरेकशेषशास्त्रसहस्रेणाऽप्युपपादयितुमशक्यतया, बोधाऽनुपपत्तिरेव स्यात् । तन्त्रं चाऽत्राऽर्थतन्त्रम् । एकत्रैव शब्देऽनेकार्थानां सत्त्वात् । वस्तुतः शब्दस्य पर्यायपरिवृत्तिसहतयाऽर्थतन्त्रमेवैतत् । 'अक्षा' इत्यादौ तु तदसहतया शब्दतन्त्रमेव । अन्यथा= तन्त्राऽनङ्गीकारे । 'क्षमा'शब्दः क्षान्ति-भूम्योर्वाचकः । नानार्थानुरोधेनेति । 'सूत्रमावश्यकं

---

[1] 'कारणादीनाम्' इति क. ख. पाठः ।
[2] 'शब्दांऽशे' इति क. ख. पाठः ।
[3] 'ब्राह्मणशब्देनेवेति भावः' इति मुद्रितेषु पाठः ।
[4] 'तस्मात्तत्र जातिपक्षेण, तन्त्रेण वा यथा' इति मुद्रितेषु पाठः ।
[5] 'अर्थावथौं प्रति यत्तदपि प्रत्यर्थम्, अर्थानर्थान् प्रति च यत्तदपि प्रत्यर्थम्' इति क. पाठः ।

सूत्रं विनाऽनिर्वाहात्। तस्माज्जाति-व्यक्तिपक्षयोरुभयोरपि तन्त्रेण [१]प्रयोग-निर्वाहेऽपि, 'सर्वत्र तन्त्रेणैव बोधनीयमि'ति नियामकाऽभावात्पाक्षिको द्वन्द्वः सूत्रं विना दुर्वारः। 'घटोऽयं, घटोऽयमि'ति नानाशब्दप्रयोगदर्शनात्। तद्वत् 'घटघटावि'ति द्वन्द्वस्य न्यायप्राप्तत्वात्।

---

**बृहच्छब्दरत्नः**

कालाऽन्तरे अश्वाऽन्तरबोधनवत्[२] लवणबोधो ने'ति सर्वसंमतम्। किञ्च 'इयं गौरि'-ति प्रतीत्या यादृशे जाति-व्यक्त्योस्तादात्म्यसम्बन्धो, न तथा शब्द-व्यक्त्योः। तथाऽनुभवाऽभावात्। 'तदभिन्नाऽभिन्नस्य तदभिन्नत्वमि'ति न्यायेन जाति-शब्दयोरैक्याऽऽपत्तेश्च। 'जात्यादिविशिष्टे नामाऽर्थे शब्दस्य [३]प्रकारते'ति कैश्चिदङ्गीकाराच्च। जातेरिव शब्दस्याऽप्यर्थान्तरे प्रकारताऽनापत्तेश्च। ध्वनितं चेदं पस्पशायां भाष्याऽर्थतया पितामहचरणैः कौस्तुभे।

शब्दस्य प्रवृत्तिनिमित्तत्वमपि न। तादात्म्याऽऽपन्नस्यैव तत्त्वात्। 'दण्डी'-त्यादावपि दण्डसम्बन्धस्यैव[४] प्रवृत्तिनिमित्तत्वम्, गुणगुणिनोश्च तादात्म्यसम्बन्ध एव। किञ्च यं[५] धर्मं धर्मिताऽवच्छेदकीकृत्य सम्बन्धग्रहः, तद्धर्मविशिष्टस्यैव स्मरणम्। न हि शब्दं धर्मिताऽवच्छेदकीकृत्य शब्दस्य सम्बन्धग्रहो युज्यते, शक्यते वा वक्तुम्। अत एव 'देवदत्तः काश्यां नाऽस्ती'ति वाक्यात् पूर्वं 'तत्राऽस्ती'ति श्रुतेऽपि, पश्यतोऽपि बोधो दृश्यते।

'सञ्ज्ञाशब्दे शब्दः प्रवृत्तिनिमित्तमि'ति गौणो व्यवहारः। भावप्रत्ययोत्पत्तौ तु प्रकारत्वमात्रं निमित्तम्। नल-राम-युधिष्ठिरादौ शब्दस्य प्रकारता अनुभवसिद्धा। अतः 'सञ्ज्ञाशब्दे शब्दे भावप्रत्यय' इति न सिद्धान्तहानिः। किञ्च त्वदुक्तरीत्या जननीवाचक-परिच्छेत्तृवाचकमात्रादिशब्दादावेकशेषव्यावृत्त्यर्थं सरूपसूत्रम्। अपि चोपलब्धिभेदेन, अर्थभेदेन च शब्दैक्ये न मानमिति दिक्। तन्त्रेणेति।

'विद्वन्मानसहंस, वैरिकमलासङ्कोचदीप्रद्युते,
दुर्गामार्गणनीललोहित, समित्स्वीकारवैश्वानर॥
सत्यप्रीतिविधानदक्ष, विजयप्राग्भाग, भीम प्रभो।
साम्राज्यं वरवीर वत्सरशतं वैरञ्चमुच्चैःक्रियाः॥'

---

**लघुशब्दरत्नः**

तन्त्रे'ति शेषः। न्यायप्राप्तत्वादिति। अनभिधानमाश्रित्य तु भाष्ये पक्षद्वयेऽपि सूत्रं

---

१ 'प्रयोगान्निर्वाहेऽपि' इति मुद्रितेषु पाठः।

२ अत्र 'बोधवत्' इत्यपि पाठः सम्भाव्यते।

३ 'प्रकारकता' इति क. ख. पाठः।

४ 'दण्डसम्बन्धस्यैव निमित्तत्वम्' इति क. ख. पाठः।

५ 'यं धर्मे' इति ख. पाठः।

न चैवमपि 'घट-कलशावि'ति द्वन्द्वाऽऽपत्तिः । 'विरूपाणामपि समानाऽर्थानामि'ति वार्त्तिकात् । 'रूप्यते = बोध्यते' इति व्युत्पत्त्या रूपशब्दस्याऽर्थपरत्वमाश्रित्य वार्त्तिकाऽर्थस्याऽपि सूत्रेणैव क्रोडीकाराच्च । तस्माद् 'घटघटौ' 'घटकलशावि'त्यादिपाक्षिकाऽनिष्टवारणाय पक्षद्वयेऽपि सूत्रमावश्यकमित्य-

बृहच्छब्दरत्नः

इत्यादौ 'मानसमेव मानसमि'त्यादाविवेति भावः । न चैवमेकशेषविषये[1] बोधाऽऽवृत्तिप्रसङ्गः । तन्त्रस्थले बोधाऽऽवृत्तिनियमे मानाऽभावात् । यथा हि 'क्वचित्तान्त्रविषये विशेषणविशेष्यभावाऽऽपत्तौ बोधः, क्वचिन्ने'त्यव्यवस्थितं, तथा क्वचिदवयवनिष्ठसङ्ख्यामादायैव वचनोत्पत्तिः, क्वचिन्नेति बोध्यम् ।

रूप्यत इति । नन्वेवं 'रूप'ग्रहणं व्यर्थम् । 'समानामेकशेष' इत्येवेष्टसिद्धेः । न चोपदेशाऽनपेक्षत्वात्, अन्तरङ्गत्वात्, अहेयत्वात्, असाधारणत्वादित्यादिना शब्दस्यैव ग्रहणेन, तन्मात्रसाम्ये एव प्रवृत्तिः स्याऽन्नाऽर्थसाम्ये इति वाच्यम् । 'स्वं रूपमि'ति 'रूप'ग्रहणेन शब्दविषये उक्तन्यायाऽनाश्रयणेन, क्वचिदर्थसाम्येऽपि प्रवृत्तेः सुलभत्वादिति चेन्न । सङ्कोचे मानाऽभावेनोभयसाम्ये, अर्थस्य प्राधान्येन तन्मात्रसाम्ये [2]एव प्रवृत्तौ 'अक्षाः' 'पादाः' 'माषा' इत्याद्यसिद्ध्यापत्तेः । व्यक्षरत्वादिना सादृश्यग्रहणाऽऽपत्तेश्च । शब्दलाघवाऽभावाच्च । तस्मात्तान्त्रादिनाऽर्थद्वयपरत्वमित्येव रमणीयम् ।

ननु 'विभक्तौ यानि समानाऽर्थान्येव तेषामेकशेष' इत्यर्थाऽऽपत्तौ 'अश्वश्च सैन्धवश्चे'त्यत्रैकशेषाऽनापत्तिः,'विभक्तौ [3]सैन्धवपदेनाऽश्ववल्लवणार्थस्याऽपि प्रतीयमानत्वेन भिन्नाऽर्थत्वादिति चेत् । अत्राहुः–नैवाऽत्रैकशेषोऽभिमतः । 'विरूपाणामपि समानाऽर्थानामि'ति वार्त्तिकेऽपि अन्यूनाऽधिकाऽर्थस्यैव ग्रहणादि'ति । क्रोडीकारादिति । 'स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यते' इति वचनन्तु कार्यमेव । यदि च 'द्वौ च द्वौ चे'त्यादावनभिधानेन द्वन्द्वैकशेषयोरभाववत्, मातृ-घटादावेकशेष-द्वन्द्वाऽभावसिद्धावेकशेषप्रकरणं प्रत्याख्यायते, तदेदमपि प्रत्याख्येयम् । पाक्षिकानिष्टेति । अयं भावः–उक्तरीत्या 'घटावि'त्यादेः सिद्धत्वेन 'सरूपाणामेकशेष एवे'तिनियमाऽर्थं सूत्रम् । न चैवम् 'अश्वश्च अश्वश्चे'ति वाक्यमपि न स्यादिति वाच्यम् । नियमस्य सजातीयत्वेन, शास्त्रीयस्य प्रत्यासन्नत्वेन च वृत्तिरूपद्वन्द्वस्यैव वारणात् ।

लघुशब्दरत्नः

प्रत्याख्यातमित्यन्यत् । अनेकघटादिपदानां चाऽर्थे वृत्तिरेव न, अनभिधानादिति द्वन्द्वाऽप्राप्तिरेवेति तदाशयः । आवश्यकमिति । 'अनभिधानाऽज्ञाने' इति शेषः ।

[1] 'एकशेषिविषये' इति क. ख. पाठः ।

[2] 'साम्ये एव वा' इति वा पाठो भवेत् ।

[3] 'सैन्धवपदस्येव लवणार्थस्याऽपि' इति क. ख. पाठः ।

बृहच्छब्दरत्नः

न च वाचनिकैकशेषविरहेऽपि श्लिष्टरूपकस्थले इव तन्त्रन्यायाऽऽश्रयणेन पाक्षिक एकशेषो मातृमात्रोः स्यादेवेति वाच्यम्। तन्त्राऽऽवृत्त्याश्रयणेन 'यान्येकविभक्तौ सरूपाण्येव, तेषामेवैकशेष' इत्यपरनियमाऽऽश्रयणात्। अत एव 'मातृमात्रोः प्रतिषेधो वक्तव्य' इति वार्त्तिकादिकं सङ्गच्छते। न चैवमपि वयोवाचक'कुमारी'-शब्दस्य, [1]क्यजन्तकुमारीशब्दस्य च सहविवक्षायामेकशेषाऽनापत्तिः, द्वितीयायां वैरूप्यादिति वाच्यम्। 'एक'शब्दस्य प्रथमाऽर्थत्वेन प्रथमाविभक्तौ वैरूप्याऽभावस्य विवक्षितत्वात्। एतेन 'अस्मिन् पक्षे 'एक'ग्रहणं चिन्त्यप्रयोजनमि'ति-हरदत्तोक्तमपास्तम्। न चैवमप्यसहविवक्षायां सरूप-विरूपयोरेकशेषस्य, सहप्रयोगस्य च साधुत्वाऽऽपत्तिरिति वाच्यम्। इष्टाऽऽपत्तेः। एतेन 'द्विर्वचनेऽची'त्यादावेकशेष' इति भाष्यं व्याख्यातं, निरस्तञ्च 'सौत्रत्वादेकशेषः, 'एकशेष'शब्देन तन्त्रमावृत्तिर्वा लक्ष्यते' इति व्याख्यानम्। अत एव प्रकृतसूत्रे 'दृष्टान्तमात्रमाश्रित्य विरूपाऽनेकप्रयोगदर्शनात्सरूपे तन्निवृत्त्यर्थं सरूपैकशेषाऽऽरम्भो न युक्तः, शेषशब्दस्य प्रवृत्ति-निवृत्त्युभयवाचित्वेन प्रतिपत्तिगौरवाऽऽपत्तेः, किन्तु विरूपाऽनेकशेष एवाऽऽरब्धव्य' इति पूर्वपक्षमभिधायोक्तम्—'अनेकशेषाऽऽरम्भस्याऽऽवश्यकत्वेन प्रतिपत्तिगौरवस्य, शब्दगौरवस्य चाऽऽपत्तिरि'ति दूषणमभिहितं भाष्यकारेण। अत एव 'क्रियापृथक्त्वे खल्वपि द्रव्यैकशेषो भवति। तद्यथा—'अक्षा भज्यन्तां, भक्ष्यन्तां, दीव्यन्तामि'ति 'युष्मद्युपपदे' इति सूत्रस्थं भाष्यं सङ्गच्छते। एतेन 'सहविवक्षाया-मेवे'ति तृतीयो नियम' इत्यपास्तम्। 'यत्रैवकारस्ततोऽन्यत्राऽवधारणमि'ति-न्यायेन श्रूयमाणानां सङ्कोचाऽऽपत्तेश्च। 'हलित्येकदेशस्य तन्त्राऽऽवृत्त्येकशेषाऽन्यतममस्तु' इत्यादौ तु 'सूत्रप्राप्तिविषयताऽस्ती'ति बोधयितुम् 'एकशेष'पदोपादानम्। वस्तुतस्तु तन्त्रैकशेषयोः पर्यायत्वमेवेति दिक्।

'पचन्ती'त्यादौ धातोर्द्वन्द्वप्रसक्तिरेव नास्ति, यद्बाधायैकशेषो मृग्यते। न च मिलिताल्लडादिप्रसङ्गः। 'धातोरि'त्येकत्वस्य विवक्षितत्वात्। एकनिष्ठाऽनेकव्यापाराणां विक्लित्त्यनुकूलानामेकधातुना बोध इवाऽनेकनिष्ठव्यापाराणां तत्फलाऽनुकूलानां बोधसम्भवेनाऽनेकधातोरप्रसक्तत्वाच्च। न चैकस्मात्कर्तृद्वये लद्वयं, कर्तृबहुत्वे लकारबहुत्वञ्च स्यात्, तसादिविधानन्तु तन्त्रविषये सावकाशमिति वाच्यम्। इष्टाऽऽपत्तेः। 'लस्ये'त्यत्र जातिविवक्षया 'लद्वयस्य तसादयः, बहूनान्तु झि-थाऽऽदय' इति सुवचत्वात्। वस्तुतो 'वर्त्तमाने लडि'त्यादौ व्यक्तिनिष्ठैकत्वस्य विवक्षणान्न कश्चिद्दोषः। वस्तुतस्तु 'प्रत्ययः' 'परश्चेति' नियमान्न लकाराऽनेकत्वम्। न च लत्वजातेराश्रयणान्न दोष इति वाच्यम्। धातुपरस्याऽऽदेशाऽऽपत्तौ तदभावात्। 'गर्गा' इत्यादावपि पितुरेकत्वात् प्रकृतिरेका। यञस्तु बहवः। सर्वेषां प्रकृत्यर्थाऽन्विताऽभिधायितया 'विरूपाणामपि समानाऽर्थानामि'ति 'गर्ग-य'शब्दस्य शेषः। न च पक्षे 'य'शब्दमात्रस्य तदापत्तिः। विकल्पस्याऽष्टदोषदुष्टत्वात्। न च

[1] 'वा क्यजन्त' इति क. ख. पाठः।

**वधेयम् । एवं स्थिते सूत्रवैयर्थ्यमेव हृदि निधाय यदिह व्याचख्युः—'नाऽनेनैकशेषो विधीयते' इत्यादि । यच्च 'समुदायादेकस्यां विभक्ताविति' पक्षं प्रत्याख्याय पुनराहुः—'राम राम औ इति स्थिते' इति । अलौकिकमेतत् प्रक्रियावाक्यमूह्यते, न तु लौकिकम् । अलौकिके च विभक्त्येकादेशादिकार्यं न प्रवर्त्तते, प्रयुक्तानामेवाऽन्वाख्यानादि'त्यादि । तत्सर्वं सन्दर्भविरुद्धं, न्यायविरुद्धञ्च । प्रयुक्तानेव ह्यन्वाख्यातुमलौकिकमुत्प्रेक्ष्यते । शास्त्रीयकार्यञ्च सर्वमलौकिकेष्वेव प्रवर्त्तते, न तु परिनिष्ठिते । प्रथमयोः पूर्वसवर्णः (६।१।१०२) इत्यादीनां प्रवृत्तिं विना [1]परिनिष्ठितरूपाऽलाभात् । परिनिष्ठिते तत्प्रवृत्तेर्दुरुपपादत्वाच्चेत्यास्तान्तावत् ।**

---

बृहच्छब्दरत्नः

विनिगमकाऽभावः । 'अणुरपी'ति न्यायेन स्पष्टप्रतिपत्तिसामर्थ्यस्यैव विनिगमकत्वात् । यद्वा यञ्प्रत्ययानामेवैकशेषः । यद्वा प्रतिप्रधानं गुणाऽऽवृत्तिः, गार्ग्यशब्दानामेवैकशेषः । यद्वा 'यञि'त्यपि व्यक्त्यैक्यम् । तेनाऽपत्यद्वित्वे, बहुत्वे वा यञ् एक एवेत्यादि भाष्यविचारका एव विचारयन्तु ।

'च्लेः सिच्' 'अनेकाल् शित्सर्वस्ये'त्यादिसूत्रस्थभाष्यकैयटादिप्रामाण्यात् 'आदेः परस्ये'त्यस्य तन्त्रादिना, परशब्दाऽनुवृत्त्या वा 'परशब्देन यत्र परस्य विधानं तत्राऽऽदेरि'ति सूत्राऽर्थः । तेन 'नित्यं ङित' इत्यादौ न दोष' इति प्राञ्चः । तत्र 'पर एव परः, केवल' इत्यर्थात् 'परस्यैव यत्र विधानं, तत्राऽऽदेरि'ति सूत्रा-

---

लघुशब्दरत्नः

नानेनैकशेषो विधीयते इति । 'किन्तु न्यायसिद्ध एवाऽनूद्यते' इति एतच्छेषस्तद्ग्रन्थे । प्रयुक्तानामिति । अयं भावः—'वृद्धयादिप्रवृत्तावेकशेषशास्त्राऽप्रवृत्त्या नित्यविध्युद्देश्यताऽवच्छेदकाऽनाक्रान्तत्वेन [2]तावदेव परिनिष्ठितं स्यात् । तच्च न लोके प्रयुज्यते । प्रयुक्तानां चेदमन्वाख्यानमिति, न तत्प्रक्रियावाक्ये वृद्धयादिप्राप्तिरि'ति ।

सन्दर्भविरुद्धमिति । 'एकस्यैव प्रयोगो यथा स्यादिति सूत्रमि'ति, 'समुदायादेकविभक्ताविति पक्षः प्रत्याख्यात' इति च [3]सन्दर्भेत्यर्थः । न्यायविरोधमाह—प्रयुक्तानेवेति । न च यत् यादृशशास्त्रीयकार्यप्रवृत्त्या परिनिष्ठितं सल्लोके प्रयोगाऽर्हं, कल्पिते तदीयाऽलौकिके तच्छास्त्रप्रवृत्तावपि, अत्र वृद्धयादिप्रवृत्तिर्नोचिता, वैषम्यादिति वाच्यम् । 'कृतद्वन्द्वानामेकशेष' इति पक्षे 'नावौ' 'अनड्वाहावि'त्यादौ परत्वादिना आवादौ कृते, एकशेषाऽनापत्तेरिति दूषण-

---

[1] 'परिनिष्ठिते रूपा' इति मुद्रितेषु पाठः ।
[2] 'तदेव' इति मुद्रितेषु पाठः ।
[3] 'सन्दर्भ इत्यर्थ' इति मुद्रितेषु पाठः ।

**अमि पूर्वः** (६।१।१०७)। **अम्यचीति**। अमि योऽच् तस्मिन्। 'अमोऽवयवेऽची'ति यावत्। तेन मकारसहितस्य [1]पूर्वरूपं न। एवम् 'अक्षादूहिन्यामि'त्यादावपि '[2]ऊहिन्यां योऽच् तस्मिन्नि'त्यादि बोध्यम्। इको यणचि (६।१।७७) इत्यज्ग्रहणस्याऽनुवृत्तेर्निर्विवादत्वात्। पदास्वैरि-बाह्या (३।१।११९) इत्यादिनिर्देशाश्चेह लिङ्गम्।

**तस्माच्छसः** (६।१।१०३)। तच्छब्देन सन्निहितः पूर्वसवर्णदीर्घः परामृश्यते। 'शस' इत्यवयवषष्ठी। स चाऽवयवः परत्वेन विशेष्यते—'पूर्व-

**बृहच्छब्दरत्नः**

ऽर्थोऽस्तु। एवं सम्पूर्णस्याऽमः पूर्वरूपं स्यादिति शङ्कामपाकर्त्तुमाह—अमि योऽजिति। अवयविन आधारत्वविवक्षायां 'वृक्षे शाखे'तिवत्सप्तमी। परशब्देन विशेष्यत्वा-दजेव गृह्यते। एवमिति। 'आदि'त्यधिकारात्, 'अलोऽन्त्यस्ये'ति वा अक्षादिशब्दा-ऽन्त्यस्यैव। ननु 'अची'त्यनुवृत्तावेव किं मानम्। तत्राऽऽह—इको यणचीति। अत एव 'सम्प्रसारणाच्चे'ति सूत्रस्य 'द्युभ्याम्' 'दुद्यूषती'त्यादावप्रवृत्तिः। ननु 'अची'त्यस्याऽनुवृत्तावपि तस्य विशेष्यत्वे किं मानम्, विशेषणत्वेनाऽन्वयसम्भवात्, —'अजादावमि' 'अजादावीरशब्दे' इति। अत आह—पदास्वैरीति। 'अची'त्यस्य विशेषणत्वेनाऽन्वये 'पर'शब्देन विशेष्यत्वात् 'ईर'शब्दस्यैव [3]ग्रहणाऽऽपत्तौ निर्देशो न युज्यते इत्यर्थः। यदा तूक्तज्ञापकादेव 'परस्यैव यत्र विधानमि'त्यर्थो नाऽऽश्री-यते, तदा 'आदेः परस्ये'त्यस्य दुर्वारत्वेनाऽजादावमीति व्याख्यानेऽपि न दोष इति ध्येयम्। अवयवषष्ठीति। भावप्रधानो निर्देशः। अवयवत्वे षष्ठीत्यर्थः। अत एव 'पटस्य तन्तुरि'त्यत्राऽवयवत्वं, 'तन्तोः पट' इत्यत्र त्ववयवित्वं षष्ठ्यर्थः। इदमेवा-ऽभिसन्धाय 'अवयवाऽवयविसम्बन्धः षष्ठ्यर्थ' इत्युद्घोषः। विभक्त्यर्थस्याऽऽधेय-

**लघुशब्दरत्नः**

दानपर-भाष्य-वार्त्तिका-ऽसङ्गत्यापत्तेरित्यलम्।

अमि योऽजिति। अवयविन आधारत्वविवक्षायां 'वृक्षे शाखे'तिवत्सप्तमी। तदाह—अमोऽवयवेऽचोति। 'पूर्वपरयोरि'त्यधिकृत'पर'शब्देन [4]विशेष्यत्वादजेव गृह्यते इति बोद्धव्यम्। निर्विवादत्वादिति। उत्तरत्राऽनुवृत्तेः सत्त्वादिति भावः। लिङ्गमिति। अनुवृत्तौ, अनुवृत्तस्य विशेष्यत्वे चेत्यर्थः। स्पष्टं चेदम् 'औतोऽम्शसोरि'त्युपक्रम्य प्रत्ययलक्षण-सूत्रे भाष्ये। अवयवषष्ठीति। अवयवाऽवयविभावसम्बन्धबोधिका षष्ठीत्यर्थः।

[1] 'न पूर्वरूपम्' इति मुद्रितेषु पाठः।

[2] 'ऊहिण्याम्' इति क. घ. शोधितः पाठः।

[3] सर्वनाम्नां प्रधानपरामर्शित्वेन परशब्देन प्रधानस्यैव परामर्श उचित इत्याशयः।

[4] 'विशेष्याज्जेव' इति क. हरिताललेपेन शोधितः पाठः।

सवर्णदीर्घात्परस्य शसोऽवयवस्ये'ति । तदेतदाह—**परो यः शसः सकार इति** । 'परो यः शसि'ति तु नोक्तम् । असम्भवात् । न हि कृते पूर्वसवर्णदीर्घे ततः[1] परः शस् सम्भवति ।

**अट्कुप्वाङ्** (८।४।२)। 'रषाभ्यामि'ति पञ्चमीनिर्देशाद्व्यवहितस्याऽप्राप्तौ वचनमिदम् । अत्र सर्वैर्व्यवायोऽसम्भवी । 'एकैकमात्रव्यवाये' इत्यपि नाऽर्थः, क्षुभ्नशब्दपाठसामर्थ्यात्, सरूपाणाम् (१।२।६४) इत्यादिनिर्देशाच्चेत्यभिप्रेत्याऽऽह—**व्यस्तैर्यथासम्भवं मिलितैश्चेति** । नन्वेवम् 'आदर्शेने'त्यादावतिप्रसङ्गः । न च 'अडादिभिरेव व्यवधाने' इति नियमः । 'अप्राप्ते विधिरयमि'त्युक्तत्वात् । सत्यम् । योगविभागोऽत्र बोध्यः । 'व्यवायेऽपी'त्येको योगो विध्यर्थः । 'अट्कुप्वाङ्नुम्' इत्यन्यो नियमाऽर्थः । छान्दसो भिसो लुक् । निषेधं बाधितुमिति । तेन 'पर्याणद्धमि'त्यत्र

---

**बृहच्छब्दरत्नः**

तासम्बन्धेन सकारादावन्वयः । यद्वा 'अवयवात्षष्ठी'ति पञ्चमीसमासः । शस्शब्दस्य शसवयवे लक्षणा । षष्ठ्यर्थस्तु स्थानसम्बन्ध एव । अवयवश्चाऽत्र सकार एव । अप्राप्ताविति । न चैवं 'व्यवायेऽपी'त्येवाऽस्त्विति वाच्यम् । 'कृत्स्ना' 'मृत्स्ने'त्यादौ दोषाऽऽपत्तेः । नार्थ इति । अत एव नुम्ग्रहणं चरिताऽर्थम् । अतिप्रसङ्ग इति । न च 'अट्कुप्वाङि'त्यनेन तदंशे निर्दिष्टांऽशस्य बाधेऽप्यन्यांऽशे बाधकल्पने न किञ्चिन्मानमि'ति वाच्यम् । 'प्रशास्तॄणामि'त्यादौ ऋकारैकदेशेन व्यवधानाण्णत्वाऽनापत्तेः । नियमेति । स च सजातीयाऽपेक्षः । 'आक्षरसमाम्नायिकैर्व्यवाये चेदेतैरेवे'ति । 'रषाभ्यामि'त्यत्र तु पृथक् रेफः, ऋकारैकदेशश्च रग्रहणेन गृह्यते' इति

---

**लघुशब्दरत्नः**

निर्देशाच्चेति । [2]नुम्ग्रहणाच्चेत्यपि बोद्धव्यम् । नियमार्थ इति । स च साजात्यादाक्षरसमाम्नायिकविषयकः, । अतो 'नृणामि'त्यादावुत्तराऽञ्भागेन व्यवधानेऽपि णत्वसिद्धया 'ऋवर्णान्नस्ये'ति वचनं न कार्यमिति भावः । इदं प्रत्याहाराऽऽह्निके, प्रकृतसूत्रे च भाष्ये स्पष्टम् । यद्यपि 'रषाभ्यामि'ति पञ्चम्योपस्थितनिर्दिष्टपदस्य 'व्यवाये' इत्यनेनाऽविरोधाय अडाद्यतिरिक्ताऽव्यवहितपरतया 'आदर्शेन' '[3]आर्त्नी'त्यादौ णत्वं सुशकवारणम्, ध्वनितं चेदं प्रकृतसूत्रे वार्त्तिककृता, तथाऽपि तत्र 'नृणामि'त्यर्थं वचनाऽऽरम्भे गौरवमितीदमेवाऽऽदृतं

---

[1] 'ततः' इति मुद्रितेषु नास्ति ।
[2] 'नुम्ग्रहणाच्चेति बोध्यम्' इति क० पाठः ।
[3] 'आर्त्नी' इति मुद्रितेषु नास्ति ।

उपसर्गादसमासेऽपि (८।४।१४) इति णत्वं सिद्ध्यतीति भावः। नुम्ग्रहणमिति। तत्स्थानिकस्य, स्वाभाविकस्य चाऽनुस्वारमात्रस्योपलक्षणमित्यर्थः। तेन 'बृहि वृद्धौ,' इदित्त्वान्नुम्। तस्याऽनुस्वारः। 'तृंहू हिंसायाम्', स्वाभाविकोऽत्राऽनुस्वारः। 'बृंहणम्', 'तृंहणम्'। उभयत्राऽपि णत्वं सिद्धम्। 'इवि प्रीणने,' प्रेन्वनम्। इह कृत्यचः (८।४।२९) इजादेः सनुमः (८।४।३२) इति णत्वं न। यथा 'नक्षत्रं दृष्ट्वा वाचं विसृजेदि'ति विधौ नक्षत्रदर्शनस्य कालविशेषोपलक्षणत्वात्सत्यपि दिवा नक्षत्रदर्शने वाङ् न विसृज्यते, उपलक्षितस्य कालविशेषस्याऽभावात्। रात्रौ [1]तु असत्यपि नक्षत्रदर्शने विसृज्यते, तस्य सत्त्वात्। तथेहाऽपि बोध्यम्। नन्वेवं नुम्ग्रहणं व्यर्थम्। अनुस्वारस्याऽदृत्वेनैव संग्रहात्। 'उरःकेणे'त्यादौ विसर्ग-जिह्वामूलीयादिव्यवधाने ह्येषैव गतिरिति चेत्। सत्यमित्याह—तच्चेति। स्यादेतत्। उक्तरीत्या नुम्विसर्जनीय (८।३।५८) इति सूत्रेऽपि नुम्ग्रहणं त्याज्यं स्यात्। तत्राऽप्यनुस्वारस्य लक्षणीयत्वात्। अन्यथाऽसम्भवात्। न हि षत्वप्रवृत्तिवेलायां 'सर्पींषी'त्यादौ नुम् लभ्यते। षत्वस्याऽसिद्धत्वेन ततः प्रागेवाऽनुस्वारप्रवृत्तेः। यद्यपि 'सुहिन्सु' इत्यत्र सम्भवत्येव, तथाऽपि तत्रैवाऽतिव्याप्तिं वारयितुं लक्ष्याऽनुरोधान्नुम्स्थानिके-

बृहच्छब्दरत्नः

स्पष्टमाकरे। स्वाभाविकस्येति। अनुम्नकारस्थानिकस्येत्यर्थः। अत एव तृंहूधातोर्नलोपे 'तृढ' इत्यादि सिद्धम्। अत एव 'नकाराजावनुस्वारपञ्चमौ झलि धातुषु' इति वृद्धोक्तिविरोधो न। 'तृहू हिंसायामि'ति नकाररहितपाठस्तु धात्वन्तराऽभिप्रायेण व्याख्येयः। 'इवि प्रीणने' इति भ्वादौ स्वतन्त्र एव पठ्यते। 'हिवि-दिवि-धिवि-प्रीणनाऽर्थाः' इति दण्डके 'इवी'ति पाठाऽन्तरमि'ति माधवादयः।

प्रेन्वनमिति। नुमो नकारस्य क्षुभ्नादित्वाण्णत्वाऽभावः। उरःकेणेति। 'उरसि[2]को यस्ये'ति समासः। यद्वा 'उरः कायती'त्युपपदसमासः। 'गतिकारकोपपदानामि'त्यस्याऽनित्यत्वेन सुबन्तेन समासः।

लघुशब्दरत्नः

मूलकृता। स्वाभाविकस्येति। तद्भिन्नस्थानिकस्य पाणिन्युच्चारितस्येत्यर्थः। 'तृंहू' इत्यादेरपि 'नकारजावनुस्वारे'ति वृद्धोक्तेर्नस्थानिकत्वात्। अत एव 'तृंहू' इत्यस्य नलोपे 'तृढ' इत्यस्य सिद्धिः। इवि प्रीणने इति। 'हिवि-दिवी'ति दण्डकपठितस्येदं निष्कृष्य ग्रहणम्।

[1] 'तुः' मुद्रितेषु नास्ति।

[2] 'क यस्य' इति क. ख. पाठः।

ऽनुस्वारे लक्षणाऽऽश्रयणीयैव । व्याख्यानात् । तस्य च शर्व्वेन तद्व्यवाये षत्वस्य सिद्धत्वादिति चेन्मैवम् । उक्तरीत्या तत्रत्यविसर्गग्रहणस्य प्रत्याख्यान-सम्भवेऽपि, नियमाऽर्थं नुम्ग्रहणम् । तथा हि–'अनुस्वारेण व्यवधाने चेत्षत्वं, तर्हि नुम्स्थानिकेनैवे'ति नियम्यते । तेन 'पुंसु' इत्यादौ षत्वं नेति दिक् ।

यस्मात्प्रत्ययविधिः (१।४।१३) । अत्र प्राचोक्तम्–'यस्माद्धातोः, प्रातिपदिकाद्वे'ति । तन्न । तिङन्तादीनामपि तरबादिकं प्रत्यङ्गत्वात् । सङ्कोचस्य निर्मूलत्वात् । 'आमुष्यायण' इत्यादौ वृद्ध्यभावापत्तेश्च । न हि प्रातिपदिकादयं तद्धितः, किन्तु सुबन्तादिति दिक् ।

अतो भिस ऐस् (७।१।९) । ननु 'एस्' इत्येवाऽस्तु । न च अतो गुणे (६।१।९७) इति पररूपाऽऽपत्तिः । एकारोच्चारणवैयर्थ्याऽऽपत्तेः । अन्यथा इसमेव विदद्ध्यादिति चेत् । सत्यम् । एदैतोर्द्विमात्रत्वाऽविशेषेण गौरवा-ऽभावादैस् कृतः । एवञ्च पररूपशङ्कैव नास्तीति महल्लाघवम् । यच्चाहुः–'ऐस्करणं 'निर्जरसैरि'त्यैकारश्रवणाऽर्थमि'ति । तद्भाष्यविरुद्धम् । सन्निपात-परिभाषया जरसादेशाऽप्रवृत्ते'र्निर्जरैरि'त्येव भाष्ये सिद्धान्तितत्वात् ।

नामि (६।४।३) । परिभाषाविरोधादिति । एतच्च रुधादिभ्यः

---

बृहच्छब्दरत्नः

तिङन्तेति । अत एव वा 'अदुहितरामि'त्यादौ 'हल' इति दीर्घः सम्प्रसारण-सञ्ज्ञायां यथासङ्ख्यविज्ञानान्ने'त्याकरः । आदिना 'याथाकथाचमि'त्यादौ 'यथा-कथाच-हस्ताभ्यां णयतौ' इत्यादिभिर्वचनसामर्थ्यात्पदसमुदायात्प्रत्ययेऽङ्गत्वे वृद्ध्यादिसिद्धिरिति बोध्यम् । दिगिति । दिगर्थस्तु 'औपगव' इत्याद्यसिद्ध्यापत्तिः । न च षष्ठ्यर्थसमर्पकप्रातिपदिकादेवाऽयं तद्धित इति वाच्यम् । सर्वत्रैव तथात्वा-ऽऽपत्तौ लुगलुगनुशासनस्य वैयर्थ्याऽऽपत्तेः । पदविधित्वाऽभावे समर्थपरिभाषाया अप्राप्त्यापत्तेश्चेति दिक् ।

---

लघुशब्दरत्नः

'प्रेन्वनमि'त्यादौ नुमो नस्य क्षुभ्नादित्वाण्णत्वाऽभावः । इति दिगिति । तद्वदत्र तु न वक्तुं शक्यं, 'तृंह' इत्यस्य 'तृंहणमि'त्यसिद्धेः । स्पष्टं चेदं भाष्ये ।

अङ्गत्वादिति । [1]तदनङ्गीकारे हि 'अपाचितरामि'त्यादौ चिणो लुगापादनादिपर-भाष्यविरोधः । 'चिणः परस्याऽङ्गसञ्ज्ञानिमित्तस्य प्रत्ययस्य लुगि'त्यर्थात् । दिगिति । दिगर्थस्तु 'याथाकथाचमि'त्यादौ यथाकथाच-हस्ताभ्यां णयतौ (५।१।९८) इत्यनेन वचन-सामर्थ्येन निपातसमुदायात्प्रत्ययेऽङ्गत्वाऽनापत्तौ वृद्ध्यनापत्तेरित्यलम् ।

ऐस्कृत इति । 'नद्यैरि'त्यादिसिद्धये उत्तरार्थं तदि'त्यन्ये ।

---

[1] 'तेन तदनङ्गीकारे तु' इति क. पाठः ।

श्नम् (३।१।७८) इति सूत्रे, श्नान्नलोपः (६।४।२३) इति सूत्रे च भाष्यकैयटयोः स्पष्टम्। आरम्भसामर्थ्यादिति। सुपि च (७।३।१०२) इत्यस्य तु न सामर्थ्यम्। 'रामाभ्यामि'त्यादौ सावकाशत्वादिति भावः। एवञ्च रामशब्दे 'नामी'त्यस्योपन्यासो लेखकप्रमादादि'ति यदूचुस्तच्चिन्त्यम्।

आदेशप्रत्यययोः (८।३।५९)। एकाऽपि षष्ठी विषयभेदाद्भिद्यते इत्याशयेन व्याचष्टे—आदेशः प्रत्ययाऽवयवश्चेति। यदि त्वादेशाऽवयवो

---

बृहच्छब्दरत्नः

सुपि चेत्यस्येति। यत्तु 'कति'शब्दादामि परत्वात् 'षट्चतुर्भ्यश्चे'ति नुटि, सन्निपातपरिभाषाया अप्राप्तत्वेन 'नामी'त्यस्याऽपि सावकाशत्वमि'ति। तन्न। नित्यत्वेन 'नामी'त्यस्यैव दुर्वारत्वात्। अन्तरङ्गत्वेन 'ह्रस्वनद्याप' इत्यस्यैव प्रवृत्तेश्च। 'षट्चतुर्भ्यश्चे'त्यत्र बहुवचनेनाऽर्थस्याऽपि निमित्तकोटौ प्रवेशबोधनाद्बहिरङ्गत्वात्। अत एवाऽऽद्युदात्तनिपातनेन 'चतस्रः पश्ये'त्यत्र [1]'चतुरः शसी'त्यस्येव, 'चतसृणामि'त्यत्र[2] 'षट्त्रिचतुर्भ्यो [3]हलादिः' 'झल्युपोत्तममि'त्यस्य[4] हलादिग्रहणसामर्थ्येन न बाध' इति भाष्यकाराद्युक्तं सङ्गच्छते। अन्यथा एकवचननिर्देशेन 'चतुरः शसी'त्यस्य गौणे चारितार्थ्याद्बहुवचननिर्देशेन 'षट्त्रिचतुर्भ्यो हलादिः' 'झल्युपोत्तममि'त्यस्य गौणेऽप्राप्तावप्यन्यत्र चारितार्थ्येन 'चतुरः पश्ये'त्यादौ परत्वेन प्राप्त्यभावार्थं हलादिग्रहणस्याऽऽवश्यकत्वे, सामर्थ्यं दुरुपपादमि'ति वदन्ति। न चाऽत्र ह्रस्वसञ्ज्ञासापेक्षत्वेन समत्वम्। पदसञ्ज्ञकाऽर्थज्ञानस्य लौकिकप्रमाणसापेक्षत्वेन गुरुत्वात्। षट्सञ्ज्ञाया अप्यपेक्षितत्वेनाऽऽधिक्यस्य ध्रौव्याच्च। किञ्च 'ह्रस्वनद्याप' इत्यादौ शक्तिग्रहाऽर्थं न 'ऊकालोऽजि'तिसूत्राऽपेक्षा। 'खर्वो ह्रस्वश्च वामन' इत्यादिनैव तत्सम्भवात्। 'ऊकालोऽजि'ति सूत्रन्तु त्रिमात्रककालाऽपेक्षया द्विमात्रककालस्य खर्वत्वे, ह्रस्वप्रदेशे ग्रहणाऽभावाऽर्थम्। अत एव महासञ्ज्ञाकरणञ्चरिताऽर्थम्। न च 'नाजानन्तर्ये' इति निषेधः। पश्चात्प्रवृत्तावजानन्तर्ये एव निषेधप्रवृत्तेः पूर्वमुपपादितत्वात्। अत एव 'कति'शब्दे 'षट्चतुर्भ्यश्चे'ति सूत्रं नोपन्यस्तं मूलकृता। न च ह्रस्वलक्षणे नुटि षड्लक्षणो नुट् दुर्वार

---

लघुशब्दरत्नः

स्पष्टमिति। सुपि च (७।३।१०२)इत्यपेक्षया नामि (६।४।३)इति नित्यमित्यपि तत्र ध्वनितम्। विषयभेदादिति।

---

[1] 'चतुरोऽन्त उदात्तः, शसि परे' इत्यर्थः। 'चतुरः कल्पयन्त' इति चोदाहरणम्।

[2] इत्यत्र' इति क. ख. नास्ति।

[3] 'षट्त्रिचतुर्भ्यो हलादिर्विभक्तिरुदात्ता स्यात्'। 'आ षड्भिर्हूयमानः'।

[4] 'षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिः, तदन्तस्य पदस्य उपोत्तममुदात्तम्। 'पञ्चभिः'।

बृहच्छब्दरत्नः

इति वाच्यम्। नद्याप्-साहचर्येण, 'आ-आमि'त्याकारप्रश्लेषेण चाऽऽकाराद्याम एव ग्रहणात्। तस्यैवोत्तरत्राऽनुवृत्तेः। बाधितस्य पुनरप्रवृत्तेश्च। अत एव दिग्यादेशेन द्वित्वं बाध्यते। तत्र प्रवृत्त्यप्रवृत्त्योर्लक्ष्यानुऽरोधेन व्यवस्थेति सर्वसंमतम्। यत्तु 'कष्टाये'ति ज्ञापकस्य सामान्याऽपेक्षत्वेन सुपूनिमित्तककार्ये उक्त-परिभाषा न प्रवर्त्तते। अत एव 'झलि किम् ?, रामाणामि'ति मूलग्रन्थः सङ्गच्छते। अन्यथा 'यञी'त्यस्याऽनुवृत्तौ सन्निपातपरिभाषया एत्त्वाऽप्रवृत्तौ, किं तेन ?। वस्तुतस्तु 'कष्टाये'त्यादौ 'अकृत्सार्वे'ति दीर्घ एव युक्त' इति। तन्न। 'रामेषु' इत्यादावेत्त्वाऽनापत्तेः। 'यञी'त्यस्याऽननुवृत्तौ नुटः पूर्वमेत्त्वाऽऽपत्तेः। 'हली'त्यस्य तु व्यवहितत्वान्नाऽनुवृत्तिः। यदपि 'वस्तुतस्तु' इत्यादि। तदपि न। 'अकृत्सार्वधातु-कयोरि'त्यत्र पर्युदासेन असुप एव यकारस्य ग्रहणात्। तत्फलन्तु 'उरुया' 'धृष्णुये'ति ङिदादेशे दीर्घाऽभावः। ध्वनितञ्चेदं 'स्थानिवदादेशः' 'ज्यादादीयस' इत्यादौ भाष्ये। सन्निपातपरिभाषायाः प्राप्तिरेव नास्ति। अकाराऽन्तसन्निपातेन जायमानस्य नुटो दीर्घं प्रत्यनिमित्तत्वात्। निमित्तत्वस्य नामूरूपसमुदाये पर्याप्तत्वात्। अत एव 'नुटी'ति न सूत्रितम्। एतेन 'समुदायमध्ये नुटः प्रवेशेन परिभाषा दुर्वारे'ति परास्तम्। 'नामी'ति सूत्रकरणसामर्थ्येनेदृशाऽर्थस्याऽत्राऽग्रहणात्।

न च 'नुटी'ति न्यासे 'अनश्च' इत्यत्र दीर्घः स्यादिति वाच्यम्। अनङ्गत्वात्। प्रत्यासत्तिन्यायेन नुडवयवकनिरूपिताऽङ्गग्रहणात्[1]। नाऽपि '[2]भृञो नुट् चे'ति निष्पन्ने 'भृङ्ग' इत्यत्राऽतिव्याप्तिः। उणादीनामव्युत्पन्नत्वात्। 'नुक्'-करणे 'नट्'करणे[3]वा बाधकाऽभावाच्च। अत एव 'अक्षण्वन्त' इत्यादौ दीर्घः स्यादि'ति निरस्तम्। छान्दसत्वेन निर्वाहाच्च। नुटस्त्रिपादित्वेनाऽसिद्धत्वाच्च। न च तस्य सन्निपातपरिभाषाया इव बाधः। उभयबाधकल्पनस्याऽयुक्तत्वात्। सूत्रबाधाऽपेक्षया लौकिकन्यायसिद्धपरिभाषाबाधस्यैव न्याय्यत्वाच्च। 'अक्षण्वन्त' इत्यादौ परिभाषाया अपि दुर्वारत्वाच्च। अयमेव च मूलग्रन्थाऽर्थ' इति प्राहुः।

यदपि 'न तिसृचतसृ' इतिनिषेधेनाऽपि अनित्यत्वं ज्ञापयितुं शक्यमि'ति। तन्न। 'त्रि-आमि'ति स्थिते लिङ्गरूपाऽर्थविशेषनिमित्ततिस्रपेक्षया नुटः पूर्वम् अन्तरङ्गत्वेन प्रवृत्तेः। यद्यपि त्रयादेशोऽप्यन्तरङ्गस्तथाऽपि परत्वेन नुडेवोचितः। त्रयादेशोत्तरं नुड्यपि न क्षतिः। तत आदेशे कृते, दीर्घे कर्त्तव्ये नैव सन्निपातपरिभाषायाः प्रवृत्तिः। एतेन 'चतसृ'ग्रहणं ज्ञापकमि'त्यपास्तम्। चतस्रादेशे सत्यसति वा 'षट्चतुर्भ्यश्चे'ति नुटो दुर्वारत्वात्। आदेशे सति 'ह्रस्वलक्षणे नुटि सिद्धं नः समीहितम्। वस्तुतस्तु आदेशात्पूर्वं नुडेवोचितः। उभयोरर्थनिमित्तत्वेऽपि स्वार्थद्रव्याऽर्थाऽपेक्षया बहिर्भूतस्त्रीरूपलिङ्गाऽर्थनिमित्ताकचतस्रादेशाऽपेक्षया 'षट्-

[1] 'ग्रहात्' इति ख. पाठः।

[2] 'भृञः किन्नुट् च' इति तु मुद्रिते उणादौ सूत्रम्।

[3] 'वा' इति क. ख. नास्ति।

गृह्येत, तर्हि 'तिसृणामि'त्यादौ दोषः। यदि च 'प्रत्ययो यः सकार' इति, तर्हि 'रामेष्वि'त्यादौ न स्यात्। यद्यप्येवं वैरूप्येण व्याख्याने सहविवक्षाविरहाद् द्वन्द्वो न युज्यते, तथाऽपि सौत्रत्वाद्बोध्यः। विवृताघोषस्येति। यत्तु वदन्ति—'सकारस्य सोष्मणोऽघोषस्याऽन्तरतमः ष एव मूर्धन्य' इति।

---

**बृहच्छब्दरत्नः**

चतुर्भ्यश्चे'त्यस्याऽन्तरङ्गत्वात्। न चैवं 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेने'तिवार्त्तिकविरोध इति वाच्यम्। अचि रादेशस्य सर्वाऽपवादकत्वेन त्वन्मतेऽपि दोषस्य तुल्यत्वात्। ध्वनितश्चेदं भाष्ये इत्यग्रे निरूपयिष्यामः।

तिसृणामिति। यत्तु 'ष'वति आदेशे कर्त्तव्ये, सकारोच्चारणसामर्थ्येन षत्वाऽभाव' इति। तन्न। 'तिस्र आचक्षाणः 'तीरि'ति रूपाऽर्थं तथा पाठात्। न च णिलोपस्य स्थानिवद्भावेन तिस्रादेशो दुर्लभ इति वाच्यम्। 'क्वौ लुप्तं न स्थानिवदि'-त्यस्य प्रवृत्तेर्ज्ञापितत्वेन सकारोच्चारणसार्थक्यात्।

एतेन'विभक्तिनिमित्तकतिस्रादेशस्य बहिरङ्गत्वेनाऽसिद्धत्वाण्णिनिमित्तटिलोपो ने'त्यपास्तम्। 'नाऽजानन्तर्ये' इति निषेधाच्च। पुंवद्भावस्तु न शङ्क्यः। स्वादित्वतद्धितत्व-विरहमात्रप्रयुक्तश्रूयमाणणिच्यतिदेशस्य चरिताऽर्थत्वेन लुप्ते तदप्रवृत्तेः। किञ्च णिजुत्पत्तेः पूर्वं तिस्रादेशस्याऽप्राप्त्वा प्रतिबध्याऽभावेन पुंवद्भावाऽप्रवृत्तेः। विभक्त्युत्पत्तौ तिस्रादेशस्य प्राप्तावपि 'सिद्धश्च प्रत्ययविधावि'त्युक्तत्वेन पुंवद्भावस्य तस्यामवस्थायामप्रवृत्तेश्च। किञ्च 'तिस्र' इत्यादावपि सकारश्चरिताऽर्थः। न चाऽत्र षत्वप्राप्तिः। 'न रपरसृपिसृजी'ति निषेधात्। अत एव 'उस्र' इत्यत्र 'शासिवसी'ति षत्वं नेति कृदन्ते स्फुटम्। न च रादेशोऽसिद्धः। यथोद्देशपक्षे परिभाषाया अप्रवृत्तेः। [1]विधिविषयेणः परत्वस्याऽऽक्षेपेण 'नाजानन्तर्ये' इति निषेधाच्च। वस्तुतस्त्वादेशरूपसकारस्येति व्याख्याने तिस्रादेशसकारोच्चारणमेव तात्पर्य्यग्राहकम्। एतेन 'इण्कोः किम्, रामस्ये'ति मूलग्रन्थो व्याख्यातः। किञ्च तत्र सामर्थ्यात् षत्वाऽभावकल्पने 'अमुष्येत्यसिद्धिः।

---

**लघुशब्दरत्नः**

[2]तन्त्रेण षष्ठीद्वयोच्चारणात् 'आदेशरूपसस्य स्थाने, प्रत्ययाऽवयवसस्य स्थाने च षो भवती'-त्येवंरूपः षष्ठीभेद इत्यर्थः। ओस् सम्बन्धद्वयाऽर्थकमित्यभिमानः। तिसृणामिति। तिस्रादेशे सकारोच्चारणन्तु 'तिस्र' इत्यत्र न रपर (८।३।११०) इति षत्वनिषेधे चरिताऽर्थमिति भावः।

---

[1] अत्र 'इणः परत्वस्य' इति च्छेदः। 'विधिविषयाऽपेक्षेण' इति ख. पाठः।
[2] 'तन्त्रेण षष्ठीद्वयोच्चारणात्' इति भैरव्यां दर्शनात्प्रक्षिप्तोऽयं पाठः।

तन्न्यूनम् । ठकारेऽतिप्रसङ्गात् । तथा च प्रातिशाख्यम्–

'वर्गे वर्गे च प्रथमावघोषौ, युग्मौ सोष्माणावनुनासिकोऽन्त्य' इति । ननु [1]'दधिसेचौ' 'दधिसेच' इत्यादौ प्राक् सुबुत्पत्तेः समासे, षत्वं वारयितुं

बृहच्छब्दरत्नः

न्यूनमिति। सामान्यशब्दोपादाने विशेषधर्मस्य नियततयाऽनुपस्थितिरिति भावः। प्रसङ्गादिति । सिद्धान्ते तु विवृताऽऽभ्यन्तरग्रहणान्न दोषः । 'विवृतमूष्मणामि'ति-वाक्ये श-ष-स-हा एव गृह्यन्ते । अन्येषां 'स्पृष्टं [2]प्रयत्नं स्पर्शानामि'त्यत्र ग्रहणात्। अत एव प्रातिशाख्यादौ 'विवृत'शब्देन द्वितीयादयो न व्यवह्रियन्ते। 'ऊष्म'शब्दस्तु प्रयुज्यते एव । 'ऊष्म'शब्दो धर्मिपरो, धर्मपरोऽप्यस्ति । 'विवृतमूष्मणामि'त्यत्र द्वितीय-चतुर्थानामपि [3]ग्रहणात् । 'तयोः प्रयत्नद्वयमि'तिवादिनां मते तु 'विवृता-ऽघोषस्ये'ति मूले 'विवृत'शब्दो विवृतमात्रपरो बोध्यः ।

तथा चेति । तथा च शिक्षावाक्यं—'शादय ऊष्माणः, सस्थानेन द्वितीया, हकारेण चतुर्थी' इति । इह त्रीणि वाक्यानि। 'शषसहा ऊष्माण' इति प्रथम-

लघुशब्दरत्नः

ठकारेऽतिप्रसङ्गादिति । 'सोष्मणः सोष्माण इति द्वितीया' इति 'स्थानेऽन्तरतम'-सूत्रस्थभाष्येण तस्याऽपि सोष्मत्वबोधनात् । 'सोष्मण' इत्यस्योष्मत्वसहितस्येत्यर्थः । अत्राऽर्थे ऋष्यन्तरसंवादमप्याह–तथा चेति ।

प्राक् सुबुत्पत्तेरिति । 'सोपपदात्सिचेर्विचो'ति[4] भावः । केवलात्सिचेर्विचि 'दध्नः सेचावि'ति समासे तु 'उत्तरपदत्वे चे'त्यस्य 'अपदादिविधावि'ति निषेधेन, प्रत्ययलक्षणेन पदत्वसत्त्वात्, 'पदस्याऽऽदिरि'त्यर्थेऽपि[5] सिद्धिरिति भावः । यद्यपि कैयटेन 'सोपपदात्सिचेर्विजेव न, 'अनभिधानादि'त्युक्तं, तथाऽपि यचि भम् (१।४।१८) इत्यत्र सुप्तिङन्तम् (१।४।१४) इत्यतः 'सुबि'त्यनुवर्त्य 'यजादौ असर्वनामस्थाने [6]तत्प्रकृतिर्भसञ्ज्ञा भवति, यजाद्यसर्वनाम-स्थानपरं सुबन्तं यद्यस्ति तदपि भसञ्ज्ञम्' । तेन 'सुवाचे'त्यादौ न कुत्वम् । अत्र तत्प्रकृतेः सञ्ज्ञा प्रधाननिष्ठा, अवयवसुबन्तस्य त्वन्वाचयशिष्टा । एवं 'स्वादिष्वि'ति योगं विभज्य, स्वादिषु पूर्वस्य पदत्वं विधाय, 'असर्वनामस्थाने' इत्यत्र 'सुबन्तमि'त्यनुवर्त्य, 'यची'त्यपकृष्य प्रसज्यप्रतिषेधमाश्रित्य, 'यजादौ सर्वनामस्थाने परतः पूर्वं पदं न, तत्परं यदि सुबन्तमस्ति तदपि पदं ने'त्यर्थः । सुबन्तञ्च यजादिप्रत्ययाऽव्यवहितमेव। अतो राजपुरुषादौ पूर्वपदे

[1] 'दधिसेचौ' इति मुद्रितेषु त्रुटितम् । [2] 'प्रयत्नम्' इति क. ख. पाठः ।
[3] 'ग्रहात्' इति ख. पाठः ।
[4] 'विजिति भावः' इति मुद्रितेषु, लिखितेऽपि च क्वचित्पाठः ।
[5] 'इति पक्षेऽपि' इति मुद्रितेषु पाठः ।
[6] 'तत्प्रकृतेर्भसञ्ज्ञा भवती'ति मुद्रितेषु पाठः ।

**'पदादादिः पदादिरि'ति पञ्चमीसमासो भाष्ये उक्तः, ततश्चेहाऽपि सात्पदाद्योः**

---

बृहच्छब्दरत्नः

वाक्याऽर्थः। 'सस्थानेने'ति इत्थम्भूतलक्षणे तृतीया, सहयुक्ते तृतीया वा। 'ह्-श-ष-साः क्रमेण द्वितीयानां सस्थानाः। यथा हादय ऊष्माणस्तथा खादयोऽपी'-त्यर्थः। फकारस्य तु यद्यपि सस्थान उष्मा नास्ति, तथाऽपि विशिष्यैवोष्मत्वं बोध्यम्। 'हकारेणे'ति। 'यथा हकार ऊष्मा, तथा तेऽपीत्यर्थ' इति तद्व्याख्यातारः। एतेन 'प्रातिशाख्यमि'ति समाख्याबलात्तस्य तच्छाखाविषयत्वे, सर्वशाखासाधारण-व्याकरणे आश्रयणमयुक्तमि'ति मन्दोक्तमपास्तम्। स्पष्टञ्चेदं 'स्थानेऽन्तरतम' इति-सूत्रे भाष्य-कैयट-कौस्तुभादौ। न च 'सोष्म'पदं सोष्ममात्रपरमिति वाच्यम्। 'अघोषस्ये'त्यस्य वैयर्थ्याऽऽपत्तेः। अस्माकन्तु ऋकारव्यावृत्त्यर्थं तदिति ध्येयम्।

पदादादिरिति। अत एवाऽऽदिग्रहणं चरितार्थम्। अन्यथा 'सात्पदयोरि'त्येव ब्रूयात्। 'साति'साहचर्येण पदादिरेव ग्रहीष्यते। नन्वेमपि सूत्रे 'आदि'-ग्रहणं व्यर्थम्, 'सातेः' 'पदादि'ति सूत्रद्वयेनैव सिद्धेरिति चेत्। अत्रोच्यते—'आदि'ग्रहणमादिभूताऽर्थस्य [1]ग्रहणाऽर्थम्। स चाऽऽदिभूतः 'साति'पदसाहचर्येणा-ऽर्थवान् प्रत्ययरूप एव गृह्यते। किञ्च बहुज्विधावाद्यर्थक-पुरस्तात्-शब्दस्यो-पादानेन प्रतिपदोक्तपरिभाषया तस्यैव ग्रह उचितः। सूत्रे समाहारद्वन्द्वगर्भो द्वन्द्वः। सम्बन्धसामान्ये च षष्ठी। तेनेष्टाऽर्थलाभः। इदमेवाऽभिसन्धायोक्तं—'सातेर्बहुच्-पदाभ्यामि'ति वक्तुमुचितमि'ति। न चैवमपि कुत्वादिकं स्यादिति वाच्यम्। 'सुबन्तमि'त्यनुवर्त्त्य 'यजादावसर्वनामस्थाने यस्मात्स्वादिविधिः, तदादि भसञ्ज्ञं भवति, तदवयवभूतं सुबन्तं यद्यस्ति तर्हि [2]तदपि भसञ्ज्ञं भवति'। इह समुदायस्य सञ्ज्ञा प्रधानशिष्टा, व्यापकोद्देश्यकत्वात्। अवयवस्य त्वन्वाचयशिष्टा, व्याप्योद्देश्य-कत्वात्। तथा च 'बहुसेचे'त्यादौ न कुत्वादिकम्। 'बहुसेचावि'त्याद्यर्थन्तु

---

लघुशब्दरत्नः

नलोपादिसिद्धिः। तत्र समुदायस्य 'स्वादिष्वि'ति प्राप्ता, अवयवस्य 'सुबन्तमि'ति प्राप्ता। श्रूयमाणे सौ [3]पूर्वपदस्य सञ्ज्ञेष्टैव। तेन 'सुवाचावि'त्यादिसिद्धिरित्येवम्[4] 'उत्तरपदत्वे चे'त्यस्य प्रत्याख्याने 'दध्नः सेचावि'ति षष्ठीतत्पुरुषेऽपि षत्वनिषेधाय पञ्चमीसमास आवश्यक इत्यनभिधाने न मानमिति तात्पर्यम्। प्रत्याख्याने पञ्चमीसमासे 'बहुसेचावि'त्याद्यर्थं 'बहुच्पूर्वस्य षत्वं ने'ति वचनं कार्यं, वार्त्तिकाऽऽरम्भे तत्रैव कुत्ववारणाय 'बहुच्पूर्वस्य चाऽपदादिविधौ ने'तिवत्। इदमपि योगविभागस्येष्टसिद्ध्यर्थतया यत्रोत्तरपदस्य कार्यित्वं

---

[1] 'ग्रहार्थम्' इति ख. पाठः।

[2] 'तदपि सञ्ज्ञं भवति' इति क. ख. पाठः।

[3] 'पूर्वस्य सञ्ज्ञा' इति क. ख. पाठः।

[4] 'इत्यादिसिद्धमित्येवम्' इति क. ख. पाठः।

(८।३।१११) इति निषेधः स्यादिति चेत्। मैवम्। 'स्वादिषु'[1] (१।४।१७) इति या पदसञ्ज्ञा तामाश्रित्योक्तनिषेधो न प्रवर्त्तते' इति 'साति'ग्रहणेन ज्ञापितत्वात्। यच्चाहुः—'प्रत्ययविषये नाऽयं निषेध' इति ज्ञाप्यते' इति। तन्न। 'व्यतिसे' इत्यादौ षत्वाऽऽपत्तेः। ननु 'पदस्याऽऽदिरि'ति पक्षे 'व्यतिसे' इत्यत्र षत्वं दुर्वारम्। न च व्यपदेशिवद्भावेन 'से' इत्यस्याऽपि तिङन्तत्वात् पदत्वं शङ्क्यम्। [1]यस्मात्स विहितस्तदादेरेव ग्रहणात्। अन्यथा 'रामेषु'

### बृहच्छब्दरत्नः

'अ सर्वनामस्थाने' इत्यत्र 'सुबन्तमि'त्यनुवर्त्त्य 'यची'त्यपकृष्य प्रसज्यप्रतिषेधमाश्रित्य योगविभागसामर्थ्यात् 'अनन्तरस्ये'ति न्यायं बाधित्वा पदत्वद्वयस्य निषेधः। अत एव 'पूर्वदण्डिप्रिय' इत्यत्राऽवान्तरतत्पुरुषे दण्डिशब्दस्योत्तरपदत्वेऽपि नलोपसिद्धिः। अत एव च 'काश्यपेन प्रोक्तमधीते' इत्यस्मिन्नर्थे णिन्यन्तसुबन्तादुत्पन्नस्याऽणो लुकि औ-जसादौ नलोपो न। एवञ्च 'परमबुधौ' 'परमगर्दभावि'त्यादौ भष्भावशङ्कैव न।

[2]स्वादिष्वितीति। 'अग्निसादि'त्यत्राऽन्तर्वर्त्तिनीं विभक्तिमाश्रित्य प्राप्ताऽपि 'सुप्तिङन्तमि'ति पदसञ्ज्ञा 'स्वादिष्वि'ति पदसञ्ज्ञया बाध्यते। नन्वेवं 'राजपुरुषेष्वि'त्यादावुत्तरपदनिष्ठपदत्वमाश्रित्य षत्वनिषेधो दुर्वारः। न हि स्वादिष्वितिसूत्रेणोत्तारपदस्य सञ्ज्ञा, किन्तु विशिष्टस्य। 'यस्मात्प्रत्ययविधिरि'त्यस्याऽनुवृत्तेः। किञ्च 'पचति-पठति यस्यां क्रियायां सा पचति-पठतिः'। एवं

### लघुशब्दरत्नः

तद्विषय एव, पदान्तत्वप्रयुक्तकार्ये एव च बोद्धव्यमित्यन्यत्र विस्तरः। या पदसंज्ञेति। [3]न च 'राजपुरुषेष्वि'त्यत्र दोषः, अन्तर्वर्त्तिविभक्त्या 'सुबन्तमि'ति पदत्वमाश्रित्य निषेधाऽऽपत्तेरिति वाच्यम्। 'साति'ग्रहणेन 'स्वादिष्वि'ति यस्य पदसञ्ज्ञा तदुत्तरस्य षत्वनिषेधो नेति ज्ञाप्यते इति तात्पर्यात्। प्रत्याख्यानरीत्या तस्याऽपि 'स्वादिष्वि'ति पदत्वाच्च। सर्वं चेदं न लुमता (१।१।६३) इति सूत्रे भाष्ये स्पष्टम्।

व्यतिसे इति। यद्यपि व्यतिहारस्याऽनेककर्तृकक्रियाविषयत्वादेकवचनस्य तत्राऽसम्भवस्तथाऽपि विश्वामित्राऽऽश्रमे मारीचं प्रति 'किमर्थं ब्रह्मवधं करोषी'ति रामेण[4] पृष्टे, 'ममाऽयं धर्म' इति तेनोत्तरिते, 'धर्मोऽस्ति सत्यं तव राक्षसाऽयमन्यो व्यतिस्ते तु ममापि धर्मः।

[1] 'यस्मात्तद्विधिस्तदादेरेव' इति ङ पाठः।
[2] 'स्वादिष्विति' इति क. ख. पाठः।
[3] 'न च' इत्यत आरभ्य 'मैत्रस्य सेति फलति' इत्यन्तः (लघुशब्दरत्ने ३२२ पृष्ठे) पाठः ग. नास्ति। घ. तु कुण्डलितः।
[4] 'रामेण' इति मुद्रितेषु त्रुटितम्।

इत्यादावपि षत्वनिषेधाऽऽपत्तिरिति चेत्। सत्यम्। न वयं प्रत्ययमात्रस्य तदन्ततां ब्रूमः, किन्तु प्रकृति-प्रत्ययसमुदाये प्रवृत्तां पदसञ्ज्ञामेकदेशविकृत-न्यायेन लुप्तप्रकृतिके प्रत्ययेऽप्यानयामः। 'रामौ' 'रामा' इत्यादावपि हि एक-देशविकृतन्यायेनैव पदत्वम्। एकादेशात्प्रागेव पदसञ्ज्ञाप्रवृत्तेः। न त्वेका-देशे कृते सुप्तिङन्तम् (१।४।१४) इत्यस्य प्राप्तिरस्ति। 'उभयत आश्रयणे नाऽन्तादिवदि'ति सिद्धान्तात्।

---

**बृहच्छब्दरत्नः**

क्रियाणामाधारत्वे विवक्षिते 'पचतिपठतिष्वि'त्यादावयवनिष्ठपदत्वमाश्रित्य निषेधो दुर्वार इति चेन्न। भसञ्ज्ञासूत्रे इवाऽत्रापि 'सुप्तिङन्तमि'त्यस्याऽनुवर्त्तनेन स्वाद्यनन्तरयोः समुदायाऽवयवयोः सुबन्त-तिङन्तयोरपि पदत्वात्। 'स्वादिष्वि'ति-पदसञ्ज्ञोत्तरस्य षत्वाऽभावे 'साति'ग्रहणं ज्ञापकमि'त्यपि वदन्ति।

प्रागेवेति। एकादेशस्य तु वर्णविशेषादीनां निमित्तकोटौ प्रवेशात्, विधिसूत्र-त्वाच्च बहिरङ्गत्वम्। किञ्च 'प्रत्ययग्रहणे यस्मात्स विहित' इति परिभाषायां यत्तच्छब्दाभ्यां यादृशी प्रकृतिः प्रविष्टा तादृशी परामृश्यते। [१]'यस्मात्स विहित'

---

**लघुशब्दरत्नः**

ब्रह्मद्विषस्ते प्रणिहन्मि येन-(राजन्यबन्धुर्धृतकार्मुकेषुः') इति भट्टिकाव्यस्थरामवाक्ये 'तव धर्मेण ममाऽन्यो धर्मस्तपोरूपो व्यत्यासेन भवति, येन धर्मेण त्वत्सम्बन्धिनो निहन्मी'त्यर्थके एकवचन-दर्शनान्न दोषः। अद्याऽऽरभ्य त्वद्धर्मः क्रौर्यं मयि भवति, मद्धर्मोऽक्रौर्यं च त्वयि। वर्त्तमान-सामीप्ये लट्। [२]'रामवाणपातेन समुद्रसमीपे पतितो मारीचस्तपश्चचारे'ति रामायणे प्रसिद्धम्। [३]'अन्यसम्बन्धिक्रियामितरः करोति, इतरसम्बन्धिनीमन्य'[३] इति कर्मव्यतिहारसम्भवा'दिति-जयमङ्गला। 'व्यतिसे' इत्यस्य 'हे चैत्र, मैत्रेण सह व्यत्यस्तो भवसी'त्यर्थः। 'यद्देशे मैत्रसत्ता तद्देशे चैत्रस्य सा,[४] यद्देशे च चैत्रस्य सा, तद्देशे[५] च मैत्रस्य से'ति फलति। यद्यपि व्यपदेशिवद्भावेनै-काच्त्वादेरिवाऽस्याऽप्यशास्त्रीयस्याऽतिदेशो वक्तुं शक्यः, 'रामेष्वि'त्यादौ त्वसहायत्वाऽभावान्न तत्प्रवृत्तिस्तथाऽपि पूर्वपक्ष्युक्तमभ्युपेत्याऽपि समाधातुमुपक्रमते-न वयमित्यादिना।

सिद्धान्तादिति। सुप्तिङन्तम् (१।४।१४) इत्यत्र 'यस्मात्प्रत्ययविधिरि'त्यनुवृत्तेरिति भावः। अत्र 'कृतेऽप्येकादेशे एकदेशविकृतन्यायेनोक्तरीत्या मान्तस्य प्रकृतित्वात्, 'औ' इत्यस्य[६]

---

[१] 'यस्मात्स्वादिर्विहितः' इति क. पाठः।

[२] 'रामबाणवातेन' इत्यपि क्वचित्पाठः।

[३] 'अन्यः करोति, इतरसम्बन्धिनीमितरः' इति क. पाठः।

[४] 'यद्देशे च चैत्रसत्ता' इति क. पाठः।

[५] 'यद्देशे च, तद्देशे च' इति चकारद्वयं मुद्रितेषु नास्ति।

[६] 'औ इत्यादौ' इति घ. पाठः।

**यत्तु वदन्ति—'प्रकृतिसन्निधाने प्रत्ययस्य पदत्वं नास्ति, [1]मन्त्रेषु (६।४।१४१) 'सर्वेषामि'त्यादिनिर्देशादि'ति। तन्मन्दम्। उक्तरीत्या पदत्वाऽभावे न्यायसिद्धे, ज्ञापनस्याऽसम्भवात्, अनुपयोगाच्च।**

**सर्वादीनि सर्वनामानि (१।१।२७)। 'सर्वादीनी'ति तद्गुणसंविज्ञानो बहुव्रीहिः। हलि सर्वेषाम् (८।३।२२) इति निर्देशात्। द्वन्द्वे चेतीति[2]। स हि समुदायस्य निषेधो, न त्ववयवानामिति वक्ष्यते। न च तदन्तविधिं विना समुदाये सञ्ज्ञाप्रसक्तिरस्तीति भावः। ननु तदन्तसञ्ज्ञायाः**

---

बृहच्छब्दरत्नः

इत्युक्त्या तथैव लाभात्। एवञ्च सामर्थ्यादेकादेशात्पूर्वमेव सुबन्तादिनिमित्तसङ्केतप्रवृत्तिः। एतेन 'उभयत आश्रयणेऽन्तादिवद्भावनिषेधेऽपि, स्थानिवद्भावेनेष्टसिद्धिरि'त्यपास्तम्। उक्तवचनसामर्थ्येनोक्तविषये तदप्रवृत्तेश्च।

तद्गुणेति। 'आदि'शब्दस्याऽवयववाचित्वेन सर्वशब्दघटितस्योद्भूताऽवयवभेदसमुदायस्याऽन्यपदार्थत्वेऽपि, तत्र वैयर्थ्याद्बहुवचननिर्देशाच्च सर्वाऽर्थवाचकत्वाऽभावाच्चाऽवयवे प्रवर्त्तमानाऽविशेषात्सर्वशब्देऽपि प्रवर्त्तते इति भावः। लिङ्गमप्याह—हलीति। तदन्तदिधिं विनेति। 'सर्वनामानी'ति महासञ्ज्ञयाऽऽक्षिप्तसर्वाऽर्थवाचकशब्दस्य विशेष्यत्वात्सर्वादीनां विशेषणत्वात्तदन्तविधिर्न्यायप्राप्तः। 'द्वन्द्वे चे'ति तु न्यायप्राप्तेऽर्थे लिङ्गदर्शनमात्रम्। इदमेवाऽभिसन्धाय—'प्रयोजनं सर्वनामाऽव्ययसञ्ज्ञायामि'त्यादि-भाष्य-वार्त्तिक-ग्रन्थाः। एतेन 'प्रत्ययग्रहणे

---

लघुशब्दरत्नः

परादिवद्भावेन सुप्त्वात्तदन्तत्वेन पदत्वसिद्धिरि'ति सिद्धान्ताऽन्तरमपि सूचितम्। इदञ्चाऽन्तादिवत्सूत्रे भाष्ये स्पष्टम्। तत्र हि 'वृक्षे' इत्यादौ परादिवत्त्वेन [3]एकारस्तस्य सुप्त्वमाश्रित्य पदत्वं साधितम्। अनुपयोगाच्चेति। चेन ससहाये व्यपदेशिवद्भावाऽप्रवृत्त्या तत्संनिधाने तेषां पदत्वं नाऽस्तीति सूचितम्। आद्यन्तवत्सूत्रस्थभाष्योक्तैकपुत्रादिदृष्टान्तबलेन तथैव लाभादिति दिक्।

तद्गुणसंविज्ञान इति। 'तस्य=अन्यपदार्थस्य, गुणाः=विशेषणानि, संविज्ञायन्ते कार्यित्वादिना यत्रे'त्यर्थः। प्रायः संयोग-समवाया-ऽन्यतरसम्बन्धेन सम्बन्धी यत्राऽन्यपदार्थस्तत्र तद्गुणत्वम्। तदतिरिक्त-स्वस्वामिभावादि-सम्बन्धेन सम्बन्धिनस्तत्त्वेऽतद्गुणत्वम्। 'नागयज्ञोपवीती भोज्यतामि'त्यादौ यज्ञोपवीतस्य कार्यित्वाऽभावेऽपि, तत्संनिहितत्वमस्त्येवेति तद्गुणत्व-

---

[1] मन्त्रेष्वाङ्यादेशत्मनः, हलि सर्वेषाम् इति हि पाणिनिसूत्रे।

[2] 'द्वन्द्वे चेति'इति ग. घ. ङ. पाठः।

[3] 'एकारस्य' इति ख. पाठः।

**किं फलम् । न च ''परमसर्वस्मै' इत्यादौ स्मायादयः फलम् । अङ्गाऽधिकारे तदन्तविधिनैव तत्सिद्धेरित्यत आह—तेनेति । न चेहाऽपि 'प्रातिपदिकादि'-त्यनुवृत्तेः सर्वनाम्ना[2] तद्विशेषणे तदन्तविधिर्भविष्यतीति वाच्यम् । 'समासप्रत्ययविधौ प्रतिषेध' इत्युक्तेरिति भावः । अकचेति । चकारात् 'परमसर्वत' इत्यत्र तसिल् ।**

---

बृहच्छब्दरत्नः

यस्मादि'ति परिभाषया लभ्य-तदन्तविधेः 'सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं ने'-त्यनेन निषेधेऽपि, 'द्वन्द्वे चे'ति ज्ञापकसिद्धतदन्तविधेर्दुर्वारत्वेन 'डतरडतमौ प्रत्ययौ', 'यद्यपि सञ्ज्ञाविधावि'त्यादिमूलग्रन्थो न युक्त' इत्यपास्तम् । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमि'ति परिभाषायां तदन्तांऽशः सूत्रसिद्धाऽर्थ एव । प्रत्ययाऽऽक्षिप्तस्य धातुप्रातिपदिकाऽऽद्यवयकसमुदायस्य प्रत्ययेन विशेषणात् 'येन विधिरि'ति सूत्रस्य दुर्वारत्वात् । एवञ्च 'सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति निषेधो 'येन विधिरि'ति सूत्रस्यैवेत्यस्य फलितत्वेन, मूले न कश्चिद्दोषः । सर्वादीनां विशेषणत्वे प्राप्तस्तदन्तविधिः 'द्वन्द्वे चे'ति लिङ्गेनाऽनूद्यते, प्रत्ययस्य विशेषणत्वे प्राप्तस्तदन्तविधिः प्रत्ययग्रहणपरिभाषया । अतोऽत्र तदन्तविधिद्वयम् । **किं फलमिति ।** फलाऽभावात्तदन्तसञ्ज्ञाऽभावे निर्णीते 'द्वन्द्वे चे'त्यादिकं सामर्थ्या-दवयवसञ्ज्ञानिषेधकम् । एवञ्च सुडादिविधौ 'विहित' इत्यर्थोऽपि नाऽऽश्रयणीय इति लाघवम् । **अकच्चेतीति ।** 'वर्णाश्रमेतरक'शब्दाऽवयवसम्बन्धी अकच्च सिध्यतीति वक्ष्यामः । प्रत्ययविधौ 'प्रातिपदिकादि'त्यस्य गृह्यमाणं प्रति विशेषणत्वेनाऽन्वय इत्यर्थ-तात्पर्यग्राहकस्याऽसति बाधके त्यागाऽयोगः । 'उगितश्चे'त्यादौ बाधकसद्भावात्त्याग उचितः । अकज्विधौ 'सर्वनाम्नामि'त्यस्य षष्ठ्यन्तत्वेनाऽभेदेनाऽनन्वयाच्च । न चा-ऽवयवनिष्ठसर्वनामत्वेनाऽकज्भविष्यति । न च समुदायस्याऽसर्वनामत्वेन कोऽपि स्यादिति वाच्यम् । 'अतिसर्वकान्' 'अतिभवकानि'त्यादौ सर्वनामाऽर्थस्यैव प्राधान्येनाऽकचैव कुत्सादिबोधनात् , अन्यथा तदन्तसञ्ज्ञापत्ते अकज्द्वयं श्रूयेतेति वाच्यम् । विशेषणविशिष्टे प्रत्ययाऽर्थाऽनन्वयाऽऽपत्तौ शाब्दबोधवैलक्षण्याऽऽपत्तेः । अप्रकृत्यर्थकुत्सादिबोधने त्वतिप्रसङ्गः । 'परमभवकानि'त्यादौ 'क'प्रत्ययेनैव

---

लघुशब्दरत्नः

**मेवेति हरिग्रन्थे स्पष्टम् ।** तत्सिद्धेरिति । **न च सर्वनाम्नो विहितत्वाऽभावः । तदन्तसञ्ज्ञाऽभावे द्वन्द्वे च (१।१।३१) इत्यादीनामवयवसञ्ज्ञानिषेधकत्वेन विहितविशेषणे फलाऽभावादिति भावः ।** तसिलिति । **अवयवसर्वनामत्वेन तु न निर्वाहः, । सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वाऽभावादिति**

---

[1] 'परमसर्वस्मादि'त्यादौ स्मादादयः' इति ग. शोधितः पाठः ।

[2] 'तद्विशेषणे तदन्तविधिर्भवतीति वाच्यम्' इति मुद्रितेषु पाठः । 'तद्विशेषणेन' इति घ. ङ. पाठः ।

बृहच्छब्दरत्नः

कुत्सादिबोधनादकजनापत्तिः। विभिन्नविषयत्वेनोत्सर्गाऽपवादत्वाऽभावादि'त्यपि-कश्चित्। यत्तु 'त्रलादिविधौ 'सर्वनाम्न' इत्यस्याऽर्थद्वारकविभक्तिविशेषणत्वात् 'सर्वनामाऽर्थगतसङ्ख्याऽभिधायिनी या पञ्चमी, तदन्तं यच्छब्दस्वरूपमि'-[1]त्यर्थाऽङ्गीकारेण समुदायस्याऽसर्वनामत्वेनाऽपि दोष' इति। तन्न। 'किंसर्वनाम-बहुभ्य' इत्यस्य पञ्चम्यन्तत्वेन निरूपिताऽर्थाऽसम्भवात्। 'समास-तद्धितविधौ तत्प्रकृतिके लक्षणे'ति सिद्धान्तविरोधाऽऽपत्तेश्च। एतेन 'सर्वनामभिः परत्वद्वारा [2]विशेषणादि'ति परास्तम्। अकज्विधौ दोषाऽनिस्ताराच्च। यत्तु 'सर्वनाम्न' इत्यस्य षष्ठ्यन्तत्वमाश्रित्य 'सर्वनामाऽर्थगतसङ्ख्याऽभिधायिनो ङे स्मै' इत्यर्थाऽऽश्रयणेना-ऽतिसर्वादौ दोषाऽभावादुपसर्जनप्रतिषेधो न कार्य' इति भाष्योक्तं विरुध्येत, तदन्तस्य सर्वनामत्वे अतिसर्वादौ दोषस्य तदवस्थत्वादि'ति। तन्न। उक्तभाष्यस्य दोषसमूहाऽऽस्पदत्वेन प्रौढिवादपरताया आवश्यकत्वात्। सञ्ज्ञासूत्रे तदन्त-विधेरनङ्गीकारे तद्धितादीनामसिद्ध्यापत्तिः। न्यायप्राप्तदन्तविधिबोधकभाष्य-वार्त्तिकविरोधश्च। किञ्च [3]'अतिसर्वश्वेत' इत्यादौ 'सर्वनामसङ्ख्ययोरुपसङ्ख्यानमि'ति पूर्वनिपाताऽनापत्तिः। अपि च 'परमसर्वस्मै' इत्यादौ तदन्तस्य सञ्ज्ञाया अनङ्गी-कारे 'स्वाङ्गशिटामदन्तानामि'त्यनेनाऽऽद्युदात्तताऽनापत्तिः। न च समासस्वरेण बाधः। समासोत्तरं तदन्तस्य सर्वनामत्वे, पश्चात्प्रवर्त्तमानत्वेन सति-शिष्टत्वात्। किञ्च 'पदाऽङ्गाऽधिकारे' इति परिभाषया 'सर्वनामाऽन्ताऽर्थगतसङ्ख्याभिधायिनो ङे स्मै' इत्यर्थस्य दुर्वारत्वेन, अजहत्स्वार्थायामन्यपदाऽर्थस्याऽपि सर्वाऽर्थत्वेन च, सर्वनामाऽर्थगतसङ्ख्याभिधायिनां ङेप्रभृतीनां सत्त्वेनाऽतिसर्वादौ दोषस्योद्धटत्वेन, उपसर्जनप्रतिषेधप्रत्याख्यानाऽनापत्तेः। अपि च 'अद्ड्डतरादिभ्यः पञ्चभ्यः' 'आ सर्वनाम्नः' 'त्यदादीनि च' 'त्यदादीनि सर्वैर्नित्यमि'त्यादावुपायाऽन्तरस्य निरूप-यितुमशक्यत्वेनोपसर्जनप्रतिषेधस्याऽऽवश्यकत्वात्। क्यजन्तातिप्रकृतिकविजन्तादिषु पूर्वादिशब्देषूपसर्जनप्रतिषेधाऽभावे त्वदुक्ताऽर्थाऽङ्गीकारेऽपि, कार्यस्य दुर्वारता-ऽऽपत्तेश्च। किञ्चैवं डतर-डतमयोरेव सञ्ज्ञाऽऽपत्तिः। न च केवलयोः सञ्ज्ञायां प्रयोजनाऽभावात्तदन्तग्रह इति वाच्यम्। त्वदुक्तरीत्या 'परमसर्वस्मै' इत्यादाविव सर्वनामाऽर्थगतसङ्ख्याऽभिधायिनो ङेप्रत्ययस्य सत्त्वेन 'कतरस्मै' इत्यादौ स्मायादि-प्रयोजनस्य सत्त्वात्। न चेष्टाऽऽपत्तिः। तुल्ययुक्त्या 'प्रथमचरमे'तिसूत्रेण प्रत्ययमात्र-स्य वैकल्पिकसञ्ज्ञायाः सत्त्वेऽप्युभयशब्दपाठाद्विशिष्टस्य नित्यसञ्ज्ञयैवेष्टसिद्धौ, विषयभेदेन परत्वस्य वक्तुमशक्यत्वेन, 'नवेति विभाषे'तिसूत्रस्थभाष्यविरोधस्य दुःप-रिहरत्वात्। ननु 'सर्वनामे'ति महासञ्ज्ञाकरणसामर्थ्येनाऽन्वर्थत्वविज्ञानात्सञ्ज्ञिनः सर्वादिगणपठिताः सर्वादयः सर्वाऽर्थवाचकाऽनुकरणान्येवाऽनुमीयन्ते। अत एवा-ऽन्तर्गणकार्यं सञ्ज्ञोपसर्जनीभूतानां न। तथा च 'सर्वादिगणपठित-सर्वाऽर्थवाचक-

[1] 'शब्दरूपमि'ति ख. पाठः।

[2] 'विशेषणाद्वा'इति इति ख. पाठः।

[3] 'किञ्चारा सर्वश्वेत इत्यत्र' इति ख. पाठः।

**जसः शी (७।१।१७)। अनेकाल्त्वादिति। न तु शित्त्वादिति भावः। अवर्णान्तादिति।** [1]अवर्णाऽन्तादङ्गात्परस्येत्यर्थः। अतो 'येषां'

---

बृहच्छब्दरत्नः

सङ्ख्याऽभिधायिनां ङेप्रभृतीनामि'त्यर्थाऽऽपत्तौ पूर्वोक्तप्रयोजनं दुरुपपादम्। प्रत्यय-मात्रस्य सर्वादिगणपठितत्वेऽपि सर्वाऽर्थवाचकत्वाऽभावात्। प्रत्ययाऽन्तस्यैव लोके प्रयोगेण प्रकृतिप्रत्ययविभागमजानतां समुदायादेव बोधाच्च तत्रैव सर्वाऽर्थवाचकत्व-कल्पनात्। स च न सर्वादिगणपठितः। तदन्तग्रहणे त्ववयवद्वारा समुदायस्यैव पाठान्न दोष इति चेत्। भवेदेवम्, परन्तूपसर्जने प्राप्त्यभावेनोपसर्जनप्रतिषेधस्य गर्भस्रावेणैव गतत्वात्तत्प्रत्याख्यानाऽर्थं कुसृष्टिकल्पनस्य वैयर्थ्येन, भाष्यस्य प्रौढि-वादपरत्वमावश्यकम्। एतेन 'सर्वादीनि सर्वनामानी'ति न सञ्ज्ञासूत्रं, किन्तु गणशुद्धिमात्रफलकम्। 'यानि सर्वनामानि तान्येव सर्वादीनि, न त्वितराण्यपी'ति-व्याख्यानात्। यथा 'तिङो गोत्रादीनि कुत्सनाऽऽभीक्ष्ण्ययोरि'ति सूत्रे 'कुत्सना-ऽऽभीक्ष्ण्ययोरि'ति योगं विभज्य 'गोत्रादीनी'त्यनुवर्त्त्य, 'एतयोरर्थयोर्यानि वर्त्तन्ते, तान्येव गोत्रादीनी'ति गणशुद्धिपरतया व्याख्यातम्। तेन 'चनचिदिवगोत्रादि-तद्धिताऽऽम्रेडितेष्वगतेः' 'कुत्सने च सुप्यगोत्रादावि'तिसूत्रयोरपि विशिष्टाऽर्थानामेव गोत्रादीनां ग्रहणं, तथेहाऽपि। एवञ्च 'प्रत्ययग्रहणे तदन्तविधिरपि सुलभ' इति परास्तम्। 'त्यदादीनाम' इत्यादीनां सिद्धत्वेऽपि, कृत्स्न-सकलाऽऽदिशब्देषु 'सर्व-नाम्नः स्मै' इत्यादीनां दुर्वारताऽऽपत्तेश्च। न च गणपाठसामर्थ्यात्तत्र पठितानामेव ग्रहणम्, एतावानेव हि भेदो यत्सञ्ज्ञापक्षे सञ्ज्ञा विधेया, गणशुद्धिस्त्वार्थिकी, अस्मिंस्तु पक्षे गणशुद्धिः शाब्दी, कृत्स्नादिव्यावृत्तिस्त्वर्थादिति वाच्यम्। 'अद्डुत-रादिभ्यः' 'त्यदादीनाम' इत्यादौ गणपाठस्य चारितार्थ्यात्। 'उभये' इत्यत्राऽन्तरङ्ग-त्वान्नित्यैव सञ्ज्ञा, न वैकल्पिकीति व्यवस्थाऽनापत्तेश्च। किञ्च 'द्वन्द्वे चे'त्यादिनिषेध-सूत्रैः सर्वाऽर्थवाचकत्वं निषिध्यते, उत सर्वादित्वम्? । नाऽऽद्यः। तादृशाऽर्थस्य बोधेन वचनशतैरपि निषेद्धुमशक्यत्वात्। सर्वाऽर्थवाचकत्वस्य शास्त्रादप्राप्तत्वेन, लौकिकप्रमाणप्राप्तस्याऽसन्निहितत्वेन निषेद्धुमशक्यत्वाच्च। 'सर्वनामवाचकत्वप्रयुक्त-कार्यं निषिध्यते' इति चेन्न। तस्य पूर्वम् अनुपस्थितत्वात्। सर्वनामपदे लक्षणा-ऽऽपत्तेश्च। नाऽन्त्यः। तस्याऽविधेयत्वेन निषेद्धुमशक्यत्वात्। पूर्वोत्तरसाह-चर्येण सञ्ज्ञासूत्रत्वस्यैव न्यायत्वाच्चेति मात्सर्यमुत्सृज्य सुधीभिराकलनीयम्।

अवर्णान्तेति। यत्तु 'अङ्गविशेषणत्वे प्रयोजनाऽभाव' इत्युक्तम्। तन्न। उत्तराऽर्थत्वस्याऽऽवश्यकत्वेनाऽत्र त्यागस्याऽनुचितत्वात्। परस्येतीति। एवं 'जसः शी'ति सूत्रस्थमूलग्रन्थोऽपि 'अदन्तात्परस्य सर्वनाम्नो विहितस्ये'त्येवंपरतयैव व्याख्येयः। यत्तु 'सर्वनाम्नः स्मै' इत्यादौ विहितविशेषणस्य न किञ्चित्प्रयोजनम्। इतरेतरयोगद्वन्द्वोत्तरमेकवचनाऽनुत्पत्तेः। समाहारद्वन्द्वे साहित्यस्य विशेष्यत्वेनोप-

---

[1] 'अवर्णात्परस्येत्यर्थ' इति ङ. पाठः।

'केषां' 'तेषामि'त्यादौ नाऽव्याप्तिः । सर्वनाम्नो विहितस्याम इति । 'सर्व-नाम्नः परस्ये'ति तु नोक्तम् । 'दक्षिणोत्तरपूर्वाणामि'त्यत्र सुट्प्रसङ्गात् । द्वन्द्वे च (१।१।३१) इति निषेधो हि समुदायस्य, न त्ववयवस्य । न च तस्मा-दयमाम् विहितः, किन्तु समुदायादेवेति न सुट् । विहितविशेषणत्वस्या-ऽऽश्रयणे प्रमाणन्तु 'दक्षिणोत्तरपूर्वाणामि'ति भाष्यप्रयोग एव ।

पञ्चत्रिंशदिति । 'पञ्च च त्रिंशच्चे'ति द्वन्द्वः । 'पञ्चाऽधिकास्त्रिंशदि-'ति तत्पुरुषो वा । यत्तु 'प्रत्याहारा एकचत्वारिंशदि'ति प्राचो ग्रन्थं व्याच-क्षाणैरुक्तं 'नाऽयं मध्यमपदलोपी तत्पुरुषः, तथा सति राजन्यबहुवचनद्वन्द्वे-ऽन्धकवृष्णिषु (६।२।३४) सङ्ख्या (६।२।३५) इति विधीयमानः पूर्वपद-प्रकृतिस्वरो न स्यात् । तस्मात्समाहारद्वन्द्व एवाऽयम् । 'एकविंशतिरि'त्यादौ नपुंसकत्वन्तु न भवति । 'लोकाऽऽश्रयत्वाल्लिङ्गस्ये'ति । तच्चिन्त्यम् । समास-भेदेन स्वरभेदे इष्टाऽऽपत्तेः । तथा च बहुव्रीहौ सङ्ख्येये (५।४।७३) इति सूत्रे

---

**बृहच्छब्दरत्नः**

सर्जनत्वादेवाऽप्राप्तेः । अत एव 'वृत्तेतरदि'त्यत्र 'द्वन्द्वे चे'त्यनेन सर्वनामसञ्ज्ञा-निषेधेऽपि, डतरादिप्रयुक्तोऽद्ड् भवत्येवे'ति निरस्तमि'त्याहुः । तन्न । 'मासपूर्वाये'-त्यादौ स्मायादिव्यावृत्त्यर्थं विहितविशेषणस्याऽऽवश्यकत्वात् । स्पष्टञ्चेदं कौस्तुभे । अत एव 'सर्वनाम्नः स्मै' इत्यादिविवरणे मूले 'परस्ये'ति नोक्तम् । 'सर्वनाम्नः स्याडि'ति सूत्रस्थमूलग्रन्थे तु व्यवहिताऽन्वयो बोध्यः । नाऽव्याप्तिरिति । न चा-ऽत्वविधौ विषयसप्तम्याश्रयणेन विभक्त्युत्पत्तेः पूर्वं प्रवृत्त्या न दोषः । प्रकरणे परसप्तम्याः सत्त्वेन शब्दाऽधिकाराऽऽपत्तेः । 'तदि'त्यादौ नपुंसके दोषाऽऽपत्तेश्च । न चा'ऽन्तरङ्गानपी'ति न्यायेन निस्तारः । अत्वे लुकोऽप्राप्तेः । विभक्तिनिमित्तस्यैव बाधाच्च । न हीदं त्वद्रीत्या विभक्तिनिमित्तम् । सर्वनाम्नो विहितस्येति । अनुवृत्ता-ऽङ्गस्य पुनरन्वये बीजाऽभावेन, विशेष्याऽभावान्न तदन्तविधिः । प्रत्ययोत्पत्तेः पूर्वं प्रत्ययपरत्वाऽभावेनाऽङ्गत्वस्य दुरुपपादत्वाच्च ।

समासभेदेनेति । 'चार्थे द्वन्द्व' इतिसूत्रस्थभाष्यग्रन्थस्तु द्वन्द्वसमाससत्तापरतयैव व्याख्येयो, न तत्पुरुषाऽभावपरतया । अस्मदादिभिः प्रयोगाऽभावस्य निर्णेतु-मशक्यत्वादिति पस्पशायां भाष्यकारैरेव सिद्धान्तितत्वात् । लक्षणबाधस्या-ऽन्याय्यत्वाच्च । भाष्याऽन्तराऽनुरोधेन तथैव युक्तत्वाच्च । एवञ्च—'ननु चोक्तम्-'एकादीनां दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनप्रसङ्ग' इति । नैष दोषः ।

---

**लघुशब्दरत्नः**

भावः । भाष्यप्रयोग इति । 'दिङ्नामान्यन्तराले (२।२।२६) दक्षिणोत्तराभ्याम् (५।३।२८)

सङ्ख्या यास्तत्पुरुषस्योपसङ्ख्यानं, निस्त्रिंशाद्यर्थमन्यत्राऽधिकलोपादि'ति वार्त्तिकं व्याचक्षाणो भाष्यकार आह—'एकाऽधिका विंशतिरेकविंशतिः', [1]'द्व्यधिका विंशतिर्द्वाविंशतिरि'ति ।

अत एवेति । द्वयोर्द्विवचनस्यैव न्याय्यत्वादिति भावः । नन्वेवं सर्वादिषु पाठो व्यर्थः, सर्वनामकार्याणां स्मायादीनां द्विवचनेऽभावात् । न च 'उभाभ्यां हेतुभ्याम्''उभयोर्हेत्वोरि'त्यत्र सर्वनाम्नस्तृतीया च (२।३।२७)

---

बृहच्छब्दरत्नः

सर्वो द्वन्द्वो विभाषयैकवद्भवती'ति भाष्यग्रन्थेन समाहारद्वन्द्वस्य साधितत्वेऽपीतरेतरद्वन्द्वस्याऽनिवारणेन पक्षे स[2] भवत्येव । एवम् [3]'एकद्विकमि'ति समाहारद्वन्द्वे समासाऽन्तसहितप्रयोगः साधुरेव । उपक्रमस्थभाष्याऽनुरोधेनैकरीत्यैव भाष्यव्याख्यानस्योचितत्वात् । एवञ्च 'एकेनाऽधिकौ द्वौ एकद्वावि'ति भवति । 'एकश्च द्वौ चे'ति विवक्षायान्तु न । हरदत्तादिग्रन्थास्त्वयुक्ता एवेति प्रतीमः ।

निस्त्रिंशाद्यर्थमिति । आदिशब्दः प्रकारे । अव्ययादयः सङ्ख्याऽन्तास्तत्पुरुषा डित्त्वफलका निस्त्रिंशप्रकाराः । अतो 'गोविंशतिरि'त्यादौ न दोष इत्यग्रे निरूपयिष्यामः । द्व्यधिकेति । सङ्ख्यारूपाऽन्यपदाऽर्थे बहुव्रीहिः । 'द्व्यधिकत्वविशिष्टा सङ्ख्ये'ति समासाऽर्थः । सा च सङ्ख्या विंशतिरूपैव । समानविभक्तिकनामाऽर्थयोरभेदाऽन्वयात् । नामाऽर्थत्वञ्च नामवृत्तिजन्यबोधविशेष्यत्वम् । इदमेव च सामानाधिकरण्यम् । सुबर्थाऽन्वयस्तु विशिष्टे एव । तस्यैव प्रकृतिवृत्त्युपस्थाप्यत्वात् । अत एव 'नीलो घटः' 'दण्डी देवदत्त' इत्यादौ न दोषः । यत्तु 'प्रत्येकपदद्वयेन द्व्याविंशतिरुच्यते' इति । तन्न । निर्बीजलक्षणायां मानाऽभावात् । 'विंशति'पदस्य प्रसिद्धसङ्ख्यावाचकत्वाऽभावेन डचोऽप्राप्तौ, 'अन्यत्राऽधिकलोपादि'ति वाक्यशेषवैयर्थ्याऽऽपत्तेश्च । पाठो व्यर्थ इति । न च 'स्वाङ्गशिटामदन्तानामि'त्याद्युदात्ताऽर्थमिति वाच्यम् । गणे एवाऽन्तोदात्तत्वस्य निपातनात् । अन्यथा 'उभे भद्रे जोषयेते', 'उभा उ नूनम्' 'उभाभ्यां देव सवितः' 'सपत्यत उभयोर्नृम्णयोरि'त्यादावाद्युदात्तप्रसङ्गात् । 'उभकाभ्यामि'त्यादौ सुबुत्पत्तावकच्प्रवृत्तावपि

---

लघुशब्दरत्नः

इति सूत्रस्थे' इति शेषः । एवं=नित्यद्विवचनाऽन्तत्वे । [4]'स्वाङ्गशिटामि'त्याद्युदात्तत्वं तु न फलम् । 'उभे भद्रे' इत्यादावन्तोदात्तपाठेन गणेऽन्तोदात्तनिपातनात् । वृषादित्वेन तत्सिद्धे-

---

[1] 'द्व्यधिका विंशतिः' इति मुद्रितेषु त्रुटितम् ।

[2] 'स' इति ख. नास्ति :

[3] 'एकशेषमिति' इति क. ख. पाठः ।

[4] 'स्वाङ्गशिटामदन्तानाम्' (२।६) इतिफिट्सूत्रम् । तत्र शिट्=सर्वनाम ।

इति पाक्षिकतृतीया तत्फलमिति युक्तम्। 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति वार्त्तिकेन गताऽर्थत्वात्। न च वृत्तिकृता [1]'सर्वनाम्नस्तृतीया चेति-सूत्रे पठितत्वादिदं वार्त्तिकं सर्वनामसञ्ज्ञासाऽपेक्षमिति वाच्यम्। भाष्ये हेतौ (२।३।२३) इति सूत्रे तस्य पठितत्वात्। अत एव 'अन्नेन कारणेन', 'अन्नस्य कारणस्ये'त्युदाहृतं हरदत्तेनेत्याशङ्क्याऽऽह—तस्येह पाठस्त्विवति।

अयच्प्रसङ्गादिति। अयं भावः—'उभादुदात्तो नित्यम् (५।२।४४) इत्यत्र 'उभादुदात्त' इति योगो विभज्यते। 'अवयववृत्तेः सङ्ख्यावाचिन उभशब्दादवयविन्यर्थेऽयच् स्यात्'। उभयो मणिः। ततो 'नित्यम्'।

---

**बृहच्छब्दरत्नः**

अकज्विधौ 'प्रातिपदिकादि'त्यनुवर्त्तनेन विधिस्पृष्टप्राथमिकप्रातिपदिकस्यैवोचितः। 'सप्रकृतेरि'ति वार्त्तिके 'प्रकृति'ग्रहणेन ग्रहणान्न काऽकचोर्विशेषः। 'ओकारसकार-भकारे'त्यादि युष्मदस्मन्मात्रविषयकम्।

हेताविति। सर्वनामसञ्ज्ञासूत्रस्थभाष्यन्तु पूर्वाऽपरविरोधादभ्युच्चयवाद-परमिति तत्रैव निरूपयिष्यामः। न च 'प्राय'ग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्त' इति कैयटादिभिरुक्तत्वेनोभशब्दस्याऽसर्वनामत्वे दोषः स्फुट एवेति वाच्यम्। 'प्राय'-ग्रहणेनाऽन्याऽर्थस्याऽपि कल्पयितुं शक्यत्वेनेदृशाऽर्थे मानाऽभावात्। लक्ष्याऽनुरोधे-नेदृशाऽर्थकल्पने तूभशब्दाऽतिरिक्ताऽसर्वनाम्न इत्यर्थस्य कल्पयितुं शक्यत्वात्।

विभज्यते इति। न चाऽत्र 'द्वित्रिभ्यां तयस्याऽयज्वे'त्यतो विकल्पाऽनुवृत्तिः शङ्क्या। अस्वरितत्वात्। न च महाविभाषाऽनुवृत्तिः। 'उभयी'ति ङीबर्थं तयपः स्थाने अयच आवश्यकत्वेन, प्रयोजनाऽभावात् 'समर्थानां' 'प्रथमादि'त्यनयोरसम्ब-न्धे, तत्सम्बद्धविकल्पस्याऽप्यसम्बन्धात्। 'ङीब्विधायकसूत्रे 'मात्र'शब्दादारभ्या-ऽयचश्चकारेण 'मात्रजि'ति प्रत्याहार' इति 'नवेति विभाषे'तिसूत्रस्थभाष्योक्तपक्षे तु वाक्यसिद्ध्यर्थं विकल्पाऽनुवृत्तिरिष्टैव। 'नित्यमि'त्यस्य बहुलक्ष्यसंस्काराऽनुरोधेन, वार्त्तिकादिसंमत्या वा विध्यन्तरे एव तात्पर्यकल्पनस्योचितत्वात्। अत एव सूत्रभाष्ययोर्न विरोधः। ततो नित्यमिति। अस्मिन्सूत्रे प्रत्ययाऽन्तरपक्ष एव। स्वार्थे तयपोऽप्राप्तत्वात्। स चाऽऽद्युदात्त एव। [2]प्रत्ययसम्बद्धस्योदात्तग्रहणस्याऽनुवृत्तेः। तस्य पूर्वसूत्रे आद्युदात्तपरत्वात्। अत्र 'नित्य'शब्दस्य वाच्याऽर्थविरोधाद्विकल्पा-

---

**लघुशब्दरत्नः**

श्चेति भावः। प्रायदर्शनमिति। 'प्राय'ग्रहणात् 'उभाऽतिरिक्ताऽसर्वनाम्नः प्रथमाद्वितीये न

---

[1] अष्टाध्याय्यामिदं सूत्रं (२।३।२७) सङ्ख्याकम्।

[2] 'प्रत्ययसम्बन्ध-उदात्तग्रहणस्य' इति क. ख. पाठः।

**'उभशब्दाद् वृत्तिविषये नित्यमयच् स्यात्, स्वार्थे'। तेन 'उभयपक्षविनीतनिद्रा' इत्यादावयच् यथा नित्यः, एवं कप्रत्ययेऽपि स्यादि'ति। नन्वेवमकचि कृतेऽप्यच् दुर्वार इति चेत्। मैवम्। योगविभागस्येष्टसिद्ध्यर्थतया, उभौ साभ्यासस्य (८।४।२१) इति निर्देशेन च 'यत्र द्विवचनं न श्रूयते, तत्रैवाऽयमि'ति व्याख्यानात्। तथा च वार्त्तिकम्—**

---

बृहच्छब्दरत्नः

ऽननुवृत्तिः। अत एव 'नित्य'ग्रहणं चरिताऽर्थम्। योगविभागमात्रफलन्तु[1] चकारादिनाऽपि सुवचम्। इदमेव हृदि निधाय 'द्विदण्डचादिभ्यश्चे'ति निपातनात् [2]'उभाबाहु' इत्यादयः साधव' इति कैयटः। यत्तु 'कप्रत्ययेऽयजिवाऽवग्रहोऽपि-आपादयितुं युक्त' इति। तन्न। 'ईयिवांसमतिस्निध' इत्यादौ पदत्वाऽभावेऽपि 'ईयिवां-समि'ति पदकारैरवग्रहस्य क्रियमाणत्वेनाऽकच्यपि सुलभत्वात्। 'चित्र इद्राजा राजका' 'इदन्यक' इत्यादौ कप्रत्यये पदकारैरवग्रहस्याऽक्रियमाणत्वाच्च। ननु 'नित्यमि'ति विभक्तसूत्रं वृत्तिविषय' इति कैयटाद्युक्तम्, 'उभयोर्वासः' 'उभयोःपुत्र' इत्यादौ 'शयवासे'त्यादिना विभक्त्यलुकि, अयचो दुर्वारत्वात्, त्रतसिलाद्युत्पत्तेः पूर्वमयजनापत्तौ, भाष्यादिग्रन्थविरोधाऽऽपत्तेश्चेति ध्वनयन्नाशङ्कते—नन्वेवमकचीति। 'तन्मध्यपतित' इति न्यायेनोभग्रहणेनाऽकच्सहितस्याऽपि ग्रहणात् 'उभकयावि'तिरूपं दुर्वारमिति भावः।

ननु योगविभागस्येष्टसिद्ध्यर्थतया लक्ष्यभेदेन क्वचित्प्रवृत्तिः, क्वचिदप्रवृत्तिरित्यर्थलाभेऽपि, तयोर्लक्षणैकचक्षुष्कैरस्मदादिभिस्तात्पर्यग्राहकं विना निर्णयोऽशक्यः। किञ्च विभक्तसूत्रस्य सर्वत्र प्रवृत्तौ सूत्राऽन्तरवैयर्थ्येन क्वचिदप्रवृत्तिरित्यर्थस्याऽन्यत्र लाभेऽपि, प्रकृतसूत्राऽन्तरस्याऽर्थाऽन्तरे प्रत्ययविधानेन चारिताऽर्थ्यात्सर्वत्र स्वार्थेऽयच् दुर्वारः। तथा च 'क'प्रत्ययेऽयजभावे न किञ्चित्सूत्राऽऽरूढं तात्पर्यग्राहकमस्ति। अकजिह नाऽस्त्येवेति ध्वनयन्नाह—**उभौ साभ्यासस्येति**। अत एव सर्वादिषूभशब्दपाठश्चरिताऽर्थः। स हि [3]अकचि अयजभावाऽर्थः।

एतेन 'उभावित्यत्रैकशेषाऽभावेन वृत्तेरभावाद् वृत्तिविषये विहितस्याऽयचः प्राप्त्यभावेन ज्ञापकोपन्यासो न युक्त' इति मन्दोक्तमपास्तम्। तदेतद् ध्वनयन्नाह—**तथा चेति**। एवञ्चेदं वार्त्तिकमुक्तयोगविभागसिद्धज्ञापकबोधिताऽर्थाऽनुवादमात्रम्।

---

लघुशब्दरत्नः

**स्त' इत्यर्थकल्पनसम्भवान्नाऽसर्वनामत्वे स दोषः। अयच्स्यादिति। अत्राऽपि स्थानिव-**

---

[1] 'योगविभागमात्रफलकन्तु' इति क. पाठः।

[2] 'उभाबाहवी'त्यादय इति क. पाठः। स चाशुद्धः।

[3] 'अकच्प्रत्यये' इति क. पाठः।

'अन्याऽभावो, द्विवचनटाब्विषयत्वादि'ति । अकचि हि सति 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायेन[1] 'उभशब्दस्य द्विवचनविषयत्वं न विहन्यते । कप्रत्यये तु विहन्येतैव । तदुक्तमिति । 'वार्त्तिककृते'ति शेषः ।

यद्यपि पूर्ववार्त्तिके टाबप्युक्तस्तथाऽपि नाऽसौ विवक्षितः, 'टाब्विषयत्वमपि द्विवचनपरत्वे एव बोद्धव्यमि'ति कैय्यटादिभिर्व्याख्यातत्वादित्याशयेन व्याचष्टे—द्विवचनपरत्वाभावे इति । टाबेकादेशस्याऽपि पूर्वान्तत्वेन ग्रहणाद् द्विवचनपरत्वमस्तीति भावः । यद्यपि 'उभावि'त्यादौ द्विवचनपरत्वं दुरुपपादम्, उभयत आश्रयणेऽन्तादिवद्भावविरहात्, तथापि 'उभशब्दादुत्पन्नं द्विव-

बृहच्छब्दरत्नः

'उभ'शब्दविषयबोधनेनाऽर्थादुभयशब्दविषय उक्तप्रायः । मूलोक्तवार्त्तिके त्वयच्प्रत्ययाऽन्तविषयप्रदर्शनं शाब्दम् ।

ननु 'उभावतिक्रान्ता अत्युभया' इत्यादौ [2]द्विवचनाऽभावे टापि 'उभय'शब्दसाधुत्वाऽर्थं टाप्ग्रहणमस्तु । न च भाष्यमते 'मात्रजि'ति प्रत्याहाराऽऽश्रयणात् ङीपि सति 'उभयी'ति प्रयोगाऽऽपत्तिरिति वाच्यम् । 'उभ'शब्दात्स्वार्थे विहितत्वेन तदर्थस्योपसर्जनत्वात् । तयप्साहचर्येणाऽवयवाऽर्थकाऽयच एव ग्रहणाच्चेति चेन्न । वार्त्तिकस्य वाचनिकत्वकल्पनाऽपेक्षया ज्ञापकसिद्धाऽर्थाऽनुवादकत्वकल्पनस्य लघीयस्त्वात् । 'उभ'शब्दादयचि टापि द्विवचने एकादेशस्याऽन्तवद्भावेन द्विवचनपरतेत्यर्थबोधकेन 'किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । एकादेशे कृते द्विवचनपरोऽयमन्तादिवद्भावेने'ति भाष्येण, कैयटादिकृतव्याख्यया, वार्त्तिकाऽभिप्रेतत्वाऽनुमानाच्चेति ध्वनयन्नाह—टाबेकादेशस्येति ।

दुरुपपादमिति । परत्वात्, नित्यत्वात्, अन्तरङ्गत्वादेकादेशस्यैव प्रवृत्तेः । यत्तु 'द्विवचनाऽन्तो यत्रोभशब्दस्ततोऽन्यत्राऽयजि'त्याहुः । तन्न । 'उभाभ्यामि'त्यादौ दोषाऽऽपत्तेः । लुक्ययजनापत्तेश्च । उभशब्दादुत्पन्नमिति । 'उभः शब्दो यस्मिन्नि'ति बहुव्रीहिः । स च प्रकरणादुभयशब्द एव गृह्यते । तेनाऽयचि कृते

लघुशब्दरत्नः

त्सूत्रस्थभाष्यरीत्या प्रत्ययाऽन्तरत्वमिति भावः । निर्देशेन चेति । 'वृत्तिविषये' इत्यनुक्त्वा इदमेव वक्तव्यमिति भावः । अन्याऽभाव इति । अन्येषां=सर्वनामकार्याणाम्, अभाव इत्यर्थः । पूर्वपक्षिणा 'अन्तवद्भावविरहादि'ति वदता एकदेशविकृतन्यायोऽशास्त्रीयविकारविषयोऽपीति नाऽभ्युपेतमिति, तदनुसारेणैव समाधिं वक्तुमुपक्रमते—तथापीत्यादि । उभशब्दादिति । अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवाऽन्तरङ्गत्वादुत्पत्तेरुभघटिताच्छब्दात्=उभयशब्दादि-

[1] उभयशब्दस्य' इति ङ. पाठः ।

[2] अत्र 'द्विवचनाऽभावेऽपि उभशब्दसाधुत्वार्थम्' इति ख. पाठः ।

**चनं लुका नाऽपहृतं यत्र, ततोऽन्यत्राऽयजि'तीह विवक्षितोऽर्थः । यद्यपि भाष्ये कप्रत्ययस्याऽपि स्वार्थिकत्वेनोभशब्दात्परस्य द्विवचनत्वमस्तीत्याश्रित्योभ-**

---

बृहच्छब्दरत्नः

यत्राऽयजुत्तरद्विवचनस्य लुकाऽनपहारस्तत्रोऽन्यत्रोभशब्दादयच्[1]। स च भवन्-अन्तरङ्गत्वात्पूर्वं प्रवर्त्तते। एवञ्चाऽयज्विशिष्टस्योभयशब्दस्य सर्वनामत्वात्सर्वनाम-प्रकृतिकसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः। एतेन 'सर्वादिषूभशब्दपाठाऽभावे 'उभ-ओस्' 'उभ-भ्यामि'ति स्थिते त्रलादेरप्राप्तौ, द्विवचनस्य श्रूयमाणत्वेनाऽयजप्राप्तावुभ-यत्रेत्याद्यसिद्ध्यापत्त्याऽकज्भिन्नप्रयोजनाऽभाव इत्यर्थपरभाष्यादिग्रन्था अयुक्ता एवे'ति परास्तम्। सूत्रमते 'उभशब्दादि'त्यत्र तत्पुरुषः। वार्त्तिके 'द्विवचनटाबि'-त्यनेन प्रकृतिराक्षिप्यते। सा चोपस्थितत्वादुभशब्दरूपैव गृह्यते। अत एव 'घटपटोभयाभ्यामि'त्यादिप्रयोगः सङ्गच्छते इत्याहुः।

ततोऽन्यत्रेति। 'अयचि कृते यत्र द्विवचनस्य लुकाऽपहारस्तत्राऽयजि'ति यथाश्रुतं नोक्तम्। 'उभ'शब्दादाचारक्विपि, प्रातिपदिकात् क्विबुत्पत्तेर्द्विवचनस्य लुकाऽनपहारस्ततोऽन्यत्वेऽपि द्विवचनस्य लुगभावादुभयती[1]'त्यादावयजनापत्तेः। 'उभौ' इत्यस्य 'आबाधे चे'ति द्वित्वे बहुव्रीहिवद्भावाल्लुकि, द्विवचने, पूर्वखण्डे इवो-त्तरखण्डेऽयजापत्तेश्च[2]। न चेष्टाऽऽपत्तिः। 'उभ'शब्दो द्विवचनविषय' इतिवदद्भि-र्भाष्य-वार्त्तिककारादिभिरन्यत्रोभयशब्दप्रयोगाऽङ्गीकारात्। न चैवम् 'उभ-सर्वतसोरि'त्यस्य 'उभशब्दाद्विहितो यस्तसिरि'तिव्याख्यानं कारकोक्तं विरुध्येतेति वाच्यम्। 'उभय'शब्दाद्विहितत्वेऽपि, 'उभ'शब्दविहितत्वाऽनपायात्। 'उभसर्वयो-स्तसावि'ति षष्ठ्या तादृशसम्बन्धस्यैव बोधनादिति निरूपयिष्यामः।

न चैवम् 'उभयो मणिरि'त्यत्र स्वार्थिकोऽयच्स्यादिति वाच्यम्। 'प्रत्ययः'

---

लघशब्दरत्नः

त्यर्थः। 'यत्र लुकाऽपहृतं तत्राऽयजि'ति तु नोक्तं, प्रातिपदिकप्रकृतिकाऽऽचारक्विबन्ते यद्यय-जिष्यते, तदा तस्याऽनापत्तेः। तत्रोत्पत्तेरभावेन विशिष्टाऽभावाऽक्षतेः।

लुका नापहृतमिति। लुक्कृताऽपहारसम्भावनाऽभाववदित्यर्थः। एतेनोभशब्दस्य पाठाभावे असर्वनामत्वेन,[3] ततस्त्रलादिविवक्षायाः कर्तुमशक्यत्वेन, द्विवचनस्य लुकाऽनपहारस्यैव सत्त्वेन, ततोऽयजनापत्तौ 'उभयत्रे'त्यसिद्धिरि'त्यपास्तम्। 'यद्ययच् स्यात्तदा त्रलादि स्यात्, तस्मिंश्च लुगपि स्यादि'ति लुकाऽपहारसम्भावनासत्त्वेन, लुक्कृताऽपहारसम्भावनाऽभाववतो-ऽन्यत्वात्। यद्यपि भाष्ये इति। स्वार्थिकत्वेन उभशब्दात्परस्य कप्रत्ययस्याऽपि द्विवचनत्व-

---

[1] 'उभयीत्यत्र' इति क. पाठः। स च भावप्रकाशविरुद्धः।

[2] 'अयजनापत्तेश्च' इति क. पाठः।

[3] 'ततस्तसिलादि' इति मुद्रितेषु पाठः।

**शब्दपाठः प्रत्याख्यातस्तथाऽपि प्रौढिवादमात्रं तत्। कृत्रिमस्यैव द्विवचनस्येह ग्रहीतुमुचितत्वात्। अन्यथा त्र-तसिलादावतिप्रसक्तत्वात्। ननु कारकविभक्त्यन्ताद्विहितौ त्र-तसिलौ स्वार्थिकत्वेऽपि द्वित्वमात्रं नाऽभिधत्त इति चेन्न। कप्रत्ययस्याऽप्यज्ञाताद्यर्थबोधकत्वात्। पञ्चकपक्षेऽधिकबोधकत्वध्रौव्याच्चेति दिक्।**

बृहच्छब्दरत्नः

'परश्चे'त्यत्राऽव्यवहितपरत्वस्यैव ग्रहणादुभादुदात्त इत्यस्य निर्विषयताऽऽपत्तेः। अत एव 'लिट्यभ्यासस्योभयेषामि'त्यादिनिर्देशाः सङ्गच्छन्ते।

स्यादेतत्। अनुमीयमानवाक्ये 'तयप्'समानाऽर्थकोऽप्ययच् गृह्यते, उत स्वार्थिक एव?। नाऽऽद्यः। 'उभाववयवौ ययोस्तौ उभयौ घटौ' इत्यनापत्तेः। नाऽन्त्यः। 'उभयो मणिः' 'उभये देवमनुष्या' इति स्वार्थिकाऽयजुदाहरणपरभाष्यविरोधाऽऽपत्तेरिति चेन्न। उभयशब्दे द्विवचनाऽभावस्य कैयटादिभिरङ्गीकारेणेष्टाऽऽपत्तेः। विनिगमनाविरहेणाऽयज्मात्रग्रहणस्य न्याय्यत्वाच्च।

कृत्रिमस्येति। सञ्ज्ञिविशेषे क्रियमाणः सञ्ज्ञानियमः सामान्याऽपेक्षत्वात् अकृत्रिममपि व्यावर्त्तयति। यत्तु 'भाष्यनये 'उभ'शब्दस्याऽसर्वनामत्वेनाऽसर्वनामसन्निपातेन जायमानस्य कप्रत्ययस्य तदविघातकत्वेन, सन्निपातपरिभाषयाऽयजप्राप्तिरि'ति। तन्न। कप्रत्ययस्य [1]द्विवचनत्वसाधनपरभाष्यग्रन्थस्य वैयर्थ्याऽऽपत्तेः। असर्वनामत्वविघातकत्वाऽसम्भवेन सर्वनामसञ्ज्ञाया अप्रवृत्तावप्ययजप्रवृत्तौ[2] मानाऽभावाच्च। असर्वनामत्वस्याऽनिमित्तत्वाच्च। 'उभ'शब्दनिष्ठाऽसर्वनामत्वाऽविघाताच्च। अन्येति। नियमस्य विशेषाऽऽपेक्षत्वेन सजातीयं कृत्रिमाऽन्तरमेव व्यावर्त्त्यम्। तेनाऽकृत्रिममित्यर्थः।

विगिति। दिगर्थस्त्वत्यन्तस्वार्थिके तरबादावुभयतरावित्यादिप्रयोगाऽनापत्तिः। किञ्च कारकविभक्त्यन्तादेव विधाने न किञ्चिन्मानम्। सुबन्तात्तद्धितोत्पत्तेः 'क'प्रत्ययस्याऽपि कारकविभक्त्यन्तादेव विधानाच्च। अपि च 'उभकयोः पुत्र' इति-षष्ठीसमासेऽकच्सहितात्तन्मध्यपतित इति न्यायेनाऽयचि, 'उभकयपुत्र' इति सूत्रमते, भाष्यमते 'क'प्रत्यये, 'उभकपुत्र' इति स्यादिति महान् विशेषः। अपि चाऽऽचार-क्विबन्तप्रकृतिकविजन्तात्कुत्सितकर्त्तृविवक्षायामुपसर्जनत्वादकजभावे कप्रत्यये, स्वरूपमात्राऽऽश्रितत्वेनाऽयचि, [3]उभयकावि'ति प्रयोगसिद्धिः। यदपि 'उभयशब्दपाठेन उभशब्दस्याऽपि सर्वनामत्वसिद्धिरि'ति। तन्न। एकार्थीभावाऽऽपन्नत्वेन, आनर्थक्याच्च सर्वाऽर्थवाचकत्वाऽसम्भवात्। समुदायोपदेशे तात्पर्याच्च।

लघुशब्दरत्नः

मस्तीत्यन्वयः। अधिकेति। सङ्ख्याऽपेक्षयाऽधिक-लिङ्ग-कारकेत्यर्थः। [4]दिगिति। दिगर्थ-

[1] 'द्विवचनत्वसाधकपर' इति क. ख. पाठः।

[2] 'अयजप्रवृत्तेर्मानाऽभावाच्च' इति क.ख. पाठः। [3] उभयकादिति' इति ख. पाठः।

[4] 'दिगि'त्यारभ्य 'अलमि'त्यन्तोऽयं ग्रन्थः क. ख. नास्ति। घ. कुण्डलितः।

नाऽस्तीति । अनभिधानादिति भावः । तथा चोभयशब्दस्य द्विवचनाऽनुत्पादादसर्वविभक्तिकत्वेनाऽव्ययत्वे प्राप्ते, तद्धितश्चाऽसर्वविभक्तिः (१।१।३८) इति सूत्रे 'कृत्तद्धितानां ग्रहणञ्च पाठे' इति भाष्यं कैयटेनाऽवतारितम् । अस्तीति । 'पचतिकल्पं' 'पचतिरूपमि'त्यादिवारणेन पाठस्योपक्षीणत्वादनभिधाने प्रमाणं नाऽस्तीति भावः । तयप्प्रत्ययान्ततयेति । उभयशब्दस्येति भावः । नित्यैवेति । 'परेऽवर उभया अमित्रा' इति तु च्छान्दसत्वाद्बोद्धव्यम् । अव्युत्पन्नाविति । एतच्च पस्पशायां कैयटे स्पष्टम् ।

---

बृहच्छब्दरत्नः

अनभिधानादिति । तत्प्रसङ्गस्त्ववयवद्वयाऽऽरब्ध-मणिद्वय-विवक्षायामेकशेषेण, अवयवद्वयाऽऽरब्धैकमणावेवोद्भूताऽवयवभेदविवक्षया वा बोध्यः । अत एव बहुवचनसिद्धिः । एकवचनन्तु तिरोहिताऽवयवभेदविवक्षया ।

कैयटेनेति । अत्राऽरुचिबीजन्तु 'उभयोः पुत्र उभयपुत्र' इत्यादौ प्रागुक्तरीत्या सुबुत्पत्तेः पूर्वमयजुत्पत्तौ, स्वार्थिकत्वेन द्विवचने समासाऽङ्गीकारः । अत एव 'उभयतः' 'उभयत्रे'त्यादेर्भाष्यमते सिद्धिः । नास्तीति । अत्राऽरुचिबीजन्तु प्रागुक्तभाष्यप्रामाण्येन श्रूयमाणद्विवचनाऽभावपक्ष आवश्यक इति बोध्यम् । छान्दसत्वादिति । ननु 'प्रथमचरमे'ति सूत्रे उभयशब्दविषये विभाषापदेनाऽभावपृष्ठभावेन भावोपस्थितौ, 'निषेधाश्च बलीयांसो भवन्ती'ति न्यायेन 'प्रथमचरमे'ति विकल्पो दुर्वारः । अत एव 'विभाषा श्वेरि'त्यादीनां विधिनिषेधमुखेन प्रवृत्तौ दोषाऽऽपत्त्या 'नवेति विभाषे'ति सूत्राऽऽरम्भः । किञ्च 'विभाषा श्वेरि'त्याद्यर्थसारब्धस्य 'नवे'तिसूत्रस्य 'प्रथमे'त्यादौ दुर्वारत्वेनोक्तदोषो दुरुद्धर एवेति चेत् । अत्र वदन्ति—'नवेति-

---

लघुशब्दरत्नः

स्तु भाष्यस्याऽप्रौढिवादत्वमपि समर्थयितुं शक्यमिति । तथा हि—कप्रत्ययस्य स्वार्थिकत्वेन द्व्यर्थाऽभिधानसमर्थत्वेन वार्त्तिके द्विवचनशब्देन तस्याऽपि ग्रहणम् । द्विवचनत्वञ्च[1] द्वित्वसङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधविषयाऽर्थाऽनुवादकत्वम् । त्र-तसिलौ तु विभक्त्यन्तस्य स्वार्थे विहिताविति तत्तत्कारकशक्तिप्रधानावेव । अतो न तयोरुक्तं द्विवचनत्वम् । कस्य तु अज्ञाताद्यर्थविशिष्टोभाऽर्थे[2] विधानेन तत्त्वमक्षतमेवेति भाष्याऽऽशयः । कल्पाद्यन्ते अयच् नैव भवति । तत्र 'उभयो मणिरि'त्यादौ अप्रवृत्तये अस्य लिटचभ्यासस्योभयेषाम् (६।१।१७) इति निर्देशेनाऽनित्यत्वाऽऽवश्यकत्वात् । कल्पबादेस्तस्मादनभिधानमेवेतीत्यलम् ।

कैयटेनावतारितमिति । 'उभयोऽन्यत्रे'ति वार्त्तिके 'उभयो मणिः' 'उभये देवमनुष्या' इति भाष्यकृतोदाहरणात्, स्वार्थिकोपक्रमेण तत्प्रवृत्तेश्चोभयोरपि ग्रहणमिति, तस्य द्विवचनाऽभावोऽनभिधानादावश्यक इति तद्भावः । इति भाव इति । इत्यभिमान इत्यर्थः । तद्बीजं

---

[1] चकारो मुद्रितेषु त्रुटितः । [2] 'उभयाऽर्थे' इति घ. पाठः ।

एके–काशिकाकाराः। 'एतं त्वं मन्ये' इत्युदात्तस्य, 'उत त्वः पश्यन्नि'-इत्यनुदात्तस्य च दर्शनादिति भावः। एकः–प्रथमः। संहितया पाठे तान्तत्वस्याऽस्फुटत्वेऽपि, तान्तश्छेत्तव्योऽन्यथा एकश्रुत्या सकृदेव पठेत्। न च तान्ते विप्रतिपत्तव्यम्। 'त्वत्-त्व-सम-सिमेत्यनुच्चानि' (४।९) इति फिट्सूत्रात्। तथा च ऋङ्मन्त्रः–'स्तरीरु त्वद्भवति, सूत उ त्वदि'ति। वेदभाष्यकाराश्चेत्थं व्याचख्युः–'त्वदि'ति सर्वनामसु पठितोऽनुदात्तोऽयमन्यपर्याय' इति। जयदेवोऽपि प्रायुङ्क्त–'त्वदधरमधुरमधूनि पिबन्तमि'ति। 'त्वत्तोऽन्यस्या अधर' इति विग्रहो, न तु 'तवाऽधर' इति। 'पश्यति दिशि दिशि रहसि भवन्तमि'ति पूर्ववाक्येन सहाऽनन्वयाऽऽपत्तेः। नेम इति। श्रूयते च—'प्र नेमस्मिन् ददृशे सोम' इति। सम इति। तथा च श्रूयते—'नभन्तामन्यके समे' 'मानो वृकाय वृक्ये समस्मै' 'उरुष्याणो अघायतः समस्मात्' '[1]उतो समस्मिन्ना' इत्यादि। 'सिमः कृत्स्ने च, शक्ते च, स्यान्मर्यादाऽवबद्धयोः'। श्रूयते च—'आद्रात्री वासस्तनुते सिमस्मै' 'उच्छुक्रमत्कमजते सिमस्मात्'। उभयत्राऽपि 'सिमशब्दः सर्वपर्याय' इति वेदभाष्यम्।

---

बृहच्छब्दरत्नः

विभाषे'ति सूत्रे विभाषापदाऽनुवृत्त्या काचित्कत्वाऽभ्युपगमेनाऽदोषः। तत्र लक्ष्याऽनुरोधेन व्यवस्था। किञ्च 'निषेधाश्च बलीयांसो भवन्ती'ति न्यायोऽन्तरङ्गन्यायस्य न बाधकः। 'न धातुलोप' इत्यादिसूत्रस्थभाष्यात्तथैव लाभात्। द्वितयाऽऽदिशब्दानां बहूनामनुरोधेन[2] भावतात्पर्यकताया एवोचितत्वाच्च। किञ्च 'अतिदिष्टादुपदिष्टं बलीय' इति न्यायोऽत्र दुर्वारः। परत्वादिकन्तु समबलत्वे एवेत्यन्यत्र विस्तरः। कैयट इति। अत्राऽरुचिबीजन्तु डतरडतमप्रत्ययाऽन्तत्वेऽपि 'अन्यतर'शब्दपाठस्य नियमाऽर्थत्वेनाऽन्यतमशब्दस्य सञ्ज्ञाऽभावः सूपपादः। अनन्वयापत्तेरिति। एवञ्च तान्तस्य, 'उतो त्वस्मै तन्वमि'त्यादिप्रयोगादनुदात्तस्य च गणे पाठ इति ध्येयम्।

---

लघुशब्दरत्नः

त्वक्तम्। अनन्वयापत्तेरिति। तेन हि वाक्यशेषेण कृष्णस्य सम्बोद्धव्यत्वाऽवगत्या, सम्बोद्धव्यस्य च युष्मदर्थत्वेनाऽनन्वयः। 'पिबन्तं भवन्तमि'ति चाऽनन्वितमिति बोद्धव्यम्। अत्र पक्षे 'त्व' इत्येकश्रुत्योदात्ताऽनुदात्तयोर्निर्देश इति बोद्धव्यम्।

---

[1] 'उतो समस्मिन्' इत्यादि' इति ग. घ. ङ. पाठः।

[2] 'बहूनामविरोधेन' इति क. ख. पाठः।

**गणसूत्र इति।** यद्यपि भाष्ये अष्टाध्यायीस्थे सूत्रे 'अपुरीति वक्तव्य-मि'ति वार्त्तिकं पठितं, तथापि तद्गणसूत्रस्य शेषः, न तु जसि विभाषाविधाय-कस्य। 'अत' इत्यधिकृत्य जसः शीविधानात्, टाबन्तात्प्राप्त्यभावात्। **अन्त-रायामिति।** प्राकाराद्बाह्यायां, तदन्तर्वर्त्तिन्यां वेत्यर्थः। लिङ्गविशिष्टपरि-भाषया एकादेशस्य पूर्वाऽन्तत्वेन ग्रहणाद्वा प्राप्तिर्बोद्धया। 'त्यद्', 'तद्' एतौ उक्तपरामर्शकौ। तत्राऽऽद्यश्छान्दस इति गणरत्नाकरः। तन्न। 'स्यश्छन्दसि बहुलम्' (६।१।७०) इति सूत्रे छन्दोग्रहणवैयर्थ्याऽऽपत्तेः।

'एकोऽन्यार्थे, प्रधाने च, प्रथमे, केवले तथा।
साधारणे, समानेऽल्पे, सङ्ख्यायाश्च प्रयुज्यते'॥

**स्वाभिधेयेति।** 'स्वस्य=पूर्वादिशब्दस्य अभिधेयेनाऽपेक्ष्यमाणस्या-[1]ऽवधेर्नियम' इत्यर्थः। 'दिशः सपत्नी भव दक्षिणस्या' इत्यादावपि व्यवस्था-

---

**बृहच्छब्दरत्नः**

अत इत्यधिकृत्येति। 'पुरी'त्यस्य विशेष्यत्वे सर्वनामसञ्ज्ञा ने'ति हि वार्त्तिका-ऽर्थः। तत्र च स्त्रीत्वं विवक्षितम्। अत एव भाष्ये 'अन्तरायां पुरी'त्युदाहृतम्। 'स्वाऽभिधेयाऽपेक्षः' इति विशेषणं नियमेऽवधिद्वारैवेत्याशयेन व्याचष्टे—स्वस्येत्यादिना। 'अवधि'शब्दस्य नित्यसापेक्षत्वान्न दोषः। 'स्वाऽभिधेयाऽपेक्षा-ऽवधी'ति समस्तमेव क्वचित्पठ्यते।

---

**लघुशब्दरत्नः**

प्राप्त्यभावादिति। पुःशब्देन स्त्रीत्वविशिष्टस्यैव बोधनेन तादृशाऽर्थस्य विशेष्यत्वे एव तत्प्रवृत्तेः। अत एव भाष्ये 'अन्तरायामि'ति स्त्रियां सप्तम्यामेवोदाहृतमिति भावः। केवले इति। असहाये इत्यर्थः। 'स्वाऽभिधेयापेक्षाऽवधी'ति समस्तपाठं व्याचष्टे—स्वस्येत्यादि। 'अपेक्षे'ति कर्मणि घञ्।

व्यवस्थाऽस्त्येवेति। पूर्वादिशब्दैरेकस्या एव दिश उपाधिकृतभेदस्य प्रतिपादनम्। उपाधिश्च पृथ्वीमध्यं, तत्प्रान्तवर्त्तिनश्चत्वारः पर्वताश्च। रामायणे किष्किन्धायां सुग्रीवेण मध्यदेशाऽवधिकस्यैव दिग्विभागस्योक्तेः। पृथ्वीमध्यञ्च—मध्याह्नसूर्यसंयोगिदेशः। एवञ्च तन्मध्यभागाऽवधिकोदयाऽचलादिपर्यन्तदेशरूपोपाधिविशिष्टदिशि पूर्वादिशब्दानां तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिरित्युपाध्यन्तर्गततया व्यवस्थाऽस्त्येव। उदयाऽचलपर्यन्तरूपोपाधे-स्तदभिधेयस्य तदाकाङ्क्षत्वं चाऽस्त्येव। मध्याह्नसूर्यसंयोगिदेशात्तत्सन्मुखदेश उदक्। तत्पृष्ठ-स्थदेशश्च दक्षिणा। मध्याह्ने सूर्यस्योदङ्मुखत्वात्। स्पष्टं चेदं हेलाराजीये। 'व्यवस्थाया-

---

[1] 'अपेक्षमाणस्य' इति ङ. पाठः।

ऽस्त्येव। प्रसिद्धत्वात्तु नाऽवधिवाची शब्दः प्रयुज्यते। न च सञ्ज्ञात्वान्निषेधः। आधुनिकसङ्केतो हि सञ्ज्ञा। न च दिक्षु साऽस्तीति अस्तातिप्रकरणे कैयट-हरदत्तादयः। अत्र 'दिक्षु चिरन्तनः, कुरुषु त्वाधुनिकः सङ्केत' इत्यत्र व्याख्यातृवचनमेव [1]प्रमाणम्। एतेन 'विश्वेषां देवानामि'ति व्याख्यातम्। वेदप्रसिद्धत्वाद् देवगणविशेषे विश्वशब्दस्याऽऽधुनिकसङ्केताऽभावात्।

दक्षिणा गाथका इति। इह 'अमुकस्मात्कुशला'[2] इति अवध्यन्वयसम्भवेऽपि, तन्नियमो नाऽस्तीति भावः। 'अधरे ताम्बूलरागः' 'उत्तरे प्रत्युत्तरे च शक्त' इत्यपि प्रत्युदाहर्त्तव्यम्। कथन्तर्हि 'तथा परेषां युधि चे'ति कालि-

---

बृहच्छब्दरत्नः

कैयटहरदत्तादय इति। अत्राऽरुचिबीजन्तु 'व्यवस्थानिमित्तो यो न भवति, स्वभावत एव यो दिशि वर्त्तते, स्वरूपव्यतिरिक्तप्रवृत्तिनिमित्तनिरपेक्षो दिशो यो वाचकः पूर्वादिशब्दः, स दिक्शब्द आश्रीयते, दिशि वर्त्तमानाः पूर्वादयो निमित्ताऽन्तरनिरपेक्षाः, देशकालयोस्तु व्यवस्थाऽपेक्षा' इत्यादिकैयटहरदत्तादिग्रन्थबलात्, 'दिङ्नामान्यन्तराले' इत्यादिसूत्रस्थभाष्याच्च व्यवस्थारूपप्रवृत्तिनिमित्तस्य दिशि अभावेन सञ्ज्ञा दुरुपपादा। न च 'व्यवस्थायामि'त्यनेन न[3] प्रवृत्तिनिमित्तं निर्दिश्यते, अपि तु विषयो निर्दिश्यते, तेन वस्तुतो व्यवस्थायाः सत्त्वात्सञ्ज्ञा भवत्येवेति तैरेवोक्तमिति वाच्यम्। एकरूपेण सर्वाऽर्थप्रकाशनयोग्यत्वस्य सर्वाऽर्थवाचकत्वस्याऽभावेन सर्वनामसञ्ज्ञाया[4] वक्तुमशक्यत्वात्। तत्सत्ताया उपपादयितुमशक्यत्वाच्च। अवधिभूतपदार्थाऽपेक्षयाऽपि परत्र तद्दिक्त्वव्यवहाराच्च। 'दक्षिणा गाथका' इत्यत्राऽप्युत्कर्षाऽपकर्षसत्त्वेन तस्याः सत्त्वाच्च। न चोक्तरूपस्य सञ्ज्ञाया वैकल्पिकत्वेनेष्टाऽऽपत्तिरिति वाच्यम्। स्वग्रन्थविरोधा-

---

लघुशब्दरत्नः

मि'ति च विषयसप्तमीति भावः। तदाह—प्रसिद्धत्वादिति। देशवृत्तीनां तत्तदवधिकोदयाऽचलसंनिहितत्वादि प्रवृत्तिनिमित्तमित्यादि बोद्धचम्।

आधुनिकसङ्केतो हीति। असञ्ज्ञापदसामर्थ्यात्। अन्यथा सर्वादीनां केवलरूढत्वेनइन्द्रादिपदानामिव रूढत्वरूपसञ्ज्ञात्वस्य सर्वत्र सत्त्वात्, तदसङ्गतिः स्पष्टैवेति भावः। व्याख्यात्रिति। कैयटादीत्यर्थः। आधुनिकसङ्केताऽभावादिति। किं त्वैश्वर एवेति भावः। यदि तत्रोत्कर्षस्याऽवधिसापेक्षत्वाद्व्यवस्थाऽस्तीत्याग्रहस्तदा प्रत्युदाहरणाऽन्तरमाह—अधरे

---

[1] 'शरणम्' इति ङ पाठः।

[2] 'कुशल इति' इति घ. ङ. पाठः।

[3] नकारः क. ख. न दृश्यते। [4] 'सञ्ज्ञायाम्' इति क. ख. पाठः।

दासः, 'अपरे प्रत्यवतिष्ठन्ते' इत्यादि च। अत्राऽऽहुः—देशवाचितया व्यवस्थाविषययोरेव पराऽपरशब्दयोरुपचाराच्छत्रौ, प्रतिवादिनि च प्रयोगः। न चैवमुपसर्जनता। न हि लाक्षणिकत्वमुपसर्जनत्वम्। किन्तु स्वार्थविशिष्टाऽर्थाऽन्तरसंक्रमः। स च समासादिवृत्तावेव। अत एव भूवादिसूत्रे 'एतान्यपी'ति। एतत्प्रतिपाद्यानि वस्तूनीत्यर्थ' इति कैयटोक्तिः सङ्गच्छते। वस्तुतस्तु पराऽपरशब्दयोर्देशाऽन्तरनिष्ठत्वादिकमेवाऽर्थः। शत्रुत्वादिकन्तु आर्थिकोऽर्थः।

**असंज्ञायां किम्। उत्तराः कुरवः।** सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दो वर्त्तते इत्यस्तीह व्यवस्था। किन्तु आधुनिकसङ्केतोऽयमित्याहुः।

---

बृहच्छब्दरत्नः

ऽऽपत्तेः। 'व्यवस्थायामि'त्यस्य वैयर्थ्याऽऽपत्तेश्च। किञ्च 'दिक्षु चिरन्तनः प्रयोगो, नाऽन्यत्रे'त्यत्र दृढतरप्रमाणाऽभावः। अपि चोत्तराः कुरव इत्यत्र सञ्ज्ञाया अङ्गीकारे दृढतरदोषाऽभावः।

अत्राहुरिति। अत्राऽरुचिबीजन्तु 'पूर्वस्मिन् गुरावि'त्यादौ लक्षणयैवोपपत्तौ दिगादिष्वेव मुख्यः प्रयोगोऽस्तु। अत एवाऽऽहुः—'यावद्द्रव्यमनपायो व्यवस्थे'ति। किञ्च दृष्टान्तोऽप्यसिद्धः। एतत्प्रतिपाद्यरूपाद्यर्थस्यैतच्छब्दशक्त्यैव वक्तुं शक्यत्वात्। 'बुद्धिस्थत्वं शक्यताऽवच्छेदकाऽवच्छेदकम्। बोधस्तु प्रातिस्विकरूपेणे'ति सिद्धान्तः। नव्यास्तु 'प्रकरणज्ञस्य प्रातिस्विकरूपेण बोधेऽपि, अप्रकरणज्ञस्य बुद्धिस्थत्वेन बोधाद् बुद्धिस्थत्वमेव शक्यताऽवच्छेदकम्। सूत्रभाष्यस्वरसोऽप्येवमेवे'त्याहुः। एतेन 'सोऽयं देवदत्त' इत्यादौ भागत्यागलक्षणे'ति ग्रन्थाः परास्ताः। 'नीलमुत्पलम्' 'घटोऽनित्य' इत्यादाविव विशेष्यैक्यादभेदाऽन्वयस्य सुलभत्वेन, लक्षणाया उक्तिसम्भव एव ने'ति कश्चित्।

इत्याहुरिति। अत्राऽरुचिबीजन्तु 'प्रयोजकाले निरूढत्वाद्व्यवहारस्य प्रयोक्तृभिरनपेक्ष्यमाणाया अपी'त्यादिकैयटहरदत्तादिग्रन्थबलात् कुरुषूत्तरशब्दस्य

---

लघुशब्दरत्नः

इत्यादि। अत्राऽपि सञ्ज्ञात्वं मत्वाऽऽह—उत्तरे इत्यादि। उपचारादिति। तत्त्वाऽऽरोपादिति भावः। अर्थान्तरसंक्रम इति। स्वार्थविशिष्टाऽर्थाऽन्तरबोधकत्वमित्यर्थः। इदं च ञितश्च तत्प्रत्ययात् (४।३।१५५) इति सूत्रे भाष्ये ध्वनितम्। मेवार्थ इति। देशवदयमपि तच्छक्य इत्यर्थः। तुल्यन्यायादेतच्छब्दस्याऽपि कैयटोक्ताऽर्थः शक्य इतिध्वनितम्। सुमेरुमिति। 'हिमवानवधिरि'ति तु 'ये केचन परेण हिमवन्तं जनपदा उत्तरकुरवः, उत्तरमद्रा' इति ऐतरेयब्राह्मण श्रूयते। 'उत्तरा' इत्यस्य तन्नामान इत्यर्थः। तदाऽऽह—आधुनिकेति। 'उत्तराः कुरवो दक्षिणान् कुरूनपेक्ष्योत्तरा उच्यन्ते' इति[१] तु कपिञ्जलाऽधिकरणे शाबरभाष्ये उक्तम्।

---

[१] तुः लिखितादर्शेषु नास्ति।

**स्वमज्ञातिधनाख्यायाम् (१।१।३४)। आत्मा-ऽऽत्मीय-ज्ञाति-धन-वाची स्वशब्दः। तत्र ज्ञाति-धनयोः पर्युदासात्, आत्मा-ऽऽत्मीयौ परिशिष्टावित्याशयेन व्याचष्टे—आत्मीया इत्यर्थः, आत्मान इति वेति। यत्त्वाहुः—'आत्मनि स्वशब्दो नपुंसकः, तेन 'स्वे', 'स्वा' इत्युदाहरणं तत्र न सम्भवती'ति। तच्चिन्त्यम्। आत्मन्यपि स्वशब्दस्य पुंस्त्वात्। विभाषा जसि**

बृहच्छब्दरत्नः

व्यवस्थाप्रवृत्तिनिमित्तकत्वाऽभावस्याऽऽवश्यकत्वेन तदभावात्सञ्ज्ञाया नैव प्रवृत्तिः। कुरूणामुत्तरेणाऽप्यासीनानाम् 'उत्तराः कुरव' इति प्रयोगाद्व्यवस्थाया अभावाच्च। किञ्च 'सर्वनामानी'ति महासञ्ज्ञाकरणबलादर्थस्य शब्दविशेषणतया भासमानस्याऽपि पृथक्तया निमित्तत्वेनाऽऽश्रयणात्, 'अभिव्यक्तपदार्था ये' इति न्यायाच्च, प्रसिद्धाऽर्थकानां, पदाऽन्तरनिरपेक्षतयाऽन्तरङ्गाऽर्थबोधकानां सर्वादीनां ग्रहणम्। तेनोपसर्जनीभूतानां न। तथा चाऽऽधुनिकसङ्केते कथं प्रवृत्तिः।

अत्रेदं तत्त्वम्—'असञ्ज्ञायामि'ति योगो विभज्यते। अत एव विभिन्नविभक्तिनिर्देशः सङ्गच्छते। सर्वस्याऽयं शेषः। पर्युदासोऽयम्। लाघवात्। सञ्ज्ञा चाऽऽधुनिकसङ्केतः। तथा च 'आधुनिकसङ्केतभिन्ने प्राचीनसङ्केते सर्वादयः सर्वनामसञ्ज्ञका भवन्ती'ति वाक्याऽर्थः। तेन च 'विश्वेषां देवानामि'त्यादिसिद्धिः। एकरूपेण सर्वाऽर्थप्रकाशनयोग्यत्वस्य सर्वाऽर्थवाचकत्वस्याऽभावेन सर्वनामसञ्ज्ञाया अप्राप्तौ वचनम्। 'विश्वेषां देवानामि'त्यादौ शब्दस्य प्रवृत्तिनिमित्तत्वात्। एतेन दिश्यपि सर्वनामता व्याख्याता। 'उत्तराः कुरव' इत्यादौ तु न। उत्तरदिक्स्थत्वेन कुरुदेशस्योत्तरत्वात्, तदपेक्षया कुरुशब्दे उत्तरशब्दस्याऽऽधुनिकत्वाऽनुमानात्। यत्तु 'पूर्वादिसाहचर्येण दिग्देशकालवृत्तीनामेव ग्रहणान्न दोष' इति। तन्न। दक्षिणादिसाहचर्येण कालवाचकानां ग्रहणाऽनापत्तौ साहचर्यस्याऽत्रानाश्रयणात्। न चैवं सञ्ज्ञाप्रतिषेधवार्त्तिकप्रत्याख्यानाऽवसरे 'पूर्वपरावरदक्षिणोत्तरापराऽधराणि व्यवस्थायाम्', ततः 'असञ्ज्ञायाम्', 'सर्वादीन्येव यान्यनुक्रान्तानि, असञ्ज्ञायां तानि द्रष्टव्यानी'ति भाष्यं विरुद्धचेतेति वाच्यम्। भाष्यस्य प्रौढिवादपरत्वात्। वाक्यभेदाऽसमर्थसमासाऽऽपत्तेश्च। स्वादीनां निषेधाऽनापत्तेश्च। 'अभिव्यक्तपदाऽर्था ये' इति न्यायेन वारणाच्च। उपसर्जनव्यावृत्त्यर्थमन्वर्थसञ्ज्ञाया आवश्यकत्वेन वैयर्थ्याऽऽपत्तेश्चेति सुधियो विभावयन्तु।

परिशिष्टाविति। न चैवम् 'आत्माऽऽत्मीयाऽऽख्यायामि'त्येव[1] वाच्यम्। गौरवाऽऽपत्तेः। 'स्वे[2] स्वा नखाः, केशा वे'त्याद्यापत्तेश्च। यथान्यासे तु पर्युदासाऽऽश्रयणेन व्यवहारयोग्यस्यैवाऽऽत्मीयस्य ग्रहणान्न दोषः। पुंस्त्वादिति।

[1] 'आत्माऽऽत्मीयायामित्येव' इति ख. पाठः।
[2] 'स्वे' इति ख. नास्ति।

(१।१।३२) इति प्रकरणे 'स्वमात्मीये' इत्येव वक्तव्ये, गुरुनिर्देशं कुर्वतः सूत्रकारस्यैवाऽत्र प्रमाणत्वात् । यदपि स्वोक्तेऽर्थे उपष्टम्भाऽर्थं—

'स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरसिंहोक्तिमाहुः । तदपि चिन्त्यम् । कोशे हि 'आत्मनी'नि पूर्वाऽन्वयि । 'स्वमि'तितूत्तराऽन्वयि । तथा च हेमचन्द्रः—'द्यौः स्वर्गनभसोः, स्वो ज्ञात्यात्मनोः, स्वं निजे धने' इति । मेदिनीकारोऽपि—'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति । तस्मात् 'स्वे' 'स्वा' इत्यस्य 'आत्मान' इति विवरणं सम्यगेवेति स्थितम् ।

---

बृहच्छब्दरत्नः

'बन्धूकवन्धूभवदेतदस्या मुखेन्दुनाऽनेन सहोज्जिहाना ।
रागश्रिया शैशवयौवनीयां स्वमाह सन्ध्यामधरोष्ठलेखा' ।। (नैषधीये ७।३७)

—इत्यत्र 'स्व'शब्द आत्मीयबाची । आत्मीयत्वं स्वरूपमेव ।

आत्मीये इत्येवेति । न चेदं वचनं केशादावप्राप्तविभाषाऽर्थं स्यादिति वाच्यम् । पूर्वोत्तरसाहचर्येण प्राप्तविभाषात्वस्यैव न्याय्यत्वात् ।

पूर्वान्वयीति । 'आत्मनी'त्यत्र शब्दाऽऽकाङ्क्षायां 'स्व' इति पूर्वमुपस्थितपुंल्लिङ्गाऽन्वस्योचितत्वात् । पुंस्त्वविशिष्ट'स्व'शब्दाऽभिधानन्तु ज्ञात्यर्थमावश्यकम् । त्वन्ताऽथाऽऽदित्वाऽभावेनोत्तराऽन्वयित्वे मानाऽभावाच्च । उत्तरान्वयीति । पूर्वाऽन्वये तु निर्देशेन लिङ्गबोधनेऽपि, तात्पर्यकल्पने गौरवाऽऽपत्तिः । अस्मद्रीत्या तु 'त्रिषु' इति पदेन नपुंसकस्याऽपि बोधनाल्लिङ्गांशाऽनुवादः । तद् ध्वनयन्नाह— तथा चेति । एतेन 'मूले चकारो व्यर्थ' इति मन्दोक्तमपास्तम् ।

---

लघुशब्दरत्नः

हेमचन्द्र इति । कोशयोरविरोधे सम्भवति, विरोधो न न्याय्य इति भावः । यदि तु एवमन्वये—'स्वो ज्ञातावात्मनि धने त्वस्त्री आत्मीयके त्रिषु' इति पाठेनैव सिद्धे त्रिः स्वग्रहणवैयर्थ्याऽऽपत्तेः,

'बन्धूकबन्धूभवदेतदस्या मुखेन्दुनाऽनेन सहोज्जिहाना ।
रागश्रिया शैशवयौवनीयां स्वमाह सन्ध्यामधरोष्ठलेखा' ।। (नै० ७।३७)

—इति श्रीहर्षश्लोके 'आत्मानमि'त्यर्थक'स्वमि'त्यस्य 'बन्धूकबन्धूभवदि'ति विशेषणेन च नपुंसकत्वमस्तीत्युच्यते, तर्ह्यस्तु । मेदिन्यादिप्रामाण्यात्पुंल्लिङ्गोऽप्यस्त्येवेति, 'स्वे' 'स्वा' इत्युदाहरणं न सम्भवती'ति प्राचीनोक्तिरसङ्गतैवेति ध्वनयन्नाह—विवरणं सम्यगेवेति ।

---

[२] 'बोधो मा भूत्' इति मुद्रितेषु पाठः । स चाऽतीवाऽशुद्धः ।

**ज्ञातिधनवाचिनस्त्विति ।** [1]ताच्छील्ये णिनिना ज्ञातिधनयोरपि आत्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामताऽस्त्येवेति ध्वनयति । एतदर्थमेव हि सूत्रे 'आख्या'ग्रहणं कृतम् ।

**अन्तरं बहिर्योगोपसंव्यानयोः (१।१।३६) ।** 'बहिरि'त्यनावृतो देशो, बाह्यं चोच्यते । तत्राऽऽद्यमर्थं गृहीत्वाऽऽह—बाह्या इत्यर्थ इति । द्वितीये तु 'आभ्यन्तरा' इत्यर्थो बोध्यः । बाह्येन हि आभ्यन्तरस्य योगोऽस्ति । अर्थद्वयमप्याकरे स्थितम् । 'उपसंव्यान'शब्दोऽपि करणव्युत्पत्त्योत्तरीयपरः, कर्मव्युत्पत्त्या त्वन्तरीयपरः ।

**पूर्वादिभ्यो नवभ्यो वा (७।१।१६) ।** अत्रेदमवधेयम्—'एतत्सूत्रं जसः शी (७।१।१७) इत्यत्राऽनुवर्त्त्य वाक्यभेदेन व्याख्येयम् । वा च्छन्दसि (६।१।१०६) इत्येतत् अमि पूर्वः (६।१।१०७) इत्यत्र यथा । एवञ्चाऽष्टाध्याय्यां पूर्वपर (१।१।३४) इत्यादित्रिसूत्री गताऽर्थेति महल्लाघवम् ।

---

बृहच्छब्दरत्नः

उपसंव्यानशब्दोऽपीति । नन्वेवमुपसंव्यानग्रहणं व्यर्थम् । बहिर्योगेनैव गताऽर्थत्वात् । न च शाटकानां त्रये शरीरसंयुक्तस्य तृतीयस्य, चतुष्टये तु संयुक्तचतुर्थस्य च, तत्संयुक्ततृतीयस्य च बहिर्योगाऽभावादुपसंव्यानग्रहणमावश्यकमिति वाच्यम् । 'बहिर्योग' इत्यत्र 'बहिः'शब्देन बाह्यवस्तुनोऽप्यभिधानात् । बाह्यत्वञ्च सापेक्षिकम् । तेन शरीरसंयुक्ततृतीयचतुर्थोऽपेक्षया द्वितीयस्य, तृतीयस्य च बाह्यत्वमस्त्येव । न चैवं 'बहिर्योग'ग्रहणमपि व्यर्थम् । 'अन्तरमवकाशाऽवधिपरिधानाऽन्तर्द्धिभेदतादर्थ्ये । छिद्राऽऽत्मीयविनाबहिरवसरमध्येऽन्तरात्मनि चे'ति कोशे बहूनामर्थानामुक्तत्वेन तद्व्युदासाऽर्थं सार्थक्यादिति चेत् । अत्राऽऽहुः—उपसंव्यानत्वप्रकारकशाब्दबोधाऽर्थं [2]तद्ग्रहणमिति सूत्रहृदयम् ।

---

लघुशब्दरत्नः

एतदर्थमेवेति । एतदर्थमपीत्यर्थः । धनत्वेनाऽऽत्मीयस्य बोधे मा भूदित्यर्थञ्चेत्यपि बोध्यम् । 'आत्माऽऽत्मीयाऽऽख्यायामि'ति तु नोक्तम् । लाघवाऽभावात् ।

बाह्यं चेति । उक्तबहिर्देशस्थमित्यर्थः । उपसंव्यानशब्दोऽपीति । एवञ्च तद्ग्रहणं बहिर्योगस्य गृहेष्वेव प्रसिद्धिमाश्रित्य सूत्रे कृतमिति भावः ।

महल्लाघवमिति । त्रिसूत्र्या जसाधारे शीभावे एव विकल्पविधानात् । 'व्यवस्थाया-

---

[1] 'ताच्छील्यणिनिना' इति ङ. पाठः । 'ताच्छील्येन णिनिना' इति ग. पाठः ।
[2] 'तद्ग्रह' इति क. ख. पाठः ।

**एकशब्दस्याष्टावर्था उक्ताः। तत्र विशेषमाह–संख्यायामिति। अन्येषु सप्तसु तु वचनाऽन्तरमपि स्यादेव, 'एके' 'एकेषामि'ति यथेति भावः।**

**न बहुव्रीहौ (१।१।२९)। कृते बहुव्रीहौ निषेधो व्यर्थः, "[1]उपसर्जनीभूता न सर्वादय' इति वक्ष्यमाणत्वादत आह–चिकीर्षिते इति। समासात्प्रागेवेति च। प्रक्रियेति। अलौकिके विग्रहवाक्ये इत्यर्थः। नन्वस्तु**

---

बृहच्छब्दरत्नः

महल्लाघवमिति। यथान्यासे तु सर्वनामसञ्ज्ञाया वैकल्पिकत्वेऽपि न 'क'प्रत्ययः। [2]'स्व असि'त्यस्यामवस्थायां 'क'प्रत्ययचिकीर्षायां तस्य सुबन्तादुत्पन्नत्वेनाऽसो लुकाऽपहारसम्भावनायाम् 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते' इति न्यायेन जस्निमित्तसर्वनामसञ्ज्ञाविकल्पस्याऽप्राप्तेः। अत एव 'द्वितीयकायै' इत्यादौ 'तीयस्ये'ति विकल्पो न। अर्थाऽधिकाराऽऽश्रयणेन जसाधारकार्य एव विकल्पप्रवृत्तेश्च। अत एव 'प्रथमचरमे'तिसूत्रे 'प्रथमके' इति जसि रूपं न भवती'ति कौस्तुभे पितामहचरणाः। नेमशब्दस्य तु 'नेमके' 'नेमका' इति भवत्येव। अत एव 'यथान्यासे पक्षे शिट्स्वराऽभावः, उक्तन्यासे तु शिट्स्वरो नित्यतया स्यादि'ति निरस्तम्। निषेधो व्यर्थ इति। ननु 'सङ्ख्याऽव्यये'ति बहुव्रीहावुभयपदाऽर्थप्राधान्ये 'एकद्वा' इत्यत्र सर्वनामसञ्ज्ञानिषेधाऽर्थं सूत्रमावश्यकमिति चेन्न। प्रयोजनाऽन्तराऽसम्भवेन सूत्रवैयर्थ्याऽनुद्धारात्। समासाऽन्तानां समासाऽवयवत्वाच्च। तत्पूर्वभागस्य कार्याऽभावान्न सञ्ज्ञायाः प्रवृत्तिः। अपरिसमाप्ताऽर्थत्वेन सर्वनामप्रकृतिकसुबन्तत्वाऽभावेन नाऽकच्। वस्तुतस्तु प्रकृतिभागस्य नैरर्थक्यान्न सर्वाऽर्थवाचकत्वम्। समासान्तानामुत्तरपदाऽवयवत्वन्तु न सार्वत्रिकमिति प्रागेवोक्तम्। अन्यत्राऽन्वये परस्परमात्राऽन्वयित्वरूपसामर्थ्यभङ्ग इति तत्त्वम्। अलौकिके इति। यद्यप्यलौकिकविग्रहवाक्ये समासादिप्रवृत्त्या एकार्थीभावादिकल्पनेनोपसर्जनत्वान्निषेधवैयर्थ्यं, तथाप्यलौकिकविग्रहवाक्ये एकार्थीभावादिकल्पनात् पूर्वं निषेध इत्यत्र तात्पर्यान्न दोषः। न च 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति न्यायान्नाऽकजिति वाच्यम्। अकृतव्यूहपरिभाषायामेवाऽन्तर्भावात्। विभक्तिनिमित्त-

---

लघुशब्दरत्नः

मि'त्यादि गणे एव पाठविशेषणमिति भावः।

वक्ष्यमाणत्वादिति। 'एकद्वा' इति बहुव्रीहेरभिधानेऽपि तत्र 'एकद्वचन्यतरा' इत्यर्थाद्उपसर्जनत्वमेव। समासाऽन्ते कृते विशिष्टस्य सर्वाद्यन्तत्वाऽभावाच्च। समासान्तानामुत्तरपदाऽववत्वं तु नेत्युक्तम्। चिकीर्षित इतीति। अध्याहारलभ्यमेतत्। एतदर्थमेव

---

[1] 'उपसर्जनीभूतास्तु न' इति ङ. पाठः।

[2] 'स्वा अस्' इति क. ख. पाठः।

तत्राऽकजत आह—स चेति। न च निमित्तस्याऽनुपसर्जनत्वस्य विनाशोन्मुखत्वात्प्रागेव सञ्ज्ञा न भविष्यतीति वाच्यम्। 'अकृतव्यूह'परिभाषाया अनित्यत्वात्। तत्र[1] चैतत्सूत्रस्यैव ज्ञापकत्वात्। अतिभवकानिति। एतदेव ज्ञापनफलमिति भावः। इष्टापत्तिं कृत्वेति। च्छ्वोः शूड् (६।४।१९) इति सतुकग्रहणं, प्रकृतिप्रत्यापत्तिवचनं वाऽनित्यत्वे ज्ञापकम्। लक्ष्या-

---

बृहच्छब्दरत्नः

कार्यस्यैव बाधाच्च। सतुक्ग्रहणमिति। न चैवमप्यन्त्यस्य प्राप्नोति। अनर्थके 'अलोऽन्त्यस्ये'त्यस्य निषिद्धत्वात्। नन्वेवं 'राल्लोप' इत्यनेन 'हूः' 'हूरौ'[2] 'हूर' इत्यादौ लोपो न स्यात्। न चाऽनुवृत्तिसामर्थ्यम्। चकाराऽनुवृत्तिमात्रेणाऽपि सार्थक्यादिति चेत्। अत्राहुः—छकार-वकारयोः समाहारद्वन्द्वे कृते छ्वकाराऽन्तस्य द्वन्द्वाऽन्तरमस्तु। आदेशोऽपि श-द्वयप्रश्लेषः। तथा च स्थानत आन्तरतम्यात्, यथासङ्ख्यन्यायाच्चेष्टसिद्धिः। सतुक्छकारे तु न केवलछकारस्याऽऽदेशः। सतुक्निर्देशसामर्थ्यात्। एवञ्च वाञ्छतेरप्रत्यये 'वान्' 'वांशौ' 'वांश' इत्यादि। यद्वा सतुक एव निर्देशः। राल्लोपे तु 'न ध्याख्ये'ति नत्वनिषेधाल्लिङ्गात्केवलस्याऽन्वयः। 'मूर्त्त' इत्यत्र हि छलोपं विना नत्वप्राप्तिरेव न सम्भवति। एवञ्च 'मूर्त्तौ घन' इत्यादिनिर्देशाः सङ्गच्छन्ते। अस्मिन्पक्षे वाञ्छतेः शादेशो नेष्ट एव। शादेशयोग्यप्रत्ययपरत्वमेवाऽस्य नास्ति, भाष्यप्रामाण्यादिति वा कल्प्यम्।

---

लघुशब्दरत्नः

'न बहुव्रीहिरि'ति वक्तव्ये 'बहुव्रीहावि'ति गुरुनिर्देश इति भावः। विनाशोन्मुखत्वादिति। यद्यप्यलौकिके एवैकार्थीभावस्याऽऽरोपोऽस्ति, तथाऽपि तत्र स्वार्थविशिष्टाऽर्थान्तरबोधकत्वरूपोपसर्जनत्वऽभावादेवमुक्तम्। अनित्यत्वादिति। अत एव 'अतिभवकानि'त्यादिसिद्धिः। वस्तुतः सा भाष्याऽनुक्तत्वान्नाऽस्त्येवेति बोध्यम्।

सतुक्ग्रहणमिति। च्छ्वोः शूड् (६।४।१९) इति सूत्रे 'प्रष्टे'त्यादावन्तरङ्गत्वाज्जातस्य तुको निवृत्तये तत्क्रियते। सतुक्कनिर्देशसामर्थ्याच्च नाऽन्त्यस्य शः। वाञ्छादिप्रकृतिकक्विबन्तादेस्तु अप्रयुक्तत्वेन लक्षणविषयतैव नेत्यादि भाष्ये स्पष्टम्। तत्परिभाषासत्त्वे हि शादेशे निमित्तविनाशेन पूर्वं तदप्रवृत्तिरेवेति, स व्यर्थ एव स्यादिति भावः।

प्रकृतिप्रत्यापत्तीति। 'कंसं घातयती'त्यादौ कृल्लुकि तन्निमित्तकाऽऽदेशनिवृत्तये क्रियमाणम् 'आख्यानात्कृतस्तदाचष्टे कृल्लुक्, प्रकृतिप्रत्यापत्तिश्चे'ति वचनमित्यर्थः। अत्रेदं चिन्त्यम्—'लुक्यपि प्रत्ययलक्षणसत्त्वात्, 'राजा,' 'ऐनेय' इत्यादाविवाऽकृतपरिभाषाया अत्राऽप्राप्तिः। न लुमता (१।१।६३) इति निषेधस्तु प्रत्यये परतो जायमानपूर्वकार्ये एवेति

---

[1] चकारो मुद्रितेषु त्रुटितः।
[2] 'हुरौ हुरः' इति भावप्रकाशे पाठः।

ऽनुरोधाद् व्यवस्थेति भावः । यथोत्तरमिति । तथा चाऽद्यत्वे भाष्यकारोक्त्यैव व्यवस्थेति भावः ।

बृहच्छब्दरत्नः

भाष्यकारोक्त्यैवेति । अयम्भावः—सूत्राणामतिगम्भीरत्वेन न केवलं न्यायेनाऽर्थनिर्णयः कर्त्तु शक्यः, व्यर्थ-गुरुभूत-सञ्ज्ञानां 'सर्वनामस्थाने'त्यादीनां दर्शनात्। 'ईशः शे' 'ईड्जनोर्ध्वे चे'त्यादौ योगविभागे फलाऽभावाच्च। तथा चेतिहासपुराणैर्वेदाऽर्थवर्णनवद्भाष्यमादाय सूत्र-वार्त्तिका-ऽर्थौ वर्णनीयः। भाष्यग्रन्थस्य स्पष्टतयोपलभ्यमानत्वेनाऽन्याऽर्थपरतया नेतुमशक्यत्वात्। अविरोधे सम्भवति विरोधकल्पनस्याऽन्याय्यत्वादिति पूर्वमेव निरूपितम्। सूत्रन्तु भाष्याऽविरोधेनाऽर्थाऽन्तरपरतयाऽपि योजयितुं शक्यम् । तथा हि—'विभाषा दिक्समासे बहुव्रीहावि'त्यनेन दिक्समासबहुव्रीहौ विकल्पः। 'न बहुव्रीहावि'इत्यनेनाऽन्यत्र विकल्पस्य निषेधः। तदुदाहरणन्तु 'या पूर्वा सैवोत्तरा यस्य भ्रान्तस्य तस्मै पूर्वोत्तराये'ति। न च 'दिङ्नामान्यन्तराले' इत्यनेन समासे निषेधः शङ्क्यः। विकल्पविधानस्य वैयर्थ्याऽऽपत्तेस्तस्य काचित्कत्वाऽभ्युपगमात् । न चेदं 'लक्षणप्रतिपदोक्त'परिभाषया सुसाधम् । पूर्वसूत्रे बहुव्रीहिग्रहणस्याऽपि वैयर्थ्याऽऽपत्तेः। न्यायाऽनित्यत्वज्ञापनार्थं, न्यायप्राप्ताऽनुवादकं वा तदिति चेत्तर्हि तत्साहचर्यात् 'न बहुव्रीहावि'ति सूत्रमपि तथैवाऽस्तु। यत्तु 'द्वन्द्वे चे'त्यादीनामिव 'न बहुव्रीहौ' इति निषेधः समुदायस्यैव, बहुव्रीहिपदस्य तत्रैव शक्तत्वात् , तथा च 'प्रियविश्वाये'त्यादावन्तरङ्गत्वात्प्राप्तायाः सञ्ज्ञायास्तदन्तविधिना दुर्वारत्वेन, तन्निषेधाऽर्थं सूत्रम्। 'अकृतव्यूह'परिभाषाया अनित्यत्वे ज्ञापकन्तु सर्वेषां समानमि'ति। तन्न। कार्यं विना सञ्ज्ञाया अप्रवृत्तेरित्याहुः। भाष्यन्तु वृत्तिकृद्व्याख्याखण्डनपरं बोध्यम्। व्याख्यातश्च 'तद्धितश्चाऽसर्वविभक्तिरि'ति सूत्रस्थभाष्यग्रन्थ एवमेवो-

लघुशब्दरत्नः

स्पष्टमेव। तस्मात् 'पुष्ययोगं जानाति, पुष्येण योजयती'त्येतत्साधके 'पुष्ययोगे ज्ञी'ति वचने भाष्यकृत्कृतप्रत्यापत्त्यनुवृत्तिर्ज्ञापिका। तत्र हि चजोः (७।३।५२) इति घिति परतः कुत्वमि'ति[1]।

भाष्यकारोक्त्येति। 'अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयौ' इति च तदुक्तिः। एतदेवाऽभिप्रेत्य धिन्विकृण्व्योर च (३।१।८०) इति सूत्रे 'किमर्थमत्वं विधीयते, वलोप एवाऽस्तु'इत्याशङ्क्याऽत्वे, अल्लोपे, तस्य स्थानिवत्त्वेन गुणाऽभावाय तत्। न च वलोपेऽपि न धातु (१।१।४) इति गुणनिषेधः सिद्ध इति वाच्यम्। तत्प्रत्याख्यानपक्षे गुणप्राप्तेरि'त्युक्तम्। अनेन 'सूत्रमतात् प्रत्याख्यानवादिमतं प्रबलमि'ति 'प्रत्याख्यानवादिसंमतलक्ष्यमेव कथंचित्सूत्रमतेऽपि साध्यं, न तु विपरीतं, सति सम्भवे,' 'अन्यथा सूत्रम् अप्रमाणमेवे'ति च, 'प्रत्याख्यानं

[1] 'कत्वमिति बोध्यम्' इति क्वचित्पाठः ना।

यत्तु प्राचोक्तम्–'बहुव्रीहौ सर्वादेः सर्वनामता न स्यात् । प्रियसर्वाय । सूत्रकारमते बहुव्रीहौ न सर्वनामता । भाष्यकारमते गौणत्वमात्रे । 'त्वत्कपितृको' 'मत्कपितृक' इत्यत्र समासाऽवयवयोर्युष्मदस्मदोः सर्वनामत्वादनङ्गकार्यत्वेनाऽकच् स्यात्, स मा भूत्, कप्रत्यय एव स्यादित्येतदर्थमिदं सूत्रमिति न्यासकृन्मतमि'ति । [1]अत्रेदं वक्तव्यम्—'किं बहुव्रीहौ सञ्ज्ञा नेति विवक्षितम्, उत तदवयवानां सर्वादीनामि'ति । नाऽऽद्यः । 'समासाऽवयवयोर्युष्मदस्मदोरि'त्युत्तरग्रन्थविरोधात् । समुदाये प्राप्तिविरहाच्च । न च तदन्तविधिना प्राप्तिः । बहुव्रीह्यवयवानामुपसर्जनतया सर्वादिबहिर्भावेण[2] तदन्ते प्राप्तेर्दूरापास्तत्वात् । अत एव न द्वितीयोऽपि । न चोपसर्जनानां पाठात् पर्युदासो वार्त्तिककृतोक्तो, न तु सूत्राऽऽरूढ इति वाच्यम् । अन्वर्थसञ्ज्ञाबलेन सूत्राऽक्षरैरेव तल्लाभात् । एतेन 'सूत्रकारमते बहुव्रीहौ न सर्वनामते'त्यपि परास्तम् । 'बहुव्रीहावेवे'ति तस्याऽर्थः । 'भाष्यकारमते' इत्याद्यपि न । विशेषोपादानेन हि सूत्रकार-वार्त्तिककारयोर्मतमन्यादृशमिति प्रतीयते । 'देवदत्तो वामेनाऽक्षणा पश्यती'त्युक्ते दक्षिणेन न पश्यतीतिवत् । तच्च न । सूत्र-वार्त्तिक-मतेऽपि गौणपर्युदासस्येष्टत्वात् ।

यत्तु 'त्वत्कपितृक' इत्यादि । तदित्थं प्राचा व्याख्यातं—'त्वं पिता यस्य,' 'अहं पिता यस्ये'ति विगृह्य, बहुव्रीहिसमासे कृते, समासाऽवयवयोः समासान्तःपातिनोर्युष्मदस्मदोः सर्वाऽर्थवाचकत्वेन सर्वनामसञ्ज्ञकत्वादज्ञाताद्यर्थविवक्षायाम् अव्ययसर्वनाम्नाम् (५।३।७१) इत्यकच् प्रसज्येत । तस्य स्मैप्रभृतीनामिवाऽङ्गाऽधिकारविहितत्वाऽभावेनाऽङ्गसञ्ज्ञाऽनपेक्षत्वात् । ततश्च 'त्वकत्पितृक' इत्याद्यनिष्टं प्रसज्येते'ति ।

---

लघुशब्दरत्नः

सूत्रसंमतमि'ति च ध्वनितम् । सूत्रकृत्खण्डितप्राचीनऋषिवाक्यानामप्रामाण्यवत्, सूत्रकारवचःखण्डनप्रवृत्तभाष्य-वार्त्तिक-वचनैस्तदंशे सूत्रकारवचसोऽप्यप्रामाण्यकल्पनैवोचितेति दिक् ।

किमिति । 'बहुव्रीहौ ने'त्यस्य द्वेधा व्याख्यानसम्भवादिति भावः । उत्तरग्रन्थेति । न्यासकारस्याऽपि सूत्रलभ्याऽर्थप्रतिपादने एव तात्पर्यादिति भावः । प्राप्तेरिति । प्राप्तेरभावे निषेधो व्यर्थ एवेति भावः । अत एवेति । अवयवानामुपसर्जनत्वेन सर्वादिबहिर्भावादेवे-

---

[1] 'तत्रेदं वक्तव्यम्' इति ग. घ. पाठः ।

[2] 'वहिर्भवेन' इति मुद्रितेषु पाठः ।

न्यासकृताऽपि—अन्वर्थसञ्ज्ञाबलादेव सञ्ज्ञानिरासे कृते, 'अकच् न भविष्यती'त्याशङ्क्य, 'समुदायो हि विशेषे वर्त्तते, पूर्वपदन्तु सर्वाऽर्थताया अनपेतमेवे'त्युक्तम्। तदेतत्सर्वं प्रामादिकमेव। तथा हि—जहत्स्वार्थायां वृत्तौ समासाऽवयवयोरर्थ एव नास्ति। अजहत्स्वार्थायामपि स्वार्थविशिष्टाऽन्यपदार्थवृत्तित्वेनोपसर्जनत्वं स्पष्टमेव। एवञ्च[1] 'समासाऽन्तःपातिनोर्युष्मदस्मदोः सर्वार्थवाचकत्वेने'त्यादिग्रन्थः, 'समुदायो ही'त्यादिन्यासग्रन्थश्च पक्षद्वयेऽपि व्याहतः। किञ्चैवम् 'अतिसर्वाये'त्यत्र स्मायादेशो दुर्वारः। अङ्गाऽधिकारे तदन्तग्रहणात्। त्वदुक्तरीत्या सर्वशब्दस्य सर्वाऽर्थताऽनपायात्।

बृहच्छब्दरत्नः

पाध्यायैः। तत्राऽर्थनिर्णायकन्तु 'अकच्-स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयावि'तिभाष्योक्तं स्मृत्यन्तरमेव[2]। 'न बहुव्रीहावि'ति स्मृतेः स्मृत्यन्तराऽविरोधेन व्यवस्था बोध्ये'ति भाष्याऽभिप्रायः। केचित्तु 'स्मृतीनां विरोधे देशाऽऽचाराद्व्यवस्था। तस्या अन्यत्र दृष्टत्वात्, 'शवतिर्गतिकर्मा कम्बोजेषु, [3]विकार एवैनमार्या भाषन्ते' इतिपस्पशायां व्यवस्थाया भाष्यकारैरेवोक्तत्वाच्चे'त्याहुः। एतेन 'यथोत्तरं मुनीनां प्रामाण्यमि'ति नोदासीनायाः श्रुतेः, स्मृतेर्वा वाक्यं, येन भाष्यकारोक्त्यैव व्यवस्था स्यादि'ति निरस्तम्। यत्र तु भाष्यमन्यथा व्याख्यातुं शक्यं, तत्र सूत्राऽनुरोधेनैव व्यवस्था। ननु 'अवर्णाऽन्तादङ्गात्परस्य सर्वनाम्नो विहितस्य ङे स्मै' इत्यर्था-

लघुशब्दरत्नः

त्यर्थः। अन्वर्थेति। [4]'सर्वेषां नामे'त्येवंरूपेत्यर्थः। तस्यार्थ इति। 'सोऽनुचितः, अन्वर्थसञ्ज्ञया गौणमात्रे तदप्रवृत्तेस्तत्संमतत्वादि'ति शेषः। सूत्रेत्यादि। तन्मते अन्वर्थत्वेन, वार्त्तिकमते तु वचनेनेत्यर्थः। स्वोक्ताऽर्थे न्यासकृद्ग्रन्थसंवादमाह—न्यासकृतापीति।

अनपेतमेवेति। समुदाये एकार्थीभावाऽङ्गीकारेण समुदायस्याऽन्यपदार्थोपसर्जनत्वेऽपि,अवयवस्य तत्त्वे[5] मानाऽभावादित्यभिमानः। व्याहत इति। अजहत्स्वार्थायामपि अवयवार्थस्याऽन्यपदार्थविशेषणतयैवोपस्थित्योपसर्जनत्वाऽक्षतेः। इतरार्थविशेषणत्वेनोपस्थितिविषयत्वस्यैवोपसर्जनपदार्थत्वादिति[6] भावः। सर्वशब्दस्येति। उत्तरपदभूतस्याऽपीत्यर्थः।

[1] चकारः क. नास्ति।

[2] 'स्मृत्यन्तरमेवेति' इति क. पाठः।

[3] 'विकारमेनमार्याः' इति क. ख. पाठः।

[4] 'सर्वेषां नामानी'त्येवं रूपेत्यर्थः' इति ग. पाठः।

[5] 'मानाऽभाव' इत्यपि पाठः। 'मानाऽभावात्' इति तु क. शोधितः पाठः।

[6] 'उपसर्जनत्वपदार्थत्वात्' इति मुद्रितेषु पाठः।

**न हि पूर्वपदे सर्वाऽर्थता, उत्तरपदे तु नेति युक्तिमत् । अपि चैवं 'गौणत्वे**

बृहच्छब्दरत्नः

ऽङ्गीकारान्न दोष इत्यरुचेराह—न हीति। तथा च त्वद्ग्रन्थे 'पूर्वपद'ग्रहणं व्यर्थं, पूर्वोत्तरपदयोस्तुल्यत्वात् ।

पूर्वपदे इति। यत्तु 'उत्तरपदे एव लक्षणा। पूर्वपदन्तु तात्पर्यग्राहकम्। एवञ्च पूर्वपदे सर्वाऽर्थवाचकत्वमस्त्येवे'ति । तत्रेदम्प्रष्टव्यं,—पूर्वपदं स्वाऽर्थं प्रतिपादयति, उत इवादिवन्निरर्थकमेव ?। नाऽऽद्यः। बहुव्रीहौ पूर्वपदे विशेषणाऽन्वयाऽऽपत्तेः। 'सा गौरी चित्रा गौर्यस्या' इत्यत्र सति तात्पर्ये तन्त्रेण चित्रापदस्योभयत्राऽन्वयवत्समासेऽपि तदापत्तेश्च। न चेष्टाऽऽपत्तिः। 'जहत्स्वार्थावृत्तिरि'ति भाष्योक्तपक्षाऽन्तरे तदसम्भवात्। किञ्च पूर्वपदाऽर्थाऽन्वयोऽपि दुरुपपादः। नाऽन्त्यः। स्वाऽर्थप्रतिपादने[1] प्रतिबन्धकाऽभावात्। नैरर्थक्येन सर्वाऽर्थवाचकत्वाऽभावादेवाऽप्राप्तेश्च। विनिगमाविरहेण पदद्वयेऽपि लक्षणाया युक्तत्वाच्च। न च 'सुपां सन्निहितपदाऽर्थगतस्वाऽर्थबोधकत्वमि'ति व्युत्पत्तिभङ्गः। 'घटपटावि'त्यादावसम्भवात्। तस्मात्पदद्वयेऽपि बोधकत्वमिति भाष्यादिसंमतं, युक्तिसिद्धञ्चेति तत्रैव निरूपयिष्यामः।

सर्वार्थतेति। सर्वाऽर्थत्वम्—एकरूपेण सर्वबोधकत्वम्। तच्च 'सर्वे घटाः' 'सर्वे पटाः' 'उभौ घटौ' 'उभौ पटौ' 'स घटः' 'स पट' इत्यादावेकरूपेणैव बोधाद्दक्षतम्। न च 'समभिव्याहाराद्यपर्यालोचनदशायां तत्त्वस्याऽनिर्धारितत्वेऽपि, तत्पर्यालोचनायां तेन रूपेणोपस्थितिरि'ति नये असिद्धो हेतुरिति वाच्यम्। पाठसामर्थ्येनेदृशस्यैव रूपस्यैकत्वेन विवक्षितत्वेनाऽदोषात्। अत एव [2]सञ्ज्ञाशब्दे न तन्त्रम्। शब्देन तत्र शब्दविशेषमात्रप्रकारतया शाब्दबोधात्। एतेन 'सञ्ज्ञोपसर्जने च विशेषे अवतिष्ठेते' इति भाष्यं व्याख्यातम्। यद्वा विशेषणतयाऽप्युपस्थितस्याऽर्थस्य महासञ्ज्ञाकरणद्वारा पृथक्तया निमित्तत्वेनाऽऽश्रयणादन्तरङ्गः, पदाऽन्तरनिरपेक्षः, प्रधानं, प्रसिद्धोऽर्थो गृह्यते। तथा च सञ्ज्ञोपसर्जनीभूते न प्रवृत्तिः। ध्वनितञ्चेदं कैय्यटे। 'सर्वत्राऽन्वययोग्यत्वमि'त्यपि कश्चित्। प्रकृते त्वतिपितृसम्बन्धादिरूपस्य सर्वत्राऽप्रवृत्तस्य,[3] अप्रसिद्धस्य प्रवृत्तिनिमित्तत्वात्पदाऽन्तरसापेक्षत्वादन्यत्राऽन्वेतुमयोग्यत्वाच्चेति भावः।

लघुशब्दरत्नः

युक्तिमदिति। न च 'उत्तरपदे लक्षणा, पूर्वपदं तात्पर्यग्राहकमि'ति मते तद्युक्तिमदिति वाच्यम्। तत्र मते हि पूर्वपदं निरर्थकं, स्वार्थप्रतिपादकं वा ?। नाऽऽद्यः। नैरर्थक्येन सर्वार्थकत्वाऽभावादेवाऽप्राप्तेः। नाऽन्त्यः। पूर्वपदार्थे विशेषणाऽन्वयाऽऽपत्तेः। विनिगमनाविरहेण पदद्वयेऽपि लक्षणौचित्याच्च। एकार्थीभाववादिभिस्तथा वक्तुमशक्यत्वाच्च। एवं च तद्घटकाऽवयवानां

[1] 'प्रतिपादनेन' इति क. ख. पाठः।
[2] 'सञ्ज्ञाशब्देन तन्त्रं शब्दे न' इति ख. पाठः। [3] 'सर्वत्राऽवृत्तस्य' इति क. पाठः।

सर्वादीनां सर्वाऽर्थवाचकत्वं नाऽस्ती'ति स्वोक्त्या सह विरोधः स्यादिति यत्किञ्चिदेतत् ।

यदपि व्याचख्युः—'त्वं पिता यस्ये'त्यादौ विग्रहवाक्ये प्राप्ता सञ्ज्ञा निषिद्धयते' इति । तदपि न । विग्रहवाक्यं हि लौकिकम्, अलौकिकं वा विवक्षितम् ? । नाऽऽद्यः । 'प्रक्रियावाक्येऽयं निषेधो, न तु लौकिके' इति-कैयटग्रन्थविरोधात् । प्रकृतसन्दर्भगतपूर्वाऽपरस्वग्रन्थविरोधाच्च । न द्वितीयः। तस्य 'युष्मद् सु पितृ सु' इत्याकारकत्वेन 'त्वं पिते'त्याकारकत्वाऽयोगात् ।

यदपि व्याचख्युः—'नन्वतिसर्वादौ सञ्ज्ञा न प्रवर्त्तते, त्वत्कपितृकादौ तु सञ्ज्ञा प्रवर्त्तते' इत्यत्र किं विनिगमकम् । तत्राऽऽह–अनङ्गकार्यत्वेनेति । 'अङ्ग'शब्दः समुदायपरः । तेनाऽतिसर्वेत्यत्राऽङ्गस्य सञ्ज्ञाऽपेक्षिता, सर्वनाम्नोऽङ्गात् स्मायादिविधानात् । अवयवमात्रस्य सत्यपि सर्वनामत्वे दोषाऽभावात् । समुदाये च समुदायाऽर्थं प्रति सर्वादेरुपसर्जनत्वात्तदन्तस्य सञ्ज्ञा न भवतीति युक्तम् । इह तु अवयवमात्रस्य सा चिकीर्षिता, न समुदायस्य, अवयवश्च स्वार्थमात्रप्रधान इति स्यात्प्रसङ्ग इति वैषम्यमस्ती-त्याशय' इति । तदपि न । अङ्गाऽधिकारे तदन्तविधेः सर्वसंमतत्वेनाऽवयवमात्रे

---

बृहच्छब्दरत्नः

अयोगादिति । 'अतिक्रान्तो भवकन्तम् अतिभवकानि'ति मूलग्रन्थे तु समासा-ऽर्थकथनम्, नाऽकच्प्राप्तिविषयभूतविग्रहप्रदर्शनम् । तस्याऽलौकिके प्राप्तत्वात् । इदं त्वया वक्तुमशक्यमिति स्पष्टमेव । वस्तुतस्तु पूर्वोक्तलौकिकविग्रहवाक्यस्य, समासस्य च दृष्टान्तत्वेनाऽतिक्रान्त इत्यादिग्रन्थो व्याख्येयः । समुदाये चेति । समु-दायस्य तु पाठाऽभावान्न सञ्ज्ञा । तदन्तविधिना तु न । समासाऽवयवीभूतस्य सर्वादेः स्वार्थं प्रत्यनुपसर्जनाऽर्थत्वेन स्वनिष्ठसर्वनामसञ्ज्ञायां कर्त्तव्यायां निमित्त-त्वेऽपि, समुदायं प्रत्युपसर्जनत्वेन तन्निष्ठसञ्ज्ञायामनिमित्तत्वादित्यर्थः ।

तदपि नेति । बुद्धिस्थोऽत्र हेतुः । अङ्गशब्दस्य समुदाये निर्बीजलक्षणा । किञ्चैतदशाऽर्थस्य सर्वनामसञ्ज्ञाप्रवृत्तौ निमित्तत्वे मानाऽभावो, गौरवञ्च । अपि चा-ऽवयवाऽवयवस्य[1] सर्वनामत्वे, समुदायस्य सर्वनामत्वाऽभावेऽपि दोष इत्याह— अङ्गाधिकारे तदन्तेति । किञ्चाऽतिसर्वशब्दाऽवयवसर्वशब्दस्य सर्वनामत्वे 'अश्वपुत्र-

---

लघुशब्दरत्नः

सर्वनामत्वाऽभाव एवोचित इति दिक् । स्वोक्त्येति । एतत्प्रकरणस्थयेत्यर्थः । स्वग्रन्थेति । तैरप्यलौकिके एव निषेधस्योक्तेरिति भावः ।

---

[1] 'अवयवमात्रस्य सर्वनामत्वे' इति पाठोऽत्र भवेत् ।

सत्यपि सर्वनामत्वे दोषो नास्तीत्युक्तेर्व्याहतत्वात्। 'अङ्गाऽधिकारपरिभाषया स्मै स्यादि'ति स्वग्रन्थविरोधाच्च।

अथाऽयमाशयः—'प्राक् प्रवृत्तापि सञ्ज्ञा अर्थान्तरोपसंक्रमे सति गते'ति। तर्हि अकजपि गच्छतु। ननु 'कार्यकालपक्षे स्मायाद्यर्थं पुनः सञ्ज्ञाऽपेक्षिता, सा च दुर्लभेत्याशय' इति चेत्। अस्त्वेवम्। न त्वसौ प्रकृतग्रन्थाऽर्थः। न्यासग्रन्थविसंवादेन 'इति न्यासकृन्मतमि'ति वाक्यशेषविरोधात्। न्यासग्रन्थस्त्वनुपदमेवोदाहरिष्यते।

यदपि व्याचख्युः—'अङ्गम् = अप्रधानं = बाध्यं, तद्विरुद्धम्-अनङ्गं = बाधकमित्यर्थः। तथा च 'कप्रत्ययाऽपवादत्वादकच् स्यादित्यर्थ' इति। तदपि क्लिष्टं, [1]व्यर्थं, न्यासग्रन्थाऽसंमतश्च। तथा हि—'त्वत्कपितृको मत्कपितृक' इति वृत्तिग्रन्थं व्याख्याय, न्यासकार उज्जग्राह—'ननु चाऽन्वर्थसञ्ज्ञाकरणादेवाऽत्र सञ्ज्ञानिरासे कृतेऽकच् न भविष्यति। न ह्यत्र सर्वाऽर्थता सम्भवति। विशेषविषयत्वात्। नैतदस्ति। समुदायो हि विशेषे वर्त्तते, पूर्वपदन्तु

बृहच्छब्दरत्नः

गजपुत्राऽतिसर्वा'[2] इति द्वन्द्वे 'विभाषा जसी'ति विकल्पाऽऽपत्तिः। न हि द्वन्द्वरूपसमुदायं प्रति सर्वशब्दस्योपसर्जनता। गच्छत्विति। 'त्वत्कपितृक' इत्यादावकचोऽपि निवृत्तिसम्भवेन सूत्रमेव व्यर्थमिति भावः। दुर्लभेति। 'अतिसर्वाये'त्यादौ सञ्ज्ञोपसर्जनीभूतानां प्रतिषेधात्। अर्थाऽन्तरसङ्क्रमात्पूर्वन्तु स्मैभावस्य नैव प्रवृत्तिः। अकचस्तु प्रवृत्तिरस्त्येव। अतस्तन्निवृत्त्यर्थं 'न बहुव्रीहावि'ति सूत्रं सार्थकम्। 'समासे' इत्यनुवर्त्तमाने वैयर्थ्याऽऽपत्त्या 'असमासे' इति पदं छिद्यते। तेन च वाक्यभेदेन पर्युदासाऽऽश्रयणेन 'अकृतव्यूह'परिभाषयाऽलौकिके[3] तदभावसिद्धेश्च, समासभिन्ने लोके प्रयुज्यमाने वाक्ये निषिद्ध्यते। अत एव सप्तमीनिर्देशश्चरि-

लघुशब्दरत्नः

अर्थान्तरोपसंक्रमे सति गतेति। तेन 'अतिसर्वाये'त्यादौ न दोषः। पुनः सञ्ज्ञा तु दुर्लभा। सञ्ज्ञोपसर्जनानां निषेधात्। पाठात्पर्युदासेन तदन्तग्रहणेनाऽपि न सञ्ज्ञा। अर्थाऽन्तरसंक्रमात्पूर्वन्तु स्मैभावस्य न प्रवृत्तिः। अकच्प्रवृत्तिस्तु ततः प्रागस्त्येवेति तन्निवृत्तये इदं सूत्रमित्यभिमानः। गच्छत्विति। निमित्ताऽपायपरिभाषयेति भावः। दुर्लभेति। उपसर्जननिषेधादिति भावः। इत्यर्थ इति। 'अनङ्गकार्यत्वेने'त्यस्याऽर्थ इति भावः।

क्लिष्टमिति। तत्त्वन्तु स्पष्टमेव। न्यासग्रन्थाऽसंमतिमुपपादयन् 'अनङ्गकार्यत्वेने'त्यस्य वैयर्थ्यमुपपादयति—तथा हीति। विशेषविषयत्वादिति। अन्यपदाऽर्थविशेषणत्वादित्यर्थः।

[1] 'व्यर्थञ्च' इति मुद्रितः पाठः।
[2] 'अतिसर्व इति द्वन्द्वे' इति क. ख. पाठः। [3] 'लौकिके' इति ख. पाठः।

सर्वाऽर्थताया अनपेतमेव। भवतु तर्हि अनयोरनन्तरयोरेतत्सूत्रविषयता, 'प्रियविश्वाये'त्यादेस्तु नोपपद्यते। न हि प्रियविश्वादयः [1]शब्दाः सर्वेषां नामानि। नाऽपि तदवयवभूतानां विश्वादिशब्दानां किञ्चित्सर्वनामकार्यमुपपद्यते। स्मैप्रभृतीनामङ्गकार्यत्वात्। विश्वादिशब्दानामनङ्गत्वात्। एवं मन्यते—'त्वत्कपितृको' 'मत्कपितृक' इत्यत्राऽकज्मा भूदित्येतदर्थं तावदेतदारब्धव्यं, 'प्रियविश्वाये'त्यादावपि विस्पष्टाऽर्थं भविष्यती'ति। अनेन हि न्यासग्रन्थेनाऽङ्गसञ्ज्ञाऽनपेक्षत्वमेवाऽर्थो लभ्यते, स च स्वोत्प्रेक्षितव्याख्यायां दूरोत्सारित एव।

यदपि व्याचख्युः—'यद्यपि सूत्रवार्त्तिककृतोरप्येतन्मतं, तथाऽपि न्यासकृता विवृतत्वात् 'न्यासकृन्मतमित्युक्तमि'ति। तदपि स्थवीयः। वार्त्तिककृताऽस्याऽर्थस्याऽस्पृष्टत्वात्। 'न्यासकृता 'समासे कृते सती'त्यादिवदता त्वदुक्ताऽर्थस्य [2]दूरत्यक्तत्वेन तद्विवृतत्वाऽभावाच्च।

यद्प्याहुः—'न्यासकृच्छब्देन सूत्रकार एव विवक्षित' इत्यादि। तदपि न। 'सूत्रकारमते बहुव्रीहावि'त्यादिपूर्वग्रन्थेन सह विरोधात्। 'भाष्यकारमते त्वि'ति ग्रन्थेन तस्य विच्छिन्नत्वाच्च। तस्मादिह प्राचः [3]प्रक्रियाग्रन्थः, तद्व्याख्यातृग्रन्थाश्चाऽऽपातरमणीया एवेत्यास्तां तावत्।

---

बृहच्छब्दरत्नः

तार्थः। तदेवाऽर्थत उक्तं[4] मूलग्रन्थे-'समासाऽर्थवाक्येऽपि ने'ति। तद् ध्वनयन्नाह-

---

लघुशब्दरत्नः

समुदायो हीति। तस्यैव तद्विशेषणत्वमित्यभिमानः। अनन्तरयोरिति। त्वत्कपितृकमत्कपितृकयोरित्यर्थः। अङ्गसंज्ञानपेक्षत्वमेवार्थ इति। एवं चाऽनुपदोक्ते[5] 'यदपी'ति पक्षे कप्रत्ययाऽपवादत्वस्याऽकचि [6]प्रसिद्धत्वादेवं वक्ररीत्या तदुक्तिर्व्यर्थेति बोध्यम्।

इत्यादि वदतेति। 'वृत्तिग्रन्थव्याख्याऽवसरे' इति शेषः।

---

१ 'शब्दा' इति मुद्रितेषु त्रुटितम्।

२ 'दूरात्यक्तत्वेन' इति घ. पाठः। 'दूरं त्यक्तत्वेन' इति ग. पाठः। 'दूरत्यक्तत्वेन' इति क. पाठः। ३ 'प्रक्रियाग्रन्थाः' इति क्वचित्पाठः।

४ 'तदेवार्थत्युक्तम्' इति क. ख. पाठः।

५ 'अनुपदोक्ते यदपीति पक्षे, तत्पूर्वोक्ते यदपीति पक्षे च अनङ्गकार्यत्वेनेत्यस्य वैयर्थ्यं स्पष्टमेवेति बोध्यम्' इति ख. ग. घ. पाठः।

६ 'प्रसिद्धत्वादेवोक्तरीत्या' इति मुद्रितः पाठः।

यदि तु प्रक्रियाग्रन्थोऽपि कथं चिद्भाष्याऽविरोधेन व्याख्येय इत्याग्रहस्तर्हीत्थं व्याख्यायताम्—'ननु प्रियविश्वायेति गौणतया गताऽर्थम्। अतो निष्कर्षमाह—सूत्रकारमते इति। बहुव्रीहाविति। 'चिकीर्षिते सती'ति शेषः। गौणत्वमात्र इति। मात्रशब्दोऽवधारणे। गौणत्वे एव, न तु ततः प्राक्। तथा च सूत्रं प्रत्याख्यातमिति भावः। न्यासकृन्मतस्य तु अतिफल्गुत्वात् 'स्वरूपव्याक्रियैव पराक्रिये'त्याशयेनाऽऽह—त्वत्कपितृक इत्यादि। एतच्च प्राचीनतत्तद्ग्रन्थपरिशीलनशालिभिर्विभावनीयम्।

प्रकृतमनुसरामः। संज्ञाकार्यमिति। सर्वनामसञ्ज्ञाप्रयुक्तं स्मायादिकमित्यर्थः। अन्तर्गणकार्यमिति। अद्ड् डतरादिभ्यः (७।१।२५) त्यदादीनामः (७।२।१०२) तदोः सः सौ (७।२।१०६) इत्यादिकमित्यर्थः।

तृतीयासमासार्थेति। इह पूर्वसदृश (२।१।३१) इति विहितः समासो गृह्यते, प्रतिपदोक्तत्वात्, न तु कर्तृकरणे कृता (२।१।३२) इति। तेन 'त्वयका कृतमि'त्यत्र निषेधो न।

---

बृहच्छब्दरत्नः

तेनेति। प्रत्यासत्तिन्यायेन प्रतिपदोक्ततृतीयासमाससम्बन्धिवाक्यस्यैव ग्रहणादित्यर्थः। न चैवमपि 'त्वयका सदृश' इत्यत्र निषेधः स्यात्, प्रतिपदोक्ततृतीयासमाससम्बन्धिवाक्यत्वादिति वाच्यम्। एतादृशविषये 'पूर्वसदृशे'त्यस्याऽपि लाक्षणिकत्वात्। 'सदृश'शब्दः सूत्रे विशिष्योपात्त इति चेत्। किं ततः?। न हि तस्य सर्वनामसञ्ज्ञा प्राप्ता या निषिध्येत। यस्य सर्वनामसञ्ज्ञा निषिद्धयते, स तु सूत्रे नोपात्त एव। यत्किञ्चित्पदोच्चारणेन प्रतिपदोक्तत्वन्तु 'कर्तृकरणे' इत्यस्याऽपि दुर्वारम्। अत एव 'त्वया पूर्व' इत्यादौ हेतुतृतीयाऽन्तेन 'पूवसदृशे'ति समासे, पूर्वखण्डे सर्वनामसञ्ज्ञानिषेधो न। तदंशे लाक्षणिकत्वात्। अत एव करोतिद्वारा सामर्थ्ये 'मासेन कृतः पूर्वो मासपूर्वः, तस्मै मासपूर्वस्मै' इति समासे, तत्सम्बन्धिनि 'मासकृताय पूर्वस्मै' इति वाक्ये च निषेधो न। पूर्वशब्दाऽनुच्चारणेन लाक्षणिकत्वात्। न चाऽत्राऽपि परत्वेन 'पूर्वसदृशे'ति विहितसमासेन भाव्यमिति वाच्यम्। हेतु-

---

लघुशब्दरत्नः

प्रतिपदोक्तत्वादिति। यदन्तत्वमादाय सर्वनामत्वप्राप्तिस्तमुच्चार्य विहितत्वात्। वाक्यमपि तत्सम्बन्ध्येव। प्रत्यासत्तेरिति भावः। तेन करोतिद्वारा सामर्थ्ये 'मासेन कृताय पूर्वस्मै मासपूर्वस्मै' इति समासे, तत्सम्बन्धिनि वाक्ये च न। तत्र वाक्यस्य प्रतिपदोक्तसमाससम्बन्धिन एव ग्रहणे फलाऽन्तरमप्याह—त्वयकेति। तृतीयासमासमात्रस्य ग्रहणे हि 'तदर्थे वाक्ये यत्र क्वाऽपि स्थितस्य सर्वादेः सञ्ज्ञा ने'त्यर्थेऽत्राऽपि स्यादिति भावः।

**समुदायस्येति।** तत्रैव द्वन्द्वशब्दस्य मुख्यत्वात्, न तु 'द्वन्द्वे यानि सर्वादीनी'ति सम्बन्धः। कारकाणां क्रिययैवाऽन्वयात्। न च 'द्वन्द्वे विद्यमानानि यानी'ति सम्बन्धः। विद्यतिक्रियाऽध्याहारे गौरवात्। निषेध्याया

बृहच्छब्दरत्नः

तृतीयायां परस्पराऽन्वये चारितार्थ्ये, 'करोति'द्वारा सामर्थ्ये प्रवृत्तौ मानाऽभावात्। 'तृतीया तत्कृते'ति सूत्रन्तु 'कृत'ग्रहणसामर्थ्यात्करोतिद्वारा सामर्थ्य प्रवर्त्तते इति स्पष्टं भाष्यादौ। अत एवाऽर्थभेदेन 'मासपूर्वस्मै' 'मासपूर्वायै'ति बोध्यम्। न चैवं 'पूर्वः समासे' इत्येव ब्रूयात्। 'पूर्वा-ऽपर-प्रथम-चरम-जघन्ये'तिप्रतिपदोक्तसमाससम्बन्धिलौकिकवाक्यस्य ग्रहणाऽऽपत्तौ, 'पूर्वस्माद्वैयाकरणादि'त्यादावपि निषेधाऽऽपत्तेः। 'परनिष्ठितविभक्त्या समास' इति पक्षस्याऽपि भाष्याऽऽरूढत्वात्। किञ्च 'मासाऽवरायै'त्यादौ निषेधाऽर्थं यथान्यासतैवोचिता। न चैवं यथान्यासेऽपि 'पूर्वेण वैयाकरणेने'त्यत्राऽपि निषेधः स्यात्। न च फलाऽभावः। शिट्प्रयुक्तस्वराऽप्रवृत्तेरेव फलत्वादिति वाच्यम्। 'पूर्वाऽपरे'तिसूत्रे 'तृतीया'पदाऽनुच्चारणेन विलम्बोस्थितित्वेन 'तृतीयासमास'पदेनाऽग्रहणात्। एवञ्च 'समासे' इत्येव च्छेदोऽस्तु। तत्र च समासाऽर्थकं वाक्यं गृह्यते। तच्च नाऽलौकिकम्। अदन्ते काऽकचोरविशेषात्। समासस्वरेण शिट्स्वरस्य बाधाच्च। 'तृतीयासमासे' इति सूत्रे लाक्षणिकसमासस्य न ग्रहणम्। तृतीयाऽन्तपूर्वपदस्योत्तरपदार्थे उपसङ्क्रमादुपसर्जनत्वेन सर्वनामसञ्ज्ञाया अप्राप्तेः। ध्वनितञ्चेदं 'त्यदादीनि चे'तिसूत्रे भाष्यकैय्यटयोरिति कश्चित्। 'द्वन्द्वे चे'त्यनेनाऽवयवानां निषेध' इति ब्रुवतां मते तदन्ते सञ्ज्ञाप्रवृत्तिरस्ति, उत न?। आद्यपक्षमभिप्रेत्याऽऽह—तत्रैवेति। न चेति। 'सर्वादीनी'त्यनुवर्त्तते। एवञ्चाऽगत्या 'विद्यमानानी'त्यध्याहार्यमिति भावः। नन्वेवमपि सर्वादिशब्दस्य तदन्तपरत्वेन, सर्वाद्यन्तत्वेन द्वन्द्वस्यैवाऽभिधानात्समुदायनिषेधो दुर्वार इति चेन्न। ज्ञापकादिना तदन्ते सञ्ज्ञायाः प्रवृत्तावपि, सर्वादिशब्दस्य तदन्तपरत्वे मानाऽभावात्। अभेदे आधाराऽऽधेयभावाऽनुपपत्तेश्च। न च व्यपदेशिद्भावात्सिद्धिः। 'अयमेव ज्येष्ठः पुत्रोऽयमेव मध्यमोऽयमेव कनिष्ठः,' 'शिलापुत्रस्येदं शरीरमि'त्यादौ लोके एकस्मिन्नप्यनेककृतव्यवहारस्य दर्शनेन, 'दीर्घ इणः किती'त्यादिज्ञापकाच्चेष्टसिद्धौ,[१] 'वचनाल्लोकविज्ञानात्सिद्धमि'त्यादिना भाष्यादौ प्रत्याख्यानात्। न हि आदित्वादिव्यवहारवदेकस्मिन् घटादावाधाराऽऽधेयभावो दृश्यते। अत एव 'मिदचोऽन्त्यात्पर' इति सूत्रे सप्तमीनिर्देशो न कृतः। 'यतश्च निर्द्धारणमि'ति सूत्रन्तु पक्षे षष्ठी-पञ्चमी-विधानाऽर्थमित्याहुः।

**निषेध्याया इति।** [२]'द्वन्द्वे' इति सप्तम्यन्तस्य निषेध्यक्रियायामधिकरणत्वेनाऽन्वये 'द्वन्द्वाऽधिकरणकसर्वनामसञ्ज्ञासत्ताऽभाव' इत्यर्थे निष्पन्ने, 'सर्वादीनी'त्यस्य

[१] 'इष्टसिद्धा' इति क. ख. खण्डितः पाठः। 'इष्टसिद्धचा' इति वा पाठः।
[२] 'द्वन्द्वे इति' इति ख. नास्ति।

भवतिक्रियाया एव प्राधान्येन, तदन्वयस्यैव न्याय्यत्वाच्च । किञ्च त्यदादीनां द्वन्द्वो नास्ति । एकशेषेण बाधितत्वात् । ततः प्राचीनास्त्वदन्तास्तत्र काऽकचोर्न विशेषः । न च 'दक्षिणोत्तरपूर्वाणामि'त्यत्रेष्टमपि पुंवद्भावं निषेद्धुमिदं किं न स्यादिति वाच्यम् । 'सर्वनाम्नो वृत्तिमात्रे' इति मात्रग्रहणं हि क्वचित्सर्वनामत्वेन दृष्टानां सम्प्रति सञ्ज्ञाऽभावेऽपि पुंवद्भावाऽर्थम् । अत एव 'दक्षिणपूर्वायै' इत्यत्र सञ्ज्ञाऽभावेऽपि पुंवद्भावः । तस्मान्न्यायबलात्,

बृहच्छब्दरत्नः

गौरवात्, अनन्वयात्, निष्फलत्वाच्च नाऽनुवृत्तिरिति ध्येयम् । अत एव 'अनेकाल् शित्सर्वस्ये'ति सूत्रे शिद्ग्रहणं चरिताऽर्थम् । अन्यथोपदेशे [1]'वर्त्तमानो यो हल्, स इत्सञ्ज्ञो भवती'त्यर्थाऽङ्गीकारे बाधकाऽभावेनाऽनेकाल्त्वात्सर्वादेशोत्तरमित्सञ्ज्ञालोपयोः सत्त्वेनेष्टसिद्धौ, किं तेन ?। यत्तु 'यत्र हि गुणः कृताऽऽत्मसंस्कारः प्रधानोपकाराय महते प्रभवति, तत्राऽऽत्मनोऽपि संस्कारमनुभूय प्रधानेन सम्बध्यते' इति न्यायेनाऽदोष' इति । तन्न । यत्र हि प्रधानाऽन्वये यत्फलं, तदपेक्षयाऽधिकं फलं, तस्य चेष्टत्वे दृढतरं प्रमाणं, पक्षयोः[2] फलाऽन्तराऽभावश्च, तत्रोक्तन्यायः । तथैवाऽर्थस्य प्रतीतेः । यथा 'क्ङिति चे'ति सूत्रे 'क्ङिती'ति न प्रधानभूतया क्रियया सम्बध्यते । किन्तु तच्छेषभूताभ्यां गुण-वृद्धिभ्याम् । तथा च व्यवहिते, अव्यवहिते च निषेधः सिद्धो भवति । क्नोः कित्करणञ्चाऽत्र प्रमाणमिति स्पष्टं कौस्तुभे । अत्र च साक्षात् प्रधानाऽन्वये यत्फलं, न तदनन्वये साधयितुं शक्यम् । तदनन्वये यत्फलं, तस्य चेष्टत्वे न दृढतरं प्रमाणम्, अप्रधानाऽन्वये 'सर्वादीनी'त्यस्याऽनुवृत्तिरिति [3]नोक्तन्यायप्रवृत्तिः । युक्तञ्चैतत् । अन्यथा 'साक्षात्प्रधानाऽन्वय' इति कथैवोच्छिद्येत । द्वितीयपक्षस्तु 'येन विधिरि'त्यादिसूत्रस्थभाष्यादिविरुद्धः ।

दूषणाऽन्तरमप्याह—किञ्चेत्यादि । निषेधेऽपीति । अपिर्भिन्नक्रमो[4] बोध्यः ।

लघुशब्दरत्नः

न्याय्यत्वाच्चेति । किञ्चाऽवयवमात्रनिषेधे 'प्रयोजनं सर्वनामाऽव्ययसञ्ज्ञायामि'ति येन विधिः (१।१।७२) इति सूत्रस्थभाष्यप्रामाण्येन तदन्तस्य सञ्ज्ञायां 'वर्णाश्रमेतराणामि'तिभाष्यप्रयोगाऽनुपपत्तिः । न ह्यत्र सर्वाऽर्थवाचकत्वं नाऽस्तीति वक्तुं शक्यम् । मानाऽभावात् । लोकव्युत्पत्तिसिद्धस्य तस्याऽनेन निषेद्धुमशक्यत्वात् । नाऽपि तस्य सर्वादिपाठो निषिद्धचत

१ 'वर्त्तमानो लो यो हल्' इति क. ख. पाठः । तत्र 'लो' इति लेखकप्रमादादधिकं प्रविष्टमिति प्रतीमः ।

२ 'पक्षयोः पदान्तराऽभावश्च' इति क. ख. पाठः ।

३ 'इति चोक्तन्यायप्रवृत्तिः' इति क. ख. पाठः ।

४ भिन्नक्रमः='पक्षे' इत्युत्तरं योज्य इत्यर्थः ।

फलबलाच्च समुदायग्रहणमेवोचितम्। यद्यपि 'त्वच्छब्दस्तान्त' इति पक्षेऽवयवनिषेधेऽपि फलं सुवचं, तथाऽपि शास्त्रस्याऽल्पविषयता स्यात्, न्यायश्च विरुध्येतेति भावः। सुट्प्रसङ्ग इति। 'वर्णाश्रमेतराणामि'त्यादाविति

बृहच्छब्दरत्नः

'अदन्त' इति पक्षेऽपि 'वर्णाश्रमेतरके' 'वर्णाश्रमेतरका' इति रूपद्वयाऽभावसाधनेन फलं सुवचम्। एवं 'द्व्येकयोरि'ति निर्देशेन 'त्यदादीनी'त्येकशेषाऽप्रवृत्तौ द्विशब्दैकशब्दयोर्द्वन्द्वे फलं बोध्यम्। शास्त्रस्याल्पेति। अभावमात्रतात्पर्य्यकत्वेनेत्यर्थः। सञ्ज्ञानिषेधस्य हि सञ्ज्ञानिमित्ताऽनेककार्यतात्पर्यकत्वं युक्तम्। सञ्ज्ञासूत्रस्याऽनेककार्योद्देशेन प्रवृत्तत्वात्। त्रलादेस्तु नाऽवयवोद्देश्यतया प्रवृत्तिः। सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वाऽभावात्। 'विष्वग्देवयोरि'त्यादीनान्तु सर्वनामपूर्वपदकेऽप्राप्तिः। तदन्तविध्यङ्गीकारे तु समुदायनिषेधे हि फलकल्पनैवोचिता। सुडभावोऽपि न प्रयोजनम्। समुदायनिषेधे हि निमित्तविघटनद्वारा त्रलाद्यभावः शाब्दं फलम्। अकच्प्रवृत्तिरार्थं फलम्। 'विभाषा जसी'ति सूत्रस्थम् 'अकज्झि न भवती'ति भाष्यन्तु 'समुदायनिष्ठकुत्सादिबोधकोऽकज्[1] न भवती'त्यभिप्रायकम्। एकाऽर्थीभावाऽऽपन्नस्याऽवयवस्य निष्कृष्य कुत्सादियोगाऽभावेनाऽवयवनिमित्ता 'क'प्रवृत्तिरेव नेत्यपि वदन्ति।

न्यायश्च विरुध्येतेति। अयम्भावः—'तृतीयासमासे' इति नाऽवयवानां निषेधः। अदन्ते काऽकचोर्विशेषाऽभावात्। स्वरस्तु समासनिमित्त एव। सतिशिष्टत्वात्। न च सर्वादीनामेव सर्वनामसञ्ज्ञानिषेधे समुदायस्य सर्वनामाऽन्तत्वाऽभावस्याऽऽर्थसमाजग्रस्तत्वात् 'मासपूर्वाये'त्यादौ स्मायाद्यभावः प्रयोजनमिति वाच्यम्। सर्वादिपठितसर्वाऽर्थवाचकाऽन्तत्वेन सर्वनामसञ्ज्ञाया दुर्वारत्वात्। समुदायनिषेधेऽपि तदभावस्योपपादयितुं शक्यत्वाच्च। परम्परासम्बद्धफलग्रहणे

लघुशब्दरत्नः

इति[2] युक्तम्। तस्याऽप्रक्रान्तत्वात्। अविधेयत्वाच्च। न च निषेधवैयर्थ्यम्। अवयवकुत्साबोधकाऽकज्व्यावृत्त्या चारितार्थ्यात्। तदेव ध्वनयन्नाह—फलबलाच्चेति।

फलं सुवचमिति। तथा[3] 'दक्षिणोत्तरपूर्वकाणामि'त्यादाववयवनिषेधेन कप्रत्यये, समुदायसञ्ज्ञाऽभावोऽपि फलं बोध्यम्[4]। द्वन्द्वाऽवयवमात्रे सुन्दरादिविशेषणाऽन्वयाऽभाववत्

[1] 'बोधकाऽकज्न भवतीति' इति क. ख. पाठः।

[2] 'इति युक्तम्। तस्याऽविधेयत्वाच्च। तदेव ध्वनयन्नाह—फलबलाच्चेति' इति क. ख. पाठः।

[3] 'तथा' इत्यादिः 'फलं बोध्यम्' इत्यन्तः पाठः क. ख. ग. नास्ति। घ. तु 'प्रक्षिप्तोऽयं पाठ' इति टिप्पणीपूर्वकं कुण्डलितः। भावप्रकाशेऽपि नाऽस्य व्याख्या दृश्यते।

[4] 'बोध्यम्' इति मुद्रितेषु नास्ति।

**भावः। न च निषेधसामर्थ्यम्। अनाङ्गस्य त्र-तसिलादेर्व्यावृत्त्या चरिताऽर्थत्वात्।**

बृहच्छब्दरत्नः

मानाऽभावाच्च। नन्वेवं 'द्वन्द्व' इति प्रथमाऽन्तेनैवोपपत्तौ सप्तमीनिर्देशो व्यर्थ इति चेन्न। उक्तरीत्याऽवयवनिषेधस्य वक्तुमशक्यत्वेन सर्वेषां तुल्यत्वात्। चादिवदस्याऽपि सत्त्वाच्च। प्रक्रमाऽनुरोधेन सप्तमीनिर्देशाच्च। 'द्वन्द्व'शब्दस्याऽपि सर्वनामत्वाऽभावबोधनाऽर्थं[1] तस्याऽऽवश्यकत्वाच्च। न हि प्रथमैकवचने सर्वनामकार्यं प्राप्नोति। 'द्वन्द्व'शब्दस्तु 'द्वि'शब्दस्य द्वित्वेन व्युत्पन्न' इति 'द्वन्द्वं रहस्यमर्यादे'ति सूत्रे स्पष्टमाकरे। तत्र तदन्तविधिना, स्थानिवद्भावाद्वा सर्वनामकार्यं दुर्वारम्। न च सञ्ज्ञाभूतत्वान्न दोष इति वाच्यम्। 'द्वन्द्वं युद्धं वर्त्तते' 'द्वन्द्वानि सहते धीर' इत्यादावसञ्ज्ञात्वात्। 'सञ्ज्ञाभूतस्य सर्वादिषु पाठाऽभाव' इत्यर्थस्य युक्तिसिद्धत्वेन, भाष्यादावुक्तत्वेन च [2]असञ्ज्ञाभूताऽवयवम्, अवय-

लघुशब्दरत्नः

कुत्सादिविक्षाया अभावः। समुदाये तद्विवक्षायान्तु समुदायोत्तरप्रत्ययेन तदुक्तेर्नाऽवयवात्तदुत्पत्तिरिति चिन्त्यमेतत्। समुदायनिषेधे तु द्वन्द्वस्य सञ्ज्ञिनोऽधिकरणत्वविवक्षया सप्तमी बोध्या। यद्वा इयं सप्तमी प्रथमाऽर्थे। 'अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयावि'ति-भाष्योक्तैतत्प्रकरणविषयस्मृत्यन्तरेण, [3]तद्विषये न बहुव्रीहौ (१।१।२९) इत्येतत्साहचर्येण वा एतत्प्रकरणस्थसप्तमीनिर्देशानां तदर्थकत्वौचित्यात्। किञ्च विभाषा जसि (१।१।३२) इत्यनेन फलाऽभावादवयवनिषेधाऽभावे, तत्साहचर्येणाऽर्थाऽधिकाराऽनुरोधेन च द्वन्द्वे च (१।१।३१) इत्यस्याऽप्यवयवनिषेधकत्वाऽभावः। एतेन 'सप्तमीनिर्देशसामर्थ्यात्, बहुलक्ष्यसंस्काराऽनुरोधाच्च 'विद्यमानानी'त्यद्ध्याहारेण समुदायस्याऽवयवानां चाऽयं निषेधः। तत्र समुदायस्य व्यपदेशिवद्भावेन निषेधः। आधाराऽऽधेयभावेऽपि व्यपदेशिवद्भावस्य अनद्यतने लङ (३।२।१११) तुल्यास्य (१।१।९) प्रत्ययस्थात् (७।३।४४) इत्यादिसूत्रस्थभाष्यादौ स्पष्टत्वात्। तत्फलञ्च 'वर्णाश्रमेतराणामि'त्यादाववयवसर्वनामत्वप्रयुक्तोऽपि नाऽकजि'त्यपास्तम्। 'इतरक'शब्देन समासेऽतिभवकानित्यादाविव तच्छ्रवणस्य दुर्वारत्वेन, तन्निषेधे [4]फलाऽभावाच्चेति दिक्। व्यावृत्त्येति। 'समुदायात्प्राप्तस्ये'ति शेषः।

[1] 'बोधनाऽर्थे' इति क. ख. पाठः।

[2] 'असञ्ज्ञाभूताऽवयवं, स्थानिनं वा' इति क. ख. पाठः।

[3] 'तद्विषय-'न बहुव्रीहौ' इति क. पाठः।

[4] 'फलाऽभावाच्च। 'विभाषा जसी'तिसूत्रस्थम् 'अकज्झि न भवती'ति भाष्यन्तु 'समुदायनिष्ठकुत्साबोधकोऽकज् न भवती'त्यर्थपरम्। एवञ्च समुदायनिष्ठकुत्साविवक्षायां 'वर्णाश्रमेतरका' इत्येव। अवयवमात्रनिष्ठतद्विवक्षायां 'वर्णाश्रमेतरके' 'वर्णाश्रमेतरका' इत्युभयमिति दिक्' इति ख. ग. पाठः। घ. तु कुण्डलितः।

**जसाधारमिति।** यद्यपि शीभावेन जस् अपह्रियते, तथाऽपि औपचारिकमाधारत्वं बोध्यम्। यद्वा जसः इः जसिः, तस्मिन्। सौत्रः सप्तम्या लुक्, इत्यर्थतो व्याचष्टे—**जसाधारमिति।**

**जराया जरसन्यतरस्याम्** (७।२।१०१) **विभक्ताविति।** एतच्च अष्टन आ विभक्तौ (७।२।८४) इत्यतोऽनुवर्त्तते। तेन 'जराया इदं जारमि'-त्यादौ नाऽतिव्याप्तिरिति भावः। **पदेति।** पदमङ्गं च विशेष्यं, विशेषणेन च तदन्तविधिरिति भावः। **तदनुसारिभिरिति।** इनातोः पूर्वविप्रतिषेधे एकसूत्रोपात्तत्वात्स्यादेशोऽपि ग्रहीतुमुचित इति तेषामाशयः। अत एव— 'वीतजन्मजरसः परं शुचि ब्रह्मणः पदमुपैतुमिच्छतामि'ति भारविप्रयोग-मसमञ्जसमिति मत्वा 'वीतजन्मरजस' इति पठनीयमिति तैरुक्तम्।

**एतच्चेति।** भाष्यकृता हि 'टाङसि' (७।१।१२) इति सूत्रे इनाऽतौ प्रत्याख्याय, नादेशमदादेशं च विधाय, नादेशे परे एत्त्वं योगविभागेन साधितम्—बहुवचने झल्येत् (७।३।१०३), ओसि च (७।३।१०४), तत आङि (७।३।१०५)। 'आङि च परेऽत एत्त्वं स्यात्'। रामेण। तत 'आपः सम्बुद्धौ च' (७।३।१०६)। 'आप एकारः स्यात्सम्बुद्धौ, आङि, ओसि च'।

---

**बृहच्छब्दरत्नः**

विनं वा निमित्तीकृत्य प्राप्तसर्वनामसञ्ज्ञाकार्यस्य गीर्वाणगुरुणाऽपि निवारयितु-मशक्यत्वेनोक्तप्रकारस्याऽऽवश्यकत्वाच्चेत्याद्यग्रे निरूपयिष्यामः।

जरस इति। ननु 'जरस' इत्यादौ 'स्वादिष्विति'पदसञ्ज्ञायाः सत्त्वेन रुत्वं दुर्वारम्। न च भत्वेन बाधः। 'कार्यं विना सञ्ज्ञाया अप्रवृत्तिरि'ति प्रगृह्य-सञ्ज्ञाप्रकरणे भाष्यादौ सिद्धान्तितत्वात्, युक्तत्वाच्च। न च पदत्वाऽभाव एव फलम्। अशास्त्रीयफलस्याऽयुक्तत्वात्। 'राज्ञ' इत्यादौ नलोपाऽल्लोपयोः सम्भावित-त्वेन सञ्ज्ञाद्वयप्रसक्तौ 'आ कडारादि'त्यस्य प्रवृत्तिर्युक्तैवेति चेत्। अत्रोच्यते— वचनसामर्थ्येन 'सञ्ज्ञे'त्येतावतैवैकत्वविवक्षया 'एके'त्यर्थलाभे, 'एके'त्युक्ति-रेकैवेत्यर्थलाभाऽर्थम्। तत्सामर्थ्याद्बाध्यसञ्ज्ञाया बाधकसञ्ज्ञाविषये न प्रवृत्तिः। अत एव 'सञ्ज्ञे'ति चरितार्थम्।

---

**लघुशब्दरत्नः**

यद्यपीति। 'जसी'त्याधारसप्तमीति भावः। जस इरिति। इकारेण ईकारग्रहणं बोध्यम्। प्रत्याख्यायेति। प्रत्याख्यानेन चेदं ध्वन्यते—'वक्ष्यमाणक्लेशपरिहाराऽर्थं एव-इकारो, न तु फलाऽन्तरेऽभिनिवेष्टव्यमि'ति। अदादेशे तु 'अदि'ति च्छेद एव सूत्रतात्पर्यमि'ति।

न चैवम् 'अनेने'त्यत्र हलि लोपः स्यादिति वाच्यम् । अनादेशस्य नकारे परे विशिष्य विधानात् । तथा हि—'अनापि' (७।२।११२) । 'नकारे, आपि च परेऽन् स्यादि'त्यर्थः । सूत्रे 'अ' इति नान्तस्य नपुंसकनिर्देशः । न च ङसे-रदादेशे कृते पररूपं स्यादिति वाच्यम् । अकारोच्चारणसामर्थ्याद्दीर्घसम्भवा-दि'ति । तथा च जराया जरसन्यतरस्याम् (७।२।१०१) इति सूत्रे उक्तं, 'गोनर्दीयस्त्वाह[1]—'अतिजरैरिति भवितव्यं, सन्निपातपरिभाषये'ति । एवञ्च[2] 'पूर्वविप्रतिषेधेने'त्यादि सर्वं भाष्यविरुद्धमित्यर्थः ।

---

बृहच्छब्दरत्नः

अ इति नान्तस्येति । ननु भाष्याऽविरोधेन 'अदि'ति पदच्छेदे एव सूत्र-तात्पर्यमिति वक्तुं शक्यम् , इनादेशे तु इकारोच्चारणं सूत्रकारकृतं व्यर्थमेवेति चेन्न । 'अनाप्यक' [3]इत्यत्रत्याऽकाराऽन्तो वा, नान्तो वेति सन्देहवारणाऽर्थ-मिकारोच्चारणात् । सन्देहवारणमात्रफलकतया 'ऋदोरबि'त्यादौ सूत्रेष्वक्षराणा-माधिक्यस्योपलम्भात् । किं बहुना, स्वकृतशास्त्रबाधोऽपि स्पष्टप्रतीत्यर्थः[4] क्वचिदा-श्रीयते, 'अनाप्यक' इत्यादौ 'न लोपः प्रातिपदिकाऽन्तस्ये'त्यादीनां यथा । उक्ताऽऽशये च भाष्यमपि प्रमाणमिति मूलग्रन्थाऽर्थः । एवञ्च पूर्वविप्रतिषेधे, सन्निपातपरिभाषाबाधे च न किञ्चिन्मानम् । गोनर्दीय आहेति । 'गोनर्दः पर्वतः, तत्र भवो भाष्यकार' इति कैयटादयः । 'गोनर्दीयो वार्त्तिककार' इत्यपरे । अतिजरै-रिति । नन्वत्र जरसादेशो दुर्लभः, सूत्रे ह्रस्वाऽन्तस्याऽनिर्देशात् । तथा च तद-प्राप्तौ 'सन्निपात'परिभाषोपन्यासो व्यर्थ एव । न च 'स्थानिवदादेश' इति सूत्र-प्रणयनात् स्थानिद्वारा आदेशोऽपि निर्दिष्ट इति वाच्यम् । 'येन विधिस्तदन्तस्ये'ति-वचनप्रामाण्यात्तदन्तस्याऽपि निर्दिष्टत्वाऽऽपत्तेः, व्यावर्त्त्याऽभावेन परिभाषाया वैयर्थ्याऽऽपत्तेश्चेति चेत् । अत्रोच्यते—'जराया' इति सूत्रे टाबन्तनिर्देश इति तावन्निर्विवादम् । एवञ्च ह्रस्वाऽन्तनिर्देशोऽप्यावश्यकः । तं विना तन्निर्देशस्य कर्त्तुमशक्यत्वात् । तदन्तनिर्देशे तु न किञ्चिन्मानम् । वस्तुतस्तु न स्थानिवत्सूत्रं 'जराया' इति सूत्रस्थ-'जरा'-शब्दो ह्रस्वाऽन्त-'जर'-शब्दपरोऽपी'त्यर्थपरम् । किन्तु 'ह्रस्वाऽन्ते 'जर'शब्दे दीर्घाऽन्त'जरा'शब्दाऽऽरोप' इत्यर्थपरम् । वतिघटितवाक्येन तादृशाऽर्थस्यैव बोधनात् । एवञ्च ह्रस्वाऽन्ते आदेशप्रवृत्तौ न 'निर्दिश्यमानस्ये'ति परिभाषाया बाधः । 'येन विधिस्तदन्तस्ये'त्यस्य तु सञ्ज्ञासूत्र-त्वेन 'विधिसूत्रस्थो 'जरा'शब्दो जराशब्दाऽन्तपरोऽपी'त्यर्थपरत्वम् । एवञ्च तदन्ते

---

१ 'गोनर्दीय आह' इति घ. ङ. पाठः ।
२ चकारो ङ. नास्ति ।
३ 'इत्यत्राऽकारान्तो वा' इति क. ख. पाठः ।
४ 'स्पष्टप्रतीत्यर्थे' इति ख. पाठः ।

**पद्दन्नो** (६।१।६३)। अत्र शस्प्रभृतयो निमित्ततयोपात्ताः। ते च पदाद्यादेशाऽनुरूपान् प्रकृतिविशेषानाक्षिपन्तीत्याह—**पाददन्तेति**। यद्यपि शीर्षंश्छन्दसि (६।१।६०) इत्यतोऽत्र 'च्छन्दसी'त्यनुवर्त्तते, तथाऽपि भाषायामपि क्वचिद्भवति, 'मासश्छन्दसी'ति वार्त्तिके छन्दोग्रहणाज्ज्ञापकादिति वक्ष्यते। **प्रामादिकमिति**। तथा हि 'आस्नो वृकस्य वर्त्तिकामभीके' इतिमन्त्रे 'मुखादि'त्यर्थः। औचित्यात्। 'वृकस्य चिद्वर्त्तिकामन्तरा स्यादि'तिमन्त्राऽन्तरसंवादाच्च। एवं 'हव्या जुह्वान आसनि' 'आसन्यं प्राणमूचुरि'-

---

**बृहच्छब्दरत्नः**

आदेशप्रवृत्तौ परिभाषाविरोधः स्पष्ट एव। 'श्रूयमाणवर्णाऽधिकवर्णाऽस्थानित्वबोधक-शास्त्रा-ऽसहकृत-लक्ष्याऽसंस्कारका-ऽवान्तरवाक्ये स्थानित्वेन श्रूयमाणशब्दस्याऽऽदेशेन [1]निवृत्तिरि'ति 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'तिपरिभाषाया अर्थ इति सुधियो विभावयन्तु।

नतु 'शसूप्रभृतिष्वि'ति आदेशानां न विशेषणम्। शास्त्रप्रवृत्तिकाले तेषामभावेन पौर्यापर्याऽसम्भवात्। स्थानिनस्तु सूत्रे नोपात्ताः। एवञ्च 'शसूप्रभृतिष्वि'-त्यनेन स्थानिन एवोपात्ताः। सप्तमीनिर्देशस्तु 'शेषे लोप' इतिवद्बोध्य[2] इति भ्रमं निराचष्टे[2]—अत्रेति। अत एव परत्र पाठः। स्थानिलाभे उपायमाह—ते[3] चेति। ये निमित्ततयोपात्तास्ते शस्प्रभृतय इत्यर्थ' इति सुधियो विभावयन्तु। मासश्छन्दसीति। न चैवं[4] 'ये च तद्धिते' इत्यादावनुवृत्तिः[5] स्यादिति वाच्यम्। मण्डूकप्लुतेराश्रयणात्। विकल्पाऽनुवृत्त्यर्थं तस्या आवश्यकत्वाच्च। इदञ्च कैयटाऽनुरोधेनोक्तम्। वस्तुतस्तु छन्दोग्रहणाऽननुवृत्तिरेव युक्तेति स्पष्टं मूलग्रन्थे। प्रत्ययविशेष इति। यद्यपि 'वृषण्वस्वश्वयोरि'त्यनेन अप्रत्ययेऽपि भत्वं विधीयते, तथाऽप्यङ्गेनाऽपि प्रत्ययाऽऽक्षेपा-

---

**लघुशब्दरत्नः**

ते चेति। ये निमित्ततयोपात्तास्ते शस्प्रभृतय इत्यर्थः। अनुरूपानिति। स्वार्थबोधनसमर्थान्, स्वसदृशवर्णवतश्चेत्यर्थः। वस्तुतो वा शोकष्यञ् (६।३।५१) इतिवद्व्यवस्थाऽर्थमेवेति बोध्यम्। अनुवर्त्तते इति। अस्य 'इति प्राञ्च' इति शेषः। ज्ञापकादिति। तन्निवृत्तेरिति भावः। अत एव भाष्ये तदनुवृत्तिर्नोक्ता।

---

[1] 'आदेशो, न निवृत्तिः' इति क. ख. पाठः।

[2] अयं पाठः क. ख. खण्डितः।

[3] 'ते चेति। अर्थं इति सुधियो विभावयन्तु' इत्येवं खण्डित एव क. ख. पाठः। स च भावप्रकाशधृतपाठात्पूरितोऽस्माभिः।

[4] एवं='छन्दसी'त्यस्याऽनुवृत्तावित्यर्थः।

[5] अनुवृत्तिः='छन्दसी'त्यस्याऽनुवृत्तिरित्यर्थः।

त्यादावपि। व्याख्यातश्च तथैव वेदभाष्येषु[1]। अत एव हरदत्तेनाऽपि काशिकायाः प्रामादिकत्वमाविष्कृतमिति ध्येयम्।

अल्लोपोऽनः (६।४।१३४)। अत्र प्राञ्चः—'अन्नन्तस्य भस्याऽङ्गस्याऽकारस्य लोपः स्यादि'ति। तथा सति 'तक्ष्णे'त्यादौ तकाराऽकारस्याऽपि लोपः स्यात्। 'भस्याऽङ्गस्याऽनोऽकारस्ये'ति व्याख्याने तु 'अनसा,' 'मनसे'-त्यादौ स्यात्। तन्त्राऽऽवृत्त्यादिना 'अन्नन्तस्य भस्याऽनोऽकारस्ये'ति व्याख्यानेऽपि 'अनस्तक्ष्णे'त्यादावतिव्याप्तिरेव। अतो व्याचष्टे—अङ्गावयव इत्यादि। 'भस्ये'त्यनेनाऽऽक्षिप्तः प्रत्ययविशेषोऽङ्गं चेति द्वयमनो विशेषणम्। अन् तु अकारस्य। अतो नोक्तदोष इति भावः। एतच्च श्यङः सम्प्रसारणम्

---

**बृहच्छब्दरत्नः**

दुक्ताऽर्थलाभः। [2]वत्प्रत्यये तु अन्नन्तभिन्नानामेवाऽस्तीति न कश्चिद्दोषः। ननु-आक्षेपोऽत्राऽनुमानम्, उत भसञ्ज्ञासूत्रेणैकवाक्यता?। नाऽऽद्यः। भत्वेनाऽङ्गनिष्ठस्य यजादिपरत्वस्याऽऽक्षेप्तुं शक्यत्वेऽप्यवयवनिष्ठस्याऽऽक्षेप्तुमशक्यत्वात्। 'यचि भमि'त्यत्र 'यस्मात्प्रत्ययविधिरि'त्यस्याऽनुवृत्त्याऽङ्गस्यैव तद्विधानात्। स्पष्टञ्चेदम् 'आ कडारादेका सञ्ज्ञा' 'न लुमताऽङ्गस्ये'त्यादौ भाष्ये। अन्त्येऽपि यथोद्देशपक्षः, कार्यकालपक्षो वा। नाऽऽद्यः। यथोद्देशपक्षे एकवाक्यताया अभावात्। सामग्र्यां सत्यामवाऽन्तरवाक्योत्पत्तौ बाधकाऽभावेन वाक्यैकवाक्यत्वाच्च। एतेनाऽन्त्योऽपि निरस्तः। स्पष्टञ्चेदं प्रगृह्यसञ्ज्ञासूत्रभाष्यकैयटविवरणग्रन्थे। किञ्च 'यजादिस्वादिपरो योऽनि'ति ब्याख्यानेऽपि 'अनस्तक्ष्णा' इत्यादावतिव्याप्तिर्दुर्वारा। न च निर्दिष्टपरिभाषया निस्तारः। 'उरण् रपर' इत्यादिसूत्रस्थ-भाष्य-बोधित-'विधौ परिभाषोपतिष्ठते, नाऽनुवादे' इति निषेधात्। न च 'अन्त्यबाधेऽन्त्यसदेशस्ये'ति-परिभाषया निस्तारः। उक्तन्याये मानाऽभावात्। यजादिस्वादिपराऽऽक्षेपस्य वैयर्थ्याऽऽपत्तेश्चेत्यत आह—एतच्चेति। भाष्यग्रन्थस्त्वित्थम्—'एवन्तर्हि कार्यकालं

---

**लघुशब्दरत्नः**

तथा सतीति। प्राचीनसंमतव्याख्याऽऽदरे इत्यर्थः। भस्येत्यनेनेति। 'अङ्गस्ये'-त्येतत्सहितेनेत्यर्थः। एतेन 'भत्वस्य वृषणोऽप्रत्ययवस्वश्वशब्दयोरपि विधानात्तेन न प्रत्ययाऽऽक्षेप' इत्यपास्तम्। अङ्गं चेति। अधिकारलब्धमिति भावः। ननु भत्वस्य तत्सूत्रे 'यस्मात्प्रत्ययविधिरि'त्यनुवृत्त्याऽङ्गनिष्ठत्वेन तेनाऽङ्गनिष्ठयजादिपरत्वाऽऽक्षेपेण, तदवयवस्य तत्त्वाऽलाभः। किञ्चाऽनो विशेषणेऽपि 'विधौ परिभाषोपतिष्ठते, नाऽनुवादे' इति निर्दिष्ट-परिभाषाऽनुपस्थितेः 'अनस्तक्ष्णे'त्यादौ दोषो दुर्वार इति चेत्। तत्राह—एतच्चेति। तथा च

---

[1] 'वेदभाष्ये' इति ङ. शोधितः पाठः।

[2] 'नभोऽङ्गिरोमनुषां वत्युपसङ्ख्यानमि'ति वत्प्रत्यये परतो भसञ्ज्ञा त्वित्यर्थः।

(६।१।१३) इति सूत्रे भाष्ये स्पष्टम् ।

---

बृहच्छब्दरत्नः

सञ्ज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । 'भस्ये'ति,—उपस्थितमिदं भवति, 'यचि भमि'ति । तत्र यजादिपरतया अन्कारं विशेषयिष्यामः । अना अकारम्—'यजादिस्वादिपरस्य अनो योऽकार' इति ।

तस्याऽयम्भावः—'कार्यकालपक्षे एकवाक्यते'ति तावन्निर्विवादम् । [1]सा च पदैकवाक्यता, वाक्यैकवाक्यता च । 'यत्र भशब्दस्तत्र 'यस्मात्प्रत्ययविधि-स्तदादि' 'यची'ति चोपतिष्ठते' इति सूत्राऽर्थः । तत्र चोपस्थितपदानां यथेष्टमभि-सम्बन्धः । यथा ज्योतिष्टोम-राजसूयादिशब्दानां यागविधौ सामानाधिकरण्या-न्नामधेयत्वाऽवगतिः, न तु 'यन्न[2] दुःखेने'त्यादिभिः स्वर्गशब्दाऽर्थोऽवगमवद्वाक्या-ऽन्तरेण । तथाऽस्मिन् पक्षे भादिशब्दानाम् । ध्वनितश्चाऽयमर्थः कौस्तुभे पिता-महचरणैः । 'विधौ परिभाषोपतिष्ठते, नाऽनुवादे' इति न्याये न किञ्चिन्मानम् ।

---

लघुशब्दरत्नः

भाष्यम्—'एवं तर्हि कार्यकालं सञ्ज्ञापरिभाषं, यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यम् । भस्ये-त्युपस्थितमिदं भवति 'यचि भमि'ति । तत्र यजादिपरतया अन्कारं विशेषयिष्यामः, अना [3]चाऽकारं-'यजादिस्वादिपरस्याऽनोऽकारस्ये'ति । तस्याऽयं भावः-'कार्यकालपक्षे 'भस्ये'ति श्रुते, भपदार्थजिज्ञासायां यचि भमित्युपस्थितेन शक्तिग्रहे वृत्ते, एतद्वाक्याऽर्थबोधकाले लक्ष्याऽनुरोधेन तन्त्राऽऽदिन्यायाश्रयणाद् 'यची'त्यस्याऽन्विशेषणताऽपि । 'विधौ परिभाषे'ति न्यायस्तु इको गुणवृद्धी (१।१।३६) अचश्च (१।२।२८) इति व्यतिरिक्ते नाऽस्त्येव । उदात्तस्वरितयोर्यण (८।२।४) इत्यादावुदात्तस्वरितस्थानिकयण इत्यर्थस्येष्टत्वादि'ति । एतच्च स्त्रीप्रत्यये इत्त्व-प्रकरणे निरूपयिष्यामः ।

[4]यदि तु 'अदमुयङि'त्यर्थम् 'अनन्त्यविकारे' इति परिभाषाऽऽवश्यकी, तयैव[5]'अन-स्तक्ष्णे'त्यादेर्व्यावृत्तिः । अत्र, सान्तमहतः (६।४।१०) इत्यादौ चाऽनेकक्लिष्टकल्पनाऽपेक्षया परिभाषास्वीकार एवोचितः । भाष्यन्तु वार्त्तिकोक्तफलानामन्यथासिद्धिप्रदर्शनमात्रपरम् । अत एवाऽन्ते[6] 'यान्येतस्याः परिभाषायाः प्रयोजनानि, तदर्थमेषा परिभाषा कर्त्तव्ये'ति भाष्ये

---

[1] अत्र 'सा च पदानां, न वाक्ययोः । यत्र भशब्दः' इत्यादिपाठस्तु भावप्रकाशे दृश्यते ।

[2] 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ।' इत्यादि स्वर्गशब्दार्थबोधकवाक्यैरित्यर्थः ।

[3] चकारो लिखितेषु नास्ति ।

[4] 'यदि तु' इत्यारभ्य 'इत्याहुः' (३६१ पृ०) इत्यन्तः पाठः क. ख. नास्ति । भावप्रकाशादावप्यस्य व्याख्या न कृता ।

[5] 'अनस्तक्ष्णेत्यादौ' इति मुद्रितेषु पाठः ।

[6] 'अन्ते' इति मुद्रितेषु त्रुटितम् ।

**रषाभ्याम् (८।४।१)। 'पदे' इतीयतैव सामर्थ्यादेकपदत्वे लब्धेऽपि, 'समान'ग्रहणं यत्समानमेव, अखण्डमिति यावत्, तत्र यथा स्यात्। तेन**

बृहच्छब्दरत्नः

न चोदीचामातः स्थाने इति स्थानग्रहणमिति वाच्यम्। 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'ति परिभाषापरं 'षष्ठी स्थाने' इति सूत्रम्, स्थानसम्बन्धलाभस्तु 'स्थानिवदादेश' इति ज्ञापकादिने'ति भाष्यकारैरुक्तत्वेन, स्थानसम्बन्धस्य परिभाषालभ्यत्वाऽभावात्। 'स्थान'ग्रहणेन परिभाषाणामनित्यत्वमात्रकल्पनाच्च। अत एवोदात्तस्वरितयोर्यण इत्यादौ नाऽनिष्टम्। ध्वनितञ्चेदम् 'आद्ये समासस्य क्लिष्टत्वादि'ति ग्रन्थेन मूलकृतेति तत्रैव निरूपितम्। 'प्रत्ययस्थादि'ति सूत्रे 'आपी'ति न ककारविशेषणं, व्यवहितत्वादिति तत्रैव स्फुटी करिष्यामः। न च अन एव विशेषणं कुत इति वाच्यम्। 'आगन्तूनामन्ते निवेश' इति न्यायेन 'अन' इत्युत्तरं श्रुत-'यची'त्यस्योपस्थितौ, सन्निधानेन तद्विशेषणस्यैव न्याय्यत्वादिति भाष्यविचारका एव विचारयन्तु।

अखण्डमिति। अखण्डत्वञ्चाऽत्र [1]रेफषकाराऽनधिकरणसमभिव्याहृतपदाऽवृत्तित्वम्। अत एव 'मातृभोगीण' इत्यादौ णत्वसिद्धिः। अत एव च 'आचार्यादणत्वञ्चे'त्यस्य सार्थक्यम्। 'पद'शब्देन चाऽत्र सुबन्तं, तिङन्तञ्च लक्ष्यते। तेन 'रामनामनी' इत्यादावुत्तरखण्डस्य पदत्वाऽभावमतेऽपि न दोषः। ध्वनितञ्चेदं भाष्ये। 'रामनमनसि'त्यादौ 'गतिकारकोपपदानां [2]कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरि'ति सुपः प्राक् समासे, णत्वं भवत्येव, सुबन्तेन समासे तु नेति विवेकः। अत एव क्षुभ्नादिषु 'नृनमन'शब्दपाठो यौगिकाऽर्थाऽङ्गीकारेऽपि

लघुशब्दरत्नः

उपसंहृतम्। यत्तु न सम्प्रसारणे (६।१।३७) इतिसूत्रे 'नैतस्याः परिभाषायाः सन्ति प्रयोजनानी'ति भाष्यं, तत्तु 'न सम्प्रसारणे' इत्यादेरेव ज्ञापकात्प्रयोजनाऽल्पत्वसूचकमित्युच्यते, तदाऽस्तु अङ्गविशेषणमेव तदित्याहुः।

सामर्थ्यादिति। निमित्त-निमित्तिनोरपदस्थयोरसम्भवादिति भावः। अखण्डमिति। तत्त्वञ्च निमित्ताऽनधिकरण-निमित्तमत्पदा-ऽघटितत्वम्। तेन 'मातृभोगीण' इत्यत्र णत्वसिद्धिः। केवल'भोगीने'त्यस्य, प्रत्ययमात्रस्य वा तत्त्वाऽभावात्। अत एव आत्मन्विश्वजन (४।१।९) इति सूत्रस्थम् 'आचार्यादणत्वं चे'ति चरितार्थम्। 'सुपर्वणे'त्यादिसिद्धये-'निमित्ताऽनधिकरणे'ति। पदं चाऽत्र लोके विभक्तीतराऽनपेक्षतयाऽर्थबोधकत्वेन दृष्टम्। तेन 'गन्धर्वगानमि'त्यादौ सुबुत्पत्तेः प्राक् समासेऽपि णत्वं न। क्षुभ्नादिषु 'नृनमन'शब्दस्तु सञ्ज्ञाभूतोऽखण्ड इति, तस्य ऋवर्णात्परस्य णत्वे ज्ञापकता भाष्योक्ता नाऽसङ्गतेत्याहुः।

[1] 'रेफषकाराऽधिकरणाऽसमभिव्याहृतपदाऽवृत्तित्वम्' इति क. ख. पाठः।
[2] 'कृद्भिः सह समासवचनम्' इत्ययमंशः क. ख. नास्ति।

**समासे न भवति—'रामनाम'। यूष्ण इति। यूषो मण्डः। 'मुद्गाऽमलकयूषस्तु भेदी दीपनपाचनः' इति दर्शनात्। इति पक्षे त्विति। एतेन पञ्चमी-समासस्य पाक्षिकतां ध्वनयति। तथा हि—भाष्ये 'बेभिदिता,' 'माथितिकः,' 'अपीपचन्नि'ति प्रयोजनत्रयमुक्तम्। तच्चाऽन्यथा सिद्धम्। एकाच उपदेशे (७।२।१०) इत्यत्र [1]विहितविशेषणाऽऽश्रयणादेव 'बेभिदिते'त्यत्र इण्निषेधो न।**

---

### बृहच्छब्दरत्नः

चरिताऽर्थः। 'छन्दस्यूदवग्रहादि'त्यस्य प्रवृत्तिर्न शङ्क्या। ईदृशे विषयेऽवग्रहा-ऽभावात्। ध्वनितञ्चेदं प्रत्याहाराह्निके भाष्ये।

बेभिदितेति। यत्तु 'सर्वविधिभ्य इड्विधिर्बलवानि'ति न्यायेन पूर्वमिडा-गमस्य सत्त्वान्नेदमुदाहरणमि'ति। तन्न। उक्तन्याये मानाऽभावात्। निषेध-विषयाऽभावस्याऽपि निमित्तकोटौ प्रविष्टत्वेन 'अकृतव्यूह'परिभाषया तदप्रवृत्तेश्च। अत एव 'न धातुलोप' इति सूत्रे 'आर्द्धधातुके' इति गुणवृद्ध्योर्विशेषणम्। 'धातुलोप' इत्ययं बहुव्रीहिः। तेनैकनिमित्तताऽलाभात् 'भेद्यते' इत्यादौ न दोष' इत्याकरः। एतेन 'सनि ग्रहगुहोश्चे'तिसूत्रस्थ उगनुकर्षणाऽर्थश्चकार उक्तन्याये ज्ञापकः। इडागमस्य पूर्वमप्रवृत्ताविको झलिति सनः कित्त्वात् पूर्वेणैव सिद्धौ किमनेने'ति परास्तम्। इडागमस्याऽपि प्राप्तत्वेनोक्तन्यायेन कित्त्वाऽप्राप्तेः। कित्त्वाश्रितो निषेधो, निषेधाऽऽश्रितं कित्त्वञ्चेत्यन्योन्याश्रयग्रस्तत्वात्[2] अप्राप्ताविडागमो दुर्वारः। परत्वेन तस्य दुर्वारत्वाच्च। अत एव 'श्वि-त[3]' इति स्थिते सम्प्रसारणे, पूर्वत्वे चोगन्तत्वे सति 'श्र्युकः किती'त्येव सिद्धौ श्विग्रहणं ज्ञापकमि'ति परास्तम्। 'श्र्युकः किती'त्यत्रोपदेशाऽधिकाराच्च। ध्वनितञ्चेदं भाष्ये।

विहितेति। नन्वेवमुपदेशग्रहणं व्यर्थम्। न च 'भेत्तो'त्यादौ प्रत्ययोत्पत्तेः पूर्वं 'धातोरि'त्यनेनाऽन्तोदात्तत्वे, [4]निषेधाऽर्थं तदिति वाच्यम्। 'एकाच' इति-

---

### लघुशब्दरत्नः

मण्ड इति। तद्विशेष इत्यर्थः। बेभिदितेति। बेभिद्यतेर्यङन्तात्तृचि, अल्लोप-यलोपयोः, एकाच उपदेशे (७।२।१०) इति निषेधादिण्न स्यात्। पञ्चमीसमासे तु अल्लोपस्य स्थानिवत्त्वान्निषेधाऽप्रवृत्तिरिति भावः। एवमितरयोः कादेश-जुसोरभावो बोध्यः। विहित-विशेषणेति। एवञ्च स्थानिवत्त्वं विनाऽपि तदप्रवृत्तिः सिद्धेति भावः। विहितविशेषणत्व-

---

[1] 'विहितविशेषणादेव' इति मुद्रितेषु पाठः। 'आश्रयणात्' इति तत्र त्रुटितम्।
[2] 'अन्योन्याश्रयग्रहग्रस्तत्वात्' इति क. ख. पाठः।
[3] 'श्वि—न' इति ख. पाठः।
[4] निषेधार्थम्=इट्निषेधाऽर्थमित्यर्थः।

'मथितं पण्यमस्ये'ति विग्रहे, ठकि, ठस्येकादेशे, यस्येति च (६।४।१४८) इत्यल्लोपे, इसुसुक्तान्तात्कः (७।३।५१) इति कादेशस्तु न भविष्यति। ठस्याऽभावात्। न च स्थानिवद्भावेन ठत्वम्। अल्विधित्वात्। ठस्येकः (७।३।५०) इत्यत्र हि स्थान्यादेशयोरकार उच्चारणाऽर्थः।

---

बृहच्छब्दरत्नः

सूत्राऽऽरम्भसामर्थ्येन च, वसत्यादीनामनुदात्तपाठेन च [1]'प्रवृत्तेरि'ति चेदत्राहुः— 'निष्ठायां सेटी'ति सूत्रस्थ'सेटी'तिवदुपदेशग्रहणस्य वैयर्थ्ये बाधकाऽभावात्। अपरे तु 'त्वत्' 'त्व'शब्दयोराचारक्विबन्तयोरार्द्धधातुके निषेधाऽभावाऽर्थमुपदेशग्रहणम्। 'त्व'शब्दोऽनुदात्तः पठ्यते' इति वादिनां मतेऽपि सर्वनामसञ्ज्ञां प्रत्युद्देश्यत्वं, नोपदेशत्वमित्यलम्। न च 'गोधुक्'शब्दादाचारक्विबन्तात्तृजादाविण्निषेधो न स्यादिति वाच्यम्। परविशेषणेऽपि 'दुहि'त्यस्याऽङ्गत्वाऽभावेनाऽप्राप्त्येष्टाऽऽपत्तेः। मथितमिति। यत्तु 'मथितमाचष्टे मथित्, तत्पण्यमस्ये'त्याहुः। तन्न। 'माथितिक' इत्यकारलोपे [2]'इसुसुक्ताऽन्तात्क' इति कादेशः प्राप्नोती'ति-भाष्यविरोधात्। 'अकारलोपे' इत्यस्य वैयर्थ्याऽऽपत्तेः। अस्मन्मते इकाऽऽदेशप्रवृत्तिकाले काऽऽदेशाऽप्राप्तेः सत्त्वेनोत्सर्गप्रवृत्तिर्निर्विघ्नेत्याद्यर्थबोधनाऽर्थम्। शास्त्राऽप्रवृत्तिमात्रकथनतात्पर्यकत्वे णिलोपादीनां त्यागे बीजाऽनापत्तेः। अत एव 'वर्णग्रहणे 'माथितिक'[3] इत्यत्र न दोषः, समुदायग्रहणे दोष' इति साप्तमिकं भाष्यं सङ्गच्छते। स्थान्यादेशयोरिति। एकसूत्रोपात्तयोरेकरूपतैवोचितेति भावः। ठादिप्रत्ययेष्वकारो विवक्षितः। अत एवाऽदन्तरूपसिद्धिः। न च [4]व्यञ्जनस्याऽङ्गनिमित्तत्वाऽसम्भव

---

लघुशब्दरत्नः

न्चाऽस्य 'एकाचो द्वे (६।१।१) इत्यत्र भाष्ये ध्वनितम्। तत्र हि 'यङ्लोपे बेभिदिते'त्यत्र यङन्तात्तृचि इट्प्रतिषेधमाशङ्क्य 'एकाचोऽङ्गादि'ति व्याख्यानेन परिहृतम्। तद्भाष्यस्य यथाश्रुतत्वे 'बिभित्सती'त्यादौ दोषवारणायोपदेशग्रहणस्य एकाजंशेऽपि सम्बन्धे 'बेभिदिते'त्यादावपि परिहाराऽसम्भवेन तस्य विहितविशेषणत्वे तात्पर्यमावश्यकम्। प्रत्ययविधानाऽवधेरेव प्रायेणाऽङ्गत्वादङ्गादित्यनेनेदं सूचितम्। विहितविशेषणे च 'बिभित्सती'त्यादावदोषेण एकाजंशे उपदेशग्रहणाऽसम्बन्ध इति तदाशयः। न भविष्यतीति। 'स्थानिवत्त्वं विनाऽपी'ति शेषः।

अल्विधित्वादिति। ठस्येकः (७।३।५०) इत्यत्र स्थानिनि, प्रत्ययेषु च सर्वत्राऽकारो न विवक्षितः। आदेशे एव तु विवक्षितः। अन्यथा निषादकर्षूशब्दात् ओर्देशे (४।२।

---

[1] प्रवृत्तेः=उपदेशग्रहणाऽभावेऽपि 'एकाच' इतीट्निषेधप्रवृत्तेरुपदेशग्रहणं व्यर्थमित्यर्थः।

[2] 'तान्तात्क' इत्येव क. ख. पाठः।

[3] 'मथितिकः' इति क. ख. पाठः।

[4] व्यञ्जनस्य=ठकारमात्रस्येत्यर्थः।

**'अपीपचन्नि'त्यपि णिलोपस्य, चङन्त्यकारयोरेकादेशस्य च स्थानिवद्भावं विनाऽपि सिद्धम्। विदिसाहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात्। न च सिचा साहचर्याल्लुङ एव किं न स्यादिति वाच्यम्। पूर्वसाहचर्यात्परसाहचर्यस्य बलीयस्त्वादिति दिक्।**

बृहच्छब्दरत्नः

इति वाच्यम्। सामर्थ्येन तद्घटकीभूतसमुदायस्याऽङ्गनिमित्तत्वेन ग्रहणात्। समुदायश्च सर्वत्रोपस्थितठकाराद्यकाराऽन्त एव। तावतैव विधेर्निराकाङ्क्षितत्वेना[1]ऽन्यग्रहणे मानाऽभावात्।

एवमठचि न दोषः। न चैवं 'निषादकर्पू'शब्दात् 'ओर्देशे' इति ठञि, व्यञ्जनमात्रस्य व्यञ्जनरूप-कादेशे, 'क'शब्दस्य लाक्षणिकत्वात् 'केऽण' इति ह्रस्वो न स्यादिति वाच्यम्। 'न कपी'ति ज्ञापकस्य सामान्याऽपेक्षत्वेन 'निरनुबन्धक'-परिभाषाया इव, 'लक्षणप्रतिपदोक्त'परिभाषाया अप्यप्रवृत्तेर्बोधनात्। यद्वा कादेशे अकारो विवक्षितः। तथा च व्यञ्जनमात्रस्य काऽऽदेशे, ठाऽकारेण सह 'अतो गुणे' इति पररूपम्। तत्फलन्तु प्रतिपदोक्तत्वमेव।

अपीपचन्निति। न चाऽत्राऽल्विधित्वात् झत्वाऽभाव इति वाच्यम्। 'झोऽन्त' इतिवत् निर्देशे कर्त्तव्ये इकारोच्चारणेनाऽज्झलादेशत्वात्। 'लिङ' इत्यनेन सह सामानाधिकरण्येनैवाऽन्वयस्य युक्तत्वाच्च। 'लः परस्मैपदमि'त्यादाविवाऽऽदेशाऽपेक्षयैव षष्ठ्या न्याय्यत्वाच्च। दिगिति। दिगर्थस्तु 'बेभिदिते'त्यादावल्लोपाद्यपेक्षया पूर्वमिडागमप्रवृत्तिः। परत्वात्। न च नित्यत्वेनाऽल्लोपप्रवृत्तिः। इडागमस्याऽपि नित्यत्वात्। न चाऽल्लोपादौ कृते [2]निषेधस्य जागरूकत्वेनाऽनित्यत्वम्। 'यस्य च लक्षणाऽन्तरेण निमित्तं विहन्यते, न तदनित्यमि'ति न्यायात्। किञ्चाऽल्लोपोऽप्यनित्यः।

लघुशब्दरत्नः

११९) इति ठञि, व्यञ्जनमात्रस्य व्यञ्जनरूप-कादेशे 'क'शब्दस्य लाक्षणिकत्वात् केऽण (७।४।१३) इति ह्रस्वाऽनापत्तिरिति भावः। स्थान्यादेशयोरिति (–३६३ पृ०)। इकादेशस्थानिभूतप्रत्यये, आदेशविधायके सूत्रे [3]'ठस्येक' इत्यत्र चेत्यर्थः। स्पष्टं चेदं ठस्येकः (७।३।५०) इत्यत्र भाष्य-कैयटयोः। इदमुपलक्षणम्। सन्निपातपरिभाषयाऽपि कादेशवारणं बोध्यम्। स्पष्टं चेदं 'ठक्छसोश्च' इति वार्त्तिकभाष्ये। बलीयस्त्वादिति। एतच्च यस्य विभाषा (७।२।१५) वित्तो भोग (८।२।५८) इति सूत्रस्थकैयटे स्पष्टम्। एतत्सर्वम् 'अपरविधाविति तु वक्तव्यमि'ति वार्त्तिकस्थकैयटाऽनुरोधेन। दिगिति। दिगर्थस्तु 'एतदर्थं पञ्चमीसमास-

[1] 'निराकाङ्क्षत्वेन' इति क. पाठः।

[2] निषेधस्य='एकाच उपदेशेऽनुदात्तादि'ति इट्निषेधस्येत्यर्थः। अनित्यत्वम्=इटोऽनित्यत्वमित्यर्थः।

[3] 'ठस्येक' इत्यत्र' इति मुद्रितेषु त्रुटितम्।

बृहच्छब्दरत्नः

शब्दाऽन्तरे प्राप्तत्वात्। न च 'शब्दाऽन्तरस्य प्राप्नुवन्नि'ति षष्ठ्यन्तस्यैवाऽऽकरे पठितत्वेनोक्ताऽर्थो निर्मूल इति वाच्यम्। शब्दाऽन्तरस्य प्राप्तावनित्यत्वे बीजस्याऽत्राऽपि सुवचत्वात्। 'शदेः शित' इत्यादौ भाष्याऽऽरूढत्वाच्च। किञ्चाऽन्तरङ्गत्वेन पूर्वमिडागमेऽल्लोपादौ निषेधाऽप्रवृत्तावपि, जातस्य निवृत्तेरयोगेन तृजादिनिरूपिताऽङ्गत्वस्य 'बेभिदि'ति समुदायेऽभावेन परविशेषणेऽपि न दोषः। न चाऽल्लोपयलोपयोः कृतयोरङ्गत्वं सेत्स्यतीति वाच्यम्। पूर्वविधेः सत्त्वेन स्थानिवद्भावस्य दुर्वारत्वादि'ति कश्चित्। 'माथितिक' इत्यत्र कादेशाऽप्रसङ्ग एव, 'ताऽन्तादि'त्यन्तग्रहणेन, इसादिसाहचर्यात्, विहितपञ्चम्याश्रयणाच्च, नित्ययोगे बहुव्रीहेराश्रयणाच्च, प्रत्ययोपदेशकाले तान्तत्वस्य विवक्षणात्, सन्निपातपरिभाषया वारणाच्च। पूर्वोत्तरसाहचर्येणाऽनादिष्ट-झेर्ग्रहणेन 'अपीपचन्नि'त्यादौ दोषाऽभावाच्च। एतेन 'पञ्चमीसमासप्रयोजनतया 'अपीपचन्नि'त्यस्य भाष्ये उदाहृतत्वेन, परसाहचर्यस्याऽनाश्रयणमि'ति प्रतीयते। तस्माद्यङ्लुकि भुवो लुङि जुसेवोचित' इति परास्तम्। उक्तरीत्या साहचर्याऽऽश्रयणेऽपि लुङि जुसः सिद्धत्वात्। भाष्यस्योक्तरीत्या प्रौढिवादपरत्वस्याऽऽवश्यकत्वेनाऽप्रमाणत्वाच्च। युक्ततरञ्चैतत्। अन्यथा पञ्चमीसमासोदाहरणान्युपन्यस्य 'अस्ति प्रयोजनमेतत्?। [1]किन्तर्हीति'। 'अपरविधौ इति तु वक्तव्यम्। किं प्रयोजनम्?। स्वविधावपि स्थानिवद्भावो यथा स्यात्। कानि पुनः स्वविधौ स्थानिवद्भावस्य प्रयोजनानि। आयन्नि'त्यादिभाष्यस्याऽसङ्गताऽऽपत्तेः। उक्तरीतेरनाश्रयणे पूर्वोक्तानां 'बेभिदिते'त्यादीनामुक्तन्यासेनाऽसिद्धत्वात्। यत्तु कैयटेनोक्तं—'निमित्ताऽपेक्षया परत्वविज्ञाना'द्बेभिदिते'त्यादीनां सिद्धिः। अकारलोपस्य निमित्तमार्द्धधातुकम्। न च तस्मात्परस्य विधिः। किन्तर्हि। तस्यैवे'ति। तन्न। 'तत्तर्हि वक्तव्यम्?। न वक्तव्यम्। पूर्वविधावित्येव सिद्धम्। कथम्?। पूर्वग्रहणेन नाऽऽदेशोऽभिसम्बध्यते, कुतः पूर्वस्मात्?—'आदेशादि'ति। किन्तर्हि?। निमित्तमभिसम्बध्यते' इत्युत्तरभाष्येणाऽवधित्वेनाऽऽदेशस्यैव सम्बन्ध इत्यभिप्रायेणैव न्यासाऽन्तरस्य प्रवृत्तिरित्यर्थस्य स्पष्टतयाऽभिहितत्वात्। निमित्तस्याऽवधित्वेनाऽऽश्रयणे यथान्यासे 'आयन्नि'त्यादीनां सिद्धौ सूत्रभङ्गे[2] प्रवृत्त्यनापत्तेश्च। अत एव 'बाभ्रवीय' इत्यादौ [3]यलोपे अवादेशो न स्थानिवत्। निमित्तस्याऽवधित्वेनाऽऽश्रयणे तु दोषः स्फुट एव। 'अभावाऽतिदेश' इत्यस्य पूर्वं सिद्धान्तितत्वात्। न चाऽऽदेशाऽपेक्षया परस्य ढकोऽविहितत्वेन 'नैधेय' इत्यत्राऽल्लोपस्य स्थानिवद्भावः स्यात्, तथा च 'द्व्यच' इति ढक् न स्यादिति वाच्यम्। निमित्तस्याऽवधित्वेनाऽऽश्रयणेऽपि दोषाऽनुद्धारात्। [4]परत्वाऽतिदेशेन

---

[1] 'किन्तर्हि' इति ख. पाठः।

[2] 'सूत्रभङ्गप्रवृत्त्यनापत्तेश्च' इति क. ख. पाठः।

[3] 'आपत्यस्य च तद्धितेऽनाती'ति यलोपे हलः परत्वस्य निमित्तत्वम्। अवादेशस्य स्थानिवत्त्वे तु हल्यात्त्वस्य विधानाद्यलोपाऽनापत्तिरित्याशयः।

[4] परन्त्वादेशे नायमानत्वेन' इति क. ख. पाठः।

**पूर्वत्रासिद्धे नेति।** एतच्च न्यायसिद्धमित्यवोचाम। त्रिपाद्या असिद्धत्वेन तत्रत्ये कार्ये कर्त्तव्ये अचः परस्मिन् (१।१।५७) इत्यतिदेशस्याऽप्रवृत्तेः। **तस्येति।** तस्य = [1]'पूर्वत्राऽसिद्धे ने'त्यस्य। तथा च स्थलत्रये स्थानिवद्भावो वक्तव्य इत्यर्थः। संयोगादिलोपे–'चक्रयत्र'। लत्वे–'निगाल्यते'।

---

**बृहच्छब्दरत्नः**

जायमानत्वेन परसम्बन्धि विधानमस्तीति चेत्। तन्मतेऽपि न दोषः। न च पञ्चमीसमासाऽनभ्युपगमे 'ऐर्त्सन्नि'त्यादौ जुसादिकं दुर्वारम्, पूर्वस्य विधेरभावेन शपा सहैकादेशस्य स्थानिवद्भावाऽप्रवृत्तेरिति वाच्यम्। 'धातोरि'-त्यनुवर्त्तनेन धातुरूपाऽभ्यस्तग्रहणेनाऽदोषात्। 'अभ्यस्तमि'ति महासञ्ज्ञाकरणेन लोपेऽप्रवृत्तेश्च। पूर्वोक्तरीत्या दोषाऽभावाच्च। 'अभ्यस्तरूपाऽङ्गस्ये'त्यर्थाऽऽश्रयणे दोषाऽभावाच्च। 'तन्वन्ती'त्यत्राऽन्तरङ्गपरिभाषयाऽसिद्धत्वेनेडभावः। एतेन 'मथित्'शब्दाद्धलन्ताट्ठकि कादेशाऽभावाऽर्थं पञ्चमीसमास आवश्यक' इति मन्दप्रतारणमपास्तम्। उक्तरीत्या भाष्यकारैरेव तस्य दूषितत्वेन कादेशे इष्टाऽऽपत्तेः। तत्सत्त्वेऽपि तस्य 'निष्ठायां सेटी'ति सेड्ग्रहणेनाऽसार्वत्रिकत्वाऽऽवश्यकत्वेन तत्प्रवृत्तौ दृढतरप्रमाणाऽभावाच्च।

निगाल्यते इति। न चाऽत्र णिलोपात्पूर्वमन्तरङ्गत्वाल्लत्वं भविष्यतीति

---

**लघुशब्दरत्नः**

स्याऽऽवश्यकत्वम्[2]। तथा हि—परसाहचर्यस्य बलवत्त्वे मानाऽभावः। विप्रतिषेधसूत्रे कार्यशब्देन शास्त्रीयस्यैव ग्रहीतुमौचित्येनाऽत्र तदप्राप्तेः।

'नित्यः परयणादेशः, परश्चाऽसौ व्यवस्थया।
युगपत्सम्भवो नास्ति, बहिरङ्गेण सिध्यति'॥

—इति अचः परस्मिन् (१।१।५७) इति सूत्रस्थभाष्योक्तरीत्या पूर्वसाहचर्यस्याऽन्तरङ्गत्वेन तस्यैव ग्रहीतुमौचित्याच्च। विभाषा गमहनविदविशाम् (७।२।६८) इत्यत्र लुग्विकरणपरिभाषाऽनुग्रहाय परसाहचर्याऽऽश्रयणम्। नुदविदोन्दत्रा (८।२।५६) इत्यत्राऽप्यन्तरङ्गपरिभाषाऽनित्यत्वाद्वचाख्यानेन परसाहचर्याऽऽश्रयणमिति बोध्यम्। 'प्रत्यैषिषन्नि'त्यादौ लङि उभे अभ्यस्तम् (६।१।५) इति सूत्रस्थभाष्यसंमते एवमपि दोषाच्च। पूर्वोक्तरसाहचर्येण भावरूपाऽऽदेशाऽनपहृत-विकरण-काऽभ्यस्तस्यैव ग्रहणमित्यप्यतिक्लिष्टम्। ततो वरं पञ्चमीसमास एव। 'अपरविधाविति तु वक्तव्यमि'ति न्यासाऽन्तरेऽपि पञ्चमीसमासो वक्तुं शक्यः। न्यासाऽन्तरन्तु स्वविधेरपि सङ्ग्रहायेति स्पष्टमेव। अतिप्रसङ्गस्त्वनित्यत्वेन परिहरणीय' इति।

चक्रयत्रेति। तक्षि-रक्षिभ्यां ण्यन्ताभ्यां क्विपि लोपाऽभावोऽपि फलम्। निगाल्यते इति। न चाऽत्र णिलोपात्पूर्वं लत्वम्। सपादसप्ताध्यायीस्थकार्यस्य प्रवृत्तियोग्यतया तद-

---

[1] 'पूर्वत्राऽसिद्धे' इति मुद्रितेषु पाठः। नञो नकारस्तत्र त्रुटितः।

[2] 'आवश्यकत्वमिति' इति लिखितेषु पाठः।

णत्वे–'माषवपनी'। इह यस्येति च (६।४।१४८) इत्यल्लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाऽभावाण्णत्वं न। यत्त्वाहुः—'कथंचित्स्थानिवत्त्वाऽभावेऽपि 'पूष्ण' इत्यादौ रषाभ्याम् (८।४।१) इत्यस्य नोपयोगः। ष्टुत्वेन सिद्धेः। तथा च षग्रहणमुत्तराऽर्थमित्याकरे स्थितम्। ततश्च रभसवादेनैतदुपन्यस्तमि'ति। स एवाऽयं रभसवादः। तथा हि—उत्तराऽर्थतयाऽपीह षग्रहणं स्थितम्। ततश्च 'पूष्णः' 'पुष्णाती'त्यादौ 'रषाभ्यामि'तिणत्वस्य प्रवृत्तिः केन वार्यताम्। ष्टुत्वेनेति चेन्न। तस्याऽसिद्धत्वात्। न च वचनप्रामाण्यात्सिद्धत्वम्। [1]'पुष्टिस्तुष्टिरि'त्यादौ चरितार्थत्वात्। 'नस्य षयोगेण' इत्यंशोऽचरितार्थ इति चेन्न। तस्य पृथगनुक्तेः। इह 'षात्परस्ये'त्युक्तिरचरितार्थे'त्यस्याऽपि तुल्यत्वाच्च। आकरे हि 'इह षग्रहणं विना लक्ष्याऽसिद्धिर्नास्ती'त्येवाऽभिप्रेतं, न तु 'पुष्णाती'त्यादौ 'रषाभ्यामि'त्यस्याऽप्रवृत्तिरिति दिक्।

**नलोपः प्रातिपदिकान्तस्य (८।२।७) लुप्तषष्ठीके इति।** सौत्रत्वात्। न तु षष्ठीतत्पुरुषयोः पूर्वपदे। सापेक्षत्वेन समासाऽसम्भवात्। प्रातिपदिकस्य पदविशेषणत्वाच्चेति भावः। **तदन्तस्येति।** षष्ठीतत्पुरुषः। 'तस्याऽन्तो यो नकारस्तस्ये'त्यर्थः। उक्तं च हरदत्तेन—

**बृहच्छब्दरत्नः**

वाच्यम्। अकृतव्यूहपरिभाषयाऽप्रवृत्तेः। न च 'स्थानिवदादेश' इत्यस्य दुर्वारत्वेनोक्तन्यायाऽप्रवृत्तिरिति वाच्यम्। अल्विधित्वात्। प्रत्ययलक्षणसूत्रन्तु

**लघुशब्दरत्नः**

प्रवृत्तेः। न च स्थानिवत्त्वम्। अल्विधित्वात्। प्रत्ययलक्षणन्तु नियमाऽर्थमिति भावः। अत्र बहिरङ्गाऽसिद्धत्वं न। 'नाजानन्तर्ये' इति तन्निषेधात्। त्रिपाद्यां तदप्रवृत्तेरेव विसर्जनीयसूत्रस्थभाष्यसंमतत्वाच्चेत्यन्यत्र प्रपञ्चितम्। एवं 'प्लायते' इत्यपि 'अयतावि'त्यस्योपसर्गविशेषणत्वे फलम्। माषवपनीति। इह ङीबुत्पत्तेः प्राक् समासे, ङीपि, अल्लोपे, समासरूपप्रातिपदिकाऽन्तत्वात् णत्वं प्राप्तम्। पूर्वपदाऽऽक्षिप्तसमासरूपप्रातिपदिकाऽन्तस्य तेन णत्वविधानात्, तस्याऽपि पूर्वपरोभयसापेक्षत्वेन, समासत्वज्ञानसापेक्षत्वेन च समानत्वात्। त्रिपादीस्थत्वाच्च बहिरङ्गाऽसिद्धत्वाऽऽशङ्का नाऽत्रेति बोध्यम्।

अप्रवृत्तिरिति। 'अभिप्रेते'ति शेषः। सापेक्षत्वेनेति। 'नलोप' इत्येतद्विषयमिदम्।

[1] 'तुष्टिः' इति मुद्रितेषु त्रुटितम्।

'विशेष्यमन्तस्येत्यस्य 'ने'त्येतदविभक्तिकम् ।
तथैव प्रातिपदिकेत्येतत्पदविशेषणम्' ।। इति ।

यत्तु प्राचोक्तं–'प्रातिपदिकाऽन्तस्य पदाऽन्तस्य नस्ये'ति । यच्च व्याख्यातम्–'अन्तस्ये'त्युभाभ्यां सम्बध्यते' इति । तद्गौरवग्रस्तम् । 'अन्तस्ये'त्यस्याऽऽवृत्तिप्रसङ्गात् । व्यधिकरणषष्ठीद्वयाऽऽपत्तेश्च । यदि त्वभेदेनैव सम्बन्धेन प्रातिपदिकेनेव 'ने'त्यनेनाऽपि पदं विशेष्यते, तदा विशेषणेन तदन्तविधौ सौत्रमन्तग्रहणं शक्यमकर्त्तुम् ।

**विभाषा ङिश्योः** (६।४।१३६) । 'शी'ति नपुंसकाच्च (७।१।१९) इति विहितो, न तु जश्शसोः शिः । तस्मिन् भत्वाऽसम्भवात् । भस्य (६।४।१२९) इत्यनेनाऽसर्वनामस्थानस्यैव यजादेराक्षेपात् । तदेतदाह—**असर्वनामस्थानेति । अत एवेति** । 'दोषणी' इति प्रयोगात् । यद्यपि समाहारद्वन्द्वस्य एकशेषे कृतेऽपि भाष्यं सुयोजं, तथापि 'ककुदि'त्यस्य पृथक्पदत्वं न्याय्यम् । अन्यथा ककुद एकत्वं, बाह्वोर्द्वित्वं च न लभ्येतेति भावः । ([1]दक्षिणं दोरिति) । 'तम्रुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचर' इति

---

बृहच्छब्दरत्नः

नियमाऽर्थम् । शक्यमकर्त्तुमिति । 'येन विधिस्तदन्तस्ये'त्यस्याऽनित्यत्वज्ञापनाऽर्थम् । तेन 'समासप्रत्ययविधौ प्रतिषेध' इत्यादि सिद्धमि'ति कश्चित् ।

न लभ्येतेति । अयम्भावः—इत्थं हि भाष्यग्रन्थः—'अशस्प्रभृतिष्वपि दृश्यते, 'शलादोषणी ककुद्दोषणी याचते महादेवः' । तत्र 'शला'शब्दः शरीराऽवयव-

---

लघुशब्दरत्नः

अन्ये आह—पदविशेषणत्वाच्चेति । व्यधिकरणषष्ठीति । 'प्रातिपदिकस्य' 'पदस्ये'-त्यनयोः परस्पराऽनन्वितयोरत्तेनाऽन्वयादिति भावः । अभेदेनैवेति । सम्बन्धाऽन्तराऽसत्त्वेऽपि विशेष्य-विशेषणभावसम्बन्धेनेत्यर्थः । शक्यमकर्त्तुमिति । 'पदस्ये'त्यस्य क्वचिद्वैयधिकरण्येना-ऽन्वयेऽस्य तात्पर्यग्राहकत्वं भाष्ये उक्तं, तत्तु लक्ष्याऽनुसारिव्याख्यानादेव ज्ञापकं विनाऽपि सिद्धमित्यभिमानः ।

भत्वाऽसम्भवादिति । सर्वनामस्थानत्वेनेति भावः । समाहारद्वन्द्वस्येति । प्राण्यङ्गत्वात्कृतसमाहारद्वन्द्वस्य ककुद्-दोःशब्दस्येत्यर्थः । सुयोजम् । दोःशब्दस्य पुंस्त्वेऽपि सुनिर्वाहम् । न्याय्यमिति[2] । अल्पाऽच्तरत्वेन दोःशब्दस्य द्वन्द्वे पूर्वनिपाताऽऽपत्तेः । किञ्च तदन्ते आदेशो दुर्लभः, विशेष्याऽसन्निधानादिति भावः । ककुद एकत्वमिति । प्रकरणात् श्रुतौ

---

[1] बृहच्छेखरात्पूरितोऽयं पाठः । [2] इतिः क्वचिन्नास्ति ।

रघुः । तत्र 'दक्षिणं दोरि'ति 'उद्यम्ये'त्यनेन कर्मतया सम्बध्यते । दोषं तस्येति । 'दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणमि'ति श्रीहर्षप्रयोगः । तत्र 'दोषं = हस्तं, दूषणं च भजतः, चापस्य गुणं = मौर्वीम्, अतिशयश्च गृह्णन्नि'ति सम्बन्धः । अमरव्याख्यातारस्तु 'दोष'शब्दं स्त्रियामपि स्वीकृत्य भागुरिमतेन टापि 'दोषे'त्युक्त्वा 'दोर्दोषा च भुजो बाहुः पाणिर्हस्तः करस्तथे'ति धनञ्जयनिघण्टुमुदाजहुः ।

द्व्योरह्नोर्भव इति । तद्धितार्थ (२।१।५१) इति समासः । कालाट्ठञ् । (४।३।११) । द्विगोर्लुगनपत्ये (४।१।८८) इति लुक् । राजाहःसखिभ्यः (५।४।९१) इति टच् । अह्नोऽह्न एतेभ्यः (५।४।८८) इत्यह्नादेशः ।

अह्नः साय इति । स्यतेर्घञि अवसानवचनः 'साय'शब्दः । सङ्ख्याविसाय (६।३।११०) इति ज्ञापकादेकदेशिसमासः । इत्यदन्ताः ॥

हाहानिति । गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम् ।

---

**बृहच्छब्दरत्नः**

विशेषवाची । 'छान्दसत्वात्कलोपे शलाकाऽकारौ=निर्मांसावित्यर्थ' इत्यपरे । अयञ्च प्रयोगः अध्रिगुप्रैषादौ प्रसिद्धः । द्वितीयन्तु लौकिकोदाहरणम् । अत एव 'प्रथमोपस्थित'शलादोषणी' इत्यस्य त्यागे बीजं चिन्त्यमि'त्यपास्तम् । प्रकाराऽन्तरेणाऽपि समाधानस्य कर्त्तुं शक्यत्वेन बीजस्य स्पष्टत्वात् । महादेववाहनस्य वृषभस्यैकत्वात्ककुद एकत्वं, बाह्वोर्द्वित्वमेव न्याय्यम् । यद्यपि वृषभस्य ककुदादिकमुत्पत्तिसिद्धमेव, तथापि वाहनसमर्थं ककुदादिकं याचते । तेनाऽवस्थाविशेषो ध्वनितः । ककुदः पूर्वनिपाताऽनापत्तिश्च । ककुत्-ककुद-शब्दयोश्चोणादिसिद्धत्वेऽपि, 'ककुदस्याऽवस्थायां लोप' इति सूत्रम् अलोपनियमाऽर्थम् । एतेन 'दोष' इत्यकारान्तस्य दोषन्नादेश' इत्यपास्तम् । एतेन 'प्रभृति'ग्रहणस्य प्रकाराऽर्थत्वे न किञ्चिन्मानम् । न च 'पदङ्घ्रिश्चरणोऽस्त्रियां, स्वान्तं हृन्मानसं मन' इति मानमिति वाच्यम् । एतेषां पदादीनां पादाद्यादेशत्वे पादादिभ्यः पृथक् पदादिवचनस्य कोशेऽसङ्गतत्वाऽऽपत्तेः । न हि स्थान्यादेशयोः पृथगुपादाने प्रयोजनमस्ति, स्थान्युपादानेनैव [1]तदर्थाऽभिधानसामर्थ्यादादेशस्याऽनुपादानेऽपि त्वत्य-

---

**लघुशब्दरत्नः**

तथाऽर्थकमेवेदमिति भावः । 'दक्षिणं तमुद्यम्य दोर्नामा निशाचर' इत्यन्वयभ्रमवारणायाऽऽह–तत्रेति । एकदेशिसमास इति । तत्प्रत्याख्याने तु कर्मधारय इति बोध्यम् ।

---

[1] 'तदर्थाऽभिधानसमर्थादेशस्य' इति क. पाठः ।

कौमारास्तु 'जहातीति हाहा' इति क्रियाशब्दं वदन्तो विश्वपावद्रूपमाहुः। तन्मते प्रत्युदाहरणन्तु 'अकारो वासुदेवः स्यात्, तेन सह वर्त्तन्ते इति साः, तान् सानि'ति बोध्यम्। इत्यादन्ताः।

**आङो नाऽस्त्रियाम्** (७।३।१२०)। 'पुंसी'ति तु नोक्तम्। 'अमुना कुलेने'त्यत्र यथा स्यात्। न च नुमा रूपसिद्धिः। मुत्वस्याऽसिद्धत्वादिकोऽचीति नुमोऽप्राप्तेः। नादेशे तु नाऽसिद्धत्वम्। नमुने (८।२।३) इति निषेधात्। न च

---

बृहच्छब्दरत्नः

भावात्। अत एव नसाद्यादेशानां कोशेऽनुपन्यासो न विरुध्यते। किञ्च प्रकृते पदाद्यादेशानामनुकरणम्, नाऽनुकृतस्याऽऽदेश' इति परास्तम्। पदाद्यादेशानां भिन्नत्वे स्थान्यादेशबोधकसूत्रस्य वैयर्थ्यापत्तेः। व्यवस्थाऽर्थं सूत्रकल्पने तु सौ परत आदेशस्य प्रयोगाऽर्थमुक्तरीतिरावश्यकी। 'कोशे शब्दा न शब्दमात्रपरा' इति प्रागेव प्रपञ्चितम्। सौ नसाद्यादेशानां प्रयोगाऽभाव एवाऽनुपन्यासे बीजम्। 'प्रभृति'ग्रहणस्य प्रकाराऽर्थत्वे फलाऽन्तरस्योपन्यासाच्च। अत एव 'मांस-पृतना-सानूनां मांस्-पृत्-स्नवो वाच्याः, शसादौ वे'ति 'पदन्नि'तिसूत्रस्थवचने 'आदि'शब्दः प्रकारे। अत एव 'मांस्पचन्या उखाया' इति सङ्गच्छते। न च 'मांसस्य पचि-युड्घञोरि'ति पृषोदरादिवचनेन सिद्धिरिति वाच्यम्। तस्योक्तसिद्धाऽर्थाऽनुवाद-कत्वात्। पृषोदरादिसूत्रे 'उत्तरपदे' इत्यधिकारादसमासाऽर्थमुक्तरीतेरावश्यकते-त्याशयः। एतेन 'मान्भ्याम्। वस्तुतस्तु' इत्यादि नपुंसकोक्तं मूलमयुक्तं, सन्दर्भाऽशुद्धेरि'ति मन्दप्रतारणमपास्तम्।

तान्-सानिति। षष्ठीबहुवचने सवर्णदीर्घेण 'सामि'ति बोध्यम्। यत्तु 'पररूपेण दीर्घमात्रं बाध्यते' इति पक्षे 'रामानि'त्याद्यसिद्धिमाशङ्क्य 'बहुवचने' इति योगविभागेन दीर्घ' इति समाधाय, 'रामाणामि'त्यसिद्धिमाशङ्क्य 'ह्रस्वनद्याप' इति सूत्रे 'आज्जसेरसुगि'तिसूत्रात् 'आदि'त्यनुवर्त्य समाधानस्य भाष्ये कृतत्वेन, आकाराऽन्तादपि[१] नुटि 'सानामि'ति रूपमाहुः। तन्न। चकाराऽभावेनाऽन्वया-ऽसम्भवात्। मण्डूकप्लुतेरन्याय्यत्वाच्च। 'पुरस्तादपवाद'न्यायेन, 'नादिची'ति-'इच्'ग्रहणसामर्थ्येन च पररूपाऽप्रवृत्त्या भाष्यस्य प्रौढिवादपरत्वात्। किञ्च 'आदि'त्यनुवृत्तावपि पूर्वसूत्रे पञ्चम्यन्तत्वात् 'ह्रस्वरूपाऽवर्णाऽन्तान्नुडि'त्येवाऽर्थो, न 'आकारान्तादि'ति। तथा च तत्सामर्थ्यान्नुडिति भाष्याऽऽशयः। अत एव 'ह्रस्वनद्याप' इति सूत्रे आब्ग्रहणं चरिताऽर्थम्।

अप्राप्तेरिति। मुत्वस्याऽसिद्धत्वेन 'त्यदादीनाम' इत्यत्वे, इनादेशे, गुणे,

---

लघुशब्दरत्नः

जहातीति। 'हा' इति शोकव्यञ्जकं शब्दमि'त्यादिः।

---

[१] 'आमि नुटि'इति ख. पाठः।

न मु ने इति निषेधो नुम्येवाऽस्तु[1], 'ने' इत्यकारस्योच्चारणाऽर्थत्वादिति वाच्यम्। 'अमुष्मै कुलाये'त्याद्यसिद्ध्यापत्तेः।

**अच्च घेः (७।३।११९)।** 'इदुद्भ्यामि'ति, 'ङेरि'ति, 'औदि'ति च पदत्रयमनुवर्त्तते इत्याशयेन व्याचष्टे—**इदुद्भ्यामुत्तरस्येत्यादिना।** 'घेरुत्तरस्ये'ति तु नोक्तम्। सूत्रे 'घेरि'त्यस्य षष्ठ्यन्तत्वात्। तन्त्राऽऽवृत्त्यादौ च प्रमाणाऽभावात्। औत् (७।३।११८) इति पूर्वसूत्रे 'इदुद्भ्यामुत्तरस्य ङेरि'ति क्लृप्तसम्बन्धस्य त्यागाऽयोगाच्च। **औत्स्यादिति।** अत्र व्याचख्युः—'औतस्तित्त्वं स्वरिताऽर्थम्। न विभक्तौ (१।३।४) इतीत्त्वनिषेधस्तु न भवति।

---

**बृहच्छब्दरत्नः**

इगन्ताऽङ्गस्याऽजादिविभक्तिपरत्वाऽभावात्। नादेशे त्विति। इनादेशाऽपेक्षया मुत्वं नाऽसिद्धम्। 'न मु ने' इति सूत्रवैयर्थ्याऽऽपत्त्या स्वविषये मुत्वस्य पूर्वं प्रत्यद्वित्वाऽभावबोधनद्वारा विभक्तिकार्यस्य पूर्वमप्रवृत्तेर्बोधनात्।

[2]नुम्यप्यस्त्विति। ननु नुम्विधावनुबन्धानामनेकान्तत्वेन नकारमात्रस्य विधिविषयतायाः कथञ्चित्सम्भवेऽपि नादेशे न सम्भवत्येवेति चेन्न। 'आङो नुट् पुंसी'ति न्यासे दोषाऽभावात्। क्वचित्तु 'नुम्येवे'त्येवकारः पठ्यते। 'नुम् आङि पुंसी'त्येव पठनेन सर्वत्र नुमेवाऽस्त्वित्यर्थः। न हीदृशे विषये प्रकृत्यंशस्य पदत्वे, पदत्वाऽभावे वा विशेषोऽस्ति। अत एव इनादेशप्रत्याख्यानं भाष्यकारोक्तं सङ्गच्छते। 'षट्त्रिचतुर्भ्यो हलादिरि'ति सूत्रन्तु गौणे, समासे च न प्रवर्त्तते इति 'चतुरः शसी'ति सूत्रे भाष्ये स्पष्टम्। एतेन 'तत्र पुंसि 'अमुने'त्यसिद्ध्याशङ्काया निर्दलत्वम्, उत्तरे एतदनुक्तेन्यूनत्वञ्चे'ति परास्तम्।

अमुष्मै कुलायेति। [3]न मु ने इति सूत्रविषये पूर्वं विभक्तिकार्याऽप्रवृत्तौ, मुत्वे, तस्याऽसिद्धत्वेन स्मैभावस्य प्राप्तावपि, परत्वान्नुमि असिद्धी रूपस्य स्पष्टैव। आदिना 'अमुयोरि'त्यादि बोध्यम्। अत्राऽपि पूर्वोक्तरीत्या एत्त्वस्याऽप्रवृत्तौ, मुत्वे,

---

**लघुशब्दरत्नः**

नुम्यप्यस्त्विति। अयं भावः—'तन्त्रेण नाभावे, नकारे च कार्ये, तं प्रति, अन्यं प्रति च, कृते च कार्यान्तरं प्रति मुभावो नाऽसिद्ध' इति तदर्थः। एतेन 'मुत्वस्याऽसिद्धत्वेनेनादेशे, गुणे, नुमादेरप्राप्तिरि'ति परास्तम्। 'नुम्येवाऽस्त्वि'ति पाठे एवकारोऽप्यर्थः। उच्चारणार्थत्वादिति। तन्त्रेणोच्चरिते [4]द्वितीये 'ने'शब्दे इत्यर्थः। अमुष्मै इति। न मु ने (८।२।३) इति सूत्रविषये पूर्वं विभक्तिनिमित्तकार्याऽप्रवृत्तौ, मुत्वे, तस्य नकारविषये कमपि प्रति

---

[1] 'नुम्यप्यस्तु' इति लघुशब्दरत्नसंमतः पाठः। [2] 'नुम्येवास्तु' इति क. पाठः।
[3] 'नमुनेतिसूत्रविषये' इति क. ख. पाठः।
[4] 'द्वितीयनेशब्दे' इति मुद्रितः पाठः।

अनित्यत्वात् । अनित्यत्वञ्च इदमस्थमुः (५।३।२४) इति थमो मकारस्य इत्सञ्ज्ञापरित्राणाऽर्थादुदित्करणाल्लभ्यते इति तत्रैवोक्तमि'ति । तच्चिन्त्यम् । न विभक्तौ (१।३।४) इति सूत्रे 'ङेरौतस्तु[१] तकार उच्चारणार्थो, नेत्सञ्ज्ञ' इति स्वयमेवोक्तत्वेन पूर्वाऽपरविरोधात् । युक्तं चोच्चारणाऽर्थत्वं, न तु स्वरिताऽर्थत्वम् । 'स्तीर्णे बर्हिषि समिधाने अग्नौ' इत्यादौ स्वरितत्वाऽदर्शनात् । 'अदि'ति तपरत्वन्तु 'बुद्धौ'इत्यादावत्त्वे कृते, स्त्रियां टाप् मा भूदित्येतदर्थमि'-त्याहुः । तदपि चिन्त्यम् । तपरग्रहणाद्धि टापा सह दीर्घो मा भूत् । टाप्तु

---

बृहच्छब्दरत्नः

नुमि चाऽनिष्टं स्पष्टमेव। स्वरितत्वेति। ननु औतस्तित्त्वेऽपि स्वरितश्रवणं न भविष्यत्येव। 'अग्नि'शब्दस्याऽन्तोदात्तत्वेन 'एकादेश उदात्तेनोदात्त' इत्यनेनोदात्तत्वादिति चेन्न। 'अनुदात्तं पदमेकवर्ज्जमि'त्यनेनाऽग्निशब्दस्य सर्वाऽनुदात्तत्वात्। अत एव 'औपगवत्वमि'त्यादौ 'त्व'प्रत्ययोदात्तत्वं निमित्तीकृत्योक्तपरिभाषया अण्णन्तस्य निघात इति स्पष्टं भाष्यादौ। दीर्घो मा भूदिति। तपरकरणं हि भिन्नकालव्यावृत्त्यर्थम्,—यथा 'अतो गुणे' इत्यादौ। विधीयमाने तु भिन्नकालानां

---

लघुशब्दरत्नः

असिद्धत्वाऽभावेन, विभक्त्यादेशं प्रत्यसिद्धत्वेऽपि वा अस्य[२] स्वैभावात्परत्वेन नुमापत्तेः । आदिना 'अमू कुले' 'अमुयोरि'ति । तयोरेत्त्वस्याऽप्रवृत्तौ, मुत्वे, नुमि चाऽनिष्टं स्पष्टमेव । 'न मु टादेश' इति वार्त्तिकस्वारस्येन नादेश इत्येव तदर्थं उचित' इत्यपि बोध्यम् ।

नेत्सञ्ज्ञ इति । इयमपि तदुक्तिश्चिन्त्या । तस्य लोप (१।३।९) इति सूत्रभाष्ये उच्चारणार्थानामपीत्सञ्ज्ञकत्वस्य स्पष्टमुक्तत्वात् ।

[३]स्वरितत्वाऽदर्शनादिति । नन्वौतः स्वरितत्वेऽपि न 'अग्नावि'त्यत्र स्वरितश्रवणम्, अग्निशब्दस्याऽन्तोदात्तत्वेन एकादेश उदात्तेन (८।२।५) इत्यनेनोदात्तत्वादिति चेन्न । वृत्तावनुदात्तस्येत्यस्य तत्राऽनुवर्त्तितत्वात् । शेषनिघातेन औकारस्वरितत्वमादायाऽग्निशब्दस्य सर्वाऽनुदात्तत्वाच्च । स्वरितस्य तु नोदात्तपदेन ग्रहणम् । उदात्तस्वरितयोः (८।२।४) इत्यादौ स्वरितग्रहणात् । उच्चारणाऽर्थानामित्सञ्ज्ञकत्वेऽपि[४] 'प्रत्ययाऽप्रत्यययो'रित्येव सिद्धे, पुनः 'तिति प्रत्ययग्रहणं कर्त्तव्यमि'ति वार्त्तिकेनौपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्त्या नाऽत्र स्वरितत्वप्रवृत्तिरिति तत्त्वम् । आदेशेषु दकारस्थानिकचर्त्वनिष्पन्नतकारस्य सत्त्वेन दित्वात्तदप्राप्तेः[५] ।

---

[१] तुः मुद्रितेषु त्रुटितः ।

[२] 'अस्य' इति लिखितेषु नास्ति ।

[३] 'स्वरितस्याऽदर्शनादि'ति इति क. पाठः ।

[४] 'इत्सञ्ज्ञकत्वेऽपि आदेशेषु दकारस्थानिकचर्त्वनिष्पन्न' इति क. ख. पाठऽ ।

[५] 'तदप्राप्तेश्च' इति घ. पाठः ।

स्यादेव । लक्षणद्वयबाधे मानाऽभावात् । अत एव कृन्मेजन्तः (१।१।३९) इति सूत्रभाष्य-वार्त्तिकयोर्विवरणे च 'सन्निपातपरिभाषया टाप् ने'त्युक्तम्, टापा व्यवधाने हि आनन्तर्यविघातः स्यादिति । तस्मात् औत इव अतोऽपि [1]तपरकरणमुच्चारणाऽर्थमेवेत्यवधेयम् ।

अनङ् सौ (७।१।९३) । 'सोर्डा' इत्येव सिद्धे अनङ्विधानमन्यतोऽपि स्यादिति ज्ञापनाऽर्थम् । तेन उशनसः सम्बुद्धौ अनङ् सिद्धयती'ति प्राञ्चः । तच्चिन्त्यम् । 'सोर्डे'त्युक्ते हि ऋदुशनस्[2] (७।१।९४) इत्युत्तरसूत्रेणाऽपि डा स्यात् । ततश्च 'उशने'त्यत्र सर्वनामस्थाने चाऽसम्बुद्धौ (६।४।८) इति दीर्घः स्यात् । 'पुरुदंसे'त्यत्र सान्तमहतः (६।४।१०) इति [3]दीर्घः स्यात् । यद्वा

---

**बृहच्छब्दरत्नः**

ग्रहणस्याऽप्राप्तावपि तकारोच्चारणसामर्थ्येन तत्स्थाने लक्ष्ये लक्षणाऽन्तरेण प्राप्तोऽपि व्यावर्त्त्यते, 'दिव उदि'त्यादौ यथा । एवञ्च प्रकृते सवर्णदीर्घ एव न स्यात् । टाप्तु स्यादेव । वाच्यवृत्त्या तदभावस्योपपादयितुमशक्यत्वादिति भावः । अत एव 'ज्ञोऽविदर्थस्ये'त्यादिप्रकरणेन समासबाध इव टापो बाध' इत्यपास्तम् । वार्त्तिकाऽनुरोधेन समासबाधोन्नयनादित्यादि तत्रैव प्रपञ्चयिष्यामः ।

सोर्डेत्येवेति । न चैवं 'डित्त्वसामर्थ्यादभस्याऽपि टेर्लोप' इति वचनकल्पने गौरवमिति वाच्यम् । डकारफलकथनत्वात् । उक्ताऽर्थस्याऽन्यत्र कल्पितत्वेन लाघवाच्च । सिध्यतीति । विकल्पस्तु वाचनिक एव । स्पष्टञ्चेदं वृत्तिमाधवादिग्रन्थे । सान्तेति । [4]दन्त्यान्त—'दंस'धातोः प्रत्यय' इति पक्षे बोध्यम् ।

---

**लघुशब्दरत्नः**

'उच्चारणार्थं' इत्यस्य च वर्णाऽन्तरोच्चारणे मुखस्य क्लेशवारणाऽर्थो, न त्वन्यफलार्थ इत्यर्थः । अत एव भाष्ये औकारं डितमाश्रित्य 'अदि'ति प्रत्याख्यातम् । न हि तदा तित्त्वमस्ति । न च डित्त्वे विंशतौ तिलोपाऽऽपत्तिः । भाष्यप्रामाण्येन तस्य सप्तम्यामनभिधानादिति दिक् ।

अदिति । अस्य 'यदपी'त्यादिः । दीर्घो मा भूदिति ! भिन्नकालव्यावृत्त्यर्थत्वात्तपरत्वस्येति भावः । न च ज्ञोऽविदर्थस्य (२।३।५१) इति प्रकरणेन समासबाध इवाऽनेन टापोऽपि बाध इति वाच्यम् । 'प्रतिपदविधाना षष्ठी न समस्यते' इति वार्त्तिकाऽनुरोधेन तत्र तथा कल्पनेऽपीह तथा कल्पने मानाऽभावात् ।

अनङ् सिद्धयतीति । वैकल्पिकत्वमात्रन्तु वाचनिकमिति तद्भावः । 'सञ्ज्ञापूर्वक'

---

[1] 'तपरकरणञ्च' इति क. पाठः ।
[2] 'ऋदुशनस्' इति मुद्रितेषु पाठः । लिखितेषु तु 'ऋदुशना' इत्येव पाठः ।
[3] 'दीर्घ' इति लिखितेषु नास्ति ।
[4] 'इत्यान्तदंसधातोः' इति क. ख. पाठः ।

'सञ्ज्ञापूर्वको विधिरनित्य' इति वा, अङ्गवृत्तपरिभाषया वा समाधानं बोध्यम् ।

**हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** (६।१।६८) । 'दीर्घादि'-त्येतन्ङ्यापोरेव विशेषणं, न तु हलः, 'असम्भवादि'त्याह—दीर्घाविति । परमिति । न त्विदं विहितविशेषणम् । 'या' 'सा' 'का' इत्यादावव्याप्तेः । न च तत्र हलन्ताद्विहितत्वेन निर्वाहः । 'यः' 'स' इत्यादावतिव्याप्तेः । 'कर्त्ता' इत्यादावव्याप्तेश्चेति भावः । हलिति । तस्य च 'सुतिसी'त्येवंरूपत्वम् एकदेशविकृतन्यायेन बोध्यम् । लुप्यत इति । यद्यपीह लोपो व्योः (६।१।६६) इत्यतो 'लोप' इत्यनुवर्त्तते, तच्च तत्र भावसाधनं, तथाऽपीह कर्मसाधनं, 'हलि'ति प्रथमान्तेन सामानाधिकरण्यादिति भावः ।

दीर्घग्रहणं किम् ? । अतिखट्वः, निष्कौशाम्बिः । ननु इह समस्तस्य ङ्याबन्तत्वं नास्ति । न च 'स्त्रीप्रत्यये तदादिनियमो नास्ती'ति वाच्यम् ।

---

**बृहच्छब्दरत्नः**

अङ्गवृत्तेति । एतेन 'सखि'शब्दादाचारक्विबन्तात् क्विपि तुकि, 'सखित्शब्दात् डादेशे, टिलोपे, 'सखा'इति रूपम् , अनङि अन्त्यादेशे, 'सख्या' इति रूपं स्यादि'ति निरस्तम् । प्रथमान्तेनेति । षष्ठीप्रक्लृप्तिपक्षस्य पूर्वं दूषितत्वात् । कल्प्यमानशब्दे एवाऽर्थाऽन्तरकल्पनस्योचितत्वाच्च । पक्षाऽन्तरत्वे दोषाऽभावाच्चेति भावः ।

---

**लघुशब्दरत्नः**

इत्यस्य भाष्याऽस्पृष्टत्वादाह—अङ्गवृत्तेति । 'इयमगतिकगतिः । 'सोर्डे'ति न्यासे लाघवा-ऽभावश्च । डित्त्वसामर्थ्याट्टिलोपकल्पने गौरवञ्च । तस्मादुशनसोऽनङ्, तद्वैकल्पिकत्वं च चिन्त्यमेव, भाष्याऽनुक्तत्वादि'ति प्रामाणिकाः ।

चेतीति । तस्मादित्युत्तरस्य (१।१।६७) इति जाग्रति विहितविशेषणाऽसम्भवः 'च'-शब्दाऽर्थः । एकदेशविकृतन्यायेनेति । स्थानिवत्त्वस्योपलक्षणमिदम् । अर्द्धाऽधिकविकारेण प्रत्यभिज्ञाऽभावाच्छिन्नपुच्छश्वदृष्टान्तमूलकन्यायस्याऽत्राऽप्राप्तेरिति[1] बोध्यम् । प्रथमान्तेनेति । यद्यपि 'तस्मादित्युत्तरस्ये'त्युक्तेः षष्ठ्यन्तताऽपि सम्भवति, तथाऽपि बहुषु पदेषु विभक्ति-विपरिणामकल्पनाऽपेक्षयाऽऽगन्तुकलोपशब्दे एवाऽर्थाऽन्तरकल्पनमुचितमिति भावः । ननु 'सुति-सी'ति प्रत्ययैः 'यस्मात्स विहितस्तदादेरि'त्युपस्थितया, तस्य 'हल्ङ्याब्भ्य' इति विशेषणमिति, 'हल्ङ्याबन्तात्तदादेः परस्ये'त्यर्थेन [2]प्रकृत्याक्षेपात्, उपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वाच्च[3]

---

[1] 'प्राप्तिरिति बोध्यम्' इति क्वचित्पाठः ।

[2] 'प्रकृत्याक्षेपात्' इति लिखितेषु नास्ति ।

[3] चकारो लिखितेषु नास्ति । घ. पुस्तके तु पश्चाच्चकारो वर्द्धितः ।

अनुपसर्जने हि तथा। इह तूपसर्जनत्वात्तदादिनियमोऽस्त्येव। सत्यम्। तथाऽपि उत्तरपदस्य ङ्याबन्तत्वेन सोस्ततः परत्वाऽनपायात्। न हीदं विहितविशेषणमित्यवोचाम। अत एव 'बहुश्रेयसी'त्यत्र सुलोपः।

स्यादेतत्। गङ्गीयतेः क्विप्। गङ्गीः। इह ईकारस्य स्थानिवद्भावेन आप्त्वाद्दीर्घत्वाच्चाऽतिव्याप्तिरिति चेत्। सत्यम्। 'ङी ई' 'आ आबि'ति प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानान्न कश्चिद्दोषः।

---

बृहच्छब्दरत्नः

बहुश्रेयसीति। अत एव 'सुतिसी'ति प्रत्ययैरङ्गाऽऽक्षेपात् 'अतिखट्व' इत्यादौ न दोष' इत्यपास्तम्। उक्तफलसिद्ध्यर्थमत्राऽङ्गाऽनाक्षेपात्। वैयधिकरण्याऽन्वयाऽङ्गीकाराच्च। 'श्रविष्ठासु जातः श्रविष्ठ' इत्यत्र तद्धितलुकि, स्त्रीप्रत्ययलुकि च प्रत्ययलक्षणेनाऽऽबन्तत्वादतिव्याप्तिवारणाऽर्थं दीर्घग्रहणस्याऽऽवश्यकत्वाच्च। वस्तुतस्तु 'प्रत्ययग्रहण'परिभाषया, 'येनविधिस्तदन्तस्ये'ति सूत्रेण 'टिड्ढाणञि'ति सूत्रे 'अण्णन्ताऽन्तात्प्रातिपदिकादि'त्यादिवत् 'ङ्याबन्ताऽन्तादि'त्यर्थाऽऽपत्तौ दोषलेशाऽभावः। न चैवं 'माले'त्यादावव्याप्तिः, 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधादिति वाच्यम्। उक्तपरिभाषायाः प्रत्ययविधिविषयत्वात्। अतिव्याप्तिरिति। 'अस्य स्त्री ई, देवदत्तस्य ई देवदत्तेरि'त्यादावपि बोध्या।

न कश्चिद्दोष इति। ननु सूत्रकारादिमते लोपो दुर्वारः। न चेष्टाऽऽपत्तिः। फलभेदे प्रत्याख्यानाऽसम्भवेन भाष्यग्रन्थस्य व्याकुलीभावप्रसङ्गात्। न हि रूपभेदे

---

लघुशब्दरत्नः

[1]प्रकृतेर्ङ्याबन्तत्वाऽभावेन नाऽत्र दोष इत्यत आह—अत एवेति। [2]'तत्सिद्ध्यर्थं [3]प्रत्ययग्रहणपरिभाषया उक्तं विशेष्यमादाय तदन्तविधौ, ततो 'येन विधिरि'ति परिभाषया तमादाय पुनस्तदन्तविधौ टिड्ढाणञिति सूत्रे 'अण्णन्तान्तादि'तिवत् 'ङ्याबन्तान्तादि'त्यर्थस्याऽऽवश्यकत्वेनाऽत्र दोषः। 'माले'त्यादौ तु व्यपदेशिवद्भावेन सिद्धिरिति भावः। 'श्रविष्ठासु जातः श्रविष्ठ' इत्यादौ तद्धितलुकि, स्त्रीप्रत्ययलुकि [4]च, प्रत्ययलक्षणेन [5]आबन्तत्वादतिव्याप्तिवारणाऽर्थं दीर्घग्रहणमित्यपि बोध्यम्।

अतिव्याप्तिरिति। 'अस्य स्त्री ई, देवदत्तस्य ई देवदत्तेरि'त्यादावपि सेति बोध्यम्। प्रत्याख्यानादिति। दीर्घग्रहणेनोपस्थितत्वात् [6]ईकाराऽऽकाररूपस्यैव दीर्घस्य ग्रहणाच्चेत्यपि

---

[1] 'प्रकृतेरि'ति लिखितेषु नास्ति। [2] 'एतत्सिद्ध्यर्थम्' इति मुद्रितेषु पाठः।

[3] 'येन विधिः (१।१।७२) इति परिभाषया शब्दरूपं विशेष्यमादाय तदन्तविधौ, ततः प्रत्ययग्रहणपरिभाषयोक्तं विशेष्यमादाय पुनस्तदन्तविधौ, 'टिड्ढाणञ्' इति सूत्रे' इति मुद्रितेषु पाठः। स चाऽपपाठ इति भावप्रकाशादौ स्पष्टम्।

[4] चकारो लिखितेषु नास्ति। [5] 'टाबन्तत्वात्' इति मुद्रितेषु पाठः।

[6] 'ईकाररूपस्यैव' इति मुद्रितेषु पाठः। 'आकार' इति तत्र त्रुटितम्।

**बृहच्छब्दरत्नः**

जाग्रति वचनं युज्यते प्रत्याख्यातुम्, [1]'सिद्धमि'त्यादयः शब्दा वा शक्यन्ते प्रयोक्तुम्। त्वकत्पितृकादौ तु मुनेः पराऽभिमतलक्ष्योपमर्दाऽर्थमेव प्रवृत्ततया युक्तं रूपभेदेऽपि प्रत्याख्यानम्। तथैव ग्रन्थस्वरसतो लाभात्। वस्तुतस्तु तदपि नेति पूर्वमेवोक्तमिति चेन्न। आप्साहचर्येण परभूते ङीपि 'आद्गुण' इत्येकादेशविषयेऽप्रवृत्तेः। 'अस्य स्त्री ई, गङ्गाया ई गङ्गेरि'त्यादौ हल्साहचर्येण सूत्रोपात्तधर्मद्वयाऽनाक्रान्तस्यैव ग्रहणान्न दोषः। एतेन 'कस्य स्त्री की, तस्मादाचारक्विबन्ताद्विचि 'केरि'त्यादौ सूत्रादिमते लोपो दुर्वार' इति निरस्तम्। 'सार्वधातुकार्द्धधातुकयोरि'ति गुणविषयेऽपि तत्साहचर्यादेवाऽप्रवृत्तेः। ङीप्साहचर्येणोत्पत्तिशिष्टजात्याक्रान्तादेव वा[2] लोपविधानेन सूत्रमतेऽपि लोपाऽप्राप्तेः। 'अतिखट्वस्य अः अतिखट्वा' 'निष्कौशाम्बेः इः निष्कौशाम्बी'त्यादौ 'खट्वाया अः खट्वा', कौशाम्ब्या इः 'कौशाम्बी'त्यादाविव सुलोपादिकं भवत्येव। सूत्रमते दीर्घत्वे सति ङ्याप्त्वात्। भाष्यमते ईकारा-ऽऽकाररूपत्वे सति तत्त्वात्। यद्यपि 'ङ्यापोरदीर्घत्वे' इति वचनेन स्थानिवद्भावनिषेधात् 'अतिखट्वः' 'निष्कौशाम्बिरि'त्यादौ ङ्याप्त्वाऽभावे, लोपो ने'तिवदतां वार्त्तिककृतां मते अन्तरा ङ्याप्त्वस्य सति विच्छेदे, पश्चाज्जातेऽपि दीर्घे स्थानिवद्भावेन तत्प्ररोहस्याऽयोगाल्लोपाऽप्रसङ्गः। न च स्मृतमनुबन्धं, श्रुतम् आकारम्, ईकारञ्चाऽऽदाय ङ्याप्त्वाऽनुसन्धानात्स्यादेव लोप इति वाच्यम्। एवंविधङ्यापोर्लाक्षणिकत्वेन ग्रहणाऽयोगात्। स्थानिवद्भावे तूक्तपरिभाषा न प्रवर्त्तते इति सर्वसंमतं, तथाऽपि 'दीर्घसम्भावनारहिताऽऽदेशे स्थानिवद्भावनिषेध' इति वार्त्तिकव्याख्यानान्न दोषः। ननु वार्त्तिकाऽनुरोधेन सूत्रकारमते ईकाराऽऽकारप्रश्लेषो वाच्यः। तेन 'अतिखट्व' इत्यादीनां प्रश्लेषेणैव वारणे 'दीर्घ'ग्रहणं नियमाऽर्थम्। भाष्यमते तु प्रश्लेषाऽन्तरं—'न कदाचित् ह्रस्वत्वमन्वभूदि'ति। तेन [3]मतत्रयेऽपि सुलोपादिकम्। न च प्रश्लेषो भाष्यकारैर्वार्त्तिकस्य, सूत्रगतदीर्घस्य च प्रत्याख्यानायोत्प्रेक्षित इति सूत्रकारैः कथमाश्रयितुं शक्यते इति वाच्यम्। 'नसे' 'पृते' इत्यादिवारणाऽर्थं 'याडापः' इत्यादौ सूत्रकारैरेवाऽऽश्रयणात्। दीर्घग्रहणप्रत्याख्यानाऽर्थं प्रश्लेषाऽन्तरे एव भाष्यकाराणां तात्पर्य्याऽवधारणात्। एकप्रश्लेषे सूत्रकारतात्पर्याऽनिर्बाधाच्च। न च भाष्यग्रन्थे एक एव प्रदर्शितो, न द्वाविति वाच्यम्। सवर्णदीर्घभूतस्यैव द्विरूपत्वादिति चेन्न। 'अकः सवर्णे' इतिशास्त्रनिष्पन्नस्योक्तदीर्घस्य तस्मिन्नेव शब्दे कालत्रये ह्रस्वत्वाऽभावेन दोषस्य दुर्वारत्वात्। प्रयोगाऽन्तरग्रहणे 'खट्वे'त्यादौ लोपाऽनापत्तिः। गौरवाच्च। मुनिद्वयाऽनुरोधेन वार्त्तिकस्यैवाऽन्यथाव्याख्यानस्योचितत्वाच्च। लक्षणबाधस्याऽन्याय्यत्वाच्च।

---

[1] वार्त्तिकादौ 'सिद्धमि'त्यादयः प्रयोगा इत्यर्थः

[2] 'जात्याक्रान्तादेवालोप' इति क. ख. पाठः।

[3] अत्र 'मतद्वयेऽपि' इत्यपि पाठः सम्भाव्यते।

सुतिसीति किम् ? । भेत्ता । तासेस्तकारस्य लोपो मा भूत् । न चैवमपि 'अभैत्सीदि'त्यादौ सिचो लोपाऽऽपत्तिः । सु-तिभ्यां साहचर्येण विभक्तेरेव ग्रहणात् । अपृक्तं किम् ? । 'भिनत्ति' 'छिनत्ती'ति प्रत्युदाहरन्ति । तच्चिन्त्यम् । विशिष्टस्याऽहल्त्वात् । 'सुतिसीनां हलि'ति क्लिष्टं व्याख्यायाऽतिप्रसङ्गाऽऽपादनस्याऽनुचितत्वात् । यदप्याहुः—'सुरां सुनोतीति सुरासुत् । तमाचष्टे सुरासयति । ततः क्विप् । सुराः, सुरासौ, सुरासः । इह सुनोतेरवयवस्य सस्य लोपं व्यावर्त्तयितुमपृक्तग्रहणमि'ति । तदपि न । परस्परसाहचर्येण सु-ति-सीनां विभक्तीनामेव ग्रहणात् । अन्यथा सिचो लोपाऽऽपत्तेरुक्तत्वात् । प्रत्ययाऽप्रत्यययोः प्रत्ययस्यैव ग्रहणाच्च । हल् किम् ? । बिभेद । ननु प्रथमहल्ग्रहणं व्यर्थम् । हलन्तात्परेषां संयोगान्तलोपसम्भवात् । अत्राहुः—

'संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति ।
रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते' ॥

तथा हि—'सखे'त्यत्र नलोपो न स्यात् । संयोगान्तलोपस्याऽसिद्धत्वात् । स्यादेतत्—संयोगान्तलोपो नाऽसिद्धः । न ङिसम्बुद्ध्योः (८।२।८) इति सूत्रे सम्बुद्धिग्रहणाज्ज्ञापकात् । न चैवं 'गोमानि'त्यादावपि नलोपाऽऽपत्तिः । ज्ञापकस्य विशेषविषयत्वात् । यत्र हि नकार-विभक्त्योरानन्तर्यं तत्रैव सिद्धत्वम् । व्याख्यानात् । यत्त्वाहुः—'हे ब्रह्मन्नि'ति नपुंसकाऽर्थत्वान्नैतज्ज्ञापक-

---

बृहच्छब्दरत्नः

प्रत्ययस्यैवेति । [1]उकारस्याऽनुनासिकप्रतिज्ञयाऽपि बोध्यम् । वस्तुतस्तु 'णिजेवाऽत्र नाऽस्ती'ति सप्तमे भाष्ये स्पष्टम् । गोमानिति । न च हल्ङ्यादि-सूत्राऽभावे संयोगाऽन्तलोपः पुनर्दुर्लभः, 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति-

---

लघुशब्दरत्नः

बोध्यम् । सुरासयतीति । न च णौ चङि (७।४।१) इति सूत्रस्थभाष्यप्रामाण्येन 'इदुदुपधेभ्यो णिज् नास्ती'ति सिद्धान्तात् कथमत्र णिजिति वाच्यम् । तद्भाष्यस्य तेषां लुङि प्रयोगाऽभावकल्पनेनोपपत्तेः, सर्वथा तदभावकल्पनमप्रामाणिकमित्यभिमानात् । ग्रहणाच्चेति । सावनुनासिकोकारपाठाच्चेत्यपि बोध्यम् । एवं चाऽपृक्तग्रहणं चिन्त्यप्रयोजनम् । वस्तुतो 'गङ्गीः' 'सुरा' इत्यादेरभिधाने दृढं मानं चिन्त्यम् ।

विभक्त्योरानन्तर्यमिति । एवञ्च विभक्तिसंयोगान्तलोपस्य सिद्धत्वं ज्ञाप्यते इति तात्पर्यम् । 'गोमानि'त्यादौ लक्ष्यभेदाद्वारंवारं संयोगान्तलोपः । नपुंसकार्थत्वादिति ।

---

[1] सुघटकस्य उकारस्येत्यर्थः ।

मि'ति। तन्न। लुका लुप्ते प्रत्ययलक्षणाऽभावेन, सम्बुद्धौ 'वा नपुंसकानामि'त्यस्याऽऽवश्यकतया च सम्बुद्धिग्रहणस्य नपुंसकविषयत्वाऽसम्भवेन उक्तज्ञापकस्य सुस्थत्वात्। तस्मान्नलोपो न प्रयोजनमिति चेत्। इह तर्हि 'अभिनोऽत्रे'त्यत्र रोरुत्वं न स्यात्। तदिदमुक्तं-'नलोपादिरि'ति। तथा 'अबिभर्भवान्' [1]'अजागर्भवानि'त्यत्र तिलोपो न स्यात्। रात्सस्य (८।२।२४) इति नियमात्।

अत्रेदमवधेयं,-ङ्याप्ग्रहणं सोरेव विशेषणं, न तु तिस्योः। व्याख्यानात्। अस्मिन्नेव सूत्रे 'द्विहलपृक्तग्रहणं, तिस्योश्च ग्रहणं न कर्त्तव्यं भवती'ति-भाष्यश्चेह प्रमाणम्। यदि हि ङ्याप्ग्रहणं तिस्योरपि विशेषणं स्यात्तर्हि

बृहच्छब्दरत्नः

रि'ति न्यायादिति वाच्यम्। 'राजन्वान् सौराज्ये' 'स्वतवान्पायौ' इत्यादिनिर्देशात्। अभावेनेति। न च वचनसामर्थ्यात् 'न लुमते'ति निषेधो बाध्यतामिति वाच्यम्। फलाऽभावात्। अव्यवहित-'पूर्वत्राऽसिद्धमि'त्यसिद्धत्वबाधेन चारितार्थ्याच्च। आवश्यकतया चेति। विकल्पाऽर्थमिति भावः। ननु भाष्ये 'वा नपुंसकानामि'त्येव पठितम्, एवञ्च सूत्रे सम्बुद्धिग्रहणाऽभावे वार्त्तिके कथं तदर्थो लभ्येतेति चेन्न। 'वा नपुंसकानामि'त्यत्रैव पठनीयेऽत्र पाठेनोक्ताऽर्थज्ञापकतायाः सुस्थत्वात्। 'न हि वार्त्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्तिरि'ति न्यायेनाऽयमर्थो वक्तुमशक्य इति चेत्तर्हि सूत्रमतेऽन्यार्थं सम्बुद्धिग्रहणस्याऽऽवश्यकत्वेन सिद्धं नः समीहितम्। अत एव यथान्यासे 'हे राजन्नि'त्यादिसिद्धिः। सम्बुद्धिग्रहणस्य नपुंसकमात्रविषयत्वे तु सर्वोपप्लवः स्यादिति।

लघुशब्दरत्नः

स्वमोः (७।१।२३) इति हि तत्र लुगिति, तत्र नलोपनिषेधायाऽऽवश्यकत्वादिति भावः।

लुका लुप्ते इति। 'ङिसम्बुद्ध्योरि'ति सप्तमीति भावः। आवश्यकतया चेति। 'ङिसम्बुद्ध्योरि'त्यस्य षष्ठ्यन्तत्वपक्षेऽपि विकल्पाऽर्थमावश्यकतयेत्यर्थः[2]। यद्यपि 'वा नपुंसकानामि'त्येव[3] भाष्ये पठितं, सम्बुद्धिग्रहणं च सूत्रादेव सम्बध्यते इति, तदर्थं तच्चरितार्थं, तथाऽप्यत्र पाठेनोक्ताऽर्थज्ञापकताऽपि। 'सम्बुद्धिग्रहणं भाष्ये प्रत्याख्यातमि'ति तु न भ्रमितव्यम्। सूत्रस्थङिग्रहणस्य, 'ङिसम्बुद्ध्योरनुत्तरे'तिवार्त्तिकस्थसम्बुद्धिग्रहणस्य च प्रत्याख्यानेऽपि, सूत्रस्थस्याऽप्रत्याख्यानादिति भावः।

भाष्यमिति। 'यदि पुनरममपृक्तलोपः संयोगान्तलोपो विज्ञायेते'त्युपक्रम्य तद्भाष्यं

[1] 'अजागर्भवान्' इति मुद्रितेषु त्रुटितः।
[2] 'आवश्यकतया चेत्यर्थः' इति मुद्रितेषु पाठः।
[3] 'इत्येवम्' इति मुद्रितेषु पाठः।

कथं तिस्योर्ग्रहणस्याऽकर्त्तव्यतां ब्रूयात्। यत्तु 'ङ्याब्भ्यां तिस्योरसम्भव एवे'ति। तत्र 'ङ्यन्तादसम्भव' इति सत्यम्। आबन्तात्तु आचारक्विबन्ताल्लङः तिप्सिपौ स्त एव—'अगङ्गात्' 'अगङ्गाः' इति यथा। न च शपा व्यवधानम्। एकादेशस्य पूर्वाऽन्तत्वेन ग्रहणात्। न च स्थानिवद्भावः। अपूर्वविधित्वात्।

अत्राऽयं निष्कर्षः—'ङ्यापः सोरि'त्येव सूत्रमुचितम्। न च 'सुराः' 'सुरासौ' इत्यादौ धातोः सकारेऽतिप्रसङ्गः। ङ्याब्भ्यां साहचर्यात्, 'प्रत्ययाऽप्रत्यययोरि'ति परिभाषया च प्रत्ययस्यैव सोर्ग्रहणात्। 'राजे'त्यादौ नलोपस्तु न ङिसम्बुद्ध्योः (८।२।८) इति ज्ञापकेन साधित एव। किञ्च 'अभिनो-

---

बृहच्छब्दरत्नः

ङ्यन्तादसम्भव इति। 'अत एव ङीसाहचर्यादापोऽपि सोरेव लोप' [1]इति मतेनेदम्। ननु को ब्रह्मा, तस्य स्त्री की, तस्मादाचारक्विबन्ताद्यङ्लुकि, लङि, 'अचेकेदि'त्यादौ सम्भवोऽस्त्येवेति चेन्न। उक्तयुक्तेः। आचारक्विबन्ताद्यङ्लुगभावस्य 'असिद्धवदत्राभादि'ति सूत्रे भाष्ये ध्वनितत्वाच्च। तत्र हि 'अतो हेरि'त्यत्र 'प्रत्ययादि'ति सम्बन्धेन 'अकाराऽन्तप्रत्ययात्परस्य हेर्लुगि'त्यर्थात् 'जही'त्यत्र दोषाऽभावेन 'असिद्धवदत्रे'ति सूत्रं माऽस्त्विति स्थितम्। तच्चोक्ताऽर्थकल्पने एव सङ्गच्छते। अन्यथा 'क'शब्दादाचारक्विबन्ताद्यङ्लुकि हेर्लुगनापत्त्या फलभेदाऽऽपत्तौ सूत्रप्रत्याख्यानमसङ्गतमेव स्यात्। पूर्वान्तत्वेनेति। न चैवं 'बुद्धावि'त्यादौ सन्निपातपरिभाषया टाप् ने'ति भाष्यग्रन्थो विरुद्ध्येतेति वाच्यम्। लौकिके आनन्तर्ये अन्तादिवद्भावाऽप्राप्त्या प्रकृतिप्रत्ययसंश्लेषविघातस्य स्पष्टत्वात्! प्रकृते च पूर्वाऽन्तत्वेन हल्ङ्यादिसूत्रस्य प्रवृत्तिरिति स्पष्ट एव विशेषः। अभिनोऽत्रेति। 'संयोगान्तलोपो रोरुत्वे' इति वार्त्तिके विनिगमकाऽभावात् 'न मु ने इतिवत्'रुत्वे

---

लघुशब्दरत्नः

प्रवृत्तम्। पूर्वान्तत्वेनेति। न चैवं 'बुद्धावित्यादौ संनिपातपरिभाषया टाप् ने'ति भाष्यविरोध इति वाच्यम्। दीर्घप्रवृत्त्युत्तरमन्तादिवद्भावप्रवृत्तावपि, टाबुत्पत्तिकालिकाऽऽनन्तर्यविघातस्य तेन वारयितुमशक्यत्वात्। अशास्त्रीयत्वात्संनिपातस्याऽन्तवद्भावेनाऽतिदेष्टुमशक्यत्वाच्च। अत्र 'आबन्तात्तु' इति तुनाऽरुचिर्बोधिता। [2]पञ्चमीसमासाऽऽश्रयणे स्थानिवद्भावोऽस्ति। अस्याऽभिधाने च न दृढं मानम्। आबन्तेभ्य आचारक्विबेव नास्ति, आतो धातोः (६।४।१४०) इति सूत्रस्थभाष्यप्रामाण्यात्। तत्र वार्त्तिककृता 'आतोऽनाप' इत्युक्तमिति तद्बीजम्। आचारक्विबन्ताद्यङ्लुक्तु नाऽस्त्येव। तेन 'कस्य स्त्री की, कीशब्दादिभ्य आचारक्विबन्तेभ्यो यङ्लुकि, लङि, 'अचेकेदि'त्यादौ ङ्यन्तादपि सम्भव' इत्यपास्तम्। ईकाररूपत्वाऽभावाच्च।

---

[1] 'इति न मतेनेदम्' इति क. ख. पाठः। अत्र 'इति नवीनमतेनेदम्' इति पाठः स्यात्।

[2] 'पञ्चमीसमासाश्रयेण' इति क. ख. पाठः।

ऽत्रे'ति उत्वमपि सूपपादम्। 'संयोगान्तलोपो रोरुत्वे' इति सिद्धकाण्डे पाठात्। 'हरिवो मेदिनं त्वे'ति यथा। 'अविभर्भवानि'त्यत्राऽपि न दोषः। रात्सस्य (८।२।२४) इत्यत्र तकारस्याऽपि प्रश्लेषेण 'त्सस्ये'ति च्छेदात्। ननु 'उखास्रदि'त्यादौ संयोगादिलोपः स्यादिति चेन्न। दत्वे कृते तदप्राप्तेः। असिद्धं दत्वमिति चेन्न। सिद्धकाण्डे 'वस्वादिषु दत्वमि'ति पाठात्। नन्वपदान्तत्वाद्दत्वं न स्यादिति चेन्न। 'सावपि पदं भवती'ति पक्षाऽऽश्रयणात्। तद्वीजन्तु 'असर्वनामस्थाने यची'ति च्छित्वा 'यजादौ सर्वनामस्थाने पदं ने'ति व्याख्यानम्।

न चैवं 'राजे'त्यादौ नलोपे कृते, सो रुत्वविसर्गौ स्यातामिति वाच्यम्। 'इतोऽदि'ति सिद्धे पथिमथि (७।१।८५) इत्याकारविधानेन प्रथमं सुलोपस्य ज्ञापनात्। ननु नैतज्ज्ञापकं, सम्बुद्धौ चरितार्थत्वात्—हे पन्थाः, मन्थाः, ऋभुक्षाः, तत्र हि दीर्घोऽसम्बुद्धाविति पर्युदस्तः, नलोपश्च निषिद्ध इति चेत्। एवं तर्हि 'नलोपात् प्राक् संयोगान्तलोप' इत्यर्थे न ङिसम्बुद्ध्योः (८।२।८) इति सूत्रमेव ज्ञापकमस्तु। तथा हि—'ङिसम्बुद्ध्योरि'ति षष्ठी,

---

बृहच्छब्दरत्नः

कर्त्तव्ये, कृते चे'ति व्याख्यानेन 'एङः पदान्तादि'ति पूर्वरूपे कर्त्तव्येऽपि संयोगान्तलोपो नाऽसिद्धः। अत एव 'हरिवोऽत्रे'ति प्रयोगः सङ्गच्छते। अत्र च प्रकृतसूत्रस्थभाष्यसन्दर्भ एव मानम्।

---

लघुशब्दरत्नः

उत्वमपीति। अपिनां पूर्वरूपम्। रोरुत्वे इति। 'कर्त्तव्ये, कृते चे'ति शेषः, न मु ने (८।२।३) इतिवत्। हरिव इति। हरिशब्दान्मतुपि छन्दसीरः (८।२।१५) इति वत्वे, नुमि, संयोगान्तलोपे, मतुवसोः (८।३।१) इति रुत्वे, [1]उत्वे च गुणः। छेदादिति। कीर्त्तयतेः क्विप्-विचावेव न स्तः। वृतेर्यङलुकि, लङि, ईडभावे तिप्सिपोः प्रयोग एव नास्ति। 'यथालक्षणमप्रयुक्ते' इति अत्रैव भाष्योक्तेः। 'अप्रयुक्ते लक्षणप्रवृत्त्यभावस्यैव योग्यते'त्यर्थः। 'प्रयुक्तानामिदमन्वाख्यानमि'ति सिद्धान्तात्। नेति व्याख्यानमिति। उपपादितं चेदं रामशब्दाऽन्ते। नलोपे कृते इति। संयोगान्तलोपस्याऽसिद्धत्वादिति भावः। नलोपात्प्रागिति। 'विभक्तिसंयोगान्तलोपस्य नलोपविषये असिद्धत्वाऽभावज्ञापनद्वारे'ति शेषः। एतेन 'राजैधते,' 'चक्रचत्र,' 'राजाच्छत्रमि'त्यादौ वृद्धि-यण्-तुगादिकं न स्यात्। संयोगान्तलोपस्याऽसिद्धत्वात्। किञ्च 'कर्त्र्ये'त्यादावेकमेव यण्शास्त्रं पूर्व-परविषयभेदाद्भिन्नमिति, शब्दपरविप्रतिषेधात्परयणा-

---

[1] 'उत्वे' इति क. नास्ति। 'उत्वे च' इति घ. पाठः। मुद्रितेषु चकारो नास्ति।

न तु सप्तमी। ङेर्लुका लुप्ततया प्रत्ययलक्षणाऽभावात्। 'ङ्यन्तस्य, [1]'सम्बुद्ध्यन्तस्य च प्रातिपदिकस्ये'ति सामानाधिकरण्येनाऽन्वयः। न च प्रथमं संयोगान्तलोपं विना सम्बुद्ध्यन्तं प्रातिपदिकं लभ्यते। तस्मात् 'ङ्यापः सोरि'ति न्यासे न किञ्चिद्बाधकम्। यदि तु 'वस्वादिषु दत्वमि'ति वार्त्तिकं

---

बृहच्छब्दरत्नः

न किञ्चिद्बाधकमिति। ननु [2]'सुपीः' [3]'शक्' इत्यादौ संयोगान्तलोपं बाधित्वा पदान्तसंयोगादिलोपः स्यात्। तथा 'पर्व मर्व पूरणे' 'हर्य गतिकान्त्योः' '[4]मूर्च्छे' इत्यादीनां यङ्लुकि, लङि, तिप्सिपोः, संयोगाऽन्तलोपस्याऽसिद्धत्वेन 'राल्लोपः' 'लोपो व्योर्वली'ति लोपाऽऽपत्तिः। यथान्यासे 'अकृतव्यूह'परिभाषया परत्वान्नित्यत्वाच्च हल्ङ्यादिलोपप्रवृत्तौ वल्परत्वाऽभावेनाऽप्रवृत्तिः। न च प्रत्ययलक्षणम्। वर्णाऽऽश्रयत्वात्। अत एव न स्थानिवद्भावः। एवञ्च महदनिष्टं स्पष्टमेवेति चेन्न। 'काष्ठशक्स्थाते'त्यत्र 'परेश्च घाऽङ्कयोरि'ति सूत्रे झल्परसंयोगादिलोपमाशङ्क्य तद्वारणाऽर्थं 'सङीति वक्तव्यमि'त्युक्त्वा, 'काष्ठशगेव नास्ती'त्याष्टमिकभाष्येणाऽनभिधानात् क्विब्विचौ न स्त' इत्युक्तम्। इदञ्च यद्यपि कान्तं प्रक्रम्यैवोक्तम्, सान्तानां च 'सुपीः' 'सुपयाः' इत्यादिप्रयोगाः सन्ति, तथाऽप्युक्तभाष्यप्रामाण्यात् ककारसाहचर्येणेदृशे विषये पदान्तेऽपि संयोगादिलोपाऽप्रवृत्तिः कल्प्यते। युक्ततरञ्चैतत्। अन्यथा [5]'सुपिस्-स्थाता' 'सुपयस्-स्थाते'त्यादौ दोषस्य दुर्वारत्वेन 'सङी'त्यस्याऽऽवश्यकताऽऽपत्तेः। सनः सकारमारभ्य महिङो ङकारेण प्रत्याहारः। किञ्च 'तिप्यनस्तेः' 'सिपि धातो रुर्वे'ति सूत्राभ्यां 'विभक्त्यनवयवहलुत्तर-विभक्ति-हलि संयोगादिलोपाऽपेक्षयाऽपि संयोगान्तलोपस्य बलीयस्त्वमि'-

---

लघुशब्दरत्नः

देश इति अचः परस्मिन् (१।१।५७) इत्यत्र भाष्य-कैयटयोः स्पष्टम्। 'विषयगतपौर्वापर्यस्य लक्षणे आरोप' इति तदाशयः। तेन 'धीमानि'यादौ सुविषयसंयोगान्तलोपशास्त्रस्य तलोपविषये तत्र पूर्वस्मिन्नसिद्धत्वेन तलोपो न स्यादि'त्यपास्तम्। 'सावपि पदमि'ति पक्षेऽन्त्ये अदोषाच्च। आरोपे मानाऽभावाच्च। षष्ठीति। अत एव ङौ नलोपनिषेधः सार्थकः। तदाह—ङेरिति। न च न लुमता (१।१।६३) इति निषेधाऽनित्यत्वान्न दोषः। तदपेक्षया षष्ठ्यन्ततया व्याख्यानस्यैव लघुत्वात्। सम्बुद्ध्यन्तेति। 'सम्बुद्ध्यन्तप्रातिपदिकाऽन्तनस्य लोपो ने'त्यर्थः।

---

[1] 'सम्बुद्ध्यन्तस्य' इति मुद्रितेषु त्रुटितम्।

[2] सुपीरिति पिसृधातो रूपम्। सुष्ठु पेसतीति सुपीः।

[3] शक्नोतेः क्विपि, विचि वा 'शक्' इति सौ रूपम्।

[4] 'यमूप् इत्यादीनाम्' इति क. ख. पाठः।

[5] 'सुपि स्थाता' 'सुपय स्थाता' इति निर्विसर्गः क. ख. पाठः। तत्र 'खर्परे' इति विसर्गलोपः।

**प्रत्याख्यायते, अधातुग्रहणेनैव 'उखास्रदि'त्यादौ दीर्घाऽभावसिद्धेः, तर्हि 'हल्ङ्यापः सोरि'त्येव सूत्रमस्तु ।**

बृहच्छब्दरत्नः

त्यर्थज्ञापनेन दोषाऽभावात्। न च 'चकास'धातोर्णिचि, विचि, आचारक्विपि, लङि, तिपि, सिपि, [1]आदादिकत्वाच्छब्लुकि, णिचः[2] स्थानिवद्भावेन संयोगादि-लोपाऽप्राप्तौ, सूत्रद्वयचारितार्थ्यं स्पष्टमेवेति वाच्यम्। ईदृशविषये भूभावस्य दुर्वारत्वेन 'अनस्ते'रित्यस्याऽसङ्गतताऽऽपत्तेः। 'अनस्तेरि'ति पर्युदासात्, 'धातु'-ग्रहणसामर्थ्याच्च नामधातावप्रवृत्तेश्च। एतेन 'अशाशगि'त्यादौ दोष' इत्यपास्तम्। कान्ते यङ्लुगभावस्य 'कस्य च द' इति सूत्रे हरदत्तेनोक्तत्वाच्च। लोके यङ्लुको ज्ञापकसिद्धत्वेनाऽसार्वत्रिकत्वाच्च। एतेन 'पर्व मर्व'त्यादिकमपास्तम्। ध्वनितं चेदं यङ्लुकि मूलग्रन्थे। किञ्च हल्ग्रन्थे ?। किञ्च हल्ङ्यादिसूत्रे 'लोपो व्योर्वली'त्यनुवर्त्य वाक्यभेदेन व्योर्लोपविधानसामर्थ्यात्, अन्तरङ्गत्वाच्च, विधेयस्य लोपस्य प्रथमोपादानेन बाधकाऽपेक्षया प्रथमप्रवृत्तेर्बोधनेन च, यथान्यासेऽपि हल्ङ्यादिलोपाऽपेक्षया पूर्वं प्रवृत्तत्वेन दोषशङ्कैव न।

न चाऽव्यवहित'वेरपृक्तस्ये'त्यपेक्षया प्राबल्यबोधनेऽपि व्यवहितहल्ङ्याद्य-पेक्षया प्राबल्यबोधने न मानमिति वाच्यम्। भाष्योक्तरीत्या 'वेरपृक्तस्ये'त्यत्र योगविभागेन व्यन्ते लोपसिद्धौ प्राबल्यबोधनस्य वैयर्थ्याऽऽपत्तेः। न चैवमपि 'राजैधते' 'चक्रि अत्र' 'राजा च्छत्रं पश्यती'त्यादौ वृद्धि-ह्रस्व-तुगादिकं न स्यात्, [3]संयोगान्तलोपस्याऽसिद्धत्वादिति वाच्यम्। 'न ङिसम्बुद्ध्योरि'त्यस्य सामान्या-ऽपेक्षज्ञापकतामाश्रित्य पूर्वकार्यं प्रति विभक्तिस्थानिकसंयोगान्तलोपाऽसिद्धत्वा-ऽभावस्य वर्णयितुं शक्यत्वात्। एतेन [4]'अचका राज्यमि'त्यादौ 'ढ्रलोपे' इति दीर्घाऽनापत्तिरि'त्यपास्तम्। किञ्च 'सहिवहोरोदवर्णस्ये'ति वर्णग्रहणसामर्थ्येन 'उक्तप्रकरणकार्यं प्रति उक्तप्रकरणस्थलोपोऽसिद्धो ने'ति ज्ञापनात्। तद्धि 'उदवोढा-मि'त्यादौ हलन्तलक्षणायां वृद्धौ कृतायामपि ओत्त्वाऽर्थम्। एतत्प्रकरणस्थलोपस्या-ऽसिद्धत्वे तु वर्णग्रहणे कृतेऽपि 'झलो झली'ति लोपस्याऽसिद्धत्वेन ढकारपरत्वा-ऽभावादप्राप्तिः स्पष्टैव। न च 'ढ्रलोपे' इत्यत्र तत्पुरुष एवाऽस्त्विति वाच्यम्। पूर्वत्वस्य सावधित्वेन, तस्य च सजातीयत्वनियमेन बहुव्रीहेरेव युक्तत्वात्। अत एव 'पूर्व'ग्रहणं चरिताऽर्थम्। न चोत्तरपदाऽधिकारसम्बन्धाऽभावबोधनाऽर्थं तदिति वाच्यम्। 'कार'ग्रहणसामर्थ्येन तत्सिद्धेरिति सर्वमनवद्यमिति विभाव-यामः। अधातुग्रहणेनैवेति। अत एव 'वस्वादिषु दत्वं सिद्धं वक्तव्यं, सौ दीर्घत्वे' इति विषयविशेषो निर्दिष्टः। 'एव'कारेणाऽन्याऽर्थमधातुग्रहणमावश्यकमिति ध्वनितम्। स्पष्टञ्चेदं भाष्ये। सूत्रमस्त्विति। 'अस्तु' इत्यनेनाऽनादरो ध्वनितः।

[1] 'आदादित्वात्' इति क. ख. पाठः। [2] 'त्वाच: स्थानिवद्भावेन' इति क. ख. पाठः।
[3] 'संयोगान्ते लोपस्य' इति क. ख. पाठः। [4] 'अचाका राज्यम्' इति क. ख. पाठः।

यत्तु यथाश्रुतं सूत्रं प्राचा व्याख्यातं 'ङ्यन्तादाबन्ताद्दीर्घाच्चे'ति । तन्न । ङ्यापौ हि दीर्घौ, न तु तदन्तमपि । न च 'दीर्घान्ङ्यन्तादि'त्यादे'र्दीर्घो यो ङी, तदन्तादि'त्यादिरर्थो लभ्यते । 'दीर्घादि'ति पञ्चम्या अनन्वयात् । समासे उपसर्जनयोर्ङ्यापोर्विशेषणाऽयोगात् । उक्तं हि भाष्ये—'सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो ने'ति । एतेन 'अनदीसञ्ज्ञं ह्रस्वमि-उवर्णा-ऽन्तमि'त्यपि प्राचो वृत्तिः प्रत्युक्ता ।

सख्युरसम्बुद्धौ (७।१।९२) । इह इतोऽत्सर्वनामस्थाने (७।१।८६) इत्यतः 'सर्वनामस्थाने' इत्यनुवर्त्तते । तदसम्बुद्धावित्यनेन विशेष्यते । गोतो णित् (७।१।९०) इति सूत्रात् 'णिदि'त्यनुवृत्तम् । तत्सामानाधिकरण्येन

---

बृहच्छब्दरत्नः

तद्बीजन्तूक्तरीत्या हल्ग्रहणवैयर्थ्यमेव ।

---

लघशब्दरत्नः

इतिसूत्रमस्त्विति । अत एव 'सुपीरि'त्यादिसिद्धिः । अन्यथा [1]पदान्तसंयोगादिलोपस्य संयोगान्तलोपाऽपवादत्वात्तत्प्रवृत्तौ र्वोः (८।२।७४) इति दीर्घो न स्यात् । तिप्यनस्तेः (८।२।७३) सिपि धातोः (८।२।७६) इति सूत्राभ्यां धातुसम्बन्धिपदान्तसस्य दत्वरुत्वविधायकाभ्यां, कसाहचर्येण च प्रकृतिप्रत्ययसम्बन्धिवर्णसंयोगमाश्रित्य सस्य पदान्ते संयोगादिलोपाऽप्रवृत्तिकल्पने तु न किञ्चिल्लाघवम् । किञ्च न ङिसम्बुद्ध्योः (८।२।८) इति सप्तम्येव युक्ता । 'ङि'ग्रहणाच्च न लुमता (१।१।६३) इत्यस्य[2]एतद्विषयेऽनित्यत्वम् । एतन्मूलकमेव 'वा नपुंसकानामि'ति वार्त्तिकम् । एवञ्च ब्रह्मन्नाद्यर्थं सम्बुद्धिग्रहणस्याऽऽवश्यकत्वेन [3]ज्ञापकाऽसम्भवः । अपूर्ववचनकरणेन सिद्धप्रत्याख्यानन्तु न युक्तम् । इदमेवाऽभिप्रेत्य सूत्रशेषे भाष्ये 'तस्मादशक्यो हल्पृक्तलोपः संयोगान्तलोपो विज्ञातुम् । [4]न चेद्विज्ञायते, द्विहल्पृक्तग्रहणं, तिस्योश्च ग्रहणं कर्त्तव्यमि'त्युक्तम् । 'इति सूत्रमि'त्युपलक्षणम्, 'हल्ङ्यापः सुतिसिहलि'ति सूत्रमस्त्वित्याशयः[5] । अत एव 'अविभा राज्यमि'त्यादौ ढ्रलोपे (६।३।१११) इति दीर्घसिद्धिरिति दिक् । दीर्घाच्चेति । 'हलन्तादि'त्येतदपेक्षश्चकार इति तद्व्याख्यातारः । न तु तदन्तमपीति । तस्याऽज्झल्समुदायरूपत्वादिति भावः । प्रत्युक्तेति । इ-उवर्णाऽन्तस्य ह्रस्वत्वाऽसम्भवात्, इ-उवर्णयोरेकदेशत्वेन तद्विशेषणाऽसम्भवाच्चेति भावः ।

---

[1] 'पदान्ते' इति मुद्रितेषु पाठः ।
[2] 'एतद्विषयेऽनित्यत्वमूलकमेव' इति क. पाठः ।
[3] 'ज्ञापकत्वाऽसम्भवः' इति मुद्रितेषु पाठः ।
[4] 'न चैतद्विज्ञायते' इति क. घ. पाठः ।
[5] 'इत्याशयात्' इति मुद्रितेषु पाठः ।

सप्तम्याः प्रथमा [1]कल्प्यते इत्याह—**सम्बुद्धिवर्जं सर्वनामस्थानमिति।** 'सख्युरसम्बुद्धिरि'त्येव [2]तु सूत्रं युक्तम्।

**ख्यत्यात्परस्य** (६।१।११२)। कृतयणादेशयोः खि-खीशब्दयोरनुकरणं-'ख्ये'ति। एवं ति-तीशब्दयोः-'त्ये'ति। उभयत्राऽप्यकार उच्चारणाऽर्थो, न तु मुख्या-ऽपत्यादिशब्दैकदेशाऽनुकरणमिदम्। सख्युर्यः (५।१।१२६) पत्युर्नः (४।१।३३) सङ्ख्यायाः संवत्सरसङ्ख्यस्य च (७।३।१५) आपत्यस्य च तद्धिते (६।४।१५१) इत्यादिनिर्देशादित्यभिप्रेत्याह—**खितिशब्दाभ्यामित्यादि।** 'परस्ये'तिग्रहणम् एकः पूर्वपरयोः (६।१।८४) इत्यधिकारनिवृत्त्यर्थम्।

**औत्।** (७।३।११८)। एतच्च नदीसञ्ज्ञकेषु इदुद्भ्याम् (७।३।११७) इति पूर्वसूत्रेण बाध्यते, घिसञ्ज्ञकेषु अच्च घेः (७।३।११९) इत्युत्तरसूत्रेण। तस्मात्सञ्ज्ञाद्वयशून्योऽस्य विषयः। न च तादृश उकारोऽस्ति। अत आह—**उकारेति।** यत्तु प्राचा 'घि-नदीसञ्ज्ञावर्जिताभ्यामिदुद्भ्यां परस्ये'त्युक्तम्। तन्न। [3]तादृशोकारस्याऽप्रसिद्धेः। **समुदायस्येति।** न च पर्युदासेऽपि

---

**बृहच्छब्दरत्नः**

सख्युरसम्बुद्धिरित्येवेति। 'अनङ् सावि'त्यादौ सावित्यनेन सामानाधिकरण्यात्सप्तम्या विपरिणम्यते इति भावः। विशेष्याऽसन्निधानादिति। यत्तु 'कार्यकालतायामङ्गं विशेष्यमस्त्येवे'त्युक्तम्। तन्न। यथोद्देशपक्षे दोषाऽनुद्धारात्। 'घेर्ङिति' 'शेषो घ्यसखी'त्यनयोरेकवाक्यत्वे घ्यन्तेऽन्वये, पुनः सख्यंशेऽन्वयाऽभावाच्च। पर्युदासवृत्त्या 'सखिभिन्ने'त्यर्थोपस्थितौ विशेष्येऽङ्गाऽन्वयेऽपि, सख्यंशेऽन्वयाऽभावाच्च। एतेन 'शब्दशास्त्रप्रसिद्धः शब्दो विशेष्य' इति परास्तम्। शब्दरूपविशेष्यस्य सर्वत्राऽविशिष्टत्वेन व्यावर्त्त्याऽभावात्। 'आद्गुण' इत्यादौ दोषस्योद्भटत्वाच्चेति स्पष्टमाकरे।

---

**लघुशब्दरत्नः**

युक्तमिति। अनङ सौ (७।१।९३) इत्यत्र विभक्तिविपरिणामः कार्यः। सर्वनामस्थाने इत्यस्य गोतो णित् (७।१।९०) इत्यत्र प्रथमान्ततायाः क्लृप्तत्वान्न तन्निवृत्तिरित्यभिमानः।

---

[1] 'कल्पते' इति घ. ङ. पाठः।

[2] तु. घ. ङ. नास्ति।

[3] 'तादृशस्य उकारस्य' इति ङ. मु. पाठः।

पर्युदस्यमानसमर्पके सखिशब्दे तदन्तग्राहकत्वं शङ्क्यम्। विशेष्याऽसन्निधानात्। यत्त्विह 'ग्रहणवते'त्याद्युपन्यस्तं हरदत्तेन, यच्च ख्यत्यात्सूत्रे कैयटेन। तन्न। तस्य प्रत्ययविधिविषयत्वात्।

गौणत्वेऽपीति। अस्थ्याद्यनङ्वदिति भावः। तथा च येन विधिः (१।१।७२) इति सूत्रे 'परमसखायावि'ति बहुव्रीहिः, तत्पुरुषे हि टचा भाव्यमि'ति कैयटः। तथा द्वितीया श्रित (२।१।२४)इति सूत्रे 'सोमसखे'ति प्रतीकमुपादाय 'बहुव्रीहित्वान्न समासान्त' इति कैयटः। मिदचोऽन्त्यात्

---

**बृहच्छब्दरत्नः**

कैयट इति। [1]असमस्तत्वन्तु न शङ्कनीयम्। भाष्यपर्यालोचनया तन्नि-

---

**लघशब्दरत्नः**

विशेष्याऽसन्निधानादिति। शब्दस्वरूपं विशेष्यं त्वव्यावर्त्तकम्। किञ्च सत्यपि विशेष्ये 'सखिशब्दभिन्नाऽन्तस्ये'त्येव स्यान्न तु 'सख्यन्तभिन्नस्ये'ति। नञा एकार्थीभावाऽऽपन्नस्याऽन्यत्राऽन्वयाऽयोगादिति भावः। तस्य प्रत्ययविधीति। एवञ्च हरदत्ताऽनुरोधेनेदं सर्वमिति भावः।

[[2]यथा तु 'यस्येति चे'ति सूत्रे भाष्यं, तथा सखिशब्दस्य तदवयवे लक्षणया 'सख्यवयवभिन्नेदुतोरि'त्यर्थः। यथा 'अत्वसन्तस्ये'त्यत्र 'धात्ववयवभिन्नाऽसन्तस्ये'त्यर्थः। एवञ्च 'सुसखि'शब्दे नैव घिसञ्ज्ञा। तदन्तसञ्ज्ञा पक्षेऽपि 'असखी'त्युक्तरीत्या ख्योर्विशेषणम्। ततस्तदन्तविधिः, 'उतश्च प्रत्ययादि'त्यत्रेव। तदन्तविधिश्च शेषपदार्थविशेषणतयेति प्रतीयते। तत्र हि भाष्ये–'इवर्णस्य ईति किमुदाहरणम्?। अतिसखेरागच्छति। यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वाऽन्तत्वेन सखिशब्दत्वात्, उपसर्जनह्रस्वेऽपि तत्त्वात् 'अतिसखि' इति घिसञ्ज्ञा न स्यात्। लोपे तु 'लक्षणप्रतिपदोक्त'परिभाषया न दोष' इत्युक्तम्। न चेकारलोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः। तस्या अनित्यत्वादिति तदाशयः। ख्यत्यात्सूत्रे 'किमर्थं विकृतनिर्देशः। न 'सखिपतिभ्यामि'त्येवोच्येत। 'अतिसखेरित्यत्र मा भूदि'ति भाष्येऽपि ङ्यन्तप्रकृतिक एवाऽयम्। विहितविशेषणाऽनाश्रयणेनेव प्रतिपदोक्तपरिभाषाऽनाश्रयणेनैव भाष्यं प्रवृत्तमिति न तद्विरोध इत्यन्यत्र निरूपितम्]।

तथा द्वितीयेति। 'तत्पुरुषविषये बहुव्रीहिर्ने'त्युपक्रम्य 'उभयं खल्वपीष्यते-'सोमसखा' 'गवांसख' इति भाष्यम्। अन्त्ये षष्ठ्या आक्रोशे (६।३।१९) इत्यलुक्।

---

[1] 'सोमसखा' इत्यत्र भाष्य-प्रयोगे 'हे सोम, त्वं मे सखाऽसी'ति रीत्या 'सखे'त्यस्य असमस्तत्वं च न शङ्कनीयमित्यर्थः।

[2] एतत्सम्पुटाऽन्तर्गतः पाठो घ. पुस्तके एव दृश्यते। स च तत्र कुण्डलितः। शेखर-भैरवी-भावप्रकाशेषु दर्शनात्। 'सख्यवयवभिन्नावयवेदुतोः' इति घ. पाठः।

(१।१।४७) इति[1] सूत्रे, तृज्वत्क्रोष्टुः, (७।१।९५) स्त्रियाञ्च (७।१।९६) इति सूत्रे च भाष्य-कैयटयोः, 'ख्या'धातौ माधवग्रन्थे च स्फुटमेतत्। 'अनुद्युक्षो वरुण इन्द्रसखा' 'आग्नेया हि मरुत्सखा' 'तीव्रं सोमं पिबति गोसखायमि'त्यादिप्रयोगाश्चैवमेव सङ्गच्छन्ते। तत्र बहुव्रीहिप्रयुक्तस्य पूर्वपद-प्रकृतिस्वरस्य दर्शनेन गौणत्वात्। एतेन घिसञ्ज्ञासूत्रे 'शोभनः सखा यस्य सुसखिरि'त्युदाहरन्तौ हरदत्त-न्यासकारौ, तदनुगामिनश्चाऽन्ये उपेक्ष्याः।

**पतिः समास एव (१।४।८)।** एवकार इष्टतोऽवधारणार्थः। अन्यथा हि 'समासे पतिरेवे'ति सम्भाव्येत। धात्वादेः (६।१।६४) इत्यादि-ज्ञापकाऽनुसरणे च प्रतिपत्तिगौरवं स्यात्। अथ कथं—'सीतायाः पतये नमः'। पराशरश्च—'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतावि'ति। उच्यते। 'पतिरित्याख्यातः पतिः'। णौ, टिलोपे, 'अच इरि'त्यौणादिक इः। अयं पतिशब्दः 'पतिः समास एव' (१।४।८) इत्यत्र न गृह्यते। लाक्षणिकत्वात्। एतेन 'कृष्णस्य सखिरर्जुनः' इति भारतं, 'सखिना वानरेन्द्रेणे'ति

---

बृहच्छब्दरत्नः

र्णयात्। तदन्तविधेः प्रक्रान्तत्वाच्च। भाष्यकैयटयोरिति। तत्र हि 'अतिसखीनी'-त्युदाहृत्य 'णिद्वद्भावः प्राप्नोती'त्युक्तम्। तच्च न समानाधिकरणम्। तत्पुरुषे नपुंसकत्वाऽनापत्तेः। 'आलिः सखी वयस्या च, अथ मित्रं सखा सुहृत्'। 'मित्रं क्लीबे सखा द्वयोरि'त्यादिकोशपर्यालोचनया तदभावस्य निर्णीतत्वात्। अत एव भाष्येऽसमस्तमेव 'सखीनी'ति नोदाहृतं, विशेष्यं चोदाहृतम्। एवञ्च 'अत्यादयः क्रान्ताद्यर्थे' इति तत्पुरुषो, बहुव्रीहिर्वा, उभयथाऽपि गौणत्वं दुर्वारमेव। अत एव 'वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्य' इति'वृद्धि'ग्रहणं चरिताऽर्थम्। गौणेऽप्रवृत्तौ तु व्यर्थमेव स्यात्। 'द्वितीया श्रिते'ति सूत्रे 'उभयं खल्वपीष्यते' इत्युपक्रम्य 'सोमसखा' 'गवांसख' इत्युदाहृतत्वेन बहुव्रीहेः स्पष्टत्वाच्च। एतेन 'समासान्तविधे-रनित्यत्वेन तत्पुरुषेऽपि भाष्यं [2]सुयोजमि'त्यपास्तम्। अगतिकगतेराश्रयणे प्रमाणाऽभावाच्च। लाक्षणिकत्वादिति। एतेन 'यदा तु पुच्छमुदस्यति उत्पुच्छयते, उत्पुच्छयतेः उत्पुच्छः, तदा थाथादिसूत्रण नित्यमन्तोदात्तत्वे प्राप्ते, परत्वात् 'विभाषो-त्पुच्छे' इति वैकल्पिकमन्तोदात्तत्वं भवत्येवे'ति वृत्ति-न्यास-पदमञ्जर्यादिग्रन्थाः परास्ताः। उत्क्रान्तपुच्छात् 'उत्पुच्छ' इति प्रतिपदोक्तपुच्छशब्दे चारितार्थ्येनाऽजन्ते लाक्षणिकेऽप्रवृत्तेः।

---

[1] इतिः घ. ङ. नास्ति।

[2] 'सुयोज्यम्' इति क. ख. पाठः।

रामायणञ्च व्याख्यातम् ।

**बहुगण (१।१।२३)** । बहु-गणौ प्रातिपदिके सङ्ख्यावाचके गृह्येते, न तु सङ्घ-वैपुल्यवाचके अपि । 'सङ्ख्यायते अनये'त्यन्वर्थसञ्ज्ञाविज्ञानात् । अत एव डतिरपि तद्धित एव गृह्यते । वतुना साहचर्याच्च[1] । न तु पातेर्डतिः ।

**षड्भ्यो लुक् (७।१।२२)** । षड्भ्यः परयोरिति । बहुवचननिर्देशो-

---

बृहच्छब्दरत्नः

व्याख्यातमिति । न चैवं सूत्रवैयर्थ्यम् । प्रयोगद्वयसाधनेन चारितार्थ्यात् । बोधवैलक्षण्याच्च । 'असाधव एवैते । त्रिशङ्क्वाद्ययाज्ययाजनादिवत्तपोमाहात्म्यशालिनां मुनीनामसाधुप्रयोगोऽपि नाऽतीव बाधकः । अस्मदादीन् प्रति तु स्मृतिपुराणाऽध्यनविधिबलात्तेषां तपोमाहात्म्यबलादेव वा तदन्तर्गततत्पाठो न बाधकः । तथा च स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव । नदीसञ्ज्ञासूत्रस्थभाष्यकैयटस्वरसोऽप्येवमि'ति मते तु न बोधे वैलक्षण्यमिति ध्येयम् ।

न तु सङ्घेति । नन्वेवं बहुगणग्रहणं व्यर्थम्, द्वित्र्यादिशब्दानामिव लोके सङ्ख्यावाचकत्वेनैव सङ्ख्याप्रदेशे ग्रहणसिद्धेः । न च 'कृत्रिमाऽकृत्रिम'न्यायेन त्र्यादिशब्दानामग्रहे दृष्टान्ताऽसिद्धिरिति वाच्यम् । त्वदुक्तन्यायमूलस्य सञ्ज्ञिविशेषे क्रियमाणस्य सञ्ज्ञानियमस्य सामान्याऽपेक्षस्य 'अतिशदन्ताया' इति शदन्तपर्युदासज्ञापकेनेहाऽनाश्रयणेन, विशेषाऽपेक्षनियमस्याऽऽश्रयणेन च कृत्रिमाऽन्तरव्यावृत्तेरेव युक्तत्वादिति चेत् । अत्राहुः—'अनियतबहुत्ववाचिनश्चेद्भवति तर्हि एतयोरेवे'ति नियमाऽर्थं बहुगणग्रहणम् । तेन भूर्यादीनां न । अबहुविषययोर्द्व्येकयोर्नियतबहुत्ववाचिनां त्र्यादीनां च न व्यावृत्तिः । केचित्तु 'अर्थाऽन्तरवाचित्वे सति बहुत्ववाचिनश्चेद्भवति तर्हि बहुगणयोरेवे'ति नियमाऽर्थम् । तेन वैपुल्यादिबहुत्वसङ्ख्यावाचिनां भूर्यादीनां न । एवञ्च 'शतरुद्रीयमि'त्यादौ शतशब्दस्याऽनन्तवाचित्वेनाऽनियतसङ्ख्यावाचित्वेऽपि सङ्ख्याकार्यं भवत्येव । ध्वनितञ्चेदमाकरे । बहुवचननिर्देश इति । अत्र 'षडि'ति महासञ्ज्ञाकरणं लौकिकषट्शब्दतुल्यताबोधनाऽर्थम् । षट्त्वञ्चाऽविवक्षितम् । बहुत्वमात्रे तात्पर्यात् । अत एव सञ्ज्ञा-

---

लघुशब्दरत्नः

सङ्ख्यावाचके इति । त्र्यादिसङ्ख्याव्यापकधर्मविशेषवाचके इत्यर्थो, न तु बहुत्वं सङ्ख्या । नियतविषयपरिच्छेदहेतुत्वरूपसङ्ख्यात्वस्य तत्राऽभावात् । अत एव भाष्ये 'यदयसङ्ख्यां सङ्ख्येत्याहे' त्युक्तम् । सङ्ख्यायतेऽनयेति । साक्षाद्, व्याप्यसङ्ख्याद्वारा वेत्यर्थः । अत एव । बहुगणसाहचर्येण सङ्ख्यासम्बन्ध्यर्थप्रतिपादकस्य ग्रहणादेव ।

बहुवचनेति । अन्यथा 'षष' इत्येव वदेत् । अर्थप्राधान्येति । षट्शब्देन षट्-

---

[1] चकारो ङ. नास्ति ।

ऽर्थप्राधान्यसूचनाऽर्थः । 'षडर्थगतसङ्ख्याऽभिधायिनोरि'ति फलितोऽर्थः ।

बृहच्छब्दरत्नः

करणं चरिताऽर्थम् । तथा चाऽर्थस्य निमित्तत्वेनाऽऽश्रयणसामर्थ्यात् प्रथमोपस्थितप्रधानभूत-सार्वत्रिका-ऽन्यपदाऽनपेक्षा-ऽन्तरङ्गाऽर्थे एव प्रवृत्तिः । अत एव पुंयोगे 'अजी,' समाहारे 'पञ्चाऽजी'त्यादिसिद्धिः । अर्थात्परत्वन्तु 'स्ववाचकशब्दोत्तरत्व'सम्बन्धेन बोध्यम् । न चैवम् 'अग्नेर्ढगि'त्यादावप्येवमेवाऽऽपत्तिः । प्रातिपदिकाऽधिकाराच्छब्दपरत्वात् । न हि परम्परासम्बन्धेन प्रातिपदिकत्वमस्मच्छास्त्रे व्यवहर्त्तुं शक्यम् । तथा सङ्केताऽभावात् । 'स्वं रूपमि'त्यस्य प्रवृत्तेश्च । [1]तत्प्रकृतिके लक्षणाया आवश्यत्वाच्च । 'ऋत्व्भ्यः' 'अस्थिदधि' 'झलामि'त्यादौ तु शब्दबाहुल्याऽभिप्रायेण बहुवचनम् । बहुवचनाऽसन्निधाने पञ्चादिशब्दवत् कर्त्तृदध्यादिशब्दैर्बहुत्वयुक्ताऽर्थाऽप्रतीतेः । लक्षणस्य सङ्कोचे मानाऽभावाच्च । शब्दबाहुल्यस्योपस्थितत्वाच्च । न चैवं 'प्रियपञ्चा द्रौपदी'त्यादौ 'न षट्स्वस्रादिभ्यः' इति निषेधो न स्यादिति वाच्यम् । तव मतेऽपि बहुवचनस्य सत्त्वेन नुडादिवत् अप्राप्तेस्तुल्यत्वात् । 'अनो बहुव्रीहेरि'ति निषेधाच्च । [2]ऋत्साहचर्येण सङ्ख्यावाचकाऽन्तेऽप्रवृत्तेश्च । [3]अजादिसाहचर्येणाऽजादौ विभक्तौ टाप्सम्भावितानामेव [4]'अत्'शब्देन ग्रहणेन टापोऽप्राप्तेश्च । यत्र हि अर्थस्य विशेषणत्वं, शब्दस्य विशेष्यत्वं तत्र शास्त्रप्रसिद्धः सर्वोऽप्यर्थो गृह्यते । गुणाऽनुरोधेन प्रधानसङ्कोचस्याऽन्याय्यत्वात् । अत एव 'इतोऽत्सर्वनामस्थाने' इत्यादौ तपरकरणादीनां चारिताऽर्थ्यम् । एतेनाऽसुङा सिद्धे जरसादेशविधानं व्यर्थमित्यपास्तम् । सञ्ज्ञाशब्दस्य तु तत्राऽपि न ग्रहः । तदर्थस्य शास्त्रेणाऽप्रतिपादनात् । अत एव [5]'सञ्ज्ञा-

लघुशब्दरत्नः

सञ्ज्ञकः शब्दः, तदर्थसङ्ख्याश्रयश्चेत्युभयमपि विवक्षितम् । तेषां बहुत्वादिदं बहुवचनम् । तत्राऽर्थात्परत्वं स्वगतसङ्ख्याऽनुवादकत्वरूपं गौणम् । तदाह—षडर्थेति । तेन गौणे न ।

इदं प्राचामनुरोधेन । 'षड्भ्य' इति बहुवचनं 'तिसृभ्यः (६।१।१६६) इतिवत् । षट्सञ्ज्ञकानां बहुत्वाच्च । न हि सर्वत्र जातिनिर्देश एवोचितः, आचार्यशैली वा । षष्शब्दस्य बहुवचनाऽन्तस्यैव सञ्ज्ञात्वाच्च । तस्मादिदं विहितविशेषणम् । परमपञ्चादीनामपि सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेन सङ्ख्यावाचितया षट्त्वमस्त्येव । 'लोके गणनायां प्रसिद्धानामेव ग्रहणमि'त्यत्र न मानम् । उपसर्जने तु अतिक्रान्ताद्यर्थप्राधान्यं, न तु सङ्ख्याया इति न दोषः । स्पष्टं चेदं [6]सर्वादीनि (१।१।२७) इति सूत्रे भाष्ये इति तत्त्वम् ।

[1] 'तत्प्रकृतिकलक्षणायाः' इति क. ख. पाठः ।

[2] 'ऋसाहचर्येण' इति क. ख. पाठः ।

[3] 'अजीदिसाहचर्येण' इति क. ख. मूलपाठः ।

[4] 'तृशब्देन' इति क. ख. मूलपाठः ।

[5] 'राजश्वशुराद्यत्' इत्यनेन यत् प्रत्ययोनेत्यर्थः । [6] 'सर्वादिसूत्रे' इति घ. पाठः ।

**प्रत्ययलोपे (१।१।६२)। स्थानिवत्सूत्रेण सिद्धे नियमाऽर्थमिदं— 'प्रत्ययस्याऽसाधारणं रूपं[1] यत्र प्रयोजकं, तदेव कार्यं प्रत्ययलोपे सति**

---

**बृहच्छब्दरत्नः**

श्वशुरशब्दे यत् ने'ति सिद्धान्तः।

नियमार्थमिति। नन्वल्विधौ विध्यर्थत्वे सम्भवति नियमाऽर्थता न युक्तेति चेन्न। 'प्रत्ययलक्षणमि'ति योगविभागेन 'प्रत्ययलोपे' इत्यनुवृत्त्या प्रत्ययलक्षण-सिद्धौ 'प्रत्ययलोपे' इति सूत्रे 'स्थानिवदि'त्यनुवृत्त्या नियमाऽर्थत्वसम्भवात्। [2]एतेन 'मित्रशीरि'त्यादाविक्त्वादिकं, 'सुदृषदि'त्यादौ दीर्घाऽभावादिकं च सिद्धमिति सूत्रहृदयम्। युक्ततरञ्चैतत्। अन्यथा 'प्रत्ययलक्षणमि'त्यस्य वैयर्थ्याऽऽपत्तेः। न चैवं नियमबोधकसूत्रे द्वितीय-प्रत्ययस्याऽसाधारणं रूपमित्यर्थाऽलाभ इति वाच्यम्। पूर्वसूत्रात् 'प्रत्ययस्ये'त्यनुवृत्त्या 'प्रत्ययसम्बन्धिनि कार्ये ने'त्यर्थेन तदर्थ-लाभात्। एतेन 'विधायकसूत्रे द्वितीय-प्रत्ययग्रहणाऽभावे 'वर्णाऽऽश्रये नाऽस्ति प्रत्ययलक्षणमि'ति वर्णप्राधान्ये, न त्वप्राधान्ये' इति सिद्धान्तो न सिद्धचेत्। द्वितीयप्रत्ययग्रहणे तु 'प्रत्ययस्यैवाऽसाधारणं रूपं यत्राऽऽश्रीयते' इत्यर्थाऽऽपत्तौ हलादिपित्सार्वधातुके विधीयमानेमादिसिद्धिः[3]। [4]अवादेशे अच्त्वमाश्रितं, न तत्प्रत्ययस्याऽसाधारणं रूपमिति सिद्धान्तो युक्तिमूलक' इति परास्तम्। करण-साधन-लक्षणशब्दमाश्रित्य 'प्रत्ययलोपे' इत्यनुवृत्त्या 'प्रत्ययस्ये'ति षष्ठ्यन्तमनु-वर्त्त्य 'प्रत्ययलोपे सति प्रत्ययपरिचायकं कार्यं भवती'त्यर्थकेन 'लक्षणमि'ति न्यासेन, 'तल्लक्षणमि'ति न्यासेन वा सर्वेष्टसिद्धौ, 'प्रत्ययलक्षणमि'ति 'प्रत्यय'ग्रहणसामर्थ्यस्य निरूपयितुं शक्यत्वाच्च। 'दाधर्त्ती'तिसूत्रस्थभाष्यन्तु[5] विधिपक्षमात्राऽभिप्रायेण, स्थानिवद्भावेन ङिदन्तत्वनिमित्तकार्यस्य दुर्वारत्वाच्चेत्यादि यङ्लुगन्ते निरूप-

---

**लघुशब्दरत्नः**

सिद्धे इति। तृणहः (७।३।९२) इति सूत्रे 'अचि' 'ने'त्यनुवृत्त्या 'तृणहानी'त्यादि-व्यावृत्तौ, 'हली'त्यननुवृत्त्या 'अतृणेडि'त्यस्य सिद्धिः। शास इत् (६।४।३४)। अङि। 'अजादौ क्ङिति चेदङ्चेवे'ति नियमेनाऽजादिव्यावृत्तौ, तत्र हल्ग्रहणाऽकरणेन 'मित्रशीरि'त्यस्य सिद्धिः। एवमन्यत्राऽपीति भावः। प्रत्ययस्याऽसाधारणमिति। इदं द्वितीयप्रत्ययग्रहणेन[6] लभ्यते। 'यत्र प्रत्ययस्य विशेष्यत्वं, तत्रैवे'ति नियमस्तु न। 'राजे'त्यादौ पदत्वाऽनापत्तेः।

---

[1] 'यत्र रूपम्' इति मुद्रितेषु पाठः।

[2] 'एतेन मित्रशारित्यादौ' इति, दीर्घाऽभावादिकं त्वसिद्धम्' इति च क. ख. मूलपाठः।

[3] 'तृणह इम्' इत्यादिना विधीयमानम् इमागमादिकमित्यर्थः।

[4] 'आवादेशे वव्वमाश्रितम्' इति क. ख. पाठः। अवादेशे=गवे हितं गोहितमित्यत्र अवादेशे कर्त्तव्ये 'ङे' इत्यस्य प्रत्ययलक्षणं नेत्यर्थः।

[5] 'विधिबहुमात्राभिप्रायेण' इति तु क. ख. पाठः।

[6] 'ग्रहणात्' इति घ. पाठः।

भवति, न तु प्रत्ययाऽप्रत्ययसाधारणमि'ति। तेन 'शोभना दृषदोऽस्य सुदृषत्प्रासाद' इत्यत्र अत्वसन्तस्य (६।४।१४) इति दीर्घो न। यद्वा 'यत्र प्रत्ययः प्राधान्येनाऽऽश्रीयते, तत्राऽल्विधित्वेऽपि[1] विद्ध्यर्थमिदम्। तेन

---

बृहच्छब्दरत्नः

यिष्यामः। नन्वेवं 'न लुमते'तिनिषेधस्याऽनन्तरस्येतिन्यायेन विधिसूत्राऽपवादकत्वे 'राज्ञः पुरुषो राजपुरुषः', 'दण्डाभ्यां कृतं दण्डकृतमि'त्यादौ 'यचि भम्' 'सुपि चे'त्यादिव्यावर्त्तकत्वेन चारितार्थ्येऽपि, नियमस्य निषेधाऽनापत्तौ 'कति ब्राह्मणा' इत्यादौ 'जसि चे'ति गुणो दुर्वार इति चेन्न। 'प्रत्ययलोपे' इति सूत्रं विध्यर्थम्, 'प्रत्ययलक्षणमि'ति सूत्रं नियमाऽर्थमि'त्यर्थस्याऽपि निरूपयितुं शक्यत्वेन, विनिगमकाऽभावादुभयोरपि निषेधात्।

यदि 'शास इत्' 'अङि' इति योगविभागेन 'अङी'ति नियमात्[2] अजादिव्यावृत्त्या, 'तृणह इमि'ति सूत्रे 'अचि ने'त्यनुवृत्त्या सामान्यविधानेनैव सिद्धौ, विधायकत्वे न फलमिति विभाव्यते, तर्हि [3]'अलोमोषसी' इति पर्युदासात्, साहचर्याच्च, 'अत्वसन्तस्ये'ति सूत्रे अन्तग्रहणसामर्थ्येन च श्रूयमाणेसन्ते एव प्रवृत्तत्वेन नियमपक्षेऽपि फलं दुर्वचम्। किञ्च यथान्यासे विधित्वे इत्त्वरूपं फलं दुर्वारम्। अपि च इम्विधावचि नेत्यनुवृत्तावपि, वाक्यभेदे मानाऽभावेन 'पिति अचि इम् ने'त्यर्थाऽऽपत्तिः। तथा च फलमुखगौरवस्याऽदोषत्वेन विधायकवाक्यकल्पनाऽऽपत्तावच्येव विकल्पाऽऽपत्तिः। सामान्यवाक्यकल्पने तु विकल्पो नेत्यन्यदेतत्। अत्रेदमवधेयं—विधिपक्षफलानामन्यथासिद्धिं निरूप्य नियमपक्षाऽङ्गीकारेण भाष्ये विधायकसूत्रस्य क्वाचित्कत्वमनुमीयत इत्याहुः। अत्वसन्तस्येति। 'स्वं रूपमि'ति वचनादस्त्वस्य शास्त्रीयत्वेन लुकः स्थानिवद्भावेनाऽस्त्वादसन्तत्वमार्थसमाजग्रस्तमिति भावः।

प्रत्ययः प्राधान्येनेति। इदञ्च प्रत्ययद्वयग्रहणसामर्थ्याल्लभ्यते इति न्यासकारादिरीतिमनुसृत्योक्तम्। तेनेति। 'कर्त्रे हितं कर्तृहितमि'त्यत्र यणपि बोध्यः। न ह्यत्र प्रत्ययस्य विशेष्यत्वं, नाऽप्यच्त्वं प्रत्ययस्याऽसाधारणीभूतो धर्मः। न चाऽत्र

---

लघुशब्दरत्नः

दीर्घो नेति। 'असो लुकः स्थानिवत्त्वेनाऽसन्तत्वेऽपी'ति शेषः। न चाऽतुसाहचर्यात् श्रूयमाणाऽसन्ते एव दीर्घ इति वाच्यम्। तदनित्यत्वस्याऽप्यनेन ज्ञापनात्। प्राधान्येनेति। तत्त्वञ्च वर्णाऽविशेषणत्वरूपम्। एतच्च 'स्थानिवदि'त्यनुवृत्त्यैव सिद्धे 'प्रत्ययलक्षणमि'त्येत-

---

[1] 'अल्विधावपि' इति घ. ङ. च. पाठः।

[2] 'शासः अजादौ प्रत्यये चेदित्त्वं, तर्हि अङ्येवे'ति च नियमाऽऽकारः।

[3] 'सोर्मनसी अलोमोषसी' इति पाणिनिसूत्रम्। सोः परं मनन्तम्, असन्तं च आद्युदात्तं स्यात्, लोमोषसी वर्जयित्वेत्यर्थः। सुकर्माणः। सुयुजः। इत्युदाहरणम्।

'अतृणेडि'त्यत्र हलादौ पिति सार्वधातुके विहित इम् लुप्तेऽपि तस्मिन् भवति। 'वर्णाश्रये नास्ति प्रत्ययलक्षणमि'ति तु वर्णप्राधान्यविषयकम्। तेन 'गवे हितं गोहितमि'त्यत्राऽव् न।

---

**बृहच्छब्दरत्नः**

'न लुमताऽङ्गस्ये'ति निषेधः। 'येन केन चिद्रूपेणाऽङ्गस्योद्देश्यकोटौ प्रवेशे आङ्गे, अनाङ्गे वा 'न लुमते'ति निषेधस्य प्रवृत्तिरि'ति 'तद्राज'सूत्रे भाष्ये उक्तत्वेनाऽप्रवृत्तेः। अवाऽन्तराऽर्थवत्त्वमादाय 'सर्वे सर्वपदादेशा' इत्यर्थस्य वक्तुं शक्यत्वेन, विशिष्टग्रहणे मानाऽभावात्। अत एव 'प्रकृत्ये'त्यादौ तुक्सिद्धिः। 'उत्क्रामे'त्यत्र दीर्घश्च। किञ्च 'सुयशा' इत्यत्र सो न, 'सुवृडि'त्यादौ 'खरि चे'ति चर्त्वं नेति बोध्यम्। नन्वेवं 'परिवीरि'त्यत्र तुग्दीर्घौ स्यातामिति चेन्न। 'सति प्रत्यये यत्कार्यं भवितुमर्हति, तदेवाऽतिदिश्यते इति 'परिव्याये'त्यादाविव 'परिवीरि'त्यत्राऽपि दीर्घ एव भवति, न तुगिति। न चाऽङ्गसञ्ज्ञानिरपेक्षत्वेन तुकोऽन्तरङ्गत्वात् दृष्टान्ताऽसिद्धिरिति वाच्यम्। प्रकृतिप्रत्यययोरुभयोरपि निमित्तकोटौ प्रविष्टत्वेन तस्याऽप्यङ्गनिमित्तत्वात्। दीर्घप्रवृत्त्या निमित्तविनाशसम्भावनायाः सत्त्वेन 'अकृतव्यूह'परिभाषया तुकोऽप्रवृत्तेश्च। न च वैपरीत्यं शङ्क्यम्। बहिरङ्गकृतनिमित्तविनाशसम्भावनायामेव धर्मिग्राहकमानेन परिभाषाप्रवृत्तौ निमित्तत्वादिति विवरणकारादयः। वार्णादाङ्गस्य बलीयस्त्वाच्चेति दिक्।

---

**लघुशब्दरत्नः**

त्सामर्थ्यलब्धम्[1]। इमिति। 'मित्रशीरि'त्यादौ हलादौ किति[2] विधीयमानमित्त्वं च सिध्यतीत्यपि बोध्यम्। वर्णप्राधान्येति। वर्णस्य तत्त्वञ्च प्रत्ययनिरूपितविशेष्यत्वम्, इतराऽविशेषणत्वञ्च, 'अण्योऽकार' इत्याद्यर्थके टिड्ढाणञ् (४।१।१५) इत्यादौ, इको यणचि (६।१।७७) इत्यादौ च। तत्राऽन्त्यमुदाहरति—तेनेति। आद्योदाहरणन्तु 'चित्रायां जाता चित्रे'त्यादौ 'अण्योऽकारस्तदन्तादि'ति विहितो ङीप् नेति बोध्यम्। न च 'गोहितमि'त्यत्र न लुमता (१।१।६३) इति निषेधः। लुप्तप्रत्ययनिमित्तकाऽङ्गोद्देश्यककार्ये एव तेन निषेधात्। अत एव 'उत्क्रामे'त्यादौ क्रमः परस्मैपदेषु (७।३।६३) इति दीर्घसिद्धिः। परस्मैपदपरशिन्निरूपिताऽङ्गस्य तेन दीर्घविधानात्। 'तस्मिन्नि'ति न्यासेऽपि लुक्स्थानिभूत-प्रत्ययाऽव्यवहितप्रकृत्युद्देश्यककार्ये एव प्रवृत्तिरिति बोध्यम्। 'यद्वे'त्यादिनोक्तो वार्त्तिककृत्संमतः पक्षस्तत्फलानामन्यथासिद्ध्या भाष्यकृता दूषयित्वा नियमाऽर्थत्वपक्ष उक्त इति दिक्।

---

[1] 'सामर्थ्याल्लब्धम्' इति मुद्रितेषु पाठः।

[2] 'क्ङिति' इति मुद्रितेषु पाठः। स च 'कितीति प्रकृताऽभिप्रायेण, अनुवृत्तिस्तु 'अनिदितामि'त्यतः क्ङितीत्यस्यैवे'ति भावप्रकाशेन विरुद्धः।

**अस्मदिति। अत्र प्राचा 'अव्यये'त्यपि पठितं, तत्तु अव्ययानां प्रायेण निर्लिङ्गत्वात्, अव्ययीभावस्य क्लीबत्वेऽपि लिङ्गाऽन्तराऽभावाच्चोपेक्षितम्।**

**वस्तुतस्त्विति। अर्थप्राधान्यबोधकस्य बहुवचनस्याऽभावात्, गौणत्वेऽपि त्रयादेशो न्याय्यः, अस्थ्याद्यनङ्वदिति भावः।**

---

बृहच्छब्दरत्नः

अत्र प्राचेति। ननु किमयं ग्रन्थो लिङ्गत्रयाऽभावप्रतिपादनपरः, उत लिङ्गत्रययोगेऽपि समानरूपत्वप्रतिपादनपरः? । नाऽऽद्यः। 'अलिङ्गा' इत्युक्त्यैव अभिमताऽर्थसिद्धौ 'सरूपा' इत्यस्य वैयर्थ्याऽऽपत्तेः। भ्रमाऽपादकत्वाच्च। अव्ययप्रकरणसमीपे एव लिङ्गत्रयबहिर्भावेन युष्मदादीनां प्रतिपादनस्य युक्तत्वाच्च। अन्त्यपक्षे दोषमाह—[1]तत्त्वेति। युष्मदादीनां सूत्रवार्त्तिक-भाष्यादिभिर्लिङ्गयोगपक्षस्याऽपि प्रतीयमानत्वेन तेषामुक्तिसम्भवेऽपि अव्ययस्य तत्प्रतिपादकग्रन्थाऽभावेन, [2]तद्विरुद्धं भाष्यवार्त्तिकग्रन्थैस्तदभावस्य प्रतीयमानत्वेन चाऽव्ययपाठोऽयुक्त इति भावः।

प्रायेणेति। 'पुरुषी भवति' 'रमणी भवती'त्यादौ लिङ्गयोगोऽप्यस्तीतिमताऽभिप्रायेण। गौणत्वेऽपीति। अत एवाऽयङ् न कृतः। त्रयाऽऽदेशो हि 'परमत्रि'-शब्दाण्णिचि, क्विपि, [3]टि-णि-क्विलोपे, 'परमत्र्'शब्दाद्धलन्तादामि 'परमत्रयाणामि'ति रूपाऽर्थम्। न च णिलोपस्य स्थानिवद्भावः। 'क्वौ लुप्तमि'ति निषेधात्। एतदाश्रयणे त्रयाऽऽदेश एव मानम्। न च टिलोपस्य स्थानिवद्भावः। अपूर्वविधित्वात्। न चैवमपि रयङादेश एवाऽस्त्विति वाच्यम्। लाघवाऽभावात्। 'त्रयाणामि'त्यत्र रेफद्वयश्रवणाऽऽपत्तेश्च। न च 'रो री'ति लोपः। बहिरङ्गत्वेन रयङादेशस्याऽसिद्धत्वात्[4]। 'त्रिशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि, तुकि 'त्रित्'-

---

लघुशब्दरत्नः

प्रायेणेति। विभक्तिप्रतिरूपकाणां लिङ्गयोगेऽपि त्रिषु साऋप्याऽभाव इत्याशयः। अर्थप्राधान्यबोधकस्येति। अर्थप्राधान्ये एव प्रवृत्तिबोधकस्येत्यर्थः। 'बहुवचनस्ये'त्युपलक्षणम्। तद्बोधकाऽभावादित्यत्र तात्पर्यम्। गौणमुख्यन्यायस्तु पदकार्ये एव, न प्रातिपदिककार्ये। किञ्चाऽप्रसिद्धत्वरूपस्य,[5] गौणलाक्षणिकत्वरूपस्य वा गौणत्वस्य तत्र ग्रहणम्। न चाऽयं तथा। [6]इतरविशेषणत्वेनोपसर्जनत्वन्तु न गौणत्वम्। अत एव 'प्रियतिसे'त्यादौ तिस्रादयो भाष्यकृतोदाहृताः। गौणत्वेपीति। उपसर्जनत्वेऽपीत्यर्थः।

---

[1] 'तत्त्वव्ययानामि'त्यस्य प्रतीकधारणमिदमेकदेशस्य—तत्त्वेति' इति ध्येयम्।

[2] 'तद्विरुद्ध-भाष्यवार्त्तिकग्रन्थैः' इति क. ख. पाठः।

[3] टिणीति। टिलोपे, णिलोपे, क्विलोपे चेत्यर्थः।

[4] 'रयङादेशस्य सिद्धत्वात्' इति क. ख. पाठः।

[5] 'अप्रसिद्धत्वरूपस्य वा, गौणलाक्षणिकत्वस्य वा' इति मुद्रितेषु पाठः।

[6] 'इतरे'त्यादिः 'न गौणत्वमि'त्यन्तः पाठः क. ख. नास्ति।

अकारो वक्तव्य इति। तथा च बहुत्वाऽभावे औडुलोमिशब्द इकारान्तः। बहुत्वे तु अकारान्त उडुलोमशब्दोऽन्य एव। तस्य च इकाराऽन्तेषु व्युत्पादनं प्रासङ्गिकमिति भावः। तथा च 'औडुलोमिशब्दस्य इदन्तस्य बहुत्वेऽदन्तत्वमि'ति न भ्रमितव्यम्। इति इदन्ताः॥

किदिति। तेन आतो लोप इटि च (६।४।६४) इत्यालोप इति भावः। ययी-पप्यादय इति। यत्तु प्राचोक्तम्—'एवं 'देवयज्यतिलक्ष्म्यादय' इति। तन्न। 'देवान्यजते' इति विग्रहे 'इन्नि'त्यौणादिकसूत्रेण ह्रस्वान्तस्यैव 'देवयजि'शब्दस्योज्ज्वलदत्तादिभिः साधितत्वात्। 'अग्नौ द्विजान्देवयजीन् निहन्म' इति भट्टिप्रयोगस्य ह्रस्वविषयकतयैव व्याख्यातत्वात्। न च यजेर्दीर्घ

---

बृहच्छब्दरत्नः

शब्दे त्रयादेशस्य चरिताऽर्थत्वेन णिजन्ते नाऽऽदेश' इति कश्चित्। नन्वेवं 'प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः मतिवत्, आमि प्रियत्रयाणामि'ति विशेष' इति वक्ष्यमाणं मूलं विरुध्येत, सप्तम्येकवचनेऽपि तदापत्तेरिति चेन्न। अर्थाऽधिकारात्पूर्वोत्तरसाहचर्याच्च षष्ठीबहुवचनस्यैव ग्रहणात्। अपि च नुट इव त्रयादेशस्याऽपि आटा बाधो दुर्वारः। किञ्च सन्निपातपरिभाषया त्रयाऽऽदेशाऽभावः सुलभः। न चैवं 'मत्यामि'त्यादौ यणादेशाऽनापत्तिः। 'आण्नद्या' इत्यादिनिर्देशेन तद्विषये बाधादिति दिक्।

न भ्रमितव्यमिति। यद्यपि राम-हरिशब्दाद्युपन्यासेनाऽकारान्तेकाराऽन्ततद्धितान्ता उपन्यस्तप्राया एव, तथाऽप्यस्य विशिष्योपन्यासे भ्रमनिवृत्तिरेव फलमिति भावः। ननु 'मा'धातोः क्विपि, ईत्वे, 'एरनेकाच' इति यणादेशो दुर्लभः। ईत्वविधायकसूत्रेऽनुवर्त्तमानेनाऽसिद्धवत्सूत्रेण यणादेशं प्रति ईत्वस्याऽसिद्धत्वात्। अत एव प्रथमप्रवृत्त-'चिणो लुगि'तिसूत्रेऽसिद्धवत्सूत्राऽनुवृत्त्योत्तरकालप्रवृत्तचिणो-

---

लघुशब्दरत्नः

न भ्रमितव्यमिति। एतद्भ्रमनिवृत्त्यर्थमेवाऽत्राऽस्य व्युत्पादनमिति भावः।

इतीदन्ताः।

ह्रस्वविषयकतयैवेति। 'जयमङ्गलायामि'ति शेषः। माङ् माने इति। घुमास्था (६।४।६६) इतीत्त्वविधायकसूत्रस्थम् 'अवकारादावि'ति वार्त्तिकं भाष्ये प्रत्याख्यातमिति ईत्वं सुलभम्। शंस्थाशब्दे तु भाष्यप्रयोगादेव ईत्त्वाऽभावः। 'ततो विजेवे'त्यन्ये। न च तेन ईत्वेऽपि तस्याऽसिद्धत्वात्कथं यणिति वाच्यम्। 'क्वावीत्वं, विभक्तौ यणादेश' इति व्याश्रयत्वादिति बोध्यम्। न कबिति। समासान्तविधौ लिङ्गविशिष्टपरिभाषाऽभावस्य

---

[1] दीर्घेकारान्तोऽयं 'देवयजी'शब्दः।

ईप्रत्ययः प्रतिपदोक्तोऽस्ति। बहुलग्रहणात्कल्प्यते इति चेत्। भवेदेवं यद्यनन्यथासिद्धं कल्पकमुपलभ्येत। वेदेऽपि ह्रस्व एव प्रयुज्यते—'आयजिं त्वा मनवे जातवेदसे' इति। 'अतिलक्ष्मी'शब्दस्य तु नदीत्वाद्ध्रस्वे, आडागमे, नुटि, आमि च कृते महदेव वैलक्षण्यमिति, न 'वातप्रमी'साम्यम्। एतच्च मूले एव स्पष्टी भविष्यति। क्विबन्तेति। एतच्च 'माङ् माने, शब्दे चे'ति धातौ माधवग्रन्थे स्पष्टम्। बहुश्रेयसीति। ईयसश्च (५।४।१५६) इति न कप्। नाऽप्युपसर्जनह्रस्वः। 'ईयसो बहुव्रीहेर्ने'ति निषेधात्।

यू स्त्र्याख्यौ (१।४।३)। ईदूदन्ताविति। इह 'वर्णयोरेव सञ्ज्ञे'त्यपि पक्षोऽस्ति। आच्छीनद्योर्नुम्[1] (७।१।८०) इति सूत्रस्वरसात्। तयोः स्त्र्याख्यत्वन्तु ङ्यादिषु स्वतः, [2]क्वचित्तु स्त्रीवाचकवर्णसमुदाये घटकत्वेन प्रवेशात्। शक्तिपर्याप्त्यधिकरणत्वस्याऽविवक्षितत्वात्। तेन '[3]नद्यन्तादि'त्यादि-

बृहच्छब्दरत्नः

लुकं प्रत्यसिद्धत्वबोधनात् 'अपाचितरामि'त्यादौ [4]न दोष इति सिद्धान्तः। किञ्चैवं दुर्लभम्। ईत्वस्य वकारादौ [5]प्रतिषेधात्। प्रत्ययलक्षणसूत्रे नियमपक्षस्य सिद्धान्तितत्वेन स्थानिवद्भावस्याऽनल्विधाविति निषेधाच्च। ङित्साहचर्येण श्रूयमाणे एव कितीत्वप्रवृत्तिरित्यर्थस्य भाष्यादिसंमतत्वाच्च। अत एव 'शंस्था'शब्दे ईत्वं नेत्यरुचेराह—एतच्चेति। [6]ईकारान्तधातोः क्विपि न दोष इति ध्वनयितुं धातुविशेषोपन्यास इत्याहुः। वर्णयोरेवेति। 'स्त्र्याख्यावि'त्यस्य विशेषणत्वादिति भावः। पक्षोऽस्तीति। 'पक्ष'पददानेनाऽस्वरसः सूचितः। तद्बीजन्तु 'वात्सी३ बन्धो' इत्यत्र 'गुरोरनृत' इति प्लुतस्य, 'वात्सीबन्धुरि'त्यत्र 'नदी बन्धुनी'ति

लघुशब्दरत्नः

ङ्याप्प्रातिपदिकात् (४।१।१) इति सूत्रे भाष्ये उक्तावप्यस्य तन्निषेधकत्वेनाऽत्र प्रवृत्तिरस्त्येव। गोस्त्रियोः (१।२।४८) इति सूत्रे 'बहुश्रेयसी'ति भाष्योदाहरणात् 'अनन्तरस्ये'ति न्यायं बाधित्वा नद्यृतश्च (५।४।१५३) इत्यस्याऽप्ययं निषेध इति भावः।

ङ्यादिष्विति। बहुवचनं प्रयोगभेदाऽभिप्रायेण। शक्तीति। स्त्रीत्वनिरूपित-

[1] 'नुम्' इति ङ. नास्ति।

[2] 'क्वचित्स्त्रीवाचकवर्णसमुदायघटकत्वेन' इति मुद्रिते पाठः।

[3] 'नद्यन्तादिव्यवहारो' इति च. पाठः।

[4] 'न कश्चिद् दोष' इति क. पाठः।

[5] 'ईत्वमवकारादौ' इति वार्त्तिकेन वकारादौ ईत्वप्रतिषेध इति भावः।

[6] 'मीङ हिंसायाम्' इति ईकारान्तधातोरित्यर्थः। 'मीङ माने' इति तु भावप्रकाशे पाठः।

व्यवहारो न विरुध्यते । एवं घिसञ्ज्ञायामपि 'इउवर्णौ, तदन्तं वा 'घिसञ्ज्ञी'ति पक्षद्वयं बोध्यम् । वर्णसञ्ज्ञापक्षे 'असखी'त्यस्य 'सखिभिन्नस्याऽवयव' इत्यर्थो, न तु 'सखिशब्दाऽवयवं वर्जयित्वे'ति । तेन 'अतिसखिने'-

बृहच्छब्दरत्नः

पूर्वपदाऽन्तोदात्तत्वस्य चाऽसिद्धिः । एवं 'विश्व ना च विनरौ, तावाचष्टे विनयति,' 'प्रविणय्य गत' इत्यादौ 'ल्यपि लघुपूर्वात्' 'द्वन्द्वे घी'ति सूत्राभ्यामयादेश-पूर्वनिपाताऽसिद्धिश्च । [2]एकासञ्ज्ञाऽधिकारेण समावेशाऽनापत्तेः । न च 'समुदायसञ्ज्ञे'ति पक्षे 'आच्छीनद्योरि'त्यत्र 'नदी'शब्दस्य 'नद्यवयवे लक्षणे'ति दोष इति वाच्यम् । 'असखी'त्यस्य लक्षणया व्याख्यानेन समत्वात् । 'सखि'शब्दस्य स्वरूपपरत्वे, नञो भेदपर्यवसायित्वे, 'सखिभिन्नस्य भवती'ति यथाश्रुतव्याख्यानन्तु समुदायपक्षे । न तु सखिशब्दावयवमिति । सखिशब्दस्य सख्यवयवे लक्षणाया आवश्यकत्वे, मुख्यपक्षाऽनुरोधेन सखिभिन्नाऽवयवे एव लक्षणाया युक्तत्वात् । अविरोधे सम्भवति विरोधकल्पनमन्याय्यमित्यसकृदावेदितम् । एवञ्च 'नेयङुवङ्स्थानावस्त्री'त्यादौ लाघवेनाऽसखिवदस्त्रीत्यस्याऽपि व्याख्याने, समानाधिकरणसमासे परमस्त्रीशब्दे, बहुच्प्रत्यये बहुस्त्रीशब्दे च निषेधो भवत्येव । तेन 'हे परमस्त्री' 'परमस्त्रियै' इत्यादि निर्बाधम् । 'अस्त्री'ति तु 'इयङुवङ्स्थानावि'त्यस्यैव पर्युदासः, तत्सम्बद्धस्यैवाऽनुवृत्तेरि'ति मूलग्रन्थस्तु 'अतिस्त्रि'शब्दे उपायाऽन्तरपरतया बोध्यः ।

केचित्तु 'नेयङुवङ्स्थानौ,' 'स्त्री'ति सूत्रद्वयमेवाऽस्तु । तत्र 'स्त्री'ति सूत्रं न नदीसञ्ज्ञाविधायकम् । पूर्वसूत्रेणैव सिद्धेः । निषेधोत्तरं पाठस्याऽसङ्गतताऽऽपत्तेश्च । नाऽपि नदीसञ्ज्ञानिषेधाऽर्थम्[3] । पूर्वसूत्रेणैव सिद्धेः । किन्तु निषेध-निषेधाऽर्थम् । [4]तथा च नञुपादानसामर्थ्यात् प्रसज्यप्रतिषेध एवाऽयमि'त्याहुः । अन्ये तु 'वामी'त्यादौ पर्युदासः । अनेकवाक्यकल्पनाऽपेक्षया शब्दाऽधिकारस्य लघुत्वादि'त्याहुः । यत्तु 'यस्येति'सूत्रे 'इकारस्य ईति किमुदाहरणमि'-

लघुशब्दरत्नः

शक्तीत्यर्थः । तेन लक्ष्म्यादिशब्दसंग्रहः । तदन्तसञ्ज्ञापक्षे तु शीनद्योः (७।१।८०) इत्यादौ नदीशब्दस्य तदवयवे लक्षणा । 'नद्यन्तादि'त्याद्यपि अतिलक्ष्म्याद्यर्थमावश्यकम् । लक्ष्मीशब्दे व्यपदेशिवद्भावेन तत्त्वं बोध्यम् ।

इउवर्णाविति । अत एव 'ध्यन्तादजाद्यदन्तं विप्रतिषेधेने'ति सङ्गच्छते । न त्वित्यादि ।

[1] 'घि' इति ङ. च. नास्ति ।

[2] 'एका सञ्ज्ञा' इति क. ख. पाठः । 'एकसञ्ज्ञा' इत्यपि क्वचित् पाठः ।

[3] 'निषेधाऽर्थे' इति ख. पाठः ।

[4] एवमेव निषेधसिद्धौ पुनः 'अस्त्री'ति नञुपादानसामर्थ्यादित्यर्थः ।

**त्यादि निर्बाधमित्यवधेयम् । पूर्वमिति । वृत्तेः प्रागित्यर्थः । वक्तव्यमिति ।**

बृहच्छब्दरत्नः

त्युक्त्वा, 'हे दाक्षि' [1]इत्याद्युदाहरणानां सवर्णदीर्घेणाऽन्यथासिद्धिं निरूप्य, 'इदन्तर्हि 'अतिसखेरागच्छति,' 'अतिसखेः स्वमि'ति, अत्र यदि लोपो न स्यादुपसर्जन-ह्रस्वत्वे कृते 'असखी'ति प्रतिषेधः प्रसज्येते'ति भाष्यकारैरुक्तम्। तच्च प्रसज्य-प्रतिषेधे एव सङ्गच्छते, न तु पर्युदासे। समासस्य सखिशब्दादन्यत्वादि'ति। तन्न। प्रसज्यप्रतिषेधेऽपि भाष्याऽर्थस्य निरूपयितुमशक्यत्वेन प्रौढिवादपरताया आवश्यकत्वात्। सवर्णदीर्घे, ह्रस्वत्वे च 'लक्षणप्रतिपदोक्त'परिभाषयाऽसखीति-निषेधाऽप्रवृत्तौ भाष्यस्याऽलग्नकताऽऽपत्तेः। एकादेशस्य पूर्वाऽन्तत्वेन प्रवृत्तौ, प्रथमोपस्थित-प्रथमा-द्वितीययोः प्रयोजनसम्भवे तत्त्यागे भाष्यस्य निर्बीजत्वाऽऽपत्तेः। स्पष्टञ्चेदमुरण् रपरः, 'इको गुणवृद्धी' 'अइउण्' 'ॠलृगि'त्यादौ भाष्य-कैयटयोः। न च भाष्यं प्रयोजनोपलक्षणपरमिति वाच्यम्। तावताऽपि दोषाऽनुद्धारात्। 'अतिसखेरि'त्यनेन 'प्रसखेरि'त्यादीनामुपलक्षणतया लाभेऽपि, 'अप्रथमोपस्थितेन प्रथमोपस्थितस्योपलक्षणतया लाभ' इत्यर्थस्याऽयुक्तत्वाच्च। उपलक्षणतया व्याख्यानस्याऽऽवश्यकत्वेऽसमर्थसमासाऽऽस्कन्दित-गुरुभूत-प्रसज्यप्रतिषेधे भाष्य-तात्पर्याऽसिद्धेश्च। अपि चाऽसमस्ते एव 'सखी' 'सख्यौ' 'सख्य' इत्यादौ फल-दोषयोः सत्त्वेन समस्तोपन्यासे बीजाऽभावः। ध्वनितञ्चेदं सप्तमे भाष्यकृता।

किञ्च 'समुदायसञ्ज्ञे'ति पक्षे निषेधेन समुदायनिष्ठघिसञ्ज्ञाया अनिवर्त्तना-द्भाष्योक्तं दूषणमदूषणमेव। अपि च लोपपक्षेऽपि 'प्रातिपदिकग्रहणे लिङ्ग-विशिष्टस्याऽपि ग्रहणमि'ति परिभाषया 'असखी'ति निषेधस्य दुर्वारत्वेन, तदभावे तद्दानस्याऽयुक्तत्वम्। न च लोपे अनित्यत्वादुक्तन्यायाऽप्रवृत्तिरिति वाच्यम्। वचनाऽनित्यत्वस्याऽऽवश्यकत्वे 'अनुदात्तं पदमि'त्यत्राऽनेकमिति वक्तव्ये 'वर्ज्ज'-ग्रहणेन [2]'नञ्घटितमनित्यमि'ति न्यासकारोक्तरीत्या 'असखी'ति निषेधस्याऽनित्य-त्वेनाऽप्रवृत्तौ, लोपस्यैव प्रत्याख्यातुं शक्यत्वेन, भाष्यग्रन्थस्य सिकताकूपवद्विशीर्णता-ऽऽपत्तेः। ध्वनितञ्चेदं 'दीधीवेवीटामि'त्यादौ भाष्ये। तस्माल्लघुभूतपर्युदासे भाष्यतात्पर्यमक्षतम्। अत एव नदीसञ्ज्ञासूत्रस्थं 'सखिवर्जितौ च यू [3]ह्रस्वौ घिसञ्ज्ञौ भवत' इति भाष्यं सङ्गच्छते। न चेदं भाष्यं प्रसज्यप्रतिषेधपरतयैव व्याख्येयमिति वाच्यम्। 'सार्वधातुकमपिदि'तिसूत्रस्थभाष्यविरोधेन प्रसज्यप्रति-षेधे ईदृशाऽर्थस्याऽसम्भवात्। अपि च सूत्राऽर्थप्रतिपिपादयिषया प्रवृत्तभाष्यस्य, भङ्क्त्वा व्याख्यानाऽपेक्षया 'इकारस्य ईति लोपे फलप्रतिपिपादयिषया प्रवृत्तभाष्यस्या-ऽन्यतात्पर्यकत्वेनाऽन्यथा व्याख्यातुं युक्तत्वात्। अङ्गीकृतञ्चेदं 'नाऽग्लोपिशास्वृ-

[1] 'इत्युदाहरणानाम्' इतिक.ख.पाठः। हे दाक्षि, दाक्ष्या, दाक्षेयः'-इत्युदाहरणत्रयंभाष्ये।

[2] 'नञ्पदघटितम्' इति क. पाठः।

[3] 'ह्रस्वौ' इति पदमत्र भाष्यात् पूरितम्।

बृहच्छब्दरत्नः

दितामि'ति सूत्रे भाष्ये। अत एव 'ख्यत्यादि'ति सूत्रे 'किं पुनः कारणं सखिपत्योर्विकृतग्रहणं, न 'सखिपतिभ्यामि'त्येवोच्येत। नैवं शक्यं, [1]'गरीयांश्चैव निर्देशः स्यात्, इह च प्रसज्येत-'अतिसखेरागच्छति, अतिसखेः स्वम्, इह च न स्यात्—सखीयतेरप्रत्ययः, सख्युः पत्युरि'ति भाष्ये 'अतिसखेरि'ति प्रयोगः सङ्गच्छते। न च स प्रयोगो ङ्यन्तस्यैवेति वाच्यम्। 'लिङ्गविशिष्ट'परिभाषया 'असखी'तिनिषेधप्रवृत्तावुक्तरूपाऽसिद्धेः; 'सखिपतिभ्यामि'त्येव कुतो नोक्तमि'त्याशङ्कयाऽतिव्याप्तेर्दत्तत्वाच्च लक्षणप्रतिपदोक्तपरिभाषया प्राप्त्यभावात्। लिङ्गविशिष्टपरिभाषा तु विभक्तिकार्यत्वान्न प्रवर्त्तते। न चाऽत एवाऽपरितोषाद्व्याप्त्युपन्यास इति वाच्यम्। परिभाषया सख्यंशे इव [2]'पथ्यतिथिवसतिस्वपतेरि'ति निर्देशेन पत्यंशेऽप्यतिव्याप्तेर्निवारयितुं शक्यत्वेनाऽव्याप्तेरिवाऽतिव्याप्तेरपि पत्यंशे उपन्यस्तुं युक्तत्वात्। अङ्यन्तकल्पने तु दृढतरत्वाऽदृढतरत्वाभ्यां त्यागोपादानमुचितम्। 'गरीयांश्चैवनिर्देशः स्यादि'तिभाष्यस्य दोषसमुच्चयपरतयैव प्रक्रान्तत्वाच्च। ङ्यन्तपर्यन्तधावने बीजाऽनापत्तेश्च। यत्तु कैय्यटेनोक्तं 'विहितपञ्चम्याश्रयणेऽतिव्याप्तिरूपदोषाऽभाव' इति। तन्न। सखिपतिशब्दाभ्यामाचारक्विबन्ताभ्यां कर्त्तरि क्विपि, सखितः पतित इत्यादावतिव्याप्तिदोषस्य स्फुटत्वात्। किञ्च 'एकः पूर्वपरयोरि'तिनिवृत्त्यर्थं 'परस्ये'त्यस्याऽऽवश्यकत्वेनाऽनन्वयाद्विहितविशेषणपक्षो दूराऽपास्त एव। 'तस्मादित्युत्तरस्ये'ति परिभाषायाः प्रवृत्तत्वेन दिग्योगलक्षणपञ्चम्या युक्तत्वाच्च। नन्वेवं 'शेषो घ्यसखिपती' इत्येवाऽस्तु, 'सुसखिने'त्यादेरिव [3]'सुपतिने'त्यादेः सिद्धत्वादिति चेन्न। 'षष्ठीयुक्तश्छन्दसि वे'त्यादौ द्वयोरपि सम्बन्धाऽऽपत्तेः। न च पठ्यमानरूपे दोषाऽभावेन, रूपाऽन्तरस्य वेदे अनापाद्यत्वेन दोषाऽभाव इति वाच्यम्। 'श्रीग्रामण्योश्छन्दसी'त्यादीनामिव स्पष्टप्रतिपत्त्यर्थं सत्त्वात्। किञ्च पर्युदासेन 'सखिपतिभिन्नेवर्णाऽन्तप्रातिपदिकस्य, सखिपतिभिन्नप्रातिपदिकाऽन्त्येवर्णस्य वा ग्रहणमि'ति तावन्निर्विवादम्। अत एव 'कृतं सख्ये'तिवाक्ये सञ्ज्ञाऽऽपत्तिरि'ति मन्दप्रतारणमपास्तम्। अत एव 'गृहसखायावि'त्यत्र पूर्वनिपाताऽनियमः। आद्यपक्षे 'गृहसखि'शब्दस्यैव घित्वात्। अन्त्ये सखिशब्दस्यैव न पूर्वनिपातः। उपजीव्यविरोधात्। स्पष्टञ्चेदं 'समासस्ये'ति सूत्रे भाष्ये। 'हरिसखी' इत्यादौ तु पूर्वनिपातनियम एव। एवं 'पति-गृहे' 'पति-सखी' इत्यादावपि पूर्वनिपाताऽनियमाऽऽपत्तिः। अत एव 'पतिसखी समासे एवे'ति न सूत्रितम्। न चैवं बहुच्प्रत्यये 'पतिः समास एवे'ति नियमेन पतिशब्दनिष्ठघित्वाऽभावेऽपि 'बहुपति'शब्दनिष्ठप्रातिपदिकत्वं निमित्तीकृत्य सञ्ज्ञाया दुर्वारत्वेन 'बहुपतिने'त्यादि दुर्वारमिति वाच्यम्। इष्टाऽऽपत्तेः। न चैवं 'पतिर्वृत्तावेवे'ति

---

१ 'गरीयांश्चैव हि' इति क्वचित् भाष्ये पाठः।

२ 'पथ्यतिथिवसतिस्वपतेर्ढञ्' (४।४।१०४) इति पाणिनिसूत्रम्।

३ 'सुपतितेत्यादेः' इति क. ख. पाठः।

[1]सञ्ज्ञाया यथोद्देशं प्रवृत्तौ न्यायसिद्धमिदम् । कार्यकालत्वे तु वाचनिकम् ।

बृहच्छब्दरत्नः

सिद्धौ सूत्रे 'समास'ग्रहणं व्यर्थम् । समाहारद्वन्द्वविषयेऽप्येकशेषस्योपपादितत्वेन-एकवचने 'पतिने'त्याद्यनिष्टाऽऽपत्तेः । न चैवमपि 'वृषलपत्नी'त्यादौ 'प्रातिपदिक-ग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणमि'ति परिभाषया, 'एकदेशशविकृत'न्यायेन च [2]पतिशब्दसत्त्वात् घिसञ्ज्ञाऽऽपत्तिरिति चेन्न । 'शेष'ग्रहणाऽनुवृत्त्या दोषाऽभा-वात् । शेषग्रहणाऽकर्त्तव्यपरग्रन्थाः पूर्वसूत्रे प्रयोजनाऽभावपरतयैव व्याख्येयाः । किञ्च पूर्वसूत्रे नदीसञ्ज्ञाया अभावे घिसञ्ज्ञाया निर्णीतत्वेन तथैवोचितम् । अपि च 'ह्रस्व'ग्रहणाऽनुवृत्त्या ह्रस्वाऽन्तत्वमपि सञ्ज्ञाप्रवृत्तौ निमित्तम्, न हि तदुक्तन्यायेन लभ्यमिति प्राचीनग्रन्थपरिशीलनशालिन एव विभावयन्तु ।

वार्त्तिकस्य—'पूर्वं स्त्र्याख्यत्वेन कृतनदीकस्य ([3]उपसर्जनत्वेऽपि) नदी-सञ्ज्ञा वक्तव्ये'त्यर्थः । तदेतद् ध्वनयन्नाह—सञ्ज्ञाया इत्यादि । एतेन 'अवयवस्य निषेधं बाधित्वा नदीसञ्ज्ञाविधानाऽर्थं स्यादि'ति [4]मन्दशङ्का समाहिता । 'बहुश्रेयसी' 'कुमारी'त्यादावन्तरङ्गत्वात्प्रागेव प्रवृत्ता सञ्ज्ञा शब्दाऽन्तरसापेक्ष-बहिरङ्ग-लिङ्गाऽन्तरयोगेऽपि न निवर्त्तते । 'प्रकृष्टा धीर्यस्ये'ति विग्रहे 'प्रधीरि'त्यत्र 'धी'शब्दस्याऽन्तरङ्गत्वात्पूर्वं नदीसञ्ज्ञा दुर्लभा, 'नेयङुवङ्स्थानावस्त्री'ति निषेधात् । पूर्वं स्त्र्याख्यः पूर्वसूत्रविषय एव गृह्यते । तत्रोपसङ्ख्यानादित्याहुः ।

वाचनिकमिति । क्विबन्त'कुमारी'शब्दे कार्यकालपक्षे नदी-निमित्तकार्य-

लघुशब्दरत्नः

इदं हरदत्ताऽनुरोधेन । न्यायसिद्धमिति । [5]अन्तरङ्गत्वात्पूर्वप्रवृत्तनदीसञ्ज्ञयैव समुदाये नद्यन्तत्वात्कार्यसिद्धिरिति भावः ।

वाचनिकमिति । 'स्त्रीत्वविशिष्टाऽर्थमात्रबोधकस्यैव सञ्ज्ञे'त्यभिमानेनेदं, [6]जह-त्स्वार्थावृत्तित्वाऽभिमानेन वा । भाष्यकृता तु अजहत्स्वार्थायामवयवस्य नित्यस्त्रीत्वविशिष्टा-ऽर्थबोधकत्वेन[7] तस्य सञ्ज्ञायां 'कुमार्यै ब्राह्मणाय' 'खरकुट्यै ब्राह्मणाये'त्यादौ क्विलुब्विषये

१ 'सञ्ज्ञाया यथोद्देशप्रवृत्तौ' इति मुद्रितेषु पाठः । 'सञ्ज्ञायां यथोद्देशं प्रवृत्तौ' इति घ. पाठः ।

२ 'पतिशब्दवत्त्वात्' इति क. ख. पाठः । ३ अयं पाठः क्वाऽपि नाऽस्ति ।

४ मन्दः=मनोरमा-शेखरादिखण्डनकर्त्ता, मौनिकुलजः कृष्णभट्टो वृत्तिचन्द्रिकादि-ग्रन्थकर्त्ता ।

५ 'अन्तरङ्गत्वात्पूर्वं प्रवृत्तनद्यन्ततयैव समुदाये तत्सञ्ज्ञत्वात्कार्यसिद्धिरिति भावः' इति मुद्रितेषु पाठः ।

६ 'जहत्स्वार्थवृत्तित्वाभिमानेन वा' इति क. पाठः ।

७ 'बोधजनकत्वेन' इति मुद्रितेषु पाठः ।

**अचि श्नु (६।४।७७)। इह 'य्वोरि'ति धातोरेव विशेषणं, न तु श्नुभ्रुवोः। अव्यभिचारादित्याह–[1]इवर्णोवर्णान्तधातोरिति। 'श्नुप्रभृतीनाम् इवर्णोवर्णयोरि'ति व्याख्याने तु इयङुवङोर्ङित्त्वं व्यर्थम्। वैयधिकरण्यश्च दोषः।**

बृहच्छब्दरत्नः

प्रवृत्तिसमये नित्यस्त्रीलिङ्गरूपाऽवयवस्य पृथक्तयाऽनुपलभ्यमानत्वेन सूत्रेण नदीसञ्ज्ञा दुर्लभेत्याहुः। श्नुभ्रुवोरिति। यद्यपि षाष्ठभाष्य-कैय्यटादिपर्यालोचनया 'भ्रू'शब्दस्य धातुत्वादेव सिद्धिरित्यर्थो लभ्यते, तथाऽपि 'भ्रमेश्च डूरि'त्युणादावुक्तत्वात्तद्ग्रह इत्याहुः। ङित्त्वमिति। श्नुप्रभृतीनां स्थानषष्ठ्या निर्देशाऽभावादिति भावः। ननु 'इउवर्णाऽन्तस्य धातोरि'ति मूलकारोक्तव्याख्यानेऽपि ङित्त्ववैयर्थ्यं दुर्वारम्। 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'ति परिभाषयैवेष्टसिद्धेः। अव्यभिचारेऽपि 'य्वोरि'ति विशेषणं श्नुभ्रुवोरपि, तत्फलन्तूक्तपरिभाषाप्रवृत्तिरेवे'ति वादिनां मते उवङोऽपि ङित्त्वं व्यर्थमेवेति चेन्न। श्न्वादीनामपि निर्दिष्टत्वात्। किञ्च 'निर्दिश्यमानस्ये'ति परिभाषायाः प्रवृत्त्यङ्गीकारे दीर्घयोरादेशाऽनापत्तेः। 'य्वोरि'ति निर्देशस्तु ह्रस्वयोरेव। दीर्घेऽपि प्रवृत्त्या व्यापकत्वात्, प्रथमोपस्थितत्वाच्च। किञ्च 'गुणा भेदका' इति पक्षे गुणभिन्नस्य ग्रहणाऽनापत्तिः। न ह्युक्तपरिभाषया 'येन विधिस्तदन्तस्ये'ति सूत्रबोधितस्यैव स्थानित्वाऽभावो बोध्यते, नाऽणुदित्सूत्रादिबोधितस्ये'त्यत्र प्रमाणमस्ति। तस्मादण्विषये उक्तपरिभाषाया अप्रवृत्तिबोधनाऽर्थं ङित्करणम्। समुदायाऽऽदेशाऽभावबोधनेनाऽपि चारितार्थ्यात्। अत एव 'रिङ्शयग्लिङ्क्षु' इत्यादौ ङित्करणं चरितार्थम्। उक्तपरिभाषाप्रवृत्त्यङ्गीकारे तु ऋऌवर्णयोः सावर्ण्ये सत्यपि ऌकारग्रहणाऽनापत्तिः।

लघुशब्दरत्नः

**आनुपूर्व्यैक्येन भेदाऽग्रहात्, [2]समासे नद्यन्तत्वात्कार्यसिद्धिमाश्रित्य प्रत्याख्यातमिदम्—'अवयवस्त्रीविषयत्वात्सिद्धमि'ति। तन्मात्रबोधकत्वनिवेशे न मानं, यौगिकेषूत्तरपदे [3]जहत्स्वार्थत्वाऽभावश्चेति तदाशयः। 'अवयव'शब्देनाऽत्र [4]वृत्तिप्रकृतिभूतशब्दग्रहणम्। अत एव क्यजाद्यन्ते न दोषः। तत्राऽपीच्छादिविशेषणतया कुमारीशब्दादेर्नित्यस्त्रीलिङ्गाऽर्थबोधकत्वात्। [[5]इवर्णोवर्णान्तेति। विभिन्नवचनत्वेऽपि 'वेदाः प्रमाणमि'त्यादौ सामानाधिकरण्येनाऽन्वयदर्शनादिति भावः]। श्नुप्रभृतीनामिति। तदन्ताङ्गानामित्यर्थः। दोष इति। सामानाधिकरण्ये**

[1] 'इवर्णोवर्णान्तस्य' इति घ. पाठः।
[2] 'समासे तदन्तत्वात्' इति मुद्रितेषु पाठः।
[3] 'जहत्स्वार्थत्वाऽभावश्च' इति ख. पाठः।
[4] 'वृत्तिप्रकृतिभूतस्य ग्रहणम्' इति घ. पाठः।
[5] एतदन्तर्गतः पाठो घ. पुस्तके एव दृश्यते, नाऽन्यत्र।

'क्षिपति' 'अद्युतत्' 'दिदिवतुः' 'ऊयतुरि'इत्यादौ चाऽतिव्याप्तिः। तद्वारणाय इवर्णोवर्णयोरच्परत्वेन विशेषणे तु क्लिष्टतेति भावः। आन्तरतम्यादिति। स्थानत इति भावः।

एरनेकाचः (६।४।८२)। अचिश्नुधात्विति सूत्रे द्वन्द्वनिर्देशेऽपि धातुरेवेह सम्बध्यते, न तु श्नु-भ्रुवौ। तयोरिवर्णाऽसम्भवात्। धातुग्रहणञ्चाऽऽवृत्त्या उभयोर्विशेषणम्–'[1]संयोगस्य चाऽङ्गस्य चे'ति व्याचष्टे–धात्ववयवसंयोगेत्यादि। तत्र धातुना संयोगस्य विशेषणादिह यण्-'उन्न्यौ' 'उन्न्यः'। अङ्गविशेषणन्तु 'हरिम्' 'हरी' 'हरीनि'त्यादिसिद्धये। यदि हि धातुनाऽङ्गं

बृहच्छब्दरत्नः

न चेष्टाऽऽपत्तिः। इगागमेन यणा रूपसिद्धौ, रेफवैयर्थ्याऽऽपत्तेः।

दिदिवतुरिति। यण्शास्त्रे 'इवर्णाऽन्ताऽङ्गस्ये'त्येवाऽर्थोऽस्तीत्यभिप्रायेणेदम्। 'इयङ्विधायके इव यण्विधायकेऽप्युक्ताऽर्थाऽऽपत्तौ यणापत्तिरेव दोषोऽभिहित' इत्यपरे। एतेन 'क्षिपती'त्यादौ 'लोपो व्योरि'ति लोपे न दोष' इत्यपास्तम्। प्रत्ययनिमित्तकत्वेनेयङुवङोरसिद्धत्वाच्च। अवल्परे दोषस्योद्भटत्वाच्च। तदेवाऽऽह— ऊयतुरिति। क्लिष्टतेति। व्यवहिताऽन्वयात्। अङ्गाऽऽक्षिप्तप्रत्ययस्याऽङ्गविशेषणत्वस्यैव न्याय्यत्वाच्च। संयोगस्येति। एकदेशाऽन्वयेऽपि सौत्रत्वाद्वृत्तिः।

धातुनेति। न चैवं 'परमधियावि'त्यादौ यण् स्यात्। 'गतिकारकपूर्वस्यैवेष्यते' इति भाष्यपठितवचनेन निस्तारात्। तस्याऽयमर्थः—'नियमवाक्यानां निषेधमुखेन प्रवृत्तिरि'ति पक्षे गतिकारकपदेन तद्भिन्नं लक्ष्यते। 'इष्यते' इत्यनेन

लघुशब्दरत्नः

विशेषणविशेष्यभावमात्रं, वैयधिकरण्ये तु भेदसम्बन्धः, स चेति गौरवं दोष इत्यर्थः। दिदिवतुरिति। अत्र यणापत्तिः, तत्रापि तद्रीत्या वैयधिकरण्यात्। यदि यण्विधौ सामानाधिकरण्यमेव, तदेयङ एवाऽऽपत्तिः। न चैषु [2]लोपेन निर्वाहः। प्रत्ययनिमित्तेयङादेरसिद्धत्वात्। अनित्वात्तदभावेऽप्याह—ऊयतुरिति। क्लिष्टतेति। अजादिप्रत्ययस्याऽङ्गांशे उत्थिताऽऽकाङ्क्षत्वादिति भावः। उभयोर्विशेषणमिति। [3]व्याख्यानाल्लक्ष्याऽनुसाराच्चैकदेशान्वयेऽपि सौत्रत्वाद्वृत्तिरिति भावः। उन्न्याविति। [4]अत एव 'स्वरपूर्वा, पदपूर्वा चोपधा यस्येवर्णस्य तस्य यणि'त्यर्थकं 'स्वरपदपूर्वोपधस्ये'ति वार्त्तिकं सङ्गच्छते। उक्तोपायेन प्रत्याख्यातमित्यन्यत्।

[1] 'संयोगस्याऽङ्गस्य चेति' इति, 'संयोगस्याङ्गस्येति च' इति च. घ. ङ. पाठः।
[2] 'लोपो व्योरिति लोपेन' इति घ. पाठः।
[3] 'लक्ष्याऽनुरोधात्' इति मुद्रितेषु पाठः।
[4] 'अत एव' इत्यादिः 'इत्यन्यत्' इत्यन्तः पाठः क. नास्ति।

**न विशेष्येत, तर्हीहाऽपि 'प्रध्यं' 'प्रध्य' इत्यादाविव पूर्वरूपं, पूर्वसवर्णदीर्घञ्च बाधित्वा यण् स्यात्, धात्ववयवसंयोगपूर्वको न भवति य इवर्ण-स्तदन्तत्वादङ्गस्य ।**

बृहच्छब्दरत्नः

निषेधो लभ्यते । अत एव 'निन्यतुरि'त्यादौ यण्सिद्धिः । गति-कारकेतरं च गतिकारकसदृशमेव गृह्यते । तथैव व्युत्पत्तेः । अत एव बहुच्प्रत्ययपूर्वक-'बहुधी'-शब्दे यण् । अमुमेवाऽर्थं हृदि निधाय मूलकारेणोक्तं—'गतिकारकेतरपूर्वपदस्य यण्नेष्यते । शुद्धधियौ, परमधियावि'ति । न च 'शुद्धा धीर्यस्ये'त्यत्राऽस्तीत्यध्या-हारस्याऽऽवश्यकत्वेन कर्त्तृत्वात् कारकपूर्वत्वमस्त्येवेति वाच्यम् । कारकशब्दो-पादानेन स्वरितत्वप्रतिज्ञया कारकाऽधिकारपठितस्यैव ग्रहणेन, 'क्रियाऽऽश्रयत्व'-रूपकर्त्तृत्वस्य प्रथमयाऽनभिधानात् । वृत्तौ विशेषण-विशेष्य-भावव्यत्यासेन पुरुषपरत्वेनाऽकारकत्वाच्च । प्रत्यासत्तिन्यायेन यण्स्थान्यवयवकधात्वर्थकारकस्यैव ग्रहणाच्च । यत्तु 'इदं वचनम् 'एरनेकाच' इति सूत्रे एवे'ति । तन्न । वार्त्तिकानां सूत्रैकदेशत्वेनाऽनुवृत्तेर्युक्तत्वात् । अत एव 'परमलुवावि'त्यादौ यण्न । 'सकृल्ल्वौ' इत्यादौ तु क्रियाविशेषणत्वेन कर्मत्वान्न कश्चिद्दोषः । ध्वनितञ्चेदं कौस्तुभपदमञ्जर्योः ।

यण् स्यादिति । एतेनेयङ्बाधनाऽर्थत्वाद्यणादेशस्य 'उत्सर्गसमानदेशा अपवादा भवन्ती'ति न्यायेनाऽधातावप्रवृत्तिरिति परास्तम् । अकच्-श्नमादौ न्यायस्य व्यभिचरितत्वात्[1] । 'अनन्तरस्ये'ति न्यायेनेयङपवादकत्वेऽपि, परत्वेन पूर्वरूपादि-बाधस्याऽपि दुर्वारत्वेन, तन्मात्रबाधकत्वे मानाऽभावाच्च । यत्तु 'संयोगवद्धिप्रयोग-स्याऽपि विशेषाऽवगतिहेतुत्वाद्धात्ववयवसंयोगपूर्वत्वस्य धात्ववयवस्यैव सत्त्वान्न दोष' इति । तन्न । 'निन्यतुरि'त्यादिप्रयोगस्थेकारादिव्यक्तीनां धात्ववयव-संयोगपूर्वत्वस्य कालत्रयेऽप्यसम्भवाद्वचनवैयर्थ्याऽऽपत्तेः । संयोगान्तधातो-रौणादिके 'इ'प्रत्यये धात्ववयवसंयोगपूर्वत्वस्याऽधात्ववयवेऽपि सम्भवाच्च । न चैवमपि 'दुर्धिय'इत्यादौ यणादेशः स्यादिति वाच्यम् । दुष्टा धीर्येषामि'ति विग्रहे प्रतिपदोक्तत्वात् 'गतिकारकोपपदानां कृद्भिः सह समासवचनमि'त्यस्य नित्यसमासा-

लघुशब्दरत्नः

तदन्तत्वादिति । न च धात्ववयवसंयोगपूर्वत्वस्य धात्ववयवेकारे एव सम्भवेन, संयोगवद्धिप्रयोगस्याऽपि विशेषाऽवगतिहेतुत्वेन, तद्भिन्नस्याऽपि धात्ववयवस्यैव ग्रहणान्न दोष इति वाच्यम् । 'तन्त्रीरि'त्यादौ धात्ववयवसंयोगपूर्वस्याऽधात्ववयवस्याऽपि सम्भवात् । परिमाणा-ख्यायाम् (३।३।२०) इति सूत्रे भाष्ये 'अजपावपि सञ्ज्ञायामेव, यथाजातीयक उत्सर्ग-स्तज्जातीयकेनाऽपवादेनाऽपि भवितव्यमि'त्युक्तं, तन्मूलकेन 'उत्सर्गसमानदेशा [2]अपवादा' इति

[1] 'व्यभिचरितत्वाच्च' इति क. पाठः ।

[2] 'अपवादा भवन्ति' इति घ. पाठः ।

५१

**वृश्चिकशब्दस्येति। भाष्यकृता हि बुद्धिपरिकल्पितमपायमाश्रित्य भीत्रार्थानाम् (१।४।२५) इति सूत्रं प्रत्याख्यातम्। ततश्च सम्बन्धमात्रविवक्षायां षष्ठ्येवेति भावः। सूत्रमतेऽप्याह—वृश्चिकसम्बन्धिनीति। अल्लोपयलोपाविति। न च परत्वात् वेरपृक्तस्य (६।१।६७) इति स्यादिति**

---

**बृहच्छब्दरत्नः**

ऽधिकारस्य प्रवेशेन, बहुव्रीहेस्तदितरत्वेन, यण्निषेधस्य दुर्वारत्वात्। 'लाक्षणिकोऽपि गृह्यते' इति मते तु 'दुःस्थिता धीर्येषामि'ति विग्रहेण 'दुरि'त्यस्य धी'शब्दं प्रति गतित्वाऽभाव' इति मूलकृत उक्तिरेव शरणी करणीया। यत्तु 'प्रकृष्टा धीरि'ति विग्रहे 'प्रध्यं' 'प्रध्य' इति न स्यादि'त्युक्तम्। तन्न। 'प्र'शब्दोपात्तप्रकर्षस्य[1] 'धी'शब्दोपात्तधात्वर्थे एवाऽन्वयात्, 'दुर्धिय' इत्यादौ 'दुः'शब्दोपात्तदुष्टत्वस्य [2]स्थितिक्रियायामन्वयेन वैषम्यस्य स्फुटत्वात्। ननु निवृत्ति-निस्सरणादिधात्वन्तराऽर्थविशिष्टे स्वाऽर्थे वृत्तिमाश्रित्य पञ्चम्याः सिद्धत्वेन सूत्रप्रत्याख्यानं कुर्वता अनभिधानब्रह्माऽस्त्रमाश्रित्य षष्ठ्यभावोऽवश्यमभ्युपगन्तव्यः। षष्ठीबाधनाऽर्थतायाः सूत्राणां निरूपयितुंशक्यत्वेन फलभेदे फलाऽभेदबोधक'सिद्धमि'त्यादिशब्दैः प्रत्याख्यानाऽयोगादिति ध्वनयन्नाह—सूत्रमते इति। अपिना भाष्यमतं समुच्चीयते। 'परमदीध्यावि'त्यादौ तु न दोषः। 'गतिकारकेतरपूर्वपदस्ये'त्यरुय य्वोर्विशेषणाऽऽपत्तौ 'येन नाऽव्यवधानमि'ति न्यायेनैकवर्णव्यवधाने एव प्रवृत्तेः, छान्दसत्वाद्वेति सुधीभिरूह्यम्।

---

**लघुशब्दरत्नः**

न्यायन तु न निर्वाहः। अङ्गांऽशे तदसम्बन्धे 'हरिमि'त्यादावपि तत्प्राप्त्या, तेन येननाप्राप्त्यभावेन तदपवादत्वस्यैवाऽभावात्। यद्यपि प्रत्यासत्त्या [3]इको गुणवृद्धी (१।१।३) इति निर्देशोपष्टब्धया धात्ववयवसंयोगपूर्वभिन्नस्य धात्ववयवस्यैव ग्रहणमिति 'हरिमि'त्यादौ न दोषस्तथाऽपि स्पष्टप्रतिपत्तये आवृत्तिरेवाऽऽश्रितेति दिक्।

सूत्रमतेऽपीति। [4]ये भीत्राऽर्थानाम् (१।४।२५) इति सूत्रं षष्ठीबाधनाऽर्थमिति वैतण्डिकतया[5] वदन्ति, तत्सिद्धसूत्रमतेऽपीत्यर्थः। वस्तुतो 'भयहेतुरि'त्युक्त्याऽस्य [6]हेतुतृतीयाबाधकत्वं बोध्यम्। न च परत्वादिति। एवं च यलोपो दुर्लभ इति भावः।

---

[1] 'धाशब्द' इति क. ख. पाठः।

[2] 'स्थित' इति क. ख. पाठः।

[3] 'इको गुणवृद्धीति' इति लिखितेषु प्रायः सर्वत्र पाठः।

[4] 'भीत्रार्थानामिति सूत्रम्' इति घ. पाठः। 'भीत्रेति सूत्रमि'त्यन्यादर्शेषु पाठः।

[5] 'ये वदन्ति' इति मुद्रितेषु पाठः। तत्र आदौ 'ये' इति नास्ति।

[6] 'हेतुतृतीयाबाधकत्वम्' इति घ. पाठः। 'तृतीयाबाधकत्वम्' इत्यन्यादर्शेषु पाठः।

वाच्यम् । 'वेरपृक्तलोपाद्वलि [1]'लोपः पूर्वविप्रतिषेधेने'ति वार्त्तिककारोक्तेः । क्तौ लुप्तमिति । नपुंसके भावे क्तः । क्तौ लोप इत्यर्थः । इदं सर्वं 'कुमारी-मिच्छन्—कुमारी'त्यत्राऽपि बोध्यम् । अनन्यतयेति । गौणत्वेऽपि अनङ्-णित्त्वयोः प्रवृत्तेरुक्तत्वाच्चेति बोध्यम् । दीर्घस्यापीति । एतदर्थं कृतयणा-देशनिर्देश इति भावः । ननु 'अतिसखेः' 'भूपतेरि'ति गुणविषये व्यावर्त्तयितुं

---

**बृहच्छब्दरत्नः**

वार्त्तिककारोक्तेरिति । 'क्वौ लोपो वक्तव्य' इति वार्त्तिके ककारोऽविवक्षितः । अत एव 'वेरपृक्तस्ये'त्यत्र 'वेरि'ति योगं विभज्य [2]'व्यन्तयोश्च व्योर्लोपो भवति[3] । 'वलि' । वल् च प्रत्यासत्तिन्यायेन वेरेव । [4]प्रत्ययलक्षणं वचनसामर्थ्यादि'त्यर्थ-माश्रित्य[5] वार्त्तिकं प्रत्याख्यातं भाष्ये । अत एव 'न धातुलुक्यची'ति न सूत्रितमिति पूर्वमेवोपपादितम् ।

इदं सर्वमिति । एवं पदसञ्ज्ञाद्युपन्यासोऽपि [6]'निर्जर' शब्दे बोध्यः । वस्तु-तस्तु तत्र भसञ्ज्ञायां फलाऽभावः । न च पदान्तत्वप्रयुक्तरुत्वाऽभाव एव फलम् । पदसञ्ज्ञाया अकरणे तस्य सुलभत्वात् । 'दत्'शब्दे तु 'दद्भ्यामि'त्यादौ पदत्वस्या-ऽऽवश्यकत्वेन 'दत' इत्यादावपि प्राप्तेर्भत्वमप्यावश्यकम् । एवमन्यत्राऽप्यूह्यम् । कृतयणादेश इति । अन्यथा 'खितेः परस्ये'त्येव ब्रूयादिति भावः । ननु 'अतिसखेः'

---

**लघुशब्दरत्नः**

वार्त्तिककारोक्तेरिति । लोपो व्योः (६।१।६६) इति सूत्रे 'क्वावुपसङ्ख्यानमि'ति वार्त्तिकम् । तस्याऽपूर्वत्वाऽपेक्षया क्वौ यथा[7] लोपसिद्धिर्भवति, तथा वक्तव्यमित्यर्थः । सा च पूर्वविप्रति-षेधेनेत्याशयेनैवमुक्तमिति बोध्यम् । गौणत्वेऽपीति । इच्छाकर्त्तृरूपाऽर्थं प्रत्युपसर्जनत्वे-ऽपीत्यर्थः । कृतयणेति । अन्यथा 'खितेः [8]परस्ये'ति वदेदिति भावः । गुणविषये इति ।

---

[1] 'लोपो विप्रतिषेधेन' इति ङ. पाठः ।

[2] 'व्यन्तस्य' इति क. ख. पाठः ।

[3] 'भवतीति' क. ख. पाठः ।

[4] क्विपो वेर्लुप्तस्य प्रत्ययलक्षणमित्यर्थः ।

[5] अत्र 'वेरपृक्तस्ये'त्ययं योगो विभज्यते । तत्र वेः' इत्येको योगः । तत्र 'लोपो व्यो'-रित्यतो 'व्यो'रिति वर्त्तते । 'वे'रिति च 'प्रत्ययग्रहण'परिभाषया तदन्तस्य ग्रहणम् । तस्यैव च 'व्यो'रिति विशेषणम् । तेन 'वकारयकारान्तस्य, 'वि'प्रत्यया-ऽन्तस्य अलोऽन्त्यस्य लोपो भवती'त्यर्थः । प्रत्ययलक्षणेन च विप्रत्ययाऽन्तत्व-मि'ति कैयटः ।

[6] 'निर्जरस्'शब्दे' इति क. ख. पाठः ।

[7] 'लोपसिद्धिर्यथा भवति' इति घ. पाठः ।

[8] 'परस्येत्येव वदेदिति भावः' इति मुद्रितेषु पाठः ।

यणा निर्देश इति चेत्। अस्त्वेवम्। तथाऽपि दीर्घे प्रवृत्तेर्दुर्वारत्वात्। न हि ह्रस्वेषु भाव्यं, न दीर्घेष्वित्यत्र प्रमाणमस्ति। सौत्रस्य विकृतनिर्देशस्याऽव्याप्त्यतिव्याप्त्युभयवारकत्वेन [1]सारवत्त्वलाभेन तथैवौचित्यात्। भाष्याऽऽरूढत्वाच्च। यत्तु प्राचा 'वेति केचिदि'त्युक्त्वा [2]'सख्यः' 'सुख्यः', 'सख्युः' 'सुख्युरि'त्याद्युक्तम्। यच्च तद्व्याख्यातृभिरुभयमप्येतद्भाष्ये स्थितमित्युक्तम्। यच्चाऽत्रोपष्टम्भाऽर्थं प्रसादकृता—

'सख्युः पत्युः प्रसिद्ध्यै यत्ख्यत्यादित्याह पाणिनिः।
साधारणं तन्मन्वानाः सुख्युः सुत्युः, सुखीः सुतीः॥
सुखीयति-सुतीयत्योर्यौ क्विबन्तौ तयोर्विदुः।
निष्ठाऽऽदेशस्य पूर्वत्राऽसिद्धत्वाल्लून्युरादिकम्॥
'सुख्य' इत्यादि साध्वेतदुभयं भाष्यगौरवात्'।

---

**बृहच्छब्दरत्नः**

'भूपतेरि'त्यादौ नैव प्रवृत्तिः, षष्ठीनिर्दिष्टे एव 'एकदेशविकृत'न्यायस्य प्रवृत्तत्वेन, गुणप्रवृत्तौ खि-तिशब्दयोरभावात्, खि-तिशब्दयोः स्थानित्वे मानाऽभावाच्च, श्रुत्या इकारस्यैव स्थानित्वम्, 'सर्वे सर्वपदादेशा' इत्याश्रयणे त्वर्थवत्समुदायस्य, अत एव 'राजकीयमि'त्यादावल्लोपो नेति चेन्न। 'सख्युः' 'पत्युरि'त्यादावपि-अप्रवृत्त्यापत्तेः। न च यणादेशात्पूर्वमेव प्रवृत्तिरिति वाच्यम्। प्रकृति-प्रत्यय-विशेषाऽपेक्षत्वेन यणपेक्षयाऽस्य बहिरङ्गत्वात्। न चैवं 'सख्युः' 'पत्युरि'त्यत्र न स्यात्, खि-तिशब्दयोरानर्थक्यादिति [3]वाच्यम्। 'सख्युर्यः' 'पत्युर्नो यज्ञसंयोगे' इत्यादिनिर्देशेनोक्तपरिभाषाया अप्रवृत्तेश्च।

अतिव्याप्तीति। यत्तु 'पथ्यतिथिवसतिस्वपतेरि'ति निर्देशेन पतिशब्दस्या-

---

**लघुशब्दरत्नः**

प्रकृति-प्रत्ययाऽपेक्ष-गुणाऽपेक्षया तदवयवमात्राऽपेक्षस्याऽन्तरङ्गत्वेन ततः पूर्वं प्रवृत्तिः स्यादिति भावः। दुर्वारत्वादिति। तदर्थं कृतस्याऽन्यसङ्ग्राहकत्वेऽपि बाधकाऽभावादिति भावः। विकृतनिर्देशस्येति। यकारान्ताऽनुकरणनिर्देशस्येत्यर्थः। अकारस्तूच्चारणाऽर्थ इति भावः। साधारणमिति। ह्रस्व-दीर्घसाधारणमित्यर्थः। विदांकुर्वन्त्विति (४०५ पृष्ठे)। भाष्ये-

---

[1] 'तत्सारवत्त्वलाभेन' इति मुद्रितेषु पाठः।

[2] 'सख्यः, सुख्यः, सख्युः, सुख्युः' इति घ. पाठः। 'सख्यः', 'सुख्यः' इत्याद्युक्तम्' इति च. पाठः। 'सख्युरित्याद्युक्तम्' इत्येव तु मुद्रितेषु पाठः।

[3] 'इति वाच्यम्' इत्यत आरभ्य 'इत्यादि' इत्यन्तोऽयं पाठः क. ख. नास्ति।

—इति विचारचिन्तामणिस्थश्लोकोपन्यसनं कृतं, तदेतत्सकलं भाष्य-कैयटाऽपर्यालोचनमूलकमिति कृतबुद्धय एव विदाङ्कुर्वन्तु।

शुष्किय इति। यत्तु 'शुष्क्युः, पक्व्युः, शुष्कयः, पक्व्य' इत्युदाजह्रुः, 'भाष्ये स्थितमि'ति चोपसञ्जह्रुः। तदतिरभसात्। इति ईदन्ताः।

तृज्वत् क्रोष्टुः (७।१।९५)। 'क्रुश आह्वाने'। अस्मात् 'सितनी'ति 'तुन्'प्रत्यये 'क्रोष्टु'शब्दः। तृचि तु 'क्रोष्टृ'शब्दः। द्वावपि सृगालवाचिनौ। तत्राऽविशेषेण द्वयोः प्रयोगे प्राप्ते 'सर्वनामस्थाने, स्त्रियाञ्च तृजन्त एव, तृतीयादावच्युभयम्, अन्यत्र तु तुन्नन्त एवे'ति नियमाऽर्थं त्रिसूत्री आरभ्यते।

---

**बृहच्छब्दरत्नः**

ऽप्राप्तौ तत्साहचर्येण सखिशब्देऽप्यप्रवृत्तिरि'ति। तन्न। आनुमानिकवचनकल्पने गौरवाऽऽपत्तेः। 'शुष्कियः' 'पक्रिय' इत्याद्यतिव्याप्तिवारणेन सारत्वलाभाच्च। तदतिरभसादिति। विकल्पस्य निर्मूलत्वात्, संयोगपूर्वत्वेन यणादेशस्य च दुर्लभत्वादिति भावः। यत्तु 'असंयोगपूर्वस्ये'त्यत्र प्रसज्यप्रतिषेधे पञ्चमीसमासमाश्रित्य स्थानिवद्भावेन ईकाराऽभावे निषेधाऽप्रवृत्तौ, यण् दुर्वार' इति। तन्न। 'अनेकाच' इत्युक्तत्वेन द्वितीयस्याऽचो निमित्तकोटौ प्रवेशेन, त्वदुक्तरीत्या यणि कर्त्तव्येऽपि स्थानिवद्भावस्य दुर्वारत्वात्। असार्वत्रिकस्य प्रत्याख्यानाच्च। प्रसज्यप्रतिषेधे मानाऽभावाच्च। वाक्यभेदाऽसमर्थसमासाऽऽपत्त्या गौरवग्रस्तत्वाच्च। अत एव 'यणादेशः स्वरपदपूर्वोपधस्ये'ति वचनं धातुना संयोगविशेषणेन प्रत्याख्यातं भाष्ये। अत एव 'उन्नी'शब्दादाचारक्विबन्तात्कर्त्तरि क्विपि, यणादेशो न भवत्येव। वार्त्तिकेऽपि भाष्याऽनुरोधेन 'पद'पदेन धातुत्वाऽनधिकरणीभूतस्यैव ग्रहादि'त्याहुः। तृतीयादाविति। 'विभाषा तृतीयादिष्वच्येवे'ति नियमः। तेन भ्यामादौ, शसि च, 'क्रोष्टुपुत्र' इत्यादौ च न दोषः। सर्वत्र विशिष्टाऽभावस्य सुलभत्वात्। न च 'तृज्वत्सर्वनामस्थाने एवे'ति नियमेन 'विभाषा तृतीयादिष्वची'त्यस्याऽपूर्वविधित्वमेव युक्तमिति वाच्यम्। उपक्रमस्थ'तृज्वदि'तिबोधिताऽर्थस्याऽन्यत्र सम्बन्धाऽभावबोधकाऽपेक्षया 'तृज्वदेव सर्वनामस्थाने' इत्यस्योपसंहारस्थ'सर्वनामस्थाने'इत्यस्य सम्बन्धाऽभावबोधकस्य युक्तत्वात्। अत्र 'तृतीयादि'शब्देन सुपामेव ग्रहणमिति नाऽऽग्रहः। सङ्कोचे मानाऽभावात्। अत एव तद्धिते 'क्रौष्ट्र' इति प्रयोगसिद्धिः। ध्वनितञ्चेदं 'तद्धितेष्वचामादेरि'त्यत्र भाष्ये। अन्यत्रेति।

---

**लघुशब्दरत्नः**

ऽस्यार्थस्याऽस्पृष्टत्वादिति भावः। अतिरभसादिति। संयोगपूर्वकत्वेन यणो दुर्लभत्वादिति भावः। इयङि अतो लोपस्याऽऽभीयाऽसिद्धत्वन्तु न। व्याश्रयत्वात्। इति ईदन्ताः।

'क्रोष्टुरि'ति तुन्नन्तात् प्रथमा। 'तृज्वदि'ति तृतीयान्ताद्वतिः। निमित्त-व्यपदेश-तादात्म्य-शास्त्र-कार्य-रूप-विषयकत्वेनाऽतिदेशस्य षड्विधत्वेऽपि,

**बृहच्छब्दरत्नः**

नन्वत्र तृजन्तस्यैव प्रयोगोऽस्तु, तावताऽप्युक्तनियमानां चारितार्थ्यादिति चेन्न। विशिष्य क्रुशेस्तुन्विधायकस्य सङ्कोचकल्पनाऽपेक्षया सामान्यविहिततृच एव सङ्कोचकल्पनस्य युक्तत्वात्। आद्यसूत्रे तथैव क्लृप्तत्वेन तुन्नन्तस्यैव प्रयोगाऽऽकाङ्क्षणाच्च। न चेदं 'दयतेर्दिगि लिटी'त्यादाविव स्थान्यादेशभावबोधकमेव कुतो नेति वाच्यम्। वत्करणस्य वैयर्थ्याऽऽपत्तेः। 'दिगी'त्यादेशस्य मानाऽन्तरेणाऽसिद्धेश्च। तृजन्तक्रोष्टृशब्दस्याऽन्याऽर्थमारब्धसामान्यसूत्रेणैव सिद्धेः। षड्विधत्वेऽपीति। यत्तु 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामि'त्यादावर्थाऽतिदेशस्य सत्त्वेनाऽतिदेशस्य [1]'सप्तविधत्वमि'ति। तन्न। 'पूर्वत्राऽसिद्धमि'त्यत्राऽसिद्धत्वाऽतिदेशस्याऽपि सत्त्वेन सप्तविधत्वस्याऽप्ययुक्तत्वात्। शास्त्राऽतिदेशे एवाऽन्तर्भावेण सप्तविधत्वकल्पने मानाऽभावाच्च। अतिदेशवाक्येन वति-प्रकृति-वाच्याऽर्थनिष्ठ-

**लघुशब्दरत्नः**

नियमार्थमिति। फलतः प्रयोगनियमाऽर्थमित्यर्थः। तृतीयान्तादिति। तृजन्तेन तुल्यं रूपं लभते इत्यर्थः। निमित्तेत्यादि। पूर्ववत्सनः (१।३।६२) आद्यन्तवत् (१।१।२१) सुबामन्त्रिते पराङ्गवत् (२।१।२) इति आद्यत्रयस्योदाहरणम्। तत्र तृजन्तत्वरूपनिमित्तस्य, तद्व्यवहारस्य वाऽतिदेशे आहत्य [2]तृच्शब्दंसमुच्चार्य-विहितकार्यस्यैवाऽऽपत्तौ, जसि गुणाऽवादेशयोस्तृजन्तोद्देश्यकः अप्तृन् (६।४।११) इति दीर्घ एव स्यात्। [3]सौ, औजसादिषु चाऽनङ्-गुणौ न स्याताम्। न चोत्तरसूत्रद्वयेन[4] सामर्थ्यात्, अप्तृन् (६।४।११) इत्यत्र क्रोष्टुग्रहणेनैव सिद्धौ आद्येनाऽपि सामर्थ्यात् [5]कार्यमात्रप्रवृत्तिरिति वाच्यम्। तत्सामर्थ्येन रूपाऽतिदेशस्यैव ज्ञापयितुं युक्तत्वात्। तादात्म्याऽतिदेशस्त्वसम्भवी। सहप्रयोगाऽभावात्। शास्त्र-कार्याऽतिदेशावपि न। तुन्नन्तस्याऽऽद्युदात्ततया, तृज्वद्भावेनोकारस्य रेफरूपयणादेशेऽपि, तस्योदात्तस्थानिकयणोऽभावेन उदात्तयणो हल्पूर्वात् (६।१।१७४) इति स्वराऽनापत्तेः। अर्थाऽतिदेशस्त्वसम्भवी। [6]तयोरर्थैक्यस्य स्वत एव सत्त्वाच्च। षड्विधत्वेऽपीति। अर्थाऽतिदेशा-

[1] तथा च 'कार्य-रूप-निमित्ता-ऽर्थ-शास्त्र-तादात्म्यशब्दितान्। व्यपदेशांश्च सप्तैतानतिदेशान् प्रचक्षते॥' इत्युभियुक्तोक्तिः सङ्गच्छते।

[2] 'तृच्शब्दमुच्चार्य' इति ख. घ. पाठः।

[3] 'सौ, औजसादिषु च' इति ख. पाठः। स च भावप्रकाशसंमतः। 'सौ, जसादिषु च' इति क. पाठः। 'स्वौजसादिषु च' इति मुद्रितः पाठः।

[4] 'उत्तरसूत्रद्वयसामर्थ्यात्' इति घ. पाठः।

[5] 'कार्यमात्रे' इति घ. पाठः।

[6] 'तयोरैक्यस्य' इति मुद्रितः पाठः।

प्राधान्यादिह रूपमेवाऽतिदिश्यते। तच्च न पचादेर्यस्य कस्य चित्, किन्तु क्रुशेरेव। उपस्थितत्वात्, अर्थत आन्तर्याच्चेत्यभिप्रेत्य फलितमाह–'[1]क्रोष्टुशब्दस्थाने इति। नियमार्थमिति। अन्येषां सञ्ज्ञाशब्दानां मा भूदित्ये-

---

बृहच्छब्दरत्नः

धर्माणामतिदेशस्य 'ब्राह्मणवत्क्षत्रिय' इति लोके, 'स्थानिवदादेश' इति शास्त्रे च दृष्टत्वेनाऽर्थाऽतिदेशस्योक्तिसम्भवाऽभावाच्च[2]। 'सुबामन्त्रिते पराङ्गवत्स्वरे' इतिवन्न तादात्म्याऽतिदेशः। सहप्रयोगाऽभावाच्च। तथा निमित्तमशक्यमतिदेष्टुं ब्राह्मणत्ववत्। न हि ब्राह्मणस्याऽग्रभोजनादौ निमित्तभूतं ब्राह्मण्यं वचनशतेनाऽपि क्षत्रिये अतिदेष्टुं शक्यम्। 'पूर्ववत्सन' इत्यत्राऽपि प्रकृतिगतं निमित्तं [3]ङित्त्वादि न सन्नन्ते अतिदिश्यते। अन्यत्र स्थितिस्योत्कर्षाऽभावात्। किन्तु प्रकृतिगतमेव तत्। सना व्यवहारः। न चाऽयं कार्याऽतिदेश एवाऽऽस्तामिति वाच्यम्। 'चिक्रंसते' 'प्रचिक्रंसते' इत्यादाविट्प्रसङ्गात्। निमित्ताऽतिदेशपक्षे तु अनुपसर्गः, प्रपूर्वश्च क्रमिरेवेह सना व्यवहितोऽप्यात्मनेपदं प्रवर्त्तितवानिति 'स्नुक्रमोरनात्मनेपदनिमित्ते' इति नियमादिण्न भवति। निमित्तं तत्र फलोपहितमेव गृह्यते, न तु स्वरूपयोग्यमात्रमित्यादि तत्र वक्ष्यामः। प्रकृते तु नेदम्। तृजन्ते स्वरूपाऽतिरिक्तस्य निमित्तस्याऽभावात्। व्यपदेशाऽतिदेशस्तु 'आद्यन्तवदेकस्मिन्नि'ती'ति[4] प्राञ्चः। तन्न। 'कुरुते' 'कुर्वे' इत्यादावाद्यन्तव्यपदेशोऽपि 'अन्त्यः अच् आदिर्यस्ये'त्येवंरूपस्य बहुव्रीह्यर्थस्याऽभावात् 'टि'सञ्ज्ञाया अभावेन टेरेत्त्वाऽनापत्तेः। व्यपदेशिवद्भावाऽऽश्रयणे तु सूत्रमेव व्यर्थम्। किञ्च प्रकृते तृजन्तत्वरूपव्यपदेशस्याऽतिदेशाऽऽश्रयणे तृजन्तोद्देश्यकस्यैवाऽऽपत्तिः। न चाऽकृते अनङादावुपधायामचोऽभावे दीर्घाऽप्रवृत्तावतिदेशवैयर्थ्याऽऽपत्तिः। न च जसि गुणे, अवादेशे चारितार्थ्यम्। 'अतृन्नि'ति सूत्रे एव 'क्रोष्टु'ग्रहणेन सिद्धेरिति वाच्यम्। उत्तराऽर्थं 'तृज्वत्क्रोष्टुरि'त्यस्याऽऽवश्यकत्वात्। उत्तरसूत्रद्वयाऽऽरम्भसामर्थ्येन,

---

लघुशब्दरत्नः

ऽसम्भवं मत्वेदम्। युक्त्यन्तरमप्याह[5]—प्राधान्यादिति। रूपमिति। तच्च तृज्वत् (७।१।९५) इत्यत्र ऋकारस्योपस्थित्या तद्विशिष्टं–'क्रोष्टृ' इति। तच्च 'तृज्वदि'ति चकारोच्चारणसामर्थ्यादन्तोदात्तस्वरविशिष्टमिति, ऋकारस्योदात्तत्वात् 'उदात्तयणः (६।१।१७४) इत्यादिस्वरसिद्धिरिति बोध्यम्। संज्ञाशब्दानामिति। 'उणादिव्युत्पन्नानामि'ति शेषः। अतो 'धातृ'-

---

[1] 'क्रोष्टुशब्दस्य' इति घ. पाठः।

[2] 'उक्तिसम्भवाच्च' इति क. ख. पाठः।

[3] 'ङित्त्वादि' इति क. ख. पाठः। 'ञित्त्वादि' इति भावप्रकाशे पाठः।

[4] 'एकस्मिन्निति प्राञ्चः' इति क. ख. पाठः।

[5] अपिः मुद्रितेषु त्रुटितः।

तदर्थमित्यर्थः। क्रोष्टेति। अनङ्। हल्ङ्यादिलोपात्परत्वादुपधादीर्घः। स च सर्वनामस्थाने च (६।४।८) इत्यनेन यद्यपि लभ्यते, तथापि परत्वात् अप्तृन् (६।४।११) इत्येव न्याय्यः। कृतेऽप्यनङि एकदेशविकृतस्याऽनन्य-

---

बृहच्छब्दरत्नः

साहचर्यात्सर्वत्र कार्यमात्रप्रवृत्त्यङ्गीकारे शास्त्राऽतिदेशस्य, कार्याऽतिदेशस्य चाऽऽपत्तेश्च। न चेष्टाऽऽपत्तिः। आङ्गस्यैवाऽतिदेशः स्यात्। अङ्गाऽधिकारे पाठेनाऽनाङ्गस्य विप्रकृष्टत्वात्। तथा च रपरत्वं न स्यात्। न च कार्यकालपक्षेण निस्तारः। यथोद्देशपक्षे दोषस्योद्भटत्वात्। ङीप्, 'ऋत उत्' 'इको यणचि' 'उदात्तयणो हल्पूर्वादि'त्यादीनामतिदेशाऽनापत्तेश्च। न चैवमुत्तरसूत्रद्वयवैयर्थ्यम्। 'पञ्चभिः कर्त्रीभिः क्रीतो रथः पञ्चकर्त्ता रथः', 'हे पञ्चकर्त्तः', 'पञ्चकर्त्तारी'ति स्त्रीलिङ्गे कर्तृशब्दे ङिसम्बुद्धयोर्दृष्टस्य गुणस्याऽतिदेशेन 'स्त्रियाञ्चे'त्यस्य, 'विभाषा तृतीयादिष्वची'त्यस्य च चारिताथ्र्यात्। न चैवं तृतीयाऽऽदिग्रहणं व्यर्थम्। अभावस्याऽप्यतिदेशेन गुण-नाभावयोरप्रवृत्त्या सफलत्वात्। अपि च कार्यशास्त्रयोरतिदेशे विधिविषयता बहूनां कल्पनीया स्यात्। अत एव 'रूपाऽतिदेशेऽपि प्रयोगसमवायिनां 'क्रोष्टाराव'त्यादीनां प्राधान्याद्ग्रहणाऽऽपत्तिः, तथा चोदात्तस्थाने यणभावात्स्वरो न स्यादि'ति निरस्तम्। तृजन्तत्वबोधाऽर्थं शास्त्राऽन्वेषणस्याऽऽवश्यकत्वेन 'क्रोष्टृ' इति शास्त्रीयरूपाऽतिदेशस्यैव युक्तत्वाच्च। यद्यप्युपदेशवाक्ये, अतिदेशवाक्ये चोदात्तोच्चारणाऽभावात्, गुणानामभेदकत्वेनाऽकिञ्चित्करत्वाच्च स्वरे दोषस्तथाऽपि चकारग्रहणसामर्थ्याद्दीर्घादीनामिव स्वरस्याऽपि स्वेन शास्त्रेणाऽतिदेशोत्तरं कर्त्तुं शक्यत्वेनाऽदोषः। न चैवं 'क्रोष्ट्री'त्यादौ सन्निपातपरिभाषया ङीप् न स्यात्। स्त्रियां तृज्वद्भावस्याऽङ्गनिमित्तत्वेऽपि प्रत्ययनिमित्तत्वाऽभावात्। अङ्गसञ्ज्ञा प्रत्ययनिमित्तेत्यन्यदेतत्। 'न यासयोरि'ति सामान्याऽपेक्षज्ञापकाऽऽश्रयणेनेदृशे विषये अप्राप्तत्वाच्च। अत एव 'पञ्चभिः क्रोष्ट्रीभिः क्रीतैः रथैः पञ्चक्रोष्टृभी रथैरि'त्यादौ तृजन्तरूपसिद्धिः। तत्सर्वं हृदि निधायाह–प्राधान्यादिति (४०७ पृष्ठे)। परत्वादुपधेति। यत्तु 'दीर्घाण्यहानि यस्मिन् स दीर्घाऽहा निदाघः। इह हल्ङ्यादिलोपे, प्रत्ययलक्षणेनाऽसुपीति निषेधाद्रत्वाऽभावे रुः, तस्याऽसिद्धत्वान्नान्तलक्षण उपधादीर्घ' इति मूलं विरुद्ध्येते'ति। तन्न। आशयाऽनवबोधात्। न हि 'तस्याऽसिद्धत्वादि'त्यनेन च ग्रन्थेन हल्ङ्यादिलोपोत्तरं दीर्घप्रवृत्तिरुच्यते, किन्तु 'पूर्वप्रवृत्तदीर्घे अकृतव्यूहपरिभाषा न प्रवर्त्तते' इत्यर्थो बोध्यते। परत्वादप्तृन्निति। न चैवं 'सखा' इत्यादावपि णिद्वद्भावेन परत्वात् 'अत उपधाया' इति वृद्धया भाव्यमिति वाच्यम्। 'कार्यैक्ये विरोधाऽभावेन, वैयर्थ्याच्च विप्रति-

---

लघुशब्दरत्नः

शब्दस्य दीर्घो भवत्येव। परत्वादिति। इदमग्रिमं च कार्यैक्ये, असम्भवाऽभावे च विप्रतिषेध इत्यभिमानेन। यद्वा परत्वात्=उत्कृष्टत्वात्, विशेषविहितत्वेन शीघ्रोपस्थितिकत्वादित्यर्थः।

त्वेन तृच्त्वात् । अन्यथा तु[1] गुणे कृतेऽपि दीर्घो न स्यादिति भावः ।

रात्सस्य (८।२।२४) । 'इह तकारोऽपि प्रश्लिष्यते' इति पक्षाऽन्तरम् । तेन [2]हल्ङ्यादिसूत्रस्थाने 'ङ्याप: सोरि'ति निष्कर्षे 'अबिभर्भवानि'त्यादि सिद्ध्यति । 'अजर्घर्त्त्'इत्यत्र तु चर्त्त्वस्याऽसिद्धत्वात्तलोपो न । ननु कीर्त्तयतेः क्विपि कीर्त्त्',—इह स्यादिति चेन्न । 'यथालक्षणमप्रयुक्ते' इति भाष्यम् । एतेन 'अवर्वर्त्त्' इति व्याख्यातम् । परत्वादिति । न च नुण्नित्य इति वाच्यम् । तृज्वद्भावे कृते सन्निपातपरिभाषया नुटो दुर्लभत्वादिति भावः ।

नुमचिरेति । ननु रेण स्वविषये प्राप्तं सर्वं बाध्यं, बाध्यसामान्यचिन्ताऽऽश्रयणात् , तथा च वक्ष्यते,—'गुणदीर्घोत्त्वानामपवाद' इति, एवं चाऽविशेषान्नुडप्यनेन बाध्यः, तत्कथं विप्रतिषेधः, उत्सर्गाऽपवादयोस्तदयोगा-

---

**बृहच्छब्दरत्नः**

षेधसूत्राऽप्रवृत्तौ, प्रथमोपस्थितस्यैव प्रवृत्तिरि'ति मतेन तद्ग्रन्थानां सत्त्वात् । इदं च मतं 'शि सर्वनामस्थानम्' 'सुडनपुंसकस्ये'त्यादौ 'ननु चेयमि'ति प्रतीकमुपादाय 'प्रतिषेधयुक्ताऽयुक्तत्वाच्च विरोधसद्भाव' इति व्याख्यानं कुर्वता कैय्यटेन ध्वनितम् ।

भाष्यमिति । तेन कीर्त्तयतेः क्विब्विचौ न स्तः, वृतधातो रीङभावे तिप्सिपोर्यङ्लुक् नास्तीत्यर्थः । ननु वार्त्तिकमताऽपेक्षया भाष्यनये न किञ्चिल्लाघवम् । किञ्च 'पूर्वविप्रतिषेधस्तुल्यबलानामेवे'ति न नियमः, 'द्विर्वचन[3]-यणयवाद्यादेशाऽल्लोपोपधालोप' इत्यादीनामतुल्यबलानामपि दर्शनादिति चेन्न ।

---

**लघुशब्दरत्नः**

निष्कर्षे इति । अस्य 'भाष्यस्थ पूर्वपक्षिण' इति शेषः । यथालक्षणमिति । अप्रयुक्ते लक्षणाऽभावस्य योग्यतेत्यर्थः । बाध्यसामान्यचिन्तेति । सा च तृज्वत्सूत्रे भाष्ये स्पष्टा । एवञ्च अचि र (७।२।१००) इति सूत्रस्थम् 'अचि रादेशे जस्युपसङ्ख्यानं, गुणपरत्वादि'ति-वार्त्तिकं बाध्यविशेषचिन्ताऽभिमानेन प्रवृत्तमिति भावः । एतेन [4]एतद्वार्त्तिकबलाज्जसोऽन्यत्र 'प्रियतिसरमि'त्यादौ गुणं कल्पयन्तः परास्ताः । तृज्वत्सूत्रस्थभाष्यविरोधात् । मपर्यन्तस्य (७।२।९१) इति सूत्रस्थ—'प्रियतिस्रावि'त्यादिभाष्यविरोधाच्च । अनेन=रेण । [5]कथं विप्रतिषेध इति । अचि रेणेत्यर्थः । दूषयित्वेति । यद्यपि न तिसृ (६।४।४) इति-

---

[1] तुः ङ. च. मुद्रितेषु च नास्ति ।
[2] 'हल्ङ्यादिसूत्रस्य स्थाने' इति ङ. च. पाठः ।
[3] 'द्विर्वचनम्' इति क. ख. पाठः ।
[4] 'तद्वार्त्तिक' इति मुद्रितेषु पाठः ।
[5] 'कथम्' इति मुद्रितेषु त्रुटितम् ।

दिति चेत् । सत्यम् । [1]अत एव तदंशे विप्रतिषेधं दूषयित्वा न तिसृचतसृ (६।४।४) इति ज्ञापकान्नुडिति भाष्यकृतोक्तमिति सन्तोष्टव्यम् । इत्युदन्ताः ।

**दृन्हूरिति** । अव्युत्पन्ना सञ्ज्ञेयम् । अतिचमूशब्दे त्विति । 'प्रथमलिङ्गग्रहणं चे'त्युक्तेः । तथा च 'एवमतिचम्वादय' इति प्राचो ग्रन्थो भाष्यविरुद्ध इति भावः ।

**वर्षाभ्वश्च** (६।४।८४) । 'वर्षाभूशब्दस्य नित्यस्त्रीत्वात् स्त्रीलिङ्गप्रकरणे एव एतत्सूत्रं वक्तुं युक्तम्, पुँल्लिङ्गे तु क्रियाशब्दाऽभिप्रायेण कथञ्चिद्योज्यमि'ति व्याचख्युः । तद्भ्रमसात् । दर्दुरे हि पुँल्लिङ्गोऽयम्—'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरोक्तेः । 'भिन्नलिङ्गानां न द्वन्द्व' इति तेन परिभाषितत्वात् । 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानि'ति यादवकोशाच्च । 'दर्दुरे षणी'ति पाठान्तरम् । 'षण्' इति पुँल्लिङ्गस्य प्राचां सञ्ज्ञा[2] । दृभतीति । दृभी ग्रन्थे । तुदादिः । व्युत्पादित इति । यद्यप्युज्ज्वलदत्तेन 'दृम्फूरि'ति पवर्गद्वितीयं पठित्वा 'दृम्फेर्नलोपाऽभावो निपात्यते' इति

---

**बृहच्छब्दरत्नः**

'स्वार्थद्रव्यबहिर्भूतलिङ्गरूपाऽर्थनिमित्ताऽऽदेशाऽपेक्षयाऽन्तरङ्गत्वान्नुडि'ति भाष्याशयात् । तद् ध्वनयन्नाह—सन्तोष्टव्यमिति । तथा च 'न तिसृचतसृ' इति[3]-

---

**लघुशब्दरत्नः**

ज्ञापकेन तदपवादत्वाऽभावकल्पनया विप्रतिषेध उपपद्यते, तथापि ज्ञापकाऽनुसरणस्याऽऽवश्यकत्वे,[4] तेनैव तं संसाध्य, तं दूषयित्वेत्यर्थः । इदञ्च[5] तृज्वत्सूत्रे भाष्ये । सन्तोष्टव्यमिति । अतिक्षोदस्तदंशे वार्त्तिके न कार्य इति भावः । इति उदन्ताः ।

---

[1] 'अत एतदंशे' इति ङ. पाठः ।

[2] वस्तुतः 'षण्' इति नपुंसकस्यैव प्रसिद्धा सञ्ज्ञा । अतोऽत्र 'दर्दुरेऽषणि' इति च्छेदं कृत्वा क्लीबभिन्ने इत्यर्थः कर्त्तव्यः । तेन स्त्रीपुंसयोर्वर्षाभूशब्द इत्यर्थो लभ्यते । 'षणी'ति च्छेदे तु 'क्लीबे' इत्येवाऽर्थो लभ्यते । भट्टोजिदीक्षितस्य त्वत्र महान् भ्रम एव । 'षण्-क्ली-नपुमिति क्लीबे, ये च षण्डार्थवाचिनः' इति वैजयन्त्यां परिभाषाप्रकरणे स्पष्टमुक्तेः । 'षण्' इति हि षण्डपदस्य क्लीबार्थकस्यैकदेशः, तत्र-तत्र कोशेषु 'क्ली' इति क्लीबशब्दैकदेशवत् ।

[3] 'इति न्यायपाष्टचर्ये' इति क. ख. अस्फुटः पाठः ।

[4] 'आवश्यकत्वेनैव' इति मुद्रितः पाठः ।

[5] चकारो मुद्रितेषु त्रुटितः ।

व्याख्यातं, तथाऽपि वृत्त्यन्तरेषु 'दृभी ग्रन्थे' इत्यस्मादुप्रत्यये[1] नुमागमो निपात्यते' इत्युक्तम्। एतच्च माधवग्रन्थे स्पष्टम्। दशपादीवृत्तौ तु-'दर्भणं दृम्भूः, नुमागमोऽनुस्वारश्च निपात्यते' इत्युक्तम्। अयमूकारो न धातोरित्युवङोऽप्रसङ्गात् इको यणचि (६।१।७७) इति यण्। स च अमि पूर्वः (६।१।१०७) प्रथमयोः पूर्वसवर्णः (६।१।१०२) इत्याभ्यां बाध्यते इत्याशयेनोदाहरति-[2]दृन्भूमित्यादि। न चेह 'दृन्करे'ति यण् शङ्क्यः। तत्राऽर्थवत एव ग्रहणात्। अस्य तु 'दृन्'शब्दस्य, भूशब्दस्य चाऽनर्थकत्वादिति भावः। एवञ्चाऽयं हूहूवदिति फलितम्।

श्रीपतिमतेनाऽऽह-दृन्निती‌ति[3]। माधवस्तु-'अन्दूदृम्भू' इत्यादिसूत्रेण 'दृढ'शब्दे उपपदे 'कू'प्रत्ययः, उपपदस्य दृन्नादेशश्च निपात्यते' इत्याह। दृन्भूरिति। '[4]तरु-सर्प-जातिभेद' इति केचित्। 'कपिरि'त्यन्ये। दृन्करेति। अत्र 'दृन्नि'ति नान्तपाठो मुख्यः। मान्तपाठोऽपि केषाञ्चित्। वक्तव्य इति। वर्षाभ्वश्च (६।४।८४) इति चकारोऽनुक्तसमुच्चयाऽर्थः,

---

**बृहच्छब्दरत्नः**

न्यायप्राप्तेऽर्थे लिङ्गदर्शनस्य सत्त्वेन न किञ्चिद् गौरवमिति भावः। दशपादीति। अत्राऽरुचिबीजन्तु नुमो निपातनं व्यर्थमिति कश्चित्। अनुस्वारश्चेति। तन्निपातनात्परसवर्णो नेति भावः। माधवस्त्विति। यत्त्वस्मिन्पक्षे भूशब्दस्य लाक्षणिकत्वान्न यणिति। तन्न। [5]एकादेशस्य पूर्वाऽन्तत्वेन दुर्वारत्वात्। न च '[6]कू'-

---

**लघुशब्दरत्नः**

दशपादीति। अत्राऽरुचिबीजन्तु 'नुम्निपातनं व्यर्थम्। न च परसवर्णाऽभावार्थमुभयनिपातनम्। नुम्येव निपात्येऽनुस्वारनिपातनसामर्थ्येनैव तदभावसिद्धेरि'ति[7]। एवञ्चाऽयमूकारो न धातोरित्युवङोऽप्रसङ्गाद् यणा भाव्यमिति, दृन्पूर्वकभूप्रकृतिक'दृन्भू'शब्देन सह न रूपे विशेष इति माधवश्चिन्त्य [8]इति भावः। निपात्यत इति। एकाऽऽदेशस्य

---

[1] 'डूप्रत्यये' इति मुद्रितेषु पाठः।
[2] 'दृंभूमित्यादि' इति लिखितेषु पाठः।
[3] 'दृन्निति' इति मुद्रितेषु पाठः।
[4] 'तरु-सर्प-जातिभेद' इति घ. ङ. च. पाठः। 'तरुः' इति मुद्रिते पाठः।
[5] 'एकादेशपूर्वान्त्वे च' इति क. ख. पाठः।
[6] 'कूप्रत्ययाऽनिमित्तक' इति ख. पाठः।
[7] 'इति भावः' इति ख. घ. पाठः।
[8] 'इति भाव' इति मुद्रितेषु त्रुटितम्।

अनुक्तश्च भाष्यवार्त्तिकबलान्निर्णेयमिति भावः। तथा च वर्षाभू-पुनर्भ्वश्चे'ति वार्त्तिकं व्याख्याय भाष्यकार आह—'अत्यल्पमिदमुच्यते, 'वर्षा-दृन्-कार-पुनः-पूर्वस्य भुव' इति वक्तव्यमि'ति। वामनेन तु दृन्शब्दो न पठित एव। एवं स्थिते यत्प्राचा 'दृन्कारे'ति पठितं, यच्च तत्पौत्रेण 'महाभाष्यकारवचन-मर्थतोऽनुवदती'त्युक्तं, यच्चाऽन्यै'र्वार्त्तिकेन पूरितमर्थमुदाहरती'त्यवतारितं, तत्सर्वं रभसकृतमेव। न च भाष्येऽपि 'दृगि'त्येव पाठ इति भ्रमितव्यम्। 'अन्दूदृन्भू' इति निपातित' इति माधवग्रन्थेन, कैयटादिग्रन्थैश्च विरोधाऽऽपत्ते-रिति यत्किञ्चिदेतत्।

**दीर्घपाठे इति।** अयञ्च भाष्यवृत्त्यादिबहुग्रन्थसंमतः पाठः। अनुस्मृतौ तु ह्रस्वः पठ्यते। यत्तु तद्विवृतावुक्तम्—'एकदेशविकृतस्याऽनन्यत्वात्कार-पूर्वस्याऽपि सिद्धमि'ति। तन्न। तथाऽप्यण्प्रत्ययविशिष्टस्याऽन्यत्वात्। न हि अण्प्रत्ययोऽपि विकारः। तस्माद् ह्रस्वपाठे कारपूर्वकस्य उवङेव। तथा दीर्घ-पाठे करपूर्वस्य उवङिति विवेकः। **स्वयम्भूवदिति।** [1]प्राचा तु दृग्भूकारा-भूशब्दौ वर्षाभूशब्दवदुदाहृतौ, तन्निर्मूलत्वादुपेक्ष्यमिति भावः। इत्यूदन्ताः।

---

बृहच्छब्दरत्नः

प्रत्ययनिमित्तकोवङभावाऽर्थं दीर्घनिपातनस्याऽऽवश्यकत्वेन कूप्रत्ययस्य कित्त्वं व्यर्थमिति वाच्यम्। 'नृतू'-'शृधू' इत्याद्यर्थं [2]पूर्वसूत्रे आवश्यकत्वात्। न ह्यण् प्रत्यय इति। ननु प्रकृतिभागस्यैवैकदेशविकृतन्यायेन 'कर'शब्दत्वात् ह्रस्वपाठेऽपि दीर्घपूर्वके[3] यणेव भविष्यति। न चाऽणा व्यवधानम्। पूर्वग्रहणेन व्यवहित-स्याऽपि ग्रहणादिति चेन्न। 'ते प्राग्धातोः' 'छन्दसि परेऽपि' 'व्यवहिताश्चे'ति ज्ञापकात् 'अचस्तास्वत्थल्यनिट' इत्यादौ 'शर्परे विसर्जनीय' इत्यादीनामभावदर्श-नाच्च दिग्वाचकशब्दानामव्यवहिताऽर्थकत्वात्।

---

लघुशब्दरत्नः

पूर्वाऽन्तत्वेन[4] भूत्वमिति भावः। वार्त्तिकमिति। एतेन 'भाष्ये पूर्वग्रहणं व्यवहितेऽपि प्रवृत्त्यर्थमिति 'वर्षोद्भूरि'त्यादावपि यणि'ति परास्तम्। सूत्रवार्त्तिकाऽनुरोधेन पूर्वग्रहणस्य परिभाषाप्राप्तार्थाऽनुवादत्वौचित्यात्। उपेक्ष्यमिति। 'काराभूरि'त्यत्र 'कारा'शब्दः करोते-

---

[1] 'यत्तु प्राचा' इति घ. पाठः।

[2] पूर्वसूत्रे='नृतिशृध्योः कूः' इति उणादिसूत्रे इत्यर्थः।

[3] 'दीर्घपूर्वकेऽपि यणेव' इति क. ख. पाठः।

[4] 'पूर्वान्तिवत्त्वेन' इति क. पाठः।

नृ च (६।४।६)। इह छन्दस्युभयथा (६।४।५) इति सूत्रात् 'उभयथे'-त्यनुवर्त्तते। 'छन्दसी'ति तु निवृत्तम्। तेन 'चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा', 'नृणामेको गम्यस्त्वमसी'त्यादिप्रयोगाः सङ्गच्छन्ते। केचित्तु 'छन्दसी'त्यनुवर्त्तयन्ति। तदयुक्तम्। पूर्वसूत्रेणैव सिद्धे नृ च (६।४।६) इति सूत्रस्य वैयर्थ्याऽऽपत्तेः। यदपि पूर्वसूत्रे 'तिसृचतसृ' इत्यनुवर्त्तयन्ति। तदप्ययुक्तम्। अविशेषेण विकल्पदर्शनात्। तथा च 'धाता धातॄणामि'ति मन्त्रे तैत्तिरीयैर्ह्रस्वः पठ्यते, बह्वृचैस्तु दीर्घ इति दिक्। इत्यृदन्ताः।

ओतो णिदिति [1]वाच्यमिति। 'गोत' इत्यपहाय 'ओत' इति वाच्यमित्यर्थः। तथा च 'गामि'त्यत्र परत्वाद्वृद्धौ सत्यामात्वं न स्यादि'-त्याशङ्क्य, 'निरवकाशतया आत्वेन वृद्धिर्बाध्यते' इति औतोऽम्शसोः (६।१।९३) इति सूत्रे भाष्यकृतोक्तम्। कैयटोऽपि तत्रेत्थमाह—'ओत इति सूत्रं पाठ्यं, 'गोत' इत्योकारोपलक्षणतया वा व्याख्येयमि'ति। वृत्त्यादिग्रन्थेष्वप्येवमेव स्थितम्।

स्मृतौरिति। यत्त्वाहुः—'गोशब्देन औणादिकेन सादृश्यात् 'द्यो'शब्द एव लक्ष्यते, न त्वोकारान्तमात्रम्। तेन 'स्मृतोः' 'स्मृतवौ' 'स्मृतव' इत्येव भवती'ति। तद्भाष्यविरुद्धम्। गो-द्योभ्यामेव परस्य णित्त्वाऽभ्युपगमे हि

---

**बृहच्छब्दरत्नः**

स्मृतव इति। 'स्मृत'शब्द आद्युदात्तः, अन्तोदात्तो वा। न चाऽन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वेन 'एङः पदान्तादि'ति पूर्वरूपं स्यादिति वाच्यम्। 'असर्वनामस्थाने यची'त्यनेन पदत्वस्य निषेधात्। न चैवं 'यस्मात्प्रत्ययविधिरि'तीत्यस्याऽनुवर्त्तनेन समुदायस्य तन्निषेधेऽप्यवयवस्य 'औ' इत्यस्य तदस्त्येवेति वाच्यम्। 'सुबन्तमि'त्यनुवर्त्त्य तस्याऽपि निषेध' इति पूर्वमुपपादित्वात्। न चैवमपि 'राजदण्डिनावि'त्यादाविव पूर्वपदस्य पदत्वेन दोषो दुरुद्धर एवेति वाच्यम्। एका-

---

**लघुशब्दरत्नः**

ण्यन्ताद्भिदाद्यङि निष्पन्नो बन्धनगृहवाचकः, तस्य टापा सहैकादेशस्य पूर्वान्तत्वेऽपि, वार्त्तिके ग्रहणं न, प्रसिद्धत्वेन, ह्रस्वपाठैकवाक्यतया च ह्रस्वावाचकस्यैव ग्रहणादिति भावः।

इत्यपहायेति। एतदवयवगकारमपहायेत्यर्थः। इत्योकारोपलक्षणतयेति।

---

[1] 'वाच्यमिति' इति लिखितेषु नास्ति।

**औतोऽम्शसोः (६।१।९३) इत्यात्वस्य 'स्मृतामि'त्यादिरवकाशः स्यात्। तथा च 'गामि'त्यत्र परत्वाद्वृद्धेर्दुर्वारतया उदाहृतभाष्योक्तमात्वस्य[१] बाधकत्वं, निरवकाशत्वञ्च न सङ्गच्छेतेति दिक्। इत्योदन्ताः।**

---

**बृहच्छब्दरत्नः**

देशस्य पूर्वाऽन्तत्वेन प्रत्ययाऽव्यवहितसुबन्तत्वान्निषेधस्य दुर्वारत्वेन, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। 'उत्तरपदत्वे चाऽपदादिविधावि'ति वार्त्तिकेनाऽपि तदभावः सुलभः। अत एव वलोपो न।

**दिगिति।** दिगर्थस्तु 'द्यो'शब्दस्य औणादिकत्वे न किञ्चिन्मानम्। 'द्यु अभिगमने' इत्यस्मात्कर्मकर्त्तरि विचि 'द्यो'शब्दनिष्पत्तेरुक्तत्वात्। यत्तु 'द्योश्च सर्वनामस्थाने वृद्धिर्विधेये'ति वार्त्तिके 'द्यो'शब्दस्यैवोपादानादन्याऽभावोऽनुमीयते। किञ्च 'अचः परस्मिन्पूर्वविधावि'ति सूत्रे भाष्ये 'पूर्वविधावि'ति किमर्थमि'त्याशङ्क्य 'हे गौरि'ति प्रत्युदाहरणमुपन्यस्य, 'नैतदस्ति प्रयोजनम्, आचार्यप्रवृत्तिर्ज्ञापयति न सम्बुद्धिलोपे स्थानिवद्भावो भवतीति, यदयमेङ्ह्रस्वात्सम्बुद्धेरित्येङ्ग्रहणं करोति। नैतदस्ति ज्ञापकम्। गोऽर्थमेतत्स्यादि'ति गोशब्दस्यैवोल्लेखः कृतः। तस्मात् 'स्मृतो' इत्याद्योकारान्तानामभावोऽभ्युपगन्तव्यः। एतेन 'सेः, सयावि'त्यादिकमपास्तमि'ति। तन्न। भाष्ये 'द्यो'शब्दत्यागे बीजाऽभावात्, उपलक्षणतया व्याख्याने 'स्मृतो' इत्याद्युपलक्षणतयाऽपि [२]व्याख्येयम्। अत एव भाष्ये 'यर्त्तार्हि प्रत्याहारग्रहणं करोति। इतरथा हि 'ओह्रस्वादि'ति ब्रूयादि'त्युपसंहृतम्। एतेन 'दिव औदि'त्यत्र ओकारे वक्तव्ये, औकारोच्चारणेन णिद्वद्भावस्य क्वाचित्कत्वज्ञापनान्न सर्वत्र प्रवृत्तिरि'ति भाष्याद्याशय' इति परास्तम्। विहितविशेषणांऽशज्ञापनेन चारितार्थ्याच्च। 'पूर्वविधावि'त्यस्याऽभावे स्थानिवद्भावेन ह्रस्वाऽन्तं निमित्तीकृत्य लोपसम्भवेन 'स्मृतो''से'इत्यादिशब्दानामङ्गीकारेऽपि भाष्यं सुयोज्यमेव। 'नी''लू'प्रभृतिभ्यो दीर्घाऽन्तेभ्यो विजभावो, गुणाऽभावो वा, अङ्यन्तदीर्घेकारोकारैकादेशेन निष्पन्न'से' 'स्मृते'इत्याद्यभावश्च भाष्याऽनुरोधादावश्यक' इति कैयट विवरणादौ स्पष्टम्। अत एव ओकारान्ते जश्शसोर्णित्वाऽऽत्वप्रवृत्त्या 'एङः पदान्तादि'त्यस्याऽप्रवृत्तौ, तत्साहचर्येणौकाराऽन्तेऽपि पूर्वरूपाऽप्रवृत्तिः। 'भोसादि'साहचर्येण विभक्त्यनवयवीभूते अश्येव व्योर्लोपप्रवृत्तिरि'ति न्यासकारोक्तं सङ्गच्छते। वस्तुतस्तु लूप्रभृतिभ्य उकाराऽन्तेभ्यो विजभावे न किञ्चिन्मानम्।

---

**लघुशब्दरत्नः**

तपरकरणेन गस्याऽविवक्षितत्वलाभादिति भावः। **निरवकशत्वञ्चेति।** चो हेतौ। यतो निरवकाशत्वमतो 'बाधकत्वमि'त्युक्तं न सङ्गच्छेतेत्यर्थः।

---

[१] 'आत्वस्य' इति ङ नास्ति।

[२] 'व्याख्येयम्' इत्यादिः, 'करोति' इत्यन्तः पाठोऽत्र क. ख. खण्डितः आसीत्।

**रायो हलि (७।२।८५)।** 'अर्थरैविभवा अपी'त्यमरात्पुंस्त्वम्। 'सं राया भूयसा सृजे'त्यादिप्रयोगाच्च। [1]''रा यिश्छान्दस' इति भाष्यम्। तच्च क्यजन्तस्य रैशब्दस्य छान्दसत्वपरं, न तु केवलस्याऽपीति वान्तो यि

---

**बृहच्छब्दरत्नः**

न च एङ्ग्रहणज्ञापनपरभाष्यं मानम्, अन्यथा 'पूर्वविधावि'त्यस्याऽभावे 'विष्णो' इत्यादौ स्थानिवद्भावेन ह्रस्वनिमित्तसम्बुद्धिलोपसिद्धावपि, दीर्घोऽन्तधातुनिष्पन्न-'लो'शब्दादौ स्थानिवद्भावेन लोपाऽप्राप्त्या ओकारग्रहणस्याऽऽवश्यकत्वेन ज्ञापकता भज्येतेति वाच्यम्। ह्रस्वनिमित्तकलोपाऽप्राप्तिविषयीभूत-[2]ओकाराऽन्ताऽर्थमोकारस्य ग्रहणमित्युक्त-तत्सिद्धान्ते तदभावे मानाऽभावात्। अन्यथा 'गो'शब्दादीनामप्य-भावाऽऽपत्तेः। किञ्च 'पूर्वत्रिधाविति किमर्थमि'त्याशङ्क्य ओकारांऽशेऽतिव्याप्त्यु-पन्यासवत्, प्रथमाऽतिक्रमे कारणाऽभावेन एकारांऽशेऽव्याप्त्युपन्यासस्या-ऽऽवश्यकत्वेन तदकरणं विजभावे 'नी'प्रभृतिभ्यो ज्ञापकम्। अत एव 'एङ्ग्रहणं किम्, हे हरे हे विष्णो, अत्र हि परत्वान्नित्यत्वाच्च सम्बुद्धिगुणे कृते ह्रस्वात्परत्वं नास्ती'ति [3]मूलग्रन्थे 'हे हरे' इति न हरिशब्दस्य सम्बुद्धयन्तं रूपं, किन्तु [4]हरशब्द-इशब्दयोः समासे, गुणे, एकारान्तात् सम्बुद्धयन्तम्। 'विष्णो' इति विष्णुशब्द-स्यैव। ओकारान्तात् सम्बुद्धौ णिद्वद्भावप्रवृत्त्या 'एङ्ह्रस्वादि'ति सूत्राऽप्रवृत्तेः। न च ओकारसाहचर्येणेदृशे एकारान्ते सूत्राऽप्रवृत्तिरिति वाच्यम्। एङ्साहचर्येण विभक्तिनिमित्तह्रस्वाऽन्ते एव सूत्रप्रवृत्त्यापत्तेः। तस्मात्साहचर्यस्याऽसार्वत्रिक-त्वादिहाऽनाश्रयणमिति तत्त्वम्। 'अत्र ही'त्यादिग्रन्थस्तु 'हे विष्णो' [5]इत्यभि-

---

**लघुशब्दरत्नः**

अमरात्पुंस्त्वमिति। 'भिन्नलिङ्गानां न द्वन्द्व' इति तेन परिभाषणादिति भावः। भाष्यमिति। स्थानेऽन्तरतमसूत्रे इति भावः। क्यजन्तस्येति। 'राः=रैशब्दो, [6]यिः=यकारादिप्रत्ययान्तः छान्दस' इति भाष्याऽक्षरार्थः। यकारेण यकारादिः प्रत्ययो लक्ष्यते। इकार उच्चारणाऽर्थः। प्रायेण विसर्गरहित एव पाठः, तदा 'यादौ प्रत्यये' इत्यर्थ इति भावः। न त्विति। अत एव 'रायमिच्छती'ति विग्रहप्रदर्शनपरभाष्यं सङ्गच्छते। न हि

---

[1] 'रायि छान्दस' इति तु मुद्रितेषु पाठः।

[2] अत्र 'विषयीभूतौकारान्त' इत्युचितः पाठः।

[3] मूलग्रन्थे=सिद्धान्तकौमुद्याम्। 'अत्र हि परत्वान्नित्यत्वाच्च गुणे कृतं ह्रस्वात्परत्वं नास्ती'ति ग्रन्थ इत्यर्थः।

[4] विसन्धिरयं पाठो ग्रन्थकर्त्तुरेव।

[5] 'हे विष्णो' इत्यभिप्रायेणैव इति क. पाठः।

[6] 'यि' इति क. पाठः।

(६।१।७९) इति सूत्रे कैयटः। 'केवलोऽपि च्छान्दस' इति पक्षाऽन्तरं स एवाऽऽह। इत्यैदन्ताः।

'ग्लौर्मृगाङ्कः कलानिधिरि'त्यमरः। एवं जनान् अवतीति जनौः। ज्वरत्वर (६।४।२०) इत्यूठ्। एत्येधति (६।१।८९) इति वृद्धिः। जनावौ जनाव इत्यादि।

इत्यजन्ताः पुँल्लिङ्गाः।

---

बृहच्छब्दरत्नः

प्रायेणे'त्येके। तत्र पीलुशब्दान्नपुंसके स्वमोर्लुकि, 'न लुमते'ति निषेधस्याऽनित्यत्वेन लोपाऽविषये गुणप्रवृत्त्या 'परत्वादि'त्युक्तमिति [१]मण्डने अस्मत्पितृचरणाः।

पक्षान्तरमिति। अत्राऽरुचिबीजन्तु कोशविरोधः। न हि तत्र वैदिकानामन्वाख्यानम्। किञ्च क्यजन्तस्यैवोपक्रमात्तस्यैव तद्युक्तम्। अपि च 'रा यि छान्दस' इति भाष्ये 'रायिरि'ति रूपं क्यजन्तस्यैव। धातोरेव इक्प्रत्ययविधानात्। तत्र हि आत्वं छान्दसत्वादिति भाष्याऽऽशयः। अत एव 'रायमिच्छती'ति विग्रहकथनं भाष्योक्तं सङ्गच्छते। न हि विग्रहवाक्यं छन्दः।

इत्यजन्ताः पुँल्लिङ्गाः।

---

विग्रहश्छन्दः। अत एव 'रायि आशां राय्याशामि'ति अचः परस्मिन् (१।१।५७) इत्यत्र भाष्ये प्रयुक्तमिति भावः। पक्षान्तरमिति। अत्राऽरुचिबीजं स्पष्टमेव।

इत्यजन्ताः पुँल्लिङ्गाः।

---

[१] मनोरमामण्डनं हरिदीक्षितपितृ वीरेश्वरदीक्षितकृतम्। तत्रेत्यर्थः।

## अथ अजन्तस्त्रीलिङ्गप्रकरणम् ।

**रमेति ।** लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वात्स्वादयः । यत्तु 'आबन्तत्वादि'ति । यच्च व्याचख्युः—'प्रत्ययाऽन्तत्वादप्रातिपदिकत्वेऽपि पृथक् ङ्याापोर्ग्रहणादित्यर्थ' इति । तन्न । ङ्याब्ग्रहणस्याऽन्याऽर्थतायाः प्रागेवोक्तत्वात् । एङ्ह्रस्वादिति । परत्वात्, प्रतिपदोक्तत्वाच्च सम्बुद्धौ च (७।३।१०६) इत्येत्वे कृते, हल्ङ्यादिलोपो न प्राप्नोति, स्थानिवद्भावादाप्त्वेऽप्याकाररूपत्वाऽभावात् । 'आ-आबि'त्याकारं प्रश्लिष्य [1]दीर्घग्रहणप्रत्याख्यानात् । यथाश्रुतेऽपि एङ्ह्रस्वात् (६।१।६९) इति लोपस्यैव परत्वेन न्याय्यत्वादिति भावः ।

**याडापः (७।३।११३) ।** यद्यपि 'यडि'त्येवोचितम् । न च अतो गुणे (६।१।९७) इति पररूपाऽऽपत्तिः । अकारोच्चारणसामर्थ्येनैव तद्बाधात् । तथाऽपि 'उच्चारणाऽर्थोऽकार' इति सम्भाव्येत । अतः स्पष्टाऽर्थं याट् कृतः ।

---

**बृहच्छब्दरत्नः**

'एवं दुर्गादय' इति मूलग्रन्थेन हलन्तप्रकृतिकाष्टावन्ता अप्युक्ताः, स्त्र्यादिशब्दास्तु स्वयमुपनिबद्धा एव, तत्र लक्ष्यभेदेनोपायद्वयमाह-लिङ्गेति । तथा चैको हेतुः 'वाचा' 'स्त्र्या'दिशब्दाभिप्रायेण । द्वितीयस्तु 'रमा'शब्दाद्यभिप्रायेण । एतेनोभयोर्हेतुत्वे चकाराऽनुक्तेर्न्यूनतेति मन्दप्रतारणमपास्तम् । 'अप्रातिपदिकत्वादि'तिच्छेदे तु एकादेशरहितविषयतया, एकादेशेऽपि कार्यकालपक्षाऽभिप्रायेण वा ग्रन्थो व्याख्येयः । परत्वादिति । 'नित्यत्वादि'त्यपि बोध्यम् । ननु याट्स्याटोष्टकारः समुदायमात्रोपकारकः, उत अवयवमात्रोपकारकः, उत उभयोपकारकः ? । तत्राऽऽद्ये

---

**लघुशब्दरत्नः**

लिङ्गविशिष्टेति । तया परिभाषया प्रातिपदिकत्व-तद्व्याप्यधर्माणां विशिष्टे बोधनेन तया प्रातिपदिकत्वादित्यर्थः । ध्वनितं चेदं बहुव्रीहेरूधसः (४।१।२५) इत्यत्र भाष्ये । परत्वादिति । 'असम्बुद्धौ हल्ङ्यादिलोपश्चरिताऽर्थः । कृते लोपे एत्वं सावकाशमि'त्यभिमानः । ननु 'सत्यपि सम्भवे बाधनमि'ति न्यायविरोधोऽत आह—प्रतिपदोक्तत्वाच्चेति । अपवादत्वाच्चेत्यर्थः । यथाश्रुतेऽपीति । आकारप्रश्लेषाऽभावेऽपीत्यर्थः । परत्वेनेति । 'यौगपद्यसम्भवेऽपि विप्रतिषेध' इत्यभिमानेनेदम्[2] ।

---

[1] 'दीर्घग्रहणस्य प्रत्याख्याततत्वात्' इति घ. पाठः ।

[2] इतोऽग्रे 'उभयोः सम्भवादिति भावः' इति घ. कुण्डलितः पाठः ।

वृद्धिरेचीति। यत्तु प्राचा आटश्च (६।१।९०) इत्युदाहृतम्। तन्न। याट्-स्याटोष्टकारस्य समुदायाऽनुबन्धत्वेनेह आटोऽभावात्

**सर्वनाम्नः स्याड् ढ्रस्वश्च** (७।३।११४)। दीर्घोच्चारणं प्राग्वत्। अत्र वदन्ति—'सर्वनाम्नोऽसुङ् चे'त्येव सूत्र्यताम्। एवञ्च याटि परे ङित्त्वादन्त्यादेशे असुङि [1]"सर्वस्यै' इत्यादि सिद्धम्। स्याट्करणे, ह्रस्वविधाने च प्रयोजनं चिन्त्यमि'ति। अत्रेयं चिन्ता-'असुङ् चे'त्युक्ते 'अमुष्यै' इत्यादि न सिद्ध्येदि'ति। वस्तुतस्तु 'आमि सर्वनाम्नः सुट्, याटो ह्रस्वश्चे'ति सूत्रयितुं

---

बृहच्छब्दरत्नः

आह—समुदायेति। द्वितीयस्तु अनाशङ्क्य एव। याडादीनामिष्टदेशाऽनापत्तेः। समुदायोपदेशे तात्पर्येण प्राधान्यात्तदुपकारकत्वस्यैव न्याय्यत्वाच्च। फलाऽभावाच्च। एतेनाऽन्त्यं परास्तम्। गौरवाच्च। औपदेशिकरूपञ्च प्रधानमेव गृह्यते। तच्च 'आण्नद्या' इत्यादावाटो विधाने तात्पर्यादुन्नतम्। 'याडाप' इत्यादौ तु समुदायविधाने तात्पर्यम्। 'तीयस्ये'त्यादौ तु प्रायोगिकरूपस्यैव ग्रहणादर्थवत्परिभाषाऽऽरम्भः। यत्तु 'याडाद्यवयवस्याऽऽटोऽनर्थकत्वादि'त्याहुः। तन्न। अर्थवत आटोऽभावात्। न सिद्ध्येदिति। 'अमुमुयङि'त्यादिसिद्ध्यर्थं 'सान्तस्य न भवती'त्यर्थस्य भाष्यादिसंमतत्वेनोत्वाद्यप्राप्तेः। स्याट्करणमप्यस्मिन्नर्थे मानमित्यन्यदेतत्। वस्तुतस्त्विति। 'आमी'ति सूत्रं 'सर्वनाम्नः सुट्' 'याटो ह्रस्वश्चे'तिसूत्रादनन्तरं बोध्यम्। आनुपूर्व्यां तात्पर्याऽभावात्। एवञ्च 'त्रेस्त्रय'इत्यत्र 'आमी'त्यनुवृत्त्यर्थं मण्डूकप्लुति-

---

लघुशब्दरत्नः

आटश्चेत्युदाहृतमिति। समुदायाऽवयवयोः संनिधानेऽनुबन्ध उभयोपकारकः। न चाऽयमनर्थकः। आटोऽर्थवतः क्वाऽप्यभावादिति तदाशयः। इहाऽऽटोऽभावादिति। अयं भावः—'सानुबन्धकनिर्देशेषु प्रायोगिकरूपाऽसम्भवादौपदेशिकरूपग्रहणमिति घसञ्ज्ञासूत्रे भाष्ये स्पष्टम्। उपदेशे च तेषामित्सञ्ज्ञकत्वादुपस्थिततद्गुणवतामेव प्रदेशेषु भानमिति 'टकारेत्सञ्ज्ञकाऽऽकारस्ये'त्यादिक्रमेणाऽर्थः। क्तक्तवतू निष्ठा (१।१।२६) इति सूत्रे भाष्ये स्फुटमेतत्। पाणिनेश्च तत्र तत्र विशिष्टोपदेशे तात्पर्येण, तत्प्रयुक्तेत्सञ्ज्ञकेन तस्यैव टित्त्वादिव्यवहारो, नाऽवयवस्य। तदुपदेशे तात्पर्याऽभावात्। एतेनौपदेशिकस्याऽच्परत्वाऽभावेन न वृद्धिप्राप्तिः, नेष्यते च तत्र वृद्धिः, प्रयोगे तु नाऽऽडिति आटश्चेत्यसङ्गतमित्यपास्तमि'ति।

याटि परे इति। अन्तरङ्गत्वात्पूर्वं याडिति भावः। न सिद्ध्येदिति। इत्याद्येव न सिद्ध्येदित्यर्थः। पूर्वमसुङि असान्तत्वाऽभावेन मुत्वाऽनापत्तिः। पूर्वं मुत्वे त्वसिद्धिः स्पष्टैव। एवं चाऽमुमुयङित्यादिवद्व्याख्याभेदेन रूपद्वयमिहाऽपि स्यात्। मुत्वपक्षे

---

[1] 'सर्वस्या इत्यादि', 'सर्वस्यायित्यादि' इति वा लिखितेषु पाठः। स्पष्टार्थन्तु 'सर्वस्यै' इत्यस्माभिः स्थापितः।

युक्तम् । न चैवं याट एव ह्रस्वाऽऽपत्तिः । दीर्घोच्चारणसामर्थ्यात् । ह्रस्वोच्चारणेऽप्यकारसामर्थ्यादेव अतो गुणे (६।१।९७) इत्यस्य वारयितुं शक्यत्वादित्यवधेयम् ।

विभाषा (१।१।२८) । गौणत्वादप्राप्ते[1] विभाषेयम् । यत्त्वाहुः—'न बहुव्रीहौ (१।१।२९) इति निषेधे प्राप्ते' इति । तदापाततः । तस्याऽलौकिकप्रक्रियावाक्याऽन्तर्गतसर्वादिविषयत्वात्, अस्य च समासविषयत्वात् ।

योत्तरेति । यत्त्वाहुः—'या पूर्वा सोत्तराऽस्या उत्तरपूर्वे'ति ।

---

**बृहच्छब्दरत्नः**

र्नाऽऽश्रयणीया । अकारेति । 'उच्चारणार्थोऽकारः सम्भाव्येते'ति तु सूत्राऽऽशयवर्णनमात्रम्, नतु चोदद्यमम् । अत एव 'निश्चीयेते'ति नोक्तम् । 'अश्वे'ति सिद्धौ

---

**लघुशब्दरत्नः**

आप्स्थानिकत्वेनाऽसुडः प्रत्ययतया तदवयवत्वेन षत्वसिद्धिः । एवञ्च तत्र 'असान्तस्ये'त्यर्थ इत्यत्र स्याड्ग्रहणमपि ज्ञापकमिति भावः[2] ।

परे तु सञ्ज्ञाकृतबहिरङ्गत्वस्याऽनाश्रयणेन नित्यत्वादसुडि, रूपाऽसिद्धिः । न च चेन याडपि विधेयोऽसुडश्चेति न्यासे[3] इति वाच्यम् । विभाषा द्वितीया (७।३।११५) इति सूत्रेण विनिगमकाऽभावादुभयोरपि विकल्पे 'द्वितीयायै' इत्याद्यसिद्ध्यापत्तेः । किञ्चाऽसुडो याडपवादत्वेन तद्विषये याट् दुर्लभः । 'अचि रादेशान्नुट् पूर्वविप्रतिषेधेने'त्यसङ्गतं, रादेशस्य बाध्यसामान्यचिन्तया सर्वाऽपवादत्वेन नुडपवादत्वादि'त्याशङ्क्य, 'न तिसृचतसृ (६।४।४) इति दीर्घत्वनिषेधाद्रादेशो नुटं न बाधते' इति भाष्ये उक्तं तृज्वत्सूत्रे । तस्माद्विषयभेदेऽपि येन नाऽप्राप्तिन्यायेन बाधकत्वमिष्यते एव । यद्यप्यस्यङादेशेन सिद्ध्यति, तथाप्यवङसूत्रस्थभाष्यरीत्याऽऽन्तरतम्येन कदाचिदन्तस्योदात्तत्वे 'एकादेश उदात्तेने'त्यनेन विभक्तेरुदात्तत्वाऽऽपत्तिरित्याहुः । सामर्थ्यादेवेति । उच्चारणाऽर्थत्वन्तु न । व्याख्यानादिति भावः । त्रेस्त्रयः (७।१।५३) इत्यत्र 'आमी'त्यस्य मण्डूकाऽनुवृत्तिरिति बोध्यम् ।

---

[1] 'अप्राप्तविभाषेयम्' इति ङ. पाठः ।

[2] इतोऽग्रे—'न च अस्यङ आदेशोऽस्त्विति वाच्यम् । अत्राऽकारस्य विवक्षायाम् अन्तङ्गत्वाद्याटि 'सर्वस्यै' इति रूपाऽऽपत्तेः । अकारस्योच्चारणाऽर्थत्वे यद्वयश्रवणाऽऽपत्तिः । न चाऽयं याटोऽपवादः । विषयभेदेन येन नाप्राप्तन्यायाऽभावादितिसूत्राशयः' इति पाठो घ. पुस्तकेऽधिकोऽस्ति । स च प्रक्षिप्त एव । अग्रे ग्रन्थकृता स्वयमेव 'यद्यपी'त्यादिना अस्यङादेशस्योक्तेः ।

[3] 'न्यासे एव' इति घ. पाठः ।

**तद्रभसात् । पूर्वनिपातवैपरीत्याऽऽपत्तेः । तीयस्येति । इदं हि[1] पुंनपुंसकयोरावश्यकम् । अनेनैव सिद्धौ विभाषा द्वितीयातृतीया (७।३।११५) इति सूत्रं न कर्त्तव्यमिति भावः ।**

---

बृहच्छब्दरत्नः

'ह्रस्व'ग्रहणं चिन्त्यप्रयोजनम् । वैपरीत्येति । तस्या भ्रमाऽधिष्ठानत्वेन पूर्वप्रयोगस्य युक्तत्वात् । 'शुक्ती रजतं यस्य शुक्तिरजतको देवदत्त' इत्यप्यत एव सङ्गच्छते ।

आवश्यकमिति । इदञ्च वार्त्तिकम् 'अन्'प्रत्ययाऽन्ते न प्रवर्त्तते । 'तीय'शब्दस्य लाक्षणिकत्वात्, निरर्थकत्वाच्च । तेन 'द्वितीयाय भागाये'त्येव भवति । न च महाविभाषया अनोऽभावे वार्त्तिकप्रवृत्तिः शङ्क्या । [2]उत्तरसूत्रस्थलुग्वचनेन तन्नित्यताया बोधनात् । नचैवम् अन्नन्ताऽर्थं 'विभाषे'तिसूत्रमावश्यकम्, सामर्थ्यात् अन्प्रत्ययाऽभावेऽपि लाक्षणिकत्वाल्लक्षणप्रतिपदोक्तपरिभाषाया अविषय इति वाच्यम् । भागेऽर्थे विधीयमानस्य स्त्रीत्वाऽयोगात् । न चेदं सूत्रम् 'अनेकमन्यपदार्थे' इतिसूत्रस्थभाष्योक्तसहायवाचिद्वितीयशब्दाऽर्थमस्त्विति वाच्यम् । तृतीयशब्दसाहचर्येण तस्याऽग्रहणात् । 'द्वेस्तीय' इति सूत्रेण आवृत्त्या द्वयोरपि व्युत्पादनाच्च । 'सर्वनाम्नः स्याडि'तिसाहचर्यात् सञ्ज्ञोपसर्जनयोर्न प्रवृत्तिः । ध्वनितञ्चेदं भाष्ये ।

---

लघुशब्दरत्नः

वैपरीत्यापत्तेरिति । अयं भावः—'वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं प्रतीयते, 'योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या' इत्यर्थात् । तत्रोत्तरापदस्य ज्ञानविशेष्यपर्यन्तलक्षकतया गुणवाचकत्वेन पूर्वनिपातः । उत्तरस्यां पूर्वात्वप्रकारकज्ञानविशेष्यत्वन्तु न विधेयम् । पूर्वापदस्य पूर्वनिपाताऽऽपत्तेः । 'न विधौ परः शब्दार्थ' इति विधेयबोधके लक्षणाऽनौचित्याच्च । त्वदुक्तविग्रहे तु पूर्वापदस्य यच्छब्दसमभिव्याहारेणोद्देश्यसमर्पकतया तस्यैव लाक्षणिकत्वेन गुणवचनतया पूर्वनिपाताऽऽपत्तिरि'ति । न कर्त्तव्यमिति । स्पष्टं चेदं भाष्ये । तृतीयाशब्दसाहचर्येण सहायवाचिद्वितीयाशब्दस्य न ग्रहणम् । भागाऽर्थे विधीयमानस्याऽनो [3]भक्तेर्विशेष्यत्वेन न स्त्रीत्वम् । अनभिधानात् । एतेन 'तत्र लाक्षणिकत्वाद्वार्त्तिकाऽप्रवृत्ताविदमावश्यकम् । अत्र सूत्रे न सा परिभाषा प्रवर्त्तते । प्रतिपदोक्तस्याऽभावात् । न च महाविभाषया अनभावे वार्त्तिकप्रवृत्त्या रूपद्वयं सिद्धम् । अनो नित्यत्वाऽङ्गीकारात् । आद्युदात्तस्य तथापि रूपद्वयाऽसिद्धेश्चे'ति परास्तमिति भावः ।

---

[1] हिः ङ. नास्ति ।

[2] 'उत्तरसूत्रस्थेति । 'मानपश्वङ्गयोः कन्-लुकौ चे'त्युत्तरसूत्रस्थेत्यर्थः ।

[3] 'भक्ते' इति मुद्रितेषु पाठः ।

**अम्बार्थनद्योः** (७।३।१०७)। अत्र वार्त्तिकम्—'मातुर्मातच् पुत्रार्ऽर्थमर्हते' इति। 'मातृशब्दस्य सम्बुद्धौ मातजादेशो भवति, मात्रा पुत्रस्य श्लाघ्यत्वे द्योत्ये'। गार्गी माताऽस्य गार्गीमातृकः। तस्य सम्बोधनं 'हे गार्गीमात'। नद्यृतश्च (५।४।१५३) इति समासाऽन्तस्याऽपवादोऽयम्। यत्र तु श्लाघ्यत्वं न द्योत्यं, किन्तु स्वरूपकथनमात्रं, तत्र कवेव—'गार्गीमातृक'। आबन्तं यदङ्गमिति। यत्तु 'याडाप' इति सूत्रं व्याचक्षाणैरुक्तम्—'अतिखट्वाये'त्यत्र लाक्षणिकत्वान्न याट्, एवमतिसर्वायेत्यत्र न स्याडि'ति। तद्भ्रमसात्।[1] न ह्यतिदेशस्य विषये लक्षणप्रतिपदोक्तपरिभाषा प्रवर्त्तते। अतिदेशवैयर्थ्याऽऽपत्तेः। तेन याड् दुर्वारः। स्याटस्तु प्रसङ्ग एव नास्ति। सञ्ज्ञोपसर्जनयोः पाठात्पर्युदासात्। केचित्त्विति। परिशिष्टकारादयः।

---

**बृहच्छब्दरत्नः**

मातुरिति। भाष्ये बहुवचनन्तु प्रयोगबाहुल्येन शब्दभेदमादाय। पुत्रार्थमिति। 'पुत्रमभिधातुं यो मातृशब्द उपादीयते' इत्यर्थः। समासे गुणीभूतस्याऽपि बुद्ध्या प्रविभागेन—कीदृशाय पुत्राय ?। अर्हते। यः पुत्रः श्लाघ्यगुणवत्त्वात्कुलसम्भूतया मात्रा व्यपदेशमर्हती'त्यर्थः। अत एव जननीवाच्येव मातृशब्दो गृह्यते। इदञ्च बहुव्रीहावेव सम्भवति। तदाह-मातृशब्दस्येत्यादिना।

सम्बुद्धाविति। इदञ्चा'ऽम्बाऽर्थनद्योर्ह्रस्व' इति सूत्रे उपन्यासाल्लभ्यते। 'बन्धुनि बहुव्रीहौ' इति सूत्रस्थं 'मातज्मातृकमातृषु' इति वार्त्तिकं नैतन्मातज्शब्दविषयम्। 'कारीषगन्धीमातः' 'कारीषगन्ध्यामातृक' इति भाष्यादावुदाहृतत्वेन सम्बुद्ध्यभावे, श्लाघ्यत्वाऽभावेऽपि प्रवृत्तेर्दर्शनात्। 'मातृक'साहचर्येण तथैव युक्तत्वाच्च। अत एव 'मातजादेशोऽपूर्वो निपात्यते' इति कैयटादयः।

याड् दुर्वार इति। न च सिद्धान्तेऽपि दुर्वारः, 'प्रत्ययग्रहण'परिभाषया, 'पदाऽङ्गाऽधिकारे' इति परिभाषया च 'आबन्ताऽन्ताऽङ्गस्ये'त्यर्थादिति वाच्यम्।

---

**लघुशब्दरत्नः**

अत्रोपसङ्ख्यानादाह—सम्बुद्धाविति। 'अर्हन्तं पुत्रमभिधातुं[2] यो मातृशब्दः प्रयुज्यते तस्ये'त्यर्थः। सापेक्षत्वेऽप्यत एव निपातनात्समासः। अर्हत्त्वं च पुत्रस्य मातृद्वारकमेव। तदाह—मात्रा पुत्रस्येति। अपवाद इति। यदीदं न स्यात्तदा प्राप्नोतीति भावः। वैयर्थ्यापत्तेरिति। नन्वाकारोऽयं लाक्षणिक इति तदाशयः। न च 'खट्वायै' इत्यत्राऽपि याडनापत्तिः, सूत्रन्तु 'निशायै' इत्यत्र चरितार्थमिति वाच्यम्। यस्य रूपस्य लक्षणप्रवृत्तिं

---

[1] 'न ह्यतिदेशविषये' इति मुद्रितेषु पाठः।

[2] वार्त्तिकस्थाऽर्थशब्दस्याऽर्थोऽयमिति ध्येयम्।

**ङिति ह्रस्वश्च (१।४।६)।** अप्राप्तविभाषेयम्। ह्रस्वयोरप्राप्तौ, इतरयोस्तु नेयङुवङ्स्थानौ (१।४।४) इति निषेधे प्राप्ते आरम्भात्। इह 'इय-

---

बृहच्छब्दरत्नः

अङ्गस्य विशेषणत्वाऽङ्गीकारात्। 'पदाऽङ्गाऽधिकारे' इत्यादीनामुत्सर्गतोऽङ्गस्य विशेष्यत्वमित्यर्थपरतया कैयटादिभिर्व्याख्याततत्वात्। मानञ्चाऽत्र स्थानिवत्सूत्रस्थ-भाष्यादिग्रन्थाः।

अप्राप्तेति। न च 'यू स्त्र्याख्यौ नदी'ति सूत्रे 'ह्रस्वयोर्ग्रहणमि'ति पक्षस्याऽपि भाष्ये स्थितत्वेनाऽप्राप्तविभाषात्वं दुरुपपादमिति वाच्यम्। 'शेषग्रहणमकृत्वा परत्वाद् घिसञ्ज्ञया बाध' इत्यर्थस्याऽपि भाष्ये उक्तत्वात्। न च 'आ कडारात्परं कार्यमि'ति पाठे 'ङिति ह्रस्वश्चे'ति नदीसञ्ज्ञा घिसञ्ज्ञां न बाधेत। इदञ्च पूर्वया बाधे प्राप्ते विध्यर्थम्। 'कार्य'शब्देन चाऽत्र प्रकरणात्सञ्ज्ञारूपमेव। 'परा सञ्ज्ञे'ति वक्तव्ये 'परं कार्यमि'त्युक्तिस्तु 'विप्रतिषेधे' इत्युत्तरसूत्राऽर्थमिति वाच्यम्। इष्टाऽऽपत्तेः। न च गुणप्रसङ्गः। नदीसञ्ज्ञावचनसामर्थ्येन तद्बाधादिति भाष्यकाराः। न च भूतपूर्वगत्याश्रयणमिति वाच्यम्। 'आ कडारा-देका सञ्ज्ञे'ति पाठेन सह फलैक्याऽर्थमुक्ताऽर्थकल्पनस्यैव युक्तत्वात्। 'शेष'ग्रहणस्य सत्त्वाच्च। इदमेवाऽभिसन्धाय 'एकसञ्ज्ञाऽधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थमि'त्युक्तं मूले। 'आ कडारादेका सञ्ज्ञे'त्यस्याऽनधिकारत्वे 'अधिकार'शब्दो लाक्षणिको बोध्यः। यत्तु 'आ द्वन्द्वादि'त्येवोच्यताम्, 'कडाराः कर्मधारये' इत्येतत्पर्यन्तधावने बीजाऽभावात्, न हि 'चार्थे द्वन्द्व' इत्यतः परत्रेदमुपयुज्यते' इति। तन्न। प्रथमा-ऽतिक्रमे कारणाऽभावेन 'आ चाऽर्थादि'ति वक्तव्ये 'द्वन्द्वश्च प्राणितूर्ये'त्यस्यैवा-ऽवधित्वाऽऽपत्तेः। तथा च तत्सामर्थ्यात्सम्बुद्धिसञ्ज्ञा-ऽऽमन्त्रितसञ्ज्ञयोर्विभिन्न-विषयत्वेऽपि समावेशो न स्यात्। वस्तुतस्तु 'एका सञ्ज्ञे'त्यधिकारसूत्रेणैवेष्टसिद्धौ अवध्युपादानं व्यर्थम्। 'राजदन्तादिषु परमि'त्यादावनन्वयेनोत्तरत्राऽप्यननुवृत्ति-सिद्धेरिति दिक्।

---

लघुशब्दरत्नः

विना न सम्भवस्तस्यैव लाक्षणिकस्य परिभाषाविषयत्वात्, न चेह तथा, एकादेशतः प्रागपि तद्रूपसत्त्वादिति चेन्न। वर्णग्रहणे तदप्रवृत्तेस्तैरप्युक्तत्वेन तद्विरोधादित्यभिमानः[1]।

ह्रस्वयोरप्राप्ताविति। अत एव यू स्त्र्याख्यौ (१।४।३) इति सूत्रे ह्रस्वघटितवाक्ये 'नेति निवृत्तमि'त्युक्तं भाष्ये। निषेधे प्राप्ते इति। भावतात्पर्यकतालाघवाऽनुरोधेनाऽप्राप्त-विभाषात्वमेवोचितमिति भावः।

---

[1] 'इत्यभिमान इत्यन्यत्र विस्तर' इति घ. पाठः।

**ङुवङ्स्थानौ' 'स्त्रीशब्दभिन्नौ' 'नित्यस्त्रीलिङ्गावि'ति त्रीणि ईदूतोर्विशेषणानि।**

बृहच्छब्दरत्नः

त्रीणीति। एकदेशाऽनुवृत्तेरयुक्तत्वेन, निषेधस्य प्राप्तिपूर्वकत्वेन, 'वामी'त्यत्र तथैव सम्बन्धस्य क्लृप्तत्वेन चाऽऽख्यापदत्यागाऽयोगादिति भावः। 'ङिति ह्रस्वश्चे'त्यत्रैवंविधो[1] नियमो नाऽऽश्रीयते' इति कैयटग्रन्थस्तु ह्रस्वाऽभिप्रायक एव। पूर्वाऽपरपर्यालोचनया तथैव लाभात्। एतेन 'नित्यस्त्रीत्वाऽभावे 'ङिति ह्रस्वश्चे'-त्यस्य चारितार्थ्येन, नित्यस्त्रीलिङ्गे ङित्सु अन्तरङ्गत्वान्नित्यनिषेधाऽऽपत्ति-रि'ति परास्तम्। न च 'अतिश्रिये' 'अतिश्रियै ब्राह्मण्यै' इत्यादौ कैयटमते विकल्पो न स्यादिति वाच्यम्। 'अवयवस्त्रीविषयत्वात्सिद्धमि'ति भाष्याद्युक्तरीत्या अवयवभूत-'श्री'शब्दस्य नित्यस्त्रीत्वेनाऽदोषात्। न चेयङुवङ्भ्यामङ्गाऽऽक्षेपेण तस्यैव नित्यस्त्रीत्वं युक्तमिति वाच्यम्। इयङुवङ्भ्यामाक्षिप्ताऽङ्गस्योपस्थितत्वेन तत्रैवाऽन्वयात्। ध्वनितश्चाऽयमर्थो 'यस्याऽङ्गस्य इ-युवौ भवत' इत्यादि वदद्भिर्भाष्य-वार्तिककारादिभिः, व्याख्यातश्च कैयटादिभिरप्येवमेव। 'स्त्र्याख्यावि'ति पदन्तु 'यू' इत्यनेनैव सम्बध्यते। पूर्वसूत्रे तथैव सम्बन्धस्य क्लृप्तत्वेन त्यागाऽयोगात्। 'यू स्त्र्याख्यौ नदी'ति सूत्रे तु अङ्गाऽऽक्षेपकाऽभावः स्पष्ट एव। न च जहत्स्वार्थाया-मानर्थक्यमिति वाच्यम्। प्रक्रियादशायां तदनङ्गीकारात्। भूतपूर्वगत्या तत्सत्त्वाच्च। ध्वनितञ्चेदं 'प्रत्ययोत्तरे'ति सूत्रे भाष्ये। पक्षान्तरेऽप्यर्थस्य विशिष्य निमित्तत्वेनाऽऽश्रयणात्। 'लिङ्गाऽन्तराऽनभिधायकत्वं नित्यस्त्रीत्वमि'त्यत्र पदान्तर-निरपेक्षमन्तरङ्गमेव लिङ्गाऽन्तरं गृह्यते। अत एव 'पञ्चाजी'त्यत्र न टाबि'ति वक्ष्यामः। न चैवं नित्यपदव्यावर्त्याऽप्रसिद्धिः। न च 'श्रिये पदार्थाये'त्यस्याऽपि सम्भवेन लिङ्गाऽन्तराऽभिधायकत्वात् 'श्रियै ब्राह्मण्यै' इत्येव व्यावर्त्यमिति वाच्यम्। प्रागुक्तरीत्या क्यजादिसापेक्षलिङ्गाऽन्तरयोगेऽपि नित्यस्त्रीत्वाऽनपायात्। प्रक्रियादशायां क्यजादिज्ञानस्याऽऽवश्यकत्वात्। अत एव 'श्रियै श्रिये ब्राह्मण्यै', 'भ्रुवै[2] भ्रुवे ब्राह्मण्यै' इति भाष्यं सङ्गच्छते। 'श्री'शब्देन श्रीसम्बन्धिस्त्री-लक्षणायामपि नदीसञ्ज्ञाविकल्पो भवत्येवेति वाच्यम्। 'कटप्रुवे यवक्रिये ब्राह्मण्यै' इत्यादेः सत्त्वाल्लिङ्गाऽन्तराऽभिधायकत्वेन कैयटमते तदयोगात्। कटप्रव-णादेरुत्सर्गतः पुंधर्मतया हरदत्तमतेऽपि व्यावर्त्यसम्भवाच्च। क्यजाद्यन्ता-नाम् 'उन्नी'त्यादीनां सत्त्वाच्च क्यजादिप्रकृतेर्नित्यस्त्रीत्वाऽभावेन, क्यजाद्यन्त-स्यैव सञ्ज्ञित्वेन, तद्व्यतिरिक्तशब्दाऽन्तरनिरपेक्षतया लिङ्गाऽन्तरस्याऽभिधानात्। अत एवैतस्य बहिरङ्गत्वमपि न। न चैवं 'श्रिये ब्राह्मणाय' 'अतिश्रिये ब्राह्मणाये'त्यत्र विकल्पः स्यादिति वाच्यम्। महासञ्ज्ञाकरणेन 'नदीव नदी'ति गौण्या वृत्त्या विशेष्यनिष्ठस्त्रीत्ववाचकस्यैव ग्रहणात्। तच्च स्त्रीत्ववाचकमङ्गसञ्ज्ञकमेव गृह्यते। ईदूतोर्विशेषणवैयर्थ्याऽऽपत्त्या अन्याप्त्यभावेनाऽङ्गे एवाऽन्वयस्य युक्तत्वात्।

---

[1] एवंविधः='नित्यस्त्रीलिङ्गावेवे'त्येवंविधो नियम इत्यर्थः।

[2] 'भ्रुवै' इति ख. नास्ति।

बृहच्छब्दरत्नः

[1]अयं पक्षः 'समान'न्यायेन 'वामी'त्यत्राऽपि बोध्यः। 'श्रीग्रामण्योश्छन्दसी'ति-सूत्रन्तु 'अतिश्रियामि'त्यत्र न प्रवर्त्तते, छन्दसि दृष्टाऽनुविधित्वादिति सर्वेषां समानन्तत्। ननु महासञ्ज्ञाकरणवैयर्थ्येन स्त्रीत्वस्य विशेष्यस्यैव ग्रहणादुक्तदोषाऽभावादिति चेन्न। 'लिङ्गस्य विशेष्यतया भानमि'त्यर्थस्य [2]सर्वतन्त्रविरुद्धत्वात्। 'विशेष्याऽन्वयित्वमि'त्यर्थाऽङ्गीकारे तु 'अतिश्रिये ब्राह्मण्यै' इत्यादावव्याप्तिः। श्रीशब्दप्रतिपाद्यविशेष्याऽन्वयित्वस्य 'अतिश्रिये ब्राह्मणाये'त्यत्र सत्त्वाच्च। विशेष्याऽन्वयित्वस्याऽशब्दाऽर्थत्वाच्च। एवम् 'अतिशकटये ब्राह्मणाये'त्यत्र विकल्पो न। ह्रस्वघटितवाक्याऽन्तरेण साहचर्यात्, ङित्प्रत्ययसत्त्वाच्चाऽङ्गलाभः। अत एव महासञ्ज्ञाकरणं चरिताऽर्थम्। अन्यथा 'यू स्त्रियां नित्यमि'त्यसमस्त-निर्देशेन 'स्त्रियामि'त्यनुवृत्तेः सुलभत्वात्तद्वैयर्थ्यं स्पष्टमेव। न च गौरवाऽऽपत्तिः। 'आण्नद्या' इत्यादौ लघुभूतसञ्ज्ञया व्यवहारे लाघवस्य स्फुटत्वात्। [3]श्रीशब्दात्कनि, लुपि च [4]'श्रिये ब्राह्मणाय' 'श्रियै ब्राह्मणाये'ति विकल्पो भवत्येव। 'चञ्चाः पश्ये'त्यादौ नत्वाऽभावाऽर्थं 'लुपि युक्तवद्व्यक्तिवचने' 'विशेषणानां चाऽजातेरि'-त्यादौ प्रत्ययाऽर्थनिष्ठलिङ्गप्रयुक्तकार्योऽभावस्याऽप्यतिदेशेनाऽङ्गस्य स्त्रियां वर्त्तमानत्वात्। 'विशेषणानां चाऽजातेरि'ति प्रापितस्यैव 'मनुष्यलुपि प्रतिषेध' इत्यनेन निषिद्धत्वेऽपि, न्यायप्राप्तविशेष्यनिष्ठलिङ्गप्रयुक्तकार्यस्याऽनिषिद्धत्वेन 'चञ्चा अभिरूप' इति भाष्योदाहृतं पुंस्त्वं बोध्यम्। एवञ्च लुबन्ते 'शकटये ब्राह्मणाये'ति विकल्पो भवत्येव। 'श्रिये ब्राह्मणाये'ति भाष्यं सञ्ज्ञाऽभावपर-क्यजन्ताद्यभिप्रायेणैव व्याख्येयम्। 'शकटये ब्राह्मणाये'त्यादौ विकल्पाऽभावपर-भाष्यादिग्रन्थास्तु चिन्त्या एव। भाष्यप्रामाण्येन दीर्घ-तुगाद्यभावो वा। 'लक्षणया 'शकटि'शब्दो ब्राह्मणपर' इत्यन्ये। अत एव यथा दाराऽऽदिशब्दानां शब्दशक्तिस्वाभाव्याच्छास्त्रीय-पुंस्त्वाऽभिधायकत्वं, बहुवचनाऽन्तत्वञ्च, तथा लुबन्तस्याऽपि देवदत्तादिनिष्ठाऽपचयरूपशास्त्रीयस्त्रीत्वाऽभिधायकत्वम्, एवञ्च युक्तवद्भावो न कार्य' इत्यर्थ-प्रतिपादकं 'तदशिष्यं सञ्ज्ञाप्रमाणत्वादि'ति सूत्रं सङ्गच्छते। 'प्रथमलिङ्गग्रहणञ्चे'-त्यादिवार्त्तिकस्थभाष्यादिग्रन्थास्त्वापातरमणीया एव। स्पष्टञ्चेदमस्मत्पितामह-ग्रन्थे सूक्ष्मदृशाम्। न चैवं 'सुष्ठु धीर्यस्याः, सुष्ठु ध्यायति वे'ति विग्रहे सुधीः श्रीवत्, मताऽन्तरे पुंवदि'ति मूलग्रन्थो विरुध्येतेति वाच्यम्। 'मताऽन्तरे पुंवदि'ति ग्रन्थस्य 'सुष्ठु ध्यायती'ति [5]विग्रहाऽभिप्रायेण प्रवृत्तत्वात्, तत्र नित्यस्त्रीलिङ्ग'धी'शब्दाऽभावात्। ईदूतोरिति (-४२३ पृष्ठे)। नन्वेकं यूग्रहणमनुवर्त्तते। तच्च

---

[1] 'अयं वर्त्त्यः' इति क. ख. पाठः।

[2] 'सर्वतन्त्रे विरुद्धत्वात्' इति क. ख. पाठः।

[3] 'अश्रीशब्दात्' इति क. ख. पाठः। [4] 'अश्रिये, अश्रियै' इति क. ख. पाठः।

[5] न तु 'सुष्ठु धीर्यस्या' इति विग्रहाऽभिप्रायेण स कौमुदीग्रन्थः। तद्विग्रहे धीशब्दस्य नित्यस्त्रीत्वादिति भावः।

**ह्रस्वयोस्तु 'स्त्रियामि'त्येव, न तु नित्यस्त्रीत्वपर्यन्तम्। अन्यथा इष्वशनि-प्रभृतीनामुभयलिङ्गानां, [१]पट्वमृदुप्रभृतीनां सर्वलिङ्गानाञ्च स्त्रीत्वेऽपि नदीत्वं**

**बृहच्छब्दरत्नः**

विभक्तिविपरिणामेन 'य्वोर्ङस्वावि'त्यर्थं सम्पाद्य ह्रस्वविशेषणे एवोपक्षीणम्, तत्कथं पुनर्यू इति लभ्यते इति चेत्। अत्राहुः—चकारोऽत्र ह्रस्वाऽतिरिक्तसञ्ज्ञिसमुच्चयाऽर्थः। यद्वा 'इयङुवङ्स्थानावि'त्यादीनां स्वरितत्वप्रतिज्ञासामर्थ्यादनुवृत्तौ, वाक्यभेदेन सम्बन्ध इति तावन्निर्विवादम्। एवञ्चेयङुवङ्स्थानावित्यनेन ईदूतोराक्षेपः। तत्र 'यू' इत्यस्याऽनुवृत्तिर्वा।

स्त्रियामित्येवेति। तच्च 'नदी'तिमहासञ्ज्ञाकरणबलादेव लब्धमिति भावः। [२]एतेनैकदेशाऽनुवृत्तेरयुक्तत्वादिदमयुक्तमित्यपास्तम्। अन्यथेति। पूर्ववत् 'स्त्र्याख्या-वि'त्यस्याऽनुवृत्त्याश्रयणे इत्यर्थः। नदीत्वं न स्यादिति। न चेष्टाऽऽपत्तिः। 'वामी'ति सूत्रस्य, 'ङिती'त्यस्य च वैयर्थ्याऽऽपत्तेः। 'च'शब्दो हि पूर्ववाक्याऽर्थ-सञ्ज्ञिसमुच्चयाऽर्थः। तत्फलन्तु तद्घटकाऽर्थस्याऽत्र सम्बन्धाऽभावबोधनम्। अत एव 'वाऽसौ ह्रस्वश्चे'ति न सूत्रितम्। 'असावि'ति पर्युदासेन विभक्तेर्लाभात्। न चैवमपि 'वाऽसौ' 'ह्रस्वश्चे'ति सूत्रद्वयेनैव त्वदुक्ताऽर्थसिद्धिरिति वाच्यम्। पूर्ववाक्याऽर्थप्रविष्टाऽसावित्यस्याऽपि सम्बन्धाऽनापत्तेः। [३]'असावि'ति सूत्रेण दीर्घयोः सर्वत्र सञ्ज्ञासिद्धौ, [४]समुच्चेयाऽभावेनोक्ताऽर्थस्य निरूपयितुमशक्यत्वाच्च। अत एव 'हरिमतिक्रान्ता या स्त्री सा अतिहरिः', 'अतिहर्यै' 'अतिहरये' इत्यत्र ङिति विकल्पो भवत्येव। नदीसञ्ज्ञासूत्रशेषस्थभाष्यादिग्रन्थाः 'प्रथमलिङ्ग-ग्रहणञ्चे'तिवार्त्तिकाऽर्थः पूर्वसूत्रविषय एवे'त्यर्थप्रतिपादका' इति न कश्चिद्दोष इति स्पष्टं तद्विदाम्।

**लघुशब्दरत्नः**

**ह्रस्वयोस्तु स्त्रियामित्येवेति। इष्वादिष्वप्राप्तिमाशङ्क्य 'ङिति ह्रस्वश्चे'त्यत्र नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयते' इति कैयटोक्तिरुपक्रमाऽनुरोधात् ह्रस्वांऽशमात्र-विषया। यू स्त्र्याख्यौ (१।४।३) इति सूत्रे अत्रत्येयङुवङ्स्थानावित्यंशस्य निषेधपरतया भाष्ये व्याख्यानेन, निषेधस्य प्राप्तिपूर्वकतया, तत्र नित्यस्त्रीलिङ्गावित्यस्याऽऽवश्यकत्वाच्चेति भावः। तदाह—अन्यथेति। कैयटरीत्येति (–४२६ पृष्ठे)। 'स्त्रीविषयावेव यौ [५]यू नित्यमि'ति भाष्यस्वारस्येन लिङ्गाऽन्तरविशिष्टाऽर्थाऽनभिधायकत्वरूपस्य नित्यस्त्रीत्वस्य तेनोक्तेरिति भावः।**

१ 'पट्वमृदुप्रभृतीनाम्' इति मुद्रितेषु त्रुटितम्।
२ 'एतेनैकदेशाऽनुवृत्तेर्युक्तत्वात्' इति क. ख. पाठः।
३ 'सौ' इति सूत्रेण' इति क. ख. पाठः।
४ 'समुच्चयाऽभावेन' इति क. ख. पाठः।
५ 'यू' इति क. ख. घ. नास्ति।

न स्यात्। कैयटरीत्या नित्यस्त्रीत्वाऽभावात्। हरदत्तमतेऽपि ह्रस्वांऽशे नित्य-ग्रहणव्यावर्त्त्याऽलाभाच्च। अत एव 'आख्या'ग्रहणमपहाय स्त्रीशब्दमात्रं

बृहच्छब्दरत्नः

कैयटेति। ननु ङ्यन्तकुमार्यादिशब्दामपि नदीत्वं न स्यात्, क्यच्क्विपो-र्निवृत्तेन त्रिलिङ्गेन समानाऽऽकारत्वादिति चेन्न। अर्थभेदेन शब्दभेदाऽऽश्रयणात्। प्रत्यासत्तिन्यायेन, 'स्त्र्याख्यावि'ति विशेषणसामर्थ्येन च प्रवृत्तिनिमित्तैक्ये नित्यस्त्रीत्वस्याऽऽश्रयणाच्च। हरदत्तमतेऽपीति। अपिनाऽरुचिर्बोधिता। सूत्र-भाष्याद्यदृष्टैर्हरदत्तोक्तनित्यस्त्रीत्वाऽलाभः। किञ्च ग्रामनयनाऽऽदिकमुत्सर्गतः पुंधर्मो, न सुध्यानादिकमित्यत्र न दृढतरं प्रमाणं, येन भवदुक्तिः कथञ्चिदप्यवकाश-मासादयेदिति दिक्। व्यावर्त्त्येति। न च [1]पट्वादय एव व्यावर्त्त्या इति वाच्यम्। 'आख्या'ग्रहणसामर्थ्यात्'स्त्रियमाचक्षाते' इत्याश्रीयते। इष्वशनिप्रभृतीनां शब्दाऽर्थ एव स्त्रीत्वमिति नदीसञ्ज्ञा भवत्येव। खलपू-ग्रामणी-कटप्रूशब्दानां क्रियाशब्दत्वात्पुंसि मुख्या वृत्तिः, पुंस एव खल्वयमुचितो धर्मः, शक्तत्वात्, भ्रमरहितत्वाच्च, आध्यानं, कौशाम्ब्या निर्गमनं च स्त्रीपुंससाधारणम्, पर-सहायेन स्त्रीकर्त्तृकनिर्गमनस्य[2] सम्भवादित्यर्थपरहरदत्तग्रन्थेनैव समाहितत्वात्। अत एवाऽतिकौशाम्ब्यादीनां ङिति विकल्पो भवत्येवेति कौस्तुभे पितासहचरणाः। यत्तु 'यू स्त्र्याख्यौ नदी'त्यनेन नित्यनदीसञ्ज्ञाया दुर्वारत्वाद्विकल्पो दुरुपपाद' इति। तन्न। उभयत्र विभाषायाः सत्त्वे बाधकाऽभावात्। ह्रस्वाऽऽदेशेन निमित्त-विघातस्य सत्त्वेनाऽप्राप्तेश्च। 'ईकाराऽन्तत्वे सति स्त्रीवाचकत्व'रूपस्य नदीत्वस्या-ऽल्विधित्वेनैकदेशविकृतन्यायेनाऽतिदेष्टुमशक्यत्वाच्च। अत एव 'प्रथमलिङ्ग-ग्रहणञ्चे'त्यनेन नदीत्वं न शङ्क्यम्। 'यू स्त्र्याख्यौ नदी'ति सूत्रे उपसङ्ख्यातत्वेन ह्रस्वेऽप्राप्तेः, उपसर्जनीभूतह्रस्वेकाराऽन्तस्य पूर्वं स्त्र्याख्यत्वाऽभावाच्च, उक्तधर्मस्या-ऽशास्त्रीयत्वेनाऽतिदेष्टुमशक्यत्वाच्च, घिसञ्ज्ञया बाधाच्च।

आख्याग्रहणमपहायेति। 'आख्याया ग्रहणं यस्मिन्नि'ति बहुव्रीहिः।

लघुशब्दरत्नः

हरदत्तमतेऽपीति। पूर्वभाष्ये एवो भिन्नक्रमः। 'नित्यमेव यौ स्त्रीविषयावि'त्यन्वयः। 'नित्यमेवे'त्यस्य 'पदाऽन्तरं विनाऽपीत्यर्थ' इति वृत्त्याशयं स[3] व्याचष्टे। इष्वादीनां च शब्दाऽर्थ एव स्त्रीत्वमिति, तेषां पदाऽन्तरं विनाऽपि स्त्रियां वर्त्तमानत्वेन, व्यावर्त्त्याऽभाव इति भावः। आख्याग्रहणमपहायेति। नित्यत्वाऽर्थकमपहायेत्यर्थः। स्त्रीशब्दमात्रमिति। 'स्त्र्याख्य'पदं 'स्त्रीबोधकावि'त्येतन्मात्राऽर्थकं निष्कृष्य, पूर्वोक्ताऽर्थमपहाय ([4]स्त्रीघटितशब्दमात्ररूपं)

[1] पटु-मृदु-प्रध्यादय आदि शब्दग्राह्या इति भावप्रकाशः।

[2] 'स्त्रीकर्त्तृगमनस्य' इसि क. ख. पाठः।

[3] 'स' इति मुद्रितेषु नास्ति। [4] अयं पाठः केवलं घ. पुस्तके दृश्यते।

निष्कृष्य सम्बद्धयते। तदेतदाह-ह्रस्वौ च इउवर्णौ स्त्रियामिति। औत्त्वे प्राप्त इति। परत्वादिति भावः। यत्तु प्राचा औत् (७।३।११८) इति सूत्रे 'घिनदीसञ्ज्ञावर्जिताभ्यामि'ति व्याख्यातम्। नाऽसावक्षरार्थः। किन्तु पूर्वोत्तरसूत्रद्वयलभ्यः। एवञ्च इदुद्भ्याम् (७।३।११७) इति सूत्राऽनुपन्यसनं प्राचः प्रामादिकमेव।

अचि र ऋतः (७।२।१००)। गुणदीर्घोत्वानामिति। 'तिस्रस्तिष्ठन्ती'त्यत्र ऋतो ङि (७।३।११०) इति गुणस्य, 'तिस्रः पश्ये'त्यत्र प्रथमयोः (६।१।१०२) इति पूर्वसवर्णदीर्घस्य, 'प्रियतिस्र आगतः' 'प्रियतिस्रः स्वमि'-त्यत्र ऋत उत् (६।१।१११) इत्युत्त्वस्य रत्वमपवाद इत्यर्थः। बाध्यसामान्यचिन्तायां स्वविषये प्राप्तस्य सर्वस्य बाधादिति भावः। विशेषचिन्तायान्तु 'मध्येऽपवादा' इति न्यायेन दीर्घोत्त्वयोरेव बाधः स्यान्न तु गुणस्य। सामान्य-विशेषपक्षौ च जाति-व्यक्तिपक्षवल्लक्ष्याऽनुरोधाद्व्यवस्थिताविति कैयटादौ स्पष्टम्। यत्तु व्याचख्युः-'अपवादशब्दो बाधकत्वोपलक्षकः। पूर्व-

---

बृहच्छब्दरत्नः

'स्त्र्याख्यावि'त्यपहाय 'नदी'ति महासञ्ज्ञालब्धस्त्रीत्वमात्रं सम्बध्यते, नित्यस्त्रीत्वेन सादृश्यस्याऽग्रहणादित्यर्थः।

गुणस्येति। अत एव 'प्रियतिस्रौ' 'प्रियचतस्रावि'त्यादिभाष्यप्रयोगाः सङ्गच्छन्ते। 'चतसर्याद्युदात्तनिपातनं करिष्यते' इति वार्त्तिके तु स्वरूपपरत्वाद्रादेशाऽभावः। भाष्यग्रन्थस्तु पूर्वाऽपरविरोधान्न्यायविरोधाच्चाऽयुक्त इति स्पष्ट-

---

लघुशब्दरत्नः

सम्बध्यते इत्यर्थः। परत्वादिति। 'ङेरामपेक्षये'त्यादिः।

तिस्रस्तिष्ठन्तीति। इदं 'प्रियतिस्रावि'त्यादेः मपर्यन्तस्य (७।२।९१) इति भाष्योदाहृतस्योपलक्षणम्। बाध्यसामान्येति। इदं च 'तृज्वत्क्रोष्टुः (७।१।९५) इत्यत्र भाष्ये स्पष्टम्। बाध इति। 'अनन्तरस्ये'ति न्यायाऽऽश्रयणे तु उत्त्वस्यैव बाधः स्यादिति बोध्यम्। ननु यत्राऽनेकविधिं प्रति येन नाऽप्राप्त्याऽपवादत्वं[१] प्राप्तं, तत्र व्यवस्थापका 'मध्येऽपवादा' इत्यादिन्यायाः, प्रकृते च रभावस्य न केनाऽपि येन नाऽप्राप्तिरिति चेन्न। 'किमिदं येन नाप्राप्तिन्यायेन पूर्वसवर्णदीर्घाऽपवादतया प्रथमाद्वितीयामात्रविषयम्, उत ऋत उत् (६।१।१११)

---

[१] 'अपवादत्वं निर्णीतम्' इति घ. पाठः।

**विप्रतिषेधेन गुणमपि बाधते इत्याशय' इति । तन्निर्मूलं, क्लिष्टश्च । यदपि प्रसादकृतोक्तं–'गुणस्य पूर्वविप्रतिषेधेन,इतरयोः परविप्रतिषेधेन बाधक इत्यर्थ' इति । तन्न । रविधेरचरितार्थत्वात् । न च टौसोश्चरितार्थता । यणा गताऽर्थत्वात् । त्रिचतुरोर्विशेषणादिति । श्रुतत्वाद्धि 'त्रिचतुरोरि'त्यस्यैव 'स्त्रियामि'ति विशेषणं, नाऽङ्गस्येति भावः ।**

**प्रियत्रिरिति । अत्र व्याचक्षते–'स्त्रिया अन्यपदार्थत्वेन बहुव्रीहिरूपमङ्गं तत्र वर्त्तते, त्रिशब्दस्तु पुंनपुंसकयोरेवेति, तिस्रादेशो ने'त्यादि । अत्रेदं वक्तव्यं–जहत्स्वार्थायां त्रिशब्दोऽनर्थकः, अजहत्स्वार्थायान्तु स्त्रियां वर्त्तते एव, तत्कथं पुंनपुंसकवृत्तिता सङ्गच्छतामि'ति । अत्रेदं तत्त्वं–जहत्स्वार्थैव**

---

बृहच्छब्दरत्नः

मस्मत्कृतभाष्यविवरणे । स्त्रियां वर्त्तत एवेति । अन्यपदार्थस्य 'त्रि'शब्देनोक्तत्वादिति भावः । यद्यपीदृशस्त्रीत्वस्य पदाऽन्तरसापेक्षत्वान्न ग्रहणम्, अत एव 'पञ्चाऽजी'त्यादावजहत्स्वार्थायां न टाबिति स्पष्टं कौस्तुभादौ, तथाऽपि त्रिशब्देन सर्वत्र स्त्रीरूपाऽर्थप्रतिपादने तात्पर्यग्राहकस्याऽपेक्षितत्वेन, 'बहुव्रीहिरूपमङ्गमि'त्यादित्वदुक्तग्रन्थस्याऽसङ्गतताऽऽपत्तेश्चाऽयुक्तत्वमिति ध्येयम् । 'ननु 'पुंनपुंसकवाचिते'त्यादिग्रन्थस्तु प्रकृताऽनुपयोगी । तदभावस्याऽऽदेशप्रवृत्तावनिमित्तत्वात् ।

---

लघुशब्दरत्नः

इत्यपवादतया पञ्चमीषष्ठीमात्रविषयम्, उत ऋतो ङि (७।३।११०) इति गुणाऽपवादतया सर्वनामस्थानङिमात्रविषयमि'ति संशये, व्यवस्थाऽऽकाङ्क्षया तन्न्यायप्रवृत्तेः सूपपादत्वात् ।

तन्निर्मूलमिति । 'जसि रादेशो वक्तव्यो, [1]गुणपरत्वादि'त्येतत्सूत्रस्थं वार्त्तिकं मूलमिति न वाच्यम् । बाध्यसामान्यचिन्तामाश्रित्य तत्प्रत्याख्यानस्य तृज्वत्सूत्रे भाष्ये ध्वनितत्वेन, तस्य दृढमूलत्वाऽभावात् । बाध्यसामान्यचिन्ताऽऽश्रयणे एव तस्य मूलत्वौचित्याच्च । तदाह–क्लिष्टं चेति ।

नाङ्गस्येति । तस्याऽश्रुतत्वात् । स्त्रियां वर्त्तत एवेति । अजहत्स्वार्थायामन्यपदार्थस्य त्रिशब्देनाऽप्युक्ततया तस्य स्त्रियां वृत्तिः । न चेदं स्त्रीत्वं पदाऽन्तरसापेक्षतया बहिरङ्गमिति वाच्यम् । त्रिशब्देन सर्वत्र स्त्रीरूपाऽर्थप्रतिपादने तात्पर्यग्राहकस्याऽपेक्षिततयाऽन्तरङ्गत्वाऽभावादिति[2] भावः । तत्कथमिति । स्त्रियां, [3]तत्र च वृत्तिरिति, 'पुंनपुंसकयोरेवे'ति

---

[1] 'गुणस्य परत्वात्' इति घ. पाठः ।

[2] 'अन्तरङ्गत्वाऽभावात्' इति घ. पाठः ।

[3] तत्र च=पुंनपुंसकयोरित्यर्थः ।

वृत्तिरिहाऽभिमता। लक्ष्याऽनुरोधात्। तेनाऽङ्गं स्त्रियामिति सम्यगेव। त्रिशब्दस्य पुंनपुंसकवाचिता तु भूतपूर्वगत्या। 'उत्तरपदार्थप्रधानस्तत्पुरुष' इत्यादिसिद्धान्तप्रवादस्यैवमेव निर्वाह्यत्वात्। एवं 'प्रियतिसा पुमानि'त्यत्र स्त्रियां वृत्तिरपि भूतपूर्वगत्यैव। अजहत्स्वार्थापक्षे तु 'स्त्रीनिष्ठसङ्ख्यासमर्पकयोस्त्रिचतुरोरि'ति विवक्षितोऽर्थः। प्रत्ययोत्तरपदयोश्च (७।२।९८) इत्येतत्सूत्रगतभाष्यग्रन्थसन्दर्भश्चेह प्रमाणम्।

अनित्यत्वादिति। इकोऽचि (७।१।७३) इति अज्ग्रहणं[1] चेह लिङ्गम्। तद्धि सम्बुद्धौ नुमं वारयितुं कृतम्। श्यामादिषु सत्यपि नुमि तल्लोपसम्भवात्। सम्बुद्धिश्च लुका लुप्तेति प्रत्ययलक्षणेन नुमः प्राप्तिर्वाच्या। प्रत्ययलक्षणञ्च न लुमता (१।१।६३) इति निषेधस्याऽनित्यतां विना दुर्लभमित्याकरे स्पष्टम्। न चेदमनित्यत्वं सम्बुद्धिगुणमात्रविषयकमित्यभि-

बृहच्छब्दरत्नः

इत्याकरे इति। न चाऽज्ग्रहणाऽभावे 'शुचीनामि'त्यादा नुमि, 'इन्हन्पूषाऽर्यम्णां सावि'ति नियमाद्दीर्घो न स्यादिति वाच्यम्। 'लक्षणप्रतिपदोक्त'परिभाषयाऽस्य इनोऽग्रहणा'न्नुमचिरे'त्यनेन पूर्वविप्रतिषेधेन नुटि, 'सकृद्गता'विति न्यायेन नुम्नेति तत्त्वम्। न चैवमपि 'बहुभिः कुलैरि'त्यादौ नुमि, नलोपे, तस्याऽसिद्धत्वात् षट्स्वरो दुर्वार इति वाच्यम्। 'षट्त्रिचतुर्भ्य' इत्यत्र विहितविशेषणाऽऽश्रयणेना-

लघुशब्दरत्नः

त्वदुक्तं विरुद्धमिति भावः। अजहत्स्वार्थापक्षे त्विति। तुनोक्ताऽर्थेऽरुचिर्ध्वनिता[2]। तद्बीजन्तु 'रूढेरविरोधित्वे जहत्स्वार्थावृत्तेरभावः। किञ्च जहत्स्वार्था-ऽजहत्स्वार्थाशब्दयोरवयवानां वाक्यदृष्ट-स्वार्थत्याग-तदभावावित्येवाऽर्थः। तत्राऽन्त्ये स्वार्थपुमादिवृत्तेः कथमन्यपदार्थे स्त्रियां वृत्तिः। न चाऽन्यपदार्थस्य समुदायशक्यत्वेऽपि, समुदायघटकत्वेनाऽवयवस्याऽपि स शक्य इत्याशयः, तर्हि [3]जहत्स्वार्थात्वेऽपि तुल्यम्। तत्राऽपि पक्षेऽन्यपदार्थास्य समुदायशक्यत्वात्। यदि 'स्त्रीवाचकतापर्यांप्त्यधिकरणत्वविवक्षे'त्युच्यते, तदाऽजहत्स्वार्थात्वेऽपि तुल्यमि'ति।

तल्लोपसम्भवादिति। 'पञ्चत्रपुभ्य' इत्यादौ समुदायभक्तो नुम् नाऽवयवस्य इगन्तत्वविघातक इति इगन्तोत्तरपदद्विगुत्वप्रयुक्तपूर्वपदप्रकृतिस्वरः। अन्तरङ्गत्वान्नुमः

[1] 'अच्ग्रहणम्' इति ध. पाठः। 'अज्ग्रहणम्' इत्यन्यत्र पाठः।
[2] 'बोधिता' इति घ. पाठः।
[3] 'जहत्स्वार्थात्वेऽपि' इति क. पाठः। 'जहत्स्वार्थत्वेऽपि' इत्यन्यत्र पाठः।
[4] 'अजहत्स्वार्थत्वे' इति ख. घ. पाठः।

**निवेष्टव्यम् । लक्ष्याऽनुरोधेनाऽन्यत्रापि क्वचित्तदभ्युपगमे बाधकाऽभावात् । तथा च 'प्रियतिसृ' 'प्रियत्रि' इति रूपद्वयमपि उक्तरीत्यैव कैय्यटेन समर्थितम् । पूर्वविप्रतिषेधेनेति । न चाऽत्र प्रमाणाऽभावः । [1] 'प्रियतिसृणी' 'प्रियतिसृणि' इत्यादिभाष्योदाहरणस्यैव तत्र प्रमाणत्वात् । ङेरत्वे सत्याविति । विभक्तिसंनिपातकृतमपि त्यदाद्यत्वं टापो निमित्तम् । संनिपातपरिभाषाया अनित्यत्वात्, न यासयोः (७।३।४५) [2] इत्यादिज्ञापकाच्चेति**

बृहच्छब्दरत्नः

ऽदोषात् । न हीयं विभक्तिर्नान्ताद्विहिता, किन्तु बहुशब्दात् । न चैवं 'चतसृणां' 'सप्तानामि'त्यादौ पठ्यमानमन्तोदात्तत्वं विरुध्येतेति वाच्यम् । नुडागमविधानद्वारा विशिष्टाया विधानेनाऽदोषात् । 'षकारसाहचर्येण षट्सञ्ज्ञायामागमाऽजन्य एव नकारो गृह्यते' इति नव्याः ।

प्रियतिसृ इति । न चैवमनङपि स्यादिति वाच्यम् । भाष्यप्रामाण्येनाऽनङि 'न लुमते'ति निषेधप्रवृत्तेरङ्गीकरात् । भाष्योदाहरणस्येति । अत एव 'सकृद्गताविे'त्यादिना नुन्न स्यात्, तिस्रादेशेन बाधितत्वादि'ति निरस्तम् । यत्तु 'अचि र ऋत' इति 'ऋत्'ग्रहणमेव पूर्वविप्रतिषेधे मानम् । तद्धि ऋकाराऽतिरिक्तव्यावृत्त्यर्थमि'त्याहुः । तन्न । तिसृचतस्रोः षष्ठ्यन्तत्वकल्पने मानाऽभावेन 'त्रिचतुरोरि'त्यस्यैवाऽनुवर्त्तनाऽऽपत्तौ दोषस्योद्धटत्वात् । त्रिशब्दादाचक्षाणाऽर्थे णिचि, क्वौ, विभक्तौ, तिस्रादेशे, वृद्धौ, टिलोपे, रादेशापत्तेश्च । किञ्च 'ऋत' इत्यस्याऽभावे

लघुशब्दरत्नः

पूर्वमेव वा[3] स्वरप्रवृत्तेश्च । अकृतव्यूहपरिभाषा त्वनित्या । 'अतिराभ्यामि'त्यत्राऽपि नुमं बाधित्वा परत्वादात्वम् । 'वृद्ध्यौत्वे'त्यत्र वृद्धिशब्दविहितवृद्धेरेव ग्रहणात् न 'पूर्वविप्रतिषेधेन नुमि'ति शङ्क्यम् । 'प्रियतिसृभ्यामि'त्यादावपि नुमः परत्वात्तिस्रादेश एव । एतेन 'निर्दिश्यमानत्रिशब्दस्य व्यवहितत्वादादेशो न स्यादि'त्यपास्तम् । 'शुचीनामि'त्यादौ 'नुमचिरे'ति पूर्वविप्रतिषेधेन सकृद्गतिन्यायेन नुमोऽप्राप्त्या, तत्र 'इन्हन् (६।४।१२) इति नियमाद्दीर्घो न स्यादि'ति न शङ्क्यम् । 'बहुभिः कुलैरि'त्यत्र तु[4] नुमि षट्त्वेऽपि झल्युपोत्तमम् (६।१।१८०) इत्यस्य प्राप्त्या, तदभावेऽपि बहुशब्दस्याऽन्तोदात्ततया न स्वरे विशेषः । न चोत्तरार्थम् । तत्रैव कर्त्तुं युक्तत्वादित्यन्यत्र विस्तरः । प्रियतिसृ इति । तथैव भाष्ये उदाहृतत्वेनाऽनङि न लुमता (१।१।६३) इति निषेध एवेति बोध्यम् । अनित्यत्वे प्रमाणमाह—न यासेति ।

[1] 'प्रियतिसृणी' इति मुद्रितेषु त्रुटितम् ।
[2] 'इति ज्ञापकाच्चेति भावः' इति मुद्रितेषु पाठः ।
[3] 'वा' इति केवलं घ. दृश्यते, नान्यत्र ।
[4] तुः मुद्रितेषु नास्ति ।

भावः। इयादेश इति। अजादौ य इयादेशो विहितः स उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्य औसादिषु चतुर्ष्वेव, न त्वन्यत्र, गुण-नाभावादिभिः पूर्वोक्तैर्बाधितत्वादित्यर्थः।

नेयङुवङ्स्थानावस्त्री (१।४।४)। 'तिष्ठतो ययोरि'ति स्थानौ। अधिकरणे ल्युट्। 'इयङुवङोः स्थानावि'ति षष्ठीसमासः। फलितार्ऽथमाह—इयङुवङोः स्थितिर्ययोरिति। 'यत्रेयङुवङौ निष्पद्येते तत्रैवाऽयं निषेधः, यत्र त्वपवादेन बाध्येते, तत्र न निषेध' इत्येतदर्थं 'स्थान'ग्रहणम्।

---

बृहच्छब्दरत्नः

अजादौ विभक्तौ रादेशेन तिसृचतस्त्रोर्बाध एव स्यादिति दिक्। विक्रियमाणपदाऽनारूढत्वाद्विरोधमाशङ्क्याऽऽह—फलितेति।

निष्पद्येते इति। 'क्वचिदि'ति शेषः। इयङुवङ्भ्यां शब्दविशेष आक्षिप्यते। तदेवाऽऽह-तत्रैवेति। तथा च 'हे श्रीः' 'हे भ्रूरि'त्यादौ निषेधसिद्धिः। 'श्रियौ' 'भ्रुवावि'त्यादावियङुवङोः प्रवृत्तत्वात्। एतेनेयङुवङ्भ्यां श्रूयमाणप्रत्ययनिरूपिताऽङ्गाऽऽक्षेप इत्यपास्तम्। सम्बुद्धिनिरूपिताऽङ्गे इयङाद्यभावात्। इयङुवङ्सत्ताया अनिमित्तत्वेन, तदाक्षिप्तार्ऽथस्याऽप्यनिमित्तत्वाच्च। शाब्दमर्थमुपपाद्य फलितमाह—यत्र त्विति। तथा च आध्यानम् आधीः, प्रध्यानं प्रधीः, तयोः सम्बुद्धौ न निषेधः। 'आध्यौ' 'प्रध्य' इत्यादौ यणः सत्त्वात्।

इत्येतदर्थमिति। अन्यथा 'इयङुवङोरस्त्री'ति ब्रूयात्। 'इयङुवङोः सम्बन्धिनौ यावीकारोकारौ'। सम्बन्धश्च स्थान्यादेशभाव एव। अन्तरङ्गत्वात्, 'स्थानिवदादेश' इति ज्ञापकात्, अन्यस्याऽसम्भवात्, 'अस्त्री'ति ज्ञापकात्, 'स्त्रिया' इत्यादिनिर्देशाच्च। न च ङिदाम्रो विकल्पस्य सत्त्वेन नदीनिषेधाऽऽरम्भसामर्थ्येनोक्तार्ऽथलाभे किं 'स्थान'ग्रहणेनेति वाच्यम्। 'अतिश्रियां ब्राह्मणानाम्' 'अतिभ्रुवां ब्राह्मणानाम्' 'अतिश्रिये ब्राह्मणाय' 'अतिभ्रुवे ब्राह्मणाये'त्यादावियङुवङोः सत्तायां निषेधस्य चारितार्थ्यात्। नदीनिषेधप्रवृत्तिकाले अस्मिन्नेव प्रयोगे इयङादिप्रवृत्तियोग्यतायाः सत्त्वात्। वचनसामर्थ्येनेदृशाऽर्थस्यैवोचितत्वेन, प्रयोगाऽन्तरग्रहणे मानाऽभावात्। न चाऽत्र विकल्पाऽऽपत्तिः। ङिदाम्-निरूपिताऽङ्गस्य स्त्रीवाचकत्वाऽभावात्। न चैवं निषेधस्याऽप्यप्रवृत्तिः। तत्राऽङ्गाऽऽक्षेपकाऽभावात्। अङ्गसञ्ज्ञायां 'न लुमते'तिनिषेधाऽप्रवृत्तेर्भाष्यादिसंमततया पूर्वमुपपादितत्वेनाऽऽङ्गत्वस्य सूपपादत्वाच्च। एवञ्च 'प्रकृष्टा धीर्यस्या' इति विग्रहे

---

लघुशब्दरत्नः

चो हेतौ। षष्ठीसमास इति। इयङादिस्थित्यधिकरणत्वेन क्वचिद् दृष्टावित्यर्थः। तेन 'हे श्रीरि'त्यादौ निषेधसिद्धिः।

**वामि** ( १।४।५ )। यद्यपि प्रकृतो निषेधोऽनेन विकल्प्यते इति प्राञ्चः, तथाऽपि निषेधविकल्पे विधिविकल्प एव फलति। तथा च लाघवात्स एव सूत्रार्थ उचित इत्याशयेनाऽऽह—**वा नदीसञ्ज्ञौ स्त इति**। **ङिति ह्रस्वश्च** ( १।४।६ ) इति सूत्रेऽप्येवमेव। **कथं तर्हीति**। [1]उवङ्स्थानत्वेन नदीत्वाऽभावात् ह्रस्वोऽनुपपन्न इत्याक्षेपः। **बहव इति**। केचित्तु वामि (१।४।५) इत्यतो वाग्रहणमिहाऽपकृष्य[2], व्यवस्थितविभाषाञ्चाऽऽश्रित्य समादधुः। तन्मन्दम्। तथा सतीह '[3]न'ग्रहणस्य, 'वामी इत्युत्तरसूत्रस्य च वैयर्थ्याऽऽपत्तेः। अन्ये तु 'सामान्ये नपुंसकमि'ति कथं चित्समादधुः।

---

**बृहच्छब्दरत्नः**

इयङा 'धी'शब्दस्याऽऽक्षेपेण 'प्रधी'शब्दाऽवयवे धीशब्दे उक्तनिषेधान्नदीत्वं न। अत एव कप् न। 'प्रकृष्टा धीरि'ति विग्रहे तु[4] 'धी'शब्दनिमित्तकनिषेधेन प्रत्यासत्तिन्यायात्, येन नाप्राप्तिन्यायाच्च 'प्रधी'शब्दनिमित्तकनदीसञ्ज्ञा निषेद्धुमशक्या। यद्यपि 'ङिति ह्रस्वश्चे'ति सूत्रपर एव भाष्यग्रन्थ इति प्रतीयते, तथापि सर्वनदीनिषेधप्रकरणविषयो बोध्यः। न च 'प्रतिषेध'पदेन भाष्ये व्यवहाराऽनुपपत्तिः। 'ङिति ह्रस्वश्चे'त्यत्राऽपि निषेधाऽनुवृत्तेः सत्त्वात्। तदाह—**यद्यपि प्रकृत इति**।

**लाघवादिति**। नञः स्वरितत्वाऽकल्पनेन, 'सञ्ज्ञा'-'सञ्ज्ञाऽभाव' इति कोटिद्वयाऽकल्पनेन[5] चेति भावः। किञ्च 'ङिति ह्रस्वश्चे'ति सूत्रे ह्रस्वांऽशे नदीसञ्ज्ञाया अप्राप्तत्वेन नञो निवृत्तिस्तदंशे आवश्यकीति ध्वनयितुमाह—**ङिति ह्रस्वश्चेतीति**। **नदीत्वाऽभावादिति**। अवयवस्य, समुदायस्य चेत्यर्थः। यत्तु 'सुभ्रु' इत्यस्य क्रियाविशेषणत्वान्न दोष' इति। तन्न। 'हे' इत्यस्याऽनन्वयात्। धात्वर्थफलेनाऽभेदाऽन्वययोग्यस्यैव द्वितीयाऽन्तत्वनपुंसकत्वाऽङ्गीकराच्च। अन्यथा दण्डादीनामपि तदापत्तौ,

---

**लघुशब्दरत्नः**

**ह्रस्वोऽनुपपन्न इति**। नेयङ (१।४।४) इत्यत्रेयङादिनाऽङ्गाऽऽक्षेपाद्यत्र नदीकार्याऽऽश्रयेऽङ्गे बाधकाऽबाधितेयङादिसत्ता क्वचित्प्रयोगे दृष्टा, तस्य, तदवयवस्य च निषेध इति भावः। [6]**कथं चिदिति**। अनेन सीताविरहिणो रामस्य वाक्ये सीताया एव विवक्षितत्वेन

---

[1] 'उवङ्स्थानित्वेन' इति घ. पाठः।

[2] 'आकृष्य' इति घ. ङ. पाठः। स च 'अपकृष्ये'ति शोधितश्च केनापि।

[3] 'नञ् ग्रहणस्य' इति मुद्रितः पाठः।

[4] 'धाशब्द' इति ख. पाठः।

[5] 'कोटिद्वयकल्पनेन च' इति क. ख. पाठः।

[6] **'कथञ्चिदिति**। 'पितुरि'त्येतत्साहचर्येण 'सुभ्रु' इत्यस्य मातरित्यर्थे एव कवितात्पर्यादिति भावः' इति घ. पाठः। अयं च पाठः प्रक्षिप्तोभाति, अन्यत्राऽनुपलम्भात्।

न षट् (४।१।१०) 'स्त्रियां यदुक्तं तन्न भवती'ति व्याख्यानादनन्तरो ङीबिव व्यवहितष्टावपि निषिद्ध्यते इत्याशयेनाऽऽह–ङीप्टापौ नेति।

राः पुंवदिति। रैशब्दस्य स्त्रीलिङ्गताया अपि स्मरणादिति भावः। तथा च क्षीरस्वामी–'रात्येनं राः। स्त्रीत्येके' इति। 'स्त्रियां नौस्तरणिस्तरि-रि'त्यमरः।

इत्यजन्ताः स्त्रीलिङ्गाः।

---

बृहच्छब्दरत्नः

सर्वोपस्रवः स्यादिति वक्ष्यामः। यदुक्तमिति। अत एव 'अजाद्यतष्टाप्,' 'टाबृचि,' 'पादः,' 'अन्यतरस्यां ङीप्,' 'ऋन्नेभ्य' इत्येव सिद्धे ङीप्रकरणमध्ये विजातीयटाबुक्तिः। सा हि निषेधसूत्रे टापोऽपि बुद्ध्यारोहाऽर्था। प्रथमष्टाबुपात्तस्त्रीत्वे एव। द्वितीयस्तु तदन्तस्य स्त्रीत्वे इति पुनष्टाप्ग्रहणाज्ज्ञाप्यते।

इत्यजन्ताः स्त्रीलिङ्गाः।

---

लघुशब्दरत्नः

इदमप्यप्रयोजकमिति सूचितम्। 'नञ्घटितमनित्यमि'ति तु भाष्याऽनुक्तत्वान्न लक्ष्य-संस्कारोपयोगि।

इत्यजन्ताः स्त्रीलिङ्गाः।

---

## अथाऽजन्तनपुंसकलिङ्गप्रकरणम् ।

**अतोऽम् (७।१।२४)** । स्वमोरिति । अमोऽम्विधानन्तु[1] लुग्बाधनाऽर्थम् । अम् स्यादिति । एतच्च प्राचामनुरोधाद्व्याख्यातं, 'संयोगान्तलोपो झल'इत्यभिप्रायेण वा । वस्तुतस्तु 'म्' इत्येव पदच्छेदो, लाघवात् । तत्र सोर्मे कृते 'ज्ञानमि'ति सिद्धम् । द्वितीयैकवचने तु आदेः परस्य (१।१।५४) इत्यकारस्य मकारे कृतेऽन्त्यस्य मस्य संयोगान्तलोपे सिद्धमिष्टम् ।

यत्तु वदन्ति—'एवं सति सुपि च (७।३।१०२) इति दीर्घत्वं स्यादि'ति । तन्न । सन्निपातपरिभाषाविरोधात् । यदपि 'दीर्घविधौ सा न प्रवर्त्तते' इति । तदपि न । रुधादिभ्यः श्नम् (३।१।७८) श्नान्नलोपः (६।४।२३) इति सूत्रयोः 'सुपि चे'ति दीर्घत्वे सन्निपातपरिभाषाप्रवृत्तेर्भाष्यकृता ध्वनितत्वात् । कैयटेनोपपादितत्वाच्च । यदप्याहुः—'अतिजरसमिति न सिद्ध्येदि'ति । तदपि न । द्वितीयैकवचने हि अतोम् (७।१।२४) इति बाधित्वा परत्वाज्जरसि कृते, सन्निपात-

---

**बृहच्छब्दरत्नः**

[2]वस्त्विति । पदच्छेदे, 'मत' इति न्यासे च लाघवम् । एवञ्च 'एङ्ह्रस्वादि'ति सूत्रे हल्ग्रहणं नाऽनुवर्त्त्यं, वैयधिकरण्याऽन्वयाऽभावश्च, 'एङ्साहचर्येण ह्रस्वाऽन्ताऽङ्गस्य ग्रहणमि'त्याद्यर्थाऽभावश्चेति महल्लाघवम् । उपपादितत्वादिति । एतेन 'कष्टाये'ति ज्ञापनकल्पितवाक्यं न यमात्रविषयम्, अपि तु 'सुपि चे'त्येतद्विषयकम् । अत एव 'एङ्ह्रस्वात्सम्बुद्धेरि'ति सूत्रे हल्ग्रहणाऽननुवृत्तावमकारलोपे, 'सुपि चे'ति दीर्घे, 'कुण्डामि'ति स्या'दिति भाष्योक्तं सङ्गच्छते' इति परास्तम् । उक्तभाष्यस्य पूर्वपक्षस्थत्वेन, भाष्याऽन्तरविरोधेन च, 'य'शब्दा-

---

**लघुशब्दरत्नः**

झल इत्यभिप्रायेणेति । एकवाक्यतया झल एव लोप इत्यभिप्रायेणेत्यर्थः । संयोगान्तलोप इति । झल्ग्रहणस्य तत्राऽपकर्षेऽपि वाक्यभेदेन सम्बन्धः । तेन च पूर्ववाक्यस्य यण्व्यतिरिक्तेऽझल्यपि क्वचित्प्रवृत्तिरिति भावः । सन्निपातेति । ह्रस्वाऽकारसंनिपातेन जातस्य तद्विघातकत्वाऽयोगादिति भावः । परत्वाज्जरसीति । परे तु 'जरायाः (७।२।१०१)

---

[1] तुः घ. पुस्तके एवास्ति ।

[2] 'वस्त्विति' इति क. ख. पाठः । 'वस्तुतस्तु' इत्यस्य प्रतीकोऽयमिति ध्येयम् ।

परिभाषया लुकोऽप्रवृत्तौ रूपसिद्धिः स्पष्टैव। प्रथमैकवचने तु 'अतिजरमि'त्येवेष्यते, सन्निपातपरिभाषया जरसादेशस्याऽप्रवृत्तेः। 'अत' इति तकार उच्चारणाऽर्थः। भसञ्ज्ञायामिति। सुडनपुंसकस्य (१।१।४३) इति पर्युदासेनाऽसर्वनामस्थानत्वादिति भावः।

### बृहच्छब्दरत्नः

ऽतिरिक्तस्थले परिभाषाया अनित्यत्वाऽऽश्रयणे फलाऽभावाच्चोपेक्षणीयत्वात्। 'अमि'ति च्छेदे आह—अत इतीति।

### लघुशब्दरत्नः

इति सूत्रोक्तेन[1]'अतिजरांसीत्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरसि'ति भाष्यप्रामाण्येन पूर्वविप्रतिषेधात् पूर्वं विभक्त्यादेशप्रवृत्तिः, [2]अधिकविभक्त्यपेक्षजरसादेशाऽपेक्षया विभक्त्यादेशानामन्तरङ्गता वा[3] [4]अवश्यं [5]वाच्या[6]। अन्यथा शिभावात्पूर्वमेव जरसः प्रवृत्तौ, नुमा तस्य विप्रतिषेधविचाराऽसङ्गतिः स्पष्टैव। [7]अत एव टाङसि (७।१।१२) इति सूत्रे कैयटेनोक्तं—'भाष्यकारस्तु सन्निपातपरिभाषया जरसादेशमनभ्युपयन् 'अतिजरेण' 'अतिजरादि'ति भाव्यं, न तु 'अतिजरसिनः' 'अतिजरसादि'ति गौरवमुद्भावितवानि'ति। भवद्रीत्या परत्वात्पूर्वं जरसादेशे, इनाद्यप्राप्त्या, तदभावपक्षे तस्याऽप्राप्त्या 'परिभाषया जरसादेशमनभ्युपयन्नि'त्यस्याऽसङ्गतिः स्पष्टैवेत्युच्यते, तदा [8]अत्राऽप्यन्तरङ्गत्वादतोऽमि, तया [9]परिभाषया जरसभाव एवोचितः। न च तत्र नाऽकारान्तसन्निपातलक्षणमेवाऽजादित्वं, किन्तु तदभावेऽपि, एषा तु सन्निपातलक्षणविधिप्रवृत्तिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति वाच्यम्। मानाऽभावात्। टाङसि (७।१।१२) इति सूत्रस्थेन 'अतिजरेणे'त्यतद्विषयककैयटेन विरोधाच्च। एवञ्च जरा-

[1] 'अतिजरांसी'ति पाठ इति भावप्रकाशः। 'अजरांसी'ति तु पाठः सर्वत्र दृश्यते।

[2] 'अधिकविभक्तित्वज्ञानसापेक्षजरसादेशाऽपेक्षया' इति पाठ' इति भावप्रकाशः।

[3] 'अधिकविभक्त्यपेक्षया' इति क. ख. घ. पाठः। तत्र अधिका=व्यापिका विभक्तिर्यस्मिन्निमित्तत्वेन सः—अधिकविभक्तिः=जरसादेशः, तदपेक्षयेत्यर्थः' इति भावप्रकाशः।

[4] 'अन्तरङ्गत्वाद्वा' इति मुद्रितेषु पाठः।

[5] 'अन्तरङ्गताऽऽवश्यं वाच्या' इति क. घ. पाठः।

[6] 'भाव्या' इति क. पाठः।

[7] 'अत एव' इत्यादिः 'असङ्गतिः स्पष्टैव' इत्यन्तः पाठः क. ख. नास्ति। घ. तु. कुण्डलितः। शेखरस्थत्वात्।

[8] 'अत्रापि पूर्वविप्रतिषेधेन, अन्तरङ्गत्वाद्वा अतोऽमि, तया परिभाषया जरसभाव एवोचित इति वदन्ति। अत इतीति' इति क. ख, पाठः। 'अन्तरङ्गत्वाद्वा' इति क. नास्ति।

[9] 'परिभाषया' इति मुद्रितेषु त्रुटितम्।

**यस्य (६।४।१४८)। इश्च अश्च यं, तस्य। तदाह—इवर्णाऽवर्णयोरिति। औङः श्यामिति। विभक्तित्वाऽपेक्षया 'श्यामि'ति स्त्रीलिङ्गनिर्देशः।**

**जश्शसोः (७।१।२०)। जसा साहचर्यात् शसपि सुबेव गृह्यते। तेनेह न—'कुण्डशो ददाति'।**

**शि (१।१।४२)। 'शी'त्यविभक्तिको निर्देशः। महासञ्ज्ञाकरणं पूर्वा-**

---

### बृहच्छब्दरत्नः

कुण्डश इति। 'जश्शस' इति वक्तव्ये 'जश्शसोरि'ति निर्देशः समाहारद्वन्द्वगर्भैकशेषबोधनाऽर्थः। तथा चोपक्रमस्थजसद्वयोपादानसामर्थ्यादत्र साहचर्यस्यैव प्राबल्यम्। शसद्वयोपादानन्तु सारूप्यसम्पादनाऽर्थम्। अत एव 'एकश' इत्यादिनिर्देशाः सङ्गच्छन्ते।

---

### लघुशब्दरत्नः

शब्दविषयं 'परत्वादिनादीन्बाधित्वा जरसि'त्यादि मूलम्, अत्रत्यमनोरमा च [1]प्राचामनुसारेणेति। तदाह—[2]प्रथमैकवचने त्विति। तत्राऽपीत्यर्थः। अत इतीति। न तु तपरसूत्रप्रवृत्त्यर्थ इत्यर्थः। नपुंसके ह्रस्वाऽवश्यम्भावाद्व्यावर्त्त्याऽप्रसिद्धेरिति भावः।

[3]ननु तकारस्योच्चारणाऽर्थत्वे, 'मि'ति च्छेदे, सन्निपातपरिभाषया [4]दीर्घवारणं कथमिति चेन्न। यादृशशब्दसंनिपातेन सोरादेशस्तस्य विनाशेनाऽदोषात्। अत एव 'दाक्षिरि'त्यादौ अङ्गसञ्ज्ञा [5]'अकारान्तप्रकृतिप्रत्ययसन्निपातकृता अनया परिभाषयाऽल्लोपस्य[6] निमित्तं न स्यादि'त्याशङ्क्य, अनित्यत्वेन भाष्ये समाहितम्। अतस्तस्य संनिपातस्य शब्दोपात्तत्वाऽऽग्रहाऽभावात्। भाष्यकृता तु मादेशे सन्निपातपरिभाषया सम्बुद्धिलोपाऽप्राप्तिभिया 'अम्'-इत्येव च्छेदमङ्गीकृत्य एङ्ह्रस्वात् (६।१।६९) इत्यत्र व्यधिकरणाऽन्वयहल्पदाऽनुवृत्तिरूपगौरवं फलमुखत्वान्न दोषाऽऽवहमित्यनुसृतम्। परिभाषाऽनित्यत्वेन तु न समाहितम्। तस्याऽगतिकगतित्वात्। किञ्च तस्याऽनित्यत्वे दीर्घाऽऽपत्तिः। इदमपि तत्रैव भाष्ये ध्वनितमित्यलम्।

विभक्तित्वापेक्षयेति। तद्गतविभक्तित्वाऽऽश्रयणेन 'विभक्तावि'ति विशेष्याऽपेक्षयेत्यर्थः। सुबेवेति। 'निरनुबन्धकपरिपाषया तद्धितशसोऽपि ग्रहणमिति न वाच्यम्। येना-

---

[1] 'प्राचामनुसारेणेति बोध्यम्' इति घ. पाठः। स च भावप्रकाशविरुद्धः। 'आहुरिति शेष' इति तत्रोक्तेः।

[2] 'एकवचने त्विति' इत्येव मुद्रितेषु पाठः।

[3] 'ननु' इत्यारभ्य 'अलम्' इत्यन्तः प्रक्षिप्तो घ. पाठः।

[4] 'दीर्घवारणमशक्यमिति चेन्न' इति घ. पाठः।

[5] 'अकारान्त' इति घ. नास्ति। क. ख. त्वयं पाठ एव नास्ति।

[6] 'अलोपस्य' इति घ. पाठः।

ऽऽचार्याऽनुरोधात्। **अन्यतमस्य त्विति**। एवं च 'सामान्यादिषु अन्यतमदि'त्यादिप्रयोगाः प्रामादिका एवेति भावः। **सोरमादेशे इति**। यत्तु प्राचोक्तं—'स्वमोरमादेशे [1]कृते वा जरसि'ति। तद्भाष्यविरुद्धम्। एवञ्च 'अजरसं वर्त्तते' इति, 'हे अजरसमि'ति चाऽपशब्द एव। 'अजरसं पश्ये'ति तु[2] प्रयोगः साधुः। किन्तु 'अमादेशे कृते जरसि'ति प्राच उक्तिरेवाऽसाध्वी। परत्वाज्जरसो न्याय्यत्वात्। पूर्वविप्रतिषेधे प्रमाणाऽभावात्। फलाभावाच्च[3]।

**सान्त महतः संयोगस्य (६।४।१०)**। 'सान्ते'ति पृथक्पदं लुप्तषष्ठीकं 'संयोगस्ये'त्यनेन समानाधिकरणमिति व्याचष्टे—**सान्तसंयोगस्येति**। **उपधाया इति**। 'उपधा'ग्रहणं पूर्वमात्रोपलक्षणम्। पारिभाषिकाऽर्थस्येहाऽसम्भवात्। **मासश्छन्दसीति**। 'मास्'इत्यस्य तकारः स्याद्भादौ प्रत्यये, छन्दसी'ति वाक्याऽर्थः। 'माद्भिः शरद्भिर्दुरोदरं तवे'त्युदाहरणम्।

**ह्रस्वो नपुंसके (१।२।४७)**। इह ह्रस्वश्रुत्या 'अच' इत्युपस्थितम्। तेन प्रातिपदिकस्य विशेषणात्तदन्तविधिरित्याह—**अजन्तस्येति**। 'प्रातिपदिकस्याऽच' इति तु न व्याख्यातम्। सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वात्। 'सुवाग्ब्राह्मणकुलमि'त्यादावतिव्याप्तेश्च।

**सन्निपातेति**। अवर्णमाश्रित्य कृतो यादेशः कथं तल्लोपे निमित्तं स्यात्।

---

**बृहच्छब्दरत्नः**

पृथक् पदमिति। एकपदत्वन्तु न। महत्संयोगयोरभेदाऽयोगात्, 'हंससुपिसावि'त्यादौ पूर्वपदेऽपि दीर्घाऽऽपत्तेः, सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वेन, महद्विशेषणवैय्यर्थ्याऽऽपत्त्या च, सान्ते एवाऽन्वयाऽङ्गीकारे

---

**लघुशब्दरत्नः**

ऽनुबन्धेन सानुबन्धकत्वं तदनुच्चारणे एव तत्प्रवृत्तेः। अनुरोधादिति। तेन स्वशास्त्रस्य प्रामाण्यज्ञापनमिति भावः। तद्भाष्येति। सन्निपातपरिभाषया विभक्त्यादेशे जरसभावस्य जरायाः (७।२।१०१) इति सूत्रे भाष्ये स्पष्टमुक्तेरिति भावः। [4]पश्येति त्विति। तुनाऽत्राऽरुचिर्बोधिता। [5]तद्वीजं तूक्तम्। अवर्णमिति। ह्रस्वत्वविशिष्टमवर्णमित्यर्थः। यादेशे

---

[1] 'कृते' इति अग्रे दृष्ट्वाऽत्रापि योजितमस्माभिः।

[2] तुः ङ नास्ति। 'अजरसं पश्येति तु प्रयोगस्तु' इति घ. पाठः।

[3] 'फलाऽभावाच्च' इति मुद्रितेषु त्रुटितम्।

[4] 'पश्येति' इत्यादिः 'उक्तमि'त्यन्तः पाठः क. ख. नास्ति। अतोऽयं प्रक्षिप्तः पाठः।

[5] 'तद्वीजमुक्तम्' इति घ. पाठः।

**एतच्च एओङ्सूत्रे, इको गुणवृद्धी (१।१।३) इति सूत्रे च भाष्ये ध्वनितं, कैय्यटेन प्रतिपादितं, शब्दकौस्तुभे निष्कर्षं प्रापितमिति, तत एवाऽवधार्यम्। एवञ्च याधातौ 'शुभंया'शब्दस्य क्लीबस्य ङयि '[1]शुभंये' इति यन्माधवेनोदाहृतं, तन्नाऽऽदर्त्तव्यमिति भावः।**

बृहच्छब्दरत्नः

द्वन्द्वसमासाऽनापत्त्या चाऽन्वयाऽयोगाच्च। पृथक्पदत्वाऽपेक्षया प्रकाराऽन्तरं तु न चमत्कृतम्। भाष्ये ध्वनितमिति। 'क'प्रत्ययकित्त्वस्योत्तराऽर्थत्वेन चारितार्थ्येऽपि, टकः कित्त्वं वर्णैकदेशानां ग्रहणाऽभावे, आकारे गुणाऽभावे च ज्ञापकम्। अन्यथा अतो लोपे, अकारे गुणे, पररूपेण रूपसिद्धौ किन्तेनेति स्थितम्। नन्विदमयुक्तम्। एकाऽऽदेशस्य पूर्वाऽन्तत्वेन 'आतो धातोरि'त्यापत्तेः। कित्त्वे तु 'आतो लोप इटि चे'त्यालोपे, धात्वनवयवत्वादप्रवृत्तिः स्पष्टैवेत्यत आह-कैयटेनेति। सन्निपातपरिभाप्रवृत्तौ न फलभेदः।

ननु आकाराऽवयवीभूतस्याऽतो लोपे पुनरप्यतो लोप एव स्यात्, परिभाषाप्रवृत्त्यङ्गीकारे दीर्घश्च न स्यादित्याशङ्क्याह-शब्दकौस्तुभे इति। न पुनरतो लोपस्य प्रवृत्तिः, लक्षणस्य सकृदेव प्रवृत्तेः। प्रथमाऽल्लोपस्य स्थानिवत्त्वात्, चिणो लुङ्न्यायेनाऽसिद्धत्वाच्च, 'आर्द्धधातुकोपदेशे' इति व्याख्यानेन पुनरल्लोपाऽप्रवृत्तेश्च। एतेनाऽऽकारस्य गुणेऽल्लोपेनैव भाव्यमिति परास्तम्। यादेशे ह्रस्वत्वविशिष्टमत्वं

लघुशब्दरत्नः

'अत' इत्यनुवृत्तेः। तत्र यद्यपि 'कष्टाये'ति निर्देशप्रापितदीर्घेण ह्रस्वत्वांऽशो निर्वर्तितस्तथाऽप्यवर्णत्वमादेशेऽनुवर्त्तते, तदपि चेल्लोपेन निवर्त्तेत,[2] तर्हि परिभाषाविरोधः स्पष्ट एवेति भावः। भाष्ये इति। गाधातोष्टे, [3]गुणेन अकारे, आर्द्धधातुकोपदेशेऽदन्तत्वाऽभावादतो लोपाऽभावेऽपि, पररूपेण सामगस्य सिद्धौ, गापोष्टकः [4]कित्त्वकरणाल्लिङ्गादाकारस्य गुणो नेति व्यर्थं तत्रेग्ग्रहणमिति भाष्ये उक्तम्। कैय्यटेनेति। 'सामगाये'त्यत्राऽसति टकः कित्त्वे, एकादेशस्य पूर्वाऽन्तत्वेन ग्रहणादाकारस्य धात्ववयवत्वेन आतो लोपः स्यात्। कित्त्वे तु आतो लोपः (६।४।६४) इत्यालोपे धात्वनवयवत्वात् [5]अप्रवृत्तिरित्याशङ्क्य सन्निपातपरिभाषयाऽकित्त्वेऽपि न आतो लोप इति तेन प्रतिपादितम्। शब्दकौस्तुभे इति। पूर्वोक्तभावश्च तत्रोक्तः। परे तु 'व्याप्याऽत्वजाति-यञादिसन्निपातनिमित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम्।

[1] 'शुभँय्ये' इति लिखितेषु पाठः।
[2] 'निवर्त्त्येत' इति घ. पाठः।
[3] 'गुणे' इति क. पाठः।
[4] 'कित्करणात्' इति घ. मुद्रितेषु च पाठः।
[5] 'अप्राप्तिः' इति घ. पाठः।

**स्वमोर्नपुंसकात्** (७।१।२३)। अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य, किमः कादेशस्य च बाधकः। परत्वाद्धि त्यदाद्यत्वेऽम्भावेन 'तं कुलमि'ति स्यात्। वृद्ध्यौत्त्वेति। 'अतिसखीनि कुलानी'त्यत्र सख्युरसम्बुद्धौ (७।१।९२) इति णिद्वद्भावाद् वृद्धिः प्राप्ता। 'वारिणी'त्यत्र तु अच्च घेः (७।३।११९) इत्यौत्त्वम्, 'प्रियक्रोष्टूनी'त्यादौ तृज्वद्भावः प्राप्तः।

ननु नुम्नुटोः को विशेषः। तत्राऽऽह—नामीति। नुमस्तु अङ्गभक्तत्वात्, तस्मिन् सति दीर्घो न स्यादिति भावः।

---

**बृहच्छब्दरत्नः**

प्रयोजकम्। 'अत' इत्यनुवृत्तेः। तत्र यद्यपि 'कष्टाये'तिनिर्देशप्रापितदीर्घेण ह्रस्वत्वांऽशो निवर्त्तितस्तथाऽप्यत्वमादेशेऽप्यनुवर्त्तत एव, तदपि चेल्लोपेन निवर्त्तेत, तर्हि परिभाषाविरोधः स्पष्ट एव। तं कुलमिति। द्वितीयैकवचनमेतत्। 'वारीणी'तिप्रथमाबहुवचने 'जसि चे'ति गुणं बाधित्वा नित्यत्वान्नुम्।

वारिणीत्यत्रेति। न चैवमत्वग्रहणमेवाऽस्त्विति वाच्यम्। 'पति'शब्दस्य त्रिलिङ्गत्वेन नपुंसके सप्तम्येकवचने 'पतिनी'त्यस्याऽसिद्ध्यापत्तेः। अत्वस्याऽन्वाचयशिष्टतया अप्राधान्येन विप्रतिषेधस्याऽयुक्तत्वाच्च। 'वृद्धि'शब्दविहितवृद्धावेव विप्रतिषेधप्रवृत्तिरित्यर्थज्ञापनार्थमौत्त्वग्रहणस्याऽऽवश्यकत्वाच्च। अत एव 'अतिराभ्यामि'त्यादौ नुमं बाधित्वा परत्वादात्वे सिद्धे 'इकोऽची'तिसूत्रे 'अची'तिपदं 'न लुमते'ति निषेधस्याऽनित्यत्वे ज्ञापकमि'ति भाष्याद्युक्तं सङ्गच्छते। नुमि नलोपेऽपि तस्याऽसिद्धत्वेन इकारस्याऽऽत्त्वाऽप्रवृत्तौ भाष्यमसङ्गतमिति स्पष्टमेव। एतेन 'दीर्घग्रहणेनैव सिद्धे गुणवृद्धिग्रहणं व्यर्थमि'त्यपास्तम्। दीर्घशब्दविहितदीर्घे एव प्रवृत्त्यङ्गीकारेऽसम्भवः। 'अतिसखीनी'त्याद्यसिद्धिश्च। किञ्च 'धातॄणी'त्यादिसिद्ध्यर्थं 'गुण'ग्रहणमावश्यकम्। वृद्धिसाहचर्येण गुणग्रहणेऽपि 'गुणशब्देन विहितो यो गुण' इत्यर्थो बोध्यः। अत एव 'द्वयोः कुलयोरि'त्यादौ त्यदाद्यत्वं बाधित्वा नुम् नेत्यलम्।

---

**लघुशब्दरत्नः**

सन्निपातपरिभाषायाश्च 'सन्निपातलक्षणविधिप्रवृत्तेः प्राक् तन्निमित्तभूतो यः सन्निपातस्तद्विघातकस्य स्वाऽतिरिक्तस्य स्वयमनिमित्तमि'त्यर्थं इत्याहुः।

पूर्वविप्रतिषेधेनेति। 'अन्तरङ्गानपी'त्यस्योपलक्षणमिदम्। अत्रत्यवार्त्तिकाऽनुरोधेन त्वेतदुक्तम्। 'त्यदादिभ्यश्चेति वक्तव्यमि'ति हि तत्र वार्त्तिकम्। तं कुलमिति स्यादिति। 'द्वितीयैकवचने' इति शेषः। प्रथमैकवचने तु 'सं कुलमि'ति स्यादिति बोध्यम्।

**तृतीयादिषु (७।१।७४)। पुंवदिति।** अर्थान्नुम्-ह्रस्वयोः प्रतिषेधोऽयम्। **प्रवृत्तिनिमित्तभेदादिति।** पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तं, फले तु फलत्वव्याप्यजातिः, वृक्षविशेषप्रभवत्वं वा। उभयथाऽपि पुं-नपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति भावः।

**अस्थिदधि (७।१।७५)। अतिदध्नेति।** दधि अतिक्रान्तेनेत्यर्थः। यत्तु 'प्रियदध्ने'ति,—उरःप्रभृतिषु दधि-मधु-शालीति[1] पाठान्नित्यः कप् प्राप्तः, भाष्यकारप्रयोगादेव 'प्रियदधि'शब्दे न भवती'त्याहुः। तच्चिन्त्यम्। भाष्ये तादृशपाठस्य बहुषु पुस्तकेष्वनुपलम्भात्। स्त्रियान्तु[2] 'प्रियदध्न्या' 'प्रियदध्न्यै' इति केचित्। तन्न। सन्निपातपरिभाषया, बहिरङ्गपरिभाषया च ङीपोऽप्रवृत्तेः। तस्मात्पुंसीव स्त्रियामपि 'अतिदध्ने'त्यादिकमेव बोद्धव्यम्।

**सुधिनी इति।** परत्वान्नुमा इयङ् बाध्यते। **सुधियेति।** पुंवत्त्वपक्षे नुमोऽभावादियङ्। 'बह्व्यः श्रेयस्यो यस्य तत् बहुश्रेयसी कुलम्। अत्र

---

**बृहच्छब्दरत्नः**

तृतीयादिषु। भाषितः पुमान् यस्मिन्नर्थे। अभिधेयेऽन्यपदार्थे बहुव्रीहिः। ततोऽर्शआद्यच्। तत्राऽभिधेया विशेष्या व्यक्तिर्न गृह्यते। तत्र क्लीबत्वाऽसम्भवात्। सूत्रस्य वैयर्थ्याऽऽपत्तेश्च। किन्तु प्रकारतया भासमानो धर्मः। तत्र 'विशेष्य एव प्रकारतया भासमानधर्म' इति नाऽऽग्रहः। सङ्कोचे मानाऽभावात्। अत एव 'भानु-वारि' इति समाहारद्वन्द्वे इतरयोगे पुंस्त्वात् पुंवद्भावो भवत्येव। किञ्च समूहत्वं भानुत्व-वारित्वमेव। अपि च वर्त्तिपदार्थे फलशालित्वादिकमादायैव समूहस्य कर्मत्वादिकम्। तदुभयसाधारणीभूतधर्ममादायैकवचनं, 'ब्राह्मणानां शतमि'त्यादौ यथा। अत एव पुंयोग-महत्त्वादिभानेऽपि पुंवद्भावः। विस्तरस्तु समासे बोध्यः। 'युवोरनाकावि'त्यादिसौत्रप्रयोगाश्चेहाऽनुकूलाः। केचित्तु सूत्रकारप्रयोगादेव सूत्रे साधुत्वमाहुः।

नुम्ह्रस्वयोरिति। अत एव पुंवद्वचनं चरिताऽर्थम्। प्रकृतस्यैव निषेधे 'ने'त्येव ब्रूयात्। न चैवं 'नब्विषस्याऽनिसन्तस्ये'ति स्वरोऽपि न स्यादिति

---

**लघुशब्दरत्नः**

नुम्ह्रस्वयोरिति। पुंसि विहितस्य भावस्याऽतिदेश्यस्याऽभावात् ह्रस्वनुमोर्निषेधः, अतिदेशसामर्थ्यात्, व्याप्तिन्यायाऽऽश्रयणाच्चेति भावः। 'नब्विषयस्ये'ति स्वरस्य तु न निषेधो, भिन्नकर्त्तृत्वात्। 'विषय'पदेन नपुंसकत्वाऽभावेऽपि तत्प्रवृत्त्यङ्गीकाराच्च। नुमोऽभावा-

---

[1] 'शालिरिति' इत्यपि क्वचित्पाठः। स तु शोभनः। 'शालिः' इति काशिकायां पाठात्।

[2] तुः घ. नास्ति।

नपुंसकह्रस्वत्वं न, 'ईयसो बहुव्रीहेर्ने'ति ह्रस्वमात्रस्य प्रतिषेधादिति श्रीपति-पुरुषोत्तम-विश्वरूपादयः। अन्ये तु 'उपसर्जनह्रस्व एव निषिद्ध्यते, नपुंसक-ह्रस्वत्वन्तु स्यादेव, 'बहुश्रेयसि' 'बहुश्रेयसिनी' इत्याद्याहुः।

'स्नुः प्रस्थः सानुरस्त्रियामि'त्युभयलिङ्गः 'सानु'शब्दः, तस्य नपुंसकत्वे रूपमाह—स्नूनि-सानूनीति। पुंसि शम्भुवत्।

---

**बृहच्छब्दरत्नः**

वाच्यम्। ईदृशे विषये नित्यनपुंसकत्वाऽभावेन स्वराऽप्रवृत्तेः। वस्तुतस्तु 'विषय'-पदाऽनुवृत्तौ सत्यां पुनर्विषयपदोपादानेन आतिदेशिकलिङ्गाऽन्तरयोगेऽपि स्वर-प्रवृत्तिः। ध्वनितञ्चेदम् 'ई च द्विवचने' इति सूत्रस्थभाष्यादावित्यग्रे निरूप-यिष्यामः। अन्ये त्विति। अत्राऽरुचिबीजन्तु वार्त्तिके 'ने'ति वक्तव्ये पुंवद्वचनं व्यर्थम्। तद्धि अभावाऽतिदेशेन नपुंसकह्रस्वनिषेधाऽर्थम्। तत्र 'गोस्त्रियोरि'ति-सूत्रे पाठसामर्थ्यादुपसर्जनह्रस्वोऽपि निषिध्यते। न च 'बहूनि श्रेयांसि यस्यां से'ति विग्रहे ङीपोऽपि निवृत्त्यापत्तिः। 'ईयसन्ताद्विहितो यः स्त्रीप्रत्ययस्तदन्ताऽन्ते बहुव्रीहौ पुंवदि'ति हि वार्त्तिकाऽर्थः। न चेयसन्तो यो बहुव्रीहिरित्यर्थः। 'अति-बहुश्रेयसी'शब्देऽपि न ह्रस्वः। तदादिनियमे 'बहुश्रेयसी'शब्दस्य स्त्रीप्रत्ययाऽन्त-त्वाऽभावात्। 'अतिबहुश्रेयसी'शब्दस्य नपुंसकत्वे ह्रस्वत्वं सम्भवत्येव। बहु-व्रीहिनिमित्ताऽन्तरङ्गनिषेधेन बहिर्भूतनिमित्तकह्रस्वस्य निवारयितुमशक्यत्वात्।

---

**लघुशब्दरत्नः**

दिति। ह्रस्वाऽभावेन नाभावाऽभावाच्चेयङिति भावः। उपसर्जनह्रस्व एवेति। 'ईयसो बहुव्रीहौ पुंवदि'ति हि भाष्ये पठितम्। 'ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुंवत्, पुंविषयस्य ईकारस्य यथा न ह्रस्वस्तथाऽस्यापी'ति तदर्थः। 'ईयसन्ताद्विहितो यः स्त्री-प्रत्ययस्तदन्ताऽन्तबहुव्रीहौ[1] पुंवदि'ति तु नाऽर्थः। बहुव्रीहेः पुंवत्त्वेऽपि, उपसर्जनस्य 'श्रेयसी'-शब्दस्य स्त्रीप्रत्ययाऽन्तत्वाऽनपायेन, उपसर्जनह्रस्वस्य दुर्वारताऽऽपत्तेः। एवञ्च प्रत्यासत्त्या स्त्रीप्रत्ययत्वनिमित्तक'गोस्त्रियोरि'त्यस्यैव तेनाऽभावाऽतिदेश इति भावः। तदेवाऽर्थतोऽत्र पठितम्। न च 'ने'त्येव सिद्धे पुंवद्वचनं व्यर्थम्। वार्त्तिकेषु [2]लाघव-गौरवविचाराऽभावस्य तत्र तत्र भाष्ये ध्वनितत्वादिति बोद्धव्यम्।

इत्याद्याहुरिति। अत्राऽरुचिबीजन्तु ईयसश्च (५।४।१५६) इति सूत्रे भाष्ये 'ईयस उपसर्जनस्त्रीप्रत्ययस्य दीर्घत्वं वक्तव्यम्। बहुश्रेयसी। पुंवद्वचनात्सिद्धमि'त्युक्तम्। तेनाऽस्य [3]नपुंसकह्रस्वनिवृत्त्यर्थत्वं लभ्यते। अन्यथा वचनेन वचनप्रत्याख्यानाऽसङ्गतिः। मम तु

---

[1] 'तदन्तबहुव्रीहौ' इति मुद्रितेषु पाठः।

[2] 'गौरवलाघव' इति क. पाठः।

[3] 'नपुंसकह्रस्वत्वनिवृत्त्यर्थत्वम्' इति घ. ङ. पाठः।

**प्रियक्रोष्टूनीति** । यत्तु प्राचा 'प्रियक्रोष्टूणी'त्युक्तम् । तत्पूर्वविप्रतिषेधपर-भाष्य-वार्तिक-विरुद्धम् । यत्तु व्याचख्युः-'विभाषा तृतीयादिष्वचि (७।१।९७) इत्येतद्विषयको विप्रतिषेधः, भाष्ये 'प्रियक्रोष्टुने अरण्याये'त्यस्यैवोदाहृतत्वादि'ति । तन्न । उदाहरणस्य सङ्कोचकत्वे मानाऽभावात् । यदाहुः-'न चोदाहरणमादरणीयमि'ति । किञ्च पूर्वविप्रतिषेधस्य वैकल्पिकतृज्वद्भावमात्रविषयकत्वे तत्र तृज्वद्भावग्रहणं व्यर्थमेव स्यात् । 'प्रियक्रोष्टुने'-

बृहच्छब्दरत्नः

'अम्बाऽर्थनद्योर्ह्रस्व' इति तु न निषिध्यते । मानाऽभावात् । तृतीयैकवचने तु नुमा 'बहुश्रेयसिना' । ङित्सु नित्यत्वान्नुमि, आडाद्यभावे 'बहुश्रेयसिने' इत्यादि । एवं 'ग्रामणी'शब्दस्याऽपि सप्तम्येकवचने आमं बाधित्वा नित्यत्वान्नुमि 'ग्रामणीनी'त्येव । न चाऽऽमोऽपि नित्यत्वम् । नुमः समुदायाऽवयवत्वेन 'नी'शब्दाऽवयवत्वाऽभावात् । न चाऽऽमि पूर्वविप्रतिषेधेन नुटः प्राप्तत्वेन, नुमो नित्यत्वाऽभाव इति वाच्यम् । 'यस्य च लक्षणाऽन्तरेण निमित्तं विहन्यते न तदनित्यमि'तिन्यायात् । 'नी'शब्द-विभक्त्योरानन्तर्यमाश्रित्य जातस्याऽऽमस्तद्विघातकनुमि अनिमित्तत्वेन, सन्निपातपरिभाषयोभयोरनित्यत्वे, प्रकृतिप्रत्ययविशेषाऽपेक्षत्वेन, लिङ्गाऽपेक्षत्वेन च समत्वे, परत्वादामि, नुटि च 'ग्रामणीनामि'त्येव न्याय्यमिति तत्त्वम् ।

**व्यर्थमेव स्यादिति** । यत्तु 'प्रियक्रोष्ट्रणे' इत्यादिव्यावृत्त्याऽर्थवत्त्वमि'ति । तन्न । 'विप्रतिषेधे परमि'ति सूत्रस्थ-नियमपक्षबोधित-सकृद्गताविति न्यायाऽऽश्रयणे नुमोऽप्राप्तेः । न च विधिपक्षबोधितपुनःप्रसङ्गविज्ञाने नुमः प्राप्तिरस्त्येवेति वाच्यम् । नित्यतृज्वद्भावविषयतया पूर्वविप्रतिषेधव्याख्याने पक्षद्वयेऽपि साफल्यस्य वक्तुं शक्यत्वेन, पाक्षिकतत्कथनस्याऽयुक्तत्वात् । वृद्ध्यादौ कृते नुमोऽप्राप्तेः सत्त्वेन तत्साहचर्यात् तृज्वद्भावे कृते नुमोऽप्राप्तावेव पूर्वविप्रतिषेधस्य सत्त्वाच्च । किञ्च पूर्वविप्रतिषेध-परविप्रतिषेधयोः समानजातीयत्वेन, विप्रतिषेधसूत्रे पूर्वविप्रति-

लघुशब्दरत्नः

मते नपुंसकह्रस्वनिवृत्त्यर्थमावश्यकं तदिति, युज्यते एव तेनाऽस्य प्रत्याख्यानम् । दीर्घत्वं हि प्रत्यासत्त्योपसर्जनह्रस्वत्वाऽपवादः । सामान्यतो ह्रस्वमात्राऽपवादत्वे हि प्रत्याख्यानाऽसङ्गतिरिति दिक् । पूर्वविप्रतिषेधपरभाष्येति । अङ्गाऽधिकारे तदन्तविधेः सत्त्वेन तदन्तग्रहणेन[1] 'यदागमा' इति न्यायेन नुम्विशिष्टस्य ग्रहणेऽपि, सूत्रे षष्ठीनिर्देशाऽभावान्निर्दिश्यमानस्य[2] नुमा व्यवधानमि'त्यस्याऽभावेऽपि पूर्वविप्रतिषेधसामर्थ्यात्सकृद्गतिन्यायेन पुनस्तृज्वत्वाऽभावः । अत्राऽनयोर्यौगपद्याऽसम्भवेन विरोध इति भावः । इत्यस्यैवेति । अन्यथा

[1] 'तदन्तग्रहणे' इति घ. पाठ ।
[2] 'निर्दिश्यमानस्य तु' इति घ. पाठः ।

त्यादेर्विप्रतिषेधं विनाऽपि पक्षे सुसाधत्वात् । न च 'प्रियक्रोष्ट्रे'त्यादिनिवृत्तिस्तत्फलम् । पुंवद्भावपक्षे तस्य दुर्वारत्वात् । स्वयमपि [1]तथैवोदाहृतत्वाच्च । न च समाहारद्विगौ 'पञ्चक्रोष्टुने'त्यादौ पुंवद्भावाऽभावात्तत्र तृज्वद्भावनिवृत्तिः फलमिति वाच्यम् । एवमपि भाष्योदाहरणाऽसामञ्जस्यात् । उपलक्षणं तदिति चेत् । हन्तैवं 'प्रियक्रोष्टूनी'त्येवोपलक्ष्यतां भाष्योदाहृतप्रातिपदिकांऽशाऽनुग्रहायेति दिक् । सुल्वेति । पुंवत्त्वपक्षे नुमभावाद्यण् । सुल्लुनेति । ओः सुपि (६।४।८३) इति यणं बाधित्वा परत्वान्नुम् ।

बृहच्छब्दरत्नः

षेधानां पठितत्वेन चेष्टवाचिपरशब्दमादाय सूत्राऽक्षरैः पूर्वविप्रतिषेधानां भाष्यकृता क्रोडीकृतत्वाच्च, पुनः प्रसङ्गविज्ञानपक्षे पूर्वविप्रतिषेधप्रवृत्त्यङ्गीकारे पूर्वविप्रतिषेधेन नुमि कृतेऽपि, पुनःप्रसङ्गविज्ञानेन तृज्वद्भावस्य दुर्वारताऽऽपत्तावुक्तदोषाऽनुद्धारात् । अपि च सन्निपातपरिभाषया क्रोष्टुशब्दा-ऽजादिविभक्त्योः संश्लेषविघातेन त्वदुक्तदूषणं दूरापास्तमिति दिक् ।

प्रियक्रोष्टुनेतीति । 'प्रकृतिविशेषाऽपेक्ष-नाभावा-ऽपेक्षतया नुमि'ति मतेनेदम् । क्वचित्तु चतुर्थ्यन्तं पठ्यते । पुंवद्भावाऽभावादिति । प्रत्यासत्तिन्यायात् पुंभावभाजो नपुंसकशब्दस्य प्रयोगाऽन्तरे पुमांसमाचक्षाणस्य यद्रूपं समानाकारं, समानाऽर्थकं

लघुशब्दरत्नः

प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागो निर्बीजः स्यादिति भावः । पक्षे=तृज्वत्त्वाऽभावपक्षे ।

उदाहृतत्वाच्चेति । न च 'प्रियक्रोष्ट्रणे' इत्यादिव्यावृत्त्या चारितार्थ्यम् । 'प्रियक्रोष्टु-ए' इत्यवस्थायां नुम्-तृज्वत्त्वयोः प्राप्तयोः, परत्वात्तृज्वत्त्वे, सकृद्गतिन्यायेन नुमभावसिद्धेः । पुनःप्रसङ्गविज्ञानाऽऽश्रयेण वचनाऽऽरम्भाऽपेक्षया 'सकृद्गती'त्याश्रित्य वचनाऽनारम्भस्यैव लघुत्वादिति भावः । ([2]समाहारद्विगाविति—समाहारद्वन्द्वस्याऽप्युपलक्षणम्) । पुंवद्भावाभावादिति । भाषितपुंस्कत्वाऽभावादिति भावः । इत्येवेति । इत्यपीत्यर्थः । प्रातिपदिकांशेति । प्रातिपदिकांऽशस्याऽप्यनुग्रहायेत्यर्थः ।

इति दिगिति । दिगर्थस्तु 'यद्यपि चतुर्थ्यन्तोदाहरणपरभाष्यप्रामाण्यात् पुंवत्त्वपक्षेऽनभिधानेन तृज्वत्वाऽभावकल्पना न्याय्या, भाष्यकृता हि सूत्रत्रयस्य, [3]वार्त्तिकस्य च प्रत्याख्यानायाऽऽश्रितस्य शब्दानां नियतविषयकत्वस्य सूत्रारम्भेऽप्यावश्यकत्वद्योतनाय पूर्वविप्रतिषेधवार्त्तिके तदुदाहृतं, तथाऽपि 'न चोदाहरणमादरणीयमि'ति न्यायेन सर्वनामस्थानविषय-

[1] एवकारो मुद्रितेषु त्रुटितः ।
[2] () एतदन्तर्गतो घ. कुण्डलितः पाठः ।
[3] 'वार्त्तिकस्य च' इति घ. पाठः । अन्यत्र तु नास्ति ।

**यदिगन्तमिति। एतच्च 'रा दाने' इति धातौ 'अतिरि ब्राह्मणकुलमि'ति प्रक्रम्य माधवेन स्पष्टीकृतम्। अन्ये तु 'सुद्यो'शब्दो भाषितपुंस्कः, स एवेदानीमिगन्तः, एकदेशविकृतस्याऽनन्यत्वात्, अतः पुंवद्भावो भवती'त्याहुः। तथा च रूपमालादौ पुंवद्भाव उदाहृतः। तस्मादेजन्तेषु[1] क्लीबेषु पुंवद्भावो**

**बृहच्छब्दरत्नः**

च तदेवाऽतिदिश्यते। तस्याऽत्राऽसम्भवेन क्लीबस्य भाषितपुंस्कत्वाऽभावश्च।

माधवेनेति। यत्त्वत्राऽरुचिबीजं 'प्ररााणामि'त्यादावात्त्वोक्तिः, 'आदेच उपदेशेऽशिती'ति सूत्रस्थभाष्यप्रामाण्यात्, 'रायो हली'त्यात्त्वस्यैजन्ते एव प्रवृत्तेरि'ति। तत्तुच्छम्। एजग्रहणाऽनुवृत्तेर्विच्छिन्नत्वेनाऽनुवृत्तौ मानाऽभावात्। 'धातु'ग्रहणस्याऽप्यनुवृत्त्यापत्तौ दोषस्य स्पष्टत्वाच्च। 'इकोऽचि विभक्तावि'तिसूत्रस्थन्यायाऽनुगृहीत-सिद्धान्तभाष्य-विरोधेन त्वदुक्तभाष्यस्य तद्विपरीतस्य प्रौढिवादपरताया आवश्यकत्वाच्च। अरुचिबीजन्तु मूले एव स्पष्टम्। एतेन 'रायो हली'त्यत्र विवक्षितसप्तमी'त्यपास्तम्। 'प्ररि' 'प्ररीणामि'त्याद्यसिद्ध्यापत्तेश्च। एतेन 'नद्या'दिग्रहणस्य नियमाऽर्थत्वेन 'नुडि'ति न्यासेनैवेष्टसिद्धौ, नुड्विधौ 'ह्रस्व'ग्रहणं चिन्त्यप्रयोजनमि'त्यपास्तम्। अन्ये त्विति। अत्राऽरुचिबीजन्तु आनुपूर्वीभेदाच्छब्दभेदस्याऽऽवश्यकत्वे भाषितपुंस्कत्वस्याऽशास्त्रीयत्वेनाऽतिदेशो दुर्लभः। अत एव 'वयस्तासौ नित्याऽनिट्त्वाऽभावात्थलि नित्यमिडि'ति सिद्धान्तः सङ्गच्छते। किञ्च पुंवद्भावेनाऽभावाऽतिदेशात् ह्रस्वनिषेधः क्रियते इति भाष्यादौ स्पष्टम्। निषेधश्च प्रसक्तस्यैव, न जातस्येत्यपि भाष्यादौ स्पष्टं, तन्त्राऽन्तरसिद्धं, युक्तिसिद्धञ्च। एवञ्च ह्रस्वप्राप्तिकाले इगन्तरूपनिमित्ताऽभावात् पुंवद्भावस्य प्राप्तिरेव नास्ति, ह्रस्वनिष्पत्त्यनन्तरन्तु तन्निषेधः कर्त्तुमशक्य इति परिभाव्यताम्। अपि च स्वनिमित्ताऽविघाते 'अनादि'शब्दादौ चरितार्थत्वेन कथं स्वनिमित्तविघाते प्रवृत्तिः। अत एव नकारस्थाने उदात्तगुणविशिष्टाऽचः प्राप्तौ निमित्तभूव्यचकत्वस्य

**लघुशब्दरत्नः**

कताऽप्यस्य न्याय्या। 'उदाहृताऽतिरिक्तोदाहरणाऽभाव' इत्येवंपरतया नाऽऽदरणीयमि'ति तदर्थ इति बोध्यम्। एकदेशविकृतस्येति। स च न्यायोऽशास्त्रीयस्याऽप्यतिदेशकोऽशास्त्रीयविकारे चेति 'प्राग्दीव्यतः (४।१।८२) इति सूत्रस्थभाष्यसंमतत्वादिति भावः। पुंवद्भाव इति। तेन 'सुन्दरभार्य' इत्यादौ जातनिवृत्तेरपि दृष्टत्वेनाऽत्रापि तेन जातह्रस्वनिवृत्तिः। ननूपजीव्यविरोधेन ह्रस्वाऽनिवृत्तिः। अत एव समासस्य(६।१।२२३)इति सूत्रे भाष्ये यतोऽनावः (६।१।२१३) इत्यनाव इति प्रतिषेधो 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदि'त्यस्य ज्ञापक उक्तः। 'नाव्यमि'त्यादौ आदिर्नकारो न स्वरयोग्यो, यश्चाऽऽकारस्तद्योग्यो, नासावादि-

[1] 'एजन्ते' इति ङ. पाठः।

माधवमते नाऽस्ति। मतान्तरे त्वस्ति। अतः 'प्रद्यवा' 'प्रराया' 'सुनावे'-त्यादि प्राचोदाहृतमपि नाऽतीव [1]दुष्यति।

इत्यजन्ता नपुंसकलिङ्गाः।

---

## अथ हलन्तपुँल्लिङ्गप्रकरणम्।

लिडिति। लिह आस्वादने। क्विप्। लिट्सु लिट्त्स्विति। ढस्य जश्त्वेन डः। तस्य खरि च (८।४।५५) इति चर्त्वेन टः। तस्याऽसिद्धत्वात् डः सि (८।३।२९) इति [2]पक्षे धुट्। [3]चर्त्वेन तकारः। न पदान्ताट्टोः

---

बृहच्छब्दरत्नः

विनाशेनाऽऽद्युदात्ताऽप्राप्तौ 'यतोऽनाव' इति सूत्रस्थाऽनाव इति प्रतिषेधो व्यर्थः। स च 'स्वरविधौ व्यञ्जनमविद्यमानवदि'ति परिभाषाया ज्ञापक इति 'समासस्ये'ति-सूत्रस्थभाष्योक्तं सङ्गच्छते। एतेन 'ग्रामणी'शब्दादावन्तरङ्गत्वात् ह्रस्वत्वस्य दुर्वा-रत्वेनेदृशो जातस्यैव निषेधो युक्त' इत्यपास्तम्। 'उपसञ्जनिष्यमाणोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते' इति न्यायेनाऽकृतव्यूहपरिभाषया च ह्रस्वा-ऽप्रवृत्तेरिति दिक्।

इत्यजन्ता नपुंसकलिङ्गाः।

---

लघुशब्दरत्नः

रिति 'अनाव' इति [4]निषेधोऽनर्थकः। न चाऽऽदिरेव नकार उदात्तगुणविशिष्टाऽन्तरतमाऽच्रूपो-ऽस्तु, 'यदन्तस्य द्व्यच्कस्याऽऽदिरुदात्तगुणकरूपो भवती'ति च यतोऽनावः। (६।१।२१३) इत्यस्याऽर्थ इति वाच्यम्। एवं हि निमित्तभूतद्व्यच्कत्वविनाशादुपजीव्यविरोधेनाऽऽद्युदात्ता-ऽप्राप्तिरिति तदाशय[5] इति चेन्न। [6]माधवाऽनुरोधेनाऽस्य ग्रन्थस्य सत्त्वात्।

इत्यजन्ता नपुंसकलिङ्गाः।

धुडिति। 'डः सि' (८।३।२९) इति सूत्रेऽनुवृत्तं 'पदस्ये'ति व्यधिकरणम्। 'पदाऽव-

---

[1] 'दुष्यतीति' इति ङ. पाठः। [2] 'पक्षे' इति मुद्रितेषु त्रुटितम्।

[3] 'चर्त्वम्' इति ङ. पाठः। [4] 'प्रतिषेध' इति घ. पाठः।

[5] इतोऽग्रे-'एवञ्चाऽयं प्रतिषेधो ज्ञापयति–'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदि'तीत्यु-क्तमिति चेन्न। पुंवत्त्वेन 'स्त्रियाः पुंवदि'त्यादौ स्त्र्यर्थकत्वद्वारा उपजीव्यस्यैव स्त्रीप्रत्ययस्य निवृत्तिदर्शनेन एतद्विषये तस्याऽदूषकत्वादिति भावः' इति घ. पाठः।

[6] 'माधवाद्यनुरोधेन' इति क. पाठः। स च हरिताललेपेन 'माधवे'ति ख. शोधितः।

(८।४।४२) इति ष्टुत्वनिषेधः। 'चयो द्वितीया' इति तु नेह प्रवर्त्तते। चर्त्त्वस्याऽसिद्धत्वात्। एतेन 'ते च प्रत्याहारा एकचत्वारिंशदि'ति प्राचो ग्रन्थं व्याचक्षाणैर्यदुक्तं 'लिट्सु लिठ्स्विति टठाभ्यां रूपद्वयमि'ति, तत् प्रत्युक्तम्। तथा च प्रातिशाख्येऽपि—'ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजमि'ति श्लोके—'अपदान्ते'त्यादिविशेषणं सङ्गच्छते।

**दादेर्धातोर्घः (८।२।३२)।** 'धातोरि'त्यावर्त्तते। तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाऽऽह—उपदेशे इति।

---

बृहच्छब्दरत्नः

तत्प्रत्युक्तमिति। 'प्राङ्ख् षष्ठ' इत्यादिवत् द्वितीयाऽऽदेशो लौकिकोदाहरणे वक्तुं न शक्यते इति भावः। 'वैदिकोदाहरणं साध्यते' इत्यपि वक्तुमशक्यमित्याह—तथा चेति। 'द्वितीय'पदेनैवाऽऽक्षेपात्प्रथमस्य स्थानित्वे लब्धे, 'प्रथम'पदमन्यस्थानिकप्रथमव्यावृत्त्यर्थमि'ति तद्व्याख्यातारः। तथा च धुडभावे विशेषणद्वयाऽसङ्गतिः, धुट्पक्षे त्वेकविशेषणाऽसङ्गतिः। ननूपदेशे इति निर्मूलम्। न च 'धातु'ग्रहणसामर्थ्यात्तल्लाभः। 'दामलिडि'ति प्रातिपदिकव्यावृत्त्या चरितार्थत्वादित्यत आह—धातोरित्यावर्त्तत इति। 'उपदेशे' इति नोक्तम्। गौरवाऽऽपत्तेः। 'धातोरि'त्यस्योत्तराऽर्थत्वाच्च। एतेन 'आदिग्रहणाऽऽवृत्त्योपदेशाऽर्थलाभे 'धातु'ग्रहणं सुत्यजमि'त्यपास्तम्। समासैकदेशस्याऽऽवृत्तेः क्लिष्टत्वाच्च। किञ्च 'धातोरि'त्यस्याऽभावे 'दादेरि'त्यत्र तत्पुरुषः सम्भाव्येत। तथा च[1] 'हदः' 'ह्रादः' 'ह्लादः'

---

लघुशब्दरत्नः

यवस्य[2] सस्ये'त्यर्थ इति भावः। एके द्वितीयमिति। अत्रत्यत्रवार्त्तिककारा इत्यर्थः। अपदान्तभाजमिति। इदम् 'अचर्त्त्वभाजमि'त्यर्थोपलक्षकम्। पदान्ते प्रायो जश्त्वप्राप्त्या चर्त्वं विना चयोऽलाभात्। 'तथा चे'ति वदता मूलकृता अस्याऽर्थस्य सूचनात्। अत एव 'सुगण्ठ् षष्ठ' इत्यादौ भवत्येव। टुगादीनां जस्त्वं प्रत्यसिद्धत्वेन तदप्राप्त्या, चर्त्वस्याऽप्यभावादिति भावः।

धातोरित्यावर्त्तते इति। इदं प्राचामनुरोधेन। 'दादेरित्यावर्त्तते' इति युक्तम्। [3]'धातोर्धातोरि'त्यनेन हि 'औपदेशिकस्य धातोरि'त्यर्थेन दामलिहो व्यावृत्तावपि 'अधोगि'ति

---

[1] 'हद' 'ह्राद' 'ह्लादी' इमे धातवः। एभ्य एव क्विपि सुपि धत्वं स्यादित्यर्थः। यद्वा 'हदो' 'ह्रादो' 'ह्लाद' इति सविभक्तिकान्येवाऽत्र रूपाणि पठचन्ते।

[2] न चाऽत्राऽऽर्थे प्रमाणाऽभावः। 'अट्श्चोतती'त्यत्र धुड्वारणायोक्तस्य 'श्चुत्वं धुटि सिद्धं वाच्यमि'ति वार्त्तिकस्यैव प्रमाणत्वात्।

[3] धातोरित्येकमेव मुद्रितेषु पठचते। द्वितीयन्तु तत्र त्रुटितम्।

बृहच्छब्दरत्नः

इत्यत्रैव घत्वं स्यात्। 'धातु'ग्रहणे तु सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वेन बहुव्रीहिनिर्णयः। यत्तु 'दादिर्यो हकारस्तदन्तो यो धातुरि'ति व्याख्याने न कश्चिद्दोष' इति। तन्न। व्यवहितस्याऽपि दादित्वाऽनपायेनाऽतिव्याप्तेर्वज्रलेपायितत्वात्। अन्यथा 'धुगि'त्यादावपि घत्वाऽनापत्तिः। एकवर्णव्यवधाने एव प्रवृत्तौ न किञ्चिन्मानम्। युक्तञ्चैतत्। अन्यथा पञ्चमीनिर्देशेनैव सिद्धावादिग्रहणवैयर्थ्याऽऽपत्तेः। अत एव 'वा द्रुहे'ति सूत्रे द्रुह्यंशे प्राप्तविभाषे'ति हरदत्ताद्युक्तं, [1]'दृहेः [2]'दर्दर्घी'ति रूपं माधवाद्युदाहृतं च सङ्गच्छते। न चैवमपि 'दामलिडि'त्यत्र ढत्वाऽसिद्धिः, 'घत्वस्याऽसिद्धत्वात् ढत्वं प्राप्नोती'त्याशङ्क्य 'एवं वक्ष्यामि-'होढोऽदादेरि'ति भाष्ये उक्तत्वादिति वाच्यम्। [3]घत्वशास्त्रवैयर्थ्याऽऽपत्त्या शङ्काया एवाऽनुदयेन भाष्यस्य प्रौढिवादपरत्वात्। न च विकल्पः। असमशिष्टत्वात्। 'वा द्रुहे'त्यस्य वैयर्थ्याऽऽपत्तेश्च। भूतपूर्वगत्या ढत्वाऽनन्तरं घत्वप्रवृत्तेर्वक्तुं शक्यत्वेन गुरुभूतन्यासे प्रवृत्तेरयुक्तत्वाच्च। किञ्च 'अदादेरि'तिप्रसज्यप्रतिषेधः, पर्युदासो वा ?। नाऽऽद्यः। वाक्यभेदाऽसमर्थसमासाऽऽपत्तेः। नाऽन्त्यः। हकारस्योकारादित्वेन दोषस्य वज्रलेपायितत्वात्। अपि च 'दर्दर्घी'त्यत्र ढत्वाऽभावाऽर्थं व्यवहितेऽपि निषेधप्रवृत्तिरावश्यकी। तथा च द्रुहेः, 'दामलिडि'ति शुद्धप्रातिपदिके च ढत्वाऽसिद्धिः। ध्वनितश्चाऽयमर्थः पक्षाऽन्तरं वदता भाष्यकारेण।

वस्तुतस्तु 'धातोर्घ' इति सूत्रे 'दादेरि'त्यनुवृत्तिसामर्थ्यात् दादिग्रहणमौपदे-

लघुशब्दरत्नः

न संगृह्येत। 'दादेर्दादेरि'त्यनेन 'उपदेशकालिकदादेरि'त्यर्थकेनोभयं सिध्यति। 'उपदेशकालमि'त्यस्य 'तात्कालिकं लक्षयती'त्यर्थः। 'उपदेशे दादेरि'ति तु [4]फलितोऽर्थः। वाच्याऽर्थत्वे षष्ठ्यन्तस्य सप्तम्या विपरिणामोऽपि कर्त्तव्यः स्यादिति गौरवम्। 'धातोरि'त्यस्यैव लक्षणया तथाऽर्थकस्य 'दादेरि'त्यनेनाऽन्वयेऽपि न क्षतिरित्याशयेन तु मूले 'धातोरि'त्युक्तम्। अत एव भाष्ये 'घत्वस्याऽसिद्धत्वाद् धुगि'त्यत्र ढत्वं प्राप्नोती'त्याशङ्क्याऽपवादत्वेन समाधाय, 'अथवा एवं वक्ष्यामि [5]'हो ढोऽदादेरिति। ततो 'धातोरि'ति। 'दादेरि'ति वर्तते, 'नेति निवृत्तमि'त्युक्तम्। द्रुहेस्तु 'वा द्रुह' इत्यनेन ढत्वस्याऽपि विधानात् 'ध्रुडि'त्यादौ न दोष इति तदाशयः। तत्र 'धातोरि'ति सूत्रे भाष्यकृत्कृत-'दादेरि'त्यनुवृत्तेः [6]फलाऽन्तराऽभावेन तदुपदेशवद्दादिलक्षकं, सामर्थ्यात्। अर्थाऽधिकाराऽनुरोधाच्च पूर्वत्र निषेध्यसमर्पकेऽप्येवम्। अत एव

[1] दृहेर्घातोः दर्दर्घीति रूपं माधवेनोक्तम्।
[2] 'दधृग्धि' इति क. ख. पाठः।
[3] 'घत्वशास्त्राऽवैयर्थ्यापत्त्या' इति क. ख. पाठः।
[4] 'फलिताऽर्थः' इति क. ख. ग. पाठः।
[5] 'होढः—अदादेरिति' इति घ. पाठः। [6] 'फलाऽन्तराऽसम्भवेन' इति घ. पाठः।

**आवृत्तिफलं पृच्छति—उपदेशे किमिति। अव्याप्त्यतिव्याप्तिपरिहारः फलमित्याह—अधोगित्यादिना।**

बृहच्छब्दरत्नः

शिकप्रतिपत्त्यर्थम्। अर्थाऽधिकारात् 'घोऽदादेरि'ति निषेधेऽप्येवमेव। एवञ्च पक्षयोः फले न विशेषः। एतेन 'दादेरित्यनुवर्त्तते' इति भाष्यग्रन्थश्चिन्त्य' इत्यपास्तम्। यत्तु प्राचीनप्रक्रियां व्याचक्षाणपौत्रा आहुः—'दामलिडिति नामधातौ घत्वमिष्टमेव। अत एव भाष्ये 'घोऽदादेरि'त्युच्यते, तत्रेदं न सिद्ध्यति-अधोक्। क तर्हि स्यात्, 'मा स्म धोगि'ति ग्रन्थेनाऽधोगि'त्यसिद्धिमाशङ्क्य 'धातोरि'ति नैषा समानाधिकरणा षष्ठी-'दादेर्धातोरि'ति। का तर्हि। अवयवयोगैषा षष्ठी-'धातोर्दादिरवयव' इति। सा चाऽवश्यमवयवयोगैषा षष्ठी विज्ञेया, उत्तराऽर्था। किं प्रयोजनम्। 'एकाचो बशो भष् झषन्तस्य स्ध्वोरि'ति, इहाऽपि यथा स्यात्-गर्दभयतेरप्रत्ययः—गर्धबिति। यद्यवयवयोगा षष्ठी, 'दोग्धुमि'त्यत्र न प्राप्नोति। एषोऽपि व्यपदेशिवद्भावेन धातोर्दादिरवयवो भवती'ति ग्रन्थेन दोषः परिहृतः। 'धातोरि'त्यावृत्तौ तु 'अधोगि'त्यत्र दोषाऽभावेन वैयधिकरण्याऽन्वयाऽऽश्रयणमसङ्गतं स्यादि'ति। तन्न। 'दादिर्यो हकारस्तदन्तो यो धातुरि'ति सामानाधिकरण्याऽऽश्रयणेनाऽप्यधोगित्युदाहरणे, नामधातौ च घत्वस्य साधयितुं शक्यत्वेन, भाष्यग्रन्थस्य त्वन्मतेऽप्ययुक्तत्वात्। वस्तुतस्त्वेतद्भाष्याऽर्थाऽज्ञानविजृम्भितमेव। पूर्वसूत्रे 'दादेः''धातोरि'त्यनयोर्वैयधिकरण्यसम्बन्धाऽभावेऽपीष्टसिद्धिः, वैयधिकरण्यसम्बन्धस्तूत्तराऽर्थमेवे'त्यर्थबोधनाऽर्थं 'सा चाऽवश्यमवयवयोगैषा षष्ठी विज्ञेया, उत्तरार्थे'ति भाष्यस्य प्रवृत्तत्वात्। 'अधोगि'ति रूपसाधिका अवयवयोगा षष्ठी भष्भावाऽर्थमुत्तरसूत्रेऽवश्यमाश्रयणीया, घत्वाऽर्थन्तु न, 'दामलिडि'त्यादौ घत्वाऽभावाऽर्थं कल्प्यमानोपायेन 'दादेः' 'धातोरि'त्यनयोर्वैयधिकरण्यसम्बन्धाऽभावेनाऽपि तत्सिद्धेरि'ति हि तदर्थः। तदर्थञ्च पितामहचरणोक्तिरेव शरणीकरणीया। पक्षद्वयेऽपि फलैक्यस्य निरूपयितुं शक्यत्वात्। युक्ततरं चैतत्। अन्यथा 'अवश्यं'पदस्य वैयर्थ्याऽऽपत्तेः। किञ्च 'सा चे'त्यादिग्रन्थस्य प्रकृताऽनुपयोगित्वेनाऽसङ्गतताऽऽपत्तेः। तथा हि-किमनेन ग्रन्थेन 'उत्तरसूत्रे वैयधि-

लघुशब्दरत्नः

नामधातुविषये 'दामलिडि'त्यादौ ढत्व-घत्वाऽभावौ सिद्धौ। एवञ्च तदेकवाक्यतया अपवादत्वपक्षेऽपि दादिपदस्योपदेशकालिकदादिलक्षकतोचिता। आवृत्त्याश्रयणन्तु बालानां स्फुटं तत्प्रतिपत्तये इति बोध्यम्। न चोपदेशे इत्येव कुतो नोक्तम्। गौरवाऽऽपत्तेः। 'धातोरि'ति तु 'तद्वाडि'त्यादिव्यावृत्तये उत्तरत्राऽऽवश्यकम्।

अव्याप्तीति। 'अधोगि'त्यादौ सा। ननु 'धातोरवयवो यो दादि'रित्यर्थे इदं सिद्धम्। वैयधिकरण्यञ्च गर्दभयतेरप्रत्यये 'गर्धबि'त्यादौ भष्भावायोत्तरसूत्रे आवश्यकम्। 'दोग्धे'ति व्यपदेशिवद्भावात्सिद्धम्। स्पष्टञ्चेदं भाष्येऽत आह—अतिव्याप्तीति। 'दामलिडि'त्यादौ सा।

बृहच्छब्दरत्नः

करण्याऽन्वयस्य सत्त्वेन लघुभूताऽर्थाऽधिकारलाभाऽर्थं पूर्वसूत्रेऽपि वैयधिकरण्याऽन्वय आवश्यक' इत्यर्थोऽभिप्रेतः, उत 'उत्तरसूत्रस्थवैयधिकरण्याऽन्वयबोधकोपायस्य पूर्वसूत्रेऽपि दुर्वारत्वेन, तादृशाऽन्वय उचित' इत्यर्थोऽभिप्रेतः ?। नाऽऽद्यः। पूर्वसूत्रे वैयधिकरण्याऽन्वयेनाऽर्थाऽधिकारादुत्तरत्राऽन्वय इत्यर्थस्याऽऽपादयितुं शक्यत्वात्। किञ्च तत्राऽऽद्येऽपि 'दादेर्धातोरि'ति सामानाधिकरण्यवादिमते हकारेण सह सामानाधिकरण्यमुत वैयधिकरण्यम् ?। नाऽऽद्यः। 'अधोगि'ति दूषणेन 'दादेर्धातोरि'त्यनयोः सामानाधिकरण्याऽभिप्रेतत्वस्यैवाऽनुमानात्। 'दादेर्धातोरि'त्यनेन पूर्वपक्षे तस्यैव दर्शितत्वाच्च। 'सिद्धान्तिनोभयत्र वैयधिकरण्येनाऽन्वय' इत्यर्थस्य निरूपयितुं युक्तत्वेन, 'धातोर्दादिरवयव' इत्येतावन्मात्रप्रदर्शनस्याऽयुक्तत्वाच्च। अन्त्ये तु 'दादेर्धातोरि'ति सामानाधिकरण्यवादिमतेऽपि 'धातोरवयवो यो हकार' इति वैयधिकरण्याऽन्वयस्य सत्त्वेन शब्दाऽधिकाराऽभावात् उत्तराऽर्थत्वेन कल्प्यमानस्याऽत्रैव कल्पयितुं युक्तत्वात्। द्वितीयेऽप्युत्तरसूत्रे वैयधिकरण्याऽन्वयाऽऽश्रयणे बीजाऽन्तरमुत लक्ष्यसिद्धिर्बीजम् ?। नाऽऽद्यः। तस्य भाष्यकारादिभिरनुपाख्यानात्। नाऽन्त्यः। पूर्वसूत्रेऽप्युदाहृतलक्ष्यसिद्धिबीजस्य सत्त्वेनोत्तरसूत्रपर्यन्तधावनस्य निर्बीजत्वाऽऽपत्तेः। अपि च लक्ष्यं 'गर्धबि'ति प्रयोगः, उताऽधोगिति प्रयोगः ?। नाऽऽद्यः। 'गर्धबि'ति प्रयोगेण पूर्वसूत्रे वैयधिकरण्याऽन्वयस्य साधयितुमशक्यत्वात्। नाऽन्त्यः। 'गर्धबि'ति उपन्यासस्योत्तरसूत्रे वैयर्थ्याऽऽपत्त्या भाष्यविरोधाऽऽपत्तेः। 'अधोगि'त्युदाहरणबलेन 'पूर्वसूत्रे वैयधिकरण्याऽन्वय' इत्यर्थस्य पूर्वमुपपादितत्वेन पौनरुक्त्यापत्तेश्च। अपि च 'किं प्रयोजनमि'ति प्रश्नस्य, 'गर्धबि'त्युत्तरस्य च निरालम्बनताऽऽपत्तिः। पूर्वोपन्यस्तौपदेशिकप्रयोजनसम्भवेन[1] तस्याऽसम्भवात्। नामधातुपर्यन्तधावनस्य निर्बीजत्वाऽऽपत्तेश्च। अस्मद्रीत्या तु पूर्वसूत्र इवाऽऽवृत्त्योत्तरसूत्रेऽपि समानाधिकरण्यसम्बन्धाऽऽश्रयणेन 'अधोगि'त्युपन्यस्तरूपसिद्धिरित्यभिप्रायेण प्रश्नः। 'उत्तरसूत्रे 'गर्धबि'ति रूपसाधनाऽर्थं वैयधिकरण्येनैवाऽन्वयः, आवृत्तिश्च नाऽऽश्रयणीया, घत्वविधायकन्तु नामधातौ नेष्टमेव, भष्भावस्तु नामधातावौपदेशिकधातौ च प्रवर्त्तते एवे'त्युत्तरम्। अत एव 'इहाऽपि यथा स्यादि'ति भाष्यं सङ्गच्छते। युक्ततरञ्चैतत्। अन्यथोत्तरसूत्रे 'गर्धबि'त्यस्यैवाऽऽवृत्तिदूषणाऽर्थं पूर्वसूत्रे घत्वसहित-'दामलिगि'त्युपन्यासस्य युक्तत्वात्। मन्मते तु 'सा चे'त्यादिग्रन्थेन पूर्वसूत्रे वैयधिकरण्याऽन्वयस्याऽनावश्यकता, 'धातोरि'त्यावृत्त्या 'दामलिडि'ति ढत्वसहितप्रयोगसिद्धिश्चेति ध्वनितमिति सर्वं [2]सफलम्।

लघुच्छब्दरत्नः

न च प्रागुक्तभाष्योत्तरमधोक्सिद्धये वैयधिकरण्याऽन्वयपर्यन्तं भाष्यकृतोऽनुधावनं व्यर्थमिति वाच्यम्। 'दादेरिति वर्त्तते' इत्यस्योक्तमाशयमजानत 'एवमपि घोऽदादेरित्युच्यते, तत्राऽधोक्

[1] 'प्रयोजनम्' इति ख. पाठः। [2] 'सुफलम्' इति क. ख. पाठः।

बृहच्छब्दरत्नः

ननु 'सा चाऽवश्यमवयवयोगा षष्ठी'त्यादिभाष्यात् घत्वविधायके 'धातु'-पदमेवोपदेशलक्षकमस्तु, आवृत्त्योपदेशलक्षकत्वमयुक्तमेव, किञ्च 'धातु'पदस्य भ्वादावेव लक्षणाऽस्तु, तथा च वैयधिकरण्यसम्बन्धाऽनाश्रयणेऽपि 'अधोगि'-त्यादिसिद्धिः स्पष्टैवेति चेन्न। सूत्राऽऽरूढतात्पर्यग्राहकस्य युक्तत्वात्। अत एव न्यूनतादोषो न। किञ्च भष्भावविधायकसूत्रे धात्वर्थक-धातु-पदस्याऽऽवश्यकत्वात्। अत एव 'तद्वाद् 'घुडि'त्यादौ भष्भावो ने'ति वक्ष्यते। एतेन 'किञ्चे'त्यादिकमपास्तम्। किञ्च '[1]दर्दर्धी'त्यादौ घत्वाऽनापत्तिः। गणनिर्दिष्टस्य यङ्लुकि निषिद्धत्वात्। अपि च 'अधोगि'त्यत्र 'दुहि'त्यस्याऽऽनर्थक्याद्घत्वाऽप्राप्तिः। किञ्च भ्वादौ 'दुहि'त्युकारविशिष्टस्य पाठेन, गुणादिकृते, 'मा स्म धोक्' 'अधोगि'त्युदाहरणद्वयेऽपि घत्वाऽनापत्तौ, 'वृश्चिकभयात्पलायमानस्य सर्पदंशनमि'ति न्यायाऽऽपातः। तस्माद्भष्भावविधायके धात्वर्थक'धातु'पदेन वैयधिकरण्येनैव सम्बन्धः। घत्वविधायके त्वावृत्त्या उपदेशलक्षणायाः सत्त्वेन सामानाधिकरण्ये, वैयधिकरण्ये च 'दादेर्धातोरि'त्यनयोः फलाऽविशेषान्न विशेष इति 'सा चे'त्यादि-'गर्धबि'त्यन्तेन निरूपितम्। तत्र फलवैलक्षण्यं पुनराशङ्कते भाष्ये-'यद्यवयवे'त्यादिना। यद्यपि 'धुगि'त्यादौ भष्भावो न प्राप्नोतीत्येवाऽऽशङ्कितुं युक्तं, तथाऽपि 'प्रथमोपस्थितघत्वनिर्णयेनैव तन्निर्णय' इत्यभिप्रायेण तदनुक्तिः। यद्यप्युपन्यस्त-'मा स्म धोगि'त्यत्रैव घत्वं न प्राप्नोती'त्याशङ्का कर्त्तुं युक्ता, तथापि दादेर्धातोर्घवचनं भष्भावाऽर्थमात्रमिति न भ्रमितव्यं, किन्त्वन्याऽर्थमपीति वक्तुमुदाहरणाऽन्तरोपन्यास-'एषोऽपी'ति। तथा च पक्षद्वयेऽपि फलाऽवैलक्षण्यात्सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वेन पूर्वसूत्रे सामानाधिकरण्येनैव सम्बन्धः। स च विनिगमनाविरहादुभयत्रापि। तेन 'उपदेशे दादिधातोर्हान्तस्य घो भवति, स च भवन् ह्स्यैव'। 'धातोर्हस्ये'ति मूलग्रन्थस्तु फलिताऽर्थकथनपरतया व्याख्येयः। ध्वनितञ्चेदं 'ससजुषोरि'तिसूत्रे मनोरमायाम्। [2]ननूक्तभाष्यं नाऽर्थनिर्णायकं, 'गर्धबि'त्यत्र 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमि'ति परिभाषया भष्भावाऽप्रवृत्तेः। 'धातोर्यत्कार्यं तद्धातुप्रत्यये भवती'ति परिभाषाऽर्थस्य 'ग्रो यङि' 'अचि विभाषे'त्यादौ हरदत्तादिभिर्वर्णितत्वात्। न चाऽत्र 'मृजेर्वृद्धिरि'त्यादाविव धातोः स्वरूपग्रहणं नेति वाच्यम्। 'स्वरूप'पदस्याऽवयुत्याऽनुवादत्वात्। अत एव 'घृतस्पृग्भ्यामि'त्यादावनुदात्तस्य[3]

लघुशब्दरत्नः

न सिद्ध्यती'ति शङ्कायामुत्तरसूत्राऽर्थमपि प्रसङ्गान्निर्णेतुं, दादिपदलक्षणायामधोगित्यस्याऽसाधारणफलत्वाऽभावं दर्शयितुञ्च तथोक्तेः। अत एवाऽग्रे वैयधिकरण्यस्योत्तराऽर्थमावश्यकत्वोक्त्या इहाऽर्थमनावश्यकत्वं भाष्ये ध्वनितं सङ्गच्छते इत्यलम्।

[1] 'दर्दर्घि' इति क. ख. पाठः।

[2] 'ननूक्तभाष्यतात्पर्यार्थनिर्णायके' इति क. पाठः।

[3] 'च ऋदुपधस्य' इति क.ख.ग. पाठः।

एकाचो बशो भष्। (८।२।३७) झलीति निवृत्तमिति। यत्तु प्राचोक्तम्—'प्रातिपदिकसञ्ज्ञस्य तु झलि परतः, पदान्ते चे'ति। तत्प्रामादिकमेव। 'अधोक्' 'अधोग्' 'अजर्घा' इत्याद्यसिद्धयापत्तेः। प्रातिपदिकग्रहणस्याऽप्रकृतत्वाच्च। तत्र झलो निमित्तत्वाऽनुपयोगाच्च। 'धुग्भ्यां' 'धुक्षु' इत्यादौ 'पदान्ते' इत्येव सिद्धेः। यदपि तत्पौत्रेण व्याख्यातं—'झलि तु[1] परे प्रातिपदिकसञ्ज्ञस्यैवे'त्यादि। तदपि निर्मूलं, निष्फलञ्चेत्युपेक्ष्यम्।

भष्भाव इति। जश्त्व-चर्त्वयोरसिद्धत्वात्ताभ्यां प्रागेवेति भावः। षत्वचर्त्वे इति। चर्त्वस्याऽसिद्धत्वात् पूर्वं षत्वं, ततश्चर्त्वमिति भावः।

वा द्रुह (८।२।३३)। द्रुहेर्दादित्वान्नित्यं प्राप्ते, अन्येषामप्राप्ते उभयत्र विभाषेयम्। ननु द्रुहादयो दिवादिषु अनेनैव क्रमेण पठ्यन्ते, तत्र 'वा द्रुहा-

---

बृहच्छब्दरत्नः

चर्दुपधस्येत्यम् न। स्पष्टञ्चेदं 'मृजेर्वृद्धिरि'ति सूत्रे भाष्ये इति चेन्न। 'अप्रशानि'ति रुत्वनिषेधेन पदान्तविषये परिभाषाऽप्रवृत्तेः। यदि हि 'मो नो धातोरि'त्यादौ परिभाषाप्रवृत्तिः स्यात्तदा निषेधाऽसङ्गतिः स्पष्टैव। 'भ्रौणहत्ये'ति धर्मिग्राहकमानेन, 'अनियमे नियमाऽर्थे'ति सिद्धान्ताच्चेति प्राचीनग्रन्थपरिशीलनशालिन एव विभावयन्तु।

निर्मूलमिति। एतेन 'ह्रस्वादङ्गादि'ति सूत्रात् 'अङ्गादि'त्यनुवर्त्तते। तच्च षष्ठ्या विपरिणम्यते। अङ्गं च द्विविधम्, धातुरूपं, प्रातिपदिकरूपञ्चे'ति वृद्धोक्तं युक्तमेवे'ति प्राचीनप्रक्रियां व्याचक्षणपौत्रोक्तमपास्तम्। स्वरितत्वकल्पन-विभक्तिविपरिणामादीनां निर्मूलत्वात्। निष्फलञ्चेति। 'चेन 'तद्वाट्' 'तद्वाड्भ्यामि'त्यादौ दोषग्रस्तं च। अत एव 'एकाचो बशो भषि'ति सूत्रे 'धातोरि'त्यनुवृत्तौ, वैयधिकरण्येन सम्बन्धे च न किञ्चित्प्रयोजनम्, 'झषन्तस्यैकाचोऽवयवो यो बश् तस्य

---

लघुशब्दरत्नः

तत्प्रामादिकमिति। 'धुग्भ्यामि'त्यादेः पदान्तत्वादेव सिद्धेरिति भावः। उपेक्ष्यमिति। एतेन 'एकाचो बशः' (८।२।३७) इति सूत्रे ह्रस्वादङ्गात् (८।२।२७) इत्यतोऽङ्गादित्यनुवर्त्तते। अङ्गञ्च द्विविधं–धातुरूपं, प्रातिपदिकरूपञ्च। तत्र 'धातोः पदान्ते एव, प्रातिपादिकस्य झलि, पदान्ते चे'ति प्राचामाशय' इत्यपास्तम्। स्वरितत्वकल्पन-विभक्तिविपरिणामादीनां निर्मूलत्वान्निष्फलत्वाच्च। 'तद्वाट्' 'तद्वाड्भ्यामि'त्यावावतिव्याप्तेश्चेति दिक्।

---

[1] तुः मुद्रितेषु त्रुटितः।

दीनामि'त्येवाऽस्तु, दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिः, तदन्तर्गणो द्रुहादिरस्तु। मैवम्। तथा हि सति यङ्लुकि न स्यात्। 'निर्दिष्टं यद्गुणेन चे'ति निषेधात्—'द्रोध्रुक्', 'द्रोध्रुट्'।

इग्यणः (१।१।४५)। यणः स्थाने इति। विधिप्रदेशेषु सूत्रशाटकवद्भाविसञ्ज्ञाऽऽश्रयणमिति भावः।

---

बृहच्छब्दरत्नः

भषि'ति व्याख्यानेनैवेष्टसिद्धेरि'ति मन्दप्रतारणमपास्तम्। दोध्रुगिति। विचि तु 'दोध्रोक्' 'दोध्रोडि'ति बोध्यम्। लडादौ 'दोद्रोग्धि' 'दोद्रोढी'त्यादि बोध्यम्। न चाऽत्र 'श्तिपा शपे'ति निषेधाद्भष्भावो न स्यादिति वाच्यम्। 'अजि'त्यनेन यत्रैकाजित्यर्थो गम्यते तत्रैव निषेधप्रवृत्तेः स्वीकारात्। सर्वत्र निषेधस्वीकारे तु अर्थस्यैव निमित्तत्वेनेष्टसिद्धौ 'एकाचो बशो भषि'त्यादावेकग्रहणवैयर्थ्याऽऽपत्तेरिति प्रपञ्चयिष्यामः।

सूत्रशाटकवदिति। अत्र च महासञ्ज्ञाकरणमेव प्रमाणमित्याहुः। स्यादेतत्—'अदुहितरामि'त्यत्र लस्य उत्तमपुरुषैकवचनमिट्, तस्य सम्प्रसारणसञ्ज्ञायां 'हल' इति दीर्घः स्यात्। न च यथासङ्ख्यविज्ञानान्न दोष इति वाच्यम्। अनुवादे परिभाषाणामप्रवृत्तेः। [1]अन्यवाक्यविहितयणसम्बन्धिन इकः सम्प्रसारणसञ्ज्ञाविधानात्। न चैवं स्थानेयोगोऽपि न लभ्येतेति वाच्यम्। 'षष्ठी स्थानेयोगे'-त्यत्राऽनुवर्त्त्य एतत्सूत्रस्य व्याख्येयत्वात्। इहैव वा स्थानग्रहणाऽपकर्षोऽस्तु। ध्वनितञ्चेदमिको गुणवृद्धी इति सूत्रे भाष्ये। न च दीर्घे इष्टाऽऽपत्तिः। कार्यकालपक्षे 'ष्यङः सम्प्रसारणमि'त्यादौ 'इग्यणः सम्प्रसारणमि'त्यस्योपस्थितत्वेनैकवाक्यतायाः सत्त्वे अनुवादाऽभावेन, यथासङ्ख्यस्य दुर्वारत्वेन, यथोद्देशपक्षेऽपि तत्प्रवृत्तेरावश्यकत्वात्, अत एव वकारस्य स्थाने लृकारो ने'ति। अत्र वदन्ति-'यणः स्थाने इग्भवती'ति वाक्यं, वाक्याऽर्थो वा सञ्ज्ञा, तथा चाऽनुवादाऽभावाद-

---

लघुशब्दरत्नः

निषेधादिति। भष्भावस्तु एकाज्ग्रहणेऽपि 'अजर्घा' इति भाष्योदाहरणेन निषेधाऽनित्यत्वाद्भवतीति भावः। 'श्तिपा शपे'ति भाष्याऽनुक्तत्वादप्रमाणम्। वैचित्र्याय तु तथा नोक्तमि'त्यन्ये। सूत्रशाटकवदिति। 'अस्य सूत्रस्य शाटकं वये'त्यादौ 'यदि वातव्यो, न शाटकोऽस्य शाटको[2], न वातव्य' इति विरोधमाशङ्क्य 'मन्ये स वातव्यो यस्योतस्य शाटक इत्येषा सञ्ज्ञा भवती'ति भाष्ये उक्तम्। तथा प्रकृतेऽपि 'यणः स्थाने स भवति, यस्य सम्प्रसारणशब्देन जातस्य सम्प्रसारणसञ्ज्ञा भवती'त्यर्थ इति भावः। तेन दिव उतो न सम्प्रसारणत्वम्।

---

[1] 'अन्यवाक्याऽविहित' इति क. ख. पाठः।

[2] 'यदि शाटको' इति मुद्रितेषु पाठः।

**वाह ऊठ् (६।४।१३२) । वसोः सम्प्रसारणम् (६।४।१३१) इत्यतोऽनुवृत्तं सम्प्रसारणमूठो विशेषणम् । तेन अलोऽन्त्यस्य (१।१।४२) इति न ।**

बृहच्छब्दरत्नः

वान्तरवाक्ये[१] यथासङ्ख्यं सुलभमेवे'ति । तत्र सञ्ज्ञीभूताऽवान्तरवाक्यस्य[२] 'याति-वाति-द्राती'त्यादावतिप्रसङ्गात् । वाक्याऽर्थयोर्विधातुमशक्यत्वेन 'ष्यङः सम्प्रसारणमि'त्यादौ अनन्वयाऽपत्तेश्च । ऊठादिभिः सामानाधिकरण्याऽनुपपत्तेश्च । 'सम्प्रसारणाच्चे'त्यादावनन्वयाऽऽपत्तेश्च । श्रुतिलिङ्गादौ मीमांसकैः [३]परिगणितस्य स्थानसम्बन्धस्य लौकिकन्यायसिद्धत्वादनुवादेऽपि सुलभता । 'उदात्तस्वरितयोरि'त्यादावनुवादेऽपि परिभाषाणां प्रवृत्तेः सत्त्वेन 'अनुवादे' इतिपरिभाषा न सार्वत्रिकी'ति कश्चित् । नन्वेवम् 'ऊवतुः' 'ऊवुरि'त्यादौ 'वश्चाऽस्याऽन्यतरस्यामि'तिसूत्रेण यकारस्य वकारे सम्प्रसारणाऽऽपत्तिः । न च 'उश्चाऽस्याऽन्यतरस्यामि'तिन्यासेन यकारस्थाने उकारादेशे कर्त्तव्ये, वकारादेशविधानसामर्थ्यान्न सम्प्रसारणमिति वाच्यम् । त्वदुक्तरीत्या यकारस्थानिकोकारस्य सम्प्रसारणसञ्ज्ञाया अभावेन 'न सम्प्रसारणे सम्प्रसारणमि'ति निषेधाऽप्रवृत्तावाद्यवकारस्य सम्प्रसारणापत्तेस्तदभावाऽर्थमेव वादेश इत्यर्थस्य वक्तुं शक्यत्वादिति चेन्न । 'वश्चाऽन्यतरस्यामि'तिवक्तव्ये 'अस्य'ग्रहणं निषेध्यसम्प्रसारणस्थानिनः परामर्शाऽर्थम् । तेन स्थान्यनुगुणाऽऽदेशप्रवृत्त्या वस्य सम्प्रसारणं न । 'लिटि वयो य' इति सूत्रेण तु सम्प्रसारणं निषिध्यते इति 'ग्रहिज्ये'ति सूत्रे भाष्ये स्पष्टम् । अत एव निषेधाऽनन्तरं पाठः । निषेधस्य चाऽग्रेऽनुवृत्तिः । याऽऽदेशविधानेऽपि तद्धर्माऽऽक्रान्तत्वमस्त्येव । न च 'अस्य'ग्रहणं सम्पूर्णस्य वयेरादेशाऽभावाऽर्थमिति वाच्यम् । अकारस्योच्चारणाऽर्थत्वेन 'अलोऽन्त्यस्ये'त्यस्य दुर्वारत्वेन 'अस्य'ग्रहणे कृतेऽपि तस्य निवारयितुमशक्यत्वेन च सम्प्रसारणनिषेधप्रकरणे पाठेन तत्स्थाने एवोचितत्वात् । पूर्वसूत्र 'वयो य' इत्यवयवषष्ठ्या निर्धारितत्वेन दोषाऽभावाच्च । यद्वा 'वश्चे'ति चकारेण सम्प्रसारणनिषेधस्याऽप्यनुवृत्तिः । सन्नियोगशिष्टन्यायात्, 'य' इत्यनुवर्त्तनाच्चैकत्रैव प्रवृत्तिः । सामर्थ्याच्च 'य'शब्देन तत्स्थानिकवकारो गृह्यते । एवञ्चाऽग्रे निषेधाऽनुवृत्त्यर्थं मण्डूकाऽनुवृत्तिश्च नाऽऽश्रयणीया । अत एव [४]चकारः सार्थकः । यत्तु 'इग्यटः सम्प्रसारणमि'ति सूत्रयितुमुचितमि'ति । तन्न । 'यट्'शब्दशक्तिकल्पने गौरवाऽऽपत्तेः । 'यण्'शब्दस्य तु 'इको यणची'त्यादौ शक्तिः क्लृप्तेति दिक् ।

---

[१] 'यणः स्थाने इक् स्याद्यथासङ्ख्यमि'त्यवान्तरवाक्यार्थः, 'सोऽयं सम्प्रसारणसञ्ज्ञः स्यादि'ति च महावाक्यार्थ' इति शब्दकौस्तुभे ।

[२] 'वाक्यस्य भातीत्यादौ' इति क. ख. पाठः । 'यातीत्यादौ' इति तु शुद्धः पाठः ।

[३] 'प्रगणितस्य' इति क. ख. पाठः ।

[४] 'वकारः' इति ख. पाठः ।

यत्तु प्राचा 'वाशब्दस्ये'त्युक्तम्। नाऽसौ सूत्राऽर्थः। किन्तु कथं चित् फलिताऽर्थकथनपरतया नेयम्। छन्दस्येवेति। छन्दसि सहः (३।२।६३) वहश्च (३।२।६४) इति सूत्रे 'छन्दसी'त्यनुवृत्तेरिति भावः। यत्तु 'ऊठि कृते सवर्णदीर्घः-'भूहः' 'भूहे'त्यादि प्राचोक्तं, तद्भाष्यविरुद्धम्। तथा हि— 'ऊठ्ग्रहणं माऽस्तु। सम्प्रसारणमेव विधीयताम्। तस्य लघूपधगुणे [1]कृते वृद्धिरेचि (६।१।८८) इति वृद्धौ सिद्धं 'विश्वौह' इत्यादि। एवं स्थिते क्रियमाणं बहिरङ्गपरिभाषां ज्ञापयति। सत्यां हि तस्यां बहिरङ्गस्य सम्प्रसारणस्याऽसिद्धत्वादन्तरङ्गो गुणो न स्यादि'ति भाष्ये स्थितम्। नन्वनकारान्ते, अकारान्तोपसर्गे चोपपदे रूपे विशेषः स्यादिति चेन्मैवम्। भाष्यकारोक्तज्ञापकबलेनैव तादृशस्थले ण्विप्रत्ययाऽभावस्याऽनुमानादि'ति कैयट-हरदत्तादयः। एतेन 'वार्यूहः' 'प्रौह' इत्यादिप्रयोगा अपि परास्ताः। अथवा ऊहतेः क्विबित्यवधेयम्।

---

बृहच्छब्दरत्नः

अथवा ऊहतेरिति। न चाऽऽर्थाऽसङ्गतिः। धातूनामनेकाऽर्थत्वात्। इदञ्च 'वार्यूह्' इत्येतद्विषयकम्। 'प्रौह्' इत्यस्य तु असिद्धिरेव। वृद्धेर्दुर्लभत्वात्। न च 'प्रादूहोढे'ति वृद्धिः। ऊढादिसाहचर्येण कृदन्तोहशब्दस्यैव ग्रहणात्। 'ऊहे'त्यकारान्तस्याऽऽनर्थक्याच्च। ननु सम्प्रसारणपक्षे पूर्वरूपस्य स्थानिवत्त्वादाकारेण व्यवधानाल्लघूपधत्वाऽभावात्कथं गुणे कृते 'विश्वौह्' इति सिद्धमिति चेन्न। 'न हि कार्यी'ति न्यायेन आकारस्य कार्यित्वात्तद्व्यतिरिक्तनिमित्ताऽभावात्स्थानिवद्भावस्यैवाऽभावात्। ध्वनितञ्चेदं 'प्रसारणिभ्यो ड' इति वार्त्तिकव्याख्यानभाष्ये।

नन्वेवमनकारान्तोपपदे इति कैयटादिग्रन्थो व्यर्थः। उक्तरीत्या 'वार्यूह्' इत्यस्य दुर्वारत्वात्। वह्धातोर्णिजन्तात्क्विपि, सम्प्रसारणे, गुणे 'वार्योह्' इत्यस्य सत्त्वाच्च। न च गुणे सम्प्रसारणाऽसिद्धत्वम्। असिद्धपरिभाषाया इदानीमसिद्धेः। न चाऽर्थभेदः। 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इत्यङ्गीकारात्।

---

लघुशब्दरत्नः

फलितार्थेति। सम्प्रसारण-पूर्वत्वाभ्यां फलितेत्यर्थः। ऊठि कृते इति। 'भूवाद्-शब्दे' इति शेषः। क्रियमाणमिति। ऊठ्ग्रहणमित्यर्थः। तादृशस्थले इति। भत्वविषये इत्यर्थः। 'भूवाडि'त्यादि तु भवत्येव। ऊहतेरिति। एतद्वार्यूह इत्येतद्विषयम्।

---

[1] 'कृते' इति ङ. नास्ति।

[2] 'वयव इति' इति क. ख. पाठः।

वसुस्रंसु (८।२।७२)। वसुः—प्रत्ययः। तेन तदन्तं ग्राह्यम्। ससजुषो रुः (८।२।६६) इति सूत्रात् 'से'त्यनुवर्तते। तच्च वसोरेव विशेषणम्। न तु स्रंसुध्वंस्वोः। अव्यभिचारात्। नाऽप्यनडुहः। असम्भवादित्यभिप्रेत्याह—सान्तवस्वन्तस्येति। पदान्ते इति। 'झली'ति तु प्राचः प्रमादः। 'स्रस्तमि'त्यादावतिव्याप्तेः।

---

बृहच्छब्दरत्नः

ननु णिलोपस्य स्थानिवत्त्वेन सम्प्रसारणाऽप्राप्तिः। न चैवं णिजन्ताद्विचि ऊठ् न स्यात्। न स्यादेव। 'णिजन्ताद्विजि'ति मूलग्रन्थेन लोके 'विश्ववाट्'शब्दः साधुरित्येव बोध्यते इति चेन्न। 'क्वौ विधिं प्रति न स्थानिवदि'त्यस्य दुर्वारत्वात्। न हि 'क्वौ लुप्तमि'त्यस्य निमित्ते सति 'पिपठिषि ब्राह्मणकुलानी'त्यत्र यथा न प्राप्तिस्तथा 'क्वौ विधिमि'त्यस्य क्वचिदप्राप्तिर्येन तस्याऽनित्यत्वं कल्प्येत। न च 'काम्यचः कित्त्वं कुतो ने'ति प्रश्ने 'प्रयोजनाऽभावादि'त्युत्तरिते, 'वाक्काम्यती'त्यत्र सम्प्रसारणं स्यादि'त्याशङ्कायां 'वच्यादिभ्यो विहितो यः कित्तत्र सम्प्रसारणमि'त्याश्रितं भाष्ये, एवञ्च प्रकृतेऽपि सम्प्रसारणं दुर्लभमिति वाच्यम्। 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमि'ति परिभाषयैव निर्वाहे विहितपक्षस्य कैयटादिभिरनाश्रयणात्। भाष्यकारैरपि पक्षाऽन्तरस्य ध्वनितत्वाच्चेति। अत्राहुः-भाष्योक्तपक्षयोः फलैक्याऽर्थं णिजन्तात्क्विबभावस्याऽङ्गीकृतत्वेन 'वार्योह्' इत्यस्याऽभावेन, विरोधस्य स्पष्टत्वेनाऽनकाराऽन्ते उपपदे ण्विप्रत्ययाऽनुत्पत्तेरावश्यकत्वात्।

अव्यभिचारादिति। ननु स्रंसुध्वंस्वोर्विचि, संयोगाऽन्तलोपे व्यभिचारोऽस्त्येवेति चेन्न। दत्वस्य सिद्धकाण्डे पाठेन परत्वात् 'वसुस्रंस्वि'ति दत्वे, ततः संयोगान्तलोपे, 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति न्यायेन पुनरप्रवृत्तेः। 'सान्ते'ति दीर्घविषये तु सिद्धकाण्डस्थस्याऽप्रवृत्तेरिति सर्वेषां समानम्। किञ्च स्रंसुध्वंस्वोः प्रकृतित्वेनाऽभ्यर्हितत्वात् 'दीधीवेवीटामि'तिवत्पूर्वनिपाते कर्त्तव्ये, तदकरणेन अनडुह्साहचर्यात् श्रौताऽसान्तेऽपि प्रवृत्तेर्बोधनात्, भाविना नलोपेन लाघवात् 'यजजपदशां यङ' इतिवन्नकाररहितनिर्देशे कर्त्तव्ये, 'स्रंसुध्वंस्वि'तितत्सहितनिर्देशेन नलोपाऽभावेऽपि प्रवृत्तेर्बोधनाच्च भौतपूर्विकसान्तग्रहणस्याऽप्युचितत्वात्। अनुबन्धनिर्देशस्तु यङ्लुगन्ताल्लङि [1]दत्ववारणाऽर्थः।

---

लघुशब्दरत्नः

अव्यभिचारादिति। स्रंसुध्वंस्वोर्विच् तु नास्ति। अनभिधानात्। अतः 'संयोगान्तलोपे तत्र व्यभिचार' इत्यपास्तम्। अतएव भाष्यकृता 'सस्ये'त्यननुवृत्तौ 'पपिवानि'त्यत्रैव दत्वशङ्का कृता, अनुवृत्तौ चाऽनडुद्भ्यामित्यत्रैव दत्वाऽभावशङ्का कृतेति दिक्।

---

[1] 'लङि षिच वारणार्थः' इति क. ख. पाठः।

**सहेः साडः सः** (८।३।५६)। **सहेरिति किम् ?**। सह डेन वर्त्तते इति सडः। यस्य नाम्नि 'ड'शब्दोऽस्ति, यथा-'मृड' इति। 'सडस्याऽपत्यं 'साडिः'। [1]इति हान्ताः॥

**दिव औत्** (७।१।८४)। **प्रातिपदिकस्येति**। अव्युत्पन्नस्य, 'दिवेर्डिवि'रिति न्यासोहितसूत्रेण व्युत्पन्नस्य वा। न तु 'दिवु [2]क्रीडादौ' इति धातोः। 'निरनुबन्धकग्रहणे न सानुबन्धकस्ये'ति परिभाषया। तेना'ऽक्षद्यूरि'-त्यादौ न भवति। **औतस्तकार उच्चारणाऽर्थः**। **सुद्युभ्यामिति**। उकारस्य

---

बृहच्छब्दरत्नः

निरनुबन्धेति। 'डिवि'प्रत्ययस्य सानुबन्धत्वेऽपि [3]दिवशब्दो निरनुबन्धोऽस्त्येव। इदञ्च प्रकृतसूत्रे, धातुसञ्ज्ञासूत्रे च भाष्ये स्पष्टम्। एतेन 'परिभाषा प्रत्ययग्रहणविषयिण्येवे'त्यपास्तम्। क्वचिदप्रवृत्तिस्तु 'ज्ञापकसिद्धं न सर्वत्रे'त्यनेनोपपादनीया। आचारक्विबन्तात्कर्त्तरि क्विपि भवत्येवौत्त्वम्। यत्तु 'भाष्ये 'अधातोरि'त्यनुवृत्त्याऽपि समाहितत्वेन नामधातावौत्त्वं ने'ति। तन्न। न हि पूर्वसूत्रे 'अधातु'पदं धातुप्रतिषेधाऽर्थं, किन्तु भूतपूर्वप्रातिपदिकत्वधर्माऽऽक्रान्तग्रहणाऽर्थम्। एवञ्चाऽर्थाऽधिकारादिहाऽपि तथैवोचितम्। तच्च केवले प्रातिपदिके, नामधातौ चाऽस्ति, न केवलधातौ। एवञ्च भाष्योक्तपक्षयोः फलैक्यमित्यपरमनुकूलम्।

तकार उच्चारणार्थ इति। तित्त्वविशिष्टौकारबोधने तात्पर्यकल्पने विधिगौरवमिति भावः। यत्तु 'स्वरिताऽर्थमि'त्याहुः। तन्न। 'तित्स्वरितमि'तिसूत्रस्थस्य 'तिति प्रत्ययग्रहणं कर्त्तव्यमि'ति वार्त्तिकस्य 'ऋत इद्धातोः' 'दिव उदि'त्यत्र दान्तत्वमाश्रित्य प्रत्याख्यानाऽनापत्तेः। फलभेदे प्रत्याख्यानाऽसम्भवात्। न चाऽत्र तकारोच्चारणसामर्थ्यादप्रत्ययेऽपि स्वरप्रवृत्तिरित्याशय इति वाच्यम्। प्रयोजनाऽभावेन काम्यच इव वार्त्तिकनये इत्सञ्ज्ञाया एवाऽनापत्तेः। अर्द्धमात्रिकविसर्गस्य दुर्वारत्वेन लाघवाऽभावाच्च। उच्चारणाऽर्थत्वेनाऽपि चारितार्थ्याच्च। 'अप्र-

---

लघुशब्दरत्नः

न्यासोहितेति। न्यासकृदूहितेत्यर्थः। निरनुबन्धकेति। डिवेः प्रत्ययस्य सानुबन्धकत्वेऽपि तदन्तस्याऽतथात्वादिति भावः। इदञ्चाऽत्र सूत्रे, भूवादिसूत्रे च भाष्ये स्पष्टम्। उच्चारणार्थ इति। न तु स्वरिताऽर्थः। उच्चारणाऽर्थानामित्सञ्ज्ञायामपि 'तिति

---

[1] इतिः लिखितेषु नास्ति।

[2] 'क्रीडायाम्' इति मुद्रितेषु पाठः।

[3] 'वृशब्दो निरनुबन्धोऽस्त्येव' इति क. ख. पाठः।

सम्प्रसारणत्वात् हलः (६।४।२) इति दीर्घः प्राप्त 'उदि'ति तपरत्वसामर्थ्या-न्न भवति। यत्तु प्राचोक्तं-'दिवो वा आत्वममी'ति। तदुपेक्षितम्। मुनि-

बृहच्छब्दरत्नः

त्यये सर्वत्र दकार' इत्येव भाष्याऽऽशयस्यैकफललाभार्थं कल्पयितुं शक्यत्वाच्च। तस्मादत्र स्वरितत्वं नेष्टं, प्रकाराऽन्तरेण तत्सिद्धिरिति वा कल्प्यम्। तत्राऽऽद्ये मनोरमायां न कश्चिद्दोषस्तथाऽपि 'द्यौष्पितः पृथिवी मातरध्रुगि'ति पठ्यमानं स्वरितत्वं न सङ्गच्छते, तस्मादत्राऽनित्यत्वेनाऽकृतव्यूहपरिभाषायाः प्रातिपदिकस्वरेण, प्रत्ययस्वरेण वा इकारस्योदात्तत्वे, स्रंसनधर्मणो हलः स्थाने जायमानत्वे-नौकारस्याऽनुदात्तत्वे, यणि, 'उदात्तस्वरितयोर्यण' इत्यनेन स्वरितसिद्धिरिति तत्त्वम्। अत एव मूलोपन्यस्तव्युत्पत्त्यव्युत्पत्तिपक्षयोर्न विरोधः।

सामर्थ्यादिति। न च 'भाव्यमानः क्वचित्सवर्णान् गृह्णाती'ति ज्ञापनाऽर्थं तपरकरणमिति वाच्यम्। फलाऽभावात्। 'अदसोसेर्दादु दो म' इत्यत्र समाहारद्वन्द्वेनैव सिद्धेः। अत एव सोलुंका निर्देशः। एतेन "[1]विमलद्यु' इत्यत्रोक्तस्य सावकाशत्वेन 'द्युभ्यामि'त्यादौ 'क्ङिती'त्यननुवृत्तिपक्षे परत्वेन जातस्योठः स्थाने पुनः प्रसङ्गविज्ञानेनाऽऽन्तरतम्याद्दीर्घोकार[2]-व्यावृत्त्यर्थं[3] तपरकरणमि'ति परास्तम्। तपरकरणेन वकारस्थानिकदीर्घोकारव्यावृत्तेर्बोधनेनोठोऽभावस्य न्यायप्राप्तत्वाच्च। अर्थाऽधिकाराऽऽश्रयणाद्धातुविहितझलादिप्रत्ययस्यैव ग्रहणेन ऊठोऽप्राप्तेश्च। तस्मात् 'उ' इति नपुंसकनिर्देशेनैव सिद्धौ, दीर्घस्तपरकरणेन सूत्राऽन्तरप्राप्तोऽपि वार्यते। न चैवं 'द्युभ्यामि'त्यादौ स्वरितत्वाऽऽपत्तिः। सञ्ज्ञिनि तित्त्वाऽभावात्। न हि उच्छब्देनोदित्यस्योपस्थितिः। 'स्वं रूपमि'त्यनेनैव सिद्धौ तपरसूत्रवैयर्थ्याऽऽपत्तेः। न च ङमुट्न्यायः। इत्सञ्ज्ञाया अन्यत्र, तपरसूत्रप्रवृत्त्या तकारस्य च चारितार्थ्यात्। वस्तुतस्तु सञ्ज्ञाऽपि ताऽन्ता, न तु तित्। 'तित्स्वरितमि'तिसूत्रस्थ-भाष्यप्रामाण्यात्। 'द्युभिरक्तुभिरि'त्यादावन्तोदात्तस्यैव पठ्यमानत्वाच्च। 'अकृत-व्यूह'परिभाषया फिट्स्वरस्य पूर्वं प्रवृत्त्यङ्गीकारेण उकारस्योदात्तत्वं, 'दिव उदि'ति-सूत्रे उदात्तनिपातनं वा बोध्यम्। न चैवमुकारे निपातनस्वरसामर्थ्याद्विभक्तिस्वरा-ऽप्राप्तौ 'दिवो झलि'ति सूत्रं व्यर्थमिति वाच्यम्। 'अहर्विमलद्यु' इत्यादावुपस्थिता-ऽन्तरङ्गप्रकृतिस्वरबाधेन चारितार्थ्यात्। न चैवं 'द्यूच' इत्यादौ 'चावि'ति दीर्घो न स्यादिति वाच्यम्। 'येन नाप्राप्ति'न्यायेन 'हल' इत्यस्यैव बाधात्।

लघुशब्दरत्नः

प्रत्ययग्रहणमि'ति वार्त्तिकेन तदप्रवृत्तेरिति भावः। सम्प्रसारणत्वादिति। 'अतद्भावित-स्याऽपि सञ्ज्ञे'ति पक्षे इदम्।

[1] 'विमलद्युरित्यत्र' इति क. पाठः।

[2] 'दीर्घेकार' इति क. ख. पाठः।

[3] 'छ्वोः शूडनुनासिके च' इत्यनेन प्राप्तस्य ऊठ इत्यर्थः।

५८

त्रयाऽनुक्तेर्निष्फलत्वाच्च। 'द्यामि'ति रूपन्तु[1] द्योशब्दस्यैवेति बोध्यम्। वान्ताः।

**षट्चतुर्भ्यश्च (७।१।५५)** । बहुवचननिर्देशादर्थस्य[2]प्राधान्यं विवक्षितम्। अर्थाच्चाऽऽमः परत्वं शब्दद्वारकम्। तेन तदन्तविधौ सत्यपि 'परम-

### बृहच्छब्दरत्नः

बहिरङ्गत्वात् 'चौ' इत्यस्याऽसिद्धत्वेन वारयितुमशक्यत्वाच्च । 'द्युकाम' इत्यादौ तु दीर्घो न। 'सम्प्रसारणस्ये'त्यस्य प्रत्यासत्तिन्यायेनोत्तरपदनिमित्तसम्प्रसारणे एव प्रवृत्तेः। स्पष्टञ्चेदं भाष्ये सिद्धान्तपरिशीलनशीलिनाम्[3] । वस्तुतस्तु इग्यणः सम्प्रसारणशब्देन भावितत्वाऽभावात् । 'जीन'[4] इत्यादौ परम्परया तद्भावितत्वमस्त्येवेति विभाव्यते, तर्हि तकार उच्चारणाऽर्थः। द्योशब्दस्येति । अत एव 'पृथिवी उत द्यौरि'त्यादौ पठ्यमानमन्तोदात्तत्वं सङ्गच्छते ।

शब्दद्वारकमिति । स्ववाचकाऽव्यवहितोत्तरत्वसम्बन्धेन अर्थपरत्वमित्यर्थः। ननु षडंशे प्रागुक्तरीत्या ईदृशाऽर्थसम्भवेऽपि 'चतु'शब्दांऽशे ईदृशाऽर्थग्रहणे न किञ्चिन्मानम्। 'स्वं रूपमि'त्यस्य बाधे मानाऽभावेन शब्दबाहुल्याऽभिप्रायेणैव बहुत्वाऽन्वयस्योचितत्वात्। अत एव 'तिसृभ्यो जस' इति गौणे प्रवर्त्तते इति चेन्न। षट्साहचर्याच्चतुःशब्दोऽप्यत्राऽर्थपरः। न चैवं 'ष्णान्ता षडि'ति सूत्रे रेफप्रक्षेपेण रेफान्तायाः सङ्ख्यायाः षट्सञ्ज्ञा विधेया, तथा च स्वरविधायके, नुड्विधायके च किं चतुर्ग्रहणेन ?। न च 'तिस्र' इत्यत्र रेफाऽन्तत्वेन षट्सञ्ज्ञाऽऽपत्तौ लुगापत्तिः। सन्निपातपरिभाषया वारणात्। अत एव 'त्रीणी'त्यत्र न दोषः।

### लघुशब्दरत्नः

शब्दद्वारकमिति । न चैवं [5]'तद्वाचकशब्दात्परत्वमेवाऽर्थात्परत्वमित्यायातम्। ततश्च 'प्रियपञ्चन् आमि'त्यत्राऽपि तद्वाचकपञ्चन्शब्दात्परत्वमस्त्येवेति, दोषस्तदवस्थ इति वाच्यम् । एतत्सामर्थ्येन 'प्रधानीभूतषडर्थवाचकशब्दात्परत्वं विवक्षितमि'त्यभिमानात्। इदं प्राचामनुरोधेन। द्विवचननिर्देशे गौरवात्, समाहारेण सर्वत्र सूत्रेषु निर्देशाऽदर्शनाच्च, षट्सञ्ज्ञकानां बहुत्वाच्च बहुवचनोपपत्तेः। किञ्च न षट्स्वस्रादिभ्यः (४।१।१०) इत्यादौ शब्दबाहुल्याऽभिप्रायेण बहुवचनवत्, तिसृभ्यो जसः (६।१।१६६) इत्यादौ प्रयोगबाहुल्याऽभिप्रायेण तद्वच्चेहाऽपि बहुवचनं वक्तुं युक्तम्। [6]किञ्च नामि (६।४।३) इति सूत्र-

[1] तुः मुद्रितेषु त्रुटितः।

[2] 'अर्थप्राधान्यम्' इति मुद्रितेषु पाठः।

[3] अत्र 'भाष्यसिद्धान्तपरिशीलनशालिनाम्' इत्यपि पाठः सम्भाव्यते।

[4] 'हूतः' 'जीन' इत्यादावित्यर्थः।

[5] 'तद्वाचकपदात्परत्वम्' इति क. पाठः।

[6] 'किञ्च' इत्यादिः 'इति दिक्' इत्यन्तो ग्रन्थः क. ख. नास्ति। घ. कुण्डलितः।

चतुर्णामि'त्यादावेव भवति, न तु बहुव्रीहौ। तदेतद्वक्ष्यति-'गौणत्वे तु नुट् नेष्यते' इत्यादिना। द्वित्वमिति। अचो रहाभ्याम् (८।४।४६) इत्यनेन। रान्ताः॥ कमला—लक्ष्मीः। लान्ताः॥

---

**बृहच्छब्दरत्नः**

न च लुगापत्तिः। 'रो ने'त्येव सिद्धेः। अतोऽपि 'चतस्र' इत्यादौ न दोष इति वाच्यम्। गौरवाऽऽपत्तेः। न च 'षट्कतिकतिपयचतुरां थुगि'ति सूत्रे चतुर्ग्रहणाऽभावेन लाघवमस्तीति वाच्यम्। तत्र [1]षट्शब्दस्यैव ग्रहणात्। अत एव 'कति'ग्रहणं चरिताऽर्थम्। एवञ्चैकादशानां पूरण एकादश इत्यत्र थुगागमो नेति चेन्न। 'चतसृभिः' 'चतसृणामि'त्यादौ षट्स्वराऽनापत्तेः। अरेफान्तत्वेन षट्सञ्ज्ञाया अभावात्। अल्विधित्वेन स्थानिवद्भावाऽयोगाच्च। 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इत्याद्युदात्तनिपातनेन 'षट्त्रिचतुर्भ्यो हलादिरि'तिसूत्रस्थहलादिग्रहणसामर्थ्यात् षट्स्वरो न बाध्यते इति स्पष्टम्। अत एव 'याहि चतसृभिर्वसो चतसृणामि'त्यत्र पठ्यमानमुपोत्तमोदात्तत्वमन्तोदात्तत्वञ्च सङ्गच्छते इति तत्रैव प्रपञ्चयिष्यामः। एतेन 'षड्भ्यो लुगि'त्युत्तरं 'रो ने'ति न्यासेनेष्टसिद्धिरित्यपास्तम्। 'केचित्तु 'ऋष्णान्ता षडि'ति न्यासेन ऋकारान्तस्याऽपि षट्सञ्ज्ञाया विधानात्स्वरप्रकरणस्थं चतुर्ग्रहणं सुत्यजमित्याहुः।

अचो रहाभ्यामिति। न चैवं [2]णत्वात्परत्वाद् द्वित्वम्। [3]तस्याऽसिद्धत्वात्। न च 'पूर्वत्राऽसिद्धमद्विर्वचने' इति निषेधः। [4]द्वित्वाऽपेक्षयाऽन्यस्याऽपीति तैरेकीयमतत्वेनोक्तत्वाच्च। फलोपहितप्रवृत्त्यभावेन 'लक्ष्ये लक्षणस्य सकृदेव

---

**लघुशब्दरत्नः**

भाष्ये 'आमी'त्येव सूत्रमस्तु। न च नित्यत्वात्पूर्वं दीर्घे, ह्रस्वाऽऽश्रयो नुट् न स्यात्। 'ह्रस्वान्तान्नुडि'त्येतत्सामर्थ्येन भूतपूर्वगत्या ह्रस्वाऽन्तत्वमादाय तत्प्रवृत्तेः। न च 'नृणामि'त्यत्र चारितार्थ्यम्। 'नैकमुदाहरणं योगाऽऽरम्भं प्रयोजयति। अन्यथा[5] 'नृन्नद्याप' इत्येव ब्रूयात्। न च 'तिसृणामि'त्यत्र चारितार्थ्यम्। 'षडि'त्यत्र 'त्रेरि'त्यनुवृत्त्या सिद्धेरि'त्युक्तम्। गौणेऽस्याऽप्रवृत्तौ 'प्रियचतसृणामि'त्यत्र चारितार्थ्येन भाष्याऽसङ्गतेः। 'ऋन्नद्याप' इति न्यासे तु न भाष्यतात्पर्यम्। त्रिशब्दाऽनुवृत्तिपरभाष्याऽसङ्गतेः। 'नैकमुदाहरणमि'त्यस्याऽसङ्गतेश्च। गौणे नुटोऽप्रवृत्तिसाधकभाष्याऽन्तराऽभावाच्च। न चैवं 'पदां' 'दतामि'त्यादौ भूतपूर्वगत्याश्रयणे-

---

[1] 'षष्'शब्दस्यैव तत्र ग्रहणं, न षट्संज्ञकस्येत्यर्थः।

[2] 'षत्वात्परत्वात्' इति क. ख. पाठः।

[3] 'नस्याऽसिद्धत्वात्' इति ख. पाठः।

[4] 'द्वित्वाऽपेक्षया अन्यस्यापि तैरेकीय' इति क. ख. पाठः।

[5] 'अन्यथा' इति मुद्रितेषु त्रुटितम्।

**मो नो धातोः (८।२।६४)। पदान्त इति।** 'झली'ति तु यद्यपि प्राचाऽनुवर्त्तितं, तथाऽपि काशिकादावभावात्, निष्फलत्वाच्चोपेक्ष्यम्।

**किमः कः (७।२।१०३)।** ननु 'इम' इत्येव सूत्र्यताम्। 'त्यदादीनाम् इमः अः स्यादि'ति व्याख्यास्यते। किंशब्दश्च द्वेः प्राक् पठिष्यते। 'नानर्थके' इति निषेधात्, आरम्भसामर्थ्याच्चाऽलोऽन्त्यविधिर्न भविष्यति। तत्किं कादेशेनेत्याशङ्क्याऽऽह-अकच्सहितस्यापीति। टेरत्वे 'कक' इति स्यात्। कु तिहोः (७।२।१०४) इत्याद्यर्थश्च 'किम' इत्यवश्यं वक्तव्यमिति भावः।

---

बृहच्छब्दरत्नः

प्रवृत्तिरि'तिन्यायस्याऽप्रवृत्तौ णत्वाऽनन्तरं द्वित्वप्रवृत्तेरपि सत्त्वेन समाधेरावश्यकत्वे, मूलोक्तौ दोषाऽभावाच्च। यत्तु 'प्रियकुत्सनादिषु ततः प्रवर्त्तते' इति-भाष्याद्विभक्त्युत्पत्तावकच्प्रवृत्तिः। एवञ्च परत्वात्काऽऽदेशेऽकचि 'कक' इति। तन्नेति ध्वनयन्नाह—नन्विम इत्येवेति। 'प्रातिपदिकादि'त्यनुवर्त्तनेन शब्देन सुपोनिमित्तत्वेनाऽनाश्रयणात्कादेशाऽपेक्षया अकजेवाऽन्तरङ्गः। प्रकृतसूत्रमप्यस्मिन्नर्थे मानम्। द्वेः प्रागिति। 'किंसर्वनामबहुभ्योऽद्व्यादिभ्य' इतिसूत्रे 'किम्'ग्रहणं न कर्त्तव्यं भवति। 'इम अ' इति न्यासे 'उ तिहोः''वाती'ति सूत्रद्वयं क्रियते, यथान्यासमेव वा। आद्ये त्वकच्सहितस्य न स्यादित्येक एव समाधिः। अन्त्ये दूषणमाह-कुतिहोरिति। ककारद्वयसहितः प्रयोगः स्यादिति भावः।

---

लघुशब्दरत्नः

ऽतिप्रसङ्गः। ह्रस्वत्वं नाम मात्राकालिकाऽत्त्वम्। तत्र सामर्थ्याद्विशेषणभूतमात्राकालिकत्वांऽशे एव भूतपूर्वगत्याश्रयणं, न तु विशेष्यभूताऽत्त्वांऽशेऽपीत्यदोषादिति दिक्।

इम इति। अत्र त्यदादीनामः (७।२।१०२) इत्यनुवर्त्तते। तदाह-त्यदादीनामिति। अत एव सिद्धान्ते उपसर्जने नेति भावः। द्वेः प्रागिति। तेन द्विपर्य्यन्तानां त्यदादित्वेऽपि न दोषः। किंसर्वनामबहुभ्यः (५।३।२) इत्यत्र किंग्रहणं न कार्यमिति भावः। न च 'इमौ' इत्यत्राऽप्यापत्तिः। 'अङ्गकार्ये कृते' इति निषेधात्। आरम्भसामर्थ्याच्चेति। त्यदादीनामः (७।२।१०२) इत्यनेनैवाऽन्त्यादेशे सिद्धे, 'इम' इत्यारम्भसामर्थ्यादित्यर्थः। कक इति स्यादिति। मम तु 'तन्मध्यपतित' इति न्यायेन साकच्कस्य किंशब्दत्वात्सिद्धम्। 'निर्दिश्यमानस्ये'ति परिभाषा त्वत्र न प्रवर्त्तते। कादेशविधानसामर्थ्यात्। न च सुबन्तात्तद्धितोत्पत्त्या, विभक्त्युत्पत्त्यनन्तरं परत्वात्कादेशे कृते, अकचि 'कक' इत्येव स्यादिति वाच्यम्। [1]'प्रातिपदिकादि'त्येवाऽधिकारात्सुपः [2]शब्देन निमित्तत्वेनाऽनाश्रयणात्, अङ्गसञ्ज्ञानिमित्तप्रत्ययाऽनपेक्षणेन चाऽकचोऽन्तरङ्गत्वादिति भावः। किम इत्यवश्यमिति। कु तिहोः

---

[1] 'प्रातिपदिकादित्यधिकारात्' इति घ. पाठः।

[2] 'शब्देन सुपः' इति घ. पाठः।

नन्वेवं गणकार्यत्वाऽभावादुपसर्जनत्वेऽपि स्यात् । मैवम् । 'त्यदादीनामि'-त्यनुवर्त्य वचनविपरिणामेन 'त्यदादेः किम' इति व्याख्यानात् । अनुवृत्ति-सामर्थ्याच्चेह सूत्रे [1]'द्विपर्यन्तानामि'ति नियमस्य त्यागात् । उत्सर्ग इति । तेन 'तदोः सः सावि'ति सूत्रे 'अनन्त्ययोरिति किम्, हे स' इति भाष्यं, 'भो अच्युत' इति च न विरुद्ध्यत इति भावः । 'नास्ती'त्यत्र मूलन्तु प्रचुरप्रयोगा-ऽदर्शनमेव । यत्त्वाहुः—'इदमस्तु सन्निकृष्टं, समीपतरवर्त्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं, तदिति परोक्षे विजानीयादि'ति वचनादेवंविधस्याऽर्थस्या-ऽभिमुखीकरणाऽनर्हत्वादि'ति । तदापाततः । सन्निकृष्टादिशब्दानामिव इदमा-दीनामपि सम्बोध्यसमर्पकत्वे बाधकाऽभावात् । विप्रकृष्टस्याऽपि बुद्ध्या सन्निधापितस्य बहुशः सम्बोधनदर्शनाच्च । तथा च भट्टिः—'हा पितः, क्वासि हे सुभ्रु, बह्वेवं विललाप सः' इति ।

अनाप्यकः (७।२।११२) । प्रत्याहार इति । न तु टाप् । 'विभक्ता-वि'ति विशेषणादिति भावः । अनभ्यासविकार इति । तेन भृञामित् (७।४।७६) अर्त्तिपिपर्त्योश्च (७।४।७७) इतीत्त्वेऽलोन्त्यविधिरस्त्येव—'बिभर्त्ति', 'पिपर्त्ति' । ननु स्मायादेशात्परत्वादनादेशः स्यादित्याशङ्क्याह—नित्यत्वान्ङेः

---

बृहच्छब्दरत्नः

सामर्थ्याच्चेति । यद्यपि त्यदादयो द्विपर्यन्ता एवेति न नियमः, 'त्यदादीनि चे'त्यादौ व्यभिचारात्तथाऽपि पूर्वसूत्रे 'त्यदादीनां द्विपर्यन्तानामकारवचनमि'त्यनेन नियमस्य सत्त्वादर्थाऽधिकारादिहाऽपि तथैव स्यादिति भावः । न विरुध्यते इति ।

---

लघुशब्दरत्नः

(७।२।१०४) क्वाति (७।२।१०५) इत्यादेशे कद्वयश्रवणाऽऽपत्तिः । 'उतिहोरती'ति न्यासे उकारस्याऽन्त्यादेशत्वाऽऽपत्तिः । एतदर्थं 'नानर्थके' इत्यारम्भे गौरवम् । अङ्गवृत्तपरिभाषया 'क्वे'त्यत्र गुणस्य वारणे च क्लेश इति भावः ।

किमो द्वेरनन्तरं पाठेऽपि दोषाऽभावमाह—अनुवृत्तीति । इति च न विरुध्यत इति । यद्यप्ययं प्रयोगो निपातमादाय सिद्धयति, तथापि 'विभाषा भवदि'ति वार्त्तिकं न विरु-ध्यते इति तात्पर्यम् । विप्रकृष्टस्यापीति । 'परोक्षस्य चे'त्यपि बोध्यम् । पिपर्त्त्योरिति । अयं निर्देश एवाऽस्यांऽशस्य ज्ञापक इत्याहुः । अनादेशः स्यादिति । तत्र कृते सकृद्गति-न्यायेन पुनः स्मैर्न स्यादिति भावः । नित्यत्वादिति । लक्ष्याऽनुरोधेन बाधकाऽबाधित-

---

[1] 'द्विपर्यन्ता इति नियमस्य' इति ङ. पाठः ।

स्मै इति। कार्यं विधातुमिति। अपूर्वं बोधयितुमित्यर्थः। 'ईषदर्थे क्रियायोगे' इति श्लोके तु ईषदर्थादयो न विधीयन्ते, किन्त्वनूद्यन्ते। तेन एनादेशो न। एतेन—'नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापये'त्यपि व्याख्यातम्। भीरुत्वस्याऽनुवाद्यत्वेन विवक्षितत्वात्। मान्ताः॥

सुगाणिति। अनुनासिकस्य क्विझलोः (६।४।१५) इति दीर्घः। न च तस्मिन् कर्त्तव्येऽल्लोप-णिलोपयोः स्थानिवद्भावः शङ्क्यः। दीर्घविधौ तन्निषेधात्, क्वौ विधिं प्रति निषेधाच्चेति भावः। एतेन 'सुगण्णीश' इति प्राचो ग्रन्थं 'गणयतेः क्विबि'ति व्याचक्षाणा उपेक्ष्या इति ध्वनयति। 'तदीयो ग्रन्थोऽपि समर्थनीय' इत्याग्रहे तु इत्थं समर्थ्यताम्—सर्वलोपित्वेन क्विबिवाऽऽचरतीति—क्विप्। क्विप्शब्दादाचारक्विबन्तात्कर्त्तरि क्विप्। तेन विजित्यर्थः। णान्ताः॥

उपधादीर्घ इति। सर्वनामस्थाने चासम्बुद्धौ (६।४।८) इत्यनेन। ङौसम्बुद्धौ चेति। प्राचामनुरोधेनेत्थं व्याख्यातम्। 'ङ्यन्तस्य, सम्बुद्ध्यन्तस्य च पदस्ये'ति षष्ठ्यन्ततया व्याख्यानन्तूचितम्। एवं हि प्रत्ययलक्षणं

---

बृहच्छब्दरत्नः

'सम्बुद्धिरि'ति महासञ्ज्ञाकरणमुक्तार्थे ज्ञापकं बोध्यम्। भीरुत्वस्येति। यं प्रति गृहप्रापणं प्रार्थ्यते तेन भीरुत्वं बुद्धमित्यर्थः। ननु 'दीर्घपदेन त्रैपादिक एवेह गृह्यते' इतिभाष्यस्वरस इत्यरुचेराह—क्वाविति। एवं हीति। ननु 'हे राजपुरोहितौ'

---

लघुशब्दरत्नः

प्रसङ्गस्यैवाऽत्र ग्रहणान्न अनादेशो नित्य इति भावः। अपूर्वं बोधयितुमिति। अज्ञातज्ञापनमेवोभयत्राऽपि विधानं, न तु प्रवर्त्तनाविषयत्वमित्यर्थः। न विधीयन्ते=नाऽज्ञाता बोध्यन्ते। अनुवाद्यत्वेनेति। सखीवाक्यमिदम्। तत्र कृष्णे आरोपितभीरुत्वं भाविकामिव्यवहारसंगोपनायाऽनुवाद्यत्वेनैव विवक्षितमिति भावः। नन्दनिदेशत इति—नन्दनीयनिदेशादित्यर्थकं बोध्यम्।

दीर्घविधाविति। 'न पदान्तसूत्रे सपादसप्ताऽध्यायीस्थदीर्घस्याऽपि ग्रहणमि'त्यर्थस्य चिण्णमुलोः (६।४।९३) इति सूत्रे भाष्ये ध्वनितत्वादिति भावः। उपेक्ष्या इति। दीर्घप्राप्तेरिति भावः।

व्याख्यानं त्विति। तुनाऽरुचिर्बोधिता—'सप्तम्यन्तपाठेऽपि न लुमता (१।१।६३) इति निषेधाऽनित्यत्वेन 'वा नपुंसकानामि'त्यस्य सिद्धिरिति लाघवमस्ती'ति। औचित्यमेव दर्शयति—एवं हीति।

सुलभमिति तदर्थं निषेधसामर्थ्याऽनुसरणक्लेशो न कर्त्तव्यः। पूर्वस्मादपि विधौ स्थानिवत्त्वमाशङ्क्याऽऽह—न चेति। षाष्ठीमिति। वाह ऊठ् (६।४।१३२) इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः। इत्यसिद्धत्वादिति।

---

बृहच्छब्दरत्नः

इत्यादौ परिनिष्ठितविभक्त्या समासे, पूर्वपदस्य सम्बुद्ध्यन्तत्वेन नलोपनिषेधाऽऽपत्तिः, 'सम्बुद्धौ परत' इति व्याख्याने तु लोपशब्देन लोपे 'हे राजन्नि'त्यादौ चारितार्थ्येन, लुका लुप्ते प्रत्ययलक्षणाऽभावेन सम्बुद्धिपरत्वाऽभावान्न दोष इति चेन्न। सम्बुद्ध्यन्तानामनभिधानेन समासाऽभावात्। 'परिनिष्ठितविभक्त्या समास' इति पक्षस्य लक्ष्याऽनुरोधेनाऽत्राऽनङ्गीकारात्। वस्तुतस्तु परस्पराऽन्वयाऽभावात्सामर्थ्यमेव नाऽस्ति। वार्त्तिककारस्तु 'ङावुत्तरपदे' इति वार्त्तिके सम्बुद्धिग्रहणमपि प्रचिक्षेप। क्लेशो न कर्त्तव्य इति। ननु परसप्तमीपक्षेऽपि न क्लेशः। 'परमे व्योमन्नि'त्यादौ घोषत्वा-ऽल्पप्राणत्व-निरनुनासिकत्वाऽऽन्तर्येण सप्तम्येकवचनस्य पूर्वसवर्णे दकारे कृते, ङिपरत्वस्य सत्त्वात्। दकारे 'स्वादिष्वि'तिपदसञ्ज्ञायाः सत्त्वेन नलोपप्रसक्तिः। ततः संयोगान्तलोपेन रूपसिद्धिः। न च 'राजनीवाऽऽचरती'त्यर्थे 'अधिकरणाच्चे'ति क्यचि 'राजन्यति भिक्षुके' इत्यादौ निषेधाऽनापत्तिः, 'न लुमते'ति निषेधस्य दुर्वारत्वादिति वाच्यम्। ङेरभावाऽर्थं छान्दसत्वकल्पनाया आवश्यकत्वेन अयस्मयादित्वेन भत्वान्नलोपाऽप्रसक्त्या ङिग्रहणस्य भाष्यकृता प्रत्याख्यानेनेदृशे विषये क्यजनुत्पत्तेरनुमानात्। अत एव 'वा नपुंसकानामि'ति वार्त्तिकं ङौ छन्दस्येव प्रवर्त्तते, सम्बुद्धौ तु लोकवेदयोः। एतेन 'सम्बुद्धौ वा नपुंसकानाम्, ङौ तु च्छन्दस्युदाहरणमि'ति मूलं व्याख्यातमिति चेन्न। नलोपस्य सम्भावितत्वेन 'अकृतव्यूह'परिभाषया नकारनिमित्तदकाराऽप्रवृत्तेः। किञ्च सन्निपातपरिभाषया दकारनिमित्तनलोपाऽप्रसक्तौ 'न ङिसम्बुद्ध्योरि'ति सूत्रस्थङिग्रहणस्य वैयर्थ्याऽऽपत्तेः। अपि च 'प्रियाऽष्टन्'शब्दे सप्तम्येकवचनस्य दकारे, 'अष्टन आ विभक्तावि'त्यात्वाऽऽपत्तौ 'प्रियाष्टादि'ति प्रयोगाऽऽपत्तेः। 'आत्वे सन्निपातपरिभाषा न प्रवर्त्तते' इत्यग्रे निरूपयिष्यामः। अत एव 'ङावुत्तरपदे प्रतिषेध' इति वार्त्तिकं चरिताऽर्थम्। अन्यथा 'न ङिसम्बुद्ध्योरि'त्यस्य चरितार्थत्वेन लुकि ङिपरत्वाऽभावेन प्राप्त्यभावात्किमनेन। मन्मते छन्दोऽर्थं कृतं ङिग्रहणं लोकेऽप्यतिप्रसक्तमिति वार्त्तिकचारितार्थ्यं स्पष्टमेव। तस्मात्सम्बुद्धिसाहचर्येणाऽनादिष्टलोपविधायकसूत्रेण लुप्ते ङौ सूत्रं प्रवर्त्तते इति तत्त्वम्। ङौ 'संयोगान्ते'ति सूत्रन्तु आदेशे कृते एव प्रवर्त्तते। 'सुपां सुलुगि'तिसूत्रन्तु आदेशात्पूर्वमपि। सम्बुद्धौ हल्ङ्यादिसूत्रस्य नकारान्ते पूर्वसवर्णाऽऽदेशे कृते, अकृते च प्रवृत्तिः, साहचर्यात्सपादसप्ताऽध्यायीस्थे लोपे वा प्रवृत्तिः। तस्मान्नाऽन्ते पूर्वसवर्णपक्षे नलोपो भवत्येव। वस्तुतस्तु श्रुतिकृतविशेषे लुक्पूर्वसवर्णयोश्चारितार्थ्येन 'न ङिसम्बुद्ध्योरि'त्यस्य सामर्थ्यात्, प्रकाराऽन्तरेण वा

'नियमसूत्राणां विधिरूपेण प्रवृत्तिः, सामान्यशास्त्रतात्पर्यसङ्कोचकता चे'ति

बृहच्छब्दरत्नः

प्रवृत्तौ विशेषाऽभावेन पूर्वसवर्णे कृतेऽकृते च सिद्धत्वाल्लुगेव न्याय्यः। ध्वनितश्चाऽयमर्थः प्रकृतसूत्रे भाष्ये सूक्ष्मदृशाम्। 'सुपां सुलुगि'तिसूत्रस्थभाष्यन्तूदाहरणाऽन्यथासिद्धितात्पर्यकतया[1] प्रवृत्तत्वेन यथाकथञ्चिद्व्याख्येयमित्यन्यत्र विस्तरः।

'इत्यसिद्धत्वादि'त्ययुक्तम्। स्वव्यतिरिक्तविधेः सुबादिपदेन लक्षणया, 'भवती'त्यनेन 'न भवती'त्यर्थस्य लक्षणया च निषेधे पर्यवसानात्। स च निषेधो नलोपविधावनुवर्त्तमानस्य 'पूर्वऽत्रासिद्धमि'त्यस्य। 'नलोपः सुवि'त्यप्यधिकारसूत्रम्। योग्यताबलाच्च नलोपविधावेव सम्बध्यते। अनधिकारत्वेऽपि न दोषः। 'न मु ने' इत्यत्राऽपि ह्येषैव गतिः। तथा च 'स्थानेऽन्तरतम' इति सूत्रे भाष्यं—'नाऽनेनाऽन्तरतमा निवर्त्त्यन्ते, अपि त्वनन्तरतमा निवर्त्त्यन्ते' इति। अत एव वार्त्तिककारोऽपि वक्ष्यति-'उभयप्राप्तौ कर्मणीतिप्रतिषेधेऽकाऽऽदिप्रयोगेऽप्रतिषेध' इति। अत्र दोषत्रयं—स्वार्थहानिः, परार्थकल्पना, प्राप्तबाधश्चेत्यगत्या स्वीक्रियते। अत एव 'योऽस्माकं नियमविधिः स मीमांसकानां परिसङ्ख्याविधिरि'ति स्पष्टं भाष्य-कैयट-विवरणादावित्याशङ्क्याह—विधिरूपेणेति। न चैवं वैयर्थ्यं, नलोपविधावनुवर्त्तमानेन 'पूर्वत्राऽसिद्धमि'त्यनेनाऽसिद्धत्वस्य सिद्धत्वात्। किञ्च सुब्विध्यादौ नलोपाऽसिद्धत्वविधानकालेऽन्यविधिं प्रत्यप्यनुवर्त्तमानेनाऽसिद्धत्वस्याऽऽपत्तौ 'राजाऽश्व' इत्यादौ दीर्घाऽनापत्तिरित्यत आह—सामान्येति। सङ्कोचश्चाऽत्र [2]स्वविषये सामान्यस्याऽप्रवृत्तिः। निषेधपक्षेऽपीदमावश्यकम्। तेनाऽपि क्वचित्तस्याऽप्रवृत्तिबोधनात्। अन्यथा निषेधविषये विकल्पाऽऽपत्तिः। भाट्टमते 'न तौ पशौ करोती'त्यत्र यथा। 'पदे जुहोती'त्यादिभिराहवनीयविधेः सङ्कोचस्य पूर्वमीमांसायामङ्गीकाराच्च। न चैवम् 'आग्नेयं चतुर्धा करोति' 'पुरोडाशं चतुर्धा करोती'त्यन-

लघुशब्दरत्नः

सामान्यशास्त्रेति। प्राप्तस्य पुनर्विधानसामर्थ्येन सामान्यशास्त्रस्य सङ्कोचस्तदितरपरतारूप इत्यर्थः। सङ्कोचश्च नलोपविधौ पूर्वत्रासिद्धम् (८।२।१) इत्यस्याऽनुपस्थितिरूपः, अर्थवत्सूत्रे चाऽर्थवत्पदेनाऽर्थवत्समुदायाऽग्रहणरूपः। एवञ्चाऽस्य विधित्वं स्पष्टम्। इदमेव च नियमस्य विध्यपेक्षया गुरुत्वम्। निषेधवादिनोऽप्यस्याऽऽवश्यकत्वम्। अन्यथा विकल्पाऽऽपत्तेः। [3]सामान्यशास्त्रसङ्कोचे चाऽन्यत्र तदभावस्याऽप्यर्थतः सिद्धेरर्थसिद्धं तमादाय नियमशास्त्रेषु 'प्रतिषेधत्व'व्यवहारोऽपि। 'कृत्तद्धिते'तिसूत्रस्थसमासग्रहणकृतनियमेन बाध्यसमान्यचिन्तया कृदंशस्याऽपि सङ्कोच इति, 'मूलकेनोपदंशमि'त्यादौ न कृदन्तत्वप्रयुक्तं

[1] 'प्रकृतत्वेन' इति ख. पाटः।

[2] 'स्वाऽविषये' इति क. ख. पाठ.

[3] 'सामान्यशास्त्रस्य' इति घ. पाठः।

पक्षस्य द्युद्भ्यो लुङि (१।३।९१) इति सूत्रे भाष्यकृता ध्वनितत्वादिति भावः। 'निषेधरूपेण प्रवृत्तिरि'ति पक्षे तु पूर्वत्रासिद्धम् (८।२।१) इत्यनेनेति बोध्यम्।

बृहच्छब्दरत्नः

योरिवोपसंहाराऽऽपत्तिः। विशेषशास्त्रस्य, सामान्यशास्त्रस्य च वैयर्थ्याऽऽपत्तेः। वेदे तु न कश्चित्प्रणेता येनैवं पर्यनुयुज्येत। स्वतन्त्रेच्छेश्वरं प्रत्यपि पर्यनुयोगः कर्त्तुमशक्यः। अदृष्टाऽर्थत्वेन चारितार्थ्याच्च। तस्मात्तत्र लाघवादिनैव निर्णयः। किञ्च शाखाभेदेन पाठादानर्थक्यशङ्कैव नास्ति। एवञ्च सामान्यशास्त्रस्य विशेषे तात्पर्यकल्पनाया [1]उभयत्र वाच्यत्वात्तयैवोपपत्तौ, दोषत्रयं न सोढव्यमिति युक्त एवाऽयं पक्षः।

ध्वनितत्वादिति। 'द्युद्भ्यो लुङी'तिसूत्रपक्षस्य[2] 'अनुपराभ्यां कृञ' इतिसूत्रस्थभाष्ये ध्वनितत्वादित्यर्थः। तत्र हि 'अनुदात्तङित' इत्यात्मनेपदाऽपवादकतया 'द्युद्भ्यो लुङी'तिपरस्मैपदविधानेनाऽऽत्मनेपदाऽप्राप्तौ 'द्युद्भ्यो लुङी'ति सूत्रे

लघुशब्दरत्नः

प्रातिपदिकत्वम्। 'पञ्च पञ्चनखा भक्ष्या' इति शास्त्रेणाऽपि प्रापकप्रमाण-राग-प्राप्तभक्षणस्य तदितराऽविषयत्वरूपसङ्कोचकल्पनम्। तेनाऽन्येषां भक्षणाऽभावो गम्यते, तद्भक्षणे प्रायश्चित्तञ्च गम्यते। 'पतिः समास एव (१।४।८) इत्यादौ एवकारो घिसञ्ज्ञाशास्त्रस्य समासाऽघटकपतिशब्दाऽविषयकत्वरूपसङ्कोचस्य[3] स्फुटं द्योतनाय, 'पतिघटितसमासाऽन्यसमासाऽविषयकत्वरूपसङ्कोचो मा भूदि'ति। 'अन्ययोगव्यवच्छेद एवकाराऽर्थ' इति तु सामान्यप्रमाणसङ्कोचफलितमर्थमादाय नेयम्। द्युद्भ्यो लुङीति। द्युद्भ्यो लुङि (१।३।९१) इति सूत्रमुपक्रम्य अनुपराभ्याम् (१।३।७९) इति सूत्रे इत्यर्थः। 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र 'भक्ष्यनियमेऽभक्ष्यप्रतिषेधो गम्यते' इति ग्रन्थेन पस्पशायाञ्च भाष्ये स्पष्टमेतत्। भक्ष्यनियमे। प्राप्तभक्षस्य पुनर्विधाने इत्यर्थः। निषेधरूपेणेति। [4]सुबादिपदेन स्वव्यतिरिक्तविधेर्लक्षणया, '[5]भवती'त्यनेन 'न भवती'त्यर्थस्य च[6] लक्षणयेति भावः। निषेधश्च नलोपविधावनुवर्त्तमानपूर्वत्राऽसिद्धत्वस्य। अत एवाऽत्र स्वार्थहानि-प्राप्तबाध-परार्थकल्पनारूपदोषत्रयं मीमांसकैरुच्यते। परिसंख्यापदेन चाऽयं व्यवह्रियते इति बोध्यम्।

इति पक्षे त्विति। अनेनाऽरुचिर्बोधिता। तद्बीजन्तु लक्षणायां गौरवं, फलाऽभावश्च, तदभावे लक्षणाया अनौचित्यञ्चेति।

[1] 'उभयं वाच्यत्वात्' इति क. ख. पाठः।
[2] 'सूत्रे पक्षस्य' इति क. ख. पाठः।
[3] सङ्कोचस्फुटत्वद्योतनाय' इति घ. पाठः। 'स्फुटं द्योतनाय' इति क. पाठः।
[4] 'सुबादिपदस्य स्वव्यतिरिक्तविधौ' इति मुद्रितेषु पाठः।
[5] 'भवतीत्यस्य च न भवतीत्यर्थे' इति मुद्रितेषु पाठः।
[6] चकारः क. नास्ति।

सुब्विधिमुदाहरति—आत्वमित्यादिना। स्वरविधौ तु 'पञ्चाऽर्मम्'। दिक्सङ्ख्ये सञ्ज्ञायाम् (२।१।५०) इति समासे, नलोपे कृते, अवर्णान्तं पूर्वपदं जातमिति अर्मे चावर्णं द्व्यच्त्र्यच् (६।२।९०) इति पूर्वपदाद्युदात्तत्वं प्राप्तं, नलोपस्याऽसिद्धत्वान्न भवति। सञ्ज्ञाविधौ—'पञ्चे'त्यत्र नलोपे कृतेऽपी'त्या-

### बृहच्छब्दरत्नः

विकल्पाऽनुवृत्तिरि'त्युक्तम्। मानञ्चाऽस्मिन्पक्षे 'पपिवानि'त्यत्र 'वस्वेकाजाद्घसामि'-त्यनेन हि सन्निपातपरिभाषया आलोपाऽनापत्तिरित्यत आह—निषेधरूपेणेति (४६५ पृष्ठे)। दिक्संख्ये इति। 'दिक्सङ्ख्ये' इत्यनुवर्त्तमाने 'तद्धितार्थे'ति समाहारसमासे इत्यर्थः। केचित्तु 'अर्मन्'शब्दो जातिपरः। पञ्चत्वस्य परम्परयाऽन्वयेन 'दिक्सङ्ख्ये सञ्ज्ञायामि'त्येव समास' इति वदन्ति। 'पद्दन्नोमासि'तिसूत्रविहितदोषन्नादेशस्य शसादिसुप्स्येव प्रयोगात्सामान्यशास्त्राऽप्रवृत्तौ, फलाऽभावेन 'यूषन्'शब्दे सूत्राऽनुपन्यास इति ध्येयम्। नलोपे इति। न चाऽत्र 'स्वरविधौ व्यञ्जनमविद्यमानवदि'ति वाच्यम्। अन्तोदात्तत्वादिरूपव्यवहारेष्वेव तत्प्रवृत्तेः। 'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु' इति सूत्रस्थपृथिव्यादिपर्युदासरूपधर्मिग्राहकस्य तथैव सत्त्वात्। अत एव च 'शतुरनुमो नद्यजादी' 'अचः कर्त्तृयकि' 'कर्षात्त्वतः' 'अचः' [१]इत्यादौ 'अजादी' 'इत्यादिपदानां चारितार्थ्यम्। अत एव च 'राजवती'-त्यत्र 'अन्तोऽवत्या' इति न। इदमेवाऽभिसन्धाय 'हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवदि'त्युद्घोषः। [२]न चैवं 'कर्त्र्यो' 'हर्त्र्यो' इत्यत्र 'अकृतव्यूह' परिभाषया पूर्वं परयणादेशे, ततः स्थानिवद्भावेन पूर्वस्य। न चैवमुदात्तयण इति विभक्तेरुदात्तत्वं न स्यादिति वाच्यम्। स्वरविधौ व्यञ्जनस्याऽविद्यमानवद्भावेन पूर्वं

### लघुशब्दरत्नः

इति समासे इति। इत्यनुवर्त्तमाने तद्धितार्थ (२।१।५१) इति समासे इत्यर्थः। 'स्वरविधौ व्यञ्जनमविद्यमानवदि'ति तु नाऽत्र। तस्य स्वरोद्देश्यकविधावेव प्रवृत्तेः। नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु (६।२।१४२) इति सूत्रे देवताद्वन्द्वे [३]पूर्वोत्तरपदप्रकृतिस्वरनिषेधके पृथिव्यादिपर्युदासरूपधर्मिग्राहकस्य तथैव सत्त्वात्। अत एव अचः कर्त्तृयकि (६।१।१९५) शतुरनुमो नद्यजादी (६।१।१७३) इत्यादौ 'अच' इति, 'अजादी' इत्यादि च चरितार्थम्। अत एव 'राजवती'त्यादौ नलोपस्याऽसिद्धत्वादन्वतीशब्दत्वात् अन्तोऽवत्याः (६।१।२२०) इति स्वरो न।

१ 'इत्यादावनादिपदानाम्' इति क. ख. पाठः।

२ 'इति विरुध्येतेति वाच्यम्' इत्यन्तः शङ्काग्रन्थोऽयम्।

३ 'उत्तरपद' इति क्वचित्पाठः। स चाऽशुद्धः। 'पूर्वोत्तरपदे'ति पाठ' इति भावप्रकाशात्। 'पूर्वोत्तरपदे'ति घ. शोधितः पाठः।

दिना स्त्रीप्रत्ययेषु वक्ष्यति। कृति तुग्विधौ तु-'वृत्रहभ्याम्'। ह्रस्वस्य पिति (६।१।७१) इति तुक् न। कृति किम्?। वृत्रहच्छत्रम्। छे च (६।१।७३) इति तुक् स्यादेव। प्रतिदीव्नेति। 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिव' इति कनिन्। हलि च (८।२।७७) इति दीर्घः। यत्तु उपधायाश्च (८।२।७८) इत्युपन्यस्तम्। तन्न। दिवेर्वकारस्याऽनुपधात्वात्।

इन्हन् (६।४।१२)। उपधाया इति। उपधादीर्घस्यैवाऽयं नियमः। तेन 'वृत्रहायते' इत्यत्र अकृत्सार्वधातुकयोः (७।४।२५) इति दीर्घो भवत्येव। तथा 'वृत्रहणी' इत्यत्र अनुनासिकस्य क्विझलोः (६।४।१५) इति यो दीर्घः

---

**बृहच्छब्दरत्नः**

यणमेवाऽऽश्रित्यैतत्समाधानादि'ति विरुध्येतेति वाच्यम्। 'उदात्तयण' इत्युक्तत्वेनोदात्तत्वस्याऽपि निमित्तकोटौ प्रवेशात्। स्थानिवद्भावान्निमित्तविनाशाऽभावेनाऽन्तरङ्गत्वात्पूर्वं यणादेशस्यैव न्याय्यत्वाच्च। नलोपविधेः पूर्व एव सुब्विधिर्गृह्यते। स्वरादिसाहचर्यात्। नलोपविधौ 'पूर्वत्राऽसिद्धमि'त्यस्याऽनुवर्त्तनाच्च। अत एव 'दण्डिष्वि'त्यादौ षत्वसिद्धिरित्याहुः।

अनुपधात्वादिति। यत्तु 'प्रतिदिवन्'शब्दादाचारक्विबन्तादप्रत्यये[1] न दोष' इति। तन्न। 'अनुनासिकस्ये'ति सूत्रेण दीर्घाऽऽपत्तेः। न च भाविनमल्लोपमालोच्य 'अकृतव्यूह'परिभाषया दीर्घो न करिष्यते इति वाच्यम्। दीर्घप्रवृत्तिकाले, दीर्घे कृते वाऽल्लोपस्याऽप्राप्तत्वेन निमित्तविनाशसम्भावनाया अभावात्। अत एव 'अल्लोपोऽन' इतिसूत्रे तपरकरणं चरितार्थम्। न च 'प्राण'शब्दादिव्यावृत्त्या चरितार्थम्। तत्राऽपि त्वदुक्तरीत्या दीर्घाऽप्रवृत्तेस्तुल्यत्वाच्च। अत एवे-

---

**लघुशब्दरत्नः**

'उदश्वित्वानि'त्यत्र ह्रस्वनुड्भ्याम् (६।१।१७६) इति मतुबुदात्तत्वं[2] नेत्याकरः। इदं समासस्य (६।१।२२३) इति सूत्रे भाष्ये स्पष्टम्। इदमेवाऽभिसन्धाय यतोऽनावः (६।१।२१३) इत्येतन्निषेधमूलकं, 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदि'ति परिभाषाऽन्तरं भाष्ये तत्रैव स्पष्टमुक्तम्। अनुपधात्वादिति। 'धातोरुपधाभूतरेफवकारयोर्हल्परयोरि'ति तदर्थादिति भावः। प्रतिदिवन्शब्दादाचारक्विप्यपि अनुनासिकस्य (६।४।१५) इति दीर्घे इदं रूपं दुर्लभम्। वस्तुतो हलन्तेभ्य आचारक्विपोऽनभिधानमन्यत्रोक्तम्। तथेति। यथोपधाग्रहणादकृदिति दीर्घाऽव्यावृत्तिस्तथा सर्वनामस्थानग्रहणाऽसम्बद्धोपधापदाऽनुवृत्तेरस्य व्यावृत्तिरित्यर्थः।

---

[1] अप्रत्यये = यथायथं क्विबादिप्रत्यये इत्यर्थः।

[2] 'मतुबुदात्तत्वं च नेत्याकरः' इति मुद्रितः पाठः। 'स चाऽपपाठ' इति भावप्रकाशः।

सोऽपि नियमेन व्यावर्त्त्यते। उपधादीर्घमात्राऽपेक्षया नियमविज्ञानादिति भावः। हन्तेरत्पूर्वस्य (८।४।२२) इति सूत्रं योगविभागेन व्याचष्टे—हन्तेः। प्रसङ्गादस्योदाहरणमाह—प्रहण्यादिति। प्रकृतोपयुक्तमंशमाह—अत्पूर्वस्य (८।४।२२)। एकाजुत्तरेति। न चाऽल्लोपे[1] कृते एकाऽच्त्वं नास्तीति वाच्यम्। पूर्वस्मादपि विधौ स्थानिवत्त्वात्। न च 'पूर्वत्राऽसिद्धे न स्थानिवदि'ति वाच्यम्। 'तस्य दोषः संयोगादिलोपलत्वणत्वेष्वि'त्युक्तेः। यत्तु अट्कुप्वाङ् (८।४।२) इति सूत्रे 'वृत्रघ्नः'[2] 'स्रुघ्न' इति भाष्यमुपादाय कैयटेन व्याख्यातं—'प्रातिपदिकान्त (८।४।११) इति णत्वप्रसङ्ग' इति, तत् पञ्चमीसमासो मास्त्वित्याशयेन, 'तस्य दोष' इत्यत्र णत्वग्रहणं मास्त्व'-त्याशयेन वा बोध्यम्। णत्वग्रहणप्रत्याख्यानन्तु भाष्ये ध्वनितं, कौस्तुभे च प्रपञ्चितम्। वस्तुतस्तु कुमति च (८।४।१३) इति नित्यं णत्वमिह न्याय्यम्। सर्वथाऽपि वैकल्पिकं, नित्यं वा प्राप्तं णत्वं नियमेन निवर्त्त्यत इति सिद्धम्। भाष्ये तु 'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः'। किं प्रयोजनम्?।

**बृहच्छब्दरत्नः**

दृशे विषयेऽकृतव्यूहपरिभाषाया अनित्यत्वान्न प्रवृत्तिरिति वदन्ति। न च झलादिकित्साहचर्याद्धातोर्विहित एव किब् गृह्यते इति वाच्यम्। आचारक्विपः कित्त्वस्य वैयर्थ्याऽऽपत्त्या साहचर्यस्याऽनाश्रयणात्। बोध्यमिति। अत एव 'अत्पूर्वस्ये'ति कर्त्तव्येऽपि न स्थानिवद्भावः। भाष्ये ध्वनितमिति। 'अनितेरन्त' इति सूत्रे' इति शेषः। वस्त्विति। यत्तु 'घस्य नकारनिमित्तत्वात्सन्निपातपरिभाषाविरोध' इति।

**लघुशब्दरत्नः**

पञ्चमीसमासो मास्त्विति। सार्वत्रिको माऽस्तु, अनित्यत्वादित्यर्थः। तदनित्यत्वेन स्थानिवत्त्वाऽभावे एकाच्त्वाऽभावादेव एकाजुत्तर (८।४।१२) इति णत्वव्यावृत्तिः सिद्धेति भावः। णत्वग्रहणमिति। 'माषवपनी'त्येतद्धि तत्प्रयोजनम्, तच्च [3]बहिरङ्गतया यस्येति च (६।४।१४८) इत्यल्लोपाऽसिद्धत्वेनाऽपि सिद्धमिति तन्मास्त्विति भावः। इदं त्रिपाद्यां तत्परिभाषाप्रवृत्त्यभिमानेन। भाष्ये ध्वनितमिति। अन्यथासिद्ध'माषवपनी'-त्येतस्य तदुदाहरणत्वोक्त्येत्यभिमानः[4]। न्याय्यमिति। तस्य प्रातिपदिकान्त (८।४।११)

[1] 'अलोपे कृते' इति घ पाठः।
[2] 'वृत्रघ्नः' 'स्रुघ्नः' इति ङ. पाठः। 'स्रुघ्न' इति मसीलेपेन घ. निस्सारितम्।
[3] 'बहिरङ्गपरिभाषया' इति घ. पाठः।
[4] 'इति भाव' इति घ. पाठः।

**'वृत्रघ्नः' 'सुघ्नः' 'प्राघानि'। हन्तेरत्पूर्वस्य (८।४।२२) इत्यत्पूर्वग्रहणं न कर्त्तव्यं भवती'त्युक्तम्। एतच्च वार्त्तिकाऽऽशयवर्णनमात्रं, न तु वस्तुस्थितिः। वार्त्तिकेन सूत्राऽवयवप्रत्याख्यानाऽपेक्षया योगविभागमाश्रित्य वार्त्तिकाऽर्थोपसङ्ग्रहस्यैव न्याय्यत्वादिति दिक्।**

---

बृहच्छब्दरत्नः

तन्न। णत्वविधायकमात्रे 'अट्कुप्वाङि'त्यधिकारेण कवर्गनिमित्तत्वादुक्तपरिभाषाया दुर्वारत्वेन 'अत्पूर्वस्ये'तिसूत्रांऽशस्य, 'हादेशकुव्यवाये' इति वार्त्तिकस्य च वैयर्थ्याऽऽपत्तेः। तस्मादत्र षत्वदृष्ट्या णत्वस्याऽसिद्धत्वेन निमित्तविघाताऽभावादुक्तपरिभाषा न प्रवर्त्तते इति भाष्यकारादीनामाशय उन्नेयः। अत एव 'पञ्चानामि'त्यादौ षट्सञ्ज्ञां निमित्तीकृत्य जायमाने नुट्यपि नलोपसिद्धिः।

योगविभागमिति। नन्वेवं 'बहुवृत्रहाणी'त्यत्र णत्वं न स्यात्। न च 'उपदेशे' इत्यनुवर्त्तनान्न दोषः। 'अत्पूर्वस्ये'त्यस्य वैयर्थ्याऽऽपत्तेरिति चेन्न।

---

लघुशब्दरत्नः

[1]इत्यस्याऽपवादत्वादिति भावः। न च सन्निपातपरभाषया तदप्राप्तिः। सर्वणत्वेषु कवर्गव्यवायाऽऽश्रयणेन तद्विषये [2]तस्या अनित्यत्वाऽऽवश्यकत्वात्। हादेशेष्विति। हादेशकवर्ग-व्यवाये इत्यर्थः। आर्षत्वाद्वार्त्तिके समासः। वार्त्तिके 'हादेशे'त्युक्ते'द्रुघण' इत्यादौ पूर्वपदात् (८।४।३) इति णत्वं सिद्ध्यति। तत्र हि हन्तेरप्प्रत्ययो, घनादेशश्च। अत एव अगारैकदेशे (३।३।७९) इति सूत्रे प्रघणप्रघाणयोः कृतणत्वयोरुच्चारणम्। तत्राऽपि हन्तेर्घनघानाऽऽदेशविधानात्। न्याय्यत्वादिति। न च वार्त्तिकरीत्या 'बहुवृत्रहाणी'ति णत्वमायाति, सूत्राऽऽरम्भे तु नेति वार्त्तिकाऽऽरम्भस्यैव ज्यायस्त्वात्कथं न्याय्यत्वम्। बहिरङ्गत्वेन दीर्घस्याऽसिद्धत्वे तु 'प्राघानी'त्यत्र दोषः। तथा सूत्राऽऽरम्भे 'प्रघनाघन' इत्यत्र णत्वं प्राप्नोति, वार्त्तिकरीत्या तु नेति वाच्यम्। [3]अत्पूर्वस्य (८।४।२२) इत्यनेन हस्थानिककवर्गाऽभाववद्धन्तेरेवोपलक्षणेनाऽदोषात्[4]। प्रघाणप्रघणयोः कृतणत्वयोः अगारैकदेशे (३।३।७९) इति सूत्रे उच्चारणमत्रत्याऽत्पूर्वग्रहणस्योक्ताऽर्थोपलक्षणत्वे मानम्। णत्वनिपातनकल्पनाऽपेक्षयोक्ताऽर्थतात्पर्यग्राहकत्वौचित्यादिति भावः। तदेतद् ध्वनयतोक्तम्—वार्त्तिकार्थोपसङ्ग्रहस्येति।

---

[1] 'इत्यपवादत्वात्' इति क्वचित्पाठः।

[2] 'तस्याऽनित्यत्वावश्यकत्वात्' इति घ. ङ. पाठः।

[3] 'अत्पूर्वस्ये'ति भूमाऽर्थबहुव्रीहिणा 'अकारः पूर्वो बाहुल्येन यस्मात् हन्तिनकारादि'त्यर्थकेन अत्पूर्वस्येत्यनेन' इति घ. पाठः। स च कुण्डलितः।

[4] इतोऽग्रे 'हस्थानिककवर्गवति 'प्रघनाघन' इत्यत्रैवाऽत्पूर्वत्वं, नाऽन्यत्र। तदभाववति तु क्वचिदेव 'बहुवृत्रहाणी'त्यत्र तदभावः, अन्यत्र तु सर्वत्राऽत्पूर्वत्वम्। अत एव 'अत' इति पञ्चम्यन्तमेव नाऽकारि। प्रघाणप्रघणयोः' इति घ. कुण्डलितः पाठः।

**माधवेनोक्तमिति । इत्थं हि तदीयो ग्रन्थः–'भसञ्ज्ञायामल्लोपे उत्तरपदमनच्कं स्यात् । [1]स्थानिवद्भावश्चाऽल्विधित्वान्नेत्येकाजुत्तरपदत्वाऽभावात् प्रातिपदिकान्तनुम्विभक्तिषु च (८।४।११) इति विकल्पो भवति—वृत्रघ्नो, वृत्रघ्ण' इति । तद्भाष्येति । किञ्च 'अल्विधित्वान्ने'त्यसङ्गतम् । अल्विध्यर्थमेव अचः परस्मिन् (१।१।५७) इत्यस्याऽऽरम्भात्, तस्याऽप्रवृत्तौ युत्तयन्तरस्यैव वाच्यत्वात् । 'विकल्प' इत्यप्यसङ्गतम् । कुमति च (८।४।१३) इति सूत्रस्य दुर्वारत्वादित्यवधेयम् ।**

बृहच्छब्दरत्नः

नियमेन व्यावर्त्तितस्य प्रातिपदिकाऽन्तस्य णत्वाऽर्थमेकाजुत्तरेतिसूत्रे णग्रहणस्य सत्त्वात् । 'णग्रहणं स्पष्टाऽर्थमि'ति तु वार्त्तिककृन्नये बोध्यम् । तत्र वचनसामर्थ्येन श्रूयमाणैकाजुत्तरपदस्यैव ग्रहणम् । अपरे त्वाहुः—'प्रकृतिमात्रनिमित्ताऽन्तरङ्ग-णत्वदृष्ट्या प्रकृतिप्रत्ययोभयनिमित्तबहिरङ्गदीर्घस्याऽसिद्धत्वेनाऽत्पूर्वत्वाऽनपायः । न च 'वृत्रघ्न' इत्यत्राऽप्यसिद्धत्वम् । 'अत्पूर्वस्ये'त्यस्य सङ्कोचाऽऽपत्तेः । तस्मात् परिभाषया अत्वजातिपूर्वत्वे सति ह्रस्वपूर्वत्वसम्पादनाऽर्थमसिद्धत्वम् । तत्र लाघवात् ह्रस्वत्वमात्रसम्पादने एवाऽसिद्धत्वम् । तावतैव योगविभाग-श्चरितार्थः । न च 'नाऽजानन्तर्ये' इति निषेधः । अचोरानन्तर्याऽभावात् । 'षत्वतुकोरसिद्ध' इति धर्मिग्राहकमानेन निर्दिष्टपरिभाषाबोधिताऽऽनन्तर्ये एव निषेधप्रवृत्तेश्च । अत एव 'अत' इति पञ्चम्यन्तं न सूत्रितम् । नन्वेवमपि 'अत्परस्ये'ति सूत्रं कार्यम्, 'परस्ये'तिसामर्थ्यान्निर्दिष्टपरिभाषाया न व्यापारः, अकारश्च हन्तेरेव, 'हन्तेरवयवीभूतो योऽकारस्तस्मात्परस्य णत्वमि'ति वाक्याऽर्थ इति चेत् । सत्यम् । 'अपूर्वो यस्मादि'ति बहुव्रीहिलाभाऽर्थं पूर्वग्रहणम् । तत्फलन्तु अतद्गुणबहुव्रीहिसंविज्ञानेन तत्सामर्थ्यात्प्रकरणाऽनादरेणाऽत्पूर्वनकार-मात्रग्रहणम् । तेन 'उपसर्गादि'त्युत्तराऽर्थमनुवृत्तमपि 'अत्पूर्वस्ये'त्यत्र न सम्बध्यते । न च योगविभागसामर्थ्यादेव 'उपसर्गादि'ति न सम्बध्यते इति वाच्यम् । 'प्रघ्न' इत्यादौ 'कुमति चे'ति वारणेन, 'प्रघ्नन्ती'त्यादौ 'हन्तेरि'ति वारणेन च चारितार्थ्यात् । न च 'वमोर्वे'ति सूत्रादुत्तरमेवाऽत्परस्येति वाच्यम्, 'उपसर्गादि'त्यस्य निवृत्तिरेव स्वीकार्येति वाच्यम् । विकल्पाऽनुवृत्त्यापत्तेः । 'अन्तरदेशे' इत्यादावुपसर्गादित्यस्याऽसम्बन्धाऽऽपत्तेश्च । न चेष्टाऽऽपत्तिः । वृत्त्यादिविरोधाऽऽपत्तेः । 'अन्तर्गतं हननमन्तर्हननमि'त्यादौ णत्वाऽऽपत्तेश्च । तदनुवृत्तौ तु 'यत्क्रियायुक्ताः प्रादय' इति न्यायेनैव वारणम् । अत एव 'अन्तरदेशे' 'अयनञ्चे'ति सूत्रद्वयं लाघवादेशप्रतिषेधाऽर्थमात्रम् । न च 'पूर्व'ग्रहणं व्यव-हितग्रहणाऽर्थमस्त्विति वाच्यम् । 'व्यवहिताश्चे'ति सूत्रेणाऽव्यवहिताऽर्थकत्व-

[1] 'अल्विधित्वान्नेत्यसङ्गतम्' इति घ. नास्ति ।

**मघवा बहुलम्** (६।४।१२८)। **अर्वणस्त्रसावनञः** (६।४।१२७)। इति सूत्रात् 'तृ' इत्यनुवर्त्तते। तदपेक्षया च 'मघवे'ति षष्ठ्यर्थे प्रथमा। तदाह—**मघवन्शब्दस्येति**। **अधातोरिति**। अधातुभूतपूर्वस्याऽपीत्यर्थः। अञ्चतिग्रहणं हि[1] नियमाऽर्थं—'धातोश्चेद्भवति अञ्चतेरेवे'ति। एवञ्च 'गोमानिवाचरति गोमानि'त्यादौ सम्प्रति धातुत्वेऽपि विद्ध्यर्थम् 'अधातु'-ग्रहणम्। एतच्च मूले एव स्फुटी भविष्यति। ननु 'कुर्वन्नि'त्यादाविव संयोगान्तलोपस्याऽसिद्धत्वेन नान्तत्वाऽभावाद्दीर्घत्वं न स्यादित्याशङ्क्याऽऽह—**इहेति**। **बहुलग्रहणादिति**। क्वचिदन्यदेवेत्यर्थकादित्यर्थः। **निपातनादिति**। 'महेर्हकारस्य घकारः, अवुगागमः, कनिप्रत्ययश्चे'त्यस्य त्रितयस्य निपातनादित्यर्थः। **प्रत्याख्यातमिति**। तथा च '[2]छन्दसीवनिपावि'त्यत्र कैयटेनोक्तं–'मघवा बहुलम् (६।४।१२६) इत्येतन्न कर्त्तव्यं, 'श्वन्नुक्षन्नि'ति

बृहच्छब्दरत्नः

बोधनात्। न चैवं 'प्राघानी'त्यत्राऽपि णत्वाऽऽपत्तिः। दीर्घस्य धातुप्रत्ययनिमित्तत्वेन, णत्वस्य [3]धातूपसर्गनिमित्तत्वेन च समत्वात्। दीर्घस्यैकपदाऽऽश्रितत्वेनाऽन्तरङ्गत्वाच्च। 'प्रघनाघन' इत्यत्राऽच्प्रत्ययाऽन्ते पूर्वखण्डे णत्वं भवत्येव। वार्त्तिकस्य 'कुव्यवधाने सर्वत्र णत्वाऽभाव' इत्यस्मिन्नर्थे न तात्पर्यं, किन्तु योगविभागाऽभावे णत्वमात्रस्य निवृत्तिर्दुर्घटेत्यस्मिन्नर्थे इति भाष्याऽर्थविदां स्पष्टम्।

अञ्चतेरेवेति। अञ्चतिश्चाऽत्र नलोपी गृह्यते। तथैव सूत्रे निर्देशात्। मूले तथैव विवृतत्वाच्च। अत एव 'प्रत्यञ्ची'त्यादयोऽपप्रयोगा एव। अत एव 'प्रत्यञ्चावि'त्यादौ नकारद्वयश्रवणशङ्काऽपि नास्तीत्यपरमनुकूलमित्यन्यत्र विस्तरः। विध्यर्थमिति। ननु नियमस्य विशेषाऽपेक्षत्वेनौपदेशिकधातोरेव वारणेन नामधातोर्नुम्सिद्धौ 'अधातु'ग्रहणं व्यर्थमिति चेन्न। 'अधातु'ग्रहणं कुर्वता सूत्रकारेण, 'अधा-

लघुशब्दरत्नः

भूतपूर्वपर्यन्तमधातुपदस्य लक्षणायां बीजमाह—**अञ्चतिग्रहणं हीति**। **अञ्चतेरिति**। नलोपिनोऽञ्चतेरित्यर्थः। नलोपेन निर्देशात्। सामान्याऽपेक्षश्च नियमः। तेन 'पर्णध्वत्' गोमत्यतेः क्विपि 'गोमानि'त्यादौ उगितश्च (४।१।६) इति ङीबपि नेति दिक्। स्पष्टञ्चेदमत्र भाष्ये, उगितश्च (४।१।६) इति सूत्रे च। **कैयटेनेति**। अयं च कैयटः केशाद्वः

[1] हिः घ. नास्ति।

[2] 'छन्दसीवनिपौ च वक्तव्यौ' इति वार्त्तिकम्।

[3] 'अधातूपसर्ग' इति क. ख. पाठः।

निपातनात्, मघशब्दान्मतुषा च भाषायामपि शब्दद्वयस्य सिद्धत्वादि'ति। यत्त्वत्र वार्त्तिककृतोक्तम्—

'अर्वणस्तृ मघोनश्च न शिष्यं, छान्दसं हि तत्।

मतुब्वन्योर्विधानाच्च, छन्दस्युभयदर्शनात्' ॥ इति,

यच्च तद्व्याख्याऽवसरे कैयटेन—'भाषायामसाधुते'त्युक्तं, तद्वनिबन्तमद्ध्योदात्त-मघवन्शब्द-विषयकम्। छन्दस्येव वनिब्विधानात्। अतो न कैयटस्य पूर्वाऽपरविरोध इति ध्वनयन्नाह—[1]'छन्दसीत्यादि।

बृहच्छब्दरत्नः

तुग्रहणमधातुभूतपूर्वोऽर्थमि'ति वदता भाष्यकारेण च सामान्याऽपेक्षनियमस्यैवा-

लघुशब्दरत्नः

(५।२।१०९) इति सूत्रस्थः। अर्वणस्तृ इत्यादि। अर्वणो, मघोनश्च तृ न शिष्यं, यतस्तच्छान्दसम्। सामान्यतो बोधितानामपि केषाञ्चित् [2]घृधात्वादिवन्नियतविषयत्वादित्यर्थः। एवञ्च छन्दसि दृष्टाऽनुविधिरिति, न तदर्थः शास्त्राऽऽरम्भ[3] इति तात्पर्यम्। [4]एवं हि छान्दसलक्ष्यसाधकसर्वसूत्रप्रत्याख्यानं स्यादतः प्रकाराऽन्तरेणाऽपि सिद्धिमाह—[5]'मतुब्वन्योरिति। ऋधातोर्विजन्तात्, मघशब्दाच्च [5]मतुब्वनिभ्यां रूपद्वयसिद्धिरिति भावः। ननु सूत्राऽऽरम्भे नित्यस्तृ आदेशोऽर्वणः, प्रत्याख्याने तु पक्षे तदभावोऽपीत्यत आह—छन्दस्युभयेति। त्रादेश-तदभावेत्यर्थः। तदुदाहरणम्—'इमान्यर्वणः पदानी'ति। [6]एतत्प्रत्याख्याने दीर्घो, घकारोदात्तत्वं च लभ्यते। एतेनाऽस्य च्छान्दसत्वाच्छन्दसि त्रादेशपक्षे मघवन्नित्येव रूपं, तच्च मत्वन्तस्य च्छान्दसत्वाद्दीर्घाऽभावेन साध्यमिति प्रत्याख्यानाऽऽशयः, लोके तु मत्वन्ते दीर्घो भवत्येवे'ति परास्तम्। वार्त्तिकाऽक्षरस्वारस्येन तथाऽप्रतीतेः। 'मघवानृजीषी'त्यादौ वेदेऽपि दीर्घस्य पठ्यमानत्वाच्च। तदेतत्कैयटेनोक्तं—भाषयामसाधुतेति। केशाद्वः (५।२।१०९) इति सूत्रस्थ [7]उक्तकैयटस्तु एतत्सूत्रस्थवार्त्तिकविरोधात्, स्वग्रन्थविरोधाच्च हेय एवेति ध्येयम्। यत्तु 'छान्दसा अपि क्वचिद्भाषायामि'त्याश्रित्य भाषायां प्रयोग' इति। तन्न। तज्ज्ञापकस्य वयस्यासु मूर्ध्नो मतुप् (४।४।१२७) इति सूत्रप्रयोगस्य 'च्छन्दोवत्सूत्राणि भवन्ती'ति भाष्यकारेष्टचाऽन्यथासिद्धत्वादिति तदाशयः। तद्वनिबन्तेति। इदं

[1] 'छन्दसीत्यादिना' इति घ. पाठः।

[2] घृत-घर्म-घृणेतिनियतविषयत्वाद् घृधातोरित्यर्थः।

[3] 'शास्त्रारम्भः।' 'छान्दसत्वञ्च 'मघवानृजीषी'त्यादौ पठ्यमानदीर्घ-मध्योदात्तत्वयोरर्थे तवाऽप्यावश्यकम्। एवञ्च छान्दसवर्णव्यत्ययेन सिद्धमिति तात्पर्यम्' इति घ. पाठः।

[4] 'एवञ्च' इति घ. पाठः।

[5] 'मतुप्' इति लिखितेषु पाठः।

[6] 'तत्प्रत्याख्याने' इति क. पाठः।

[7] 'उक्ते'ति घ. नास्ति।

अन्तोदात्तं त्विति । यद्यपि 'श्वन्नुक्षन्नि'त्यत्र कनिनन्ता एते' इत्युज्ज्वलदत्तादिग्रन्थमहिम्ना आद्युदात्तत्वं लभ्यते, तथापि 'उक्षा समुद्रो अरुणः सुपर्णः' 'पूषा त्वेतो नयतु,' 'अग्निर्मूर्धा,' [१]'निर्मज्वानं न पर्वणो जभार,' 'त्वमर्यमा भवसि यदि'त्यादौ तत्सूत्रोपात्तानामुक्षन्नादीनामन्तोदात्तत्वस्य निर्विवादतया, कनिप्रत्यय एवोचित इति भावः । 'मघवा बहुलमि'ति सूत्रे 'मघोन' इति प्रतीकमुपादाय 'मघशब्दस्याऽकारस्य 'यस्ये'ति लोपमाशङ्क्य, 'नैतदस्ति, अन्यदेव हीदमव्युत्पन्नं प्रातिपदिकं,तथा हि भाषायामप्यस्य प्रयोगो दृश्यते' इति वदन्न्यासकारोऽपि मघवन्शब्दस्याऽन्तोदात्तत्वे, भाषायामपि साधुत्वे चाऽनुकूलः । एवं स्थिते मतुपमाश्रित्य त्रादेशं प्रत्याचक्षाणौ भाष्यवार्त्तिककृतौ 'मघवानि'त्यत्र त्रादेशपक्षेऽपि दीर्घं स्वीकुरुत एव । फलभेदे प्रत्याख्यानाऽसम्भवात् । अतो 'बहुलग्रहणान्नाऽसिद्धत्वमि'ति यदुक्तं, तद्भाष्यादिसंमतमेव । यत्त्वाहुः—'मतुप्पक्षेऽपि छान्दसत्वान्न दीर्घ' इत्येव भाष्यस्याऽऽशय' इति । तन्न । मतुबन्तस्य छान्दसत्वे मानाऽभावात् , उदाहृतभट्टि-कैय्यटविरोधाच्चेति दिक् । एतेन 'श्वन्नुक्षन्नि'त्यत्र निपातितस्य 'मघवन्नि'त्यस्य त्रादेशे दीर्घाऽभावान्मघवन्नि'ति क्षीरस्वामिग्रन्थः प्रत्युक्तः । तथा च

**बृहच्छब्दरत्नः**

ऽङ्गीकृतत्वात् । अत एव 'पर्णध्वदि'त्यादाविव [२]नामधातौ ङीप् न । अव्युत्पन्नमिति । तथा च 'फिषोऽन्त उदात्त' इत्यन्तोदात्तत्वमिति भावः । न्यासकारोऽपीति । अत एव 'मघोनी'ति प्रयोगसिद्धिः । वनिबन्ते तु 'वनोर चे'ति दुर्वारम् । स्पष्टञ्चेदं चतुर्थे महाभाष्ये । प्रत्याख्यानाऽसम्भवादिति । नन्वेमपि फलभेदः । 'मघवा बहुलमि'ति सूत्रेणाऽन्तोदात्तस्य त्रादेशे वकाराऽऽकारस्योदात्तत्वात् । मतुपि तु 'ह्रस्वनुड्भ्यामि'ति प्राप्तस्य मतुप उदात्तत्वस्य 'न गोश्वन्नि'ति प्रतिषेधाद्घकारस्योदात्तत्वादिति चेन्न । दीर्घ इव बहुलग्रहणेन घकारस्योदात्तत्वात् । मानाभावादिति । यत्तु

**लघुशब्दरत्नः**

चिन्त्यम् । 'न शिष्यं, छान्दसं हि तदि'ति सामान्यप्रवृत्तवार्त्तिकस्य सङ्कोचे मानाऽभावात् । कविप्रयोगाणां बहुशः प्रामादिकानां दर्शनेन तेषामार्षवचनसङ्कोचे न मानत्वमिति दिक् । उचित इति भाव इति । तथा च वनो र च (४।१।७) इति सूत्रे भाष्यं—'मघोनी'त्यत्र प्राप्नोति । मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमि'ति ।

[१] 'निर्मज्जानम्' इति क्वचित् पाठः ।
[२] 'गोमानित्यादौ नामधातौ ङीप् नेत्यर्थ' इति भावप्रकाशः ।

कातन्त्रसूत्रं-'सौ मघवान्, मघवा चेति'[१]। विचारचिन्तामणावपि 'मघवानेव मघवे'त्युक्तम्। काशिकायामपि दीर्घ एव दृश्यत इत्यलं बहुना।

**अर्वणस्तृ** (६।४।१२७)। 'ऋ'धातोर्विचि, गुणे च 'अरि'ति रूपं, तस्मान्मतुपि 'अर्वन्तावि'त्यादि सेत्स्यति। 'छन्दसीवनिपावि'ति वनिपि वेदे-'अर्वे'ति। लोके तु ऋधातोरेव वनिपि सेत्स्यति। रूढिशब्दश्चाऽयम्। 'वाजि-वाहा-ऽर्व-गन्धर्व-हय-सैन्धव-सप्तय' इत्यमरकोशात्। अतोऽर्थोऽपि न भिद्यते। तथापि नान्त-तान्तयोः सर्वत्र प्रयोगे प्राप्ते व्यवस्थाऽर्थमिदं सूत्रं, तृज्वत्क्रोष्टुः (७।१।७४) इति त्रिसूत्रीवत्। यत्तु हरदत्तेनोक्तम्-'अर्वन्-मघवन्शब्दयो-र्द्वयोरपि भाषायामसाधुत्वमेव, 'अर्वणस्तृ मघोनश्चे'त्यादिभाष्यादि'ति। तदा-पाततः। भाष्यस्य विशेषविषयतायाः प्रागेवोक्तत्वात्। तथा च श्रीहर्षः—

---

बृहच्छब्दरत्नः

'मतुबन्तस्य च्छान्दसत्वमि'ति न तेषामाशयः, किन्तु 'मघवा बहुलमि'ति सूत्रं छन्दस्येव प्रवर्त्तते, वनिबन्तस्यैवोद्देश्यकोटौ प्रवेशात्, तत्र च 'मघवन्नि'त्येव रूपमस्तु, तच्च मतुबन्तस्य च्छान्दसत्वेन दीर्घाऽभावे सुसाधमिति प्रत्याख्यानं युक्तमेव, लोके मतुबन्ते दीर्घो भवत्येवे'ति। तन्न। 'त्रादेशश्छन्दस्येव प्रवर्त्तते' इत्यत्र मानाऽभावात्। 'अर्वणस्तृ मघोन' इति वार्त्तिके अन्तोदात्तस्योपादाना-दुद्देश्यकोटावन्तोदात्तप्रवेशस्यैव बोधनात्। वनिप्रत्ययस्य तद्धितत्वेन 'यस्ये'ति-लोपेनोक्तरूपाऽसिद्धेश्च। न चाऽसिद्धपरिभाषयाऽसिद्धत्वम्। 'नाजाऽनन्तर्ये' इति निषेधात्। न चाऽसिद्धवदत्राऽऽभादित्यसिद्धत्वम्। व्याश्रयत्वात्। स्पष्टञ्चे-दमसिद्धवदत्राभादिति सूत्रे भाष्ये। 'मघवानृजीषी'त्यादौ वेदे दीर्घस्य पठ्यमान-त्वाच्च। 'वे'ति वक्तव्ये 'बहुल'ग्रहणेन, षष्ठीनिर्देशे कर्त्तव्ये 'मघवे'ति प्रथमानिर्देशेन च वकाराऽकारस्य दीर्घं ज्ञापयता सूत्रकारेण सह विरोधाच्च। 'मघवन्नि'ति-रूपसाधनाऽर्थं प्रवृत्तस्य सूत्रस्य च्छान्दसत्वेन प्रत्याख्याने वैदिकसूत्रमात्रप्रत्या-ख्यानाऽऽपत्तेश्च। इष्टाऽऽपत्तौ तु व्याकरणाऽन्तरवल्लौकिकशब्दमात्राऽन्वाख्याना-ऽऽपत्तौ 'केषां शब्दानां, लौकिकानां, वैदिकानाञ्चे'ति भाष्यविरोधो भाष्यकारस्य दुर्वार एव। यदि च सूत्राऽऽरम्भेऽपि च्छान्दसत्वाऽऽश्रयणं स्यात्तदा 'दीधीवेवी-टामि'त्यादीनामिव प्रत्याख्यानं चमत्कारतामावहेत्।

**विशेषविषयताया इति।** मतुपः सर्वत्र विधानादधातोर्वनिपो लोकेऽपि विधानाच्च 'मतुब्वन्योर्विधानाच्चे'ति वार्त्तिकस्य 'मतुवनी छन्दसि विधीयेते' इति तद्भाष्यस्य चाऽसङ्गतताऽऽपत्तेश्च। 'अनञ्' इत्युक्तत्वेन सूत्रमतेऽपि दोषाऽभावेन 'अनर्वाणं वृषभं मन्द्रजिह्वमि'त्युदाहरणप्रदर्शनभाष्यस्याऽसङ्गतताऽऽपत्तेश्च। वनि-

---

[१] 'मघवा वा' इति लिखितेषु पाठः। 'मघवा चे'ति मुद्रितेषु पाठः।

'वाहैरलुप्यत सहस्रद्दगर्वगुर्व' इति प्रायुङ्क्त ।

ननु 'गुणा अभेदका' इति पक्षे सूत्रेऽननुनासिकोच्चारणेऽपि आन्तरतम्यादनुनासिकः स्यादित्याशङ्क्याऽऽह—आ आदिति । यत्त्वाहुः—'इहाऽनुनासिको न, अनण्त्वेन सवर्णग्रहणाऽभावात् । न च तपरस्तत्कालस्य (१।१।७०) इत्यनणि विध्यर्थमिति वाच्यम् । 'भाव्यमानः सवर्णान्न गृह्णाती'ति निषेधात् । गुणानामभेदकत्वेऽपि शुद्धैकव्यक्तेः सूत्रे निर्देशान्नाऽतिप्रसङ्ग' इति । अत्रेदं वक्तव्यम्—'अनणि विध्यर्थमि'ति शङ्काया 'भाव्यमान' इत्याद्युत्तरमसङ्गतम् । तस्याऽण्विषयत्वात् । यदाहुः—'भाव्यमानोऽणि'-त्यादि । अन्यथा चोः कुः (८।२।३०) इत्यादावपि निषेधाऽऽपत्तेः । 'तत्रोदित्करणसामर्थ्यान्न निषेध' इति चेत् । किमनेन बकबन्धनप्रयासेन ।

---

बृहच्छब्दरत्नः

बन्तमात्रमादाय 'मघवा बहुलमि'तिसूत्रमात्रप्रत्याख्यानपरं भाष्यं योज्यम् । 'मघवा बहुलमि'ति सूत्रप्राप्तिविषयीभूतवैदिकोदाहरणस्थयोरि'ति शेषो बोध्यः । 'इमान्यवर्णः पदानी'त्यादि तु दृष्टान्ताऽभिप्रायेण योज्यमिति स्पष्टमस्मत्कृतभाष्यविवरणे ।

अर्व-गर्वेति । नन्वत्र त्रादेशेन भाव्यम् । न चाऽङ्गेन प्रत्ययपरत्वमाक्षिप्तमिति वाच्यम् । अङ्गाऽऽक्षिप्तप्रत्ययपरत्वे उपजीव्यविरोधस्याऽयुक्तत्वेन 'न लुमते'तिनिषेधाऽप्रवृत्त्या प्रत्ययलक्षणस्य सुलभत्वात् । अत एव 'चर्करीती'त्यादावुरदित्यादयः प्रवर्त्तन्ते इति चेन्न । 'वाजमर्वत्सु' इति प्रयोगादनञ इत्यत्र प्रसज्यप्रतिषेधाऽङ्गीकारेऽप्यसावित्यत्र तदङ्गीकारे मानाऽभावः । प्रत्ययत्वेन सादृश्यग्रहणे दोषाऽभावात् । तथा च 'न लुमते'ति निषेधप्रवृत्तिर्दुर्वारैव ।

ननु गुणा इति । ननु 'गुणा अभेदका' इत्यस्योच्चार्यमाणो गुणो न विवक्षित इत्येवाऽर्थः । 'गुण'शब्देन चोदात्ता-ऽनुदात्त-स्वरिता-ऽऽनुनासिक्यानीति स्पष्टमाकरे । प्रकृते च निरनुनासिकोच्चारणात्पक्षसम्भावनैव नेति चेत् । अत्राहुः-'अनङुदात्त' इत्युदात्तग्रहणेन 'गुणकृतभेदो नास्ती'त्येव ज्ञाप्यते, न तूच्चार्यमाणगुणकृतभेदाऽभाव' इति । गौरवात् । 'उञः ऊँ' इत्यत्र नासिकाव्यापारेण क्लेशाऽऽधिक्येनोच्चारणादानुनासिक्यं विवक्षितमि'ति सर्वेषां समानम् । अणुदित्सूत्रस्था-

---

लघुशब्दरत्नः

प्रायुङ्क्तेति । अत्र यद्वक्तव्यं तदुक्तम् । इति पक्षे इति । अस्थिदधि (७।१।७५) इत्यत्रोदात्तपाठेन सिद्धे, उदात्तग्रहणेन शास्त्रे विना यत्नं स्वरूपेणोच्चारितगुणस्याऽविवक्षयाऽभेदकत्वज्ञापनादिति भावः । उञः ऊँ (१।१।१७) इत्यत्र नासिकाव्यापारेण क्लेशाऽऽधिक्येनोच्चारणादानुनासिक्यं विवक्षितमिति सर्वेषां समानम् । भेदकत्वेऽपि तपरसूत्रस्याऽनणि

'तपरस्तत्कालस्ये'ति सूत्रेऽप्रत्ययग्रहणस्य भाष्यकृताऽननुवर्त्तितत्वाच्च । किञ्च 'शुद्धैकव्यक्तेरि'त्यत्यङ्गतम् । अभेदकत्वे दोषस्य दुरुद्धत्वात् । 'एका व्यक्तिर्गृह्यते' इत्युक्त्या हि 'व्यक्त्यन्तरं न निर्दिष्टमि'त्यर्थः फलितः । स च गुणानां भेदकत्वे सत्येव सङ्गच्छते, नाऽन्यथेत्यास्तां तावत् । एतेन 'भाव्यमानोऽण् सवर्णान्न गृह्णाती'ति निषेधादाकारो नाऽनुनासिक' इति प्रसादग्रन्थोऽपि प्रत्युक्तः । दीर्घस्याऽनण्त्वेन मूलशैथिल्यात् ।

**थो न्थः** (७।१।८७)। स्थान्यादेशौ द्वावप्यनच्कौ । 'थेर्न्थ' इत्येव सिद्धे इतोऽद्वचनं ऋभुक्षिन्नर्थम् । न्थादेश इति । केचित्तु अन्थादेशमाहुः ।

---

बृहच्छब्दरत्नः

ऽणग्रहणेन तु भेदकपक्षो ज्ञाप्यते इति स्पष्टमाकरे । अननुर्वात्तितत्वाच्चेति । अत एव 'दिव उदि'त्यादौ प्रवृत्तिरिति स्पष्टमाकरे । नन्वेवम् 'उऋदि'त्यत्र विधेयांऽशेऽपि लृकारग्रहणस्य दुर्वारत्वेन, 'स्थानेऽन्तरतम'परिभाषया लृकारस्थाने लृकारस्य प्राप्तौ, 'क्लृपू सामर्थ्ये' इति लृकारोपधपाठेनैवेष्टसिद्धौ, ऋकारे लृकाराऽऽदेशाऽर्थं भाष्याद्युक्तोपायकल्पनं व्यर्थमिति चेन्न । 'कृपणः' 'कृपे'त्यादौ ऋकारश्रवणाऽर्थमुपायकल्पनस्याऽऽवश्यकत्वेन समत्वे, प्रथमाऽतिक्रमे कारणाऽभावेन लृकारपाठस्यैव युक्तत्वादित्याद्यग्रे निरूपयिष्यामः । शुद्धैकेति । नन्वेवम् 'आ आदि'ति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नाऽनुनासिक' इति मूलग्रन्थोऽप्ययुक्तः, 'ननु गुणा अभेदका' इत्यादिना अभेदपक्षे एव तद्ग्रन्थप्रवृत्तेर्वर्णितत्वात्, भेदपक्षे प्रश्लेषवैयर्थ्याऽऽपत्तेश्चेति चेन्न । अभेदकपक्षस्यैवाऽभिप्रेतत्वात्, प्रश्लेषसामर्थ्यादत्र तस्य बाध इति मूलाऽर्थः । न हि 'पूर्वपदात्सञ्ज्ञायामि'त्यस्य 'सर्वनामानी'त्यत्राऽनाश्रयणे, 'पूर्वत्राऽसिद्धमि'त्यस्य 'अतो रोः' इत्यत्राऽनाश्रयणे च द्वितीयः पक्ष उत्तिष्ठते । त्वदुक्तिस्तु 'गुणभेदक'पक्षे एव सङ्गच्छते । स च नाऽऽश्रितः । 'गुणानामभेदकत्वेऽपी'ति पूर्वग्रन्थविरोधात् । अभेदकपक्षस्याऽनाश्रयणे हेत्वनुपन्यासाच्च । तदेतद् ध्वनयन्नाह—नान्यथेत्यास्तां तावदिति ।

ऋभुक्षिन्नर्थमिति । स्वमतरीत्या तु फलाऽन्तरमपि स्फुटी भविष्यति । वस्तुतस्तु 'न्थेरि'त्यत्र द्वन्द्वसमासः-थ् च इश्चेति । एवं विधेयांऽशेऽपि बोध्यम् । 'थकारेकारयोर्न्थाऽकाराऽऽदेशौ भवत' इति वाक्याऽर्थः । न च दीर्घेकारस्या-

---

लघुशब्दरत्नः

विध्यर्थत्वाद्दोषः । तत्राऽप्रत्ययग्रहणाऽनुवृत्तौ मानाऽभावादित्यपि बोध्यम् । अननुवर्त्तितत्वाच्चेति । एवञ्च तत्र सूत्रे तत्सम्बन्धे मानाऽभावः । एवञ्च भेदकत्वेऽपि तपरसूत्रस्याऽनणि विध्यर्थत्वाद्दोष इति भावः । नान्यथेति । एवञ्च 'गुणानामभेदकत्वेऽपी'त्युपक्रम्य तावृश्युक्तिरसङ्गतेति भावः । मूलशैथिल्यादिति । सवर्णग्रहणाऽप्राप्तेरिति भावः ।

तत्राऽकारप्रश्लेषो व्यर्थः। यत्तु न्यासकृता, प्राचा चोक्तम्—'अनेकाल्त्वेऽपि थकारमात्रस्याऽयमादेशः, 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'ति न्यायादि'ति। तन्न। तद्विशिष्टस्याऽप्रसङ्गेनोक्तपरिभाषाया इह विषयाऽभावात्। प्रसङ्गादाह—स्त्रियामिति। सुपथीति। इनः स्त्रियाम् (५।४।१५२) इति तु कप्[1] न कृतः। समासान्तविधेरनित्यत्वात्। युवोरनाकौ (७।१।१) इति सूत्रे 'सुप-

**बृहच्छब्दरत्नः**

ऽकाराऽऽदेशप्रसङ्गः। परसाहचर्येण मात्रिकस्यैव ग्रहणात्। अत एव ण्यन्तत्वेऽपि इकारस्य पूर्वनिपातो न कृतः। अथवाऽस्तु तपरनिर्देशः-'थित' इति। अत एव 'संयोगशिष्टन्यायेन क्यजन्तात्क्विपि न्थादेशो दुर्लभ' इत्यपास्तम्। समुदायाऽनुवादेनैव सिद्धौ तपरनिर्देशबोधितद्वन्द्वाऽऽश्रयणस्य वैयर्थ्याऽऽपत्तेः। 'ऋभुक्षिन्नर्थमि'ति—'अकाराऽऽदेशेन न्थादेशस्य सङ्कोचाऽकल्पनेऽपि न्थादेशेनाऽकाराऽऽदेशस्य सङ्कोचो दुर्वार' इत्यभिप्रायेण। अनित्यत्वादिति। अत्र मानं 'द्वित्रिभ्यां ष मूर्ध्न' इति 'ष'विधानम्। तद्धि 'बहुव्रीहौ सक्थ्यक्ष्णोरि'ति षचि प्रकृते क्रियते इति वैयर्थ्यं स्पष्टमेव। यद्यपि षचश्चित्त्वसामर्थ्याज्जायमानमन्तोदात्तत्वं बहुव्रीहित्वप्रयुक्तपूर्वपदप्रकृतिस्वरं बाधते इति तावन्निर्विवादं, तथापि 'द्वित्रिभ्यां पाद्न्मूर्धसु बहुव्रीहावि'ति विधीयमानस्याऽन्तोदात्तत्वस्य वैकल्पिकत्वेन पक्षप्राप्तपूर्वपदप्रकृतिस्वरस्य बाधा न भविष्यति, 'द्वित्रिभ्यामि'त्यस्य 'मूर्धन्'शब्दविषये [2]क्वचिल्लक्ष्ये सावकाशत्वाऽभावात्। अवकाशश्चाऽनित्यतायामेव लभ्यते, 'त्रिमूर्धानं सप्तरश्मिं गृणीषे' इति यथा। एवञ्च समासान्तपक्षेऽपि 'द्वित्रिभ्यामि'ति वैकल्पिकाऽन्तोदात्तत्वं भवत्येव। समासान्तानां समासाऽवयवत्वाऽङ्गीकारेण 'मूर्धन्नि'त्यस्योत्तरपदत्वाऽनपायात्। 'मूर्धन्शब्दे उत्तरपदे बहुव्रीहौ वाऽन्तोदात्तमि'ति सूत्राऽर्थः। 'उत्तरपदाऽवयवाः समासान्ता' इत्यस्मिन्पक्षे तु 'मूर्द्धन्शब्दाऽन्तबहुव्रीहेरि'त्यर्थाऽङ्गीकारेऽपि न दोषः। 'द्वित्रिभ्यां पाद्न्मूर्धस्वि'ति वक्तव्ये 'बहुव्रीहि'ग्रहणञ्च ज्ञापकम्। बहुव्रीहिभिन्नञ्च समासाऽन्तविरहादेव वारयिष्यते। न च 'द्विदन्त' इति बहुव्रीहौ वयोवाचकत्वाऽभावे दत्रादेशाऽभावात् शसादौ 'पद्न' इति ददादेशे प्रवृत्त्यर्थं 'बहुव्रीहि'ग्रहणस्याऽऽवश्यकत्वेन समासाऽन्तनिर्देशे गौरवम्। न हि समासान्तनिर्देशे अत्र प्रवृत्तिः सुलभा, कृतसमासान्तसाहचर्येण दत्रादेशस्यैव

**लघुशब्दरत्नः**

तद्विशिष्टस्येति। 'थ' इति स्थानिश्रवणात्, तदन्तविध्याद्यभावाच्चेति[3] भावः। अयम्=इनः स्त्रियामित्येषः। एवञ्च ऋक्पूः (५।४।७४) इत्येष तेन निषेधेनाऽपि वारयितुं शक्य

[1] तुः मुद्रितेषु त्रुटितः।

[2] 'क्वचिल्लाघवावकाशत्वाऽभावात्' इति क. ख. पाठः।

[3] 'तदन्तविध्यभावाच्च' इति मुद्रितेषु पाठः।

थी'ति भाष्याच्च। न पूजनात् (५।४।६९) इति निषेधस्य तु नाऽयं विषयः। 'षचः प्राचीनेष्वेव स' इति वक्ष्यमाणत्वात्। 'पथिमथी'त्यात्त्वं, थो न्थश्च लिङ्गविशिष्टपरिभाषया प्राप्तं, विभक्तौ लिङ्गविशिष्टाऽग्रहणान्न भवति। शाविति। यत्तु प्राचा इतोऽत्सर्वनामस्थाने (७।१।८६) थो न्थः (७।१।८७) इति सूत्रद्वये 'सुटी'ति व्याख्यातम्। तदसत्। निर्बीजलक्षणाऽऽपत्तेः। क्लीबे औङः श्यां 'सुपथी' इत्यत्राऽतिव्याप्तेः, 'सुपन्थानि पश्ये'ति शसि रूपस्याऽसिद्धप्रसङ्गाच्चेति

---

**बृहच्छब्दरत्नः**

ग्रहणात्, अत एव 'द्वयोर्दन्ता' इति विगृह्य 'द्विदतः पश्ये'ति षष्ठीतत्पुरुषे न प्रवृत्तिरिति वाच्यम्। यथान्यासेऽपि पूर्वोत्तरसाहचर्येण विभक्त्यनिमित्तददादेशस्यैव ग्रहणात्। शसादिनिमित्तकस्य बहिरङ्गत्वेनाऽसिद्धत्वाच्च। एतेन 'निरनुबन्धकत्वात् 'पाद्दन्नि'ति सूत्रे ददादेशग्रहणमेवोचितमि'ति निरस्तम्। अत एव पादयतेः क्विपि निष्पन्नपाच्छब्देऽयं विधिर्नेति ध्येयम्। ध्वनितञ्चेदमाकरे। यत्तु 'आदैजि'ति निर्देशो [1]ज्ञापक' इति। तन्न। पस्पशायां भाष्यकारैर्भिन्नपदत्वप्रदर्शनात्। 'कृतमनयोः साधुत्वमि'ति भाष्यस्य खण्डाऽभिप्रायेण व्याख्यानाच्च। पञ्चमीसमासपक्षे तकारोपलक्षितस्यैव सञ्ज्ञात्वमित्यास्तान्तावत्।

लिङ्गविशिष्टेति। यत्तु 'समुदायाल्लिङ्गबोधकप्रत्ययस्य विहितत्वेन तस्य तद्विशिष्टत्वेऽपि, तदुद्देश्यककार्याऽभावान्न दोष' इति। तन्न। तदन्तस्याऽपि ग्रहणेन दोषस्य स्फुटत्वात्। वस्तुतस्तु 'पथिन्'शब्दादविहितत्वेऽपि लिङ्गबोधकप्रत्ययवैशिष्ट्यं 'पथिन्'शब्दस्याऽस्त्येव। विहितत्वांऽशप्रवेशस्तु गौरवान्न युक्त' इति 'स्थानान्ते'ति सूत्रे निरूपयिष्यामः। न भवतीति। 'इतोऽत्सर्वनामस्थाने' इत्यस्य तु इकाराऽभावादेव न प्राप्तिः। चेन 'भस्य टेर्लोप' इत्यस्य सङ्ग्रहः। अन्यत्र प्रवृत्तावपि, प्रकृतोदाहरणे विभक्तिनिमित्तत्वाऽनपायात्। अत एव 'श्वयुवे'-

---

**लघुशब्दरत्नः**

इति भावः। थो न्थश्चेति। 'थो न्थ' इति सूत्रमित्यर्थः। चाट्टिलोपः। प्राप्तमिति। तदन्तग्रहणादिति भावः। ([2]थो न्थश्च प्राप्त इत्यन्वयः)। न भवतीति। न च टिलोपो न विभक्तिनिमित्तकः, अन्यत्रापि तत्प्रवृत्तेरिति वाच्यम्। प्रकृतोदाहरण विभक्तिनिमित्तत्वमात्रेण तत्प्रवृत्तेः। अत एव युवोरनाकौ (७।१।१) इति सूत्रभाष्ये श्वयुव (६।४।१३३) इत्यादेः परिभाषाफलत्वेनोपन्यासः सङ्गच्छते। 'परत्वादि'ति अभ्युच्चयः। न च 'अभिव्यक्तपदार्था' इति न्यायेन कथमत्राऽत्वादीनां प्रवृत्तिः। तस्य न्यायस्य पदकार्यविषयत्वेन, तपरकरणा-

---

[1] समासान्तानामनित्यत्वे ज्ञापक इत्यर्थः। अन्यथा 'द्वन्द्वाच्चुदषहान्तादि'ति टच् स्यादिति ध्येयम्।

[2] अयं घ. पाठः।

भावः । अत्रेदमवधेयम्—'पन्थानमात्मन इच्छति पथीयति । ततः क्विप् । [1]अल्लोपः । यलोपः । एकदेशविकृतस्याऽनन्यत्वात् पथिमथि (७।१।८५) इत्यात्त्वम् । [2]थो न्थः । पन्थाः । इतोऽत्सर्वनामस्थाने (७।१।८६) इत्यत्त्वं न भवति । 'इत' इति तपरकरणात् । एरनेकाचः (६।४।८२) इति यणं बाधित्वा

---

**बृहच्छब्दरत्नः**

त्यादेः परिभाषाफलत्वेनोपन्यासो भाष्यकारोक्तः सङ्गच्छते इत्याहुः । पन्था इति । यत्तु 'सुब्विधौ नलोपस्याऽसिद्धत्वेन नस्याऽऽत्त्वे 'पथ्या' इति रूपं स्यादि'ति । तन्न । नस्याऽऽत्त्वे अन्तत्वस्य विनाशोन्मुखत्वेनेकारस्य दीर्घाऽप्रवृत्तौ, 'इतोऽदि'त्यत्त्वे, सवर्णदीर्घे च 'पन्था' इत्यस्यैव प्राप्तत्वात् । वस्तुतस्तु [3]स्वरादिसाहचर्येण नलोपात्पूर्वं नकारमात्रप्रतिबन्धेनाऽप्राप्तसुब्विधेर्ग्रहणात् । प्रत्यासत्तिन्यायेन यस्मिन्सुपि नलोपस्तस्मिन्नेव सुपि यत्र विधिस्तत्रैवाऽसिद्धत्वाच्च । अत एव 'पन्थियावि'त्यादावियङ् सिद्धः । यत्तु 'न पथिशब्दः स्त्रियामस्ती'ति 'युवोरनाकावि'तिसूत्रस्थभाष्यप्रामाण्यात्[4] क्विपोऽप्रवृत्तेः सत्त्वेन, तदङ्गीकारेऽपि भाष्यस्य रमणीयत्वान्ने'ति । तन्न । स्त्रीप्रत्यये उपक्रमोपसंहारादिना तथैव निर्णयात् । युक्तञ्चैतत् । अन्यथा नस्याऽत्त्वे रूपसिद्धौ 'पथिमथ्यृभुक्षामादि'त्यात्त्वविधानवैयर्थ्याऽऽपत्तेः । 'पथिमथ्यृभुक्षां लोपः', 'भस्य टेः' 'इतोऽत्सर्वनामस्थाने' इति न्यासेन नकाराऽश्रवणसिद्धावकारविधानसामर्थ्येनैवाऽतो गुणे इत्यस्य बाधात् । न च 'ऋभुक्षि'-शब्दादाचक्षाणाऽर्थे णिचि, टिलोपे, क्विपि, चरितार्थमिति वाच्यम् । परस्परसाहचर्येण तत्राऽऽदेशाऽप्रवृत्तेः । 'नाग्लोपिशास्वृदितामि'तिसूत्रस्थभाष्यप्रामाण्येनेदृशे विषये णिजनुत्पत्तेश्च । न चाऽयमकार एवाऽस्ति, दीर्घश्रवणन्तु द्वयोरकारयोः प्रश्लेषेणेति वाच्यम् । 'अष्टन आ विभक्तावि'तिसूत्रे 'अत्राऽऽकारो विधीयते' इति स्पष्टतया भाष्य-वार्त्तिकयोरुक्तत्वात् ।

---

**लघुशब्दरत्नः**

दनित्यत्वेन चेहाऽप्रवृत्तेः । न च 'न केवलः पथिशब्दः स्त्रियामस्ती'ति युवोरनाकौ (७।१।१) इति सूत्रस्थभाष्यप्रामाण्यादेभ्यः क्यजन्तेभ्यः क्विपोऽनभिधानमिति वाच्यम् । स्त्रीप्रत्ययाऽप्रवृत्त्या तदङ्गीकारेऽप्यक्षतेः । 'विभक्तौ लिङ्गविशिष्टाऽग्रहणमि'त्येतत्प्रयोजनकथनाऽवसरे हि भाष्ये

---

[1] 'अल्लोप-यलोपौ' इति घ. पाठः ।

[2] 'न्थ' इत्येव लिखितेषु पाठः ।

[3] नलोपः सुप्स्वरेत्यत्र स्वरादिसाहचर्यं द्रष्टव्यम् ।

[4] 'भाष्यप्रामाण्यात् काऽप्रवृत्तेः सत्त्वेन तदङ्गी कारेऽपि' इति क. ख. पाठः । 'भाष्यप्रामाण्यात् पथ्यादिभ्यः क्यजन्तेभ्यः क्विपोऽनभिधानम्' इति पाठोऽत्र भवेत् ।

परत्वात्, नित्यत्वाच्च थो न्थः (७।१।८७)। संयोगपूर्वकत्वान्न यण्— 'पन्थियौ, पन्थियः, पन्थियं, पन्थियौ'। भस्य टेर्लोपः। 'पथः, [1]पथा, पथीभ्याम्, पथीभिः। इत्यादि। एतेन 'इतोऽत्सर्वनामस्थाने (७।१।८६) इत्यत्र स्थानिन्यादेशे च तपरकरणं मुखसुखाऽर्थमि'ति हरदत्तग्रन्थः प्रत्युक्तः।

यत्तु न्यासकारस्तदनुसारिणोऽन्ये च [2]'सखीः' 'सुतीरि'तिवत् 'पथीः' 'पथ्यौ' 'पथ्य' इत्याद्युदाजह्रुः। तच्चिन्त्यम्। सावात्त्वस्य दुर्वारत्वात्। यत्तु

### बृहच्छब्दरत्नः

पन्थियाविति। ननु इयङादेशे अत्वं दुर्वारमिति चेन्न। 'अङ्गकार्ये कृते पुनर्नाऽङ्गकार्यमि'त्युक्तेः। किञ्चेत्वजातिसंश्लेषनिमित्तस्येयङ इत्वजातिसंश्लेष-विघातनिमित्तत्वं न युक्तम्। अत एव 'श्रीपाये'त्यादावातो धातोरिति लोपो न।

पथः पथेति। यत्तु 'भस्य टेर्लोप' इति सूत्रे टिग्रहणसामर्थ्येन मुख्यटेर्ग्रहणा-ल्लोपो न, अन्यथा 'पथिमथ्यृभुक्षामात्', 'भस्य लोपः', 'इतः', 'अत्सर्वनामस्थाने' इति लघुभूतन्यासमेव कुर्यात्, आचारक्विबन्तात्कर्त्तरि क्विप्यपि 'भस्य लोप' इत्यनेन लोपेऽनुनासिकाऽन्तत्वस्य विनाशोन्मुखत्वेनाऽकृतव्यूहपरिभाषया दीर्घा-ऽप्रवृत्तौ 'इत' इत्यनेनेकारलोपे 'पथ' इत्यादिसिद्धेरि'ति। तन्न। क्यजन्ते तपरकरणे-न 'इत' इत्यस्याऽप्रवृत्तौ 'भस्य लोप' इत्यस्य सावकाशत्वेन, शुद्धपथ्यादिषु 'भस्य लोप' इति बाधित्वा परत्वेन'इत' इत्यस्य प्रवृत्तौ, सकृद्गताविति न्यायेनाऽन्त्यलोपाऽनापत्तेः। किञ्च सप्तम्येकवचने 'पथि' इत्यादौ 'न हि कार्यी निमित्तत्वेनाऽऽश्रीयते' [3]इति-इकारलोपाऽनापत्तेरिति दिक्। अल्विधावेकदेशविकृतन्यायाऽप्रवृत्तिः शास्त्रसिद्धे-

### लघुशब्दरत्नः

तदुक्तम्। न यणिति। न च तदभावेऽपीयङ् दुर्लभः। सुब्विधावन्तर्वर्तिविभक्त्याश्रय-नलोपस्याऽसिद्धत्वेनेवर्णान्ताऽङ्गाऽभावादिति वाच्यम्। सुप्त्व-तद्व्याप्यधर्म-निमित्तकसुब्विधेरेव ग्रहणात्। अत एव दण्डिष्वित्यादौ षत्वे नलोपस्याऽसिद्धत्वं न। न च न्थादेशेऽङ्गवृत्त-परिभाषया नेयङ्। तस्या अनित्यत्वात्। न चेयङि कृते अत्वं दुर्वारम्। संनिपातपरिभाषया स्वाऽतिरिक्ततद्विघातकस्य बाधेनाऽदोषादिति भावः। न च प्रकृति-प्रत्यय-विशेषापेक्षन्थादेशा-ऽपेक्षया[4] अन्तरङ्गत्वाद्यणेव स्यादिति वाच्यम्। प्रातिपदिकस्याऽप्यत्र प्रकृतित्वेन, हलादेरपि तन्निमित्तत्वेन यण्प्रकृति-तन्निमित्त-व्याप्यत्वाऽभावात्, तदोः सः सौ (७।२।१०६) इति सूत्रे 'अनन्त्ययोरि'त्युक्त्या, तत्प्रत्याख्यानार्थं भाष्यकृता 'अदस' इति योगविभागकरणेन च

[1] 'पथा' इति मुद्रितेषु त्रुटितम्।

[2] 'सखीः' इति घ. ङ. पाठः। 'सुखीः' इति मुद्रितेषु पाठः।

[3] 'इति' इति क. ख. नास्ति।

[4] 'न्थापेक्षया' इति क. ख. घ. पाठः।

'पथिमथ्यृभुक्षामि'ति नान्तप्रकृत्यनुकरणमेतदि'ति । [1]तदप्यपार्थकम् । एकदेशविकृतन्यायस्य दुर्वारत्वात् । 'पन्था' इत्यत्राऽपि नित्यत्वात्, विशेषविहितत्वाच्च पूर्वमात्त्वे कृते, अनान्तत्वेन न्थादेशाऽप्रसङ्गाच्च । यदप्याहुः—'अल्लोपस्य स्थानिवत्त्वान्नाऽऽत्वादि । 'क्वौ लुप्तं न स्थानिवदि'ति नेहाऽऽश्रीयते' इति । तदपि चिन्त्यम् । तथा सति यण्प्रसङ्गात् । ख्यत्यात् (६।१।११२) इति सूत्रे 'सखीः'[2] 'सुतीरि'त्यादिनिर्वाहाय 'क्वौ लुप्तं न

बृहच्छब्दरत्नः

त्यरुचेराह—[3]पन्था इति । न्थादेशेति । अकारप्रश्लेषादितोऽदित्यस्याऽप्यप्रवृत्तिर्बोध्या । यण्प्रसङ्गादिति । ननु 'न पदान्ते'ति निषेधो दुर्वार इति चेन्न । आत्त्वादावपि स्थानिवद्भावाऽनापत्तेः । अनान्तत्वेन 'नः क्ये' इति निषेधात्पदसञ्ज्ञाया अभावाच्च । 'अनान्तस्य पदसञ्ज्ञा न भवती'त्यर्थस्य 'नियमसूत्राणां निषेधमुखेन प्रवृत्तिरि'ति पक्षे स्थितत्वात् । नलोपोऽपि [4]सञ्ज्ञाविधावसिद्धो, न तु तत्प्रतिषेधे । 'विधिमुखेन प्रवृत्तिरि'ति पक्षेऽपि नान्ताऽवस्थायां प्रवृत्तेरावश्यकत्वेन, नलोपे पुनः प्रवृत्तौ बीजाऽभावात् । किञ्च पूर्वोत्तरसाहचर्येण सञ्ज्ञाविधिरपूर्वविधिरेव गृह्यते । अत एव पक्षयोः फलैक्यम् । न चैवं 'सञ्ज्ञे'तिसामान्यशब्दोपादानं व्यर्थम् । घिसञ्ज्ञाग्रहणेन सार्थक्यादिति भाष्ये स्पष्टत्वात् । एतेन 'पदान्तत्वादिको-[5]ऽसवर्णे' इति ह्रस्वपक्षे 'पथौ' 'पथाः' इत्यादिरूपाणि भवन्त्येवे'ति परास्तम् । [6]सखीः सुतीरित्यादीति । आदिना 'गोमत्यतेर्गोमानि'ति बोध्यम् । स्थानिवत्त्वे यलोपे

लघुशब्दरत्नः

[7]तादृशाऽन्तरङ्गत्वस्य सर्वत्राऽनाश्रयणाच्चेति बोधनात् । सावात्वस्येति । न्थादेशस्याऽप्युपलक्षणम् । यदि वैयात्यान्नाऽत्राऽतिदेश इति वदेत्तत्राऽप्याह–पन्था[8] इतीति । न्थादेशेति । अत्त्वस्याऽप्युपलक्षणम् । नात्वादीति । न च न पदान्त (१।१।५८) इति निषेधः । अनान्ततया 'नः क्ये' (१।४।१५) इति नियमेन, सञ्ज्ञाविधौ नलोपाऽसिद्धत्वेन च ईकारान्ते पदत्वाऽभावात् । एतेन 'पदान्तत्वात् इकोऽसवर्णे' (६।१।१२७) इति ह्रस्वे अत्र अत्त्वं

[1] 'तदप्यनर्थकम्' इति मुद्रितेषु पाठः । [2] 'सुखीः' इति मुद्रितेषु पाठः ।

[3] 'पन्थे'ति क. ख. पाठः । स च भावप्रकाशे 'पन्था इति' इति पाठं दृष्ट्वाऽस्माभिः शोधितः ।

[4] 'घिसञ्ज्ञाविधौ' इति ख. पाठः । [5] 'इकोऽसवर्णेति' इति क. ख. पाठः ।

[6] सुखीः' इति मनोरमायां पाठः ।

[7] तादृशेति । अल्पाऽपेक्षत्वरूपाऽन्तरङ्गत्वस्येत्यर्थः ।

[8] 'पन्था इति' इति मुद्रितेषु पाठः ।

**स्थानिवदि'त्यस्य कैयटादिभिराश्रितत्वात्। 'इतोऽत् (७।१।८६) इत्यत्र तपरकरणं कुर्वतः सूत्रकृतोऽपीहाऽनुकूलत्वाच्च।**

बृहच्छब्दरत्नः

[१]'सख्' 'सुत्' इति स्यात्। 'गोमानि'त्यत्र नुम् च न स्यात्। न ह्यत्र सूत्रैकदेशः प्रमाणीभूतोऽस्ति। 'ख्यत्यादि'ति विकृतनिर्देशस्याऽतिव्याप्तिमात्रनिवारणेन चारितार्थ्यात्। नुम्विधावधातोरित्यस्याऽऽचारक्विबन्तात्कर्त्तरि क्विपि चारितार्थ्यात्। न च भाष्यस्य प्रयोगविशेषे तात्पर्यं कल्प्यम्। मानाऽभावात्। भाष्य-वार्त्तिकयोः सामान्यशब्देनाऽभिधानेन तथैव लाभाच्च। कैयट-हरदत्तादिभिस्तथैवाऽभिहितत्वाच्च। बहुलक्ष्यसंस्कारकताया युक्तत्वाच्च। अत एव 'पुंस्शब्दोऽसमस्तः स्त्रियां नास्ती'त्यर्थप्रतिपादकयुवोरनाकाविति सूत्रस्थभाष्यप्रामाण्यात्, 'ख्यत्यात्परस्य' 'उगिदचां सर्वनामस्थानेऽधातोरि'त्यादिसूत्रस्थभाष्यप्रामाण्याच्च मन्दप्रतारणमपास्तम्। उपक्रमोपसंहारादिना तन्मात्रपरताया एव निर्णीतत्वात्। तस्मात् 'क्कौ लुप्तं न स्थानिवदि'त्यस्याऽसार्वत्रिकत्वेऽपि क्यजन्तात्क्विपि प्रवर्त्तत एवेति बोध्यम्।

तपरकरणमिति। नन्वाचारक्विबन्तात्कर्त्तरि क्विपि पृथीनतीत्यादावत्त्वव्यावृत्त्या चरितार्थम्। न चेन्हन्पूषाऽर्यम्णां शाविति नियमाद्दीर्घ एव दुर्लभ इति वाच्यम्। 'विधिरूपेण प्रवृत्तिः, सामान्यशास्त्रसङ्कोचकता चे'तिपक्षे पथ्यादिशब्दे शौ सङ्कोचकविधेरप्राप्तत्वेन,[२] सामान्यशास्त्रसङ्कोचकल्पने मानाऽभावात्। 'निषेधमुखेन प्रवृत्तिरि'ति पक्षे हनादिसाहचर्येण शिनिमित्तदीर्घस्येनो ग्रहणेन, प्रकृते निषेधाऽप्रवृत्तेश्चेति चेन्न। [३]'अदेः सर्वनामस्थाने' इत्युक्त्यैव तात्परत्वेन निर्वाहे सिद्धे 'इत' इति [४]तपरकरणेन भिन्नकालव्यावृत्तिबोधनद्वारा 'क्कौ लुप्तं न स्थानिवदि'त्याश्रयणबोधनात्। अत एव 'एतेन 'इतोऽत्सर्वनामस्थाने' इत्यत्र स्थानिन्यादेशे च तपरकरणं मुखसुखाऽर्थमि'ति हरदत्तग्रन्थः [५]'प्रत्युक्त' इत्युक्तिरेव प्रयुक्ता, आदेशे

लघुशब्दरत्नः

दुर्वारमि'त्यपास्तमिति भावः। आश्रितत्वादिति। तत्प्रकृतिक-'सख्युरि'ति रूपे ङस्निमित्तो यण्। क्यजकारनिमित्तकत्वे[६] हि क्विनिमित्तकलोपाऽऽपत्तिः। ङस्निमित्तकस्य तु बहिरङ्गत्वेनाऽसिद्धत्वान्न लोपः। स्थानिवत्त्वे हि व्यवधानात्तन्निमित्तकोऽपि न स्यात्। अनुकूलत्वाच्चेति। आत्त्वादिप्रवृत्तिप्रतिबन्धकन्यायानामनित्यत्वेनैतद्विषयेऽप्रवृत्तिबोधकत-

१ 'सख्' इति खान्तरूपापत्तिरित्यर्थोऽस्य भावप्रकाशे।

२ 'अप्राप्तत्वे' इति क. ख. पाठः।

३ 'एः=इतः स्थाने, अत् स्यात् सर्वनामस्थाने' इत्यर्थोऽस्य बोध्यः।

४ 'इत' इति तपरकरणेन भिन्नकालस्य दीर्घेकारादेर्व्यावृत्तिर्बोध्यते इत्याशयः।

५ अयं मनोरमाग्रन्थः।

६ 'निमित्तकत्वे तु' इति घ. पाठः।

तस्मादात्त्वं, न्थादेशश्च न्याय्य एवेति स्थितम्। एतेन 'मथीः' 'मथ्यौ' 'मथ्य' इत्याद्यपि प्रत्युक्तम्। 'मन्थाः' 'मन्थियौ' 'मन्थिय' इत्यादेरेव न्याय्यत्वात्। यदपि 'ऋभुक्षीः' 'ऋभुक्ष्यौ' 'ऋभुक्ष्य' इत्यादि। तत्र 'सावात्त्वं दुर्वारमि'त्युक्तमेव। औङादिषु यण् तु दुर्लभः। संयोगपूर्वकत्वात्। तस्मात् 'ऋभुक्षाः' 'ऋभुक्षियौ' इत्यादि बोध्यम्।

ष्णान्ता षट् (१।१।२४)। स्त्रीलिङ्गनिर्देशः सङ्ख्यां विशेषयितुम्। तत्सामर्थ्याच्च [1]'पूर्वत्र सञ्ज्ञापरमपि सङ्ख्याग्रहणमिह सञ्ज्ञिपरं सम्पद्यते इत्याशयेनाऽऽह—सङ्ख्येति। यत्तु प्राचा 'उपदेशकाले षान्ता, नान्ता चे'त्युक्तम्। तत् 'पञ्चे'त्यत्र नलोपे कृतेऽपी'त्यादिस्वग्रन्थविरुद्धम्। सम्प्रत्यनान्तत्वेऽपि उपदेशे नान्तत्वमासीदिति किमसिद्धत्वेन ?। नन्वयं पूर्वाऽपरविरोधः काशिकायामपि तुल्य इति चेत्। किं ततः।

'बाधे दृढेऽन्यसाम्यात्किं, दृढेऽन्यदपि बाध्यतामि'ति न्यायात्।

---

**बृहच्छब्दरत्नः**

तपरकरणफलाऽनुक्तेः, असम्भवाच्चे'ति मन्दोक्तिः परास्ता। उक्तरीत्योभयोरपि साफल्यात्। विधिकोटिप्रविष्टतपरकरणेन तपरसूत्रप्रवृत्त्या भिन्नकालव्यावृत्तिः परं नाऽऽपाद्या। उक्तरीत्या 'इदि'ति तपरकरणस्य वैय्यर्थ्यसम्पादनेन चारितार्थ्ये शास्त्रबाधे मानाऽभावात्। अत एव 'पन्थानावि'त्यादौ दीर्घसिद्धिः। मूलोक्तेर्विशिष्टदूष्यपरतया लापयितुं शक्यत्वाच्च। वस्तुतस्तु 'युवोरनाकावि'तिसूत्रस्थभाष्यप्रामाण्यात् 'पथि'शब्दादाचारक्विबन्तात् क्विप् न। तदङ्गीकारे तु स्त्रियां 'ऋन्नेभ्य' इति ङीपि, केवल'पथि'शब्दस्य स्त्रीप्रत्ययविशिष्टस्त्रियां वर्त्तमानत्वेन भाष्यमसङ्गतं स्यादिति ध्येयम्। विभक्त्युच्चारणाऽपेक्षया दकारोच्चारणे गौरवाऽभावेन तपरसूत्राऽप्रवृत्तिः। यत्तु 'गौणत्वादेव न भविष्यती'त्याहुः। तन्न। ईदृशाऽर्थस्य शास्त्रप्रक्रियया निष्पन्नत्वेन प्रधानतुल्यत्वात्। गुणाऽनुरोधेन प्रधानसङ्कोचस्याऽन्याय्यत्वाच्चेत्यादि प्रपञ्चितमधस्तात्। न्थादेशश्चेति। चेन टिलोपो बोध्यः।

---

**लघुशब्दरत्नः**

येति भावः। विशेषयितुमिति। विशेष्यसाकाङ्क्षत्वात्तस्येति भावः। तत्सामर्थ्याच्चेति। 'ष्णान्ते'त्यनेन विशेषणसामर्थ्यादित्यर्थः। सङ्ख्याशब्दे तत्त्वाऽसम्भवादिति भावः। इहेति। 'अनुवृत्तमि'ति शेषः। सञ्ज्ञिपरमिति। यद्यपि सञ्ज्ञिषु बहुगणवतुडतिष्वपि तदसम्भवस्तथापि लोके सङ्ख्याप्रकारकबोधजनकाः पञ्चादय इह तत्त्वेन विवक्षिता इति बोध्यम्। किमसिद्धत्वेनेति। 'नलोपे कृतेऽपी'त्यादिग्रन्थप्रतिपादितेनेति भावः। बाधे=दूषणे।

---

[1] 'पूर्वसूत्रेषु' इति घ. पाठः।

यत्तु व्याचख्युः—'उपदेशकाले यौ षकार-नकारौ तदन्ते'त्यर्थः। 'देवदत्तस्य गुरुकुलमि'तिवत्समुदायेन सम्बन्धान्नाऽसमर्थमास' इति। तदापाततः। अवयवेन सम्बन्धं व्याख्याय, 'समुदायेन सम्बन्धादि'त्युक्तेः परस्परव्याघातात्। किञ्च यत्रोपसर्जनपदार्थः ससम्बन्धिकस्तत्र द्वयी विधा। 'सापेक्षोऽपि समस्यते' इत्येका। 'प्रधानपदार्थस्यैव कुलादेर्गुर्वादिनेव देवदत्तादिनाऽपि सम्बन्धः, स च गुरुणा सह उत्पत्तिगर्भः, देवदत्तेन सह तु तदीयगुरूत्पाद्यत्वरूपो गुरुघटित' इति द्वितीया विधा। उक्तश्च हरिणा—

'सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते।
वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते' ॥ इति।
'समुदायेन सम्बन्धो येषां गुरुकुलादिना।
संस्पृश्याऽवयवांस्ते तु युज्यन्ते तद्वता सह' ॥ इति च।

अत्र [1]तूपसर्जनं न ससम्बन्धिकं, येन द्वयी विधाऽवकाशमासादयेत्।

---

बृहच्छब्दरत्नः

ससम्बन्धिक इति। सम्बन्धेन सहितं ससम्बन्धम्। ततो मत्वर्थीयष्ठन्। गुरुत्वं पुंस्त्वे सत्यध्यापकत्वं, तच्च शिष्यनिरूपितम्। केचित्त्वभावसंयोगादीनामपि ससम्बन्धिकत्वमाहुः। सापेक्षोऽपीति। सविशेषणोऽपीत्यर्थः। ससम्बन्धिको द्विविधः-सविशेषणो, निर्विशेषणश्च। आद्यस्तु प्रकृतग्रन्थे एवोक्तः। प्रकरणादिना देवदत्तादीनां बोधे द्वितीयः। तत्राऽन्त्ये 'सविशेषणानां वृत्तिर्ने'ति वचनस्याऽप्रवृत्तत्वेन, पदार्थैकदेशे गुर्वादौ शब्दोपस्थितदेवदत्तादीनामनन्वयाच्च समासाऽभावशङ्कैव न। द्वितीयेति। न चाऽनया रीत्या 'ऋद्धस्य राजपुरुष' इत्यपि स्यादिति वाच्यम्। भाष्य-वार्त्तिकादिप्रामाण्येनाऽत्राऽनङ्गीकारात्। एतेन 'राजपुरुषो भार्याया' इति प्रयोगवारणाऽर्थं भेदसंसर्गयोः शक्तिकल्पनस्याऽऽवश्यकत्वेन कथमत्र विशेषणद्वयाऽन्वय' इत्यपास्तम्। सजातीयविशेषणाऽभावस्यैव भाष्याऽभि-

---

लघुशब्दरत्नः

अवयवेनेति। ष्णान्तपदाऽवयवेन षकारनकारेणेत्यर्थः। समुदायेन = ष्णान्तपदेन। ससम्बन्धिकः = नित्यं सम्बन्ध्यन्तरसापेक्षः। यथा गुर्वादिः। सापेक्षोऽपीति। सापेक्षस्य समासे हि ततो बोधाऽभावो बीजं, न च नित्यसापेक्षे तद्बीजमस्तीति भावः। तदेवाऽऽह—वाक्यवदिति। व्यपेक्षा = आकाङ्क्षा। अवयवान्—गुर्वादीन्। 'संस्पृश्य युज्यन्ते' इत्यस्य तद्द्वारकसम्बन्धेन युज्यन्ते इत्यर्थः। उपसर्जनम्—[2]'ष्ण'पदम्। न ससम्बन्धिकं = न सम्बन्ध्यंशे

---

[1] तुः मुद्रितेषु त्रुटितः।
[2] 'ष्णापदम्' इति मुद्रितेषु पाठः।

नन्विहाऽप्यन्तशब्दः ससम्बन्धिकाऽर्थोऽस्तीति चेत्। 'उपदेशकाले यौ षकार-नकाराविति' वदद्भिस्तदन्वयस्य त्यक्तत्वात्। अन्यथा हि 'उपदेशकालेऽन्तौ यस्ये'ति वक्तव्यं स्यात्। वस्तुतस्तु तदपि न। अन्तशब्दो हि अवयविनि साकाङ्क्षो, न तु यत्र कुत्र चित्। अन्यथा 'ऋद्धस्य राजपुरुष' इति स्यात्। राज्ञोऽपि ईशितुरीशितव्यं प्रति साकाङ्क्षत्वात्। 'राजा प्रभौ, नृपे, चन्द्रे, यक्षे, क्षत्रिय-शक्रयोरि'ति कोशात्। यदि तु 'ऋद्धं प्रत्यनाकाङ्क्षते'ति ब्रूषे, तर्हि समं [1]प्रकृतेऽपि। संनिपातेति। तथा चोपदेशकाले इति व्याख्यानं निष्फलमपीति[2] भावः। यत्त्वाहुः—'परिभाषाया अनित्यत्वाल्लुक् स्यादि'ति। तत्साहसमात्रम्। इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया निष्फलत्वाऽऽपत्तेः। किं च 'उपदेशे' इति निर्मूलमपि। यत्तु वदन्ति—'अन्तग्रहणसामर्थ्यादौपदेशिकत्वं लभ्यते' इति। तदपि न। 'सङ्ख्ये'त्यस्याऽऽकर्षणेन,[3] सञ्ज्ञिपरत्वसम्पादनेन च सामर्थ्योपक्षयात्।

---

बृहच्छब्दरत्नः

प्रेतत्वाच्च। 'राज्ञो देवदत्तस्य गृहमि'त्यादावुत्थाप्याऽऽकाङ्क्षायाः सत्त्वेन देवदत्तस्य ससम्बन्धिकत्वेऽपि समासाऽभावाऽर्थं हरिकारिकायां 'नित्य'पदमित्याहुः।

सङ्ख्येत्यस्येति। 'अन्त'ग्रहणाऽभावे षणान्तशब्दमात्रग्रहणं स्यात्। यथाकथञ्चिट्टापि, तदन्वये च स्त्रीलिङ्गशब्दमात्रग्रहणाऽऽपत्तिः। यथान्यासे तु निर्देशस्य सापेक्षत्वेनाऽवयवित्वमन्यपदार्थत्वञ्च सन्निहितस्त्रीलिङ्गशब्दोपस्थाप्यस्यैव युक्तम्। तच्च सङ्ख्याशब्दस्याऽभिमताऽर्थपरत्वे एव युज्यते। तत्र सङ्ख्याशब्देन स्वप्रतिपादकाः

---

लघुशब्दरत्नः

नित्यसाकाङ्क्षम्। साकाङ्क्षः—नित्यसाकाङ्क्षः। ईशितव्यम्—प्रजा-भूम्यादि। समं प्रकृतेऽपीति। अन्तशब्दस्य उपदेशकालं प्रति न नित्यसाकाङ्क्षतेति भावः। सञ्ज्ञिपरत्वेत्यादि। 'सङ्ख्यापदस्ये'त्यादिः। अन्तग्रहणं समाससम्पादनद्वाराऽन्यपदार्थबोधकत्वेन तत्सम्पादकमिति भावः। किञ्चाऽन्तग्रहणस्य तदर्थत्वे, तस्य विशेषणतया, सप्तम्यन्तत्वेन च [4]पूर्वनिपाताऽऽपत्तिः। उणादीनामव्युत्पत्तिपक्षे प्रत्ययानां, [5]समुदायानां वोपदेशाऽभावेन

---

[1] 'प्रकृतेऽपीति' इति घ. पाठः।
[2] 'निष्फलमिति भावः' इति घ. पाठः।
[3] 'अपकर्षणेन' इति घ. पाठः।
[4] 'पूर्वनिपातवैपरीत्यापत्तिः' इति घ. पाठः।
[5] 'समुदायानाञ्च' इति क. ख. पाठः।

**नोपधायाः** (६।४।७)। 'ने'ति लुप्तषष्ठीकमङ्गस्य विशेषणम्। गौणत्वे त्विति। बहुवचननिर्देशस्याऽर्थप्राधान्याऽर्थत्वादिति भावः। प्रियपञ्चञामिति। ञकारद्वयमध्ये चकारः।

**अष्टन आ** (७।२।८४)। हलादाविति। रायो हलि(७।२।८४। इत्युत्तरसूत्राद्धलीत्यपकृष्यते। तच्च विभक्तेर्विशेषणमिति भावः। तेनाऽष्टानामित्यत्र नुटः पश्चादेव संनिपातपरिभाषाया अनित्यत्वादात्वं, न तु प्राक्,

बृहच्छब्दरत्नः

शब्दा लक्षणयोच्यन्ते। 'सङ्ख्याशब्दोऽर्थपर एवे'त्यपरे। आद्ये वृद्ध्यादिवच्छब्दसञ्ज्ञा। द्वितीये तु करणादिवदर्थसञ्ज्ञा। न च तत्र ष्णान्तत्वाऽसम्भवः। शब्दद्वारा सम्भवात्। अस्मिन्पक्षे सङ्ख्यारूपोऽर्थो विशेष्यत्वात्प्रधानीभूत-प्रथमोपस्थित-पदाऽन्तरनिरपेक्षाऽन्तरङ्ग[1] एव गृह्यते। तथा च गौणे षट्सञ्ज्ञा न। [2]प्रकाराऽन्तरञ्च मूले स्पष्टम्।

अपकृष्यते इति। न चैवं पूर्वत्रैव कुर्यादिति वाच्यम्। अपकर्षमात्रोच्छेदाऽऽपत्तेः। किञ्च 'राय' इत्यत्राऽननुवर्त्तनाऽऽपत्तिः। 'योऽची'तिसूत्रस्थाऽचीत्यनेनोत्तरत्राऽननुवृत्तेर्बोधनात्। तद्धि 'युष्मदस्मदोरनादेशे' इति हल्येव भवतित्येतदर्थम्। अनुवृत्तौ तद्वैयर्थ्यम्। न चेष्टाऽऽपत्तिः। यत्वविधायकेऽप्यनुवृत्त्यापत्तेः। मध्ये विच्छिन्नत्वं त्वनादेशे इत्यस्याऽपि समम्। एतेन 'अष्टन आ विभक्तावि'तिसूत्रप्रणयनकाले 'हली'त्येतद्विषयकाऽज्ञानकल्पनाऽऽपत्त्याऽपकर्षो न युक्त' इति परास्तम्। बाधकाऽभावाच्च। अत एव 'एकयोग एव कर्त्तुं युक्त' इति परास्तम्। 'रै'शब्दश्छान्दस' इति मते अष्टन्शब्दस्य तत्रैवाऽऽपत्तेश्च। 'रै'शब्दे विकल्पाऽऽपत्तेश्च। अनित्यत्वादिति। यत्तु 'अनित्यत्वाऽऽश्रयणेनाऽऽत्वे, अकृत-

लघुशब्दरत्नः

[3]त्वदुक्ताऽर्थाऽसङ्गतेश्चेत्यपि बोध्यम्। 'उपदेशग्रहणं कर्त्तव्यमि'ति वार्त्तिकस्य तु 'स्वप्रकृतिकप्रत्ययोपदेशकाले ष्णान्ते'त्यर्थः। त्वया तु समस्ताऽन्तपदार्थभूतस्य उपदेशकालस्य तथाऽन्वयो वक्तुमशक्य इति स्पष्टमेवेति दिक्।

हलीत्यपकृष्यत इति। 'हलीत्युभयोः शेष' इति भाष्योक्तेरिति भावः। संनिपातेति। नान्तत्वप्रयुक्तषट्सञ्ज्ञकसंनिपातेन जातस्य नुटस्तदविघातकत्वमिति तस्याः प्राप्तिः। अनित्यत्वादिति। न च नुटि नोपधायाः (६।४।७) इति दीर्घे, नलोपेन 'अष्टानामि'त्यस्य सिद्धेः

[1] 'निरपेक्षोऽन्तरङ्ग' इति क. पाठः।
[2] 'प्रकारान्तरं त्वमूले' इति क. ख, पाठः।
[3] 'त्वदुक्तार्थाऽसङ्गतिश्चेति बोध्यम्' इति मुद्रितेषु पाठः।

अन्यथा 'अष्टन्–आमि'ति स्थिते परत्वान्नित्यत्वाच्च आत्वे कृतेऽनान्तत्वे षट्-

बृहच्छब्दरत्नः

व्यूहपरिभाषया नुडेव न स्यात्। किञ्च 'अष्टौ' 'अष्टाभिरि'त्यादावकृतव्यूह-परिभाषया 'त्रः सङ्ख्याया' इति सूत्रेणाऽऽद्युदात्तत्वस्याऽप्राप्तौ 'फिषोऽन्त उदात्त' इति सूत्रेणाऽन्तोदात्तत्वसिद्धावपि ह्रस्वाऽन्तोऽष्टन्शब्दो घृतादिपाठादन्तोदात्तः। 'अष्टनो दीर्घादि'ति सूत्रे 'अन्तोदात्तादि'त्यनुवर्त्तते' इति 'क्रन्मेजन्त' इति सूत्रस्थ-भाष्यादिस्वरसः। एवं विकल्पे ज्ञापितेऽपि परत्वेन षट्स्वरप्रवृत्त्या 'अष्टनो दीर्घादि'तिसूत्रस्थदीर्घग्रहणवैयर्थ्याऽनुद्धारेणाऽकारान्ते षट्सञ्ज्ञाया अपि भाष्यादौ ज्ञापितत्वेनोक्तपरिभाषाया अप्रवृत्तिः। तथा च दीर्घोऽन्ते इव ह्रस्वाऽन्ते 'अष्टनो दीर्घादि'त्यनेन 'झल्युपोत्तममि'त्यस्य बाधो न। न च शसि सावकाशतेति वाच्यम्। 'एकादेश उदात्तेनोदात्त' इत्यनेनैव सिद्धेः। एतेन 'जसि सावकाशते'-त्यपास्तम्। 'असर्वनामस्थाने' इत्यनुवृत्तेश्च। 'षट्त्रिचतुर्भ्यो हलादिरि'त्यस्य बाधे, अबाधे च न कश्चिद्विशेषः। अपि चाऽनित्यत्वे मानाऽभावः। न चाऽष्टाना-मिति प्रयोग एव मानमिति वाच्यम्। 'नोपधाया' इति दीर्घेण सिद्धत्वादि'ति। तन्न। ईदृशे विषये 'अकृतव्यूह'परिभाषायाः प्रवृत्तौ, सन्निपातपरिभाषाया अनित्यत्वकल्पनस्य निर्विषयत्वप्रसङ्गात्। किञ्च षट्त्वं हि षकारनकारान्तत्वे सति सङ्ख्यावाचकत्वम्। तत्र नान्तत्वं निमित्तीकृत्य जायमानस्याऽऽत्वप्रवर्त्तकत्वे निमित्तविघातकत्वं स्पष्टमेव। अपि चाऽऽकारान्ते षट्सञ्ज्ञायाम् 'अष्टावि'त्यत्र लुगापत्तिः। न च विधिवैयर्थ्यम्। आनुमानिकवचनकल्पने गौरवाऽऽपत्त्या आकारान्ते षट्सञ्ज्ञाया अभावस्यैव युक्तत्वात्। अपि चाऽऽकारान्ते षट्सञ्ज्ञायां फलाऽभावः। न च नुट्। 'हली'त्यपकर्षेण नुटः पूर्वमात्वाऽप्रवृत्तेः। [1]'आष्ट' इति सिद्ध्यर्थं तस्याऽऽवश्यकत्वात्। किञ्च 'अष्टनो दीर्घादि'ति सूत्रे षट्सञ्ज्ञाया अनुपस्थितत्वेन तत्कल्पनमयुक्तम्। बाधकषट्स्वरनिमित्तत्वेन तस्या उपस्थिति-

लघुशब्दरत्नः

किमनित्यत्वेन। न च नलोपस्याऽपि संनिपातपरिभाषयाऽप्राप्तिः, नलोपस्याऽसिद्धत्वेन तद्विषये तदप्राप्तेरिति वाच्यम्। [2]क्रन्मेजन्तसूत्रभाष्ये संनिपातपरिभाषादोषनिरूपणाऽवसरे 'हे गौरी'त्यादौ सम्बुद्धिलोपेऽपि, तस्य स्थानिवत्त्वेन ह्रस्वनिमित्तसंनिपातविघाताऽभावात्तत्रा-ऽतिव्याप्तिपरभाष्याऽसङ्गतेः। 'संनिपातस्याऽशास्त्रीयत्वान्न स्थानिवत्त्वमि'ति चेत्। तत्रा-ऽसिद्धत्वमपि कथमिति विभावय। किञ्च पूर्वत्र कर्त्तव्ये तदसिद्धत्वेऽपि, तत्र कृते तस्याऽसिद्धत्वे मानाऽभावः। अन्यथा = हलीत्यस्यात्राऽसम्बन्धे। 'परत्वादि'त्यस्युच्चयः। नित्यत्वाच्चेति।

[1] 'पाष्ठ' इति क. ख. पाठः। अस्फुटोऽयं पाठः।

[2] 'क्रन्मेजन्त इति सूत्रभाष्ये' इति घ. पाठः।

**सञ्ज्ञाऽभावान्नुट् न स्यात्। न च यथोद्देशपक्षेऽन्तरङ्गत्वात् प्रागेव कृता**

**बृहच्छब्दरत्नः**

रिति चेत्तर्हि ततोऽपि प्रथमोपस्थितत्वेन षट्स्वरसत्त्वैव ज्ञापयितुं युक्ता। अर्थाऽऽपत्तेः साक्षादुपपादकविषयताया औत्सर्गिकत्वात्। 'अष्टनो दीर्घादि'त्यस्य स्वरप्रकरणे सत्त्वाच्च। वस्तुतस्तु साऽपि ज्ञापयितुमशक्या। फलाऽभावात्। 'उपदेशग्रहणं कर्त्तव्यं, शताद्यष्टनो नुम्नुडर्थमि'ति वार्त्तिकेण, तद्भाष्येण च नुड्भिन्नषट्कार्यस्याऽऽकारान्तेऽप्रवृत्तेर्ध्वनितत्वाच्च। किञ्चाऽऽकारान्ते षट्स्वरप्रवृत्तिकल्पनवत्, आत्त्वाऽभावे अष्टन्शब्दे षट्स्वराऽप्रवृत्त्याऽपि 'दीर्घादि'त्यस्य चारितार्थ्यात्। 'दीर्घादि'ति योगो विभज्यते। 'अष्टन' इत्यनुवर्त्तते। इदञ्च नियमाऽर्थम्। 'अष्टनः परस्या विभक्तेरुदात्तत्वं चेद्दीर्घादेवे'ति। योगविभागसामर्थ्याद्येन केन चित् लक्षणेन प्राप्तस्य निषेधः। अत एव 'दीर्घादष्टन' इति न सूत्रितम्। अत एव कृताऽऽत्त्वाऽनुकरणं न कृतम्। न च 'षट्त्रिचतुर्भ्य' इत्यत्र विहितविशेषणपक्षाऽऽश्रयणाद्बहिरङ्गत्वेन नुटोऽसिद्धत्वाद्यथाश्रुतपक्षे[1]ऽष्टानामित्यत्र षट्स्वरो न प्रवर्त्तते इति वाच्यम्। विहितविशेषणाऽऽश्रयणे मानाऽभावात्। प्रकृतिप्रत्ययनिमित्तत्वेनोभयोः समत्वाच्च। अत एव 'वसोः' 'चतसृणां', 'सप्तानां' 'सप्त ऋषय' इत्यादौ पठ्यमानमन्तोदात्तत्वं सङ्गच्छते। 'नुडामोर्विधानाद्धलादिविभक्तिविधानमस्त्येवे'ति विभाव्यते, तर्हि प्रकृतेऽपि प्रसङ्गः। स च दीर्घः प्रतिपदोक्तपरिभाषया, सामर्थ्याच्चाऽष्टन आ विभक्तावित्येव गृह्यते। 'नोपधाया' इति दीर्घे नलोपाऽसिद्धत्वेन दीर्घाऽन्तत्वाऽभावात्। न चाऽन्तोदात्तत्वे मानाऽभावः। भाष्योक्तपक्षाऽन्तरेषु तस्य दुर्वारत्वात्। एतेन 'नामन्यतरस्यामि'त्यनेनोदात्तत्वं दुर्वारमि'ति परास्तम्। 'मतुपि यो ह्रस्वस्तदन्तादि'त्युक्तत्वेन नलोपाऽसिद्धत्वादप्रवृत्तेश्च। [2]एतेनाऽपि 'तस्याऽनित्यत्वे मानाऽभाव' इत्यादिकमपास्तम्। यत्तु 'रायः स्भी'ति वक्तव्ये हल्ग्रहणसामर्थ्यात्सन्निपातपरिभाषाऽनित्ये'ति। तन्न। 'सुपां सुलुगि'ति यादेशे आत्त्वाऽर्थं [3]तस्याऽऽवश्यकत्वात्। आचारक्विबन्तादाचक्षाणण्यन्ताद्वा 'रै'शब्दाद्विचि[4] आत्वप्रवृत्त्या चारितार्थ्याच्च। न 'हि विभक्ति'शब्देन तिङ्विभक्तिर्न गृह्यते' इत्यत्र किञ्चिन्मानमस्ति।

यथोद्देशेति। कार्यकालपक्षे नुड्विध्येकवाक्यताऽऽपन्नत्वेन विभक्तिनिमित्तत्वेन षट्सञ्ज्ञायामन्तरङ्गत्वं दुपपादम्। प्रागेवेति। 'विभक्त्युत्पत्तेरि'ति शेषः।

**लघुशब्दरत्नः**

कार्यकालपक्षे सञ्ज्ञायास्तत्तद्विध्येकवाक्यतया षट्त्वाऽऽत्वयोर्बहिरङ्गत्वं समानमिति भावः।

[1] 'यनान्तपक्षे' इति 'अनान्तपक्षे' इति वा क. ख. पाठः।

[2] 'एतेनापि श्चाऽनित्यत्वे' इति ख. पाठः।

[3] तस्य='रायो हली'त्यत्र हलीत्यस्येत्यर्थः।

[4] 'विटि' इति ख. पाठः।

षट्सञ्ज्ञा 'एकदेशविकृत'न्यायेन कृताऽऽत्वेऽपि सुलभेति वाच्यम्। अल्विधौ उक्तन्यायाऽयोगादिति भावः।

अष्टाभ्य औश् (७।१।२१)। कृताकारादिति। ननु 'हलीत्यपकृष्यते' इत्युक्तं, 'तत्कथं कृताऽऽकारतेत्यत आह–अष्टभ्य इति। कृताऽऽत्वस्येदमनुकरणं, न तु लक्षणवशसम्पन्नमात्वम्। तथा हि सति वक्ष्यमाणज्ञापकेन तस्य वैकल्पिकतया लाघवाऽर्थम् 'अष्टभ्य' इत्येव ब्रूयादिति भावः। इदमिति। श्रुतमनुमितं चेत्यर्थः।

अष्टनो दीर्घादिति। 'दीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता स्यात्'। अष्टाभिः। दीर्घात् किम्? । अष्टभिः। मध्योदात्तमिदम्। षट्त्रिचतुर्भ्यो हलादिः (६।१।१७९) इति बाधित्वा झल्युपोत्तमम् (६।१।१८०) इत्यस्य प्रवृत्तेः। 'षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे

---

बृहच्छब्दरत्नः

केचित्तु—'प्रागेवे'ति। आत्वादिति शेष' इत्याहुः। विभक्तिस्तु क्रियानिमित्तकर्मादिसापेक्षत्वेन प्रातिपदिकाऽर्थनिमित्तषट्सञ्ज्ञाऽपेक्षया बहिरङ्गैव। एकदेशेति। न च कृते आत्त्वे तस्य विभक्तिनिमित्तत्वाद्बहिरङ्गत्वेन सञ्ज्ञां प्रत्यसिद्धत्वम्। सञ्ज्ञायामर्थविशेषस्याऽपेक्षणात्। किञ्च यथोद्देशेऽपि फलाऽभावात्पूर्वं सञ्ज्ञाप्रवृत्तिर्दुरुपपादा। न तु लक्षणेति। तथा हि सति विवक्षा न स्यात्। केचित्तु 'आ-ओशि'ति छित्त्वा 'आ' इत्यत्र लुप्तपञ्चम्यन्तत्वमास्थाय 'आकारान्तादष्टन्शब्दाज्जस्शसोरोशि'ति सूत्राऽर्थसामर्थ्यादाकार' इत्याहुः।

बाधित्वेति। इदञ्च छन्दोविषयम्। भाषायान्तु 'विभाषा भाषायामि'तिवैकल्पिकोपोत्तमोदात्तत्वे, अन्तोदात्तत्वमेव। 'षट्त्रिचतुर्भ्यो हलादिः' 'झल्युपोत्तमम्' 'अष्टनो दीर्घादि'ति सूत्रत्रयं समासे न प्रवर्त्तते' इति 'चतुरः शसि'

---

लघुशब्दरत्नः

अल्विधाविति। षट्सञ्ज्ञाया अल्विधित्वेन, तन्मूलककार्याणामप्यल्विधित्वमित्यभिमानः। यदि तु नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यलधर्मत्वाऽभावेन, तत्प्रयुक्तकार्यस्य नुडादेरपि नाऽल्विधित्वमिति, स्थानिवत्त्वेन, एकदेशविकृतन्यायेन च नुट् सुलभस्तर्हि मुख्ये कार्यकालपक्षे तत्सिद्धि'र्हली'त्यनुवृत्तेः फलमिति बोध्यम्। श्रुतं-हलादौ, अनुमितं-जश्शसोः।

---

[1] 'इत्युक्तत्वात्कथम्' इति ध. पाठः।

उपोत्तममुदात्तं स्यादि'ति तस्याऽर्थः। एवं स्थिते ह्रस्वव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्वस्य नित्यत्वे व्यर्थं स्यादित्यर्थः।

पूर्वस्मादपीति। एवञ्च 'प्रियाष्ट्ण' इति हरदत्तोदाहृतं ष्टुत्वं न सम्भवतीति भावः। न च 'पूर्वत्राऽसिद्धीये न स्थानिवदि'ति निषेधः।

---

लघुशब्दरत्नः

ह्रस्वव्यावृत्त्यर्थमिति। ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थमित्यर्थः। व्यर्थं स्यादिति। ननु ज्ञापितेऽपि व्यर्थमेव तत्, 'अष्टाभिरि'त्यत्र सावकाशस्य अष्टनः (६।१।१७२) इति सूत्रस्य 'अष्टभिरि'त्यत्र परत्वात् झल्युपोत्तमम् (६।१।१८०) इत्यनेन बाधे, सकृद्गतिन्यायेन पुनरप्रवृत्तेरिति चेन्न। दीर्घग्रहणेनैव सकृद्गतिन्यायाऽनित्यत्वस्याऽपि ज्ञापनात्। यद्वाऽत्र यथोद्देशपक्ष एव ज्ञाप्यते। तत्राऽऽत्वस्य बहिरङ्गतया प्राक् षट्त्वे जाते, नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मरूपस्य षट्त्वस्याऽल्धर्मत्वाऽभावेन स्वरादेरल्विधित्वाऽभावात् स्थानिवद्भावेन, एकदेशविकृतन्यायेन वाऽकारान्तस्याऽपि षट्त्वेन, तत्राऽपि झल्युपोत्तमम् (६।१।१८०) इत्यस्य प्राप्त्याऽष्टन्स्वरस्य तदपवादत्वात्। तत्र पक्षे 'भविष्यति किञ्चिदनेन प्रयोजनमि'त्यभिसन्धिमात्रेणैव सञ्ज्ञाप्रवृत्तेः प्रगृह्यसञ्ज्ञाप्रकरणे कैयटेनोक्तत्वात्। स्पष्टञ्चेदं षट्सञ्ज्ञासूत्रे, अष्टनो दीर्घात् (६।१।१७२) इति सूत्रे च भाष्य-कैयटयोः। आकारान्तस्य षट्त्वेऽपि, औश्विधिसामर्थ्यादष्टावित्यत्र लुक् न।

नन्वेमष्टावित्यत्राऽष्टन्स्वरस्य चारितार्थ्यं, हलादित्वाऽभावेन षट्स्वरस्य तत्राऽप्राप्तेः। न चैकादेशे व्यपवर्गाऽभावः। स्वरात्पूर्वं सन्धिकार्याऽप्रवृत्तेः 'एही'त्यत्राऽऽङ्निमित्तनिघातसिद्धये यद्धितुपरम् (८।१।५६) इति सूत्रे भाष्ये ध्वनितत्वादिति चेन्न। एतद्भाष्यप्रामाण्यादेवाऽष्टन्शब्दस्य घृतादिपाठादन्तोदात्तत्वेन, एकादेश उदात्तेनोदात्तः (८।२।५) इत्येव तत्राऽन्तोदात्तत्वसिद्धेः। ननु 'प्रियाष्टाभ्यामि'त्यादावष्टन्स्वरः सावकाशः, षट्स्वरविधायके विहितविशेषणाऽऽश्रयणेन समासे गौणे तदप्राप्तेः। अत एव चतुरः शसि (६।१।१६७) इति सूत्रे 'स्त्रियां प्रतिषेधो वाच्यः, चतस्रः पश्य, चतसर्याद्युदात्तनिपातनात्सिद्धम्'[1]। तन्निपातनेऽपि, 'चतसृणामि'ति विभक्तिस्वरः सिद्धः, षट्त्रि (६।१।१७८) इति सूत्रे हलादिग्रहणेन निपातनस्वरस्य विभक्तिस्वराऽबाधकत्वज्ञापनात्। आद्युदात्तनिपातने हि हलादिग्रहणाऽऽनर्थक्यम्। न ह्यन्यद्धलादिग्रहणं प्रयोजयति, अन्यदतश्चतसृशब्दादि'ति भाष्योक्तं सङ्गच्छते। अन्यथा 'प्रियाष्टान' इत्यादेः सम्भवेन, तदसङ्गतिः। 'अष्टौ' 'परमाष्टौ' इत्यादेरेकादेशस्वरेण सिद्धेः। न च 'कदष्टावि'त्यादिव्यावर्त्त्यं, सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकतयोत्तरपदार्थप्रधानसमासे समुदायस्याऽपि षट्त्वात्, स्पष्टञ्चेदं सर्वादीनि (१।१।२७) इत्यत्र भाष्ये, ततो विहितत्वाच्चेति वाच्यम्। एतद्भाष्यप्रामाण्येन तदनभिधानादिति चेन्न। एतज्ज्ञापकपरभाष्यप्रामाण्यात् अष्टनः (६।१।१७२) इत्यस्याऽपि विहितविशेषणाऽऽश्रयणेन समासेऽप्रवृत्तेः। प्रियाष्टादीनामनभिधानस्य षट्सञ्ज्ञासूत्रे भाष्ये स्पष्टत्वाच्च। तिसृभ्यो

---

[1] 'निपातनात्तत्सिद्धम्' इति मुद्रितेषु पाठः।

'तस्य दोष' इति सापवादत्वात्। ननु रषाभ्याम् (८।४।१) इति प्रतिपदोक्तं णत्वं[1] तत्र ग्रहीष्यामः, न तु ष्टुत्वविधिलभ्यमिति चेत्। मैवम्। भाष्यमते तदयोगात्। तथा हि—'रषाभ्यामि'ति सूत्रे अपदान्तस्य मूर्द्धन्यः (८।३।५५) इति सूत्रमनुवर्त्त्य णग्रहणं, पदान्तस्य (८।४।३७) इति निषेधसूत्रञ्च भाष्ये प्रत्याख्यातम्। न च 'मूर्द्धन्य'शब्देन, 'ष्टु'शब्देन वा निर्वर्त्त्यमाने णकारे वैषम्यं सुवचम्। 'यथोत्तरञ्च[2] मुनीनां प्रामाण्यमि'ति स्थानिवद्भाव एवोचितः। शब्दकौतुभे 'तस्य दोष' इत्यत्र णत्वग्रहणं माऽस्त्विति निष्कर्षः कृतस्तद्रीत्याऽप्याह—कार्यकालपक्ष इति। न च यथोद्देशमाश्रित्य ष्टुत्व-

---

बृहच्छब्दरत्नः

'ष्णान्ता षडि'त्यादौ भाष्ये स्पष्टम्। भाष्यमते इति। भाष्यमते तदयोगे सूत्रकारमतेऽपि णत्वरहितलक्ष्याऽनुमानम्, एकवाक्यताया एव युक्तत्वादिति पूर्वमेव प्रपञ्चितम्। तस्मादनित्यत्वेन 'लक्षणप्रतिपदोक्त'परिभाषा न प्रवर्त्तते इति बोध्यम्।

वस्तुतस्तु 'मूर्धन्य'पदाऽनुवृत्तिः सूत्रकारस्याऽप्यभिप्रेता। अत एव 'मूर्धन्य'पदं सार्थकम्। तत्फलन्तु लाक्षणिकत्वसम्पादनमेव। 'ण'ग्रहणन्तु 'सञ्ज्ञापूर्वको विधिरनित्य' इत्यनित्यत्वसम्पादनाऽर्थम्। अत एव 'स्वं रूपमि'ति सूत्रं [3]सार्थकम्। तेन 'दुर्भगानी'त्यादि सिद्धम्। 'पदान्तस्ये'ति निषेधसूत्रन्तु 'नञ्घटितमनित्यमि'त्येतद्बोधनाऽर्थम्। अत एव 'प्राण्'[4] इत्यादौ णत्वसिद्धिः। 'आदेच उपदेशे' इति सूत्रस्थोपदेशग्रहणाद्वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्त्या सूत्र-भाष्ययोर्न विरोध इति तत्त्वम्।

निष्कर्ष इति। यत्तु संयोगादिलोपग्रहणमपि माऽस्तु, 'काक्यर्थमि'त्यादौ 'झल' इत्यनुवृत्त्या सिद्धत्वादि'ति। तन्न। तक्ष-रक्षाभ्यां प्रातिपदिकाभ्यां

---

लघुशब्दरत्नः

जसः (६।१।१६६) इति सूत्रस्थेन 'उपसमस्तार्थमेके'इति भाष्येण तुल्यन्यायात् षट्स्वरस्याऽपि तदन्ते प्रवृत्तेरुक्तत्वाच्च। चतुरः शसि (६।१।१६७) इति सूत्रस्थन्तु वार्त्तिकं 'जस्ग्रहणाऽऽनर्थक्यम्, अन्यत्राऽभावादि'ति तिसृभ्यः (६।१।१६६) इति सूत्रस्थवार्त्तिकवदेव दूष्यम्। 'एके' इति च मुख्यार्थकमिति दिक्।

प्रतिपदोक्तमिति। संयोगादिलोपसाहचर्याल्लत्वस्यैवेति भावः। प्रत्याख्यातमिति। तदेकवाक्यतयाऽत्राऽनित्यत्वेन णत्वांऽशे प्रतिपदोक्तपरिभाषा-साहचर्यपरिभाषयोरप्रवृत्तिरिति

---

[1] 'णत्वम्' इति ध. ङ. नास्ति।
[2] चकारः घ. नास्ति।
[3] 'साधकम्' इति क. ख. पाठः।
[4] 'हे प्राण्' इति सम्बुद्ध्यन्तमेतत्।

**मस्त्विति वाच्यम्। फलभेदे प्रत्याख्यानाऽसम्भवेन कार्यकालपक्षस्यैवेह**

---

बृहच्छब्दरत्नः

ण्यन्ताभ्यां क्विपि लोपाऽभावाऽर्थं तस्याऽवश्यकत्वात्। न च लोपे इष्टाऽऽपत्तिः, 'संयोगान्तस्य लोपे यणः प्रतिषेधः', संयोगान्तस्य लोपे यणः प्रतिषेधो वक्तव्यः, 'दध्यत्र' 'मध्वत्रे'ति, 'संयोगादिलोपे च यणः प्रतिषेधो वक्तव्यः', किमर्थम्, 'काक्यर्थम्' 'वास्यर्थम्'। न वा झलो लोपात्। न वा वक्तव्यः। किं कारणम्। झलो लोपात्। झलो लोपः संयोगान्तलोपो वक्तव्यः। बहिरङ्गलक्षणत्वाद्वा। अथवा बहिरङ्गो यणादेशः, अन्तरङ्गो लोपः, 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्याष्टमिकभाष्यात्तथैव लाभादिति वाच्यम्। उक्तभाष्येण 'संयोगान्तस्य लोप' इति सूत्रे 'झल' इत्यस्य सम्बन्ध' इत्यर्थलाभेऽपि, 'संयोगादिलोपे 'झल' इत्यस्य सम्बन्ध' इत्यर्थाऽलाभात्। अत एव 'झलो लोपः संयोगान्तलोपो वक्तव्य' इत्यत्र संयोगान्तपदोल्लेखः, 'अन्तरङ्गो लोप' इत्यत्र तदनुल्लेखश्च सङ्गच्छते। किञ्च 'झल' इत्यस्य विच्छिन्नत्वेनाऽनुवृत्तिरपि दुर्लभा। अत एव[1] 'अम्भ्यमि'त्यादौ संयोगादिलोपसिद्धिः। न च 'परेश्च घाऽङ्कयोरि'तिसूत्रस्थभाष्यात्क्विबेवाऽनभिधानाद् दुर्लभ इति वाच्यम्। 'काष्ठशक्स्थाते'त्यत्र झल्परसंयोगादित्वेन लोपमाशङ्क्य तद्भाष्यस्य प्रवृत्तत्वेनाऽणिजन्तविषये एव तदङ्गीकारात्। तस्य तत्रैव प्राप्तत्वात्। न हि संयोगादिलोपग्रहणे सति णिजन्ते प्रवृत्तिः। णत्वग्रहणं 'माषवपनी' 'प्रहिणोती'त्यादिसिद्धये आवश्यकमिति न वाच्यम्। 'असिद्धं बहिरङ्गमन्तरङ्गे' 'एकदेशविकृतमनन्यवद्भवती'ति परिभाषाभ्यां सिद्धत्वात्। विकरणाऽन्तस्याऽप्यर्थवत्त्वकल्पने बाधकाऽभावात्। विनिगमकाऽभावेन कर्त्रादिद्योतकवद्धात्वर्थद्योतकत्वकल्पनाच्च। ध्वनितश्चाऽयमर्थः 'अनितेरन्त' इति सूत्रे भाष्ये। तथाहि 'अनितेः' 'अन्त' इति च नस्य विशेषणं, प्राधान्यात्। 'अन्त' इति अनितेर्वा विशेषणं, श्रुतत्वात्। 'अन्त'-शब्दः समीपवाची। समीपत्वं च निमित्ताऽपेक्षयैव। अन्याऽसम्भवात्। 'उपसर्गस्थान्निमित्तात्परस्य निमित्तसमीपस्थस्याऽनितेरनितिनकारस्य वा ण' इति वाक्यार्थः। तेन 'प्राणिती'त्यत्राऽव्यवधाने, एकेन व्यवधाने वा णत्वं भवत्येव। न चेदम् 'अट्कुप्वाङ्नुम्व्यवायेऽपी'त्यधिकारादेव सिद्धम्। 'अन्त'शब्दोपादानसामर्थ्येन तदसम्बन्धस्य बोधनात्। तेन 'पर्यनिती'त्यत्रैकेन व्यवधाने, अनेकव्यवधाने च

---

लघुशब्दरत्नः

**भावः। प्रत्याख्यानेन च 'तयोरुपादानं स्पष्टाऽर्थमेव, न तु फलाऽन्तराऽभिनिवेशः कार्य' इति सूच्यते। प्रत्याख्यानाऽसम्भवेनेति। '[2]उक्तरीत्या भाष्यध्वनितणत्वग्रहणे'त्यादिः।**

---

[1] 'अम्भ्यमि'ति अस्मदो रूपमिदमाचक्षाणणिजन्तात्कर्त्तरि क्विबन्तस्य। अत्र सकारस्य संयोगादिलोप इति बोध्यम्। अत्र 'मोनो धातोरि'ति नत्वे 'अन्म्यम्' इत्युचितमि'ति तु बृहच्छेखरे श्रीनागेशभट्टाः।

[2] 'उक्तरीत्या भाष्यध्वनित' इत्यंशः क. ख. नास्ति।

न्याय्यत्वादिति भावः। अत एव [1]पञ्चमीसमासप्रत्याख्यानपक्षोपष्टम्भेनाऽपि[2] [3]ष्टुत्वं प्रत्याशा न कार्या। फलैक्याय कार्यकालपक्षस्यैव न्याय्यत्वेनाऽसिद्धत्वस्य दुर्वारत्वात्। निष्ठायां सेटि (६।४।५२) इति [4]सेट्ग्रहणाज्ज्ञापकात् पूर्वस्माद्विधौ स्थानिवद्भावस्याऽनित्यतया नेह प्रवृत्तिरिति तु सम्भवेदुत्प्रेक्षा, यदि लक्ष्ये ष्टुत्वं प्रमितं स्यात्। लक्षणैकचक्षुष्कतायान्तु अनित्यत्वपुरस्कारोऽनुचित एवेत्यास्तां तावत्।

---

बृहच्छब्दरत्नः

न णत्वम्। पञ्चमीनिर्देशं निमित्तीकृत्य प्राप्तनिर्दिष्टपरिभाषायाः सर्वथा बाधे मानाऽभावादिति स्थितम्। यदि चेह णत्वग्रहणं क्रियते, तर्हि 'पर्यनिती'तिवत् 'प्राणिती'त्यत्राऽपि णत्वं न स्यात्। न च वचनसामर्थ्यात्स्थानिवद्भावकृतव्यवधानमाश्रयिष्यते, न श्रुतिकृतमिति वाच्यम्। 'निरणिती'त्यादौ स्थानिवद्भावकृतव्यवधानस्याऽप्यभावे विधेश्चरितार्थत्वात्। न चैवं 'निरोऽनितेरि'त्येव ब्रूयादिति वाच्यम्। निसि दोषाऽऽपत्तेः। णिजन्ते तदर्थाऽन्वये दोषाऽऽपत्तेश्च। पदलाघवाऽभावाच्च। आवृत्तिमाश्रित्य विनिगमनाविरहेण समीपाऽवयववाचिनोग्रहणेन 'हे प्राण्' इत्यादिसिद्ध्यर्थमन्तशब्दस्याऽऽवश्यकत्वाच्च। यथाश्रुतभाष्याऽनुपपत्तेश्च। 'प्राण्' इत्यादौ तु 'न पदान्ते'ति निषेधात्स्थानिवद्भावशङ्काऽपि नेति कश्चित्। केचित्तु 'अनितेरेवाऽन्तो गृह्यते। तथा च 'दुरः षत्वे'ति निषेधं बाधित्वा 'दुरणिती'त्यत्राऽपि णत्वमि'त्याहुः। तस्माण्णत्वग्रहणं मास्त्विति स्थितम्। नन्विदं भाष्यं पञ्चमीसमासप्रत्याख्यानाऽभिप्रायेणैव योज्यम्। 'अपरविधाविति तु वक्तव्यमि'त्यचः परस्मिन्निति सूत्रस्थभाष्येण तस्य ध्वनितत्वादिति चेत्। 'ओमि'त्याह[5]—अत एव पञ्चमीति। फलैक्यायेति। णग्रहण-तत्प्रत्याख्यानयोर्णत्वग्रहण-

---

लघुशब्दरत्नः

'णग्रहणे'ति वा। पञ्चमीसमासेति। 'अपरविधाविति वक्तव्यमि'ति अचः परस्मिन् (१।१।४०) इति सूत्रस्थवार्त्तिकव्याख्यानाऽवसरे कैयटध्वनितेत्यर्थः। वस्तुतस्तदयुक्तमिति प्राङ् निरूपितम्।

तत्प्रत्याख्यानमभ्युपेत्याऽपि समाधत्ते—फलैक्यायेति। प्रत्याख्यानस्याऽयुक्तत्वं ध्वनयन् पञ्चमीसमासपक्षे लक्ष्यसिद्धिं शङ्कते—निष्ठायामिति। (सेड्ग्रहणादितीति[6])। तत्र हि

---

[1] 'पञ्चमीसमासस्य प्रत्याख्यानोपष्टम्भेन' इति मुद्रितेषु पाठः।
[2] 'पक्ष' इति मुद्रितेषु त्रुटितम्।
[3] 'ष्टुत्वे प्रत्याशा' इति ङ. पाठः।
[4] 'सेड्' इति घ. पाठः।
[5] 'आम् इत्याह' इति क. पाठः। 'ओम् इत्याह' इति ख. पाठः।
[6] अयं पाठो भावप्रकाशात्पूरितः।

**जश्शसोरिति।** औत्वं हि लुग्लुटाविव गौणत्वे न भवति । 'अष्टाभ्य' इति बहुवचननिर्देशात् । अन्यथा हि कृताऽऽत्वाऽनुकरणेऽपि एकवचनेनैव निर्दिशेत् —'अष्टा औशि'ति, 'अष्ट' इति वा । एतच्च ष्णान्ता (१।१।२४) इति सूत्रे भाष्यकैयटयोः स्पष्टम् । तथा च औत्वविधौ कृताऽऽत्वनिर्देश-

बृहच्छब्दरत्नः

तत्प्रत्याख्यानयोश्च, पञ्चमीसमास-तत्प्रत्याख्यानयोश्च फलैक्यायेत्यर्थः । णत्वे कर्त्तव्ये स्थानिवद्भावः । कार्यकालपक्षेऽसिद्धत्वम् । तद्भिन्ने तु न स्थानिवद्भावः । यथोद्देशपक्षाऽऽश्रयणेनाऽसिद्धत्वाऽभावः । एतेन 'राज्ञ' इत्यत्र चुत्ववत् 'प्रियाष्ट्न' इत्यत्र णत्वं दुर्वारमि'ति मन्दोक्तमपास्तम् । बहुवचनेति । अत एव 'अष्टन आ विभक्तौ' 'अष्टाभ्य औशि'त्यादौ विभिन्ननिर्देशः सूत्रकृतः सङ्गच्छते ।

स्पष्टमिति । एतेन 'विभाषा आत्वमिति, यदयमात्वभूतस्य ग्रहणं करोति—'अष्टाभ्य' इति, इतरथा 'अष्टन' इत्येव ब्रूयादि'ति 'अष्टाभ्य औशि'ति सूत्रस्थभाष्याद्बहुवचनस्याऽविवक्षितत्वेन गौणेऽप्यौश्त्वमि'त्यपास्तम् । उक्तभाष्यादिप्रामाण्येनोक्तभाष्यस्य प्रकृतिव्यत्यासमात्रे तात्पर्यात् । 'षड्भ्यो लुगि'तिसाहचर्यादेकवचननिर्देशेऽपि गौणेऽप्राप्तेश्च । अत एव 'हली'त्यपकर्षे 'यद्येवं प्रियाष्टौ प्रियाष्टा इति न सिद्ध्यती'ति भाष्ये औश् न कृतः । 'प्रियाष्टानौ प्रियाष्टान इति प्राप्नोती'ति भाष्यग्रन्थ एवकाराऽध्याहारेणैव व्याख्येयः । अन्यथा 'हली'त्यपकर्षाऽभावेऽपि

लघुशब्दरत्नः

सेड्ग्रहणं नाऽनिड्व्यावृत्त्यर्थम्, णिजन्तात्तदसम्भवात् । न च ज्ञपेः 'सनीवन्त' इतीड्विकल्पात् 'सञ्ज्ञपित' इत्यादौ यस्य विभाषा (७।२।१५) इतीण्निषेधे तत्सम्भवतीति वाच्यम् । 'यस्य विभाषे'त्यत्र 'एकाच' इत्यनुवृत्तेः । अन्यथा दरिद्रातेरपि सनि [१]विकल्पितेट्त्वेन 'दरिद्रित' इतीण्न स्यात् । वा दान्त (७।१।२७) इति सूत्रे 'ज्ञप्ता' इति निपातनेनेडभावस्येव, णिलोपस्याऽपि निपातनाच्च । [२]तस्मात्तद्योगविभागेन कालाऽवधारणाऽर्थम्—'इटि कृते एव णिलोपो, न तु ततः प्रागि'ति । अन्यथा 'कारितमि'त्यादौ परमपीटं बाधित्वा नित्यत्वाण्णिलोपे, 'एकाच' इतीण्निषेधः स्यात् । पूर्वस्माद्विधौ स्थानिवत्त्वे त्वप्राप्त एव निषेधो, णिचा व्यवधानादिति भावः । यदि तु एकाच उपदेशे (७।२।१०) इत्यत्र विहितविशेषणपक्षे 'सेटी'ति चिन्त्यप्रयोजनमि'त्युच्यते, तदा 'प्रविगणय्ये'ति भाष्योदाहरणादेव तदनित्यत्वम् । [३]अन्यथाऽल्लोपस्य स्थानिवत्त्वात् ल्यपि लघुपूर्वात् (६।४।५६) इति णेरयादेशो न स्यात् । 'ल्यपी'ति सूत्रं 'प्रशमय्ये'त्यादौ चरितार्थमिति दिक् । स्पष्टमिति । वस्तुतस्तु षड्भ्यो लुक् (७।२।२२)

[१] विकल्पितेट्क्त्वेन' इति क. पाठः ।
[२] 'तत्' इति क. ख. नास्ति ।
[३] 'अन्यथा लोपस्य' इति घ. पाठः ।

**बलेनाऽनुमीयमानमात्वमपि प्राधान्ये एवोचितम्। तथा च जसि 'प्रियाष्टान' इत्येव स्यान्न तु 'प्रियाष्टा' इतीत्याशङ्क्योक्तं भाष्ये—'यथालक्षणमप्रयुक्ते' इति।**

---

**बृहच्छब्दरत्नः**

'प्रियाष्टान' इत्यस्य दुर्वारत्वेनाऽऽत्वस्य वैकल्पिकत्वे यथाश्रुतभाष्यग्रन्थस्याऽनन्वयाऽऽपत्तेः। तदेव ध्वनयन्नाह—इत्येव स्यादिति।

यद्यपि भाष्ये 'प्रियाऽष्टानावि'ति द्विवचनाऽन्तमप्युपन्यस्तं, तथापि गौणे औशभावे, अनुमीयमानाऽऽत्वाऽभावे वा, [1]अजादावात्वाऽभावे वा जसन्तमेव [2]मानमिति तस्यैवोपन्यासः। प्रथमैकवचने तु हल्ङ्यादिलोपं बाधित्वा परत्वादात्वे, हलीत्यपकर्षे, अनपकर्षे च विशेषाऽभावात्तस्याऽनुपन्यासो भाष्यादौ। न च हल्ङ्यादिलोपस्याऽपि प्राप्तत्वेन 'हली'त्यपकर्षे 'अकृतव्यूह'परिभाषयाआत्वाऽभावस्य प्राप्तत्वेन विशेषोऽस्त्येवेति वाच्यम्। धर्मिग्राहकमानेनाऽन्तरङ्गत्वात्प्राप्तस्यैवोक्तपरिभाषया प्रतिबन्धात्। 'उभयत्राऽपि परिभाषाया दुर्वारत्वेन लक्षणद्वयबाधे मानाऽभावेन परिभाषाया अप्रवृत्तिरेव युक्ते'त्यपि कश्चित्। 'अष्टाभ्य औशि'ति औश्विधानसामर्थ्येनाऽजादावात्वाऽभावसिद्धौ 'हली'त्यपकर्षो नेति तत्त्वम्। यद्यपि गौणतायामात्वौशोरभावो वामनोक्तोऽस्माकं संमतस्तथाऽपि 'आत्वाऽभावादि'ति हेतूपन्यासो न युक्तः। वैपरीत्यस्य सुवचत्वात्। अनुमीयमानाऽऽत्वाऽभावोपायेनैवौशभावस्य सुवचत्वाच्च। 'हली'त्यपकर्षाऽभावे प्रधाने[3] इव आत्वस्य दुर्वारत्वाच्चेति दिक्। यत्तु व्याचख्युः-'भवत्येवाऽत्राऽऽत्वमि'ति। तत्रेदं प्रष्टव्यं-शङ्काऽनपकर्षपक्षे, उताऽपकर्षपक्षे ?। नाऽऽद्यः। अपकर्षप्रतिपादकग्रन्थविभेदात्। अनपकर्षपक्षे 'प्रियाष्टा' इत्यादिसिद्धेर्निर्विघ्नत्वेन, 'प्रियाष्टान' इत्यस्याऽप्राप्तत्वेन च शङ्काग्रन्थस्याऽसङ्गतताऽऽपत्तेश्च। अन्त्ये तु समाधानग्रन्थोऽप्यपकर्षपक्षे एवोचितः। तत्पक्षे च 'लक्षणमात्वाऽभावमेव वक्ती'ति कैयटोक्तव्याख्यैव युक्ता। न चा-

---

**लघुशब्दरत्नः**

**इत्येतत्साहचर्यादस्य गौणे न प्रवृत्तिः। तस्य च विहितविशेषणाद् गौणेऽप्रवृत्तिरिति सर्वादिसूत्रे भाष्ये स्पष्टम्। गौणे औशोऽप्रवृत्तौ, तज्ज्ञाप्याऽऽत्वमपि नेति बोध्यम्। इत्येव स्यादिति। यद्यपि 'हली'त्यपकर्षपक्षे 'प्रियाष्टावि'ति न सिध्यति, 'प्रियाष्टान' इति प्राप्नोती'ति भाष्ये उक्तम्, तथापि अपकर्षाऽभावेऽप्यात्वस्य वैकल्पिकतया 'प्रियाष्टान' इत्यस्य दुर्वारत्वेन, यथाश्रुतभाष्याऽसङ्गतेरेवगर्भतया तद्व्याख्यातम्। प्रियाष्टा इतीति। आवादेशे, वकारस्य लोपः शाकल्यस्य (८।३।१८) इति लोपोऽत्र[4]। गौणत्वेऽप्यौत्वप्रवृत्तौ हि भाष्यमसङ्गतमेवेति भावः।**

---

[1] 'अजादावात्वाऽभावे च' इति ख. पाठः।

[2] अत्र 'प्रधानमिव' इत्यपि पाठः।

[3] 'प्रधाने इव आत्वस्य' इति क. ख. पाठः।

[4] 'लोपः। अत्र गौणत्वेऽपि' इति रीत्याऽत्र च्छित्वा केचित्पठन्ति।

'न भवत्येवाऽत्राऽऽत्वमित्यर्थ' इति कैयटः। वामनोऽपि अष्टाभ्य औश् (७।१।२१) इति सूत्रे तदन्तग्रहणात् 'परमाष्टावि'त्युक्त्वा 'प्रियाष्टान' इत्यत्राऽऽत्वस्याऽभावादौश्त्वं[1] न भवती'त्याह। हरदत्तस्तु तत्रैव 'प्रियाष्टान इत्यत्रे'ति वृत्तिग्रन्थमुपादाय 'यथा पुनर्गौणतायामात्वं न भवति, तथा तद्विधावेव वक्ष्यते' इति प्रतिज्ञाय, अष्टन आ विभक्तौ (७।२।८४) इति सूत्रे 'एकवचननिर्देशादुपसर्जनेऽप्यात्वम्, भविषये आतो लोपः, 'प्रियाष्टः पश्ये'त्यादि वदन् पूर्वप्रतिज्ञाताऽर्थविपरीतं, भाष्य-वृत्त्यादिविरुद्धं कथमभिहितवानिति स एव प्रष्टव्यः। हलादावेवेति। यद्यपि 'हली'त्यस्याऽपकर्षमकृत्वाऽपि व्याख्यानं भाष्ये प्रतीयते, तथाऽपि तस्याऽपरितोषग्रस्तत्वं प्रपञ्चितमन्यत्रेति भावः।

---

**बृहच्छब्दरत्नः**

ऽपकर्षपक्षे आकारान्ते षट्स्वराऽर्थमुपायकल्पनाऽऽवश्यकी। 'षड्भ्यो लुगि'त्यत्र 'षड्भ्य' इति योगं विभज्य, 'अष्टाभ्य' इत्यनुवर्त्य 'षड्भ्यो यदुक्तं तदष्टाभ्यो भवती'ति भाष्योक्तपक्षे षट्स्वरस्य दुर्वारत्वात्। न चाऽऽङ्क्त्वेनाऽऽङ्ममेवाऽतिदिश्यते इति वाच्यम्। 'षट्चतुर्भ्यश्चे'त्यत्र 'आज्जसेरसुगि'ति सूत्रादादित्यनुवर्त्य साहचर्येणाऽनिष्टवारणेन साक्षान्नुटः सिद्धत्वेनाऽतिदेशवैयर्थ्याऽऽपत्तेः। अत एवाऽस्मिन्पक्षे व्यवस्थितविभाषया 'हली'त्यस्याऽपकर्षाऽभावेऽप्यजादौ नाऽऽत्वमित्याशङ्क्याऽऽह—प्रपञ्चितमिति। अयमर्थः—स्वराऽतिदेशो न युक्तः। फलाऽभावात्। 'यदुक्तमि'त्यध्याहारे मानाऽभावाच्च। विपरीताऽर्थप्रसङ्गेन षड्भ्योऽप्योशापत्तेश्च। 'अष्टनो दीर्घादि'तिसूत्रस्य वैयर्थ्याऽऽपत्तेश्च। 'षट्त्रिचतुर्भ्य' इति

---

**लघुशब्दरत्नः**

कैयट इति। अत्राऽरुचिबीजन्तु 'यथालक्षणमि'त्यस्य तत्कृता 'नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते, प्रयुक्तानामेव लक्षणेनाऽन्वाख्यानादि'ति द्वितीयव्याख्यैव युक्ता। आद्यव्याख्यायाम् 'अप्रयुक्ते' इति वाक्यशेषाऽसङ्गतिः। प्रयुक्तेऽपि लक्षणाऽनतिक्रमसत्त्वात्। 'प्रयुक्तानामिदमन्वाख्यानमि'त्यभियुक्तोक्तिविरोधाच्च। 'यथालक्षणमि'त्यस्य 'अप्रयुक्ते लक्षणाऽभावस्यैव योग्यता, न तु लक्षणप्रवृत्तेरि'त्यक्षराऽर्थः। किञ्च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया एषैव व्याख्योचिता। एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वाऽसाधुत्वयोरनौचित्याच्च। तस्मादत्रत्यं मूलं, टीका चैवं व्याख्यातृकैयटाद्यनुरोधेन[2]। वस्तुतः प्रियाष्टादीनामनभिधानमेवेति दिक्। आत्वस्याभावादौश्त्वं नेति। अत्र वृत्तिकृता 'औशोऽभावादात्वं ने'ति वक्तुं युक्तम्।

---

[1] 'औश् न भवति' इति ङ. पाठः।

[2] 'कैयटानुरोधेन' इति घ. पाठः।

**प्रियाष्टा इति—प्रथमैकवचनम् । उक्तं संगृह्णाति-प्रियाष्ट्न इति । नान्ताः ।। क्षुदिति । बुद्ध्यतेः क्विप् । धान्ताः ।।**

**ऋत्विग्दधृक् (३।२।५९) । किञ्चिदिति । ऋतावुपपदे यजेः क्विन् । धृष्णोतेर्द्विर्वचनम्, अन्तोदात्तत्वञ्च । सृजेः कर्मणि क्विन्, अमागमश्च । दिशेः कर्मणि ([1]क्विन्, अमागमश्च) । उत्पूर्वात्स्निहेः क्विन्, उपसर्गाऽन्त-**

---

बृहच्छब्दरत्नः

योगं विभज्य, 'अष्टनो दीर्घादि'त्यनुवर्त्त्य, [2]स्वरप्रकरणस्थपठितवाक्येनैव साक्षात्स्वरस्य साधयितुं शक्यत्वाच्च । 'जश्शसोरि'त्यननुवृत्तौ[3] भाष्यविरोधाऽऽपत्तेश्च । अतिदेशसामर्थ्यादात्वौशोः श्रवणा-ऽश्रवणाऽऽपत्तेश्च । अनुवृत्तौ तु लुगित्यत्राऽपि तदापत्तिरिति दिक् ।

ऋतावुपपदे इति । सृजि-यज्योर्हल्ङ्यादिलोपे, षत्वस्याऽसिद्धत्वेन पदान्तत्वात्—'चोः कुरि'ति कुत्वं, ततः[4] षत्वं, ततो जश्त्वे 'क्विन्प्रत्ययस्ये'ति कुत्वम् । यत्तु 'षत्वेन चोः कुरिति कुत्वं बाध्यते' इति । तन्न । षत्वस्याऽसिद्धत्वेन कुत्वकाले प्राप्त्यभावात् । कुत्वोत्तरं सावशत्वाच्च । एतेन 'सृजियज्योः पदान्ते षत्वं 'क्विन्प्रत्ययस्ये'तिसूत्रविहितकुत्वाऽपवाद' इत्यपास्तम् । सृजि-यज्योः चोः कुरिति कुत्वे जाते प्रयोजनाऽभावेन 'क्विन्प्रत्ययस्ये'ति कुत्वाऽप्रवृत्तौ षत्वस्य सावकाशत्वाच्च । 'व्रश्चे'तिसूत्रे पदान्तग्रहणस्याऽन्यधातुविषये चारितार्थ्येन, सृजियजिग्रहणस्य झलादौ चारितार्थ्येन सूत्रवैयर्थ्याऽभावाच्च । एतेन 'तादृशादौ 'क्विन्प्रत्ययस्ये'ति कुत्वेन षत्वं बाध्यते' इति कैयट-हरदत्ताद्युक्तमपास्तम् । 'दधृक्'-[5]'स्रगि'त्यादौ षत्वाऽविषये 'क्विन्प्रत्ययस्ये'ति सूत्रस्य चारितार्थ्याच्च । 'क्विन्प्रत्ययस्ये'ति सूत्रे 'प्रत्यय'ग्रहणसामर्थ्याद्बहुव्रीह्याश्रयणेऽपि ऋत्विक्शब्दभिन्ने यजधातोः कुत्वं न । 'काम्यच्चे'ति सूत्रे 'उपयट्काम्यती'ति भाष्यप्रयोगात् । एवं 'सृजि'धातोरप्यनेकाच्पूर्वपदे कुत्वं न । 'सृजिदृशोरि'ति सूत्रे भाष्यप्रयोगात् । 'मा नो अस्रगि'ति च्छान्दसमेवेति भाष्ये स्पष्टं, ध्वनितञ्च ।

---

लघुशब्दरत्नः

**प्रथमैकवचनमिति । हल्ङ्यादिलोपात्परत्वादात्वे सोर्लोपाऽप्राप्त्या रुत्वविसर्गौ । न च लोपोऽन्तरङ्गः । [6]प्रकृति-प्रत्ययोभयसापेक्षत्वेन समत्वादित्यभिमानः ।**

---

[1] 'क्विन्, अमागमश्च' इत्ययं घ. पाठः । अन्यादर्शेषु तु नास्ति ।
[2] 'स्वरप्रकरणस्य' इति क. ख. पाठः ।
[3] 'जश्शशोरित्यनुवृत्तौ' इति ख. पाठः ।
[4] 'ततः षत्वम्' इति ख. नास्ति । [5] 'धृगित्यादौ' इति क. ख. पाठः ।
[6] 'प्रकृतिप्रत्ययोभयसापेक्षत्वेन, प्रत्ययांऽशे विशेषापेक्षत्वेन च' इति घ. पाठः ।

**लोपः, षत्वम् । अञ्चेः सुप्युपपदे क्विन् चेत्यर्थः । युजेरिति । क्रुञ्चेरप्येवम् ।**

---

बृहच्छब्दरत्नः

अञ्चेः सुप्युपपदे इति । यद्यपि सकर्मकत्वात्कर्मण्युपपदे उचितस्तथाऽपि निपातनैः साहचर्यात्, ऋत्विगादौ रूढेर्दर्शनाच्च, 'क्रुञ्चामि'ति षष्ठीनिर्देशाच्च प्रकृतिसम्बन्धिकार्यस्य बोधनादिदं लभ्यते। न चैवं निरुपपदादेव क्विनस्तु। 'सुपी'ति प्रकरणबाधे मानाऽभावात्। अनुबन्धनिर्देशेन सिद्धरूपाऽनिर्देशस्य बोधनाच्च। युजेस्तु निरुपपदादेव क्विन् निपात्यते। कार्याऽन्तरस्य निपातयस्याऽभावात्। सोपपदे 'चोः कुरि'ति कुत्वेन सिद्धत्वेन, क्विनि, क्विपि च विशेषाऽभावाच्च। न च यङ्लुकि स्वरे विशेष इति वाच्यम्। अञ्चुसाहचर्येण तत्राऽप्रवृत्तेः। 'इकार-रेफयोः पृथगित्सञ्ज्ञे'ति भाष्यनये 'श्तिपा शपे'ति निषेधाच्च। 'धातुपाठपठितप्रथमोपस्थितेकारमादायैव निर्देशस्योपपन्नत्वेनेका निर्देशकल्पनस्य गौरवग्रस्तत्वाच्च। आदृतं चेदं 'युजेरसमासे' इत्यत्र मूलग्रन्थे। क्रुञ्चेरप्येवमिति । युजिसाहचर्यादिति भावः। नलोपाऽभाव इति । यत्तु 'क्रुञ्चे'त्यत्र 'चोः कुः झली'ति कुत्वं प्राप्नोति। 'सञ्जी'ति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। निपातनादेतत्सिद्धम्। किं निपातनम्। 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चामि'ति 'परेश्च घाङ्कयोरि'तिसूत्रस्थभाष्यविरोधान्न युक्तमि'ति। तन्न। विकल्पाऽसहत्वेन भाष्यस्याऽशुद्धत्वात्। तथा हि—[1]किमौपदेशिकमञ्चतौ ञोपधत्वम्, उत नकारस्याऽनुस्वारे परसवर्णे शास्त्रकृतं वा ?। नाऽऽद्यः। [2]कुत्वस्य ञकारसामर्थ्यादप्राप्तौ, तदापादानस्यैव कर्त्तुमशक्यत्वेन शङ्काया एवाऽनुदयात्, निर्देशपर्यन्तधावने बीजाऽभावात्। समाधानकर्त्तुर्न्यूनताऽऽपत्तेश्च। किञ्च नकारोपदेशसामर्थ्यादेव कुत्वाऽभावसिद्धौ निपात्याऽभावान्निपातनैः सह 'ऋत्विगा'दिसूत्रे क्रुञ्चधातोः पाठवैयर्थ्यम्। न च क्विनर्थः। क्विपा रूपसिद्धेः। अपि च 'सञ्जी'तिवचने 'क्रुञ्चती'त्यादौ कुत्वाऽभावस्य प्राप्तत्वेन क्वित्सन्नियोगेन निपात्यमानस्य कुत्वाऽभावस्य क्विनभावे अप्राप्तत्वेन, फलभेदे प्रत्याख्यानाऽसम्भवाद्भाष्यग्रन्थोऽयुक्त एव। अन्त्यस्तु युक्त एव। 'अनिदितामि'त्यादिसूत्रसंमतोक्तरीत्याऽन्यधातूनामिवाऽस्याऽप्यौपदैशिकनकारोपधत्वस्याऽऽवश्यकत्वात्। कुञ्च-क्रुञ्चयोः सहपाठेन क्रुञ्चसाहचर्यात्तथैव युक्तत्वाच्च। अत एव 'उदुपधात्वमकित्त्वस्य निकुचित' इति वार्त्तिकं सङ्गच्छते। एतेन 'सुवृडि'त्यत्र रूपमालायां 'स्कोरि'ति सलोपमनुपन्यस्य, व्रश्चेतिषत्वोपन्यासेनौपदेशिकः 'शकार' इति परास्तम्। चवर्गयोगेनैवोपपत्तौ तथाकल्पने गौरवात्। अत एव 'व्रश्चे'ति षत्वमुपन्यस्य, 'स्कोरि'ति सलोप' इत्यनेन मताऽन्तरमुपन्यस्तं मूले पितामहचरणैः। छ्म्भ्यादौ तु 'धात्वादेः षः स' इत्याद्यार-

---

[1] 'किमौपदेशिकवनसंवमोपधत्वम्' इति लिखिते अस्फुटः पाठः।

[2] 'कुत्वस्य तकार' इति लिखितपाठः।

नलोपाऽभावस्त्वधिकः। कनाविति। इकारस्तूच्चारणाऽर्थ इति भावः। सन्निहिते इति। यत्तु प्राञ्चः—'तृतीये धात्वधिकारे' इति। तन्न। सन्निधौ धातुग्रहणस्य उत्तरत्राऽनुवृत्तेरभावेनाऽधिकारत्रयाऽभावात्।

युजेरसमासे (७।१।७१)। सर्वेति। यत्तु प्राचोक्तं—'सुटी'ति। तन्न। 'सर्वनामस्थाने' इत्यस्यैव प्रकृतत्वात्। लक्षणायां बीजाऽभावात्।

---

बृहच्छब्दरत्नः

म्भेण षकारस्यौपदेशिकत्वाऽऽवश्यकत्वे, द्वितीयस्यैव तवर्गस्थानित्वं कल्प्यते। अष्टाध्याय्यां धातुपाठपठितधातूनां ग्रहणस्येव धातुपाठेऽप्यष्टाध्यायीबोधितवर्णग्रहणस्यैव युक्तत्वात्। उभयोरेककर्तृत्वे लक्ष्यलक्षणभावस्य युक्तत्वाच्च। अत एव [२]'ष्ट्रन्'प्रत्यये यकारादित्वं, तत्प्रत्यये द्वितीयतकारत्वम्। अस्मिन्नपि पक्षे 'क्रुञ्चे'त्यत्र परसवर्णस्याऽसिद्धत्वात्कुत्वाऽप्राप्तौ भाष्यं दुष्टमेवेति वयं विभावयामः।

इकारस्त्विति। यत्तु 'नकारो ऽर्यर्थः'। 'क्विप्रत्ययस्य कुरि'त्युच्यमानेनैवेष्टसिद्धेः। तदनुबन्धकपरिभाषाया दुर्वारत्वात्। 'विक्प्रत्ययस्य कुरि'ति न्यासे क्विपः शङ्काया एवाऽभावाच्च। न च स्वराऽर्थः। धातुस्वरेणैवेष्टसिद्धेरि'ति। तन्न। 'स्रजि'त्यत्राऽमागमे अकारस्योदात्तत्वसम्पादनेन चारितार्थ्यात्। न च धातुस्वरेणेष्टसिद्धिः। लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः। धातुत्वस्य क्रियावाचकत्वादिगर्भितत्वेन बहिरङ्गत्वाद्धातुस्वरस्याऽसिद्धत्वादागमाऽनुदात्तत्वस्यैव प्रवृत्तेश्च। न च 'सृज्'स्थाने स्रजादेश एव निपात्यः। यणादेशेनैव सिद्धौ तन्निपातनवैयर्थ्याऽऽपत्तेः। 'धृषेर्द्विर्वचनमि'तिभाष्यग्रन्थविरोधाऽऽपत्तेश्च। एतेन 'निपातनादेवेष्टस्वरो लभ्यते' इति परास्तम्। नकारकरणे गौरवाऽभावात्। अभेदकपक्षे दोषस्य दुर्वारत्वाच्च। स्पृशधातोर्यङ्लुकि फलस्य स्पष्टत्वाच्च। एतेनोदके उपपदे क्विप् न,[३] पर्युदाससामर्थ्यादिति परास्तम्।

उच्चारणार्थ इति। 'वेरपृक्तस्य' 'जाग्रोऽविचिण्णल्ङित्सु'इतिसूत्रस्थं भाष्यन्तु प्रयोजनाऽभावादुपेक्ष्यम्। यत्तु प्राञ्च इति। यत्तु प्राञ्चः—'अतिङ्ग्रहणं शक्य-

---

लघुशब्दरत्नः

नलोपाभावस्त्विति। 'क्रुञ्चधातुर्नोपध' इति संमताकारीय-धातुवृत्त्यनुसारेणेदम्। परेश्च (८।३।७४) इति सूत्रभाष्यात्तु 'अयं ञोपध' इति लभ्यते। तत्र हि 'क्रुञ्चे'त्यत्र कुत्वमाशङ्क्य 'क्रुञ्चामि'ति ऋत्विगादिसूत्रस्थनिपातनात्सिद्धमि'त्युक्तम्। तस्य नकारजत्वे

---

[१] 'पाकारः' इति क. ख. पाठः।

[२] 'यस्तु प्रत्यये गकारादित्वम्' इति क. ख. पाठः।

[३] 'क्विप्र' इति क. ख. पाठः।

क्लीबे 'युजी' इति द्विवचनेऽतिव्याप्तेश्च। यत्तु वदन्ति—'नपुंसके शसि 'युञ्जी'-त्यत्र नुम् न स्यादि'ति। तन्न। नपुंसकस्य झलचः (७।१।७२) इति नुमः सम्भवात्। सुलोप इति। कुत्वस्याऽसिद्धत्वात् परत्वादादौ नुम्। ततो हल्ङ्यादिलोप इति भावः।

**क्विन्प्रत्ययस्य कुः (८।२।६२)।** पदान्ते इति। यत्तु प्राचोक्तं-

---

बृहच्छब्दरत्नः

मकर्त्तुमि'ति। तन्न। 'चिकीर्षती'त्यादौ तुगापत्तेः। न च स्थानिवद्भावेन धातोः कृत्परत्वाऽभावान्न दोष इति वाच्यम्। एकदेशे स्वरितत्वकल्पने, मण्डूकप्लुतौ च मानाऽभावेन 'धातोरि'त्यननुवृत्तेः। स्थानिभूतशबकाराऽपेक्षया पूर्वत्वेन दृष्टसन्नन्तस्य तुकोऽप्राप्तत्वेन, स्थानिवद्भावाऽयोगाच्च। नचाऽन्तवद्भावेन शबन्तस्य स्थानिभूतादचः पूर्वत्वमस्त्येवेति वाच्यम्। एवं हि स्थानिवद्भावे सत्यपि [1]तुको दुर्वारत्वात्। बाधाच्च। अशास्त्रीयधर्मस्याऽतिदेष्टुमशक्यत्वाच्च। न चाऽऽदेशद्वारैव पूर्वविधित्वमिति वाच्यम्। एतादृशग्रहणे मानाऽभावात्। परविधित्वस्याऽपि सत्त्वेन स्थानिवद्भावाऽप्रवृत्तेश्च। 'पूर्वस्य विधौ स्थानिवद्भावो, न तु पूर्वपरयोर्विधावि'ति सिद्धान्तात्। [2]'पपाच ब्राह्मणी'त्यादौ टाबाद्यापत्तेश्च। ज्ञापकेन वारणे तु न किञ्चिल्लाघवमिति सूत्रहृदयम्। संभवादिति। यत्तु 'नुमद्वयमिष्टमि'ति। तन्न। 'युजेरसमासे' इति नुमि, अचः परो यो झल् तदन्तत्वस्य विघातेन, 'नपुंसकस्य झलच' इत्यस्याऽप्रवृत्तेः।

---

लघुशब्दरत्नः

तु परसवर्णाऽसिद्धत्वात्कुत्वाऽप्राप्तौ भाष्याऽसङ्गतिः। निर्देशेन च चयोगे कुत्वाऽभावो निपात्यते इति 'क्रुङि'त्यादौ कुत्वं भवत्येव, तदा नलोपस्य[3] प्राप्तिरेव नेति तत्त्वम्। उच्चारणार्थं इति। न तु तदित्सञ्ज्ञाप्रयुक्तकार्यभागयमतो विशिष्य तस्य नोक्ता सा। उच्चारणे सहायसम्पादनेन वर्णोच्चारणस्य चारितार्थ्ये, विधेये तदपगममात्रफलिका तु साऽस्त्येवेति, न तस्य लोपः (१।३।९) इति सूत्रस्थभाष्यविरोध इति बोध्यम्।

कुत्वस्यासिद्धत्वादिति। चोः कुः (८।२।३०) इति कुत्वस्येत्यर्थः। [4]इदं सर्वं न्यायसिद्धाऽर्थकथनमात्रम्। परत्वादिति। '[5]हल्ङ्यादिलोपादि'त्यादिः।

---

१ 'लुको' इति. ख पाठः।

२ 'पयाच ब्राह्मणीत्यादौ' इति क. ख. पाठः।

३ 'लोपस्य' इति मुद्रितः पाठः।

४ 'इदं न्यायसिद्धार्थकथनम्' इति घ. पाठः।

५ 'हल्ङ्यादिलोपादित्यर्थः' इति मुद्रितेषु पाठः।

'झली'ति। तन्न। 'झली'त्यस्याऽसंनिहितत्वात्, निष्फलत्वाच्च। यत्तु तत्पौत्रेण व्याख्यातम्—'झलो झलि (८।२।२६) इत्यतो मण्डूकप्लुत्या 'झली'त्यस्मिन्ननुवर्त्तमानेऽपि न कश्चिद्दोष' इति। तन्न। 'स्पष्ट' इत्यादावतिव्याप्तेः। खनिति। खञ्जतीति खन्। खजि गतिवैकल्ये।

परौ व्रजेः। दीर्घश्चेति। यत्तु प्राचा व्याख्यातं—'विण्। णित्त्वादुपधावृद्धिरि'ति। तन्न। पञ्चपाद्यां, [1]दशपाद्याश्चाऽनेन क्विब्दीर्घयोरेव विधानात्।

---

बृहच्छब्दरत्नः

परौ व्रजेः। क्विप्-दीर्घौ अनुवर्त्तमानौ सर्वत्र। षस्तु पदान्ते। इदञ्चोणादिसूत्रम्। 'विश्वस्य वसुराटोरि'ति सूत्रन्तु षाष्ठम्। सङ्कोचे मानाऽभावाद्राजृधातुनिष्पन्नो, [2]ण्यन्तरट्धातुनिष्पन्नश्च 'राट्'शब्दो गृह्यते। अण्यन्तत्वस्य, षत्वाऽविषयत्वस्य च 'वसु'शब्दे सत्त्वेन साहचर्यादपि न निर्णयः। लाक्षणिकत्वन्तूभयत्र। [3]तथा च आद्यसाहचर्येण द्वितीयस्य पदान्ते एव, द्वितीयसाहचर्येणाऽऽद्यस्य डान्तेऽपि प्रवृत्तिः। न चाऽसिद्धत्वेन तदन्तत्वं दुरुपपादम्। तस्याऽनुकरणेनाऽदोषात्। एकपदाऽऽश्रितत्वेन [4]षत्वे दीर्घस्याऽसिद्धत्वेन पूर्वाऽभावेन 'पूर्वत्राऽसिद्धमि'त्यस्याऽप्रवृत्तेश्च। अत एव टकारोच्चारणं सार्थकम्। 'आदित्यविश्ववसव' इत्यमरकोशे तु पूर्वपदाऽऽक्षेपान्न दीर्घः। अत एव 'विश्वाराडसी'ति वैदिकप्रयोगः सङ्गच्छते। 'पदान्ते झलि चे'ति स्कोर्विशेषणे तु 'भूयादि'त्यत्र वचनप्रामाण्येनैकवर्णपूर्वयोर्ग्रहणादसिद्धपरिभाषया, 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति न्यायेन च सुट्सकारलोपे यासुट्सकारलोपाऽनापत्तिः। न च वर्णग्रहणे जातिग्रहणमिति शङ्क्यम्। सत्वजातेः संयोगाद्यवयवत्वाऽसम्भवेन, लोपस्थानित्वाऽसम्भवेन च न्यायस्याऽत्राऽप्रवृत्तेः। पूर्ववृत्तित्वमात्रग्रहणे तु समुदायस्यैव संयोगसञ्ज्ञा। 'बहूनां सन्निपाते द्वयोरपी'ति मुख्यपक्षे यासुट एव सकारलोपाऽऽपत्तिः। 'तडि'त्याद्य-

---

लघुशब्दरत्नः

असंनिहितत्वादिति। स्ध्वोर्ग्रहणसामर्थ्येन एकाचो बशः (८।२।३७) इत्यतस्तन्निवृत्तेः, निष्ठाऽऽदेशप्रकरणेन विच्छेदाच्च। एतेन 'अत्रैव 'चोरि'ति वक्तव्यम्, तत्रैव वा 'क्विन्प्रत्ययस्ये'ति वक्तव्यम्, एवञ्च 'कु'ग्रहणं व्यर्थमि'त्यपास्तम्। 'चोरि'त्यत्र तत्सम्बन्धात्, अत्र तदसम्बन्धाच्च। निष्फलत्वाच्चेति। सिद्धान्तिसंमतफलाऽभावादित्यर्थः। तद्ध्वनयन्नाह—अतिव्याप्तेरिति।

---

[1] 'दशपाद्यां वा' इति घ. पाठः।

[2] 'ण्यन्तरधातु' इति क. ख. पाठः।

[3] 'तथाऽऽद्य' इति ख. पाठः।

[4] 'षत्वा दीर्घस्य' इति, 'षत्वादीन् प्रति दीर्घस्य' इति वा क. ख. पाठः।

**स्कोः (८।२।२९)। 'संयोगे'ति लुप्तषष्ठीकं, झलन्ताभ्यां विशेष्यते इति व्याचष्टे–पदान्ते इत्यादिना। भृज्जतीति भृट्। क्विप्। सस्येति। जश्त्वस्याऽसिद्धत्वात्पूर्वं श्चुत्वमित्यर्थः। एतेन प्राचो विपरीतोक्तिः प्रत्युक्ता।**

**ऊर्गिति। ऊर्ज बलप्राणनयोः। अस्माच्चुरादिण्यन्तात् भ्राजभास (३।२।१७) इत्यादिना क्विप्। णिलोपः। स च चोः कुत्वे न स्थानिवत्। पदान्तविधित्वात्, पूर्वत्राऽसिद्धत्वाच्च। इह जान्तेषु 'अवया' इति नोदाहृतम्। मन्त्रे श्वेतवहोक्थ (३।२।७१) इति प्रकृत्य अवे यजः (३।२।७२) इति विहितस्य ण्विनः, तदपवादस्य पदान्ते डसश्च छान्दसत्वात्। यत्तु**

---

**बृहच्छब्दरत्नः**

सिद्धिश्च। संयोगविशेषणत्वे तु सहप्रवृत्त्यैवोभयोर्निवृत्तिरिति ध्वनयन्नाह–लुप्तेति। संयोगसञ्ज्ञासूत्रस्थभाष्यादिग्रन्थाः समासप्रतिपादका असङ्गता इति भावः। यत्तु 'ह्रस्वादङ्गादि'ति सूत्रादङ्गादिति 'स्कोः संयोगाद्योरि'ति सूत्रेऽनुवर्त्तते। तच्च षष्ठ्या विपरिणम्यते। तेन च प्रत्ययाऽऽक्षेपः। तथा च 'झलादौ प्रत्यये परतः स्कोः संयोगाद्योर्लोप' इति सूत्रार्थः। तेन 'पृथक्स्थितिको देवदत्तः' 'प्राक् स्थाता' 'चन्द्रमःस्थाते'त्यादौ लोपो ने'ति। तन्न। 'परेश्च घाङ्कयोरि'तिसूत्रस्थभाष्यवार्तिकविरोधाऽऽपत्तेः। पदान्तसाहचर्येण झलि परतोऽप्यनव्ययस्यैव प्रवृत्तेः। कान्तेभ्यः क्विब्विचोरभावेनेदृशप्रयोगस्यैवाऽभावात्। कसाहचर्येण, पदान्तसाहचर्येण च सलोपस्याऽखण्डपदे एव प्रवृत्तेश्च। 'झलो झली'तिवदेकपदे एव प्रवृत्तेश्च। पूर्वं श्चुत्वमिति। यत्तु 'जश् झशी'तिनिर्देशान्न शस्य जश्त्वमि'ति। तन्न। अविकृतस्वरूपप्रतिपादने तात्पर्यात्। भाष्योक्तरीत्या अयस्मयादित्वेन भत्वात्तदप्राप्तेः। 'उपदेशेऽजनुनासिक' इत्यादिनिर्देशैः कुत्वाद्यनापत्तौ सर्वोपप्लवाऽऽपत्तेश्च। अत एव 'निज्भ्यामि'ति वृत्त्याद्युक्तं सङ्गच्छते इति दिक्। मन्त्रे इति। 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्नि'तिसूत्रे उपपदानां, धातूनाञ्च पृथक्पाठे कर्त्तव्ये धातूपपदसमुदायोच्चारणेनाऽलाक्षणिककार्यस्याऽपि निपातनं बोध्यते। तत्र श्वेतशब्दे कर्त्तृवाचिन्युपपदे वहेः कर्मणि प्रत्ययः। 'दाश्च दाने,' अस्य पुरस्पूर्वस्याऽऽदेर्डत्वं, कर्मणि च प्रत्यय' इत्यादि। यत्त्विति। यत्तु व्याख्यातार आहुः—'श्वेतवहादीनां डस् पदस्ये'ति वार्त्तिकम्। 'डसन्तस्य यत्र पदत्वं भावि,

---

**लघुशब्दरत्नः**

लुप्तषष्ठीकमिति। एतेन 'उपसर्जनस्य सविशेषणत्वात्समासाऽनुपपत्तिरि'त्यपास्तम्। 'पदान्ते झलि च यौ स्कौ संयोगादी, तयोर्लोप' इति न सूत्राऽर्थः। संयोगादित्वस्य, पदान्तत्वस्य चैकस्मिन्नसम्भवात्। तदपवादस्येति। सूत्रद्वयविहितण्विनपवादस्येत्यर्थः। तत्र मन्त्रे (३।२।७१) इति सूत्रे उपपदानां, धातूनाञ्च पृथक् पाठे कर्त्तव्ये, समुदायोच्चारणमलाक्षणिकानां निपातनाऽर्थम्। तत्र श्वेतशब्दे कर्त्तृवाचिन्युपपदे वहेः कर्मणि प्रत्ययः। उक्थे

[1]'श्वेतवाडुक्थशास्पुरोडाशवयाजां डसि'ति प्राचोक्तम्। तन्न। डसः प्रकृतिभूतयोर्वहियज्योर्दीर्घाऽभावात्। यदपि 'अवया' इति प्रतीकमुपादाय 'ण्विनि'ति प्राचा व्याख्यातम्। तन्न। अपवादस्य डसो विषये उत्सर्गस्य ण्विनोऽप्रवृत्तेः।

---

**बृहच्छब्दरत्नः**

तत्र डस् वक्तव्यमि'ति हि तदर्थः। तदाह—'श्वेतवाडुक्थशासित्यादिना। 'उक्थे कर्मणि, करणे वोपपदे शंसतेः प्रत्ययः, नलोपश्चे'ति 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विनि'तिसूत्रे वृत्त्यादौ यद्यप्युक्तं, तथापि शास्धातोः प्रत्यय उक्तस्तदनुरुध्य दोषमाह—वहियज्योरिति। अप्रवृत्तेरिति। यत्तु डस् न विधेयः। 'अवयाः श्वेतवा' इत्यादीनां ण्विन्नन्तानाम् 'अवयाः श्वेतवाः पुरोडाश्चे'त्यनेन रुत्वे, रूपसिद्धेः। चकारा[2]दुक्थशासोऽपि ग्रहणमि'त्याहुः। तन्न। निपातनस्य सर्वविषयत्वे श्वेतवाहावित्यादौ दोषाऽऽपत्तेः। पदान्तविषयत्वे एव निपातने ण्विप्रत्ययनिमित्तवृद्धावत्परत्वाऽभावेनोत्त्वाऽनापत्तौ 'श्वेतवोभ्यामि'त्याद्यसिद्ध्यापत्तेः। यदपि 'पदान्तविषये 'वाऽसरूप'न्यायेन ण्विन्प्रत्ययोऽप्यस्ति, निपातनञ्चोभयोरि'ति। तदपि न। अनेकेषां स्थानित्वकल्पने गौरवाऽऽपत्तेः। प्राकरणिक'स्' [3]इत्यस्याऽसति बाधके त्यागाऽयोगाच्च। अस्मन्मते तु 'वनो र चे'त्यनेन प्राकरणिकङीपमनूद्य रेफमात्रविधानवत्सकारस्थानिकरेफाऽऽदेशमनूद्य दीर्घत्वमात्रं विधीयते। तत्र सान्तत्वमत एव ज्ञापकादनुमीयते। तत्र लाघवाऽनुरोधेन दीर्घत्वं प्रथमाविभक्तावेव। सान्तत्वस्याऽपूर्वविधेरावश्यकत्वेन बहुलक्ष्यसंस्काराऽनुरोधेन पदान्तविषयत्वम्।

---

**लघुशब्दरत्नः**

कर्मणि, करणे वोपपदे शंसेः प्रत्ययो, नलोपश्च। अस्य नलोपेऽपि न वृद्धिः। 'उक्थशस्'-शब्दस्य सामान्येन रुः सिद्धो, न तस्य निपातनं क्रियते' इति भाष्येण तत्र तदभावस्याऽपि निपातनात्। 'दाशृ दाने' इत्यस्मात्पुरःपूर्वकात्प्रत्ययः कर्मणि, दाश आदेर्डत्वञ्चेति।

वहियज्योरिति। शंसेरप्युपलक्षणमिदम्। किञ्चोक्तभाष्यादुक्थशासित्युच्चारणमपि प्राचामसङ्गतम्। न च डस् न विधेयः, अवयाः श्वेतवाः पुरोडाश्च (८।२।६७) इति पदान्तविषये रुत्वे रूपसिद्धेरिति वाच्यम्। वृद्धौ अतः परत्वाऽभावेनोत्वाऽनापत्तौ 'श्वेतवोभ्यामि'त्याद्यसिद्ध्यापत्तेः। अप्रवृत्तेरिति। ननु पदान्तविषये वाऽसरूपन्यायेन ण्विनप्यस्तु, निपातनञ्चेदमुभयोः, अत एव रुप्रकरणे अवयाः (८।२।६७) इति सूत्रस्य [4]पाठः। अन्यथा डसन्ते ससजुषो रुः (८।२।६६) इति रुत्वे सिद्धे, दीर्घमात्रस्य निपातनात्तत्प्रकरणे एव कृतं स्यादिति चेन्न। 'डस् वक्तव्यः। किं प्रयोजनम्। वैर्थम्। क्रियते वैर्थं निपातनम्—अवयाः श्वेतवा इति, तन्न वक्तव्यम्। अवश्यं तद्वक्तव्यं डसारम्भेऽपि सम्बुद्धौ दीर्घार्थम्।

---

[1] 'उक्थशास्' इति ङ. शोधितः पाठः।　[2] 'उक्थशासोरपि' इति क. ख. पाठः।
[3] 'सु इत्यस्य' इति ख. पाठः।　[4] 'सूत्रपाठ' इति मुद्रितः पाठः।

**तदोः सः सावनन्त्ययोः (७।२।१०६)।** अनन्त्ययोः किम् ?। हे स। परत्वात्त्यदाद्यत्वं बाधित्वा सत्वं स्यात्। ततो हल्ङ्यादिलोपे, रुत्वविसर्गौ स्याताम्। किञ्च स्त्रियां 'से'ति न स्यात्। वस्तुतस्तु अनन्त्यग्रहणं शक्यमकर्त्तुम्। न चोक्तदोषः। [1]पुनः प्रसङ्गविज्ञाने त्यदाद्यत्वसम्भवात्।

बृहच्छब्दरत्नः

एवञ्च डस्विधायकवचनं नाऽपूर्वं, किन्तूक्तसूत्रसिद्धाऽर्थकथनपरं बोध्यमिति स्पष्टमाकरे। अनन्त्ययोः किमिति। 'तद् स' इत्यत्र सत्वे, सोर्हल्ङ्यादिलोपे, रुत्वे, विसर्गे सिद्धमिति प्रश्नः। न चाऽत्वसन्तस्येति दीर्घः शङ्क्यः। अन्तग्रहणसामर्थ्येन विभक्त्युपदेशवेलायामसन्तत्वस्य विवक्षणात्। असो लाक्षणिकत्वाच्च। [2]अर्थनिमित्तसत्वस्य बहिरङ्गत्वेनाऽसिद्धत्वाच्च। एतेन 'तोरि'त्येव वाच्यम्। न चाऽनेषेत्यादौ दोषः। नुटोऽसिद्धत्वादि'ति निरस्तम्। प्रकृतिमात्रसापेक्षत्वेनाऽन्तरङ्गत्वाच्च[3]।

लघुशब्दरत्नः

तर्हि डस्न वक्तव्यः। डसपि वक्तव्यः, श्वेतवोभ्यामित्यर्थ'मिति भाष्यविरोधात्। अन्यथा ण्विन्पक्षे रुत्वाऽर्थमपि तस्याऽऽवश्यकत्वेन 'सम्बुद्धौ दीर्घाऽर्थमि'ति भाष्यस्य निर्दलताऽऽपत्तिः। तस्मादत्र वार्त्तिकनये [4]वाऽसरूपाऽप्रवृत्तिः क्तादिष्विव [5]व्यवस्थितविभाषयाऽङ्गीकार्या। रुप्रकरणे सूत्रन्तु सूत्रकृता डसोऽकरणात्कृतम्। ण्विनन्ते रुत्वमात्रस्यैव तदिष्टत्वात्। 'श्वेतवोभ्यामि'ति प्रयोगन्तु सूत्रकृन्न जानात्येवेति स्पष्टं भाष्यविदाम्। केचित्तु 'ण्विन आदेशो डस्, 'श्वेतवहादीनां डस्पदस्ये'ति वार्त्तिकात्। 'एतत्सम्बन्धिनो ण्विनः प्रत्ययस्य डस्, तदन्ते पदत्वस्य भावित्वे' इति तदर्थः। अत एव वृत्तिकृता ण्विनं प्रक्रम्य 'श्वेतवा' इत्युदाहृतम्। एवञ्च [6]वाऽसरूपस्याऽत्र विषय एव नेत्याहुः।

परत्वादिति। नित्यत्वन्तु नाऽत्वस्य। शब्दाऽन्तरस्य प्राप्तेः। सत्वं स्यादिति। उभयोरपीति भावः। असो लाक्षणिकत्वेन अत्वसन्तस्य (६।४।१४) इत्यस्य न प्रवृत्तिः। न च प्रत्ययविशेषाऽपेक्षसत्वाऽपेक्षयाऽन्तरङ्गत्वादत्वे रूपसिद्धचेदं व्यर्थम्। [7]तादृशाऽन्तरङ्गत्वस्य शास्त्रेऽनाश्रयणज्ञापनाऽर्थत्वात्। अत एव भाष्ये ईदृशमन्तरङ्गत्वं न क्वाऽप्याश्रितम्। पुनःप्रसङ्गेति। कृताऽकृतप्रसङ्गित्वमात्रेण नित्यतायां साऽपि सुवचा। शब्दाऽन्तर-

[1] 'पुनः प्रसङ्गविज्ञानात्' इति घ. पाठः।

[2] प्रत्ययविशेषसुनिमित्तत्वेन सत्वस्य बहिरङ्गत्वमित्यर्थः।

[3] नुट एव अन्तरङ्गत्वादित्यर्थः।

[4] 'वाऽसरूपन्यायाऽप्रवृत्तिः' इति मुद्रितेषु पाठः।

[5] 'व्यवस्थितविभाषाऽङ्गीकार्या' इति क्वचित्पाठः।

[6] 'वासरूपन्यायस्याऽत्र' इति मुद्रितेषु पाठः।

[7] 'तादृशाऽन्तरङ्गत्वस्य अत्यल्पविषयत्वज्ञापनादित्याशयः। पुनः प्रसङ्गेति' इति घ. पाठः।

'सकृद्गतावि'ति पक्षेऽपि तदोः सः सौ (७।२।१०६) इत्यस्याऽनन्तरम् 'अदस' इति योगं विभज्य 'अदस एव दस्य सत्वं, नाऽन्यस्य दस्ये'ति व्याख्यातुं शक्यत्वात् । ननु यथान्यासे द्वीयतेः क्विपि 'स्व' इति प्राप्नोति, नियमे तु 'द्व' इति स्यादिति चेन्मैवम् । गौणे अत्व-सत्वयोरसम्भवेन 'द्वीरि'त्यस्यैव न्याय्यत्वात् ।

ङे प्रथमयोरम् (७।१।२८)। 'ङे' इति पृथक्पदं लुप्तषष्ठीकम् । 'प्रथमा'शब्दः प्रथमा-द्वितीययोः समुदाये गौण इति व्याचष्टे—ङे इत्यस्ये-त्यादिना । 'ङेसुटोरमि'ति सुवचम् । अधिकरणत्वविवक्षयेति । यदि तु 'शेषे' इति विभक्तिविशेषणं स्यात्तर्हि व्यर्थमेव तत् । आत्व-यत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसम्भवात् । न चैवम् 'अन्त्यलोप' इति पक्षस्य निरालम्बनत्वाऽऽपत्तिः । साम आकम् (७।१।३३) इति

---

**बृहच्छब्दरत्नः**

प्रथमेति । समुदायपदस्य प्रत्येकमन्वयः । अत एव सूत्रे द्विवचनम् । प्रथम-देशस्थत्वेन बोधनात्प्रथमायामपि गौणत्वम् । 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणे'ति सिद्धान्तात् । द्वितीयाया अपि तृतीयाद्यपेक्षया प्रथमदेशस्थ-त्वमस्त्येव । तृतीयाया यद्यपि चतुर्थ्याद्यपेक्षया प्रथमदेशस्थत्वमस्ति, तथापि प्रथमोपस्थितद्वितीयाग्रहणेनैव द्विवचनस्योपपन्नत्वान्न ग्रहणम् । युगपद्वृत्ति-द्वयाऽनङ्गीकर्तॄणां 'पितरावि'त्यादावियमेव गतिः । यद्वा 'समुदायपदस्य न प्रत्येक-मन्वयः । 'ङे' इत्यनेन सह द्वन्द्वसमासाद् द्विवचनमि'ति पक्षान्तराऽभिप्रायेणैव व्याख्येयम् । व्यर्थमेवेति । स च टिलोपो मूलोक्तरीत्या पररूपोत्तरमेव । ध्वनि-तञ्चेदं 'साम आकमि'ति सूत्रे भाष्ये । 'त्यदादीनाम' इति सूत्रस्थभाष्यं 'पररूपो-त्तरं टिलोप' इत्यर्थपरमेव । एतेनाऽकृतव्यूहपरिभाषया, वर्णादाङ्गस्य बलीय-

---

**लघुशब्दरत्नः**

प्राप्त्याऽनित्यत्वमभ्युपेत्य प्रवृत्तं भाष्योक्तं समाधिमाह—सकृदिति । 'अनन्त्ययोरि'त्येतदेव सकृद्गतिन्यायज्ञापकमिति तदाशयः । न्याय्यत्वादिति । वस्तुत एषामनभिधानमेव । एतदाशङ्क्य 'यथालक्षणमप्रयुक्ते' इति भाष्योक्तेः । अस्याऽर्थश्चाऽष्टन्शब्दे उक्तः ।

द्विवचनोपपत्तये आह—पृथक्पदमिति । अत्र गौरवं मत्वा प्रकाराऽन्तरमाह—प्रथमाशब्द इति । एवञ्च तस्यैकत्वान्ङेशब्देन समासे द्विवचनमिति भावः । तस्यापीति[१] । अन्त्यलोपस्यैवेत्यर्थः । अनेनाऽयमेव पक्षः सूत्रसंमत इति सूचितम् । किञ्च 'शेषस्य लोप' इत्यर्थे फलाऽभावः । अन्त्यलोपेऽप्यस्य विभक्तिसन्निपातनिमित्तकत्वात्सन्निपातपरिभाषया

---

[१] 'तस्याऽपीति । तस्यैवेत्यर्थः । अन्त्यलोपस्यैवेत्यर्थः' इति घ., मुद्रितेषु च पाठः ।

ससुट्कनिर्देशेन तस्याऽपि ज्ञापितत्वादिति भावः।

युवं वस्त्राणीति। शेषे लोपः। यत्तु काशिकायामुक्तम्—

'पञ्चम्याश्च, चतुर्थ्याश्च, षष्ठी-प्रथमयोरपि।
यान्यद्विवचनान्यत्र शेषे लोपो विधीयते' ॥ इति।

तद्भाषाऽपेक्षया। छन्दसि तु प्रथमाद्विवचनमपि शेषे लोपस्य विषय एवेति बोध्यम्।

---

**बृहच्छब्दरत्नः**

स्त्वेन च अन्तरङ्गस्याऽप्यतो गुणे इत्यस्याऽप्राप्तत्वेन, अद्शब्दलोपे टाब्दुर्वार एव। यत्तु 'त्वाहाद्यकारस्योच्चारणाऽर्थत्वान्न दोष' इति। तन्न। णिजन्तात् क्विपि फलस्य सत्त्वेनोच्चारणाऽर्थत्वस्याऽयुक्तत्वात्। अहादेशाऽकारेणैवोच्चारणे सहाय-सम्पादने 'त्वाहौ सावि'तिगुरुनिर्देशस्य वैयर्थ्याऽऽपत्तेश्चे'ति निरस्तम्। एकादेश-विषये उक्तपरिभाषयोरस्वीकाराच्च। अत एव 'शुन' इत्यादिसिद्धिः। ध्वनितं [१]चेदं 'विप्रतिषेध'सूत्रे भाष्ये। अन्त्यलोपपक्षे सन्निपातपरिभाषया टापोऽभावेन, पक्षाऽन्तरेऽपि तथैव युक्तत्वाच्च। न चेष्टविषये न्यायाऽनित्यत्वं युक्तम्। एतेन 'सलिङ्गत्वेऽन्त्यलोपपक्षे दोषो दुर्वार' इत्यपास्तम्।

निर्देशेनेति। 'अदो लोप' इति वक्तव्ये 'शेषे' इत्युक्तया पक्षद्वयस्य ज्ञापितत्वा-दित्यपि बोध्यम्। [२] नन्वेवं भ्यम्-पक्षे टिलोपे 'युष्म्भ्यम्''अस्म्भ्यमि'ति स्यादिति चेन्न। भाष्ये उदात्तनिवृत्तिस्वरशङ्काया 'अभ्यम्'पक्षे एव कृतत्वेन, भ्यम्पक्षे टिलोपा-ऽभावस्य बोधनात्। तथा च 'आद्यः शेषेलोपस्याऽन्त्यलोपत्वे एवे'ति मूलग्रन्थ 'एव'शब्दबलाट्टिलोपे सति नेत्यर्थपरो वाचनिकः। इदञ्च ण्यन्ताऽण्यन्तविषयकम्। सङ्कोचे मानाऽभावात्। भाष्यबलात्कल्पितवाक्ये 'अण्यन्ते' इति विशेषणदाने गौरवाच्च। एतेन 'प्रधाने एव प्रवृत्तिरि'त्यपास्तम्। 'प्रत्ययोत्तरपदयोश्चे'तिसूत्रस्थ-भाष्यविरोधाच्च। 'अभ्यम् तु पक्षद्वयेऽपि साधुरि'ति मूलग्रन्थस्तु परिशेष-सिद्धाऽर्थकथनपरो न्यायसिद्धः। 'अपि'शब्देन पक्षद्वयाऽभावे इति बोध्यम्।

---

**लघुशब्दरत्नः**

'बुद्धावि'त्यत्रैव टापो निवृत्तेः। शेषग्रहणन्तु भाष्ये प्रत्याख्यातमेव। ससुट्कनिर्देश-प्रत्याख्यानाऽपेक्षयाऽस्य प्रत्याख्यानमेव ज्यायः। त्यदादीनामः (७।२।१०२) इति सूत्र-भाष्योक्तोऽप्ययं पक्षस्तत्रैव 'आहुरि'त्युक्त्या बोधिताऽरुचिक इत्यन्यत्र निरूपितम्।

---

[१] चेदम्' इति क. ख. नास्ति।

[२] 'नन्वेवमन्त्यपक्षे' इति क. पाठः।

**मपर्यन्तस्य किमिति । अधिकारसूत्रं किमर्थमिति प्रश्नः ।**

**अङ्गकार्ये इति । एतेन 'अङ्गवृत्ते पुनर्वृत्तावविधिरि'ति परिभाषा अर्थत उपनिबद्धा । 'अङ्गे = अङ्गाऽधिकारे, वृत्तं = वर्त्तनं यस्य तदङ्गवृत्तं = शास्त्रम्, तस्मिन् कृते सति = प्रवृत्ते सति, पुनरन्यस्य प्रवृत्तौ प्राप्तायामविधिरि'ति हि**

बृहच्छब्दरत्नः

साधुत्वन्तु शास्त्रविहितत्वादेव । टिलोपाऽन्त्यलोपयोरण्यन्ते प्रधाने, अप्रधाने च, आख्येयैक्ये ण्यन्ते च अभ्यम्[1] । टिलोपाऽन्त्यलोपाऽभावे, अन्त्यलोपे[2] वाऽऽख्येयाऽनेकत्वे, क्वचिदाख्येयैकत्वे च ण्यन्ते अभ्यम् । यद्यपि भ्यमभ्यमोः पक्षद्वयेऽप्यण्यन्ते, आख्येयैक्ये ण्यन्ते च शास्त्ररीत्वा फलैक्यमिति भाष्यादौ स्पष्टं, तथाऽप्याख्येयाऽनेकत्वे, मताऽन्तरे आख्येयैक्ये च ण्यन्ते शास्त्ररीत्या रूपाऽभेदस्य गीर्वाणगुरुणाऽपि वक्तुमशक्यत्वेन प्रयोगभेद एव । किञ्च सर्वत्र यथाकथञ्चित्पक्षभेदेऽपि प्रयोगाऽभेदः । 'भ्यम् भ्यसः' 'भ्यसो मङि'ति वा वक्तव्ये 'भ्यसोभ्यमि'ति गुरुसूत्रस्य वैयर्थ्याऽऽपत्तिः । एतेनाऽभ्यमेवाऽस्त्विति परास्तम् । 'अनादेश'ग्रहणस्य आत्वविधायके वैयर्थ्याऽऽपत्तेः । अत एवाऽभ्यमादेशसहितटिलोपप्रतिपादकं शेषग्रहणं चरिताऽर्थम् । अलिङ्गत्वादिहेतुभिरण्यन्ते टाबादीनां वारणसम्भवात् । ध्वनितञ्चेदमभ्यमादेशे दोषनिराकरणेन भाष्यकारैः । एवञ्चाऽकचि रूपभेदे सत्यपि न क्षतिः । [3]सकारसाहचर्यादनादिष्टभकारादेर्ग्रहणेन[4] रूपभेदाऽभाव इति तत्त्वम् । ननु 'अनुदात्तस्य च यत्रोदात्तलोप' इत्यत्र प्रत्यासत्तिन्यायादुदात्तलोपनिमित्तस्यैव 'यत्र'शब्देनोपादानेन, 'यस्मिन्ननुदात्ते परे उदात्तस्य लोपस्तस्योदात्त' इति सूत्राऽर्थः । तत्र 'सिद्धसाध्यमभिव्याहारे' इति न्यायेन लोपोऽनुदात्तनिमित्त एव । एवञ्च 'कुमारी'त्यत्रैव स्यात् । 'युष्मभ्यम्' 'अस्मभ्यमि'त्यत्र तु न स्यात् । समुदायस्य लोपनिमित्तत्वात् । एवञ्च भाष्यस्य प्रौढिवादपरत्वाऽऽवश्यकत्वे उक्ताऽर्थबोधकत्वाऽनुपपत्तिरिति चेत् । अत्रोच्यते—उदात्तस्वरितयोरुदात्तलोपाऽभावेनाऽनुदात्तग्रहणमनुदात्तमात्रग्रहणाऽर्थम् । तत्सामर्थ्याल्लोपनिमित्तसमुदायप्रविष्टस्याऽपि ग्रहणम् । तत्र चाऽऽदेरेव ग्रहणम्, नाऽन्त्यस्य । नियतशास्त्राऽर्थस्य युक्तत्वेन, 'अन्त्य'पदा-

लघुशब्दरत्नः

**अन्त्यस्य । अङ्गवृत्तशास्त्रस्य ।**

[1] इतोऽग्रे 'टिलोपान्त्य ते अभ्यम्' इति ख. पाठः । स च लेखकप्रमादादत्रापतितः ।

[2] 'अनित्यलोपे च' इति क. पाठः ।

[3] 'ओकारसकारभकारादौ' इत्यत्रेत्यर्थः ।

[4] 'मकारादेर्ग्रहणेन' इति ख. पाठः ।

तस्या अर्थः। एषा च परिभाषा ज्यादादीयसः (६।४।१६०) ज्ञाजनोर्जा (७।३।७८) इति सूत्रद्वयेनाऽपि[1] ज्ञापितेति भाष्ये स्थितम्। अन्यथा हि 'ज्यादादि'ति आकारं न ब्रूयात्, बहोर्लोपः (६।४।१५८) इत्यतो लोपमेवाऽनुवर्त्तयेत्, अकृत्सार्व (७।४।२५) इति दीर्घे सिद्धं 'ज्यायानि'ति। [2]ज्ञाजनोश्च जं विदध्यात्। अतो दीर्घो यञि (७।३।१०१) इति दीर्घो भविष्यतीति।

बृहच्छब्दरत्नः

ऽनुवृत्त्यैव सिद्धावनुदात्तस्येत्यस्य वैयर्थ्याऽऽपत्तेः। 'यत्र'शब्दमादाय निर्दिष्टपरिभाषाया दुर्वारत्वाच्च। एतेन 'पर्यायेण स्यादि'त्यपास्तम्। विकल्पस्याऽष्टदोषदुष्टत्वाच्च। यौगपद्यन्त्वनाशङ्क्यमेव। 'तवैचाऽन्तश्चे'ति सूत्रे युगपद्ग्रहणात्।

लोपमेवेति। न च 'इष्ठस्य यिट् चे'त्यत्र विच्छेदान्नाऽनुवृत्तिरिति वाच्यम्। 'यिडागमोऽयमिकाररहित' इति पक्षे लोपाऽनुवृत्तेरावश्यकत्वात्। अत एव विधेयसन्निहितश्चकारः सार्थकः।

अकृत्सार्वेति। यत्तु वृत्त्यादौ 'क्ङिती'त्यनुवर्त्तते 'इत्युक्तम्। तन्न। फलाऽभावात्। 'उरुया' 'धृष्णुये'त्यादौ ङिदादेशे दीर्घाऽभावाऽर्थमुपायाऽन्तरस्याऽऽवश्यकत्वाच्च। ध्वनितञ्चेदं क्यषः ककारप्रत्याख्यानपरभाष्येण। 'ज्ञाजनोरि'तिदीर्घनिर्देशसामर्थ्यान्न ह्रस्व' इतिमूलग्रन्थस्तु ज्ञापकस्य विशेषविषयत्वाऽभिप्रायेण।

लघुशब्दरत्नः

दीर्घो भविष्यतीति। 'जानाती'त्यादौ [3]क्र्यादिमूलोक्तस्य 'दीर्घनिर्देशसामर्थ्यान्न ह्रस्व' इत्यस्य 'अङ्गवृत्तपरिभाषाज्ञापनद्वारा न ह्रस्व' इत्यर्थ इति न तद्विरोधः[4]। नन्वनेन दीर्घे 'पचामि भो' इतिवत् '[5]अजाना३म् भो' इत्यादौ अनन्त्यस्याऽपि (८।२।१०५) इति प्लुतो न स्यात्, 'अत आदि'त्येव सिद्धे तत्रत्यदीर्घग्रहणस्य प्लुतनिवर्त्तकत्वात्। न च 'अनन्त्यस्य पदस्य[6] टेरि'ति तदर्थात्कथं '[7]पचामी'त्यादौ तत्प्राप्तिरिति वाच्यम्। दीर्घग्रहणसामर्थ्येनाऽन्त्यविषये एव तत्सम्बन्धात्। वाक्य-टचोः क्लृप्तसम्बन्धत्यागे मानाऽभावात्। तेन 'वाक्यस्याऽनन्त्यस्य पदस्य प्लुतः स्यात्, अन्त्यस्य पदस्य च टेरि'त्यर्थः। तपरकरणेन तु न [8]प्लुतव्यावृत्तिः। प्लुतस्याऽसिद्धत्वात्। अत एव 'गीः' 'पूरि'त्यादौ दीर्घः। अन्यथा तस्याऽपि 'इदुदि'ति तपरत्वसामर्थ्यादप्रवृत्त्यापत्तिः।

[1] सूत्रद्वयेऽपि' इति मुद्रितेषु पाठः। [2] 'ज्ञाजनोरिति जमेव' इति घ. पाठः।
[3] 'प्वादि' इति, 'क्र्यादि' इति वा घ. पाठः। अन्यादर्शेषु तु नास्ति।
[4] 'जानाती'त्यादिः, 'न तद्विरोधः' इत्यन्तः पाठः क. ख. नास्ति।
[5] 'जानामि भोः' इति मुद्रितेषु पाठः। [6] 'पदस्य च टेः' इति मुद्रितेषु पाठः।
[7] 'पचामी'त्यादौ आकारस्य कथं प्लुतप्राप्तिरित्यर्थः।
[8] 'प्लुतनिवृत्तिः' इति मुद्रितः पाठः।

न चैवं 'द्वाभ्यामि'त्यत्र त्यदाद्यत्वे कृते सुपि च (७।३।१०२) इति दीर्घो न स्यादिति वाच्यम्। [1]'द्वयोरेकस्ये'त्यादिनिर्देशेनोक्तपरिभाषाया अनित्यत्वज्ञापनात्। यत्तु [2]केचित्—'निष्ठितस्ये'ति पठन्ति। 'द्वाभ्यामि'ति तु दीर्घं विना न परिनिष्ठितमि'ति च वदन्ति। तद्भाष्यविरुद्धम्। 'ज्यायान्' 'जानाति' '[3]ज्ञायते' इत्येषामपि[4] दीर्घं विनाऽपरिनिष्ठितत्वेन [5]भाष्योक्तज्ञापक-

---

**बृहच्छब्दरत्नः**

'उक्तपरिभाषाया[6] ज्ञापनादि'ति हेतुदाने तु विरोधशङ्कैव न। न च जौहोत्यादिक-'जन्'धातोः शतरि दीर्घनिर्देशश्चरिताऽर्थः। साहचर्येण श्रूयमाणविकरणस्यैव ग्रहणात्। पूर्वोत्तरसाहचर्येण लादेशशितो ग्रहणाच्च। यत्तु 'पचामि भोरि'त्यत्रेव 'जानामि भोः' 'जाने भोरि'त्यत्र[7] प्लुतो न स्यात्। [8]'आदि'त्येव सिद्धौ दीर्घग्रहणस्य प्लुतव्यावर्त्तकताया उक्तत्वादि'ति। तन्न। 'प्राचामि'ति विकल्पस्य व्यवस्थितविभाषात्वेन वर्णितत्वादत्राऽप्रवृत्तेः। 'अतो दीर्घो यञी'तिसूत्रस्थदीर्घग्रहणन्तु

---

**लघुशब्दरत्नः**

दीर्घग्रहणे तु तत्सामर्थ्यादसिद्धत्वस्याऽपि बाधः। आकाराऽन्तरप्रश्लेषेण वारणन्तु क्लिष्टम्। अस्तु वा तदुपायाऽन्तरमिति चेन्न। उक्तज्ञापकपरभाष्यप्रामाण्यात्[9] प्लुतस्य तत्राऽनिष्टत्वे वैकल्पिकत्वेनेदृशे विषये प्लुताऽप्रवृत्तेः। अतो दीर्घः (७।३।१०१) इत्यत्र दीर्घग्रहणं हलि लोपः (७।२।११३) इति सूत्रे 'हल्यशि'ति वक्तव्ये लोपग्रहणवत्सत्त्वेन नाऽर्थसाधकमिति दिक्। निर्देशेनेति। अन्यथा त्यदाद्यत्वे एत्त्वं न स्यादिति भावः। वाचनिकत्वे

---

[1] किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् (५।३।९२) इति सूत्रे द्वयोरेकस्येति निर्देशादित्यर्थः।

[2] 'परिनिष्ठितस्य' इति मुद्रितः पाठः। 'केचिन्निष्ठितस्य' इति ङ. पाठः। बृहच्छेखरेऽपि 'निष्ठितस्ये'त्येव पाठः।

[3] 'जायते' इति ङ. पु. बृहच्छेखरे च पाठः। 'ज्यायते' इति घ. पाठः।

[4] 'इत्येतेषाम्' इति मुद्रितेषु पाठः।

[5] 'भाष्योक्तज्ञापकद्वयस्याऽपि शिथिलत्वापत्तेः' इति घ. पाठः। 'भाष्योक्तज्ञापनस्याऽपि' इत्यपि क्वचित्पाठः।

[6] 'जानामी'त्यत्र अङ्गवृत्तपरिभाषाज्ञापनद्वारा 'अतो दीर्घो यञी'ति दीर्घस्य 'प्वादीनां ह्रस्व' इति ह्रस्वो न भवतीति मूलार्थ इत्याशयः।

[7] 'अजानाम् भोः' 'अजाये भोरित्यत्र' इति ख. पाठः। अत्र 'अनन्त्यस्याऽपि प्रश्नाख्यानयो'रिति प्लुतो न स्यादित्यर्थः।

[8] 'अतो दीर्घो यञी'त्यत्र 'अत आत्' इत्येव सिद्धे इत्यर्थः।

[9] 'प्रामाण्यात्तु' इति मुद्रितेषु पाठः।

द्वयस्याऽपि शिथिलमूलत्वाऽऽपत्तेः। यदि तु भ्यसोऽभ्यम् (७।१।३०) इति सूत्रे भाष्येऽपि 'परिनिष्ठितस्ये'त्येव पाठस्तर्हि वाचनिकतामेवाऽऽश्रित्य पक्षाऽन्तरपरतया योज्यः। 'अनित्यत्वबलफलिताऽर्थकथनं तत्, न तु ज्ञाप्यांऽशप्रविष्टमि'ति वाऽस्तु। [1]एवन्तु काशिकादिग्रन्थोऽपि कथं चिन्नेतुं शक्य इति दिक्। 'मकाराऽन्तरमि'त्युपलक्षणम्। जसः शी (७।१।१७) इत्यत्र 'जसः स्' इति [2]सकारं प्रश्लिष्य 'सान्तस्य जस' इति व्याख्यानात्, अतोऽम् (७।१।२४) इति सूत्रादम्ग्रहणमनुवर्त्त्य 'अम् अमेवे'ति व्याख्यानाद्वेति बोध्यम्। **अविभक्तिकमिति**। तथा च ङे प्रथमयोः (७।१।२८) इति पूर्वसूत्रेण प्राप्तस्याऽमः प्रतिषेधोऽयमिति भाष्ये शङ्कितम्। न च तथैव किं न स्यादिति वाच्यम्। स्त्री-नपुंसकयोर्नत्वाऽप्राप्तेः—'युष्मान् ब्राह्मणीः, कुलानि वा'। अलिङ्गत्वे 'युष्मान् ब्राह्मणानि'त्यादेरपि[3] असिद्धिप्रसङ्गाच्च।

**योऽचि** (७।२।८९)। अचि किम्?। युवाभ्याम्। यदि तु युष्मदस्मदोरनादेशे (७।२।८६) इत्यत्र रायो हलि (७।२।८५) इत्यतो 'हली'त्यनुवर्त्तते, तदा इह 'अची'ति माऽस्तु। परिशेषादेव सिद्धेः।

**युष्मदस्मदोः** (७।२।८६) **हलादाविति**। 'योऽची'त्यज्ग्रहणात् परिशेषात्सिद्धमिदं, 'रायो हली'त्यतोऽनुवृत्त्या लब्धं वा। नन्वेवं किमनादेशग्रहणेन, [4]न ह्यादेशो हलादिरस्ति। मैवम्। भ्यमः सत्त्वात्। अभ्यम्पक्षे तु 'योऽची'त्यत्राऽनुवृत्त्यर्थमनादेशग्रहणं बोध्यम्। **पक्षद्वयेऽपीति**।

---

**बृहच्छब्दरत्नः**

'इन्द्रे चे'तिवदुपायाऽन्तरपरम्। किञ्च सुतप्रकरणे टेरित्यधिकारेण सुतस्येदृशे विषये अप्राप्तत्वेऽपि 'दीर्घग्रहणेन ज्ञाप्यते' इति केषाञ्चिन्मतमि'ति तावन्निर्विवादम्। एवञ्च ज्ञापकसिद्धस्याऽसार्वत्रिकत्वान्न दोष इति भाष्याऽऽशयः। इदमेव बोधयितुं भाष्यपदोदानम्। अमेवेति। अत एव मुख्ये ङेः स्मै न। गौणे याऽऽदेशो न।

---

**लघुशब्दरत्नः**

गौरवं, ज्ञापकद्वयशैथिल्यं चाऽपरिहृतमित्यत आह—अनित्यत्वबलेति।

अनुवृत्त्यर्थमिति। स्पष्टमेतद्भाष्येऽत्रैव। 'अभ्यमि'ति च्छेदस्यैव मुख्यत्वं

---

[1] 'एवञ्च' इति घ. पाठः।
[2] 'सकाराऽन्तरम्' इति घ. पाठः।
[3] अपिः मुद्रितेषु त्रुटितः।
[4] 'न त्वादेशो' इति मुद्रित पाठः।

न[1] चाऽन्त्यलोपपक्षे पररूपं बाधित्वा सवर्णदीर्घः स्यात्, अकारोच्चारणसामर्थ्यादिति वाच्यम्। एत्वनिवृत्त्याऽकारोच्चारणस्य चरितार्थत्वात्।

युष्मदस्मद्भ्यां ङसोऽश् (७।१।२७)। शित्त्वं सर्वाऽऽदेशाऽर्थम्। अन्यथा हि आदेः परस्य (१।१।५४) इति स्यात्। न च वैयर्थ्यम्। आदेशव्यपदेशेन यत्वनिवृत्त्यर्थत्वात्। न चाऽवयवस्याऽऽदेशे सत्यपि

बृहच्छब्दरत्नः

अम् तु ण्यन्ते आदेशाऽभावपक्षे चरिताऽर्थः। आदेशे इष्टाऽऽपत्तिरेवाऽस्त्विति न शङ्क्यम्। पक्षयोर्भिन्नफलकत्वाऽऽपत्तेः। एत्वनिवृत्त्येति। उपायाऽन्तरेण वारणे तु फलाऽन्तरत्वाऽऽशङ्कैवाऽयुक्तेति भावः। अण्यन्ते पक्षद्वये 'समानेने'ति भाष्यबोधिताऽर्थस्य न बाधः। आदेशाऽवयवाऽकारेणैव दीर्घाऽभावस्य सिद्धत्वाद्भाष्ये नाऽऽशङ्कितम्।

अन्यथेति। शित्त्वाऽभावे 'युष्मदस्मद्भ्यां ङसो' इति न्यासे 'ङसः—अ' इति च्छेदः। 'आ सर्वनाम्न' इत्यादाविव अविभक्तिको निर्देशः। सविभक्तिकनिर्देशेऽपि शकारविशिष्टस्य विधेयत्वाऽभावेन लाघवमस्त्येव। आदेशव्यपदेशेनेति। 'सर्वे सर्वपदादेशा' इतिन्यायेनाऽऽनुमानिकस्थान्यादेशभावग्रहणादिति भावः। यत्वनिवृत्त्यर्थेति। न च 'योऽच्यङसी'त्युक्त्यैव यत्वनिवृत्तिः सिद्धेति वाच्यम्। पदयोस्तुल्यप्रमाणत्वेन लाघवाऽभावात्। किञ्च पर्युदासे एकवचनत्वादिनाऽपि सादृश्यसम्भवेनाऽनिष्टं स्यात्। न हि लक्ष्यैकचक्षुष्कमुनिप्रणीतवाक्यस्येव लक्षणैकचक्षुष्काऽऽधुनिकबालकल्पितवाक्यस्य लक्ष्याऽनुरोधेन व्यवस्था [2]साध्या। प्रसज्य-

लघुशब्दरत्नः

ध्वनयन् शङ्कते—न चेति। अत एव युष्मदस्मदोः (७।२।८६) इति सूत्रे 'न चाऽऽदेशो हलादिरस्ती'ति भाष्यं सङ्गच्छते। एत्वनिवृत्त्येति। अङ्गवृत्तपरिभाषाया अनित्यत्वबोधनद्वारेति भावः। एवञ्च पररूपेण बाधान्न सवर्णदीर्घ इति तात्पर्यम्।

वैयर्थ्यमिति। अकारस्याऽकारविधिवैयर्थ्येनाऽन्त्यस्यैवाऽकारेऽतो गुणे च सिद्धं 'तवे'त्यादीति, व्यर्थमेव शित्त्वमित्यर्थः। न च पररूपबाधनाऽर्थमेवाऽऽदेरत्वविधानं स्यादिति वाच्यम्। विधिबाधाऽपेक्षया आदेः परस्य (१।१।५४) इति परिभाषाबाधस्य न्याय्यत्वात्।

आदेशेति। आदेर्विधानेऽप्यादेशत्वसम्पादनेन यत्वनिवृत्त्या शेषे लोपाऽर्थमकारविधानं चरिताऽर्थमिति 'आदेः परस्ये'त्यस्य बाधे मानाऽभावेन, सर्वाऽऽदेशाऽर्थं शित्त्वमिति भावः। न च 'योऽच्यङसी'त्युक्त्यैव यत्वनिरास-शेषेलोपौ सिद्धाविति वाच्यम्। पर्युदासे [3]एकवचनत्वादिना सादृश्यग्रहणाऽऽपत्तेः। युष्मदस्मदोः (७।२।८६) इत्यात्वस्य प्राप्तेश्च। 'हलादा-

[1] 'न चाऽन्त्यलोप' इति मुद्रितेषु पाठः।
[2] 'व्यवस्था प्राप्या' इति क. पाठः।
[3] 'एकवचनेत्यादिना' इति मुद्रितः पाठः।

विभक्तेरनादेशताऽस्त्येवेति वाच्यम्। 'सर्वे सर्वपदादेशा' इति सिद्धान्तात्। इदमेव शित्त्वं ज्ञापयति–'सर्वे सर्वपदादेशा' इति। अर्थवत्येव स्थान्यादेशभाव-

बृहच्छब्दरत्नः

प्रतिषेधे तु गौरवम्। किञ्च [1]मूलकारोक्तरीत्याऽस्याऽऽदेशाऽभावाऽर्थं 'ङसो-रि'त्येकत्वे न्यासाऽन्तरे प्रवृत्तिर्नोचिता। तेनैव यत्वाऽभावस्य सिद्धत्वात्। ननु 'त्वम्' 'अहमि'त्यादौ श्रौताऽऽदेशे यत्वाऽभावसम्पादनेनाऽनादेशे इत्यस्य चारिता-ऽर्थ्ये आनुमानिकाऽऽदेशे 'अनादेशे' इत्यस्य प्रवृत्तौ मानाऽभावः। 'स्थानिवदादेश' इत्यत्र तु 'आदेश'ग्रहणसामर्थ्यात्, सर्वत्रैतत्प्रवृत्तिसामर्थ्याद्वा[2] आनुमानिका-ऽऽदेशोऽपि गृह्यते। अत एव प्रकृते शित्त्वाऽभावे स्थानिवद्भावेन विभक्त्यादि-लाभात् शेषेलोपादीनां प्रवृत्तिः। [3]'एकदेशविकृतस्ये'ति तु भाष्ये प्रत्याख्यातम्। तथा चाऽकारस्याऽकारे यत्वाऽभावस्योपपादयितुमशक्यत्वेनोपस्थिताऽऽदेः परस्येति-बाधित्वा सकारस्याऽकारे द्वयोः 'अतो गुणे' इतिपररूपे, आदेशरूपविभक्तित्वाद्यत्व-शङ्कैव ने'ति। तन्न। 'वार्णादाङ्गं बलीय' इति न्यायेनैकादेशात्पूर्वं यत्वस्यैव प्रवृत्तेः। लक्षणप्रतिपदोक्तपरिभाषया [4]युष्मदस्मत्पदमुच्चार्य विहिताऽऽदेशस्यैव 'आदेश'-ग्रहणेन ग्रहणाच्च। इदमिति। ननु 'राज्ञः क चे'ति कादेशे 'अनः अकादेश' इत्याकारकाऽऽनुमानिकस्थान्यादेशसम्भवात्स्थानिवद्भावेनाऽल्लोपोऽन इति दुर्वार-मित्याशङ्कयाऽऽह—एवेति। ज्ञापकस्य विशेषत्वेन[5] इकारोकारयोर्विशेषणत्वात्

लघुशब्दरत्नः

वि'ति हि परिशेषसिद्धोऽर्थस्तत्रेति भावः। अनादेशताऽस्त्येवेति। 'अनादेशे' इति हि तत्पुरुषो, लाघवात्। एवञ्च 'त्वम्' 'अहमि'त्यादौ सम्पूर्णविभक्त्यादेशे यत्वाऽभावसम्पादकम् 'अनादेशे' [6]इतीति, प्रकृते यत्वं स्यादेव।

नन्वेवमादेरकारस्य विधानं व्यर्थमिति, सामर्थ्यादन्त्यस्य स्यात्। तत्र च अतो गुणे (६।१।९७) इति पररूपे आदेशरूपविभक्तित्वमिति यत्वाऽप्राप्तिः। न च 'वार्णादाङ्गमि'ति परिभाषया पररूपात्पूर्वं यत्वप्राप्तिरिति वाच्यम्। वार्णाऽङ्गयोरेकस्थानिकत्वे एव धर्मि-ग्राहकमानेन तत्प्राप्तेरिति चेन्न। युष्मदस्मदोरनादेशे (७।२।८६) इत्यत्र प्रत्यासत्त्या युष्मदादिग्रहणेन विहिताऽऽदेशरूपविभक्तेरेव ग्रहणेनाऽन्त्यादेशे पररूपेऽपि तादृशविभक्तेरभावेन यत्वाऽऽपत्तेर्दुर्वारत्वात्। पररूपाऽऽदेशस्तु न तथेति भावः। सर्वे सर्वेति। स्पष्टञ्चेदं भाष्ये। एवं चाऽकारविधानेऽपि यत्वव्यावृत्त्या तस्य चारितार्थ्येन आदेः परस्य (१।१।५४) इत्येतद्बाधे मानाऽभावेन सर्वादेशाऽर्थं शित्त्वं सार्थकमिति भावः। अत्र 'पद'शब्देनाऽर्थवद् गृह्यते इत्याह—अर्थवत्येवेति। अर्थवत्त्वञ्च कल्पितमेव गृह्यते। एतेन 'कृत्वा' इत्यस्य

[1] 'शित्त्वं सर्वादेशार्थम्। 'ङसो' इत्येकत्वं 'ङसः अ' इतिच्छेदार्थमित्यादिमनोरमोक्त-रीत्येत्यर्थः। [2] 'सर्वस्मै स्मवृत्तिसामर्थ्यात्' इति क. पाठः।

[3] 'एकदेशविकृतमिति' इति पाठो भवेत्।

[4] 'युष्मदस्मदमुच्चार्य' इति क. ख. पाठः।

[5] 'विशेष्यत्वेन' इति क. पाठः। [6] एक इतिः मुद्रितेषु त्रुटितः।

विश्रान्तिरित्यर्थः। सिच्चङादयस्तु वचनसामर्थ्यादनर्थकस्याऽपि बोध्याः[1]।

इदं त्ववधेयम्—अन्त्यलोपपक्षे अशः स्याऽऽदेशः प्राप्तोऽङ्गवृत्तपरिभाषया वारणीयः। यदि त्वङ्गस्य यत्कार्यं तद्विषयिण्येव सा परिभाषा, न त्वङ्गाऽधिकारमात्रपरेति दुराग्रहस्तर्हि 'अशि'त्यत्र अतो गुणे (६।१।९७) इति पररूपेणाऽकाराऽन्तरं प्रश्लिष्य 'अकाररूप एव अश् भवति, न विक्रियते' इति व्याख्येयम्। यत्तु 'स्याऽऽदेशस्याऽपवादोऽशि'ति। तन्न। अशादेशप्रवृत्तिकाले शेषे लोपाऽभावेन स्याऽऽदेशस्याऽप्रसक्तेः।

---

**बृहच्छब्दरत्नः**

तदन्तविधौ 'इकारान्तस्योकाराऽन्ताऽऽदेश' इत्यर्थः। एवं सर्वत्र बोध्यम्। अत एवाऽऽगमाऽऽगमिभावे स्थान्यादेशभावो न। 'भुवो वुक्' 'आद्यन्तौ टकिताविं'-त्यादिभिः पठिताऽनुपूर्व्याः स्थान्यादेशभावस्य निरूपयितुमशक्यत्वात्। 'रुदिही'-त्यादावागमसहितस्य स्थानिवद्भावेन हित्वात् 'हुझल्भ्योरि'त्यस्य दुर्वारत्वाच्च। अत एवा'ऽऽगमा अनुदात्ता' इत्यस्य चारितार्थ्यम्। अत एव वाऽऽनुमानिक-स्थान्यादेशभावकल्पने श्रौतस्थान्यादेशभावस्योपजीव्यत्वेन बाधो न। अत एवा'ऽचः परस्मिन्नि'त्यादीनामुक्तिसम्भवः। 'पदादेशा' इत्यत्र पदत्वेनाऽर्थवदुच्यते। अर्थवत्त्वञ्च प्रक्रियादशायां पाणिनीयशास्त्रबोधितमेव। [2]पाठस्य प्रक्रियायामेवोपयुक्तत्वात्। [3]'दाक्षीपुत्रस्य पाणिनेरि'ति वाक्यशेषाच्च। अत एव स्थानिवत्सूत्रे ससम्बन्धिकत्वेनाऽऽदेश इत्यर्थलाभे उक्तरीत्या आनुमानिकाऽऽदेशस्याऽपि ग्रहणे, 'आदेश'ग्रहणं वाक्यभेदाऽर्थमिति निरूपितं प्राक्।

तद्विषयिण्येवेति। 'तेन विषयिणी'ति तृतीयातत्पुरुषः। यद्वा 'तस्य=अङ्गकार्यस्य, विषयस्तद्विषय' इति षष्ठीतत्पुरुषान्मत्वर्थीयः। यद्वा नित्ययोगे सम्बन्धिनि मत्वर्थीयः। 'कर्मधारयान्मत्वर्थीयो ने'ति 'वर्णो वर्णने'ति सूत्रे भाष्यपठित-

---

**लघुशब्दरत्नः**

[4]'कृ-य'इत्यादेशे प्रकृतिप्रत्ययसंमोहे ह्रस्वस्य (६।१।७१) इति तुग् न स्यादि'त्यपास्तम्। सिजादीनां कल्पितोऽप्यर्थो नास्तीत्यत आह—सिच्चङादय इति। 'द्योत्याऽर्थेन सोऽप्यर्थवानि'त्यन्ये। दुराग्रह इति। ज्यादादीयसः (६।४।१६०) इत्यस्य ज्ञापकत्वपरभाष्यविरोधादस्य दुराग्रहत्वम्।

---

[1] 'वाच्याः' इति ङ. शोधितः पाठः।

[2] 'पावस्य प्रक्रियायामेव युक्तत्वात्' इति क. ख. पाठः।

[3] वाक्यशेषादेव पाणिनिप्रोक्तशास्त्रबोधितत्वं लभ्यते इत्यर्थः।

[4] 'कृत्य' इत्यादेशे' इति क्वचित्पाठः।

**भाविन इति।** कृते हि शेषे लोपेऽकारान्तत्वात् प्राप्तः सुट्, ससुट्कस्य स्थानित्वेन निर्देशसामर्थ्यान्निवर्त्तते इति भावः। 'शेषे लोपष्टिलोप' इति पक्षे तु सुड्ग्रहणं व्यर्थमेव। आकमि दीर्घोच्चारणं सवर्णदीर्घाऽर्थम्। अन्यथा पररूपं स्यात्। न चाऽकारोच्चारणसामर्थ्यम्। एत्वनिवृत्त्याऽभ्यम इव चरितार्थत्वात्।

इह 'युवावौ द्विवचने' 'त्वमावेकवचने' इति सूत्रद्वये द्विवचनै-कवचनशब्दौ न प्रत्ययपरौ, किन्त्वर्थपरावि'ति व्याख्यातम्। तत्फलं दर्शयति—**समस्यमाने इत्यादिना। द्व्येकत्वेति।** 'पञ्चकं प्रातिपदिकाऽर्थ' इति पक्षे सङ्ख्याया अपि प्रातिपदिकाऽर्थत्वादिति भावः। त्रिकपक्षे तु 'द्व्येकाऽर्थवाचिनी' इति पाठ्यम्। सङ्ख्याया विभक्त्यर्थत्वेऽपि सङ्ख्येयस्य प्रातिपदिकाऽर्थत्वाऽनपायादिति[1] भावः। **समासार्थो—मुख्यविशेष्यम्। अन्य-**

---

बृहच्छब्दरत्नः

वचनन्तु बहुव्रीहि-कर्मधारयप्रकृतिकमत्वर्थीयाऽन्तयोः समानाऽर्थत्वे एवेति प्रपञ्चयिष्यामः। व्यर्थमेवेति। आकमो दीर्घोच्चारणसार्थक्यं स्पष्टमेव। अन्त्यलोपपक्षे आकमो दीर्घोच्चारणस्य कथञ्चिदुक्तिसम्भवेऽपि, टिलोपे सुड्ग्रहणस्य न कथं चिदुक्तिसम्भव इत्येवकारेण ध्वनितम्। तदेवाऽऽह—आकमीत्यादिना।

---

लघुशब्दरत्नः

अकारान्तत्वात् प्राप्त इति। 'ससुटकनिर्देशाऽभावे' इति शेषः। निर्देशसामर्थ्यादिति। अयं भावः—'सामः प्रसङ्गे आकमि'ति सूत्राऽर्थः। तेन आम्-सकारयोरत्र विषयेऽत्यन्तमप्रयोगो बोध्यते। स्थान्यादेशभावविषये सर्वत्रैवमेव। यथाऽऽर्द्धधातुकविषये अस्तेरप्रयोगो, भुवः प्रयोगश्च अस्तेर्भूः (२।४।५२) इत्यनेन प्रतिपाद्यते, न तु सतो निवृत्तिः। शब्दाऽनित्यत्वप्रसङ्गात्। किन्तु प्रसक्तबुद्धेरेव निवृत्तिः। तत्र सकारबुद्धेः प्रकृते साम्प्रतिक्या असम्भवाद्भाविन्या ग्रहणं, सकारोच्चारणसामर्थ्यादिति भाष्ये स्पष्टम्। तन्निवृत्तिश्चाऽऽमोऽभावात्। अत्र सामः स्थानित्वोक्त्या आकमि स्थानिवत्त्वेन साम्त्वमेव, न त्वाम्त्वम्। अत एव 'अतित्वाकमि'त्यादौ प्रत्ययोत्तरपदयोः (७।२।९८) इति सूत्रभाष्योदाहृते आकम्नुडभावौ सिद्धौ। आम्येव साम्त्वस्याऽऽहार्यारोपेणाऽऽदेशः। आदेशस्याऽऽम्त्वाऽभावाच्चाऽत्र न नुडि'ति[2]। न च यत्र भावी सुट् तत्रैवाऽयम्। सामो भावित्वस्य सर्वथा दुरुपपादत्वादिति भाष्यविरुद्धकल्पना व्यर्थेति दिक्।

किन्त्वर्थपराविति। व्याख्यानमत्र शरणम्। 'द्वयोरेकस्य वचने=बोधने समर्थयो-

---

[1] 'प्रातिपदिकार्थत्वात्' इति मुद्रितेषु पाठः।

[2] इतिः मुद्रितेषु नास्ति।

सङ्ख्यश्चेत्—युष्मदस्मदर्थगतसङ्ख्येतरसङ्ख्यायुक्तश्चेदित्यर्थः[१]। स्त इति। अर्थपरत्वाऽऽश्रयणसामर्थ्यादेव भूतपूर्वगतेरपि स्वीकारात्। प्रत्ययपरत्वे तु न स्यातामित्यव्याप्तिः स्यादित्यर्थः। एवं [२]चतुर्थश्लोकेऽपि 'न युवावौ त्वमौ च ने'त्युक्त्या प्रत्ययपरत्वेऽतिव्याप्तिर्ध्वनिता। एवञ्चाऽव्याप्त्यतिव्याप्तिपरिहारायाऽर्थपरत्वमाश्रितमिति फलितम्। न च कृत्रिमाऽकृत्रिमन्यायविरोधः। वचनग्रहणसामर्थ्यादेव तद्बाधात्। अन्यथा हि 'द्वित्वे' 'एकत्वे' इत्येव ब्रूयात्। 'द्वित्वे, एकत्वे च या विभक्तिस्तस्यामि'ति व्याख्यानसम्भवादिति भावः।

---

बृहच्छब्दरत्नः

द्वित्वे इति। न हीदं युष्मदस्मदोर्विशेषणम्। तयोः सङ्ख्याबोधकत्वाऽभावात्। 'द्व्येकयोर्द्विवचनैकवचने' इति व्याकरणपठितसम्बन्धबोधकस्य सत्त्वेन प्रथमोपस्थितत्वाच्च। अत एव 'त्व'प्रत्ययोपादानं सङ्गच्छते। एतेन 'एकवचने' 'द्विवचने' इत्युक्तावपि धर्मपरत्वं दुर्वारमि'ति परास्तम्। एक-द्विशब्दयोर्लक्षणायां मानाऽभावाच्च। नन्वेवमपि 'द्वयोरि'त्युक्त्यैव निस्तारः, द्विवचनेनैव धर्मिपरत्वबोधनात्, 'त्वमावेकस्मिन्नि'त्यत्र साहचर्येण निर्णयाच्च। न च विभक्तीनां [३]धर्मवाचकत्वेन तद्विशेषणं दुर्वारम्। 'शक्तिरेवे'ति पक्षस्याऽपि शास्त्रे सत्त्वात्, उपपदविभक्त्यभावाच्च। अत्रोच्यते—वचनग्रहणं सुप्रसिद्धाऽर्थपरिग्रहाऽर्थम्। अत एवाऽऽख्येयबहुत्वे ण्यन्तात्क्विपि कर्त्तरि द्वित्वविवक्षायां 'शिष्यमाणं लुप्यमानार्थाऽभिधायी'तिन्यायेन [४]द्वित्वसङ्ख्याधर्मयुक्तधर्मिवाचित्वेऽपि नाऽऽदेशः। विशेष्यीभूतद्वित्वविशिष्टाऽऽचक्षाणकर्त्तृरूपधर्मिणो युष्मदस्मदर्थत्वेनाऽप्रसिद्धत्वात्। कैयटस्य तु महान् प्रमाद इति तिङन्ते निरूपयिष्यामः। समासैकदेशयोर्युष्मदस्मदोरजहत्स्वार्थायां वृत्तावर्थाऽन्तरोपसङ्क्रमेऽपि शुद्धयुष्मदस्मदर्थगतसङ्ख्याया अप्युक्तत्वेन 'अधिकं प्रविष्टं न तु तद्धानिरि'ति न्यायेन सुप्रसिद्धाऽर्थबोधकत्व-

---

लघुशब्दरत्नः

युष्मदस्मदोरि'ति वाच्योऽर्थः। भूतपूर्वेति। [५]'जहत्स्वार्थवृत्त्यभिमानेनेदम्। सामर्थ्यादेव तद्बाधादिति। 'उभयगतिरिह शास्त्रे भवती'ति सङ्ख्यासञ्ज्ञासूत्रस्थभाष्योक्तेश्चेति

---

[१] 'सङ्ख्येतरसङ्ख्यश्चेत्' इति मुद्रितेषु पाठः।
[२] 'चतुर्थश्लोकेऽपि युवावौ त्वमौ न च' इति मुद्रितेषु पाठः।
[३] 'धर्मिवाचकत्वेन' इति क. पाठः।
[४] 'द्वित्वसङ्ख्यायुक्तधर्मिवाचित्वेऽपि वादेशः' इति क. पाठः।
[५] 'जहत्स्वार्था वृत्तिरिति' इति मुद्रितेषु व्यस्तः पाठः।

**अतित्वाकमतिमाकमिति ।** यत्तु वदन्ति—'साम आकमि'त्यत्र यद्यपि सुड्ग्रहणं न स्थानिविशेषणं, बाधात्, तथाऽपि उपलक्षणन्तु[1] भवति । तेन यस्याऽऽमः सुडग्रे भावी, तस्यैवाऽऽम आकमा भवितव्यम् । न चैतद् गौणत्वे सम्भवतीत्याकम् न प्रवर्त्तते । न च समुदायनिर्देशे विशेषणत्वम्, उपलक्षणत्वं वा विहाय तृतीयः प्रकारोऽस्ति । न च सुडामोः पृथक् स्थानित्वमिह निर्दिश्यते । चशब्दस्य, द्विवचनस्य चाऽभावात् । यदि तु 'स् च आम् चे'ति समाहारद्वन्द्वो व्याख्यायेत, योग्यताबलाच्च स्शब्देन सुडेव गृह्येत, तथापि यदि सुड्ग्रहणमन्वाचयशिष्टं, ततः समासो न स्यात् । अन्यत्र तु साहित्यविवक्षया केवलस्याऽऽमोऽप्रसक्तेरि'ति ।

अत्रेदं वक्तव्यं—'यस्याऽऽमः सुडग्रे भावी'त्यादि तावद्बाधितम् । आकमाऽपहृतस्य सुडन्वयाऽभावात् । 'आकमः [2]सुड् भावी'ति चेत्तर्हि तमेवोपलक्षयेत् । आदेशद्वारकेण परम्परासम्बन्धेन स्थानिनमुपलक्षयति चेत् । हन्तैवं 'युष्माकमि'त्यादौ सुट् श्रूयेत । 'साम' इति निर्देशसाभ्र्थ्यान्न श्रूयते इति चेन्न । निर्देशस्य गौणव्यावृत्त्या चरितार्थत्वेन, सामर्थ्याऽभावात् । यदपि समाहारद्वन्द्वं प्रक्रम्याऽन्वाचयशिष्टत्वे दूषणाऽभिधानं, तदप्यसम्भवदुक्तिकम् । 'साहित्यविवक्षया केवलस्याऽप्रसक्तिरि'ति परमवशिष्यते । तदपि न । प्रक्रियादशायां स्थितस्याऽऽम उत्तरकालभावित्वेनो-

बृहच्छब्दरत्नः

मस्त्येव । प्रक्रियादशायामेतस्या एवाऽऽश्रयणात् । जहत्स्वार्थायामपि पदद्वयैकफलाऽर्थं भूतपूर्वगत्याश्रयणम् । अत एव 'प्रत्ययोत्तरपदयोश्चे'त्यस्योक्तिसम्भवः । एतेन 'त्वमावेकवचने' इत्यत्र 'विभक्तावि'त्यननुवृत्तेः, सामर्थ्याद्युष्मदस्मदोरेव विशेषणाऽऽपत्तौ, 'वचन'ग्रहणं सुत्यजमि'त्यपास्तम् । 'त्वं पिता प्रियो यस्ये'ति त्रिपदे बहुव्रीहौ पदचरमाऽवयवरूपोत्तरपदपरत्वाऽभावेन 'प्रत्ययोत्तरपदयोश्चे'-त्यस्याऽप्रवृत्तौ 'त्वमावेकवचने' इत्यस्याऽप्रवृत्त्यर्थं 'विभक्तावि'त्यनुवृत्तिरावश्यकीति

लघुच्छब्दरत्नः

तत्त्वम् । अन्यथा 'द्वयोरेकस्मिन्नि'त्युक्त्यैव युष्मदादिविशेषणतया सिद्धे, वचनग्रहणसार्थक्यं दुरुपपादमिति बोध्यम् । बाधादिति । आकमुत्पत्तिकालेऽन्त्यलोपाऽभावेन सुटोऽसत्त्वादिति भावः । न चैतद्गौणत्व इति । सर्वनामत्वाऽभावादिति भावः । योग्यताबलाच्चेति ।

[1] तुः मुद्रितेषु त्रुटितः ।

[2] 'सुड् भवतीति' इति मुद्रितेषु पाठः ।

त्प्रेक्षितस्य सुटश्चैकबुद्ध्युपारोहणैव साहित्याऽभ्युपगमात्, 'अतीताऽनागतयोरयं द्रष्टे'तिवत्। 'तत्रोभयोरेकस्मिन् दर्शने सम्बन्ध' इति चेत्। इहाऽप्येकस्मिन्नादेशे इति तुल्यम्। तथाच इरयो रे (६।४।७६) इति 'दध्रे' इत्यादौ धाञो झस्य इरेचि, आतो लोपे, रेभावे, तस्य कृसृभृप्रभृतिषु चरितार्थतया इटि कृते, 'इरयोरि'ति द्विवचननिर्देशाल्लाक्षणिकस्याऽपि रेभावः पुनः क्रियते इति स्थितमाकरे। 'इरयोरि'त्येकशेषः, 'साम' इति तु द्वन्द्वः। सहविवक्षा तूभयत्र तुल्यैव। वस्तुतस्तु 'साम आकमि'ति सूत्रे केवलोऽप्याम्

बृहच्छब्दरत्नः

तत्त्वम्। सहविवक्षेति। यत्तु 'हल् च ल् चे'त्यत्रेव वृत्तिर्न स्यादि'ति। तन्न। तत्र हल्पदाऽर्थबोधे [1]लकारे सञ्ज्ञाबोधस्याऽऽवश्यकत्वेन वक्तृनिष्ठसहविवक्षाया अभावाद् वृत्त्यभावेऽपि, प्रकृते तदभावेन वृत्त्युक्तत्वात्। [2]सादीनां त्युत्पत्तावामाद्यपेक्षा, न तु बोधे। तुल्यैवेति। यद्यपि 'सरूपाणामि'तिसूत्रस्य नियमाऽर्थत्वेन [3]सरूपाणां सहविवक्षायामेवैकशेषोऽस्ति, तथाऽप्येकस्मिन्परे[4] शब्दाऽर्थे उभयोरप्यन्वयात्सहविवक्षैवाङ्गीकार्या। ननु 'साम' इति न द्वन्द्वः, तथा सति स्थान्यनेकत्वेन आदेशद्वयाऽऽपत्तेः। अत एव 'एकः पूर्वपरयोरि'त्येकग्रहणं चरिताऽर्थम्। किञ्च सन्नियोगशिष्टन्यायेन गौणे [5]आकमनापत्तिः। अपि च सुट आगमत्वेन 'दीधीवेवीटामि'त्यादाविव [6]परनिपाताऽऽपत्तेः। समासाऽन्तरे तु 'सामि'ति समुदायस्याऽऽकमि'त्यर्थोऽऽपत्तौ सूत्रं व्यर्थमेव स्यादित्यत आह—वस्त्विति। अत्र च मानं

लघुशब्दरत्नः

आम्समभिव्याहारे युष्मदस्मद्भ्यां तस्यैव सम्भवादिति भावः। साहित्याभ्युपगमादिति। समूहाऽभ्युपगमादित्यर्थः। कृस्त्रिति। तेभ्यो लिट इण्निषेधादिति भावः। उभयत्र तुल्यैवेति। एवञ्च पूर्वमाम आकमि, ततः सुटि, तद्विशिष्टस्य पुनराकम् मुख्ये। गौणत्वे त्वाम एव। सूत्रे सकारग्रहणन्तु सुड्विशिष्टपरमिति भावः। एवं परोक्तसमाहारद्वन्द्वेऽपि गौणे आकममुपपाद्य, 'स्'पदस्य सुड्विशिष्टे लक्षणामसहमानैस्तदीयैरन्यैरुक्तं प्रकाराऽन्तरमपि 'स्वरूपव्याक्रियैव पराक्रिये'ति न्यायेन दुष्टमिति बोधयन्ननुवदति—वस्तुत इत्यादिना।

[1] 'लकारे इत्सञ्ज्ञाबोधस्य' इति पाठान्तरम्।
[2] सादीनां=सुडादीनामित्यर्थः।
[3] 'सरूपाणाम् असहविवक्षायाम्' इति क. पाठः।
[4] 'वरे शब्दाऽर्थे' इति 'रेशब्दार्थे' इति वा ख. पाठः।
[5] 'आकमानापत्तिः' इति क. ख. पाठः।
[6] 'परनिपातापत्तिः' इति क्वचित् पाठः।

तन्त्रेण निर्दिष्टः। तस्याऽऽकमि स्थानिवद्भावेनाऽऽम्त्वात्, ससुट्कत्वाच्च 'साम' इति प्रवर्त्तते। गौणत्वे तु प्रथमप्रवृत्त्यैव पर्यवसानम्। अत एव 'शेषे लोपष्टिलोप' इति पक्षेण सह फलैक्यमपि सिद्ध्यति। सर्वथाऽपि

बृहच्छब्दरत्नः

'स'निर्देश एव। एतेन [1]"तन्त्रेण निर्देशे तत्सामर्थ्यात्सुट्सहितस्याऽऽदेशलाभे सुट्निर्देशो व्यर्थ' इत्यपास्तम्।

ससुट्कत्वादिति। 'साम' इति 'सपुत्र' इत्यादिवद्बहुव्रीहिः। अत एव गौणे नुटोऽपि निवृत्तिः। यद्वा 'साम' इति मध्यमपदलोपी समासः। गौणे [2]नुट् तु न। ङ्याप्साहचर्येणैकाच [3]एवाऽऽमो ह्रस्वान्तात्प्रवृत्तेः। केचित्तु 'ह्रस्वनद्याप' इति सूत्रे विहितविशेषणान्न नुडि'त्याहुः। तदपरे न क्षमन्ते। एवं हि 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेने'ति भाष्यवार्त्तिकविरोधः। नित्यत्वादेव नुटः सिद्धत्वात्। [4]न हि त्वन्मते सन्निपातपरिभाषा प्राप्नोति। नुटि तृजन्तस्याऽनिमित्तत्वात्। 'येषामि'त्यादौ सुडागमस्य सावकाशत्वेन, 'सर्वेषामि'त्यादौ परत्वेन नुडागमापत्तेश्च। 'प्रियचतसृणामि'त्यादौ नुडागमाऽनापत्तेश्च। न च 'त्रिचतुरोः स्त्रियामि'ति सूत्रे विवक्षितसप्तम्या निस्तारः। बहुव्रीहौ 'नद्यृतश्चे'ति कप्प्रत्ययाऽऽपत्तेः। प्रत्ययपरत्वाऽऽश्रयणे तु बहिरङ्गत्वेनाऽसिद्धत्वान्नेति स्पष्टमाकरे। अपि चैवं त्रिचतुरादिशब्दानामाचारक्विबन्तानां तिङन्ते सर्वत्राऽऽदेशाऽऽपत्तिः। न हि 'विभक्ति'शब्देन सुब्विभक्तिरेव गृह्यते इत्यत्र मानमस्तीत्याहुः। गौणेति। न च 'साम्'साहचर्येण केवलस्याऽप्यामो मुख्ये एव भविष्यतीति वाच्यम्। टिलोपपक्षे आदेशाऽनापत्तेः। तत्र कल्पने, संकोचे मानाऽभावेन सुड्रहितामद्वयकल्पने बाधकाऽभावाच्च। तद् ध्वनयन्नाह—अत एवेति।

लघुशब्दरत्नः

फलैक्यमिति। तत्पक्षेऽपि प्रथमप्रवृत्त्यैव पर्यवसानादिति भावः। 'सिद्ध्यती'त्यस्य 'एवं त्वदीयैरुक्तमि'ति शेषः। एतेन 'साम्पदस्य आम्पदेन न तन्त्रम्। असारूप्यात्। सारूप्यस्यैव तद्बीजतया हर्यादिभिरुक्तेः। पूर्वं तन्त्रं कृत्वा ततः [5]'स्'पदेन समासे उभयोरपि तत्सम्बन्धबोधाऽऽपत्तिः। किञ्चैवमपि गौणे नुड् वारयितुमशक्यः। न च आमा सहितस्य, आमश्चाऽऽकमित्यर्थः, गौणे नुटि तत्सहितस्याऽप्याकमिति वाच्यम्। 'प्रथमप्रवृत्त्यैवे'त्यादेरसङ्गत्यापत्तेः। तन्त्रे एवमर्थस्य निरूपयितुमशक्यत्वाच्चेति 'वस्तुतस्त्वि'त्याद्युक्तिरसङ्गते'त्यपास्तम्। अस्याऽपि ग्रन्थस्य परमताऽनुवादत्वेन दुष्टत्वेऽप्यदोषात्। तदनुवादफलञ्च तेषां परस्परविरोधप्रदर्शनम्। तदेतत्सकलं ध्वनयन् परमतदूषणमुपसंहरति—सर्वथेति। अत्र नुटो निवृत्तिस्तु पूर्वमुपपादितेति दिक्।

[1] सूत्रे केवलोऽपि आम् तन्त्रेण निर्दिष्ट इत्यर्थः। [2] 'सुट्' इति क. ख. पाठः।

[3] साम् तु न एकाच्, किन्तु अनेकालित्यर्थः।

[4] 'न हि तत्र संनिपात' इति ख. पाठः। [5] 'सपदेन' इति लिखितेषु पाठः।

'अतित्वयाम्' 'अतिमयामि'ति कैश्चिदुत्प्रेक्षितं समर्थयितुं नाऽभिनिवेष्टव्यम्। 'अतित्वाकम्' 'अतिमाकमि'त्यादेर्भाष्यकृतैवोदाहृतत्वादिति दिक्।

षष्ठ्यादिविशिष्टयोरिति। एवञ्च [१]'सर्वस्य' 'पदस्ये'त्यधिकारा-

### बृहच्छब्दरत्नः

तत्र मानं प्रदर्शयन्नाह—भाष्यकृतेति। दिगिति। दिगर्थस्तु 'युष्मदस्मद्भ्यां ङसोऽश्'इत्यादीनां गौणे, मुख्ये च प्रवृत्तेः सत्त्वेनाऽर्थाऽधिकारादेतस्याऽपि सर्वत्र प्रवृत्तिरुचिता।

सर्वस्येति। 'पदस्ये'त्येवाऽनुवृत्तौ युष्मदस्मत्पदस्य सर्वत्राऽसम्भवेन, तदन्ताऽसम्भवेन च 'पदाऽवयवयोर्युष्मदस्मदोरि'त्यर्थाऽऽपत्तौ प्रकृतिमात्रस्य सर्वत्राऽऽदेशाऽऽपत्तिः। 'सर्वस्ये'त्यस्याऽप्यनुवृत्तौ तु 'युष्मदस्मदोरि'त्यस्य तद्घटितपदे लक्षणायाः सत्त्वान्न दोषः। न च पदाऽवयवत्वस्याऽव्यभिचरितत्वेन तदनुवृत्तिसामर्थ्यादुक्ताऽर्थलाभ इति वाच्यम्। पदस्योत्तरत्राऽनुवृत्तेरावश्यकत्वेन सामर्थ्याऽयोगात्। 'एकाच्द्विर्वचन'न्यायस्य तु न विषयः। समुदायाऽवयवयोः प्राप्तावेव तन्न्यायाऽवतारात्। 'पदाऽवयवयोरि'ति व्याख्याने तु समुदाये न प्रवृत्तिः। 'सर्वस्ये'त्यनुवृत्तौ तु सामर्थ्यात्, एकाच्द्विर्वचनन्यायाद्वा, साहचर्याद्वा, बहुलक्ष्यसंस्काराऽनुरोधेन वा सविभक्तिस्थाने आदेशप्रवृत्तिः। न चैवम् 'अतितव'-'अतिममे'त्यादीनामपि 'ते-मे' [२]इत्याद्यादेशाऽप्रवृत्तिरिति वाच्यम्। षष्ठ्या प्रकृतेराक्षेपेण प्रकृतिरूपयुष्मदस्मत्त्वघटितपदलक्षणाया सत्त्वेनाऽदोषात्। केचित्तु 'प्रकृतेरि'त्यस्याऽऽक्षेपेऽपि प्रकृत्यवयवीभूतयुष्मदस्मद्ग्रहणेन, युष्मदस्मदन्तप्रकृतेर्ग्रहणेन वा आदेशानिच्छन्ति। 'सर्वमि'ति वाक्यभेदेन विधेयाऽन्तरसद्भावेऽप्यनुदात्तविधानाऽर्थम्। अन्यथा विधेयाऽन्तराऽनुपादाने 'आमन्त्रितस्य चे'त्यादावनुदात्तमित्यस्य[३] चारितार्थ्येन 'युष्मदस्मदोः षष्ठी'त्यादावेकस्मिन्वाक्ये वाम्-

### लघुशब्दरत्नः

ननु 'पदस्ये'त्यधिकारेऽपि युष्मदादिरूपपदस्य विभक्त्यविशिष्टस्याऽपि भ्यामादौ सम्भवात् 'विशिष्टयोरि'त्यर्थाऽलाभः। षष्ठीद्वितीययोरसम्भवेन 'पदाऽवयवयोरि'त्यर्थलाभेऽपि त्वदुक्ताऽर्थे न मानम्। न च पदाऽवयवत्वस्याऽव्यभिचारित्वेन तदनुवृत्तिसामर्थ्यात्तदर्थलाभः। तदनुवृत्तेरुत्तरत्राऽऽवश्यकत्वेन सामर्थ्याऽयोगादत आह—सर्वस्येति। तत्सामर्थ्यात् 'युष्मदाद्यवयवकस्य सर्वस्य पदस्ये'त्यर्थ इति भावः। अत एव 'युवाभ्यामि'त्यादौ प्रकृतिभागस्य न। असहाये एव व्यपदेशिवद्भावप्रवृत्त्या युष्मदाद्यवयवकत्वाऽभावाच्च[४]। 'एकाच्द्विर्वचन'न्यायेन

१ 'अनुदात्तं सर्वमि'त्यतः 'सर्वमि'ति विभक्तिविपरिणामेन षष्ठ्यन्तं सम्बद्ध्यते इत्यर्थः।
२ 'इत्यादेशाऽप्राप्ति' इति ख. पाठः।
३ 'अनुदात्तं सर्वमपादादौ' इत्यस्येत्यर्थः।
४ चकारो मुद्रितेषु नास्ति।

**ल्लभ्यते। 'स्थ'ग्रहणन्तु 'विभक्तौ श्रूयमाणायामेव यथा स्यान्न तु लुप्तायामि'-त्येतदर्थमि'ति वक्ष्यति। वेदैरशेषैरिति। '[1]युष्मान् रक्षतु गोविन्दोऽस्मान् कृष्णः सर्वदाऽवतु' इति तु प्राचः पाठस्त्यक्तः। 'अस्मानि'त्यस्य समान-वाक्यस्थत्वाऽभावादेवाऽप्राप्तेः। स्थग्रहणादिति। तिष्ठतिरिहाऽहानौ वर्त्तते। यथा 'समये तिष्ठ सुग्रीवे'ति। 'समयं मा हासीरि'ति गम्यते। तेन षष्ठ्या-दीन् [2]अविजहतोरेवाऽऽदेशा इत्यर्थः।**

**[3]इति युष्मत्पुत्र इति। 'युवयोर्युष्माकं वा पुत्र' इति विग्रहः। पदात्परत्वं सम्पादयितुमितिशब्दः। प्राचा तु नाऽसौ प्रयुक्तः। तत्र पदात् परत्वाऽभावादेवाऽऽदेशो न भविष्यतीति किं स्थग्रहणेन।**

बृहच्छब्दरत्नः

नावादीनामुद्देश्यविधेयताया असम्भवाद्वाक्यभेदे, विशिष्टविधौ च मानाऽभावात्, गौरवाच्च विधेयता न स्यात्। न च सर्वाऽनुदात्ताऽर्थं 'सर्वमि'ति वाच्यम्। विनि-गमकाऽभावेन तत्सिद्धेः। न च 'अनुदात्तं पदमेकवर्ज्जमि'त्युक्तत्वेनैकाऽवर्ज्जनं स्यादे-वेति वाच्यम्। 'उक्तपरिभाषाया उदात्तस्वरितविधावेवोपस्थितिरि'त्याकरे उक्तत्वेना-ऽत्राऽप्रवर्त्तनात्[4]। न च 'आदेः परस्ये'त्यादिवारणाऽर्थं सर्वग्रहणमि'त्याकरोक्तं युक्तम्। श्रुतप्रथमाऽन्ताऽनुरोधेनाऽनुवर्त्तमान'पदस्ये'त्यस्य प्रथमया विपरिणामे, स्थानषष्ठ्यभावेन तस्या अप्रवृत्तेः। अत एव '[5]लुडादिप्रतिषेधः सङ्गच्छते। किञ्च 'तिङ्ङतिङ' इत्यादौ षष्ठ्या निर्देशं कृत्वा, षष्ठ्यर्थे प्रथमायाः सत्त्वात् 'सर्वस्ये'-त्यनुवृत्त्या वा 'तिङन्तपदाऽवयवीभूतो योऽजि'त्यर्थाश्रयणेनोक्ताऽर्थस्य साधयितुं शक्यत्वात्। अभावादिति। न च 'अस्मानि'त्यस्य पूर्वाऽन्वयित्वेन समानवाक्य-स्थत्वमेवेति वाच्यम्। 'कृष्णः सदाऽवतु' इत्यस्य वैयर्थ्याऽऽपत्तेः। कर्माऽध्याहारे गौरवाऽऽपत्तेश्च। 'च'शब्दाऽभावेनाऽनन्वयाच्च। न च त्वदुक्तप्रत्युदाहरणेऽपि सन्ध्यभावे नवाक्षरत्वेनाऽनुष्टुप्पादत्वाऽभावात्, सन्धौ चोभयत आश्रयणेऽन्ता-

**समुदाये एव तत्प्रवृत्तेश्च। 'अतितवे'त्यादीनां तु न 'ते' इत्याद्यादेशाः। षष्ठ्यादेः प्रकृत्या-काङ्क्षायां प्रत्यासत्त्या श्रूयमाणयुष्मदादिप्रकृतिकस्यैव ग्रहणेनाऽदोषात्।**

[1] 'युष्मान् रक्षतु गोविन्द' इति तु प्राचः पाठः' इत्येव लिखितेषु मूलपाठः। पश्चात्कैश्चि-दस्य पाठस्य पूर्तिः कृता यथेच्छं पृथक् पृथक् 'अस्मान् रक्षतु केशवः' इत्यादिरीत्या।

[2] 'अजहतः' इति मुद्रितेषु पाठः।

[3] इतिः क्वचिन्न। **'इति युष्मत्पुत्रो ब्रवीतीति'** इति घ. पाठः।

[4] 'अत्र प्रवर्त्तनात्' इति क. ख. पाठः।

[5] 'लुडन्तं न निहन्यते' इत्यर्थकेन 'न लुट्' इति सूत्रेणेत्यर्थः।

**न चवा (८।१।२४)। चादिपञ्चकेति। पञ्चानां मध्येऽन्यतमेन योगे इत्यर्थः। युक्ते इति। नपुंसके भावे क्तः।**

**पश्यार्थैः (८।१।२५)। अत एव निपातनाद्भावे शः। दर्शनं पश्यः।**

---

बृहच्छब्दरत्नः

दिवद्भावाऽभावेनाऽस्मदोऽभावात्प्राप्त्यभाव इति वाच्यम्। द्वितीयचरणस्य तुल्यत्वेनेदृशदोषस्य त्वदुक्तावपि सत्त्वात्। वस्तुतस्तु परत्वात्सन्धिकार्यस्यैते आदेशा बाधकाः। किञ्च 'नेन्द्रस्ये'ति ज्ञापकात् 'पूर्वोत्तरपदनिमित्तकार्यात्पूर्वं नैकादेश' इति ज्ञाप्यते इति स्पष्टं मूले। एवञ्च 'अस्मान् कृष्णः सर्वदाऽवतु' इत्यस्यामवस्थायां नवाऽक्षरत्वेन पादादित्वाऽभावेऽपि आदेशो न। आदेशे सति 'नः कृष्णः सर्वदाऽवतु' इत्यानुपूर्व्यापत्तावष्टाऽक्षरत्वेन पादादित्वाऽऽपत्तावुपजीव्यविरोधाऽऽपत्तेः। एवञ्चाऽऽदेशप्रवृत्तिकाले यत्र पादादित्वम्, आदेशप्रवृत्त्युत्तरं यत्र पादादित्वं वा, तत्र निषेधः। यत्तु 'पर्युदासात्पादाऽन्ते, पादमध्ये आदेश' इति। तन्न। 'ग्रामे कम्बलो मे स्वमि'ति च्छन्दोरहितवाक्ये आदेशाऽनापत्तौ [1]भाष्यादिविरोधाऽऽपत्तेः। यत्तु 'ऋक्पाद एव पादशब्देन गृह्यते' इति। तन्न। सङ्कोचे मानाऽभावात्। एतेन 'श्लोकपाद एव गृह्यते, अत एव 'इमं मे गङ्गे यमुने' इति मन्त्रे 'यमुने' इत्यादिभ्यः प्राचीनाऽऽमन्त्रिताऽविद्यमानवद्भावेऽपि 'मे'शब्दमेवाऽऽश्रित्य सर्वेषां निघात' इति मूलं सङ्गच्छते' इति परास्तम्। 'यमुने इत्यादिभ्य' इत्यत्र पादादिस्थ'शुतुद्री'शब्दस्याऽप्युपलक्षणत्वेन ग्रहणे बाधकाऽभावाच्च। 'सर्वेषां निघात' इत्यत्र 'गङ्गे यमुने सरस्वती'शब्दानामेव ग्रहणमिति दिक्।

पञ्चानामिति। 'हरिस्त्वां त्रायते स मां चे'त्यादौ तु 'सपूर्वायाः प्रथमाया विभाषे'ति बाधित्वा निषेध एवेति 'नवेति विभाषे'तिसूत्रस्थभाष्यस्वरसः। 'युष्मदस्मदोरि'ति द्विवचनस्य सत्त्वेन 'युक्ते' इत्येकवचनमयुक्तमित्याशङ्क्याऽऽह—भावे क्त इति। ज्ञानमात्रमिति। 'तस्मिन् दृष्टे पराऽवरे' 'मनसैव[2] च द्रष्टव्यः' 'आत्मा वाऽरे द्रष्टव्य' इत्यादौ मानसज्ञाने प्रयोगादिति भावः। 'बहिरिन्द्रियजन्यं ज्ञानमात्रम्, 'अनालोचने' इति पर्युदासादि'ति तु चिन्त्यम्। आकरविरोधात्।

यत्तु 'अग्निचिदि'त्यत्र क्विब्विषयकं ज्ञानमस्ती'ति। तन्न। 'अदर्शनं लोपः' 'प्रत्ययलोपे प्रत्ययलक्षणमि'ति वचनाभ्यामतिदेशेन कार्यस्य[3] कृतत्वेऽपि, तत्र क्विपो ज्ञाने मानाऽभावात्। उक्तसूत्रप्राप्तेः पूर्वं ज्ञानसत्त्वे मानाऽभावाच्च। क्विबर्थस्य शिष्यमाणेनैव बोधः। अत एव क्विपमजानतोऽपि बोधे [4]नाऽनुपपत्तिः।

---

[1] 'भाष्यविरोधापत्तेः' इति ख. पाठः।

[2] 'मनसैव च द्रष्टव्यः' इति, 'मनसैवं द्रष्टव्य' इति वा पाठोऽत्र सम्भाव्यते।

[3] अत्र 'कार्यस्य प्रवृत्तत्त्वेऽपि' इत्यपि पाठः सम्भवति।

[4] 'नाऽनुपपत्तेः' इति क. ख. पाठः।

तच्चेह ज्ञानमात्रम् । अदर्शनं लोपः (१।१।६०) इत्यत्र यथा । न तु चाक्षुषज्ञानमेव । 'अनालोचने' इति निषेधात् । तदेतदाह—अचाक्षुषज्ञानार्थैरिति । भक्त इत्यादि । अत्र व्याचख्युः–'येन हरेस्त्वं भक्तस्तेनैव कारणेनाऽहमपि भक्त' इति योज्यम् । यदि तु 'तेने'त्यनेन भक्तत्वं त्राणे हेतुर्निर्दिश्येत[1], ततः सापेक्षविधाने 'त्वमेव तदिममि'तिवदन्वादेशो न स्यादि'ति । अत्रेदं वक्तव्यं—'सापेक्षविधानेऽन्वादेशत्वं नास्ती'ति तावदसङ्गतम् । आदेशो हि विधिः । किञ्चिद्विधाय पश्चादितरविधिश्चाऽन्वादेशः । न तु निरपेक्षत्वगर्भः । अशब्दार्थत्वात् । शास्त्रे तथाऽपरिभाषितत्वाच्च । न च प्रयोगदर्शनादेव तथा कल्प्यते इति वाच्यम् । 'वन्यद्विपेनोन्मथिता त्वगस्य, अथैनमद्रेस्तनया शुशोचे'त्यादौ सापेक्षत्वेऽपि एनाऽऽदेशदर्शनात् । 'तत्र हेतुत्वं न शब्देनोपात्तमि'ति चेन्न । 'तदेनमुल्लङ्घितशासनं विधेर्विधेहि कीनाशनिकेतनाऽतिथिमि'त्यादिप्रयोगविरोधात्[2] । 'नक्तं भीरुरयमि'ति तु[3] न विधिः, किन्त्वनुवादः । अतः 'तदिममि'ति न विरुध्यते । एवं स्थिते 'येन त्वं भक्त' इति यच्छब्दाऽध्याहारक्लेशो व्यर्थः । किन्तु 'तेन त्रायते' इत्येव सम्बन्धः । प्रक्रान्ताऽर्थत्वाच्च न यच्छब्दाऽपेक्षेति दिक् । अत्र 'तेने'ति पूर्वं विद्यमानं [4]पदं, ततो 'हरिरि'ति प्रथमान्तं, ततः परस्याऽऽदेशः । तथा 'त्रायते' इत्यस्मात् परं 'स' इति प्रथमाऽन्तम् । न च 'त्रायते' इति

---

बृहच्छब्दरत्नः

किञ्च लोपेन क्विपः स्मृतत्वेन स्मरणाऽऽत्मकज्ञानस्य सत्त्वेऽपि, तस्य[5] लोपे विरोधित्वे मानाऽभावेन दोषाऽभावात् । स्मरणाऽऽत्मकज्ञाने दृशेः प्रयोगाऽभावाद्वा । तदेव ध्वनयन्नाह—अदर्शनमिति ।

---

लघुशब्दरत्नः

तेनैव कारणेनेति । श्लोकस्थं 'तेने'ति भक्तत्वे हेतुकथनमिति तद्भावः । विधिरिति । स चाऽज्ञातज्ञापनरूपोऽत्र, न तु प्रवर्त्तनारूपः । दिगिति । तदर्थस्तु 'भक्तत्वे हेत्वाकाङ्क्षाया अभावः । त्राणे आकाङ्क्षितहेत्वर्थकस्याऽध्याहारे सापेक्षत्वं तवापि दुर्निवारञ्च । शब्दमर्यादया 'तेने'त्यस्य त्राणे एवाऽन्वयप्रतीतेः शाब्दमर्यादात्यागश्चे'ति । न चेति । 'त्रायते' इत्यस्य 'हरिस्त्वामि'त्यनेन शाब्दोऽन्वयः । 'स मामि'त्यत्राऽध्याहारः । वैपरीत्यन्तु न । अध्याहारस्याऽनु-

---

[1] 'निर्दिश्यते' इति मुद्रितेषु पाठः ।

[2] 'इत्यादिमाघप्रयोगविरोधात्' इति मुद्रितेषु पाठः ।

[3] 'इति नाऽयं विधिः' इति मुद्रितेषु पाठः । [4] 'पदम्' इति मुद्रितेषु नास्ति ।

[5] 'तस्य लोपविरोधित्वे मानाऽभावेन दोषाऽभावात्' इति ख. पाठः । 'तस्य लोपो विरोधित्वे' इति क. पाठः ।

भिन्नवाक्यस्थमिति भ्रमितव्यम् । 'स हरिस्त्वां मां त्रायते' इति तन्त्रेणाऽनेककारकसम्बन्धात् । अनुषङ्गाऽभ्युपगमेऽपि 'एकतिङ् वाक्यमि'ति परिभाषितवाक्यत्वाऽनपायाच्च ।

**सामन्त्रितम् (२।३।४८)**। सञ्ज्ञाविधावपि महासञ्ज्ञाकरणसामर्थ्यात्तदन्तग्रहणम् । आमन्त्रणम्—आमन्त्रितम् । उपचारात्तत्साधने वृत्तिः । विभक्त्यन्तेन चाऽऽमन्त्र्यते, न तु केवलया विभक्त्येत्याशयेनाऽऽह—तदन्तमिति ।

**आमन्त्रितं पूर्वमविद्यमानवत् (८।१।७२)**। यत्तु प्राचोक्तं—'विशेष्यपूर्वं, सम्बोधनेतरपूर्वञ्च सम्बोधनं हित्वाऽन्यस्मात् सम्बोधनात् परयोर्नैते आदेशा' इति केचिदि'ति । तत्र 'केचिदि'त्यनुचितम् । उक्ताऽर्थस्य

बृहच्छब्दरत्नः

अनुषङ्गेति । श्रुतवाक्यद्वयमध्ये प्रवेशेन परिभाषितैकवाक्यत्वं दुर्वारम् । 'त्वामि'त्यस्य श्रुतक्रियायां, 'मामि'त्यस्याऽनुषक्तक्रियायामन्वय' इत्यत्र मानाऽभावेन वैपरीत्यस्याऽपि वक्तुं शक्यत्वात् । एतेन 'अयं दण्डो हरानेने'त्यादावस्तीत्यध्याहारेऽपि परिभाषितैकवाक्यत्वमस्त्येवे'ति निरस्तम् । वैषम्यस्य स्फुटत्वात् । नन्वेवं 'पचति-भवती'त्यत्रैकवाक्यत्वं न स्यादिति चेत् । इष्टाऽऽत्तेः । लौकिकैकवाक्यत्वमस्त्येवेति कारके वक्ष्यामः । आमन्त्रणमिति । तथा[1] च सेति पदवैयर्थ्यम् । प्रथमाऽन्तमात्रग्रहणेन चारितार्थ्यात् । अन्यथा 'अनन्तरस्ये'तिन्यायेन 'सम्बोधने चे'तिसूत्रविहितप्रथमान्तस्यैव ग्रहणाऽऽपत्तिः । तथा च 'हे पचन्, हे पचमान, है[2]हे, भो'-इत्यादीनां सञ्ज्ञा न स्यात् । इह हि 'सम्बोधने चेति सूत्रेण शतृशानचोर्विधानात्, कोशे सम्बोधने विशिष्य शक्तेः सत्त्वात् सम्बोधनाऽर्थस्य प्रातिपदिकाऽर्थेऽन्तर्भावात् 'प्रातिपदिकार्थे'तिसूत्रेणैव प्रथमोत्पत्तिः । यत्तु 'विधेयसमर्पकस्याऽनुवाद्यत्वसमर्पणाऽर्थं तद्ग्रहणमि'त्युक्तम् । तन्न । सञ्ज्ञायाः सञ्ज्ञिसापेक्षत्वेन सन्निहितशब्दग्रहणस्य न्याय्यत्वात् । तदन्तप्रापकप्रमाणेनैवाऽनिष्टशब्दवारणाच्च । न हि महासञ्ज्ञया मणिमन्त्रादिन्यायेन तदन्तस्य सञ्ज्ञा विधीयते, अपि तु वाच्यवृत्त्या । एतेनाऽऽन्त्रितसञ्ज्ञा प्रत्ययस्यैवाऽस्तु, प्रदेशेषु तदन्तविधिनैव निर्वाह'

लघुशब्दरत्नः

पपत्तिमूलकत्वेनोत्तरत्रैव युक्तत्वात् । किञ्चाऽध्याहृतस्य 'आगन्तूनामन्ते निवेश' इति न्यायेनाऽन्त एव निवेशेन 'स मामि'त्यस्य तदर्थकत्वमित्यस्यैवाऽध्याहारपदार्थत्वेन च 'स' इत्यस्य विद्यमानपूर्वकत्वाऽभावः । श्रूयमाणन्तु न समानवाक्यस्थमिति भावः । अनुषङ्गेति । अनुषङ्गो हि तत्सजातीयशब्दाऽन्तरकल्पना, उपात्तस्यैव तदर्थकत्वं वा । तत्रोपात्तस्याऽन्वयाऽभावेन समानवाक्यत्वं दुरुपपादमिति भावः । एकतिङिति । 'एक'शब्दो हि तत्र समानवाचीति भावः ।

[1] 'तथा च सेतिपदवैयर्थ्यम्' इति क. ख. पाठः ।

प्रकृतद्विसूत्रीसिद्धत्वात् । यच्च व्याचख्युः—'त्रिसूत्र्या अयमर्थ' इति । तन्न । तृतीयसूत्राऽर्थस्य तेनाऽसंस्पर्शात् ।

**पादः पत्** (६।४।१२०) । तदवयवस्येति । 'निर्दिश्यमानस्याऽऽदेशा' इति परिभाषयेदं लभ्यते । दान्ताः ॥

**अग्निं मन्थतीति** । मथ्नातेर्मन्थतेश्च क्विपि एतदेव रूपम् । इदितस्तु नलोपाऽभावात्–'अग्निमन्' 'अग्निमन्थौ' 'अग्निमन्थः' । थान्ताः ॥

---

बृहच्छब्दरत्नः

इत्यपास्तम् । 'स्यतासी लृलुटोरि'त्यादाविव 'नाऽऽमन्त्रिते समानाधिकरणे' इत्यादौ तदन्तविधेर्दुर्लभत्वाच्च । 'आमन्त्रितं पूर्वमि'ति पूर्वग्रहणेन परस्याऽऽन्तेपातपरस्य कार्ये कर्त्तव्ये स्वनिमित्ते, अन्यनिमित्ते वेत्यर्थः । अत एव 'मे'शब्दमाश्रित्य 'यमुने' इत्यस्य निघातः । स्यादेतत् । वत्करणं व्यर्थम् । 'गोतो णिदि'त्यादाविव तदर्थ-लाभात् । न च वत्करणाऽभावे निवृत्तिरर्थः[1] स्यादिति वाच्यम् । 'लोप' इत्येव सिद्धे, 'अविद्यमान'शब्दोच्चारणवैयर्थ्याऽऽपत्तेः । अत्राऽऽहुर्भाष्यकाराः—'स्वाश्रयं यथा स्यात्, 'आम् भो देवदत्त', 'आम एकान्तरमामन्त्रितमनन्तिके' इत्येकाऽन्तरता यथा स्यादि'ति । न चाऽत्र 'नामन्त्रिते' इति निषेधः शङ्क्यः । निपात'भोस्'शब्दस्य द्रव्यवाचित्वेन, सामान्यवचनत्वेऽपि लिङ्गादिवाचित्वाऽभावेन सत्त्वाऽर्थकेन सह सामानाधिकरण्याऽभावात् । अत एव 'समानाधिकरण'ग्रहणं चरिताऽर्थम् । तच्चाऽत्यन्तसमानाधिकरणग्रहणाऽर्थम् । 'अख्यातिरन्यथाख्यातिरसत्ख्यातिस्तु ते द्विषाम् । नृसिंहाश्रम ते ख्यातिर्यात्यनिर्वचनीयतामि'त्यादौ समुदायस्या-ऽऽमन्त्रित्वेनाऽविद्यमानवद्भावेऽपि [2]अवयवस्य तदभावेन तत्प्रयुक्ताऽऽदेशो युक्त एव । [3]निःकृष्याऽवयवाऽर्थेनाऽनन्वयेऽपि समानवाक्यस्थत्वाऽनपायात् । पर-म्पराऽन्वयस्य सत्त्वाच्च । अत एव कारकाणां परस्परमनन्वयेऽपि 'हरिस्त्वां त्रायते स मामि'त्यादावादेशाः सङ्गच्छन्ते । न च 'परिनिष्ठितविभक्त्या समास' इतिपक्षे अवयवस्याऽपि सम्बोधनविभक्त्यन्तत्वमस्त्येवेति वाच्यम् । 'न ङि सम्बुद्ध्योरि'ति-सूत्रस्थभाष्यादिप्रामाण्येन सम्बोधनविषये उक्तपक्षस्याऽनङ्गीकारात् । 'उत्तरपदत्वे चाऽपदादिविधावि'ति प्रत्ययलक्षणनिषेधस्य तु[4] पर्युदासवृत्त्या पदान्तनिमित्तविधा-वेव प्रवृत्तत्वेन पदत्वं सुलभमेव[5] ।

---

१ 'निवृत्त्यर्थः स्यात्' इति क. ख. पाठः ।

२ अवयवस्य='नृसिंह'-'आश्रम' इत्यस्य पदद्वयस्येत्यर्थः ।

३ 'निष्कृष्टाऽवयवार्थेन' इति क. ख. पाठः । ४ 'निषेधस्तु' इति क. ख. पाठः ।

५ इतोऽग्रे-'ध्वनितं चेदम्'……इति खण्डितः पाठः क. ख. दृश्यते । परन्तु अग्रेऽनुपद-मेव-'ध्वनितं चेदम् 'अन्चोनपादाने' इति सूत्रे भाष्ये' इति पाठोऽस्ति, स एव लेखकप्रमादादत्र पतितो भवेदिति मन्तव्यम् ।

**ङकार इति।** आन्तरतम्यादिति भावः। **ह्रस्वव्यञ्जनयोरिति।** व्यञ्जनस्य हि ह्रस्व ईषत्सदृशो, दीर्घस्तु विसदृश इति भावः। **उक्तञ्चेति।** 'वार्त्तिककृते'ति शेषः। केचित्तु पूर्वस्यैव मुत्वात् 'अमुय्रूङ्' इत्युदाहरन्ति। तद्भाष्याऽऽदौ नोक्तमित्युपेक्षितम्।

**उद ईत्** (६।४।१३८)। अचः (६।४।१३८) इत्यस्याऽपवादः।

चान्ताः॥

**अत्वसन्तस्य चाधातोः** (६।४।१४)। इह 'अधातोरि'ति योगो विभज्यते। तत्सामर्थ्यादनन्तरस्य असन्तस्यैव प्रतिषेधो, नाऽत्वन्तस्ये'ति कैयट-हरदत्तादयः। तदेतद्दर्शयति—**धातुभिन्नाऽसन्तस्य चेति।**

---

**बृहच्छब्दरत्नः**

आन्तरतम्यादिति। 'प्रकृष्टं गच्छती'ति प्राङ्। गमनाऽर्थेऽपि पूजायां गम्यमानायां निषेधस्य दुर्वारत्वात्। न हि 'नाञ्चेः पूजायामि'त्यस्य 'पूजायां वर्त्तमानो योऽञ्चतिरि'त्यर्थः, किन्तु 'पूजायां गम्यमानायामि'त्यर्थः। ध्वनितञ्चेदम् 'अञ्चोऽनपादाने' इति सूत्रे भाष्ये इत्याहुः।

व्यञ्जनस्येति। व्यक्तिपक्षे लक्षणभेदात् 'स्थानेऽन्तरतम' इतिपरिभाषाया अव्यापारादिष्टसिद्धिः। ह्रस्वद्वयप्रश्लेषे तु न का चिद्दोषशङ्का। वार्त्तिककृतेति। तत्प्रामाण्यादेव व्यधिकरणपदबहुव्रीहिः। अकारेण आकारस्याऽपि ग्रहणात् 'अमूदृगि'त्यादिसिद्धिः। 'त्यदाद्यत्वविषये एवे'ति मूलग्रन्थोऽपि 'त्यदादीनामत्वविषये' इत्यर्थपरतयैव व्याख्येयः। अत एव 'सान्तस्य ने'त्यस्मिन्पक्षेऽपि अकारभिन्नसकाराऽऽदेशोऽपि गृह्यते। 'अदोऽनुपदेशे' इति निर्देशोऽप्यनुकूलः। भाष्यादौ नोक्तमिति। एतेन 'अदसोऽद्रेः पृथङ् मुत्वमि'त्यंशेन वार्त्तिके मताऽन्तरमुच्यते। तेनाऽमुय्रूङिति युक्तमेवे'त्यपास्तम्। 'के चिदि'त्यादिवैयर्थ्याऽऽपत्तेः। एतेन 'विष्वग्देवयोश्चे'ति सूत्रे 'सर्वनाम्न' इत्यनुवृत्तिर्भाष्यविरुद्धे'त्यपास्तम्। ध्वनितञ्चेदं कैयटादिग्रन्थे।

कैयटेति। अत्र च मानम् 'उगिदचामि'तिसूत्रस्थं 'गोमत्यतेरप्रत्यये गोमानि'-त्यादि भाष्यम्। न चेदमयुक्तं, मतुपोऽत्वन्तत्वाऽभावादिति वाच्यम्। पकारा-

---

**लघुशब्दरत्नः**

केचित्तु पूर्वस्यैवेति। 'अदसोऽद्रेः पृथङ मुत्वमि'ति पृथग् वाक्यम्। तेन कदाचित् पूर्वस्येति तदाशयः। उपेक्षितमिति। 'केचिदन्त्यसदेशस्ये'त्यस्य वैयर्थ्याऽऽपत्तेश्चेत्यपि बोध्यम्। विभज्यते इति। तत्र च 'असन्तस्ये'त्येकदेशे स्वरितत्वप्रतिज्ञानात्तावत एव तत्र सम्बन्ध इति भावः। 'अतु' इति वा लुप्तषष्ठीकं पृथक् पदम्। कैयटेति। उगिदचाम् (७।१।७०) इति सूत्रे हि तेनेवमुक्तम्।

**उभे अभ्यस्तम्** (६।१।५)। 'द्वे' इत्यनुवृत्त्यैव सिद्धे 'उभे'ग्रहणं समुदायप्रतिपत्त्यर्थमिति व्याचष्टे—**उभे समुदिते इति**। अन्यथा हि 'नेनिजती'त्यत्र अभ्यस्तानामादिः (६।१।१८८) इत्याद्युदात्तत्वं प्रत्येकं पर्यायेण स्यात्।

**जक्षित्यादयः षट्** (६।१।६)। 'जक्ष्' इति पृथक् पदम्। 'इति'शब्देन [1]जक्षिरेव परामृश्यते। 'इति आदिर्येषामि'त्यतद्गुणसंविज्ञानो बहुव्रीहिः।

बृहच्छब्दरत्न

ऽऽधिक्येऽपि अतोरविनाशात्। साऽनुबन्धग्रहणे सर्वत्र रूपग्रहणम्। तस्य च प्रयोगे अभावादौपदेशिकं गृह्यते। 'भूतपूर्वगत्या च लक्ष्ये प्रवृत्तिरि'ति भाष्यादौ स्पष्टम्। एवञ्चोकाराऽन्ताऽपेक्षयाऽधिकरूपग्रहणे मानाऽभावात् पान्तोपदेशे तात्पर्येऽपि तन्मध्ये तत्प्रवेशो[1] दुर्वार एव। न चैकाऽनुबन्धग्रहणे इति परिभाषया न भविष्यतीति वाच्यम्। निरनुनासिकोकारोच्चारणेनाऽनुबन्धत्वाऽभावात्। पकारादेः समुदायाऽनुबन्धकत्वेऽपि अतो[2] द्व्यनुबन्धकत्वाऽभावाच्च। भाष्यादिकं त्वयुक्तमेव। द्वे इतीति। न च पूर्वसूत्रे विधेयसमर्पकस्य कथमत्राऽनुवाद्यत्वमिति वाच्यम्। सञ्ज्ञाकरणसामर्थ्यादेव तत्सिद्धेः। 'पूर्वोऽभ्यास' इत्यत्र पूर्वशब्दस्य साकाङ्क्षितत्वेन 'द्वे' इत्यस्याऽनुवाद्यत्वेनाऽन्वयाच्च। एतेन 'पूर्वं' इत्यस्यैवाऽनुवृत्तिः स्यादि'ति निरस्तम्। योगविभागस्य, सञ्ज्ञाऽन्तरकरणस्य च वैयर्थ्याऽऽपत्तेश्च। 'उभे' इति तदर्थः। न च 'ऐत्सन्'[3] 'ऐप्सन्नि'त्यादौ अभ्यासलोपे सञ्ज्ञाऽभावाऽर्थम् 'उभे'ग्रहणमिति वाच्यम्। अन्वर्थसञ्ज्ञाबलादेवाऽप्रवृत्तेः। लोकेऽसकृदुच्चरितमभ्यस्तमुच्यते इत्याहुः।

इति आदिर्येषामिति। आदिशब्दः पूर्ववृत्तिवाची। 'जक्षि'ति पृथक्पदसामर्थ्यात्। अत एव 'जक्षिती'ति निर्देशश्चरिताऽर्थः। तथा च जक्षपूर्वकषडित्यर्थस्य सत्त्वेन बहुव्रीह्यर्थाऽबाधेन जक्षभिन्नषण्णां ग्रहणं फलितम्। तदेवाऽऽह—अतद्गुणेति। प्रागवदिति। 'षत्वाऽपवादत्वात्कुत्वेन ख' इति कैयटाद्युक्तं न युक्तम्।

लघुशब्दरत्नः

द्वे इत्यनुवृत्त्यैवेति। अनुवृत्तञ्च पूर्वोऽभ्यासः (६।१।४) इत्यादाविवाऽनुवाद्यमिति भावः। समुदायेति। 'गर्गाः शतं दण्ड्यन्तामि'त्यत्रेवेति भावः। अन्यथा ब्राह्मणभोजनन्यायेन प्रत्येकं सञ्ज्ञा स्यादिति भावः। अन्यथा=प्रत्येकं सञ्ज्ञायाम्। अभ्यस्तानामिति। 'अनिटि अजादौ लसार्वधातुकेऽभ्यस्तानामादिरुदात्त'इति तदर्थः। इति आदिरिति।

[1] 'तत्प्रवेशे दुर्वार एव' इति क. पाठः

[2] 'अत्र अतो द्व्यनुबन्धकत्वाऽभावाच्च' इति क. ख. पाठः। 'अतोः द्व्यनुबन्धकत्वे' त्यपि पाठः सम्भवति।

[3] 'ईप्सन्' इति ख. पाठः।

तदेतदाह—षड् धातवोऽन्ये इति । तान्ताः ॥

गोपायतीति गुप् । क्विपि विवक्षिते आयादय आर्द्धधातुके वा (३।१।३१) इत्यायाऽभावः । पान्ताः ॥

त्यदादिषु (३।२।६०) । अनालोचने किम् । 'तं पश्यतीति तद्दर्शः' । कर्मण्यण् । तादृशादयस्तु रूढिशब्दत्वादसताऽप्यवयवाऽर्थेन व्युत्पाद्यन्ते । अत एव 'अज्ञानार्थाद् दृशेरि'ति सङ्गच्छते । भाष्ये तु कर्मकर्त्तरि व्युत्पत्तिर्दर्शिता—'तमिवेमं पश्यन्ति जनाः, स इवाऽयं पश्यति—ज्ञानविषयो भवती'त्यर्थात् । तत्र विषयत्वाऽऽपत्तिमात्रवृत्तित्वेऽपि विषयीकरणाऽवृत्तित्वात् 'अज्ञानार्थादि'ति सङ्गच्छते ।

नशेर्वा (८।२।६३) । अत्र 'झल्यपी'त्यपाणिनीयं, 'नष्टमि'त्यादावतिप्रसक्तश्च । नगिति । षडगकाः प्राग्वत् । शान्ताः ॥

नुम्विसर्जनीयशर्व्यवायेऽपि (८।३।५८) । ष्टुत्वेनेति । सनः सस्य रुत्व-विसर्गयोः कृतयोः वा शरि (८।३।६३) इति विकल्पात् पक्षे सकारः । तेन शरा व्यवाये सुपः सस्य षत्वं, पूर्वस्य ष्टुत्वं, न तु आदेशप्रत्यययोः (८।३।५९) इति षः । 'अपदान्तस्ये'ति निषेधादिति भावः । एवं स्थिते सकारग्रहणेन सिद्धे शर्ग्रहणस्य प्रयोजनं चिन्त्यम् ।

---

**बृहच्छब्दरत्नः**

येन नाप्राप्तिन्यायेनाऽपवादत्वाऽभावात् । षत्वे कृतेऽपि कुत्वस्य प्राप्तत्वाच्च । तस्याऽसिद्धत्वेन जश्त्वस्य दुर्वारत्वाच्च । एतेन 'षत्वस्येव ढत्वस्याऽपि बाधादुष्णिगित्यादौ कुत्वेन हस्य घ' इत्यपास्तम् । तत्राऽप्युक्तरीत्या ढगकानां युक्तत्वात् ।

नुम्विसर्जनीय । यत्तु 'निंस्स्वे'त्यादौ धातुसकारस्य षत्वं दुर्वारमित्याहुः । तन्न । सकारोच्चारणवैयर्थ्याऽऽपत्तेः । 'नुम्विसर्जनीये'ति सूत्रस्य लाघवेना-

---

**लघुशब्दरत्नः**

आदिशब्दः पूर्ववर्त्तिवाची । भाष्ये तु कर्मकर्त्तरि व्युत्पत्तिर्दर्शितेति । 'तमिवेमं पश्यन्ति जनाः, सोऽयं स इव दृश्यमानस्तमिवाऽऽत्मानं पश्यती'ति भाष्ये उक्तम् । तत्राऽध्यारोपितप्रेषणपक्षे कर्मकर्तृत्वं,[1] 'पश्यती'त्यस्य च 'दर्शयती'त्यर्थ इति स्पष्टमेव । तत्राऽधिकार्थत्वादज्ञानार्थत्वं बोध्यम् । निवृत्तप्रेषणकर्मकर्त्तर्यपि सौकर्याय व्युत्पत्तिं दर्शयति—तमिवेममित्यादि । अत्र पक्षे 'कर्मणी'त्यधिकारबाधः, सामर्थ्यादिति बोद्धव्यम् । पूर्वस्य = विसर्ग-

---

[1] 'कर्मकर्तृत्वे' इति क्वचित्पाठः ।

**व्याख्यानादिति।** 'असम्भवादि'ति हरदत्तोक्तिस्तु[1]नाऽऽदर्त्तव्या। 'सुहिन्सु' इत्यत्र सम्भवादिति भावः। **संयोगान्तेति।** न चाऽस्मिन् कर्त्तव्ये बहिरङ्गत्वेनाऽतो लोपस्याऽसिद्धत्वं शङ्क्यम्। पदसञ्ज्ञासापेक्षत्वेन संयोगान्तलोपस्यैव बहिरङ्गत्वात्। कथन्तर्हि 'काव्यं कलत्रं [2]शाल्वं वाऽऽचक्षाणे संयोगान्तलोपो ने'ति प्रागुक्तमिति चेन्न। तत्र हि[3] 'यणः प्रतिषेधो', 'न वा झलो लोपादि'ति पक्षद्वयेऽपि लोपाऽभावे निर्णीते, तदैकरूप्याय 'पूर्वं पूर्वमन्तरङ्गमि'ति ग्रहीतुं युक्तम्। अतिदेशेन लभ्यस्य पदत्वस्य, तत्प्रयुक्तलोपस्य च लक्ष्यपूर्वभागे विश्रान्तेः स्पष्टत्वात्। इह तु आद्यपक्षद्वये संयोगान्तलोपस्य स्पष्टतया, तदैकरूप्याय 'बहिर्भूतनिमित्ताऽपेक्षं बहिरङ्गमि'त्यस्यैव न्याय्यत्वादिति दिक्।

---

बृहदच्छब्दरत्नः

ऽधिकारत्वेनाऽविधायकत्वाच्च। चिन्त्यमिति। शर्ग्रहणं स्थापयित्वा 'विसर्जनीय'ग्रहणवैयर्थ्यमट्कुप्वाङिति सूत्रे निरूपितम्। ननु [4]काव्यादिशब्देभ्यः 'प्रातिपदिकाण्णिजि'तिपक्षे अप्रत्यये सुपि बहिरङ्गत्वं संयोगाऽन्तलोपस्य दुर्वारमित्याशयेनाशङ्कते—कथन्तर्हीत्यादिना। अतिदेशेनेति। बहिर्भूतसुब्निमित्तपदत्वस्यैकदेशविकृतन्यायेन याऽन्तादौ विश्रान्तिरिति भावः। तत्प्रयुक्तलोपस्य चेति। अनेन बहिर्भूतनिमित्तसत्त्वेऽपि अन्तःकार्यत्वमात्रेणाऽप्यन्तरङ्गत्वं सुवचमिति बोधितम्। अतः 'सुबन्ताण्णिजि'ति पक्षेणाऽपि सह फलैक्यम्। प्रकृते तु नैवमित्याह—इहेति। दिगिति। उक्ताऽर्थाऽनङ्गीकारे यथोद्देश-कार्यकालपक्षयोः फलैक्याऽनापत्तिः।

ननु तक्षि-रक्षिभ्यां क्विपि स्थानिवद्भावो दुर्लभः। 'क्वौ लुप्तं न स्थानिवदि'ति निषेधात्। न चेदमसार्वत्रिकमिति वाच्यम्। ईदृशे विषये भाष्यकारादिभिरङ्गी-

---

लघुशब्दरत्नः

स्थानिकसस्य। अस्मिन्=संयोगान्तलोपे। 'पूर्वंपूर्वमन्तरङ्गमि'त्याश्रित्येति भावः। पदसञ्ज्ञासापेक्षत्वेनेति। 'बहिर्भूतसुप्निमित्तके'त्यादिः। तदपेक्षया बह्वपेक्षत्वरूपं बहिरङ्गत्वं प्रबलमिति भावः। प्रागुक्तमिति। 'पूर्वं पूर्वमन्तरङ्गमित्याश्रित्याऽल्लोपाऽसिद्धत्वेने'त्यादिः। अतिदेशेनेति। विभक्त्याश्रयस्यैकदेशविकृतन्यायेन लभ्यस्येत्यर्थः। लक्ष्यपूर्वभागे इति। काव्यादिशब्दरूपलक्ष्यस्य पूर्वभागे याद्यन्ते इत्यर्थः। बहिर्भूतेति। बहिर्भूतनिमित्ताऽपेक्षत्व-

---

[1] तुः मुद्रितेषु त्रुटितः।

[2] 'शाल्वमाचक्षाणे' इति घः पाठः। 'चाऽऽचक्षाणे' इति ङ. पाठः।

[3] हिः मुद्रितेषु त्रुटितः।

[4] 'तदुकस्यादिशब्देभ्यः' इति क. ख. पाठः।

तक्षिरक्षिभ्यामित्यादि । यत्तु वदन्ति–'शुक्रं, चक्रं, शुक्रं वा–ऽऽचक्षणेषु[1] कलोपः । 'शुल्' 'शुक्रौ' 'शुल्भ्याम्' । 'चः' 'चक्रौ' 'चर्भ्याम्' । 'शूः' 'शुक्रौ' '[2]शूर्भ्यामि'त्यादि । तत्सर्वमनेन प्रत्युक्तम् । अयन्तु विशेषः–'तक्' 'रक्' इत्यत्र संयोगान्तलोपो निर्विवादः, तत्र तु सोऽपि दुर्लभ' इति । दिधगिति । यत्तु दहेः हो ढः (८।२।३१) षढोः (८।२।४१) इति कत्वस्याऽसिद्धत्वात्संयोगान्तलोपे, ढस्य जश्त्वे, 'दिघडि'ति नैमिषीयेणोक्तम् । तन्प्रामादिकम् । दादेर्धातोर्घः (८।२।३२) इति घत्वस्य ढत्वाऽपवादस्य जागरूकत्वात् । षान्ताः ॥

विद्वानिति । विदेः शतुर्वसुः (७।१।३६) । अदादित्वाच्छपो लुक् । सेदिवानिति । भाषायां सदवसश्रुवः (३।२।१०८) इति क्वसुः । सेदुष इति । ननु 'तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्ये'ति परिभाषया विदेः शतुर्वसुः (७।१।३६) इत्यस्यैव वसोः सम्प्रसारणं युक्तं, न तु क्वसोः । सत्यम् । वसोरुकाराऽनुबन्धकरणं क्वसोः सामान्यग्रहणाऽर्थम् । उगित्त्वस्य स्थानिवद्भावेनाऽपि सिद्धेः । इह गमिप्रभृतिभ्यः क्वसुर्नोदाहृतः । छान्दसत्वात् । कवयस्तु प्रयुञ्जते—'श्रेयांसि सर्वाण्यधिजग्मुषस्ते', 'तं तस्थिवांसं नगरोप-

---

**बृहच्छब्दरत्नः**

कृतत्वात् । किञ्च 'पूर्वत्राऽसिद्धीये न स्थानिवदि'त्यस्याऽसिद्धत्वमूलस्य नेति योगविभागेन क्वचिदप्रवृत्तेः स्वीकृतत्वेन तुल्यत्वात्, संयोगादिलोपग्रहणस्य वैयर्थ्याऽऽपत्तेरि'ति शङ्कां परदूषणव्याजेनाऽपाकरोति—यत्तु वदन्तीत्यादिना । यदपीदृशे विषये संयोगादिलोपो न, 'झलन्तो यः संयोगस्तदाद्योः सकार-ककारयोरि'ति । तन्न । शब्दाऽधिकारे, मण्डूकप्लुतौ च मानाऽभावात् । ध्वनितञ्चेदं भाष्ये इति प्रागेव प्रपञ्चितं न विस्मर्त्तव्यम् । जागरूकत्वादिति । [3]ढत्वस्याऽसिद्धत्वेन

---

**लघुशब्दरत्नः**

रूपबहिरङ्गत्वस्येत्यर्थः । वस्तुतस्तेषामनभिधानमेव । 'पूर्वं पूर्वमि'त्यस्य च 'पूर्वपूर्वनिमित्तकमि'त्येवाऽर्थ इत्यन्यत्र प्रपञ्चितम् । दुर्लभ इति । यण्वात्, अझल्वाच्चेति भावः ।

स्थानिवद्भावेनापि सिद्धेरिति । ङित्त्ववदिति भावः । न च तदनुबन्धकपरिभाषा-

---

[1] 'चाऽऽचक्षाणेषु' इति ङ. पाठः ।
[2] 'शुर्भ्याम्' इति घ. पाठः ।
[3] 'घत्वस्याऽसिद्धत्वेन' इति,'चस्याऽसिद्धत्वेन'इति,'तस्याऽसिद्धत्वेन'इति वा ख. पाठः ।

कण्ठे' इत्यादि । 'छान्दसा अपि क्व चिद्भाषायां भवन्ती'ति 'भासश्छन्दसी'ति सामान्याऽपेक्षं ज्ञापकमाश्रित्य कथं चित्समाधेयम् ।

**पुंसोऽसुङ् (७।१।८९) । विवक्षिते इति ।** तेन 'परमपुमानि'त्यत्र परत्वादसुङि कृते समासान्तोदात्तत्वं भवदसुङ एवाऽकारस्य भवति । परसप्तम्यान्तु नैतत्सिध्येत् । सर्वनामस्थानोत्पत्तेः प्रागेव पुंशब्दोकारस्योदात्तत्वे कृते[1] स्रंसनधर्मणो[2] हलः स्थाने तद्धर्मणोऽनुदात्तस्यैवाऽऽदेशस्य प्रसङ्गात् । न चोकारस्य कृतोऽपि स्वरोऽनन्त्यत्वान्निवर्त्तयिष्यते, असुङश्चाऽन्त्यत्वात् करिष्यते इति वाच्यम् । अन्तरङ्गे स्वरे कर्त्तव्ये बहिरङ्गस्याऽसुङोऽसिद्धत्वादिति भावः । एतच्च कैयट-हरदत्तादीनामनुरोधेनोक्तम् । वस्तुतस्तु परसप्तमीपक्षोऽपि सूपपादः । अकृतव्यूहपरिभाषाया अन्तरङ्गपरिभाषाऽपवादत्वादित्यवधेयम् । नन्वेवमसमासेऽपि असुङि कृते प्रातिपदिकस्वरेण सति-शिष्टेन प्रत्ययस्वरस्य बाधादसुङ उदात्तत्वं स्यात्, इष्यते तूकारस्य, 'पुमान् पुमांसं परिपात्वि'त्यादौ तथैव पाठादिति चेत् । सत्यम् । 'ड्डुम्सुनो नित्करणसामर्थ्यात् प्रातिपदिकस्वरो न भवती'ति हरदत्तः[3] । नन्वेतदयुक्तम् । प्रकृति-

---

**बृहच्छब्दरत्नः**

संयोगान्तलोप एव पूर्वं युक्त इति दूषणाऽन्तरं बोध्यम् । परसप्तमीपक्षोऽपीति । अत एव 'बहुपुंसी'त्यत्र परत्वादन्तरङ्गत्वाच्च ङीपं बाधित्वा असुङ् न । वस्तुतः सङ्ख्याकारकप्रतिपादनेच्छायां सर्वनामस्थानविवक्षा, सा च न ङीबुत्पत्तेः पूर्वम्, स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमिकबोधस्य व्युत्पादनादित्याहुः ।

नन्वेवमिति । असुङ्प्रवृत्त्युत्तरं स्वरप्रवृत्त्यङ्गीकारे इत्यर्थः । शून्येष्विति । अत

---

**लघुशब्दरत्नः**

प्रवृत्त्यर्थमेव तत् । निरनुबन्धकत्वेनाऽपि तत्सिद्धेः । कथं चिदिति । तेन 'पद्दन्नः (६।१।६३) इति सूत्रे 'छन्दसी'ति निवृत्तेः[4] कल्पनया तस्य चारितार्थ्येनैतदर्थज्ञापकत्वाऽसम्भव इति सूचितम् । प्रागेवेति । अन्तरङ्गत्वादिति भावः । निवर्त्तयिष्यते इति । अकृतव्यूहपरिभाषया पूर्वमेव न प्रवर्त्तयिष्यते इति भावः । अन्तरङ्गे इति । अकृतव्यूहपरिभाषा तु नाऽस्त्येवेति भावः । तदेवाऽऽह—कैयटेत्यादि । भाष्येऽपि 'उपदेशिवद्भाववचनं कर्त्तव्यमि'त्युक्तम् । अकृतव्यूहपरिभाषाया इति । 'सत्त्वे' इति शेषः । नन्वेतदिति । अन्तोदात्तत्ववारणाय

---

[1] 'कृते' इति लिखितेषु नास्ति । [2] 'धर्मिण' इति क्वचित्पाठः ।

[3] 'इति हरदत्तादयः' इति क्वचित्पाठः ।

[4] 'निवृत्तिकल्पया' इति मुद्रितेषु पाठः ।

प्रत्ययविभागशून्येष्वेव 'फिष' इत्यस्य प्रवृत्तेरिति चेत्। सत्यम्। क्व चित् सखण्डेष्वपि प्रवृत्ताविदं लिङ्गम्। यद्यपि 'असिद्धं बहिरङ्गमि'त्येवेदं सिद्धं, तथाऽपि बहिरङ्गपरिभाषाया अनित्यत्वमपि ज्ञापयितुं नित्करणमिति निष्कर्षः।

उच्चारणार्थं इति। यत्तु प्राचोक्तम्–'उङावितावि'ति, यच्च तत्पौत्रेण व्याख्यातम्–'उकार उगित्कार्याऽर्थ' इति, तदसङ्गतमिति भावः।

हे पुमन्निति। 'असम्बुद्धावि'त्युक्तेर्न दीर्घः। पुंस्विति। संयोगान्तलोपे मोऽनुस्वारः। नुम्स्थानिकस्यैवाऽनुस्वारस्योपलक्षणात् नुम्विसर्ज्जनीय (८।३।५८) इति न षत्वम्।

अस्य सम्बुद्धाविति। एतच्च वाचनिकम्। यत्तु हरदत्तादय आहुः– 'सोर्डे'ति वाच्ये अनङ् सौ (७।१।९३) इति वचनेन क्वचिदनङ एव श्रवणस्य ज्ञापितत्वादेतत्सिद्धमि'ति। तत्तु प्रागेव दूषितम्। अङ्गवृत्तपरिभाषया वा समाधेयम्।

अदस औ सुलोपश्च (७।२।१०७)। ननु सोरेवौकारो विधीयतां, त्यदाद्यत्वेन 'असौ' इति [1]सिद्धं, किं सुलोपविधानेन। मैवम्। 'असकौ स्त्री'त्यत्र टापि प्रत्ययस्थात् (७।३।४४) इतीत्त्वप्रसङ्गात्। असुक इति। औत्वाऽभावे

---

**बृहच्छब्दरत्नः**

एव प्रकृतिप्रत्ययस्वरविधायकानां, 'चतेरुरन्नि'ति नित्करणस्य च चारितार्थ्यम्। स्पष्टञ्चेदमवङ्सूत्रे भाष्ये। यद्यपीति। परसप्तम्यामसुङो बहिरङ्गत्वादिति भावः। तत्फलन्तु 'परमपुमानि'त्यत्र परसप्तम्यामसुङ उदात्तत्वसिद्धिः[2]। प्रसङ्गादिति।

---

**लघुशब्दरत्नः**

नित्करणसामर्थ्याऽऽश्रयणमित्यर्थः। [3]फिट्स्वरस्यैवाऽत्राऽप्राप्तेरिति भावः। इदम्=डुम्सुनो नित्त्वम्। यद्यप्यसिद्धमिति। नित्त्वाऽभावेऽपि 'फिषोऽन्त' इति कर्त्तव्ये असुङो बहिरङ्गस्याऽसिद्धत्वात्प्रत्ययस्वरेणोकारस्योदात्तत्वे एव स्थिते, ततोऽसुङ अनुदात्त एवेति भावः। नित्करणमिति। 'व्युत्पत्तिपक्षे' इत्यादिः। उङावितावितीति। लोपेतरेत्सञ्ज्ञाप्रयुक्तकार्याऽर्थमिति भावः। तद् ध्वनयन् तद्व्याख्यामाह—उगित्कार्यार्थ इतीति।

इत्त्वप्रसङ्गादिति। न चेत्त्वविधायके 'आ-आपी'ति प्रश्लिष्टनिर्देशान्नेत्त्वम्। प्रश्लेषसामर्थ्यादित्त्वस्य बाधे 'कारिके' इत्यादावपि इत्त्वाऽनापत्तेः। तस्मात्प्रश्लिष्टनिर्देशो नाऽत्रेत्यत्रैव

---

[1] 'सिद्धे' इति मुद्रितः पाठः।
[2] 'असुङुदात्तत्वे सिद्धिः' इति क. पाठः।
[3] 'फिट्स्वरस्यैवाऽत्र प्राप्तेः' इति मुद्रितः पाठः।

त्यदाद्यत्वम् । सादुत्वम् । 'अमुक' इति त्वसाधुः । सत्वेन मुत्वस्य बाधात् । एवम् 'अमुकी' 'अमुकशर्मा' इत्यादयोऽप्यसाधव एव । 'असुका' 'अदकःशर्मा' इत्यादेरेव न्याय्यत्वात् ।

एत ईद्बहुवचने (८।२।८१) । पारिभाषिकस्य बहुवचनस्य ग्रहणे 'अमीभिरि'त्यादिसिद्धावपि, जसि 'अमी' इति न सिद्ध्येत् । न ह्यत्र एकारस्य बहुवचनपरताऽस्ति । अतो व्याचष्टे—बह्वर्थोक्ताविति ।

न मु ने (८।२।३) । 'ने' इति विषयसप्तमीत्याह—नाभावे कर्त्तव्ये इति । अन्यथा घेः परत्वाऽभावान्नाभावो न स्यादिति भावः । नन्वेवमपि कृते नाभावे सुपि च (७।३।१०२) इति दीर्घः स्यात्, दीर्घं प्रति मुत्व-

**बृहच्छब्दरत्नः**

इदञ्च सूत्रं सर्वनामसञ्ज्ञायामेव, 'कारिके' 'हारिके' इत्यादाविवेति भावः । एतेन 'प्रत्ययस्थादि'तिसूत्रे आकारप्रश्लेषेण आकाररूपे आपि इत्त्वविधानान्न दोषः । न च वृद्धेः पूर्वं प्रवृत्तिः । वृद्धया आकाररूपत्वस्य विनाशोन्मुखत्वादि'ति परास्तम् । न च तत्रेत्त्वं 'कारिके' इत्यादौ स्थानिवद्भावेनैव सुलभमिति वाच्यम् । प्रकृते दोषस्य दुर्वारत्वात् । 'क'प्रत्यये पदसञ्ज्ञायाः सत्त्वेन 'न पदान्ते'तिनिषेधस्य दुर्वारत्वाच्च । न च तत्रेत्त्वं नेष्टमिति वाच्यम् । 'उभ'शब्दे पाठफलप्रतिपादकभाष्यविरोधाऽऽपत्तेः । अत एव 'बहुखट्विको ग्राम' इत्यादौ नेत्त्वम् । अपरनिमित्तत्वेन स्थानिवद्भावाऽभावे आकाररूपाऽऽप्परत्वाऽऽभावात् । किञ्च 'ङ्यापोरदीर्घत्वे' इतिवार्त्तिकेनाऽऽपः स्थानिवद्भावनिषेधादाप्परत्वमपि दुर्लभमि'त्यपास्तम् । वार्त्तिकाऽन्तरसाहचर्येण ङ्यापोः कार्ये, परस्य वा कार्ये निषेधप्रवृत्तेश्च । अत एव 'प्राप्तजीविक' इति भाष्यप्रयोगः सङ्गच्छते । विषयसप्तमीति । अयं भावः—नाभावे विषये मुत्वं नाऽसिद्धम् । तच्च नाभावं प्रत्येवेति नाऽऽग्रहः । एतेन 'त्यदाद्यत्वे मुत्वस्याऽसिद्धत्वेन इनादेशगुणयोर्दुर्वारत्वेन सूत्रमसम्बद्धमि'ति मन्दशङ्का निरस्ता । नाभावे

**लघुशब्दरत्नः**

भाष्ये स्पष्टम् । एतेन 'विभक्तावि'त्यस्य त्यदादीनामः (७।२।१०२) इत्यत्र विषयसप्तमीत्वमपास्तम् । एवं हि विभक्त्युत्पत्तेः पूर्वं त्यदाद्यत्वे, टापि, सौ, 'अदस' इत्यन्त्यस्यौत्वेऽपि स्थानिवत्त्वेनाऽऽप्त्वादित्त्वाऽऽपत्तेः । निर्दिष्टपरिभाषायां सत्यां विषयसप्तम्या वक्तुमशक्यत्वाच्चेति दिक् । न्याय्यत्वादिति । क्व चित्सान्तत्वेन मुत्वाऽप्राप्तेः, क्वचित्सत्वेन बाधादिति भावः । न स्यादिति । इनादेश-गुणौ च स्यातामित्यपि बोद्धव्यम् ।

[1] बहुखट्विको ग्रामः' इत्यत्र इत्त्वाऽभावेन 'बहुखट्वक' इत्येव रूपं बोध्यमित्यर्थः ।

स्याऽसिद्धत्वादत आह—कृते चेति। संनिपातपरिभाषया वा समाधेयम्।

अत्रेदमवधेयम्—अधुना(५।३।१७)इतिवदमुनेति वक्तव्ये 'न मु ने' इत्युक्ति'र्ने'ति योगविभागाऽर्था। तेन 'रामो' 'रामेभ्य' इत्यादि सिध्यति। अन्यथा हि[1] रोरसिद्धतयोकारस्येत्सञ्ज्ञालोपौ कथं स्याताम्। न चाऽनुनासिकनिर्देशसामर्थ्यादित्सञ्ज्ञालोपौ प्रत्यसिद्धत्वं नेति वाच्यम्। 'तरुमूलमि'त्यादौ हशि च (६।१।११४) इत्यस्य व्यावृत्तये अतो रोः (६।१।११३) इत्यत्रा[2]ऽप्यनुनासिकस्यैव निर्देशेन, तत्रैव चरितार्थत्वात्। न च अतो रोः (६।१।११४) इत्यत्र माऽस्त्वनुनासिकता, प्रतिपदोक्तग्रहणेनैव निर्वाहादिति वाच्यम्। एवमपि 'देव रुही'त्यत्र रुधातोर्दुर्वारत्वात्। 'राम' इत्यादावपि अनुनासिकस्य रोः श्रवणस्याऽऽपाद्यमानतया चरितार्थत्वस्य सुवचत्वाच्च। एवञ्च स्थानिवत्सूत्रस्याऽपि प्रवृत्तौ पदत्वाद्विसर्गोऽपि लभ्यते। प्रत्ययः (३।१।१) परश्च (३।१।२) इत्यादिनिर्देशा, यत्वविधावशूग्रहणञ्चेह लिङ्गमिति दिक्।

इति हलन्ताः पुल्लिङ्गाः।

---

बृहच्छब्दरत्नः

कर्त्तव्ये इति। चिकीर्षया नाभावविषयस्य सत्त्वेनाऽसिद्धत्वाऽभावस्य सुलभत्वात्। असुनेतीति। लाघवात्, प्रकरणाच्चाऽसिद्धत्वाऽभावस्यैव निपातनम्। एवञ्चाऽन्यत्र 'अमुने'ति नाऽऽपाद्यम्।

अशूग्रहणञ्चेति। यत्तु 'त्रिपादीस्थे 'स्थानिवदादेश' इत्यस्याऽप्रवृत्तौ 'देवाः सन्ती'त्यादौ रेफस्य पदान्तत्वाऽभावेन विसर्गाऽप्रवृत्तौ रोर्यादेशव्यावृत्त्या अशूग्रहणस्य चारितार्थ्येन कथं ज्ञापकते'त्याहुः। तन्न। 'प्रत्ययः' 'परश्चे'त्यादिनिर्देशेन 'रु'रूपादेशस्याऽतिदेशं प्रत्यसिद्धत्वाऽभावबोधनेन पदान्तत्वस्य सुलभत्वात्। अत एव [3]पूर्वोत्तरत्र पदाऽङ्गाऽधिकारस्य सत्त्वेन 'भोभगोरि'ति सूत्रेऽपि सम्बन्धे न दोषः।

इति हलन्ताः पुँल्लिङ्गाः।

---

लघुशब्दरत्नः

हशि चेत्यस्येति। 'तर्वर्थमि'त्यावतो रोः (६।१।११३) इत्यस्य व्यावृत्त्यर्थमित्यपि बोद्धव्यम्। तत्रैव चरितार्थत्वादिति। सामर्थ्याच्चोत्वं सर्वादेशः। एवञ्च=योगविभागेनाऽसिद्धत्वाऽभावे च। अशूग्रहणं चेति। अत्र यद्वक्तव्यं तदुक्तं प्राक्॥

इति हलन्ताः पुँल्लिङ्गाः।

---

[1] हिः मुद्रितेषु त्रुटितः। [2] अपिः मुद्रितेषु त्रुटितः।

[3] 'पूर्वोत्तरशास्त्रेषु पूर्वोत्तरत्र' इति घ. पाठः सम्भवति।

## अथ हलन्तस्त्रीलिङ्गप्रकरणम् ।

**नहो धः** (८।२।३४) । 'द' इत्येव नोक्तम् । तथा हि सति 'नद्धमि'-त्यत्र रदाभ्याम् (८।२।४२) इति नत्वं स्यात्, झषस्तथोः (८।२।४०) इति च न स्यात् । अत्रेदमवधेयम्—'सुष्ठु अनड्वाहो यस्यामि'ति बहुव्रीहौ 'स्वनड्वानि'त्यादि पुंवदेव रूपम् । यत्तु 'गौरादिङीषं कृत्वा 'स्वनड्वाही'त्युदाजहुः । तच्चिन्त्यम् । अनुपसर्जनात् (४।१।१४) इत्यधिकारविरोधात् । **गीरिति** । गॄ निगरणे, शब्दे च । क्विप् । ॠत इत् (७।१।१००) इतीत्त्वम् । र्वोरुपधाया दीर्घः (८।२।७६) । **पूरिति** । पॄ पालनपूरणयोः । उदोष्ठ्यपूर्वस्य (७।१।१०) इत्युत्त्वम् । **आशिषाविति** । 'आशासः क्वावुपसङ्ख्यानमि'त्युपधाया इत्त्वम् । शासिवसि (८।३।६०) इति षत्वम् ।

**इति हलन्ताः स्त्रीलिङ्गाः ।**



## अथ हलन्तनपुंसकलिङ्गप्रकरणम् ।

**अन्वादेश इति** । 'अयश्च अम्येवे'ति व्याख्यातारः । तस्य लुका

---

**बृहच्छब्दरत्नः**

'ध'वचनं दादिवद्धष्भावे नोपयुक्तमित्याशयेनाऽऽह—द इति । न स्यादिति । न च 'झषस्तथोर्धोऽध' इति धत्वे, सन्निपातपरिभाषया जश्त्वाऽप्रवृत्तिः । जश्त्वस्याऽसिद्धत्वेन सन्निपातपरिभाषाया अप्रवृत्तेः । अत एव 'पास्पर्द्धी'त्यादौ जश्त्वोपन्यासो माधवादिकृतः सङ्गच्छते । न च 'दत्तमि'त्यादौ दान्ताद्यादेशे नत्वादिदोषाणां सन्निपातपरिभाषया वारणं वक्ष्यमाणं विरुध्येतेति वाच्यम् । [1]'इत्ति किती'त्यत्र द्वितकारनिर्देशसामर्थ्यादसिद्धत्वाऽभाव' इत्यादि वक्ष्यते ।

इति हलन्ताः स्त्रीलिङ्गाः ।

इत्यादि तु त्यदाद्यत्वेनेति । न च परत्वेन त्यदाद्यत्वे तत एनदादेशे 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति न्यायेन त्यदाद्यत्वं दुर्लभमिति वाच्यम् । अपवादत्वात्,

---

**लघुशब्दरत्नः**

ननु संनिपातपरिभाषया नत्वं न स्यादत आह—झष इति । धत्वे कृते संनिपातपरिभाषाया अनित्यत्वात् 'नद्धमि'त्यादौ जश्त्वं बोध्यम् ।

इति हलन्ताः स्त्रीलिङ्गाः ।

अम्येवेति । औशसादिष्वेनेनैव सिद्धिरिति भावः । त्यदाद्यत्वेनेति । न च येन

---

[1] 'द्यतिस्यतिमास्थामित्ति किति' इत्यत्रेत्यर्थः ।

लुप्तत्वेऽपि वचनसामर्थ्यात्प्रत्ययलक्षणमित्याहुः। वस्तुतस्तु सूत्रे एव एनद्वक्तव्यः। 'एनम्' 'एनौ' इत्यादि तु त्यदाद्यत्वेन सिद्धम्। क्लीबेऽमि लुका लुप्तेऽपि तकारोच्चारणसामर्थ्यादेनदादेशः। न चैवम् 'एतच्छ्रितक' इत्यत्राऽपि तदापत्तिः। एकपदाऽऽश्रयत्वेनाऽन्तरङ्गे स्वमोर्लुकि चरितार्थत्वेन, बहिरङ्गे सामासिके लुकि तदप्रवृत्तेः।

रोऽसुपि (८।२।६९)। अहर्भातीति। प्राचा तु अहन् (८।२।६८)

बृहच्छब्दरत्नः

अन्तरङ्गत्वाच्च एनदादेशस्यैव पूर्वं प्रवृत्तेः। 'अन्वादेशे वर्त्तमानयोरिदमेतदोरि'-त्यर्थस्य सत्त्वेन उपसर्जनेऽप्राप्तेः। 'अभिव्यक्तपदार्था ये' इति न्यायेन सञ्ज्ञायां न। तकारोच्चारणेति। न च 'त्यदादीनाम' इत्यस्य बाधेन चारितार्थ्यम्। विनिगमनाविरहात्। [1]'इकोऽची'त्यनेन तस्य काचित्कतायाः क्लृप्तत्वाच्च। किञ्चाऽनेकोदाहरणे त्यदाद्यत्वस्य प्रवृत्तिः, [2]एकस्मिन्नेवोदाहरणे 'न लुमते'तिनिषेधस्य। अपि च निषेधसूत्राणां 'क्ङिति चे'तिसूत्रे परिभाषात्वाऽङ्गीकारेण विध्यपेक्षया दुर्बलत्वात्तद्बाध एवोचितः। अपि च [3]विधिसापेक्षत्वेन निषेधे नैर्बल्यं स्पष्टमेव। किञ्च 'मध्येऽपवाद'न्यायेन निषेधबाध एवोचित इति दिक्।

रोऽसुपि। 'असुपी'ति प्रसज्यप्रतिषेधो, न पर्युदासः। 'दीर्घाहो निदाघ' इत्यादौ रेफाऽऽपत्तेः। [4]सुब्भिन्न'निदाघ'शब्दस्य सत्त्वात्। 'अहर्ददाती'त्यत्र निषेधस्तु न प्रवर्त्तते। 'न लुमते'ति निषेधेन सुप्परत्वाऽभावात्।

लघुशब्दरत्नः

नाप्राप्तिन्यायेनैनदस्त्यदाद्यत्वाऽपवादत्वेन, तत्र कृते, कथं त्यदाद्यत्वम्। न चोपसर्जने एनच्चरितार्थः। 'त्यदाद्यत्वेन सिद्धमि'ति भाष्याऽसङ्गत्याऽऽपत्तेः। एनदोऽप्युपसर्जने एतदस्त्रतसोः (२।४।३३) इति साहचर्येणाऽप्रवृत्तेः स्वीकारात्। न च नपुंसकेऽमि तच्चारितार्थ्यम्। द्वितीयादिग्रहणस्यैवमप्यचारितार्थ्यादिति वाच्यम्। आर्द्धधातुके (२।४।३५) इत्येतत्साहचर्येणाऽस्याऽपि द्वितीयादिविषये पूर्वमेव प्रवृत्तेरित्याशयात्। एतत्सर्वं भाष्ये 'यद्येनत् क्रियते' इत्याद्येकदेश्युक्त्या ध्वनितम्। स्वमोर्लुकीति। तद्विषये न लुमता (१।१।६३)इति निषेधबाधेन चारितार्थ्येन, बहिरङ्गलुग्विषये तद्बाधे न मानमिति भावः। वस्तुत एतत्सर्वमत्रत्यकैयटाऽनुरोधेन। तकारोच्चारणसामर्थ्येन नपुंसकलुकीवाऽत्राऽपि सामर्थ्यादेवैनत्प्रवृत्तेः। न च बहिरङ्गत्वम्। लुग्विषये बहिरङ्गपरिभाषाऽप्रवृत्तेः। अत एव 'एनदादेशे 'एतच्छ्रितक' इति न सिद्ध्यति, 'एनच्छ्रितक' इति प्राप्नोती'ति भाष्यं सङ्गच्छते। एनद्विधानेन एतत्सूत्रविषये न लुमता

[1] 'एकोऽची'त्यनेन' इति ख. पाठः।
[2] 'एतस्मिन्नेव' इति ख. पाठः।
[3] 'विधिसापेक्षाऽतिनेषेधकत्वेन' इति क. पाठः।
[4] 'सुबभिन्ननिदाघसदशब्दस्य' इति क. ख. पाठः।

इत्युपन्यस्तं, तदिहाऽनुचितम्, 'अहोभ्यामि'त्याद्यर्थतया कथं चिद्योज्यम्।

बृहच्छब्दरत्नः

अहोभ्यामिति। ननु रुत्व-रत्वयोरसिद्धत्वान्नलोपः प्राप्नोति। न च नलोपे अकारस्य रौ, रे वा विशेषाऽभावेनाऽन्यतरेणैवोपपत्तावुभयविधानवैयर्थ्यमिति वाच्यम्। 'हशि चे'तिसूत्रे निर्दिष्टाऽङ्गविकलपरिभाषाया उपस्थितिरि'त्यर्थज्ञापनेन चारितार्थ्यात्। आचत्वाणण्यन्ते टिलोपे विशेषस्य स्पष्टत्वाच्च। सम्बुद्धौ नलोपस्य निषेधेन 'अहर्गच्छ' 'दीर्घाहो निदाघ' इत्यादावुत्त्व-भावा-ऽभावसम्पादनेन सार्थक्याच्च। न चैवं 'रोऽसुपी'त्यस्य स्थाने 'रसावि'त्येव सिद्धे गुरुभूतन्यासो व्यर्थ इति वाच्यम्। सप्तमीबहुवचने परे रेफाऽऽदेशाऽऽपत्तौ, 'रोः सुपी'तिनियमेन विसर्गाऽनापत्त्या दोषस्योद्धटत्वाच्च। 'रसी'ति न्यासे अल्विधित्वेन सोर्लोपे रत्वाऽऽपत्तेः। अत एव 'रूपरात्रिरथन्तरेष्वि'तिवार्त्तिकाऽऽरम्भसामर्थ्यान्नलोपो ने'त्यपास्तम्। तस्याऽपि सम्बुद्धौ चारितार्थ्यात्। न हि तस्य समासे एव प्रवृत्तिरित्यत्र प्रमाणमस्ति। षष्ठाऽध्यायमारभ्य समर्थपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वात्। न च 'अहन्नि'ति सूत्रे नकाराऽन्तरं प्रश्लिष्य 'अह्नो [1]नकारस्ये'ति व्याख्यानसामर्थ्यान्नलोपाऽभाव इति वाच्यम्। नलोपस्य जागरूकत्वेनेदृशव्याख्यानस्यैवाऽसम्भवात्। 'अन उपधालोपिन' इत्यादावल्लोपाऽभावादिवत्स्पष्टप्रतिपत्तये नलोपाऽभावस्य युक्तत्वाच्च। समासे 'अहर्गण' इतिवद्रेफादेशाऽऽपत्त्या, समासे षष्ठीश्रवणाऽऽपत्त्या च, सूत्रस्वरसविरोधाऽऽपत्तेश्च। किञ्च सम्बुद्धौ नलोपनिषेधेन, नान्तस्य सत्त्वात्तत्रैव रुत्वाऽऽपत्तिः। 'रोऽसुपी'ति सूत्रे तु नलोपबाधे मानाऽभावेन 'न' इत्यस्य निवृत्तिरेव संभाव्येतेति चेन्न। 'अहन्नि'त्यावर्त्त्यं नलोपाऽभावं निपात्य, द्वितीयेन रुर्विधेय' इति मूले एव समाहितत्वात्। युक्ततरश्चैतत्। स्वरूपप्रतिपादनद्वारा विकाराऽभावे तात्पर्यकल्पने, षष्ठ्यनुच्चारणे, नलोपाऽकरणे च बीजाऽनापत्तेः। एवञ्च सन्नियोगशिष्टन्यायेन यत्र नलोपाऽभावस्तत्रैव रुत्वरत्वयोः प्रवृत्तिः। तेन [2]'पुण्याहाभ्यामि'त्यादौ, 'अहन्'शब्दादाचक्षाणाऽर्थे णिचि, टिलोपे 'अह' इत्यादौ च न दोष इति ध्येयम्। 'रात्राह्नाहाः पुंसी'ति सूत्रे 'रात्र'साहचर्येण कृतसमासान्ते एव [3]प्रवृत्तावहन्निर्देशेनैव सिद्धावह्नादिग्रहणसामर्थ्येन समासान्ते 'अह'प्रयुक्तकार्याऽभावस्य बोधनान्न दोष' इत्यपि

लघुशब्दरत्नः

(१।१।६३) इत्यस्याऽप्रवृत्तिरिति तदाशयः। वस्तुत एषामभिधानमेव। अस्यां शङ्कायां 'यथालक्षणमप्रयुक्ते' इति भाष्योक्तेः। विषयसप्तम्यां मानाऽभावे तु एनैनतौ पृथग्वक्तव्यावित्याहुः।

[1] 'अह्नो नकारस्य' इति क. ख. पाठः।

[2] 'पुण्याहोभ्याम्' इत्यपि क्वचित् पाठः।

[3] 'अहोनिर्देशेनैव' इति ख. पाठः।

अस्तृक्शब्दस्त्विति । एतच्च क्षीरस्वामिग्रन्थे स्पष्टम् । बहूर्ज्जीति । 'अन्त्यादि'ति च वाचनिकम् । तथा च वार्त्तिकं—'बहूर्जि प्रतिषेधः' '[1]अन्त्यात्पूर्वं नुममेके' इति । भाष्ये तु 'अचः परो यो झल् तदन्तस्य नुमि'त्यर्थमाश्रित्य प्रथमं वार्त्तिकं प्रत्याख्यातम् । एवन्तु 'उर्द माने' 'गर्ह गर्हायामि'त्यादीनामपि क्विबन्तानां नुमा न भाव्यमेव । यथोत्तरं [2]हि मुनीनां प्रामाण्यादिति दिक् । अल्लोपस्येति । 'क्वौ लुप्तं न स्थानिवदि'ति तु नेहाऽऽश्रीयते । तस्य क्वाचित्कत्वात् । 'क्वौ विधिं प्रति न स्थानिवदि'-

---

**बृहच्छब्दरत्नः**

वदन्ति । क्षीरस्वामिग्रन्थ इति । अत्राऽरुचिबीजन्तु पूर्वमेव निरूपितम् । किञ्च 'स्रक्' 'ऋत्विक्'शब्दयोर्निपातनादेव कुत्वमि'त्यपि वक्तुमशक्यम् । अपदान्तेऽपि तदापत्तेः । पदान्ते एव निपातनाऽङ्गीकारे तु 'स्रजौ' 'स्रज' इत्यादावमागमाऽना-पत्तिरि'ति । अचः पर इति । अत एवाऽज्ग्रहणं चरिताऽर्थम् । अन्यथा 'अक' इत्येव ब्रूयात् । [3]यद्वा अकारग्रहणमेव कुर्यात् । इगन्तानामिकोऽचि विभक्तावित्यनेनैव सिद्धत्वात् । नपुंसके ह्रस्वस्य दुर्वारत्वेनैजन्ता न सन्त्येव । अत एव 'हेड'-धातोर्विचि नपुंसकत्वे नुम् भवत्येव । न चैवमजन्तस्य नुम्न स्यादिति वाच्यम् । आवृत्त्या तदर्थस्याऽप्यङ्गीकारात् ।

यथोत्तरमिति । सूत्रभाष्यप्रामाण्येन 'बहूर्जि नुम्प्रतिषेध' इति वार्त्तिक-सिद्धाऽभावाऽनुवादकमात्रम्, न तु निषेधकमिति भावः । 'ऊर्न्जि । न-र-जानां

---

**लघुशब्दरत्नः**

अचः पर इति । नपुंसकस्य (७।१।७२) इति सूत्रे अज्ग्रहणसामर्थ्येनाऽऽवृत्त्या 'अचः' इत्यस्य झल्विशेषणत्वम् । अन्यथा इगन्तानाम् इकोचि (७।१।७३) इत्येव सिद्धया, एजन्तेषु नपुंसकह्रस्वत्वेन चाऽकारग्रहणमेव कुर्यात् । आवृत्तौ मानञ्च दाण्डिनायन (६।४।१७४) इति सूत्रे 'हिरण्मयानी'तिनिर्देश एव । 'काष्ठतङ्क्षी'त्यादौ झल्त्वजातेरचः परत्वाद्भवत्येव नुम् । ऊर्क्शब्दादौ तु नेति भावस्तदाह—एवमिति । एतेन 'युज्'शब्दात् [4]नपुंसके शौ नपुंसकस्य (७।१।७२) इति, युजेः (७।१।७१) इति च नुमद्वयमि'त्यपास्तम् । युजेः (७।१।७१) इत्यस्य नित्यत्वात् पूर्वं प्रवृत्तौ, अचः परझलोऽभावेन नपुंसकस्य (७।१।७२) इत्यस्याऽप्राप्तेः । वस्तुत ऊर्जादेः क्विपि नपुंसके नुम्विषये अनभिधानमेव, वार्त्तिकाऽनुरोधात् ।

---

[1] 'अन्त्यात्पूर्वो नुमित्येके' इति मुद्रितेषु पाठः ।
[2] हिः घ. छ. नास्ति ।
[3] 'अन्यथा अकारग्रहणमेव' इति ख. पाठः ।
[4] 'नपुंसके शौ' इति मुद्रितेषु त्रुटितम् ।

त्यस्यैव सार्वत्रिकत्वादिति स्पष्टमाकरे।

**अश्वाक्षिभूतानीति**। सप्तविंशत्यधिका पञ्चशतीत्यर्थः (५२७)। तथा हि—सौ नवानाम् अन्त्यस्य द्वित्वेऽष्टादश। औङि चतुर्णां मध्ये पूजार्थानां त्रयाणां ञद्वित्वे सप्त। अनुनासिकस्तु नास्ति, प्रगृह्यत्वात्। जसि ञद्वित्वस्य, अनुनासिकस्य च विकल्पाद् द्वादश (१२)। सङ्कलनया सप्तत्रिंशत् (३७)। एवं द्वितीयायामपि (३७)। टायां चतुर्दश (१४)। भ्यामि अष्टचत्वारिंशत् (४८), 'भ'प्राग्वर्ण–य–मानां द्वित्वात्। भिसि चतुर्विंशतिः (२४)। ङयि सप्त (७)। अनुनासिकस्तु नाऽस्ति। एकारस्याऽनण्त्वात्। भ्यसि भ्याम्वत् (४८)। ङसौ, ङसादिपञ्चके च प्रत्येकं चतुर्दश (१४)। सुपि गत्यर्थे त्रयाणां ककार-षकारयोर्द्वित्वेन, उकारस्याऽनुनासिकेन च चतुर्विंशतिः (२४)। एवं कुक्पक्षे षण्णां ङ-षयोर्द्वित्वे, अनुनासिके च अष्टचत्वारिंशत् (४८)। कुगभावे त्रयाणां ङकारद्वित्वे, अनुनासिके च द्वादश (१२)। सु १८, औ ७, जस् १२, अम् १८, औ ७, शस् १२, टा १४, भ्याम् ४८, भिस् २४, ङे ७, भ्याम् ४८, भ्यस् ४८, ङसि १४, भ्याम् ४८, भ्यस् ४८। ङस्-ओस्-आम्-ङि-ओस्—प्रत्येकम् १४। सुप् ८४॥

अत्रेदमवधेयम्—पूजायां जसि नुमागमे कृते, तस्य पाक्षिके द्वित्वे ञकारत्रयसहितं रूपषट्कम् (६)। एवं शस्यपि (६)—इति सङ्कलनया द्वादश

---

**बृहच्छब्दरत्नः**

संयोग' इति मूलग्रन्थो यथाश्रुताऽभिप्रायेण। आकरे इति। 'दीधीवेवीटामि'ति सूत्रे' इति शेषः। अजन्तलक्षणो नुम् न। अन्त्याऽचोऽवयवत्वे, समुदायाऽव-

---

**लघुशब्दरत्नः**

अन्यथा भाष्य-वार्त्तिकयोः फलभेदाऽऽपत्तेरित्याहुः। आकरे इति। दीधीवेवीटाम् (१।१।६) इति सूत्रे, न पदान्त (१।१।५८) सूत्रे च भाष्य-कैयटयोरित्यर्थः।

सङ्कलनयेति। [१]एतत्कृत्यं मन्दबोधनम्। चतुर्दशेति। पूजार्थानां त्रयाणां ञद्वित्वात्, सप्तानामनुनासिकविकल्पाच्च। चतुर्विंशतिरिति। भप्राग्वर्त्तिवर्णविसर्गद्वित्वात्। विसर्गे तु नाऽनुनासिकः। 'अप्रगृह्यस्ये'ति पर्युदासेनाऽऽक्षरसमाम्नायिकेष्वेव तत्प्रवृत्तेः। ङषयोरिति। षकारद्वित्वं 'शरः खय' इत्यनेन।

---

[१] 'तत्कृत्यम्' इति लिखितादर्शेषु पाठः।

(१२)। तथा च 'रूपं ग्रहाऽग्निभूताख्यम्' (५३९) इति भाष्यव्यतिरिक्तमते इति दिक्। यत्तु वदन्ति—

'ऊह्यमेवं द्वित्व-पुनर्द्वित्व-लोपविकल्पनैः।
अष्टपञ्चाशतो वृद्ध्या त्रिसप्तत्यधिकं शतम्' (१७३)॥ इति।

तच्चिन्त्यम्। पुनर्द्वित्वस्याऽप्रामाणिकत्वात्, [1]रूपाऽऽनन्त्यप्रसङ्गकत्वाच्च। अष्टपञ्चाशतो वृद्धावुपपत्त्यभावाच्चेति दिक्।

तिरश्ची इति। भत्वात् अचः (६।४।१३८) इत्यल्लोपः। 'अलोपे' इति वचनात्तिर्यादेशाऽभावः। स्वप् इति। 'शोभना आपोऽस्मिन् सरसी'ति बहुव्रीहिः। ऋक्पूः (५।४।७४) इति समासान्ते प्राप्ते, न पूजनात् (५।४।६९) इति निषेधः। यत्तु 'अनित्यत्वादि'ति प्राचोक्तम्। तत्प्रामादिकम्। द्व्यन्तरुपसर्गेभ्यः (६।३।९७) इति तु न भवति। तत्र 'अप' इति कृतसमासान्तस्याऽनुकरणमि'ति वक्ष्यमाणत्वात्। सुपुमांसीति। पुंसोऽसुङ् (७।१।८९) इति सूत्रे 'सुटी'ति व्याचक्षाणस्य प्राचो मते शसि नैतत्सिध्येत्। औङि चाऽतिव्याप्तिः। अस्माकन्तु 'सर्वनामस्थाने' इति यथासूत्रं ब्रुवतां सर्वेष्टसिद्धिरिति भावः।

इति हलन्ता नपुंसकलिङ्गाः॥

---

बृहच्छब्दरत्नः

यवत्वे वा पूर्वविधित्वाऽभावात्। भाष्यव्यतिरिक्तमत इति। 'अचः परो यो झल् तदन्तादि'ति, 'वर्णग्रहणे जातिग्रहणमि'ति च नाऽऽश्रीयते इति भावः।

इति हलन्ता नपुंसकलिङ्गाः॥

---

लघुशब्दरत्नः

भाष्यव्यतिरिक्तमते इति। भाष्यमते 'अचः परो यो झलि'त्यर्थेन प्रकृते अचः परझल्त्वजातेरभावान्नुमोऽप्राप्तेः। एवञ्चैतान्यसाधून्येवेति भावः। उपपत्त्यभावादिति। नियमे मानाऽभावादिति भावः। प्रामादिकमिति। शास्त्रेणैव सिद्धेरिति भावः।

इति हलन्ता नपुंसकलिङ्गाः॥

---

[1] 'रूपानन्त्यप्रसङ्गाच्च' इति मुद्रितेषु पाठः।

## अथाऽव्ययप्रकरणम् ।

**स्वरादिनिपातमव्ययम्** (१।१।३७) । [१]'स्वरादयश्च निपाताश्चे'ति समाहारद्वन्द्वः । **स्वरिति** स्वर्गे, परलोके च । **अन्तरिति** मध्ये । **प्रातरिति**[२] प्रत्यूषे । **पुनरिति** अप्रथमे, विशेषे च । **सुनुतर्** अन्तर्धाने । स्वराद्याः पञ्च रेफान्ताः ।

**उच्चैस्** महति । **नीचैस्** अल्पे । **शनैस्** क्रियामान्द्ये । **ऋधक्** सत्ये । 'वियोग-शीघ्र-सामीप्य-लाघवेष्वि'त्यन्ये । **ऋते** वर्जने । **युगपदिति** एककाले । **आराद्** दूर-समीपयोः । **पृथक्** भिन्ने । **ह्यस्** अतीतेऽह्नि । [३]**श्वस्** अनागतेऽह्नि । **दिवा** दिवसे । **रात्राविति** निशि । **सायमिति** निशामुखे । **चिरमिति** बहुकाले । **मनाक्**, **ईषत्** इमावल्पे । **जोषं** सुखे, मौने च । **तूष्णीमिति** मौने । **बहिस्**, **अवस्** इमौ बाह्ये । **समयेति** समीपे, मध्ये च । **निकषेत्यन्तिके** । **स्वयमिति** आत्मनेत्यर्थे । **वृथेति** व्यर्थे । **नक्तमिति** रात्रौ । **नञ्** निषेधे । **हेताविति** निमित्ते । **इद्धेति** प्राकाश्ये । **अद्धा इति** स्फुटा-ऽवधारणयोः । 'तत्त्वा-ऽतिशययोरि'-त्येके । **सामीत्यर्द्ध-जुगुप्सयोः**[४] । **वत्** । तेन तुल्यम् (५।१।११५) इत्यादिभिर्विहितो वतिप्रत्ययः । यस्तु 'उपसर्गाद्धात्वर्थे' इति विहितः, स नेह गृह्यते ।

---

**बृहच्छब्दरत्नः**

स्वरिति । 'भू सत्तायामि'त्यादाविव प्रयोगस्थानामनुकरणम् । अनुकार्या-ऽनुकरणयोरभेदविवक्षायां प्रातिपदिकत्वाऽभावेन सुबनुत्पत्तिः । अत एव विसर्गादिकं न । चिरमिति । केचित्तु 'चिरमि'ति मान्ताऽव्ययं न युक्तम् । 'सायंचिरमि'ति सूत्रे 'चिरमि'त्यस्य वैयर्थ्याऽऽपत्तेः । न च ठञ्बाधनाऽर्थम् । [५]'ट्यु'-प्रत्ययेनैव बाधसिद्धेरित्याहुः । वतिप्रत्यय इति । 'तद्धितश्चाऽसर्वविभक्तिरि'ति

---

**लघुशब्दरत्नः**

इत्यादिभिरिति । आदिना तत्र तस्येव (५।१।११६) तदर्हम् (५।१।११७)।

---

[१] 'स्वरादयो निपाताश्चेति' इति मुद्रितेषु पाठः एकश्चकारस्त्रुटितः ।

[२] इतिः ङ. नास्ति ।

[३] 'श्वोऽनागतेऽह्नि' इति लिखितेषु ससन्धिः पाठः ।

[४] 'जुगुप्सितयोः' इति ङ. पाठः ।

[५] 'लप्रत्ययेनैव' इति क. ख. पाठः ।

'यदुद्वतो निवतो यासि' । सना, सनत् इत्येते नित्ये । उपधेति भेदे । तिरस् अन्तर्द्धौ, तिर्यगर्थे, परिभवे च । अन्तरेति मध्ये, विनाऽर्थे च । अन्तरेणेति वर्ज्जने । ज्योगिति [1]कालभूयस्त्वे, प्रश्ने, शीघ्राऽर्थे, सम्प्रत्यर्थे च । कमिति वारि-मूर्द्ध-निन्दा-सुखेषु । शं सुखे । सहसेत्याकस्मिकाऽविमर्शयोः । विनेति वर्जने । नानेत्यनेक-विनार्थयोः । स्वस्तीति मङ्गले । स्वधा पितृदाने । अलं भूषण-पर्याप्ति-शक्ति-वारण-निषेधेषु । वषट् वौषट् श्रौषट् एते हविर्दाने । अन्यदित्यन्याऽर्थे । अस्तीति सत्तायाम् । उपांशु इति अप्रकाशोच्चारण-रहस्ययोः । क्षमेति क्षान्तौ । विहायसेति वियदर्थे । दोषेति रात्रौ । मृषा मिथ्येत्येतौ वितथे । मुधेति व्यर्थे । पुरेत्यविरते, चिराऽतीते, भविष्यदासन्ने च । मिथो मिथस् एतौ रहः-सहाऽर्थयोः । प्रायस् इति बाहुल्ये । मुहुस् पुनरर्थे । प्रवाहुकमिति समकाले, [2]ऊर्ध्वाऽर्थे च । प्रवाहिकेति पाठान्तरम् । आर्यहलमिति बलात्कारे । शाकटायनस्तु—'आर्ये'ति प्रतिबन्धे, 'हलमिति प्रतिषेध-विवादयोरि'त्याह । [3]अभीक्ष्णमिति पौनःपुन्ये । साकं सार्द्धम्—एतौ सहाऽर्थौ । नमस् नतौ । हिरुक् वर्जने । धिक् निन्दा-भर्त्सनयोः । अम्

---

बृहच्छब्दरत्नः

सूत्रेऽपि पठितो वतिः । एवं तसिरपि बोध्यः । नेहेति । 'स्वस्ति वाचयति' 'स्वः पश्ये'त्यादौ पाठसामर्थ्येन सत्त्ववाचकत्वे सञ्ज्ञाप्रवृत्तावपि, प्रकृतेऽन्वर्थसञ्ज्ञा-बाधकल्पने मानाऽभावेन, [4]सत्त्वाऽर्थकत्वेनाऽन्यतरपाठस्य निर्णेतुमशक्यत्वाच्च, उभयत्र पाठेन परस्परमनित्यत्वज्ञापनाच्च सत्त्वाऽर्थके नैव प्रवृत्तिः । 'स्वर-विभक्तिप्रतिरूपकाश्चे'त्यस्य चाद्यन्तर्गणसूत्रत्वेनाऽसत्त्वाऽर्थके एव प्रवृत्तेर्निश्चि-तत्वेनाऽस्तिशब्दस्य स्वरादिपाठो धनवाचिनः सत्त्ववचनस्याऽव्ययाऽर्थमित्याहुः ।

विनेतीति । 'तद्धितश्चाऽसर्वविभक्तिरि'त्येव सिद्धे अत्र 'विना'नाना'शब्दयोः पाठेन कार्यसिद्धिः । केचित्तु 'विना' 'नाने'ति[5] आबन्तौ । तयोरर्थाऽन्तरे अव्यय-

---

लघुशब्दरत्नः

इत्येके इति । अत्राऽरुचिबीजं 'किमेत्तिङ (५।४।११) इति विहितस्य तद्धितश्च (१।१।३८)

---

[1] 'काले' इति तु मुद्रितेषु पाठ आसीत् ।

[2] 'सिचद्धर्थे' इति घ. मु. पाठः ।

[3] 'आभीक्ष्ण्यम्' इति मुद्रितः पाठः ।

[4] 'सर्वार्थवाचकत्वेन' इति ख. पाठः । [5] ,आजन्तौ' इति पाठान्तरम् ।

**शैघ्र्ये, अल्पे च। आम् अङ्गीकारे। 'किमेत्तिङव्यय (५।४।११) इति कास्प्रत्ययात् (३।१।३५) इत्यादिभिश्च विहितः प्रत्ययोऽपीह गृह्यते' इत्येके। 'पपाचतराम्'। 'कारयामास'। प्रताम् ग्लानौ। प्रशान् समानाऽर्थे। प्रतान् विस्तारे। मा, माङ् एतौ [1]निषेधा-ऽऽशङ्कयोः।**

---

बृहच्छब्दरत्नः

त्वाऽर्थम्, अन्तोदात्ताऽर्थश्चाऽत्र पाठ इत्याहुः। इत्येके इति। अत्राऽरुचिबीजन्तु-आद्यस्य 'तद्धितश्चाऽसर्वविभक्तिरि'ति सूत्रेण, द्वितीयस्य तु 'कृन्मेजन्त' इति सूत्रेण सिद्धिः। 'कृदन्तं यन्मान्तमि'त्यर्थात्। श्रुत्या च मान्तं, प्रत्ययलक्षणेन च कृदन्तम्। न चैवं 'लवमाचक्षाणो लौरि'त्यादावतिव्याप्तिः, णिजन्तात्क्विपः सत्त्वेन प्रत्यय-लक्षणेन कृदन्तत्वादिति वाच्यम्। स्वरादिगणे 'प्रशानि'ति प्रातिपदिकमात्रपाठेन धात्वन्तस्य प्रत्ययलक्षणेनाऽव्ययत्वाऽभावज्ञापनात्। स हि 'प्रशान् देवदत्त' इत्यादि-प्रयोगस्थस्य [2]समाध्यर्थक'शम्'धातोः स्वार्थे अप्रत्यये,[3] नाऽन्तस्याऽव्ययाऽर्थम्। तत्र हि नत्वस्याऽसिद्धत्वेन 'कृन्मेजन्त' इति सूत्रेणैव सिद्धे किन्तेन?। न च नान्त'शान'धातोरेव रूपमस्तु। न चैवं नत्वाऽसिद्धत्वाऽभावेन नलोपाऽऽपत्तिः, स्वरादिगणे नान्ताऽनुकरणेन तदभावस्य ज्ञापनादिति वाच्यम्। भाष्यप्रामाण्येनो-क्तधातोः क्विब्विचोरनुत्पादात्। यद्वा नाऽत्राऽव्ययत्वम्। उत्सर्गतः प्रथमाया एकवचनोत्पत्तावपि हल्ङ्याादिलोपेन सिद्धेः। 'आम' इत्यनेन लुक्सिद्धेश्च। तत्र हि 'लेरि'ति नाऽनुवर्त्तते। न चैवमामन्तोत्तरं रूपबाध्यश्रवणाऽऽपत्तिः। आमन्तोत्तरं कृञादिप्रकृतिकतिङन्तादुत्पन्नरूपबादिना अर्थस्य द्योतितत्वेनाऽऽमन्तोत्तरमप्राप्तेरेव सत्त्वात्। न च विनिगमकाऽभावः। आमन्तस्य सङ्ख्याकर्त्रादिविषयकोत्थिता-काङ्क्षत्वेनाऽपरिसमाप्ताऽर्थत्वेनाऽऽमन्तोत्तरं तिङन्तस्य परिसमाप्ताऽर्थत्वेन विनि-गमकस्य स्पष्टत्वात्। अत एवाऽकज् न[4]। अत एव 'कृञ्चाऽनुप्रयुज्यते लिटी'-तिसूत्रस्थाऽव्यवहिताऽर्थबोधकोऽनुशब्दः सङ्गच्छते। अत एव 'क'प्रत्ययोऽपि न। ध्वनितश्चाऽयमर्थो भाष्य-कैयटयोरित्यलमियता।

प्रताम् ग्लानाविति। 'अव्ययमि'त्यन्वर्थसञ्ज्ञाबलादसत्त्वाऽर्थकस्य धर्म-वाचकस्याऽव्ययत्वं, न धर्मिवाचकस्य। तेन 'प्रतामौ' 'प्रताम' इति

---

लघुशब्दरत्नः

**इत्यनेन सिद्धिः, कास्प्रत्ययात् (३।१।३५) इति विहितात्परस्य आमः (२।४।८१) इत्यनेन लुक्सिद्ध्या तस्य तत्त्वे फलाऽभाव' इति।**

---

[1] 'शङ्का-निषेधयोः' इति मुद्रितेषु पाठः।

[2] 'सामाऽर्थक' इति क. ख. पाठः।

[3] 'अप्रत्यये अनिष्टाऽऽपत्तिवारणाऽर्थम्' इति, 'अनिष्टापत्त्या व्यर्थम्' इति वा ख. पाठः।

[4] 'अत एव अकज्' इति ख. पाठः।

आकृतिगण इति । तेनाऽन्येऽपि ज्ञेयाः । तथा हि–कामं स्वाच्छन्द्ये । प्रकाममित्यतिशये । भूय इति पुनरर्थे । साम्प्रतमिति न्याय्ये । परमिति किन्त्वर्थे । साक्षात् प्रत्यक्षे । साचि तिर्यगर्थे । सत्यमित्यर्द्धाऽङ्गीकारे । मङ्क्षु, आशु एतौ शैघ्र्ये । सम्वत् वर्षे । अवश्यं निश्चये । सपदि शैघ्र्ये । बलवदित्यतिशये । प्रादुस्, आविस् इति प्रकाशे । अनिशं, नित्यं, नित्यदा, [1]सदा, अजस्रं, सन्ततम्–एते सातत्ये । उषेति रात्रौ । रोदसी द्यावापृथिव्यर्थे । ॐ इत्यङ्गीकारे, ब्रह्मणि च । भूरिति पृथिव्याम् । भुव इत्यन्तरिक्षे । झटिति, झगिति तरसा इति–शैघ्र्ये । सुष्ठु प्रशंसायाम् । दुष्ठु[2] निकृष्टे । [3]सु पूजायाम् । [4]अद् आश्चर्ये । कु इति कुत्सिते-षदर्थयोः । अञ्जसा इति तत्त्व-शीघ्राऽर्थयोः । मिथु इति द्वावित्यर्थे । भाजक् इति शैघ्र्ये । चिराय, चिररात्राय, चिरस्य, चिरं, चिरेण, चिरात्–इत्येते चिराऽर्थकाः । अस्तमिति विनाशे । आनुषक् आनुपूर्व्ये । अनुषक् अनुमाने । अम्नस् शीघ्र-साम्प्रतिकयोः । स्थाने इति युक्ते । वरमितीषदुत्कर्षे । सुदि शुक्लपक्षे । वदि कृष्णपक्षे । इत्यादि ॥

---

बृहच्छब्दरत्नः

भाष्योदाहरणं न विरुध्यते । 'प्रतामि'ति मान्ताऽव्ययस्य 'तम'धातोर्निष्पत्ति'-रिति पक्षे प्रयोगे 'मोनो धातोरि'ति नत्वं च । 'प्रताम्''प्रतानि'ति मान्त-नान्तयोः पाठसामर्थ्यादित्याहुः । ब्रह्मणि चेति । 'अवतेष्टिलोपश्चे'ति वचनादोमिति सिद्धम् । केचित्तु 'अश्च उश्च [5]मश्चे'ति व्युत्पत्त्या शिवादित्रितयवाचकत्वमङ्गीकुर्वन्ति । तदपि उपायाऽन्तराऽदूषकत्वेन युक्तमेव । स्वरादिगणे तूभयोरप्यवयवश उत्पन्नत्वेन लाक्षणिकत्वाऽविशेषाद्ग्रहणम् । न च 'कृन्मेजन्त' इत्यनेनैव सिद्धिः । उणादीनां 'च्विरव्ययमि'ति नियमात् । इत्यादीति । तेन 'एवञ्चे'त्याद्यर्थकानां 'यावता' इत्यादीनां सङ्ग्रहः । ननु ङकारो[6] विवक्षित, उताऽविवक्षितः ? ।

---

[1] 'सदा' इति मुद्रितेषु नास्ति ।

[2] 'अतिकष्टे' इति मुद्रितेषु पाठः ।

[3] 'शु' इति ङ. पाठः ।

[4] 'अद्' इत्यस्यैव हि 'अद्भुतमि'ति रूपं भवति । 'अह' इति तु मुद्रितः पाठः ।

[5] 'मश्चे'ति इति पाठान्तरम् ।

[6] 'माङ' इत्यत्र ङकार इत्यर्थः ।

[1]च इति समुच्चयादिषु। 'वा स्याद्विकल्पोपमयोरिवाऽर्थेऽपि समुच्चये'। हेति प्रसिद्धौ। अहेति पूजायाम्। एवेत्यवधारणेऽनवक्लृप्तौ च। एवमिति उक्तपरामर्शे। नूनमिति निश्चये, तर्के च। शश्वदिति पौनः-पुन्ये, नित्ये, सहाऽर्थे च। युगपदिति[2] ऐककाल्ये। भूयस् पुनरर्थे, आधिक्ये च। कूपदिति प्रश्ने, प्रशंसायां च। कुविदिति [3]भूयोऽर्थे, प्रशंसायां च। नेदिति[4] शङ्कायां, प्रतिषेध-विचार-समुच्चयेषु च। चेदिति यद्यर्थे। चण् अयं चेदर्थे णित्। समुच्चयादौ त्वननुबन्धः। कच्चिदिति इष्टप्रश्ने। यत्रेति-अनवक्लृप्त्य-मर्ष-गर्हाऽऽश्चर्येषु। 'नाऽवकल्पयामि, न मर्षये, गर्हे, [5]आश्चर्यं वा, यत्र भवान् वृषलं याजयेत्'। नहेति प्रत्यारम्भे। हन्तेति हर्षे, विषादे, अनुकम्पायां, वाक्याऽऽरम्भे च। माकिः, माकिं, नकिरिति त्रयोऽपि वर्जने। 'माङ्-नञौ स्वरादिषूक्तौ। इह पाठस्तु निपातत्वाऽर्थः। तेनाऽऽद्युदात्तत्वं सिद्ध्यती'ति प्राञ्चः। तच्चिन्त्यम्। फिट्स्वरेणाऽपीष्टसिद्धेः। यदप्याहुः—'सत्त्वचनानामपि [6]अव्ययसञ्ज्ञाऽर्थं स्वरादिपाठ' इति। तदपि चिन्त्यम्। लक्ष्मीवाचकस्याऽपि माशब्दस्याऽव्ययत्वाऽऽपत्तेः। तस्मादुभयत्र पाठे फलं चिन्त्यम्।

यावत्, तावत्—एतौ साकल्या-ऽवधि-माना-ऽवधारणेषु। साकल्ये—'यावत्कार्यं तावत्कृतम्'। अवधौ—'यावद् गन्तव्यं तावत्तिष्ठ'। माने—'यावद्दत्तं तावद् भुक्तम्'। अवधारणे—'यावदमत्रं ब्राह्मणानामन्त्रयस्व'। त्वै विशेष-वितर्कयोः। द्वै वितर्के। न्वै इति पाठान्तरम्। रै दाने, अनादरे च। 'रै करोति'। ददातीत्यर्थः। 'त्वं रै किं करिष्यसि'। श्रौषट् वौषट्-

---

**बृहच्छब्दरत्नः**

नाऽऽद्यः। सत्त्ववाचकस्य माङ्त्वाऽभावेन लक्ष्याऽप्रसिद्धेः। अन्त्ये दोषमाह—लक्ष्मीति। यावत्तावदिति। अव्युत्पन्नावेतौ। इत्यादीति। आदिना 'त्वया' 'मया' इत्यर्थ

---

[1] 'वे'ति मुद्रितः पाठः।

[2] 'एककाले' इति घ. पाठः।

[3] 'भूयोऽर्थे' इति छ. पाठः। 'भूर्यर्थे' इति ङ: पाठः। 'भूत्यर्थे' इति मुद्रितः पाठः।

[4] 'शङ्काप्रतिषेधविचारसमुच्चयेषु' इति मुद्रितः पाठः।

[5] 'आश्चर्ये वा' इति मुद्रितः पाठः।

[6] 'अव्ययसञ्ज्ञार्थः' इति मुद्रितेषु पाठः।

एतौ हविर्दाने। स्वाहा देवताभ्यो दाने। स्वधेति पितृभ्यः। श्रौषडादीनामनेकाचामुभयत्र पाठः स्वरभेदाऽर्थः। तुमिति तुङ्कारे। 'गुरुं तुङ्कृत्य, हुङ्कृत्य'। तथाहि [1]इति निदर्शने। खलु इति निषेधे, वाक्याऽलङ्कारे, निश्चये च। किलेति वार्त्तायामलीके च। अथेति मङ्गला-ऽनन्तरा-ऽऽरम्भ-प्रश्न-कात्स्न्र्या-ऽधिकार-प्रतिज्ञा-समुच्चयेषु। अयं स्वरादिरपि। तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिद्धयति। तथा च श्रीहर्षः—

'उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे।
यथाकुलाऽऽचारमथाऽवनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम्' ॥

अत्र हि [2]'अथ स्नपयाम्बभूवे'त्यस्य—मङ्गलं स्नपनं चकारेत्यर्थः। निपातस्तु स्वरूपेणैव मङ्गलं, मृदङ्गध्वनिवत्। सुष्ठु। स्वरभेदाऽर्थः पाठः। स्मेत्यतीते, पादपूरणे च। आदहेत्युपक्रम-हिंसा-कुत्सनेषु।

अवदत्तमिति। इहाऽनुपसर्गत्वात् अच उपसर्गात्तः (७।४।४७) इति न भवति। अहमिति सुबन्तप्रतिरूपकम्। एतेन 'गेये केन विनीतौ वामि'ति व्याख्यातम्। [3]'युवामि'त्यर्थे हि 'वामि'त्यव्ययम्। अस्तीति तिङन्तप्रतिरूपकम्। एवम्—अस्मीत्यहमर्थे। 'त्वामस्ति वच्मि'। आहेत्युवाचेत्यर्थे। आसेति बभूवेत्यर्थे। इत्यादि ॥

अ इति सम्बोधनेऽधिक्षेपे, निषेधे च। आ इति वाक्य-स्मरणयोः। इ इति सम्बोधन-जुगुप्सा-विस्मयेषु। ई उ ऊ ए ऐ ओ औ सम्बोधने। पशु—सम्यगर्थे। ('लोधं[4]नयन्ति) पशु मन्यमानाः'। शुकं शैघ्र्ये। यथाकथाचेत्यनादरे। पाट्, प्याट्, अङ्ग, है, हे, भोः अये एते सम्बोधने। द्येति हिंसा-प्रातिलोम्य-पादपूरणेषु। विषु नानाऽर्थे। एकपदे इत्यकस्मादित्यर्थे। [5]युत् कुत्सायाम्। आत इति इतोऽपीत्यर्थे।

---

[1] इतिः क्वचिन्नास्ति।
[2] 'अथ' इति मुद्रितेषु त्रुटितम्।
[3] 'युवामर्थे' इति मुद्रितेषु पाठः।
[4] 'लोधं नयन्ति' इति घ. पाठः।
[5] 'युत् कुत्सायाम्' इति घ. ङ. छ. पाठः। 'पुत्' इति क्वचित् पाठः। 'युत् कुत्सायां, हेतौ' इति मुद्रितः पाठः।

आकृतिगण इति। तद्यथा—[1]यत्, तत् इति हेतौ। आहोस्वित् विकल्पे। [2]सीम् सर्वतोभावे। कं पादपूरणे। सुकम् अतिशये। अनुकं वितर्के। शम्वट् अन्तःकरणे, आभिमुख्ये च। व पादपूरणे, इवाऽर्थे च। दिष्ट्या इति आनन्दे। चटु चाटु प्रिये वाक्ये। हुमिति भर्त्सने। इवेति सादृश्ये। अद्यत्वे इति इदानीमित्यर्थे—इत्यादि। अत्रेदमवधेयं—स्वरादि-चाद्योराकृतिगणत्वाऽविशेषेऽपि येषां निपातस्वरो[3] दृष्टस्ते चादिषु। अन्ये स्वरादिषु। स्वरद्वयभाजस्तूभयत्र बोद्धयाः। यथा 'उत'शब्दः स्वरादिषु। 'ईड्यो नूतनैरुत' इत्यन्तोदात्तप्रयोगात्। यत्तु 'उत'शब्दस्य स्वरादितामुक्त्वा निपातस्वरमाशङ्क्याऽन्तोदात्तनिपातनमाश्रित्य समादधुः। तद्भ्रमसात्। स्वरादे-र्निपातत्वात्। [4]अन्तोदात्तत्वनिपातनवैयर्थ्याच्च। यदपि काशिकायामुक्तं—'स्वर्, शनैस्, ऋधक्, दिवा, वृथा, नक्तमि'त्यादयोऽन्तोदात्ता' इति। यच्च [5]"सनात्, तिरस्—एवमादय आद्युदात्ता' इति। तत्सर्वं प्रामादिकम्।

---

**बृहच्छब्दरत्नः**

'ते' 'मे'। 'अह' इति अहनीत्यर्थे। 'तदि'ति विभक्तिप्रतिरूपकमव्ययम्। अत एव 'अविद्या-तच्चितोर्योगः षडस्माकमनादय' इति वृद्धोक्तौ 'त्यदादीनि सर्वै'-रित्येकशेषा न। न चाऽस्याऽपि त्यदादिषु ग्रहणमिति वाच्यम्। पूर्वोत्तरसाह-चर्यणाऽनव्ययस्यैव ग्रहणात्। 'यत्''तदि'ति विभक्तिप्रतिरूपकादपि सिद्धिः। तत्सर्वमिति। 'स्वर्'शब्दस्य स्वरितत्वात्। तथा च फिट्सूत्रं 'न्यङ्स्वरौ स्वरिता-वि'ति। प्रयागश्च 'अन्तरिक्षमथो स्वः', 'शनैश्चिद्यन्ता अद्रिवः', 'ऋधगित्था स मर्त्यः', 'दिवा चित्तमः कृण्वति' 'वृथाऽसृजत्पथिभिः' 'नक्तं [6]ददृश्रे (कुहचिद्विवेयुः[7])'

---

**लघुशब्दरत्नः**

अनुपसर्गत्वादिति। 'अवदत्तं विदत्तञ्चे'त्यादि भाष्ये तकाराऽकरणेन गुणभूतोप-सर्गत्वबाधो बोद्धचत इति भावः। यदपीति। स्वरादीनुपक्रम्य 'अन्तोदात्ताः पठ्यन्ते' इति काशिकायाम्। प्रामादिकमिति। 'न्यङस्वरौ स्वरितौ' इति फिट्सूत्रेण स्वरितत्वात्।

---

[1] यत्, तत्–इति पृथक् पाठो मुद्रितेषु दृश्यते।
[2] 'सिम' इति मुद्रितेषु पाठः।
[3] 'स्वर इष्टः' इति छ. पाठः।
[4] 'अन्तोदात्तनिपातनवैयर्थ्यात्' इति छ. पाठः। [5] 'सनत्' इति क्वचित्पाठः।
[6] 'ददृश्रे' इत्यत्र 'ददृशे' इति क. ख. पाठः।
[7] भावप्रकाशेऽयं पाठः।

लक्ष्यविसंवादात्, निर्मूलत्वाच्चेति शब्दकौस्तुभे प्रपञ्चितम्।

तद्धितश्चासर्वविभक्तिः (१।१।३८)। सर्वेति। वचनत्रयाऽऽत्मिकेत्यर्थः। नेति। किन्त्वेकवचनमेवोत्पद्यते इति भावः। तद्धितः किम्?। एकः, द्वौ, त्रयः। असर्वेत्यादि किम्?। औपगवः।

बृहच्छब्दरत्नः

इत्यादावाद्युदात्ताः पठ्यन्ते। 'सनाच्च होता नव्यश्च'[1] 'तिरः पुरूचिदश्विने'त्यादावन्तोदात्तत्वम्। ननु 'ऋधक् सोमः स्वस्तये' इत्यत्राऽन्तोदात्तत्वस्य पठ्यमानत्वेन काशिकोक्तं युक्तमेवेत्याशङ्क्याह—शब्दकौस्तुभे इति। 'अन्तोदात्ता एवे'ति निश्चयोक्तिस्तावदयुक्तैव। स्वरद्वयदर्शनेन गणद्वयपाठस्याऽऽवश्यकत्वात्। व्यत्ययाऽऽश्रयणस्याऽयुक्तत्वाच्च। 'प्रातःशब्द आद्युदात्त' इति [2]कश्चित्। तन्न। 'प्रातरग्निं प्रातरिन्द्रं हवामहे' इत्यादावन्तोदात्तस्यैव प्रसिद्धतरत्वात्।

तद्धितश्चा। न चाऽत्र परिगणनस्य कृतत्वेन 'प्रत्नपूर्व'ति थालोऽसङ्ग्रहः। छान्दसत्वेनाऽव्ययत्वात्। [3]स्वरादिगणे 'आस्-थालावि'ति वा पाठाच्च। 'इण आसिरि'त्युणादिसूत्रेणाऽऽसिप्रत्ययः। [4]अव्ययत्वं वैकल्पिकम्। [5]ह्रस्वमध्यमपीच्छन्ति। 'प्रत्ययस्वरूपे एव तात्पर्यं, न तु तद्विधिविधेये' इत्यपि कश्चित्। वचनत्रयेति। ननु 'कर्मणि द्वितीया' 'द्व्येकयोरि'त्यादीनां स्वादिवाक्येनैकवाक्यत्वादव्ययेभ्यः स्वादीनां प्राप्तिरेव नास्ति। उच्यते—एकवाक्यत्वं न पदैकवाक्यत्वम्। भिन्नदेशपठितत्वेनाऽवान्तरवाक्योत्पत्तौ बाधकाऽभावात्। तथा च तेषां विधायकत्वमस्त्येव। तथा च 'स्वौजसमौडि'त्यादिभिर्विहितानां 'कर्मणि द्वितीये'त्यादिभिर्नियमः। अत एव 'एकवचनमि'त्यादौ भाविसञ्ज्ञाऽऽश्रयणमपि नेत्यपरमनुकूलम्। स च 'कर्मण्येव द्वितीया', 'शेषे एव षष्ठी'त्यादिप्रत्ययनियमः सामान्याऽपेक्षः, प्रकृताऽर्थाऽपेक्षो वा, उभयथाऽपि कर्मादिरहिताऽव्ययेभ्यो द्वितीयादिकं न। 'प्रातिपदिकाऽर्थ एव प्रथमे'त्यस्याऽपि [6]सत्त्वेन प्रातिपदिकार्थस्याऽपि प्रकृताऽर्थेष्व-

लघुशब्दरत्नः

'सनाच्च होता नव्यः' 'तिरः पुरूचिदश्विने'त्यादौ सनात्तिरसोरन्तोदात्तपाठाच्च। निर्मूलत्वाच्चेति। आद्युदात्तप्रापकशास्त्राऽभावादिति भावः।

[1] चकारः क्वचिन्न।

[2] 'कश्चिदि'ति क. ख. नास्ति।

[3] 'स्वरादिगणे शार्था (=स्वरार्थम्?) आस्थालौ' इति वा' इति क. ख. पाठः।

[4] अस्य 'अयाः' इत्युदाहरणम्। अव्ययत्वाद्विभक्तेर्लुक्। 'अयासा वयासा' इत्यत्र नाऽव्ययत्वम्। तदाह—**अव्ययत्वं वैकल्पिकमिति**। छान्दसत्वादिति भावः।

[5] 'अयसा वयसा' इति ह्रस्वमध्योऽपि क्वचित्पाठ इत्यर्थः।

[6] 'तत्त्वेन' इति ख. पाठः।

**कृन्मेजन्तः** (१।१।३९)। **जीवसे इति।** तुमर्थे सेसेन् (३।४।९) इति 'असे'प्रत्ययः। **पिबध्यै इति।** तेनैव 'शध्यै'प्रत्ययः। पाघ्रा (७।३।७८) इति पिबादेशः। **यत्त्वाहुः**—'कर्त्तरि शबि'ति। **तद्भ्रमसात्।** 'अव्ययकृतो भावे' इति सिद्धान्तात्। अन्तग्रहणमौपदेशिकत्वप्रतिपत्त्यर्थम्। तेनेह न—

---

**बृहच्छब्दरत्नः**

न्तर्भावात्। 'कर्मणि द्वितीयैवे'त्याद्यर्थनियमपक्षेऽपि प्रातिपदिकाऽर्थे प्रथमैव। यत्र तु कर्माद्याधिक्यं 'स्वस्ति वाचयति' 'स्वः पश्य' 'उन्मत्तगङ्गादागत' इत्यादौ, तत्र द्वितीयादिकमिष्टमेव। अत एवाऽव्ययादाप्सुप इति प्रत्याहारग्रहणं, 'तृतीया-सप्तम्योर्बहुलमि'ति सूत्रे तृतीयादिग्रहणञ्च चरिताऽर्थम्। तत्राऽपि प्रथमाया द्विवचन-बहुवचने न भवतः। 'द्वित्वे एव द्विवचनं' 'बहुत्वे एव बहुवचनमि'ति सामान्यतः प्रत्ययनियमात्। 'प्रकृताऽपेक्षयव नियम' इत्यङ्गीकारे 'द्वित्वे द्विवचन-मेव' 'बहुत्वे बहुवचनमेवे'त्यर्थनियमाऽङ्गीकारेणाऽपि न दोषः। 'एकत्वे एकवचन-मि'त्यत्र नियमद्वयस्याऽपि सत्त्वात्। 'एक'शब्देन द्वित्व-बहुत्वाऽभावोपलक्षणात्। अत एव 'महासञ्ज्ञयैव सिद्धावेकग्रहणं व्यर्थमि'त्यपास्तम्। न च 'घट' इत्युक्ते एकत्वनिश्चयो न स्यादिति वाच्यम्। द्विवचन-बहुवचनाऽभावे द्वित्व-बहुत्वयोरबोधेन[१] तन्निश्चयात्। 'घट' इति जातावेकवचनं, व्यक्त्यभिप्रायेण वे-त्यर्थनिश्चयाऽर्थं 'प्रकरणादिना तात्पर्यनिर्णय' इत्यर्थस्याऽऽवश्यकत्वाच्च। अत एव 'पचतिकल्पमि'त्यादौ व्यर्थ-नियतप्रथमैकवचनप्रयोगसिद्धिः। ये तु-हि-च-स्म-वै इत्यादयो निरर्थकाः पादपूरणाऽर्थमात्रं प्रयुज्यन्ते, तत्र 'निपातस्या-ऽनर्थकस्ये'ति प्रातिपदिकसञ्ज्ञाऽऽरम्भसामर्थ्यात्स्वतन्त्रतयाऽपि विधायकत्वाऽङ्गी-कारेण विभक्त्युत्पत्तिः सुलभा। तथाऽपि तत्र प्रथमैकवचनमेव। 'कर्मण्येव द्वितीया', 'द्वित्वे एव द्विवचनमि'त्यादिप्रत्ययनियमाऽङ्गीकारात्। न चैवं प्रथमाया अपि अप्राप्तिः। 'प्रातिपदिकाऽर्थे'तिसूत्रस्य सुब्विध्युपात्तोद्देश्यत्वात्[२] 'प्रकृतितुल्या प्रथमे'त्यत्र तात्पर्यमि'त्यर्थस्य वक्ष्यमाणत्वेन दोषाऽभावात्। एतेना'ऽर्थनियमपक्षे द्वितीयादीनाञ्च दुर्वारते'त्यपास्तम्। 'प्रातिपदिकाऽर्थे प्रथमैवे'तिनियमस्याऽपि सत्त्वात्। एकवचनन्तूक्तयुक्त्यैव। 'हुं-फडादिवदुत्सर्गत एकवचनं करिष्यते' इत्युद्घोषोऽप्येतन्मूलक इति सुधीभिरूह्यम्। भाष्ये तु 'एक'ग्रहणं त्यक्त्वा 'एकवचनमि'ति सूत्रितम्। 'एकवचनञ्चाऽन्यच्च यत्र प्राप्नोति, तत्रैकवचनमेवे'ति नियमाऽर्थमि'त्युक्तम्। तत्र 'द्व्येकयोरि'त्यत्र प्रत्ययनियमपक्षे द्वित्वादावेकवचनं दुर्वारम्, 'एकवचनञ्चे'ति सूत्रवैयर्थ्यञ्चेति वदन्ति।

**सिद्धान्तादिति।** न च यको दुर्वारत्वेन विकरणव्यत्ययाऽर्थं शप् आवश्यक

---

[१] 'अबोधेन निश्चयात्' इति ख. पाठः।

[२] 'उपात्तोद्देश्यात्' इति क. ख. पाठः।

'आधये', 'चिकीर्षवे'। लक्षणप्रतिपदोक्त-संनिपातपरिभाषाभ्यां [1]सिद्धे तयोरनित्यत्वज्ञापनार्थेदम्।

बृहच्छब्दरत्नः

इति वाच्यम्। 'कर्त्तरी'ति त्वदुक्तेरसङ्गतत्वात्। अत एव वा[2] 'मादयध्यै' इति प्रतीकमुपादाय [3]'तुमर्थे' इति सूत्रे 'तस्य भाववाचिसार्वधातुकत्वाद्यक्प्रसङ्गे व्यत्ययेन शबि'त्येवोक्तम्। प्रकृते गुणाऽभावेन, लाघवाद्वा बाहुलकेन यगभावस्यैवोचितत्वात्। अत एव 'पिबध्यै' इति प्रतीकमुपादाय 'यक्, तस्य 'बहुलं छन्दसी'ति लुगि'ति हरदत्तः। 'पूर्ववद्व्यत्ययेन यकः प्रसङ्गे शबित्यपि सुवचमि'त्युत्तरग्रन्थे[4] 'अपि'शब्देनाऽरुचिर्बोधितेत्याहुः।

औपदेशिकत्वेति। चरमवाच्यन्तग्रहणसामर्थ्यान्नित्ययोगे बहुव्रीहिरिति भावः। आधये इति। अत्र चाऽव्ययत्वे 'अव्ययातपरस्याऽऽपः, सुपश्च लुक् स्यादि'त्यर्थे विभक्तेर्लुगापत्तिः। 'अव्ययाद्विहितस्ये'ति व्याख्याने तु 'अव्ययानां भमात्रे' इति टिलोपाऽऽपत्तिः। अत एव प्रथमोपस्थितं झलन्तं नोदाहृतम्। तत्र फलाऽभावस्य स्पष्टत्वात्। वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिरित्यादेच उपदेशेऽशितीति सूत्रे वक्ष्यमाणत्वेनेदमयुक्तमित्यरुचेराह—सन्निपातेति। सन्निपातः—संश्लेषः, तन्निमित्तो यो विधिः, स तद्विघातस्याऽनिमित्तम्। एवञ्च सुप्सन्निपातलक्षणस्य[5] 'घेर्ङिती'ति गुणस्य लुक्प्रयोजकीभूताऽव्ययसञ्ज्ञां प्रति निमित्तत्वं न। तस्य निमित्तत्वे, लुकि, विभक्तिसन्निपातविघातः स्पष्ट एव। एवमेजन्तसन्निपातेनाऽव्ययत्वमेजन्तत्वस्य न विघातकम्। तथा च [6]टाब्लोपो नोपन्यस्तः। स्पष्टञ्चेदं 'समासस्ये'ति सूत्रे भाष्ये। इदञ्चोपलक्षणम्, असिद्धपरिभाषया, विभक्त्यनिमित्त-मकारसाहचर्येण तादृशस्यैवैचो ग्रहणाच्चेति बोध्यम्। अनित्यत्वेति। इदमेवाऽभिसन्धाय सूत्रशेषे भाष्यकारैरुक्तं-'प्रतिविधेयं दोषेष्वि'ति। ननु 'आधौ' 'चिकीर्षावि'ति सप्तम्येकवचने, 'हे आधे' 'हे चिकर्षो' इति सम्बुद्धौ चाऽव्ययत्वाऽभावाऽर्थमन्तग्रहणमावश्यकम्। न चाऽत्र सन्निपातपरिभाषायाः

लघुशब्दरत्नः

सिद्धान्तादिति। व्यत्ययेन यगभाव इति भावः। अन्तग्रहणमिति। 'मेजभ्यां कृतो विशेषणात्तदन्तलाभे सिद्धे' इत्यादिः। लक्षणेति। क्वचिद्वर्णग्रहणेऽपि तत्परिभाषा-

[1] 'सिद्धया एतयोः' इति मुद्रितेषु पाठः।
[2] 'वा' इति ख. नास्ति।
[3] 'तुमर्थेति सूत्रे' इति क. ख. पाठः।
[4] 'ग्रन्थेन' इति ख. पाठः।
[5] 'लक्षणघेर्ङितीति' इति ख. पाठः।
[6] 'टिलोपो नोपन्यस्तः' इति क. ख. पाठः।

**त्क्वातोसुन्कसुनः (१।१।४०)। उदेतोरिति। उत्पूर्वादिणो भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् (३।४।१६)। विसृप इति। सृपितृदोः कसुन् (३।४।१७)। आप्ग्रहणमिति। तथा च वार्त्तिकम्—'अव्ययादापो लुग्वचनाऽऽनर्थक्यं, लिङ्गाऽभावादि'ति। सूत्रस्योक्तिसम्भवस्तु स्त्रियाम् (४।१।३) इति सूत्रे 'स्त्रीसमानाधिकरणादि'ति पक्षं गृहीत्वा बोद्धयः। स च न स्थितः। 'भूतमियं ब्राह्मणी'त्यादावतिव्याप्तेः। अलिङ्गत्वे आथर्वण-**

बृहच्छब्दरत्नः

प्रवृत्तिसम्भावना, फलन्तु अकजेवेति चेन्न। 'कुत्सिताऽऽधानाऽधिकरणमि'त्याद्यर्थविवक्षायाम् 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति न्यायात् कप्रत्ययस्यैव प्राप्तत्वेन 'आधिके' इत्यादेरेव न्याय्यत्वात्। अत एव 'आधये' इत्यादौ नाऽकच्। अव्ययस्य सुबन्तत्वाऽभावाच्च। अव्ययाऽर्थस्य कुत्साऽऽदियोगाऽभावाच्च। लिङ्गादियोगोत्तरमेव तद्योग इति स्पष्टं भाष्ये। वस्तुतस्तु सत्त्ववाचकस्य नाऽव्ययत्वम्। अत एव 'आधौ स्पृशन्' 'भिक्षौ [1]भिक्षन्नि'त्यादौ पराऽङ्गवद्भावस्य 'अव्ययानां प्रतिषेध' इति निषेधो न। इदानीमाप्ग्रहणं व्यर्थमिति मूलोक्तौ संमतिप्रदर्शनव्याजेन विहितविशेषणपक्षे भाष्य-वार्त्तिकादिकं प्रमाणमिति ध्वनयितुं वार्त्तिकमनुवदति—तथा चेत्यादिना। भाष्ये च वार्त्तिकस्याऽदूषितत्वात्तदभिमतत्वं स्पष्टमेव।

इदञ्च विहितविशेषणपक्षे एव सङ्गच्छते। परविशेषणत्वे तु 'उच्चैराभ्यामि'त्यादौ लोपाऽर्थमाप्ग्रहणमित्यर्थस्याऽव्ययानामलिङ्गत्वेऽपि वक्तुं शक्यत्वेनाऽकर्त्तव्यता वार्त्तिककाराद्युक्ता असङ्गता स्यात्। विहितविशेषणपक्षे तु नाऽयं टाबुच्चैःशब्दाद्विहितः, किन्त्विदम्शब्दादिभ्य इति न दोषः। [2]'सवार्त्तिका'-इत्यादावन्तवचने[3] अव्ययीभावादध्येत्रणि, तस्य 'सर्वादेः सादेरि'ति लुकि, उपसर्जनत्वादव्ययत्वाऽभावेन लुकः प्राप्तिरेव नाऽस्ति।

सूत्रस्येति। वार्त्तिकाद्यविरोधसम्पादनाऽर्थमाप्ग्रहणस्येदृशेऽर्थे एव तात्पर्यं, न तु 'उच्चैराभिरि'त्यादौ लोपे इति भावः।

भूतमियमिति। न चाऽत्र टापि सत्यपि न क्षतिः, नपुंसकह्रस्वत्वेनेष्टसिद्धे-

लघुशब्दरत्नः

प्रवृत्तिः। तत्राऽप्रवृत्तिज्ञापकञ्च तदनित्यत्वमात्रज्ञापकमिति भावः। भूतमिति। भूतशब्दः

[1] 'भिक्षौ भिक्षन्' इति क. ख. पाठः। परन्तु, भिक्षधातुरात्मनेपदी, न परस्मैपदीति ध्येयम्। अतोऽस्फुटोऽयं पाठः। छान्दसो वा प्रयोगः।

[2] 'सवार्त्तिकमधीते या स्त्री सा सवार्त्तिका' इत्यादावित्यर्थः।

[3] अन्तवचने हि 'अव्ययं विभक्ती'त्यव्ययीभावो भवति 'सवार्त्तिकमि'त्यत्र। ततोऽध्येत्रण्। तस्य च लुक्।

[1]प्रणव-विद्या-गत-श्रुतिविरोधमाशङ्क्याऽऽह—**सदृशमिति** । **लिङ्गकारके-ति** । विभक्ति-वचनशब्दौ कारकसङ्ख्यापराविति भावः । **यथा वाचेति** ।

---

**बृहच्छब्दरत्नः**

रित्यरुचेराह—आदीति । तेन 'ब्राह्मणीभिर्दारैरि'त्यादौ न दोषः । वार्त्तिके हेत्व-सिद्धिमाशङ्कते—श्रुतिविरोधमिति । ननूपक्रमोपसंहारादिना श्रुतेरन्याऽर्थकत्वे कथं तत्र विरोधशङ्केति चेन्न । प्रणवस्याऽव्ययस्वरूपत्वेन सर्वेषामव्ययानां तदाव-श्यकत्वात् । भाष्यादिप्रामाण्येनाऽत्राऽपि श्रुतिविनियोगाऽङ्गीकारे बाधकाऽभा-वाच्च । श्रुतिगताऽव्यय इति महासञ्ज्ञाकरणेन श्रुत्यविरोधस्याऽऽचार्याणामभि-प्रेतत्वाऽनुमानाच्च । न च [2]महासञ्ज्ञयाऽऽक्षिप्तस्य विशेष्यत्वाद्, गृह्यमाणानां [3]विशेषणत्वाद्गौणे च सिद्धिरेव फलमस्त्विति वाच्यम् । लिङ्ग-सङ्ख्या-[4]कारका-ऽन्वयित्वेन विशेष्याऽर्थस्य प्रतिपादनाद् गौणेऽप्राप्तेः । इह तदन्तविधेर्न्याय-प्राप्तत्वात् । सङ्कोचस्याऽन्याय्यत्वाच्च । न चैवमपि 'क्वचिल्लिङ्गादियोगेऽपि वचनादव्ययत्वमि'त्यर्थस्य भाष्यादिसंमतत्वेन तेषां गौणे सञ्ज्ञा दुर्वारा, तदन्त-विधिसत्त्वादिति चेन्न । असत्त्वाऽर्थकसाहचर्येण सत्त्वाऽर्थकानामपि गौणेऽप्राप्तेः । ध्वनितश्चेदं भाष्ये । एतेन 'प्राग्रीश्वरान्निपाताः' 'स्वरादीनि' 'चादयोऽसत्त्वे' इति न्यासोऽस्तु । न चैवं [5]'नाञ्'प्रभृतीनां निपातत्वेन प्रगृह्यसञ्ज्ञाऽऽपत्तिः । 'चादिरेकाजनाङि'ति सूत्रणात् । यद्वा 'चादयोऽसत्त्वे' इति योगविभागेनाऽसत्त्वे इति पाठविशेषणमि'ति परास्तम् । तदन्तविध्यभावेन नाञ्प्रभृतिनिपातानां निपातत्वाऽनापत्तेश्च । 'निपाता आद्युदात्ता' इत्यादिभिः स्वरादावाद्युदात्ताद्या-पत्तेश्च । अत एवाऽव्ययसञ्ज्ञामात्रेणाऽपि न निर्वाह इति सूत्राऽऽशयः । यत्तु 'विहितविशेषणस्य भाष्यादिसंमतत्वेऽपि 'अत्युच्चैसावि'त्यादिमूलग्रन्थस्तु न युक्तः, 'उच्चैस्'शब्दो वृत्तौ शक्तिमत्प्रधानः, तेन द्वितीयान्तेन समास' इत्यादि-कैयटादिग्रन्थात्सत्त्ववाचकत्वस्य स्फुटत्वेन, गौणत्वेन वाऽव्ययत्वाऽभावेन परविशे-षणत्वेऽपि दोषाऽभावात्, तस्याऽव्ययत्वे तदन्तविधिना 'परमोच्चैरि'त्यादाविव समुदायस्याऽव्ययत्वेन विहितविशेषणत्वेऽपि दोषाऽनिस्ताराच्चे'ति । तन्मूलाऽर्था-ऽज्ञानविजृम्भितम् । 'अत्युच्चैसावि'त्यन्तेन पूर्वपक्षं विधाय 'अव्ययसञ्ज्ञायां

---

**लघुशब्दरत्नः**

पौतन्यवृत्तिर्नित्यनपुंसकः । तत्र पर्जन्यवल्लक्षणप्रवृत्त्याऽन्तरङ्गत्वात् ह्रस्वे शब्दाऽन्तरसन्नि-

---

[1] 'प्रणव' इति घ. ङ. पाठः । मुद्रितेषु तु नास्ति ।

[2] 'महासञ्ज्ञायाः' इति क. ख. पाठः ।

[3] 'विशेषणत्वाद् गणं च सिद्धिरेव' इति ख. पाठः । 'विशेषणत्वात्तदन्तत्वसिद्धिरेव' इति क. पाठः । 'तदन्तविधौ गौणे सिद्धिरेव' इति वा पाठान्तरम् ।

[4] 'कारकाऽनन्वयित्वेन' इति ख. पाठः ।

[5] 'नाप्रभृतीनाम्' इति क. ख. पाठः ।

'परिगणनमिदमि'त्येके। अन्ये तूदाहरणमात्रमित्याहुः। वगाह इति। आदिरेवाऽकारो लुप्यते, नाऽन्त्यः। अपिना साहचर्यात्।

इत्यव्ययानि।



## अथ स्त्रीप्रत्ययप्रकरणम्।

खट्वेति। 'अशू प्रुषिलटिखटिकणिविशिभ्यः क्वन्'। पञ्चाजीति। न चाऽत्र[1] तदन्तविधिरहादेव टाब्नेति वाच्यम्। अमहत्पूर्वग्रहणेन, अनुपसर्जनाऽधिकारेण च स्त्रीप्रत्ययेषु तदन्तविधिज्ञापनात्। मूषिकेति। 'वृश्चिकृषोः

बृहच्छब्दरत्नः

यद्यपी'त्यादिग्रन्थस्य खण्डनाऽर्थं प्रवृत्तत्वात्। महासञ्ज्ञयाऽर्थस्य निमित्तकोटावाश्रयणेन नाऽन्तरङ्गत्वम्। पदाऽन्तरनिरपेक्षविशेष्याऽर्थप्रतिपादकस्यैव ग्रहणादित्यादिकं मात्सर्यमुत्सार्य सुधीभिराकलनीयम्।

इत्यव्ययानि।

न चात्रेति। अयं भावः—'अजादिष्टाप् भवति स्त्रीत्वे' इत्येव वाक्याऽर्थो युक्तः। प्रत्ययविधौ पञ्चम्या युक्तत्वात्। तच्च स्त्रीत्वं प्रत्यासत्त्या प्रकृत्यर्थनिष्ठम्। प्रकृतित्वं चाऽजादीनां, न तदन्तानाम्। प्रत्ययविधौ तत्प्रतिषेधात्। यद्यपि 'सिद्धन्तु अवयवाऽनन्यत्वादि'ति न्यायेन 'पञ्चाऽज' इति समाहारसमासे 'अज'शब्दोऽस्त्येव, तथाऽपि समाहारनिष्ठस्त्रीत्वस्य तद्वाचकसमुदायनिष्ठत्वेऽपि, अजनिष्ठत्वाऽभावान्न दोषः। न चाऽजहत्स्वार्थायां वृत्तौ समाहारस्याऽप्यजाद्यर्थत्वेन दोषो दुरुद्धर एवेति वाच्यम्। अजादिभिः स्त्रीत्वस्य [2]विशेषणेऽपि दूषणस्य दुरुद्धरत्वात्। पदाऽन्तरसमभिव्याहारसापेक्षतया समाहारनिष्ठस्त्रीत्वस्य बहिरङ्गत्वान्न [3]वृत्तिः। अत एव पुयोगे गौणत्वाद् 'अजी'त्यादौ न टाबि'ति चेत्। सिद्धं नः [4]समीहितम्।

ज्ञापनादिति। तदन्तत्वे तु तस्याऽपि प्रकृतित्वाऽविशेषेण टापो दुर्वारत्वात्, षष्ठ्यन्तत्वमाश्रित्योक्ताऽर्थ आवश्यकः। सन्निधानात्साहचर्याच्च प्रकृतित्वं तेषाम्।

लघुशब्दरत्नः

धानोत्तरं टापि, 'लक्ष्ये लक्षणस्ये'तिन्यायेन न पुनर्ह्रस्व इति भावः।

इत्यव्ययानि।

अनुपसर्जनाधिकारेण चेति। तस्य हि बहुकुरुचरा व्यावर्त्या। एवञ्च वनो

[1] 'अत्र' इति मुद्रितेषु त्रुटितम्।
[2] 'विशेषणत्वेऽपि' इति क. पाठः।
[3] 'न प्रवृत्तिः' इति क. पाठः।
[4] 'समाहितम्' इति क. ख. पाठः।

किकन्', इत्यधिकारे 'मुषेर्दीर्घश्चे'ति किकनि इकारमद्ध्यो 'मूषिक'शब्दः। यस्तु 'मूष स्तेये' इति दीर्घोपधात्सञ्ज्ञायां क्वुनि 'मूषक'शब्दो माधवेनोक्तः, ततोऽप्ययं टाप्। प्रत्ययस्थात् (७।३।४४) इतीत्त्वमिति तु विशेषः। यत्तु 'क्वुन्नन्तोऽसौ अजादिगणे पाठं न प्रयुङ्क्ते, तस्य जातिलक्षणङीष्बाधनाऽर्थत्वात्, सञ्ज्ञायाश्चाऽजातित्वादि'त्याहुः। तच्चिन्त्यम्। 'व्याघ्री'त्यादिवत् सञ्ज्ञात्वेऽपि जातित्वाऽनपायात्। भस्त्रफलेति। 'भस्त्रेव फलानि यस्या' इति विग्रहः। ङ्यापोरिति। एतच्च 'फल निष्पत्तावि'ति धातौ माधवग्रन्थे स्थितम्। भाष्ये तु प्रायेण दीर्घ एव पठ्यते। प्रत्यक्पुष्पेति। पाककर्ण (४।१।६४) इत्यादिसूत्रस्थभाष्य-वार्तिक-पर्यालोचनयेदमुक्तम्। तेन 'सत्प्राकाण्डे'ति पाठो नाऽऽदर्त्तव्यः।

शूद्रा चेति। 'शूद्रशब्दष्टापमुत्पादयति जातिश्चेत्। महत्पूर्वस्तु न'। 'जातिश्चेदि'तीहाऽपि सम्बध्यते। पुंयोगे त्विति। 'पुंयोगश्च[1] दाम्पत्यरूप

---

**बृहच्छब्दरत्नः**

अत एव 'तुरगी'त्यत्र न दोषः। शब्दस्याऽप्यर्थविशेषणतया भानाऽङ्गीकारे त्वर्थभेदाद्दोषशङ्कैव न। न चैवमपि [2]स्त्रीव्यक्तीनां समाहारे टाप् दुर्वारः। अन्तरङ्गे विषये टापश्चरिताऽर्थत्वेन, परत्वाद् 'द्विगोरि'ति ङीपा बाधात्। तत्स्त्रीत्वनिमित्तकटापः पूर्वं प्रवृत्तत्वेन, पुनरप्रवृत्तेश्च। न च तदन्तत्वेऽपि श्रुतत्वात् 'स्त्रियामि'ति अजादीनामेव विशेषणमिति वाच्यम्। 'लिङ्गं प्रत्ययाऽर्थ' इति पक्षे 'स्त्रियामि'त्यनेनाऽजादीनामविशेषणत्वात्, तदन्तस्याऽपि श्रुतत्वाच्चाऽकारांशेऽनन्वयाऽऽपत्तेश्च। अनुपसर्जनाऽधिकारेण तदन्तविशेषणस्य बोधनाच्च। अत एव 'अतिधीवरी'त्यादिसिद्धिः। यत्तु 'जातेरस्त्री'तिसूत्रे 'मालादिशब्दानामजादिषु पाठ' इत्युक्तं, तत् प्रौढिवादमात्रम्। स्त्रीविषयत्वेन ङीषोऽप्राप्तौ, अजादिषु पाठवैयर्थ्यात्। आकृतिभेदेनाऽस्त्रीविषयत्वन्तु न युक्तम्। 'अस्त्रीविषयादि'त्यस्य वैयर्थ्याऽऽपत्तेः। 'पाककर्णे'ति'सूत्रस्य वैयर्थ्याऽऽपत्तेश्च। यौगिकाऽर्थे एतेषामपि लिङ्गाऽन्तरसम्भवादिति दिक्। जातिश्चेदिति। अजादिभिः स्त्रीत्वस्य विशेषणेऽपि शूद्रशब्देन स्त्रीत्वं

---

**लघुशब्दरत्नः**

र च (४।१।७) इत्यत्रेवाऽत्रापि तदन्तविधिरिति भावः। जातित्वानपायादिति। क्वुनादिविधौ सञ्ज्ञापदेन रूढिरेव गृह्यते, न तु शब्दप्रवृत्तिनिमित्तकत्वरूपं सञ्ज्ञात्वं गृह्यते। अत

---

[1] चकारो मुद्रितेषु त्रुटितः।

[1] 'लिङ्गसम्भवात्' इति ख. पाठः।

[2] अजादिस्त्रीव्यक्तीनां समाहारे—'पञ्चानाम् अजानां समाहार' इत्येवमित्यर्थः।

एवे'ति न नियमः, किन्तु जन्यजनकभावोऽपि। तेन 'वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतावि'ति सिद्धम्। महाशूद्रीति। 'आभीरी तु महाशूद्री जातिपुंयोगयोः समे'त्यमरः। अत्रेदमवधेयम्—अजादिगणे 'शूद्रे'त्येव पाठ्यम्। 'जातिरि'ति व्यर्थम्। मुख्ये कार्यसम्प्रत्ययाज्जातिलक्षणो ङीषेव बाधिष्यते। पुंयोगे हि गौणी वृत्तिः। 'अमहदि'त्याद्यपि व्यर्थम्। 'महाशूद्र'शब्दो हि विशिष्ट एव जात्यन्तरे वर्त्तते। तत्राऽवयवस्याऽनर्थकतया शूद्रशब्दाऽर्थसमवेतस्त्रीत्वाऽभावाट्टापः प्रसङ्ग एव नास्ति। या तु महती शूद्रा तत्र [1]'महाशूद्रे'तीष्यत एव। क्रुञ्चेत्यादि। 'त्रयोऽमी हलन्ता'

बृहच्छब्दरत्नः

न विशेष्यते। 'शूद्रशब्दाट्टापमुत्पादयति, स्त्रीत्वे सती'ति वाक्याऽर्थः। तच्च प्रकृतिनिष्ठम्। प्रकृतित्वञ्च शूद्रशब्दस्य, तदन्तस्य च। 'पञ्चशूद्री'ति समाहारे जातिवाचकत्वाऽभावान्न दोषः। अत एवाऽमहत्पूर्वग्रहणं तदन्तविधौ ज्ञापकमित्याकरोक्तं सङ्गच्छते इति स्पष्टं सर्वनामसंज्ञासूत्रे शब्दकौस्तुभे। एकरूपेणैव वाऽर्थस्य युक्तत्वेन शूद्रशब्देनाऽपि स्त्रीत्वं विशेष्यते इति ध्वनयन्नाह—अत्रेदमिति।

तत्रावयवस्येति। यत्तु 'महाशूद्रशब्दस्य पङ्कजादिशब्दवद्योगरूढिरूपतया शूद्रशब्दाऽर्थसमवेतस्त्रीत्वमस्त्येव। एतेन 'महती शूद्रा महाशूद्रे'त्यत्र समासात्पूर्वं टाबुत्पत्तेरावश्यकत्वेन, निष्पन्नस्य निवारणाऽसम्भवेन, निषेधे जातिपदाऽन्वयो व्यर्थ' इति हरदत्तोक्तमपास्तम्। आभीरीवाचकमहाशूद्रीशब्देऽपि 'शूद्र'-शब्दस्य स्त्रीत्वाऽऽवश्यकत्वेन टापो दुर्वारत्वात्प्रतिषेधवैयर्थ्याऽऽपत्तेः। तत्सामर्थ्यात्, 'अकृतव्यूह'परिभाषया च अलौकिकविग्रहवाक्ये शूद्रशब्देन स्त्रीप्रत्ययरहितेन समास' इति चेत्तर्हि जात्यतिरिक्तेऽप्येवमेवाऽऽपत्तौ, तदन्वय आवश्यक' इत्याहुः। तन्न। तत्र शूद्रत्वजात्यङ्गीकारस्य सर्वतन्त्रविरुद्धत्वात्। अत एव तत्कर्मणि न तेषामधिकारः। अत एव तद्वधे न तद्वधप्रयुक्तप्रायश्चित्तमिति स्पष्टं स्मृतिषु। जातौ महत्त्वादेर्वक्तुमशक्यत्वेन महत्पदाऽनन्वयाऽऽपत्तिश्च[2]। तस्माद्

लघुशब्दरत्नः

एव 'घ्रः सञ्ज्ञायामि'त्यादिना व्याघ्रादिसिद्धिरिति दिक्। गौणी वृत्तिरिति। 'लाक्षणिकत्वाऽपरपर्यायं गौणत्वमि'त्यभिमानेनेदम्। 'सदृशलाक्षणिकत्वम्, अप्रसिद्धत्वमेव वा गौणत्वम्, गौणमुख्यन्यायश्च पदकार्यविषयोऽत एवाऽजस्य स्त्रीत्यर्थे'अजेत्येवे'ति सिद्धान्ते तु '[3]जातिरि'त्यावश्यकमिति बोद्धव्यम्। जात्यन्तरे इति। ब्राह्मणादुग्रजातिकन्यायामुत्पन्ने आभीरजाताविर्त्यर्थः। नृपात् शूद्रायामुत्पन्नोग्रजातिकन्या। न तु शूद्रत्वं तत्राऽस्ति। अत एव 'शूद्रसधर्माणस्ते' इत्येव स्मृतिषूक्तं, न तु 'शूद्रा' इति। इष्यत एवेति। अतस्तद्व्यावृत्त्यर्थं

[1] महाशूद्रेत्येवेष्यते' इति ङ. पाठः। [2] 'अनन्वयापत्तिश्चेति' इति क. पाठः।
[3] 'जातेरिति' इति क. घ. पाठः।

इत्येके। 'क्रुञ्चानालभेत' 'उष्णिहककुभौ' इत्यादिप्रयोगमुदाहृत्याऽदन्ता अपि भाष्ये स्वीकृताः। पुंयोगेऽपीति। यदा ज्येष्ठादयः प्रथमजातादौ वर्त्तन्ते तदा अदन्तत्वादेव टाप् सिद्धः, यदा तु 'ज्येष्ठस्य स्त्री'त्यादिविवक्षा, तदा पुंयोग-लक्षणो ङीष् प्राप्तः, सोऽनेन बाध्यते' इति सूचयितुमपिशब्दः। मूलान्नञः। नञः किम्? । शतमूली। अमूलेति। ओषधिजातिरियम्।

उगितश्च (४।१।६)। भवतीति। सर्वादिषु 'भवतु' इत्युदित्पठितो, 'भातेर्डवतुरि'ति व्युत्पादितश्च। शत्रन्तात्तु ङीपि शप्श्यनोः (७।१।८१) इति नित्यो नुम्।

वनो र च (४।१।७)। सुत्वानमिति। सुयजोर्ङ्वनिप् (३।२।१०३)।

---

बृहच्छब्दरत्नः

व्यक्तिरेवाऽवगन्तव्या[1]। किञ्चाऽवयवाऽर्थाऽङ्गीकारेऽपि 'अमहदि'ति व्यर्थम्। अजादिसाहचर्येण जात्यन्तरवाचकाऽनवयवीभूतस्यैव ग्रहणादित्यास्तान्तावत्।

वनोर चेति। यत्तु 'वन्नन्ताऽन्तादि'त्येव वाच्यम्। वन्नन्तस्य व्यपदेशि-वद्भावेन सिद्धत्वादि'ति। तन्न। 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधात्। किञ्च 'प्रत्ययग्रहण'परिभाषा प्रवर्त्तते, उत न ?। आद्ये 'वन्नन्तादि'त्यर्थस्या-ऽनिवारणीयत्वात्। नाऽन्त्यः। अप्रवृत्तौ मानाऽभावात्। 'प्रत्ययग्रहणे' इति-परिभाषयैव सिद्धे फलाऽभावेन व्यपदेशिवद्भावाऽप्रवृत्तेरेव युक्तत्वाच्च[2]। 'वन्नन्ता-ऽन्तादि'ति अन्तपदद्वयाऽलाभेन त्वदुक्तविवरणस्याऽसङ्गतताऽऽपत्तेश्च। किञ्च 'येन

---

लघुच्छब्दरत्नः

नैतदिति भावः। भाष्य-वार्त्तिककारौ तु—'शूद्रजाति-वृत्तिमत्त्वेन तां जातिं तत्राऽऽरोप्य शूद्र-शब्दप्रयोग' इति, शूद्रशब्दाऽर्थसमवेतस्त्रीत्वस्य सत्त्वादस्त्येव टापः प्राप्तिरि'ति-'अमहत्पूर्वे'ति। शूद्रशब्दाऽर्थसमवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप्स्यान्न तु तदन्तादिति तदन्तविधिज्ञापकताऽपि भाष्योक्ता नाऽसङ्गता। अत एव शङ्खेन मातृजात्यारोपेणैव 'ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्या-शूद्रासूत्पन्नाः क्षत्रिय-वैश्य-शूद्रा एवे'त्युक्तम्। तत्र '[3]जातिरि'त्यस्याऽभावे पूर्वं जातिमात्र-विवक्षया कुक्कुटाण्डवत् शूद्रशब्देन समासे, ततः स्त्रीत्वविवक्षायाम् 'अमहत्पूर्वे'ति निषेधेन टाप् न स्यादि'ति मन्येते' इत्यन्यत्र विस्तरः। व्युत्पादितश्चेति। 'न्यासकृते'ति शेषः। इदं व्युत्पादनमप्रामाणिकम्। [4]अत्रत्यभाष्याऽसंमतेः।

---

[1] 'तस्मादभटिरेवाबगन्तव्याः' इति क. ख. पाठः।

[2] 'उक्तत्वाच्च' इति क. ख. पाठः।

[3] जातेरिति' इति क. घ. पाठः।

[4] 'अत्रत्यभाष्याऽसङ्गतेः' इति ख. घ. पाठः। 'अत्रत्य' इति मुद्रितेषु नास्ति।

**अतिधीवरीति।** दधातेः क्वनिप्। **शर्वरीति।** शृधातोर्वनिप्। गुणे कृते हशन्तात्परत्वेऽपि हशन्ताद्विहितत्वाऽभावाद् ङीब्रयोर्निषेधो न। **अवावेति।** न्यासकारस्तु 'प्रायिकोऽयं निषेधः। तेन अवावरी'त्याह। न त्वेतद्भाष्यादौ दृष्टम्। **पक्षे डाबिति।** तथा च द्विवचने 'बहुधीवर्यौ' 'बहुधीवानौ' 'बहुधीवे' इति रूपत्रयं भवतीति भावः।

**टाबृचि** (४।१।९)। पूर्वेण प्राप्तस्य ङीपोऽपवादः। **असिद्धत्वादिति।** कार्यकालपक्षेणेदम्। यदि तु यथोद्देशं षट्सञ्ज्ञा, यदि वा 'उपदेशकाले ष्णान्ते'ति व्याख्यानं, तदा असिद्धत्वोपवर्णनं नोपयुज्यते इत्याहुः। वस्तुतस्तु यथोद्देशपक्षेऽपि असिद्धत्वमुपयुक्तमेव। एकदेशविकृतस्योपसङ्ख्यानं हि स्थानिवत्सूत्रे पठ्यते, आदेशग्रहणसामर्थ्यात् 'सर्वे सर्वपदादेशा' इत्याश्रित्य 'आनुमानिकोऽप्यादेशः स्थानिवदि'ति वा व्याख्यायते, उभयथाऽपि अल्विधौ

---

### बृहच्छब्दरत्न

विधिरि'तिसूत्रस्थ-'तस्ये'ति वार्त्तिकस्य, व्यपदेशिवद्भावस्य च, स्वग्रहणाऽनुवृत्तेश्च विशेषणस्वरूपस्यैव ग्रहणमित्यत्र तात्पर्यमि'ति सर्वसंमतम्। तत्स्वरूपमेव 'वन्नन्तादि'त्यनेनोच्यते। एवमन्यत्राऽपि बोध्यम्। एवञ्जातीयाऽर्थस्यैकत्रोक्तौ सर्वत्राऽवगमादिति दिक्। दधातेः क्वनिबिति। 'आतो मनिन्क्वनिबि'तिसूत्रेणेति भावः। 'घुमास्थे'तीत्त्वम्। 'ईत्त्वमवकारादावि'ति 'पा'धातुविषयकमेव। दशपाद्यान्तु दधातेः क्वनिबीत्त्वञ्च विहितम्। पञ्चपाद्यान्तु 'ध्याप्योः सम्प्रसारणञ्चे'ति विशेषः। एवञ्च वार्त्तिकस्य सार्वत्रिकत्वाऽङ्गीकारेऽपि न दोषः। भाष्यस्वरसोऽप्येवमेवेत्याहुः।

'वनो र चे'त्यनेनोभयविधाने 'अनो बहुव्रीहेरि'ति 'वनोर चे'त्यस्य निषेधः,

---

### लघुशब्दरत्नः

दधातेः क्वनिबिति। घुमास्था (६।४।६६) इतीत्त्वम्। 'पावान' इत्यस्य वनिपा सिद्धिमाश्रित्य 'ईत्वमवकारादावि'त्यस्य तत्रैव भाष्ये प्रत्याख्यानात्। स्थः क च (३।२।७७) इति सूत्रभाष्यस्थे 'शंस्था' इत्यत्र, अम्बाम्ब (८।३।९७) इति सूत्रभाष्यस्थे 'सव्येष्ठा' इत्यत्र च स्यसिच् (६।४।६२) इत्यतो 'वा'ग्रहणं मण्डूकप्लुत्याऽनुवर्त्त्य व्यवस्थितविभाषाऽऽश्रयणात्तदभावः। 'तत्र विजेवे'त्यन्ये। अत एव 'धीद्धर्यायतेर्दधातेर्वे'ति 'ध्यायतेः सम्प्रसारणमि'तिवार्त्तिकस्थं भाष्यं सङ्गच्छते। घुमास्था (६।४।६६) इत्यत्र 'हली'त्यस्य 'अनजादावि'त्यर्थात्। प्रत्ययलक्षणसूत्रस्य नियमाऽर्थत्वेऽपि प्रत्ययलक्षणकार्यं सुलभमिति दिक्। निषेधो नेति। 'वनो न हश' इति वार्त्तिके विहितविशेषणस्येदमेव फलमिति भावः। न त्वेतदिति। अतोऽप्रमाणमिति भावः। व्याख्यानमिति। 'उपदेश इति वक्तव्यमि'ति वदतो वार्त्तिककारस्येति भावः। आनुमानिकोऽपीति। एरुः (३।४।८६) इत्यनेन तेस्तोरनुमानादिति भावः।

न तत्प्रवृत्तिः। एतच्चाऽऽकरे स्पष्टम्।

बहुयज्वानाविति। न संयोगात् (६।४।१३७) इति निषेधान्नाऽय-मुपधालोपी। तेन अन उपधालोपिनः (४।१।१२८) इति न प्रवर्त्तते।

डाबुभाभ्याम्। (४।१।१३)। ननु निषेध-डापोर्वचनसामर्थ्यात् पर्यायः सिद्धः। सत्यम्। 'अन्यतरस्यामि'ति योगो विभज्यते। तत्र 'मन' इति निवृत्तम्। 'अनो बहुव्रीहेर्ङीप् वा स्यात्'। ङीपा सह विकल्पलाभाऽर्थ-मिदम्। अन उपधालोपिनः (४।१।१२८) इति सूत्रन्तु नियमाऽर्थम्—'अनो योऽसौ विकल्पः स उपधालोपिन एवे'ति। तथा च 'सुपर्वे'त्यादावनुपधा-लोपिनि निषेधाऽर्थमिदम्। 'बहुराज्ञी'त्यादौ तु ऋन्नेभ्यः (४।१।५) इत्येव ङीप्। तेन बहुधीवरी सिद्ध्यति। 'ऋन्नेभ्य' इति हि ङीपमनूद्य तत्संनियोगेन विधीयमानो रेफः प्रकरणाऽन्तरस्थेन ङीपि कृते न सिद्ध्येत्। ननु वनो र च (४।१।७) इति सूत्रमेव ङीप्-रौ विधत्तामिति चेन्न। उभयविधौ गौरवात्। किञ्चैवमपि[1] ङीपि निषिद्धे रोऽपि दुर्लभः। संनियोगशिष्टत्वात्[2]। भाष्ये तु

बृहच्छब्दरत्नः

उत 'ऋन्नेभ्य' इत्यस्यैव ?। तत्राऽऽद्ये दोषमाह—किञ्चेति। अपि च यथाकथञ्चि-

लघुशब्दरत्नः

एतच्चाऽऽकरे इति। अत्राऽरुचिबीजन्तु 'षट्त्वं नाऽल्धर्म इति, तदाश्रयविधीनां नाऽल्विधि-त्वमि'ति। सिद्ध इति। एवञ्चाऽन्यतरस्याङ्ग्रहणं किमर्थमिति भावः। ङीपेति। ऋन्नेभ्यः (४।१।५) इति विहितेन। अनो योऽसौ विकल्प इति। 'अन्यतरस्यामि'ति विभक्त-सूत्रेण प्राप्त इत्यर्थः। 'अन' इति सूत्रेऽपि 'अन्यतरस्यामि'त्यस्य सत्त्वाद्विकल्पनियमलाभः, अन्यथा स नित्याऽर्थो विधिरेव स्यादिति भावः। स उपधेति। 'स उपधालोपिनोऽनुपसर्ज-नस्य बहुव्रीहेरेवे'त्यर्थः। निषेधार्थमिति। योगविभागेन [3]पक्षे प्राप्तस्य ऋन्नेभ्यः (४।१।५) इति ङीप इत्यर्थः। इत्येव ङीबिति। 'नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरि'त्यभिमाने-नेदम्। तेनेति। अन उपधा (४।१।१२८) इत्यस्य नियमत्वेनेत्यर्थः। ऋन्नेभ्य इति। अस्य 'अन्यथे'त्यादिः। 'अन उपधे'त्यस्य विधायकत्वे इति तदर्थः। प्रकरणान्तरस्थेनेति। [4]तेनाऽनन्तरत्वं बोधितम्। गौरवादिति। मम तु ऋन्नेभ्यः (४।१।५) इति प्राप्तङीपमनूद्य तत्संनियोगेन रभावमात्रविधायकं तदिति भावः। ननु वनो र च (४।१।७) इत्यस्योभय-विधायकत्वे अनो बहुव्रीहेः (४।१।१२) इति अनन्तरत्वादस्य निषेधकम्, उत 'येने'ति न्यायेन ऋन्नेभ्यः (४।१।५) इत्यस्य ?। नाऽऽद्य इत्याह—किञ्चेति। 'अन उपधे'त्यनेन ङीप्यपि रो

[1] अपिः मुद्रितेषु त्रुटितः।
[2] इतोऽग्रे-'बहुव्रीहौ वेति तु न सूत्रमतम्' इत्यधिको वर्द्धितः पाठो ङ पुस्तके।
[3] 'पक्षप्राप्तस्य' इति क. घ. पाठः। [4] 'अन उपधे'त्यस्याऽनन्तरत्वमित्यर्थः।

**सूत्रभङ्गेन समाहितम्। तद्यथा—'अनो बहुव्रीहेः (४।१।१२) इत्यस्याऽनन्तरम् 'उपधालोपिनो वे'ति सूत्रमस्तु। अन उपधा (४।१।२८) इत्यादिप्रदेशाऽन्तरस्थं सूत्रं, डाप्सूत्रे अन्यतरस्यांग्रहणञ्च मास्त्वि'ति।**

**अन उपधा (४।१।२८)। बहुव्रीहेरूधसो ङीष् (४।१।२५) इत्यतो बहुव्रीहिग्रहणं, सङ्ख्याऽव्ययादेर्ङीप् (४।१।२६) इत्यतो ङीप् चाऽनुवर्त्तते इत्याशयेनाऽऽह—अन्नन्तादित्यादि। 'नियमाऽर्थमिदमि'त्युक्तम्। न चैवं पूर्वेण विकल्पसिद्धाविहाऽन्यतरस्यांग्रहणं व्यर्थमिति वाच्यम्। असति हि तस्मिन्नित्याऽर्थो विधिरेवाऽयं स्यान्न तु नियमः।**

**प्रत्ययस्थात्कात् पूर्वस्य (७।३।४४)। 'कादि'त्यकार उच्चारणाऽर्थः। व्यञ्जनमात्रं विवक्षितम्। विशिष्टविवक्षायान्तु 'एतिकाश्चरन्ती'त्यादावकचि न**

---

**बृहच्छब्दरत्नः**

द्रेफाऽङ्गीकारेऽपि अन्नन्तत्वाऽभावात् 'अन उपधालोपिन' इत्यस्याऽप्रवृत्तौ ङीबेव दुर्लभः। अन्त्यपक्षस्तु न युक्त एव। 'अनन्तरस्ये'ति न्यायविरोधात्। 'सुपर्वरी'तिप्रयोगाऽऽपत्तेश्च। अत्रेदमवधेयं—[1]ङीप्टापोरभावे, भ्यामादौ नलोपे, टाप् न शङ्क्यः। अजादिसाहचर्य्येणाऽजादिविभक्तौ टाप्सम्भावितानामेव '[2]अत्'शब्देन ग्रहणात्। अत एव लघुभूतस्य 'अत्'शब्दस्य परप्रयोगः। स हि पूर्वं निर्णीताऽर्थग्रहणाऽर्थः। असिद्धपरिभाषया, सन्निपातपरिभाषया वा टाबभावः सूपपाद इत्याहुः। अकचि नेति। तत्र हि 'पचतकी'त्यादि सिद्ध्ये अकारो न विवक्षितः।

---

**लघुशब्दरत्नः**

दुर्लभ एवेति भावः। किं चैवं 'बहुश्वे'त्यत्र 'ऋन्नेभ्य' इति ङीबापत्तिः। किञ्च 'बहुव्रीहौ वे'ति वार्त्तिकस्याऽप्यपूर्वविधायकताऽऽपत्त्या सुपर्वन्शब्दे ङीब्रयोरापत्तिः। सिद्धान्ते तु 'अन उपधे'त्येतत्प्रापितङीबनुवादेन रभावस्य तेन विधानान्न दोषः। एतेनाऽन्त्यपक्षो, बाध्यसामान्यचिन्तयोभयबाधकमिति पक्षश्च परास्तः। 'बहुव्रीहौ वे'त्यनेन सुपर्वन्शब्दे ङीब्रयोरापत्तेरिति दिक्। इत्यस्यानन्तरमिति। 'अनो बहुव्रीहेः''डाबुभाभ्याम्' 'अनुपसर्जनात्' 'उपधालोपिनो वे'ति पाठ्यमिति भावः। यथाश्रुते 'अनुपसर्जनादि'त्यस्य सम्बन्धो दुर्घटः। अत एव 'बहुदामानि पुराण्यतिक्रान्ता नगरी'त्यत्र ङीप् न। ग्रहणं चेति। चेन 'बहुव्रीहौ वे'त्यस्याऽपि संग्रहः। पूर्वोक्तयोगविभागप्रकारस्तु गुरुभूत इति भाष्याऽऽशयः।

इत्युक्तमिति। डाप्सूत्रे 'अन्यतरस्यामि'ति योगविभागकरणपक्षे इदमुक्तमित्यर्थः। पूर्वेणेति। उक्तयोगविभागेनेत्यर्थः।

अकचि न स्यादिति। तदकारो हि 'पचतकी'त्यादिसिद्धये न प्रयोगसमवायीति

---

[1] 'ङीप्डापोः' इति ख. पाठः।

[2] 'अजाद्यतष्टाबि'ति सूत्रे 'अत' इति 'अत्'शब्देनेत्यर्थः।

स्यादित्याशनेनाऽऽह—ककारादिति। वर्णनिर्देशे हि कारप्रत्ययो विहितः। क्वचित्समुदायात् प्रयोगस्तु उच्चैस्तरां वा वषट्कारः (१।२।३५) [1]इति निर्देशरूपयत्नसाध्य इति भावः। आपि पर इति। एतच्चाऽकारस्य विशेषणम्। तत्र सामर्थ्यात् ककाराऽकाराभ्यां व्यवायेऽपि भवति, न तु 'रथकट्ये'त्यादौ त्रि-चतुरादिव्यवाये। अत एव सर्विकादावाद्याऽकारस्य न भवति। तदेतदुक्तम्—अकारस्येकारः स्यादापि पर इति। ककारविशेषणत्वे तु विवक्षिते 'आप्परात्ककारात् पूर्वस्याऽत' इत्यवक्ष्यत्। यत्तु प्राञ्चः—'आपी'ति ककारविशेषणम्। 'सर्विके'त्यादौ त्वेकादेशस्य स्थानिवद्भावादकारेण व्यवधानेऽपि वचनसामर्थ्याद्भविष्यती'ति। तन्न। [2]रथकट्यादावतिप्रसङ्गात्। व्यवहितस्याऽपि परत्वाऽनपायात्। न च निर्दिष्टपरिभाषया निस्तारः।

---

बृहच्छब्दरत्नः

ककाराऽकाराभ्यामिति। 'अकार'शब्देन चाऽत्राऽकारद्वयमप्युच्यते। अत एव 'न यासयोरि'ति प्रतिषेधश्चरितार्थः। एको यत्शब्दसम्बन्धी अकारः, द्वितीयस्तु 'त्यदादीनाम' इति। स्थानिवद्भावस्य दुर्वारत्वात्। एतेन 'अखट्विके'[3]-त्यादौ 'न पदान्ते'ति निषेधेनाऽकारव्यवधानाऽभावे 'प्रत्ययस्थादि'ति सूत्रस्य चारितार्थ्येन, सामर्थ्यं [4]'दुरुपपादमि'ति मन्दोक्तमपास्तम्। रथकट्यादाविति। थकारेऽतिप्रसङ्गः, न तु रेफाऽकारे। तस्य कात्पूर्वत्वाऽभावात्। 'व्यवहिताश्चे'ति सूत्रेण पूर्वादिशब्दानामव्यवहितपरत्वज्ञापनात्। किञ्चोत्तराऽङ्गविकला 'तस्मा-

---

लघुशब्दरत्नः

भावः। यत्नसाध्य इति। एतत्प्रयोगरूपज्ञापकसाध्य इत्यर्थः। एतच्चाऽकारस्येति। संनिहितत्वात्, साक्षाद्विध्युद्देश्यत्वेन प्राधान्याच्चेति भावः। तत्र सामर्थ्यादिति। 'कात्पूर्वस्ये'तिशास्त्रसामर्थ्यात्ककारेण व्यवधानं सह्यते। आबकारयोस्त्वेकादेशे कृते अचः परस्मिन् (१।१।५७) इति स्थानिवत्त्वेनाऽकारव्यवधानेऽपि [5]श्रौताऽव्यवधानं गृहीत्वा प्रवृत्तिः। अकारशब्देनाऽत्वजातिग्रहणम्। तेन 'एतिके'त्यादावकारद्वयसत्त्वेऽपि न क्षतिरिति भावः। अत एव न यासयोः (७।३।४५) इति चरितार्थम्। त्रिचतुरादीति। श्रौतत्रिचतुरादीत्यर्थः। आद्याकारस्येति। इदञ्च 'कात्पूर्वस्ये'त्यंशेऽप्यनूद्यमानविशेषणत्वान्नाऽव्यवधानांऽशप्रवृत्तिरि'ति वादिनां मते बोद्धव्यम्। वचनसामर्थ्यादिति। श्रौताऽव्यवधानमाश्रित्येत्यर्थः। अनूद्यमानस्येति।

---

[1] 'इत्यादिनिर्देश' इति घ. ङ. छ. पाठः।

[2] 'रथकट्येत्यादौ' इति घ. पाठः।

[3] अतएव 'न खट्विका अखट्विकेत्यादौ' इति ख. पाठः।

[4] 'दुरुपपादनम्' इति ख. पाठः।　　[5] 'श्रौतमव्यवधानम्' इति पाठान्तरम्।

अनुवादे परिभाषाणामनुपस्थितेः । 'अनूद्यमानस्य विशेषणेष्वि'ति हि तदर्थः । अत्र च उदीचामातः (७।३।४६) इति सूत्रे 'स्थाने'ग्रहणं लिङ्गम् । फलन्तु वृद्धसञ्ज्ञायामिक्परिभाषाऽनुपस्थानात् शालीयाऽऽदिसिद्धिः । यदप्याहुः–

बृहच्छब्दरत्नः

दित्युत्तरस्ये'ति परिभाषा दुर्वारा । न चोद्देश्यविशेषणत्वान्न प्रवृत्तिरिति वाच्यम् । परिभाषाया निर्विषयताऽऽपत्तेः। यत्तु 'रमा—सर्वके' इत्यादावपि दोषो बोध्यः। परिभाषाया अप्रवृत्तावव्यवहिताऽशस्यैव 'आपि परे' इत्यंशस्याऽप्यलाभा-दि'ति । तन्न । प्रत्यासत्तिन्यायेन आप्निरूपिताऽङ्गवृत्तिककाराऽकारयोर्ग्रहणात् । आदृता चेयं रीति'र्झलो झली'ति सूत्रे[1] भाष्ये । अनुवादे इति । अनुवाद्यविशेषणे चरिताऽर्था अनुवाद्यविशेषणविशेषणे न प्रवर्त्तते इति भावः । 'तस्मिन्नितिनिर्दिष्टे' इति सूत्रे निरूपितमेतत् । स्थानेग्रहणमिति । न च 'स्थाने'ग्रहणाऽभावे 'अकारस्य स्थाने य आकार' इति विपरीताऽर्थोऽपि स्यादिति वाच्यम् । अप्रसिद्धेः। अकारस्य पूर्वसूत्रे स्थानित्वेन निर्णयाच्च । [2]निषेधोत्तरं पाठेन विधिविषयत्वाऽऽवश्यकत्वाच्च । एवञ्च 'आकाररूपो योऽकार' इति व्याख्याने-ऽपि न दोषः । आकाररूपत्वं भूतपूर्वगत्या । एतेन 'उभयोः स्थानित्वं स्यादि'ति निरस्तम् । चकाराऽभावाच्च । 'अचो रहाभ्यामि'त्यत्र 'रहाभ्यां परस्य, अचः परस्य चे'ति नाऽर्थः । समुच्चयबोधकशब्दाऽभावात् । विभिन्नविभक्तिनिर्देशवैयर्थ्या-ऽऽपत्तेश्च । [3]'अनचि चे'ति सूत्रवैयर्थ्याऽऽपत्तेश्च । किन्तु 'रहाभ्यां परः सन् योऽचः पर' इति । तत्र त्वेतावान् परं विशेषः—'अणुरपि विशेषोऽध्यवसायकर' इति न्यायेन विधेयसन्निहितत्वेन 'रहाभ्यामि'त्यत्रैव[4] निर्दिष्टांऽशबाधः । 'अच'

लघुशब्दरत्नः

साक्षात्, अनूद्यमानविशेषणतया वाऽनूद्यमानस्येत्यर्थः । विशेषणेषु = 'आपी'त्यादिषु । सिद्धि-रिति । अस्य 'तैरुक्तमि'ति शेषः । अनेन तत्र सूत्रे एतस्यैव ज्ञापकत्वं वर्णयतोऽत्र चैवं वदतस्तव पूर्वाऽपरविरोध इति भावः । यदि त्वन्तरङ्गत्वेन स्थानसम्बन्धलाभ इत्यर्थः षष्ठी-स्थाने (१।१।४९) इत्यत्र भाष्ये स्पष्ट इति, 'स्थाने'ग्रहणं व्यर्थमेव । तस्य परिभाषालभ्यत्वा-ऽभावेन ज्ञापकाऽसम्भवात् । वृद्धसञ्ज्ञायामिक्परिभाषाऽनुपस्थितिस्तु मालादीनां च (६।२।८८) इति ज्ञापकात् । तद्धि प्रस्थेऽवृद्धम् (६।२।९७) इति पर्युदासे प्राप्ते आरभ्यते । 'अनुवादे' इति च निर्मूलम् । यद्वा इक्परिभाषाऽच्परिभाषयो'र्विधीयते' इत्यध्याहारात्तत्र

[1] 'सूत्रभाष्ये' इति ख. पाठः ।
[2] 'निषेधोत्तरपाठेन' इति ख. पाठः ।
[3] 'न तिश्चेतिसूत्रे' इति ख. पाठः ।
[4] 'इत्यनेनैव निर्द्दिष्टांऽशाऽभावः' इति ख. पाठः ।

'आपी'ति विधीयमानस्येतो विशेषणमि'ति । तत्स्थवीयः । 'आपी'त्यस्याऽङ्गविशेषणत्वं त्वनाशङ्क्यमेव[1] । रथकस्त्या-पुत्रकाम्येत्यत्राऽतिप्रसङ्गात् ।

### बृहच्छब्दरत्नः

इत्यस्य 'रहाभ्यामि'ति विशेषणत्वे उक्तरीत्या 'अचः पर' इत्यर्थो न लभ्येत । स्थानिविशेषणे 'तस्मादित्युत्तरस्ये'त्यस्य चरितार्थ्यात् । एवं 'णौ चङ्युपधाया ह्रस्व' इत्यादावपि विधेयसन्निहितत्वाऽभावेऽपि, सामर्थ्याण्ण्यंशेऽव्यवहितपरत्वं, चङंशे व्यवहितपरत्वं बोध्यम् । केचित्तु [2]'निर्दिष्टपरिभाषैव न कल्प्या । फलाऽभावात् । ऋगयनादिषु 'व्याकरण'शब्दपाठादेव वृद्धसञ्ज्ञासूत्रे [3]इक्परिभाषाऽनुपस्थितेर्ज्ञापनात् । अत एवा'ऽतो गुणे' इत्यत्राऽपि नेक्परिभाषाया उपस्थितिः । ज्ञापकमपि न युक्तम् । शब्दयोरन्तरङ्गत्वात्, 'स्थानिवदादेश' इति ज्ञापनाच्च स्थानरूपाऽर्थलाभे 'षष्ठी स्थाने' इति सूत्रस्य 'निर्दिश्यमानस्याऽऽदेशा भवन्ती'तिपरिभाषामूलत्वेन भाष्यादौ व्याख्यानात्, स्थानरूपाऽर्थस्य परिभाषया अलाभात्, 'स्थान'ग्रहणमात इतिवत्स्पष्टाऽर्थम् । अस्तु वा स्थानग्रहणं परिभाषाणामनित्यत्वांऽशे ज्ञापकम् । अत एवोदात्तस्वरितयोर्यण इत्यादौ न दोषः । ध्वनितञ्चेदं 'ष्यङः सम्प्रसारणमि'ति सूत्रे भाष्ये' इत्याहुः, तेषां मतेऽपि प्राचीनरीत्या प्राचीनमतस्य दूषितत्वेन मनोरमायां न दोषः । वस्तुतस्तु 'आपी'ति सन्निहितत्वादकारविशेषणं[4] सुधीभिरूह्यम् । तत्स्थवीय इति । 'एत्येधत्यूठ्सु' इत्यादावनन्वयाऽऽपत्त्या संहिताऽधिकारेण 'इगचोः संहितायामि'त्यर्थस्य सत्त्वेन, स्थानिनिमित्तयोः सम्बन्धस्याऽऽवश्यकत्वे एकरूपाऽर्थस्यैव युक्तत्वात् । मानाऽन्तरेणाऽकार इवाऽऽपोऽपि साधुत्वस्य गम्यमानत्वेनाऽनुवाद्यत्वाऽविशेषात् । परस्परसम्बन्धस्य अन्याय्य-

### लघुशब्दरत्नः

तस्या अप्रवृत्तिः । 'अनुवादे' इति च तद्विषयमेव । अत एव अल्लोपोऽनः (६।४।१३४) इत्यत्र 'यजादिस्वादिपर' इत्यस्य अन्विशेषणत्वेऽपि अव्यवधानलाभ इति ष्यङः (६।१।१३) इति सूत्रभाष्यध्वनितं[5] सङ्गच्छते इति विभाव्यते, तदा संनिहितत्वादिनैव 'आपी'त्यस्याऽकारविशेषणतेति बोद्धव्यम् । तत्स्थवीय इति । विधेयस्याऽसिद्धत्वेन तद्विशेषणाऽसम्भवादिति भावः । [6]अनाशङ्क्यमेवेति । श्रुतेनाऽन्वयसम्भवेऽश्रुतेनाऽन्वयाऽयोगादिति भावः । लक्ष्यविसंवादमप्याह—रथेत्यादि । तात्स्थ्यलाभादिति । 'कान्तात्प्रत्ययादि'ति तु नाऽर्थः ।

१ 'तु नाशङ्क्यमेव' इति घ. पाठः । मुद्रितेऽपि च क्वचित्तथैव पाठः ।
२ 'निर्दिष्ट' इति क. नास्ति । 'निर्दिष्टपरिभाषैव' इति ख. पाठः ।
३ 'इह परिभाषा उपस्थितेः' इति ख. पाठः ।
४ 'विशेषणमिति' इति वा पाठः ।
५ 'सूत्रे भाष्ये' इति क्वचित्पाठः ।
६ 'नाशङ्क्यमेवेति' इति घ. पाठः ।

**शकेति** । पचाद्यच् । 'स्थ'ग्रहणं विस्पष्टाऽर्थम् । ककारमात्रस्य प्रत्यय-स्याऽभावादेव तात्स्थ्यलाभात् । पूर्वस्य किम् ? । 'सर्विके'त्यादौ टाबेकादेशं बाधित्वा कात्परस्य मा भूत् । तस्मादित्युत्तरस्य (१।१।६७) इति परिभाषणात् । यत्तु 'वार्णादाङ्गमि'ति परिभाषया एकादेशो बाध्येते'त्याहुः । तन्न । अपवादे परत्वस्येव, उक्तपरिभाषाया अपि निष्फलत्वात् । वस्तुतस्तु [1]"प्रत्ययस्थे की'ति सप्तमीनिर्देश एवोचितः । पूर्वग्रहणञ्च सुत्यजम् । अत इति तपरः किम् ? । 'कृदाधारार्चिकलिभ्यः कः' । धाका । राका । **मामिकेति** । केवलमामक (४।१।३०) इत्यादिना 'सञ्ज्ञाच्छन्दसोरेवे'ति नियमान्न ङीप् । **त्यक्त्यपोरिति** । उदीचामातः स्थाने (७।३।४६) इति विकल्प-स्याऽपवादः । **दाक्षिणात्यिकेति** । दक्षिणस्यामदूरे दक्षिणा । आजन्तः । 'दक्षिणा भवे'ति विग्रहः । यत्तु 'दक्षिणस्यां दिशि भवे'ति प्राचा विगृहीतम् । तन्न । त्यग्विधावव्ययसाहचर्यादाजन्तस्यैव दक्षिणाशब्दस्य ग्रहणात् । अन्यथा 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावाऽऽपत्तेश्च । यत्तु 'समासे एव

---

**बृहच्छब्दरत्नः**

त्वाच्च[2] । 'कृञ्चाऽनुप्रयुज्यते लिटी'त्यत्रेव 'आप्पर इकारो भवती'त्यर्थाऽवगतावपि, आपो विधेयत्वाऽऽपत्तावस्त्रियां 'कारक' इत्यादौ, 'रथकस्ये'त्यादौ च दोषा-ऽऽपत्तेश्च । स्त्रियामित्त्वाऽनापत्तेश्च । मानाऽन्तरप्राप्तस्य, विधेयेकारस्य दैशिक-परत्वाऽसम्भवाच्चेति दिक् । तात्स्थ्यलाभादिति । न च 'कान्तात्प्रत्ययादि'त्यर्थः स्यादिति वाच्यम् । 'प्रत्ययस्ये'ति षष्ठ्यन्तपाठेन निर्वाहात् । निषेधवैयर्थ्या-ऽऽपत्तेश्च । [3]प्रत्यये कीति । न च 'यस्मिन्विधिस्तदादावल्ग्रहणे' इत्यस्य प्रवृत्ति-

---

**लघुशब्दरत्नः**

क्षिपकादीनां निषेधस्य व्यर्थत्वाऽऽपत्तेः । अपवादे इति । येन नाप्राप्तिन्यायेन बाधकविषये तेनैव न्यायेन बाधसिद्धेरिति भावः । प्रत्ययस्थे कीति । 'प्रत्यये की'त्येव युक्तम् । न यासयोः(७।३।४५) इति ज्ञापकात् 'कादौ प्रत्यये' इति नाऽर्थ इति बोद्धव्यम् । एवं चाऽऽप्परस्य, प्रत्ययस्थककारपरस्य चाऽत इदित्यर्थः । तत्र सामर्थ्यादाप्परत्वांऽशे ककारव्यवधानं सोढव्य-मेवेति भावः । विग्रह इति । दक्षिणापश्चात् (४।२।९८) इति त्यक् । अन्यथा=

---

[1] 'प्रत्यये कि' इति ङ. छ. पाठः ।

[2] 'न्याय्यत्वाच्च' इति ख. पाठः ।

[3] 'प्रत्ययस्थे कि' इति मनोरमायां सम्प्रति मुद्रितः पाठः । अनेन प्रतीकेन तु 'प्रत्यये की'त्येव मनोरमायां पाठ आसीत् इत्यनुमीयते । परन्तु तत्र दोषेण 'प्रत्ययस्थे की'त्येवंरूपेण पश्चात्तदनुयायिभिः स शोधित इति प्रतीयते ।

पुंवदि'ति । तन्नेति वक्ष्यते । त्यकि किति च (७।२।११८) इत्यादिवृद्धौ टाप् । ततोऽज्ञाताद्यर्थे कः । केऽणः (७।४।१३) इति ह्रस्वः । टाप् । इहत्यिकेति । अव्ययात्त्यप् (४।२।१०४) ॥

न यासयोः (७।३।४५) अत्र न्यासकारः–'या' इत्येतस्य उदीचामातः स्थाने (७।३।४६) इति विकल्पे प्राप्ते निषेधोऽयमि'ति । तन्न । 'आतः स्थाने' इत्यंशस्येहाऽभावात् । 'या' 'से'ति यत्तदोरुपलक्षणमित्याशयेनाऽऽह—**यत्तदोरिति** । स्वरूपस्याऽविवक्षायां फलमुदाहरति—**यकां तकामिति** । 'यासयोरि'त्यपहाय 'यत्तदोरि'त्येव वक्तुमुचितम् । **उपत्यकेति** । उपाधिभ्यां त्यकन्नासन्नारूढयोः (५।२।३४)। **क्षिपकादीनां च** । 'ने'त्यनुषज्यते । **क्षिपकेति** । क्षिपेरिगुपधलक्षणः कः । ततोऽज्ञातादौ कः । चट भेदने । पचाद्यच् । ततः कः । **तारकेति** । तरतेर्ण्वुल् । ज्योतिर्नक्षत्रं, नेत्रकनीनिका च । **वर्णका** प्रावारविशेषः । तन्तूनां विकारस्तान्तवम् । ओरञ् (४।३

---

बृहच्छब्दरत्नः

रिति वाच्यम् । 'न यासयोरि'ति ज्ञापकात् । [1]'प्रत्ययस्थे की'त्युक्तावपि लाघवस्य स्फुटत्वाच्च । पूर्वग्रहणञ्चेति । चेन पञ्चमीग्रहणमपि बोध्यम् । उपाधिभ्यामिति । यत्तु 'नित्यस्त्रीत्वेनाऽकारोच्चारणसामर्थ्यादित्त्वं ने'ति । तन्न । उच्चारणे गौरवाऽभावेन, प्रथमाऽतिक्रमे कारणाऽभावेन चाऽकारस्य चारितार्थ्यात् । 'किञ्च पञ्चभिरुपत्यकाभिः क्रीतः पञ्चोपत्यक' इत्यादौ चारितार्थ्यमकारस्य । ननु 'लुक्तद्धितलुकी'ति टापो लुकः स्थानिवद्भावेनेत्त्वं दुर्वारम् । न च 'ङ्याब्ग्रहणेऽदीर्घ' इति निषेधवार्त्तिकाऽन्तरसाहचर्य्येण ङ्यापोः परस्य कार्ये, ङ्यापोः कार्ये वा निषेधप्रवृत्तिः । 'याडाप' इत्यादावाकारप्रश्लेषेण वचनस्य भाष्ये प्रत्याख्यानात् । न च प्रकृतेऽप्याकारप्रश्लेषोऽस्त्विति वाच्यम् । 'बहुखट्विको ग्राम' इत्यादाविस्त्वाऽनापत्तेः । अत एव 'परवल्लिङ्गमि'तिसूत्रस्थः 'प्राप्तजीविक' इति भाष्यप्रयोगः सङ्गच्छते । स्पष्टञ्चेदम् 'अदस औ सुलोपश्चेति सूत्रे भाष्ये इति चेन्न । '[2]प्रत्ययलक्षणसूत्रं नियमाऽर्थमि'ति मुख्यपक्षे 'न लुमताऽङ्गस्ये'ति निषेधात् । 'विधिपक्षेऽपि स्थानिवद्भावं बाधित्वा परत्वेन प्राप्तस्य प्रत्ययलक्षणस्य 'न लुमते'ति निषेधे

---

लघुशब्दरत्नः

दिग्वाचकस्याऽपि ग्रहणे । चेन साहचर्यत्यागे मानाऽभावः संगृहीतः ।

इहाऽभावादिति । अकचः सत्त्वादिति भावः । प्रावारविशेष इति । 'वर्णयति=

---

[1] 'प्रत्ययस्थेत्युक्तावपि' इति क. ख. पाठः ।
[2] 'प्रत्ययलक्षणमिति सूत्रम्' इति क. पाठः ।

१३६)। **अन्यत्र वर्णिकेति**। ग्रन्थविशेषस्य व्याख्या, स्तोत्रकर्त्री च। वर्त्तयतीति वर्त्तका। शकुनौ इत्त्वं वा, अन्यत्र नित्यमेव। पितरश्च ता देवताश्च पितृदेवताः, तदर्थं कर्म—पितृदेवत्यम्। देवतान्तात्तादर्थ्ये यत् (५।४।२४) इति यत्। अश्नन्ति ब्राह्मणा यस्यां सा अष्टका। 'इष्यशिभ्यां तकन्'। **अष्टिकान्येति**। अष्टौ परिमाणमस्याः। सङ्ख्याया अतिशदन्तायाः कन् (५।१।२२)। अर्थगतं स्त्रीत्वमाकारेऽध्यारोप्य 'यकपूर्वायाः' इति स्त्रीलिङ्गनिर्देशः, तेन स्त्रीप्रत्ययो लभ्यत इत्याशयेनाऽऽह—**स्त्रीप्रत्ययाकारस्येति**। **साङ्काश्यिकेति**। सङ्काशेन निर्वृत्तं [1]नगरं साङ्काश्यम्। बुञ्छणादिसूत्रेण सङ्काशादिभ्यो ण्यः। ततो भवार्थे धन्वयोपधाद्वुञ् (४।२।१२१)। अकादेशः। स च साङ्काश्यभवां स्त्रियमाहेति तदकारस्याऽपि इत्त्वं विकल्प्येत, तस्मादात इत्युक्तम्। ननु यथाऽयमकारो नाऽऽकारस्थानिकः, एवं [2]स्त्रीप्रत्ययस्थानिकोऽपि नेति द्व्यङ्गविकलमेतत्। अत्राऽऽहुः—सति हि 'आत' इत्येतस्मिन् स्त्रीलिङ्गनिर्देशबलात् स्त्रीवाचक आकारः स्त्रीप्रत्यय एवेति लभ्यते। असति तु तस्मिन् 'स्त्रीवाचकस्य योऽकार' इत्येतावल्लभ्येत। ततः 'साङ्काश्यिके'त्यत्राऽपि प्रसज्येते'ति। अत्रेदं वक्तव्यं—'यकपूर्वायाः स्थाने' इति स्थाने शब्दे जागरूके कथमवयवषष्ठीत्वं गम्यताम्। न च वुञः स्थानेऽयमिति वाच्यम्। 'अके'ति समुदायस्य तथात्वेऽपि, अकाररूपाऽवयवस्याऽतथात्वात्। वुञो यकपूर्वत्वाऽभावाच्च। न हि तस्यामवस्थायां यस्य (६।४।१४८) इति लोपो[3] लभ्यते। किञ्च प्रतिपदोक्तस्य स्त्रीप्रत्ययस्य लाभे

---

**बृहच्छब्दरत्नः**

'देवदत्तहन्तरि हत' इति न्यायेन तस्याऽप्रवृत्तेश्च। 'अचः परस्मिन्नि'तिस्थानिवद्भावस्त्वनाशङ्क्य एव। लुकि तन्निषेधात्। 'अन्तरङ्गानपी'ति परिभाषया, 'अकृतव्यूह'परिभाषया च पूर्वमित्त्वं न। अत एव 'मृदस्तिकन्नि'त्यत्रेकारोच्चारणं

---

**लघुशब्दरत्नः**

आच्छादयती'ति व्युत्पत्तेः। जागरूके इति। 'स्थाने'पदाऽभावेऽप्यन्तरङ्गत्वात्स्थानसम्बन्धस्यैव लाभ इत्यपि बोद्धव्यम्। प्रतिपदोक्तस्येति। 'स्त्रियामि'त्यधिकृत्य विहितस्येत्यर्थः।

---

१ 'नगरम्' इति मुद्रितेषु त्रुटितम्।

२ 'स्त्रीप्रत्ययस्थानिको नेति' इति ङ. छ. पाठः।

३ 'लोपोऽपि' इति मुद्रितेषु पाठ.।

[1]भवार्थे विहितस्य वुञादेः प्रसङ्ग एव नास्ति । तस्मादात इति स्पष्टाऽर्थमेव । अश्विकेति । कौमारास्तु भस्त्रादिवाक्येऽश्वशब्दमपि पठन्तोऽस्यापि [2]इत्त्व-विकल्पमिच्छन्ति । शुभं यातीति शुभंयाः । विच् । ततः कः । केऽणः (७।४।१३) । 'शुभमि'ति मान्तो निपातः । सुष्ठु नयो यस्याः सुनया । ततः कः ।

भस्त्रैषा (७।३।४७)। तदन्तेति । आङ्गत्वादिति भावः । एवं चेति । उक्तञ्च हरदत्तेन—

'अत्राऽऽतः स्थान इत्येतत्स्वशब्दस्य विशेषणम् ।
सम्भव-व्यभिचारौ हि तत्र स्तः काऽकचोः सतोः ॥
द्वैषयोः सम्भवो नास्ति, नाऽन्यत्र व्यभिचारिता ।
सर्वनाम्नः स्वशब्दस्य तेन नाऽयं विधिर्भवेत्' ॥ इति ।

इह 'स्वशब्दस्ये'त्यस्याऽनन्तरम् 'अत' इति शेषो बोद्धव्यः । एतच्चेह मूलेऽपि ध्वनितम् । एवञ्च—'हंसं तनौ संनिहितं चरन्तं मुनेर्मनोवृत्तिमिव[3] स्विकायामि'ति श्रीहर्षश्लोके भस्त्रैषा (७।३।४७) इति वैकल्पिकमित्त्वमि'ति

---

बृहच्छब्दरत्नः

चरिताऽर्थमि'ति वार्त्तिकाऽऽशयः । तेन नायमिति । यत्तु 'जसि सर्वनामसञ्ज्ञाया वैकल्पिकत्वेन 'क'प्रत्यये भवत्युदाहरणमि'ति । तदनालोचनीयम् । 'क'प्रत्ययो जसः पूर्वं, परत्र वा ?। नाऽऽद्यः । सुबन्तात्तद्धितोत्पत्तेः । नाऽन्त्यः । 'अन्तरङ्गानपी'ति-न्यायेन सर्वनाम-सञ्ज्ञाविकल्पाऽप्रवृत्तेः । अर्थाऽधिकारेण शीभावं प्रत्येव विभाषाया

---

लघुशब्दरत्नः

'विशिष्य तदनुपादानात् कथं तल्लाभ' इति चिन्त्यम् । इच्छन्तीति । तद्भाष्यादावदर्शना-दयुक्तम् । शुभंयाः विच् ततः क इति । नदीसञ्ज्ञासूत्रस्थभाष्यप्रामाण्यादादन्तेभ्यः क्विपो-ऽनभिधानाद्विजुक्तः । तत्र हि 'स्त्र्याख्यौ' इति पदे आदन्तलक्षणो विजुक्तो, न तु क्विबित्याहुः । कैयटस्तु 'शुभं याति,' क्विप्, 'शुभमि'ति निपातः । अज्ञातादौ कः । केऽण (७।४।१३) इति ह्रस्व' इत्याह ।

मूलेऽपि ध्वनितमिति । 'स्वशब्दस्याऽतो विशेषणमि'त्यादिना 'भवत्युदाहरणमि'-त्यन्तेन ग्रन्थेनेति भावः । स्विकायामितीति । स्वाशब्दादत्यन्तस्वार्थिके के इत्त्वे साधु ।

---

[1] 'भवार्थविहितस्य' इति मुद्रितेषु पाठः ।
[2] 'इत्त्व' इति मुद्रितेषु त्रुटितम् ।
[3] 'वृत्तिरिव' इति छ. पाठः ।

व्याचक्षाणा उपेक्ष्या इति भावः ।

आत्मीयायामिति । आत्म-ज्ञाति-धनेषु तु स्त्रीत्वमेव नास्तीति भावः । यत्तु 'ज्ञाति-धनयोः 'स्वका' 'स्विके'ति रूपद्वयमाकरे स्थितमि'-त्याहुः । तच्चिन्त्यम् । तादृशस्याऽऽकरस्याऽप्रसिद्धेः । [१]लिङ्गाऽनुशासनविरोधाच्च । यत्तु 'स्वका' 'स्विके'ति काशिकायामुदाहृतं, तत्सञ्ज्ञाविषयकं, न तु ज्ञाति-धनविषयकम् । यदपि 'स्वार्थिकाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते' इति परिजहुः । तदपि चिन्त्यम् । उक्तरीत्या कप्रत्ययाऽन्ताट्टाप्सम्भवेऽपि, प्रकृतेरस्त्रीलिङ्गतया 'आतः स्थाने' इत्यंशस्य दुरुपपादत्वात् ।

प्रत्युदाहरणान्युक्त्वा उदाहरणान्याह—निर्भस्त्रिकेत्यादि । निष्क्रान्ता भस्त्राया निर्भस्त्रा । उपसर्जनह्रस्वः । टाप् । ततोऽज्ञातादौ कः । कृतषत्वेति । सूत्रे विकृतनिर्देशो विवक्षितविषयो, न तु न यासयोः (७।३।४५) इतिवदुपलक्षणमिति भावः । स्त्रीलिङ्गनिर्देशादजादयः स्त्रीलिङ्गा एव गृह्यन्ते ।

---

बृहच्छब्दरत्नः

युक्तत्वाच्च । वैकल्पिकमिति । यद्यपि नेदं 'स्व'शब्दस्य रूपम् । स्याटो दुर्वारत्वात्, किन्तु 'सुष्ठु इः कामो [२]यस्यां से'त्यर्थप्रतिपादकम्, तथाऽपि 'भस्त्रैषे'तिसूत्रप्राप्तेरङ्गीकृतत्वेन 'स्व'शब्दस्याऽङ्गीकृतत्वाऽनुमानात्तद्रीत्यैव दूषणं बोध्यम् । सञ्ज्ञाविषयकमिति । न च तस्या'ऽभाषितपुंस्काच्चे'त्यनेन सिद्धिः । 'सञ्ज्ञापूरण्योश्चे'त्यनेन सञ्ज्ञाया अपि भाषितपुंस्कत्वबोधनात् । पुंवद्भावस्तु 'केऽण' इति

---

लघुशब्दरत्नः

न ह्यकच् अत्यन्तस्वार्थिकस्याऽप्यपवादः । व्याचक्षाणा इति । अकचमुक्त्वा वैकल्पिकमित्त्वं व्याचक्षाणा इत्यर्थः । स्त्रीत्वमेव नास्तीति । 'स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इति कोशादिति भावः । सञ्ज्ञाविषयकमिति । सञ्ज्ञाया अपि सञ्ज्ञापूरण्योश्च (६।३।३८) इति पुंवत्त्वनिषेधेन भाषितपुंस्कत्वबोधनात् अभाषितपुंस्काच्च (७।३।४८) इत्यनेन न सिद्धिरिति भावः । अत्यन्तस्वार्थिक-काऽन्तविषयं चेत्यपि बोद्धव्यम् । ([३]न त्विति । तत्र स्त्रीत्वाऽभावादिति भावः ।) उपलक्षणमिति । भस्त्राशब्दसाहचर्येण, व्याख्यानेन च श्रुताऽऽनुपूर्वीकस्यैवैषाशब्दस्य ग्रहणम् । अत एव 'एषाद्वे [४]नञ्पूर्वे अनुदाहरणे'

---

[१] 'लिङ्गानुशासनस्य' इति छ. पाठः ।

[२] 'यस्याः' इत्यपि पाठः ।

[३] अयं घ. पाठः । अन्यत्र तु नास्ति ।

[४] 'नञ्पूर्वे उदाहरणम्' इति मुद्रितः पाठः । 'अनुदाहरणम्' इति क्वचित्पाठः । स च भाष्यादिविरुद्धः । तथा हि—

तेनेह न—'शुभ्रोऽजोऽस्याः—शुभ्राऽजिका' । 'जानातीति ज्ञः । प्रियो ज्ञोऽस्याः[1] प्रियज्ञिके'ति ।

अभाषित (७।३।४८)। विहितविशेषणतया व्याख्यायाः फलमाह—बहुव्रीहेरिति । नित्यमिति । अस्य विकल्पस्याऽप्रवृत्तेः प्रत्ययस्थात् (७।३।४४) इत्युत्सर्ग एव प्रवर्त्तते इत्यर्थः । परविशेषणत्वे त्वयं विकल्पः स्यादिति भावः । 'बहुव्रीहेरि'त्युपसर्जनोपलक्षणम् । तेन 'अतिखट्विका' 'निःखट्विके'त्यादावपि नित्यमेव । शैषिके कपीति । आपोऽन्यतरस्याम् (७।४।१५) इति ह्रस्वपक्षे इति भावः ।

अभिव्याप्येति । अत एव 'बहुयुवा शाले'त्यत्र यूनस्तिः (४।१।७७)

---

बृहच्छब्दरत्नः

ह्रस्वेन बाध्यते इति स्पष्टं भाष्ये' इति वदन्ति । विवक्षितेति । 'भस्त्रा'शब्दसाहचर्यात् श्रुताऽनुपूर्वीकस्यैवैषाशब्दस्य ग्रहणादिति भावः । अत एव 'भस्त्रा'-शब्दस्य पूर्वनिपातः । निर्णायकत्वेनाऽभ्यर्हितत्वात् । एतच्चेत्त्वप्रकरणे भाष्ये ध्वनितम् । विहितेति । इदञ्च 'भस्त्रैषे'ति सूत्रे ध्वनितम् ।

---

लघुशब्दरत्नः

इति भाष्येऽपि 'एषे'त्येवोक्तम् । अन्यथा 'एतद्द्वी'त्येव वदेदिति भावः । शुभ्राजिकेति । बहुव्रीहेष्टापि, ततः स्वार्थिकः क इति भावः । एतेन 'आतः स्थानिकत्वाऽभावादत्राऽप्राप्तिरि'त्यपास्तम् । परविशेषणत्वे त्विति । समुदायस्य भाषितपुंस्कत्वेऽपि तदवयवस्य खट्वशब्दस्याऽतथात्वेन ततः परत्वात् परविशेषणे दोषः स्यादेवेति भावः । ह्रस्वपक्षे इति । 'बहु जस् खट्वा जसि'त्यवस्थायां कपि, सुब्लुकि, प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससञ्ज्ञायां, समासान्ताः (५।४।६८) इति शास्त्रबलात्कबन्तस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्ययान्ताऽन्त[2]-समासरूप-प्रातिपदिका-ऽभावात् गोस्त्रियोः (१।२।४८) इति ह्रस्वत्वाऽभावे, केऽणः (७।४।१३) इति ह्रस्वत्वे च न कपि (७।४।१४) इति निषिद्धे, आपोऽन्यतरस्याम् (७।४।१५) इति ह्रस्वे, कपः प्राग्वर्तिनः खट्वशब्दात्परस्याऽऽपोऽभाषितपुंस्काद्विहितत्वेन, तत्स्थानिकाऽकारस्याऽयं विकल्पः । ह्रस्वाऽभावे तु [3]'बहुखट्वाकेती'ति भावः ।

---

'एषाद्वे नञ्पूर्वे अनुदाहरणे, 'असुप' इति प्रतिषेधात्' इति हि भाष्ये पाठः । उद्योते, वृहच्छेखरेऽपि च तथैव पाठः । 'नञ्पूर्वे अनषका' इत्येव रूपम्, न तु विकल्पः । 'अनञ्पूर्वे तु एषका एषिका इति विकल्प' इति च तत्र कैयटः ।

[1] 'यस्याः' इति छ. पाठः ।

[2] 'उपसर्जनस्त्रीप्रत्ययान्त' इति घ. मु० पाठः ।

[3] 'बहुखट्वाकेति भावः' इति घ. पाठः ।

उपसर्जनत्वान्ने'ति प्राञ्च आहुः ।

**टिड्ढा** (४।१।१५)। इह वृत्तिकृता सूत्रे ख्युनपि[1] प्रक्षिप्तः । **औत्सीति** । उत्से भवा । उत्सादिभ्योऽञ् (४।१।८६)। न च शार्ङ्गरवाद्यञः (४।१।७३) इति ङीना सिद्धमिदमिति वाच्यम् । तत्र 'जाते-रि'त्यनुवृत्तेः । अन्यथा पुंयोगेऽपि स्यात् । एतेन 'इहाऽञ्ग्रहणं स्पष्टाऽर्थ-मि'ति प्राचो ग्रन्थः प्रत्युक्तः । इहाऽनेकं वाक्यम् । तत्र 'अनुपसर्जनमण्

---

**बृहच्छब्दरत्नः**

टिड्ढा । 'शातन''पातन'शब्दाभ्यां गौरादित्वान्ङीषि'ति 'युवोरनाका-वि'त्यादौ कैयटादयः । इहानेकमिति । यद्यपि 'ऋन्नेभ्य' इत्यादावपि लक्ष्य-संस्कारकाणां वाक्यानामनेकत्वं, तथाऽपि तत्र संग्राहकवाक्यमेकमेव । इह तु तदपि न । द्व्यसजादिरूपाऽकारस्याऽसम्भवेन वैयधिकरण्यैनैवाऽन्वयात् । अत एव 'पञ्चाऽश्वे'त्यादौ न ङीबिति स्पष्टं मूले । एवं शमः प्रमाणमस्याः, 'प्रमाणे ल' इति द्व्यसचो लुकि न ङीप् । अन्यत्र तु विशेषणे फलाऽभाव एव । पुराणशब्दस्य [2]ट्युट्युलन्तत्वेन टित्त्वान्ङीपि 'पुराणी'ति भवत्येव । न चैवं 'पुराणी देवी युवतिः' 'पुनर्पुनर्जायमाना पुराणी'त्यादौ पठ्यमानमन्तोदात्तत्वं न सिद्ध्येदिति वाच्यम् ।

---

**लघुशब्दरत्नः**

प्राञ्च आहुरिति । न च स्त्रियाम् (४।१।३) इत्यस्य गृह्यमाणविशेषणत्वान्नाऽत्र दोषः । अनुपसर्जनाऽधिकारेण[3] तदन्तविधेः, 'स्त्रियामि'त्यस्य स्त्रीप्रत्ययप्रकृतिविशेषणतायाश्च ज्ञापनेनाऽदोषात् । अत एव 'धीवानमतिक्रान्ता अतिधीवरी'ति सिद्ध्यति । प्राधान्येन तद्विशेषणताया न्याय्यत्वाच्च । 'अनुपसर्जनादि'ति तु गृह्यमाणस्यैव विशेषणम् । अत एव कौम्भकारेयसिद्धिः । अन्यथा कुम्भकारेयोऽप्यापद्येत । कुम्भेन समासेऽपि केवलस्य कारस्य प्रातिपदिकत्वेन, तदर्थस्याऽपि स्त्रीत्वेन योगात्ततो ङीपि, कुम्भेनैकार्थीभूतस्याऽपि विशिष्टस्या-ऽपत्येन योगे, तस्याऽयोगस्य वक्तुमशक्यत्वात्तेनाऽपि योगे, कदाचित्ततो ढकि, विशिष्टस्य तन्नि-रूपिताऽङ्गत्वाऽभावेन कुम्भशब्दोकारस्य वृद्ध्यनापत्तेः । निष्कृष्यैकार्थीभावस्यैव प्रत्ययोत्पत्ति-निमित्तत्वे न मानम् । समुदायेनैकार्थीभावेऽवयवेनाऽपि तस्यैव सत्त्वात् । न च समुदाया-न्ङीप्यपि, अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावेन, कदाचित्कारीशब्दादापत्तिस्तवाऽपीति वाच्यम् । एतदधिकारसामर्थ्यादेव 'तदादिनियमाऽभावेनाऽधिकस्यैव कार्यं बोद्धयते, न तु न्यूनस्ये'त्यदोषादिति तदाशयः । विस्तरस्त्वन्यत्र बोद्ध्यः ।

पुंयोगेऽपि स्यादिति । इष्यते तु ङीषित्यर्थः । प्रत्युक्त इति । अनेनैव सिद्धे

---

[1] अपिः छ. नास्ति ।

[2] 'पुराणप्रोक्तेष्वि'तिनिपातनात्तुडभावश्च तत्रेति हरदत्तः ।

[3] 'तदन्तविधेरिव' इति घ. मु. पाठः । हरिताललेपेन 'इव' पदं घ. निस्सारितं च. ।

**योऽकारस्तदन्तादि'ति व्याख्यानान्नेह—'आपिशलमधीते आपिशला ब्राह्मणी'ति[1]। अत्र हि प्रोक्तार्थेऽण् उपसर्जनम्। अध्येत्रण् तु लुप्तः। वर्णप्राधान्यान्न**

### बृहच्छब्दरत्नः

उदात्तनिवृत्तस्वरेण सिद्धत्वात्। 'पुराण'शब्दो हि घृतादित्वादन्तोदात्तः। 'अयं पन्था अनुवित्तः पुराणः' 'पुराणमोकमख्यमि'त्यादावन्तोदात्ततया निर्विवादत्वात्। केचित्तु बह्वादिषु 'पुराण'शब्दपाठसामर्थ्येन पक्षे टावेव, न तु ङीप्। स हि ङीष्-विकल्पाऽर्थः। अन्तोदात्तत्वेन ङीष्-ङीपोर्विशेषाऽभावात्। तेन 'पुराणायां स्मृतावि'त्यादि साध्वित्याहुः।

'ढ'प्रत्ययोऽत्र सानुबन्धक एव गृह्यते' इति भाष्यम्। ननूष्ट्रस्याऽवयवो, विकारो वा 'औष्ट्रकं चर्म'। 'उष्ट्राद् वुञि'ति वुञ्। 'कंसीयस्य विकारः कांस्यम्'। 'कंसीय-परशव्ययोर्यञि'ति यञ्। तयोर्विकारः, 'ञितश्च तत्प्रत्ययादि'त्यञि[2] 'औष्ट्रिका उपानत्', 'कांस्या स्थाली'त्यादौ ङीपो दुर्वारत्वेनेष्टप्रयोगो न सिद्ध्येदिति चेन्न। 'पूर्वे पञ्चालाः' 'पटो दग्ध' इत्यादाविवाऽवयवे समुदायबोधकशब्दस्य दर्शनेन, [3]'शालीन् भुङ्क्ते मुद्गैरि'त्यादाविव विकारे च प्रकृतिशब्ददर्शनेन औष्ट्रक-कांस्याऽर्थे उष्ट्र-कंसीयशब्दयोर्वर्त्तनेन, तत उक्तेऽर्थे वुञि, यञि, अञि च टापो निर्विघ्नत्वेनेष्टसिद्धेः। न च प्रकृति-विकृत्योरवयवा-ऽवयविनोश्च भेदविवक्षाया-मनिष्टाऽऽपत्तिर्दुर्वारैवेति वाच्यम्। स्त्रीलिङ्गेऽनभिधानेनैवोक्तप्रयोगाऽभावस्याऽनु-मानात्। एतेन 'शामील'शब्दादञि ङीपि आद्युदात्तं पदम्, अभेदविवक्षायां 'शमील'शब्दादेव तदर्थे श्लञि, षित्त्वान्ङीषि, अन्तोदात्तं स्यादि'ति निरस्तम्। स्पष्टञ्चेदं 'ञितश्च तत्प्रत्ययादि'तिसूत्रे भाष्ये सूक्ष्मदृशाम्। 'टिड्ढाणञि'ति सूत्रे स्वभिन्नाऽनुपूर्वीक-स्वसदृश-प्रत्ययाऽन्त-प्रकृतिक-प्रत्ययभिन्नानामेव पूर्वोत्तरसाह-चर्य्येण ग्रहणम्। 'स्वशब्देन यस्मान्ङीबापाद्यते, तस्य ग्रहणम्। सादृश्यञ्च एकजातीयाऽनुबन्धेनैकार्थ्येन च। तेन 'औष्ट्रिके'त्यादौ न दोषः। 'दैवदारवी' 'पालाशी'त्यादौ ङीब्भवत्येव। उक्तलक्ष्ये अवन्तादञः सत्त्वेनोक्तप्रत्ययभिन्नत्वा-ऽनपायात्। 'शम्याः ट्लञि'ति टिदेव प्रत्ययो, न तु षित्, येन सूत्रभाष्ययो-र्विरोधः सम्भाव्येते'ति कश्चित्।

### लघुशब्दरत्नः

**तत्राऽञ्ग्रहणं तु 'उत्सस्याऽपत्यं स्त्री'त्यत्र जातिलक्षणङीष्बाधनाऽर्थमिति बोध्यम्। अत्र हीति। न चैवमुपसर्जनाऽधिकारस्य चारितार्थ्यं, मूलोक्ततदन्तविधिज्ञापकताऽनुपपत्तिरिति वाच्यम्। लक्ष्याऽनुसारिव्याख्यानेन 'स्त्रियामि'त्यस्य गृह्यमाणविशेषणतयाऽपि तद्वारणसम्भ-**

[1] इतिः छ. नास्ति।

[2] 'इत्यञ्' इति क. पाठः।

[3] शालिविकारान् मुद्गविकारैर्भुङ्क्ते इति हि तत्राऽर्थः।

**प्रत्ययलक्षणम् । अतष्टावेव भवति । ताच्छीलिकेइति । अयं भावः—शीलं,**

बृहच्छब्दरत्नः

टाबेवेति । न च 'शिष्यमाणं लुप्यमानाऽर्थाऽभिधायी'तिन्यायेनाऽणन्तमुपसर्जनमस्त्येवेति वाच्यम् । 'अनुपसर्जन'पदेन गृह्यमाणस्य विशेषणात् । अन्यथा तदन्तवत्तदन्ताऽन्तेऽपि विशेषणाऽऽपत्तावनुपसर्जनाऽधिकारो व्यर्थ एव स्यात् । नन्वेवं 'स्त्रियामि'त्यनेनाऽणादिकं विशेषयिष्यामः । आपिशलिशब्दात् 'इञश्चे'-त्यण् तु न स्त्रियामुत्पन्नः । यश्चोत्पन्नः स च लुप्तः । 'अत' इत्यनुवर्त्तनाद्वर्णाऽऽश्रयत्वेन न प्रत्ययलक्षणम् । एवञ्च सति 'बहुकुरुचरे'त्यादावपि दोषाऽभावादनुपसर्जनाऽधिकारो वृथैव । न चैवं 'समासप्रत्ययविधावि'त्यनेन तदन्तविध्यभावाऽऽपत्तौ, अणन्ताऽन्तस्योद्देश्यत्वाऽनापत्त्या, प्रत्ययग्रहणपरिभाषया 'कुम्भकारी'शब्दस्य स्त्रीप्रत्ययाऽन्तताऽनापत्तौ ढक्प्रत्ययो न स्यात् । न च 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमि'तिपरिभाषायां तदन्तांऽशो 'येन विधिरि'तिसूत्रसिद्ध एवेत्यर्थस्य पूर्वं निरूपितत्वेन तस्याऽपि 'समासप्रत्ययविधावि'त्यनेन निषेधाऽऽपत्त्या अण्णन्तस्याऽप्युद्देश्यत्वाऽनापत्तिरिति वाच्यम् । तदंशे निषेधाऽनङ्गीकारस्य सर्वसंमतत्वात् । अत एव 'प्रातिपदिकादि'त्यनेन सहाऽन्वय इति वाच्यम् । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमस्य निषिद्धत्वेनाऽदोषात् । न चैवं [1]'कारी'शब्दादपि कदाचिड्ढक् स्यादिति वाच्यम् । 'एकाचद्विर्वचन'न्यायेन समुदायादेवोत्पत्तेः । 'कुम्भेन सहैकार्थीभूतस्य निष्कृष्याऽपत्येन योग' इत्यर्थस्य वक्तुमशक्यत्वाच्च । परस्परमात्राऽन्वयाऽभावेन कृत्समासयोरनापत्तेश्च । समासनिर्देशस्य वैयर्थ्याऽऽपत्तेश्च । [2]'कारी'शब्दप्रकृतिकषष्ठ्यन्ताऽभावाच्च । 'तस्याऽपत्यमि'त्यत्र प्रत्यासत्तिन्यायेनाऽपत्यवद्वाचकप्रकृतिकषष्ठ्यन्तमेव गृह्यते । सूत्राऽऽरम्भेऽप्येषैव गतिः । अन्यथा 'औपगवी'त्यादाविव केवलात् कारशब्दादपि कदाचित् ङीबुत्पत्तौ दोषस्य वज्रलेपायितत्वात् । 'काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते काशकृत्स्ना ब्राह्मणी'त्यत्र प्रोक्ताऽणः स्त्रियामुत्पन्नत्वेऽपि, 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति न्यायात् ङीप् न भवतीति भाष्ये एव स्पष्टमिति चेत् । अत्रोच्यते—शास्त्रेण कर्त्तृसामान्ये विहितत्वेऽपि[3] स्त्रियामविधानात्तत्र वृत्तित्वं दुर्ज्ञेयम् । किञ्च 'स्त्रौघ्नी'त्यादौ प्रकृतिमात्रसापेक्षतया स्त्रियां

लघुशब्दरत्नः

**वात् । तस्माद् 'बहुकुरुचरे'त्येव तद्व्यावर्त्त्यम्, तच्च तदन्तविधिं विना नोपपद्यते इति तज्ज्ञापकत्वं, 'स्त्रियामि'त्यस्य प्रकृतिविशेषणत्वज्ञापकत्वञ्चेति बोध्यम् । तत्करणे एतद्व्यावृत्तिरपि ।**

[1] 'काराशब्दात्' इति क. ख. पाठः ।

[2] 'काराशब्द' इति क. ख. पाठः ।

[3] विहितेऽपि' इति क. ख. पाठः ।

बृहच्छब्दरत्नः

वृत्तित्वस्याऽन्तरङ्गस्य लाभेन शास्त्रस्य चारितर्थ्यात्, प्रकृत्यतिरिक्तपदाऽन्तरसापेक्षत्वेन बहिरङ्गत्वेनाऽग्रहणात् 'कुम्भकारी'त्यादौ ङीबनापत्तिः। अपि चैकार्थीभूतस्य निष्कृष्य स्त्रीत्वेनाऽयोगात् 'कुम्भकारी'त्यादावनन्वयाऽऽपत्तिः। न च विशिष्टस्यैवाऽन्वयोऽस्त्विति वाच्यम्। तस्याऽप्रकृत्यर्थत्वात्। तत्त्वन्तु प्रत्ययविधावुद्देश्यताऽवच्छेदकाऽऽक्रान्तत्वम्। तच्चाऽणन्तस्यैव, न तदन्तस्य। 'कृद्ग्रहणे' इति परिभाषा तु कृन्मात्रग्रहणे, न कृदकृद्ग्रहणे, धर्मिग्राहकमानादिति सर्वसंमतम्। न चाऽमहत्पूर्वग्रहणेन तदन्तविधेर्ज्ञापनाद्दोषाऽभावः। तत्प्रत्याख्यानेऽपि 'पादोऽन्यतरस्यामि'तिज्ञापनात्तदन्तविधिः, न हि केवलपाच्छब्दः स्त्रियां, ऋचि वा सम्भवतीति वाच्यम्। एवमप्येकार्थीभावाऽऽपन्नस्याऽणः स्त्रियां वृत्तित्वाऽसम्भवेन त्वदुक्ताऽर्थाऽसम्भवः। अन्यविशेषणे तु 'बहुकुरुचरे'त्यादौ[1] दोषो दुर्वारः। अपि चा'ऽतिधीवरी' 'अतिभवती' 'प्रियपञ्चा द्रौपदी' 'अतिस्वसे'त्यादौ वनादीनां स्त्रियां वृत्तेरभावेन ङीबाद्यनापत्तिः। न च 'वनो र चे'त्यादावुपात्तं, तदन्तञ्च 'स्त्रियामि'त्यनेन विशेष्यते, 'टिड्ढाणञि'त्यादौ तूपात्तं टिदादिकमेवेति वाच्यम्। विनिगमकाऽभावेनोभयोर्विशेषणस्य न्याय्यत्वात्। एतद्विषयविभागस्य दुरूहतया तज्ज्ञानाऽर्थं सूत्राऽऽरम्भस्योचितत्वाच्च। न चैवं 'पञ्चाऽजी'त्यत्राऽपि टाप् स्यात्, तदन्तस्य स्त्रियां वर्त्तमानादिति वाच्यम्। 'अजाद्यतष्टाप्' 'ऋचि पादः' 'अन्यतरस्यां ङीप्' 'ऋन्नेभ्य' इति न्यासेनैव सिद्धे, ङीप्प्रकरणमध्ये टाप्करणादजाद्यतष्टावित्यस्य वैलक्षण्यबोधनेन 'स्त्रियामि'त्यस्योपात्त एव सम्बन्धस्य बोधनात्। न चैवं 'न षट्स्वस्रादिभ्य' इत्यत्राऽनुपस्थितत्वेन टापो निषेधो न स्यादिति वाच्यम्। 'स्त्रियामि'त्यनुवृत्त्या तदर्थस्य भाष्यादौ साधितत्वात्। उक्तफलाऽर्थं टाप्ग्रहणस्यैव कर्त्तुं युक्तत्वे, प्रकरणाऽन्तरपाठेनोक्तफलस्य साधनाच्च। अपि च 'चित्रायां जाता ब्राह्मणी'त्यर्थे नक्षत्रवाचकात् [2]अदन्तलक्षणटाबन्तादुत्पन्नतद्धितस्य 'चित्रारेवती'त्यादिवचनेन लुकि, ब्राह्मणाऽर्थे त्वदुक्तरीत्या टाबनापत्तिः। 'द्वितीयस्त्रीत्वाऽर्थस्य निमित्तत्वेन, अर्थभेदाच्छब्दभेदेन च लक्ष्यैक्याऽभावाट्टाप्प्रवृत्तिरि'तिविभाव्यते, तर्हि 'काशकृत्स्ने'त्यादौ दोषो दुर्वारः। 'शिष्यमाणं लुप्यमानाऽर्थाऽभिधायी'ति न्यायेन ब्राह्मण्यर्थस्य श्रूयमाणेनाऽणा प्रतिपादनात्। न च तत्रोत्पत्तिर्नास्तीति वाच्यम्। [3]तन्मात्राऽध्यारोपे मानाऽभावात्। अनया रीत्या उत्पत्तेरपि सम्भवाच्च। कुसृष्टिकल्पनामाश्रित्य सिद्धसूत्रप्रत्याख्यानस्याऽयुक्तत्वाच्च। सर्वनामसञ्ज्ञासूत्रस्थम् 'अनुपसर्जनादित्येष योगः प्रत्याख्यायते' इति भाष्यन्तु वार्त्तिकप्रत्याख्यानतात्पर्यकत्वेन यथाकथञ्चिद्व्याख्येयमिति सहृदयैराकलनीयम्।

---

१ 'बहुकुरुचरी'त्यादौ' इति ख. पाठः।

२ 'अदन्तलक्षणष्टाबन्तात्' इति क. ख. पाठः।

३ 'तन्मात्राऽध्यायोहे' इति क. ख. पाठः।

(४।४।६१) छत्रादिभ्यो णः (४।४।६२) इति यो णस्तस्मिन् अण्कार्यं भवति। कार्मस्ताच्छील्ये (६।४।१७२) इति ज्ञापकात्। अनेन हि अन् (६।४।१६७) इति अणि विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते। **चौरीति।** चुरा शीलमस्याः।

**हलस्तद्धितस्य (६।४।१५०)। उपधाभूतस्येति।** ननु यस्येति च (६।४।१४८) इति यञोऽकारलोपे कृते, यकारस्य ईकारपरत्वमस्त्येव, किमुपधाग्रहणाऽनुवृत्त्या। न चाऽल्लोपस्य स्थानिवद्भावः। यलोपे तन्निषेधात्। मैवम्। यलोपे कार्येऽल्लोपस्याऽऽभीयत्वेनाऽसिद्धत्वात्। **अनपत्येति।** यद्यपि 'आपत्यग्रहणं कर्त्तव्यमि'ति वार्त्तिकं, तथाऽपि अपत्याऽधिकारविहितपरं तत्। तादृशश्च गर्गादियञेव, न तु देवाद्यञ्। तस्याऽपत्याऽधिकारात् प्रागेव पाठात्। अत एव भाष्यकृता 'कञ्क्करपोऽयञश्चे'ति 'गर्गादिभ्योऽयञि'ति च अकारः प्रश्लिष्टः। 'यस्कादिभ्यो गोत्रेऽयञञोश्चे'ति सूत्रेऽप्येवम्।

---

**बृहच्छब्दरत्नः**

ज्ञापकादिति। 'छात्रे'त्यत्र टावेव। निपातनानामबाधकत्वपक्षे 'कार्मण' इत्यपि भवति। अत एव 'कार्मस्ताच्छील्ये' इति सूत्रं न कार्यम्। 'ताच्छीलिके णे अण् कार्यं भवती'ति न ज्ञाप्यम्। लाघवेन ङीबर्थं वचनाऽऽरम्भस्यैव युक्तत्वादि'त्यपास्तम्। 'अणो द्व्यच' इति फलस्य सत्त्वाच्च। 'ज्ञापकसिद्धं न सर्वत्रे'तिन्यायेन पक्षे 'चौरा' 'तापसे'त्यपि भवति। अत एव 'छत्रादिभ्योऽण्प्रत्यय एव कार्यः, किं णप्रत्ययेने'ति परास्तमि'त्याहुः। असिद्धत्वादिति। न च वचनसामर्थ्यादेव लोपो भविष्यति, किमुपधाग्रहणेनेति वाच्यम्। न्यायेनैवेष्टसिद्धौ वचनसामर्थ्यकल्पनस्याऽयुक्तत्वात्। न चैवमपि परत्वादल्लोपात्पूर्वं यलोपोऽस्तु, विप्रतिषेधे आभीयाऽसिद्धत्वाऽभावस्य 'जनसनखनामि'ति सूत्रे भाष्यकृता सिद्धान्तितत्वादिति वाच्यम्। अकारेण व्यवधानादप्राप्तेः। 'येन नाऽव्यवधानमि'तिन्यायस्य तु नाऽयं विषयः। अल्लोपे कृतेऽसिद्धत्वेऽपि श्रुतिकृताऽव्यवधानस्य सुलभत्वात्। हल्-तद्धितसञ्ज्ञादिसापेक्षत्वेन बहिरङ्गत्वात्पूर्वमप्रवृत्तेश्च। अत एवेति। एतेन 'द्वीपाद्यञः प्रतिषेधाऽर्थमि'तिवाक्यशेषाद्देवाद्यञि[1] ङीबिष्ट एवे'ति परास्तम्।

---

**लघुशब्दरत्नः**

अनेनैवोपसर्जनपदेनोभयोरपि ग्रहणमित्याशयात्। अण्कार्यमिति। ङीबित्यर्थः। 'ताच्छीलिके' इत्युक्तेः तदस्यां प्रहरणम् (४।२।५७) इति णे 'दाण्डे'त्येव।

अकारः प्रश्लिष्ट इति। 'तद्वार्त्तिकप्रत्याख्यानाये'ति शेषः। अभिजिद्विदभृत्

---

[1] 'देवाऽञ्नि' इति क. ख. पाठः।

बृहच्छब्दरत्नः

गर्गादिभ्योऽयञिति चेति । ननु भाष्ये 'कन्कुरपोऽयञश्चे'त्यत्रैवाऽकार-प्रश्लेष उक्तः, 'गर्गादिभ्योऽयञि'त्यत्र तु तदन्यथाऽनुपपत्त्या कल्प्यते । एवञ्च विनिगमकाऽभावात् 'अभिजिद्विदभृच्छालावच्छिखावच्छमीवदुर्णावच्छ्रुमदणो यञि'ति सूत्रेण[1] यञ्प्रत्ययोऽस्त्विति चेन्न । भाष्याऽनुरोधेन वार्त्तिकेऽधिकारपर-व्याख्यानवद्वार्त्तिकाऽनुरोधेन भाष्यमते 'अभिजिद्विदे'तिसूत्रे 'आभिजितो मुहूर्त्त' इत्यादिभाष्यप्रामाण्यात् 'आयुधजीविसङ्घादि'त्यस्य निवृत्तेरङ्गीकारेऽपि [2]'अस्त्रिया-मि'त्यस्याऽनुवृत्तिस्वीकारेण दोषशङ्काया अभावात् । न हि 'वार्त्तिकाऽनुरोधेन भाष्यं न व्याख्येयमि'ति राज्ञामाज्ञाऽस्ति । अविरोधरूपयुक्तेस्तुल्यत्वात् । 'सर्वत्र लोहितादिकतन्ते'तिसूत्रे 'यञश्चे'त्यनुवृत्तेः सत्त्वेन, 'गार्ग्यायणी' 'आवट्यायनी'-त्यादिभाष्याऽऽरूढप्रयोगाच्च 'गर्गादिभ्य' इत्यत्र 'अयञि'तिच्छेदस्याऽऽवश्यकत्वे-ऽपि त्वदुक्तसूत्रे गुरुभूतच्छेदे मानाऽभावाच्च । अत एव 'बहिषष्टिलोपो यञ्चे'-त्यस्य न ग्रहणम् । वस्तुतस्तु 'अभिजिद्विदभृच्छाले'तिसूत्रेऽकारप्रश्लेषोऽस्त्येव । न च [2]'अस्त्रियामि'त्यनुवृत्त्या स्त्रियामसम्भव इति वाच्यम् । मण्डूकप्लुतेरप्रामाणि-कत्वात् । किञ्च 'अस्त्रियामि'त्यनुवृत्तेरिष्टत्वे [3]अभिजिद्विदभृतेतिसूत्रम् 'आयुधजीवि-सङ्घाञ्ञ्यड्वाहीकेष्वि'तिसूत्रात्पूर्वमेव कर्त्तुं युक्तम् । एवञ्च 'आयुधजीविसङ्घा-दि'त्यस्याऽनुवृत्तिशङ्कैव नेत्यपरमनुकूलम् । न चाऽपत्याऽधिकारपठितत्वाऽभावेन वार्त्तिकमते ग्रहणं दुरुपपादमिति वाच्यम् । 'अभिजिद्विदभृते'तिसूत्रे 'गोत्रे इति वक्त-व्यमि'ति वार्त्तिककारैरुक्तत्वेनाऽपत्याऽधिकारे विहितत्वात् । 'तस्याऽपत्यमि'त्यधि-कारादन्यत्र लौकिकं गोत्रं, तच्चाऽपत्यमात्रमि'ति हि सिद्धान्तः । न च 'गोत्रे इति वक्तव्यमि'ति वार्त्तिकं भाष्ये प्रत्याख्यातं, स्वार्थिकत्वेनाऽपत्याऽर्थकत्वसिद्धेः, 'अणो गोत्रादि'ति वचनाऽन्तरेणाऽपत्याऽर्थकाऽणो ग्रहणात्, तत्र चोक्तरीत्या-ऽनन्तराऽपत्याऽणं विहायाऽर्थाऽन्तराऽणो व्यावर्त्त्यतयोदाहृतत्वेन च, पूर्वसूत्र-साहचर्येण च 'गोत्र'शब्देनाऽपत्यमात्रं गृह्यते इति वाच्यम् । 'प्रत्ययाऽर्थनिर्णायका-ऽपत्याऽधिकारस्थादि'ति व्याख्यानेनाऽदोषात् । 'तादृशश्च गर्गादियञेवे'ति [4]'मूल-ग्रन्थस्तु देवाद्यञ्व्यावृत्तिमात्रपरः । 'न तु देवा द्यञि'त्युत्तरग्रन्थेन तथैव बोधि-तत्वादि'ति वदन्ति । न चैवं 'सङ्घाऽङ्कलक्षणेष्वञ्यञिञामणि'ति सूत्रे 'गर्गादिभ्यो

लघुशब्दरत्नः

(५।३।११८) इत्यादिसूत्रे 'अस्त्रियामि'त्यनुवृत्तेः, तस्य गोत्राऽर्थकत्वेऽपि न तत्र ङीप् सिद्धान्ते-ऽपीष्टः । सङ्घाङ्क (४।३।१२७) इति सूत्रे एतद्भाष्यप्रामाण्यादेकाऽनुबन्धकपरिभाषाया अप्रवृत्त्या गर्गादियञ एव ग्रहणमिति भावः । एवमिति । अकारः प्रश्लिष्ट इत्यर्थः ।

[1] 'सूत्रे' इति क. पाठः ।

[2] 'व्रातच्फञोरस्त्रियामि'त्यतो मण्डूकप्लुत्यानुवृत्तिः ।

[3] 'अभिजिद्विदेति सूत्रम्' इति ख. पाठः । [4] मनोरमाग्रन्थ इत्यर्थः ।

**प्राचां ष्फ तद्धितः** (४।१।१७)। तद्धितग्रहणं प्रातिपदिकसञ्ज्ञाऽर्थम्। ननु तां विनाऽपि षित्करणसामर्थ्यादेव ङीष् भविष्यति। एवन्तर्हि तद्धितग्रहणमिञन्तादपि क्वचित् ष्फ इति ज्ञापयति। यञन्ते सवर्णदीर्घेणाऽपि रूपसिद्धौ, 'यस्ये'ति लोपस्याऽनावश्यकत्वात्। तेन 'आसुरेरुपसङ्ख्यानमि'ति वक्ष्यमाणं सिद्ध्यति।

---

**बृहच्छब्दरत्नः**

यञि'त्यस्य ग्रहणं न स्यात्, 'एकाऽनुबन्धग्रहणे न द्व्यनुबन्धकस्य ग्रहणमि'ति न्यायादिति चेत्। अत्रेदं प्रतिभाति—'सङ्घाऽङ्के'ति सूत्रे 'द्वीपादनुसमुद्रं यञ्' 'पत्त्रपूर्वादञ्' 'बहिष्टिलोपो यञ्चे'त्यादीनां ग्रहणं दुर्वारम्। न च 'गोत्र'ग्रहणाऽनुवृत्त्या निस्तारः। एकदेशाऽनुवृत्तेरयुक्तत्वात्। किञ्च [1]'पौत्राणां सङ्घः' 'बाह्यानामङ्कः', 'दैव्यानां लक्षणमि'त्यादौ दोषो दुर्वारः। न च प्रवराऽध्यायप्रसिद्धगोत्रग्रहणान्न दोष इति वाच्यम्। 'यूनि लुक्' 'अभिजिद्विदभृच्छाले'त्यादिसूत्रस्थभाष्यादावपत्यप्रत्ययान्तरूपलौकिकगोत्रग्रहणस्य सिद्धान्तितत्वेन [2]तदन्यग्रहणे शब्दाऽधिकाराऽऽपत्तेः। 'लक्ष्याऽनुरोधात्, 'स्त्रीपुंसाभ्यामि'तिसूत्रस्थभाष्याऽनुरोधाच्च तस्याऽङ्गीकार' इति चेत्। तर्हि 'गार्ग्यो घोषः' 'गार्ग्योऽङ्क' इत्यादिप्रयोगरूप'सङ्घाऽङ्के'तिसूत्रस्थभाष्यप्रामाण्यात् ज्ञापकसिद्धत्वेनाऽसार्वत्रिकपरिभाषाया अनाश्रयणमि'ति मयाऽपि सुवचमिति, मात्सर्यमुत्सार्य सुधीभिराकलनीयम्। एवमिति (५७३ पृष्ठे)। 'हरितादिभ्योऽञोऽयञिञोश्चे'त्यत्राऽपि बोध्यम्।

**षित्करणसामर्थ्यादिति।** यत्तु 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणमि'ति परिभाषया षितः प्रातिपदिकात्, स्त्रीलिङ्गबोधकप्रत्ययाच्च ङीषि'त्यर्थापत्तावप्रातिपदिकत्वेऽपि ङीषः सुसाधत्वेन 'षित्करणसामर्थ्यादि'ति भाष्योक्तं न युक्तम्। तत्रेदं प्रष्टव्यं—केवलः 'ष्फ'प्रत्ययो 'लिङ्गबोधकोऽस्ति, उत न ?। नाऽऽद्यः। केवलष्फप्रत्ययाऽन्तस्य प्रयोगाऽभावेन ष्फप्रत्ययमात्रस्य लिङ्गबोधकत्वे मानाऽभावात्। किञ्च ष्फप्रत्ययस्य लिङ्गबोधकत्वाऽङ्गीकारे 'सर्वत्र लोहितादिकतन्तेभ्य' इति सूत्रे 'सर्वत्र'ग्रहणाज्ज्ञापितोक्ताऽधिकारस्थस्त्रीत्वबोधकप्रत्ययाऽन्तात् स्त्रीप्रत्ययोक्ताऽधिकारस्थप्रत्ययो नेति वचनेन ङीषभावाऽऽपत्तेः। तद्धि 'प्राचां ष्फ' इति-

---

**लघुशब्दरत्नः**

प्रातिपदिकसंज्ञाऽर्थमिति। तत्फलञ्च ङीषिति भावः। न च लिङ्गविशिष्टपरिभाषया तत्सिद्धिः। [3]एतत्सूत्रस्थैतत्समानार्थभाष्यप्रामाण्येनाऽस्याः स्त्रीप्रत्ययप्रकरणेऽनुपस्थितेः। सामर्थ्यादेवेति। अप्रातिपदिकत्वेऽपीति भावः।

---

[1] 'पुत्राणाम्' इति ख. पाठः।

[2] 'तदन्यशब्दाऽधिकारापत्तेः' इति क. ख. पाठः।

[3] 'एतत्सूत्रस्थैतत्समाधानार्थभाष्यप्रामाण्येन' इति क्वचित्पाठः।

बृहच्छब्दरत्नः

सूत्रस्याऽपवादविषये प्रवृत्तिरित्यर्थबोधकेन 'सर्वत्र'ग्रहणेन 'आवट्याच्चे'त्यादि बाधित्वा प्रवृत्त्यर्थमि'ति भाष्ये स्पष्टम्। न च 'लोहितादिकतन्तेभ्य' इति सूत्रे 'प्राचामि'ति निवृत्त्यर्थं तदिति वाच्यम्। 'नित्य'ग्रहणेनैव सिद्धेः। 'सर्वत्र'ग्रहणेनोक्ताऽर्थाऽलाभाच्च[1]। अस्वरितत्वादेवाऽननुवृत्तेश्च। आरम्भसामर्थ्यान्नित्यत्वलाभाच्च। न चैवं चापो निरवकाशता। उदीचां मते सावकाशत्वात्। न च ष्फप्रत्ययविवक्षायां 'भस्याऽढे तद्धिते', 'सिद्धश्च प्रत्ययविधावि'ति वचनेन पुंवद्भावे, 'आवट्याच्चे'त्यस्य प्राप्तिरेव नास्तीति वाच्यम्। ष्फप्रत्ययस्य सर्वत्राऽप्राप्तौ विधिवैयर्थ्याऽऽपत्तेः। उपजीव्यविरोधस्याऽन्याय्यत्वाच्च। तच्चोक्तन्यायाऽभावे[2] व्यर्थम्। चापि सत्येकादेशस्य पूर्वाऽन्तत्वेन ग्रहणात्, लिङ्गविशिष्टपरिभाषया च ष्फप्रत्ययस्य सुलभत्वाच्च। न च चापा स्त्रीत्वस्योक्तत्वेन ष्फप्रत्ययो नेति वाच्यम्। चाबन्तस्य ष्फप्रत्ययं प्रति प्रकृतित्वेन तथाऽभिधानेन बाधकाऽभावात्। अन्यथा टाबादिविधीनां वैयर्थ्याऽऽपत्तेः। अत एव 'स्त्रीत्वे द्योत्ये टाबादय' इति सिद्धान्तः। अत एव 'कृदिकारादक्तिन' इति वार्त्तिके 'अक्तिन' इत्यस्य चारितार्थ्यम्। अत एव 'व्यावक्रोशी'त्यादौ 'णचः स्त्रियामि'त्यनेनाऽञि स्त्रियां विहितेऽपि स्त्रीप्रत्ययसिद्धिः। तत्फलन्तु युवन्शब्दात् 'ऋन्नेभ्य' इति ङीपि लिङ्गविशिष्टपरिभाषया 'ति'प्रत्ययो न। न च परत्वा'त्ति'प्रत्यय एव भविष्यतीति वाच्यम्। अनुपसर्जनाऽर्थनिमित्तत्वेन, प्रकृतिविशेषाऽपेक्षत्वेन च बहिरङ्गत्वात्। 'ङ्याप्प्रातिपदिकादि'तिसूत्रे तद्धितोत्पत्तेः पूर्वं ङ्यापोः सिद्धान्तितत्वाच्च। उक्तन्यायज्ञापने तु अन्तरङ्गत्वात्पदैकवाक्यतयाऽन्वितेन 'ङ्याप्प्रातिपदिकादि'तिसूत्रेण बोधिताऽर्थबाधः। किञ्च सन्देहे व्याख्यानस्यैव प्रामाण्येन ङ्यन्तादप्रवृत्तौ, वचनसामर्थ्याद‌ङ्यन्ते प्रवृत्तिः। एतेन 'वचनबाधे मानाऽभावात् ङीषाद्युत्पत्त्यनन्तरं टाबाद्युत्पत्त्याऽजादिग्रहणस्य चारितार्थ्येन 'अजाद्युक्तिर्ङीषो ङीपश्च बाधनाये'त्ययुक्तमि'ति मन्दोक्तं परास्तम्। एवञ्च साहचर्य्यबाधो न। तस्मात् षित्करणसामर्थ्यात्प्रवृत्तिरित्युक्तं[3]युक्तमेव। तद्धितग्रहणे कृतेऽपि सामर्थ्याऽऽश्रयणस्याऽऽवश्यकतया उक्तपरिभाषाया[4]अप्रवृत्तौ भाष्यादिग्रन्थानामतिरमणीयत्वात्। लिङ्गबोधकप्रत्ययस्य षित्त्वेऽपि, तद्विशिष्टस्य[5] षित्त्वाऽभावेन परिभाषाया अप्रवृत्तेश्च। सर्वञ्चेदं 'षित्करणसामर्थ्यादेवे'त्येवकारेण ध्वनितम्। एतेन 'आवट्याद्यञ्ष्फश्चाप' इति वार्त्तिकस्थभाष्यग्रन्थोऽप्युज्जीवितो भवतीति दिक्।

---

[1] 'उक्ताऽर्थलाभाच्च' इति क. पाठः।

[2] 'न्यायेन भावे' इति ख. पाठः।

[3] 'अयुक्तमेव' इति पाठान्तरम्।

[4] 'अप्रवृत्तिः' इति पाठान्तरम्।

[5] 'तपित्वायाः परिभाषायाः' इति ख. पाठः।

आयने ७।१।२)। फकारादिष्वकार उच्चारणाऽर्थः। आयनीनोर्नकारस्य नेत्त्वम्। फिनो नित्करणसामर्थ्यात्।

कौरव्य (४।१।१९)। कथन्तर्हि 'यद्यसौ कूपमाण्डूकि तवैतावतिकः समय' इति भट्टिः। अत्राऽऽहुः—कौरव्यसाहचर्यादपत्यप्रत्ययाऽन्तस्यैव माण्डूकस्येह ग्रहणम्। इह तु 'मण्डूकस्येयं भार्ये'ति तस्येदम् (४।३।१२०) इत्यण्। कुमारीति। प्रथमवयोवाची एष शब्दः, न त्वनूढत्वप्रयुक्तः। 'वृद्धकुमारी'ति तु गौणः प्रयोगः। त्र्यनीकेति। त्रयाणामनीकानां समाहारः। अत्र 'अजादेराकृतिगणत्वाट्टाबि'ति त्र्यनीकाऽधिकरणे मीमांसकाः।

पञ्चाश्वेति। नन्वत्र द्विगोः (४।१।२१) इति ङीप् मा भूत्, ठगन्तत्वात्तु स्यादेवेति चेन्न। 'ठको योऽकार' इति व्याख्यानात्। द्विबिस्तेति। 'सुवर्णबिस्तौ हेम्नोऽक्षे' इत्यमरः। 'आचितो दश भारा स्युः'। द्विकम्बल्येति। द्वाभ्यां कम्बल्याभ्यां क्रीता। 'कम्बल्यमूर्णापलशतम्'। कम्बलाच्च सञ्ज्ञायाम् (५।१।३) इति यत्। क्रीताऽर्थस्य ठञो लुक्। द्व्याढ-

---

**बृहच्छब्दरत्नः**

प्रथमवयोवाचीति। 'उपचयाऽपचयलक्षणे द्वे एव वयसी' इत्येके। अत एव 'ग्राम्यपशुसङ्घेष्वि'ति सूत्रे 'अतरुणेषु किम्?, वत्सा इमे' इति मूलग्रन्थो व्याख्यातः। सूत्रे 'तरुण'शब्दस्योऽपचयपरत्वात्। 'चत्वारी'ति हि केचित्। यथाऽऽहुः—'आद्ये वयसि नाऽधीतं, द्वितीये नाऽर्जितं धनम्। तृतीये न तपस्तप्तं, चतुर्थे किं करिष्यती'ति[1]। 'त्रीणी'त्यन्ये। यथाऽऽहुः—'पिता रक्षति कौमारे, भर्त्ता रक्षति यौवने। पुत्रस्तु स्थाविरे भावे, न स्त्री स्वातन्त्र्यमर्हति' इति। व्याख्यानादिति। निषेधस्तु 'पञ्चानामुष्ट्राणां निमित्तं धनपतिसंयुक्तिः, 'गोद्व्यचोऽसङ्ख्यापरिमाणाऽश्वादेरि'ति

---

**लघुशब्दरत्नः**

उच्चारणार्थ इति। तेन ढूक आदेशसिद्धिः। नित्करणेति। 'असञ्जातविरोध'न्यायसहकृतेत्यर्थः। न त्विति। अल्पवयस्यूढायामपि प्रयोगादिति भावः। गौण इति। पुंसाऽसंप्रयोगरूपसादृश्यादिति भावः।

ठगन्तत्वादिति। 'द्वाभ्यां शताभ्यां क्रीता द्विशते'त्यादौ निषेधश्चरितार्थः। अत्र हि कनो लुक्। कम्बल्यमिति। अपरिमाणत्वेऽप्येतयोर्ग्रहणं नियमाऽर्थम्—'उन्मानस्य

---

[1] इतिः क. नास्ति।

कीति। द्वावाढकौ पचतीति। आढकाचितपात्रात्खोऽन्यतरस्याम् (५।१।५३) द्विगोष्ठंश्च (५।१।५४) इति ख-ठन्भ्यां मुक्ते प्राग्वतीयष्ठञ्। तस्य लुक्। एतेन द्व्याचिता व्याख्याता।

काण्डान्तात् (४।१।२३)। षोडशहस्तप्रमाणो दण्डः—काण्डम्। यद्यपि विशेषणेन तदन्तविधिः सिद्धस्तथाऽप्यन्तग्रहणेऽसति 'क्षेत्रे' इत्येतत् श्रुतत्वात्काण्डस्यैव विशेषणं स्यान्न तदन्तस्य। ततश्चेहाऽपि स्यात्—'द्वाभ्यां काण्डाभ्यां = काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवे'ति। इह तु न स्यात्—'द्विकाण्डा क्षेत्रभक्तिरि'ति। अतोऽन्तग्रहणम्। मात्रच इति। यत्तु प्राचोक्तं 'द्व्यसचो लुगि'ति। तन्न। 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ ममे'ति सिद्धान्तात्।

द्विकाण्डी रज्जुरिति। नन्विहा'ऽपरिमाणाऽन्तादि'ति पूर्वेण निषेधः स्यात्। काण्डशब्दस्याऽऽयामपरतयाऽपरिमाणाऽर्थत्वात्। परितः = सर्वतः—आरोहतः, परिणाहतश्च येन मीयते तद्धि परिमाणम्-आढककुडवादि, न तु यथाकथञ्चित्परिच्छेदकमात्रम्। यदाहुः—'ऊर्ध्वमानं किलोन्मानं, परिमाणं

बृहच्छब्दरत्नः

यति 'अध्यर्धपूर्वे'तिलुकि, 'पञ्चोष्ट्रे'त्यादौ सावकाशः। श्रुतत्वादिति। अवान्तरवाक्याऽर्थबोधोत्तरं 'येन विधिरि'तिसञ्ज्ञासूत्रस्य प्रवृत्तिरिति भावः। न तदन्तस्येति। 'काण्ड'शब्देन 'येन विधिस्तदन्तस्ये'त्यस्य सञ्ज्ञासूत्रत्वात्केवलस्य, तदन्तस्य च वृत्त्योपस्थिततत्वादुभयोर्विशेषणेऽप्यनिष्टं स्पष्टमेव। सिद्धान्तादिति। काण्डस्य तिर्यङ्मानत्वेनोर्ध्वमानत्वाऽभावात्। 'द्व्यङ्गुलमि'त्यत्र 'द्विगोर्नित्यमि'ति द्व्यसचो लुगि'त्युत्तरग्रन्थस्तु युक्त एव। ऊर्ध्वाऽवस्थितशङ्क्वाकारपरिच्छेदकत्वेनोर्ध्वमानत्वात्। न तु यथाकथञ्चिदिति। तेन 'द्वे वर्षे भूता' 'द्वाभ्यां शताभ्यां क्रीते'त्यर्थेऽपि 'द्विवर्षा' 'द्विशते'त्यत्र प्रतिषेधसिद्धिः[१]। स्पष्टञ्चेदं 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' 'आर्हादगोपुच्छे'त्यादावाकरग्रन्थे। उन्मानन्तु परिमाणशब्देन गृह्यते एव। विस्तादिग्रहणसामर्थ्यात्। ऊर्ध्वमानं किलेति। 'ऊर्ध्वमान'शब्देन तुलाऽऽरोहेण

लघुशब्दरत्नः

चेद् बिस्तकम्बल्ययोरेवे'ति। तेनाऽन्यत्रोन्माने 'द्विपली' 'द्विनिष्की'त्यादिसिद्धिः। श्रुतत्वादिति। अवाऽन्तरवाक्याऽर्थबोधोत्तरं येन विधिः (१।१।७२) इत्यस्य प्रवृत्तेः, तत्काले श्रुतत्वात्तेनैव सम्बन्धे जाते, पश्चात्तदन्तविधावपि, पुनर्व्यापारे मानाऽभाव इति भावः।

इहापीति। इहैवेत्यर्थः। सिद्धान्तादिति। षोडशहस्तप्रमाणदण्डाऽर्थकाण्डशब्दस्तु

[१] 'प्रतिषेधसिद्धेः' इति क. ख. पाठः।

तु सर्वतः। आयामस्तु प्रमाणं स्यात्, सङ्ख्या बाह्या तु सर्वतः' ॥ इति। अत एव 'द्विहस्ता भित्तिरि'त्यत्र ङीप् न। अत्राऽऽहुः—'नियमाऽर्थमिदं 'क्षेत्रे एव निषेधो यथा स्यादि'ति। अतो 'द्विकाण्डी रज्जुरि'त्यत्र ङीबेव सूत्रस्य फलमि'ति।

पुरुषात्प्रमाणे (४।१।२४)। यद्यपि पुरुषशब्दो जातिवचनस्तथाऽपि 'द्वौ पुरुषौ प्रमाणमस्या' इति वाक्ये प्रमाणे वर्त्तते एव। प्रमाणशब्दसामानाधिकरण्यात्। वृत्तौ तु तत्स्वभावादेव। तथा च शुल्वसूत्रम्—'पञ्चाऽरत्निः पुरुष' इति। द्विपुरुषीति। अत्र न्यासकारः-'प्रमाणे लो द्विगोर्नित्यमि'ति द्वयसचो लुगि'त्याह। तन्न। पुरुषशब्दस्य [1]प्रमाणवाचित्वाऽभावेन 'प्रमाणे ल' इति श्लोकवार्त्तिकस्य तत्राऽप्रवृत्तेः। ये हि शमादिवत्प्रमाणत्वेन प्रसिद्धा-

बृहच्छब्दरत्नः

यन्मीयते निष्कादिकं, यच्च 'ऊरुद्वयसमि'त्यादिकं तत्सर्वं गृह्यते। ऊर्ध्वत्वस्य सर्वत्र करणत्वेन प्रवेशात्। [2]'आर्हादि'ति सूत्रे आयामत्वं, प्रमाणत्वञ्चाऽधिकमि'-त्याद्यग्रे निरूपयिष्यामः। द्विहस्तेति। तिर्यगवस्थितवस्तुनः परिच्छेदकत्वे प्रमाणत्वेनाऽपरिमाणाऽन्तत्वादिति भावः। ऊर्ध्वाऽवस्थितवस्तुन उच्चतापरिच्छेदकत्वे तु उन्मानत्वेन सूत्रे ग्रहणान्निषेधो न भवत्येव। अत एव 'द्वाभ्यां निष्काभ्यां क्रीते'त्यर्थे 'द्विनिष्की'त्यत्र ङीबुदाहृतः। केचित्तु 'परिमाण'शब्देन 'अपरिमाणबिस्ताचिते'ति सूत्रे उन्मानं न गृह्यते। मानाऽभावात्। बिस्तादयस्तु परिमाणविशेषा एवे'त्याहुः। इदञ्च मतं समासमनोरमायां ध्वनितम्, अपरितोषग्रस्तञ्चेति तत्रैव निरूपयिष्यामः। प्रमाणत्वेन प्रसिद्धा इति। 'शम'शब्दो हस्तवाची। 'पाणिः शमः शयो

लघुशब्दरत्नः

तिर्यङ्मानमिति न तस्योर्ध्वमानत्वमिति भावः।

प्रमाणे वर्त्तत एवेति। परिच्छेदके वर्त्तते इत्यर्थः। तत्स्वभावादिति। वृत्तिस्वभावादित्यर्थः। द्वयसचो लुगिति। तस्याऽयं भावः–'आयामो दैर्ध्यम्। तच्च द्विविधम्। तिर्यगूर्ध्वंञ्च। उन्मानञ्च तुलादावारोप्य येन मीयते तत्, इदञ्च। विनिगमनाविरहादि'ति। [3]प्रमाणवाचित्वाऽभावेनेति। तिर्यङ्मानस्यैव प्रमाणत्वात्। तिर्यङ्मानस्यैवाऽऽयामपदेन प्रमाणलक्षणे ग्रहणं, न तूर्ध्वमानस्य। [4]'ऊर्ध्वमानं किलोन्मानमि'त्युक्तेरिति भावः। [5]'द्विगोर्लुगि'त्यंशेऽपि 'प्रमाणे' इत्यनुवर्त्तत एवेति तात्पर्यम्। प्रमाणत्वेन प्रसिद्धा

[1] 'प्रामाण्यवाचित्वाऽभावेन' इति घ. पाठः।
[2] 'आद्वितीये आयामत्वा ब्राह्ममानत्वं च इति क. ख. पाठः।
[3] 'प्रामाण्य' इति घ. पाठः।
[4] 'ऊर्ध्वमानम्' इति क. पाठः।
[5] प्रमाणे लो द्विगोर्नित्यमित्यत्रेत्यर्थः।

स्तत्रैव तत्प्रवर्त्तते, न तु पुरुषशब्देऽपि। अन्यथा 'पुरुषद्वयसमि'त्यत्राऽपि लुक् स्यात्। स्पष्टं चेदं पुरुषहस्तिभ्यामण्च (५।२।३८) इति सूत्रे पदमञ्जर्याम्। न चैवं द्वयसज्दघ्नचावपि नाऽस्मात्स्यातामिति वाच्यम्। 'ऊर्ध्वमाने मतौ ममे'ति वचनात्। एवं पुरुषात्प्रमाणे (४।१।२४) इत्यस्याऽपि सामर्थ्यादेव प्रवृत्तिः। यत्तु तत्रैव सूत्रे 'द्विगोर्नित्यं लुगि'ति वृत्तिग्रन्थमुपादाय हरदत्तेनोक्तम्—'तस्मादप्राप्त एवाऽत्र लुग्विधीयते' इति। तदपि चिन्त्यम्। मुनित्रयाऽनुक्तस्य विधानोक्तेर्व्याहतत्वात्। यदपि प्राचीनप्रक्रियां व्याचक्षाणै-

---

**बृहच्छब्दरत्नः**

हस्त' इत्यमरमाला। 'पञ्चशाखः शयः पाणिरि'त्यमरकोषे 'शम' इति पाठान्तरमि'ति क्षीरस्वामी। आदिना अङ्गुल्यादीनां ग्रहणम्। एतेषां हि किञ्चिदूर्ध्वाऽवस्थितवस्तुनः परिच्छेदकत्वेनोन्मानवाचकत्वेऽपि, तिर्यगवस्थितवस्तुनः परिच्छेदकत्वे प्रमाणवाचकत्वमप्यस्त्येव। अत एव 'वितस्तिर्द्वादशाऽङ्गुल' इति प्रयोगसिद्धिः। 'पुरुष'शब्दस्य[१] तु ऊरुशब्दादीनामिव ऊर्ध्वाऽधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेन क्वचिदपि न प्रमाणवाचकत्वम्। अप्रवृत्तेरिति। 'द्विगोर्नित्यमि'त्यत्राऽपि 'प्रमाणे' इत्यनुवर्त्तते इति भावः।

पुरुषद्वयसमिति। न च विधानसामर्थ्यान्नेति वाच्यम्। विशिष्टेऽर्थे 'पुरुषमि'ति[२]बोधनेन चारितार्थ्यात्। न च 'प्रमाणे ल' इत्यत्र 'समर्थानां प्रथमाद्वे'त्यतो 'वे'त्यनुवृत्त्योक्तप्रयोगसिद्धिरिति वाच्यम्। आद्यपदयोरननुवर्त्तनेन 'वे'त्यस्याऽप्यननुवृत्तेरित्यादि वक्ष्यामः। 'आयामस्तु प्रमाणं स्यादि'ति लक्षणे उन्मानाऽतिरिक्त एवाऽऽयामो गृह्यते' इति मताऽन्तरं, तद्रीत्या शङ्कते—न चैवमिति। वचनादिति। उक्तमते विध्यर्थं, मताऽन्तरे नियमाऽर्थमावश्यकमिति भावः। सामर्थ्यादेवेति। तथा च 'पुरुषात्प्रमाणेऽन्यतरस्यामि'त्यादौ प्रमाणशब्दः परिच्छेदके वर्त्तते, उन्माने वा प्रमाणलक्षणं प्रवर्त्तते इति बोध्यम्।

---

**लघुशब्दरत्नः**

इति। तिर्यङ्मानत्वेन प्रसिद्धा इत्यर्थः। शमादीनामूर्ध्वाऽधरदिगवस्थितवस्तुपरिच्छेदकत्वेऽपि, तिर्यगवस्थितवस्तुनोऽपि परिच्छेदकत्वात्तत्त्वेन सिद्धिरक्षता। अन्यथेति। न च 'प्रमाणे ल' इत्यत्र 'समर्थानां प्रथमाद्वा (४।१।८२) इत्यतो 'वे'त्यनुवृत्तेरुक्तप्रयोगसिद्धिः। आद्यपदयोरननुवर्त्तनेन 'वे'त्यस्याऽप्यसम्बन्धात्। लुक् स्यादिति। 'शम' इत्यादाविवेति

---

[१] भावप्रकाशे एवमेव पाठः। 'पुरुषशब्दस्य, ऊरुशब्दादीनामपि च ऊर्ध्वाधरदिगवस्थित' इति तु क. ख. पाठः।

[२] 'पुरुषमिति बोधनेन' इत्यस्य द्वयसचो लुका विशिष्टेर्थे पुरुषमिति बोधनेनेत्यर्थः।

रुक्तं—'पुरुषहस्तिभ्याम् (५।२।३८) इत्यत्र पठ्यमानेन वार्त्तिकाऽन्तरेण लुगि'ति। तदपि रभसोक्तिमात्रम्। उदाहृतसूत्रस्य भाष्य-वार्त्तिककाराभ्यामस्पृष्टत्वादित्यास्तां तावत्। वस्तुतस्तु पुरुषात्प्रमाणे (४।१।२४) इति सूत्रे 'द्विगोस्तद्धितलुकी'त्यनुवर्त्तते, तत्सामर्थ्याल्लुगप्याक्षिप्यते। हरदत्तोक्तिरपि कथं चिदेवंपरतयैव नेयेति [1]सहृदयैराकलनीयम्। प्रमाणे किम्? । द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा गौः। तद्धितलुकीत्येव। समाहारे-पञ्चपुरुषी।

ऊधसोऽनङ् (५।४।१३१)। नादेशेनैव सिद्धेऽनङ्करणं धनुषश्च (५।४।१३२) इत्येतदर्थम्।

---

**बृहच्छब्दरत्नः**

सामर्थ्यादिति। यत्तु 'द्वाभ्यां पुरुषाभ्यां=पुरुषप्रमिताभ्यां[2] वस्तुभ्यां क्रीते'त्यर्थे ठकः[3] 'अध्यर्धपूर्वे'ति लुकि सूत्रस्य चारितार्थ्येन कथं सामर्थ्यमि'ति। तन्न। 'अभिव्यक्तपदार्था ये' इति न्यायेन त्वदुक्तस्याऽग्रहणात्। केवलप्रमाणवाची तु[4] 'पुरुषहस्तिभ्यामि'ति सूत्रादौ प्रसिद्ध एव। तद्धितलुक्कल्पना तु लक्ष्यसंस्कारकाले।

पुरुषाभ्यामिति। प्रमाणग्रहणाऽभावे अत्यन्तप्रसिद्धत्वात् 'अभिव्यक्तपदार्था ये' इति न्यायेन जातिवाचकपुरुषशब्दस्य ग्रहणं स्यात्। अत एव लुक्कल्पनाऽपि नाऽस्तीत्यपरमनुकूलम्। अत एव प्रतिपदोक्तपरिभाषाया नैव प्रवृत्तिः। 'पुरुषहस्तिभ्यामि'त्यत्र [5]'प्रमाणे' इत्यनुवर्त्तनात्।

नादेशेनेति। न चैवमनो लाक्षणिकत्वेन दोष इति वाच्यम्। ङीप्विधायकसूत्र-भाष्यादि-प्रामाण्येनोक्तपरिभाषाया[6] अप्रवृत्तेः। धनुषश्चेति। तथा च

---

**लघुशब्दरत्नः**

भावः। सामर्थ्यादिति। तिर्यगवस्थितवस्त्वपरिच्छेदकत्वेऽपि, सामर्थ्यात्प्रमाणपदस्य परिच्छेदकमात्रपरत्वमिति भावः। लुगप्याक्षिप्यत इति। इदमपि वृत्त्याशयवर्णनमात्रम्। वस्तुतस्तु 'द्वौ पुरुषौ प्रमाणमस्या' इत्यर्थे 'तदस्य परिमाणम्' (४।१।५७) इति ठकष्ठञो वा अद्धचर्द्ध (५।१।२८) इति लुकि, शास्त्रस्य चारितार्थ्यात्तदाक्षेपे न मानम्। तत्र हि परिमाणशब्देनोत्तरसूत्राऽनुरोधेन परिच्छेदकमात्रग्रहणमिति तत्त्वम्।

नादेशेनेति। अत एव 'ऊधसो नकारो लिङ्गाऽधिकारे' इति वार्त्तिककृतोक्तम्।

---

[1] 'सुहृदयैः' इति ङ. च. पाठः।

[2] 'समिताभ्याम्' इति ख, पाठः।

[3] 'ठकि' इति क. ख. अस्फुटः पाठः।

[4] 'थुलच्छसूत्रादौ' इति क. पाठः।

[5] 'प्रमाणे द्वयसजि'तिसूत्रात्प्रमाणे इत्यनुवर्त्तते तत्रेत्यर्थः।

[6] 'प्रमाणेनोक्तपरिभाषायाः' इति ख. पाठः।

दाम्न (४।१।२७)। बहुव्रीहिविशेषणत्वादेव सिद्धेऽन्तग्रहणं स्पष्टार्थम्। संख्यादेरिति। स्वरितत्वबलादेकदेश एवाऽनुवर्त्तते इति भावः।

केवलमामक (४।१।३०)। इत्यादीति। 'अध्यस्यां मामकी तनू' 'मित्रावरुणयोर्भागधेयी' [1]'अनिषेव्यास्तन्वः सन्तु पापीः' 'उताऽपरीभ्यो'[2]

बृहच्छब्दरत्नः

पञ्चमे 'धनुषोऽनङ्'[3], स्त्रीप्रत्ययप्रकरणे 'नश्चे'त्युक्तौ लाघवाऽभावः। किञ्च समासाऽन्तप्रकरणे [4]'ऊधसोऽनङि'ति सूत्राऽभावे पाक्षिकः कप् दुर्वारः। ननु 'मध्येऽपवाद'न्यायेन डाप्-प्रतिषेधावेव बाध्यौ, न तु 'अन उपधालोपिन' इति ङीबिति चेन्न। तस्य नियामकतायाः प्रागेवोक्तत्वेन निषेधे तात्पर्यात्। 'अन उपधालोपिन' इत्यत्र 'बहुव्रीहेरि'तिसूत्रस्याऽनुवृत्त्या बाधकल्पनाच्च। 'अध्यूध्नीं होत्रे अनुहरती'त्यादिवाक्यस्थाऽध्यूध्नीशब्दो लिङ्गवाचकोऽव्युत्पन्नः। एकदेशेति। सङ्ख्याग्रहणम्, आदिग्रहणञ्चेत्यर्थः। तेन 'व्यवयवदाम्नी'त्यपि सिध्यतीत्याहुः।

भागधेयीति। 'भागरूपनामभ्य' इति स्वार्थे 'धेय'प्रत्ययः। अभेदोपचारात्तद्वति वर्त्तमानः[5] 'पाप'शब्दः स्त्रीलिङ्गः। उताऽपरीति। एतेन 'अपरी'त्यत्र दन्त्योष्ठ्यो वो, न पवर्ग' इति हरदत्तोक्तमपास्तम्। ननु 'अपर'शब्दस्य 'स्वाङ्गशिटामनुदात्तानामि'त्याद्युदात्तत्वे, ङीपि आद्युदात्तं स्यात्, इष्यते त्वन्तोदात्तत्वमिति चेत्। सत्यम्। 'अपर'शब्दो घृतादिपाठादन्तोदात्तः। 'उताऽपरं यक्षि देवान्त्सुवीर्या नूनं [6]विदन्ताऽपरं सहस्वे'त्यादौ तथैव पाठात्। तत्र ङीपि उदात्तनिवृत्तिस्वरेणाऽन्तोदात्तत्वं युक्तमेव। 'पूर्वमनयन्नाऽपरं पुन' इत्यादौ पठ्यमानमाद्युदात्तत्वन्तु वृषादिपाठाद्बोध्यम्। 'अपर'शब्दस्याऽजादिषु पाठाट्टाबपि, 'अपरा पूर्वामभ्येति[7] पूर्वा परां पश्चादि'ति कश्चित्। एवमशिश्वीब्दस्याऽपि 'सख्यशिश्वी'तिनिपातना-

लघुशब्दरत्नः

एतेन 'लाक्षणिकत्वादस्याऽनोऽल्लोपोऽन इति न स्यात्। कुण्डोध्न्यादिभ्य आचारक्विपि आत्मनेपदाऽर्थञ्च ङकार' इत्यपास्तम्। अत्रत्यवार्त्तिकभाष्यप्रामाण्येनाऽन्ग्रहणे प्रतिपदोक्तपरिभाषाया, आचारक्विबभावस्य च, तदन्ते आत्मनेपदाऽभावस्य वा कल्पनात्।

१ 'अनिषद्याः' इति ङ. छ. पाठः। 'अनिषव्याः' इति घ. पाठः।
२ 'उतापरिभ्यो' इति छ. पाठः।
३ 'न नङ' इति क. ख. पाठः।
४ 'उधसह इति सूत्राऽभावे' इति क. ख. पाठः।
५ 'वर्त्तमानपापशब्दः' इति ख. पाठः।
६ 'विदन्नाऽपरम्' इति क. पाठः।
७ 'पूर्वामभ्येति पश्चात्' इति ख. पाठः।

**मघवा विजिग्ये' 'समानीव आकूतिः' 'आर्यकृती' 'सुमङ्गली' 'शिवा रुद्रस्य भेषजी' । प्रत्युदाहरणन्त्विवति । यत्तु प्राचा 'अन्तर्वती' [1]'पतिवती'ति प्रत्युदाहृतं, तदयुक्तमिति भावः । व्यस्ते कथमिति । यत्तु प्राचा 'समस्तेऽप्युपचार' इति वर्णितं, तन्मुधेति भावः ।**

---

बृहच्छब्दरत्नः

दाद्युदात्तत्वं बोध्यम् । 'नाऽस्याः शिशुरस्तीत्यशिश्वी'ति । तत्सूत्रे 'भाषा'ग्रहणन्तु भाषायां नित्यं, वेदे क्वचिदिति बोधनाऽर्थम् । तेन वेदे [2]'सखा सप्तपदी भवे'ति स्त्रीप्रत्ययरहितपाठः सङ्गच्छते । 'आर्येण कृते'ति प्राक्सुबुत्पत्तेः समासे अकाराऽन्तत्वम् । 'सुमङ्गल'शब्दात् ङीपु छन्दस्येव । गौरादिषु 'सुमङ्गलात्सञ्ज्ञायामि'ति पाठात् । 'सुमङ्गलशब्दो 'लघावन्ते' इति मध्योदात्त' इत्याहुः । 'सुमङ्गलीरि'त्यादौ तु [3]मत्वर्थे 'ई'प्रत्ययो बोध्यः । स्पष्टञ्चेदं भाष्ये । 'भिषज्यते' इति कण्ड्वादियगन्तात्क्विप्, 'भियः षुक् ह्रस्वश्चे'त्युणादिसूत्रेणाऽजिप्रत्ययाऽन्तो वा । तस्मात् 'तस्येदमि'त्यणि, अस्मादेव निपातनादादिवृद्धेरपवाद एकारः । न चाऽणन्तत्वादेव सिद्धिरिति वाच्यम् । नियमाऽर्थत्वात् । अपत्ये अणि जातिप्रयुक्तो ङीष् न भवत्येव । यत्तु 'सञ्ज्ञायां 'भेषज'शब्दस्याऽवयवाऽर्थोऽभावेनाऽणन्तत्वाऽभाव' इति । तन्न । स्वरादिसिद्ध्यर्थं, शब्दसाधुत्वाऽन्वाख्यानाऽर्थञ्च रथन्तराऽऽदिशब्दानामिव व्युत्पादनस्याऽऽवश्यकत्वात् । किञ्च सञ्ज्ञाशब्देष्वपि प्रसिद्धाऽर्थोऽनुसन्धाने एव प्रवर्त्तते । 'अभिव्यक्तपदार्था ये' इति न्यायत्यागे मानाऽभावात् । अत एव 'मामकग्रहणं नियमाऽर्थमि'ति भाष्योक्तिः सङ्गच्छते ।

तदयुक्तमिति । एतेना'ऽन्तर्वत्नी''पतिवत्नी'त्यत्र 'उगितश्चे'ति ङीबि'त्यपास्तम् । नुक्सन्नियोगान्निपातनेन तद्भावे भावात् । नुकः समुदायाऽवयवत्वेन नान्तप्रातिपदिकस्योगिदन्तत्वाऽभावाच्च । नुका 'उगितश्चे'ति ङीपो बाध इत्यपि [4]सुवचम् । तन्मुधेति । 'यज्ञसंयोगे' इत्यस्य 'यज्ञफलप्रतियोगिकमाधिपत्यञ्चेत्पतिशब्दाऽर्थो भवती'त्यर्थः[5] । इदञ्च शूद्रस्य यज्ञाऽनधिकारित्वेन 'वृषलपत्नी'त्यादा-

---

लघुशब्दरत्नः

तदयुक्तमिति । 'अन्तर्वती'त्यत्र मतुपोऽप्राप्तेरिति भावः । तन्मुधेति । विभाषा सपूर्वस्य (४।१।३४) इत्यत्र 'यज्ञसंयोगे' इत्यस्याऽसम्बन्धात् । अत एव 'आशायाः पतिः आशापत्नी'ति तत्रोदाहृतं भाष्ये । आशापूरकत्वेन कस्याश्चित्तत्पतित्वमिति भावः ।

---

[1] 'पतिवती' ति. छ. नास्ति ।

[2] 'सखी सप्तपदी भव' इति क. ख. पाठः ।

[3] 'छन्दसीवनिपौ च' इत्यनेन 'ई'प्रत्यय इत्यर्थः ।

[4] 'सुवचनम्' इति ख. पाठः ।

[5] 'पतिशब्दो प्रवीतात्यर्थः' इति क. ख. पाठः ।

**पूतक्रतोरै च** (४।१।३६)। ऐकार आदेशो, न तु प्रत्ययः। उत्तरसूत्रे 'उदात्त' इत्युक्तेः। **न त्विति**। अन्यथा 'वृषाकपि'शब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरुरि'ति मध्योदात्त उदात्तत्वं प्रयोजयति। अग्न्यादिषु त्रिषु स्थानेऽन्तरतमः (१।१।५०) इत्येव सिद्धमि'ति प्राचां ग्रन्था विरुध्येरन्निति भावः। **उदात्तैकार इति**। 'मनु'शब्दो ह्याद्युदात्तः। 'शृस्वृस्निही'-त्यादौ मनेरुप्रत्ययविधायके सूत्रे 'धान्ये निदि'त्यधिकारात्। समासनिर्देशेनैतद्दर्शयति–'उदात्त इत्यनुवर्त्तमानं सम्बन्धाऽनुवृत्तेरैकारेणैव सम्बध्यते, न त्वौकारेणाऽपी'ति। ततश्च यदुक्तं प्राचा–'ऐकारौकारावुदात्तौ स्त' इति, तदुपेक्ष्यम्। वृत्तिपदमञ्जर्यादिविरोधादिति भावः। **मनायीति**। मध्योदात्तम्। इतरद् द्वयमाद्युदात्तम्। **एता–कर्बुरा**। **वर्णानामिति**। एतः, शोणः, शितिः, पृश्निः, पृषत्–इत्युदाहरणानि। **त्र्येण्येति**। अत्र उत्तरपदस्योपसर्जनत्वेऽपि, समस्तस्य अनुपसर्जनत्वमिति भावः। सञ्ज्ञात्वाण्णत्वं,

---

**बृहच्छब्दरत्नः**

वसम्भवेऽपि 'विभाषा सपूर्वस्ये'त्यनेन सिद्धमिति भावः। 'विवाहजन्यसंस्कारवैशिष्ट्यमेव यज्ञसंयोगः। उत्तरसूत्रे 'नित्य'ग्रहणसामर्थ्याद्विकल्पे लब्धे 'विभाषा'-ग्रहणं योगविभागाऽर्थम्। तत्सामर्थ्यात्सर्वोऽपि 'पति'शब्दो गृह्यते। 'तक्रकौण्डिन्य'न्यायेन 'विभाषा सपूर्वस्ये'तिसूत्रं समानादिपूर्वे न प्रवर्त्तते। 'नित्यं सपत्न्यादिष्वि'तिसूत्रस्य ङ्यन्तोच्चारणसामर्थ्येन रूढ्यर्थमपि निपातनाऽऽश्रयणाद्बहुव्रीहावेव प्रवृत्तिरि'तिवादिनां मतेऽपीच्छयाऽङ्गीकृतस्त्रियामुक्तैव रीतिः। न चैवं यज्ञसंयोगग्रहणं व्यर्थमिति वाच्यम्। लक्षणया प्रयोगेऽपि शक्त्या प्रयोगाऽभावात्। तत्र बोधवैलक्षण्यात्। शक्यताऽवच्छेदकस्यैव लक्षणायां भानाऽङ्गीकारेऽपि विशेष्यादेर्भिन्नत्वात्। ध्वनितञ्चेदं 'पुंयोगादाख्यायामि'ति सूत्रे 'चतुर्भिः प्रकारैरतस्मिन् 'स' इत्येतद्भवती'त्यादिना भाष्ये। 'आचारक्विबन्तात्कर्त्तरि क्विबि'ति मूलोक्तप्रकारे तु दोषशङ्कैव न।

**अन्यथेति**। अनेन प्रकृतसूत्रे एव 'दीर्घमध्यो ने'त्युच्यते, न सर्वत्र। **समस्तस्येति**। यत्तु 'त्रिषु स्थानेषु एता त्र्येणी'त्याहुः। तन्न। योगविभागस्या-

---

**लघुशब्दरत्नः**

**इत्युक्तेरिति**। प्रत्ययत्वे हि आद्युदात्तश्च (३।१।३) इत्येव सिद्धे, तद्वैयर्थ्यं स्पष्टमेवेति भावः। **न त्वौकारेणेति**। ततश्च स आन्तरतम्यादनुदात्त एवेति भावः। **इतरद् द्वयम्**—'मनावी' 'मनुरि'त्येतत्। **समस्तस्येति**। एतच्च [1]गृह्यवृत्त्यनुसारेणोक्तम्। टिड्ढाणञ् (४।१।१५) इत्यादाविवाऽत्रापि गृह्यमाणविशेषणत्वमेवे'ति उपमानानि (२।१।५५)

---

[1] 'गृह्य' इति क्वाचित्कम्।

छान्दसत्वाद्वा। क्रमेके इति। अत्र 'च्छन्दसी'ति भाष्योक्तेर्लोके 'गतो गणस्तूर्णमसिक्निकानामि'त्यादिप्रयोगाः प्रामादिका' इति प्राञ्चः। वस्तुतस्तु 'छन्दस्येके'इत्यन्वयाद्भाषायामपीति भाष्याऽभिप्रेतम्। अन्यथा एकग्रहणं न कुर्यात्। न हि छन्दसि 'पलिक्नीरिद्युवतय' इत्यादिप्रयोगेषु कश्चिद्विप्रतिपद्यते। विशुद्धिवाचीति। 'दैप् शोधने' इति स्मरणात्। 'अवदातः सितो गौर' इति कोशे तु विशुद्धत्वसाधर्म्यात् प्रयोग उपनिबद्ध इति भावः। लघाविति। अन्ते एकस्मिन् लघौ, द्वयोश्च लघ्वोः परतो [1]बह्वषो = बह्वच्कस्य गुरुरुदात्तः

**बृहच्छब्दरत्नः**

ऽगतिकगतित्वेन समासविधायकत्वाऽभावात्। 'त्रिषु' इति सप्तम्या अधिकरणकारकत्वेन क्रियाऽन्वयस्यैवोचितत्वेनाऽसामर्थ्याच्च। क्रियाऽन्तर्भावेण वृत्तिकल्पने मानाऽभावाच्च। 'शलल्या' इति तृतीयान्ताऽन्वितक्रियायामन्वयाऽभावेन सप्तम्यनापत्तेश्च। अत एवैतद्व्याख्याने नारायणवृत्तौ 'बहुव्रीहिरि'त्येवोक्तः। यत्तु 'अनुपसर्जनादि'ति गृह्यमाणस्यैव विशेषणम्। न चैवं 'विभाषा सपूर्वस्ये'त्येतपतिशब्दाऽन्तस्य विशेषणं न स्यादिति वाच्यम्। [2]भाष्यादिप्रामाण्येनाऽङ्गीकारात्। 'सपूर्वस्ये'त्यनेन पतिशब्दाऽन्तस्य गृह्यमाणत्वाच्च। एवं 'क्रीतात्करणपूर्वादि'-त्यत्राऽपि बोध्यम्। स्पष्टञ्चेदं भाष्ये' इत्याहुः। तन्न। व्यवस्थितविभाषयैव लक्ष्याऽनुरोधेन प्रवृत्त्यप्रवृत्त्योः साधयितुं शक्यत्वेन, 'अनुपसर्जनादि'त्यस्य वर्णविशेषणत्वे च [3]फलाऽभावात्। 'त्र्येणी'ति प्रयोगसंवादेन तथैव युक्तत्वाच्च। अत एवा'ऽसितपलितयोर्न'त्यादिकं सूत्रसिद्धाऽर्थकथनमि'ति न्यासकारादयः। वस्तुतस्तु 'अनुपसर्जनादि'ति गृह्यमाणस्यैव विशेषणं युक्तम्। अन्यथा वैयर्थ्याऽऽपत्तेः। 'टिड्ढाणञि'त्यादौ तथा निर्णीतत्वाच्च। अतः 'स्त्रियामि'त्यनेनोपात्तस्य विशेषणादापिशलेत्यादौ दोषाऽभावेनाऽनुपसर्जनाऽधिकारो न कार्य्य' इति भाष्यकाराद्युक्तं सङ्गच्छते। स्पष्टञ्चेदमुपमानानि सामान्यवचनैरिति सूत्रे भाष्य-कैयटयोः। तदेतत्सकलमभिसन्धायाऽऽह—छान्दसत्वाद्वेति। ङीप्, णत्वञ्च छान्दसत्वादित्यर्थः। एवञ्चाऽनुपसर्जनादिति वर्णवाचिन एव विशेषणं, मूलग्रन्थस्तु नारायणवृत्त्यनुरोधे-

**लघुशब्दरत्नः**

इति सूत्रभाष्यसंमते पक्षे 'त्रिषु स्थानेषु एनी त्र्येणी'ति बोध्यम्। छान्दसत्वाद्वा ङीप्, तद्ध्वनयन् सञ्ज्ञात्वाऽनङ्गीकारे आह—छान्दसत्वाद्वेति। 'ङीप्, णत्वं चे'ति शेषः।

प्राञ्च इति। कैयटादय इत्यर्थः। छान्दसेषु सूत्रेषु वाग्रहणवदिदम् 'एके' इत्यपीति

[1] 'बह्वष' इति क्वचिन्नास्ति।

[2] 'भाष्यादिप्रमाणेन' इति क. ख. पाठः।

[3] 'साफल्याऽभावात्' इति ख. पाठः।

स्यात्। 'अपि'ति अचः प्राचां सञ्ज्ञा। कृष्णेति। 'कृपेश्चे'ति 'न'प्रत्यये, 'कपेश्चेति' सौत्राद्धातोरौणादिके इलचि च कृष्ण-कपिलावन्तोदात्तौ।

षिद्गौरादिभ्यश्च (४।१।४१)। 'श्वन्'शब्दोऽत्र पठ्यते। तेन ऋन्नेभ्यो ङीप् (४।१।५) इत्यत्र यत्प्राचा 'शुनी'त्युदाहृतं, तत्प्रामादिकम्। यत्तु व्याचक्षते—'श्वानमाचष्टे, श्वेवाऽऽचरतीति वाऽर्थे णिचः, क्विपो वा क्वौ, उपसर्जनत्वान्ङीषभावे 'निःशुनी'त्यादिवत् ङीबि'ति। [1]तत्र–णिचि सम्प्र-

बृहच्छब्दरत्नः

नेति हृदयम्। कृषेश्चेति। यद्यपि पञ्चपाद्यां 'कृषेर्वर्णे' इति पठितं, तथाऽपि दशपाद्यनुरोधेनोक्तम्। तत्र हि 'न'प्रत्ययप्रकरणे 'तृषिशुषिरसिकृषेश्च किदि'ति पठितम्। कपेश्चेति। इदञ्च दशपाद्याम्, इहैव हरदत्तग्रन्थे च स्पष्टम्। पञ्चपाद्यान्तु 'कमेः पश्चे'ति सूत्रितम्। श्वनिति। इदं च [2]आभात्सूत्रे, विप्रतिषेधसूत्रे च भाष्ये स्पष्टम्। 'दूत तदन्ताच्चे'ति पठ्यते। इदञ्च सामर्थ्यादनुपसर्जने प्रवर्त्तते। तेन 'दूती'-'शिवदूती'ति सिद्धम्। तरुण-तलुन-शब्दावप्यत्र पठ्येते। तेन ङीप्-ङीषोर्विकल्पः। 'एषण करणे' इति पठ्यते। तेनाऽधिकरणे ल्युटि ङीबेव। 'गौतम'शब्दोऽत्र पठ्यते। तस्याऽपत्याऽर्थकऋष्यणन्तत्वेन जातित्वात् शार्ङ्गरवादिपाठात् ङीना सह समुच्चयः। 'अनडुही' 'अनड्वाही'ति सप्रत्ययपाठस्तु 'आम्'विकल्पाऽर्थः। 'आग्रहायणी'शब्दपाठस्तु 'आग्रहायणीभार्ये'त्यत्र 'पुंवत्कर्मधारये'ति पुंवद्भावबाधनाऽर्थः। गवयादीनां पाठे तु 'जातेरस्त्री'ति सूत्रस्थं 'गवयहये'ति वार्त्तिकं न कर्त्तव्यमित्याहुः। [3]'शातन-पातनशब्दौ ङीबन्तावि'ति आभात्सूत्रे हरदत्तादयः।

लघुशब्दरत्नः

तेषां भावः। नप्रत्यय इति। दशपाद्यनुसारेणेदम्। तत्र हि नप्रत्ययप्रकरणे 'तृषिशुषिरसिकृषेश्च किदि'ति, इलच्प्रकरणे 'कपेश्चे'ति पठितम्। 'कपिः सौत्र' इति चोक्तम्। पञ्चपाद्यां तु 'कृषेर्वर्णे' इति नक्प्रत्ययः, 'कमेः पश्चे'ति इलजि'त्युक्तम्।

पठ्यत इति। इदं चाऽसिद्धवत्सूत्रे भाष्ये स्पष्टम्। उक्तं रूपमिति (५८६) पृष्ठे। नान्तं रूपमित्यर्थः। णिचि नस्तद्धिते (६।४।१४४) इति टिलोपे, तदभावः स्पष्ट एव। न च नस्तद्धिते (६।४।१४४) इति टिलोपो नेष्ठवद्भावेन, टेः (६।४।१५५) इति तु प्रकृत्यैकाच् (६।४।१६३) इति निषिद्धमिति वाच्यम्। अस्य मतस्य नामधातौ दूषयिष्यमाणत्वात्।

[1] 'तन्न' इति ङ. छ. मुद्रितेषु च पाठः।
[2] आभात्सूत्रे=असिद्धवदत्राऽऽभादिति सूत्रे इत्यर्थः।
[3] 'सातन' इति ख. पाठः।

७४

सारण-टिलोपयोरुक्तरूपं [1]मुख्यमते दुर्लभम्। अन्यत्र तु आस्तां कथञ्चित्।

**आवपनं चेदिति।** ओप्यते = निक्षिप्यते धान्यं यस्मिन्। **गोणाऽन्येति।** यस्या यादृच्छिकं नाम। **अकृत्रिमेति।** यथा–'सैषा स्थली यत्र

---

बृहच्छब्दरत्नः

**अन्यत्रेति।** 'णाविष्ठवदि'त्यनेन 'नस्तद्धिते' इत्यस्याऽतिदेशाऽभावः[2], 'टेरि'त्यस्य [3]तु सम्प्रसारणपूर्वत्वे कृते एकाऽच्त्वेन प्रकृतिभाव' इति मते, 'क्विपः कावि'ति मते च। 'कथञ्चिदि'त्युक्त्या मताऽन्तराऽऽश्रयणेऽपि 'अनुनासिकस्ये'ति-दीर्घस्य दुर्वारत्वेनोक्तरूपाऽसिद्धिरिति बोधितम्। **यस्या यादृच्छिकं नामेति।** नन्वत्र आवपनरूपाऽर्थो गम्यते, उत न[4]?। नाऽऽद्यः। तत्र प्रत्युदाहरणत्वाऽनुपपत्तेः। द्वितीये तु 'अभिव्यक्तपदार्था ये' इति न्यायेन प्राप्त्यभावे किम् 'आवपन'ग्रहणेनेति। अत्राहुः–'प्रथमोपस्थितपुराणादिप्रसिद्धाऽर्थबोधकशब्देष्वेव विधीनां चरिताऽर्थत्वेन विलम्बोपस्थितिकसञ्ज्ञासु न प्रवृत्तिरि'ति हि उक्तन्याये बीजम्। एवञ्चाऽऽवपन-ग्रहणं विलम्बोपस्थितोऽर्थोऽपि गृह्यतेऽत्रेत्यस्मिन्नर्थे मानम्। अत एव लक्षण-प्रतिपदोक्तपरिभाषा न प्रवर्त्तते। तस्यामुक्ताऽर्थस्यैव मूलत्वात्। एतेन 'नीलशब्दो न गुणवचनो गृह्यते, 'गुणे शुक्लादयः पुंसी'त्युक्तत्वेन स्त्रियामभावात्, किन्तु अभेदोपचारात्, मतुपो लोपाद्वा गुणिपरः। न चैवं 'काल'शब्देऽप्येवमेवाऽऽपत्तौ वर्णग्रहणाऽनन्वयः। 'वर्ण'शब्दस्य तद्वति लक्षणया हरदत्तादिभिर्व्याख्या-तत्वात्। अन्प्रत्ययाऽन्तस्तु न गृह्यते। 'अन्'प्रकृतिङीषन्त-प्रविष्ट-प्रथमोपस्थित-'नील'शब्दमादायैव शास्त्रस्य चारितार्थ्यादि'ति परास्तम्। 'नील्या अन्नि'ति वार्त्तिके तु 'नील'शब्द ओषधिवाच्येव गृह्यते। 'रूढिर्योगमपहरती'ति न्यायात्। उभयोर्ग्रहणेऽपि नाऽस्माकं क्षतिः। वस्तुतस्तु 'अन्यतो ङीषि'ति सूत्राऽनन्तरं

---

लघुशब्दरत्नः

तद् ध्वनयतोक्तम्—मुख्यमते इति। 'नस्तद्धिते (६।४।१४४) इत्यस्याऽपि प्रकृतिभाव इति षपूर्व (६।४।१३५) इति प्रकृत्यैकाच् (६।४।१६३) इति सूत्रभाष्ये ध्वनितत्वेन, पूर्वं टिलोपाऽभावेऽपि सम्प्रसारणे, 'वार्णादाङ्गमि'ति पररूपात्पूर्वं टिलोप इति तस्य दौर्लभ्यम्। तदुक्तं—सम्प्रसारणटिलोपयोरिति। अन्यत्र = क्विबन्तात् क्वौ। अनुनासिकस्य (६।४।१५) इति दीर्घेऽपि एकदेशविकृतन्यायेनाऽन्त्वमिति सम्प्रसारणं भवतीति भावः। कथं चिदिति। अनेनाऽरुचिः सूचिता। तद्बीजम् एषामनभिधानम्। अन्यथा अनुप-

---

[1] 'उक्तं रूपम्' इति मुद्रितः पाठः।

[2] 'अतिदेशाऽभावे' इति क. ख. पाठः।

[3] तुः क्वचिन्नास्ति।

[4] 'उत न। आद्ये प्रत्युदाहरणाऽनुपपत्तेः' इति ख. पाठः।

विचिन्वता त्वामि'ति । स्थलाऽन्येति । कृत्रिमा = पुरुषेण संस्कृता । यथा 'स्थलयोदकं परिगृह्णन्ति' । श्राणा = पक्का । अयोविकार इति । 'फाल' इति प्रसिद्धः । कुशाऽन्येति । छन्दोगाः स्तोत्रीयागणनाऽर्थानौदुम्बरान् शङ्कून् 'कुशा' इति व्यवहरन्ति । अतः कृकमि (८।३।४६) इति सूत्रे, 'हानौ तूपायने'ति व्याससूत्रे, 'कुशा वानस्पत्या स्थ, ता मा पाते'ति श्रुतौ च प्रसिद्ध एवाऽयम् । पतिंवरेति । तथा च पाणिग्रहणोत्कण्ठाऽभिधायित्वाद् गुणवचनोऽयमिति भावः ।

---

बृहच्छब्दरत्नः

'कालनीलाभ्यामि'ति वाच्यम् । [1]'सञ्ज्ञायां' 'वर्णादि'त्यनुवर्त्तते । एवञ्च [2]'गुणिवाचक'काल'शब्दादर्श आद्यचि गवादिपरत्वे, प्रकृतसूत्रेण 'काली'ति ङीष् भवत्येव । अत एव 'वर्णश्चेदि'त्यस्य 'वर्णवान् पदार्थो वाच्यश्चेदि'त्यर्थो, न तु 'वर्णः प्रवृत्तिनिमित्तमि'त्यर्थः । अत एव 'नील्या रक्ता गौर्नीली'ति भवत्येवेत्यलम् । यत्तु 'गौण्या वृत्त्या [3]अन्यत्र प्रयुक्ते वारणाऽर्थमावपनग्रहणमि'ति । तन्न । सूत्रे 'गोण'शब्दग्रहणेन 'गोणी'शब्दादप्राप्तेः । 'गोण'शब्दस्याऽप्रसिद्धेश्च । सूत्रे 'गोण'ग्रहणं स्त्रीविषयत्वादप्राप्ते ङीष्विधानाऽर्थम् ।

एवं कुण्डग्रहणमपि । ननु यद्यपि 'पिठरं स्थाल्युखा कुण्डमि'त्यमरकोशे कुण्डशब्दस्य नित्यनपुंसकत्वमुक्तं, तथाऽपि 'पिठरे तु न ना कुण्डमि'ति मेदिनीविश्व-कोषादिप्रामाण्यादस्त्रीविषयत्वेनाऽमत्रेऽपि जातिलक्षणङीषः प्राप्तिरस्त्येवेति चेन्न । 'अस्त्री कमण्डलुः कुण्डी व्रतिनामासनं वृषी'त्यमरकोषबलेन कमण्डलुपात्रवाचकस्य नित्यस्त्रीत्वात्तमादाय लाघवेन विधायकत्वस्यैवोचितत्वात् । न च कमण्डलुवाचक'कुण्डी'शब्दस्याऽपि 'कुण्डमग्न्यालये, [4]मानभेदे, देवजलाशये' इतिमेदिन्यादिप्रामाण्येन नपुंसकत्वस्याऽप्युक्तत्वेनाऽस्त्रीविषयत्वमस्त्येव, कमण्डलोरपि जलाशयत्वादिति वाच्यम् । 'कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमानि'त्युक्त-

---

लघुशब्दरत्नः

सर्जनात् (४।१।१४) इति सूत्रस्य तदन्तविधिज्ञापकता भाष्योक्ता भज्येत । किञ्चाऽऽचक्षाणकर्त्रादिरूपाऽर्थस्याऽपि स्वशब्दाऽर्थत्वेन तस्याऽनुपसर्जनत्वादस्त्येव ङीषः प्राप्तिः । 'अभिव्यक्ते'ति न्यायस्तु पदकार्यविषय एवे'ति[5] ।

---

[1] 'संज्ञायां वर्णादित्यनु·······एवञ्च' इति क. ख. खण्डितः पाठः ।

[2] नील्याद्योषधिवाचकात् अर्शआद्यचि नील्याद्योषधिरक्तगवादिद्रव्यपरत्वं यदा नीलशब्दस्य तदेत्यर्थः ।

[3] 'अन्यत्र प्रयुक्तवारणार्थम्' इति ख. पाठः ।

[4] 'यानभेदे' इति क. ख. पाठः ।

[5] 'एवेति भावः' इति लिखितेषु पाठः । 'भाव इत्यपपाठ' इति तु भावप्रकाशे ।

**बह्वादिभ्यश्च (४।१।४५)।** 'बहुशब्दस्य गुणवाचित्वात् पूर्वेण सिद्धे उत्तरार्थं ग्रहणमि'त्याहुः। वस्तुतस्तु बहुशब्दो, नित्यं छन्दसि (४।१।४६)

---

**बृहच्छब्दरत्नः**

रार्द्धेन कमण्डलुव्यतिरिक्त-भू-रूपजलाशयस्य ग्रहणात्। किञ्च 'देवजलाशये' इत्यत्र न द्वन्द्वः। 'रथघोषाऽधिकरण'न्यायेन षष्ठीतत्पुरुषस्य लघीयस्त्वात्। किञ्च स्पष्टप्रतिपत्तये 'कुण्डमग्न्यालये मान-देव-भेदे जलाशये' इत्येव कर्त्तुं युक्तत्वाच्च। अत एव 'सूर्यकुण्डं' 'दुर्गाकुण्डमि'त्यादिव्यवहारः पुराणादिप्रसिद्धः सङ्गच्छते। 'सुते पुमानि'त्युक्त्या 'कन्यायां स्त्री'त्यर्थोऽप्युक्तप्रायः।

गुणवाचित्वादिति। 'वचन'ग्रहणसामर्थ्यात्, 'प्राचामि'त्यनुवर्त्तमाने 'वे'त्यनेन व्यवस्थितविभाषाऽऽश्रयणाच्च सञ्ज्ञा-जाति-क्रिया-शब्दाऽतिरिक्तानां ग्रहणम्। अत एव बह्वादिगणे पठितस्य 'सर्वतोऽक्तिन्नर्थादि'त्यस्य 'सुगन्धिः' 'प्रियकतिर्वेश्ये'-त्यादौ न प्रवृत्तिः। 'क्वचिदप्रवृत्तिरेवे'त्यर्थात्। 'सर्वतोऽक्तिन्नर्थादि'त्यस्य कृदन्ते एव प्रवृत्तिरित्यत्र न मानम्। 'सर्वत' इत्यस्य वैयर्थ्याऽऽपत्तेः। अत एवाऽल्पाऽर्थे 'ग्रामटिका'शब्दवच्छकटिशब्दोऽपि [1]'साधुरि'त्याहुः। 'क्वचिदन्यदेवे'त्यर्थाऽङ्गीकारेण [2]'वसु'शब्दादाद्युदात्तात् ङीप्, आद्युदात्तता वा। ध्वनितञ्चेदं भाष्ये। एतेन 'सङ्ख्यावाचकबहुशब्दस्य गुणवाचकत्वेन[3] पूर्वसूत्रेण सिद्धावपि, वैपुल्यादिवाचकग्रहणाऽर्थमत्र पाठ' इति परास्तम्। अत एव 'बहु-राशि-सङ्घ-गणादिशब्दानां[4] गुणवचनत्वेऽपि अनभिधानात् ष्यञ् ने'ति न्यासकारादयः। गुणत्वप्रतिपादका भाष्यादिग्रन्थास्तु न युक्ता इति स्पष्टमेव। [5]'स्वाद्वी' 'मृद्वी' 'चार्वी' 'वस्वी'-त्यादिप्रयोगविरोधात्, निषेधवैयर्थ्याऽऽपत्तेश्चेति दिक्।

उत्तरार्थमिति। यत्तु 'बहूनिच्छति बहूयति, बहूयतेः क्विप्, बहू' इति दीर्घान्तात् ङीषर्थं 'बहु'ग्रहणमि'ति। तन्न। 'बह्वादिभ्यश्चे'ति सूत्रे 'उत' इत्यनुवर्त्त्य 'बहु'शब्दस्य सम्भवव्यभिचाराभ्यां विशेषणात्। अनुपसर्जनाऽधिकारेण प्रसिद्धाऽर्थस्योपसर्जनत्वादत्राऽप्राप्तेश्च। न चैवं बह्वादिषु 'अहन्'शब्दपाठेऽपि 'दीर्घाऽह्नी प्रावृडि'ति बहुव्रीहावन्तोदात्तत्वं न स्यादिति वाच्यम्। 'अहन्'शब्दपाठसामर्थ्येन प्रवृत्तिरि'ति हरदत्तादिभिरभिहितत्वात्। 'द्वयोरह्नोर्भवा द्व्यह्ने'त्यादौ यथा न ङीप् तथा तत्रैव निरूपयिष्यामः। न चैवं 'बहु'ग्रहणसामर्थ्यादेव

---

**लघुशब्दरत्नः**

इत्याहुरिति। अत्राऽरुचिबीजन्त्वाकडारसूत्रस्थभाष्यविरोधः। तत्र हि समस्त-कृदन्त-

---

[1] 'पृषोदरादित्वात् शकटिशब्दः साधुरि'ति चिदस्थिमालायाम्।

[2] उप्रत्ययान्तो वसुशब्दः। स च 'उ'प्रत्ययस्य नित्त्वादाद्युदात्त इति ध्येयम्।

[3] 'गुणवाचित्वेन' इति क. ख. पाठः।

[4] 'गवादिशब्दानाम्' इति क. ख. पाठः।

[5] 'साध्वी' इति पाठान्तरम्।

इत्युत्तरसूत्रं चेति द्वयमपि व्यर्थमेव। सर्वविकल्पानां छन्दसि व्यवस्थितत्वात्।

पुंयोगादिति। तथा च गौणी वृत्तिरिति भावः। यदा तु मुख्यार्थात् तस्येदम् (४।३।१२०) इत्यण्, तदा 'गौपी'त्येव भवति। 'योगश्चेह दम्पतिभाव एवे'त्येके। वस्तुतस्तु सङ्कोचे मानाऽभावाज्जन्यजनकभावोऽपि[1]

बृहच्छब्दरत्नः

तद्बाधः। उत्तराऽर्थत्वेनोत्तरसूत्रवत्सत्त्वात। नन्वेवमुत इति तपरकरणं व्यर्थ, 'पटुमिच्छति पटूयति, पटूयतेः क्विप्, पटूरि'त्यादीनामुक्तरीत्यैव वारणादिति चेन्न। 'वधूः स्नुषा नवोढा स्त्री', 'कासूर्विकलवाचि स्यादि'त्यादिकोशबलेन नवोढात्वस्य, वैकल्यस्य च प्रवृत्तिनिमित्तत्वेन, 'खरु'शब्दे च गुणवचनत्वेन व्यावर्त्यलाभात्। एतेन 'पूर्वसूत्रे 'उत' इति चिन्त्यम्। न च 'अत' इति निवृत्त्यर्थम्। 'खरुसंयोगोपधान्ने'तिवचनसामर्थ्येनैव निवृत्तिसिद्धेरि'ति परास्तम्। शुच्यादिशब्दव्यावृत्त्या चारितार्थ्याच्च। बह्वादिसाहचर्य्यात्, तक्रकौण्डिन्यन्यायेन च 'कृदिकारादि'तिवचनमगुणवचने एव प्रवर्त्तते। ध्वनितञ्चेदं मूले। व्यर्थमेवेति। एवं 'केवलमामके'तिसूत्रात्पूर्वं 'नित्यं सञ्ज्ञाच्छन्दसोरि'ति सूत्रं व्यर्थमिति बोध्यम्। सञ्ज्ञाशब्दा अनादिप्रयुक्ता नियताऽनुपूर्वीकाः। छन्दस्यपि दृष्टमेवाऽनुविधीयते। क इदानीं तदभावं प्रयोक्तुं प्रभवति। उत्तराऽर्थत्वेऽपि योगविभागो व्यर्थ एव। इदमेव बोधयितुं लक्षणाऽन्तरेण सिद्धं 'पञ्चदाम्नी'त्युदाहृतम्।[2]

'पुंयोगादि'ति हेतौ पञ्चमी। 'आख्यायामि'ति पञ्चम्यर्थे सप्तमी। यथाश्रुतमेव वा। 'आख्यायां वर्त्तमानात्प्रातिपदिकास्त्रियां ङीषि'त्यर्थेनैवेष्टसिद्धेः। आख्या च पुंस एव। अन्यस्याऽसम्भवात्, स्त्रियां वर्त्तमानस्य स्त्र्याख्यत्वाऽव्यभिचाराच्च, 'आख्यायामि'त्युक्तिसामर्थ्यात्, श्रुतत्वात्, 'प्रत्यासत्ति'न्यायेन च पुंस एवाऽऽख्या गृह्यते। अत एव 'प्रसूते'त्यादौ न। स्त्रीकर्त्तृकं प्रसूतत्वं[3] हि पुंयोगहेतुकं, न पुनः पुमाख्येति ध्वनयन्नाह—तथा चेति। गौणीति। अत एव 'मघोनी' 'मघवती'त्यादौ 'ऋन्नेभ्यो ङीप्' 'उगितश्चे'त्यादि प्रवर्त्तते। न च विशिष्टरूपोपादाने गौणमुख्य-

लघुशब्दरत्नः

[4]तद्धितान्त-सर्वनाम-जाति-सङ्ख्या-सञ्ज्ञाशब्दा-ऽतिरिक्तप्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञा कृता। बहुशब्दश्च सङ्ख्या। अत्राऽर्थे बहुग्रहणमपि मानम्। 'सत्त्वे निविशते' इत्यादिगुणलक्षणमपि तदेकवाक्यताऽऽपन्नमित्यन्यत्र प्रपञ्चितम्। व्यर्थमेवेति। 'उत्तराऽर्थमिति वदतां मते' इति शेषः। गौणी वृत्तिरिति। लक्षणेत्यर्थः। न त्वेषा गौणी। सादृश्यसम्बन्ध-

[1] 'जन्यजनकभावोऽपीह' इति मुद्रितेषु पाठः।

[2] 'नित्यं सञ्ज्ञाच्छन्दसोरि'ति सूत्रे कौमुद्यां 'वेदे तु पञ्चदाम्नी' इति पाठाऽभिप्रायेणाऽयं ग्रन्थः। कौमुद्यां 'वेदे तु 'शतमूर्ध्नी'त्यपि क्वचित्पाठः।

[3] प्रसूतत्वं=प्रसवः। तत्र च पुंयोगो हेतुः। [4] 'तद्धित' इति पाठान्तरम्।

गृह्यते । तथा च भट्टिः—कौशल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूदि'ति । केकयदुहिता हि केकयी । जनपदशब्दात् (४।१।१६८) इत्यपत्यप्रत्यये[1] तु 'कैकेयी'ति स्यात् । न च तस्य अतश्च (४।१।१७७) इति लुक् । न प्राच्यभर्गादि (४।१।१७८) इति [2]प्रतिषेधात् । तथा च कालिदासः— 'कैकेयि कामाः फलितास्तवे'ति । एतेन देवकी व्याख्याता ।

**दुष्टो यवो यवानीति ।** जात्यन्तरमेवाऽनेनाऽभिधीयते । अयमेव चाऽस्य[3] दोषः, यदुत यवत्वजातेरभावेऽपि तदाकाराऽनुकृतिः । **ङीष् वाच्य इति ।** इदञ्च तृतीये भाष्ये इङश्च (३।३।२१) इति सूत्रे स्थितम् । **कथमिति ।** यत्तु वदन्ति—'दीर्घोच्चारणसामर्थ्यात् 'आ-अनुक्' इति पदं विभज्यते । तत्रेन्द्रादीनामनुकैव सिद्धे आकाराऽऽदेशविधानसामर्थ्यात् क्वचिदन्यतोऽपि विधान-

---

**बृहच्छब्दरत्नः**

न्यायस्य दुर्वारत्वेन गौरादिषु अनुडुह्शब्दपाठेऽपि ङीष् दुर्लभ इति वाच्यम् । वैकल्पिकाऽऽम्कल्पनवत् पाठसामर्थ्येन न्यायबाधात् । 'युवन्'शब्दात् पुंयोगे तिप्रत्ययो न । 'युवन्'शब्दस्य पुंयोगं विनाऽपि स्त्रीत्वस्य सुलभत्वेन 'गौणमुख्य'न्यायबाधे मानाऽभावात् । गृह्यत इति । अत एव 'गोपस्य भगिनी गोपी'त्यपि भवति । जन्यजनकभाव इवेदृशपुंयोगस्याऽपि ग्रहीतुं युक्तत्वात् । एवञ्च लिपौ वर्त्तमानात् 'यवन'शब्दात्पूर्वेण ङीष्सिद्धेरानुकमात्रं विधीयते इति महल्लाघवम् । कैयटहरदत्तादयस्तु 'मुख्याऽर्थाद्यवनशब्दाल्लिपावित्यर्थे 'तस्येदमि'त्यणबाधको ङीष् विधीयते' इत्याहुः । तन्न । प्रकरणविरोधात् । इन्द्रादिसाहचर्येण गौणाऽर्थस्यैव युक्तत्वाच्च । तस्मान्मुख्याऽर्थक'यवन'शब्दा'त्तस्येदमि'त्यणि 'यावनी'ति भवत्येवेत्याहुः।

आ अनुगिति । तत्र नकारोच्चारणसामर्थ्यात्, श्रुतक्रमाऽनुरोधेन च पूर्वम्

---

**लघुशब्दरत्नः**

मूलकलक्षणाया एव गौणीत्वात्[4] ।

इङश्चेति सूत्रे इति । 'अपादाने स्त्रियां घञ उपसङ्ख्यानं, तदन्ताच्च वा ङीषि'ति तत्रोक्तम् । 'उपेत्याऽधीयते यस्या' इति विग्रहः । दीर्घोच्चारणेति । न चेन्द्रशब्दात् आचक्षाणणिचि, टिलोपे, 'इन्द्राणी'ति सिद्धयर्थं तत् । अदन्तत्वाऽभावेन तत्राऽप्राप्तेः । पदं विभज्यते इति । तत्र नकारोच्चारणसामर्थ्यात्, श्रुतक्रमाऽनुरोधेन च पूर्वमाकारः, ततोऽनु-

---

[1] 'इत्यञ्प्रत्यये तु' इति ख. पाठः ।

[2] 'निषेधात्' इति पाठान्तरम् ।

[3] 'तस्य दोषो यदुक्तयवत्व' इति मुद्रितेषु पाठः ।

[4] 'गौणीत्वादिति स्पष्टमेव' इति घ. मु० पाठः ।

मनुमीयते, तेन ब्रह्माणी सिध्यतीति । तच्चिन्त्यम् । अनुकि कृते अतो गुणे (६।१।९७) इति पररूपप्रसङ्गात् । नन्वकारोच्चारणसामर्थ्याद् दीर्घो भविष्यति, अन्यथा हि नुकमेव कुर्यादिति चेन्न । अल्लोपोऽनः (६।४।१३४) इत्यस्य बाधेन चरितार्थत्वात् । पत्युर्नः (४।१।३३) इतिवदादेशे कर्त्तव्ये, आगम-

बृहच्छब्दरत्नः

आकारः, ततोऽनुगिति भावः । तच्चिन्त्यमिति । आकारोच्चारणेनाऽन्यतो हलन्ता-द्विधानस्य कल्पयितुं शक्यत्वेऽपि पदच्छेदे प्रमाणं चिन्त्यमिति भावः । दोषाऽन्तर-माह—पररूपप्रसङ्गादिति । अत एव त्वया ह्रस्वाऽकाराऽऽदेशो नोक्तः । अन्यथा 'ब्रह्मन्'शब्दे नकारनिवृत्त्या अकाराऽदेशस्य चरितार्थत्वेनाऽनुका सह सवर्णदीर्घेण रूपसिद्धौ किन्तेन ?। अन्ग्रहणे 'लक्षणप्रतिपदोक्त'परिभाषाया अप्रवृत्तिः, उत प्रवृत्तिः। आद्ये आह—अल्लोपोऽन इति । नित्यत्वात्, 'वार्णादाङ्गमि'तिन्यायेन बहिङ्गकृतनिमित्तविनाशसम्भावनेना'ऽकृतव्यूह'परिभाषया चा'ऽल्लोपोऽन' इत्यस्यै-कादेशात्पूर्वं प्रवृत्तत्वेन, अकारोच्चारणसामर्थ्यात्तद्बाधस्याऽऽवश्यकत्वेन, क्लृप्त-तद्बाधेनैव चारितार्थ्ये, पररूपस्य दुर्वारत्वादिति भावः । एतेन 'विनिगमका-ऽभावाद् द्वयोर्बाध' इति मन्दोक्तिर्निरस्ता । आगमेति । [1]नुगूरूपोऽत्राऽऽगमो बोध्यः । अन्त्ये दोषमाह—अल्लोपोऽन इत्यस्य बाधेऽनचरितार्थत्वादिति । 'बाधे' इति सप्तम्यन्तमप्राप्ताविर्त्यर्थकम्[2] । [3]अस्य चरिताऽर्थत्वम्—'अ'चरिताऽर्थत्वम् । न 'अ'चरिताऽर्थत्वम्-अनचरिताऽर्थत्वम्[4] । 'अल्लोपोऽन' इत्यस्याऽकारोच्चारण-सामर्थ्यात्पररूपोत्तरं प्रवृत्तिः कल्प्यते इति भावः । न च पररूपबाधेन चारि-तार्थ्यम् । [5]अबाधेनैवोपपत्तौ तद्बाधकल्पनस्याऽन्याय्यत्वात् । आगमेति । अस्मिन् पक्षे 'आगम'शब्देन नुगेव[6] बोध्यः ।

लघुशब्दरत्नः

गिति बोध्यम् । स्पष्टाऽर्थं [7]दीर्घाऽऽकार आदेश उक्तः । प्रसङ्गादिति । इन्द्रादिशब्दे इति भावः । अकारोच्चारणेति । 'अनुकी'ति शेषः । अल्लोपोऽन इत्यस्य बाधेनेति । अल्लोपोऽनः (६।४।१३४) इत्यत्र लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेर्बहुव्रीहेरूधसः

१ 'नुगनुरूपोऽत्र' इति क. पाठः ।
२ इतोऽग्रे 'अस्य चरितार्थम्' इत्यधिकः ख. पाठः ।
३ अस्य=अनोऽकारस्येत्यर्थः ।
४ अनोऽकारस्य चारिताऽर्थ्याऽभाव इत्यर्थः ।
५ 'आबाधेनैव' इति क. ख. पाठः ।
६ 'अनुगेव' इति ख. पाठः ।
७ 'दीर्घोऽकार' इति घ. पाठः ।

**लिङ्गककारोच्चारणसामर्थ्यादेवाऽल्लोपो न भविष्यतीति चेन्न। 'शर्व'शब्दे ककारस्य चारितार्थ्यात्। न हि तत्र लोपोऽस्ति। न संयोगात् (६।४।१३७) इति निषेधात्। तस्मात् ककाराऽकारयोः सामर्थ्यविरहे पररूपबाधनाऽर्थं दीर्घोच्चारणमावश्यकमिति। एतेनाऽनुक् ह्रस्वादिरेव लाघवादुक्तव्य इति हरदत्तोक्तिरपि प्रत्युक्ता[1]।**

बृहच्छब्दरत्नः

शर्वशब्दे इति। इदञ्चोपलक्षणं-ष्टुत्वस्य। 'लोपो व्योर्वली'त्यस्य च स्थानिवद्भावादसिद्धत्वाच्चाऽप्रवृत्त्या चारितार्थ्यस्य स्पष्टत्वात्। एतेना'ऽऽकारोच्चारणमिन्द्रादिशब्देभ्य आचक्षाणाऽर्थे णिचि, टिलोपे आनुगर्थमि'ति परास्तम्। इन्द्रादिशब्दानामस्त्रीत्वाच्च। अर्थस्य विशिष्योपादानेन पदाऽन्तरनिरपेक्ष-मुख्यार्थ-निष्ठस्यैव ग्रहीतुमुचितत्वाच्च। उपसर्जनत्वाच्च। अदन्तत्वाऽभावाच्च। न चैवं 'पुंयोगादाख्यायामि'ति सूत्रेऽप्यत इत्यनुवृत्तौ 'पालिकाऽन्तान्ने'तीकारसहितः पाठोऽसङ्गतः स्यात्, पुंयोगस्य निरूपयितुमशक्यत्वाददन्तत्वाऽभावाच्चेति वाच्यम्। अकारसहितपाठस्यैव सत्त्वात्। इकारपाठे तु 'पालिकाऽन्तात्', 'सिद्धयर्थमि'त्यध्याहारेण व्याख्येयम्। न चैवमपि लक्ष्ये इत्त्वं दुर्लभम्, आपः सुपः परत्वादिति वाच्यम्। [2]पूर्वपदस्य सप्तम्यन्तेन, 'तत्प्रयोजको हेतुश्चे'त्यादिनिर्देशेन 'तृजकाभ्यां कर्त्तरी'त्यस्याऽनित्यत्वेन कर्मषष्ठ्यन्तेन वा, 'गतिकारकोपपदानामि'तिवचनेनोत्तरपदे सुबुत्पत्तेः प्राक् समासे, दोषाऽभावात्। ध्वनितञ्चेदं भाष्ये। यत्तु 'आनुगि'त्यखण्डाऽऽगमेनैव सिद्धावकाराऽऽदेश-नुगागमयोर्विधानादन्यतोऽपी'ति। तन्न। हेत्वसिद्धेः। उभयोर्विधाने मानाऽभावात्, गौरवाच्च। अत्र मण्डूकप्लुत्या 'वे'त्यनुवर्त्तनेन व्यवस्थितविभाषाऽऽश्रयणात्क्वचित्स्वार्थे। तेन 'अर्यक्षत्रियाभ्यां वा स्वार्थे' इति सिद्धम्। न चेदं 'पुंयोगे एवे'ति भ्रमितव्यम्।

लघुशब्दरत्नः

**(४।१।२५) इति सूत्रभाष्यसंमततया अकाराऽभावेऽवश्यप्राप्तस्य 'अल्लोपोऽन' इत्यस्य बाधनाऽकारोच्चारणस्य चारितार्थ्यादित्यर्थः। न भविष्यतीति। एवञ्च न [3]तद्बाधनाऽर्थमकारोच्चारणमिति पररूपस्य तेन [4]बाध इति भावः। पररूपबाधनार्थमिति। अल्लोपबाधने[5]**

[1] इतोऽग्रे 'यत्तु 'इन्द्रमाचक्षाण इन्द्र्। तत्करोती'तिण्यन्तात् क्विप्। तस्य इन्द्रः स्त्री इन्द्राणी यथा स्यादिति दीर्घोक्तिरि'ति न्यासकारेणोक्तम्। तन्न। इन्द्रशब्दस्याऽत्राचक्षाणादावुपसर्जनत्वात् 'इन्द्रः स्त्री'ति वाक्यमेव तत्र भवति' इति ङ. छ. वर्द्धितः पाठः।

[2] 'पूर्वपदस्यैव सप्तम्यन्तत्वेन' इति क. पाठः।

[3] 'न तद्बाधार्थम्' इति लिखितादर्शेषु पाठः।

[4] 'बाधादिति भाव' इति मुद्रितेषु पाठः। [5] 'बाधेन' इति क्वचित् पाठः।

कर्मण्यणिति। तदन्तान्ङीप्। पूर्वपदात्सञ्ज्ञायाम् (८।४।३) इति णत्वम्।

वस्त्रक्रीतीति। 'वस्त्र भिस् क्रीत' इत्यस्यामवस्थायां प्राक् सुबुत्पत्तेः समासे, अदन्तत्वान्ङीप्। क्वचिन्नेति। कर्तृकरणे कृता (२।१।३२) इति सूत्रे बहुलग्रहणात् क्वचित्सुबन्तेन समासः। तत्र च सुपः प्रागेवाऽन्तरङ्गत्वात् टाप्। ततोऽदन्तत्वाऽभावान्न ङीषिति भावः।

तेन बह्विति। अयं भावः—बहोर्नञ्वदुत्तरपदभूम्नि (६।२।१७५) नञ्सुभ्याम् (६।२।१७२) जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः (६।२।१७०) इति ह्यदन्तोदात्तताविधायकानि। तत्र 'जातिपूर्वादि'-त्युक्ते बह्वादिपूर्वकस्याऽर्थाद् व्युदास इति। अस्वाङ्गपूर्वपदाद्विकल्पस्य वक्ष्यमाणत्वादिह स्वाङ्गपूर्वपद एवोदाहरणमित्याह—ऊरुभिन्नीति। जाता-

---

बृहच्छब्दरत्नः

'उपाध्यायमातुलाभ्यां वा' 'अर्यक्षत्रियाभ्यां वे'ति वचनद्वयपाठस्य वैयर्थ्याऽऽपत्तेः। अत्र 'अर्ये'ति ह्रस्वो, दीर्घो वे'ति द्वैतमित्याहुः।

तदन्तादिति। 'इन्द्रवरुणे'ति सूत्रन्तु 'इन्द्राणी'त्यादौ णत्वाऽर्थम्, 'इन्द्री'-त्यादिव्यावृत्त्यर्थम्। णत्वमिति। [1]'अण शब्दे' इति टवर्गीयान्ताद्धातोरणि'त्युपायाऽन्तरम्। समासे इति। 'वस्त्रेण क्रीते'त्यसमासे तु न प्रवर्त्तते। 'करणादि'ति वक्तव्ये 'पूर्व'ग्रहणसामर्थ्येनाऽनुवृत्तप्रातिपदिकरूपाऽन्यपदाऽर्थे अवयववाचि-'पूर्व'शब्देन बहुव्रीहेराश्रयणात्। अन्तरङ्गत्वेन टापः प्रवृत्तेश्च। समस्तस्य क्तान्तत्वन्तु 'कृद्ग्रहण'परिभाषया। यद्वा 'प्रत्ययग्रहण'परिभाषया तदन्तस्यैव ग्रहणम्। तेन प्रातिपदिकस्य विशेषणे क्ताऽन्ताऽन्तत्वम्। वृत्तौ 'क्त'पदं क्ताऽन्तपरम्। यद्वा 'क्तादि'ति विशेषणसामर्थ्यात्तदादिनियमो न। स्वाङ्गपूर्वपद एवेति। यत्तु 'अस्ति ऊरुः भिन्नो यस्याः से'ति [2]बहुव्रीहावस्वाङ्गपूर्वपदस्योदाहरणस्य सम्भवेन

---

लघुशब्दरत्नः

चरितार्थस्य पररूपबाधकत्वे मानाऽभावेनेन्द्रशब्दे पररूपबाधनाय आकारोच्चारणस्याऽऽवश्यकत्वेन त्वदुक्तकल्पनाऽनवकाश[3] इति भावः। ङीबिति। इन्द्रवरुण (४।१।४९) इति सूत्रन्तु 'इन्द्री'त्यादिव्यावृत्त्यर्थम्। उदात्तनिवृत्तिस्वरेण च स्वरे न विशेष इति भावः। सुबुत्पत्तेरिति। टाबुत्पत्तेश्चेत्यपि बोद्धव्यम्। बहुलग्रहणादिति। तत एव 'गतिकारके'-त्यादेरनित्यत्वेनाऽप्रवृत्तिरिति भावः। सुखादिभ्य इति। सुखादयश्च सुखादिभ्यः कर्तृ-

---

१ 'अण शब्दे' इति णकारान्ताद्धातोरणि तु णत्वस्यावश्यकता नास्तीत्यर्थः।
२ 'बहुव्रीहा(व?)स्वाङ्गपूर्वपदस्य' इति क. पाठः।
३ 'त्वदुक्तकल्पनाऽनवकाशा' इति क. ख. घ. पाठः।

न्तादिति। वर्णादनुदात्तात् (४।१।३९) इतिवद् 'बहुव्रीहेरुदात्तादि'त्येव सिद्धे, अन्तग्रहणं नित्यत्वप्रतिपत्त्यर्थम्। वा जाते (६।२।१७१) इति तु वैकल्पिक उदात्तो, न तु नित्य इति भावः। सुमुखा शालेति। एवञ्च 'फलमुखी, कारणमुखी चाऽनवस्थे'त्यादिप्रयोगाः प्रामादिका इति बोध्यम्।

---

बृहच्छब्दरत्नः

'स्वाङ्गपूर्वपदमेवोदाहरणमि'त्ययुक्तम्[1]। न चाऽत्राऽस्वाङ्गपूर्वपदाद्वेति विकल्पः शङ्क्यः। 'अस्वाङ्गपूर्वपदादि'त्यत्र [2]नञ्तत्पुरुष-कर्मधारय-गर्भकर्मधारयात् 'अस्वाङ्गात्परं यत् क्तान्तं, तदन्तो यो बहुव्रीहिरि'त्यर्थस्य 'स्वाङ्गाच्चोपसर्जनादि'ति सूत्रे भाष्ये उक्तत्वादि'ति। तन्न। 'जातिकालसुखादिभ्य' इत्यादौ 'बहुव्रीहावि'त्यनुवृत्त्या पूर्वोत्तरपदयोराक्षेपेण, प्रत्यासत्तिन्यायात् [3]क्तान्तस्योत्तरपदत्वे, जात्यादीनां पूर्वपदत्वे एवाऽन्तोदात्तत्वस्य[4] प्रवृत्तत्वेन त्रिपदे बहुव्रीहावन्तोदात्तत्वाऽभावात्। 'जातिपूर्वादि'ति वचनेनैव निरासाच्च। 'न ह्युपाधेरुपाधिर्भवती'ति भाष्यकृतोक्तत्वेन बहुव्रीहिविशेषणत्वस्यैव न्याय्यत्वाच्च। यत्तु [5]'जातिपूर्वादि'ति व्यर्थम्। बहुनञ्कालसुखादिपूर्वस्य परत्वेन 'अस्वाङ्गपूर्वपदाद्वे'ति विकल्पप्रवृत्तेरि'ति। तन्न। 'जातिपूर्वादि'त्यस्योत्तरसूत्रेऽपि सम्बन्धाऽङ्गीकारात्। 'स्वाङ्गाच्चोपसर्जनादि'तिसूत्रस्थभाष्यपर्यालोचनया 'अस्वाङ्गपूर्वपदाद्वे'ति सूत्रेऽपि 'अन्तोदात्तादि'त्यस्य सम्बन्धस्याऽऽवश्यकत्वेनाऽर्थाऽधिकारेणोक्ताऽर्थस्यैवाऽऽवश्यकत्वाच्च। एतेन 'पूर्वेण नित्यं प्राप्ते विकल्पोऽयमि'ति मूलग्रन्थो व्याख्यातः।

प्रामादिका इति। एवं 'कल्याणः विद्यमानमुखो यस्याः से'ति बहुव्रीहिगर्भबहुव्रीहौ 'कल्याणविद्यमानमुखी'ति प्रयोगः प्रामादिकः। उत्तराऽर्थमनुवृत्तस्याऽनुपसर्जनादित्यस्य, 'स्त्रियामि'त्यस्य च सम्बन्धस्याऽऽवश्यकत्वात्। तथा च स्वाङ्गं यदुपसर्जनं 'मुखमि'ति, तदन्तं 'विद्यमानमुखे'त्युपसर्जनमेव। स्त्रियाञ्च न। किञ्च 'सहनञ्विद्यमाने'ति निषेधो दुर्वारः। '[6]सहनञ्विद्यमानेभ्य' इति वक्तव्ये पूर्वग्रहणं व्यवहितेऽपि उपसर्जनस्वाङ्गविशेषणे 'विद्यमानकल्याणमुखे'त्यादौ निषेधाऽर्थमिति तत्त्वम्। इह 'बहुव्रीहेः क्तान्तादन्तोदात्तादि'ति निवृत्तम्। तत्सम्बद्धमस्वाङ्गपूर्वपदादित्यपि न सम्बध्यम्। एतेन 'स्तनमुखी'त्यादौ ङीष् भवत्येवेति

---

[1] 'इत्युक्तम्' इति क. ख. पाठः।

[2] 'न स्वाङ्गम् अस्वाङ्गम्, पूर्वञ्च तत्पदं च पूर्वपदम्, अस्वाङ्गं च तत्पूर्वपदं च अस्वाङ्गपूर्वपद'मिति रीत्या समासत्रयमित्यर्थः।

[3] 'क्तान्तस्योत्तरपदस्य उत्तरपदत्वे' इति ख. पाठः।

[4] 'अन्तोदात्तादीनां प्रवृत्तत्वेन' इति ख. पाठः।

[5] 'जातिपूर्वादिति बहुव्रीहम्' ? इति ख. पाठः।

[6] 'सहनञ्विद्यमानेन' इति ख. पाठः।

उरः क्रोडेति । 'स्त्रीलिङ्गोऽयमि'ति हरदत्तादयः । तत्रोपसर्जनह्रस्वत्वे कृतेऽदन्तत्वान्ङीषः प्राप्तिः । अमरस्तु–'न ना क्रोडं भुजाऽन्तरमि'त्याह । रत्नमतिस्तु पुंस्त्वमाह । 'गणे च क्रोडेति प्रातिपदिकमात्रं पठ्यते, न तु टाबन्तमि'ति गणरत्नमहोदधिकारः । एवञ्चाऽविशेषाल्लिङ्गत्रयेऽप्युदाहरणं बोध्यम् । माधवस्तु तुदादिगणे 'क्रुड निमज्जने' इति धातावाह–'क्रोडः । घञ् । क्रोडा = अश्वानामुरः । टाबन्तोऽयं स्वभावतो विशेषविषयः । क्रोडादिषु टाबन्तस्यैव पाठाद् [1]भुजाऽन्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ [2]स्वाङ्गलक्षणो ङीष्-विकल्पो भवत्येव,—'कल्याणक्रोडी, कल्याणक्रोडा मयूरी'ति ।

ङीषो ङीबादेश इति । दिक्पूर्वपदात् (४।१।६०) इति पञ्चम्या 'ङीषि'ति प्रथमायाः षष्ठी कल्प्यत इति भावः । [3]यदि तु स्वतन्त्रो ङीप् स्यात्तदा प्राग्गुल्फादावपि प्रसज्ज्येत । तत्परिहाराय [4]पूर्वोक्तपर्युदासस्य,

---

बृहच्छब्दरत्नः

बोध्यम् । यत्तु 'उपसर्जनग्रहणं किमर्थम् । इह मा भूत् 'अशिखे'ति भाष्यप्रामाण्यात् 'सहनञ्विद्यमाने'ति निषेधोऽनित्यः । तेन 'कल्याणविद्यमानमुखी'ति प्रयोगो भवत्येव । हरदत्तस्वरसोऽप्येवमि'ति । तन्न । 'अशिखे'त्यत्र बहुव्रीहावनुपसर्जन-ग्रहणे कृतेऽपि दोषस्य दुर्वारत्वेन, तत्पुरुषे अदन्तत्वाऽभावेन च प्राप्त्यभावात्तद्भाष्य-ग्रन्थस्याऽयुक्तत्वात् । न च समासैकदेशः शिखशब्दोऽदन्त एव व्यावृत्तिविषय[5] इति वाच्यम् । 'शिखे'त्यसमस्तस्यैवोदाहर्त्तुं युक्तत्वात् । किञ्च भाष्यपुस्तकेषु 'सुशिखे'त्येव पाठ उपलभ्यते । तस्य एकदेशे तात्पर्य्यमिति तुल्यम् । इदमेवा-ऽभिप्रेत्य 'उपसर्जनात् किम् ?, शिखा । शोभना शिखा सुशिखे'ति मूलकृतोक्त-मित्यलम् । 'कल्याणपाणिपादे'त्यत्र न ङीष् । 'पाणिपादे'ति समुदायस्याऽन्य-पदार्थे उपसंक्रान्तत्वेनोपसर्जनत्वेऽपि स्वाङ्गवाचकत्वाऽभावादिति स्पष्टं भाष्ये ।

प्राग्गुल्फादाविति । 'दीर्घजिह्वी च च्छन्दसी'ति सूत्रे विशिष्टरूपोपादानेन

---

लघुशब्दरत्नः

वेदनायाम् (३।१।१८) इत्यत्र पठिताः सुखदुःखकृच्छ्रादयः । ([6]मयूरीति । 'आहे'ति शेषः ।)

'सकृदाख्यातनिर्ग्राह्ये'त्यन्तं द्वितीयं लक्षणम् । तत्र आख्यातम् = उपदेश इत्याशये-

---

[1] भुजान्तरमात्रविषयस्य' इति घ. पाठः ।
[2] 'स्वाङ्गलक्षणङीष्विकल्पो' इति मु० पाठः ।
[3] 'यदि तु' इत्यादिः 'गौरवमिति भावः' इत्यन्तः पाठः घ. ङ नास्ति ।
[4] 'तत्परिहाराय' इति च. छ, पाठः ।
[5] 'व्यावृत्त्यविषयः' इति क. ख. पाठः ।　　[6] अयं घ. पाठः ।

**निषेधानां चाऽनुवृत्तौ तु गौरवमिति भावः ।**

**वृषलीति । एकस्यां हि व्यक्तौ वृषलत्वे कथिते, तदपत्य-तत्सहोदरादौ कथनं विना तस्य सुग्रहत्वादिति भावः। औपगवीति । अण्णन्तलक्षणं ङीपं**

बृहच्छब्दरत्नः

निपातनं नित्याऽर्थम् । चकारः सञ्ज्ञाऽनुकर्षणाऽर्थः । एवञ्च विकल्पस्य विच्छेदादुत्तरत्र नाऽनुवृत्तिः । 'छन्दसी'त्युत्तरत्र नाऽनुवर्त्तते । स्वरितत्वकल्पने मानाऽभावात् । एवञ्च 'दिक्पूर्वपदान्ङीप्' 'वाह' इति सूत्रद्वयन्तु लोकवेदयोर्नित्यतयैव । णिजन्ताद्विचो लोकेऽपि सम्भवात् । असन्दिग्धत्वेन 'भाषायां सख्यशिश्वी'ति वक्तव्ये 'सख्यशिश्वीति भाषायामि'त्युक्तया 'भाषायामि'त्यत्र 'इति'शब्दसम्बन्धबोधनात्, 'सख्यशिश्वीति भाषायामि'ति सूत्रे 'इति'शब्दो 'भाषायामि'त्यस्याऽनन्तरं द्रष्टव्यः । स च प्रकारे । प्रकारश्च सादृश्यम् । तेन भाषासदृशे=वेदेऽपीत्यर्थः । न चैवं 'सख्यशिश्वी'त्येवोक्तौ 'भाषायामि'ति व्यर्थमिति वाच्यम् । भाषा-वेदयोर्वैलक्षण्यबोधनेन चारितार्थ्यात् । वैलक्षण्यञ्च नित्यत्वा-ऽनित्यत्वाभ्यामेव । [1]विकल्पस्तूपसंहारस्थेतिशब्दाऽर्थ एव, न तूपक्रमस्थभाषाशब्दाऽर्थे । यद्यपि वेदे आपाद्यरूपाऽभावेन एकत्रैव भावाऽभावौ [2]वक्तुमशक्यौ, तथाऽपि क्वचिन्ङीप्, क्वचित्तदभाव इति बोध्यम् । इदमेव सूचयितुं 'छन्दस्यपि क्वचिदि'त्युक्तं मूले । अत एव 'सखा सप्तपदी भवे'ति सङ्गच्छते । वस्तुतस्तु इतिशब्दस्य मध्ये पाठस्य निर्बीजत्वाऽऽपत्तौ 'काकाऽक्षिगोलक'न्यायेन पूर्वत्राऽप्यन्वयः । तथा च[3]ङीप्प्रकरणपठितसख्यशिश्वीशब्दाभ्यामन्तोदात्ताभ्यां प्रथमाऽतिक्रमे कारणाऽभावेनाऽऽद्युदात्तौ 'सख्यशिश्वी'शब्दौ गृह्येते । अत एव तयोः साधुत्वम् । एतेन 'आधेनवो धुनयन्तामशिश्वीरि'त्यत्रा'ऽशिश्वी'शब्दस्याऽऽद्युदात्तत्वे प्रकृतसूत्रोदाहरणत्वेनोपन्यासो न युक्त' इति शेषनव्योक्तमपास्तम् ।

वृषलत्वे इति । [4]'वृषलाऽपत्यादिना स्त्रीत्व-पुंस्त्वे । 'स्त्रीपुंसयोरपत्याऽन्ता द्विचतुःषट्पदोरगाः' इत्यमरकोशात् । कोशे पुँल्लिङ्गेन निर्देशस्तु पाक्षिकोऽवयुत्याऽनुवादः । अत एव 'मनुष्येति किम्, तित्तिरिरि'ति मूलग्रन्थो न युक्तः, 'तित्तिरिः ककुभो लाव' इति साहचर्य्यात्पुंस्त्वस्यैव निर्णयादि'ति शङ्का निरस्ता । लाघवेन पक्षप्राप्तपुंनिर्देशस्योपपन्नत्वेनाऽन्यव्यवच्छेदे मानाऽभावात् । अत एव 'हंसी'

लघुशब्दरत्नः

नाऽऽह—एकस्यामित्यादिति । ब्राह्मणत्वमप्येवं तत्पितृपितामहादौ सुग्रहमिति बोध्यम् ।

[1] 'विकल्पस्तूपसंहारस्थ–इतिशब्दार्थे एव' इति क. ख. पाठः ।

[2] 'वक्तुं शक्यौ' इति क. पाठः ।

[3] 'ङीप्रत्यय' इति क. ख. पाठः ।

[4] 'वृषलाऽपत्यत्वादिना' इति वा पाठः । 'वृषलहसादिदानात्' इति क. ख. पाठः ।

परत्वादयं बाधते। एवञ्चाऽपत्याऽधिकारे 'औपगवी'ति [1]प्रतीकमुपादाय टिड्ढाणञ् (४।१।१५) इति ङीबिति व्याचक्षाणा उपेक्ष्या इति भावः।

---

बृहच्छब्दरत्नः

'मयूरी'त्यादिसिद्धिः। पूर्वलक्षणेन चाऽत्र न सिद्धिः। ब्राह्मण-वृषलत्वादीनां संस्थानस्यैकत्वेन तद्व्यङ्ग्यत्वाऽभावात्। कुमारत्व-युवत्वादीनां नाऽनुगतसंस्थान-व्यङ्ग्यत्वम्। [2]अशक्त्या युवाऽवस्थायां, शक्त्या वृद्धाऽवस्थायां वैपरीत्यदर्शनात्। पशु-पक्षि-मनुष्यादि-निष्ठयुवत्वादीनां नानाऽभिव्यङ्ग्यत्वादनुगतसंस्थानव्यङ्ग्यत्वा-ऽभावाच्च। एकत्र कथिते सर्वत्र ज्ञातुमशक्यत्वाच्च। पूर्वलक्षणेऽपि 'सकृदि'-त्यादेः सम्बन्धेन नित्यत्वस्य कैश्चिद्विवक्षणाच्च। युवत्वादीनान्तु न नित्यत्वम्। अत एव 'स्थविरा' 'वृद्धे'त्यादौ [3]न ङीष्। एतेन 'पितृत्वादिकं[4] जातिरि'त्य-पास्तम्। अत एव बाल्याऽवस्थायां 'देवदत्त' इत्युपदिष्टे वृद्धाऽवस्थायां देवदत्त-त्वस्य सुग्रहत्वात्, [5]परिमाणभेदेन [6]द्रव्यभेदादनुगतसंस्थानव्यङ्ग्यत्वात्पूर्वलक्षणेन[7] न जातिशब्दत्वम्। तस्याऽनित्यत्वात्। लक्षणद्वयेऽपि समानकालतया व्यक्त्य-न्तरस्य विशेषणाच्च। अत एव इन्द्रत्वादिकं न जातिः। देवताऽन्तरव्यावृत्तेन्द्र-मात्रवृत्त्यनुगतसंस्थानस्य निरूपयितुमशक्यत्वाच्च। [8]अत एव 'इन्द्रपीत'शब्दो बहुव्रीहावाद्युदात्त' इत्याहुः। तटादिशब्दानां व्यक्तिद्वारा जलत्वविशिष्टस्याऽनुगत-संस्थानव्यङ्ग्यत्वात् परिभाषिकजातित्वाऽङ्गीकारे बाधकाऽभावः। औपगवीतीति। [9]अपत्यप्रत्ययाऽन्तञ्चाऽपत्यवाचकमेव गृह्यते। तेन पुंयोगे न जातित्वमित्याहुः। 'चरण'शब्दः शाखायां मुख्यः। अध्येतरि गौणः। 'गोत्रञ्च चरणैः सहे'त्यत्र द्वयो-रपि ग्रहणम्। स्पष्टञ्चेदम् 'अनुवादे चरणानामि'तिसूत्रे हरदत्तग्रन्थे।

उपेक्ष्या इति। नन्वन्तराऽपत्याऽभिप्रायेण [10]तद्ग्रन्थो युक्त एव, 'कृत्रिमा-

---

लघुशब्दरत्नः

इयञ्च नाऽऽकृतिग्रहणा, ब्राह्मणक्षत्रियाद्याकारस्य समत्वादिति बोध्यम्। बाधते इति। 'गोत्राऽणी'ति शेषः। प्रतीकमुपादायेति। 'औपगवी'त्यस्य गोत्राऽनन्तराऽपत्यसाधारणत्वेन

---

[1] 'प्रतीकमादायेति' इति लिखितेषु पाठः।
[2] 'अगत्या' इति ख. पाठः। [3] 'न ङीप्' इति क. ख. हाठः।
[4] 'पितृत्वं जातिः' इति ख. पाठः। 'न जातिरि'ति क. पाठः।
[5] 'परिणामभेदेन द्रव्यभेदाऽभावात्' इति वा पाठः।
[6] 'द्रव्यभेदानुगत' इति क. ख. पाठः।
[7] 'पूर्वलक्षणेन जातिशब्दत्वम्' इति ख. पाठः।
[8] 'अत एव' इति ख. नास्ति।
[9] 'अपत्यप्रत्ययान्तस्य प्रत्ययवाचकमेव' इति क. ख. पाठः।
[10] 'स ग्रन्थो युक्त एव' इति वा पाठः।

**ब्राह्मणीत्यत्रेति। एवञ्च प्राचो ङीषुदाहरणं प्रामादिकमिति भावः।**

---

**बृहच्छब्दरत्नः**

ऽकृत्रिम'न्यायेन 'अपत्यं पौत्रप्रभृति गोत्रमि'त्यस्यैव ग्रहणादिति चेन्न। कृत्रिमसञ्ज्ञाग्रहणे व्यावर्त्त्याऽप्रसिद्धेः। स्त्रियां युवसञ्ज्ञाया एवाऽभावात्। न च 'फाण्टाहृति-मिमताभ्यां ण-फिञावि'त्यत्र णित्करणसामर्थ्येन 'स्त्रियां न युवसञ्ज्ञे'ति वचनबाध इति वाच्यम्। पूर्वप्रवृत्त-युवसंज्ञानिषेध-बाधे मानाऽभावेन णित्करणशङ्काकाले उपस्थितैको गोत्रे इति नियम-बाधस्यैव युक्तत्वात्। अपि च युवसञ्ज्ञाविध्येकवाक्यताऽऽपन्ननिषेधस्य परत्वात्। तथा च मध्येऽपवादन्यायो दुर्वारः। न चैवं 'जातेश्चे'तिनिषेधसिद्धौ णित्करणं व्यर्थमिति वाच्यम्। स्त्रियां तद्धिताऽन्तत्वे तद्धिते जातिकार्याऽभावस्याऽपि ज्ञापनात्। फलमुखञ्च गौरवं न दोषाऽऽवहम्। न च णित्करणं 'मिमत'शब्दाऽर्थमिति वाच्यम्। यथासङ्ख्येनाऽन्वयात्। 'फाण्टाहृति'शब्दस्याऽर्थद्वयवाचकत्वेनाऽभ्यर्हितत्वात्पूर्वं[1] प्रयोगः। अत एव 'वृद्धाट्ठक् सौवीरेष्वि'ति[2] सूत्रस्थं 'फाण्टाहृते'ति सूत्रस्य प्रवृत्तिविषयबोधकपरं 'सौवीरः गोत्रे एवे'ति भाष्यं सङ्गच्छते। अत एव 'गार्गी' फाण्टाहृते'त्यादौ 'गोत्रञ्च चरणैः सहे'त्यत्राऽपत्यप्रत्ययाऽन्तमात्रग्रहणे भाष्याद्युदाहृतष्टाबनुपपन्नः[3], 'एको गोत्रे' इति सूत्रस्थभाष्यविरोधश्चे'ति निरस्तम्। दूषणाऽन्तरस्य कैयटादिभिर्ध्वनितत्वेन तस्य प्रौढिवादपरत्वाऽऽवश्यत्वाच्च। 'यूनि लुगि'तिसूत्रस्थभाष्ये अपत्याऽधिकारादन्यत्राऽपत्यरूपलौकिकगोत्रग्रहणस्य [4]सिद्धान्तितत्वात् महासंज्ञाकरणेन ईदृशाऽर्थस्य सङ्ख्यासञ्ज्ञायामङ्गीकाराच्च। अत एवा'ऽनन्तराऽपत्यं वा व्यावर्त्त्यमि'त्यपास्तम्। 'प्रवाहणस्य ढे' इतिसूत्रे 'उत्तरपदस्य स्वतोवृद्धिमत्त्वेन 'उत्तरपदस्ये'त्यनुवृत्तौ, निवृत्तौ वा न विशेषः, 'जातेश्चे'तिपुंवद्भावनिषेधादि'ति भाष्योक्तं सङ्गच्छते। 'गोत्रञ्च चरणैः सहे'त्यत्र कृत्रिमगोत्रग्रहणे त्वनन्तराऽपत्ये 'गाङ्गेयो भीष्मः' 'कानीनो व्यास' इत्यादिप्रयोगसाधनाऽर्थं 'गोत्रे' इत्यस्य निवृत्तेरावश्यकत्वेन, [5]ढकि पूर्वपदस्य वृद्ध्यभावपक्षे 'वृद्धिनिमित्तस्ये'ति प्रवृत्त्यर्थम् 'उत्तरपदस्ये'त्यनुवृत्तेरावश्यकत्वेन भाष्यमसङ्गतमेव स्यात्। अत एव च 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङि'ति सूत्रे 'अनूङि'ति पर्युदासे [6]'दारदवृन्दारके'त्यादौ कर्मधारये

---

[1] 'पूर्वे प्रयोगः' इति ख. पाठः।

[2] 'सौवीरेतिसूत्रस्थम्' इति क. ख. पाठः।

[3] 'गार्गी' 'फाण्टाहृता' इत्यादौ 'गोत्रस्त्रिया' इति सूत्रादौ उदाहृतः टाप् अनुपपन्नः स्यादित्यर्थः।

[4] 'सिद्धान्तितत्वेन' इति तु क. ख. पाठः।

[5] 'ठकि'इति, 'टिक' इति वा क. ख. पाठः।

[6] 'दारवृन्दारकेत्यादौ' इति क. ख. पाठः।

कुरूरिति । लिङ्गविशिष्टपरिभाषया स्वादयः । प्राचा तु अन्तादिवच्च (६।१।८५) इति सूत्रमुपन्यस्य 'आदिवद्भावात्स्वादय' इत्युक्तम् । तत्रेदं

---

बृहच्छब्दरत्नः

'पुंवत्कर्मधारये'तिसूत्रेण पुंवद्भावो न स्यादि'ति भाष्यकारोक्तं सङ्गच्छते । अन्यथा बहुव्रीहावेव दूषणसम्भवे उत्तरसूत्रपर्यन्तधावनस्य निर्बीजत्वाऽऽपत्तिः । [1]'जातेश्चे'ति निषेधात्सर्वं सुस्थम् । न चैवं 'दारदक' इत्यत्र[2] पुंवद्भाव' इति 'पुंवत्कर्मधारये'तिसूत्रस्थभाष्यविरोध इति वाच्यम् । [3]ह्रस्व-पुंवद्भाव-विप्रतिषेध-वार्त्तिकबलादनुमीयमानपुंवद्भावस्य 'क'प्रत्यये वार्त्तिकमते सत्त्वेनाऽदोषात् । 'सौत्रस्यैवाऽयं निषेध'इति सिद्धान्तात् । 'पाण्डोर्ड्यणि'ति णकारस्तु राज्यामभिधेयायां पुंवद्भावनिषेधाऽर्थ इत्यादि निरूपयिष्यामः । अत एवाऽन्तराऽपत्ये 'अवन्ती' कुन्ती'त्यादौ जातिप्रयुक्तो ङीष् सङ्गच्छते । न च 'जातेरि'तिसूत्रात् 'जातेरि'त्यनुवर्त्तमाने 'इतो मनुष्यजातेरि'ति सूत्रे 'जाति'ग्रहणमपत्यप्रत्ययाऽन्तमात्रग्रहणाऽर्थमिति वाच्यम् । अपत्यप्रत्ययाऽन्तमात्रबोधकतायां जातिशब्दस्य क्लृप्तत्वेन पूर्वसूत्रे तथैव युक्तत्वात् । अत एव 'जातिग्रहणमयोपधादित्यस्य निवृत्त्यर्थमि'त्याकरोक्तं सङ्गच्छते । ऊङुत' इति सूत्रन्त्वनुवर्त्तते एव । अत एव 'अध्वरं यातीति अध्वर्युः, मृगय्वादित्वा'त्कु'प्रत्यये शाखाध्येतृवाचकात् 'कठी'तिवत्स्त्रियां प्राप्त ऊङ् नेत्याकरः । 'कुलीन'शब्दस्याऽजादिषु पाठ' इति हरदत्तोक्तन्तु सर्वेषां संमतम् । एतेन 'कौरव्यमाण्डूकाभ्याञ्चे'तिसूत्रस्थः 'टाप्ङीषोरपवाद' इति पाठो व्याख्यातः । 'टाप्-ङीपोरपवाद' इति पाठस्तु 'चरमप्रवृत्त्यैव सर्वबाध' इति 'इको गुणवृद्धी' इतिसूत्रस्थकैयटादिरीतिमनुसृत्य बोध्य इति दिक् ।

लिङ्गविशिष्टेति । यत्तु 'प्रातिपदिकग्रहणे लिङ्गप्रत्ययाऽन्तस्य ग्रहणमि'ति पठित्वा परिभाषाप्रवृत्त्यर्थं परादिवद्भाव आवश्यक' इत्युक्तम् । तन्न । तदुक्तपाठस्य भाष्यवृत्त्यादावस्पृष्टत्वात् । एकादेशेन प्रकृतिप्रत्ययसंमोहेऽपि लिङ्गप्रत्यय-

---

लघुशब्दरत्नः

विशिष्य तदुक्तिरुपेक्ष्येत्यर्थः । एतेन जातिलक्षणे एको गोत्रे (४।१।९३) इति सूत्रस्थभाष्यप्रामाण्यन पारिभाषिकगोत्रस्यैव ग्रहणम्, [4]'अवन्ती'त्यादेर्गोत्रत्वाऽऽरोपेण जातित्वमि'ति प्राचीनोक्तमदुष्टमि'त्यपास्तम् । लिङ्गविशिष्टेति । यत्तु 'लिङ्गबोधकप्रत्ययाऽन्तत्वरूपलिङ्गवैशिष्टचस्य, प्रातिपदिकत्वस्य च लाभाय पूर्वाऽन्तत्व-परादित्वयोरावश्यकत्वेनोभयत आश्रयणेऽन्तादिवत्त्वाऽभावान्नाऽत्रेयमि'ति । तन्न । 'इन्द्राणी'त्यसिद्धयापत्तेः । तस्मात् प्रातिपदिकत्वो- ।

---

[1] 'पद्यतेश्चे'ति' इति क. ख. पाठः ।
[2] 'इत्यादौ' इति क. पाठः ।
[3] 'ह्रस्वपुंवद्भावस्य कप्रत्यये वार्त्तिकमते' इति ख. पाठः ।
[4] 'अवन्तीत्यादौ गौत्रत्वारोपेण' इति घ. मु. पाठः ।

वक्तव्यं-'परं प्रत्यादिवद्भावो विधीयते। तथा चेह 'अप्रत्यय' इति प्रतिषेध एव स्यान्न तु स्वादयः। यत्तु व्याचख्युः—'आदिः = ऊङपेक्षया पूर्वः प्रातिपदिकं, तद्वद्भावात् = तदवयवत्वेन ग्रहणात्। 'पूर्वाऽन्तवद्भावादिति यावदि'ति। तदपि क्लिष्टं, स्वपर-ग्रन्थविरुद्धम्[1]। उक्तरीत्या हि 'काण्डे' 'कुड्ये' इत्यादावपि 'एकवचनमुत्सर्गत' इति सुः प्रवर्त्तेत। तद्वारणाय च 'अप्रत्यय' इति प्रसज्यप्रतिषेधाऽभ्युपगमे प्रकृते दोषः। 'श्वश्रूरि'त्यत्रैकादेशाऽभावाल्लिङ्गविशिष्टपरिभाषाया एवाऽऽवश्यकत्वाच्च। यत्तु 'तत्र श्वशुरः श्वश्वा (१।२।७१) इति निर्देशात्स्वादय' इति। तन्न। निर्देशस्य शब्दपरत्वात्, विपराभ्यां जेः (१।३।१९) ङेर्यः (७।१।१३) इतिवत्।

श्वशुरस्येति। पुंयोगलक्षणे ङीषि प्राप्ते ऊङ्। तत्संनियोगेन च विधीयमानो लोपः संनिहितत्वादन्तस्यैवाऽकारस्य, न त्वादेः। एतच्च वचनं श्वशुरः श्वश्वा (१।२।७१) इति निर्देशसिद्धाऽर्थकथनपरम्। अतोऽपि प्रथमाऽकारस्य लोपो न शङ्क्यः।

उपमानवाचि पूर्वपदमिति। 'धात्रीकराभ्यां करभोपमोरुरि'त्यत्र

---

बृहच्छब्दरत्नः

वैशिष्ट्यं लिङ्गप्रत्ययाऽन्तस्थाने जायमानत्वेन तादृशसम्बन्धे नास्त्येव। किञ्च 'लिङ्गप्रत्ययाऽन्तमि'त्यत्राऽन्तशब्दश्चरमाऽवयववाची, उत समीपवाची?। नाऽऽद्यः। 'इन्द्राणी'त्यादौ दोषाऽऽपत्तेः। नाऽन्त्यः। 'कुरूरि'त्यादौ दोषाऽऽपत्तेः। प्रातिपदिकत्वेन ग्रहणाऽर्थं पूर्वाऽन्तवद्भावस्याऽवश्यकत्वेनोभयत आश्रयणे नाऽन्तादिवद्भाव इति निषेधप्रवृत्तेश्चेति सुधीभिर्विभाव्यम्।

---

लघुशब्दरत्नः

पयोगो न कश्चित्। नाऽपि 'लिङ्गविशिष्टप्रातिपदिकस्ये'ति परिभाषायां पठ्यते। तया प्रातिपदिकत्व-तद्व्याप्यधर्माणां लिङ्गप्रत्ययविशिष्टेऽतिदेशाच्चेति दिक्।

ननु सप्तम्यधिकरणे च (२।३।३६) इति निर्देशेन विभक्त्येकादेशस्याऽन्तवत्त्वाभावज्ञापनात्, उत्सर्गस्याऽसार्वत्रिकत्वाच्च, ह्रस्वस्य सत्त्वप्रधाने एव प्रवृत्तेश्च 'काण्डे' इत्यादौ न दोषोऽत आह—श्वश्रूरित्यत्रेति।

वचनमिति। वृत्त्यादिपठितमित्यर्थः। उपमा-उपमानं=सादृश्यं, तदभावात्=

---

[1] 'विरुद्धञ्च' इति छ. शोधितः पाठः।

तु न। करभशब्दस्योपमानवाचित्वेऽपि, पूर्वपदत्वाऽभावात्। **शफौ खुराविति।** यद्यपि 'शफं क्लीबे खुरः पुमानि'त्यमरस्तथाऽपि शफशब्दस्य पुंस्त्वमपि बहुसंमतम्। 'शफाविव जर्भुराणे'ति श्रुतौ, ग्राम्यपशुसङ्घेषु (१।२।७३) इति सूत्रस्य व्याख्याऽवसरे न्यास-हरदत्तादिग्रन्थेषु, वाचस्पत्यादिनिबन्धेषु च प्रचुरप्रयोगदर्शनात्, 'लिङ्गमशिष्यं लोकाऽऽश्रयत्वाल्लिङ्गस्ये'ति भाष्याच्च, 'शफो भुजो गुदं घोणे'ति गणरत्नमहोदधौ क्रोडादिगणे पाठाच्च। 'शफः खुरे गवादीनां, मूले विटपिनामपी'ति हेमचन्द्रकोशाच्च। विश्वकोशे च पुंनपुंसकतोक्ता। 'वामौ = सुन्दरौ ऊरू यस्या' इति विग्रहः। इह सर्वत्र उपमानाऽभावादप्राप्ते विधिः। कथन्तर्हि 'पीवरोरु पिबतीव बर्हिण' इति कुमारः। प्रमाद एवाऽयम्। 'सञ्ज्ञापूर्वकत्वात्सम्बुद्धिगुणो ने'त्येके। **हितेन सहेति।** 'समो वा हित-ततयोरि'ति व्युत्पादितः सहितशब्दस्तु नेह गृह्यते। एकदेशविकृततया संहितग्रहणादेव सिद्धेरिति भावः। **अञ् योऽकार इति।** अञा अकारविशेषणं किम्?। शूरसेनी। जनपदशब्दात् (४।१।१६८)

---

**बृहच्छब्दरत्नः**

पूर्वपदत्वेति। [1]उत्तरपदेन पूर्वपदाऽऽक्षेपे प्रत्यासत्तिन्यायेनोपमानवाच्येव गृह्यते। अत एवोत्तरपदग्रहणं चरिताऽर्थम्। तत्रोत्तरपदशब्दस्य योगरूढत्वेनोपस्थितत्वात्। उत्तरत्वमपि उपमानवाचकपूर्वपदाऽपेक्षयैव। अत एव [2]'हस्तशुभोरूरि'त्यत्र त्रिपदे बहुव्रीहावूङ्।

उपमानाऽभावादिति। नन्विदं 'शफौ खुरौ ताविवे'तिमूलग्रन्थविरुद्धमिति चेन्न। 'शफ'ग्रहणस्य सामर्थ्येन शुद्धोपमानोपमेयभावस्य रूपकाऽतिरिक्तस्य ग्रहणमि'ति न्यासकारोक्तत्वात्। हरदत्तस्तु 'सहितपर्यायः शफशब्द' इत्याह।

अकारेति। इदञ्च 'न प्राच्यभर्गादी'तिसूत्रे 'यौधेयादी'तिप्रतिषेधाज्ज्ञायते। शार्ङ्गरवादौ 'कामण्डलेय'शब्दः पठ्यते। स च 'चतुष्पाद्भ्यो ढञि'ति ढञन्त' इति हरदत्तादयः। तन्न। ञित्त्वेनाऽऽद्युदात्तत्वे ङीपैव सिद्धत्वात्। 'वात्स्यायन'-

---

**लघुशब्दरत्नः**

तस्य समासाऽवाच्यत्वादित्यर्थः। यद्वोपमानत्वेन प्रतीत्यभावादित्यर्थः। 'शफोरूरि'त्यत्राऽपि सादृश्यमूलकः शफत्वाऽऽरोपो, न तु तत्प्रतीतिरिति भावः। एवं च 'करभोरुशब्देऽपि[3] आरोपविवक्षायामूङ् न भवत्येव। एतेन 'करोरुभिरि'ति व्याख्यातम्। एके इति। 'तस्य भाष्या-

---

[1] 'उत्तरपदस्य' इति, 'उत्तरपदत्वेन' इति च क. ख. पाठः।
[2] 'हस्तशुभोरू इत्यत्र' इति क. ख. पाठः। [3] अपि. मुद्रितेषु नास्ति।

इत्यञो अतश्च (४।१।१७७) इति लुकि, जातिलक्षणो ङीष्। शाङ्गरवीति। शृङ्गरुशब्दादपत्याऽर्थे अण्।

नृनरयोरिति। नृशब्दात् ऋन्नेभ्यः (४।१।५) इति ङीपि, नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनम्। ननु नरशब्देऽलोऽन्त्यस्य वृद्धिः स्यात्। यत्त्वाहुः—'अन्त्यस्य यस्येतिलोपेनाऽपहारात् अनन्त्यस्याऽप्यकारस्य वृद्धिर्भवति। आन्तरतम्यात्। 'गुणे त्वन्याय्यकल्पने'ति अलोऽन्त्यपरिभाषाबाधस्यैव न्याय्यत्वादि'ति। तन्न। प्रत्ययसंनियोगशिष्टाया वृद्धेरन्तरङ्गत्वेन परमपि यस्येतिलोपं बाधित्वा प्रवृत्त्यौचित्यात्। किञ्चाऽस्तु

---

बृहच्छब्दरत्नः

शब्दः पठ्यते। स च यञन्तप्रकृतिक'ष्फ'प्रत्ययाऽन्तः[1]। 'फगन्त' इति तु प्राञ्चः। तदपि न। स्त्रियां युवसञ्ज्ञाया अभावेनैको गोत्रे इतिनियमप्रवृत्तेरित्याहुः। 'आश्मरथ्य'शब्दोऽत्र पठ्यते। 'अश्मरथ'शब्दो गर्गादिः। अपवाद'ष्फ'प्रत्ययस्य पूर्वं वर्णितत्वेन ष्फ[2]-ङीनौ पर्यायेण बोध्यौ। अत्र च वतण्डशब्दोऽपि पठ्यते। इदञ्च 'स्त्रियाः पुंवदि'ति सूत्रे भाष्यादौ स्पष्टम्।

ङीषि प्राप्ते इति। 'किन्नरीणां नरीणामि'ति प्रयोगस्तु पुंयोगलक्षणङीषन्तो बोध्यः। स तु नाऽनेन बाध्यते इति सर्वसंमता युक्तिः। स्पष्टञ्चेदं 'ढिड्ढाणञि'तिसूत्रे भाष्ये। न चैवं नरत्वजातिविशिष्टस्त्रियामपि पुंयोगलक्षणङीषा 'नरी'ति प्रयोगस्य दुर्वारत्वेन 'नर'शब्दात् ङीन्विधानं, वृद्धिविधानञ्च व्यर्थमिति

---

लघुशब्दरत्नः

ऽनुक्तत्वात्साधुत्वे न नियामकते'त्यरुचिरत्र। ङीषिति। अत एव न प्राच्य (४।१।१७८) इति सूत्रे यौधेयादिग्रहणं चरिताऽर्थम्। तद्धि 'पर्श्वादियौधेयादिभ्यामणञौ (५।३।११७) इति स्वार्थिकाऽञः अतश्च (४।१।१७७) इति प्राप्तलुको निषेधाऽर्थम्। तत्फलञ्चाऽञन्तत्वाङ्गीन् यथा स्यात्, ढगन्तत्वाङ्गीप्[3] मा भूदिति।

नरशब्दादिति। यद्यपि नृशब्देन नारी सिद्धा, नरी च पुंयोगे दुर्वारा, तथाऽपि नरत्वजातिमात्रप्रतिपादनेच्छायां 'नरी'त्यस्य वारणार्थं 'नरग्रहणं बोध्यम्। ननु वृद्धिविधानसामर्थ्याल्लोपबाधोऽत आह—गुणे त्विति। अलोन्त्यपरिभाषाबाध एव न्याय्य इति भावः। अन्तरङ्गत्वेनेति। सामर्थ्याद् बाधो ह्यनुचितः, न्यायप्राप्तबाधस्तूचित एवेति भावः।

---

[1] प्राचां ष्फ तद्धित इति ष्फप्रत्ययो यञन्तप्रकृतिकः'। 'फप्रत्ययाऽन्तः इति ख. पाठः। 'ष्फ'प्रत्ययाऽन्त' इति क. पाठः।

[2] 'प्राचां ष्फ' इति ष्फप्रत्यय इत्यर्थः।

[3] 'ङीप्' 'ङीव्' 'ङीन् मा भूत्' इति नानाविधः क. ख. घ. पाठः।

कथंचिल्लोपस्तथाऽपि रेफस्यैव वृद्धिः स्यान्न त्वकारस्य। [1]अन्तरतमपरिभाषाऽपेक्षयाऽलोन्त्यपरिभाषायाः परत्वात्। अपि चाऽन्तरतमपरिभाषाऽसदृशमादेशं व्यावर्त्तयति, न तु स्थानिनं नियच्छति, तत्कथं रेफस्य स्थानित्वव्यावृत्तिः। किञ्च 'गुणे त्वन्याय्ये'ति न्यायोपन्यसनं स्थवीय एव। परिभाषयोः परस्परं गुण-गुणिभावाऽयोगात्।

अत्रेदं तत्त्वम्—नर् इति रान्तं लुप्ताऽकाराऽनुकरणम्। नरः अः-नरः। 'ना च नरश्च तयोरि'ति व्याख्येयम्। यद्वा—नरस्य अः-नरः। कतन्तवत्

बृहच्छब्दरत्नः

वाच्यम्। पुंयोगेन तत्प्राप्तावपि, जातौ तदभावसम्पादनेन चारितार्थ्यात्। अपि च 'नरे सञ्ज्ञायामि'तिसूत्रे 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणमि'तिपरिभाषया 'नारी'शब्दस्य ग्रहणाऽर्थं यथान्यासतैवोचिता। ननु 'अकृतव्यूह'परिभाषया 'यस्येति'लोप एव भविष्यतीत्यरुचेराह—किञ्चेति। परत्वादिति। [2]अत एवा'ऽत उपधाया' इतिसूत्रे 'उपधा'ग्रहणं चरिताऽर्थम्। एतेन 'कार्यकालपक्षे परत्वस्य वक्तुमशक्यत्वादिष्टसिद्धिरि'त्यपास्तम्। कार्यकालपक्षे विनिगमकाऽभावस्य स्पष्टत्वेन नियतशास्त्राऽर्थाऽनुरोधेनेदृशे विषये त्वदुक्तपक्षस्याऽऽश्रयितुमशक्यत्वाच्च।

अयोगादिति। यत्तु 'इको गुणवृद्धी' इतिसूत्रे 'तच्छेष'शब्देन परिभाषयोर्गुणगुणिभावो व्यवहृत' इति। तन्न। 'सार्वधातुकार्द्धधातुकयोः' 'अलोऽन्त्यस्य' इको गुणवृद्धी' इतिसूत्रत्रयस्य लक्ष्यसंस्कारकमहावाक्ये विशेषणविशेष्यभावमादायैव 'तच्छेष'शब्द इति शब्दकौस्तुभादौ ध्वनितत्वात्।

[3]रान्तमिति। न चैवं वानरादिशब्देऽतिप्रसङ्गः। साहचर्य्येण मनुष्यजातिघटकस्यैव ग्रहणात्। 'यं समुदायं योऽवयवो न व्यभिचरति [4]तस्य

लघुशब्दरत्नः

कथञ्चिदिति। संनियोगशिष्टत्वाऽनङ्गीकारेणेत्यर्थः। तत्कथमिति। 'स्थानेऽन्तरतमे' (८।१।५०) इति सप्तम्यन्तपाठस्य भाष्ये 'कुमार्यत्रे'त्यादौ यणनापत्त्या दूषितत्वादिति भावः। परिभाषयोरिति। तद्व्याख्यातृग्रन्थाऽनुसारेणेदम्। तर्हि 'अलोऽन्त्यस्यैव बाधो, न त्वन्तरतमपरिभाषाया' इति व्याख्यातम्।

व्याख्येयमिति। 'नृनरयोरि'त्यावर्त्तते। एकत्र पञ्चम्यर्थे षष्ठी। 'ताभ्यां ङीन्,

१ 'अन्तरतमपरिभाषाऽपेक्षया च' इति मुद्रितेषु पाठः।
२ 'अत एव अदुपधायाः' इति क. ख. पाठः।
३ 'रान्तम्' इति मनोरमापाठाऽभिप्रायेणैव 'रान्तमि'ति प्रतीकधारणमिति बोध्यम्। 'रान्ते'ति तु मुद्रितः पाठः।
४ 'तत्र ग्रहणम्' इति ख. पाठः।

**पररूपम् । ना च नरश्च तयोर्नृनरयोः । नरस्य च प्रथम एव अकारो गृह्यते, न तु द्वितीयः । प्रश्लेषसामर्थ्यात् । अधिकं शब्दकौस्तुभे बोध्यम् ।**

**'पुत्र'शब्दोऽत्र पठ्यते । शैलपुत्री । पुत्रीव हर्षं हृदये तनोति । कुर्वे तदुर्वीपतिपुत्रि सर्वम् । न च पुत्रशब्दः कन्यायां नाऽस्तीति भ्रमितव्यम् । 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वे' इत्यमरोक्तेः । अत एव प्रत्ययस्थात् (७।३।४४) इतीत्त्वप्रकरणे 'वा [1]सूतकापुत्र-**

---

**बृहच्छब्दरत्नः**

ग्रहणमि'ति न्यायेनाऽदोषाच्च । अयञ्च न्यायो 'रान्तशब्दस्य प्रयोगाऽभावेना-[2]ऽधिकग्रहणस्याऽऽवश्यकत्वे, नकाराद्यकाराऽन्तग्रहणस्याऽवश्यकत्वेन तन्मात्रग्रहणेनैव शास्त्रस्य चारितार्थ्येऽधिकग्रहणे न किञ्चिन्मानम् , अधिकोपस्थापकसामग्र्या अनियतत्वादि'ति तर्कमूलः ।

**अधिकमिति ।** 'नृ'साहचर्य्यान्नकारात्परस्यैव [3]नरशब्दे वृद्धिः । 'नृनरयोरा चे'तिवक्तव्ये वृद्धिग्रहणं सञ्ज्ञापूर्वकविधेरनित्यत्वेन वृद्ध्यभावे नरशब्दान्ङीनि जातौ 'नरी'त्याद्युदात्तप्रयोगसिद्ध्यर्थम् । न चाऽत इत्यनुवृत्तिसामर्थ्यादाद्याऽकारस्य भविष्यतीति वाच्यम् । 'इतो मनुष्यजातेः' 'ऊङुत' इत्यादिना विच्छेदात् । गणसूत्रेष्वनुवृत्तेरभावाच्च । 'शाङ्गरवाद्यञो ङीनि'ति सूत्रेऽन्वयेन चारितार्थ्ये सामर्थ्याऽयोगाच्च । 'विनयादिभ्यष्ठगि'तिसूत्रसम्बन्ध्युपायाद्ध्रस्वत्वञ्चेति वचने उपायादत्वे वक्तव्ये उत्सर्गप्राप्ताऽऽदेशविरुद्धधर्माऽधिकरणस्यैवाऽऽदेशिनो बोधितत्वेन उपाऽन्त्यस्यैव ह्रस्वत्वमिति बोध्यम् । **पठ्यते इति ।** अत एव सामर्थ्याज्जातित्वाऽभावेऽपि [4]ङीन् च । अपरे तु 'एतत्पाठसामर्थ्यादेव 'पुत्र'शब्दस्य जातिकार्यम् । अत एव जातिपूर्वत्वेनाऽन्तोदात्तत्वात् 'पुत्रो हतो, जग्धोऽनये'ति बहुव्रीहौ 'पुत्रहती' 'पुत्रजग्धी'त्यत्रा'ऽस्वाङ्गपूर्वपदाद्वे'ति [5]ङीषिति कैयटहरदत्तादय'

---

**लघुशब्दरत्नः**

**'नुर्नरोऽकारस्य च वृद्धिरि'त्यर्थं इति भावः । अत एव 'वानर'शब्दे नाऽतिप्रसङ्गः । यतो नरशब्दान्ङीन्, तदीयरेफाऽन्तसम्बन्ध्यकारस्यैव वृद्धिविधानात् । वानरे नरस्याऽऽनर्थक्यात्ततो न ङीनिति बोध्यम् । तदाह—अधिकमिति । अमरोक्तेरिति । तत्र स्त्रीत्वबोधे ईकारसमभिव्याहारस्तन्त्रम् । केवलाऽकारान्तपुत्रशब्दस्तु पुंस्त्वविशिष्टस्यैव बोधकः । अत एव 'स पुत्र' इत्यतो न सन्देहः । 'पुमांसं पुत्रमाधेही'त्यादौ पुंस्त्वेन विशेषणं त्वतिशयितपुंस्त्वबोधनायेति भावः ।**

---

[1] 'पुत्रिका' इति घ. च. छ. पाठः । ङ. छ. पु. भाष्ये च 'पुत्रका' इत्येव पाठः ।

[2] 'अधिकस्येत्यस्यावश्यकत्वे नकारान्तग्रहणस्यावश्यकत्वेन' इति ख. पाथः ।

[3] 'नशब्दे' इति क. ख. पाठः । [4] 'ङी च' इति क. ख. पाठः ।

[5] 'ङीपिति' इति क. ख. पाठः ।

कावृन्दारकाणामि'ति वार्त्तिक-तद्भाष्यादिकश्च सङ्गच्छते। यत्त्वत्र हरदत्तेनोक्तं- 'केवलः पुत्रशब्दः स्त्रियां न वर्त्तते' इति। तद्भाष्यादिविरोधादुपेक्ष्यम्। इत्त्व-प्रकरणस्थस्वग्रन्थविरोधाच्च।

इदं तु चिन्त्यम्—कारे सत्यागदस्य (६।३।७०) इति सूत्रे 'सूतोग्र-राजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वे'ति वार्त्तिकं किमर्थमिति ?। यत्तु वदन्ति-

---

## बृहच्छब्दरत्नः

इत्याहुः। भाष्यादिकमिति। अत एव 'पुमांसं पुत्रमाधेही'त्यादौ पुंस्त्वेन पुत्रो विशेषितः। सूतोग्रेति। न चाऽत्र स्थानिवद्भावेन 'न षट्स्वस्रादिभ्य' इति निषेध इति वाच्यम्। टित्त्ववैयर्थ्याऽऽपत्तेः। उपस्थितपूर्वप्रकरणप्राप्तस्यैव निषेधाच्च। किमर्थमिति। यत्तु 'दुहितुः पुत्रडादेशे 'अभिव्यक्तपदार्था ये' इति न्यायेन 'नादिन्या-क्रोशे पुत्रस्ये'त्यादीनामप्रवृत्तिरिति वाच्यम्। उभयोरपि समानाऽर्थत्वेनाऽऽनु-पूर्वीभेदस्यैव शब्दभेदनियामकत्वेनोक्तन्यायाऽप्रवृत्तेः। किञ्चेदं नाऽपूर्वाऽऽदेश-विधायकम्। किन्तु 'क्रोष्टृ'न्यायेन विषयविभागबोधकमात्रम्। वस्तुतस्तु तदपि न। विकल्पस्य सत्त्वात्। यदपि 'सानुबन्धकत्वेनाऽस्य न ग्रहणमि'ति। तथा च [1]'सूतपुत्र्यादिनी'त्यादौ शब्दभेदेन विकल्पः फलित' इति। तन्न। सामान्य-सूत्रेण विकल्पस्य सिद्धत्वात्। वस्तुतस्तु 'नादिनी'ति सूत्रे ङ्यन्तस्य न ग्रहणमि'ति प्रागेव प्रपञ्चितम्। अत एव 'स्वराऽर्थमि'ति[2]त्वद्वृद्धोक्तिः सङ्गच्छते। [3]व्युत्पत्तिपक्षे च आदेशपुत्रशब्दस्य प्रतिपदोक्तपरिभाषया ग्रहणाऽनापत्तेश्च। अत एव

---

## लघुशब्दरत्नः

चिन्त्यमिति। चिन्ताबीजन्तु 'सूतादिपुंशब्देभ्यः परे ङीनन्ते तत्पुरुषे पुत्रः पुम्भ्यः (६।२।१३२) इत्यनेन [4]'पुंल्लिङ्गशब्दात्परपुत्रशब्दाऽन्ततत्पुरुषे पुत्रस्याऽऽदिरुदात्त' इत्यर्थकेन लिङ्गविशिष्टपरिभाषया पुंशब्दोकारोदात्तत्वम्। पुत्रडादेशे तु न तत्प्रवृत्तिः। सानुबन्धकत्वात्। अतस्तत्रोदात्तनिवृत्तिस्वरेणाऽन्तोदात्तत्वमि'ति। नादिन्याक्रोशे पुत्रस्य (८।४।४८) इत्यस्य पुत्रटि अप्रवृत्तिस्तु [5]न फलम्। एतत्सम्बन्ध्यचः परस्य यर आदिनीशब्दपरत्वाऽसम्भवात्। पुत्रटः स्थानिवद्भावेन दुहितृशब्दत्वेऽपि 'न षट् (४।१।१०) इति निषेधो न। तस्य ऋन्नेभ्यः (४।१।५) इति ङीप्मात्रबाधकत्वात्। टित्त्वसामर्थ्याच्च। इदं च वार्त्तिकं तत्पुरुषे एव प्रवर्त्तते,

---

१ 'सूतपुत्रादिनी' इति क. पाठः।
२ 'तत्त्ववृद्धोक्तिः' इति ख. पाठः।
३ 'नादेशपुत्रशब्दस्य' इति क. ख. पाठः।
४ 'पुँल्लिङ्गशब्दात्पर' इति ख. घ. पाठः। 'पुंशब्दात्पर' क. इति पाठः।
५ 'न तत्फलम्' इति घ. पाठः।

'स्वरार्थमि'ति । तन्न । टित्त्वान्ङीपि कृते, उदात्तनिवृत्तिस्वरेणोदात्तः,[1] ङीनन्तेन तत्पुरुषेऽपि समासस्वरेणाऽन्तोदात्त एवेति,[2] स्वरे भेदाऽभावात् । यदपि 'शाङ्गरवादौ पुत्रशब्दः प्रक्षिप्तो, न तु सांप्रदायिक' इति । तदपि न । उदाहृतप्रयोगविरोधात्, 'वा सूतके'त्यादिवार्त्तिके कैय्यट-हरदत्तादिकृताऽकार-प्रश्लेषविरोधाच्चेत्यास्तां तावत् ।

**आम्बष्ठ्येति** । वृद्धेत्कोसल (४।१।१७१) इति ञ्यङ् । करीषस्येव गन्धोऽस्य करीषगन्धिः । उपमानाच्च (५।४।१३७) इति गन्धस्येदन्ताऽऽदेशः । तस्य गोत्राऽपत्यं स्त्री । अण् । अणिञोः (४।१।७८) इति ष्यङादेशः । स च यद्यपि स्त्रियामेव विहितस्तथाऽपि ङित्करणसामर्थ्यात्तदन्तादप्ययं चाप् । **पौतिमाष्येति** । 'पूतिमाष'शब्दो गर्गादिः ।

**तद्धिताः** (४।१।७६) । बहुवचनमनुक्तानामुपसङ्ख्येयानां सङ्ग्रहार्थम् । महासञ्ज्ञाकरणमन्वर्थत्वाय[3]—'तेभ्यः = प्रयोगेभ्यो हितास्तद्धिता' इति । तेन यथाऽभिधानमेव स्युः । स्यादेतत्—टापः प्रागयमधिकारोऽस्तु, ष्फविधौ

---

बृहच्छब्दरत्नः

'पुत्रः पुम्भ्य' इत्याद्यादेशपुत्रशब्दस्य न ग्रहणमि'त्यपास्तम् । किञ्च 'कुल'शब्दस्य नपुंसकत्वेन तद्ग्रहो व्यर्थ एवेति सूरिभिर्विभावनीयम् ।

उदात्तनिवृत्तीति । इदञ्च वचनं तत्पुरुषे एव प्रवर्त्तते, न तु बहुव्रीहौ । 'कारे सत्यागदस्ये'तिसूत्रस्य बहुव्रीहावसम्भवात् । 'अबहुव्रीहावि'त्यनुवृत्तेश्च । पूर्व-साहचर्य्येण तथैव सम्भवाच्च । तत्रत्यवार्त्तिकस्य तत्रैव प्रवृत्तेः । यत्तु वार्त्तिके, 'आद्युदात्तः पुत्रशब्दो निपात्यते' इति । तन्न । स्वरप्रकरणे एव वचनस्य कर्त्तु

---

लघुशब्दरत्नः

कारे सत्या (४।३।७०) इति सूत्रे उपसंख्यानात् । तच्चाऽन्याऽसम्भवात्, पूर्वोत्तरसाहचर्येण च तत्पुरुष एव । एतेन 'बहुव्रीहौ ङीबर्थमिदमि'त्यपास्तम् । टित उपसर्जनत्वेन तत्र ङीपोऽप्राप्तेश्चेति दिक् । ङित्करणसामर्थ्यादिति । यङश्च (४।१।७४) इत्यत्र सामान्य-ग्रहणाऽविघाताऽर्थङित्करणसामर्थ्यादित्यर्थः । द्योतकत्वाच्चेत्यपि बोद्धव्यम् ।

अनुक्तानामिति । तेन अल्पार्थे ग्रामटिकादयः साधवः । इदन्तु भाष्ये न दृश्यते । टापः प्रागिति । ङीबादिषु ङस्येत्संज्ञा तु चुटूङः (१।३।७) इति सूत्रकरणेन सेत्स्यति ।

---

[1] 'अन्तोदात्तः' इति मुद्रितेषु पाठः । 'उदात्त' इति ङ. छ. पाठः ।

[2] 'स्वरभेदाऽभावात्' इति घ. पाठः ।

[3] 'चाऽन्वर्थत्वाय' इति मुद्रितेषु पाठः ।

तद्धितग्रहणं, यस्य (६।४।१४८) इति लोपे ईद्ग्रहणञ्च[1] मास्त्विति चेत्। मैवम्। 'पट्वी'त्यत्र ओर्गुणप्रसङ्गात्। शत्रन्तादिति। 'यौति = मिश्री करोति पत्ये'ति व्युत्पत्तेः। केचित्तु बाहुलकात् यौतेरौणादिकं कतिप्रत्ययं वदन्ति। उभयथाऽपि युवतीनां समूहो यौवतम्। त्यन्तात्तु अणि पुंवद्भावात् 'यौवन-मि'त्येव। 'भिक्षादिपाठसामर्थ्यान्न पुंवदि'ति वृत्तिस्तु भाष्यविरुद्धा। भाष्ये

बृहच्छब्दरत्नः

युक्तत्वेन, [2]टकारस्य, 'दुहितृ'ग्रहणस्य च वैयर्थ्यादि'त्यास्तान्तावत्।

ईद्ग्रहणमिति। तथा च 'औङः श्यामि'ति वार्त्तिकं, [3]डाप्प्रत्यये विजातीयाऽनुबन्धकरणञ्च न कर्त्तव्यमित्यपरमनुकूलम्। 'चुट्रू' इत्यस्य स्थाने [4]"चुटुङ' इति सूत्र्यताम्। यद्वा 'टीप्' 'टीष्' 'टीनि'त्येव प्रत्ययाः सन्तु। माऽस्तु ङकारः। 'आचारक्विपि नाऽऽत्मनेपदमि'ति तु प्रागेव निरूपितम्। 'फिषोऽन्त उदात्त' इति नाऽऽपाद्यम्। विभागशून्ये एव प्रवृत्तेः। भिन्नाऽनुबन्धनिर्देशवैयर्थ्याऽऽपत्तेश्च। अत एव सिद्धान्ते 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणमि'ति परिभाषया दोषो न शङ्क्यः। पट्वीत्यत्रेति। एवं 'कुरूरि'त्यत्राऽपि बोध्यम्। ओर्गुण इति। 'आसुरायणी'त्यादौ 'यस्ये'ति लोप इवे'ति शेषः। अत एव 'दण्डिनी' इत्यादौ टिलोपो न। अत एव चाबन्तानां प्रातिपदिकग्रहणे एकादेशस्य पूर्वाऽन्तत्वाद्विभक्ति-

लघुशब्दरत्नः

टीबादय एव वा ते सन्तु। तद्धिताऽन्तत्वात्प्रातिपदकत्वेऽपि फिट्स्वरो न। प्रकृतिप्रत्यय-विभागशून्ये एव तत्प्रवृत्तेः। [5]पकार-षकाररूपभिन्नाऽनुबन्धवैयर्थ्याऽऽपत्तेश्च। अत एव सिद्धान्ते लिङ्गविशिष्टपरिभाषया नाऽत्र फिट्स्वरः। डाप्प्रत्यये विजातीयडकाराऽनुबन्धश्च न कार्यं इत्यपरं लाघवम्। टिलोपस्य नस्तद्धिते (५।४।१४४) इत्यनेनैव सिद्धेः। यस्येति लोपे इति। 'औङः श्यामि'ति वार्त्तिकस्याप्युपलक्षणम्। ओर्गुणेति। न च ईद्ग्रहणं ङीबादिषु तद्धितकार्याऽभावज्ञापनाऽर्थं, तेन 'पट्वी'त्यादौ न ओर्गुण इति वाच्यम्। 'कुरूरि'त्यादिसिद्धचर्थं स्त्रीप्रत्ययेषु तदभावज्ञापने, 'आसुरायणी'त्यादौ ष्फेऽपि यस्येति (६।४।१४८) लोपाऽनापत्तेः। अत एव 'दण्डिनी'त्यादौ टिलोपो नेति दिक्। मिश्री करोतीति। 'आत्मानमि'ति शेषः।

[1] 'इद्ग्रहणम्' इति छ. पाठः।
[2] 'कारस्य' इति ख. पाठः।
[3] 'ङीप्' इति पाठान्तरम्।
[4] 'चुटुट्' इति ख. पाठः।
[5] 'पकार-षकार-भिन्नाऽनुबन्ध' इति लिखितेषु पाठः। 'पकारषकाररूप' इति मुद्रितेषु पाठः।

तत्पाठस्य प्रत्याख्यानादिति दिक् ।

इति स्त्रीप्रत्ययाः ।

---

बृहच्छब्दरत्नः

निमित्तककार्ये ग्रहणं सिद्धम् । दिगिति । दिगर्थस्तु पाठेन तदभाव उपपादयितुमशक्यः । 'युवति'शब्दे विकाराऽभावमात्रतात्पर्यकत्वे वृद्धयादीनामप्यभावाऽऽपत्तिरिति दिक् ।

इति स्त्रीप्रत्ययाः ।

---

लघुशब्दरत्नः

दिगिति । दिगर्थस्तु 'पाठस्य विकाराऽभावमात्रतात्पर्यकत्वे वृद्धयादीनामप्यभावाऽऽपत्तिः । अत एव 'युवतीकरनिर्मथितं दधी'त्यादिप्रयोगसिद्धिः । युवतिशब्दे लिङ्गविशिष्टपरिभाषयैव प्रातिपदिककार्ये सिद्धेऽत्र 'तद्धिता' इत्यधिकारो लिङ्गविशिष्टपरिभाषाऽनित्यत्वज्ञापनाऽर्थ इति दिक् ।

इति स्त्रीप्रत्ययाः ।

---

# अथ विभक्त्यर्थप्रकरणम् ।

(अथ प्रथमा)

मात्रशब्दस्येति । तस्य चाऽवधारणमर्थः । 'मात्रं कात्स्न्र्येऽवधारणे' इत्यमरः । 'प्रातिपदिकाऽर्थादीन्येव तन्मात्रमि'त्येवकारेणाऽस्वपदविग्रहः । मयूरव्यंसकादित्वात्समासः । कृष्ण इति । यद्यपि नीलरूपवत्परोऽयमनियतलिङ्गस्तथाऽपि वासुदेवे भगवति नियतपुंल्लिङ्ग एवेति भावः । ज्ञानमिति । भावे ल्युट् । द्रोण इति । न च प्रातिपदिकाऽर्थमात्रे प्रथमेहाऽस्त्विति वाच्यम् । तथा सति परिच्छेद्य-परिच्छेदकभावस्य संसर्गविधया भानाऽयोगात् । नामाऽर्थयोरभेदसंसर्ग[1] एवेति व्युत्पत्तेः । न चाऽषष्ठ्यर्थबहुव्रीहौ व्यभिचारः ।

---

बृहच्छब्दरत्नः

नीलरूपवदिति—प्राशस्त्ये मतुप् । तृतीयासमासो वा । मतुब्रहितपाठे तु बहुव्रीहिः । नियतपुंल्लिङ्ग एवेति । अयं भावः—वासुदेवभगवद्वाचककृष्णशब्दस्याऽकारान्तस्यैव लिङ्गबोधकत्वं, लाघवेन तादृशाऽऽनुपूर्व्या एव शक्तताऽवच्छेदकत्वकल्पनात् । तटादिशब्दानान्तु विसर्गाद्यन्तानां लिङ्गबोधकत्वं, नाऽकाराऽन्तस्य । 'तटमि'त्यादौ पुंल्लिङ्गादिबोधाऽऽपत्तेः । शक्तताऽवच्छेदकाऽऽनुपूर्व्याः सत्त्वात् । [2]विसर्गाऽन्तादीनां शक्तत्वकल्पने तु प्रातिपदिकाऽर्थत्वाऽभावो लिङ्गस्य स्पष्ट एव । नामार्थयोरिति । नामाऽर्थत्वञ्च[3] नामजन्य-

---

लघुशब्दरत्नः

नीलरूपवदिति । प्रत्ययस्थात् (७।३।४४) इति सूत्रस्थेन 'असुब्बत' इति भाष्यप्रयोगेण क्वचिल्लाघवाऽनादरस्याऽपि सूचनात् 'कर्मधारयान्मत्वर्थीयोऽपि क्वचिदि'ति ज्ञापनान्नैतत्प्रयोगाऽनुपपत्तिरिति बोध्यम् । नामार्थयोरिति । 'नामाऽर्थश्च नामाऽर्थश्चे'त्येकशेषः । अभेदसंसर्ग इति । यद्यप्यभेदो न संसर्गः, 'राहोः शिर' इत्यादावौपाधिकभेदेन षष्ठ्युपपादनस्य भाष्ये कृतत्वात्, तथाऽपि इतरसम्बन्धाऽनवच्छिन्नविशेषणविशेष्यभावसंसर्गस्य तेन शब्देनाऽभिधानान्न दोष इति बोध्यम् । व्युत्पत्तेरिति । 'नीलमुत्पलमि'त्यादौ तथा क्लृप्तत्वादिति भावः । अषष्ठ्यर्थबहुव्रीहाविति । अत्र 'षष्ठी'पदं सप्तम्या अप्युपलक्षणम् । 'वीराः पुरुषा यस्मिन्नि'त्यत्राऽप्यव्यभिचारात् । एवञ्च प्राप्तोदकादावित्यर्थः । न च

---

१ 'संसर्ग एवेति व्युत्पत्तेः' इति मुद्रितेषु पाठः । लिखितेषु तु इतिर्नास्ति ।

२ 'विसर्गादीनाम्' इति ख. पाठः ।

३ 'नामाऽर्थत्वन्तु' इति क. पाठः ।

एकार्थीभावाऽभ्युपगमात् । नाऽपि निपाताऽर्थे । तेषां द्योतकताऽभ्युपगमात् । न च सिद्धान्तेऽपि प्रकृति-प्रत्ययाऽर्थयोरभेदाऽन्वयो दुर्लभः, अन्यत्राऽदृष्ट-

---

**बृहच्छब्दरत्नः**

बोधविषयत्वम्[१] । न चेति । 'प्राप्तोदको ग्राम' इत्यादौ प्राप्तादिपदानि कर्त्रादि-प्रकारकप्राप्तिक्रियाऽर्थकानि, कारकरहितक्रियाऽर्थकानि वा । ततस्तत्सम्बन्धि-ग्रामादिलक्षणेति परेषां स्थितिः । 'ग्रामे गच्छति' 'भूमौ पतित' इत्यादिवत्कर्मणो-ऽधिकरणत्वविवक्षायां 'प्राप्तमुदकं यस्मिन्नि'त्यपि विग्रहो बोध्यः ।

द्योतकेति । अत एव 'सुन्दरः समुच्चय' इतिवत् 'सुन्दरश्चे'ति, 'घटश्चे'त्यादौ षष्ठी, 'शरैरुस्रैरिवोदीच्यानि'त्यादावनन्वयः, 'प्रतिष्ठते' इत्यादावर्थाऽसङ्गतिः, 'अनुभूयते' इत्यादावकर्मकत्वञ्चेत्यादिकं न । न चैवं 'वागर्थाविवे'त्यादौ वागर्थशब्दस्य वागर्थसदृशे लक्षणाऽङ्गीकारे पदार्थैकदेशत्वेन [२]'वागर्थयोरि'त्यत्र सङ्गताऽर्थस्य 'संपृक्तावि'त्यस्याऽनन्वयाऽऽपत्तौ पूर्णोपमानभङ्गाऽऽपत्तिरिति वाच्यम् । संपृक्तवागर्थ-सदृशे लक्षणाऽङ्गीकारे बाधकाऽभावात् । अनन्वयेऽप्युपमानोपमेयनिष्ठत्वमात्रेण पूर्णोपमात्वाऽङ्गीकाराच्च । समासगायाः पूर्णोपमाया उपपादने इवादिशब्दानां वाचकत्ववादिनां मते ह्येषैव गतिः । न च द्योतकत्वपक्षे 'तमिवे'त्यादावुपसर्जन-त्वात्सर्वनामकार्याऽप्रसङ्ग इति वाच्यम् । अन्तरङ्गत्वेन पूर्वं प्रवृत्तेः । अत एव

---

**लघुशब्दरत्नः**

व्यपेक्षावादेऽपि प्राप्तपदादिविषये 'पचती'त्यादौ क्लृप्तत्यागस्य प्रत्ययाऽर्थप्राधान्यस्य वृत्तौ त्यागेन, विशेषण-विशेष्यभाववैपरीत्यस्य सिद्धतया, प्रकारीभूतकर्त्रा उदकस्याऽभेदेनैवाऽन्वयात् क्व व्यभिचार इति वाच्यम् । 'नामजन्यप्रतीतिविशेष्ययोरेवाऽन्वयः, स चाऽभेदेनैवे'ति 'पदार्थः पदार्थेने'त्येतत्सिद्धो नियम इति नामजन्यप्रतीतिविशेष्ययोस्तथाऽन्वयनियमस्य व्यभिचार इत्याशयात् । 'पचती'त्यादौ तिङां द्योतकतया प्रत्ययाऽर्थप्राधान्यत्यागेऽप्यत्र तत्त्यागे मानाऽभाव' इत्यन्ये । 'प्राप्तावुदकस्य कर्त्तृतयाऽन्वयः, क्तस्य कर्मणि [३]लक्षणे'ति तु न युक्तम् । अन्य-पदाऽर्थस्य दुरुपपादत्वात् ।

एकार्थीभावेति । एवञ्च एकैवोपस्थितिः, व्युत्पत्तयश्च भिन्नोपस्थितिविषया इति न दोष इति भावः । एतेन 'राजपुरुष' इत्यादौ व्यभिचारः । राजपदार्थ-पुरुषपदाऽर्थयोः स्वस्वामिभावेनैवाऽन्वयात् । सम्बन्धिलक्षणयान्तु न मानमि'त्यपास्तम् । नापीति । 'घटश्चे'-त्यादौ समुच्चयस्य घटे भेदसम्बन्धेनाऽन्वयादिति भावः । द्योतकतेति । घटपदेनैव विशिष्ट-स्योपस्थितिरिति तत्राऽन्वयस्यैवाऽभाव [४]इति भावः । अत एवा'ऽनुभूयते' इत्यादौ सकर्मकत्वम् ।

---

१ 'बोधविशेष्यत्वम्' इति ख. पाठः ।

२ 'वागर्थयोरित्यत्र सङ्गतम्, संपृक्तौ इत्यस्यानन्वयाऽऽपत्तौ' इति ख. पाठः ।

३ 'लक्षणेति तु' इति मुद्रितेषु पाठः । लिखितेषु तुः नास्ति ।

४ 'इति भाव' इति क. नास्ति ।

**त्वादिति वाच्यम्। देवताऽर्थकतद्धितादौ दृष्टत्वादिति भावः। वचनं सङ्ख्येति। तथैव प्राचां व्यवहारात्।**

बृहच्छब्दरत्नः

समासे वाचकत्वपक्षे दोषो न। 'आमुष्यायणाऽमुष्यपुत्रिकाऽमुष्यकुलिके'ति-निर्देशात्पूर्वखण्डे उपसर्जनत्वेऽपि सर्वनामकार्यमिति तत्त्वम्। देवतेति। [1]इदञ्च

'आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आभिक्षापदसान्निध्यात्तस्यैव विषयाऽर्पणम्॥
केवलाद्देवतावाची तद्धितोऽग्नेः समुच्चरन्।
नाऽन्ययुक्ताऽग्निदैवत्यं प्रतिपादयितुं क्षमः॥
तद्धितेन, चतुर्थ्या वा, मन्त्रवर्णेन वा पुनः।
देवतासङ्गतिस्तत्र दुर्बलन्तु परं परम्॥'

—इत्यादि मीमांसकरीतिमनुसृत्योक्तम्। 'देवतात्वे शक्तिरि'तिवादिनां मतेऽपि धर्मिबोधनाऽर्थं लक्षणाया आवश्यकत्वेन प्रत्ययाऽर्थत्वमस्त्येव। आदिना प्रहरण-निवासादयो गृह्यन्ते। 'प्रदेये एव शक्तिः प्रत्ययस्य, प्रकृतेस्तु देवतायां लक्षणे'ति-मताऽन्तरमनुसृत्य 'देवतोपाधिकात्प्रथमान्तादस्येति षष्ठ्यर्थे प्रत्ययो भवती'त्यादि 'साऽस्य देवते'त्यादिसूत्रस्थाऽऽकरग्रन्था इति ध्येयम्। 'वस्तुतस्तु देवता प्रत्ययाऽर्थ' इति वादिनां मतेऽपि विशेष्यत्वाऽभावेन 'देवतोपाधिकात्प्रथमान्तादि'त्येवा-ऽर्थो युक्तः। स्पष्टञ्चेदं मतुप्सूत्रे हरदत्तग्रन्थे।

ननु 'कर्मणि द्वितीये'त्यादिप्रकरणं न स्वतन्त्रतया विधायकं, प्रकृतेरनु-पादानात्, [2]किन्तु 'स्वौजसमौडि'तिसूत्रविहिताऽर्थाऽऽकाङ्क्षितानां [3]व्यवस्थापकम्। तत्र च 'ङ्याप्प्रातिपदिकादि'त्यनुवृत्तसूत्रे प्रातिपदिकग्रहणे 'लिङ्गविशिष्ट'परिभाषा-प्रवृत्त्या तस्याऽपि प्रकृतित्वम्। एवञ्च 'प्रातिपदिकाऽर्थे प्रथमे'तिवाक्ये लिङ्ग-विशिष्टपरिभाषायाः सम्बन्धोऽस्ति, उत न?। नाऽऽद्यः। उक्तरीत्या वैयर्थ्यात्। 'यस्मात्स्वादिविधिस्तस्याऽर्थे' इत्यर्थस्य फलितत्वेन प्रातिपदिकग्रहणस्य[4]वैयर्थ्या-

लघुशब्दरत्नः

'निपाताऽतिरिक्तत्वेन विशेषणाददोष' इत्यन्ये। देवतार्थकेति। 'आमिक्षां देवतायुक्तां वदत्येवैष तद्धित' इति मीमांसकमते' इति शेषः। एकार्थीभाववादिनामस्माकन्तु विशिष्टो-पस्थित्या तत्राऽपीदृशाऽन्वयो दुर्लभ एव। 'द्रोणो व्रीहिमानये'त्यादि त्वनभिधानान्न। 'सर्पिः

[1] 'इदम्' इति ख. पाठः।
[2] 'किन्तु' इति क्वचिन्नास्ति।
[3] 'व्यवस्थापनम्' इति ख. पाठः।
[4] 'वैयर्थ्यापत्तेश्च' इति ख. पाठः।

इह सूत्रे 'अर्थे, लिङ्गे च प्रथमे'त्येतावदेव सुवचम् । इतरत्सर्वं त्यक्तुं शक्यम् । तथा हि–'अर्थे प्रथमे'त्युक्ते कस्याऽर्थे इत्याकाङ्क्षायां यस्मात्स्वादिविधिस्तस्येति लभ्यते एव । स्वादयश्च प्रातिपदिकात्, लिङ्गप्रत्ययविशिष्टाच्च विधीयन्ते । तदर्थत्वञ्च ततो नियतोपस्थितिकत्वमेव । एवञ्च 'मृडानी'[1]हिमानी'त्यादौ पुंयोग-महत्त्वादेरपि ङयन्तान्नियतभानेन प्रथमा सिद्ध्यतीत्यपरमनुकूलम् । यथान्यासे तु सा न स्यात् । यदि तु 'अर्थ'शब्दो वृत्तिविषयपरः,

बृहच्छब्दरत्नः

ऽऽपत्तिश्चेति ध्वनयन्नाह—अर्थे लिङ्गे चेति । अन्त्ये दोषमाह—सा न स्यादिति । यदि त्विति । अयम्भावः—पूर्वलक्षणेऽर्थशब्दो नियतोपस्थितिकत्वपरो वक्तुमशक्यः । 'लवणः सूपः' 'लवणं शाकमि'त्यादौ दोषाऽऽपत्तेः । लक्षणादिना सर्वशब्दानां सर्वत्र प्रवृत्तेः सम्भवाच्च । अर्थभेदाच्छब्दभेदेन दोषाऽभावाऽङ्गीकारे तु 'तट' इत्यत्र स्त्री-नपुंसकयोः, 'तटी'त्यत्र पुं-नपुंसकयोः, 'तटमि'त्यत्र स्त्री-पुंसयोस्तटशब्दा-

लघुशब्दरत्नः

[2]कुडवमात्रमि'त्यादौ षत्वविकल्पोऽपि व्यवस्थितविभाषया नेति दिक् । वस्तुतः 'तिङसमानाधिकरणे प्रथमे'ति लक्षणैकवाक्यतया 'परिमाणे'त्यस्य 'परिमाणे वर्त्तमानात्प्रातिपदिकादि'-त्येवाऽर्थः । न च प्रातिपदिकाऽर्थत्वात्सिद्धिः । प्रवृत्तिनिमित्त-तदाश्रयद्रव्ययोरेवाऽत्र प्रातिपदिकाऽर्थपदेन ग्रहणात् । द्रोणादिपदानाञ्च द्रोणत्वाद्येव प्रवृत्तिनिमित्तम् । परिमाणत्वेन परिमाणन्तु लिङ्गवत् विशेष्याऽन्वय्येव । 'द्रोणः परिमाणमि'ति तु 'द्वौ ब्राह्मणावि'त्यादिवदुपपन्नम् । द्रोणत्वादि चेयत्ताविशेषाऽवच्छिन्न-पलादिपरिच्छिन्न-धान्यादि-परिच्छेदकत्वसमानाधिकरणो धर्मः । 'द्रोणः' 'खारी' 'आढकमि'त्येव तदुदाहरणं भाष्योक्तं साधु । 'द्रोणो व्रीहिरि'ति तु 'सिंहो माणवक' इतिवल्लक्षणया साधु । लक्षणा च शक्यताऽवच्छेदकाऽऽरोप एव । एवञ्च 'प्रातिपदिकाऽर्थे' इत्यस्य अलिङ्गा, लिङ्गप्रवृत्तिनिमित्तकाश्चोदाहरणम् । अन्ये सर्वे लिङ्गाद्याधिक्यस्य । परिमाणग्रहणं परिच्छेदकमात्रोपलक्षणम् । तद् ध्वनयन्नाह—एतावदेव सुवचमिति । नियतोपरिस्थितिकत्वमिति । तद्वच्च प्रवृत्तिनिमित्त-तदाश्रयरूपम् । परिमाणञ्च प्रातिपदिकांऽशे । लिङ्ग-प्रत्ययविशिष्टांऽशे तु [3]लिङ्गं, महत्त्वादिकञ्च ततो नियतोपस्थितिकमिति, तत्सर्वं तदर्थत्वेन गृह्यते । लिङ्गोदाहरणं–तटस्तटमिति बोद्धयम् । अकारान्तप्रातिपदिकात्कस्याऽपि नियमेनाऽनुपस्थितेस्तस्य तदर्थत्वाऽभावात् । सा न स्यादिति । न च लिङ्गविशिष्टपरिभाषया सिद्धिः । यथान्यासे 'प्रातिपदिकार्थ'शब्देन प्रवृत्तिनिमित्त-

[1] 'हिमानी' इति मुद्रितेषु त्रुटितम् ।

[2] 'सर्पिः कुडवमि'ति घ. शोधितः पाठः । 'कुडवमात्रमि'ति पाठेऽपि तत्र मात्रच्प्रत्ययो नास्ति, किन्तु अवधारणेऽयं मात्रशब्द' इति भावप्रकाशः ।

[3] 'लिङ्गमहत्त्वादिकञ्च' इति मुद्रितेषु पाठः ।

**वृत्तिस्तु शक्तिर्लक्षणा च, गौणी तु लक्षणाऽन्तर्भूता, पृथग्वाऽस्तु, 'त्रिकञ्च प्रातिपदिकाऽर्थ' इत्याश्रीयते, तदा 'लिङ्गे'त्यपि माऽस्तु । लक्ष्याणां विचित्रत्वेऽपि न क्षतिः । नियमांऽशत्यागात् । तथा च 'अर्थे प्रथमे'त्येव सारम् ।**

---

बृहच्छब्दरत्नः

न्नियततया भानाऽभावेऽपि [1]तदादिशब्दानां भेदाऽङ्गीकारात्तत्तच्छब्दैस्तेषां नियतोपस्थितिकत्वमस्त्येवेति लिङ्गपदवैयर्थ्यं दुष्परिहरम् । एवञ्च वृत्तिविषय एवाऽर्थशब्दः फलितः । त्रिकञ्चेति[2] । इदञ्चैक-द्विकपक्षनिराकरणपरम् । मास्त्विवति । अत एव द्वितीयादौ लिङ्गबोधः । हुंफडादिषु निरर्थकेषु शब्द एव वृत्तिविषयः । 'निपातस्याऽनर्थकस्ये'तिप्रातिपदिकसञ्ज्ञाविधानाद्वा । अत एव 'सुब्विध्युपात्तोद्देश्यतुल्या[3] प्रथमे'त्यर्थः । तदेव ध्वनयन्नाह—लक्ष्याणां विचित्रत्वेपीति । क्वचित्प्रातिपदिकं, क्वचिल्लिङ्गप्रत्ययसहितं; क्वचिच्छक्तं, क्वचिल्लाक्षणिकं, क्वचिद्गौणं, क्वचिन्निरर्थकमेव । अत एवाऽर्थग्रहणं चरिताऽर्थम् । स्वादिसूत्रेणैव प्रथमायाः सिद्धत्वेन पुनः 'प्रथमे'त्युक्त्या 'अनिर्दिष्टाऽर्थाः प्रत्ययाः प्रकृत्यर्थे भवन्ती'तिन्यायेन 'प्रकृत्यर्थे प्रथमे'त्यस्य फलितत्वेन नियमद्वयस्य फलितत्वात् । तदेव ध्वनयन्नाह—अर्थे प्रथमेत्येव सारमिति ।

---

लघुशब्दरत्नः

तदाश्रययोरेव ग्रहणेन, लिङ्गग्रहणेन तन्मात्राऽऽधिक्यस्यैव ग्रहणेन, 'हिमानी'त्यादौ महत्त्वस्याऽऽधिक्यसत्त्वेन तदसिद्धिरित्याशयात् । द्रोणादिशब्देभ्यः परिमाणस्याऽपि नियतोपस्थित्या, तदपि तदर्थ एवेति, तेभ्यः प्रथमासिद्धिः । परिमाणग्रहणस्य मूलोक्ताऽर्थकत्वे तु तथाबोधाऽर्थं तस्याऽऽवश्यकत्वेन 'एतावदेव सुवचमि'त्युक्तेरसङ्गतिः स्पष्टैव ।

लक्षणा चेति । [4]इदं स्वरूपकथनं, न तु प्रकृतोपयोगि । 'पदस्य स्वार्थे एवाऽन्वाख्यातस्य पदाऽन्तरसमभिव्याहारे लक्षणे'ति सिद्धान्तात् । लक्षणाऽन्तर्भूतेति । सादृश्यसम्बन्धमूलकलक्षणाया एव गौणीत्वमिति भावः । पृथग्वेति । मीमांसकरीत्येदम् । त्रिकम् । स्वार्थ-द्रव्य-लिङ्गानि । इत्याश्रीयते इति । अनेन सूत्रारम्भेऽस्याऽनाश्रयणं ध्वनितम् । एवञ्च लिङ्गस्याऽपि 'स्वमोर्नपुंसकात् (७।१।२३) इत्यादिशास्त्रबलेन प्रातिपदिकाऽर्थत्वात्तत्राऽपि सिद्धिरिति भावः । विचित्रत्वेऽपीति । क्वचिल्लिङ्गस्य नियमेन भानं, क्वचिदनियमेनेत्येवं विचित्रत्वेऽपीत्यर्थः । तदाह—नियमांशेति । 'नियतोपस्थितिक' इत्यत्र नियमांऽशेत्यर्थः । इत्येव सारमिति । प्रातिपदिकग्रहणस्य सूत्रोपक्रमे सङ्ख्याविद्धचेकवाक्यतया, अव्ययेभ्योऽप्राप्त्या, तेभ्यो विधानाऽर्थत्वं वदता 'तद्धितश्चाऽसर्वविभक्तिः (१।१।३८) बहुषु (१।४।२१) इत्यादिसूत्रेषु अव्ययेभ्यः प्रकाराऽन्तरेण विभक्तिं साधयता प्रातिपदिकग्रहणं प्रत्याख्यातं

---

[1] 'तदादि' इति क. ख. पाठः ।
[2] 'त्रिकंचेति । द्विकपक्षनिराकरण' इति ख. पाठः ।
[3] 'उपात्तादेश्यतुल्या' इति ख. पाठः ।
[4] 'इदञ्च' इति मुद्रितेषु पाठः । चकारः क. ख. घ. नास्त्येव ।

**'द्रोणो व्रीहिरि'त्यपि द्रोणशब्दस्य तत्परिमिते उपचारात्सिद्धं, 'गौर्वाहीक' इतिवत्। 'एकः' 'द्वावि'त्याद्यपि 'न केवला प्रकृतिः प्रयोक्तव्ये'ति निषेधादेव**

---

### बृहच्छब्दरत्न

द्रोणशब्दस्येति। अत एवोन्मानेऽपि सिद्धम्। न केवलेति। 'परश्चे'तिसूत्रं [1]तत्परत्वसम्पादनाऽर्थम्। देशाऽऽकाङ्क्षायां सूत्रे प्रकृत्यग्रे पठितत्वेन, 'आगन्तूनामन्ते निवेश' इति न्यायेन च परदेशे एवोचितत्वात्। अष्टदोषदुष्टविकल्पस्याऽयुक्तत्वेन परशब्दाऽध्याहारस्यैव युक्तत्वात्। एतेन 'पूर्व'शब्दस्यैवाऽध्याहार' इत्यपास्तम्। बहुज्विधौ पुरस्ताद्ग्रहणस्य वैयर्थ्याऽऽपत्तेश्च। अङ्गसञ्ज्ञादिसूत्रे 'प्रत्यये' इत्यादिसप्तमीबलेन परत्वे एव तात्पर्योन्नयनाच्च। न च 'प्रत्ययः पर एव, न केवल' इति नियमाऽर्थमस्त्विति वाच्यम्। प्रकृतिविशेषोद्देशेनैव प्रत्ययस्य साधुत्वविधानेन केवलस्याऽसाधुत्वादेव [2]तदुपपत्तेः। तस्मात् 'प्रत्ययः परो भवत्येवे'ति नियमाऽर्थम्। तत्राऽवध्याकाङ्क्षायामुपस्थितत्वाद्वक्ष्यमाणप्रकृतीनामेवाऽन्वयो बोध्यः। 'तार-तम्यमि'त्यत्रोत्कर्षाऽपकर्षे 'तर''तम' इत्यव्ययं बोध्यम्। अत एव 'एकं पश्य' 'एकेन कृतमि'त्यादौ द्वितीया-तृतीयादयो भवन्ति। 'एकत्वादीनामुक्तत्वेऽपि कर्मत्वादीनामनुक्तत्वाद् द्वितीयादिकमि'तिचेत्तर्हि 'प्रातिपदिकाऽर्थस्याऽनुक्तत्वात् प्रथमे'ति मयाऽपि सुवचम्। प्रातिपदिकोक्तत्वन्तु न व्यावर्त्तकम्। प्रथमाविधायकस्य निर्विषयताऽऽपत्तेः। अत एव 'पञ्चकं प्रातिपदिकाऽर्थ' इतिपक्षे द्वितीयादीनां सुलभता। 'विभक्तिरहितप्रातिपदिकेन कर्मत्वाद्यर्थो निरूपयितुमशक्य' इति चेत्तर्हि 'स्वार्थः प्रथमां विना वक्तुमशक्य' इति प्रकृतेऽपि समानम्। 'उक्तार्थानामप्रयोग' इति न्यायस्त्वसार्वत्रिकः[3]। एकवचनादिविधावनभिहिताऽधिकारस्तु न। [4]भिन्न-भिन्नदेशे पाठसामर्थ्यात् 'कर्मणि द्वितीया' 'द्व्येकयोरि'त्यादिनिरपेक्षतया 'स्वौजसमौडि'तिवाक्याऽर्थोत्पत्तौ बाधकाऽभावेनैकवचनमित्यादिभाविसञ्ज्ञाविज्ञाने मानाऽभावेन च केवलस्य लक्ष्यसंस्कारकत्वं सुलभ-

---

### लघुच्छब्दरत्नः

**भाष्यकृता। स्वादीनां प्रातिपदिकादेव विधानेन 'अर्थे प्रथमे' त्युक्तावपि 'कस्याऽर्थे' इत्याकाङ्क्षायां यस्मात्स्वादिविधिस्तदर्थे इत्यस्य लाभ इति भावः। उपचारात्—द्रोणत्वाऽऽरोपात्। इतिवदिति। अत्र यथा वाहीके गोत्वाऽऽरोपस्तद्वत्। वचनग्रहणप्रत्याख्यानोपायमाह—एक इत्यादि। एतत् अनभिहिते (२।३।१) इति सूत्रे भाष्ये स्पष्टम्। न्याय्यत्वादिति। इदञ्च यथान्यासेऽप्यावश्यकम्। अन्यथा एकादिषु वचनविपर्ययो दुर्वारः स्यादिति भावः।**

---

[1] 'तपरत्व' इति क. ख. पाठः।

[2] 'तदनुपपत्तेः' इति ख. पाठः।

[3] 'असार्वत्रिक इति' इति क. पाठः।

[4] 'किञ्च भिन्नदेश' इति वा पाठः।

सिद्धम् । अनन्विताऽर्थकप्रयोगाऽपेक्षयाऽनुवादकमात्रप्रयोगस्य न्याय्यत्वात् । एवं 'मात्र'ग्रहणमपि व्यर्थम् । सम्बोधने च (२।३।४७) इति ज्ञापकेन

बृहच्छब्दरत्नः

मेव । न चैवं कर्मादौ तृतीयाद्यापत्तिरिति वाच्यम् । 'कर्मणि द्वितीये'त्याद्यारम्भसामर्थ्येन तद्बाधात् । 'एकत्वे एवैकवचनमि'त्यादि-प्रत्ययनियम-पक्षेऽपि नियमस्य सजातीयाऽऽश्रयणेन सङ्ख्याऽन्तरे एकवचनादीनां व्यावर्त्तनेऽपि, सङ्ख्या-रहिते एकवचनादीनामव्यावर्त्तनात् । न हि एको द्वावित्यादावेकत्वादिप्रतीतिः सुपैव, न प्रकृत्येति नियन्तुं शक्यम् । सामान्यतः प्रत्ययनियमाऽङ्गीकारेऽपि उपस्थितानामर्थानामत्यन्तत्यागे मानाऽभावेन, तेषां सम्भवे एव नियमप्रवृत्तिः । न ह्येकशब्दे द्वित्व-बहुत्वयोर्द्विशब्दे एक-बहुत्वयोर्बहुशब्दे एकत्व-द्वित्वयोः सम्भवोऽस्ति । एवञ्च प्रथमप्राप्तस्य 'स्वौजसमौडि'तिसूत्रस्य नाऽत्यन्तबाध इत्यपरमनुकूलम् । अत एवाऽव्ययेभ्यः 'पचतिकल्पमि'त्यादौ सुबुत्पत्तिः सिद्धा । ध्वनितञ्चेदम् 'अनभिहिते' इति सूत्रे भाष्ये । एतेन 'गवित्ययमाहे'त्यादौ 'न केवला प्रकृतिः प्रयोक्तव्ये'तिनिषेधेन सुबुत्पत्तिदुर्वारा । न चोक्तवचनं प्रकृतिप्रत्ययाऽर्थोभयप्रतिपादने एव प्रवर्त्तते इति वाच्यम् । 'केवलप्रत्ययाऽर्थप्रतिपादने, केवलप्रकृत्यर्थप्रतिपादने च प्रकृतिप्रत्यययोः प्रयोगो ने'त्यर्थपरभाष्य-कैयट-हरदत्तादिग्रन्थविरोधाऽऽपत्तेः । मूलभूतस्य 'प्रत्ययः परो भवत्येवे'त्यर्थप्रतिपादक'परश्चे'-त्यस्य सङ्कोचकल्पने मानाऽभावाच्चे'ति निरस्तम् । [1]प्रातिपदिकत्वाऽभावात् 'स्वौजसमौडि'तिसूत्रस्याऽप्रवृत्तेः । [2]अत एवोक्तवचनाऽङ्गीकारेऽपि न दोषः । प्रकृतित्वाऽभावात् । तत्त्वन्तु प्रत्ययविधावुद्देश्यताऽवच्छेदकाऽऽक्रान्तत्वम् । अयञ्च न्यायः शास्त्राऽबोधिताऽन्यतरप्रयोगविषये एव । अत एव [3]'लिट्' 'व्यतिसे'-इत्यादौ न दोषः । तदेतत्सकलमभिसन्धायाऽऽह—अनन्वितेति ।

इदञ्च यथाश्रुतेऽप्यावश्यकम् । व्यर्थमिति । 'पञ्चकं प्रातिपदिकाऽर्थ' इतिपक्षे कर्मादीनामपि वृत्तिविषयत्वेन तद्व्यावृत्तेर्मात्रग्रहणेन कर्त्तुमशक्यत्व-

लघुशब्दरत्नः

ज्ञापकेनेति । ननु 'प्रातिपदिकाऽर्थे एवे'ति नियमात्तदाधिक्येऽप्राप्तौ किं ज्ञापकेनेति चेन्न । यथा 'कर्मण्येव द्वितीये'ति नियमेन कर्मत्वाऽभावसमानाधिकरणाऽर्थाऽन्तरस्यैव व्यावृत्तिर्न तु तत्समानाधिकरणाऽर्थान्तरस्य । अत एव 'गां दोग्धि पय' इत्यादावपादानत्वादिशक्तिबोधेऽपि द्वितीया भवति, तथा प्रातिपदिकाऽर्थाऽभावसमानाधिकरणाऽर्थाऽन्तरस्यैव व्यावृत्तिः स्यान्न तु

[1] 'प्रातिपदिकाऽर्थाऽभावात्' इति ख. पाठः ।

[2] 'अत एव वचनाङ्गीकारेऽपि' इति ख. पाठः ।

[3] 'लिडि'त्यत्र केवला प्रकृतिरेव, न प्रत्ययः । 'व्यतिसे' इत्यत्र केवलः 'से' इति प्रत्यय एव, न प्रकृतिरिति तत्त्वम् ।

कर्माद्याधिक्ये प्रथमाया अप्रवृत्तेः ।

यत्तु [1]प्राचोक्तम्—'प्रातिपदिकाऽर्थः सत्ते'ति । यच्च व्याख्यातं—'योऽर्थः सन्नेव केवलं भासते, न जात्यादिरूपो, न लिङ्ग-सङ्ख्या-कारक-योगी, स विवक्षितो, [2]यथाऽव्ययाऽर्थः । अव्ययाऽर्थो हि केवलमस्तीति शक्यते वक्तुं, न पुनरीदृशस्तादृश इती'ति । [3]तन्न । 'उच्चैर्नीचैरि'त्यादिशब्दानां

बृहच्छब्दरत्नः

मिति भावः । अप्रवृत्तेरिति । ननु 'वीरः पुरुष' इत्यादावभेदस्याऽपि भानेन प्रातिपदिकाऽर्थमात्रत्वाऽभावात् प्रथमा न स्यादिति चेदत्राऽऽहुः—संसर्गस्य वाक्याऽर्थत्वेन बहिरङ्गत्वात्स्वाऽर्थमात्रनिमित्तकप्रथमप्रवृत्तसंस्कारबाधाऽनुपपत्तेः । न चैवं 'घटं पश्यति' 'राज्ञः पुरुष' इत्यादौ दोष इति वाच्यम् । घटस्य कर्मत्वेन, राज्ञ इतरविशेषणत्वेनैव विवक्षितत्वात् पदसंस्कारवेलायामपि तन्निमित्तविभक्तेः सूपपादत्वात् । अनेकपदनिमित्तविधौ पदसंस्कारपक्षाऽभावस्य वक्ष्यमाणत्वाच्च । सर्वत्रैव त्वदुक्तरीत्या पूर्वं प्रथमायाः प्रवृत्तौ, प्रकरणस्य निर्विषयताऽऽपत्तेश्च । अपि च वचनसामर्थ्यात्प्रथमोत्पत्तिः । न 'च घटोऽस्ती'त्यादिरवकाशः । तत्राऽपि घटाऽऽख्याताऽर्थयोरभेदाऽन्वयस्य सत्त्वात् । 'प्रातिपदिकाऽर्थे'तिसूत्रस्थ'मात्र'ग्रहणेन, 'सम्बोधने चे'तिज्ञापकेन च प्रकरणात् ज्ञापकस्य विशेषाऽपेक्षत्वाच्च विभक्तिवाच्याऽऽधिक्ये एव प्रथमाया वारणाच्च ।

लघुशब्दरत्नः

तत्सत्त्वे एव कर्मत्वादेरिति भावः । न च प्रातिपदिकाऽर्थाऽभावसमानाधिकरणाऽर्थाऽन्तरस्याऽप्रसिद्ध्या नियमव्यावर्त्त्याऽप्रसिद्धिरिति, नियमसामर्थ्यात्तत्समानाधिकरणाऽर्थान्तरस्याऽपि तेन व्यावृत्तिरिति वाच्यम् । 'प्रातिपदिकाऽर्थे एव प्रथमा, न तु निरर्थके' इति तद्व्यावृत्तेरेव फलत्वात् । तत्सत्त्वे तु 'कर्मादियोग्याऽर्थकप्रातिपदिकाच्चेत्तद्रहितस्वार्थे' इत्यर्थान्न दोषः । सङ्ख्याऽऽधिक्ये तु भवत्येव । द्व्येकयोः (१।४।२२) इत्यादिभिरस्यैकवाक्यत्वात् । वार्त्तिककृता तु अर्थनियममाश्रित्य मात्रग्रहणं, सम्बोधने च (२।३।४७) इति सूत्रं, लिङ्गादिग्रहणञ्च प्रत्याख्यातमिति दिक् ।

जात्यादिरूप इति । 'जात्यादिना रूप्यते' इति व्युत्पत्त्या जात्यादिधर्मविशिष्ट इत्यर्थः । ननूच्चैरादीनामपि आधारतात्वविशिष्टा आधारताशक्तिर्वाच्येति तदप्रसिद्धिरित्यतस्तद्व्याचष्टे—न लिङ्गेति । ईदृशस्तादृश इति । अमुकलिङ्गादिरित्यर्थः । ननु 'सन्नि'त्याकारकप्रतीत्य-

[1] 'प्राचोक्तम्' इति ङ. नास्ति ।

[2] 'यथाऽव्ययाऽर्थो हि' इति मुद्रितेषु पाठः ।

[3] 'चेन्न' इति मुद्रितेषु पाठः ।

'सन्नि'त्याकारकप्रतीतिजनकत्वस्य सर्वतन्त्रविरुद्धत्वात्। अस्त्यादिसामानाधिकरण्यस्याऽपि असत्त्वाऽर्थकेषु दुर्लभत्वात्। 'न लिङ्ग-सङ्ख्या-कारक-योगी'ति त्वदुक्तिविरोधाच्च। पदाऽन्तरोपस्थापितस्य अस्तिसमानाधिकरण्यमस्तीति चेत्। न। तस्य अव्यावर्त्तकत्वात्। 'न पुनरि'त्यादिवाक्यशेषविरोधाच्च। 'कृष्णः' 'श्रीरि'त्यादावव्याप्तेश्च। न च लिङ्गग्रहणात्तत्सिद्धिः। 'मात्र'शब्देनाऽधिकव्यवच्छेदात्। यदपि प्राचा व्याख्यातं—'यत्राऽर्थाऽन्तराऽनपेक्षया शब्दप्रवृत्तिः, स सर्वः प्रातिपदिकाऽर्थः। 'शब्दप्रवृत्तिनिमित्तमि'ति यावत्। यथा उच्चैर्नीचैरिति। 'अलिङ्गसङ्ख्यावेतौ केवलं जात्यादि निरपेक्षं स्वार्थमाहतु-

---

**बृहच्छब्दरत्नः**

न चाऽभेदोऽपि 'राहोः शिर' इत्यादौ षष्ठ्यर्थोऽस्त्येवेति वाच्यम्। औपाधिकभेदमादाय तदुपपादनस्याऽऽद्यन्तवदेकस्मिन्नित्यादावाकरसिद्धत्वादित्यास्तान्तावत्।

दुर्लभत्वादिति। नन्वेवं 'तिङ्समानाधिकरणे प्रथमेत्येतल्लक्षणं करिष्यते' इति भाष्य-वार्त्तिकविरोध इति चेन्न। युक्तिविरोधेन प्रौढिवादपरत्वात्। तिङ्विधेः, 'प्रथमैवे'तिनियमस्य च लकाराऽन्तरे सावकाशत्वेन 'देवदत्त पच् लडि'ति स्थिते शतृ-शानचोर्दुर्वारताऽऽपत्तेश्च। तिङ्सामानाधिकरण्याऽभावात् 'प्रथमैवे'तिनियमाऽप्रवृत्त्या 'कर्मणि द्वितीयैवे'त्याद्यर्थनियमाऽऽश्रयणात्सर्वेषां स्वादीनां दुर्वारत्वेन प्रथमाभिन्नद्वितीयादीनां सामानाधिकरण्यस्य सत्त्वात्। तथा च देवदत्तः पचतीतिवाक्यविलोपाऽऽपत्तिः। न च 'कर्मण्येव द्वितीये'त्यादिविभक्तिनियमाऽऽश्रयणाद् द्वितीयादीनामभावान्न दोष इति वाच्यम्। विभक्त्यन्तर-[1]नियमानामप्रवृत्तौ [2]सम्बन्धाऽनपायेन षष्ठ्या दुर्वारत्वात्। एतेन 'प्रथमासामानाधिकरण्यस्याऽपि सत्त्वेन प्रसज्यप्रतिषेधाऽऽश्रयणेन निषेधो भविष्यती'ति परास्तम्। वाक्यभेदाऽसमर्थसमासाऽऽपत्त्या गौरवाऽऽपत्तेश्च।

जात्यादीति। 'निरपेक्षं स्वार्थं जात्यादिरूपमि'त्यन्वयः। 'जात्यादी'ति

---

**लघुशब्दरत्नः**

भावेऽपि अस्तिसामानाधिकरण्यं स्यादत आह—अस्त्यादीति। विरोधाच्चेति। 'सन्नि'त्यनेन सामानाधिकरण्ये कारकत्वस्य दुर्वारत्वादिति भावः। वाक्यशेषविरोधाच्चेति। तत्सत्त्वे लिङ्गादेरपि सम्भवेन तद्विरोध इति भावः। अव्याप्तेश्चेति। ततः 'सन्नि'त्याकारकप्रतीतेरभावादिति भावः। अधिकव्यवच्छेदादिति। कृष्णत्वादेः सत्ता-लिङ्गाभ्यामधिकस्य भानादिति भावः। अलिङ्गेति। 'अलिङ्गसङ्ख्यावेतौ केवलम्=अनाश्रितं,

---

[1] 'नियमानां प्रवृत्तौ' इति क. पाठः।

[2] 'षत्वाऽनपायेन' इति क. पाठः। 'सम्बन्धाऽनपायेन' इत्यस्फुटः ख. पाठः।

रि'ति। तदपि न। [1]प्रवृत्तिनिमित्तं हि प्रकारीभूय भासते, तथा च तन्मात्रबोघोऽसम्भवी। यदि सोऽपीष्टस्तर्हि घटादिशब्देभ्योऽपि स्यादिति सङ्ख्या-कारकाद्यनन्वय एव स्यात्।

यदपि 'द्रोणपरिमिते व्रीह्यादौ द्रोणशब्दः 'सोऽयमि'त्यभिसम्बन्धात्प्रवर्त्तते, तत्र गौणमुख्यन्यायान्न प्राप्नोतीति परिमाणग्रहणमि'ति। तन्न। 'पदकार्येष्वयं न्यायो, न प्रातिपदिककार्येष्वि'ति सिद्धान्तात्। अन्यथा 'सिंहो माणवक' इत्याद्यसिद्धिप्रसङ्गाच्च।

यदप्याहुः—'द्रोणादयः शब्दा लौहं, दारुमयं वा परिमाणमेव न व्यभिचरन्ति, परिमेयन्तु व्यभिचरन्त्येव, अतस्तस्य प्रातिपदिकाऽर्थत्वाऽभावादप्राप्ते परिमाणग्रहणमि'ति। तदपि न। गौण-लाक्षणिकेषु 'सिंहो माणवकः' 'मञ्चाः क्रोशन्ती'त्यादिष्वव्याप्त्यापत्तेः। तत्र विशेष्यस्य माणवकादेर्भेदेऽपि,

---

**बृहच्छब्दरत्नः**

सामान्ये नपुंसकम्। यद्वा 'जात्यादि-निरपेक्षमि'ति कर्मधारयः। तत्र निरपेक्षत्वञ्च [2]विशेष्येणेति बोध्यम्। यद्वा 'जात्यादिभिर्निरपेक्षमि'ति तृतीयासमासः। प्रकारीभूयेति। प्रसिद्धं चेदं त्व-तल्विधायकसूत्रे भाष्ये। असम्भवीति। अत एव 'प्रवृत्तिनिमित्तमिती'ति भवदुक्तिः सङ्गच्छते। व्यक्तिमात्रबोधोऽपि सर्वतन्त्रविरुद्धः। एकस्मिन्नाम्रे 'आम्रास्तिष्ठन्ती'ति जातिमात्रे प्रयोगः। अत एव 'जात्याख्यायामि'ति सूत्रं सङ्गच्छते। एवं व्यक्तिमात्रप्रयोगात् 'प्रत्यर्थं शब्दनिवेश' इतिन्यायेनाऽनेकप्रयोगे प्राप्ते, एकशेषाऽऽरम्भ इति विभाव्यते, तर्हि भवदुक्तिर्भवतैव दूषितेत्यलम्। सिद्धान्तादिति। 'प्राचामि'ति शेषः। स्वमते तु विशिष्टरूपोपादाने एव गौणमुख्यन्याय इत्यौत्सूत्रे कौस्तुभे स्पष्टम्। न्यायाऽप्रवृत्तेरुभयथा तुल्य-

---

**लघुशब्दरत्नः**

निरपेक्षं=लिङ्गादिनिरपेक्षं, स्वार्थं जात्यादि आहतुरि'त्यन्वयः। असम्भवीति। प्रकारताया [3]विशेष्यतानिरूपितत्वात्। कारकादीति। आदिना लिङ्गम्।

सिद्धान्तादिति। ओत्सूत्रे कैयटे स्फुटमेतत्। इदमेव युक्तम्। विशिष्टरूपोपादानाऽभावादस्या अत्राऽप्रवृत्तेः। द्रोणादिशब्दानां लाक्षणिकत्वेऽपि, गौणत्वाऽभावाच्चेत्यपि बोध्यम्।

---

[1] 'प्रवृत्तिनिमित्तमिह प्रकारीभूय' इति मुद्रितेषु पाठः।

[2] 'विशेषणेनेति' इति क. ख. पाठः।

[3] 'विशेष्यनिरूपितत्वात्' इति लिखिताऽऽदर्शेषु पाठः। स च 'तन्निष्ठविशेष्यतानिरूपितत्वादित्यर्थं' इति भावप्रकाशे व्याख्यातः।

'सिंहसदृश' इत्यर्थो गौण्यां नियतोपस्थितिक एवेति यदि, तर्हि व्रीह्यादेर्भेदेऽपि द्रोणपरिमितो नियतोपस्थितिक[1] एवेति तुल्यम् ।

**सम्बोधने च (२।३।४७)** । मात्रग्रहणात्सम्बोधनाऽऽधिक्ये न प्राप्नोतीत्यारम्भः । इह 'सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं, क्रियां प्रति विशेषण-

बृहच्छब्दरत्नः

त्वेऽपि[2] पूर्वाऽपरविरोधप्रदर्शनाऽर्थं तन्मताऽनुवादः । तुल्यमिति । अत एव 'द्रोणं व्रीहिमानये'त्यादौ द्वितीयादिकं सिद्ध्यति । ननु लक्षणया अभेदेन द्रोणपरिमित-प्रकारक-व्रीहिविशेष्यकबोधोपपादनेन प्रयोगसाधनेऽपि, परिच्छेद्यत्वसम्बन्धेन द्रोण-परिमाणप्रकारकव्रीहिविशेष्यकबोधनाऽर्थं[3] परिमाणग्रहणमावश्यकम् । 'परिमाणे' इति सप्तम्या वाच्यत्वबोधनात् । किञ्च 'सर्पिः कुडवमि'त्यादौ समानाधिकरण-मसमर्थवद्भवती'ति सिद्धान्तात् 'इसुसोः सामर्थ्ये' इति षत्वं दुर्लभमि'ति । अत्रेदं प्रतिभाति-परिमाणग्रहणं लिङ्गादिसाहचर्येण न्यायप्राप्ताऽर्थाऽनुवादकत्वेनैव सूत्र-कारस्याऽभिप्रेतम् । अत एव 'अभिहिते प्रथमेत्येतल्लक्षणं करिष्यते' इति वार्त्तिक-कारोक्तिः सङ्गच्छते । ध्वनितञ्चेदमुक्तलक्षणे 'प्रासादे आस्ते' इत्यादौ प्रथमाऽऽपत्ति-रूपदूषणाऽन्तरोपन्यासेनोक्तदूषणाऽनुपन्यासेन च भाष्यकारैः । एतेन 'द्रोणशब्दात् परिमाणे प्रथमायां, 'व्रीहि'शब्दात्कर्मत्वेन द्वितीयायां 'द्रोणो व्रीहिमानये'तिप्रयोगो-पपत्तिरि'त्यपास्तम् । उक्तरीत्या मुनित्रयाऽसंमतत्वात् । अत एव 'सम्भवत्यवहरति पचती'तिसूत्रं सङ्गच्छते । [4]षत्वन्तु नेष्टमेवेति पूर्वमेव निरूपितमित्यास्तान्तावत् ।

**सम्बोधने च** । सम्बोधनं ज्ञापनम् । तच्च वक्तुरिच्छाविशेषरूपम् । अत एव 'सम्बोध्यमानो देवदत्त' इति व्यवहारः । तज्ज्ञापनाऽर्थमेव सम्बोधन-विभक्त्यन्तपदघटितवाक्यप्रयोगः । तत्फलं प्रवृत्ति-निवृत्त्यादिकम् । तत्र समि-त्युपसर्गोपादानं सम्यक् बोधनाऽर्थम् । अत एव 'राजा भव युध्यस्व' 'इन्द्रशत्रुर्वर्द्ध-स्वे'त्यादौ न सम्बोधनविभक्तिः[5] । इदानीं राजत्वाऽऽकारेणाऽसिद्धत्वेन सम्बोधन-विभक्त्यन्तपदघटितवाक्यप्रयोगेऽपि तेनाऽबोधात् । अत एव 'राजन् युध्यस्व' 'राजा भव युध्यस्वे'त्यनयोर्व्यवस्थयैव प्रयोगः । इदमेवाऽभिसन्धाय सम्बोधन-विभक्तिरनुवाद्यविषयिणी, न विधेयविषयिणीति कैयट-हरदत्तादयः । हेशब्दादिकञ्च परश्रवणफलकाऽनेकवर्णोच्चारणसम्पादनाऽर्थं सम्बोधनतात्पर्यग्राहकम् । अचेतने

१ 'नियत एवेति तुल्यम्' इति तु लिखितादर्शेषु पाठः ।

२ 'तुल्ये तु' इति ख. पाठः ।

३ 'बोधार्थम्' इति क. पाठः ।

४ 'सर्पिः कुडवमि'त्यत्र 'इसुसोः सामर्थ्ये' इति षत्वं नेष्टमेवेति तत्रैव सूत्रे निरूपित-मिति न स दोषोऽत्रास्तीत्यर्थः ।

५ 'विभक्तिरिति' इति ख. पाठः ।

मि'ति सिद्धान्तः। उक्तश्च—

'सम्बोधनपदं यच्च तत् क्रियाया[1] विशेषणम्।
'व्रजानि देवदत्ते'ति निघातोऽत्र तथा सति' ॥ इति।

---

**बृहच्छब्दरत्नः**

तु गौणः प्रयोगः। सिद्धान्त इति। 'हे देवदत्त त्वं सुन्दर' इत्यादौ क्रियाऽऽकाङ्क्षाशान्तये 'असी'त्यध्याहारो भाष्यादिसंमतः। अत एव 'धिङ् मूर्खे'त्यत्र प्रथमा सिध्यति। अनुवाद्यस्य विधेयाऽऽकाङ्क्षत्वेन, विधेयस्य क्रियारूपत्वाच्च क्रियाऽन्वय एवोचितः। अत एवैकवाक्यत्वप्रयुक्तकार्यसिद्धिः। एतेन 'राम मां पाही'त्यादौ 'पाही'त्याख्याताऽर्थस्य[2] 'रामे'त्यनेनाऽभेदाऽन्वय' इत्यपास्तम्। विभक्तेः साधुत्वाऽर्थकता-भेदाऽर्थकतयोरन्यतराऽऽपत्तौ सम्बोधनप्रतीत्यनापत्तेश्च। 'हे राम देवो गच्छती'त्यादौ [3]प्रथमाऽर्थाऽनन्वयस्य क्लप्तत्वाच्च। प्रथमपुरुषोपपत्तेश्च[4]। एतेन 'प्रत्ययाऽर्थेन सह सम्बुद्ध्यन्तस्याऽभेदेनाऽनन्वये 'भो ब्राह्मणास्त्वं पचे'ति प्रयोगाऽऽपत्तिरि'ति निरस्तम्। किञ्च सर्वेषां ब्राह्मणानां कर्त्तृत्वं विवक्षितम्, उताऽन्यतमस्यैव, उत सम्बोध्यमानाऽतिरिक्तस्यैव?। नाऽऽद्यः। 'त्वमि'त्येकवचनाऽन्तेनोल्लेखस्याऽसङ्गतताऽऽपत्तेः। न द्वितीयः। अन्येषां ज्ञापने फलाऽभावात्। क्रियाऽन्तरप्रतिपादनतात्पर्येऽनिष्टाऽऽपत्तेः[5]। एतेन तृतीयोऽपि निरस्तः। 'हे देवदत्त अयं पचती'त्यादौ सम्बोध्यमानकर्त्तृत्वाऽऽपादनस्य मयाऽपि कर्त्तुं शक्यत्वात्। 'शब्दशक्तिस्वाभाव्यात्सम्बोध्याऽतिरिक्त एवेदंशब्दाऽर्थ' इति

---

**लघुशब्दरत्नः**

सम्बोधनपदमिति। अत्र पुञ्जराजः—'आख्यातं सविशेषणं वाक्यमि'ति वाक्यलक्षणम्। तत्राऽस्य क्रियाविशेषणत्वाऽभावे वाक्यत्वं न स्यादिति, 'समानवाक्ये' इति प्रकृत्य विहितो निघातो न स्यादिति भाव' इति। वस्तुतस्तु एवं सति 'नद्या यत्कूलं तत्र तिष्ठती'त्याद्यर्थके 'नद्यास्तिष्ठति कूले' इत्यादौ षष्ठ्यन्तस्य क्रियायां विशेषणत्वाऽभावात्तद्घटितस्य वाक्यत्वाऽनापत्तौ, समर्थसूत्रभाष्यसंमतनिघातस्य तत्राऽनापत्तिः। तस्मात् 'सविशेषणमि'त्यस्य 'साक्षात्, अन्यद्वारा वा यद्विशेषणं, तत्सहितमि'त्यर्थोऽवश्यं वाच्यः। एतेन 'यतः पदात्परस्य पदस्य निघातादयः क्रियन्ते, तयोः परस्पराऽन्वयनियम' इत्यपास्तम्[6]। वस्तुतो 'व्रजानि

---

[1] 'क्रियायाम्' इति मुद्रितेषु पाठः।

[2] 'आख्यातार्थरामेत्यनेन' इति क. ख. पाठः।

[3] 'प्रत्ययार्थाऽनन्वयस्य' इति क. ख. पाठः।

[4] 'प्रथमपुरुषोपपत्तेश्च' इति क. ख. पाठः।

[5] 'तात्पर्ये त्विष्टापत्तिः' इति क. पाठः।

[6] इतोऽग्रे—'एवञ्चैतन्नाऽस्य क्रियाऽन्वयसाधकम्। अनुभवश्चेत् प्राचां तथाऽस्ति, तर्ह्यस्त्विति दिक्' इति घ. कुण्डलितः पाठः।

एवञ्च 'राम मां पाही'ति वाक्यस्य रामसम्बन्धिसम्बोधनविषयो मत्कर्मकं रक्षणमर्थः। इति प्रथमा ॥

## (अथ द्वितीया)

**कर्त्तुरीप्सिततमं कर्म (१।४।४९)। कर्त्तुरिति—क्तस्य च वर्त्तमाने (२।३।६७) इति कर्त्तरि षष्ठी। आप्नोतेः सन्नन्तात् मतिबुद्धिपूजाऽर्थेभ्यश्च (३।२।१८८) इति वर्त्तमाने क्तः। मतिरिच्छा, न तु बुद्धिः। पुनर्बुद्धि-**

---

बृहच्छब्दरत्नः

चेत्तर्हि शब्दशक्तिस्वाभाव्याद्विनियोज्यमानाऽर्थस्यैवाऽभिमुखीकरणं, 'हे राम देवदत्तो गच्छती'त्यादावपि 'त्वया न गन्तव्यमि'त्यादितात्पर्यविषयीभूताऽर्थे विनियोज्य-मानत्वमस्त्येवे'ति मयाऽपि सुवचमित्यास्तान्तावत्।

इति प्रथमा।

'ईप्सित'शब्दोऽत्र क्रियापरो, नाऽभिप्रेतपरो रूढः। 'कर्त्तुरि'ति कर्त्तृकारका-ऽनन्वयाऽऽपत्तेः। 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियमि'तिकोशादा-वुक्तत्वेनाऽभ्युपसर्गरहितस्य तदर्थत्वे मानाऽभावाच्च। तत्साधकीभूतक्रियाया अभावे केवलपदार्थस्याऽभीष्टत्वाऽसम्भवेनाऽनन्वयाऽऽपत्तेश्च। एवं 'तथायुक्तं चाऽनीप्सितं' 'स्पृहेरीप्सितः' 'वारणाऽर्थानामीप्सित' इति सूत्रेषु बोध्यम्। स्पष्ट-श्चेदं भाष्य-कैयट-हरदत्तग्रन्थेषु[1]। तद् ध्वनयन्नाह—कर्त्तुरिति। षष्ठीति। ननु 'कर्त्तृकर्मणोः कृती'त्यस्येव 'क्तस्य चे'त्यस्याऽपि तद्धिताऽन्तयोगे प्रवृत्तिर्न स्यादिति चेन्न। मानाऽभावात्, गौरवाच्च, लक्षणसङ्कोचस्याऽयुक्तत्वाच्च, पूर्वोत्तरयोः 'कृती'त्यस्य चारितार्थ्येन सामर्थ्याऽभावाच्च। अत एव 'न लोके'तिनिषेधस्य तद्धिताऽन्ते प्रवृत्तिः। यत्तु 'कर्मत्वादीनां शब्दविशेषोपाधिकत्वेन, कारकाऽधिका-राच्च केनाऽऽप्तुमिष्टमित्यर्थाऽऽकाङ्क्षायां 'प्रकृतधातूपात्तव्यापारेणे'त्यर्थाल्लभ्यते। तथा च 'अनुग्वलंगामी'तिसूत्रस्थमनोरमोक्तरीत्या, सङ्कोचे मानाऽभावेन च विक्लित्यनुकूलव्यापारेण सम्पूर्णधात्वर्थेन यदीप्सितं तण्डुलादि, तदेव कर्मसञ्ज्ञं

---

लघुशब्दरत्नः

देवदत्ते'त्यादौ 'जानीही'ति शेषः। तत्र व्रजनस्य कर्मत्वेन, देवदत्तस्योद्देश्यत्वेनाऽन्वयान्न दोषः। प्राप्तकालेऽत्र लोडिति दिक्[2]।

इति प्रथमा।

आप्नोतेरित्यादि। अनेन 'व्याख्यानात् क्रियाशब्द एवाऽत्रेप्सितशब्दो, न त्वभि-

---

[1] 'ग्रन्थे' इति क. ख. पाठः।

[2] 'इति दिक्' इति घ. नास्ति। तत्र पूर्वत्रैव तत्सत्त्वात्।

**ग्रहणात्। एवञ्च 'कर्त्रा आप्तुमिष्यमाणं कर्म'त्यर्थः। कर्त्ता च धातूपात्त-व्यापाराऽऽश्रयः। स च 'केनाऽऽप्तुमिच्छती'त्याकाङ्क्षायां विशेषणीभूतेन व्यापारेणेत्यर्थाल्लभ्यते। तदेतदाह—क्रिययेति। क्तप्रत्ययेनोपस्थितं**

---

**बृहच्छब्दरत्नः**

भवती'ति सूत्राऽर्थ' इति, तन्नेति ध्वनयन्नाह—विशेषणीभूतेनेति। प्रकरणात् श्रुतेर्बलीयस्त्वेन फलाऽतिरिक्तव्यापारस्यैव कर्त्तृपदे विशेषणतया प्रविष्टत्वेन तस्यैव करणत्वेनाऽन्वय उचित इति भावः। आप्तिश्चाऽत्र व्याप्तिः। 'आप्लृ व्याप्तावि'ति-स्मरणात्। यथा [1]"राज्ञः सेनया ग्रामो व्याप्तः' 'राजस्वामिकसेनासंयुक्त' इत्यर्थः, एवं कर्त्तृनिष्ठव्यापारजन्यत्वं विक्लित्त्यादीनाम्। तत्र जन्यत्वं संसर्गः। न चैवं 'स्वर्गं यजति' 'तृप्तिं पचती'त्याद्यापत्तिः। 'प्रत्यासत्ति'न्यायेन धातुमात्राऽर्थस्यैव ग्रहणात्। अर्थस्तु पदाऽर्थविधयैवेति नाऽऽग्रहः। अत एव 'कर्त्तृग्रहणं व्यर्थम्। 'ईप्सितमि'त्यनेन तदाक्षेपात्। न च 'माषेष्वश्वं बध्नाती'त्यादिव्यावृत्त्यर्थम्। उक्तरीत्या दोषाऽभावादि'त्यपास्तम्। यत्तु 'गम्यमानक्रियाया अपि कारकविभक्तौ प्रयोजकत्वेन भक्षणाऽभिप्रायेण प्रयोगे 'कर्त्तृ'ग्रहणाऽभावे दोषो दुर्वार' इति। तन्न। 'कर्त्तृ'ग्रहणे कृतेऽपि दोषस्य दुर्वारत्वात्। एतेन 'विक्लित्त्यादीनां फल-शालित्वात्कर्मत्वं निःप्रमाणकमि'त्यपास्तम्। न चैवं तण्डुलादीनां कर्मत्वाऽनापत्तिः, कर्त्तृव्याप्तौ सम्बन्धे व्यापारभिन्नस्याऽपि प्रवेशादिति वाच्यम्। तमप्ग्रहण-सामर्थ्येन, 'तथायुक्तं चाऽनीप्सितमि'ति सूत्रबलाच्च [2]धात्वर्थाऽऽश्रयस्याऽपि ग्रहणात्। अत एव 'लः कर्मणी'ति सूत्रं सङ्गच्छते। तत्र हि 'कर्त्तृ'साहचर्येण समानपदोपात्तश्रुत्या भावनां प्रति अन्वितत्वेन तं प्रति न्यग्भूतस्य आख्यातो-पात्ताऽऽश्रये अन्वयाऽयोगेन, जन्यत्वस्य संसर्गविधया भानेन, पदवृत्त्युपस्थाप्य-फलस्यैव ग्रहणात्। धात्वर्थस्याऽसत्त्वभूतत्वेन सङ्ख्याया अनन्वयाऽऽपत्तेश्च।

---

**लघुशब्दरत्नः**

**प्रेतपरो रूढ' इति सूचयति। आप्तुमिति। सम्बन्द्धुमित्यर्थः। ([3]व्यापाराश्रय इति। प्रधानधात्वर्थाऽऽश्रय इत्यर्थः)। केनेति। करणाऽऽकाङ्क्षाप्रदर्शनम्। विशेषणीभूतेनेति। [4]कर्त्तृपदार्थविशेषणीभूतेनेत्यर्थः। उपस्थितं परित्यज्याऽनुपस्थितकल्पने मानाऽभावादिति भावः। लभ्यते इति। एवं च 'ईप्सित'पदेन कर्त्तृव्यापारप्रयोजफलाऽऽश्रय उच्यते, यथा 'तण्डुलं पचती'ति। फलस्याऽपि व्यपदेशिवद्भावेन फलाऽऽश्रयत्वात्कर्मत्वम्। अत एव**

---

[1] 'राज्ञा' इति क. ख. पाठः।

[2] 'धात्वर्थाश्रयस्याऽग्रहणात्' इति ख. पाठः।

[3] अयं पाठः क्वाचित्कः।

[4] (कर्मत्वादीनां क्रियोपाधिकत्वात् प्रधानीभूतधात्वर्थव्यापाराश्रयरूप) कर्त्तृपदार्थ-विशेषणीभूतेनेत्यर्थः' इति घ. कुण्डलितः पाठः।

वर्त्तमानत्वञ्चेह[1] न विवक्षितम् । तेन 'कटं कृतवान्' [2]'कटं करिष्यती'त्यादि सिद्ध्यति ।

कारकमिति । एतच्च कारके (१।४।२३) [3]इत्यधिकारसूत्राल्लभ्यते । तत्र हि व्यत्ययेन प्रथमाऽर्थे सप्तमी । प्रतिसूत्रञ्च[4] वाक्यं भित्त्वा कारकसञ्ज्ञा विधीयते । तद्यथा—'अपाये ध्रुवं कारकसञ्ज्ञं स्यात्' । ततः 'अपादानम्' । 'उक्तं

बृहच्छब्दरत्नः

धात्वर्थस्यैव ग्रहणात् । स्वर्गादिकन्तु न धात्वर्थीभूतं, नाऽपि [5]तदाश्रयीभूतम् । कालिकादिसम्बन्धेनाऽतिव्याप्तिवारणाऽर्थं फलताऽवच्छेदकसम्बन्धविशेषग्रहणस्याऽऽवश्यकत्वात् । यद्वा 'व्याप्तिश्चाऽत्र कालिकी गृह्यते । अस्ति च धातुवाच्यविक्लित्याद्युत्पत्तिकाले तदनुकूलव्यापारसत्ता । स्वर्गाऽपूर्व-कृष्याद्युत्पत्तिकाले न पचादिवाच्यव्यापारसत्ता, अतो न कोऽपि दोष' इति वदन्ति । अत एव 'कर्त्तुरुत्पाद्यं कर्मे'ति नोक्तम् । 'घटं करोति' 'ओदनं पचती'त्यादौ मुख्योत्पाद्ये चारितार्थ्येन 'आदित्यं पश्यती'त्यादावनापत्तेश्च । सन्प्रत्ययस्तु 'कूलं पिपतिषति' 'देवदत्तः पिपठिषती'त्यादाविव चेतनाऽचेतनसाधारणो बोध्यः । तेन 'काष्ठादिकं तण्डुलं पचती'त्यादि सिद्धम् । 'तथायुक्तमि'तियोगविभागादचेतने कर्मत्वमित्यपि वदन्ति ।

अपायेध्रुवमिति । ननु 'ध्रुवमपायेऽपादानमि'तिसूत्रे कारकपदाऽनुवृत्तिसामर्थ्यादेव सिद्धौ कृतं योगविभागेनेति चेन्न । कारकपदाऽऽवृत्तौ मानाऽभावात् । अपादानमिति सूत्रे हि विनिगमनाविरहात्सर्वपदाऽनुवृत्तौ औत्तरकालिकी सामर्थ्य[6]कल्पनोचितैव । किञ्च 'ध्रुवमपायेऽपादानमिति सूत्रे कारकपदाऽनुवृत्तिः पर्यायाऽर्था

लघुशब्दरत्नः

तत्समानाधिकरणे 'शोभनं पचती'त्यादौ कर्मत्वसिद्धिः । वाक्यं भित्त्वेति । योगविभागेनेत्यर्थः । सञ्ज्ञा विधीयते इति । तदुक्तं भाष्ये-'किमिदं कारके' इति । 'सञ्ज्ञानिर्देश' इति । वाक्यभेदं दर्शयति—अपाये इत्यादिना । नन्वेवमप्येकसञ्ज्ञाऽधिकारात्पर्यायाऽऽपत्तिः[7] । न च क्रियाजनकानां सञ्ज्ञिनामाक्षेपेण तेषां योगविभागाऽनुवृत्तिभ्यां विनाऽपि कारकसञ्ज्ञाविधानेन पर्याये सिद्धे, योगविभागेनाऽनुवृत्त्या प्रतिवाक्यं सञ्ज्ञाविधानं समावेशाऽर्थमिति

[1] चकारो मुद्रितेषु त्रुटितः । 'नेह विवक्षितम्' इत्येव मुद्रितेषु पाठः ।
[2] 'कटं करिष्यति' इति मुद्रितेषु पाठः । लिखितेषु तु 'कटम्' इति नास्ति ।
[3] 'अधिकाराल्लभ्यते' इति मुद्रितेषु पाठः ।
[4] चकारो मुद्रितेषु त्रुटितः ।
[5] 'तथाश्रयीभूतम्' इति ख. पाठः ।
[6] 'सामर्थ्याऽकल्पना' इति ख. पाठः ।
[7] 'पर्यायोपपत्तिः' इति च. पाठः ।

कारकमपादानसञ्ज्ञं स्यात्' । पुनः कारकशब्दाऽनुवृत्तिसामर्थ्याद्विशेषसञ्ज्ञाभिः सह समावेशः । अन्वर्था चेयं सञ्ज्ञा–'करोतीति कारकमि'ति । तेन क्रियाऽनन्वयिनो न भवति–'ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'ति । इह हि ब्राह्मणः

**बृहच्छब्दरत्नः**

स्यात् । न च 'कारके' इतिसूत्रेण महासञ्ज्ञाकरणबलात् क्रियाऽन्वयिनामाक्षेपेणाऽपादानादीनां कारकसञ्ज्ञाविधानसामर्थ्यात्पर्यायसिद्धावनुवृत्तिः समावेशाऽर्थैव भविष्यति । 'नटस्य शृणोती'त्यादौ सावकाशत्वात् । अत एव दुह्यादिपरिगणनं चरिताऽर्थम् । 'अकथितं चे'तिसूत्रस्य निर्विषयता च न । तथा च योगविभागं विनैवाऽनुवृत्त्या पर्याये सिद्धे, योगविभागकरणमपादानमितिसूत्रे कारकमित्यस्याऽनुवाद्यत्वलाभाऽर्थम् । असति योगविभागे सहविधानेनोद्देश्यविधेयभावेनाऽन्वयो न स्यात् । तदेतदाह—पुनरिति । 'भीत्राऽर्थानां भयहेतुरि'त्यादावर्थाऽधिकारात्समावेशः ।

**क्रियाऽनन्वयिन इति** । अयं भावः—कारकत्वं क्रियाऽन्वयित्वं, न जनकत्वम् । सम्प्रदानादीनां कारकत्वाऽनापत्तेः । न च यागस्य[1] पूर्ववृत्तित्वाऽभावेऽप्यपूर्वस्य पूर्ववृत्तित्वेन तद्द्वारा पूर्ववृत्तित्वमात्रेण यागस्य कारणतावत्तज्ज्ञानस्य[2] पूर्ववृत्तित्वेन कारणत्वं सूपपन्नमिति वाच्यम् । ब्राह्मणसम्बन्धिपुत्रस्य क्रियाव्याप्यत्वेन पुत्रज्ञानस्येव ब्राह्मणज्ञानस्याऽपि पूर्वं सत्त्वात् । जनकत्वांऽशं त्यक्त्वा क्रियाऽन्वयित्वविवक्षायां क्षत्यभावाच्च । एतेन 'अर्द्धपिप्पली' 'सुसिक्तमि'त्यादौ प्रवृत्तिनिमित्ताऽभावेऽपि यथा[3] वचनसामर्थ्यादुपसर्जन-कर्मप्रवचनीयसञ्ज्ञयोः प्रवृत्तिस्तथा कारकसञ्ज्ञाया अपि कर्मादौ प्रवृत्तिरि'त्यपास्तम् । न चैवमपि ब्राह्मणस्य कर्मसञ्ज्ञा दुर्वारा, पुत्रद्वारा तस्याऽपि क्रियाऽन्वयित्वात् । न च साक्षात्क्रियाऽन्वयित्वमेव विवक्षणीयमिति वाच्यम् । कर्मकारकस्य फलद्वारा, अधिकरणकारकस्य कर्त्तृ-कर्म-द्वारा क्रियाऽन्वयस्याऽनुभव-सूत्रादिसंमतस्य विना प्रमाणमपलापा-

**लघुशब्दरत्नः**

वाच्यम् । आक्षेपे क्रियाजनकमात्रस्य सञ्ज्ञाऽऽपत्तौ 'नटश्रुतमि'त्यादौ स्वरवारणाय कारकाद्दत्त (६।२।१४८) इत्यादौ स्वरितपाठाद्याश्रयणेऽधिकगौरवादित्यत आह—पुनः कारकेति । विभक्तेष्वपादानमित्यादिषु तदनुवृत्त्या तदनुवादेन विशेषसञ्ज्ञाविधानादित्यर्थः । समावेशफलन्तु 'ग्रामेवास' इत्यादावधिकरणत्वात्सप्तमी, कारकत्वात्कृदुत्तरपदप्रकृतिस्वरश्चेति बोध्यम् । करोतीति । क्रियां जनयतीत्यर्थः । तज्जनकञ्च प्रत्यासत्त्या तत्रैवाऽन्वेति । क्रियानन्वयिन

१ 'योगस्य' इति क. ख. पाठः ।

२ 'ज्ञानस्य' इति ख. पाठः ।

३ 'यथा' इति क. ख. नास्ति ।

पुत्रविशेषणं, न तु क्रियाऽन्वयी। यद्वा कारकशब्दः क्रियापरः, 'करोति कर्त्तृ-कर्मादिव्यपदेशानि'ति व्युत्पत्तेः। तथा च अपादानादिसञ्ज्ञाविधौ 'क्रियायामि'त्यस्योपस्थित्या क्रियान्वयिनामेव तत्तत्सञ्ज्ञा विधीयन्ते। कारकाद्दत्तश्रुतयोः (६।२।१४८) इत्यादौ तु कारकशब्दः स्वर्यते। तेनैतदधिकारोक्तं कर्त्रादिषट्कमेव गृह्यते। अस्मिन्पक्षे वृत्तावपि 'कारकमि'त्यस्य क्रियाऽन्वयी-

बृहच्छब्दरत्नः

ऽयोगात्। 'ग्रामं[1] गच्छति' 'ग्रामे गच्छती'तिप्रयोगयोरुक्तप्रकारं विनोपपादनाऽसम्भवाच्चेति वाच्यम्। क्रियायाः कारकाऽऽकाङ्क्षितत्वेन तत्र साक्षात्, परम्परया वाऽन्वयस्य क्लृप्तत्वेऽपि, षष्ठ्यन्तस्थले तादृशकल्पने मानाऽभावात्। फलस्याऽपि क्रियात्वाच्च। तत्र क्रियाऽन्वयश्च प्रकारत्वेनैवेति नाऽऽग्रहः, किन्तु विशेष्यत्वेनाऽपि। अत एव 'पाचकस्य देवदत्तस्य गृहे, देवदत्तेन पक्वस्य तण्डुलस्य समूह' इत्यादौ पाकक्रियानिरूपितं कर्त्तृत्वादिकं सङ्गच्छते।

ब्राह्मणस्य पुत्रमिति (६२४ पृष्ठे)। सुन्दरविशिष्टपुत्रस्य क्रियाव्याप्यत्वेन सुन्दरादीनां कर्मत्ववद् ब्राह्मणस्याऽपि कर्मत्वाऽऽपत्तिः। मन्मते त्वरुणाऽधिकरणरीत्या सुन्दरादीनां क्रियाऽन्वयात्कर्मत्वम्। समानाऽधिकरणप्रकरणपठित-'विशेषणं विशेष्येणे'तिज्ञापकाद्विशेष्याऽन्वितविभक्तितुल्या समानाधिकरणविशेषणवाचकाद्विभक्तिः। यद्वा 'अकथितं चे'तिसूत्रेण पथिरूपकर्मयोगेन पुत्रस्येव, पुत्ररूपकर्मयोगेन[2] ब्राह्मणस्याऽपि कर्मत्वाऽऽपत्तिः। पुत्रशब्देन जन्यत्वांऽशस्याऽपि बोधनाद् ब्राह्मणस्य विश्लेषाऽऽश्रयत्वेन 'ध्रुवमपायेऽपादानमि'ति सञ्ज्ञाऽऽपत्तिः। नन्वस्मिन् पक्षे सप्तम्यनुपपन्नेत्यत आह—यद्वेति। स्वर्यते इति। अत एव पक्षयोर्न विरोधः।

लघुशब्दरत्नः

इति। तदन्वयप्रयोजक-तज्जनकत्वा-ऽभाववत इत्यर्थः। ब्राह्मणस्य पुत्रमिति। अत्र अकथितञ्च (१।४।५१) इत्यनेन पृच्छिकर्मपुत्रनिमित्तस्य कर्मत्वाऽऽपत्तिः। क्रियाजनकत्वन्तु न तस्य। पुत्रेणाऽन्यथासिद्धेः। अकथितञ्च (१।४।५१) इत्येतत् प्राप्ताऽपादानत्वाद्यविवक्षायां, सर्वथा तदप्राप्तौ च प्रवर्त्तते। अत एवाऽस्य न क्रियाऽन्वय इत्याह—न त्विति। करोतीति। स्वजनकत्वेनैतान् व्यपदेशान् करोतीत्यर्थः। तदुक्तं भाष्ये—'यावद् ब्रूयात् क्रियायामिति, तावत्कारके' इति। क्रियायां विषये इत्यर्थः। विषयत्वञ्च जनकत्वेनेति बोध्यम्। क्रियाऽन्वयिनामिति। क्रियाऽन्वययोग्यताऽवच्छेदकक्रियाजनकत्ववतामित्यर्थः। गृह्यते इति। अत एव 'नटश्रुतमि'त्यादौ न दोषः। क्रियाऽन्वयीत्यर्थ इति। तदन्वययोग्यताऽवच्छेदकक्रियाजनकत्ववदित्यर्थः। यथाश्रुतन्तु न युक्तम्। 'कारकाणां भावनाऽन्वय'

[1] 'ग्रामं गच्छतीति' इति ख. पाठः।
[2] 'कर्मसंयोगेन' इति क. ख. पाठः।

त्यर्थः। आद्यपक्षे तु [1]"कारकसञ्ज्ञं स्यात्, तच्च कारकं कर्मसञ्ज्ञं स्यादि"ति व्याख्येयम्।

**अनभिहिते (२।३।१)।** ननु 'बहुपटुरि'त्यादौ बहुचा उक्ताऽर्थत्वाद्यथा कल्पबादयो न, एवं 'क्रियते कट' इत्यादावपि तिङादिभिरुक्ताऽर्थत्वाद् द्वितीया न भविष्यति। किञ्च 'कटं करोती'त्यादौ सावकाशा द्वितीया 'कृतः कट' इत्यादिषु प्रथमया बाधिष्यते। निरवकाशत्वात्। न च 'वृक्षः' [2]'प्लक्ष' इत्यादिरवकाशः। तत्राऽपि प्रतीयमानामस्तिक्रियां प्रति कर्तृत्वेन तृतीया-

**बृहच्छब्दरत्नः**

उक्तार्थत्वादिति। शब्दाऽर्थसाधुत्वे सम्भवति शब्दसाधुत्वमात्रकल्पनमन्याय्यम्[3]। किञ्च वैयर्थ्यशङ्काशून्ये चरिताऽर्थो विधिरन्यत्र न[4] प्रवर्त्तते, 'अणुरपि विशेषोऽध्यवसायकर' इति न्यायादिति भावः। ननु दृढतरत्वबोधनाऽर्थं 'द्विर्बद्धं सुबद्धं भवती'ति न्यायेनोक्ताऽर्थप्रयोगान्न दोषद्वयम्। अत एव 'द्वौ घटौ' 'व्यतिलुनीते' इत्यादि सङ्गच्छते। अत एव 'येनाऽङ्गविकारः' 'इतरेतराऽन्योऽन्योपपदाच्चे'त्यस्य चारितार्थ्यम्। बहुचा कल्पबादीनां बाधान्न प्रवृत्तिः, 'सत्यपि सम्भवे बाधनं भवती'ति न्यायात्। अत एव यासुट्-श्नमादिविषये सीयुट्-शबादिकं नेत्यरुचेराह—किञ्चेति। सावकाशेति। 'मात्र'ग्रहणात्, 'सम्बोधने चे'तिज्ञापकाच्च विभक्त्यर्थाऽऽधिक्ये प्रथमाया नैव प्रवृत्तिः। 'कृत'शब्दसन्निधाने तु प्रत्ययेनाऽभिधानादाधिक्यं नेति स्पष्टमेव। प्रतीयमानामिति[5]। 'कर्मणि द्वितीये'त्यादिसाहचर्य्यात्,

**लघुशब्दरत्नः**

इति वाक्यस्य 'घटत्ववतां [6]घटत्ववत्ते'त्येतत्तुल्यताऽऽपत्तेः। अत एव भाष्ये क्रियाजनकत्वमेव कारकत्वमुक्तम्। तज्जनकत्वञ्चैषां तत्क्रियोपयोगि-क्रियाऽऽश्रयत्वेनेति चोक्तम्। अत एवैषां क्रियाऽन्वयः। 'क्रियाजनकमि'ति ज्ञाते, 'का सा क्रिये'त्याकाङ्क्षोदयेन, क्रियाया जनकाऽऽकाङ्क्षया च तत्रैवाऽन्वयस्यौचित्यात्। अविद्यमानस्य सम्प्रदानस्याऽपि स्वज्ञानद्वारा क्रियाजनकत्वमित्यलम्।

तिङादिभिरिति। तैरेव तस्याः शक्तेरुक्तौ कटादिप्रातिपदिकस्योद्भूततच्छक्तावृत्तेः, 'कर्मणि वर्त्तमानात्प्रातिपदिकादि'त्यर्थेऽपि तदनापत्तिरिति भावः। अनभिहितसूत्रमपि 'अभिधानविषये प्रातिपदिकस्योद्भूततच्छक्तौ वृत्त्यभाव' इत्यत्रैव तात्पर्यग्राहकमिति बोध्यम्। सावकाशेति। मात्रग्रहणेन कर्माऽऽधिक्ये प्रथमाया अप्रवृत्तेरिति भावः। प्रतीयमाना-

[1] 'कारकसञ्ज्ञा स्यात्' इति मुद्रितेषु पाठः।

[2] 'प्लक्ष' इति मुद्रितेषु त्रुटितम्। ङ. पश्चाद्वर्द्धितम्।

[3] 'अन्याऽर्थम्' इति क. ख. पाठः।

[4] नकारः ख. नास्ति।

[5] 'प्रतीयमानेति' इति ख. पाठः।

[6] 'घटत्ववत्तेति तुल्यतापत्तेः' इति मुद्रितेषु पाठः।

प्रसङ्गात्। अथ 'नीलमिदं, न तु रक्तमि'त्यादौ विशेषणाऽन्तरनिवृत्तितात्पर्यके अस्तिक्रियाया अनावश्यकत्वात् प्रथमाया अवकाशं ब्रूषे, तर्हि विप्रतिषेधात् प्रथमाऽस्तु। एवं चाऽनभिहिताऽधिकारो वृथेति चेत्। मैवम्। 'सङ्ख्या विभक्त्यर्थ' इति पक्षे सूत्राऽऽरम्भात्। तथा चा'ऽनभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमि'त्यर्थः। सूत्राऽनारम्भे [1]च 'कर्मणि यदेकत्वं, तत्र द्वितीयैकवचनमि'ति हि वाक्याऽर्थः। तथा सति 'कृतः कट' इत्यादौ च क्तेन

---

बृहच्छब्दरत्नः

तथैवाऽऽकाङ्क्षितत्वाच्च प्रथमाविभक्तिविधायकस्य क्रियाऽन्वये एव प्रवृत्त्या 'अस्ती'त्यध्याहार आवश्यकः। अत एव 'तिङ्समानाधिकरणे प्रथमे'ति वार्त्तिकेन सह न विरोधः। अत एव 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ती'ति भाष्याद्युक्तं निर्बीजमि'त्यपास्तम्। ब्रूषे इति। एकवचनोक्त्या अरुचिर्बोधिता। तद्बीजन्तु 'नीलमिदमि'त्यस्याऽप्युल्लेखो नोचितः। उक्तरीत्या प्रथमाया असाधुत्वञ्च। एतेन 'नीलो घट' इत्यादौ नीलादीनां घटत्वादिजातावन्वये विवक्षिते प्रथमाया अवकाश' इति मन्दोक्तमपास्तम्। विशिष्टस्य वृत्त्युपस्थितत्वेऽपि घटत्वादि-जातीनां वृत्त्याऽनुपस्थितत्वाच्च। अत एव 'पदार्थः पदाऽर्थेनाऽन्वेति, न तदेकदेशे' इति घण्टाघोषः सङ्गच्छते। विप्रतिषेधादिति। 'पचतिकल्पम्', 'उच्चै'रित्या-दाववकाशः।

कर्मणि यदेकत्वमिति। 'शेषे षष्ठी'तिसूत्रे 'सम्बन्धे यदेकत्वमि'त्यादिरर्थः। समानपदोपात्तत्वेन द्वितीयादाविव विभक्त्यर्थे एवाऽन्वयस्य युक्तत्वात्। न च 'राज्ञः पुत्रः, पाणिः, कम्बल' इत्यादौ सम्बन्धाऽनेकत्वे बहुवचनाऽऽपत्तिः। एकस्य बहुषु सम्बन्धेषु युगपच्छाब्दाऽन्वयाऽसम्भवेनाऽनन्वयाऽऽपत्तेः। अत एवाऽत्राऽऽवृत्त्यादिनाऽन्वयः। 'राज्ञः कम्बल' इत्यादौ प्रतियोगिभेदात्सम्बन्धा-

---

लघुशब्दरत्नः

मिति। अत एव 'तिङ्समानाधिकरणे प्रथमे'ति वार्त्तिकन्यासः सङ्गच्छते। अनावश्यकत्वादिति। तदभिमानादित्यर्थः[2]। सङ्ख्येति। द्व्येकयोः (१।४।२२) कर्मणि (२।३।२) स्वौजस् (४।१।२) इत्यादेरेकवाक्यतयाऽन्वये 'कर्मणी'तिसप्तम्या 'द्व्येकयोरि'तिसूत्रोपात्तैक-त्वाद्यपेक्षत्वात् 'कर्मणि यदेकत्वं तत्राऽमि'त्यर्थे हि सा विभक्त्यर्थ इति पक्षः। न च 'गुणानाञ्च पराऽर्थत्वादि'ति न्यायेन 'कर्मणि, एकत्वे चाऽमि'त्येवाऽर्थ उचितः, सङ्ख्याया आश्रयाऽपेक्षायां प्रत्यासत्त्या कर्मादेरेव तत्त्वमित्युक्ताऽर्थोऽसङ्गत इति वाच्यम्। सङ्ख्या-सङ्ख्येययोर्नियमतः साकाङ्क्षत्वेनेदृशे विषये गुणयोरपि परस्पराऽन्वयाऽङ्गीकारात्। स्पष्टञ्चेदमत्रैव [3]सूत्रे कैयटे।

---

[1] चकारो ङ. छ. नास्ति। [2] 'इति भाव' इति घ. पाठः।
[3] 'सूत्रे' इति मुद्रितेषु त्रुटितम्।

कर्ममात्रोक्तावपि तदेकत्वस्याऽनुक्ततया अम् दुर्वारः। 'परत्वात्प्रथमे'त्यपि न। 'कर्त्तव्यः कट' इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात्। 'कारकं

बृहच्छब्दरत्नः

ऽनेकत्वं[1] स्पष्टमेवेति कश्चित्। परन्तु 'षष्ठीविषये प्रकृत्यर्थे[2] एव सङ्ख्याऽन्वयः। यत्तु 'सङ्ख्या विभक्त्यर्थ' इतिपक्षे एकत्वादयो विशेष्याः—'कर्मणि यदेकत्वमि'-त्यादि, न तु 'एकत्वविशिष्टे कर्मणी'त्यादि। तथा सति विशेष्यीभूतकर्मत्वादीना-मुक्तत्वादनभिहिताऽधिकारो वृथैव स्यादि'ति। तन्न। [3]शत्यादिशब्देभ्यो द्वितीया-दीनामनापत्तेः। विशेषणीभूतकर्मत्वादीनामनभिधानात् द्वितीयाद्युत्पत्त्याश्रयणे तु कर्मादीनां विशेष्यत्वेऽपि सङ्ख्याया अनभिधानादधिकाराऽभावे 'कृतः कट' इत्यादौ दोषो दुर्वार इति ध्येयम्। मूलस्य तु सङ्ख्याप्रतिपादनमात्रे तात्पर्यं, न तु विशेष्यत्वे। वस्तुतस्तु 'दारान्' 'एकमि'त्यादौ कारकमात्रे[4] विभक्तेरुत्पादाद्विशेषण-विशेष्यभावे विनिगमकाऽभावादवान्तरवाक्यानां पार्थक्येन च शेषे षष्ठीत्यत्र वैशि-ष्ट्याऽसम्भवाच्च सङ्ख्याकर्मादौ भिन्नैव शक्तिः। तत्रैकं द्योत्यम्, अपरं वाच्यम्।

कर्त्तव्यः कट इति। ननु 'कृत्यानां कर्त्तरी'तिसूत्रे 'नेतव्या व्रजं गावः कृष्णेने'-त्याद्यर्थं 'कृत्यानामि'ति योगं विभज्य, 'ने'ति चाऽनुवर्त्त्य, निषेधपरत्वस्याऽऽवश्य-कत्वेन प्रकृते षष्ठ्यभावः सूपपाद इति चेन्न। 'मम, मया वा सेव्यो हरिरि'त्यत्राऽपि निषेधस्यैव दुर्वारत्वेन निषेध-विकल्पयोर्व्यवस्थाऽनापत्तेः। न च निषेधवाक्ये 'उभयप्राप्तावि'त्यनुवृत्त्या निस्तारः। अनभिहिताऽधिकाराऽभावे सर्वत्रोभय-

लघुशब्दरत्नः

तदेकत्वस्येति। प्रधानप्रत्ययाऽर्थस्येत्यर्थः। एवं चाऽप्रधानकर्मादिविशेषणाऽर्थमावश्यकं सूत्रम्। 'उक्तार्थानामि'ति न्यायश्च प्रधानाऽर्थविषय एवेति भावः। कर्त्तव्यः कट इति। न चाऽत्र द्वितीयातः परत्वात्प्राप्तामपि प्रथमां बाधित्वा परत्वात् प्राप्तायाः षष्ठ्याः कृत्यानाम् (२।३। ७१) इति विभक्तसूत्रेण निषेधाऽऽपत्तिः,तदधिकाराऽभावे उभयप्राप्तेः सत्त्वादिति वाच्यम्। अधिकाराऽभावे सर्वत्रैवोभयप्राप्तिविषयत्वसत्त्वात्कर्मण्येव षष्ठ्योपपत्तौ कर्तृकर्मणोः (२।३। ६५) इतिसूत्रस्थकर्त्तृग्रहणस्य, उभयप्राप्तौ (२।३।६६) इति सूत्रस्य च वैयर्थ्याऽऽपत्त्या, आत्म-माने (३।२।८३) इति सूत्रस्थभाष्यप्रामाण्येन चोभयोः प्रयोगे एवोभयप्राप्तेर्वाच्यतया, प्रकृते नोभयप्राप्तिरित्याशयात्। 'आकृष्टव्या ग्रामं शाखे'त्यत्र कृत्यानाम् (२।३।७१) इति विभक्त-सूत्रस्थभाष्योदाहरणे आश्चर्यपद-कर्त्तृपदे अध्याहृत्योभयप्राप्तिर्निरूप्या। इत्यादाविति। आदिना 'भवतो लाभोऽश्वः क' इत्येतत्। कारकमिति। सङ्ख्यायाः सर्वत्र विशेषणतया

[1] 'स्पष्टमेवेति कश्चित्' इति क. नास्ति।

[2] 'विकृत्यर्थे' इति ख. पाठः।

[3] 'इत्यादिशब्देभ्यः' इति ख. पाठः। 'एकादिशब्देभ्यः' इति क. पाठः।

[4] 'मात्रे' इति ख. नास्ति।

**विभक्त्यर्थ' इति पक्षे तु सूत्रं प्रत्याख्यातमाकरे। हरिं भजतीति।**

### बृहच्छब्दरत्नः

[1]प्राप्तत्वात्। न चाऽकर्मकधातुयोगे एव विकल्प इति वाच्यम्। 'कर्त्तरी'त्यस्य वैयर्थ्याऽऽपत्तेः। तद्धि 'कर्त्तृकर्मणोरि'त्यनुवृत्तौ कर्मनिवृत्त्यर्थम्। [2]न च कर्मणि निषेधः, [3]कर्त्तरि विकल्पः। न च कर्मणि 'गुणकर्मणि वेष्यते' इत्यनेन विकल्पस्य सिद्धत्वान्निषेधो व्यर्थ इति वाच्यम्। 'दोग्धव्या गावः पयः कृष्णेने'त्यादौ चरिताऽर्थत्वादिति वाच्यम्। तावताऽपि मूले दोषाऽनुद्धारात्। 'कृत्यानां कर्त्तरी'-त्येकं सूत्रं विधाय निषेधाऽननुवृत्त्या एकदेशे स्वरितत्वाद्यकल्पनेन च नियमसम्पाद-नेनेष्टसिद्धौ, निषेधाऽनुवृत्त्या व्याख्यानेन कर्त्तर्यपि निषेधस्य ध्वनितत्वात्। निःप्रमाणकसङ्कोचस्याऽन्याय्यत्वाच्च। 'कृती'तिवदेकवचननिर्देशे कर्त्तव्ये, बहुवचननिर्देशेनाऽनेकविधिकल्पनया सर्वत्र षष्ठ्या बाधाच्च। अत एवोक्तोदा-हरणे 'कृष्णेने'त्यत्र 'कर्त्तरि वे'त्यनेनाऽपि सिद्धान्ते षष्ठी न। न चोभयप्राप्ताविति नियमेन निस्तारः। कर्मणि[4] षष्ठीविधिमुखेनेतरव्यावृत्तेर्बोधनेन तद-प्रवृत्तेः। विकल्पेन बाधाच्च। 'येन नाप्राप्ति'न्यायेन, 'मध्येऽपवाद'न्यायेन चोभयप्राप्तावित्यनेन 'कर्त्तृकर्मणोः कृती'त्यस्यैव बाधाच्च। 'तक्रकौण्डिन्य'न्यायेनो-भयप्राप्तौ कर्मणीति सूत्रं कृत्यप्रत्यये न प्रवर्त्तते इति तत्त्वम्। एतेन 'केचिद-विशेषेण विभाषामिच्छन्ती'त्यनेन सर्वत्रैव विकल्पस्य प्राप्तत्वेन, विकल्पव्यवस्था-ऽनापत्तिरि'ति परास्तम्। कृत्याऽतिरिक्तविषयत्वात्। 'देवदत्तस्य हन्तरि [5]'हते' इति न्यायेन प्रथमाया अप्यप्राप्त्यापत्तेश्च। न चाऽन्तरङ्गत्वात् प्रथमेति वाच्यम्। ईदृशे विषये षष्ठ्याः प्रथमातुल्यत्वेनाऽन्तरङ्गत्वात्। अत एव 'निरवकाशत्वा-द्विप्रतिषेधादि'ति भवदुक्तिः सङ्गच्छते। 'न केवले'ति निषेधस्तु शास्त्रप्राप्ताऽतिरिक्त-विषयकः। न्यायाऽबाधेन षष्ठ्या एव प्रयोगस्य न्याय्यत्वाच्च। किञ्च एका-दिभ्यो द्वितीयाद्यनापत्तिः। सङ्ख्याया उक्तत्वात्। 'कर्मत्वादीनामनुक्तत्वान्न

### लघुशब्दरत्नः

भानादेकत्वे यत्कर्मेत्यर्थः। 'वृक्षे शाखे'तिवदेकत्वे इति सप्तमी आधेयस्याऽऽधारत्वविवक्षया। एवञ्चैकत्वविशिष्टे कर्मणीत्यर्थ इति भावः। प्रत्याख्यातमिति। न्यायेनैव सिद्धेरिति भावः। अनेन 'पञ्चकं प्रातिपदिकाऽर्थ' इति पक्षेऽप्यावश्यकता सूचिता। तत्र यथा प्रातिपदिकेनो-क्ते कर्मत्वादौ भवति, तथा तिङादिभिरुक्तेऽपि स्यादतस्तद्वारणाऽर्थमिदम्। एवं 'सङ्ख्या-

[1] 'उभयप्राप्तेः सत्त्वात्' इति वा पाठः।
[2] 'न च' इति क. नास्ति।
[3] 'कर्त्तरि विशेष' इति ख. पाठः।
[4] 'कर्मणि न षष्ठी' इत्यपि पाठः सम्भाव्यते।
[5] 'हते' इति ख. नास्ति।

**भजनक्रियया हरौ प्रीतेरुत्पादात् प्रीतिविशिष्टतया क्रियाव्याप्यत्वेन हरिः कर्म। तद्विशिष्टं भजनं वाक्याऽर्थः। 'हरिः सेव्यते' इत्यत्राऽप्येवमेव। 'क्रिया-**

बृहच्छब्दरत्नः

दोष', इति चेत्। 'कृत' इत्यादौ सङ्ख्याया अनुक्तत्वाद्दोषो दुर्वारः। तस्मादनभिहिते[1] इतिसूत्रमावश्यकमित्यरुचिः।

एवमेवेति। 'भावनैव विशेष्ये'त्यर्थ इति वैयाकरणभूषणे पितृव्यचरणाः। 'पक्वस्तण्डुल' इत्यादौ कर्मप्रत्ययसमभिव्याहारे फलव्यापारयोर्व्यत्यासबोधनस्याऽऽवश्यकत्वेन कर्माऽऽख्याते फलविशेष्यको बोधः। अत एव सर्वत्र क्लृप्तस्य 'प्रत्ययाऽर्थे प्रकृत्यर्थस्य विशेष्यत्वमि'त्यस्य न त्यागः। तत्राऽन्वयस्तु विशेष्यत्वेन, विशेषणत्वेन वेत्यन्यदेतत्। एतेन 'कर्तृलकारे फलविशेष्यको बोध एवाऽस्त्वि'त्यपास्तम्। विशेषणत्वेनाऽन्वितस्य न्यग्भूतस्याऽऽख्यातोपात्ताऽऽश्रयेऽन्वयाऽनापत्तेश्च। अत एव 'देवदत्तेन पुत्र इष्यते' इत्यर्थे 'पुत्रीयती'ति न प्रयोगः। भिन्नाऽर्थत्वात्। किन्तु 'पुत्रमिच्छती'त्यस्मिन्नर्थे एवे'ति भाष्य-कैयटग्रन्थाः सङ्गच्छन्ते। अत एव 'पञ्चकृत्वः पच्यते' इत्यत्र फलाऽऽश्रयस्यैक्यम्। 'पञ्चकृत्वः पचती'त्यत्र तु न। न चैवं फले कालाऽन्वयः स्यादिति वाच्यम्। 'क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिके'तिवाक्यपदीयोक्तरीत्याऽन्यत्राऽन्वयाऽसम्भवात्। 'वर्त्तमाने लडि'त्यादौ 'धातोरि'त्यनुवर्त्तितस्य क्रियावाचकगर्भितत्वेन फलस्याऽनुपस्थितत्वात्, क्रियावर्त्तमानत्वादावेव लडादेर्विधानाच्च। वस्तुतस्तु 'यादृशी भावनाऽऽख्याते धात्वर्थश्चाऽपि यादृशः। नाऽसौ तेनैव रूपेण कथ्यतेऽन्यैः पदैः क्वचित्॥' इति भट्टपादोक्तरीत्या, धातुसञ्ज्ञासूत्रस्थभाष्यादिस्वरसाच्च स्वप्रागभावाऽधिकरणक्षणवृत्तयो विक्लित्ति-फूत्कारादयो धातुवाच्याः। तथा च विक्लित्यादीनां क्रियात्वेऽपि न बाधकम्। अत एव 'कर्मकर्त्तरि विक्लित्तावेव कारकाणामन्वय' इति सिद्धान्तः। एतेन 'फलेऽन्वयाऽङ्गीकारे व्यापाराऽपगमे कालाऽन्तरे विक्लित्तेः सत्त्वेन 'पचती'ति प्रयोगाऽऽपत्तिरि'त्यपास्तम्। तादृशविक्लित्तेर्धात्ववाच्यत्वात्। एतेन 'पक्वस्तण्डुल' इत्यादावाश्रयस्य विशेषणत्वेन फलेऽन्वयः, कालस्य तु व्यापारे' इत्यपास्तम्। अत एव 'क्रियाप्रधानमाख्यातमि'ति न

लघुशब्दरत्नः

ऽतिरिक्तं चतुष्कं प्रातिपदिकाऽर्थः, सङ्ख्यामात्रं विभक्त्यर्थ' इति पक्षेऽप्यावश्यकं तत्। एवञ्च कारकस्य विभक्त्यर्थत्वं यत्र यत्र पक्षे, तत्राऽनावश्यकमिति सूचितम्। प्रीतेरिति। तत्प्रीतिरेव च शुभफलजनिकेति भावः। क्रियाव्याप्यत्वेनेति। क्रियासम्बन्धित्वेनेत्यर्थः। तज्जन्यफलाऽऽश्रयत्वं हि तत्त्वम्। एवमेवेति। धात्वर्थ एव विशेष्य इत्यर्थः। इयांस्तु

[1] 'अनभिहितेति सूत्रम्' इति क. ख. पाठः।

प्रधानमाख्यातमि'ति सिद्धान्तात् । 'धातूपस्थिता क्रिया तिङर्थं प्रति विशेष्या, न तु कृदर्थं प्रतीव विशेषणमि'ति हि तस्याऽर्थः । अत एव 'पाचको व्रजती'-

बृहच्छब्दरत्नः

सिद्धान्तविरोधः । 'क्रिया'शब्देन भाव-कर्मल्युत्पत्त्योभयोरप्यभिधानाच्च । कर्तृ-सञ्ज्ञा तु न । निरवकाशया कर्मसञ्ज्ञया बाधात् । प्रधानीभूतव्यापाराऽऽश्रय-त्वाऽभावाच्च । एवञ्च—[1]'एवमेवे'ति मूलग्रन्थो 'धात्वर्थ एव विशेष्य' इत्यभिप्रायेणैव व्याख्येय' इति मनोरमाविलासेऽस्मद्गुरुचरणाः[2] । भावलकारे तु भावनैव विशेष्या । भावाऽर्थकक्त्वाप्रत्ययाऽऽदौ सामानाधिकरण्यसम्बन्धेन क्रियायां क्त्वाप्रकृत्यर्थक्रियाया अन्वयेन धातोरुत्सर्गतो व्यापारविशेष्यकफल-प्रकारकबोधजनकत्वस्य क्लृप्तत्वेन तत्त्यागे[3] मानाऽभावात् ।

ननु वक्ष्यमाणोदाहरणे क्रियायाः क्रियाऽन्तरं प्रति विशेषणत्वेन सिद्धान्तो-ऽयुक्त एवेत्याशङ्क्याऽऽह—धातूपस्थितेत्यादि । अयं भावः—'आख्यातमाख्यातेन क्रियासातत्ये' इत्यादावाख्यातशब्दोऽन्यत्र प्रसिद्धस्तथाऽप्यत्र 'आख्यायते सर्व-प्रधानीभूतोऽर्थोऽनेने'तिव्युत्पत्त्या 'आख्यात'शब्देन धातुरुच्यते । 'नामाऽऽख्यातो-पसर्गनिपाता' इति भाष्ये, निरुक्ते च प्रकृतीनामेवोद्देशाच्च । अग्रेऽपि 'तत्र नामान्याख्यातजानी'ति शाकटायनो, नैरुक्तसमयश्चे'त्युक्तत्वाच्च । न हि प्रत्ययजं नाम सम्भाव्यते, किन्तु धातुजम् । अत एवैतत्समानाऽर्थकं वाक्यं 'सर्वं नाम धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकमि'ति महाभाष्ये पठितम् । एवञ्च 'धातुरि'ति महासञ्ज्ञाकरणं चरिताऽर्थम् । अत एव 'एधाञ्चक्रे' इत्यादावामन्तस्य क्रियाविशेष्यकबोधजनकत्वम् । तच्च [4]प्राधान्येन क्रियाऽन्वयितया प्रमाणा-

लघुशब्दरत्नः

विशेषः-तत्र फलांऽशो विशेष्यः, कर्त्तरि तु व्यापारांऽश इति । अत एव 'सुप आत्मनः (३।१।८) इति सूत्रे भाष्यम्-'इष्यते पुत्र' इत्यर्थे 'पुत्रीयती'ति न प्रयोगो, भिन्नाऽर्थत्वादि'ति । यदा क्रियाफलस्य प्राधान्यं प्रतिपिपादयिषितं, तदा वाक्यमेव, व्यापारप्राधान्ये तु क्यजि'ति कैयटश्च । यद्यप्ययमर्थः प्रतीकाऽन्तरे कैयटेनोक्तस्तथाऽप्यत्राऽपि स एवाऽर्थ उचितः, अत्रैव वेत्यन्यत्र विस्तरः । ननु नव्यन्यायादिग्रन्थे प्रथमाऽन्तविशेष्यकबोधस्यैवाऽनुभवप्रदर्शनात्तथैव युक्तमित्यत आह—क्रियाप्रधानमिति । इदञ्च रूपप्सूत्रे (५।३।६६) भाष्ये । क्रियेति । धात्वर्थांऽश-द्वयस्याऽपि क्रियात्वेन व्यवहारो द्रष्टव्यः । तस्यार्थ इति । आख्यातशब्देनाऽत्र नियमेन [5]जनकाऽऽकाङ्क्षं विभक्त्यन्तम् । 'आख्यातमाख्यातेने'त्यादौ तथा प्रतीतेः । रूपप्सूत्रे कैयटोऽपि

[1] 'हरिः सेव्यते' इत्यत्राऽप्येवमेव' इति मनोरमाग्रन्थ इत्यर्थः ।
[2] 'मद्गुरुचरणाः' इति ख. पाठः ।
[3] 'तत्त्यागेन' इति ख. पाठः ।
[4] 'प्राधान्ययो क्रिया' इति क. ख. पाठः ।
[5] 'जनकाकाङ्क्षविभक्त्यन्तम्' इति पाठान्तरम् ।

तिवत् 'पचति व्रजती'ति नैकं वाक्यम् । पाककर्तृकर्तृकं गमनं हि 'पाचक' इत्यादेरर्थः । एककर्तृका पचिक्रिया, गमिक्रिया च पचति-व्रजत्योः पृथगेवाऽर्थः । एवञ्च 'प्रथमाऽन्तविशेष्यको बोध' इति नैयायिकोद्घोषो भाष्याद्यनुसारिभिर्नाऽऽदर्त्तव्यः । यास्कोऽप्याह-'भावप्रधानमाख्यातं, सत्त्वप्रधानानि नामानी'ति । 'पश्य मृगो धावती'त्यादौ तु मृगकर्तृकं गमनं दृशिक्रियायां कर्म । प्रधानं दृशिक्रियैव । उक्तञ्च-

'सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम् ।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्' ।। इति ।

एवं 'पचति भवती'त्यस्य पचिक्रिया भवतीत्यर्थः । अयन्तु विशेषः-

---

**बृहच्छब्दरत्नः**

ऽन्तरेण निर्णीतास्तान् प्रति । तथा च लाघवात्कारकप्रकारकशाब्दबुद्धित्वाऽवच्छिन्नं प्रति धातुजन्योपस्थितेः कारणत्वस्य क्लृप्तत्वेन कर्मादिकमपि धात्वर्थं प्रति विशेषणम् । यद्यप्युक्तवचनेन 'देवदत्तेन काष्ठैः पक्वस्तण्डुल' इत्यादौ देवदत्तादीनामिव तण्डुलस्याऽपि क्रियां प्रति विशेषणत्वं प्रसक्तं, तथाऽपि तदुत्तरवचनेन 'सत्त्वप्रधानानि नामानी'त्यनेन प्रत्ययाऽर्थविशेष्यता बोध्या । तत्र च 'प्रत्यासत्ति'-न्यायेन परिसमाप्ताऽर्थकं सत्त्ववाचकं प्रत्ययाऽन्तं नाम गृह्यते । अत एव 'पचतिकल्पमि'त्यादौ न दोषः । एतेन 'एधामि'त्यादौ प्रत्ययाऽर्थत्वात्कर्तृविशेष्यकबोधाऽऽपत्तौ लिङ्ग-सङ्ख्या-कारकाऽन्वयादव्ययत्वोक्तिरसङ्गते'त्यपास्तम् । एवं पचतीति ।

---

**लघुशब्दरत्नः**

'आख्यातात्कालसङ्ख्यासाधनाद्यवगमेऽपि तस्य क्रियाप्राधान्यमि'ति । 'नामान्याख्यातजानी'ति शाकटायनोक्तौ आख्याताऽवयवधातुजानीत्यर्थः । अत एव 'सर्वं नाम धातुजमाहे'ति तत्समानाऽर्थकम् उणादयः (३।३।१) इति सूत्रे भाष्ये पठितम् । नैकं वाक्यमिति । 'साधु' इति शेषः । प्रथमाऽन्तविशेष्यके बोधे तु तस्य तत्त्वं दुर्वारमिति भावः । एवञ्च=अस्य साधुत्वाऽऽपत्तेश्च । भावप्रधानमिति । 'भाव-काल-कारक-सङ्ख्याश्चत्वारोऽर्था आख्यातस्य, तत्र भावः प्रधानमि'ति तदर्थं तद्भाष्यकार आह । नामानीति । 'नामपदेन सुबन्तमि'ति च तद्भाष्ये स्पष्टम् । तच्चाऽव्ययाऽतिरिक्तमित्यन्यत्र निरूपितम् । 'नमन्ति= आख्याताऽर्थं प्रति विशेषणी भवन्तीति नामानी'ति तद्व्युत्पत्तिर्निरुक्तभाष्ये दर्शिता । किञ्चैतन्निरुक्तोक्तरं 'यत्रोभे भावप्रधाने भवत' इति निरुक्ते उक्तम् । 'यत्रोभेनामाऽऽख्याते भवतो वाक्ये, तत्र ते भावप्रधाने=क्रियाप्रधाने' इत्यर्थकतया च तद्भाष्ये तद्व्याख्यातम् । अतः पूर्वनिरुक्तस्य व्याख्यानाऽन्तरं नाऽऽदरणीयम् । किञ्च कर्तृविशेष्यकबोधे 'अपचदोदनं देवदत्त पश्ये'ति प्रयोगः शतृविधायकभाष्य-कैयटयोरापादितः । यद्यप्यन्तरङ्गा प्रथमा, तथाऽपि प्रधानाऽनुरोधिनी द्वितीया बलवतीति तदाशयः । तदनुसारेणाऽऽह—पश्येति । मृगस्य

तिङन्तोपस्थितायाः क्रियायाः क्रियाऽन्तरं प्रति विशेषणत्वेऽपि शब्दाऽध्याहारवादे कर्मत्वं संसर्ग एव, न तु प्रकारः। अपदार्थत्वात्। अर्थाऽध्याहारवादे तु प्रकारत्वेऽपीष्टाऽऽपत्तिः। 'पचती'त्यादौ धातूपात्तफलस्याऽपीत्थमेव मतभेदेन व्यवस्था। अत एव तत्समानाधिकरणे 'शोभनं पचती'त्यादौ द्वितीयै-

---

**बृहच्छब्दरत्नः**

ननु 'एकदेवदत्ताऽऽश्रयिको विक्लित्यनुकूलो वर्त्तमानो व्यापार' इति 'पचती'तिशब्दाद्बोधात्[1] फूत्कारादिनिष्ठभवनस्याऽपि तत्त्वात् 'पच्'धातुनैवोक्तत्वेन 'भवती'त्यस्य पृथक् प्रयोगो न युक्तः, तदाश्रयत्वं देवदत्तस्य फूत्कारादिद्वारैवेति चेन्न। विक्लित्त्यनुकूलव्यापारत्वेन बोधेऽपि, फूत्कारादिकर्त्तृकभवनस्य[2] 'पचती'त्यनेन बोधात्तादृशप्रतिपिपादयिषया 'भवती'तिप्रयोगस्य दुर्वारत्वात्। 'पचती'त्यनेन फूत्कारादिनिष्ठभवनस्य सर्वत्राऽभिधाने मानाऽभावाच्च। ध्वनितं चेदं भूवादिसूत्रे 'पचादयश्च क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ती'ति वदता भाष्यकारेण।

शब्दाऽध्याहारवादे इति। शब्दज्ञानादेवाऽर्थबोध इत्यर्थः। तत्र शब्दांऽशे उपनीतभानं मानसप्रत्यक्षम् ,अनुमित्यात्मकं[3] वेत्यन्यदेतत्। अर्थाध्याहारेति। अत एव

---

**लघुशब्दरत्नः**

कर्मत्वे प्राधानाऽनुरोधिनी द्वितीयैव स्यादिति भावः। उक्तञ्चेति। 'हरिणे'ति शेषः। तिङन्त-सुबन्तशब्देन[4]तदर्थक्रियादिः। पचिक्रिया भवतीत्यर्थ इति। स्पष्टं भूवादिसूत्रे भाष्ये। 'योऽश्वमेधेन यजते, स ब्रह्महत्यां तरती'त्यादौ 'यत्कर्त्तृका यागक्रिया, तत्कर्त्तृका तरणक्रिये'त्येव बोध इत्यन्यत्र विस्तरः। अपदार्थत्वादिति। तन्नये पदजन्योपस्थितिविषयस्यैव प्रकारत्व-विशेष्यत्वस्वीकारात्, पदाऽध्याहारस्याऽत्राऽसम्भवादिति भावः। प्रकारत्वेऽपीति। अपिना 'सर्वपक्षे विभक्त्यर्थस्य संसर्गत्वमि'ति समर्थसूत्र-षष्ठी-सूत्रभाष्योक्तः सिद्धान्तः सूचितः। शब्दोपस्थितस्याऽपि संसर्गत्वं षष्ठ्यां सर्वैरङ्गीकृतमेव वृद्धैः।

फलस्यापीति। अपिना 'पक्व' इत्यादौ व्यापारस्य सङ्ग्रहः। तत्र तस्य फलं प्रति विशेषणत्वात्। [5]इत्थमेव। कर्मत्वभानविषये उक्तप्रकारेणैवेत्यर्थः। व्यवस्थेति। 'सर्वसंमते'ति शेषः। तद्वत्प्रकृतेऽपीति भावः। वस्तुतस्तत्राऽपि संसर्गतैव। घटपदे घट-घटत्वयोः समवायस्येव, [6]उपस्थितिपूर्वकं पृथगाकाङ्क्षाया अदर्शनेनाऽध्याहारस्योक्तिसम्भवाऽभावा-

---

१ 'शब्दात् बोधे' इति क. पाठः।
२ 'भावनस्य' इति ख. पाठः।
३ 'अनुमित्यात्मकं चेत्यन्यदेतत्' इति क. ख. पाठः।
४ 'तदर्थः क्रियादिः' इति घ. पाठः।
५ 'इत्थमेवेति' इति क्वचित्पाठः।
६ 'उपस्थितिपूर्वक-पृथगाकाङ्क्षायाः' इति घ. पाठः।

**क्वचनोत्पत्तिः, 'अग्निष्टोमेन यजेते'त्यादौ तृतीयोत्पत्तिश्च सङ्गच्छते। न च दृष्टान्ते विशेष्यसमर्पकाद्दार्ष्टान्तिके विशेषणसमर्पकाच्च कर्मत्वादिवाचिकायाः सुब्विभक्तेः प्रयोगोऽस्त्विति वाच्यम्। धातु-तिङन्तयोरप्रातिपदिकत्वात्। नैयायिकानां तु [1]स्यादेष दोषः। तथा हि—'धावन्तं मृगं पश्ये'तिवत् 'धावति मृगमि'त्यपि स्यात्। न चाऽप्रथमासामानाधिकरण्ये शतृ-शानचोर्नित्यत्वान्नैवं प्रयोग इति वाच्यम्। एवमपि द्वितीयाऽनुत्पत्तेर्दुरुपपादत्वात्। ननु तत्र**

---

**बृहच्छब्दरत्नः**

'ल्यब्लोपे पञ्चमी'त्यादि सङ्गच्छते। प्रयोगोऽस्त्विति। तथा च शब्दाऽध्याहारवादेऽपि पदजन्यपदार्थोपस्थितेः सत्त्वेन प्रकारत्वमेव स्यादिति भावः। स्यादिति। तथा च प्रथमान्तत्वाऽभावेनाऽऽख्याताऽर्थकृतेरन्वयो दुरुपपादः। [2]अस्मिन् सिद्धान्ते तु आख्याते क्रियाया [3]विशेष्यत्वादन्यत्रोपसर्जनत्वेनाऽन्वितस्याऽन्यत्रोपसर्जनत्वेनाऽन्वयाऽभावान्न दोषः। अत एवाऽऽह—नित्यत्वादिति। दुरुपपादत्वादिति। तथा च 'पश्य मृगो धावती'त्यादिवाक्यविलोपाऽऽपत्तिः। न च वाचनिक्येव प्रथमेति वाच्यम्। तादृशवचनस्य पाणिनीयशास्त्रेऽभावेन क्रियाविशेष्यकबोधाऽनुभवाऽनुमानात्। स्पष्टतया भूवादिसूत्रादावभिहितत्वाच्च। अत एव 'पश्य मृगो धावतिकल्पं दर्शनं' 'मृगो धावतिकल्पस्ये'त्यादि सङ्गच्छते। एतेन 'मृगस्य कर्मत्वेऽपि अन्तरङ्गत्वात्प्रथमा। किञ्च विशिष्टवाक्याऽर्थस्य कर्मत्वेऽपि तद्बोधकवाक्यस्याऽप्रातिपदिकत्वात्प्रथमाऽन्तविशेष्यकबोधेऽपि द्वितीया न। मृगमात्रस्य [4]तत्त्वे-

---

**लघुशब्दरत्नः**

विति ध्येयम्। अत एव। फलस्य कर्मत्वादेव। तृतीयेति। तत्र तस्य करणत्वेनाऽन्वयादिति भावः। दृष्टान्ते इति। 'शोभनं पचती'त्यादौ। तत्र नव्यनैयायिक-वैयाकरणयोरुभयोरपि मते फल-व्यापारयोः परस्पराऽन्वयस्य सत्त्वेन तस्य दृष्टान्तत्वौचित्यात्। 'पश्य मृग' इत्यादौ[5] धावनदर्शनयोरन्वयस्य नैयायिकाऽसंमततया साध्यत्वेन न दृष्टान्तत्वमिति बोध्यम्। दार्ष्टान्तिके। 'पश्य मृगो धावति,' 'पचति भवती'त्यादौ। विशेषणसमर्पकादिति। 'अन्वयबोधकाले' इत्यादिः। दुरुपपादत्वादिति। एवञ्च तथा प्रयोगविलय एव स्यादिति

---

[1] 'स्यादेव दोषः' इति घ. च. पाठः।

[2] 'अस्मिन् सिद्धान्ते तु' इति ख. पाठः। 'अस्मत्सिद्धान्ते तु' इति क. पाठः।

[3] 'विशेषित्वात्' इति ख. पाठः।

[4] 'अतत्त्वे तु' इति ख. पाठः।

[5] 'इत्यादौ तु' इति क्वचित्पाठः।

**वाक्यभेद एव। 'पश्ये'त्यत्र 'तमि'ति कर्माऽध्याहारात्। 'पचति-भवती'त्यादि तु 'पाको भवती'त्याद्यर्थेऽनिष्टमेवेति चेत्। मैवम्। अध्याहारे गौरवात्। तस्य च मुनिवचनविरोधेनाऽप्रामाणिकत्वात्। त्वदीयाऽनिच्छामात्रस्याऽकिञ्चित्करत्वात्। अपि च 'अपाक्षीद्देवदत्तोऽवेही'त्यादौ शत्रादेः प्रसङ्ग एव नास्ति।**

बृहच्छब्दरत्नः

त्विष्टापत्तिरि'ति मन्दप्रतारणमपास्तम्। अन्यत्र[१] क्रियां प्रति कर्मत्वेन प्रातिपदिकार्थत्वाऽभावात्। अत एव 'पाचकं पश्ये'त्यादौ द्वितीयादिसिद्धिः। विशिष्टस्याऽप्यनतिरिक्तत्वेन विशिष्टस्य कर्मत्वे[२] विशेषण-विशेष्ययोः समानाधिकरणयोः फलाऽऽश्रयत्वात्, तद्दर्शने तात्पर्याच्च विशेषण-विशेष्ययोस्तत्त्वं दुर्वारम्। व्यधिकरणविशेषणे तु न, षष्ठ्याद्यारम्भसामर्थ्यादिति 'सुप आत्मनः क्यजि'तिसूत्रे भाष्ये ध्वनितत्वाच्च। युक्ततरं चैतत्। अन्यथा 'अरुणया पिङ्गाक्ष्ये'त्याद्युक्तावप्येकवैकल्ये वैगुण्याऽनापत्तेः। पार्ष्ठिकाऽन्वयस्य वेदतात्पर्यकत्वे प्रत्येकं विभक्त्यनापत्तिः। वेदाऽतात्पर्यकत्वे त्वयं दोषो वज्रलेपायितः। विशेष्यताप्रकारताऽतिरिक्तविशिष्ट-[३] निष्ठविषयिताकल्पने मानाऽभावाच्च। 'नीलरूपविशिष्टं घटं जानामी'त्यादौ घटादिपदोत्तरं द्वितीयाऽनापत्तेश्च। उत्कटधावनक्रियाविशेषस्यैव[४] दर्शनं कर्मतयाऽन्वयस्य प्रतिपिपादयिषितं, तत्त्वेन तदसम्भवाच्च। 'पश्य मृगो धावति' 'यो धावति तं पश्ये'त्यादिवाक्ययोर्वैलक्षण्याऽनापत्तेश्च[५]। एतेन 'मृगो धावति पश्ये'त्यादिवाक्यस्य बोधकारणताया आवश्यकत्वे 'पश्य मृगो धावती'ति वाक्यस्य कारणत्वं न कल्प्यं, गौरवादि'त्यपास्तम्। एकविषयत्वाऽभावेन लाघवगौरवतर्काऽनवताराच्च।

नास्तीति। ननु 'तण्डुलमपाक्षीद्देवदत्तोऽवेही'त्यादौ क्रियायाः कर्मत्वेन

लघुशब्दरत्नः

**भावः। गौरवादिति। एकवाक्यतयाऽन्वये सम्भवति अध्याहारेण वाक्यभेदे [६]'गौरवमि'ति भावः। ननु प्रामाणिकं गौरवं न दोषायेत्यत आह—तस्य चेति। शतृसूत्रस्थेन, भूवादिसूत्रस्थेन च मुनिवचनेन विरोध इति बोध्यम्। अकिञ्चित्करत्वादिति। 'ऋषीणामेकवाक्यतया बोधे साधुत्वस्येच्छासत्त्वे' इत्यादिः। नास्तीति। एवञ्च तत्र द्वितीया दुर्वरिति भावः। न चेदृशे स्थले विशिष्टस्य देवदत्त-मृगादेः कर्मत्वं, विशिष्टवाचकञ्च न प्रातिपदिक-**

१ 'अन्यत्र प्रक्रियान्तस्य प्रति कर्मत्वेन' इति ख. पाठः।
२ 'कर्मत्वेन' इति ख. पाठः।
३ 'विशिष्टविषयताकल्पने' इति क. पाठः।
४ 'क्रियाविशेषस्यैव दर्शने कर्मतयाऽन्वयस्य प्रतिपादयिषितत्वेन' इति क. पाठः।
५ 'वैलक्षण्याऽऽपत्तेश्च' इति ख. पाठः।
६ 'गौरवादिति भाव' इति मुद्रितेषु पाठः।

एकवाक्यत्वञ्च भाष्य-वार्त्तिकादिसकलसंमतम्। न च तिङन्तस्थले क्रिया-

बृहच्छब्दरत्नः

तण्डुलादीनां 'कर्मणा यमभिप्रैती'ति सूत्रेण सम्प्रदानसञ्ज्ञायां चतुर्थी दुर्वारेति चेन्न। 'परिपूर्णं पदं पदाऽन्तरेणाऽन्वेतुं योग्यमि'तिन्यायेनाऽन्तरङ्गत्वादेकक्रिया-निमित्तकर्मसञ्ज्ञाया दुर्वारत्वात्। अत एव 'घटं न पश्यामी'त्यादौ कर्मणि द्वितीया। 'पाचकं पश्यामी'त्यादौ कर्त्तरि ण्वुल्, 'लटः शतृशानचावि'ति सूत्रञ्च सङ्गच्छते इत्याद्यग्रे निरूपयिष्यामः।

एकवाक्यत्वमिति। 'तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकाऽन्विते'त्यमरः। अत्र 'वा'शब्दोत्तरं [1]ककारद्वयसहित, एकककारो वेति पाठद्वयं दृश्यते। वच्धातो-र्वाधातोर्वा बाहुलकात्कर्मणि क्विप्। 'क्विब्वची'त्यादिना दीर्घः। यद्वा 'वा'धातोः कर्मणि 'घञर्थे कविधानमि'ति के, ततष्टाप्। ये गत्यर्थास्ते च [2]ज्ञानाऽर्थाः। यद्वा 'वाच्या'शब्दैकदेशस्य 'वाच्'शब्दस्थ'वा'शब्दस्य [3]'भीमो' 'भीमसेन' इतिवद्ग्रहणं बोध्यम्। कुत्वन्तु लक्षणवशसम्पन्नम्। अत एव 'नब्विष-यस्याऽनिसन्तस्ये'तिसूत्रे 'नपुंसक'शब्दैकदेशो 'नप्'शब्दः, 'जे प्रोष्ठपदानामि'तिसूत्रे 'जात'शब्दैकदेशो 'जा'शब्द, 'आहौ प्रभूतादिभ्य' इतिवार्त्तिके 'आहे'ति तिङन्तैक-देशो हान्तः ([4]आह्)शब्दः, 'राजाऽसे' इत्यत्र 'समास'शब्दैकदेशः 'स'शब्द इति तत्र तत्र व्याख्यातारः। तेन कारकाऽन्वितक्रियावाचकत्वं यदा तदैव बोधकस्य वाक्यत्वम्। अत एव 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादि'ति जैमिनिसूत्रेण, 'वचोऽशब्दसञ्ज्ञायामि'तिपाणिनीयसूत्रेण च सह न विरोधः। एवञ्च 'देवदत्तः पचती'त्यस्य नैयायिकरीत्या प्रथमान्तविशेष्यकबोधे क्रियाऽन्वित-[5]कारकपरत्वाद्वाक्यत्वमेव न स्यादिति बोधितम्। तथा च 'वाक्यादेरामन्त्रित-स्ये'त्यादिकार्याणां भावलकारे चरितार्थानां कर्त्तृकर्मलकारे प्रवृत्त्यभावाऽऽपत्तौ भाष्यादिविरोधः स्पष्ट एव। 'एकतिङ् वाक्यमि'ति तु निघातयुष्मदस्मदादेश-विषयकं पारिभाषिकम्। अत एव 'वचोऽशब्दे' इति वक्तव्ये 'सञ्ज्ञायामि'ति-चरिताऽर्थम्। अन्यथा [6]'पूर्वसूत्रस्थयज्ञाऽङ्गपदेनाऽङ्गविशेषग्रहणवद्बोधकशब्दस्यैव ग्रहणेन सिद्धौ तद्वैयर्थ्यम्। तद्धि 'सम्यक् ज्ञानं सञ्ज्ञे'त्यर्थलाभाऽर्थम्। तच्चोक्तरीत्या स्पष्टमेव। एतेना'ऽमरोक्तिर्निर्मूले'त्यपास्तमित्यलम्।

भाष्यवार्त्तिकेति। इदञ्च 'लटः शतृशानचौ' 'प्रशंसायां रूपबि'त्यादिसूत्रस्थ-

१ 'क्रियावाक्कारकाऽन्विते'तिरीत्या द्विककारघटितोऽपि पाठः क्वचिदित्यर्थः।

२ 'तेऽनन्यज्ञार्थाः' इति ख. पाठः। 'तेन ज्ञानाऽर्थाः' इति क. पाठः।

३ 'भीमसेनेतिवत्' इति क. ख. पाठः।

४ अयं पाठः क. ख. नास्ति।

५ कारकाऽन्वितक्रियापरत्वाऽभावादित्यर्थः।

६ 'प्रयाजाऽनुयाजौ यज्ञाऽङ्गे' इति सूत्रस्थेत्यर्थः।

**विशिष्टक्रियाऽन्तरबोधो न जायत एवेति वाच्यम्। तथैव व्युत्पन्नानां तादृशबोधस्य दुर्वारत्वात्। 'ईदृशेऽर्थे साधुत्वं नेष्टमि'त्यपि न। साधुत्वा-**

बृहच्छब्दरत्नः

भाष्यादौ स्पष्टम्। अत एव भावाऽऽख्याते 'आख्याताऽर्थप्रकारक-धात्वर्थविशेष्यक-बोधे धातूत्तराऽऽख्यातजन्योपस्थितिः कारणमि'ति क्लृप्तकार्यकारणभावस्य कर्तृकर्माऽऽख्याते न व्यभिचारः, व्युत्पत्त्यन्तरकल्पना च न। अत एव 'कीदृशस्तण्डुल' इति प्रश्ने 'पक्वस्तण्डुल' इतिवत् 'पच्यते तण्डुल' इति नोत्तरम्। 'किं करोती'-तिप्रश्ने 'पचति देवदत्त' इतिवत् [2]'पक्ता देवदत्त' इति च नोत्तरम्। अत एव 'पचतिकल्पः', 'पचतःकल्पौ' 'पचन्तिकल्पा' इत्यादिकं न। किन्तु [3]'पचतिकल्पं' 'पचतःकल्पं' 'पचन्तिकल्पमि'त्यादिकमेव।

दुर्वारत्वादिति। बोधस्य व्युत्पत्त्यनुसारित्वात्। अत एव 'घटः, कर्मत्वम् आनयनं, कृतिरि'ति वाक्यं विपरीतव्युत्पन्नस्य न निराकाङ्क्षमि'ति शास्त्रकृतां व्यवहारः। स्यादेतत्। 'कृष्णं नमेच्चेत्सुखं यायात्' 'भुक्त्वैव तृप्तो, न पीत्वे'त्यादौ कर्तृकर्मेतरकारकाऽन्वयोऽस्त्येव। किञ्च 'पचतिकल्पं पश्य' 'पचतिरूपं पश्ये'त्यादौ पदार्थत्वेन प्रकारत्वाऽभ्युपगमेऽपि सत्त्वं नेष्टमिति स्पष्टं भाष्यादौ। किञ्च 'तेन तुल्यं क्रिया चेद्वतिरि'तिसूत्रे 'येनोपमीयते, यश्चोपमीयते, यश्च तयोः साधारणो धर्मः-एतत्त्रितयमपेक्ष्योपमेयोपमानभावः प्रवर्त्तते। तत्र यदा क्रियोपमानत्वेन तदा साऽवश्याऽपेक्ष्यसाधारणधर्माऽऽधारत्वात् क्रियारूपतां हित्वा सत्त्वरूपतां प्रतिपद्यते' इति भाष्याऽर्थप्रतिपादककैयट-हरदत्तादिरीत्याऽऽख्यातोपात्तक्रियायाः सर्वत्रैव सत्त्वं दुर्वारम्। 'रोदितीव पठती'त्यादौ क्रियया उपमेयोपमानभावस्य सत्त्वात्। सङ्कुचितगलबिलादिजन्यत्वं समानो धर्मः। न चाऽयं कर्त्रोरेवोपमानोपमेयभावोऽस्त्विति वाच्यम्। विनाप्रमाणमनुभवाऽपलापस्याऽप्रयोजकत्वात्। 'रोदक इव पाठकः' 'रोदितीव पठती'त्यनयोर्वैलक्षण्याऽनापत्तेश्च। एतेन 'प्रत्ययोत्तरमिवशब्दश्रवणेन धात्वर्थयोरुपमानोपमेयभावो दुर्लभ' इत्यपास्तम्। तिङन्तोत्तरमिवशब्दश्रवणेन तदर्थयोरुपमानोपमेयभावस्य सुलभत्वात्। तदर्थश्च विशेष्यत्वेन क्रियैव। अत एव 'रामकृष्णाविवे'त्यत्र पूर्वपदाऽर्थयोरुपमानापमेय-

लघुशब्दरत्नः

**मिति न दोषः, 'श्रुत्वा ममैतन्माहात्म्यं, तथा चोत्पत्तयः शुभा' इतिवदिति वाच्यम्। नीलत्वविशिष्टघटस्य कर्मत्वे प्रतिपादनीये 'नीलं घटमि'त्यादौ द्वितीयाऽनापत्तेः। 'श्रुत्वे'त्यादि त्वार्षमित्यलं मुनिविरुद्धविचारेण। 'क्रियाप्रधानमि'त्यत्र क्रियायाः प्राधान्यमाख्यातघटकप्रत्ययाऽर्थाऽपेक्षयैव बोध्यतेऽतो दृश्यादिकं प्रति धावनादेर्विशेषणत्वेऽपि न क्षतिरिति दिक्।**

१ 'त्यक्ता' इति क. ख. पाठः।

२ 'पचति पचतः पचन्ति, पचतःकल्पम्' इति ख. पाठः।

ऽनुशासनाऽर्थं प्रवृत्तैरेव तस्य [1]स्वीकारात् । धातुसम्बन्धाऽधिकारव्युत्पादिते 'पुरीमवस्कन्दे'त्यादौ तस्याऽऽवश्यकत्वाच्च । ननु सिद्धान्ते आख्यातवाच्य-क्रियाया अपि कर्तृत्व-कर्मत्वस्वीकारे तस्या असत्त्वरूपत्वं भज्येतेति चेन्न । लिङ्गसङ्ख्ययोः, कर्तृकर्मेतरकारकस्य चाऽभावमात्रेण तथात्वोपपत्तेः, कर्मत्व-स्य प्रकारतया [2]भानाऽनभ्युपगमाद्वेत्यन्यत्र विस्तरः ।

बृहच्छब्दरत्नः

[3]भावप्रतीतिः। किञ्च इव-वादीनामन्यत्राऽपि दृश्यते—'उद्बाहुरिव वामनः' 'प्रकृतिवच्च कारकमि'त्यादौ यथा। उक्तञ्च दण्डिना—'कर्त्ता यद्युपमानं स्या-न्न्भूतोऽसौ क्रियापदे। स्वक्रियासाधनव्यग्रो नाऽलमन्यदपेक्षितुमि'ति। अपि च—'तिङ्ङतिङ' इतिसूत्रस्थाऽतिङ्ग्रहणप्रत्याख्यानपरभाष्यविरोधः। उक्तरीत्या समानवाक्ये तिङ्द्वयस्य लाभेन तद्व्यावृत्त्यर्थं तस्याऽऽवश्यकत्वात्। किञ्च 'पचति-कल्पं देवदत्त' इत्यादौ भेदेनाऽन्वयो वक्तुमशक्यः। समानविभक्तिकत्वात्। विरुद्धविभक्तिराहित्याच्चेत्याशङ्कयाऽऽह—अन्यत्र विस्तर इति।

अयमर्थः—'सिद्धसाध्यसमभिव्याहारे सिद्धः साध्यायोपयुज्यते' इति न्यायेनो-त्तरकाले करणत्वबोधेऽपि, शाब्दबोधे करणत्वादेरभानात्, हेतुत्वस्याऽकारकत्वात्, कर्तृकर्मपदेन क्रियाऽऽधारकारकोपलक्षणाच्च नोक्तदोषः। एतेन 'उद्भिदा यजेते'-त्यादौ करणत्वसम्बन्धाद्दोष' इत्यपास्तम्। स्ववाचकोत्तरद्वितीयादिप्रतिपाद्यकर्म-त्वादेः प्रकारताऽनभ्युपगमाच्च। 'तेन तुल्यमि'तिसूत्रस्थकैयटादीनां त्वयमाशयः—'राजशयितव्येन तुल्यं देवदत्तशयितव्यं' 'स्थातव्येन तुल्यं गमनं, मन्दत्वादि'त्यादा-वुपमानाऽर्थस्य न क्रियात्वम्। तृतीयाऽन्ताद्वतेर्विधानेन तुल्ययोगे तृतीयाया दुर्वारत्वाच्च। नामाऽर्थयोर्विभक्त्यर्थमद्वारीकृत्याऽभेदेन सम्बन्धेनाऽन्वयस्या-

लघुशब्दरत्नः

भाष्येति (६३६ पृष्ठे)। भूवादिसूत्रस्थं भाष्यम्। 'पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ती'-ति तत्रोक्तम्। वार्त्तिकम्—शतृविधायकस्थम्। तस्य=क्रियाविशिष्टक्रियाबोधस्य। कर्मत्व-स्वीकारे इति। क्रियाऽन्तरनिरूपिततत्स्वीकारे इत्यर्थः। कारकस्य=करणादिकारकशक्तेः। 'हरिं नमेच्चेत्सुखं यायादि'त्यादौ हेतु-हेतुमद्भावेनाऽन्वयो, न क्रियाकारकभावेनेति न दोषः। स्ववाचकधात्वर्थं प्रति तु कर्मत्वाऽन्वयः, करणत्वाऽन्वयश्च नाऽसत्त्वरूपताप्रतिबन्धकः, 'शोभनं पचति' 'ज्योतिष्टोमेन यजेते'त्यादौ दर्शनात्। अन्यत्रेति। 'कर्मत्वस्य सर्वत्र संसर्गतैवे'ति-

[1] 'तत्स्वीकारात्' इति ङ. पाठः।

[2] 'भान' इत्ययं पाठः च. पुस्तके एवोपलभ्यते, नान्यत्र।

[3] 'उपमानोपमेयभावः। प्रतीतिश्चैवम् इववादीनाम्' इति पाठान्तरम्।

बृहच्छब्दरत्नः

ऽव्युत्पन्नत्वाद्विभक्त्यर्थेऽन्वयस्य [1]दुर्वारत्वाच्च। 'राजशयितव्यादागत' [2]इत्यादौ कारकाऽन्वयस्य सत्त्वाच्च। [3]ब्राह्मणादिसहचरिताऽध्ययनादौ ब्राह्मणादिपदानां लक्षणायामपि निरूपितरीत्या न क्रियात्वम्। भूतपूर्वगत्या क्रियात्वग्रहणे तु सर्वत्रैव[4] वतिप्रत्यय' इति तत्रैव स्पष्टम्। 'रोदितीव पठती'त्यादौ तु नैवमिति न क्रियात्व-सत्त्व-हानिः। प्रातिपदिकत्वाद्यभावेन तृतीयाद्यप्राप्तेः। न च 'रोदिती'त्याख्याता-ऽर्थाऽपेक्षया इवाऽर्थस्य विशेष्यत्वे 'भावप्रधानमाख्यातमि'ति वचनविरोध इति वाच्यम्। इवाऽर्थस्याऽसत्त्वरूपत्वेन विशेष्यत्वे[5] बाधकाऽभावात्। उक्तवच-नेन सत्त्वाऽर्थकं प्रतिपद्य [6]विशेष्यत्वाऽबोधनात्। अत एव आख्याताऽन्तक्रिययोः परस्परं विशेषण-विशेष्यभावः। अत एव 'पचती'त्यत्रेव 'पचत्येवाऽयमि'त्यादौ। भावनाया असत्त्वाऽर्थकत्वेन क्रियां प्रति विशेष्यत्वाऽसम्भवात्, विभक्त्यर्थाऽद्वारेण धात्वर्थ-नामाऽर्थयोः सम्बन्धस्याऽव्युत्पन्नत्वाच्च। अत एव 'रोदितिकल्पेन तुल्यं पठती'ति वाक्यं न। ध्वनितं चेदं भाष्ये। सन्विधायकसूत्रस्थभाष्यन्तु 'पश्य मृगो धावती'त्यादौ कर्तृकर्मकारकाऽन्वयेऽपि सर्वनाम-परामर्शाऽयोग्यत्वमसत्त्वमि'-त्यादिलक्षणानां सत्त्वेन क्षत्यभावाच्च। अत एव 'पश्य मृगो धावतिकल्पमि'-त्यादौ कर्मत्वस्य प्रकारत्वेऽपि न क्षतिः। लिङ्गसङ्ख्याऽनन्वयित्वमात्रेणाऽसत्त्व-सत्त्वात्। अत एव 'पचतिकल्पादागत' इत्यादावपादानत्वाऽनन्वयेऽपि न क्षतिः। 'सर्वासां विभक्तीनामेकवचनमि'त्येव पक्षो युक्तः। 'तृतीयासप्तम्योर्बहुलमि'त्यादि-प्रामाण्यात्। यत्र तु कारकत्वाऽभावस्तत्र तु प्रथमाया एव एकवचनमिति बोध्यम्। 'न हि कार्यी निमित्तत्वेनाऽऽश्रीयते' इति परिभाषया तिङ्भिन्नमेव पदं निमित्तत्वेन[7] गृह्यते इति न दोषः। किञ्च 'पश्य मृगो धावती'त्यादौ लौकिकैकवाक्यत्वसत्त्वेऽपि 'एकतिङ् वाक्यमि'ति पारिभाषिकैकवाक्यत्वाऽभाव इति भाष्याऽऽशयः। 'राज्ञः पुरुषस्य पुत्र' इत्यादौ द्वयोरपि व्यभिचरितत्वेन बोधं प्रति व्युत्पत्तिवैचित्र्यस्यैव नियामकत्वात्। किञ्च प्रथमाऽन्तस्य न भावनायामन्वयः, समानपदोपात्तत्व-श्रुत्याऽऽश्रयाऽन्वयेन निराकाङ्क्षत्वात्। किन्त्वाश्रयस्य विशेषाऽऽकाङ्क्षायाः सत्त्वेनाऽऽख्यातोपात्ताऽऽश्रये। तस्य तु न[8] नामाऽर्थत्वम्। ध्वनितञ्चेदं 'तिङ्-समानाधिकरणे प्रथमे'त्यादिभाष्यवार्त्तिकादिग्रन्थैः। यत्तु 'क्रियाविशेष्यकबोधे

१ 'दुर्वारत्वेन' इति क. ख. पाठः।
२ 'राजशयितव्यादागच्छति' इति वा पाठः।
३ 'ब्राह्मणादिसहचरिताऽध्यनादिपदानां लक्षणायामपि' इति ख. पाठ,।
४ 'सर्वत्र वतिप्रत्ययः' इति ख. पाठः।
५ 'विशेष्यत्वेन' इति ख. पाठः।
६ 'प्रतिपद्य' इति ख पाठः।
७ एकवाक्यत्वस्य निमित्तत्वेनेत्यर्थः।
८ 'तस्य तु नामार्थत्वम्' इति ख. पाठः

**अभिहिते त्विति । नन्वेवं 'पक्वमोदनं भुङ्क्ते' इत्यत्राऽपि द्वितीया न स्यादिति चेन्मैवम् । इह हि पचि-भुजिनिरूपिते द्वे कर्मत्वशक्ती । तत्र प्रधान-क्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयोत्पत्तेः । उक्तञ्च हरिणा—**

**'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।**
**शक्तिर्गुणाऽऽश्रया तत्र प्रधानमनुरुद्धयते ॥**
**प्रधानविषया शक्तिः प्रत्ययेनाऽभिधीयते ।**
**यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते' ॥ इति ।**

---

बृहच्छब्दरत्नः

उद्देश्यविधेयभावाऽनुपपत्तिरि'ति । तन्न । निर्हेतुकसाध्याऽसिद्धेः । [1]विशेष-रूपेणाऽऽश्रयस्य पदाऽन्तरोपादानेन तात्पर्यवशात्तदुपपत्तेश्चेत्यलम् ।

द्वितीयोत्पत्तेरिति । अप्रधानक्रियानिमित्ताऽभिहितत्वमादाय प्रथमोत्पत्तौ विभिन्नविभक्तित्वादभेदाऽन्वयाऽनापत्तावभिहितत्वस्यैवाऽनापत्तिः । तथा चा-

---

लघुशब्दरत्नः

भाष्यसंमतपक्षे त्वाद्यमेव सारम् । अभिहिते त्वितीति । तिङादिभिः कर्मादिशक्तेरभिधाने प्रातिपदिकस्योद्भूततच्छक्तिकेऽर्थे वर्त्तमानत्वाऽभावाद् द्वितीयादेः कर्मादिशब्देभ्य इवाऽप्राप्ति-रिति भावः । न स्यादितीति । पच्धातूत्तरनिष्ठयाऽभिधानादिति भावः ।

गुणाऽऽश्रया=गुणनिरूपिता । प्रधानम्=प्रधानक्रियानिरूपितां शक्तिम् । अनु-रोधमेव विशदयति—प्रधानविषयेति । 'गुणेऽनुक्ताऽपि तद्वत्=उक्तवत्प्रतीयते । तुल्य-न्यायात् गुणनिरूपिता उक्ताऽपि प्रधाननिरूपिताऽनुक्तशक्तिवत्प्रकाशते' इति । अत एव 'प्रासादे आस्ते' इत्यादौ सदिनिरूपिताऽधिकरणत्वस्योक्तत्वेऽप्यासिनिरूपितस्याऽनभिधानेना[2]-ऽनभिहितत्वात्सप्तमीसिद्धिः । इदञ्च स्वादुमि णमुल् (३।४।२६) इति सूत्रे भाष्ये स्पष्टम् । तत्रत्यभाष्याऽर्थाऽनुवादिन्यौ चेमे हरिकारिके इत्यन्यत्र प्रपञ्चितम् । एवमुभयनिरूपितशक्तेर-नभिधाने गुणक्रियानिरूपितशक्तेरप्यभिधायिनी विभक्तिर्भवति । यथा 'ग्रामाय गन्तुमिच्छति' 'ग्रामं गन्तुमिच्छती'ति च । 'इष्यते ग्रामो गन्तुमि'त्यादौ प्रधानेषिक्रियानिरूपितशक्तेरभिधाने गुणनिरूपिताया अप्यभिधानान्न कदाऽपि चतुर्थी-द्वितीये । 'गमेर्ग्रामः कर्म, इषेस्तूभे कर्मणी' इति [3]सन्सूत्रे भाष्ये स्पष्टम् । एवञ्चोभयत्राऽप्यावृत्त्या [4]शाब्दोऽन्वय इत्येव प्रतीयते, 'अत्र

---

१ 'विशेषरूपे त्वाणाश्रयपदस्य पदान्तरोपाधानेन' इति ख. पाठः ।

२ 'आसिनिरूपितस्य तस्याऽनभिधानेन' इति घ. पाठः ।

३ 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (३।१।७) इति सन्विधायकं सूत्रम् । 'तत्सूत्रे' इति मुद्रितेषु पाठः ।

४ 'शाब्दोऽन्वयः प्रतीयते' इति मुद्रितः पाठः ।

अत एव 'पक्त्वौदनो भुज्यते' इत्यत्र भुजिप्रत्ययेनाऽभिहिते प्रथमैव। पचेरप्राधान्यात्। वस्तुतस्तु 'पक्त्वा भुज्यते' इत्यादौ कर्मणः पचि-भुजिभ्यां न युगपच्छाब्दोऽन्वयः, किन्त्वन्यतरेण शाब्दोऽपरेणाऽऽर्थः। तत्र च प्रथमा-द्वितीये व्यवस्थिते एव। तद्यथा—'पक्त्वा भुज्यते ओदनः'। किं पक्त्वा ?।

---

बृहच्छब्दरत्नः

ऽनियत एव प्रयोग इति भावः। पक्त्वा भुज्यते इत्यादाविति। 'आदि'पदग्राह्यन्तु 'पक्त्वा सूपौदनं रोटिका [1]भुज्यन्ते' इति बोध्यम्। न युगपदिति। जनिताऽन्वयबोधेन नैराकाङ्क्ष्यात्। किञ्चैकत्र विशेषणत्वेनाऽन्वितस्याऽपरत्र विशेषणत्वेनाऽन्वयो दुर्वचः। अपि च 'ओदन' इति प्रथमाऽन्तस्य कर्मतासंसर्गेण धात्वर्थेऽन्वयोऽव्युत्पन्नः। नामाऽर्थप्रकारकधात्वर्थविशेष्यकबोधे भेदेन सम्बन्धेन विभक्तिजन्योपस्थितेः कारणतायाः सर्वतन्त्रसिद्धत्वात्। 'कर्मणि द्वितीयैवे'त्यादिनाऽसाधुत्वबोधनाच्च। द्वितीयाऽन्तस्य तु 'भुज्यते' इति क्रियाऽन्वयाऽयोग्यत्वं स्पष्टमेव। नन्वेवं 'मया भुक्त्वा व्रजामी'ति प्रयोगाऽऽपत्तिः, क्त्वाऽन्तेन शाब्दाऽन्वयविवक्षायां क्त्वाप्रत्ययस्य [2]कर्त्रवाचित्वेन तृतीयाया दुर्वारत्वादिति चेत्। अत्रोच्यते—'क्त्वा'-प्रकृत्यर्थक्रियायाः सामानाधिकरण्यसम्बन्धेन [3]प्रधानक्रियायामन्वयः। तत्र क्त्वाप्रत्ययस्य तात्पर्यग्राहकत्वमिति सूत्र-वार्त्तिक-भाष्यादिसंमतं, युक्तिसिद्धञ्चेति तावन्निर्विवादम्। एवञ्च धातूपात्तव्यापाराऽऽश्रयस्यैव कर्तृत्वेन 'क्त्वा'प्रकृत्युपात्तक्रियायाः कर्त्रंशे पार्थक्येनाऽऽकाङ्क्षाया अभावात्। कर्मादौ तु पार्थक्येनाऽऽकाङ्क्षाऽस्त्येव। 'मया भुक्त्वाऽहं व्रजामी'ति प्रयोगोऽप्यत एव न। 'स्वादुमि णमुलि'त्यादिसूत्रस्थभाष्यादिस्वरसोऽप्येवमेव। एतेन 'सर्वत्रैव विवक्षाभेदेन

---

लघुशब्दरत्नः

प्रयोगे गमिक्रियाऽपेक्षे द्वितीया-चतुर्थ्यौ न कदाऽपि भवत' इति कैयटात्। एवञ्चैतद्विरोधादोदनं [4]पक्त्वेत्यपीष्टमेवेति यत्केन चित् प्राचीनेन 'वस्तुतस्तु पक्त्वे'त्यादिना 'साध्वि'त्यन्तेनोक्तं, तदतितुच्छमिति बोधयन्[5] 'स्वरूपव्याक्रियैव[6] पराक्रिये'ति न्यायेन तथैवाऽनुवदति—वस्तुतस्त्वित्यादिना। अत एव स्वादुमि (३।४।२६) इति सूत्रे भाष्ये—'तुमुन्-क्त्वा-णमुलादयः स्वाऽन्वयिना समभिव्याहृतेनाऽनुप्रयुज्यमानेन समानाधिकरणे तद्वाच्यकारके वक्तव्याः'। तेन 'पक्त्वौदनो भुज्यते' इत्यादावोदने द्वितीया न। अन्यथा कृत्वादस्य कर्त्तर्यापत्तौ पचिक्रिया-

---

१ 'भुज्यते' इति ख. पाठः।

२ 'कर्त्रवाचकत्वेन' इतिवा पाठः।

३ 'प्रधान'पदं ख. नास्ति।

४ 'पक्त्वेत्यपास्तमेवेति' इति मु. पाठः।

५ 'तदतितुच्छमिति बोध्यम्' इति मुद्रितेषु पाठः।

६ 'स्वरूपव्याक्रियैव च' इति मुद्रितेषु पाठः।

**अर्थादोदनम्। यदा तु 'ओदनं पक्त्वा भुज्यते' इति प्रयुज्यते, [1]तदा 'भुज्यते' इत्यत्राऽर्थादोदन इति गम्यते। एवञ्च विवक्षाभेदेन 'पूजयितुं**

बृहच्छब्दरत्नः

प्रयोगद्वये प्रागुक्तहरिग्रन्थो निर्विषय एवे'तिशङ्काऽपि समाहिता। वस्तुतस्तु कारकाऽन्वयं विना क्रियास्वरूपस्य वक्तुमशक्यत्वात्, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वेन च 'परिपूर्णं पदं पदाऽन्तरेणाऽन्वेतुं योग्यमि'ति न्यायाच्च, साधुत्वज्ञानस्याऽहेतुत्वाच्च,[2] असाधुत्वज्ञानस्याऽप्रतिबन्धकत्वाच्च, सङ्कोचे मानाऽभावाच्च। 'ओदनं पक्त्वा भुज्यते' [3]इत्यादिवत्, 'चैत्रेण पक्त्वा भुङ्क्ते' इत्यादि भवत्येव। 'यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते' इति [4]हरिकारिकयोक्तप्रयुक्तकार्यं बोध्यते, न तु स्वनिष्ठाऽनुक्तप्रयुक्तकार्यव्यावृत्तिः। वतिघटितवाक्येन तादृशाऽर्थस्यैव बोधनात्। एवञ्च 'क्त्वा'प्रत्ययस्य [5]कर्त्तृवाचित्वे ईदृशप्रयोगाऽनापत्तिरिति दोषो बोध्यः। वस्तुतस्तु न्यायाऽऽभासमूलत्वेन हरिग्रन्थस्य भाष्यग्रन्थानामिवाऽशुद्धत्वे क्षत्यभावः। [6]'हरिं पूजयितुं दर्शनमस्ती'त्यादौ हरिपद्याऽविषये पितामहचरणोक्तेरेव शरणीकर्त्तव्यत्वादित्यग्रे निरूपयिष्यामः।

पूजयितुं शक्यते इति। 'शक्यते' इत्यत्र 'पूजयितुं' [7]'हरिरि'त्युभयं कर्म। अत एव 'जिगमिषितव्यो ग्राम' इत्यादौ ग्रामादिकर्मणि कृत्यादयः। न च हरित्वेन रूपेण हरिः शक्यः; किन्तु पूज्यत्वेनेति पूजनं प्रत्यपि हरेः कर्मत्वमस्त्येव।

लघुशब्दरत्नः

**कर्मत्वस्याऽनभिधानात्सा स्यादेवे'त्युक्त्वा, 'न वक्तव्यम्, अव्ययकृतां भावे विधानादि'त्युक्तम्। अनेन हि भाष्येणोभयत्र शाब्दाऽन्वय एव लभ्यते। तत्र वचनाऽऽरम्भे एषां प्रयोगाणामुपपत्त्यभावात्, प्रत्याख्यानेऽपि हर्युक्तरीत्या सनादिसूत्रस्थभाष्यसंमतया-[8]ऽभाव एवोचितः। एवञ्च कैयटोक्तं 'क्षुधं प्रतिहन्तुं शक्यमि'त्यप्यसाध्वेव। वचनाऽऽरम्भेऽसिद्धेः। तुमुनाद्यन्वयिक्रियानिरूपितशक्तेरयं स्वभावो, यत्स्वसमानाधिकरणगुणभूततुमुनादिप्रकृत्यर्थंनिरूपितशक्तेः स्ववदभिहितत्वेन, अनभिहितत्वेन वा प्रकाश इति सुधियो विभावयन्तु।**

[1] 'तदा किं भुज्यते इति, अर्थादोदन इति गम्यते' इति ङ. पाठः।
[2] हेतुत्वाच्च' इति क. पाठः।
[3] अत्र 'इत्यादिवैचित्र्येण' इत्यपि पाठः सम्भवति। अक्षराणामस्फुटत्वात्।
[4] 'हरिकारिकायाम् उक्तकार्यं बोध्यते' इति ख. पाठः।
[5] 'कर्त्रवाचित्वे' इति पाठान्तरम्। 'ईदृशप्रयोगाऽऽपत्तिरिति दोषः' इति ख. पाठः।
[6] 'हरिं पूजयितुम्' इति क. ख. पाठः।
[7] 'हरित्युभयम्' इति ख. नास्ति।
[8] अत्र 'भाष्यसंमतया रीत्ये'त्यन्वयः। 'संमतया' इति क्वचिन्मुद्रिते पाठः।

शक्यते हरिः,' हरिं वे'त्युभयं साधु। प्राप्तानन्द इति। आनन्दकर्तृक-प्राप्तिकर्मीभूत इत्यर्थः।

यदुक्तं 'प्रायेणे'ति, तस्य फलमाह–क्वचिदिति। विषवृक्ष इति। यदि तु वर्द्धि-च्छिद्योरन्यतरेण सह कर्मतयाऽन्वयो विवक्ष्यते, तदा द्वितीया

---

बृहच्छब्दरत्नः

अत एव [1]'ग्रामाय गन्तुं शक्यते' इति सिद्धम्। 'गत्यर्थकर्मणी'ति चतुर्थ्या विधानात्। [2]शक्ति प्रत्यन्वयस्तु 'एकत्र द्वयं' 'विशिष्टस्य वैशिष्ट्यं' 'विशेष्ये विशेषणं, तत्र च विशेषणाऽन्तरमि'ति वा बोध्यः। ध्वनितञ्चेदं पस्पशायां भाष्यकैयटयोः। स्पष्टञ्च सन्निधायकसूत्रे कौस्तुभे। एवं विवक्षाभेदेन 'ग्रामो गन्तुं शक्यते,' 'ग्रामाय गन्तुं शक्यते' इति प्रयोगद्वयं बोध्यम्।

तस्येति। नन्वेवं फलविशेषणे 'स्तोकं पचती'त्यादौ द्वितीया न स्यात्, धातुना फलस्योक्तत्वात्, किञ्च 'सुन्दरो घटः कृत' इत्यादाविव 'सुन्दरं घटं करोती'-त्यादावपि विशेषणे द्वितीया न स्यात्, विशेषणे[3] विशेष्योत्पन्नद्वितीययैव कर्मत्व-स्योक्तत्वादिति चेन्न। धातुना विक्लित्तित्वादिरूपेण विक्लित्तेरुक्तत्वेऽप्यत्र यत्नेन रूपेणाऽनुक्तत्वाद् द्वितीया दुर्वारा। अत एव 'तण्डुलं पचती'त्यादौ द्वितीया। द्वितीयाऽनुत्पत्तौ समानविभक्तिकत्वाऽभावेन विशेषणविशेष्यभावस्यैवाऽनवगमेना-ऽनभिहितत्वस्य सत्त्वात्। किञ्च 'प्रत्ययानां प्रकृत्यर्थाऽन्वितस्वार्थबोधकत्वमि'ति व्युत्पत्त्या घटत्वविशिष्टघटस्य कर्मत्वोक्तावपि सौन्दर्यादिविशिष्टस्य कर्मत्वाऽनुक्त-त्वेन सुन्दरादिपदेभ्यो द्वितीयादीनां दुर्वारत्वम्। 'सुन्दराभ्यां कृतं' 'घटाभ्यां कृतमि'ति विभिन्नवाक्ये क्रियाऽन्वयस्य क्लृप्तत्वात्। क्रियांऽशे उत्थिता-ऽऽकाङ्क्षायाः सत्त्वाच्च। एतेन 'विशेषणविभक्तिः [4]साधुत्वाऽर्था, अभेदिका वे'-त्यपास्तम्। विशेषण-विशेष्यभावस्य नियन्तुमशक्यत्वाच्च। वाक्याऽर्थबोधात् पूर्वं विशेषण-विशेष्यभावाऽनवगमाच्च। [5]कृत्यप्रत्ययस्तु न प्रकृत्यर्थस्य कर्मता-

---

लघुशब्दरत्नः

अन्यतरेण सहेति। इदं प्रागुक्त'वस्तुतस्त्वि'त्यादिरीत्योक्तं तद्वदेवेति बोध्यम्। ([6]छिद्योरन्यतरेणेति। 'छेत्तुमि'ति तुमुन एकां क्रियामादाय साधुत्वमित्यन्यत्र प्रपञ्चितम्)।

---

[1] 'ग्रामाय आगन्तुम्' इति क. पाठः।

[2] शक्तिम्' इति ख. पाठः।

[3] 'विशेषणे' इति क. नास्ति।

[4] 'साधुत्वार्थाः, अभेदिकाऽर्था वा' इति क. पाठः।

[5] 'कृत्यस्तु' इति ख. पाठः।

[6] एतदन्तर्गतोऽयं पाठो घ. पुस्तके एव वर्त्तते। नाऽन्यादर्शेषु।

**स्यादेवेति ध्येयम्। तृणं स्पृशतीति। यथा स्पृश्यमानस्य गङ्गादेरीप्सितस्य क्रियया योगस्तज्जन्यसंयोगाऽऽदिफलाऽऽधारत्वात्, तथैवाऽनीप्सितस्य तृणादेरपीति भावः। स्यादेतत्–'धातूपस्थाप्यफलशालि कर्मे'त्येवाऽस्तु, किमीप्सिताऽनीप्सितयोः पृथक्कथनेनेति चेन्मैवम्। 'अग्नेर्माणवकं वारयती'त्यत्र**

---

बृहच्छब्दरत्नः

माचष्टे, किन्तु स्वप्रकृत्यर्थं प्रति यस्य कर्मभावः। [1]स चोभयोरपि। अत एव सर्वेषां कारकत्वाऽविशेषेण विनिगमनाविरहाद्भावनायामन्वयः। तस्माद्विशेषण-विशेष्ययोः समानविभक्तिकत्वमेव युक्तम्।

ननु 'ग्रामं गच्छन्नि'ति व्यर्थमित्याशङ्क्याऽऽह—यथेत्यादि। तथैवेति। तथा च कर्तृसम्बन्धस्तुल्यः। [2]'अनीप्सितस्ये'त्यनीप्सितग्रहणं तद्भिन्नबोधकम्। तेन द्वेष्यो-दासीनयोः सङ्ग्रहः। फलशालि कर्मेति। न चैवं 'घटं जानामी'त्यादौ कर्मत्वं न स्यादिति वाच्यम्। विषयताया, ज्ञातताया, आवरणभङ्गस्य वा फलत्वेनाऽङ्गीकारेणाऽदोषात्। 'विषयतासम्बन्धेन ज्ञानमेव फलमि'त्यपि कश्चित्। न चैवं विक्लित्त्यादेः कर्मत्वं न स्यादिति वाच्यम्। फल-व्यापारयोर्जन्यजनकभावेनाऽन्वयाज्जन्यत्वरूपफलस्य तत्र सत्त्वात्। न ह्येकपदोपस्थाप्ययोर्जन्य-जनकभावेन नाऽन्वय इति राज्ञामाज्ञाऽस्ति। संसर्गस्याऽपि धातूपस्थाप्यत्वात्, धातूपस्थाप्यत्वं पदार्थविधयैवेति नाऽऽग्रहः। 'धातुमात्रोपस्थाप्यत्वमि'ति विवक्षया 'तृप्तिं पचती'त्यादि नेति बोध्यम्। न हि धात्वधात्वोः संसर्गो धातुमात्रो-पस्थाप्यः। नष्टघटस्याऽपि बुद्ध्यारोहात्फलशालित्वमस्त्येव। [3]सत्कार्यवादा-ऽभ्युपगमे तु न दोषशङ्का। इदञ्च यथान्यासेऽप्यावश्यकम्।

---

लघुशब्दरत्नः

**मैवमिति। 'ग्रामं गच्छती'त्यादावीप्सिततमत्वोपलक्षितमुद्देश्यत्वं भासते। एतत्सूत्रबोध्य-कर्मत्वशक्तेरुद्देश्यतासमानाधिकरणत्वात्। अत एव 'कर्मणा यमभिप्रैति' (१।४।३२) इति सूत्रे 'कर्मणे'त्यस्याऽभावे 'गां ददाती'त्यत्र गोरप्युद्देश्यतया तत्रैव पर्यायेण सम्प्रदानसञ्ज्ञा स्यादि'ति भाष्य-कैयटोक्तं सङ्गच्छते। चतुर्थ्या उद्देश्यत्वं वाच्यं, तत्समानाधिकरणशक्तिर्वेति सर्वसंमत-मिति भावः। फलाऽन्तरमप्याह—अग्नेरिति। ईप्सिततमपदाऽभावे वारणार्थानाम् (१।४। २७) इत्यस्यैव तदपवादत्वाऽऽपत्तेः। न चाऽग्नौ तच्चरिताऽर्थम्। तस्याऽपि तदुपस्थाप्य-संयोगरूपफलाऽऽश्रयत्वात्। वारयतेश्च संयोगाद्यनुकूलव्यापाराऽभावाऽनुकूलव्यापारोऽर्थः।**

---

[1] स च=कर्मभावश्च। उभयोरपि=विशेषणविशेष्ययोरुभयोरपीत्यर्थः।

[2] 'अनीप्सितस्येति' इति ख. नास्ति।

[3] 'तत्कार्यबाधाभ्युपगमे' इति क. ख. पाठः।

वारणार्थानाम् (१।४।२७) इति सूत्रेण माणवकस्याऽपादानत्वं प्राप्तं, तद्बाधाय[1] कर्त्तुरीप्सिततमम् (१।४।४९) इति वक्तव्यमेव। एवञ्च द्वेष्योदासीनयोः

---

बृहच्छब्दरत्नः

वारणार्थानामिति। [2]'वृञ् वारणे' चुरादिः। वारणं प्रवृत्तिविघातः, विभागाऽनुकूलव्यापारो वा। न च 'कूपादन्धं वारयती'त्यादौ कूपादेरपादानत्वं न स्यात्, (तत्र) वारयितुर्वार्यमाणस्य चाऽनभिप्रेतत्वादिति वाच्यम्। 'ईप्सित'-शब्दस्य यौगिकस्यैव ग्रहणात्। यद्यप्याद्यपक्षे अन्धादेरेव वारयितृनिष्ठव्यापार-जन्यप्रकृतधातूपात्तफलशालित्वेनेप्सिततत्वं, तथाऽपि सङ्कोचे मानाऽभावेन वारण-शब्दवाच्यकोटौ प्रवृत्तेरपि प्रविष्टत्वेन वार्यमाणनिष्ठ-गमनव्यापार-जन्यफल-शालि-त्वेन कूपादेरपीप्सिततत्वं बोध्यम्। द्वितीयपक्षे तु विभागस्योभयनिष्ठत्वाद्वारयितृनिष्ठ-व्यापार-जन्यफल-शालित्वमुभयोः स्पष्टमेव। संयोगस्यैवाऽभावात्, सिद्धविभाग-परिपालनमात्रेण फलत्वमिति बोध्यम्। अत एव मुख्याऽपायस्याऽभावाद्वारणार्था-नामितिसूत्राऽऽरम्भः। प्राप्तमिति। अपवादत्वेनेति भावः। तद्बाधायेति। 'परत्वेने'-ति शेषः। ईप्सिततममितीति। 'ईप्सित'शब्दो यौगिक इति तावन्निर्विवादम्। तत्र चाऽतिशयोऽयमेव [3]यत्पूर्वेच्छाविषयत्वम्। क्रिया हि फलेच्छापूर्वकेच्छाविषयः। फलन्त्विष्टतमम्। तद्विशिष्टत्वेन तण्डुलादिकमपि। तत्र 'कर्त्तुरीप्सिततममि'ति सूत्रे 'कर्त्तुरि'त्युपादानेन प्रकृतधातूपात्तव्यापारस्यैव 'केने'त्याकाङ्क्षया पूर्वोक्तरीत्या-ऽन्वयाच्च प्रकृतधातूपात्तव्यापाराऽऽश्रय-प्रवृत्त्युद्देश्यस्य माणवकादेरेवेप्सिततमत्वम्। अत एव 'गौणे कर्मणि दुह्यादेरि'त्यादिकं सङ्गच्छते। एतेन 'तृप्तिकामस्तण्डुलं पचेदि'त्यादौ 'तथायुक्तमि'त्यनेन कर्मत्वम्, 'ग्रामं गच्छन् तृणं स्पृशती'ति मूले 'ग्रामं गच्छन्नि'त्युपन्यासो व्यर्थ' 'इत्यपास्तम्। नन्वग्नेर्माणवकं वारयति, 'पयसौदनं भुङ्क्ते' इत्यादावेव प्रतियोगिसत्त्वेन कर्मसञ्ज्ञायाश्चरितार्थत्वेन 'ग्रामं गच्छती'त्यादौ

---

लघुशब्दरत्नः

तत्राऽपीप्सितशब्दः क्रियाशब्द एव। [4]न च संयोगो न तत्कर्तृव्यापारजन्यः। तत्र कर्तृपद-स्याऽभावात्। 'ईप्सिततममि'त्युक्तौ ईप्सितमात्रे सावकाशस्य परत्वादीप्सिततमेऽनेन बाधः। ईप्सिततमत्वञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाऽऽश्रयत्वेनोद्देश्यत्वम्[5]।

---

[1] 'बाधनाय' इति मुद्रितेषु पाठः।

[2] 'वृञ् आवरणे' इति तु मुद्रितः पाठः।

[3] 'फलेच्छापूर्वकेच्छाविषयो व्यापार' इत्यत्र हि इच्छाद्वयम्। तत्र प्रथमेच्छाविषयत्वं फले, द्वितीयेच्छाविषयत्वं क्रियायामिति पूर्वेच्छाविषयत्वेन फलमीप्सिततममिति भावः।

[4] 'नचाऽयम्' इति मु. पाठः।

[5] 'प्रकृतधात्वर्थफलाश्रयत्वम्' इति लिखितेषु पाठः।

सङ्ग्रहाऽर्थं तथा युक्तम् (१।४।५०) [1]इत्यस्याऽप्यावश्यकत्वात्। 'अनीप्सित'ग्रहणन्तु स्पष्टाऽर्थमेव, न त्वावश्यकम्।

इदन्त्ववधेयम्—ईप्सिताऽनीप्सितयोः शाब्दबोध एकरूप एव। ईप्साऽनीप्सादेरधिशीङादिवत्सञ्ज्ञाप्रवृत्तावुपयोगेऽपि, द्वितीयावाच्यकोटावप्रवेशात्।

---

**बृहच्छब्दरत्नः**

कर्मत्वाऽनापत्तिः। न चाऽनुपदोक्तरीत्या सर्वत्र क्रियायामीप्सितत्वेन तदपेक्षया प्रकर्षः सुलभ इति वाच्यम्। 'पुत्रमिच्छती'त्यादावनापत्तेः। न हीच्छाऽपीच्छाविषयिणी। किञ्च यत्तुल्यजातीयं तदेव प्रतियोगितां भजते। तुल्यजातीयञ्च कारकं, न क्रिया। न च पाकादिक्रियाया अपि सन्दर्शनादिक्रियाऽपेक्षया कर्मत्वात्कारकत्वमस्त्येवेति वाच्यम्। सर्वत्र तद्भाने मानाऽभावात्। भाष्योक्तरीत्या 'पत्ये शेते' इत्यादाविव कर्मणि चतुर्थ्यापत्तेश्च। क्रियाया अपीप्सिततमत्वेन प्रकर्षाऽनुपपत्तेश्चेति चेत्। अत्राऽऽहुः—'धातोः कर्मणः समानकर्त्तृकादिच्छायां वे'त्यनेन प्रतियोग्यसंनिधावपि प्रवृत्तेर्बोधनात्। किञ्च 'पयसौदनं भुङ्क्ते' इत्यादौ पयःप्रभृतीनां कर्मत्ववारणाऽर्थं सूत्रमावश्यकम्। न च करणत्वविवक्षायां सत्यामदोष इति वाच्यम्। 'धनुषा विध्यती'त्यादावपादानसञ्ज्ञां बाधित्वा [2]करणसञ्ज्ञे'तिभाष्यविरोधाऽऽपत्तेः। शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकत्वमित्युभयप्रसङ्ग इति चेत्। पयसो गलादधःकरणे सत्येव साधकत्वमिति प्रकृतेऽपि दृष्टिर्दीयताम्। अपि च 'पञ्चकं प्रातिपदिकाऽर्थ' इतिपक्षे साधकत्वफलाऽऽश्रयत्वोभयविवक्षायां कर्मसञ्ज्ञा दुर्वारा। [3]तदेव ध्वनयन्नाह—एवेति।

तथायुक्तमिति। धातूपात्तफलशालिभिन्नानां क्रियाऽन्वयिनां द्वेष्योदासीनानां वारणाऽर्थं 'तथायुक्तमि'त्यस्याऽऽवश्यकत्वेना'ऽनीप्सित[4]'ग्रहणवैयर्थ्याऽऽपादनस्यैव युक्तत्वम्। किञ्च 'तथायुक्तमि'त्यकथितं चेतिसूत्रेऽप्यावश्यकमित्यग्रे निरूपयिष्यामः।

---

**लघुशब्दरत्नः**

अत एवाऽग्नेर्नोद्देश्यत्वप्रतीतिस्तत्रेति भावः। न त्वावश्यकमिति। द्वेष्यसङ्ग्रहोऽपि व्याख्यानादेव भविष्यतीति भावः। तस्याऽपीप्सिततमभिन्नत्वात्।

एकरूप एवेति। 'इच्छाविषयत्वा-ऽनिच्छाविषयत्व-भानकृतवैरूप्यरहित इत्यर्थः। तदाह—ईप्साऽनीप्सादेरिति। इच्छाविषयत्वा-ऽनिच्छाविषयत्वयोः। आदिना-ईप्सागतप्रकर्षस्येत्यर्थः। उपयोगेऽपीति। स्वरूपतः सत्तयेति भावः। तदुपलक्षितमुद्देश्यत्वादिकन्तु भासते

---

[1] अपिः ङ. च. नास्ति।

[2] 'कर्मसञ्ज्ञा' इति ख. पाठः।

[3] 'तदेतद् ध्वनयन्नाह' इति क. पाठः।

[4] 'आवश्यकत्वेन नाऽनीप्सितग्रहण' इति ख. पाठः।

अनन्यलभ्यस्यैव शब्दाऽर्थत्वात्। कर्मणि द्वितीया (२।३।२) इति सूत्रे हि तत्तत्सूत्रैर्यावतां कर्मसञ्ज्ञा विहिता, ते सर्वे तेन तेन[1] रूपेणोपस्थिताः। तेषु च विधीयमाना द्वितीया आधारवाचिका। लाघवात्। क्रियाया धातुना, कर्त्तुश्च देवदत्तादिशब्दैर्लाभात्। इष्टतमत्वादेस्तु भानाऽभावात्। प्रकृतिप्रत्ययाऽर्थयोश्चाऽभेद इह संसर्गः। तथा च हर्याधारिका या प्रीतिस्तदनुकूलो व्यापारो वाक्याऽर्थः। यद्यपि कर्मणि, कर्त्तरि, अधिकरणे च विहितानां द्वितीयादीनामाधारोऽर्थ इति तुल्यं, तथाऽपि तन्निरूपकं फलं, व्यापारः,

---

**बृहच्छब्दरत्नः**

आधारवाचिकेति। इदञ्च 'अधिशीङ्स्थासां कर्म' 'कर्त्तुरीप्सिततमं कर्म' 'तथायुक्तं चाऽनीप्सितमि'त्यादिसूत्रविषयकमेव बोध्यम्। ईप्सितादिरूपनिमित्तानां वाच्यत्वभ्रमस्य तत्र प्राप्तत्वात्। अत एव 'सम्बन्धमात्रं द्वितीयाऽर्थ' इति 'अकथितं चे'तिसूत्रस्थमूलकारोक्तिः सङ्गच्छते। एवञ्च 'दिवः कर्म चे'त्यादिविषये आधारवाचकत्वाऽभावेऽपि न दोषः। लाघवादिति। सर्वविषये [2]सकृत्प्रवृत्त्या एकविधौ नानाऽर्थकल्पनाऽभावः।

द्वितीयादीनामिति। आदिना 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' 'कर्त्तृकर्मणोः कृती'त्यादिसूत्रविषयीभूतचतुर्थ्यादयो गृह्यन्ते। आधारोऽर्थं इति। तथा चाऽऽधारत्वं शक्यताऽवच्छेदकमिति भावः। एवञ्चाऽऽधारस्याऽऽधेयाऽऽकाङ्क्षितत्वेन फले विक्लित्त्यादावेवाऽन्वयः। तन्निरूपकं फलमिति। उक्तरीत्या तस्यैव कर्त्तुरीप्सिततमत्वात्। व्यापार इति। कारकचक्रप्रयोक्तृत्वेन, तद्रहितक्रियाया अभावेन च

---

**लघुशब्दरत्नः**

एव। तदाह—अनन्यलभ्यस्यैवेति। भासमानोद्देश्यत्व-तदभावाभ्यामर्थत इच्छाविषयत्वादिलाभादिति भावः। आधारवाचिकेति। इदमुपलक्षणम्। दिवो योगे करणवाचकत्वात्। आधारपदेन चाऽत्राऽऽधारताशक्तिमानुच्यते। कर्त्तुरीप्सिततमम् (१।४।४९) इति लक्षणे विशिष्टस्य प्रवेशात्प्रामाणिकं गुर्वेव शक्यमस्त्वित्यत आह—क्रियाया इति। फलस्य, व्यापारस्य चेत्यर्थः। देवदत्तादिशब्दैरिति। आदिना–तिङन्तम्। नन्वेवमाधारस्य धर्मिणोऽपि प्रकृत्या लाभः। 'आधारत्वेनाऽलाभ' इत्यस्याऽऽधारत्वं [3]न लब्धमित्यत्रैव पर्यवसानात्तस्यैव शक्तिविशेषरूपस्य वाच्यत्वं युक्तं, तस्य धर्मिसाकाङ्क्षत्वाद्विशेषणत्वञ्च युक्तमिति चिन्त्यम्। अभेद इति। विशेष्यविशेषणभाव इत्यर्थः। वाक्यार्थ इति। 'हरिं भजती'त्यत्रे'ति शेषः। फलमिति। कर्त्तुः (१।४।४९) इत्यादिविहितकर्मसञ्ज्ञकविषये फलमित्यर्थः।

---

[1] द्वितीयं 'तेन' इति मुद्रितेषु त्रुटितम्।
[2] 'सकृत्-वृत्त्यकविधौ' इति ख. पाठः।
[3] 'न लभ्यते' इति पाठान्तरम्।

स्वाऽऽश्रयद्वारा तदुभयश्चेति फलीभूते शाब्दबोधे वैलक्षण्यं सङ्गच्छते। न चाऽऽधारतैव वाच्येति मन्तव्यम्। तन्निष्ठधर्मस्य वाच्यताऽवच्छेदकताऽऽपत्त्याऽतिगौरवात्। कर्मणि द्वितीया (२।३।२) इत्यादिसूत्रस्वरसभङ्गाऽऽपत्तेश्च। अत एव भाष्यकार आह—'सुपां कर्मादयोऽप्यर्थाः, सङ्ख्या चैव

**बृहच्छब्दरत्नः**

तस्यैव स्वतन्त्रत्वादित्यादेर्वक्ष्यमाणत्वात्। स्वाश्रयद्वारेति। 'साधकतममि'तितमप्ग्रहणेन कारकाऽधिकारे गौणाऽर्थस्याऽपि ग्रहणात्, साक्षात्क्रियाऽऽधारे परत्वात्कर्त्तृ-कर्मसञ्ज्ञाभ्यां बाध इति भावः। स्पष्टञ्चेदं हरदत्तग्रन्थे। ननु लक्ष्यताऽवच्छेदकत्वस्येव शक्यताऽवच्छेदकत्वस्याऽपि गुरुणि स्वीकारे बाधकाऽभावः, अपि च तादात्म्यसम्बन्धेन तदेवाऽवच्छेदकमित्यरुचेराह—कर्मणीति। 'कर्त्तुरीप्सिततमं' 'कर्मणि द्वितीये'तिसूत्रयोरेकवाक्यतेति तावन्निर्विवादम्। तत्र 'कर्त्तुरीप्सिततममि'ति सूत्रेण फलस्य धातुलभ्यत्वादाधारमात्रस्य कर्मसञ्ज्ञा, एवं च 'कर्मणि द्वितीये'तिसूत्रेण द्वितीयाविधानमाधारतायां न युक्तमिति भावः। एवमन्यत्राऽप्यूह्यम्। भाष्यकार इति। एतेन 'घटं जानाती'त्यादौ विषयत्वमर्थ' इत्यपास्तम्। कर्मादिरहिताऽर्थस्य[1] 'शेष'पदेन[2] ग्रहणात्प्रकृताऽर्थेन[3] 'कर्मण्येव द्वितीये'तिनियमेन वारणात्। 'शेषे षष्ठ्येवे'ति नियमस्य सत्त्वाच्च। न च षष्ठीस्थले

**लघुच्छब्दरत्नः**

व्यापार इति। कर्त्तृविषये। स्वाश्रयेति। 'स्थाल्यां पचति तण्डुलमि'त्यत्र कर्मद्वाराऽधिकरणं, 'भूतले देवदत्तः पचती'त्यादौ कर्त्तृद्वाराऽधिकरणम्। फलीभूते इति। पदजन्योपस्थितावविशेषेऽपि तत्फलभूते शाब्दबोधे इत्यर्थः। इदमुपलक्षणं, सञ्ज्ञयाऽर्थस्य निमित्तत्वे तत्तत्सञ्ज्ञाप्रकारिकैवोपस्थितिरिति, कर्मत्वादिनैवोपस्थितेस्तत्राऽपि वैलक्षण्यमस्तीत्यन्यत्र विस्तरः। तन्निष्ठधर्मस्येति। आधारेतराऽवृत्तित्वे सति, सकलाऽऽधारवृत्तित्वरूपस्येत्यर्थः। आधारता तु शक्तिविशेषरूपाऽखण्डैवेत्याशयः। नन्वाधारतैव निरूपकाऽऽश्रयसम्बन्धभेदेन भिन्ना, आश्रयतात्वमखण्डमिति न गौरवमत आह—कर्मणीति। लोके कर्मादिपदानां धर्मिपरताया दृष्टत्वेन, सूत्रेऽपि तत्परतैवौचितेति भावः। आधारस्य [4]शक्यत्वेऽनन्ताऽऽधारतानामाधारतात्वेनाऽनुगमात्र शक्त्यानन्त्यमिति बोध्यम्। कर्मादयोऽपीति। अपिना-सङ्ख्या। सूत्रवदेवाऽत्राऽपि कर्मपदस्य धर्मिपरता। शक्तिरप्येतैर्धर्म्यभेदमापन्नैवोच्यते इति बोध्यम्। सङ्ख्या चेति। चेन कर्त्तृ-कर्मणी। वैरूप्यापत्तेरिति। कृद्विषये धर्मिपरता, तिङ्विषये

[1] 'राहित्याऽर्थस्य' इति ख. पाठः।

[2] 'अशेषपदेन' इति क. पाठः।

[3] 'प्रकृतार्थत्वेन' इति क. पाठः।

[4] 'शक्यत्वेन अनन्ताधारतानाम्' इति मुद्रितेषु पाठः।

**तथा तिङामि'ति । न च तिङ्क्ष्वपि धर्ममात्रमर्थः । कर्त्तरि कृत् (३।४।६७) लः कर्मणि च (३।४।६९) तयोरेव कृत्यक्तखलर्थाः (३।४।७०) इति सूत्राणां वैरूप्याऽऽपत्तेः । 'पाचको देवदत्तः' 'पक्व ओदन' इत्यादौ सामानाधिकरण्याऽनुरोधेन धर्मिवाचकतास्वीकारात्[1] । तस्मादिह घटादिशब्दानामिव विशिष्टमेव वाच्यम् । [2]आकृत्यधिकरणाऽभ्युपगमे तु कृत्स्वपि धर्ममात्रम् ।**

बृहच्छब्दरत्नः

भेदसम्बन्धस्य क्लृप्तत्वात्तथैव युक्तमिति वाच्यम् । प्रथमास्थलेऽभेदसम्बन्धस्याऽपि क्लृप्तत्वात् । षष्ठ्या अपि सम्बन्धिवाचकत्वे दोषाऽभावाच्च । अत एव सुबुपात्तसङ्ख्यायाः सर्वत्रैकरूपेणैवाऽन्वयः ।

वैरूप्यापत्तेरिति । फल-व्यापारयोर्धातुलभ्यत्वेन 'लः कर्मणी'तिसूत्रे 'कर्म'-पदस्याऽऽश्रयमात्रपरत्वेन, तत्साहचर्यात्कर्तृपदस्याऽऽप्याश्रयमात्रपरत्वं युक्तम् । किञ्च 'अनभिहितसङ्ख्याके' इत्यर्थाऽङ्गीकारेऽपि 'पाचको देवदत्त' इत्यादौ पाचकपदात्तृतीयोत्पत्तिर्दुर्वारा । किञ्च 'पचति देवदत्तः' 'पाचको देवदत्त' इत्यादौ प्रथमाऽन्ते [3]कृतेरन्वयाऽर्थमनेकविजातीयकार्यकारणभावकल्पनाऽऽपत्त्या गौरवं स्पष्टमेव । आकृत्यधिकरणेति । ननु [4]'चित्रगुः' 'ऐन्द्रमि'त्यादौ सम्बन्ध एवाऽर्थः स्यान्न सम्बन्धीति चेन्न । 'साऽस्य देवते'त्यादौ सर्वनामोच्चारणस्य वैयर्थ्याऽऽपत्तेः । किञ्च सम्बन्धस्य वाच्यत्वे च गवादीनां सम्बन्धेऽन्वयाऽर्थं सम्बन्धान्तरस्य, तस्य सम्बन्धस्य च देवदत्तेऽन्वयाऽर्थं सम्बन्धाऽन्तरस्य च कल्पनाऽऽपत्तेः । निष्कृष्टसम्बन्धरहितद्रव्याऽभिधाने स्वामित्वादिसम्बन्धेन गवादीनामन्यपदाऽर्थेऽन्वयः । स्वामित्वं, स्वत्वञ्चैकमेव । निरूपकभेदाद्भेदव्यवहारः । इदमेवाऽभिसन्धाय [5]'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाऽभिधीयते'[6] इति भट्टपादोक्तिरित्यवधेयम् । 'अभ्युपगमे त्वि'त्युक्त्याऽरुचिर्बोधिता । तद्बीजन्तु मूलकाराऽनुक्तदूषणसम्भवः । तथा हि—धर्मे [7]कृतां न प्रयोगः । 'पाकविशिष्टो जात' इतिवद्-

लघुशब्दरत्नः

धर्मपरतेति वैरूप्याऽऽपत्तेरित्यर्थः । कृतां धर्मिवाचकत्वे बीजमाह—पाचक इत्यादि । स्वीकारादिति । 'कृतामि'ति शेषः ।

[1] 'स्वीकाराच्च' इति मुद्रितेषु पाठः । 'स चाऽपपाठ' इति भावप्रकाशः ।
[2] 'आकृत्यधिकरणेऽभ्युपगते तु' इति ङ. छ. पाठः ।
[3] 'कृतेरनन्वयाऽर्थम्' इति ख. पाठः ।
[4] 'चित्रगुरैन्द्रीमित्यादौ' इति ख. पाठः ।
[5] 'सर्वत्र संयोगिकैः' इति ख. पाठः ।
[6] 'अभिधीयते सर्वं इति' इति ख. पाठः । [7] 'कर्मकृतां न' इति ख. पाठः ।

सर्वथाऽपि नैयायिक-मीमांसकाद्यभ्युपेतमर्द्धजरतीयं हेयमेव। न हि तिङ्कृतो-

बृहच्छब्दरत्नः

विशिष्टस्य जननादिकमादाय 'पाचको जात' इत्यादिप्रयोगा बोध्याः। किञ्च कर्मत्वादौ द्वितीयाद्यङ्गीकारे कर्मत्वादिसंसर्गकबोधविवक्षायां षष्ठ्यनापत्तिः। शेषत्वाऽभावात्। न च सम्बन्धसामान्यविवक्षायां षष्ठी, कर्मत्वादिविवक्षायां द्वितीयादिकमिति वाच्यम्। 'न हि निर्विशेषं सामान्यं भवती'ति न्यायेन कर्मत्वादावेव षष्ठीप्रतिपादनात्। प्रकरणादिना कर्मत्वत्वादिप्रकारकबोधे धर्म्यबोधेऽपि षष्ठ्या इष्टत्वाच्च। अत एव संयोगादिसम्बन्धसत्त्वेऽपि स्वत्वादिसम्बन्धविशेषतात्पर्येण 'चैत्रस्य नेदं वास' इति प्रयुज्यते। ध्वनितश्चाऽयमर्थः 'अनन्ताः षष्ठ्यर्था' इत्यर्थप्रतिपादकैः 'एकशतं षष्ठ्यर्थाः' 'एकाऽपि षष्ठी विषयभेदाद्भिद्यते' इत्यादि-भाष्यादिग्रन्थैः। मन्मते तु धर्ममात्रबोधने षष्ठी। धर्मिबोधने द्वितीयादिकम्। अपि च धर्ममात्रे शक्त्यङ्गीकारेऽपि धर्मिबोधस्त्वावश्यक एव। अत एव 'सरूप'सूत्रे[1] भाष्यकारेणोक्तं 'न ह्याकृतिपदार्थिकस्य द्रव्यं न पदाऽर्थ' इति। वस्तुतस्तु बोधकतारूपायाः शक्तेर्दुर्वारत्वेन शक्तिरपि सूपपादा। अन्यथा विभक्तेरिव तत्प्रकृतिभूतघटादिशब्देभ्योऽपि जातिमात्रबोधाऽऽपत्तौ वाह-दोहनाद्यनन्वयः। [2]कर्त्तृकरणादिकमहासञ्ज्ञाकरणसामर्थ्येन कर्त्रादिशब्दैर्विहितानां [3]समानाऽर्थत्वे एव साधुत्वबोधनाच्च। करणादिशब्दानां लोके धर्मिपरताया ग्रहे पटाऽऽश्रयताया अपि ग्रहस्याऽपि पटग्रहे इष्टाऽऽपत्तेः। तदग्रहे तु न दोषशङ्का। अपि च 'रथो गच्छती'त्यादौ कृतेरसम्भवः। न च व्यापारे लक्षणा। शक्यताऽवच्छेदकवल्लक्ष्यताऽवच्छेदकस्याऽपि गुरुण्यसम्भवात्। तयोर्वैषम्ये बीजाऽभावात्। [4]सङ्ग्राहक-लाघवाऽनुरोधेन व्यापारत्वस्यैव शक्यताऽवच्छेदकत्वस्य न्याय्यत्वात्। किञ्च 'पक्त्रे'त्वादौ धर्ममात्रवाचकत्वे धर्मिणि सङ्ख्याऽन्वयाऽभावेन एकत्वनिश्चयो न स्यात्। [5]एको द्वाविति संशयश्च स्यात्। किञ्च 'पक्त्रे'त्युक्ते 'ब्राह्मणो वा', 'क्षत्रियो वे'ति संशयो न स्यात्। 'ब्राह्मणो घनश्याम' इत्युत्तरवचनं च न सङ्गच्छेत। अपि च 'पक्ता देवदत्त' इत्यादावभेदाऽन्वयो दुरुपपादः। न चाऽऽश्रये लक्षणा। त्वन्मते 'पचतिकल्पं देवदत्त' इत्यादावपि लक्षणाऽऽपत्तेः। तथा चाऽऽश्रयोपस्थितौ तिङ्कृतोः कारणताया आवश्यकत्वे सर्वत्रैकरूप्यस्योचितत्वेन न धर्मवाचकता। तदेव ध्वनयन्नाह—सर्वथेति। किञ्च धर्मवाचकत्वे आश्रयतैव वाच्या स्यान्न कृतिः। कर्मलकारे च फलस्यैव वाच्यता स्यात्। फलं धातुलभ्यमिति

[1] 'स्वं रूपसूत्रे' इति ख. पाठः।

[2] 'कर्त्तृकरणकृदादिमहासंज्ञा' इति क. ख. पाठः।

[3] 'समासौ नार्थत्वे' इति, 'समानोनार्थत्वे' इति क. ख. पाठः।

[4] 'सग्राहक' इति क. ख. पाठः।

[5] 'एको वा द्वौ वेति संशयश्च स्यात्' इति वा पाठः। चकारः ख. नास्ति।

वैलक्षण्यं सूपपादम् । प्रपञ्चितश्चैतच्छब्दकौस्तुभेऽस्माभिरित्यलमियता ।

परिगणनमिति । तेन 'नटस्य शृणोती'त्यादौ नाऽतिप्रसङ्ग इति भावः । गां दोग्धीति । गोसम्बन्धिपयःकर्मकं दोहनमर्थः । स्यादेतत्—कर्तुरीप्सिततमं कर्म (१।४।४९) तथायुक्तं चानीप्सितम् (१।४।५०) इति

**बृहच्छब्दरत्नः**

चेत् । कृतेरपि तथात्वात् । तदेव ध्वनयन्नाह—प्रपञ्चितं चैतदिति । ननु 'पचतिकल्पं[1] देवदत्त' इत्यादौ वैयाकरणमतेऽप्यन्वयो दुरुपपाद इति चेन्न । आख्यातोपात्ताऽऽश्रये देवदत्तस्याऽन्वयात् । तस्य विशेषणत्वान्न नामाऽर्थत्वम् । तदेव ध्वनयन्नाह—इत्यलमियतेति । एवञ्चाऽनेकगुरुभूतविजातीयकार्यकारणभावकल्पना च न । वस्तुतस्तु श्वशुर-करभादिशब्दानां शक्तिग्राहकशिरोमणिना वृद्धव्यवहारेण [2]विशिष्टे बोधकतारूपगृहीतशक्तिकानामिव सुप्तिङ्कृतां लघुभूतेऽर्थे शक्तिकल्पनमन्याय्यं, [3]निष्फलञ्च । ध्वनितञ्चेदम् 'आद्यन्तवदेकस्मिन्नि'तिसूत्रे भाष्ये । नचैवं 'सप्तमीपञ्चम्यौ कारकमध्ये' इति सूत्रमसङ्गतं स्यादिति वाच्यम् । प्राप्ताऽप्राप्तविवेकेनाऽऽश्रयमात्रे शक्तावपि, कर्मादिशब्दैर्विहितत्वेन विशिष्टस्य भेदमादाय सूत्रस्योक्तिसम्भवात् । लक्ष्ये तस्योपस्थितिस्तु संसर्गविधया, वाच्यवृत्त्या वेत्यन्यदेतत् ।

**लघुशब्दरत्नः**

प्रपञ्चितमिति । 'लादेशशत्रादेस्तिङाञ्च वैषम्यं सर्वथा दुरुपपादमित्यादी'ति भावः ।

तेन नटस्येति । अपादानादिविशेषैरविवक्षा च प्रसक्तस्य बुद्धिपूर्वमविवक्षा, सर्वथाऽप्रसक्तस्याऽविवक्षा[4] चेत्युभयथाऽपि[5] गृह्यते । प्रकृते चाऽन्त्या । गीतद्वारा च तस्य आख्यातोपयोगे (१।४।२९) इति शास्त्रक्लृप्तं क्रियाजनकत्वम् । न च तस्य कर्मयुक्त्वाऽभावः । तदंशस्याऽपि परिगणनलभ्यत्वात् । न च 'नटान्निस्सरत्तं शब्दं गृह्णाती'त्यर्थतप्राप्ताऽपादानत्वाऽविवक्षैवाऽत्रेति वाच्यम् । 'आख्यातोपयोगे (१।४।२९) इति सूत्रे उपयोगग्रहणेनाऽनुपयोगे आख्यातुरीदृशलक्षणयाऽपादानत्वस्याऽनिष्टत्वबोधनादिति भावः । गोसम्बन्धीति । गोकर्मकं,

[1] 'पचतिकर्म देवदत्तः' इति ख. पाठः ।

[2] 'विशिष्टबोधकता' इति ख. पाठः ।

[3] 'निःफलं च' इति ख. पाठः ।

[4] 'सर्वथाऽप्रसक्त्याऽविवक्षा चेत्युभयविधाऽपि' इति ख. घ. च. पाठः । 'अविवक्षा वा' इति मुद्रितेषु पाठः ।

[5] 'उभयविधाऽपि' इति सर्वेषु लिखितादर्शेषु पाठः ।

सूत्राभ्यां गताऽर्थमेतत् । तथा हि—'त्यजनोपसर्जनं त्याजनं दुहेरर्थः, दापनमङ्गीकरणञ्च याचेः, विक्लेदनं, निर्वर्त्तनञ्च पचेरि'त्यादि । एवञ्च धातूपात्त-

बृहच्छब्दरत्नः

त्याजनमिति । त्यजनन्तु विभागाऽनुकूलो व्यापारः । स च पयोनिष्ठविभागाऽनुकूलो व्यापारो गोनिष्ठः, गोनिष्ठविभागाऽनुकूलो व्यापारः पयोनिष्ठो वा । आद्ये प्रधानीभूतव्यापारेण, गोनिष्ठव्यापारेण चाऽऽप्यमानत्वात् प्राधान्यं पयसः । इदमेवाऽभिसन्धाय 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'त्यत्र तच्छब्देन प्राधान्यात्पय एव परामृश्यते' इति मीमांसकाः। कर्मद्वारा व्यापाराऽऽश्रयत्वविवक्षायामधिकरणसञ्ज्ञा । अजादीनां प्राधान्यव्यवहारस्तु नयनस्याऽजोद्देश्यत्वाऽभिप्रायेण । अत एव 'गौणे कर्मणि दुह्यादेरि'त्यस्य चारिताथ्यम् । णिजन्ते यद्यपि प्रयोज्यव्यापारो ग्रामाद्युद्देश्यकः, प्रयोजकव्यापारः प्रयोज्योद्देश्यकस्तथाऽपीदृशे विषये पयःप्रभृतीनामेवोद्देश्यता । तथैवाऽनुभवात् । अत एव गवादौ 'तथायुक्तमि'त्यनेन कर्मत्वम् । अन्त्ये तु गोरेव प्राधान्यम् । दुग्धोद्देश्येनैव दोहनस्य प्रवृत्तत्वात् । [1]कस्मिन् कर्मणि लकारः स्यादित्याशङ्कानिरासाऽर्थं वचनाऽऽरम्भः । अपादानत्वाद्यविवक्षायां 'तथायुक्तमि'त्यस्य प्रवृत्तिः । एतेन 'कर्त्तुरीप्सिततममि'त्यनेनैव सिद्धौ 'तथायुक्तमि'त्यस्योपन्यासो व्यर्थ' इत्यपास्तम् ।

दापनमिति । तच्च 'प्रयोजकसम्प्रदानकमेवे'ति नाऽऽग्रहः । 'पुत्राऽर्थं कन्यां याचते' 'गुर्वर्थं भिक्षां याचते' इत्यादावन्यस्याऽपि दर्शनात् । अङ्गीकरणमिति । 'अविनीतं विनयं याचते', 'विनयमङ्गी कारयतीत्यर्थः । विक्लेदनं पचेरिति । विक्लित्त्यनुकूलव्यापारोपसर्जनीभूतव्यापारो 'विक्लेदन'शब्दाऽर्थः । तत्र विक्लित्त्यनुकूलव्यापारस्तण्डुलाऽऽश्रितः । तदुपसर्जनीभूतव्यापारो देवदत्ताऽऽश्रितः । स च व्यापार ओदननिष्पादनं, विक्लित्तिनिष्पादनं वा । आद्ये द्विकर्मकत्वम् । तण्डुलनिष्ठव्यापाराऽवाचकत्वे,[2] उत्पत्तेरवाच्यत्वे तण्डुलकर्मतैव । विक्लित्तिव्यापारयोर्जन्यजनकभावः संसर्गः । उत्पत्तिरूपफलवाचकत्वे विक्लित्तेः करणत्वेनाऽन्वये तु ओदनकर्मतैव । विक्लित्तिः फलोपलक्षणम् । 'रोटिकां पचति' 'फलं पचती'त्यादौ विलक्षणप्रतीतेः । ध्वनितञ्चेदं 'कर्त्तुरीप्सिततममि'तिसूत्रस्थभाष्य-कैयटयोः । अनेन तु अधिकरणत्वाद्यविवक्षायां कर्मत्वम् ।

इत्यादीति । प्रवेशोपसर्जनमवस्थापनं रुन्धेः, आख्यापनं पृच्छेः, मोचनं

लघुशब्दरत्नः

पयःकर्मकञ्चेत्यर्थः । तत्र पयस एवेप्सिततमत्वे आह—तथायुक्तमिति । त्यजनोपसर्जन-

[1] 'तस्मिन् कर्मणि' इति क. ख. पाठः ।

[2] 'व्यापाराऽवाच्यत्वे' इति ख. पाठः ।

व्यापारविषयीभूतं यत्त्यजन-दाना-ऽङ्गीकारादि, तदाश्रयत्वं गवादीनां स्पष्टमेव। अत एव हि अणौ कर्त्तुर्णौ कर्मत्वस्य न्यायसिद्धतया, गत्यादिसूत्रं नियमाऽर्थमिति प्राचां सिद्धान्तः। अत एव चाऽऽकडारसूत्रे—'अपादानमुत्तराणि,' 'गां दोग्धि पय' इत्यत्र परत्वात्कर्मसञ्ज्ञे'ति भाष्यं सङ्गच्छते। 'पञ्चकं प्रातिपदिकाऽर्थ' इति [1]पक्षेऽवधित्व-फलाऽऽश्रयत्वयोर्युगपद्विवक्षाया-श्चेदम्। 'अवधिभूता या गौस्तन्निष्ठो यः पयःक्षरणाऽनुकूलव्यापारस्तद्विषयिणी [2]गोपनिष्ठप्रेरणे'त्यर्थात्। तथा चाऽकथितञ्चेति सूत्रं व्यर्थमिति चेत्। अत्रोच्यते—कर्मणः शेषत्वेन विवक्षायां 'न माषाणामश्नीयादि'तिवत् षष्ठी प्राप्ता,

बृहच्छब्दरत्न

[3]चिञः। नवनीतनिःसरणफलकव्यापारफलकव्यापारो मन्थेरर्थः। परत्वादिति। 'ग्रामादायाती'त्यादौ ग्रामादिनिष्ठविभागस्य धात्ववाच्यत्वेन, उद्देश्यत्वाऽभावेन च 'कर्त्तुरीप्सिततमि'तिविहितसञ्ज्ञाऽन्तराऽप्रवृत्तावपादानसञ्ज्ञाया अवकाशः। कर्मसञ्ज्ञायास्तु 'ग्रामं गच्छती'त्यादौ। पञ्चम्या अवधित्वं, द्वितीयया फलाऽऽश्रयत्वं प्रतिपाद्यमिति विवक्षयोर्युगपदसम्भवेन भाष्यग्रन्थो युक्त एवेत्याशङ्क्याऽऽह—पञ्चकमिति। 'गो'शब्देनैव प्रतिपाद्यमिति विवक्षायाः सत्त्वान्न दोष इति भावः।

अवधिभूतेति। तथा चेद्दृशे विषये 'आ कडारादेका सञ्ज्ञे'तिसूत्रबलादुभयोर्द्वितीयैव द्योतिकेति भावः। सम्बन्धमात्रमिति (६५४ पृ.)। ननु 'कर्मणि द्वितीये'तिसूत्रेण विहिताया द्वितीयायाः सम्बन्धोऽर्थो दुर्वचः, अपादानाद्यविवक्षितकारकस्य गवादिरूपस्य कर्मसञ्ज्ञायाः सत्त्वादिति चेत्। अत्रोच्यते-अपादानाद्यविवक्षायां क्रियया सह निमित्त-निमित्तिभावादिसम्बन्धो विवक्ष्यते, तदैव कर्मसञ्ज्ञेति निर्विवादम्। तत्र विहितद्वितीयाया [4]निमित्तमर्थः। प्रकृति-प्रत्ययाऽर्थयोरभेदः संसर्गः। निमित्त-

लघुशब्दरत्नः

मिति। 'गौः पयस्त्यजति, गवा पयस्त्याजयती'ति प्रतीतेरिति भावः। न्यायसिद्धतयेति। व्यापारद्वयाऽर्थत्वेनोक्तसूत्रद्वयसिद्धतयेत्यर्थः। प्राचाम्—हेतुमति च (३।१।२६) इति सूत्रे भाष्यकृताम्। परत्वादिति। 'ग्रामादायाती'त्यादौ सञ्ज्ञाऽन्तराऽप्राप्तावपादानत्वं सावकाशम्। कर्मसञ्ज्ञा तु 'ग्रामं गच्छती'त्यादौ। भाष्यमिति। एतच्च भाष्यं नाऽकथितं च (१।४।५१) इत्येतद्विषयम्। अस्याऽपादानत्वाऽविवक्षायां प्राप्त्या 'परत्वादि'त्युक्त्यसङ्गतेः। तद् ध्वनयन्नाह—पञ्चकमित्यादि। अवधित्वेत्यादि। अपादानत्व-कर्मत्वशक्त्योरित्यर्थः। ईदृशे च विषये

[1] 'पक्षे तु' इति मुद्रितेषु पाठः।
[2] 'गोपनिष्ठा प्रेरणा' इति क्वचित्पाठः।
[3] 'याचेः' इति 'पचेः' इति ख. अस्फुटः पाठः। 'वितुः' इति क. पाठः।
[4] 'निमित्तत्वमर्थं' इति ख. पाठः।

**तां बाधितुमिदं सूत्रम्। तथा चेह षष्ठीवत्सम्बन्धमात्रं द्वितीयाऽर्थ इति स्थितम्। अपादानत्वमात्रविवक्षायान्तु पञ्चम्येव। गोः क्षीरविशेषणत्वे तु**

बृहच्छब्दरत्नः

त्वेन सम्बन्धेन क्रियायामन्वयः। इदमेव मनसि निधायाऽऽह—स्थितमिति। ध्वनितञ्चेदं कैयटे सूक्ष्मदृशाम्। ननु दुहादियोगे करणादीनामपि कर्मत्वं दुर्वारम्। न चाऽकथितशब्दो नाऽप्रधानपरः, किन्तु क्रियाशब्दोऽकीर्तितपर्याय इति वाच्यम्। करणत्वाद्यविवक्षायां दोषस्य दुर्वारत्वादिति चेन्न। 'तथायुक्तमि'-त्यनुवर्त्त्य [1]'ईप्सितवत्तत्फलशाली'त्यर्थे दोषाऽभावात्। लक्ष्याऽनुरोधेन [2]योग-

लघुशब्दरत्नः

आकडारसूत्र-तद्भाष्यबलादुभयोरपि द्वितीयैव बोधिकेति भावः। इति स्थितमिति। 'प्राचां ग्रन्थे' इति शेषः। अत्राऽरुचिबीजन्तु 'यदा पयोनिष्ठविभागाऽनुकूलो व्यापार एव धात्वर्थस्तदा-ऽपादानत्वाऽविवक्षायामन्येनाऽसिद्धेः कर्मत्वाऽर्थसिदमावश्यकम्। एवमन्येष्वपि। किञ्च कर्त्तुः (१।४।४९) इत्यपि षठ्यपवाद एव। तदभावे तद्विषयेऽपि षष्ठ्या एव प्राप्तेः। अतः षष्ठ्य-पवादत्वमात्रेण न सम्बन्धत्वेन बोधकतोचिता। तस्मादत्राऽपि क्रियाजनकतासमानाधिकरण-कर्मत्वशक्तिमत्त्वेनैव बोध [3]इत्येवोचितम्। व्यापारद्वयाऽर्थत्वे कर्त्तुरीप्सिततमम् (१।४।४९) इत्यनेनाऽपि द्विकर्मकत्वमस्त्येव यथाप्रयोगं बहूनां धातूनाम्। तत्र ये व्यापारद्वयाऽर्थत्वेन द्विकर्म-कास्तेषां प्रधानकर्मणि लादयः। 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामि'त्युक्तेः। प्रधान-कर्मत्वञ्च-कर्त्तृप्रत्ययसमभिव्याहारे कर्त्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाऽऽश्रयत्वम्। ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्राह्यत्वात्। 'गर्गाः शतं दण्डचन्तामि'त्यादौ गर्गाणामेव तत्त्व-मिति तत्रैव कर्मणि लादयः। उद्देश्यत्वरूपमार्थं [4]प्राधान्यन्तु शतस्येत्यनुद्देश्यत्वेनाऽप्रधानगर्गा-ऽनुरोधान्न शताऽऽवृत्तिरिति, न वृद्धिसूत्रस्थभाष्यविरोधः।

एकव्यापाराऽर्थकदुहादियोगे त्वप्रधानकर्मणि। [5]अप्रधानत्वञ्चोक्तप्रधानकर्मभिन्नत्वम्। तच्च तत्राऽर्थे गवादीनामेव। फलाऽऽश्रयत्वाऽभावात्। एवञ्च भाष्याऽनुक्तानां परिगणने पाठोऽयुक्तः। 'अर्थनिबन्धनेयं सञ्ज्ञे'ति चाऽयुक्तम्। एवं द्व्यर्थत्वेन द्विकर्मकत्वाऽतिप्रसङ्ग-स्त्वनभिधानेन वारणीय इति दिक्।

अपादानत्वमात्रेति। विभागाऽनुकूलव्यापारमात्राऽर्थकत्वविवक्षायामिति भावः। गोः क्षीरेति। न च क्रियाऽन्वयेऽपि शेषत्वविवक्षायां सेति वाच्यम्। [6]षष्ठ्यन्ताऽर्थस्य

१ 'ईप्सितवत्फलशाली' इति ख. पाठः।
२ 'योगविशेषस्यैव' इति क. पाठः।
३ 'इत्येवोचितमिति' इति पाठोऽत्रोचितः। अरुचिग्रन्थसमाप्त्यर्थम् इतेरावश्यकत्वात्।
४ 'आर्थप्राधान्यन्तु' इति क्वचित्पाठः।
५ 'अप्रधानत्वञ्चाऽत्रोक्त' इति मुद्रितेषु पाठः।
६ 'षष्ठ्यन्तार्थकस्य' इति मुद्रितेषु पाठः। स च भैरवीभावप्रकाशादिविरुद्धः।

षष्ठी। तेन 'गोः पयो दोग्धी'त्यपि प्रयोगः साधुरेव। एवमग्रेऽप्यूह्यम्। यत्तु प्राचोक्तम्—

'दुह्-याच्य-र्थ-रुधि-प्रच्छ[1]-चि-ब्रू-शासु-जि-कर्मयुक्।
नी-हृ-कृष्-मन्थ-वह-दण्ड[2]-ग्रह-मुष्-पच-कर्मभाक्' ॥ इति।

अत्रेदं वक्तव्यम्—ग्रहेः पाठो निर्मूलः। 'जग्राह द्युतरुं शक्रमि'त्युदाहरणमप्ययुक्तम्। इतरेषान्तु द्विकर्मकत्वं यद्यपि प्रामाणिकं, तथाऽपि सन्दर्भाऽशुद्धिः। तथा हि—दुह्यादीन्, न्यादींश्च द्वैराश्येनेह पठित्वा, भावकर्मप्रक्रियाशेषे ल-कृत्य-क्त-खलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युर्गुणे वेत्या-

---

**बृहच्छब्दरत्नः**

प्रयोगविशेषस्यैव ग्रहणाच्च। ध्वनितञ्चेदम् 'उपयोगनिमित्तम्' 'गुणेन च यत्सचते' इत्यादिना आकरग्रन्थे।

निर्मूल इति। ननु दण्डिर्ग्रहणाऽर्थ इति तावन्निर्विवादम्। एवञ्च तत्समानाऽर्थत्वेन ग्रहेर्ग्रहणं दुर्वारमेवेति चेत्। अत्रोच्यते-स्वसम्प्रदानकदापनं ग्रहेरर्थः। सम्प्रदानसञ्ज्ञा तु कर्तृसञ्ज्ञया बाधान्न। अन्यायादिपूर्वकस्वसम्प्रदानकं दापनं दण्डेरर्थ इति समानार्थत्वाऽभावः। अत एव ब्रु-शास्-जि-नी-हृ-वह्-कृष्-मुषां ग्रहणं चरिताऽर्थम्। प्रतिपादनं ब्रूञोऽर्थः। तद्विशेषश्च शासेः। तथैवाऽनुभवात्। 'नी'धातोः प्रापणमर्थः। शरीराऽऽयासपूर्वकन्तु वहधातोः, कृषेश्च। बलात्कारपूर्वकं ग्रहणन्तु हरतेः। न्यायपूर्वकं ग्रहणं जिधातोः। पराऽज्ञानपूर्वकं मुषेरिति दिक्।

अयुक्तमिति। 'द्युतरुमि'त्यत्र सप्तमीसमासो न युक्तः। कारकाणां परस्परम् अनन्वयात्। बहुव्रीहावर्थाऽसङ्गतिः। शक्रस्य तत्रैवाऽवस्थानेन 'दिव्'पदस्य वैयर्थ्या-

---

**लघुशब्दरत्नः**

स्वाऽन्वययोग्याऽर्थकतामसमभिव्याहारे [3]तत्रैवाऽन्वयव्युत्पत्तेः। अत एव 'तण्डुलानामोदनं पचती'त्यादौ 'द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी, तण्डुलविकारमोदनं पाकेन निर्वर्त्तयती'त्युक्तं भाष्ये, न तु 'पाकाऽन्वये षष्ठी'त्युक्तमिति दिक्। निर्मूल इति। अपादानत्वाद्यविवक्षायां तत्सम्बन्धिनः कर्मत्वे मूलं नास्तीति भावः। द्विकर्मकत्वन्तु यदीष्टं, तर्हि व्यापारद्वयाऽर्थतया बोध्यम्। उदाहरणमप्ययुक्तमिति। 'शक्राद् द्युतरुञ्जग्राहे'त्येव प्रतीतेः। पराक्रमाऽतिशयद्योतनाय 'जहार द्युतरुमि'त्यस्यैवोचितत्वाच्चेति भावः। द्विकर्मकत्वमिति। 'अकथित'-सूत्रविषयतयेत्यर्थः। कैयट-माधवादिसंमतत्वादिति भावः। अतस्तद्रीत्यैव दूषणमाह—

---

1 'प्रच्छ' इति ङ. ख. पाठः। 'प्रच्छि' इति मुद्रितः पाठ.।
2 'दण्डि' इति घ. पाठः।
3 'तत्रैवाऽन्वय इति व्युत्पत्तेः' इति मुद्रितेषु पाठः।

काङ्क्षायां स्वयमेव पठितम्—

'न्यादयो, ण्यन्त-निष्कर्म-गत्यर्था मुख्यकर्मणि ।
प्रत्ययं यान्ति, दुह्यादिर्गौणेऽन्ये तु यथारुचि' ॥ इति ।

एवञ्च दण्डि-मन्थिभ्यामपि मुख्ये स्यात्। तथा च 'गर्गाः शतं दण्ड्यन्तामि'ति भाष्यं विरुद्ध्येत । शतं ह्यत्र प्रधानं, न गर्गाः । 'अर्थिनश्च राजानो हिरण्येन भवन्ती'ति वाक्यशेषात् । दण्डिश्चेह ग्रहणाऽर्थो, न तु निग्रहाऽर्थः । अत एव ह्यत्र समुदाये वाक्यसमाप्तिः । गुणाऽनुरोधेन प्रधानाऽऽवृत्तेरसम्भवात् । तथा मन्थेरपि प्रधाने स्यात् । इष्यते तु गौणे । तथा च भारविः—'येनाऽपविद्धसलिलस्फुटनागसद्मा देवाऽसुरैरमृतमम्बुनिधिर्ममन्थे' इति । अत्राऽमृतं मुख्यम् । उद्देश्यत्वात् । अम्बुनिधिस्तु गौणः । यदपि व्याख्यातार आहुः—'द्विकर्मकेषु पचेरप्रामाणिकः पाठ' इति । तद्भ्रमसात् ।

---

बृहच्छब्दरत्नः

ऽऽपत्तेश्च । पराक्रमद्योतनाऽर्थं 'जहारे'त्यस्य युक्तत्वाच्च । एवञ्चेति । यत्तु 'न्यायसिद्धोऽयमर्थो, न वाचनिकः, 'नी'प्रभृतीनां प्रधानकर्मसम्बन्धोऽन्तरङ्गो, दुह्यादीनां तु विपरीतमित्याकरे उक्तत्वात् । एवं चाऽनिष्टाऽऽपादनमयुक्तमेवे'त्याहुः । तन्न । विपरीताऽर्थस्याऽप्यापादयितुं शक्यत्वेन आकरग्रन्थानामसशुद्धत्वात् । अमृतादीनामुद्देश्यत्वेन प्राधान्यस्य सत्त्वाच्च । न्यायसिद्धाऽनुवादकवाक्याऽनुकूलक्रमस्य [1]पठितुं युक्तत्वाच्चेति दिक् । अर्थिन इति । यत्तु 'अर्थोऽस्याऽस्तीति अर्थी, 'हिरण्येने'ति अभेदे तृतीया । 'हिरण्याऽभिन्नधनवन्त इत्यर्थ' इति । तन्न । दण्डने प्रवृत्त्यनापत्तेः । वाक्यशेषेण शतस्य प्राधान्याऽनापत्तेश्च । 'अर्थच्चाऽसंनिहिते' इत्यनेनाऽसंनिहिते प्रत्ययविधानाच्च । तत्र 'अस्ती'ति विरोधान्न सम्बध्यते । 'तत्रकौण्डिन्य'न्यायेनाऽस्त्युपाधिकादिनेरभाव इति स्पष्टमाकरे । अभेदे तृतीयाया अविधानाच्च । सविशेषणत्वेन तद्धितवृत्तेरनापत्तेश्च । तस्मादर्थनम् अर्थः—प्रार्थना, साऽस्याऽस्तीति सोऽर्थी । 'हिरण्येने'ति करणत्वविवक्षया तृतीया ।

---

लघुशब्दरत्नः

एवञ्चेत्यादिना । प्रधानमिति । उद्देश्यत्वादिति भावः । तस्योद्देश्यत्वे मानमाह—अर्थिनश्चेति । न तु निग्रहार्थ इति । [2]शारीरदण्डाद्यर्थ इत्यर्थः । तस्मादेव वाक्यशेषादिति भावः । एतत्सर्वं माधवादिरीत्या लाद्युत्पत्तिनियामकम् । यदि प्रागुक्तं प्रधानकर्मत्वं, तदेदं सर्वमसंगतमित्युक्तदिशोह्यम् । द्विकर्मकेष्विति । अकथितसूत्रविषयेष्वित्यर्थः । पचे-

---

[1] 'ग्रहीतुम्' इति वा पाठः ।

[2] 'शरीर' इति क. पाठः ।

तथा हि—कर्मवत्कर्मणा (३।१।८७) इति सूत्रे 'दुहिपच्योर्बहुलं सकर्मकयो-रि'ति वार्त्तिके, तद्भाष्ये च पचेर्द्विकर्मकता लभ्यते, कैयट-हरदत्ताभ्याञ्च तत्रैव स्फुटीकृता। माधवोऽप्याह—'जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेरि'-त्यादि। उदाजहार च—'तण्डुलानोदनं पचती'ति। यत्तु 'अकथितञ्च (१।४।५१) इति सूत्रे हरदत्तेनोक्तम्—'अकथितशब्दो यद्यप्रधानार्थो गृह्येत, तदा 'पाणिना कांस्यपात्र्यां दोग्धि पय' इत्यत्र पाणि-कांस्यपात्र्योरपि स्यात्। करणाऽधिकरणयोस्तु पचत्यादिरवकाशः। न हि तत्राऽस्य प्रसङ्गः। [1]दुहादि-परिगणनादि'ति। तन्मताऽन्तराऽभिप्रायेण। अन्यथा उदाहृतस्वपर-ग्रन्थविरोधादित्यास्तां तावत्।

---

**बृहच्छब्दरत्नः**

'कृतपूर्वी कटमि'त्यादाविव भावनायामन्वय इति दिक्। 'असंनिहिते इनिः। प्रकृत्यादित्वादभेदे तृतीया। नित्यसापेक्षत्वात्तद्धित' इति मताऽन्तरम्।

तन्मताऽन्तरेति। इदञ्च परसन्तोषमात्रम्। वस्तुतस्तु मताऽन्तरे प्रमाणा-ऽभाव एव। यत्तु 'तण्डुलानोदनं पचती'ति प्रयोगस्य 'अकथितं चे'ति सूत्रेणैवोप-पत्तौ 'पचेर्द्व्यर्थत्वात्तण्डुलानां विक्लेदने, ओदनस्य निर्वृत्तौ कर्मत्वमि'ति भाष्य-कारोक्तं व्यर्थं स्यादि'ति। तदापाततः। अर्थविशेषबोधाऽर्थं[2] तथोक्तत्वात्। पचेर्द्विकर्मकत्वाऽहानाच्च। किञ्च 'अकथित'शब्दोऽत्राऽपादनादिभिरनुक्तिपरः। अपादानादयश्च ([3]सञ्ज्ञा) विनिगमनाविरहात् पूर्वोत्तराः [4]सर्वा गृह्यन्ते। दुहि-[5]याचिरुधिप्रछिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधावि'ति भाष्ये तु पूर्वत्वञ्च न पाठाऽपेक्षं, किन्तु प्रकृतसूत्रप्राप्त्यपेक्षया। अविवक्षातः पूर्वं तासां प्राप्तत्वात्। एतेन 'वक्ष्यमाणयोर्हेतु-कर्तृसञ्ज्ञयोर्विषयेऽतिप्रसङ्गः स्यादि'ति परास्तम्। पराभ्यां हेतु-कर्तृसञ्ज्ञाभ्यां कर्मसञ्ज्ञाया बाधाच्च। एवञ्च तण्डुलानां कर्मत्वसम्पादनाऽर्थं भाष्योक्तकल्पनाया आवश्यकत्वेन न तद्वैयर्थ्यम्। 'अकथितं चे'तिसूत्रन्तु कर्मत्वा-

---

**लघुशब्दरत्नः**

रप्रामाणिकत्वदूषणं कैयटाद्यनुरोधेनेति ध्वनयन्नाह—कैयटेति। अत्राऽरुचिबीजन्तु 'पचे-र्व्यापारद्वयाऽर्थत्वे कर्तुरीप्सिततम् (१।४।४९) इति कर्मणो वृक्षस्यैकव्यापारपरित्यागेन कर्तृत्व-विवक्षयाऽपि भाष्यस्य सूपपादत्वेनैतत्सूत्रविषयत्वे न मानमि'ति। तन्मतान्तरेति। पूर्वो-

---

[1] 'दुहादावपरिगणनात्' इति छ. शोधितः पाठः।
[2] 'बोधार्थे' इति क. ख. पाठः।
[3] 'संज्ञा' इति पदन्तु क.ख. नास्ति। [4] अत्र सञ्ज्ञाऽपेक्षया स्त्रीलिङ्गनिर्देशः।
[5] 'प्रछि' इति क. पाठः।

शतं जयतीति। 'जि अभिभवे'। यत्तु 'जि जये' इति व्याख्यातम्। तन्न। तस्याऽकर्मकत्वात्। 'यद्यपि जयत्यादयो भाष्ये न पठितास्तथाऽपि चकारेण सङ्गृह्यन्ते' इति कैयटः।

अर्थनिबन्धनेति। न तु स्वरूपाऽऽश्रया। 'अहमपीदमचोद्यं चोद्ये' इति तद्राजसूत्रभाष्ये पृच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शनादिति भावः। तथा च भट्टिः—'स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महाऽर्थम्'। कालिदासोऽपि—'शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवाऽर्थमभाषतेव'। भारविश्च—'उदारचेता गिरमित्युदारां द्वैपायनेनाऽभिदधे नरेन्द्र' इति। एवञ्च नाथत्यादयो बहवो द्विकर्मका बोध्याः।

---

बृहच्छब्दरत्नः

ऽविवक्षायाम्। न चाऽकथितशब्दोऽप्राप्तिपर एवेति वाच्यम्। 'कथित'शब्दस्य प्राप्तावप्रसिद्धत्वात्। 'कथ वाक्यप्रबन्धे' इति स्मरणविरोधाच्च। संयोगवद्विप्रयोगस्याऽपि विशेषाऽवगतिहेतुत्वेनाऽपादानादिप्राप्तियोग्यताया आवश्यकत्वदिति दिक्।

चकारेणेति। 'ब्रुविशासिगुणेन चे'त्यत्रत्येने'ति शेषः। 'नीवह्योर्हरतेश्चापी'-त्यत्रत्येन कृषिः संगृह्यते। 'गत्यर्थानां तथैव चे'त्यनेन [1]ण्यन्ताऽज्यादिसङ्ग्रहः। एवं समभिव्याहृतयोरिषि-शक्योरपि द्विकर्मकत्वम्। एवं 'काष्ठं भस्म करोती'त्यत्र द्विकर्मकत्वम्। 'काष्ठानि विकुर्वन् भस्मोत्पादयती'त्यर्थात्। अहमपीदमिति। 'शकारमसि चोदित' इति 'परस्मैपदानामि'तिसूत्रस्थभाष्यप्रयोगोऽपि मानम्। [2]न चैवं 'दुहियाचिरुधिपृच्छिभिक्षिचिञामुपयोगनिमित्तपूर्वविधावि'तिकारिकायां 'याचि'ग्रहणं व्यर्थमिति वाच्यम्। अनुनयाऽर्थग्रहणेन चारितार्थ्यात्। 'विनयायाऽनुनयती'त्यर्थात्। अस्तु तर्हि याचेरेव ग्रहणं, तस्याऽनेकाऽर्थत्वाद्

---

लघुशब्दरत्नः

पपादितभाष्यसंमतमताऽन्तरेत्यर्थः। 'भाष्याऽनुक्तानां [3]सर्वेषां ग्रहणमप्रमाणमि'ति—अनेन सूचयति। उदाहृतस्वपरग्रन्थाश्च यथाश्रुतकैयटाऽनुसारेणेति च ध्वनितमित्यन्यत्र विस्तरः। कैयट इति। अत्राऽरुचिबीजमुक्तम्।

इति भाव इति। 'अर्थनिबन्धनेयं सञ्ज्ञे'ति वदतां कैयटादीनामि'त्यादिः। द्विकर्म-

---

[1] 'ण्यन्तत्यजादि' इति क. पाठः।

[2] 'एतेन न चैवम्' इति क. ख. पाठः, भावप्रकाशे च।

[3] 'सर्वेषाम्' इति मुद्रितेषु त्रुटितम्।

देश इति । कुरु-पञ्चालादिवेह[1] गृह्यते । तेनाऽधिशीङ्स्थासाम् (१।४।४६) इत्यादेर्न वैयर्थ्यम् । गोदोहमिति । न चेह कालत्वात्सिद्धिः । लोके कालत्वेन प्रसिद्धस्य मासादेरेव ग्रहणात् । तेन 'घटमास्ते' इत्यादि न भवति । यत्तु प्राचोक्तम्—'अकर्मकधातुभिर्योगे देशकालाऽध्वभावेभ्यो द्वितीये'ति केचित् । नदीमास्ते' इत्यादि । अत्रेदं वक्तव्यं—कर्मसञ्ज्ञाया अनुक्तत्वात्कर्मणि लादयो न स्युः । 'आस्यते मास' इति यथा । 'केचिदि'त्यप्यसङ्गतम् । द्वितीयाया भाष्यसंमतत्वात् । [2]'नदीमि'त्युदाहरणमप्यसङ्गतम् । [3]'ग्रामसमूहः कुर्वादिरेव देशो, न तु प्रदेशमात्रं, तेन 'ग्रामं [4]स्वपितीति न भवती'त्याकरात् । 'अध्वे'ति च न्यूनम् । 'अध्वानं स्वपिती'ति प्रसङ्गात् ।

**बृहच्छब्दरत्नः**

भिक्षेर्ग्रहणं भविष्यती'ति चेदत्राहुः—अर्थभेदेन शब्दभेदमाश्रित्याऽनुनयाऽर्थस्यैव याचेर्ग्रहणादिति । वस्तुतस्त्वर्थभेदेऽपि शब्दैक्याऽङ्गीकारात्, [5]शब्दभेदेऽपि विनिगमनाविरहादुभयोरपि ग्रहणाच्च, [6]'नी'ग्रहणेनैवाऽनुनयाऽर्थग्रहणसिद्धेश्चेति भिक्षिग्रहणं स्पष्टाऽर्थम् । ध्वनितञ्चेदं कौस्तुभ-पदमञ्जर्योः । इत्यादेरिति । आदिना 'समानोदरे शयित ओ चोदात्त' इति बोध्यम् । विनिगमनाविरहात् 'अधिकरणविवक्षायां', 'कुरुपञ्चालादिभिन्ने च न प्रवर्त्तते' इत्युभयं ज्ञाप्यते । प्रसङ्गादिति । नन्वास्त्या-

**लघुशब्दरत्नः**

कत्वन्तु व्यापारद्वयाऽर्थत्वेन सिद्धमिति तत्त्वम् । कुरुपञ्चालादिरिति । व्याख्यानात्, तथैव भाष्योदाहरणाच्चेति भावः । न वैयर्थ्यमिति । शीङादेरपि शयनपूर्वके व्यापने वृत्त्या कर्त्तुः (१।४।४९) इत्येव कर्मत्वस्य आस्यादियोगे इव सिद्धत्वादिति भावः । एवञ्चैवंकल्पनयोक्तदेशादीनामेव कर्मत्वं, नाऽन्येषाम्, अनभिधानादिति सूचयति । प्रसिद्धस्येति । क्रियायाः कालोपाधित्वमेव प्रसिद्धमिति भावः । तेनेति । देशादीनां ग्रहणेनेत्यर्थः । यत्तु 'मासादेरेव ग्रहणेनेत्यर्थ' इति । तन्न । जन्यमात्रस्य कालोपाधित्वेऽपि, कालत्वाऽभावात् । यदि तु 'जन्यमात्रस्य कालत्वमि'ति मतमस्ति, तदा घटत्वादिना न तस्य कालता[7], किन्तु मासत्वादिनैवेति भावः । एतच्च नाऽपूर्वं वचनमित्याकरे स्पष्टम् । अध्वानं स्वपितीति । स्वापमात्रार्थकोऽत्र

[1] 'इह' इति मुद्रितेषु नास्ति ।
[2] 'उदाहरणमसङ्गतम्' इति घ. छ. पाठः ।
[3] 'ग्रामसमूहकुर्वादिः' इति छ. पाठः ।
[4] 'ग्रामं स्वपितीत्यत्र न भवति' इति ख. पाठ. ।
[5] 'शब्दभेदेन' इति ख. पाठः ।
[6] अनूपसर्गनीधातोरेवाऽनुनयशब्दसिद्धिरतो-नीधातूपादानेनैव अनुनयोऽपि गृहीत एवेत्याशयः ।
[7] 'कालत्वम्' इति मुद्रितेषु पाठः ।

अत एवाऽऽकरे अध्वा गन्तव्यत्वेन विशेषितः। 'गन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरि'ति [1]च व्याख्यातम्।

**गतिबुद्धि (१।४।५२)**। प्रत्यवसानं = भक्षणम्। शब्दकर्मकाणामिति। 'शब्दः कर्म कारकं येषां तेषामि'त्यर्थः। न त्विह कर्त्तरि कर्मव्यति-

**बृहच्छब्दरत्नः**

दीनां व्याप्तिपूर्वके आसनादौ वृत्तिः। यद्वा आसनपूर्वके व्यापने। आसनादीनाञ्च करणत्वेनाऽन्वयः। एवञ्चाऽवच्छेदकतारूपा व्याप्तिर्मासादिनिष्ठा फलम्। आद्ये 'मासमास्ते', मासाऽवच्छिन्ना स्थितिरित्यर्थः। द्वितीये तु मासमासनेन व्याप्नोतीत्यर्थः। [2]तथा 'कर्त्तुरीप्सिततमं कर्मे'त्यनेनैव कर्मसञ्ज्ञा सिद्धा। तथा च द्वितीये भाष्ये 'प्राकृतमेवेदं कर्मे'त्याद्युक्तम्। प्र-आदौ कृतं प्रकृतम्— उत्सर्गसूत्रम्। तत्र भवमित्यर्थः। एवञ्च 'ऽध्वानं स्वपिती'ति प्रयोगो दुर्वार इति चेन्न। [3]आस्त्यादीनां सत्तामात्रे वृत्तौ प्रयोगस्याऽऽपाद्यत्वात्। अत एव पूर्वोक्तेऽर्थे 'मासमोदनं तण्डुलानि'ति त्रिकर्मकोऽपि प्रयोगो भवत्येव। अकर्मकधातुभिर्योगे [4]कटादीनां कर्मत्वञ्च। न चाऽधिशीङ्स्थासामित्यादेर्वैयर्थ्यम्। शक्याऽर्थे तस्य चारितार्थ्यात्। वार्त्तिकेन तु कर्मसञ्ज्ञा मासादीनां सम्बन्धसामान्येनाऽन्वयेऽकर्मकधातुभिर्योगे एव। तत्र चाऽकर्मकशब्देनाऽत्यन्ताऽविद्यमानकर्मक एवेति नाऽऽग्रहः। सङ्कोचे मानाऽभावात्। अत एव पचादीनां व्यापने वृत्त्यभावेऽप्यविवक्षितकर्मकत्वे 'मासं पचती'ति प्रयोगो भवत्येव। अत एव 'कालभावाऽध्वदेशानामन्तर्भूतक्रियाऽन्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते' इति हरिश्लोके 'सर्वैरि'त्युक्तम्। 'वार्त्तिकेऽकर्मकशब्देनाऽत्यन्ताऽविद्यमानकर्मक एव गृह्यते। हरिश्लोकस्तु भाष्योक्तमताऽभिप्रायेण। अत एवोक्तम् 'अन्तर्भूतक्रियाऽन्तरैरि'ति। काला-ऽकर्मकपदादीनि त्ववव्युत्याऽनुवाद' इति मताऽन्तरम्। मासादीनां कर्तृद्वारा क्रियाऽऽश्रयत्वविवक्षायां सप्तम्येव। वार्त्तिकस्याऽकथितं चेति सूत्रे पठितत्वेनाऽधिकरणाऽविवक्षायामेव प्रवृत्तेः। ध्वनितञ्चेदं 'समां समां विजायते' इति सूत्रभाष्ये इत्यन्यत्र विस्तरः।

गतिबुद्धीति—'अर्थ'शब्दाऽन्तो द्वन्द्वगर्भो बहुव्रीहिः। 'कर्म'शब्दाऽन्तो द्वितीयः। 'क'प्रत्ययाऽन्तस्तृतीयः। ततस्त्रयाणां द्वन्द्वः। नन्वणि कर्त्ता स णौ इत्येकं सूत्रमस्तु। द्वितीयं 'गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्मणामि'ति सूत्रं नियमाऽर्थं,—"[5]सकर्मकाणामणि कर्त्ता णौ कर्मसञ्ज्ञकश्चेत्तर्हि गत्याद्यर्थानामेवे'ति।

[1] चकारो मुद्रितेषु त्रुटितः।
[2] 'तत्र च' इति 'तथा च' इति वा पाठः।
[3] 'अस्त्यादीनां सत्तामात्रे वृत्तें' इति क. ख. पाठः।
[4] 'कटादीनामकर्मत्वं च' इति ख. पाठः।
[5] 'सहकर्मकाणाम्' इति क. ख. पाठः।

हारे (१।३।१४) इतिवत्कर्मशब्दः क्रियापरः। कृत्रिमे कार्यसम्प्रत्ययात्। कर्मग्रहणसामर्थ्याच्च। अन्यथा हि 'गतिबुद्धिप्रत्यवसानशब्दार्थाऽकर्मकाणामि'-त्येवाऽवक्ष्यत्। 'नियमाऽर्थं चैतत्सूत्रमि'ति प्राञ्चः,—'णिजर्थेनाऽऽप्यमानस्य यदि भवति, तर्हि गत्याद्यर्थानामेव कर्त्तुरि'ति। तेन 'पाचयति देवदत्तो यज्ञदत्तेने'त्यत्र प्रयोज्ये प्रकृत्यर्थं प्रति कर्त्तृत्वस्यैव निरपवादत्वेना-ऽवस्थानात्तृतीया सिद्ध्यति। उक्तञ्च—

'गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः।
नियमात्कर्मसञ्ज्ञायाः स्वधर्मेणाऽभिधीयते'॥ इति।

कर्त्तुः स्वधर्मेण = तृतीययेत्यर्थः। ननु णिजर्थं प्रति कर्मत्वं बाधित्वा

---

बृहच्छब्दरत्नः

एवञ्च पूर्वसूत्रेणाऽकर्मकाणां सिद्धावकर्मकग्रहणं व्यर्थमिति चेन्न। 'अकर्मक'ग्रहण-सामर्थ्येनाऽत्यन्ताऽविद्यमानकर्मकग्रहणात्। मासादीनान्तु निषेध्यसमर्पक'कर्म'-ग्रहणेन[1] न ग्रहणमिति स्पष्टं मूले। न चाऽन्तर्भावितण्यर्थमादाय सर्वेषां देश-कालादिभिन्नकर्मसम्भव इति वाच्यम्। प्रसिद्धाऽर्थे तदसम्भवस्य निर्व्यूढत्वात्[2]। किञ्चाऽकर्मकत्वस्याऽर्थघटितत्वात्, 'प्रत्यासत्ति'न्यायाच्च यस्मिन्नर्थे यस्य देश-कालादिभिन्नकर्माऽसम्भवस्तस्य तस्मिन्नर्थेऽकर्मकत्वमिति न कश्चिद्दोषः। कृत्रिमेति। अत एव कारकपरकर्मपदघटिताऽकर्मकपदपरसाहचर्यं न विरुध्यते। अत एवाऽजा-द्यन्तत्वेऽपि परप्रयोगः। अवक्ष्यदिति। एतेन 'सामर्थ्याद्गत्याद्यर्थकधातुग्रहणे सिद्धेऽर्थग्रहणं व्यर्थमि'त्यपास्तम्। कर्मशब्दस्य क्रियापरत्वाऽसम्पादनाऽर्थमेव चारितार्थ्यात्। नियमार्थमिति। नियमस्य सजातीयाऽपेक्षत्वेनाऽन्तर्भावितण्यर्थक-पचादीनां[3] योगे प्रयोज्यस्य कर्मत्वं भवत्येव।

---

लघुशब्दरत्नः

स्वपितिः। कार्यसंप्रत्ययादिति। कार्यसंप्रत्ययस्यौचित्यादित्यर्थः। ननु कर्त्तरि कर्म (१।३।१४) इति सूत्रे क्रियाया अपि कृत्रिमकर्मत्वोक्तेरिदमसङ्गतमत आह—कर्मेति। प्राञ्च इति। हेतुमति च (३।१।२६) इत्यत्र भाष्यकृत इत्यर्थः। गुणक्रियायाम्—णिच्प्रकृत्यर्थक्रियायाम्। स्वातन्त्र्यादिति। अस्य स्वधर्मेणाऽभिधाने हेतुत्वं, कर्मसञ्ज्ञानियमस्य च। प्रेषणे=ण्यर्थे। तृतीययेति। स्वधर्मेणेति। अस्य 'स्वकार्येणे'त्यर्थः। [4]विशिष्टक्रियायाः सम्बन्धे हेतुमाह—

---

[1] 'कर्मग्रहणेन ग्रहणम्' इति ख. पाठः।
[2] 'निर्व्यूढत्वात्'इति 'निष्प्रत्यूहत्वात्' इति वा पाठो भवेत्।
[3] 'ण्यर्थकपदाऽपचादीनाम्' इति ख. पाठः।
[4] 'विशिष्टायाः सम्बन्धे' इति लिखितेषु पाठः। स च भावप्रकाशादिविरुद्धः।

प्रकृत्यर्थं प्रति कर्त्तृत्वं परत्वादेव सिद्धम्। अन्तरङ्गत्वाच्च। स्वकारकविशिष्टा हि क्रिया णिजर्थेन सम्बद्धयते। हेतुमति णिज्विधानात्। कर्त्तृप्रयोजकस्य हेतुत्वात्। अत एवोपजीव्याऽपि कर्त्तृसञ्ज्ञा। एवञ्च—

'परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च।
प्रयोज्यस्याऽस्तु कर्त्तृत्वं, गत्यादेर्विधितोचिता॥'

इति चेत्। अस्त्वेवम्। लक्ष्यस्य निर्बाधत्वात्। 'नियमसूत्रमिदमि'ति ग्रन्थानां का गतिरिति चेत्। शृणु। 'णिजर्थस्य शाब्दं प्राधान्यं पुरस्कृत्य प्रधानाऽनुरोधिन्याः कर्मसञ्ज्ञायाः प्राबल्याद्विप्रतिषेध एव नास्ति। अन्तरङ्गोपजीव्यत्वे अपि प्रधानं प्रति न प्राबल्यं प्रयोजयत' इत्याशयेन ग्रन्थानामुक्ति-

---

**बृहच्छब्दरत्नः**

कर्त्तृत्वमिति। [1]णिच्प्रकृतेरपि धातुत्वेन प्रधानीभूतधातूपात्तव्यापाराऽऽश्रयत्वादिति भावः। परत्वादिति। यद्यपि [2]कर्मणः फलरूपव्यापाराऽऽश्रयत्वात्कर्त्तृत्वेन विशेषविहितकर्मसञ्ज्ञया बाधादिति पक्षे 'परत्वादि'ति [3]न युक्तं, तथाऽप्येकपदोपस्थाप्यफलव्यापारनिमित्तकयुगपत्प्राप्तिविषये कर्मसञ्ज्ञायाश्चारितार्थ्येऽनेकपदोपस्थाप्यफलव्यापारनिमित्ताऽनेककालप्राप्तिविषये तातङ्न्यायेन युक्तमेवेति ध्येयम्। अन्तरङ्गत्वादिति। न्यूनशब्दाऽर्थनिमित्तकत्वेनेत्यर्थः। पूर्वं प्रवृत्तत्वाच्चाऽन्तरङ्गत्वम्[4]। तदेवाऽऽह—स्वकारकेति। उपजीव्येति। 'तत्प्रयोजक'इतिसूत्रे सूत्रस्थतच्छब्देन कर्त्तुः परामर्शः। विभक्तिविपरिणामेन चाऽन्वयात्कर्त्तृसञ्ज्ञञ्च गृह्यते।

---

**लघुशब्दरत्नः**

हेतुमतीति। अन्तरङ्गत्वादिति। एवञ्च 'परत्वादि'त्यभ्युच्चयः। 'अस्य विधित्वमित्ययं पक्ष आकडारसूत्रे भाष्ये ध्वनित' इत्यभिमानः। तत्र हि 'परं कार्यमि'ति पाठे गत्यादीनां ण्यन्तानां कर्मकर्त्तृसञ्ज्ञमपि प्राप्नोति, आरम्भसामर्थ्यात्कर्मसञ्ज्ञा, "[5]परकार्यत्वाच्च कर्त्तृसञ्ज्ञा प्राप्नोती'त्युक्तम्। तत्रा'ऽऽरम्भसामर्थ्यादि'त्यस्य गत्यादिसूत्राऽऽरम्भसामर्थ्यादित्यर्थं मन्यते[6]।

---

[1] 'णिच्क्तेरपि कृते धातुत्वे' इति ख. पाठः।

[2] 'कर्मणोः फलरूपव्यापाराश्रयत्वे' इति क. पाठः।

[3] 'पुनरुक्तं' इति क. ख. पाठः।

[4] 'अन्तरङ्गत्वमिति' इति क. पाठः।

[5] 'परं कार्यत्वाच्च' इति क. ङ. पाठः।

[6] 'इतोऽग्रे—'लक्ष्यस्य निर्बाधत्वादिति। अनेन 'अर्थनिबन्धनयं सञ्ज्ञे'त्यस्य अनभिमतत्वं सूचयति। एतच्चाऽनुपदं स्फुटी भविष्यति' इति घ. मुद्रिते च अधिकः पाठः।

सम्भवः । अर्थप्राधान्यपुरस्कारे तु विधायकत्वमेवोचितमिति ध्येयम् ।

शत्रूनिति । स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः, स श्रीहरिर्मे गतिरित्यर्थः । नन्विह कथं स्वर्गस्य कर्मत्वं, कर्त्तुरीप्सिततमं

---

बृहच्छब्दरत्नः

उचितमिति । आर्थप्राधान्यस्य परत्वाऽन्तरङ्गत्वोपजीव्यत्वसहितत्वेन शाब्दप्राधान्याऽपेक्षया प्राबल्यमिति भावः । 'ग्रामं गमितो देवदत्तो यज्ञदत्तेने'त्यादौ कर्मकृत्समभिव्याहारे फलव्यापारयोर्व्यत्यासस्य वक्ष्यमाणत्वेन संयोगाऽपेक्षया, प्रयोजकव्यापाराऽपेक्षया च विशेष्यत्वाच्छाब्दप्राधान्यमप्यस्ति । अन्तर्भावितण्यर्थकपचादीनां योगे प्रधानीभूतधातूपात्तव्यापाराऽऽश्रयत्वाऽभावेनाऽऽर्थप्राधान्यस्याऽन्तरङ्गत्वो-पजीव्यत्वरहितत्वेन च शाब्दप्राधान्यस्यैव प्राबल्यात् प्रयोज्यस्य कर्मत्वमेव । यत्तु 'पाचयत्यादियोगे प्रकृत्युपात्तव्यापाराऽऽश्रयत्वमात्रविवक्षायां प्रयोज्ये कर्त्तृसञ्ज्ञैवे'ति । तन्न । अस्यामेव विवक्षायां 'गतिबुद्धी'तिसूत्रेण कर्मत्वस्य दुर्वारत्वात् । विधायकत्वस्य न्याय्यत्वात् । व्यापारस्य णिजर्थेऽन्वयात्, णिजन्तशब्दोच्चारणाच्च, तन्मात्रविवक्षाया निरूपयितुमशक्यत्वाच्च । एतेन 'णिजन्तधातूपात्तव्यापारजन्यफलाऽऽश्रयत्वमात्रविवक्षायां कर्मसञ्ज्ञैवे'त्यपास्तम् । एतत्कुक्षौ तस्याऽपि प्रवेशात् । अत एव वार्त्तिके'ऽभिवादि'ग्रहणं चारिताऽर्थम् । ध्वनितञ्चेदं 'हृक्रोरन्यतरस्यामित्युभयत्र विभाषे'ति वदता 'नवेति विभाषे'तिसूत्रे भाष्यकारेणेत्यन्यत्र विस्तरः ।

नन्विति । ननु 'तथायुक्तं चाऽनीप्सितमि'ति स्वर्गादीनां कर्मत्वं सेत्स्यतीति चेन्न । स्वर्गादीनामीप्सितत्वेनाऽनीप्सितत्वाऽभावात् । प्रयोजकव्यापारस्याऽपि तदुद्देशेन प्रवृत्तत्वात् । शत्रुतुल्यत्वाऽभावेन तथायुक्तत्वाऽभावाच्च । 'तथायुक्तमि'त्यत्र [1]'कर्त्तुरि'त्यनुवर्त्त्य कर्त्तृत्वस्य तत्राऽपि निमित्तत्वाच्च । वस्तुतस्तु णिजुत्पत्तेः पूर्वमेव स्वर्गादीनां कर्मत्वम् । तस्यामवस्थायां तस्यैव कर्त्तुरीप्सित-

---

लघुशब्दरत्नः

पुरस्कारे त्विति । तुनाऽरुचिः सूचिता–'प्रयोजकव्यापारेऽन्याऽनधीनत्वलक्षणाऽऽर्थप्राधान्यस्य, शाब्दप्राधान्यस्य च सत्त्वेनोद्देश्यत्वलक्षणाऽऽर्थप्राधान्यस्य प्रयोज्यव्यापारनिष्ठस्य पुरस्कारो न युक्त' इति । किञ्च कर्त्तृग्रहणं धात्वर्थप्रधानीभूतव्यापाराऽऽश्रयरूपस्वतन्त्रोपलक्षणं, न तु तत्सञ्ज्ञकपरम् । अत उपजीव्यत्वं दुरुपपादम् । आकडारसूत्रस्थस्या'ऽऽरम्भसामर्थ्यादि'त्यस्य एतन्नियमाऽऽरम्भसामर्थ्यादित्यर्थः । किञ्च 'परं कार्यमि'ति पाठे विरोधाऽभावात्सर्वत्र सञ्ज्ञाद्वयप्राप्तावस्य नियमार्थतैवोचिता । 'एषां कर्मसञ्ज्ञैवे'ति नियमस्तु न । प्राक्कडारात् (२।१।३) इति शास्त्रबाधाऽऽपत्तेः । स्पष्टञ्चेदं तत्रैव कैयटे । नन्विहेति । तथायुक्तम्

---

[1] 'कर्त्तुरित्यनुवृत्त्या कर्त्तृत्वस्य तत्रापि' इति क्वचित् पाठः । 'अनुवर्त्तते, तेन' इति वा पाठः । 'तेन कर्त्तृत्वस्य तत्रापि' इति क. पाठः ।

हि कर्म, न च शत्रवः कर्त्तारः, तेषां गत्यादिसूत्रेण कर्मत्वादिति चेत्। मैवम्। कर्मसञ्ज्ञायां हि कर्तृग्रहणं स्वतन्त्रस्योपलक्षणम्। स्वातन्त्र्यञ्च—धातूपात्त-व्यापाराऽऽश्रयत्वमेव। तच्च प्रयोजकसंनिधानेऽपि प्रयोज्यस्याऽस्त्येव। न चोपलक्षणत्वे प्रमाणाऽभावः। 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनामि'त्युक्त्वा 'ण्यन्ते कर्त्तुश्च, कर्मण' इति वदतो भाष्यकृत एव तत्र प्रमाणत्वात्। न हि लक्षणां विना णिजन्तानां द्विकर्मकता लभ्यते, येन 'ण्यन्ते कर्त्तुरि'ति वचनं सावकाशं स्यात्। ननु स्वतन्त्रे सङ्केतितस्य तत्रैव लक्षणा कथमिति चेत्। सञ्ज्ञाऽन्तराऽनुपहिते सङ्केतितस्य तदुपहितसाधारणे

बृहच्छब्दरत्नः

तमत्वम्। 'नन्वि'त्यादिना 'अकृतव्यूह'परिभाषया तदप्राप्तिराशङ्क्यते इति न कश्चिद्दोषः। णिच्प्रकृत्यर्थस्य[1] सञ्ज्ञाद्वयनिमित्तकोटौ प्रवेशेनाऽऽकडारादिति-सूत्रप्रवृत्त्या कर्मत्वस्यैव प्रवृत्तेः। 'दर्शयति भृत्यान् राजे'त्यादौ निमित्तभेदादुभयं साधु। उपलक्षणमिति। ध्वनितञ्चेदं सम्प्रदानसञ्ज्ञासूत्रे भाष्य-कैयटयोः। 'तत्प्रयोजको हेतुश्चे'तिसूत्रेऽप्येवमेव। यद्वा तच्छब्देन स्वतन्त्रस्यैव परामर्शः। एवञ्च शब्दाऽधिकारादिदोषशङ्काऽपि [2]नास्तीत्यपरमनुकूलम्। नन्वेवं 'माषे-ष्वश्वं बध्नाती'त्यादौ कर्मत्वं दुर्वारम्। कर्मणोऽप्यश्वस्य वस्तुतो भक्षणे स्वातन्त्र्या-दित्याशङ्क्याह—स्वातन्त्र्यं चेति। धातुपदञ्च प्रकृतधातुपरम्। तत्र धातूपात्तत्वं [3]विशेष्यतयैवेति ऽऽनाग्रहः। अत एवाऽन्तर्भावितण्यर्थे पचादौ प्रयोज्यस्य[4] कर्मत्वे तण्डुलादीनां कर्मत्वम्। एतेन 'अजां ग्रामं नयती'त्यादौ ग्रामादीनां कर्मत्वं व्याख्यातम्। ध्वनितञ्चेदं 'हेतुमति चे'तिसूत्रे भाष्ये। व्यापाराऽऽश्रयत्वं फलोपहितमेव गृह्यते। एतेन 'वारणवाच्यकोटौ प्रवृत्तेरपि प्रविष्टत्वेन तामादाय 'कूपादन्धं वारयती'त्यादौ कूपादेः कर्मत्वं दुर्वारम्। 'वारणार्थानामि'तिसूत्रा-ऽऽरम्भसामर्थ्यात्तदनङ्गीकारे त्वन्धादेरप्यपादानत्वं स्यादि'त्यपास्तम्। केचित्तु 'व्यापारश्चाऽत्र स्ववाचकवाच्याऽभावाऽप्रतियोगी गृह्यते' इत्याहुः। वस्तुतस्तु कूपादेरीप्सिततमत्वमेव न। सञ्ज्ञान्तराऽनुपहित इति। शास्त्रेणाऽर्थविशेषोपलक्षित-

लघुशब्दरत्नः

(१।४।५०) इत्यनेनाऽपि न। तस्याऽनीप्सितत्वाऽभावात्। तत्राऽपि 'कर्त्तुरि'त्यनुवृत्तेश्च। लक्षणां विनेति। कर्तृपदस्य स्वतन्त्रे लक्षणां विनेत्यर्थः। अत एव 'सार्थाद्धीयते' इत्यत्र

[1] 'णिच्प्रत्ययस्य' इति ख. पाठः।

[2] 'नास्तीति परमनुकूलम्' इति ख. पाठः।

[3] 'विशेष्येणैवेति नाऽऽग्रहः' इति ख. पाठः।

[4] 'प्रयोजस्य' इति ख. पाठः।

स्वतन्त्रमात्रे सेत्यवधेहि ।

नीवह्योरिति । यद्यप्यनयोः प्रापणमर्थो, न गतिस्तथाऽपि गतिरपि विशेषणीभूय प्रापणमध्ये प्रविष्टेत्येतावन्मात्रेण प्राप्तिं मत्वा प्रतिषेध उक्तः । नियन्त्रिति । नियन्ता पशुप्रेरको, न तु सारथिरेव । तेन 'वाहयति बलीवर्दान् यवानि'ति सिद्ध्यति । अनिषेध इति । 'प्रयोज्यः कर्मेति वक्तव्य-

बृहच्छब्दरत्नः

क्रियाऽऽधारस्य कर्तृत्वबोधनात् । शक्यताऽवच्छेदकञ्चाऽऽश्रयत्वमेव ।

विशेषणीभूयेति । संयोगाऽनुकूलव्यापारोपसर्जनव्यापारवाचित्वादिति भावः । ईदृशस्याऽपि गत्यर्थस्य[१] ग्रहणे इदमेव ज्ञापकम् । अत एव 'वाहयति बलीवर्दान् यवानि'ति सिद्ध्यति । अत एवा'ऽणाविति व्यर्थम्, [२]णिच्प्रकृतिभूतस्याऽपि तस्याऽधिकाऽर्थत्वेन[३] गत्यर्थत्वाऽभावादप्राप्तेरि'ति निरस्तम् । यत्तु 'सौकर्याऽतिशयविवक्षया निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिचि, पुनः प्रयोजकव्यापारविवक्षायां णिचि, द्वितीयणिचः प्रकृतिभूतस्य [४]ण्यन्तस्य गत्यर्थत्वाऽनपायेनाऽतिव्याप्तेर्वज्रलेपायितत्वात्, अधिकार्थऽग्रहणेऽप्यणावित्यावश्यकमि'ति । तन्न । सौकर्याऽतिशयविवक्षाया अभावे मूलभूताऽण्यन्ताऽवस्थास्थकर्तुस्त्वदुक्तण्यन्ताणिचि 'अणावि'त्युक्तावपि कर्मत्वस्य दुर्वारत्वादित्याहुः । 'आदिखाद्योर्ने'त्यादि[५]-निषेधो 'येन नाऽप्राप्ति'न्यायेन बुद्धिप्रत्यवसाननिमित्ताया एव, नत्वकर्मकत्वप्रयुक्ताया इति 'णेरणावि'तिसूत्रे भाष्ये ध्वनितमिति तत्रैव प्रपञ्चयिष्यामः । 'न गतिहिंसाऽर्थेभ्य' इतिसूत्रे ईदृशगत्यर्थग्रहणे न किञ्चिन्मानम् । किञ्च 'अर्थ'ग्रहणसामर्थ्येन

लघुशब्दरत्नः

कर्तुरपादानत्वेऽपि, कर्मत्वप्रयुक्तलकारसिद्धिरिति सम्प्रदानसञ्ज्ञासूत्रे कैयटे स्पष्टम् । तत्प्रयोजको हेतुः (१।४।५५) इति सूत्रेऽप्येवमेव । अत एव णिच्सिद्धिः । अवधेहीति । किञ्च प्रयोजककर्तृव्यापारप्रयोज्यसंयोगरूपफलाऽऽश्रयत्वेनाऽक्षतं कर्मत्वम् । किञ्च णिजुत्पत्तेः प्रागेव स्वर्गादीनां कर्मत्वप्रवृत्तिः । तस्यामवस्थायां कर्तृत्वसत्त्वात् । 'अकृतव्यहा' इति त्वनित्या, नाऽस्त्येव वा । प्रापणमिति । उत्तरदेशसंयोगाऽनुकूलव्यापाराऽनुकूलव्यापारो हि तत् । तथाऽपीति । अत एव प्रतिषेधाद्यथाकथञ्चिद्गत्यर्थानामप्यत्र ग्रहणमिति भावः । प्राप्तिं मत्वेति । 'न वे'ति सूत्रे भाष्ये हृक्रोः (१।४।५३) इत्यस्योभयत्र विभाषात्वमुक्त्वा, प्राप्तेऽभ्यवहरतिमुवा-

१ 'गत्यर्थस्याऽपि' इति ख. पाठः ।
२ 'णिचः' इति वा पाठः ।
३ 'अधिकारत्वेन' इति क. ख. पाठः ।
४ 'ण्यन्तस्याऽगत्यर्थत्वाऽनपायेन' इति ख. पाठः ।
५ 'नेति निषेधो' इति ख. पाठः ।

मि'ति फलितोऽर्थः । सूत इति । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' ।

आदयतीति । अकर्त्रभिप्राये फले शेषात्कर्त्तरि (१।३।७८) इति परस्मैपदम् । कर्त्रभिप्राये तु णिचश्च (१।३।७४) इत्यात्मनेपदमेव । तदपवादस्य निगरणचलनार्थेभ्यश्च (१।३।८७) इत्यस्य [1]'अदेः प्रतिषेध' इति निषिद्धत्वात् । सस्यमिति । क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसा द्रष्टव्या । तस्यामवस्थायां तेषां चेतनत्वात् । स्मारयतीति । यत्तु णेरणौ (१।३।६७)

बृहच्छब्दरत्नः

पदाऽन्तरनिरपेक्षाऽर्थस्यैव [2]विशेष्यरूपस्य ग्रहणस्योचितत्वादिति निरूपयिष्यामः । केचित्तु 'उक्तज्ञापकादेव गतिशब्देन संयोगोपलक्षितक्रियाया[3] ग्रहणेन 'दापयति'-'त्याजयति'–'तारयती'त्यादियोगेऽपि प्रयोज्यस्य कर्मत्वम् । तेन 'राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि । [4]साध्यमानो नृपं गच्छेद्दण्ड्यो दाप्यश्च तद्धनम्', 'मुक्ताहारं चिरपरिचितं त्याजितो दैवगत्या', 'वानरभटान् समुद्रं तारयति राम' इत्यादि सिद्धमि'ति प्राहुः । चेतनत्वादिति । स्वस्वामिनो वा हिंसा द्रष्टव्या । अत्र णिच् हेतुमण्णिजेव गृह्यते । गत्यर्थादिषु प्रायेण हेतुमण्णिच एव

लघुशब्दरत्नः

हृत्य, अप्राप्ते 'हरति भारं देवदत्तो, हारयति भारमि'त्युदाहरणात्, विपूर्वो हरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसाऽनाऽर्थं' इति तत्रत्यकैयटाच्च, न गति (१।३।१५) इति सूत्रभाष्ये 'हृवह्योरप्रतिषेधः, 'सम्प्रहरन्ते राजान' इति हिंसाऽर्थे एव भाष्ये उदाहरणाच्च, तत्रैव 'वहिर्न गत्यर्थः, देशाऽन्तरप्रापणं हि[5] वहेरर्थ' इति भाष्येण प्रापणस्य गतित्वाऽभावबोधनाच्च, न गत्यर्थत्वेन तेषां ग्रहणम् । प्राप्तिश्च सम्बन्धमात्रं, न संयोग एव, 'सुखं प्राप्तो,' 'धनं प्राप्तो,' 'भूः प्राप्ते'त्यादिव्यवहारात् । [6]आदिकर्मणि च कर्तरि क्तः । देशाऽन्तरप्राप्तेः परं गतिं विनाऽनुपपत्त्या, क्वचिन्नान्तरीयकतया गतिप्रतीतिरस्त्येव । तादृशमपि गत्यर्थकत्वमभिमत्य वार्त्तिकाऽऽरम्भः[7] । वस्तुतोऽप्राप्तिरेवे-

[1] 'अत्तेः प्रतिषेध' इति ङ. छ. पाठः ।

[2] 'विशेष्यरूपाऽर्थग्रहणस्य' इति क. पाठः । 'विशेषरूपार्थग्रहणस्य' इति ख. पाठः ।

[3] 'क्रियाया अग्रहणेन' इति क. पाठः ।

[4] 'बाध्यमानो' इति वा पाठः ।

[5] 'हिः' मुद्रितेषु त्रुटितः ।

[6] आदिकर्मणीति कर्त्तरि क्तः' इति घ. पाठः ।

[7] इतोऽग्रे—'अयं प्रतिषेधो न्यायसिद्धार्थं एव । सूत्रे 'अणी'ति च निवृत्तप्रेषणप्रकृतिकण्यन्ताण्णिचि-आद्य-ण्यन्तकर्त्तरि कर्मत्ववारणायेति वस्तुतोऽप्राप्तिरेवेत्यनेन सूचितम् । 'नियन्तृकर्तृकस्ये'ति त्वपूर्वविधायकमेवेति बोध्यम्' इति घ. पाठः ।

इति सूत्रे 'स्मरयत्येनं वनगुल्मः स्वयमेवे'त्युदाह्रियते, तत्र भाष्यप्रयोगादेव कर्मत्वं बोद्धव्यम्। शब्दायतेरिति। 'शब्दं करोती'त्यर्थे 'शब्दवैर (३।१।१७) इत्यादिना क्यङ्। ततो हेतुमण्णिच्। धात्वर्थेति। एतेन 'शब्दाययति सैनिकै रिपूनि'ति कर्म प्रयुञ्जानाः परास्ताः।

यत्तु प्राचा 'अय-क्रन्द-शब्दाय-ह्वेञां ने'त्युक्तम्। तत्राऽयतेरुक्तिस्तावन्निर्मूलैव। क्रन्द-ह्वेञोस्तु शब्दक्रियत्वमात्रेण प्राप्तिसम्भावना। वस्तुतस्तु 'नाऽसौ सूत्राऽर्थ' इत्युक्तम्। यदपि 'श्रु-ग्रह-दृशामि'ति कर्मत्वमुक्तम्। तत्र दृशिग्रहणं प्रामाणिकमेव। शृणोतेस्तु शब्दकर्मकत्वात्सिद्धम्। [1]ग्राहेस्तु द्विकर्म-

बृहच्छब्दरत्नः

सम्भवात्। ह्वञोस्तस्यैव सम्भवाच्च। तथा पर्युदासे प्रत्यासत्तिन्यायेन तस्यैव ग्रहः। भक्षधातुश्चुरादिण्यन्तः। भाष्यप्रयोगादिति। ज्ञापकसिद्धस्याऽसार्वत्रिकत्वाच्चेत्यपि बोध्यम्। ज्ञापकस्य सामान्याऽपेक्षत्वेनाऽमित्सञ्ज्ञकयोगेऽपि कर्मसञ्ज्ञेत्याहुः। परास्ता इति। ननु शब्दायतेः शब्दकरणकज्ञापने लक्षणया रिपूणां कर्मत्वं सूपपादमेव। अत एव 'जल्पतिप्रभृतीनामुपसङ्ख्यानमि'ति वचनं नाऽपूर्वम्। शब्दकरणकबोधनायां जल्पत्यादयो वर्त्तन्ते। 'जल्पति देवदत्तः', 'वचनेन बोधयती'त्यर्थः। तथा च बुद्ध्यर्थत्वादेव सिद्धिः। न चाऽधिकाऽर्थत्वान्नेति वाच्यम्। तत्त्वेऽपि प्रवृत्तेरङ्गीकृतत्वात्। शब्दनक्रियामात्रवृत्तिजल्पत्यादियोगेऽप्यकर्मकत्वादेव सिद्धेश्चेति चेन्न। लक्षणायां मानाऽभावात्। [2]लाडनपूर्वककथने जल्पत्यादीनां वृत्तेरङ्गीकृतत्वात्। 'यत्किञ्चिज्जल्पती'त्यादौ सकर्मकत्वेऽपि पुत्रादेः कर्मत्वं, वचनसार्थक्यञ्चेति स्पष्टमेव। इत्युक्तमिति। न चा-

लघुशब्दरत्नः

त्यनेन सूचितम्। हिंसेति (६६६ पृष्ठे)। हिंसाऽङ्गे भक्षणे च भक्षयतेर्वृत्तिर्बोध्या। भाष्यप्रयोगादेवेति। आध्यानाऽर्थक-घटादिभिन्न-स्मरतेरेव योगे तद्भाष्यप्रामाण्यात्कर्मत्वाऽभावो, घटादेस्तु भवत्येव कर्मत्वमिति भावः।

परास्ता इति। इदञ्च कैयटाऽनुरोधेनोक्तम्। वस्तुतः 'शब्दक्रियाणामि'ति पक्षे भाष्ये ह्वाययति-शब्दाययति-क्रन्दयतीनां निषेध उक्तो, न तु 'शब्दकर्मकाणामि'ति पक्षे। एवञ्च तत्र पक्षे शब्दायतौ प्रतिषेधाऽनुक्त्याऽकर्मकशब्दायतिसत्त्वे न मानम्। शब्दस्य [3]धात्वर्थेन संगृहीतत्वेऽपि, बहिर्भूतपुत्रादिकर्माऽभावे न मानमिति बोध्यम्।

[1] 'ग्राहेस्तु' इति घ. ङ. च. पाठः। 'ग्रहेस्तु' इति छ. पाठः।
[2] 'लालनपूर्वककथने' इति वा पाठः।
[3] 'धात्वर्थे' इति क. ग. पाठः। 'धात्वर्थसङ्गृहीतत्वेऽपि' इति ख. घ. पाठः।

कत्वं यद्यपि सुधाकरादीनां संमतं, तथाऽपि बहूनामसंमतम्। अत एव 'अजिग्रहत्तं जनको धनुस्तदि'ति भट्टिप्रयोगम्—'अजिग्रहत् = बोधितवानि'ति व्याचख्युः, तथा 'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाके'-त्यत्र 'ग्राहयितुम् = उद्वाह्यत्वेन बोधयितुमि'ति। युक्तश्चैतत्। ग्राहेर्द्विकर्मकत्वे हि 'जायाप्रतिग्राहितगन्धमाल्यामि'त्यत्र क्तेन प्रयोज्याया धेनोरभिधानं स्यात्। 'ण्यन्ते कर्तुश्च कर्मण' इत्युक्तेः। ततश्च 'जायया गन्धमाल्ये प्रतिग्राहितामि'ति स्यात्। सिद्धान्ते तु 'प्रतिग्राहिते गन्धमाल्ये यये'ति विग्रहः।

---

**बृहच्छब्दरत्नः**

ऽकर्मकत्वात्प्रवृत्तिः शङ्क्या। कदा चिद्देशकालादिभिन्नकर्मसम्भवेनाऽत्यन्ताऽविद्यमानकत्वाऽभावात्[१]। असंमतमिति। ज्ञापकसिद्धत्वादुक्तस्याऽसार्वत्रिकत्वाद्बाधादिवन्न[२] द्विकर्मकत्वमिति भावः।

भट्टिप्रयोगमिति। 'अजिग्रहत्तं जनको धनुस्तद्येनाऽऽर्दिदद्दैत्यपुरं पिनाकी। जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभाङ्क्षीद्रघुनन्दनस्तदि'ति। युक्तश्चैतत्। श्रीरघुपतिं प्रति नियोगकल्पनाऽनौचित्येन, स्वरूपोपस्थापनस्यैव कर्त्तव्यत्वेन, 'बोधितवानि'त्यर्थस्यैवाऽङ्गीकारात्। 'तमादौ कुलविद्यानामर्थमर्थविदां वरः। पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पिता' इति कालिदासश्लोके पूर्वार्द्धे ग्रहेर्बुद्ध्यर्थतया 'गतिबुद्धी'तिसूत्रेण कर्मत्वात् 'तमि'ति योजयित्वोत्तरार्द्धे 'तेने'ति विभक्तिपरिणामेन योज्यम्। इति स्यादिति। ततश्च व्यधिकरणत्वादन्यपदाऽर्थाऽभावाच्च बहुव्रीहिर्न स्यात्। समासाऽन्तरे तु विशिष्टे स्त्रीत्वं, पुंवद्भावश्च न स्यादिति भावः। ननु धेनुरूप-[३]प्रयोज्यकर्मणः कर्मत्वाऽविवक्षायां गन्धमाल्यरूपकर्मण्येव क्तप्रत्यये इष्टसिद्धिरिति चेन्न। 'ग्रामं गच्छति' 'भूमौ पतती'त्यादौ कर्त्तृ द्वारा व्यापाराऽऽश्रयत्वेन विवक्षायां परम्परासम्बन्धेनाऽधिकरणत्वे, फलाऽऽश्रयत्वेना[४]-ऽविवक्षायां निमित्तसद्भावेन

---

**लघुशब्दरत्नः**

व्याचख्युरिति। तेन बोधनाऽतिरिक्ताऽर्थस्य न द्विकर्मकत्वम्। अन्यथाऽप्रसिद्धाऽर्थपरिग्रहो व्यर्थ एव स्यादिति भावः। ग्राहेः—बोधनाऽतिरिक्ताऽर्थग्राहेः। ततश्चेति। एवं व्यधिकरणत्वात्, अन्यपदार्थाऽभावाच्च बहुव्रीहिर्न स्यादिति भावः। प्रतिग्राहिते इति।

---

१ 'अत्यन्ताऽविद्यमानकर्मकत्वाऽभावात्' इति पाठान्तरम्।

२ 'असार्वत्रिकत्वाऽभावाद्वाप्पादिवत् कर्मत्वम्' इति अस्फुटः क. ख. पाठः।

३ 'प्रयोजककर्मत्वाऽविवक्षायाम्' इति ख. पाठः।

४ 'अविवक्षायां निमित्तसद्भावेन, कर्मत्वाऽविवक्षाया निमित्तसद्भावेन च कर्मत्वाऽविवक्षायाः, अधिकरणत्वविवक्षायाश्चोपपादयितुं शक्यत्वेऽपि' इति ख. पाठः। अत्र 'कर्मत्वाऽविक्षायाः' इति सर्वत्र ख. पाठः।

'जायानिष्ठप्रेरणविषयीभूतं गन्धमाल्यकर्मकं यत्प्रतिग्रहणं, तत्कर्त्रीमि'त्यर्थः। अन्यपदार्थाऽन्तर्भावेणेव विशेषण-विशेष्यभाववैपरीत्येनैवैकार्थीभावकल्पनात्।

बृहच्छब्दरत्नः

च कर्मत्वाऽविवक्षायाः, अधिकरणविवक्षायाश्चोपपादयितुं शक्यत्वेऽपि, प्रकृते कर्त्तृत्वसम्पादनाऽर्थं जायानिष्ठप्रेरणविषयीभूतव्यापाराऽऽश्रयत्वविवक्षायाः सत्त्वेनेदृशे विषये कर्मत्वाऽविवक्षाया उपपादयितुमशक्यत्वात्। तादृशाऽर्थस्यैव कर्मत्वनिमित्तकोटौ प्रवेशात्। अत एव 'धनुषा विध्यती'त्यत्र साधनत्वमात्रविवक्षायामपि तस्य शरनिःसरणाऽभावेऽसम्भवेनाऽपादानत्वविवक्षाया अप्यावश्यकत्वेऽपि, 'परत्वात्करणसञ्ज्ञे'ति भाष्यादि-[1]सङ्ग्रहग्रन्थाः सगच्छन्ते। धातूपात्तक्रियाऽऽश्रयत्वाऽविवक्षायां सम्बन्धसामान्येन यथाकथञ्चिदन्वये [2]पूज्यपूजकभावाऽनापत्तौ चमत्काराऽनापत्तेश्च। णिचो दुर्लभत्वाऽऽपत्तेश्च। ननु [3]गवादिपदानां विग्रहे स्वाऽर्थमात्रपराणां समासेऽन्यपदार्थपरत्वमिव, विग्रहे 'प्रतिग्राहित'-शब्दस्य धेनुपरत्वेऽपि, वृत्तौ गन्धमाल्यपरत्वं सेत्स्यतीत्याशङ्क्याह—अन्यपदार्थाऽन्त-

लघुशब्दरत्नः

अस्य 'जायये'त्यादिः। तत्र जाया-प्रतिग्राहितशब्दयोस्तृतीयातत्पुरुषं कृत्वा बहुव्रीहिः कार्य इति भावः। बहुव्रीहिणा तृतीयातत्पुरुषस्तु दुर्लभो, विधायकाऽभावात्। अवयवेन सामर्थ्येऽपि, समुदायेन तृतीयाऽन्तस्याऽसामर्थ्याच्च। तदाह—जायानिष्ठेति। ननु द्विकर्मकत्वेऽपि धेनुरूपप्रयोज्यकर्मणः कर्मत्वाऽविवक्षायां गन्धमाल्यरूपकर्मण्येव क्ते, इष्टसिद्धिरिति चेन्न। णिजुत्पत्त्यर्थं प्रयोजकजायाया हेतुत्वाऽऽवश्यकत्वेन, हेतोश्च [4]कर्त्तृप्रयोजकत्वरूपत्वेन, प्रयोज्याया धेनोः कर्त्तृत्वाऽर्थं [5]जायानिष्ठप्रेरणविषयीभूतव्यापाराऽऽश्रयत्वविवक्षाया आवश्यकत्वेनेदृशाऽर्थस्यैवैतत्कर्मसञ्ज्ञानिमित्तकोटौ प्रवेशेनेदृशविषये कर्मत्वाऽविवक्षाया उपपादयितुमशक्यत्वात्। कर्मत्वशक्तेरपि तत्समनियतत्वेनाऽविवक्षाया असम्भव इत्यभिमानात्। न च निवृत्तप्रेषणप्रतिग्रहधातोर्णिचि, गन्धमाल्यकर्मण्येव क्ते, इष्टसिद्धिर्जायापदेन षष्ठीसमासे इति वाच्यम्। प्रकृत्यैव [6]तदर्थलाभे [7]णिजुपादानस्याऽपुष्टताऽऽपत्तेः। ननु गवादिपदानां विग्रहे स्वार्थमात्रपराणां समासेऽन्यपदार्थपरत्वमिव, 'प्रतिग्राहित'शब्दस्य धेनुपरत्वेऽपि, वृत्तौ गन्धमाल्यपरत्वं भविष्यतीत्यत आह—अन्यपदार्थेति। तदन्तर्भावेणैकार्थीभावस्य सूत्र-व्युत्पत्त्यादिबलेनाऽङ्गीकारेऽप्यन्याऽन्तर्भावेण तत्स्वीकारे मानाऽभाव इति भावः।

[1] 'सङ्ग्रह' इति क. नास्ति।
[2] 'पूज्यपूजकभावाऽनापत्तौ च' इति क. पाठः।
[3] 'भवादिपदानाम्' इति क. पाठः।
[4] 'प्रयोजत्वरूपत्वेन' इति लिखितेषु पाठः। 'प्रयोजकरूपत्वेन' इति मुद्रितेषु पाठः।
[5] 'तन्निष्ठ' इति मुद्रितेषु पाठः। [6] 'तदर्थलाभात्' इति क्वचित्पाठः।
[7] 'णिजुपपादनस्य' इति ख. पाठः। 'णिजुपादानस्य' इति क. पाठः।

**अभिवादिदृशोरिति ।** अभिवादयतेरप्राप्ते, दृशेस्तु प्राप्ते विभाषेयम् ।

**अभिनि** (१।४।४७) । नेरल्पाच्तरत्वेन पूर्वनिपाते कर्त्तव्ये विपरीतोच्चारणमीदृशसमुदाय–[1]विवक्षाऽर्थमित्याह–**संघातपूर्वकस्येति ।** तेनेह न—'निविशिते यदि शूकशिखा पदे' इति । **क्वचिन्नेति ।** 'एष्वर्थेष्वभिनिविष्टानामि'ति भाष्यप्रयोगश्चेह मानम् ।

उपपदविभक्तिमाह–**उभसर्वतसोरित्यादिना ।** 'उभसर्वयोस्तसौ उभसर्वतसौ, तदन्तयोर्योगे द्वितीया कार्ये'त्यर्थः । अत्र प्राञ्चः–'उभशब्देनोभयशब्दो लक्ष्यते, अन्यथा तसोऽसम्भवादि'त्याहुः । वस्तुतस्तु वृत्तिविषये

---

**बृहच्छब्दरत्नः**

भविर्णेवेति । एतेन 'वैपरीत्येनैवे'त्यत्र एवकारो व्यर्थ' इति परास्तम् । नेरल्पाच्तरत्वेनेति । 'अभिनी'त्यत्र द्वन्द्वः । तदन्तस्याऽप्यव्ययत्वेन पञ्चम्या लुक् । तेनेह नेति । 'वोतो गुणवचनादि'ति सूत्रस्थः 'सत्त्वे निविशते' इति भाष्यप्रयोगश्चाऽत्र मानं बोध्यम् । भाष्येति । 'समर्थसूत्रस्थे'ति शेषः । ज्ञापकस्य सामान्याऽपेक्षत्वेन 'उपान्वध्याङ्वस' इत्यस्याऽपि क्वचिदप्रवृत्त्या 'वने उपवसती'त्यादिसिद्धौ निषेधवचनं न वाचनिकम् । अत एव 'भोजनाऽभावधात्वर्थस्य कर्तृद्वारा रजन्याश्रितत्वविवक्षायामत्यन्तसंयोगाद्यविवक्षायां वा 'उपोष्य रजनीमेकामि'त्यादि सिद्धम् । ध्वनितञ्चेदं 'कालाऽध्वनोरि'तिसूत्रे भाष्ये । तथा चेयं सप्तम्यर्थे द्वितीया । अभिनिवेशः = आग्रहः । 'ग्राममभिनिविशते' । आग्रहवान् भवतीति फलितोऽर्थः । प्रवेशनाऽर्थे तु कर्मसञ्ज्ञा सिद्धैव । तत्राऽपि कर्तृद्वारा व्यापाराऽऽश्रयत्वविवक्षायामधिकरणसञ्ज्ञायां प्राप्तायां कर्मसञ्ज्ञाऽनेन विधीयते इति ध्येयम् ।

---

**लघुशब्दरत्नः**

[2]अभिवादयतेरिति । 'वदि अभिवादने' इति ण्यन्तस्येत्यर्थः । व्याख्यानात्सङ्घातग्रहणे स्थिते, व्याख्याने [3]बीजाऽऽभासं दर्शयति–पूर्वनिपात इति । निविशते इति । अत एव 'सत्त्वे निविशते' इति भाष्यप्रयोगः सङ्गच्छते । भाष्यप्रयोग इति । 'समर्थसूत्रस्थ' इति शेषः । उभसर्वयोस्तसाविति । उभांऽशे उभशब्दघटितसमुदायोद्देश्यकत्वं षष्ठ्यर्थ इति बोध्यम् । उभशब्दस्य शब्दपरत्वाद् वृत्तिविषयेऽपि नाऽयच् वार्त्तिके । उदाहरणे त्वन्तरङ्गत्वात् पूर्वमेवाऽयचि, तत उभयशब्दात्तस्यपि, तद्घटितसमुदायोद्देश्यकत्वमस्त्येवेति न दोषः । वृत्तिविषये इति । वृत्तौ कृतायामित्यर्थः । प्राचीनैर्हि उभौ साभ्यासस्य (८।४।२१) इति

---

[1] 'तादृशसमुदाये विवक्षार्थम्' इति मुद्रितेषु पाठः ।
[2] 'ण्यन्तस्येत्यर्थं' इत्यन्तोऽयं पाठो लिखितेषु नास्ति ।
[3] पूर्वनिपातप्रकरणस्याऽनित्यत्वाच्चाऽस्य बीजाऽऽभासत्वमिति ध्येयम् ।

अयच्प्रवृत्तावपि, उभशब्दाद्विहितो यस्तस्, तदन्तमस्त्येवेति यथाश्रुतं साधु ।

'धिगि'त्यविभक्तिको निर्देशो, 'गवित्ययमाहे'तिवदि'ति प्राञ्चः । तन्न । तथा सति अपदान्ततया दृष्टान्ते लोपः शाकल्यस्य (८।३।१९) इत्यस्येव, दार्ष्टान्तिके जश्त्वस्याऽप्यप्रवृत्तिप्रसङ्गात् । न चाऽयं गकाराऽन्त एवेति भ्रमितव्यम् । कस्य च दः (५।३।७२) इति सूत्रे 'धकिदि'त्युदाहरणस्याऽसङ्गति-प्रसङ्गात् । तस्मात् 'धिगि'ति विभक्त्यन्तमेव । 'प्रकृतिवदनुकरणमि'-त्यतिदेशात्सुपो लुक् । उभयतः कृष्णमिति । कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः । आद्यादित्वात्तसिः । षष्ठ्यर्थे द्वितीया । एवमुपपदविभक्तौ सर्वत्र बोध्यम् ।

'नाम्नोर्द्विधैव सम्बन्धः सर्ववाक्येष्ववस्थितः ।
सामानाधिकरण्येन, षष्ठ्या वाऽपि क्व चिद्भवेत्' ॥

—इति वृद्धोक्तौ षष्ठीग्रहणं तदपवादविभक्तेरप्युपलक्षणम् । 'द्विधे'त्युक्तिः

---

बृहच्छब्दरत्नः

अस्त्येवेति । अयम्भाव :—उभशब्दात्तसिः । अयच् तु 'नित्यमि'ति योग-विभागेन पूर्वं न प्रवर्त्तते । 'उभौ साभ्यासस्ये'तिनिर्देशेन वृत्तिघटकीभूतपदार्थे परत एव तद्विधानात् । वस्तुतस्तु 'उभय'शब्दाद्विहितत्वेऽपि[1] 'उभ'शब्दसम्बन्धी तसिर्भवत्येव । 'उभसर्वयोस्तसावि'ति समासे 'उभ'शब्दघटितसमुदायोद्देश्यकत्व-स्यैव षष्ठ्यर्थत्वात् । अप्रवृत्तीति । न च 'प्रकृतिवदनुकरणमि'त्यतिदेशेन पदत्व-लाभः । प्रकृतिप्रत्ययभावप्रयुक्तप्राप्तपदसञ्ज्ञायाः प्रकृतन्यायेन प्रकृतिसत्तामात्र-बोधनेऽप्यप्राप्तेरित्यादि प्रपञ्चितं प्रगृह्यसञ्ज्ञाप्रकरणे । किञ्च उभसर्वतसोरुपर्यादिषु त्रिषु 'पृथग्विनानानाभिरि'त्यादाविवेष्टाऽर्थलाभाऽर्थं विभक्तिरावश्यकी । तदेतद् ध्वनयन्नाह—विभक्त्यन्तमेवेति । आद्यादित्वादिति । 'कृष्णस्य पार्श्वद्वयाभ्यामागता'

---

लघुशब्दरत्नः

निर्देशेन वृत्तिघटके परत एवाऽयजिति व्याख्यातम् । तदाह—उभशब्दादित्यादि । एवञ्च तेषां लक्षणाऽऽश्रयणं व्यर्थमिति भावः । अविभक्तिक इति । 'अनुत्पन्नविभक्तिक' इति तदर्थ' इति तद्व्याख्यातारः । दृष्टान्तबलेन तथैव लाभात् । तदभिप्रेत्याऽऽह[2]—जश्त्वस्येति । अतिदेशादिति । अतिदेशेनाऽव्ययत्वादित्यर्थः । आद्यादित्वादिति । 'कृष्णसम्बन्धिपार्श्व-द्वयाभ्यामागता' इत्यर्थे पञ्चम्यास्तसिलि'त्यन्ये । सामानाधिकरण्येन=विनाऽपि सम्बन्धं विशेष्यविशेषणभावेन । षष्ठ्येति । भेदसम्बन्धपूर्वकविशेष्यविशेषणभावेनेत्यर्थः । नाम्नो-रिति । अनेन क्रिया-कारकयोः क्रिया-कारकभावरूपकारकविभक्त्यर्थसम्बन्धेनाऽन्वय इति

---

१ 'विहितत्वेन' इति ख. पाठः ।
२ 'एतदभिप्रेत्याह' इति क्वचित् पाठान्तरम् ।

सामानाधिकरण्य-वैयधिकरण्याभ्यां निर्वाह्या, षष्ठी-तदपवादयोरेककोटितया वा।

**धिक् कृष्णाभक्तमिति।** तस्य निन्द्यतेत्यर्थः। कथं 'धिङ् मूर्खे'ति। 'सम्बोधनपदस्य क्रियाऽन्वय' इति प्रागेवोक्ततया धिक्शब्दयोगाऽभावात्। क्रियापदञ्च क्वचिच्छ्रुतं, क्वचिदाक्षिप्तमित्यन्यदेतत्। तथा च 'मूर्खसम्बोध्यकं निषिद्धाऽऽचरणादि निन्द्यमि'ति[1] वाक्याऽर्थः। एतेन 'हा तात' 'हा देवि धीरा भवे'त्यादि व्याख्यातम्। यत्त्वाहुः—'उपपदविभक्तेः कारकविभक्ति-र्बलीयसी'ति सम्बोधने प्रथमैव भवति, सम्बोधनपदस्य कर्त्तृकारकवाचित्वा-दि'ति। तन्मन्दम्। [2]सम्बोधनपदस्य कर्त्तृकारकत्वे उक्तिसम्भवाऽभावात्। 'देव प्रसीदे'त्यादौ वस्तुगत्या देव एव कर्त्तेति चेत्। नैतावता कारकविभक्तित्वं लभ्यते। किञ्च 'देव त्वां भजे' 'त्वां भजन्ती'त्यादौ सम्बोध्यस्य वास्तवमपि न कर्त्तृत्वमित्यास्तान्तावत्।

**उपर्युपरीति।** कथन्तर्हि 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः'। उच्यते। उपरिबुद्धीनाम् = उत्तानबुद्धीनामुपरि चरन्तीत्यर्थः। एवञ्चाऽऽम्रेडि-

---

**बृहच्छब्दरत्नः**

इत्यर्थेन पञ्चम्यास्तसिलित्याहुः। वाक्यार्थ इति। 'धिङ् मूर्ख, देवदत्तः पचती'-त्यादौ 'मूर्खसम्बन्धिसम्बोधनविषया निन्दिता पचिक्रिये'ति बोधः। कारकविभक्ति-त्वमिति। कर्त्तृकारकविभक्तित्वमित्यर्थः। तथैवोपसंहारादिना लाभात्। अयमर्थः—'सम्बोधनप्रथमाऽन्ताऽर्थस्याऽऽख्याताऽर्थेन, 'त्वमि'त्यर्थेन च सहा-ऽभेदाऽन्वयाऽयोगाच्छब्देन क्रियाऽऽश्रयत्वस्योपपादयितुमशक्यत्वात्कर्त्तृत्वं दुर्लभम्। वास्तवक्रियाऽऽश्रयत्वमादाय कर्त्तृत्वाऽङ्गीकारे तु सर्वोपप्लव एव'।

---

**लघुशब्दरत्नः**

सूचितम्। वैयधिकरण्येति। 'षष्ठ्या वे'त्येतद् वैयधिकरण्योपलक्षणमिति भावः। क्रियान्वय इति। बोधनीयक्रियाऽन्वय इत्यर्थः। धिक्शब्दयोगाभावादिति। सम्बोधन-स्य क्रियाऽन्वयात् तत्क्रिययैव धिको योगो, न तेनाऽपीति भावः। व्याख्यातमिति। 'ताते'-त्यादेर्हाशब्देन न योग इति भावः। 'हा'पदस्य चाऽध्याहृत'त्वामि'त्यनेन 'मामि'त्यनेन वाऽन्वय इति तात्पर्यम्। कारकविभक्तित्वमिति। कर्त्तृकारकविभक्तित्वमित्यर्थः। सम्बोधन-पदार्थस्य देवस्य 'त्वमि'त्यनेन सहाऽभेदेऽपि, शब्दतः क्रियाऽऽश्रयत्वादिप्रतीतेरुपपादनस्याऽशक्य-तया कर्त्तृत्वं दुर्लभम्। वास्तवक्रियाऽऽश्रयत्वमादाय कर्त्तृत्वे तु बहूपप्लव इति भावः।

---

१ 'निन्द्यते' इति मुद्रितेषु पाठः।

२ 'सम्बोधनपदस्य' इति मुद्रितेषु पाठः। लिखितेषु तु 'पद'पदं नास्त्येव।

तत्वाऽभावान्न द्वितीया । यद्वा प्रतिपदोक्तस्य उपर्यध्यधसः सामीप्ये (८।१।७) इति कृतद्वित्वस्याऽत्र ग्रहणम् । तेन वीप्सायां द्विर्वचने सति नाऽस्य प्रवृत्तिः ।

'अन्यत्राऽपि दृश्यते' इत्युक्तं, तद्दर्शयति—अभितः परित इति । प्रतिभातीति । एष 'प्रति'शब्दः क्रियाविशेषकत्वादुपसर्गः, न तु कर्मप्रवचनीयः । अन्तरा त्वां मामिति । तव मम च मध्ये इत्यर्थः । सामर्थ्यादिति । अत एव हेतुत्वपर्यन्तमपि शब्दबोधे विषय इति स्वीक्रियत इति भावः । नदीम-

---

**बृहच्छब्दरत्नः**

नास्य प्रवृत्तिरिति । केचित्तु 'बुद्धीनाम् इना=श्रेष्ठा—बुद्धीना, तां—बुद्धीनाम्, द्वितीयाऽन्तमेवे'त्याहुः ।

अभित इति । यत्तु 'पर्यभिभ्यां चे'ति तसिलन्तमभित इति न गृह्यते, किन्तु आभिमुख्यवृत्त्यखण्डं, प्रतिपदोक्तत्वादि'त्याहुः । तन्न । तत्सत्त्वे मानाऽभावात् । 'अन्तरे'शब्देन [1]गृह्यमाणत्वेन प्रतिपदोक्तस्य साक्षादुच्चारणाऽभावाच्च । 'परित' इति साहचर्येण तद्ग्रहणस्याऽप्युचितत्वाच्च । स्पष्टञ्चेदं कैयटादिग्रन्थे । तव मम च मध्ये इत्यर्थ इति । 'अन्तरा'शब्द आधेयप्रधानोऽव्ययमेव गृह्यते, 'अन्तरेणे'त्यटाबन्तेन साहचर्यात् । 'अन्तरा'शब्दसाहचर्येणा'ऽन्तरेणे'ति अतृतीयान्तमेव गृह्यते । एवञ्च प्रतिपदोक्तपरिभाषाऽनुसृता भवति । कथन्तर्हि 'द्वयोश्चैवाऽन्तरा' 'अविद्यमाना अन्तरा येषामि'ति भाष्ये षष्ठीप्रयोगः, उपपदविभक्तीनां षष्ठ्यपवादत्वात् । अत्राऽऽहुः—मध्याऽपेक्षयाऽवधिरूपं[2] विवक्ष्यते, तदा द्वितीया । यदा त्वन्तराविद्यमानपदाऽर्थसम्बन्धमात्रं विवक्ष्यते, तदा षष्ठ्येव । [3]तथाहि न ज्ञायते किन्तयोरेवाऽवधित्वमुताऽन्ययोरिति । युक्तग्रहणाऽभावे श्रुतत्वादन्तराऽन्तरेणशब्दाभ्यामेव द्वितीयोत्पत्तिः स्यात् । न चाऽव्ययत्वेन लुकि वैयर्थ्यमिति वाच्यम् । विधानसामर्थ्येन तदप्रवृत्तेः सूपपादत्वात् । 'सपूर्वायाः प्रथमाया विभाषे'त्यादिनिवृत्त्या

---

**लघुच्छब्दरत्नः**

नास्य प्रवृत्तिरिति । अत एव [4]'सर्वेषामयमम्लानामुपर्युपरि वर्त्तते' इत्यादौ न द्वितीया । अत्र ह्युपर्युपरीत्यस्याऽतिशयोऽर्थो, न सामीप्यम् । वीप्साद्विर्वचनं चाऽत्रेति बोध्यम् । उपसर्ग इति । बुभुक्षिताऽन्वितप्रत्यर्थसम्बन्धस्य क्रियागतत्वाद् 'बुभुक्षितस्य न भाती'त्यन्वय इति भावः । मध्ये इति । 'अन्तरा' इति हि 'मध्ये' इत्यर्थकम् ।

---

[1] 'गृह्यमाणत्वेन प्रतिपदोक्तत्वाऽभावाच्च' इति ख. पाठः ।

[2] 'अवधिरूपत्वम्' इति क. पाठः ।

[3] 'तदा हि' इति ख. पाठः ।

[4] 'सर्वेषामयमम्लानम्' इति क. ख. घ. पाठः । 'अम्लानाम्' इति च. शोधितः पाठः ।

**न्विति। द्वितीयायाः सम्बन्धोऽर्थः। स चेह साहित्यरूप इत्यनुना द्योत्यते।**

बृहच्छब्दरत्नः

चारितार्थ्याच्च। अपि च 'नमःस्वस्तिस्वाहे'तिसूत्रस्थ'योग'ग्रहणस्याऽपि [1]फलाऽन्तराऽऽवश्यकत्वात्। 'पृथग्विनानानाभिरि'त्यादाविव तृतीयापाठे लाघवाऽभावाच्च। लक्षणे कर्मप्रवचनीयसञ्ज्ञाया अवकाशो यो न हेतुः—'वृक्षमनु विद्योतते विद्युदि'तीति प्राञ्चः। वस्तुतस्तु हेतुत्वाऽविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां 'संहितामनु प्रावर्षदि'त्यादावपि हेतुतृतीयाया अप्राप्तत्वेन द्वितीयाऽवकाशः सूपपादः। न हि 'हेतावि'तिसूत्रेण हेतुत्वाऽविवक्षायां वस्तुगत्या हेतौ तृतीया विधीयते। 'हेतावि'तिसप्तम्या वाच्याऽर्थे निरूपणात्। 'दण्डेन घट' इत्यादौ हेतुत्वाऽविवक्षायां षष्ठ्या इष्टत्वाच्च। स्पष्टञ्चेदं 'स्थाण्वोरिच्चे'तिसूत्रे भाष्य-कैयटयोः। हेतुतृतीयाया अवकाशो 'धनेन कुलम्'। एवञ्च हेतुत्वस्याऽपि विवक्षायां तृतीया वचनसामर्थ्याद्बाध्यते। अन्यथा 'येन नाप्राप्ति'न्यायेन 'कर्मप्रवचनीययुक्ते द्वितीये'त्यस्य षष्ठ्यपवादकत्वमेव स्यात्। पुनः सञ्ज्ञाकरणेन पुनः प्रवृत्तिबोधनसामर्थ्यात्तद्बाधः। एतेन 'जपमनु सिञ्चती'त्यादौ षत्वाऽभाव एव फलमि'त्यपास्तम्। वक्ष्यमाणरीत्याऽस्यामवस्थायां क्रियायोगाऽभावेनोपसर्गत्वाऽभावात् षत्वाऽप्रवृत्तेश्च। शब्दफलस्याऽनिरूपणाच्च। तथा च 'जपमनु प्रावर्षदि'त्यत्र द्वितीयायाः सम्बन्धोऽर्थः। सम्बन्धो हेतुहेतुमद्भावः, लक्ष्यलक्षणभावश्चे'त्यनुना द्योत्यते। उक्तञ्च हरिणा—'हेतुहेतुमतोर्योगपरिच्छेदेऽनुना कृते। आरम्भाद्बाध्यते [2]प्राप्ता तृतीया हेतुलक्षणा' इति। [3]'तृतीयार्थे' इतिसूत्रेण गताऽर्थता नाऽऽशङ्क्या। 'पुरस्तादपवाद'न्यायेन 'सहयुक्तेऽप्रधाने' इत्येतन्मात्रबाधकत्वात्। उपपदविभक्त्या सजातीयाया एव बाधस्य कर्तुं युक्तत्वाच्च। पूर्वोदाहरणे लक्ष्यलक्षणभावप्रतीत्यनापत्तेश्च। अत एव [4]'हेतुभूतजपोपलक्षितवर्षणमर्थ' इति मूलोक्तिः सङ्गच्छते। तदेव ध्वनयन्व्याचष्टे—अत एवेति (६७३ पृष्ठे)।

**सम्बन्धोऽर्थ इति।** स्वस्वामिभावादिनिष्ठसम्बन्धत्वाऽनङ्गीकर्तॄणां मते तु पदार्थोपस्थितिवेलायामनेकसम्बन्धानामुपस्थितावपि शाब्दबोधे एकविषयक एव बोधः[5]। 'सहयुक्तेऽप्रधाने' इति सूत्रेऽप्रधानग्रहणं योगविभागाऽर्थम्। तत्र च 'सहयुक्ते' इत्यनुवर्त्तते। तथा च सूत्राऽऽरम्भसामर्थ्येन साहित्ये[6] तृतीया। अत एव 'वृद्धो यूने'त्यादौ सहशब्दाऽभावेऽपि साहित्यं तृतीयाऽर्थः। पूर्वसूत्रेण

[1] 'फलान्तरत्वात्' इति ख. पाठः।

[2] 'प्राप्तात्र द्वितीया' इति ख. पाठः।

[3] 'न च तृतीयार्थेतिसूत्रेण गतार्थता शङ्क्या' इति क. पाठः।

[4] 'हेतुभूतजपोपलक्षितं वर्षणमित्यर्थं' इति तु मुद्रितकौमुदीपाठः।

[5] 'बोध्यः' इति क. ख. पाठः।

[6] 'साहित्ये न तृतीया' इति ख. पाठः।

**लक्षणेत्थम् (१।३।९०) । वृक्षं प्रतीति । वृक्षसम्बन्धि [1]द्योतनमर्थः । सम्बन्धश्च लक्ष्य-लक्षणभाव इति प्रत्यादयो द्योतयन्ति । भक्तो विष्णुं प्रतीति । विष्णोर्भक्तेश्च विषय-विषयिभावः प्रत्यादिद्योत्यः । लक्ष्मीरिति । लक्ष्मीरूपस्य भागस्य हरिणा सह स्व-स्वामिभावः । वृक्षं वृक्षमिति । इह वीप्सा द्विर्वचनेनैव द्योत्यते । परिशब्दस्तु क्रियया**

---

**बृहच्छब्दरत्नः**

तु 'सह'शब्दयोगे सम्बन्धमात्रे । तत्र च तृतीयाऽन्तं सहशब्दे एवाऽन्वेति । सहशब्दश्च प्रथमाऽन्ते । 'तृतीयाऽर्थे' इति सूत्रे सङ्कोचे मानाऽभावादुभयं गृह्यते । तथा च 'नदीमन्ववसिता सह सेने'त्यत्राऽपि साहित्याऽतिरिक्तसम्बन्धसत्त्वेऽपि कर्मप्रवचनीयसञ्ज्ञा प्रवर्त्तते ।

लक्ष्यलक्षणभाव इति । स च [2]सम्बन्धो ज्ञप्तिक्रियाजनितः । कर्म=क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः । बाहुलकात्कर्त्तरि अनीयर् । स च भूते । तेन सम्प्रति क्रियां न द्योतयन्तीति लभ्यते । 'कर्म'शब्देन क्रियाजनितसम्बन्ध उच्यते । 'प्रवचनीय' इति कर्मणि अनीयर् । बहुव्रीहिः समास' इत्यप्याहुः[3] । 'गत्युपसर्गसञ्ज्ञाऽपवाद' इति मूलग्रन्थस्तु 'द्वन्द्वाऽपवाद एकशेष' इतिवद्योज्यः, काचित्कीं प्राप्तिमादाय[4] वा । महासञ्ज्ञाकरणसामर्थ्यात्[5] क्रियायोगे यद्धर्मवैशिष्ट्यमनुभूतं तद्धर्मविशिष्टस्यैव कर्मप्रवचनीयसञ्ज्ञा । गत्युपसर्गसञ्ज्ञयोस्तु क्रियायोगाऽभावादेवाऽस्यामवस्थायां न प्रवृत्तिः । 'अनुर्लक्षणे' इति सूत्रे गत्युपसर्गसञ्ज्ञयोरभावस्य निर्णीतत्वेनाऽर्थाऽधिकारात्सर्वत्र तयोरभाव एवोचितः । निपातसञ्ज्ञायास्तु दुर्वारत्वेन महासञ्ज्ञाकरणसामर्थ्यात्समावेशः । यद्वा 'प्रादय' इति योगविभागसामर्थ्यान्निपातसञ्ज्ञा-कर्मप्रवचनीयसञ्ज्ञयोः समावेशः, 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्चे'तिचाद्यन्तर्गणसूत्रेण निपातत्वं वा । यद्वा 'चादयोऽसत्त्वे' इत्यारम्भसामर्थ्यात्प्राक्पदाऽध्याहारलाभे 'प्राग्रीश्वरान्निपाता' इतिसूत्रे प्राक्पदोपादानसामर्थ्येन 'प्राङ्निपाताः सन्तः, पश्चाद्गत्यु-पसर्ग-कर्मप्रवचनीयसञ्ज्ञा लभन्ते' इत्यनेन निपातसञ्ज्ञया सह समावेशः । न चैवमधिरीश्वरे इत्यत्र दोष इति वाच्यम् । 'अधी'-

---

**लघुशब्दरत्नः**

लक्ष्यलक्षणेति । वृक्षप्रकाशेन विद्युद्विद्योतज्ञानाद् वृक्षो लक्षणं, विद्युद्विद्योतनं

---

[1] 'विद्योतनम्' इति मुद्रितेषु पाठः ।

[2] 'सम्बन्धाऽप्राप्तिक्रिया' इति क. पाठः । 'अवाप्तिक्रिया' इति ख. पाठः ।

[3] 'इत्यपि प्राहुः' इति ख. पाठः ।

[4] 'वा' इति ख. नास्ति ।

[5] 'क्रियायोगो' इति क. ख. पाठः ।

**सम्बध्यते । कर्मणि द्वितीया । 'कर्मप्रवचनीयसञ्ज्ञया उपसर्गसञ्ज्ञाया बाधात् षत्वं न । 'एतदर्थमेव लक्षणादयो विषयतयोपात्ता' इति व्याख्यातमाकरे । पञ्चम्यपाङ्परिभिः (२।३।१०) इति तु न भवति । वर्जनाऽर्थेनाऽपेत्यनेन साहचर्यात् । ममाऽभि ष्यादिति । 'मम भागः स्यादि'त्यर्थः । 'मामभि**

---

बृहच्छब्दरत्नः

त्यंशस्य 'रीश्वर'शब्दात्पूर्ववृत्तित्वात्[1] । वस्तुतस्तु 'विभाषा कृञी'तिसूत्रे 'अधिरीश्वरे' इत्यनुवृत्तेः सत्त्वेन व्याप्तिन्यायादर्थाऽधिकाराऽनुरोधाच्चोत्तर-सूत्रस्थ-'रीश्वर'शब्दस्यैव ग्रहणमित्यलम् ।

आकरे इति । अत एवोद्देश्यत्वेनाऽनुर्लक्षणे इत्यादिवत्सञ्ज्ञिनां पूर्वनिर्देशे कर्त्तव्ये विपरीतोच्चारणं वीप्सारूपाऽर्थस्य सान्निध्यबोधनद्वारा पुनर्विधानाऽर्थम् । तेनाऽन्यद्योत्येऽपि प्रवृत्तिः । अत एव 'वीप्सा'शब्दस्य परनिपातनम् । इदञ्च ज्ञापकं बहुलक्ष्यसंस्काराऽनुरोधेन सर्वविषयकं, न तु 'प्रति'शब्दविषयकमेव । इह तु समासस्य प्रवृत्तिरेव न । 'प्रति'शब्दस्य वीप्साऽर्थकत्वाऽभावात् । 'प्रति'-शब्द-द्वितीयाऽन्तयोः क्रियायामन्वयेन सामर्थ्याऽभावाच्च । विनिगमनाविरहात् प्रतिशब्दस्य वीप्साऽर्थकत्वे पाक्षिकसमासाऽभावोऽपि ज्ञाप्यते इत्यग्रे निरूप-यिष्यामः । यदा[2] तु 'वृक्षं प्रति सिञ्चती'त्यत्र प्रतिशब्दस्यैव वीप्साद्योतकत्वं, तदाऽपि कर्मप्रवचनीयसञ्ज्ञा भवत्येव । विषयस्याऽत्राऽपि सत्त्वात् । लक्षणादि-साहचर्येण शब्दमर्यादया प्राप्ताऽर्थस्य बाधितुमशक्यत्वाच्च । वृक्षस्य तु कर्मत्वा-ऽविवक्षायां 'न माषाणामश्नीयादि'तिवत्प्राप्ताऽपि षष्ठी व्याप्तिविशिष्टस्याऽन्यत्रा-ऽन्वयात् 'कर्मप्रवचनीययुक्ते' इत्यनेन बाध्यते इत्याहुः । यत्तु 'इत्थम्भूतादिसाहचर्येण लक्षणमात्रे एव कर्मप्रवचनीयसञ्ज्ञा प्रवर्त्तते । अत एव 'अनुर्यत्समया' 'यस्य चाऽऽयाम' इतिसूत्रोदाहरणयोः कर्मप्रवचनीयसञ्ज्ञाया अभावेन द्वितीया ने'ति । तन्न । 'लक्षणेनाऽभिप्रती आभिमुख्ये' इति सूत्रस्थवृत्ति-हरदत्त-ग्रन्थविरोधाऽऽपत्तेः । 'अग्निमभी'तिप्रयोगाऽसिद्ध्यापत्तेश्च । अत एव 'अनुर्लक्षणे' इतिसूत्राऽऽरम्भ-सामर्थ्यात्तृतीया बाध्यते' इति सिद्धान्तः सङ्गच्छते । वस्तुतस्तु कर्मप्रवचनीय-

---

लघुशब्दरत्नः

लक्ष्यम् । कर्मणीति । वृक्षपदार्थस्य सेचनं प्रति कर्मत्वात् । अत एव '[3]वृक्षस्य वृक्षस्य प्रति सेचनमि'त्यादौ षष्ठीति भावः । विषयतयेति । अन्यद्योत्याया अपि वीप्सायाः सञ्ज्ञां प्रति निमित्तत्वादिति भावः । इतरे लक्षणादयस्तु द्योत्या एवेति बोध्यम् । इति तु न भवतीति । विशिष्टक्रियासम्बन्धे विशेषणेनाऽपि सम्बन्धात्प्राप्तिरिति भावः । एतत्सर्वं

---

[1] 'पूर्वं वृत्तित्वात्' इति ख. पाठः ।

[2] 'यदि तु' इति क. ख. पाठः ।

[3] 'वृक्षस्य प्रति सेचनम्' इति क. पाठः ।

**ष्यादि'त्यपि प्राञ्चः प्रत्युदाहरन्ति। तत्र मां प्राप्नुयादित्यर्थः। उपसर्गवशेनाऽस्तेः सकर्मकत्वा'न्मामि'ति द्वितीया। अत्र च 'मम भाग' इत्यर्थतः पर्यवसानाद् 'अभागे' इति कर्मप्रवचनीयत्वे निषिद्धे, उपसर्गप्रादुर्भ्याम्। (८।३।८७) इति षत्वम्। पूजायां चेति। सुः पूजायाम् (१।४।९४) इति पूर्वसूत्रात् 'पूजा'ग्रहणमनुकृष्यते।**

**कालाध्वनोः (२।३।५)। अन्तं = विराममम् अतिक्रान्तोऽत्यन्तः। स चाऽसौ संयोगः। निरन्तरसन्निकर्ष इत्यर्थः। द्वितीया स्यादिति। श्रुत-**

---

**बृहच्छब्दरत्नः**

सञ्ज्ञायामपि 'वनस्याऽनु' 'गङ्गाया अनु' इत्यादौ द्वितीयाया न प्रवृत्तिः। कर्मप्रवचनीययुक्तत्वाऽभावात्। कर्मप्रवचनीययुक्तत्वं कर्मप्रवचनीयसञ्ज्ञानिमित्तसम्बन्धाऽऽश्रितत्वम्। प्रकृते च तद्द्योत्यसम्बन्धाऽऽश्रितत्वं—वनसामीप्यस्य, गङ्गादैर्घ्यस्य चाऽस्ति। [1]तद्वाचिशब्दस्तु न प्रयुक्त एव। वन-गङ्गयोस्तु सामीप्यादिसम्बन्धेनाऽन्वयात्षष्ठीति, तद्द्योतकोऽनुरिति सामर्थ्यं चाऽस्ति। 'लक्षणेनाभिप्रती आभिमुख्ये' इति सूत्रोदाहणे तु 'अभ्यग्नि' 'अग्निमभी'त्यादावग्न्यादीनां [2]लक्षणत्वाद् द्वितीयैव युक्ता। एतेन 'सर्पिषोऽपि स्यादि'त्यत्र 'अपिः पदार्थे'त्यादिना कर्मप्रवचनीयत्वेन द्वितीया दुर्वारे'त्यपास्तम्। 'अपि'शब्दद्योत्यबिन्दावन्वयेऽपि तेन सम्बन्धेनाऽन्यत्राऽन्वयाऽभावात्। सर्पिरादीनामस्यामवस्थायां बिन्द्वाश्रयाऽभावाच्च। वीप्सायान्तु वृक्षादीनां वीप्साऽऽश्रितत्वमस्त्येव। किञ्च 'अपि'शब्देन भवनदौर्लभ्यस्यैव द्योतितत्वेन बिन्दुद्योतकत्वाऽभावाच्च। अपि च बिन्दुरूपकर्त्तृनिष्ठदौर्लभ्यस्य द्योतितत्वेऽपि, कर्त्तृद्योतकत्वे न किञ्चिन्मानम्। किञ्चाऽऽख्यातोपात्ताऽऽश्रयेऽवयवाऽवयविभावेन 'सर्पिष' इत्यस्याऽन्वयो, न बिन्दौ। कर्त्तृविशेषस्त्वपिशब्दसंनिधानात्प्रतीयते। इयमेव हि अपिशब्दस्य पदाऽर्थद्योतकता नाम। ध्वनितञ्चेदं मूलग्रन्थे।

कालाध्वनो। एतेन 'उपोष्य रजनीमेका'मिति व्याख्यातम्। 'एकादश्यां न भुञ्जीते'ति तूपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायात्सिद्धम्। न चोभयो-

---

**लघुशब्दरत्नः**

हरदत्ताऽनुरोधेन। कर्मत्वाऽविवक्षायामपि द्वितीयाऽर्थं सञ्ज्ञाया आवश्यकत्वात्। किञ्च परेः क्रियाविशेषकत्वेऽन्वर्थत्वेन कर्मप्रवचनीयत्वस्यैवाऽनापत्तिरित्यन्यत्र विस्तरः। नन्वत्राऽर्थे भागाऽप्रतीत्या कथं निषेधोऽत आह—अत्र चेति। अर्थतो भागे पर्यवसानमादाय निषेधप्रवृत्तिरिति भावः। कालाध्वेति। येन कालेन, अध्वना वाऽत्यन्तसंयोगस्तद्वृत्तिभ्यामित्यर्थः।

---

[1] 'तद्वाचिशब्दस्तु प्रयुक्त एव' इति ख. पाठः।

[2] 'अग्न्यादीमनावलक्षणत्वात्' इति क. ख. पाठः।

त्वात्कालाऽध्ववृत्तिभ्यामेव। मासस्येति—कृत्वोऽर्थप्रयोगे कालेऽधिकरणे (२।३।६४) इति षष्ठीत्याहुः। तन्न। तत्र 'शेष'ग्रहणाऽनुवृत्त्या 'द्विरह्नो भोजनमि'ति कृदन्तेन सह समासनिवृत्तेरेव[1] फलत्वात्। तस्मादिह षष्ठी शेषे (२।३।५०) इति सूत्रेणैव षष्ठीति तत्त्वम्।

इति द्वितीया।

---

बृहच्छब्दरत्नः

रपि क्रियानिमित्तकत्वेनोक्तन्यायाऽप्रवृत्तिः। तत्र हि क्रियायाः प्राधान्येन तन्निमित्त-कार्यस्य प्राबल्यं बीजमिति वाच्यम्। [2]'किं' 'कुत्रे'त्याद्यंशे क्रियाया उत्थिता-ऽऽकाङ्क्षत्वेन तन्निमित्तकार्यस्य प्राबल्यमित्येतादृशबीजस्याऽपि वक्तुं शक्यत्वात्। वस्तुतस्तु एकादश्यादीनां न कालवाचकत्वं, मासादीनामिव क्रियापरिच्छेदकत्वा-ऽदर्शनात्। 'पूर्णो मासोऽस्यामि'त्यत्र समस्यमानपदाऽर्थाऽतिरिक्ताऽन्यपदार्थ-सम्पादनाऽर्थमावश्यकत्वाच्च। कालत्वेन प्रसिद्धमासादीनामेव ग्रहणस्य न्याय्य-त्वाच्च। किञ्चाऽन्तराऽन्तरेणेतिसाहचर्यात् क्रियायोगे नाऽस्य प्रवृत्तिः। स्पष्टञ्चेदं भाष्ये। अत एवा'ऽऽस्यते मास' इत्यादौ द्वितीया स्यादि'ति शङ्काऽपि समाहिता। अनभिहिताऽधिकाराच्च। 'कालाऽध्वनोरि'तिदेशभावयोरप्युपलक्षणमित्याहुः।

इति द्वितीया।

स्वतन्त्रपदस्य स्वेच्छाचारिपर्यायवचनस्य[3] विशेष्ये लक्षणा। तत्र यद्यपि 'हतो' 'गत' इत्यादौ कर्मकृति फलस्य विशेष्यत्वं, तथाऽपि 'पचती'त्यादौ, 'ग्रामं गमितो देवदत्तेन यज्ञदत्त' इत्यादौ कर्मकृति च क्रियाया एव विशेष्य-त्वेन कर्मसञ्ज्ञावैयर्थ्याऽऽपत्त्या च प्रकृतधात्वर्थं प्रति जन्यत्वेनाऽन्वयित्व-रूप-प्रधानत्वविवक्षया च व्यापार एवोच्यते। स च प्रकृतधातुवाच्यः। 'कारके' इत्यधिकारात् तस्य सञ्ज्ञाया वैयर्थ्याऽऽपत्त्या तदाश्रये पर्यवस्यति। यद्वा तस्य कचित्कारकचक्रप्रयोक्तृत्वेन,[4] तं विना कर्मत्वाद्युपाधीनामभावाच्च स्वतन्त्र-पदेनाऽऽश्रय एवोच्यते। 'ग्रामाय गच्छती'त्यादौ सन्दर्शनादिकं धातुवाच्यमि'-तिवादिनां मते तु सन्दर्शनाद्याश्रयत्वेनैव[5] देवदत्तस्य कर्त्तृत्वम्, स्वतन्त्रतुल्यनिष्ठ-

---

लघुशब्दरत्नः

तस्मादिति। अन्तरङ्गत्वाच्चेत्यपि बोध्यम्। एतेन 'शेषग्रहणाऽननुवृत्तौ तेनैवे'ति परास्तम्।

इति द्वितीया।

---

[1] 'समासप्रवृत्तेरेव' इति मुद्रितेषु पाठः।

[2] 'किञ्च' इति क. पाठः।

[3] 'विशेषे' इति ख. पाठः।

[4] 'प्रयोजकत्वेन' इति ख. पाठः।

[5] एवकारः ख. नास्ति।

(अथ तृतीया)

**स्वतन्त्रः कर्त्ता (१।४।५४)। प्रधानीभूतधात्वर्थं प्रत्याश्रयत्वं स्वातन्त्र्यम्। आह च—**

**'धातुनोक्तक्रिये नित्यं कारके कर्त्तृतेष्यते'। इति।**

**साधकतमं करणम् (१।४।४२)। प्रकृष्टेति। यद्व्यापारादनन्तरं क्रियानिष्पत्तिस्तत्प्रकृष्टम्। उक्तश्च—**

**'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।**
**विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्'॥ इति।**

---

बृहच्छब्दरत्नः

त्वादेव वा व्यापारस्य प्राधान्यम्। तदाह—प्रधानीभूतेति। न चैवं 'घटो भवती'-त्यादौ घटादीनां कर्त्तृत्वं न स्यात्, उत्पत्तेः पूर्वं तेषामभावादिति वाच्यम्। ईदृशे विषये उपादानकारणस्य व्यापाराऽऽश्रयत्वविवक्षायाः कर्त्तृत्वप्रयोजकत्वात्। बुद्ध्यारूढतया घटादीनां सत्त्वाच्च। एतेन 'पञ्चभिर्हलैः कर्षती'ति प्रयोगो न युक्तः, [1]प्रयोज्यव्यापारस्य धातुवाच्यत्वे तदाश्रयाणां बहुत्वाद् बहुवचनाऽऽपत्तेः। प्रयोजकव्यापारस्याऽपि धातुवाच्यत्वे णिजापत्तेः, तथा तात्पर्याऽभावाच्चे'ति निरस्तम्। ईदृशे विषये प्रयोज्यद्वारा प्रयोजकस्य व्यापाराऽऽश्रयत्वविवक्षायां बाधकाऽभावादित्याहुः। प्रधानत्वञ्च न तृतीयावाच्यकोटिप्रविष्टम्। निरवकाशया [2]कर्मसञ्ज्ञया बाधात्। न चैवं 'चैत्रं गच्छती'त्यापत्तिः। चैत्रस्योद्देश्यत्वा-ऽभावेनेप्सिततमत्वाऽभावात्। निमित्तकार्यिणोरेकत्वस्याऽयुक्तत्वाच्च। एतेन 'तथा युक्तं चाऽनीप्सितमि'ति दुर्वारमि'त्यपास्तम्। परत्वेन [3]कर्मसञ्ज्ञाया बाधाच्च।

यद्व्यापारादनन्तरमिति। 'करणतृतीयाया आश्रयो, व्यापारश्चाऽर्थ' इति वैयाकरणभूषणे पितृव्यचरणाः। 'व्यापारमात्रमर्थ' इति मनोरमाविलासेऽस्मद्-गुरवः। प्रकृत्यर्थस्य व्यापारे आधेयतासम्बन्धेनाऽन्वयः। व्यापारस्य तु जन्यत्वे-नेति विवेकः। [4]'आश्रयमात्रमर्थः। तत्र च प्रकृति-प्रत्ययाऽर्थयोरभेदः[5] संसर्गः।

---

लघुशब्दरत्नः

प्रधानीभूतेति। प्राधान्यञ्च कर्त्तृप्रत्ययसमभिव्याहारे धात्वर्थनिष्ठविशेष्यतानिरू-पितप्रकारताऽनाश्रयधात्वर्थत्वम्। 'धातुनोक्तक्रिये कारके नित्यं कर्त्तृतेष्यते' इत्यन्वयः। यद्व्यापारादिति। 'अनन्तर'शब्दयोगे दूरान्तिकार्थैः (२।३।३४) इति सूत्रेण पञ्चमी।

---

[1] 'प्रयोज्यव्यापाराश्रयत्वविवक्षायां धातुवाच्यत्वे' इति ख. पाठः।
[2] 'कर्मसञ्ज्ञायाः' इति क. ख. पाठः।
[3] 'कर्मसंज्ञया वाधाच्च' इति ख. पाठः। [4] 'आश्रयतात्वमर्थः' इति ख. पाठः।
[5] 'अभेदसंसर्गः' इति क. पाठः।

'विवक्ष्यते' इत्यनेन स्थाल्यादीनामपि वैवक्षिकं[1] करणत्वमस्तीति ध्वनयति। आह च—

'वस्तुतस्तदनिर्देश्यं, न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः' ॥ इति।

अयं भावः—'कारकत्वं, तद्व्याप्यकर्तृत्वादिषट्कञ्च वस्तुविशेषे विशेषण-विशेष्यभाववन्न व्यवतिष्ठते। 'न हि गौः सर्वं प्रति गौरेव, न तु [2]कञ्चित्प्रत्य-गौरि'तिवद् 'विशेषणं विशेषणमेवे'ति सुवचम्। तथा च कया चिद्धातुव्यक्त्या

बृहच्छब्दरत्न

तस्य च स्वनिष्ठव्यापारजन्यत्वसम्बन्धेन धात्वर्थेऽन्वय' इति मनोरमाखण्डनेऽस्मत्पितृचरणाः। परिनिष्पत्तिः फलजननसामर्थ्यम्। फलञ्च [3]धात्वर्थ एवेति न नियमः। इदमेव बोधयितुं 'परि'पदोपादानम्। तत्र विधिवाक्ये—भावनाया अंशत्रयाऽपेक्षितत्वेन भावनायामेवाऽन्वयः। अन्यत्र—विशेष्यीभूतधात्वर्थे। 'व्यापारादनन्तरमि'ति 'दूराऽन्तिकार्थैः षष्ठ्यन्यतरस्यामि'ति सूत्रेण पञ्चमी। न व्यवतिष्ठते इति। तथा हि कारकत्वं न क्रियाऽऽश्रयत्वं, 'देवदत्तोऽस्ती'त्यादौ कारकत्वाऽनापत्तेः। 'देवदत्तस्य पुत्रोऽस्ती'त्यादौ तदापत्तेश्च। यदपि कर्त्राद्यन्यतमत्वम्। तदपि न। 'नटस्य शृणोती'त्यादावव्याप्तेः। कर्त्तृत्वादेर्निर्वक्तुमशक्यत्वाच्च। यत्तु 'कृत्याश्रयत्वम्'। तन्न। 'दण्डः पचती'त्यादावव्याप्तेः। एवं 'फलाऽऽश्रयत्वं कर्मत्वमि'त्याद्यपि न। 'अक्षान् दीव्यति' 'पशुना रुद्रं यजते' 'शताय परिक्रीतः' 'चोराद्बिभेती'त्यादावव्याप्त्यतिव्याप्त्योः स्पष्टत्वात्। 'दिवः कर्म चे'त्यादिभिः सञ्ज्ञानां दुर्वारत्वात्। एतेन 'तासामुपपदविभक्तित्वमि'त्यपास्तम्। 'तण्डुलं पचति' 'बाणेन हत' इत्यादावपि तदापत्तेश्च। एतेन 'इदं गौणकर्मादिकमि'त्यपास्तम्। शास्त्रीय-

लघुशब्दरत्नः

यत्र=येषां कारकाणां मध्ये इत्यर्थः। वस्तुत इति। वस्तुनीत्यर्थः। सार्वविभक्तिकस्तसिः। तत्=कर्त्तृत्वादिकम्। अनिर्देश्यम्='इदं वस्तु [4]कर्त्रेवे'त्यादिक्रमेण न निर्देश्यमित्यर्थः। हि=यतः, वस्तु न तत्तद्रूपेण व्यवस्थितम्। तामेवाऽव्यवस्थां दर्शयति—स्थाल्येत्यादि। कारकत्वमिति। विशेषणत्वादि यथा खञ्ज-कुब्जादावव्यवस्थितम्, एवं कारकत्वं, तद्व्याप्यमधिकरणत्वादिकञ्चेत्यर्थः। 'तण्डुलानोदनं पचती'त्यत्र करणत्वाऽविवक्षयाऽकथितकर्मकारकस्याऽपि तण्डुलस्य 'तण्डुलानामोदनं पचती'त्यादावोदनपदार्थाऽन्वयेन षष्ठ्यन्ततादर्शनात्

[1] 'वैवक्षिककरणम्' इति मुद्रितेषु पाठः।
[2] 'किञ्चित्प्रति' इति मुद्रितेषु पाठः।
[3] 'धात्वर्थ एवेति नियमः' इति ख. पाठः।
[4] 'कर्त्रैवेत्यादि' इति च. पाठः।

उपस्थापितेऽर्थे 'किं कर्त्रादिकमि'ति प्रश्ने, प्रकृतव्यक्त्युपात्तव्यापाराऽऽश्रयतया विवक्षितः कर्त्ता। व्यापारव्यधिकरणफलाऽऽश्रयः कर्म। कर्तृकर्मद्वारा सम्बन्धेनाऽऽश्रयोऽधिकरणम्। पच्यर्थो व्यापारश्चाऽनेकधा। एवञ्च पचेरधिश्रयण-तण्डुलाऽऽवपने-धोऽपकर्षणादि-तात्पर्यकत्वे तदाश्रयो देवदत्तः कर्त्ता। ज्वलन-तात्पर्यकत्वे एधाः कर्त्तारः। तण्डुलधारणादिपरत्वे स्थाली कर्त्री। अवयवविभागादिपरत्वे तण्डुलाः कर्त्तारः। 'स्थाल्या पचती'त्यत्र तृतीयोपात्तव्यापारा-[1]ऽऽश्रयोऽपि स्थाली करणमेव, न तु कर्त्री। देवदत्तादिव्यापारस्यैव तद्धातूपात्तत्वात्। तथा—'आदि-खादिभ्यामुपात्तेऽर्थे प्रयोज्यः कर्त्ता। तस्मिन्नेवाऽर्थे

**बृहच्छब्दरत्नः**

कार्यवैलक्षण्याऽदर्शनेन, [2]भाष्यकारादीनामेकरूपेण व्यवहाराच्च, त्वदुक्तिमात्रेणाऽसिद्धेश्च। एवं 'द्वितीयादीनां फलाऽऽश्रयादिकमर्थ' इत्यपि न नियमः। 'सञ्ज्ञोऽन्यतरस्यां कर्मणी'त्यादिविषये व्यत्यासदर्शनात्। किञ्च पदार्थसत्ता न सञ्ज्ञाया प्रयोजिका, किन्तु विवक्षैव। अत एव 'वह्निना सिञ्चेत्' 'खे पुष्पमि'त्यादीनां साधुत्वं, ततो बोधश्च सङ्गच्छते। अवयवेति। आदिना रोटिकाऽवयवमेलनादिकं बोध्यम्। 'कर्मकर्त्तरि विक्लित्यादिफलाऽतिरिक्तव्यापारो न वाच्य' इति 'स्वतन्त्रः कर्त्ता' 'णेरणावि'तिसूत्रयोः कौस्तुभ-मनोरमयोर्मताऽन्तरम्। अस्मिन्पक्षे फलाऽनुकूलो व्यापार आक्षेपादर्थोऽध्याहारेण वा कर्माऽवस्थायां भासते। 'धातुवाच्य' इति वादिनां मते [3]तु निरवकाशया कर्मसञ्ज्ञया बाधः। [4]प्रकृतग्रन्थस्तु देवदत्तकर्त्रादिव्यापाराऽवाच्यत्वपरः।

**लघुशब्दरत्नः**

कारकत्वस्य[5] व्यभिचारो द्रष्टव्यः। [6]प्रकृतव्यक्त्युपात्तेति। प्रकृतधातुव्यक्तीत्यर्थः।

अनेकधात्वमेव दर्शयति—एवञ्च पचेरिति। तण्डुलधारणादिपरत्वे इति। आदिना आपाकसमाप्ति धारणम्। अवयविभागादीति। आदिना रोटिकाद्यवयवमेलनम्। तण्डुलाः कर्त्तार इति। कर्मकर्त्तरीत्यर्थः। सम्प्रदानाऽपादानयोस्तु न कर्तृत्वविवक्षा, शब्दशक्तिस्वाभाव्यात्तद्व्यापारे धातोरवृत्तेरिति बोध्यम्। उपात्ते। उक्ते इत्यर्थः। स्वप्रका-

१ 'व्यापाराश्रयाऽपि' इति मुद्रितेषु पाठः। स चाऽशुद्धः। घञन्तस्य आश्रयशब्दस्य नित्यपुंस्त्वात्।

२ 'भाष्यकारादिना एकरूपेण' इति ख. पाठः।

3 'न निरवकाशया' इति ख. पाठः।

४ 'कर्मकर्त्तरि फलातिरिक्तो व्यापारो न वाच्य' इति मनोरमादिग्रन्थस्त्वित्यर्थः।

५ 'कारकत्वव्यभिचारः' इति घ. पाठः।

६ 'प्रकृतव्यक्त्युपेति' इति लिखितपाठः। 'प्रकृतव्यक्त्युपात्तेति' इति मुद्रितपाठः।

भक्षयतिनोपात्ते कर्म। अधिपूर्वैः शीङादिभिरुपात्तेऽर्थे आधारः कर्म। केवलैरुपात्ते अधिकरणमि'त्यादि। एतेन 'ज्ञानस्य स्वप्रकाशत्वे कर्तृकर्मविरोध' इत्यादि परास्तम्। शब्दविशेषोपाधिकस्य कर्तृत्वादेः प्रत्यक्षादावुक्तिसम्भवाऽभावात्। एतेन 'परसमवेतक्रियाजन्यफलशालित्वं[1] कर्मत्वञ्चेदपादानेऽतिव्याप्तिरि'त्याशङ्क्य[2] 'धात्वर्थताऽवच्छेदकफलशालित्वं[3] तदि'ति परिष्कुर्वन्तोऽपि प्रत्युक्ताः। 'ग्रामं गमयति देवदत्तमि'त्यादौ गन्तर्यतिव्याप्तेः। तन्मते गमनस्य प्रकृत्यर्थत्वेऽपि [4]तथात्वाऽनवच्छेदकत्वात्। ([5]तत्र णिचो व्यापाराऽर्थकत्वं, न प्रकृतेः)। तत्त्वे वा पाचयत्यादिप्रयोज्यकर्त्तर्यतिव्याप्तेः[6]। तत्र[7] पारिभाषिक-

बृहच्छब्दरत्नः

अधिपूर्वैरिति। एवञ्चाऽधिपूर्वकशीङादियोगरहिताऽऽधारस्यैव सप्तम्यर्थत्वम्। तत्रैवाऽधिकरणसञ्ज्ञायाः प्रवृत्तेः। ध्वनितञ्चेदम् 'ईदूतौ च सप्तम्यर्थे' इति सूत्रे भाष्ये। शब्दविशेष इति। न चैवं [8]स्वप्रकाशकशब्दस्याऽसाधुत्वाऽऽपत्तिः। ईदृशशब्दस्य लक्षणया, औपाधिकभेदेन वा साधुत्वमिति सर्वेषां तुल्यत्वात्। ([9]परसमवेतेति। द्वितीयाप्रकृत्यर्थाऽन्यसमवेतेत्यर्थः। अतश्चैत्रे नाऽतिप्रसङ्गः)। परिष्कुर्वन्त

लघुशब्दरत्नः

शत्वे=ज्ञानविषयत्वे। कर्त्तृकर्मविरोध इति। अभेदे आधाराऽऽधेयभावस्य, विषयविषयिभावस्य चाऽभावादिति भावः। शब्दविशेषोपाधिकस्य=शब्दविशेषनिमित्तकस्य। कर्त्तृकर्मशब्दयोराश्रयविषयलक्षकत्वे,[10] 'स्वप्रकाशत्वे' इत्यस्य 'स्वप्रकाशपदव्यवहार्यत्वे' इत्यर्थे वा लक्षणैव दोष इति बोध्यम्। परेति। कर्मत्वाऽभिमता-ऽपेक्षया परेत्यर्थः। गम्यादि-

[1] 'क्रियाफलशालित्वम्' इति लिखितेषु पाठः।
[2] 'अतिव्याप्तिमाशङ्क्य' इति मुद्रितेषु पाठः।
[3] 'शालि कर्मेति' इति मुद्रितेषु पाठः।
[4] 'तत्त्वाऽनवच्छेदकत्वात्' इति मुद्रितपाठस्तु भावप्रकाशविरुद्धः।
[5] एतदन्तर्गतोऽयं मुद्रितः पाठो लिखितेषु नास्ति।
[6] 'कर्त्तर्यपि अतिव्याप्तेः' इति घ. पाठः।
[7] 'तत्र' इति मुद्रितेषु त्रुटितम्।
[8] 'स्वप्रकाशशब्दस्य' इति ख. पाठः।
[9] अयं कोष्ठाऽन्तर्गतः पाठः अग्रे पाठान्तरमध्ये लेखकप्रमादात्पतित आसीत्। स चाऽत्र यथास्थानम् अस्माभिर्योजितः।
[10] 'विषयोपलक्षकत्वे' इति मुद्रितेषु पाठः।

मनुशासनोपयोगि कर्मत्वं वचनबलाद्व्यवस्थितमिति चेत् । अपादानेऽपि तर्हि तन्नास्तीत्यवधेहि । एकसञ्ज्ञाऽधिकारेऽनवकाशया सावकाशाया बाधात् । अत एव '[1]आत्मानमात्मा हन्ती'त्यादौ परया कर्त्तृसञ्ज्ञया कर्मसञ्ज्ञाबाधमाशङ्क्याऽहङ्कारादिविशिष्टाऽऽत्मभेदमाश्रित्य समाहितं भाष्ये ।

रामेणेति । इह यद्यपि विभक्त्युपस्थितानां कारकाणां क्रियां प्रति विशेषणतैव, तथाऽपि कृदुपस्थितानां विशेष्यतैव । 'सत्त्वप्रधानानि नामानी-'

---

**बृहच्छब्दरत्नः**

इति । ग्रामादिनिष्ठविभागस्य धात्ववाच्यत्वेन तदनवच्छेदकत्वमिति भावः । सावकाशाया इति । 'तथायुक्तं चाऽनीप्सितमि'ति विहिताया' इति शेषः । 'ग्रामादायाती'त्यादौ स्वनिष्ठविभागाऽनुकूलव्यापारवाचित्वेन ग्रामनिष्ठविभागस्य ईप्सिततमत्वाऽभावेन तथायुक्तत्वात् । 'कर्त्तुरीप्सिततममि'तिसूत्रविहितकर्मसञ्ज्ञा तु अपादानसञ्ज्ञायाः परत्वाद्बाधिका । अत एव 'ग्रामं त्यजती'त्यादिसिद्धिः ।

बाधादिति । 'तथायुक्तमि'तिसूत्रस्याऽपि फलस्य धातुवाच्यत्वे एव प्रवृत्तिरि'तिवादिनां मते तु शास्त्रप्रवृत्तिरेव नेति ध्येयम् । एतेन 'पुरस्तादपवाद'न्यायेन 'कर्त्तुरीप्सिततममि'त्यस्यैव बाधः स्यादि'त्यपास्तम् । 'तत आगत' इति सूत्रस्याऽसङ्गतताऽऽपत्तेश्च । तथा च 'परसमवेतत्वादौ शक्तिकल्पनं 'चैत्रश्चैत्रं गच्छती'त्यादीनामसाधुत्वाऽर्थमि'त्यपास्तम् । शाब्दबोधस्तु व्युत्पत्त्यभावादेव न । विपरीतस्य तु भवत्येव । उक्ताऽर्थस्य वाच्यकोटौ प्रवेशे गौरवं, परत्वस्य दुर्वचत्वञ्चेति दिक् ।

---

**लघुशब्दरत्नः**

कर्त्तर्यतिव्याप्तिवारणायेदम् । अपादाने इति । 'प्रयागात्काशीं गच्छती'त्यादौ तस्याऽपि क्रियाजन्यविभागाऽऽश्रयत्वादिति भावः । धात्वर्थतावच्छेदकेति । संयोगस्यैव तथात्वं, न तु विभागस्येति भावः । तत्त्वे वेति । ण्यन्तधात्वर्थताऽवच्छेदकत्वे वेत्यर्थः । वचनबलात्—गत्यादिनियमबलात् । ननु विभागस्य तत्त्वेन कर्त्तुः (१।४।४९) इति, तथायुक्तम् (१।४।५०) इति वा प्राप्नोति, अपादानप्रकरणेऽवध्यन्वयिनो विभागस्य धात्वर्थताया वक्ष्यमाणत्वादित्यत आह—एकसञ्ज्ञेति । सावकाशाया इति । 'विषं भुङ्क्ते' इत्यादौ सावकाशाया इत्यर्थः । कर्त्तुः (१।४।४९) इति कर्मसञ्ज्ञा त्वपादानत्वस्य[2] परत्वाद्बाधिका । अत एव 'ग्रामं त्यजती'त्यादौ द्वितीयासिद्धिरिति तात्पर्यम् । अपादाननिष्ठविभागीयसम्बन्धस्य फलताऽनवच्छेदकत्वान्न दोष इत्यपि बोध्यम् । अत एव—एकसञ्ज्ञाऽधिकारे सञ्ज्ञयोर्बाध्यबाधकभावादेव । अहंकारादीति । आदिना शरीरम् । विभक्त्युपस्थितानामिति । विभक्त्यर्थस्य

---

[1] 'आत्मा हन्ती'ति सर्वेषु लिखितादर्शेषु, शब्दकौस्तुभे च पाठः ।
[2] 'अपादानसञ्ज्ञायाः' इति मुद्रितेषु पाठः ।

त्युक्तेः। धातूपस्थाप्ययोः फल-व्यापारयोरपि कर्मकृत्समभिव्याहारे विशेषण-विशेष्यभावव्यत्यासः। तथा च 'रामनिष्ठो यो व्यापारस्तद्विषयीभूत-बाण-व्यापार-साध्य-प्राणवियोगा-ऽऽश्रयो वाली'ति वाक्याऽर्थः। यत्तु वाजपेयाऽधिकरणे मीमांसकैरुक्तं—'काष्ठैः पाक' इत्यपि स्यादि'ति। तदिष्टापत्तिग्रस्तम्। कर्त्तृकरणे कृता बहुलं (२।१।३२) कर्त्तृकर्मणोः कृति (२।३।६५) इत्यादिसूत्राणां कृत्प्रकृत्यर्थेन कारकाऽन्वयं विनोक्तिसम्भवस्यैवाऽभावादिति सुधीभिराकलनीयम्। अनभिहिते किम्? । हरिः करोति। जीवन्त्यनेन जीवनः। शाब्दिकः।

---

बृहच्छब्दरत्नः

कर्मकृदिति। प्रकृताऽभिप्रायमेतत्। करणाऽधिकरणयोः कृति, कर्माऽऽख्याते च व्यत्यासदर्शनात्। विषयीति। विषयश्चाऽत्र धातुवाच्यः प्राणवियोग एव। तदुद्देशेनैव रामव्यापारस्य प्रवृत्तत्वात्। करणस्य [1]फलेऽन्वयः। तस्य करण-व्यापारजन्यत्वात्। एवञ्च भूताऽन्त-साध्याऽन्तयोः कर्मधारयोत्तरं वियोगाऽन्तेन कर्मधारयः, वैपरीत्यञ्चेति[2] ध्येयम्। आदीति। कारके प्रत्ययविधिवैयर्थ्यम्। तत्र 'प्रत्यासत्ति'न्यायेन प्रकृत्यर्थाऽन्वितस्यैव ग्रहणात्। एतेन 'भावना आक्षेप-लभ्ये'त्यपास्तम्। तिङ्क्ष्वपि तथाऽऽपत्तेः। 'शाब्दयामी'त्यनुभवविरोधाच्चे-त्यादि स्पष्टं मूले।

उक्तिसम्भवस्येति। न च भवतिक्रियायां प्राथमिकाऽन्वस्याऽनङ्गीकृतत्वे-ऽपि[3], पार्ष्ठिकाऽन्वयस्याऽङ्गीकृतत्वादुक्तिसम्भवोऽस्त्येवेति वाच्यम्। अनुशास-नस्य [4]लक्ष्याऽऽकाङ्क्षाबोधितप्राथमिकबोधाऽभिप्रायेण वर्णयितुं शक्यत्वेन, स्ववासनामात्रेण तथाकल्पनाऽयोगात्। विजातीयपदोपस्थाप्यानामेकसम्बन्धेन सर्वेषां भावनायामन्वयस्य वक्तुमशक्यत्वात्। सर्वत्र बोधद्वयकल्पने गौरवाच्च। एतेन 'सोमेन यजेते'त्यादौ सोमादिपदेषु मत्वर्थलक्षणे'त्यपास्तम्। यागे सोमवत्ता

---

संसर्गत्वमते तदन्तोपस्थितानामित्यर्थः। व्यत्यास इति। तद्व्यत्यासेनैव धातुतस्तदुपस्थिति-रित्यर्थः। तत्र व्यापारजन्यफलमेव धात्वर्थ इति भावः। तदिष्टापत्तीति। तत्प्रकृत्यर्थ-क्रियायामपि कारकाणामन्वयादिति भावः। तत्रैव मानमाह—कर्त्रित्यादि। यत्तु 'भवतिक्रियायां प्राथमिकाऽन्वयेन तत्तद्विभक्तौ, कृदन्तेन [5]'पार्ष्ठिकाऽन्वयात्तेषां चारितार्थ्य-मि'ति। तन्न। भवतिक्रियायां कर्तृत्वेनाऽन्वये कर्त्तुरुक्तत्वात्तृतीयाऽनापत्त्या 'हरिणा त्रात'

---

[1] 'फलेऽप्यन्वयः' इति भावप्रकाशे पाठः।

[2] 'वेति ध्येयम्' इति ख. पाठः।

[3] 'अङ्गीकृतत्वेऽपी'ति क. ख. पाठः।

[4] 'लघ्वाकाङ्क्षा' इति, 'लब्धाकाङ्क्षा' इति वा क. ख. पाठः।

[5] 'पार्ष्णिकाऽन्वयात्' इति क्वचित्पाठः।

शब्ददर्दुरं करोति (४।४।३४) इति ठक्। कृतं विश्वं येन-कृतविश्वः। विश्वकर्मककृत्याश्रय इत्यर्थः। अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरस्वीकारात्। यथा चैतत्तथा वक्ष्यते। प्रकृत्यादिभ्य इति। आकृतिगणोऽयम्। तेन 'नाम्ना सुतीक्ष्णश्चरितेन दान्त' इत्यादि बोध्यम्। द्वयोर्द्रोणयोः समाहारो द्विद्रोणम्। पात्रादित्वात्स्त्रीत्वाऽभावः। द्रोणद्वयसम्बन्धि धान्यमित्यर्थः। चादिति। 'करण'शब्दाऽनुवृत्त्या, परिक्रयणे सम्प्रदानम् (१।४।४४) इत्युत्तरसूत्रस्था-

---

### बृहच्छब्दरत्नः

परसमवेतेति [1]द्वितीयायाः सम्भवेन लक्षणाया वक्तुमशक्यत्वात्। स्वनिष्ठव्यापारजन्यत्वेन सोमवत्तायान्तु स्पष्टं करणत्वम्। तस्य देवतोद्देशं प्रति करणत्वात्, [2]तस्यैव विशेषसमर्पणद्वारा करणत्वेन यागेऽन्वयस्योचितत्वात्। 'कारके कारकाऽन्वयो ने'त्युद्घोषस्त्वधात्वर्थविषयकः। परस्परमाकाङ्क्षाया अभावात्। सम्बन्धे गौरवाऽऽपत्तेश्च। 'कारके' इति [3]सूत्रेणाऽसाधुत्वबोधनाच्च। अत एव 'तृप्तिकामस्तण्डुलं काष्ठैः स्थाल्यां पचेत्' 'पश्य मृगो भूमौ धावती'त्यादौ विक्लित्त्यादिकारकेषु धात्वर्थेषु कारकाऽन्वयः पूर्वं प्रतिपादितः सङ्गच्छते। अत एव 'सोमयाजी'त्यत्र परस्परमात्राऽन्वयित्वसामर्थ्यनिमित्तकं वृत्तिद्वयं सङ्गच्छते। 'उद्भिदा यजेते'त्यत्रोद्भित्पदस्य लोके पदार्थविशेषेऽप्रसिद्धत्वेन कर्त्तृत्वरूपयोगाऽर्थस्य खनित्रादाविव यागेऽपि सत्त्वेन नामधेयतामाश्रित्य लाघवाद्धात्वर्थविधानम्। 'वाजपेय'शब्दस्य वेदे बहुव्रीहिस्वराऽदर्शनेन यागपरत्वं न। तत्त्वे तदुद्देशेन

---

### लघुशब्दरत्नः

इत्यसिद्ध्यापत्तेः। करणत्वेनाऽन्वये [4]पार्ष्ठिकस्याऽपि हरिकर्त्तृकत्राणकर्मणो बोधाऽनापत्तेः। कर्त्तृतृतीयाऽन्तेन समासविधायकाऽसङ्गतेश्च।

'यत्कर्त्तृकक्कृतिकर्म विश्वमि'ति विग्रहवाक्यजबोधाद्भिन्नबोधस्वीकारे न मानमत आह— अषष्ठ्यर्थेति। आकृतीति। इदञ्च यथायथं सर्वविभक्त्यपवादः। नाम्नेति। नामसम्बन्धितीक्ष्णत्ववानित्यर्थः। करणशब्दानुवृत्त्येति। एकसञ्ज्ञाऽधिकारेण चेति बोध्यम्। ननु 'मनसादेव' इत्यसङ्गतं, कृद्योगलक्षणषष्ठीप्राप्तेः। न च कर्त्तृसाहचर्यात्तत्र मुख्यव्यवहारेण धात्वर्थाऽऽश्रयस्यैव कर्मणो ग्रहणम्, अत एव 'स्तोकं पाक' इत्यादौ षष्ठी नेति वाच्यम्। धात्वर्थे भेदेनाऽन्वयिकर्मग्रहणेनैव तदुपपत्तावत्राऽप्रवृत्तौ मानाऽभावात्। ध्वनितञ्चेदमाकडार-

---

[1] 'द्वितीयाया असम्भवेन' इति क. पाठः।

[2] 'तस्यैव' इति ख. पाठः। 'तत्रैव' इति क. पाठः।

[3] 'साधुत्वबोधनाच्च' इति क. पाठः।

[4] 'पार्ष्णिकस्य' इति मुद्रितेषु पाठः।

**ऽन्यतरस्यामुग्रहणाऽपकर्षणेन वा सञ्ज्ञयोः पर्याये लब्धे, समावेशाऽर्थश्चकारः। तेन 'मनसा दीव्यतीति मनसादेव' इत्यत्र कर्मण्यण्, करणे तृतीया चेत्युभयं सिद्ध्यति। मनसः सञ्ज्ञायाम् (६।३।४) इत्यलुक्। किञ्च 'अक्षैर्देवयते यज्ञदत्तेने'त्यत्र सकर्मकत्वादणि, कर्तुर्णौ कर्मत्वं न, अणावकर्मकात् (१।३।८८) इति परस्मैपदञ्च नेति सिद्धान्तः। यत्तु प्राचा 'कर्मसञ्ज्ञं वा स्यादि'ति व्याख्यातम्। तदाकरविरोधादुपेक्ष्यम्। स्यादेतत्। करणसञ्ज्ञाया अवकाशः- 'देवना अक्षाः'। करणे ल्युट्। कर्मसञ्ज्ञायास्तु-'दीव्यन्ते अक्षाः'। कर्मणि लट्। 'अक्षैर्दीव्यती'त्यत्र तु सञ्ज्ञाद्वयप्रयुक्तकार्यद्वयप्रसङ्गे परत्वात्तृतीयैव स्यान्न तु द्वितीयेति चेत्। अत्राऽऽहुः—'कार्यकालपक्षे कर्मणि द्वितीया (२।३।२)**

---

बृहच्छब्दरत्नः

गुणविधाने [1]एकप्रसरताभङ्गाऽऽपत्त्या नामधेयत्वम्। किञ्च क्रियाऽन्तराऽनुष्ठाने इतरनिरपेक्षत्वभङ्गः। बाजरूपगुणविधौ तृतीयाऽनन्वय इत्यलम्।

उभयमिति। न चाऽपवादत्वात्परत्वाच्च [2]षष्ठ्येव स्यादिति वाच्यम्। विभक्तिविशेषनिमित्तसञ्ज्ञाऽन्तराऽनुपहितकर्तृसाहचर्येण,[3] धात्वर्थाऽऽश्रयकर्तृसाहचर्येण वा कर्मणस्तादृशस्यैव ग्रहणात्। 'कर्तृकरणयोस्तृतीया' 'लः कर्मणि चे'त्यादौ तु साहचर्यं भाष्यादिप्रामाण्यान्नाऽऽश्रीयते। ननु सञ्ज्ञयोर्वैकल्पिकत्वेऽपि पक्षे कर्मयोगस्य सत्त्वेनाऽत्यन्ताऽविद्यमानकर्मत्वाऽभावेन कर्मत्वं न भविष्यत्येव। न चाऽस्मिन् प्रयोगेऽत्यन्ताऽविद्यमानकर्मत्वमस्त्येवेति वाच्यम्। अविवक्षितकर्मणि पचादावपि दोषाऽऽपत्तेः। न च तस्मिन्नेवाऽर्थे कर्मयोगोऽस्तीत्यतो न दोष इति वाच्यम्। प्रकृतेऽपि दोषाऽभावादित्यरुचेराह—अणावकर्मकादिति। परस्मैपदं

---

लघुशब्दरत्नः

सूत्रे कैयटे। तादृशसञ्ज्ञासत्त्वे दृढतरमानाऽभावश्चेत्यरुचेराह—किञ्चेति। कर्मत्वं नेति। न च वैकल्पिकत्वेऽप्यत्यन्ताऽविद्यमानकर्मकत्वाऽभावात्कर्मत्वाऽभावः सिद्ध इति वाच्यम्। तत्राऽत्यन्ताऽविद्यमानकर्मकाणामेव ग्रहणे मानाऽभावस्याऽन्यत्र निरूपितत्वादिति भावः। फलाऽन्तरमाह—अणाविति। 'दीव्यतेऽक्षैर्देवदत्तेने'ति भावे लकाराऽभावः फलमित्यपि बोध्यम्।

---

[1] एकप्रसरता=एकवाक्यता। 'एकप्रसूता' इति, 'एकप्रसृतता' इति वा क. ख. पाठः।

[2] 'कर्तृकर्मणोः कृती'ति षष्ठीत्यर्थः।

[3] 'कर्तृसाहचर्येण' इति क. पाठः। 'कर्मसाहचर्येण' इति ख. पाठः। 'कर्तृकर्मणोः कृती'त्यत्र कर्तृसाहचर्येणेत्यर्थः।

इत्यत्र यदस्योपस्थानं तस्याऽनवकाशत्वाद् द्वितीये'ति। ननु 'दीव्यन्ते अक्षा' इत्यत्र कर्मण्यभिहितेऽपि करणत्वस्याऽनभिधानात्तृतीया स्यात्, तथा 'देवना अक्षा' इत्यत्र ल्युटा करणस्याऽभिधानेऽपि, कर्मणोऽनभिधानाद् द्वितीया स्यात्। मैवम्। एकैव ह्यत्र शक्तिः सञ्ज्ञाद्वयोपयोगिनी। तथा च उभयत्राऽप्यभिधानमेव, न त्वनभिहितत्वम्।

सहयुक्ते (२।३।१९)। पुत्रेणेति। पितुरत्र क्रियया सम्बन्धः शाब्दः, पुत्रस्य त्वार्थ इति तस्याऽप्राधान्यम्।

---

**बृहच्छब्दरत्नः**

चेति। चेन भावेऽपि लादयो नेति बोध्यम्। कार्यकालेति (६८६ पृष्ठे)। यत्तु 'अत एव कृद्योगषष्ठ्या सह समावेश' इति। तन्न। विशेषविहितत्वेन कृद्योगषष्ठ्या एव प्राप्तत्वात्। स्पष्टञ्चेदं कैयटग्रन्थे। वस्त्वर्थस्तु पूर्वं निरूपित एव। तदेव ध्वनयन्नाह—द्वितीया स्यादिति। एकैव हीति। करणत्वञ्चाऽत्र दिव्धात्वर्थसाधकत्वम्। तदेव चाऽत्र कर्मत्वम्। तथा च कर्मणि, करणे वा प्रत्यये दिव्धात्वर्थसाधकत्वमुक्तमेव। क्रियासम्बन्ध इति। इदञ्च प्रकृताऽभिप्रायेण। 'शिष्येण सहोपाध्यायस्य गौः' 'शिष्येण सहोपाध्यायः स्थूल' इत्यादौ द्रव्यगुणयोरेव सम्बन्धात्। एतेन 'पुत्रेण सहाऽऽगतः पिते'त्यत्र पुत्रस्य सहाऽर्थसामर्थ्यात्कर्तृत्वप्रतीत्या तृतीया सिद्धे'ति मन्दोक्तमपास्तम्। कारकत्वेन सहशब्देऽन्वयाऽनापत्तौ सहाऽर्थसामर्थ्यबोधितकर्तृत्वाऽनापत्तेश्च।

आर्थं इति। तथा च शाब्दक्रियाद्यनन्वयित्वमप्राधान्यम्। अत्र च विवक्षैव नियामिका। 'पुत्रेण सहाऽऽगतः पिते'त्यादौ विशेषणाऽभावप्रयुक्तो विशिष्टाऽभावः। 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'त्यादौ विद्यमानवचनसहशब्दस्य सत्त्वेन विशेष्याऽभावप्रयुक्तो विशिष्टाऽभावः। प्रकृतसूत्रे सहशब्दः सर्वोऽपि गृह्यते। यद्वा चरमोदाहरणेऽपि सहशब्दः साहित्यवाची। साहित्यन्तु न वहनक्रियायां, किन्तु योगक्रियायाम्। 'सह दशभिः पुत्रैर्युक्ता भारं वहति गर्दभी'त्यत्र तात्पर्यात्।

---

**लघुशब्दरत्नः**

करणत्वाच्च तृतीयेति समावेशफलम्। द्वितीयेतीति। 'अक्षान् दीव्यतीत्यत्राऽक्षपदस्याऽक्षजेये धने लक्षणा, न च तदा करणत्वम्। 'अक्षैरित्यर्थेऽक्षानिति न भवती'त्यन्ये। एकैव ह्यत्र शक्तिरिति। दिव्धात्वर्थनिरूपितसाधकतमत्वशक्तिरित्यर्थः।

सहयुक्ते (२।३।१९)। अत्राऽप्राधान्यं नाम शाब्दगुणाद्यन्वयित्वाऽभाव इत्याह—पितुरत्रेति। आर्थ इति। 'पुत्रसाहित्यवान् पिता आगत' इति बोधे, साहित्यस्य पुत्रेण आगमनसम्बन्धे एव सम्भव इति पश्चात्तस्याऽपि मानसस्तत्सम्बन्धबोध इति भावः। शाब्दत्वञ्च विवक्षानिबन्धनम्। एवञ्चैषु शाब्दत्वरूपविशेषणाऽभावकृतो विशिष्टाऽभावः। 'सहैव पुत्रै-

बृहच्छब्दरत्नः

केचित्त्वप्रधानग्रहणं विशेषणपरम्। 'क्रियाप्रधानमाख्यातमि'त्यादाविव 'प्रधान'-शब्दस्य विशेष्यपरत्वात्। विशेषणत्वञ्च सहाऽर्थं प्रत्येव। 'सहयुक्ते' इत्यनेन तस्यैवोपस्थितत्वात्। सहशब्दाऽर्थः साहित्यं, तच्चैकजातीयधर्माऽन्वयित्वरूपम्। स च समभिव्याहृतपदाऽर्थे एव धर्मत्वेन भासते इत्याहुः। यत्तु 'विभाषा सपूर्वस्ये'ति सूत्रे 'सहैव पुत्रैर्दशभिरि'त्यादौ सहशब्दो विद्यमानवाची, इत्थम्भूतलक्षणे तृतीये'ति हरदत्तेनोक्तम्। तत्र[1]—'इत्थं'शब्दस्य प्रकारविशेषबोधकस्य कर्मषष्ठ्यन्तस्य प्राप्त्यर्थक'भूत'शब्देन समासे 'तापसत्वादिप्रकारविशेषाऽऽपन्नो येन जटादिना लक्ष्यते ततस्तृतीये'ति, सूत्रं व्यर्थमेव। 'जटाभिस्तापसो ज्ञात' इत्यर्थस्य सत्त्वेन करणतृतीययैव सिद्धत्वादि'ति। तन्न। यदा यः प्रमाता प्रमितिदशायामात्मनः प्रतीतिविशेषं प्रतिपादयितुं वाक्यं प्रयुङ्क्ते, तदा ज्ञानक्रियाया अप्रतिभासात्, अप्रतिपादनाच्च, प्रकृतधातूपात्तव्यापाराऽनन्वयित्वेन करणत्वाऽविवक्षायाञ्च षष्ठ्यां प्राप्तायां 'जटाज्ञाप्यतापसत्वविशिष्टोऽस्ती'त्यर्थे 'जटाभिस्तापस' इति प्रयोगः [2]साधुः। विशेषणद्वारा विशिष्टस्य ज्ञाप्यत्वमिति न पदार्थैकदेशाऽन्वयः। ध्वनितं चेदं मूले सूत्रस्याऽऽवश्यकत्वात्, लक्ष्यलक्षणभावविवक्षायाञ्च। एतेन 'हेतुतृतीयया सिद्धमि'त्यपास्तम्। यत्त 'अस्ति तावत्सखण्डम्, [3]अखण्डं वा प्रधानत्वं [4]यदादाय 'अयमस्मिन्नगरे प्रधानं, मुख्य' इत्यादयो व्यवहाराः। तदभावरूपञ्चाऽप्रधानत्वम्। तस्य 'सहयुक्तेऽप्रधाने' इति शास्त्रेण तृतीयायाः शक्तेर्बोधनात् शाब्दत्वमि'ति। तन्न। 'सहयुक्ते' इत्यनेनैव शक्तेः सिद्धत्वेन 'वस्तुतोऽप्रधाने' इत्यर्थेनोपपत्तौ, तदंशे शक्तिकल्पने मानाऽभावात्। न च विनिगमकाऽभावः। प्रथमोपस्थितत्वात्। तत्र सहाऽर्थस्य, युक्तस्य च पदाऽन्तरेण लाभात्सम्बन्धमात्रं लाघवात्तृतीयाऽर्थः। क्लृप्तञ्चेदं षष्ठ्यादौ। 'हेताव'ित्यत्र त्वर्थाऽन्तरस्याऽनुपादानाद्धेतुत्वं वाच्यम्। अत एव 'ईप्सितत्वादिकं न द्वितीयादीनामर्थ' इति सिद्धान्तः। 'राज्ञा सह सेना गच्छति' 'वृद्धो यूना' 'आदिरन्त्येने'त्यादौ त्वदभिमताऽर्थाऽभावः स्पष्ट एवेति यत्किञ्चिदेतत्। एतेन 'उपलक्षणत्वमप्रधानत्वं, तदेव तृतीयावाच्यम्। यस्य क्रियासम्बन्धो विशिष्टकालः प्रज्ञातोऽन्याऽर्थमुपादीयते यथा 'पुरुषः कदा गत' इत्यपेक्षायां 'राज्ञा सह गत' इत्युच्यते 'इत्यपास्तम्। [5]राजगमनस्योपलक्षणत्वेऽपि[6] राज्ञोऽतत्वेन तृतीयाया अनापत्तेश्च। 'भृत्यैः सह राजा गत'

लघुशब्दरत्नः

र्दशभिर्भारं वहती'त्यादौ विद्यमानतावाचिसहशब्दयोगे तु क्रियाद्यन्वयित्वरूपविशेष्याऽभावकृतोऽपि

[1] 'तन्न। इत्थंशब्दस्य' इति ख. पाठः।

[2] 'साधु' इति ख. नास्ति।

[3] अखण्डं = मुख्यत्वरूपमित्यर्थः।

[4] 'यद्वशात्' इति वा पाठः।

[5] 'राजाऽऽगमनस्य' इति क. ख. पाठः।

[6] राज्ञोऽतत्वेऽपि' इति ख. पाठः।

अप्रधानग्रहणं शक्यमकर्त्तुम्। न चैवं पितुरपि तृतीयाऽऽपत्तिः। तत्र प्रातिपदिकाऽर्थमात्रेऽन्तरङ्गत्वात्प्रथमोपपत्तेः[1]। 'पितुरागमनमि'त्यादौ कारकविभक्तेः प्राबल्याच्च।

---

बृहच्छब्दरत्नः

इत्यनापत्तेश्च। उभयोरज्ञातक्रियासम्बन्धत्वात्। 'सह शाखया प्रस्तरं प्रहरती'-त्यत्र वैपरीत्याऽऽपत्तेश्च। प्रस्तरस्य प्रहरणसम्बन्धः-प्रज्ञातः—'सूक्तवाकेन प्रस्तरं प्रहरती'ति। शाखायास्त्वज्ञातः। [2]अस्मन्नये तु न का चिद्दोषशङ्का। इदञ्च-एतत्सर्वमप्रधानग्रहणप्रत्याख्यानभाष्येण ध्वनितमिति बोधयितुमर्थतस्तदनुवदति-अप्रधानेत्यादिना। अन्तरङ्गत्वादिति। 'शिष्येण सहोपाध्यायस्य गौरि'त्यादौ पूर्वं गवा उपाध्यायस्य सम्बन्धः, पश्चात्सहाऽर्थेन योगः। अन्यथा कस्य सहत्वं प्रतिपाद्येत[3]। ततोऽन्तरङ्गत्वादुपाध्यायात्पूर्वं षष्ठी। प्राबल्याच्चेति। सहाऽर्थेन योगे जायमानत्वेनोपपदविभक्तित्वात्। 'षष्ठ्यपवादकत्वेन षष्ठीवद्विशेषणात्प्राप्तिरि'ति चेत्। हेत्वन्तरं सूचितम्, तस्माद्भाष्यप्रामाण्येनाऽ'ऽप्रधाने' इति न्यायाऽनुवादकं बोध्यम्।

---

लघुशब्दरत्नः

विशिष्टाऽभावः, 'दशानां पुत्राणां विद्यमानत्वेऽपी'त्यर्थ [4]इत्यन्यत्र विस्तरः। अन्तरङ्गत्वादिति। प्राचीनैरन्तरङ्गत्वमूलकतयोक्तादुपपदविभक्तेरिति न्यायादित्यर्थः। वस्तुतस्तु [5]तद्वाचनिकमेवेति अन्तरङ्गत्वं तन्न्यायोपलक्षणं बोध्यम्। प्रथमायाश्च कारकविभक्तित्वमनभिहितपादे भाष्ये बहुशः स्पष्टम्, अन्यत्र प्रपञ्चितञ्च। अन्तरङ्गत्वन्तु न युक्तम्। षष्ठ्यपवादत्वमिव [6]प्रथमाऽपवादत्वमित्यस्याऽप्युपपदविभक्तीनामापत्तेः, 'अनन्तरस्ये'ति न्यायेन च प्रथमाऽपवादस्यैव वाऽऽपत्तेः। 'उपपदविभक्तेरि'ति न्यायेन च वाचनिके सर्वतो बलवत्त्वे कारकविभक्तेर्बाधितेऽर्थाच्छेषषष्ठ्यपवादत्वमुपपदविभक्तीनामवतिष्ठते। किञ्चोपपदविभक्तेः पदाऽन्तरनिमित्तकत्ववत्, कारकविभक्तेः क्रियानिमित्तकत्वात्तत्वं दुरुपपादम्। न च सम्बन्धस्य क्रियाकारकभावमूलकत्वेन तत्प्रयुक्तं कार्यं बहिरङ्गम्। पुत्रेऽपि तृतीयाऽनापत्तेः, एकक्रियाकर्त्तृत्वमूलक[7]-त्वात्साहित्यस्य। 'क्रियायाः प्राधान्यात्तन्निमित्तिका विभक्तिः प्रबले'त्यपि न युक्तम्। अप्रधानक्रियायामपि कारकाऽन्वयदर्शनात्। तदेव ध्वनयन्नाह—इत्यादौ कारकविभक्तेरिति। अत्राऽऽदिना 'पुत्रेण सहाऽऽगतः पिते'त्यस्य सङ्ग्रह इत्यलम्।

---

१ 'प्रथमोत्पत्तेः' इति मुद्रितः पाठः।
२ 'अस्मिन्नये' इति ख. पाठः।
३ 'प्रतिपाद्यते' इति क. ख. पाठः।
४ 'इत्यन्यत्र विस्तर' इति घ. नास्ति।
५ 'तद्वाचनिकमेवेत्यन्यत्र प्रपञ्चितम्। तदाऽन्तरङ्गत्वं तन्न्यायोपलक्षणम्' इति घ. पाठः।
६ 'प्रथमाऽपवादत्वस्याऽपि' इति मु॰पाठः।
७ 'मूलकत्वात्' इति मुद्रितेषु त्रुटितम्।

 

**येनाङ्गविकारः** (२।३।२०)। अङ्गशब्दोऽर्श आद्यजन्तस्तदाह—**अङ्गिन इति**। 'येने'ति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयव एव गृह्यते। सन्निधानात्। स चार्थाद्विकृत एव। न ह्यविकृतेनाऽवयवेन शरीरस्य विकारः सम्भवति। तदेतदाह—**येनाऽङ्गेन विकृतेनेति**। **सञ्जानीत इति**। सम्प्रतिभ्यामनाध्याने (१।३।४६) इति तङ्। कृद्योगे परत्वात् षष्ठी—'पितुः सञ्ज्ञाता'। यत्तु हरदत्तेनोक्तम्—'आध्याने परत्वात् अधीगर्थ (२।३।५२) इति षष्ठी,—'मातुः सञ्जानाती'ति। तन्न। तत्र शेषाऽधिकारात्।

**द्रव्यादीति**। उक्तञ्च—'द्रव्यादिविषयो हेतुः, [1]कारकं नियतक्रियमि'ति। 'अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते' इति च।

---

बृहच्छब्दरत्नः

'येनाऽङ्गविकार' इति सूत्रेऽङ्गशब्दोऽवयववाची। तेन-'येन[2] गुणेन काणत्वादिनाऽक्ष्यादेर्विकारो लक्ष्यते तत्र तृतीये'ति सूत्राऽर्थः स्यात्। तथा च (अक्षि[3] काणमस्ये'त्यादौ) परत्वादन्तरङ्गत्वात्प्राप्तां प्रथमां बाधित्वा तृतीयैव स्यात्। 'अक्ष्णा काण' इत्यादौ तु षष्ठी स्यादित्याशङ्कयाऽऽह—अङ्गशब्द इति। न ह्यविकृतेनेति। ननु विकृतेनाऽप्यङ्गेन न पुरुषः काणो, यावताऽक्षिधर्मः काणतेति चेन्न। अवयवगतधर्मेण पुरुषेऽपि तत्सम्भवात्। ईदृशाऽर्थग्रहणे सूत्रमेव मानम्। तत्र 'द्वौ ब्राह्मणावि'-इतिवत् सामान्योपक्रमे वाक्ये 'अक्ष्णे'त्युक्ते भवत्याकाङ्क्षा 'निरूपयति वा, काणो-वे'ति, [4]तत्र 'अक्ष्णे'ति प्रयोगो न विरुद्ध्यते। द्रव्यादीति। द्रव्य-गुण-क्रियाऽन्वय[5]

---

लघुशब्दरत्नः

अर्श आद्यजन्त इति। व्याख्यानादिति भावः। अन्यथा 'येन गुणेन काणत्वादिनाऽवयवस्य विकारो लक्ष्यते' इत्यर्थाऽऽपत्त्या 'अक्षि काणमस्ये'त्यादौ प्रथमां बाधित्वा गुणवचनात्काणशब्दादेरेव स्यात्। 'अक्ष्णा काण' इत्यादौ तु षष्ठ्येव स्यादिति बोध्यम्। प्रकृत्यर्थेति। अर्श आद्यच्प्रकृतेरित्यर्थः। 'शरीरस्ये'त्यवयव्युपलक्षणम्। सम्भवतीति। [6]लक्ष्यः सम्भवतीत्यर्थः। द्रव्यादीति। आदिना-गुणक्रिये। एवञ्च त्रितयसाधारणं हेतुत्वम्। नियतक्रियमिति। क्रियया नियतमित्यर्थः। 'क्रियामात्रविषयमि'ति यावत्। हेतुकरणयोर्वैषम्यान्तरमप्याह—अनाश्रिते त्विति। एवञ्च करणत्व-हेतुत्व-विषयकशाब्दबोधाय सूत्रद्वयमि-

---

१ 'करणम्' इति मु० पाठः।
२ 'येन' इति क. ख. नास्ति।
३ अयं पाठः क. ख. नास्ति।
४ 'न तत्राक्ष्णा' इति ख. पाठः।
५ 'क्रियास्वन्वयः' इति क. पाठः।
६ 'लक्ष्यम्' इति घ. पाठः।

फलमपीति। एतच्च प्रत्ययः (३।१।१) इति सूत्रे कैयटे[1] स्पष्टम्। एवञ्च तादर्थ्यचतुर्थ्या सहेयं तृतीया विकल्प्यते—'अध्ययनाय वसति'। अयन्तु विशेषः—'अध्ययनस्य फलेन सहाऽभेदः संसर्गः, उपकारकत्वेन सह तु निरूपकते'ति। गम्यमानेति। न तु श्रूयमाणैवेत्याग्रह इति भावः। साधनेति। 'साध्यमि'त्यत्र प्रकृतिभागस्याऽर्थं प्रतीति भावः। 'मा चापलायेति गणान् व्यनैषीदि'त्यत्र तु 'यतध्वमि'ति शेषः। अशिष्टेति। एतच्च दाणश्च सा चेच्चतुर्थ्यर्थे (१।३।५५) इत्यनेन ज्ञाप्यते।

इति तृतीया॥

---

बृहच्छब्दरत्नः

इत्यर्थः। नन्वेवं हेतुतृतीययैव सिद्धे करणे तृतीयाविधानं व्यर्थमिति चेन्न। शाब्दबोधे वैलक्षण्यात्। 'बाणव्यापारसाध्यः प्राणवियोग' इति करणे शाब्दबोधः। हेतुतृतीयायान्तु विलक्षण एव। कैयट इति। 'तदर्थं विकृतेः' 'धातोरेकाचो हलादेरि'ति[2] च सूत्रे स्पष्टम्। अभेदः संसर्ग इति। प्रकृति-प्रत्ययाऽर्थयोरभेदसंसर्गस्याऽन्यत्र[3] दृष्टत्वात्। स च प्रत्ययाऽर्थः फलत्वेन फलम्। वासेन सह तूपकारकत्वं सम्बन्धः। केचित्तु 'अध्ययनेन वसती'त्यत्राऽध्ययनशब्देनाऽध्ययनज्ञानानि लक्ष्यन्ते। हेतौ तृतीया। अभेदाऽन्वयः प्राग्वदि'त्याहुः। अपरे तु 'स्वज्ञानद्वारा जनकत्वेन दण्डादिवद्धेतुत्वमध्ययनादेरि'त्याहुः। ज्ञाप्यत इति। 'अशिष्टव्यवहारे' इत्ययमप्यंश एकदेशाऽनुमतिद्वारा ज्ञाप्यते इति भावः।

इति तृतीया॥

---

लघुशब्दरत्नः

त्यर्थः। विकल्प्यत इति। तदर्थत्वेन विवक्षायां चतुर्थ्याः, हेतुत्वेन विवक्षायां तृतीयायाश्च प्राप्त्या विवक्षाभेदेन विभक्तिद्वयमित्येतावता तयोर्विकल्पव्यवहार इति बोध्यम्। फलेन सहेति। 'तच्च फलं फलत्वेन तृतीयाऽर्थ' इत्येके। हेतुत्वेनैवेत्यन्ये। 'अध्ययनहेतुको वास' इति बोधस्तृतीयायां, चतुर्थ्यामध्ययनोपकारको वास इति बोध' इति [4]मते इदम्। 'अध्ययनोपकार्यको वास' इति बोधश्चतुर्थ्यामि'ति मते तत्राऽप्यभेदभानमेवेति बोध्यम्। गम्यमानेतीति। 'श्रमेणे'त्यादिपदजबोधविषयेत्यर्थः। स्पष्टञ्चेदं सहयुक्ते (२।३।१९) इत्यत्र भाष्ये। तदाह—न तु श्रूयमाणेति। श्रूयमाण-स्वमात्रवाचकपद-जन्यबोध-विषयेत्यर्थः। ज्ञाप्यते इति। 'चतुर्थ्यर्थविहिततृतीयायुक्ताद्दाण आत्मनेपदमि'ति तदर्थः। 'सा चेदि'त्यनेन तस्याः क्वाचित्कत्वं ज्ञाप्यते। तेन 'अशिष्टव्यवहारे' इत्यंशोऽपि सिद्ध इति भावः।

इति तृतीया॥

---

१ 'कय्यटे' इति, 'कैय्यटे' इति च लिखितेषु पाठः।
२ 'इत्यादौ च स्पष्टम्' इति ख. पाठः।
३ 'अन्यत्राऽदृष्टत्वात्' इति क. ख पाठः। ४ 'मतेनेदम्' इति घ. पाठः।

(अथ चतुर्थी)

अन्वर्थसञ्ज्ञाबलेनाऽऽह—**दानस्येति**। तेन 'अजां नयति ग्रामे,' 'हस्तं निदधाति वृक्षे' इत्यादौ नाऽतिप्रसङ्ग इति भावः। दानं चाऽपुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वाऽऽपादनम्[1]। अत एव 'रजकस्य वस्त्रं ददाती'त्यादौ न भवति। तत्र हि ददातिर्भाक्तः। एतच्च [2]वृत्तिकृन्मतम्। भाष्यमते तु नाऽन्वर्थतायामाग्रहः। 'खण्डिकोपाध्यायस्तस्मै चपेटां ददाती'ति प्रयोगात्। [3]'रजकस्य ददाती'ति तु शेषत्वविवक्षायां बोध्यम्। न चैवमजां नयति ग्राममित्यत्राऽपि प्रसङ्गः। 'यमभिप्रैती'त्युक्त्या हि 'यमि'ति निर्दिष्टस्य शेषित्वं, कर्मणश्च शेषत्वं लभ्यते। ग्रामस्य च अजां प्रति शेषित्वं नास्ति। **दानीय इति**। बाहुलकात्सम्प्रदाने अनीयर्।

---

**बृहच्छब्दरत्नः**

**तस्मै चपेटामिति**। 'क्रियाग्रहणं कर्त्तव्यं' 'गत्यर्थकर्मणि द्वितीये'त्यादिसूत्र-वार्तिकप्रत्याख्यानपरं भाष्यं चाऽत्र प्रमाणम्। **शेषित्वमिति**। उद्देश्यत्वमित्यर्थः। देवदत्तादीनामुद्देश्यत्वे दीयमानगवादीनां करणत्वम्। अत एव 'कर्मणा यमभिप्रैती'तिसूत्रे तृतीयानिर्देशः सङ्गच्छते। एवञ्च देवतोद्देश्येन द्रव्यत्यागरूपयजिपदाऽर्थैकदेशे उद्देश्यरूपाऽर्थेऽन्वयात् 'सोमेन यजेते'त्यादौ तृतीया सुलभा। त्यागेऽन्वये तु द्वितीयेष्टैव। प्रक्षेपाऽर्थक'जुहोति'योगे तु 'तृतीया च होरि'ति सूत्रेण तृतीयाऽपीति स्पष्टं भाष्यादौ।

---

**लघुशब्दरत्नः**

**अपुनर्ग्रहणायेति**। इदञ्च स्वत्वनिवृत्तेर्वाच्यतास्वीकारफलप्रदर्शनं, न तु धात्वर्थनिविष्टमिति बोध्यम्। **भाक्त इति**। अधीनीकरणरूपेऽर्थे इत्यर्थः। 'न शूद्राय मतिं दद्यादि'त्यत्र—मतिं=तज्जनकं शास्त्रं—नोपदिशेदित्यर्थः। **आग्रह इति**। अत एव 'क्रियाग्रहणं कर्त्तव्यमि'ति वार्तिकं भाष्ये प्रत्याख्यातम्। भाष्याऽन्तरमाह—**खण्डिकेत्यादि**। 'चपेटां ददाती'त्यत्र संयोगोऽर्थः। **शेषित्वम्**-उद्देश्यत्वम्। **शेषत्वम्**—अप्रधानत्वरूपम्। **शेषित्वं नास्तीति**। यद्यपि ग्रामसंस्काराऽर्थमजानयने तदपि ग्रामस्याऽस्ति, तथाऽप्यजाया इव परत्वात् कर्तुः (१।४।४९) इति कर्मसञ्ज्ञया बाधान्न दोष इति तत्त्वम्।

---

[1] 'परस्वत्वोत्पादनम्' इति मुद्रितेषु पाठः।

[2] 'वृत्तिमतम्' इति लिखितपाठः। 'वृत्तिकृन्मतम्' इति मुद्रितेषु पाठः।

[3] 'रजकस्य वस्त्रं ददाति' इति मुद्रितः पाठः। लिखितेषु 'वस्त्रम्' इति नास्ति।

**रुच्यर्थानां प्रीयमाणः (१।४।३३)।** प्रीञ् तर्पणे, अस्मात् कर्मणि लट्। हरये रोचते इति। हरिं प्रीणयतीत्यर्थः। कर्मसञ्ज्ञायां प्राप्तायां वचनम्। प्रीयमाणः किम्?। 'देवदत्ताय रोचते मोदकः पथि'। अत्र पथो मा भूत्।

---

**बृहच्छब्दरत्नः**

रुच्यर्थानामिति। मोदकादिसमवेतोऽभिलाषो—रुचिः। 'रोचते मोदकः', 'अभिलाषविषयो भवती'त्यवगमात्। अत्राऽऽह हरिः—'हेतुत्वे, कर्मसञ्ज्ञायां, शेषत्वे वाऽपि कारकम्। रुच्यर्थादिषु शास्त्रेण सम्प्रदानाऽऽख्यमुच्यते'। अस्याऽर्थः—'अन्यसमवेतोऽभिलाषो रुच्यर्थः। 'रोचते,' 'अभिलाषविषयो भवती'त्यवगमात्। विषयी भवन्तं मोदकं देवदत्तः प्रयुङ्क्ते=लौल्यात्तदानुगुण्यमाचरतीति देवदत्तस्य हेतुसञ्ज्ञायां प्राप्तायां, सम्प्रदानसञ्ज्ञा कथ्यते। तथा च हेतुसञ्ज्ञाविरहे णिज-भावाद्धेतुसमवायिन्या द्वितीयस्याः क्रियायाः अप्रतीतेर्मोदकः स्वक्रियायां धातु-वाच्यायां कर्त्ता भवति, न तु कर्म। यदा तु 'रोचते=प्रीणयती'त्यर्थस्तदा कर्म-सञ्ज्ञायां प्राप्तायां वचनम्। यदा तु 'देवदत्तस्य योऽभिलाषस्तद्विषयो भवती'त्यर्थ-स्तदा शेषत्वात् षष्ठ्यां प्राप्तायां वचनम्'। सर्वमिदं कौस्तुभे स्पष्टम्। [1]न चैव-मभिलष्यतियोगेऽपि चतुर्थीप्रसङ्गः—'देवदत्तो[2] मोदकमभिलष्यती'ति वाच्यम्। देवदत्तनिष्ठव्यापारस्याऽप्यभिधाने रुच्यर्थत्वाऽभावात्तत्र[3] नेति ध्वनयन्नाह—प्रीञ् तर्पणे इति। 'प्रीञ् तर्पणे' इति क्र्यादौ, चुरादौ च पठ्यते। 'प्रीङ् प्रीतावि'ति दैवादिकस्त्वकर्मकः। सकर्मकत्वे तु तस्याऽप्येतदेव रूपम्। 'प्रीयमाण' इति तु कर्मण्येव शानच्। 'ज्ञीप्स्यमान' इति साहचर्यात्। नन्वेवमपि प्रकृतसूत्रेण रुच्यर्थानां योगे सम्प्रदानत्वेन कर्मणि लकारो न युक्त इति चेन्न। अस्मादेव ज्ञापकादस्य समानाऽर्थत्वेनाऽग्रहणात्। नचैवमपि ण्यन्तस्य ग्रहणन्तु दुर्वारमिति वाच्यम्। 'प्री'घटितधातोरग्रहणमि'ति सामान्येन ज्ञापनात्। केवलस्याऽपि व्यपदेशिवद्भावेन प्रीघटितत्वात्। तत्सर्वं हृदि निधायाऽऽह—हरिं प्रीणयतीति। णिचि 'धूञ्प्रीञोर्नुक्'। 'हेतुमण्णिचि गत्यादिसूत्रेण परत्वात्कर्मत्वमि'त्यपि कश्चित्। अत्र पथ इति। न चाऽधिकरणसञ्ज्ञा बाधिका भविष्यतीति वाच्यम्। कर्म-

---

**लघुशब्दरत्नः**

अस्मात्कर्मणीति। क्र्यादेश्चुरादेर्वेत्यर्थः। 'प्रीङ प्रीताविति दैवादिकादि'त्यपि कश्चित्। हरिं प्रीणयतीति। 'प्रीयमाण' इति निर्देशेन 'प्री'धात्वर्थकर्मणः सम्प्रदानत्वा-ऽभावज्ञापनादत्र न सम्प्रदानत्वमिति भावः। अत्र पथ इति। न च तदभावे सूत्रस्य शेषत्व-

---

[1] 'न चैवम्' इत्यादिः 'प्रसङ्ग' इत्यन्तोऽयं पाठः क. ख. खण्डित इति प्रतिभाति।
[2] 'देवदत्तप्रसक (प्रसक्त ?) मोदकं' इति ख. पाठः।
[3] 'तन्नेति' इति कः ख. पाठः।

**श्लाघह्नुङ्** (१।४।३४)। श्लाघा-स्तुतिः। 'कृष्णाय श्लाघते'। कृष्णं स्तौतीत्यर्थः। अन्ये त्वाहुः—'कृष्णायाऽऽत्मानं, परं वा श्लाघ्यं कथयती'त्यर्थ' इति। तत्राऽऽद्ये पक्षे कर्मत्वे प्राप्ते, द्वितीये तु कारकशेषत्वात् षष्ठ्यां प्राप्तायां वचनम्। ह्नुत इति। 'सपत्नीभ्यः कृष्णं ह्नुवाना तमेवाऽर्थं कृष्णं बोधयती'-त्यर्थः। 'यस्य कस्य चित् ह्नुतिमि'ति[1] वा। तिष्ठत इति। 'स्थित्या

बृहच्छब्दरत्नः

सञ्ज्ञाया अपि प्रवृत्तत्वेन निर्विषयताऽऽपत्तेः। अत एव 'आदित्यो रोचते' इत्यत्र दीप्त्यर्थे सञ्ज्ञा न। स्तौतीति। एवं हि शक्यते ज्ञापयितुम्।

कृष्णायेति। कृष्णनिष्ठबोधनहेतुत्वसम्बन्धेन कृष्णस्य कथनेऽन्वयविवक्षया 'क्रियाऽर्थोपपदस्य चे'ति चतुर्थी। अत एवाऽऽह—कारकशेषत्वादिति। ह्नौतिप्रभृतयः स्वार्थोपसर्जनज्ञापनवचनाः सकर्मकाः। तथा च 'ज्ञीप्स्यमान' इति सञ्ज्ञिविशेषणमुपात्तम्। तत्र ज्ञीप्स्यमाने विवदन्ते[2]—'यस्मै आख्यायते स 'ज्ञीप्स्यमान' इत्येकं मतम्। 'आख्यायमानो ज्ञीप्स्यमान' इति मताऽन्तरम्। आद्यमते [3]आख्यायमानः प्रत्युदाहरणं तस्माद् द्वितीयो—'देवदत्तं [4]श्लाघते' इति। द्वितीये तु यस्मै आख्यायते स प्रत्युदाहरणम्। तस्माच्च षष्ठी—'देवदत्ताय श्लाघते'[5] विष्णुमित्रो यज्ञदत्तस्ये'ति। तत्राऽऽद्यमतं न युक्तम्। 'ज्ञीप्स्यमान'पदवैयर्थ्याऽऽपत्तेः। शेषे सूत्रस्य चरिताऽर्थत्वेन, सम्प्रदानसञ्ज्ञायाः कर्मसञ्ज्ञया बाधात्। एतेन

लघुशब्दरत्नः

**विवक्षायां चारितार्थ्येन परत्वात्तया [6]बाधसिद्धिरिति वाच्यम्। 'देवदत्तं रोचते' इत्यस्याऽप्यापत्तेः। कृष्णं स्तौतीति। 'स्तुत्या परस्मै कृष्णं कथयती'त्यर्थः। 'ज्ञीप्स्यमान'पदेन प्रथमोपस्थितत्वाण्णिच्प्रकृत्यर्थकर्मैव ग्राह्यम्। तस्याऽपि ज्ञापनविषयेच्छाविषयत्वाच्छानजुपपत्तिरिति भावः। ह्नुङादेरपि ह्नुत्यादिना बोधनमर्थ इति बोध्यम्। अन्ये त्विति। प्राधान्यात् ज्ञीप्स्यमानपदेन ण्यर्थकर्मण एव ग्रहणमिति तदाशयः। तदेवाऽऽह—कृष्णायेति। कारकशेषत्वादिति। कर्मणा यमभिप्रैति (१।४।३२) इति सम्प्रदानत्वाऽविवक्षया शेषत्वादित्यर्थः। सपत्नीभ्य इति। तत्र 'ह्नुवाने'त्यन्तमार्थिकाऽर्थकथनम्। स्वाऽभिप्रायं कृष्णं बोधयतीत्यर्थः। एवं 'शपते' इत्यपि व्याख्येयम्।**

[1] 'ह्नुते' इति वा' इति मुद्रितेषु पाठः।

[2] 'ज्ञीप्स्यमाने विवदन्ते' इति 'शप उपालम्भे' इति वार्त्तिकोदाहरणव्याख्यायां कैयट आह' इति शब्दकौस्तुभः।

[3] 'यस्मै आख्यायमानः प्रत्युदाहरणम्' इति शब्दकौस्तुभे पाठः।

[4] 'श्लाघयते' इति, 'श्लाघ्यते' इति वा क्वचित्पाठः।

[5] 'श्लाघ्यते' इति ख. पाठः।

[6] 'बाधा-सिद्धिरिति वाच्यम्' इति क्वचित्पाठः।

**स्वाऽभिप्रायं बोधयती'त्यर्थः । प्रकाशनस्थेयाख्ययोः (१।३।२३) इति तङ् ।**

**धारेरुत्तमर्णः (१।४।३५) । षष्ठ्यां प्राप्तायां वचनम् ।**

**स्पृहेरीप्सितः (१।४।३६) । परत्वादिति । तेन 'परस्परेण स्पृहणीयशोभं,' 'स्पृहणीयगुणैर्महात्मभिरि'त्यादि सिद्धम् । यदा तु शेषत्वविवक्षा तदा षष्ठी । तेन 'कुमार्य इव कान्तस्य त्रस्यन्ति, स्पृहयन्ति चे'ति सिद्धम् । एतच्च सर्वं हरदत्तादिरीत्योक्तम् । वाक्यपदीय-हेलाराजग्रन्थयोस्तु–'स्पृहयतियोगे कर्मसञ्ज्ञायाः, शेषषष्ठ्याश्च बाधिकेयं सम्प्रदानसञ्ज्ञे'ति स्थितम् । तन्मते 'स्पृहणीयमि'त्यत्र 'दानीय' इतिवत्सम्प्रदाने कृत्यः । 'कुमार्य इवे'त्यत्र तु विभक्तिविपरिणामेन 'कान्ताय स्पृहयन्ती'ति व्याख्येयम् ।**

---

बृहच्छब्दरत्नः

'ज्ञीप्स्यमानपदाऽभावे 'देवदत्तः सभायां गार्गिकया श्लाघते' इत्यत्र कर्त्रादौ स्यादि'-त्यपास्तम् । श्लाघह्नुङ्स्थाशपां सकर्मकत्वेन तमादायैव 'ज्ञीप्स्यमान'पदस्य निर्णेतुं युक्तत्वाच्च ।

धारेरुत्तमर्णः । 'धृङ् अवस्थाने' इति ण्यन्तस्य ग्रहणम् । 'ध्रियमाणं=स्वरूपेणाऽवतिष्ठमानं=स्वभावादप्रच्यवमानं मोक्षं, हरिः प्रयुङ्क्ते' इत्यर्थः ।

ननूत्तमर्णग्रहणं व्यर्थम् । न चाऽधमर्णे दोषः । सम्प्रदानसञ्ज्ञायां णिजनापत्तौ 'धारेरि'तिनिर्देशस्याऽसङ्गतताऽऽपत्तेः । परत्वात्कर्तृसञ्ज्ञाऽऽपत्तेश्च । एतेनाऽधिकरणादीनां सम्प्रदानसञ्ज्ञा स्यादिति निरस्तम् । न चोत्तमर्णेऽपि हेतुसञ्ज्ञाया दुर्वारत्वेन सूत्रस्य वैयर्थ्यम् । यथाऽवस्थितकर्तृणां शत-मोक्षादीनां हर्याद्यधमर्णाः प्रयोजकीभूताः, तथाऽधमर्णहर्यादीनामुत्तमर्णभक्तादयः प्रयोजका इति वाच्यम् । ईदृशहेतुत्वाऽविवक्षायां चारितार्थ्यात् । तदेतद् ध्वनयन्नाह—षष्ठ्यां प्राप्तायामिति । एवञ्चाऽधिकरणत्वाद्यविवक्षायामप्रवृत्त्यर्थम् 'उत्तमर्ण'ग्रहणमित्यपि ध्वनितम् ।

स्पृहेः । 'स्पृह ईप्सायाम्' चुरादावदन्तः । ततो णिच् । हरदत्तादीति । यत्तु 'क्रियया यमभिप्रैती'त्यनेनैवेष्टसिद्धौ 'स्पृहेरीप्सित' इति सूत्रं व्यर्थमित्यरुचिबीजमि'त्याहुः । तन्न । उक्तप्रकारस्याऽसार्वत्रिकत्वात् । अत एव 'घटं करोती'-त्यादौ न दोषः । इदमपि सूत्रं तत्र ज्ञापकमित्यन्यदेतत् । अत एव 'पुष्पाणि स्पृहयती'त्यादिसिद्धिः । तन्मते इति । अत्राऽरुचिबीजन्तु षष्ठ्याः सञ्ज्ञा

---

लघुशब्दरत्नः

सिद्धमिति । स्पृहणीये कर्मणि अनीयरिति भावः । यदा त्विति । कर्मणः [1]शेषत्वविवक्षेत्यर्थः । इति स्थितमिति । [2]शेषत्वविवक्षायां चारितार्थ्येन कर्मसञ्ज्ञाबाधकत्वाऽयोगोऽत्राऽरुचिः । सम्प्रदाने इति । बाहुलकादिति भावः ।

---

[1] 'शेषत्वेन विवक्षेत्यर्थं' इति मुद्रितेषु पाठः ।
[2] 'शेषत्वाऽविवक्षायाम्' इति घ. पाठः ।

**क्रुधद्रुह** (१।४।३७)। क्रुध कोपे, द्रुह द्रोहे, ईर्ष्य ईर्ष्यायाम्। [२]असूयेति कण्ड्वादियगन्तः। एषामर्थ इवाऽर्थो येषां धातूनामित्यर्थः। तत्र-क्रोधोऽमर्षः, द्रोहोऽपकारः, ईर्ष्या असहनम्, असूया तु गुणेषु दोषाऽऽरोपः। क्रुधद्रुहोरकर्मकत्वात्तद्योगे षष्ठी प्राप्ता, अन्ययोः सकर्मकत्वाद् द्वितीया प्राप्ता।

**राधीक्ष्योः** (१।४।३९)। कारकमिति। 'कर्म कारकमि'ति तु प्राचः प्रमादः। एकसञ्ज्ञाऽधिकारात्। न च प्राथमिकप्राप्तिमात्राऽभिप्रायेण कर्मत्वव्यपदेशः। 'कृष्णसम्बन्धि शुभाऽशुभं पर्यालोचयती'त्यर्थाऽभ्युपगमेन षष्ठ्या एव प्राप्तेः।

---

बृहच्छब्दरत्नः

बाधिकेति दुर्निरूपम्। समानविषयत्वाऽभावात्। कारकाऽधिकारस्थसञ्ज्ञामात्रे एवमेवाऽऽपत्तौ विशिष्याऽत्रोक्तौ बीजाऽनापत्तेश्च। उभयबाधकल्पने मानाऽभावाच्च। ईप्सिततमत्वाऽविवक्षायां सूत्रस्य चारितार्थ्याच्च।

क्रुधद्रुह। ननु 'चित्तदोषाऽर्थानामि'त्येवाऽस्तु, किं पृथगुपादानेनेति चेन्न। द्विषादावतिप्रसङ्गात्। अनभिनन्दनं हि द्विषेरर्थः,—'औषधं द्वेष्टी'ति यथा। अकर्मकत्वादिति। वाक्चक्षुरादिविकाराऽनुमेयप्ररूढकोपरूपक्रोधजन्यस्य, अपकाररूपद्रोहजन्यस्य च फलस्य देवदत्तादौ सत्त्वेऽपि तस्य धात्ववाच्यत्वादिति भावः। अत एवोत्तरसूत्रं चरिताऽर्थम्। सकर्मकत्वादिति। अपरे तु 'कर्मणः शेषत्वविवक्षायां षष्ठ्यप्यनेन बाध्यते। 'यस्य कोप' इति नोक्तम्। सम्बन्धस्य सर्वत्र सत्त्वेन सर्वत्राऽऽपत्तेः। 'यं प्रती'ति—लक्ष्यलक्षणभावे। षष्ठ्या एव प्राप्तेरिति। शुभाऽशुभपर्यालोचनमिह धात्वर्थः। पर्यालोचनञ्चाऽज्ञानभङ्गाऽनुकूलो व्यापारः। कर्मणो

---

लघुशब्दरत्नः

व्याख्येयमिति। षष्ठ्यपवादत्वाच्छेषत्वविवक्षा कर्तुमशक्येत्यभिमानः।

अमर्ष इति। वाक्चक्षुरादिविकाराऽनुमेयः प्ररूढकोप इत्यर्थः। अपकार इति। अपकारविषयेच्छेत्यर्थः। असहनम्—उत्कर्षविरोधिधर्माऽऽरोपाऽनुकूलो व्यापारः। गुणेषु=गुणविषये। दोषाऽऽरोपः=दोषत्वाऽऽरोपाऽनुकूलो व्यापारः। अकर्मकत्वादिति। क्रोधजन्यस्य फलस्य देवदत्तादौ सत्त्वेऽपि, तस्य धात्ववाच्यत्वादिति भावः। द्वितीयेति। तत्प्रयोजिका कर्मसञ्ज्ञेत्यर्थः।

प्राथमिकेति। राधीक्ष्योः प्रश्नविषयपर्यालोचनमर्थः। तत्र प्रश्नविषयरूपफलाऽऽश्रयत्वात्कर्मत्वप्राप्तिरिति भावः। इत्यर्थाभ्युपगमेनेति। तस्य प्रधानीभूतधात्वर्थाऽप्रयोज्यत्वेन

---

[२] 'असूयति' इति घ. ङ. छ. पाठः।

अनुप्रति (१।४।४१)। 'गृण' इति श्नाऽन्तस्याऽनुकरणात् षष्ठी। होत्रे इति। कर्मत्वे प्राप्ते।

परिक्रयणे (१।४।४४)। क्रयो धनाद्यर्पणेनाऽऽत्यन्तिकस्वीकरणम्[1]। तस्य समीपं 'परि'शब्द आचष्टे। तच्च नियतकालम्। ततो न्यूनत्वादिति व्याचष्टे–नियतेति। भृत्या–वेतनादिना। तादर्थ्ये इति। तस्मै कार्यायेदं तदर्थं = कारणम्। तस्य भावस्तादर्थ्यम्। ष्यञा उपकारकत्वरूपः सम्बन्धोऽभिधीयते। 'कृत्तद्धितसमासेभ्यः सम्बन्धाऽभिधानं भावप्रत्ययेने'ति सिद्धान्तात्। उपकारकत्वञ्चाऽनेकधा। तेन 'ब्राह्मणाय दधी'त्यादावपि भवति। भक्तिर्ज्ञानायेति। ज्ञानाऽऽत्मना परिणमते इत्यर्थः। प्रकृति-विकृत्योर्भेद-

बृहच्छब्दरत्नः

धात्वर्थेनोपसङ्ग्रहादकर्मकावेतौ। अत एव श्यन्। अत एव 'यं प्रती'त्यनुवृत्तावपि 'यस्ये'तिग्रहणं चरिताऽर्थम्। न हि बालकं लक्ष्यीकृत्य प्रश्नः, किन्तु ब्राह्मणं लक्ष्यीकृत्य। बालकस्तु शुभाऽशुभसम्बन्धीति बोध्यम्। 'अनुप्रतिभ्यां गृणः—अनुप्रतिगृणः, तस्ये'ति विग्रहः। यद्वा 'अनुप्रती'ति भिन्नं पदं पञ्चम्यन्तम्। 'प्रकृतिवदनुकरणं भवती'त्यतिदेशेनाऽव्ययत्वात्सुप्लुक्। तदेतद् ध्वनयन्नाह—गृण इत्यादि। पूर्वसूत्रं 'विप्रेण गां प्रतिशृणोति', 'विप्रो गां प्रतिश्रावयती'तिप्रयोगव्यावृत्त्यर्थम्। प्रतिपूर्वः, आङ्पूर्वश्च शृणोतिरभ्युपगमे। तत्र स्वनिष्ठव्यापारजन्यत्वसम्बन्धेन हेतुत्वात्तृतीया प्राप्ता। प्रयोज्य-प्रयोजकभावेन विप्रनिष्ठव्यापारस्य विशेष्यत्वविवक्षायां णिच्प्रवृत्तिः। सम्प्रदानसञ्ज्ञायान्तु नोभयम्। तथाऽत्र नेति ध्वनयन्नाह—कर्मत्वे इति। अयम्भावः—अनुपूर्वः, प्रतिपूर्वश्च गृणातिः शंसितुः प्रोत्साहने वर्त्तते। तत्र पूर्वो व्यापारः शंसनमेव गृह्यते। शंसितुः प्रोत्साहने कर्मतासंसर्गेणाऽन्वयः। तत्र 'होत्रे' इत्यस्याऽभेदेनाऽन्वयः। 'इदञ्च सूत्रमत्रैव प्रवर्त्तते' इति केचिदाहुः। भवतीति। न चैवं 'चतुर्थी सम्प्रदाने' इतिसूत्रं व्यर्थमिति वाच्यम्। कारकाणां क्रियाऽर्थत्वेऽपि क्रियायास्तदर्थत्वाऽभावात्। 'रुच्यर्थानामि'त्याद्यर्थमावश्यकत्वाच्च। सम्प्रदानचतुर्थ्या समासे कारकपूर्वपदकार्याऽर्थमावश्यकत्वाच्च। 'विप्रोद्देश्यकं दानमि'त्यर्थबोधनाऽर्थत्वाच्च।

लघुशब्दरत्नः

तदप्राप्तिरिति भावः। कर्मत्वे प्राप्ते इति। शंसितुः शंसनविषयहर्षाऽनुकूलव्यापारलक्षणं प्रोत्साहनं तयोरर्थः। शंसितुः प्रोत्साहने कर्मतयाऽन्वयः। होतुश्च शंसितर्यभेदाऽन्वयः। एवञ्च कर्मसामानाधिकरण्यात्कर्मत्वप्राप्तिरिति भावः।

धनादीति। आदिना-दुर्भिक्षेऽन्नम्। अनेकधेति। साक्षात्परम्परया चेत्यर्थः। 'ब्राह्मणाय दधी'त्यादौ तद्भोजनोपकारकत्वेन तदुपकारकत्वं बोध्यम्। ज्ञानात्मनेति।

[1] 'अत्यन्तस्वीकारः' इति घ. पाठः।

विवक्षायां विकृतिवाचकाच्चतुर्थी । अभेदविवक्षायान्तु परत्वात्प्रथमैव—'भक्तिर्ज्ञानं कल्पते' इति । यदा तु जनिकर्त्तुः (१।४।३०) इति भक्तेरपादानत्वं विवक्ष्यते, तदा ज्ञानस्याऽभिहितकर्त्तृत्वात्प्रथमैव—'भक्तेर्ज्ञानं कल्पते' । 'क्लृपी'त्यर्थग्रहणमित्याशयेनाऽऽह—सम्पद्यत इत्यादि । उत्पातेनेति । 'प्राणिनां शुभाऽशुभसूचको भूतविकार उत्पातः, तेन ज्ञापितेऽर्थे वर्त्तमानाच्चतुर्थी'त्यर्थः । वातायेति । वातस्य ज्ञापिकेत्यर्थः । हितेति । समासविधाना-

बृहच्छब्दरत्नः

समासविधानादिति । ननु 'चतुर्थी चाऽऽशिषी'ति सूत्रविहितचतुर्थ्या समासविधानस्य चारितार्थ्येन ज्ञापकता न युक्ता, फलाऽभावश्चेति चेत् । अत्रोच्यते—अनेन सूत्रेण चतुर्थी-षष्ठीद्वयं न विधीयते इति तावन्निर्विवादम् । तत्र 'क्वचिच्चतुर्थ्यां प्राप्तायां षष्ठी विधीयते' इत्यस्याऽपि कल्पने न कश्चिल्लक्ष्यविसंवादः । किञ्च 'वे'त्यनुवृत्त्यैव सिद्धौ चकारेणाऽन्यतरस्याङ्ग्रहणेन च षष्ठीचतुर्थ्योः पुनर्बोधनेन समासाऽभावज्ञापनात् । अपि च 'चतुर्थी तदर्थाऽर्थे'तिसूत्रे योगं विभज्य 'चतुर्थ्यन्तं समर्थेन सुबन्तेन समस्यते' । 'तदर्थार्थे'ति[1] तूत्तरपदस्याऽर्थाऽऽदेशविधानाऽर्थम् । 'छात्राय रुचितमि'त्यादावतादर्थ्यचतुर्थ्या सह समासस्तु हितसुखग्रहणान्नेति भाष्योक्तमिति तावन्निर्विवादम् । इदञ्चाऽऽनुमानिकवचनकल्पने एव सङ्गच्छते । 'चतुर्थी चाशिषी'तिसूत्रविहितचतुर्थ्यन्तेन समासाऽङ्गीकारे त्वाशिषस्तदर्थत्वेनाऽतादर्थ्यचतुर्थ्या सह समासाऽभावे सुखहितग्रहणस्य ज्ञापकता भज्येत । सुखहितग्रहणस्य षष्ठ्यन्तेन समासाऽभावसम्पादकतया नियमाऽर्थत्वेन चारितार्थ्याच्च । अपि चाऽऽशीरर्थस्य वृत्तौ दुरुपपादत्वेन हितसुखग्रहणमसम्बद्धमेव स्यात् । वृत्तावुद्देश्यविधेयभावेनाऽनन्वयादाशीरर्थाऽप्रतीतेः । अन्यथा मीमांसकप्रसिद्धैकप्रसरताभङ्गो दुर्वारः । यद्यपि 'समासे एवैकप्रसरताभङ्ग' इति घण्टाघोषस्तथाऽपि मूलयुक्तेरेकार्थीभावस्य तद्धितादावपि सत्त्वात्तत्राऽपि दोषो बोध्यः । स्पष्टञ्चेदं 'हितं भक्षा' इतिसूत्रे भाष्ये । अत एव 'तस्मै हितमि'तिनिर्देशः सङ्गच्छते । [2]अत एवाऽनाशीरर्थे 'आपूपिकः' 'वत्सीयो गोधुगि'त्यादिप्रयोगाः सङ्गच्छन्ते । हरदत्तस्य तु महान् प्रमादः । स्पष्टञ्चेदं कैयटग्रन्थे सूक्ष्मदृशाम् ।

लघुशब्दरत्नः

आत्मशब्दस्तद्वृत्तिधर्मपरः । ज्ञानत्वेन परिणमते इत्यर्थः । एवञ्च तस्य विकृतिवाचकत्वाऽभावान्न चतुर्थी, किन्तु प्रकृत्यादित्वात्तृतीया । ज्ञानत्वविशिष्टरूपाऽन्तरप्राप्तिर्भक्तिकर्त्तृकेति यावत् । रूपाऽन्तरप्राप्तिर्हि परिणाम इति भावः । प्रथमैवेति । 'भक्त्यपादानको ज्ञानरूपः परिणाम' इति तदा बोधः । समासविधानादिति । 'चतुर्थी तदर्थ (२।१।३६)

[1] 'तदर्थार्थे' इति तु' इति क. ख. पाठः ।
[2] 'अत एव आशीरर्थे' इति ख. पाठः ।

ज्ञापकादिति भावः। एवं सुखयोगेऽपि बोद्धयम्। तुमुन्ण्वुलौ क्रियायाम् (३।३।१०) इति सूत्रमहिम्ना क्रियाऽर्थकमुपपदं क्रियावाच्येव फलतीत्याशयेनाऽऽह—क्रियेति। [1]क्रियाफलक-क्रिया-वाचकप्रकृतिकमित्यर्थः। तुमुन इति—ण्वुलोऽप्युपलक्षणम्। 'फलेभ्यो याती'त्यस्य 'फलान्याहरक' इत्यपि विवरणे बाधकाऽभावात्। कर्मणीति। तथा च द्वितीयाऽपवादोऽयमिति भावः।

यत्तु प्राचा व्याख्यातम्—'अप्रयुज्यमानस्यैव कर्मणि यथा स्यात्, प्रयुज्यमानस्य मा भूदिति नियमाऽर्थं सूत्रमि'ति। तन्न। अप्राप्तस्य नियमाऽयोगात्। न च 'तादर्थ्ये' इति प्राप्तिः। न हि फलाऽर्था यानक्रिया, किन्त्वाहरणाऽर्था। आहरणन्तु फलकर्मकमित्यन्यदेतत्। तुमुनो भावे एव

---

बृहच्छब्दरत्नः

'फलेभ्यो याती'त्यत्र 'फलकर्मकाऽऽहरणफलकं यानमि'त्यर्थ' इति सर्वसंमतम्। तत्र 'फलशब्दस्य फलकर्मकाऽऽहरणे लक्षणा, चतुर्थ्याः फले' इति कश्चित्। तन्न। सूत्रे 'कर्मणी'त्यस्योक्तत्वेनेदृशेऽर्थे साधुत्वे मानाऽभावात्। 'स्थानिनी'त्यनेन तदर्थबोधकशब्दाऽभावस्य बोधनाच्च। अत एव 'फलान्याहर्त्तुं याती'त्यत्र न चतुर्थी। एतेन 'क्रियामात्रे चतुर्थ्याः कर्मत्व-प्रयोजकत्वे [2]पूर्वपरयोः संसर्ग' इत्यपास्तम्। तस्मादत्राऽऽहरणरूपाऽर्थोऽध्याह्रियते। तथा च नाऽन्वयः। 'स्पृहेरीप्सित' इत्याद्यनुरोधेन शब्दाऽध्याहारवदुक्तसूत्राऽनुरोधेनाऽर्थाऽध्याहारकल्पने बाधकाऽभावात्। अत एव 'ल्यब्लोपे कर्मणी'त्यादि सङ्गच्छते। तत्राऽपि शब्दज्ञानपूर्वकाऽर्थबोधाऽङ्गीकारे ल्यब्लोपाऽसम्भवात्। न च तत्राऽप्युच्चारणाऽभावेन लोपत्वं सेत्स्यतीति वाच्यम्। दृशोरुच्चारणे प्रयोगाऽभावात्। दोषवशेन सर्वत्राऽनुच्चारणस्य सम्भावितत्वेन दोषाऽऽपत्तेश्च। 'फलेभ्यो याति' 'फलानि याती'ति-प्रयोगद्वयस्येष्टत्वाच्च। स्पष्टञ्चेदमइउणित्यादौ कौस्तुभे। तदाह—तथा चेत्यादिना।

न हीति। ननु दध्यपि भोजनाऽर्थं, ब्राह्मणाऽर्थं न। भोजनद्वारोपकारकत्वविवक्षायान्तु प्रकृतेऽपि समानमिति चेन्न। आहरणद्वारोपकारकत्वविवक्षायाम-

---

लघुशब्दरत्नः

इति हितसुखयोगे समासविधानाज्ज्ञापकादित्यर्थः। तदाह—एवमिति। वृत्तावाशीरर्थाऽप्रतीतेर्न चतुर्थी चाशिषि (२।३।७३) इति चतुर्थ्या हितयोगे निर्वाहः। आशीरर्थयोगे आशीविषयस्य विधेयत्वं, तदाश्रयस्योद्देश्यत्वं च प्रतीयते। न च वृत्तौ तथाऽन्वयो व्युत्पन्न इति हरदत्त इति दिक्। न हि फलार्थेति। यद्यपि 'ब्राह्मणस्य दधी'त्यादौ [3]ब्राह्मणीयभोजनो-

---

[1] 'क्रियाफलकम्' इति मुद्रितेषु पाठः।
[2] 'पूर्वपरयोः संसर्गौ इत्यप्यपास्तम्' इति क. पाठः।
[3] 'ब्राह्मणाय भोजनोपकारकम्' इति क्वचित्पाठः।

विधानात्तदर्थस्य भाववचनत्वे सिद्धे, पुनर्भाववचनग्रहणं सूत्रविशेषपरिग्रहाऽर्थमित्याह—इति सूत्रेणेति। न च 'तादर्थ्ये' इत्येव गताऽर्थता शङ्क्या। भाववचनेनैव तुमुनेव तादर्थ्यस्य द्योतिततया, प्रातिपदिकाऽर्थमात्रे प्रथमाप्रसङ्गात्। यत्तु प्राचोक्तम्—'भाववचनादेव यथा स्यात्, 'पाचको व्रजती'ति ण्वुलन्तान्मा भूदि'ति नियमाऽर्थमिदं सूत्रमि'ति। तन्न। ण्वुलन्ते कर्त्तुः प्राधान्यात्। कर्त्तारं प्रति च तादर्थ्याऽभावात्। गुणीभूतपाकस्य[1] च

बृहच्छब्दरत्नः

न्तरङ्गत्वेन तन्निमित्तककर्मत्वस्य दुर्वारत्वात्। क्रिया-कारकयोः परस्पराऽऽकाङ्क्षितत्वेन कर्मत्वस्यैव युक्तत्वाच्च। कारकाणां क्रियाऽर्थत्वेऽपि क्रियायास्तदर्थत्वाऽभावाच्च। फलस्वरूपस्य पूर्वं निष्पन्नत्वात्। आधिक्याऽभावेन तदर्थत्वाऽभावाच्च। यत्तु 'स्वयम्भुवे नमस्कृत्ये'त्याद्युदाहरणं मन्दं, 'नमःस्वस्तिस्वाहे'त्यनेनैव सिद्धत्वादि'ति। तन्न। अर्थकृतविशेषस्य स्पष्टत्वात्। [2]नमःशब्देन योगे समासाऽनापत्तेश्च। क्रियाऽन्वयस्याऽभ्यर्हितत्वेन कारकत्वाद् द्वितीयाया दुर्वारत्वाच्च। वस्तुतस्तु 'नमस्कृत्ये'त्यादौ 'व्याकरणं सूत्रयती'त्यादिवाक्यस्थसूत्रशब्दादिवन्नमःशब्दः क्रियावाची। एकार्थीभावाऽभ्युपगमात्। 'नमस्क्रियते गुरुरि'त्याद्यनुरोधेन द्योतकत्वाऽङ्गीकाराच्च। वाचकत्वपक्षेऽपि लकारवद्द्वितीयोत्पत्त्यर्थमुपायकल्पनाया आवश्यकत्वाच्च। चतुर्थी[3] तु केवलनमःशब्देनैव। नमःशब्दस्य स्वरादिपाठादव्ययत्वम्। 'नमःस्वस्ती'तिसूत्रे तु स्वस्त्यादिसाहचर्येण सत्त्ववाचक एव गृह्यते। 'नमोवरिवश्चित्रङ' इति सूत्रस्थभाष्यादिग्रन्थास्तु न युक्ता एवेत्यलम्।

लघुशब्दरत्नः

पकारकमपि दधि, तद्द्वारा ब्राह्मणोपकारकं, तथाऽपि[4]फले आहरणद्वारा न कोऽपि यानक्रियोपकार इत्याशयः। तुमुनेवेति। भाववचनघञादीनां तुमुनपवादतया तत्समानाऽर्थत्वात्। एवञ्च [5]प्रथमाऽपवाद इदमिति भावः। 'द्विषां विघाताय विधातुमिच्छत' इत्यत्र 'विघातायेति तादर्थ्ये चतुर्थी। विघाताऽर्थं यद्विधानं तदर्थेच्छावत इत्यर्थः। एतेन 'अत्र तुमुना तादर्थ्यस्योक्तत्वात्कथं चतुर्थी'त्यपास्तम्। उत्तरक्रिययोस्तद्द्योतनेऽपि पूर्वक्रिययोस्तदद्योतनात्। कर्त्तुः प्राधान्या-

[1] 'गुणीभूतयानस्य च' इति मुद्रितेषु पाठः।

[2] 'नमः' इति ख. नास्ति।

[3] 'चतुर्थी न केवल' इति ख. अस्फुटः पाठः।

[4] 'फले आहरणद्वारा' इति पाठः। 'फलेऽनाहरणे'ति पाठे 'नाहरणे'ति नशब्देन समासे पुनर्नञा समासः। द्वौ नञौ च दाढर्याय। अ-नाऽऽहरणम्=आवश्यकाऽऽहरणमित्यर्थं' इति भावप्रकाशः। 'फले न आहरणद्वारा कोऽपि यानक्रियोपकार' इति घ. पाठः।

[5] 'एवञ्चेदं प्रथमाऽपवाद इति भावः' इति मुद्रितः पाठः।

विभक्त्यर्थाऽनन्वयात्। ननु 'षष्ठ्यपी'ति कुतः, षष्ठ्येवाऽस्तु, अलंशब्दस्तु पर्याप्तीतराऽर्थक एव गृह्यतामित्याशङ्क्याऽऽह—तस्मै प्रभवतीति।

न त्वां तृणमित्यादि। ननु तृणादिवत् युष्मच्छब्दादपि पक्षे चतुर्थ्या भाव्यम्। मैवम्। 'अनादरे' इति हि कर्मणो विशेषणम्—'अनादरद्योतकं यत्कर्मे'ति। तादृशं तृणमेव, न तु युष्मदर्थः।

इति चतुर्थी॥

(अथ पञ्चमी)

ध्रुवमिति। 'ध्रु गतिस्थैर्ययोः,' अस्मात्कुटादेः पचाद्यच्। 'ध्रुव स्थैर्ये' इति पाठे तु इगुपधलक्षणः कः। ध्रुवं = स्थिरम्। प्रकृतधातूपात्तगत्यना-

---

बृहच्छब्दरत्नः

तुमुनेवेति (७०० पृष्ठे)। न चैवं 'द्विषां विघाताय विधातुमिच्छत' इत्यादौ तुमुनन्तेनैव तादर्थ्यस्य द्योतितत्वाच्चतुर्थी न स्यादिति वाच्यम्। उत्तरक्रिययो-र्द्योतितत्वेऽपि पूर्वक्रिययोरद्योतितत्वादिति दिक्।

इति चतुर्थी॥

स्थिरमिति। क्रियारहितमित्यर्थः। सा च क्रिया प्रत्यासत्त्या प्रकृतधातुपात्तै-वेत्याह—प्रकृतेति। प्रकृतत्वञ्च न शब्दप्रतिपाद्यत्वमित्याग्रहः, किन्तु विवक्षितत्व-मात्रम्। अत एव यत्र प्रत्यक्षसिद्धमागमनं मनसि निधाय पृच्छति-'कुतो भवान्'ति, 'पाटलिपुत्रादि'ति चोत्तरयति, अत्र हि अर्थाऽध्याहार एव न्याय्यः। इदमेव मनसि निधाय—'निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा। अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यते' इति हरिग्रन्थो, 'गम्यमानाऽपि क्रिया कारकविभक्तीनां प्रयोजि-के'ति घण्टाघोषश्चेति ध्येयम्। एतेन 'धनुषा विध्यती'त्यत्राऽपादानसञ्ज्ञां बाधित्वा करणसञ्ज्ञे'त्याकरग्रन्था व्याख्याताः। शरनिःसरणं प्रत्यवधिभावोपगमेनैव व्यधने करणताऽभ्युपगमेनोभयोरपि बुद्ध्यारोहात्। गतीति। गतिशब्देन स्वनिष्ठविभागा-ऽनुकूलकर्तृनिष्ठक्रियामात्रमुच्यते, न तु ग्रामादिनिष्ठो विभागः। 'वृक्षाद्भूमिं पतती'-त्यत्र भूम्यादिनिष्ठसंयोगाऽनुकूलस्वनिष्ठविभागाऽनुकूलो व्यापारो धात्वर्थः। 'वृक्षं

---

लघुशब्दरत्नः

दिति। एवञ्च तादर्थ्यचतुर्थ्यास्तत्राऽप्राप्तेर्नियमाऽसम्भव इति भावः। विभक्त्यर्थेति। तादर्थ्यचतुर्थ्यर्थे इत्यर्थः।

इति चतुर्थी॥

प्रकृतेति। कर्त्तर्यतिव्याप्तिवारणाय सत्यन्तम्। अन्यथा कर्तृसञ्ज्ञाया इयमपवादः स्यात्। कर्तृसञ्ज्ञा तु पचत्यादियोगे चरितार्था। कर्मणि ग्रामेऽतिव्याप्तिवारणाय विशेष्यम्।

**विष्टत्वे सति, तज्जन्यविभागाऽऽश्रयः। तच्चाऽर्थादवधिरेवेत्याह[1]—अवधिभूतमिति। धावत इति। इह [2]क्रियाऽऽविष्टस्याऽप्यश्वस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वं न विरुद्धयते। 'परस्परस्मान्मेषावपसरत' इत्यत्र तु सृधातुना गतिद्वयस्याऽप्युपादानादेकनिष्ठां गतिं प्रतीतरस्याऽपादानत्वं न विरुद्धयते। उक्तञ्च—**

बृहच्छब्दरत्नः

त्यजती'त्यादौ तु व्यापारव्यधिकरणविभागो धात्वर्थः। विभागस्येप्सिततमत्वेन परत्वात्तदाश्रयस्योक्तरीत्या कर्मत्वम्। विभागाऽऽश्रयस्य यद्यपि 'तथायुक्तमि'त्यनेन कर्मत्वं प्राप्तं, तथाऽपि निरवकाशत्वेनाऽपादानसञ्ज्ञया बाध्यते। 'तथायुक्तमि'ति सूत्रस्याऽपि व्यापारव्यधिकरणफलस्य धातुवाच्यत्वे एव प्रवृत्तिरि'ति पक्षे तु प्रवृत्तिरेव नेति बोध्यम्। अपरे तु 'ग्रामादायाती'त्यादौ विभागस्य धातुवाच्यत्वेऽप्युद्देश्यत्वाऽभावेनेप्सिततमत्वाऽभावान्न कर्मत्वं 'कर्त्तुरीप्सिततममि'त्यनेने'त्याहुः। न चैवं 'वृक्षात्स्पन्दते' इति स्यादिति शङ्कयम्। 'आसनाच्चलितः' 'राज्याच्चलित' इतिवदिष्टाऽऽपत्तेः। यत्तु 'ध्रुवशब्दस्य स्थिरतावाचकत्वेन सत्यन्तस्य शब्दमर्यादया सूत्राल्लाभेऽपि 'तज्जन्ये'त्यादेरलाभ' इति। तन्न। 'अपाये' इतिसप्तम्या अन्वयाऽर्थं 'साध्ये' इत्यस्याऽध्याहारे 'अपाये साध्ये यद् ध्रुवं क्रियाऽन्वयि तदपादानमि'त्यर्थे निष्पन्ने, 'प्रत्यासत्ति'न्यायेन विभागाऽऽश्रयध्रुवस्यैव ग्रहणात्। तदेव ध्वनयन्नाह—तच्चार्थादिति। अवधिरिति। अवधिशब्दः सीमावाची, 'परिच्छेदे बिलेऽवधिः', 'मर्यादायां स्मृतोऽवधिः', 'अवधिस्त्ववधाने स्यात् सीम्नि काले पुनः पुमानि'ति कोशात्। 'इन्द्रप्रस्थाऽवधिकं गमनं' 'मुक्त्यवधिकः संसार' इत्यादौ तथैव दर्शनाच्च[3]। एवञ्च लाघवादवधिः पञ्चम्यर्थो, न तु 'धातूपात्तगत्यनाविष्टत्वे' इत्यादि। व्यर्थत्वात्। कर्त्तृसञ्ज्ञया अपादानसञ्ज्ञाया बाधेनैकत्राऽसम्भवाच्च। ध्रुवत्वाऽभावाच्च। गौरवाच्च। अत एव [4]'विभाग आश्रयश्च पञ्चम्यर्थ' इत्यपास्तम्। 'वृक्षाद्विभजते'-इत्यादौ धातुना विभागस्य लाभाच्च। अनन्वयाऽऽपत्तेश्च। 'ध्रुवमपायेऽपादानम्' 'अपादाने पञ्चमी'तिसूत्रद्वयस्यैकरूपतालाभाऽर्थं पञ्चम्यर्थे वैरूप्यस्याऽयुक्तत्वाच्च। 'अपाये' इतिसप्तम्यन्तेनाऽपादानवाच्यत्वाऽभावाच्च। एतेन 'विभागमात्रं

लघुशब्दरत्नः

अवधित्वं न विरुध्यत इति। तदुपात्तक्रियाऽनाश्रयत्वादिति भावः। न विरुद्धयते।

[1] 'अवधेरेव' इति मुद्रितेषु पाठः।

[2] 'क्रियाविशिष्टस्य' इति मुद्रितेषु पाठः।

[3] 'दर्शनात्' इति ख. पाठः।

[4] 'विभाग आश्रयः पञ्चम्यर्थः' इति ख. पाठः।

'अपाये यदुदासीनं चलं वा, यदि वाऽचलम् ।
ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते ॥
पततो ध्रुव एवाऽश्वो यस्मादश्वात्पतत्यसौ ।
तस्याऽप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ॥
मेषाऽन्तरक्रियाऽपेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियाऽपेक्षं कर्त्तृत्वञ्च पृथक् पृथक्' ॥ इति ।

'पर्वतात्पततोऽश्वात्पतती'त्यत्र तु पर्वताऽवधिक-[1]पतनाऽऽश्रयो योऽश्वः, तदवधिकं [2]देवदत्तादिनिष्ठं पतनमर्थः । पञ्चम्यर्थेऽवधौ अभेदेन संसर्गेण प्रकृत्यर्थो विशेषणम् । प्रत्ययाऽर्थस्तु क्रियायाम् । स च धर्मी, न तु धर्ममात्रम् । विभक्त्यर्थे विहितस्य बहुव्रीहेर्धर्मिपरताया निर्विवादत्वात् । 'उद्धृतौदना स्थाली'त्यत्र हि ओदनकर्मकोद्धरणाऽवधिभूतेत्यर्थः ।

---

बृहच्छब्दरत्नः

[3]धात्वर्थ' इति मन्दोक्तमपास्तम् । 'अपादाने पञ्चमी' 'भीमादयोऽपादाने' इत्यादौ धर्मिपरताया निर्णीतत्वाच्च । महासञ्ज्ञाकरणेन तथैव ध्वनितत्वाच्चेति पूर्वमेव प्रपञ्चितम् । तद् ध्वनयन्नाह—पञ्चम्यर्थेऽवधाविति । अवधित्वेन प्रकृत्या तु न लाभः । निर्विवादत्वादिति । न चैवं शेषषष्ठ्या अपि धर्मिवाचकत्वं स्यादिति वाच्यम् । इष्टाऽऽपत्तेः । युक्त्यन्तरस्य वक्ष्यमाणत्वाच्च । नन्वेवं 'सार्थाद्धीयते' इत्यादौ धातूपात्तव्यापाराऽऽश्रयत्वं सार्थस्याऽस्ति, उत न ? । नाऽऽद्यः । ध्रुवत्वाऽनापत्तेः । कर्त्तृत्वाऽऽपत्तेश्च । अत एव 'अपादानमुत्तराणी'ति भाष्यं सङ्गच्छते । नाऽन्त्यः । देवदत्तस्य कर्त्तृत्वाऽऽपत्तौ कर्मणि यगाद्यनापत्तेरिति । अत्राऽऽहुः—कर्मकर्त्तरि लकारः । अपगमना [4]जहातेरर्थः । सा च क्षुदुपघातादिना देवदत्तस्याऽपगमने तत्समर्थाऽऽचरणम् । यदा तु क्षुदुपघातादिना स्वयमेवा-

---

लघुशब्दरत्नः

तदनाश्रयत्वादिति भावः । अतदावेशादिति । तद्धातूपात्तगत्यनावेशादित्यर्थः । 'तदावेशा-दि'ति पाठे तन्मात्राऽऽवेशात्=विभागमात्राऽऽवेशादित्यर्थः । विशेषणमिति । वस्तुतोऽवध्य-वधिमद्भावरूपविभक्त्यर्थसम्बन्धेनाऽवधिक्रिययोरन्वय इत्यन्यत्र निरूपितम् । सा च क्रिया विभागरूपा । कालिकसम्बन्धेन फलाश्रयेऽतिप्रसङ्गवारणाय फलताऽच्छेदकसबन्धस्य कर्मलक्षणे

---

[1] 'पतनाश्रयोऽश्वः' इति ङ. च. पाठः । 'पतनाश्रयो योऽश्वः इति घ. पाठः ।
[2] 'देवदत्तादिनिष्ठपतनम्' इति मुद्रितेषु पाठः ।
[3] 'विभागमात्रमर्थः' इति ख. पाठः ।
[4] 'अवगमना जहात्यर्थः' इति वा पाठः ।

**जुगुप्सेति । भाष्यकारास्तु जुगुप्सादीनां तत्पूर्वकनिवृत्तिलक्षकता-माश्रित्य सूत्रेण[1] तत्सिद्धिमाहुः । एवमुत्तरसूत्रेष्वपि ।**

---

बृहच्छब्दरत्नः

ऽपगच्छति=विभक्तो भवति, तदा कर्मकर्त्तृत्वम् । अपरे तु 'सार्थनिष्ठो देवदत्त-कर्मको विभागाऽनुकूलो व्यापारः शाब्दोऽर्थः । न चैवं कर्त्तृत्वाऽऽपत्तिः । 'अपादाने चाऽहीयरुहोरि'तिसूत्रेणाऽपादानत्वस्य ज्ञापितत्वात् । कर्त्तृसञ्ज्ञायां कर्त्तृपदस्य प्रकृतधातूपात्तव्यापाराऽऽश्रये लक्षणायाः सत्त्वेन न कश्चिद्दोषः । प्रसिद्धाऽर्थकजहातेरेव ग्रहणात्तत्सम्बन्ध्यपादानमेव गृह्यते । कर्मवद्भावो वक्तु-मशक्यः, गम्यादिवत्कर्मस्थक्रियत्वाऽभावादि'त्याहुः ।

निवृत्तिलक्षकतामिति । नन्वेवं 'मातुर्निलीयते कृष्ण' इत्यत्र 'निलयनेन निवर्त्तते' इत्यर्थाऽङ्गीकारे 'उपाध्यायान्निलापयति पुत्रमि'त्यादावपि पञ्चम्यापत्तिः । यथान्यासे तु सा दुर्लभा । 'येनाऽदर्शनमिच्छती'त्यत्र प्रत्यासत्तिन्यायेनेच्छाकर्त्तु-रेवाऽदर्शनमित्यत्र कर्मत्वेनाऽन्वयादिति चेन्न । लक्षणयोक्तप्रयोगस्य दुर्वारत्वात् । कर्त्तुः प्रयोजकस्य हेतुसञ्ज्ञायाः सत्त्वेन णिचः पूर्वम् 'अन्तर्द्धावि'तिसूत्रस्य दुर्वा-रत्वाच्च । न चाऽत्रेच्छा न प्रतीयते इति वाच्यम् । 'मातुर्निलीयते कृष्ण' इत्यादावप्य-प्रतीतेः । आक्षेपलभ्येच्छाऽस्तीति चेत् । प्रकृतेऽपि दृष्टिर्दीयताम् । एतेना'ऽन्तर्द्धाविति किम् । चोरान्न दिदृक्षते' इति ग्रन्थो व्याख्यातः । अत्र हि चोरकर्मकस्वकर्त्तृकदर्शना-ऽभावे न तात्पर्यं, किन्तु चोरकर्त्तृकस्वकर्मकदर्शनाऽभावे । न चैवमपि परत्वात्कर्म-सञ्ज्ञा सेत्स्यतीति वाच्यम् । सूत्रस्यैव प्रत्याख्यानेनेष्टाऽऽपत्तेः । तदविवक्षायाम-प्रवृत्त्यर्थमिति तत्त्वम् । 'ध्रुवं''भयहेतुरि'त्यादिसञ्ज्ञिनिर्देशानां ह्येषैव गतिः । एवमिति । 'उपाध्यायादधीते' इत्यत्र निःसरणपूर्वकशब्दग्रहणमर्थः । 'निःसरन्तं शब्दं गृह्णाती'-त्यर्थः । 'जायते' इत्यत्राऽपि 'ततोऽपक्रामति, यथा वृक्षात्फलमि'ति । लोकप्रसिद्धया-श्रयणे वाऽपायो[2] बोध्यः । लोके हि 'यद्यस्माज्जातं तत्ततो निर्गच्छती'त्युच्यते । स्पष्टञ्चेदं हरदत्तग्रन्थे । 'प्रभवती'त्यत्राऽपि भवनपूर्वकं निःसरणं, निस्सरणपूर्वकं भवनं वाऽर्थः । न च 'ध्रुवमपायेऽपादानमि'तिसूत्रेऽपायशब्देन शक्त्या मुख्याऽपाय-स्यैव प्रतिपादनादत्राऽप्रवृत्तिरिति वाच्यम् । अपायादीनां स्वरितत्वप्रतिज्ञानेन [3]गौणस्याऽपि ग्रहणात् । 'स्वरितेनाऽधिकार' इतिसूत्रस्येदृशाऽर्थपरताया भाष्यकृतैव वर्णितत्वात् । अत एव 'साधकतममि'तिसूत्रे तमपूग्रहणं चरिताऽर्थम् । न च

---

बृहच्छब्दरत्नः

निवेशान्न तदाश्रयस्य कर्मत्वं, विभागजन्यसंयोगस्य धात्वर्थत्वाद्वेत्यन्यत्र विस्तरः । निवृत्तीति ।

---

[1] 'सूत्रेण सिद्धिमाहुः' इति लिखितेषु पाठः ।

[2] 'लोकप्रसिद्धचाश्रयणेनाऽपायो बोध्यः' इति क. पाठः

[3] 'गौणार्थस्याऽपि' इति क. पाठः ।

भीत्रा (१।४।२५)। कथन्तर्हि 'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे' इति रामायणम्। अत्राऽऽहुः—'कस्य संयुगे' इति। न चैवं संयुगस्यैवाऽपादानसञ्ज्ञाऽऽपत्तिः। परयाऽधिकरणसञ्ज्ञया बाधात्। अधिकरणत्वाऽविवक्षायां त्विष्टापत्तेः[1]। अध्ययनादिति। अध्ययनसम्बन्धिनी ग्लानिरित्यर्थः।

जनिकर्त्तुः (१।४।३०)। जननं जनिः = उत्पत्तिः। 'इञ्[2] वपादिभ्य'

## बृहच्छब्दरत्नः

साधकमात्रग्रहणे तु[3] कारकाऽधिकारादेव सिद्धे, साधकग्रहणवैयर्थ्याऽऽपत्त्या ज्ञापकं शिथिलमेवेति वाच्यम्। [4]क्रियाऽन्वयिनोऽसाधकस्य व्यावृत्त्या तस्य चारितार्थ्यात्। योगविभागसम्पादनेन सञ्ज्ञयोः समावेशाऽर्थतया साधकशब्दस्याऽऽवश्यकत्वाच्च। तेन बुद्धिकल्पितस्याऽप्यपायस्य सत्त्वात्सिद्धम्। पूर्वं हि बुद्ध्याऽधर्मं सम्प्राप्य ततो दोषदर्शनान्निवर्त्तते इत्यस्त्यपायः।

अत्राऽऽहुरिति। अत्राऽरुचिबीजन्तु 'बुद्धिकृताऽपादानत्वाऽविवक्षायां षष्ठ्या युक्तत्वेन व्यवहिताऽन्वयो न युक्तः। न चेदृशे विषये षष्ठ्यभावाऽर्थमेव सूत्रवार्त्तिकवचसां प्रवृत्तिरिति वाच्यम्। भाष्यकारीयप्रत्याख्यानविरोधाऽऽपत्तेरि'ति[5]। वस्तुतस्तु लक्षणवाक्ये लक्षणायां मानाऽभावेन, मुख्याऽर्थपुरस्कारेण प्रयोगे षष्ठ्यभावसम्पादनेन वचनानां चारितार्थ्यम्। अनभिधानेन भयादियोगे [6]षष्ठ्यभावमाश्रित्य प्रत्याख्याने चमत्काराऽनापत्तेश्च। अधिकरणादीनां शेषत्वविवक्षया[7] षष्ठ्यनापत्तेश्च। तथा चेयं मुख्याऽर्थपुरस्कारेण प्रयोगे अध्ययने पञ्चमी षष्ठ्यर्थे फलितेति ध्वनयन्नाह—अध्ययनसम्बन्धिनीति। केचित्तु 'परापूर्वको जयतिरसहने वर्त्तते। 'अध्ययनं न सहते' इत्यर्थः। अत एवा'ऽसोढ' इति कर्मनिर्देशः सङ्गच्छते। तथा च कर्मसञ्ज्ञाऽपवादिकेयम्। एवं 'भीत्रार्थानामि'तिसूत्रं हेतुतृतीयाबाधनाऽर्थम्। एतेना'ऽसोढ' इति व्यर्थम्, 'शत्रून् पराजयते' इत्यभिभवाऽर्थकयोगे परत्वेन कर्मसञ्ज्ञासिद्धेरि'त्यपास्तमि'त्याहुः। उत्पत्तिरिति।

## लघुशब्दरत्नः

विश्लेषेत्यर्थः। [8]इष्टापत्तेरिति। 'शेषत्वविवक्षया कस्येति षष्ठी'त्यन्ये। सम्बन्धिनीति।

१ 'त्विष्टापत्तिः' इति मुद्रितेषु पाठः।

२ 'इञ् अजादिभ्यः' इति मुद्रितेषु पाठः। 'इणजादिभ्य' इति जनेर्भावे इण्' इति घ. शोधितः पाठः। 'इञ् वपादिभ्य' इति च. शोधितः पाठः। तत्र 'इञ् वपादिभ्य' इत्येव शोभनः पाठः। अग्रे 'इण्वा' इति भेदेनोक्तेः।

३ तुः क्वाचित्कः।

४ 'क्रियाऽन्वयिनोऽसाधकव्यावृत्त्या' इति क. ख. पाठः।

५ 'विरोधापत्तिरिति' इति ख. पाठः।

६ 'षष्ठ्या अभावम्' इति ख. पाठः।

७ 'विवक्षायाम्' इति वा पाठः।

८ 'इष्टापत्तिरिति' इति मुद्रितेषु पाठः।

इति जनेर्भावे इञ् । 'जनिघसिभ्यामिणि'त्युणादिसूत्रेण इण्वा । जनिवध्योश्च (७।३।३५) इति वृद्धिप्रतिषेधः । तस्याः कर्त्तेति शेषषष्ठ्या समासः । तथा च धात्वन्तरयोगेऽपि भवति–'अङ्गादङ्गात्सम्भवसी'ति यथा । तदेतदाह–जायमानस्येति । एतेन 'इक्श्तिपौ धातुनिर्देशे' इति इका निर्देशोऽयमित्याश्रित्य 'गमहने'त्युपधालोपप्रसङ्गम्, अर्थाऽसङ्गतिं, समासाऽनुपपत्तिञ्चोद्भावयन्तो मीमांसा-वार्त्तिककाराः समाहिता इति भावः । 'इह सूत्रे प्रकृतिग्रहणं हेतुमात्रपरमि'ति वृत्तिकृन्मतम्, 'पुत्रात्प्रमोदो जायते' इत्युदाहरणात् । 'उपादानमात्रपरमि'ति तु भाष्य-कैयटमतम् । तदुभयसाधारणमुदाहरणमाह–ब्रह्मण इति । ब्रह्मा—हिरण्यगर्भः । स च हेतुरेव, न तूपादानम् । किञ्च ब्रह्म—मायाशबलम् । तद्धि सर्वकार्य्योपादानमिति वेदान्तसिद्धान्तः ।

भुवः (१।४।३१) । भवनं भूरिति । सम्पदादित्वाद्भावे क्विप् । पूर्वसूत्रे समासनिर्दिष्टमपि कर्त्तृग्रहणमनुवर्त्तते, स्वरितत्वादित्याह–भूकर्त्त-

---

**बृहच्छब्दरत्नः**

'जनिरुत्पत्तिरुद्भव' इत्यमरः । वृत्तिकृन्मतमिति । अत एव प्रकृतिग्रहणञ्चरितार्थम् । अन्यथा 'ध्रुव'ग्रहणाऽनुवृत्त्यैव प्रत्यासत्त्या, उपादानकारणस्य[1] पूर्वमाकाङ्क्षितत्वेन च तद्ग्रहणसिद्धेर्वैयर्थ्यं स्पष्टमेव । अस्मिन्पक्षे 'यतो वा इमानि भूतानी'त्यादौ सामान्यशब्दोऽप्युपादानविशेषपरः । 'छागो वा मन्त्रवर्णादि'तिषाष्ठन्यायात् । 'अहमेव बहु स्यामि'त्यादौ [2]सामानाधिकरण्यश्रवणात्, स्थितिलयाऽऽधारत्वलिङ्गाच्चेति स्पष्टमुत्तरमीमांसायाम् । कर्त्तृग्रहणमिति । कर्त्तरि क्विपि आश्रयमात्राऽर्थत्वेन 'भवनाऽऽश्रयसम्बन्धिप्रभव' इत्यर्थाऽऽपत्तौ 'हिमवत्सु गङ्गा

---

**लघुशब्दरत्नः**

तज्जन्येत्यर्थः । अर्थाऽसङ्गतिमिति । न हि धातुं प्रति कर्त्तृत्वं, किन्तु तद्वाच्यक्रियां प्रत्येवेत्यर्थः । समासाऽनुपपत्तिः—तृजकाभ्याम् (२।२।१५) इति निषेधात् । उपधालोपप्रसङ्गस्तु गमेरिट् (७।२।५८) इत्यादाविव, 'जनिघसिभ्यामि'त्यादाविव चाऽनुकार्यस्वरूपभङ्गभिया न कृत' इत्यन्ये । 'सौत्रत्वादि'ति परे । भाष्यकैयटेति । इदमेव युक्तम्, प्रकृतिशब्दस्य तत्रैव प्रसिद्धेः । प्रत्याख्यानपरभाष्यसंमतत्वाच्च । किञ्च वृत्तिमते कारके (१।४।२३) इत्यधिकृतस्य कारणसामान्यवाचिनो निर्धारणसप्तम्यन्तस्याऽन्वयोऽसम्भवी । न हि 'कारणानां मध्ये उपादानकारणमि'तिवत् 'कारणानां मध्ये कारणमि'ति सम्भवति ।

---

[1] 'उपादानकरणस्य' इति ख. पाठः ।

[2] 'सामानाधिकरण्याश्रयणात्' इति क. पाठः ।

रिति । प्रभवत्यस्मादिति-प्रभवः । ल्यब्लोप इति । ल्यबन्तस्य [1]गम्यमानाऽर्थत्वादप्रयोगे इत्यर्थः । यतश्चेति । 'यदवधित्वेनाऽऽश्रित्याऽध्वनः, कालस्य वा निर्माणं = परिच्छेदः प्रतिपाद्यते, तत[2]' इत्यर्थः । तेन पञ्चम्यन्ताऽर्थेनाऽर्थद्वारा युक्तान्निर्मीयमाणाऽध्ववाचिनः प्रथमा-सप्तम्यौ स्तः । कालादिति । 'तद्युक्तादि'त्यपेक्ष्यते । प्रपञ्चार्थमिति । न च 'इतरस्त्वन्यनीचयोरि'त्यमरोक्तेर्नीचाऽर्थकस्येदं ग्रहणमिति वाच्यम् । 'अस्मात्तारो, [3]मन्दो वे'त्यादाविव पञ्चमी विभक्ते (२।३।४२) इत्यनेनैव सिद्धत्वात् । यत्तु 'इतर' इति निर्दिश्यमानप्रतियोगिक एव प्रयुज्यते । तद्यथा-'चैत्रः शूरः, इतरः कातर' इति, अतो नाऽयमन्याऽर्थ' इति । तन्मन्दम् । प्रतियोग्याकाङ्क्षाया

---

**बृहच्छब्दरत्नः**

उपलभ्यते' 'हिमवत्सु [4]गङ्गा प्रभवती'त्यादावधिकरणत्वाऽविवक्षायामपादानत्वाऽऽपत्तिः । [5]कर्त्तृग्रहणाऽनुवृत्तौ तु कर्त्तृसञ्ज्ञकस्य ग्रहणान्न दोषः । अत एव भवनपूर्वकनिस्सरणमर्थमाश्रित्य सूत्रं प्रत्याख्यातं भाष्ये । प्रभवतीति । उपलभते । कर्मव्यापारे [6]प्रभवतिर्वर्त्तते ।

सिद्धत्वादिति । 'अन्यारादितरर्त्ते' इतिसूत्रेऽर्थग्रहणमपकृष्यते । तच्च प्रथमाऽतिक्रमे कारणाऽभावात्सर्वत्र 'स्वं रूपमि'त्यस्य बाधे मानाऽभावाच्च, इतरशब्दविषयकविध्यकल्पनेन लाघवाच्चाऽन्यशब्देनैव सम्बध्यते । एतेन 'अतस्प्रत्यये ने'त्युक्त्यैव प्रत्ययग्रहणसामर्थ्यादतसर्थप्रत्यये इत्यर्थे लब्धेऽर्थग्रहणं चिन्त्यप्रयोजनमि'ति

---

**लघुशब्दरत्नः**

भावे किबिति । व्याख्यानात्, जनिसाहचर्याच्चेति भावः । प्रभवतीति । प्रभवनमत्र प्रथमप्रकाशः । सूत्रे भवनमप्येतदेव । अप्रयोग इति । तदन्तशब्दाऽज्ञानेऽपि तदर्थज्ञाने इत्यर्थः । यथा 'प्रविश' 'पिण्डीमि'त्यादौ इग्यणः (१।१।४५) इति सूत्रभाष्योक्तरीत्या वाक्यैकदेशप्रयोगः, तस्यैव च पदस्य वृत्त्या सम्पूर्णवाक्याऽर्थबोधकता, तथा प्रकृतेऽपीति बोध्यम् । एवं 'फलेभ्यो याती'त्यादावपि । अर्थद्वारा युक्तादिति । तदर्थपरिच्छेद्यादित्यर्थः । सिद्धत्वादिति । अन्याऽर्थयोगे तु न तेन सिद्धिः । निर्धारणप्रयोजकीभूतधर्माऽनभिधानात् । परस्पर-

---

[1] 'गम्यमानार्थकत्वात्' इति मुद्रितः पाठः ।
[2] 'तस्मादित्यर्थः' इति मुद्रितेषु पाठः ।
[3] 'मन्द्रो वा' इति मुद्रितः पाठः ।
[4] 'प्रभावयति' इति क. ख. पाठः ।
[5] 'कर्त्तृकरणानुवृत्तौ तु' इति ख. पाठः ।
[6] 'भवतिर्वर्त्तते' इति ख., कौस्तुभे च पाठः ।

उभयत्र तुल्यत्वात् । उदाहृतकोशविरोधाच्च । ऋते कृष्णादिति । कथन्तर्हि 'पुरुषाऽऽराधनमृते' इति । 'प्रमादोऽयमि'त्येके । अन्ये तु 'उभसर्वतसोरि'त्यत्र दृशिग्रहणात् 'चैत्रं यावच्छीतमि'त्यादाविव ऋतेयोगे द्वितीयाऽपि साधुरि'-त्याहुः । युक्तश्चैतत् । 'ऋते द्वितीया चे'ति चान्द्रसूत्रात् । [1]प्रभृतियोग इति । प्रभृत्यर्थैर्योगे इत्यर्थः । तथा च 'कार्त्तिक्याः प्रभृती'ति भाष्यं विवृण्वन्[2]

बृहच्छब्दरत्नः

मन्दोक्तमपास्तम् । अन्याऽर्थयोगे तु नैव प्रवृत्तिः । विरुद्धधर्माऽनभिधानात् । यत्तु 'अन्य' इत्यस्याऽर्थपरत्वे फलाऽभावः । न च विलक्षणादिशब्दयोगे पञ्चमी । त्वदुक्तरीत्या 'पञ्चमी विभक्ते' इत्यनेनैव सिद्धेः । किञ्च अस्याऽन्याऽर्थपरत्वं दुरुपपादम् । भिन्नशब्दयोगे त्वपादाने पञ्चमीत्यनेनैव सिद्धेः । विभागा-ऽनुकूलव्यापारवाचकत्वेन भिद्-धातोः स्मरणादि'ति । तन्न । 'क्तिचूक्तौ चे'ति-क्तप्रत्ययाऽन्तस्याऽन्याऽर्थे रूढस्य ग्रहणाऽर्थमर्थग्रहणस्याऽऽवश्यकत्वात् । अन्याऽर्थ-कैकशब्दादिग्रहणाऽर्थमुक्ताऽर्थस्याऽऽवश्यकत्वाच्च । इतरशब्दस्तु साहचर्येणा-ऽन्याऽर्थ एव गृह्यते इति वृत्त्याद्याशयः ।

विरोधाच्चेति । केचित्तु 'इतरग्रहणमन्याऽर्थप्रयुक्ता पञ्चमी त्वनित्ये'तिज्ञाप-नाऽर्थम् । तेन 'घटः पटो ने'त्यादावन्योन्याऽभावाऽर्थकनञ्योगे पञ्चमी ने'त्याहुः । वस्तुतस्तु [3]लिङ्ग-सङ्ख्या-कारकाऽनन्वयिरूपाऽर्थप्रतिपादकत्वेन, धर्मवाचकत्वेन च नञोऽन्याऽर्थत्वं दुरुपपादम् । केचित्तु 'नञो द्योतकते'तिपक्षे घटादिपदानामेव लक्षणायाः सत्त्वाद्भेदनिबन्धना पञ्चमी ने'त्याहुः । यत्त्वितरग्रहणं लक्षणस्याऽनित्यत्वं ज्ञापयति । तेन सध्र्यङादियोगेऽञ्चूत्तरपदप्रयुक्ता पञ्चमी[4] नेत्याहुः । तन्न । दिक्शब्दसाहचर्येण दिग्वाचकाऽञ्चूत्तरपदस्य ग्रहणात् । दिक्शब्देन तु शब्दग्रहण-सामर्थ्येन 'दिशि दृष्ट' इतिमध्यमपदलोपिसमासाऽऽश्रयणाद्देशादिवाचकस्याऽपि ग्रहणम् । वस्तुतस्त्वञ्चूत्तरपदग्रहणं व्यर्थम् । न च षष्ठीबाधनाऽर्थम् । सामर्थ्यात्, 'प्रत्ययाऽप्रत्यययोरि'तिपरिभाषया च प्रत्यये लब्धे प्रत्ययग्रहणेन श्रूयमाणप्रत्यये एव प्रवृत्तेः । प्रभृतीति । 'प्रभृति'शब्देन धर्ममात्रं, [5]धर्मी वेति द्वैतम् । आद्य-

लघुशब्दरत्नः

प्रतियोगिकभेदस्य परस्परवृत्तित्वेनाऽनिर्धारकत्वात् । तुल्यत्वादिति । तद्वत् 'अन्यः कातर'

[1] 'प्रभृत्यर्थयोगे' इति कौमुद्यां, मनोरमायाञ्च मुद्रितः पाठः ।

[2] 'विवृण्वन् कय्यटः' इति 'कैयट' इति च ङ. छ. पाठः ।

[3] 'कारकान्वयिरूपार्थ' इति ख. पाठः ।

[4] 'पञ्चमीत्याहुः' इति ख. पाठः ।

[5] 'धर्मि वा' इति ख. पाठः ।

कैय्यटः प्रायुङ्क्त-'तत आरभ्येत्यर्थ' इति । **वचनग्रहणादिति** । वचनग्रहण-सामर्थ्यादवधिमात्रं विवक्ष्यते, 'तेन विने'ति विशेषणांशऽस्तु नेति भावः । यद्वा 'मर्यादे'ति शब्द उच्यतेऽस्मिंस्तन्मर्यादावचनम् = 'आङ्मर्यादाभिविध्योरि'ति सूत्रं, तत्र य आङ् दृष्टः स उक्तसञ्ज्ञ' इत्यर्थः । **परि हरेरिति** । 'परेर्वर्जने वा वचनमि'ति वार्त्तिकात्पक्षे द्विर्वचनाऽभावः । **परिरत्रेति** । अत्र = पञ्चमीविधौ । वर्जनाऽर्थेनाऽपेन साहचर्यादिति भावः ।

**प्रतिनिधिप्रतिदाने (च[१])(२।३।११)** । 'अस्मादेव निर्देशादाभ्यां योगे पञ्चमी'त्याहुः । मुख्यस्याऽभावे तत्सदृश उपादीयते स-प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनं-प्रतिदानम् ।

**अकर्त्तरि (२।३।२४)** । पञ्चमी स्यादिति । तृतीयाऽपवादोऽयम् । **शतेनेति** । शतमिह उत्तमर्णाय धार्यमाणत्वादृणम्, तत्प्रयोजको हेतुश्च

---

**बृहच्छब्दरत्नः**

नपुंसकत्वम् । भेदेन सम्बन्धेनाऽन्वये षष्ठ्यपवादिकेयं विभक्तिः । अन्त्ये त्रिलिङ्गत्वम् , यथायथं कारकाऽर्थवृत्तिः, प्रातिपदिकाऽर्थवृत्तिर्वा ।

**अस्मिन्निति** । एवमकेनोरिति सूत्रे[२] आधमर्ण्यशब्दस्याऽर्शआद्यजन्तत्वेन 'आवश्यकाऽऽधमर्ण्ययोरि'ति सूत्रेणाऽऽवश्यकाऽर्थे उत्पन्नस्य णिनेर्योगे निषेध-सिद्धिः । मानञ्चाऽत्र 'अंशं हारी'तिनिर्देश इति तत्रैव निरूपयिष्यामः । **आहुरिति** । अत्राऽरुचिबीजन्तु 'प्रतिनिधि-प्रतिदान-शब्दैकदेश'प्रति'शब्दस्य 'प्रतिनिधिप्रति-दानयोरि'तिसूत्रेण कर्मप्रवचीयसञ्ज्ञायाः सत्त्वादनेनैव पञ्चमी'त्याहुः । **दत्तस्येति** । कृद्योगलक्षणा कर्मणि षष्ठी । यद्यपि दत्तमेव न प्रत्यर्प्यते, किन्तु द्रव्याऽन्तरं,

---

**लघुशब्दरत्नः**

इत्यस्याऽपि वक्तुं शक्यत्वादिति भावः । **कैयट इति** । 'मेरुपृष्ठादारभ्ये'ति पातञ्जलभाष्य-प्रयोगोऽपि बोध्यः । **आरभ्येति** । अवधिमादायेत्यर्थकं तत् । आदि-प्रकाराऽर्थ-प्रभृतिशब्द-योगे तु न पञ्चमी । मानाऽभावादित्यन्यत्र विस्तरः । **विशेषणांशस्तु नेति** । 'तेन विनेति मर्यादा,' 'तेन सहेत्यभिविधिरि'ति वृद्धोक्ताविति भावः ।

**अस्मादेव निर्देशादिति** । यत्तु 'अनेन सूत्रेणैवे'ति । तन्न । एतद्घटकीभूतप्रत्योः प्रतिनिध्याद्यर्थकत्वाऽभावेन कर्मप्रवचनीयत्वाऽभावात् । **उपादीयते इति** । अस्य 'य' इत्यादिः । दत्तस्य=तत्तुल्यमूल्यादेः, प्रतिनिर्यातनं=परावृत्य दानम् ।

**तृतीयेति** । हेतुतृतीयेत्यर्थः ।

---

[१] चकारो लिखितेषु नास्ति ।

[२] 'इतिसूत्रेण' इति ख. पाठः ।

(१।४।५५) इति चकारेण [1]कर्त्तृसञ्ज्ञश्च। योगविभागादिति। एतच्च हेतुमनुष्येभ्यः (४।३।८१) इति सूत्रे हरदत्तग्रन्थे स्पष्टम्। स्त्रियाञ्चेति। 'बाहुलकं प्रकृतेस्तनुदृष्टेरि'ति वार्त्तिकनिर्देशोऽपीह ज्ञापकः।

**पृथग्विना** (२।३।३२)। **समुच्चयार्थमिति**। निपातानामनेकाऽर्थत्वादिति भावः। **पञ्चमीति**। तत्र मण्डूकप्लुत्या पञ्चमी। द्वितीया तु

बृहच्छब्दरत्नः

तथाऽपि तुल्यमूल्यत्वादिना तदेव प्रत्यर्पितमिति प्रतिपत्तिः। वार्त्तिकेति। 'उणादयो बहुलमि'ति सूत्रस्थे'ति शेषः। निपातानामिति। एतेनाऽ'न्यतरस्यामिति सप्तम्येकवचनमि'त्यपास्तम्। अर्थाऽसङ्गतेश्च। तत्रेति। न चाऽनन्तरा द्वितीयैव समुच्चीयतामिति वाच्यम्। पृथक्शब्दस्याऽन्याऽर्थत्वेन तद्योगे पञ्चम्याः क्लृप्तत्वेन सर्वत्र तथैव युक्तत्वात्। विभक्तिद्वयोच्चारणेनैव सिद्धेः, एकविकल्पनस्य वैयर्थ्याऽऽपत्तेश्च। एतेन 'पञ्चम्या एव समुच्चय' इत्यपास्तम्। 'पृथग्विनानानाभिः' 'तृतीये'ति योगद्वयेनैव सिद्धेऽन्यतरस्यांग्रहणस्य वैयर्थ्याऽऽपत्तेश्च ([2]अर्थाऽन्तरविहितविभक्त्यविधिः)। अर्थाऽन्तरविहितविभक्तिविधेयाऽऽकाङ्क्षितविषये सम्बन्धस्य निर्णीतत्वाच्च। अत एव 'करणे च स्तोकाल्पे'तिसूत्रे पञ्चम्याः सम्बन्धस्योक्तरीत्या चकारं विना सुलभत्वेन तत्सामर्थ्यात्सन्निधौ श्रुतत्वात्करणसम्बन्धस्य तृतीयायां क्लृप्तत्वाच्च तृतीया-पञ्चम्योर्लाभः। विभिक्तिद्वयोच्चारणे तु गौरवम्। अत एवैकप्रकरणे समानाऽर्थकाऽनेकशब्दोच्चारणम्। न चैवमेनपेतिसूत्रे पञ्चम्याः सम्बन्धाऽऽपत्तिः। 'प्रत्ययेने'त्यनुवृत्त्या यौगिकाऽर्थाऽऽश्रयणेन 'विधीयमानेन युज्यते' इत्यर्थात्सन्निहितषष्ठ्या एव ग्रहणात्। अत एव प्रत्ययग्रहणञ्चरिताऽर्थम्। 'अतसर्थप्रत्ययेने'ति पृथग्योगकरणसामर्थ्येन षष्ठ्याः सम्बन्धे सिद्धे, षष्ठीग्रहणेनोत्तरत्र सम्बन्धबोधनाच्च। अतसर्थे षष्ठ्याः क्लृप्तत्वेन द्वितीयाया अबाधाय षष्ठ्या एव सम्बन्धस्य न्याय्यत्वाच्च। न चैवम् 'एनपा षष्ठीद्वितीये' इत्येव सूत्र्यतामिति वाच्यम्। अव्यवहितत्वाऽविशेषेण द्वितीयावत् षष्ठ्या अपि समुच्चयाऽऽपत्तेः। एतेन 'पृथग्विनानाने'तिसूत्रेऽन्यतरस्यांग्रहणस्य समुच्चयाऽर्थत्वे न मानमि'त्यपास्तम्। अन्यतरस्यांग्रहणस्य विकल्पाऽर्थत्वे विधेयाऽऽकाङ्क्षाया अभावेन पञ्चम्याः सम्बन्धाऽनापत्तौ, पक्षे षष्ठ्या दुर्वारत्वेनेदृशन्यासाऽकरणे बीजाऽनापत्तेः। 'दूराऽन्तिकार्थे'तिसूत्रे समुच्चयाऽर्थत्वस्याऽऽवश्यकत्वेनैकप्रघट्टकाऽनुरोधेनाऽत्राऽपि तथैवोचितत्वाच्च। [3]किञ्च 'अन्यतरस्यां'ग्रहणस्य विकल्पाऽर्थत्वपक्षे षष्ठी, उत सर्वा

लघुशब्दरत्नः

हरदत्तग्रन्थेति। भाष्ये तु न दृश्यते। इह='अगुणे, स्त्रियाञ्चे'त्यत्र।

[1] 'कर्त्तृसञ्ज्ञा च' इति मुद्रितेषु पाठः।

[2] अयं पाठोऽत्र लेखकप्रमादपतित इति भाति। [3] 'किञ्च' इति क. ख. नास्ति।

संनिहितैव। दूरं दूरात् दूरेण वेति। इह सप्तम्यपि वक्ष्यते। किञ्च दूरान्तिकाऽर्थेभ्यः (२।३।३५) इति सूत्रस्योत्तरत्राऽप्यनुवर्त्तनादधिकरणेऽप्येभ्यो विभक्तिचतुष्टयं बोध्यम्। तथा च प्रयुज्यते—'दूरादावसथान्मूत्रमि'ति। 'आवसथस्य दूरे' इत्यर्थः। असत्त्वेति। सत्त्ववचनत्वञ्च—[1]तद्विशेषकत्वम्। एवञ्च सामानाधिकरण्येन प्रातिपदिकाऽर्थविशेषकं [2]व्युदस्यते। तदाह—दूरः पन्था इति। एतेन 'करणे च स्तोक (२।३।३३) इति सूत्रे करणे किम्,

### बृहच्छब्दरत्नः

विभक्तयः?। आद्येऽन्यतरस्यांग्रहणस्य वैयर्थ्याऽऽपत्तेः। द्वितीये तु 'सर्वा' इत्युक्त्यैव सिद्धौ षष्ठीग्रहणस्याऽपि वैयर्थ्याऽऽपत्तेश्च। उत्तरसूत्रेऽन्यतरसमुच्चयाऽर्थकाऽन्यतरस्यांग्रहणाऽनुवृत्त्यैव पञ्चम्याः सम्बन्धे सिद्धे तृतीयासम्बन्धाऽर्थं चकारः। इहेति। 'दूराऽन्तिकार्थेभ्यो द्वितीया चे'तिसूत्रविषये। तद्विषयश्च प्रातिपदिकाऽर्थमात्र एव। अर्थाऽन्तरस्याऽनिर्देशात्। 'सप्तम्यधिकरणे चे'ति सूत्रेणाऽधिकरणे विधानसामर्थ्यादन्तरङ्गत्वाच्च चकारेण प्रातिपदिकाऽर्थे सप्तमी विधीयते। सा च न सर्वेभ्यः। प्रथमया सह विकल्पाऽपत्तौ गौरवाऽपत्तेः। किन्तु पूर्वसूत्रोपस्थितदूराऽन्तिकाऽर्थेभ्य एव। निरवकाशत्वात् पराऽपि प्रथमा बाध्यते। केचित्तु 'दूराऽन्तिकार्थेभ्यो द्वितीया चे'ति न विधिः। किन्त्वधिकारः। 'दूराऽन्तिकार्थेभ्य' इत्यस्य चकारसामर्थ्यात्, 'द्वितीये'त्याद्यनुवृत्तिसामर्थ्याच्चोभयत्राऽन्वयः। 'प्रातिपदिकाऽर्थे'ति सूत्रे उक्तसूत्रस्याऽनुवृत्त्या प्रातिपदिकाऽर्थे विधिः। तत्र प्रथमया सह न समुच्चयः। मानाऽभावात्। नाऽपि विकल्पः। प्रथमायाश्चारिताथ्यादि'त्याहुः। एतेन 'पूर्वविषये विधेः सावकाशत्वेन परत्वात्प्रथमाया दुर्वारत्वात्, 'प्रातिपदिकार्थमात्रे विधिरयमि'ति मूलग्रन्थो न युक्त' इत्यपास्तम्। 'षष्ठी शेषे' 'करणे च स्तोकाऽल्पे'तिसूत्रे पञ्चमीनिर्देशे कर्त्तव्ये षष्ठीनिर्देशः सम्बन्धविशेषपरिग्रहाऽर्थ इति ध्वनयन्नाह—सत्त्ववचनत्वञ्चेति। न च सर्वत्रैव तदस्त्येवेत्याशङ्क्याऽऽह—एवञ्चेति। शब्देनोपादाने न भवतीति फलितम्।

### लघुशब्दरत्नः

संनिहितैवेति। उभयोः समुच्चयस्तु व्याख्यानादिति बोध्यम्। सप्तम्यपीति। 'प्रातिपदिकाऽर्थमात्रे' इति शेषः। [3]तद्विशेषकत्वमिति। सत्त्ववचनप्रातिपदिकाऽर्थविशेषणत्वमित्यर्थः। दूरान्तिकार्थेभ्यः (२।३।३५) इत्यस्योदाहरणे क्रियाविशेषणत्वेनाऽसत्त्ववाचिता बोध्या। सप्तम्यधिकरणे च (२।३।३६) इत्यत्र अनुवृत्ते तु नाऽस्य सम्बन्धो, व्याख्यानादिति

[1] 'तद्विशेष्यकत्वम्' इति मुद्रितेषु पाठः।
[2] 'विशेष्यकम्' इति मुद्रितेषु पाठः।
[3] 'तद्विशेषकत्वमिति' इति लिखितेषु पाठः। 'तद्विशेष्यकत्वम्' इति मु. पाठः।

क्रियाविशेषणे कर्मणि मा भूत्–स्तोकं [1]चलति, क्रिया न द्रव्यमि'ति प्राचां ग्रन्थोऽपि[2] व्याख्यातः। यत्तु तमनूद्य 'क्रियाया विशेष्यत्वेन द्रव्यत्वाऽवश्यम्भावाच्चिन्त्यमि'त्यूचुस्तदेव चिन्त्यम्। धातुवाच्यायाः क्रियाया [3]असत्त्वरूपत्वस्याऽऽकरे प्रसिद्धत्वात्। न च विशेष्यत्वे तदनुपपत्तिः। कृदभिहितभाववल्लिङ्ग-सङ्ख्याद्ययोगित्वमात्रेण तदुपपत्तेः। यद्यपि 'हतशायिकाः शय्यन्ते' इत्यादौ भाष्ये सङ्ख्याऽन्वयः स्वीकृतः, 'पचति–भवती'त्यादौ [4]कर्तृत्व-कर्मत्वाऽन्वयश्च, तथाऽपि लिङ्गस्य, कारकाऽन्तरस्य चाऽभावो निर्बाध एव। उक्तञ्च–

'क्रिया न युज्यते लिङ्ग-क्रियाऽनाधार-कारकैः।
असत्त्वरूपता तस्या इयमेवाऽवधार्यताम्' ॥ इति।

इति पञ्चमी ॥

(अथ षष्ठी)

राज्ञः पुरुष इति। प्रत्ययाऽर्थस्य प्रकृत्यर्थं प्रति प्राधान्यादप्रधानादेव

---

**बृहच्छब्दरत्नः**

अवधार्यतामिति। तथा च स्तोकादिभ्यः क्रियाविशेषणे पञ्चम्यपि भवतीति भावः।

इति पञ्चमी ॥

---

**लघुशब्दरत्नः**

बोध्यम्। क्रिया न द्रव्यमिति। एवञ्च तत्समानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्याऽद्रव्यवाचित्वमिति भावः। तमनूद्येति। प्राचां ग्रन्थमनूद्येत्यर्थः। तदनुपपत्तिः=असत्वाऽनुपपत्तिः। कृदभिहितभाववदिति। वैधर्म्ये दृष्टान्तः। यद्वा 'पक्त्वा' 'पक्तुमि'त्यादिकृदभिहितभावेत्यर्थः। इत्यादाविति। इदमुपलक्षणं, 'पचती'त्यादावपि कारकगतसङ्ख्यां क्रियायामारोप्य तत्रैव तदन्वयस्य ङ्याप्सूत्रे भाष्ये उक्तत्वात्। भवतीत्यादाविति। 'पश्य मृगो धावती'त्यादिशब्दाऽर्थः। लिङ्गस्येति। तन्निरूपितविशेष्यतायामेव द्रव्यत्वमिति भावः। क्रियाऽनाधारेति। धात्वर्थाऽनाधारेत्यर्थः। करणत्वादिभिरिति यावत्। स्वाऽतिरिक्तपदाऽन्तर-वाच्य-क्रिया-निरूपित-करणत्वादिभिर्न युज्यते इत्यर्थः। इयमेव=लिङ्ग-करणत्वादिभिरसम्बन्धरूपैव। 'असत्त्वरूपते'त्येतदपेक्ष्य स्त्रीलिङ्गनिर्देशः।

इति पञ्चमी ॥

प्रत्ययार्थस्य=सम्बन्धस्य। प्रकृत्यर्थम्=राजाऽर्थम्। प्राधान्यादिति। संसर्ग-

---

[1] 'स्तोकं पचति' इति मुद्रितेषु पाठः। [2] अपिः मुद्रितेषु नास्ति।

[3] 'असत्त्वरूपस्य' इति मुद्रितेषु पाठः।

[4] 'कर्तृकर्मत्वान्वयश्च' इति क्वचिल्लिखिते पाठः।

षष्ठी। तदर्थश्च पुरुषे विशेषणम्। प्रधानात्तु न षष्ठी। उक्तन्यायविरोधात्। शेषत्वाऽभावाच्च। पुरुषशब्दो हि यथायथं प्रातिपदिकाऽर्थमात्रवृत्तिः, कारकाऽर्थको वा। यदा तु नैवं, तदा पुरुषशब्दादपि षष्ठी भवत्येव। यत्तु-'अप्रधानं शेष' इति। तन्न। प्रातिपदिकाऽर्थमात्रे 'शुक्लो घट' इत्यादौ विशेषणे षष्ठी-

बृहच्छब्दरत्नः

([1]प्रधानात्तु नेति)। [2]'राजनिरूपिसेवकत्वसम्बन्धवान्पुरुष' इत्यर्थविवक्षायां प्रधानात्पुरुषशब्दान्न षष्ठी। यदा तु 'पुरुषनिरूपितसेव्यत्वसम्बन्धवान् राजे'-त्यर्थविवक्षा, तदा 'पुरुषस्य राजे'ति भवत्येव। ननु 'घटस्येदं शरीरं' 'शिलापुत्रस्येदं शरीरमि'त्यादौ कारक-प्रातिपदिकाऽर्थव्यतिरिक्तत्वाऽभावेन षष्ठ्यनापत्तिः। शब्दमात्रभेदस्त्वकिञ्चित्करः। अत एव 'कर्तृसञ्ज्ञया कर्मसञ्ज्ञाया बाधात् 'कर्म[3] देवदत्तं गच्छती'त्यस्य वारणेऽपि, 'मनुष्यो देवदत्तं गच्छती'ति दुर्वारमि'त्यपास्तम्। [4]कर्त्रादिसञ्ज्ञानामर्थनिष्ठत्वादिति चेत्। अत्राहुः–घटादिपदानामनेकाऽवस्थाविशिष्टघटादिपरत्वेन शरीरपदस्यैकाऽवस्थाविशिष्टपरत्वेन, बुद्धिकृताऽवयवाऽवयविभावविवक्षया षष्ठ्याः सुलभत्वात्। ध्वनितञ्चेदमाद्यन्तवदेकस्मिन्निति सूत्रे भाष्यादौ। नन्वेवं 'घटे घट' इत्यपि स्यादिति चेन्न। 'न हि निमित्ते सति आरोपः, आरोपे सति निमित्ताऽनुसरणमि'ति न्यायविरोधात्। यत्तु 'राज्ञः पुरुष' इत्यादौ सम्बन्धी षष्ठ्यर्थः। प्रकृतिप्रत्ययाऽर्थयोश्चाऽभेदः संसर्ग' इति। तन्न। 'नाऽगृहीतविशेषणे'तिन्यायेन, लाघवाच्च सम्बन्धे एव शक्तेर्युक्तत्वात्। सम्बन्धिशब्दस्याऽनुयोग्यर्थकत्वेन [5]तदर्थविधीयमानषष्ठ्या अनन्वयाऽऽपत्तेश्च। सम्बन्धस्याऽपि शेषत्वेन सम्बन्धिनि षष्ठीविधायकेनैव सम्बन्धेऽपि षष्ठाविधानात्साधुत्वाऽऽवश्यकत्वे प्रथमोपस्थितत्वेन तस्यैव साधुत्वकल्पनाया उचितत्वाच्च।

लघुशब्दरत्नः

विशेष्यो-भयनिरूपितत्वस्य प्रकारतायां स्वीकारादिति भावः। तदर्थश्च=प्रकृत्यर्थश्च। विशेषणम्। षष्ठ्यर्थसम्बन्धेनेति भावः। यत्तु 'तदर्थशब्देन प्रत्ययाऽर्थः सम्बन्ध' इति। तन्न। तस्य संसर्गविधयैव भानस्य भाष्यादिसंमतत्वात्। उक्तन्यायेति। प्रकृत्यर्थस्यैव प्रत्ययाऽर्थं प्रति प्राधान्याऽऽपत्तेरित्यर्थः। 'राजसम्बन्धी पुरुष' इत्येव बोधादिति भावः। शेषत्वाऽभावमुपपादयति—पुरुषशब्द इति।

[1] अयं पाठः खण्डित इति प्रतिभाति।
[2] 'राजनिरूपिते'त्यादिः' 'भवत्येव'इत्यन्तोऽयं पाठः 'षष्ठी शेषे' इत्यतः पूर्वम् 'इत्यपास्तम्' इत्यतोऽग्रे क. ख. पतितः। स च यथास्थानमस्माभिः स्थापितः।
[3] 'देवदत्तो यज्ञदत्तं गच्छति' इति क. पाठः। इति ख. पाठः।
[4] 'कर्मादि' इति ख. पाठः।
[5] 'तदर्थविद्यमान' इति क. ख. पाठः।

**प्रसङ्गात्।** न च प्रथमया बाधः। तस्याः प्राधान्ये चरिताऽर्थत्वात्। **कर्मादीनामपीति।** यथा विशेषाऽविवक्षायां 'रूपवानि'ति, तद्विवक्षायान्तु 'नोलः' 'पीत' इत्यादि प्रयुज्यते, तथेदमपि न्यायसिद्धमिति भावः।

**सतामिति।** एवञ्च 'नपुंसके भावे क्तस्य योगे, [1]शेषत्वविवक्षायाञ्चे'ति, 'तृप्त्यर्थानां करणे [2]षष्ठी चे'ति च प्राचां ग्रन्थे पठ्यमानं नाऽपूर्वं वचनमिति भावः। **सर्पिष इति।** ज्ञोऽविदर्थस्य करणे (२।३।५१), अधीगर्थदयेशां कर्मणि, (२।३।५२) कृञः प्रतियत्ने, (२।३।५३) रुजार्थानां भाववचनानाम-ज्वरेः (२।३।५४) आशिषि नाथः, (२।३।५५) जासिनिप्रहणनाटक्राथपिषां हिंसायाम्, (२।३।५६) व्यवहृपणोः समर्थयोः, (२।३।५७) कृत्वोऽर्थप्रयोगे कालेऽधिकरणे (२।३।६४) इत्यष्टसूत्री तु नेह व्याख्याता। तस्याः समास-

---

**बृहच्छब्दरत्नः**

षष्ठ्यर्थसम्बन्धिन इतरत्राऽन्वयाऽर्थं सम्बन्धस्याऽऽवश्यकत्वेन तत्रैव षष्ठ्या विधातुं युक्तत्वाच्च। अत एव बोधाऽऽवृत्तिर्नेति वदन्ति।

**तथेदमिति।** 'प्रकृत्यर्थस्य विभक्त्यर्थेऽन्वयः, तस्य च धात्वर्थे, तदा द्वितीयादिकं, यदा तु प्रकृत्यर्थस्यैव धात्वर्थे तेनैव सम्बन्धेनाऽन्वयस्तदा षष्ठी'त्याहुः। अपरे तु 'करणत्वादिनिष्ठः सम्बन्धसामान्यरूपः षष्ठ्यर्थः। लाघवात्। अत एव 'राज्ञ' इत्युक्तेऽनेकसम्बन्धानां प्रतीतेरनुभवसिद्धत्वात्। प्रकरणादिपर्यालोचनया परं निर्णयः। ध्वनितञ्चेदं 'षष्ठी स्थानेयोगे'त्यादौ भाष्ये। तथा च विशेषविवक्षायां तृतीयादिकम्, सामान्यविवक्षायां षष्ठी'त्याहुः।

**ज्ञोऽविदर्थस्येति।** 'अविदर्थस्ये'तिच्छेदः। अन्यथाऽसन्देहाऽर्थं 'विदर्थस्य ज्ञः करणे' इत्येव सूत्रितं स्यात्। **सर्पिषो ज्ञानम्।** सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः। ज्ञानपूर्विकायां प्रवृत्तौ, केवलप्रवृत्तौ वा जानातेर्लक्षणा। **रुजार्थानामिति।** 'भाव-वचनानामि'त्यत्र कर्त्तरि ल्युट्। प्रकृत्यर्थोऽविवक्षितः। तथा च 'भावकर्तृकाणा-मि'ति फलितम्। अत एव 'भाववचनानामि'त्यस्य चारिताथ्यम्। अन्यथा 'रुजार्थानामि'त्यस्य 'नाशाऽर्थानामि'त्यर्थे, 'रोगाऽर्थानामि'त्यर्थे वा धातोर्भाव-वाचकत्वाऽव्यभिचारेण वैयर्थ्यं स्पष्टमेव। **नेह व्याख्यातेति।** 'तिङन्तोदाहरण-

---

**लघुशब्दरत्नः**

**इदमपि**=कर्मादीनां सम्बन्धसामान्येनाऽन्वयविवक्षणमपि।

**नापूर्वमिति।** षष्ठी शेषे(२।३।५०)इति सूत्रेण सिद्धत्वादिति भावः। **अष्टसूत्रीति।**

---

[1] 'शेषविवक्षायाम्' इति ङ. छ. पाठः।

[2] 'षष्ठी वेति' इति ङ. पाठः।

निवृत्तिफलकत्वात् । तथा हि—तत्र 'शेषे' इत्यनुवर्त्तते । शेषत्वेन विवक्षिते च करणादौ षष्ठी सिद्धैव । तदयमर्थः—'इह षष्ठ्येव, न तु तल्लुक्' । तथा च लुकः प्रयोजकीभूतः समास एव नेति । तथा च वार्त्तिकम्—'प्रतिपदविधाना चे'त्यादि[1] । हरिश्चाऽऽह—

'कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये' ॥ इति ।

तेन शेषत्वविवक्षायां 'सर्पिषो ज्ञानं' 'मातुः स्मरणमि'त्यादीन्यसमस्तान्येव साधूनि । 'हरिस्मरणमि'त्यादीनि तु शेषत्वाऽविवक्षायां कृद्योगषष्ठ्या

### बृहच्छब्दरत्नः

परतये'ति शेषः । अत एवाऽऽह—तस्या इति । अनुवर्त्तते इति । अत एव शेषे षष्ठीतिसूत्रे 'शेष'ग्रहणञ्चरिताऽर्थम् । 'षष्ठी चाऽन्यच्च यत्र प्राप्नोति, तत्र षष्ठ्येवे'ति नियमेनेष्टसिद्धेः । ध्वनितञ्चेदमधीगर्थदयेशामितिसूत्रे भाष्ये । अत एव कृद्योगेऽधीगर्थे'त्यादीनामनुवादकता नेति ध्येयम् । ननु लक्षणद्वयबाधे मानाऽभावेन लुक एव बाधः स्यान्न समासस्येत्याशङ्कां निवारयन्नाह—तथा चेति । 'षष्ठी'पदाऽऽवृत्त्या नियमद्वयमिति भावः । तथा च समासाऽभावाऽर्थे 'प्रतिपदविधाना चे'ति वचनस्य वाचनिकताऽऽपत्तिः । तस्मिंश्चाऽऽरब्धे [2]लुकः प्राप्त्यभावेन प्रकरणवैयर्थ्यं स्पष्टमेव । समासस्य निवृत्तय इति । न चैवं षष्ठीसमासनिषेधप्रकरणे एवाऽष्टसूत्री पठ्यतामिति वाच्यम् । करणादौ षष्ठ्यसम्भवेनाऽनन्वयाऽऽपत्तेः । करणाद्यर्थ एव षष्ठीकल्पनाऽऽपत्तेश्च । 'अधीगर्थे'त्यादीनां कृद्योगे कर्माऽर्थकषष्ठ्यामेव प्रवृत्त्यापत्तेश्च । 'कर्मणी'त्यस्योत्तराऽर्थमावश्यकत्वाच्च ।

### लघुशब्दरत्नः

'कृत्वोर्थे'ति सूत्रं [3]वृत्तिरीत्या धृतम् । वस्तुतस्तत्र शेषग्रहणं नाऽनुवर्त्तते । मध्ये विच्छेदादि'त्यन्ये । तेषां सप्तसूत्रीति बोध्यम् । अनुवर्त्तत इति । अत एव 'अधीगर्थे'ति सूत्रे 'शेष इति वर्त्तते' इति भाष्ये उक्तम् । ननु तद्बलाल्लुगभावोऽस्तु, समासाऽभावः कुत इत्यत आह—तथा चेति । 'प्रतिपदविधाना षष्ठी न समस्यते' इति वार्त्तिकबलात्तथा कल्पनेति भावः । वस्तुतो निषेधवार्त्तिकेऽनुवादायेमानि सूत्राणीति बोध्यम् । स्मरणमिति । करणे ल्युट् । कृद्योगषष्ठ्येति । अत एव समासनिषेधप्रकरणे एतानि नोक्तानि । तथा सति कर्माद्यर्थकषष्ठ्यामपि समासनिषेधाऽऽपत्तेः । दिवस्तदर्थस्य (२।३।५८) इत्यत्र 'कर्मणी'त्यस्य कर्त्तव्यता-

[1] 'प्रतिपदविधाना षष्ठी नेत्यादि' इति मुद्रितेषु पाठः ।
[2] अत्र 'लुक्प्राप्त्यभावेन' इत्यादिः पाठः सम्भवति ।
[3] 'वृत्तिरीत्योद्धृतम्' इति पाठान्तरम् ।

समासे बोध्यानि । तत्र च कारकपूर्वकत्वात्कृदुत्तरपदप्रकृतिस्वरः । शेषषष्ठ्या समासे त्वन्तोदात्तत्वं स्यात् । तच्चाऽनिष्टम् । तथा च स्वराऽर्थेयमष्टस्त्रीति परमनिष्कर्षः । किञ्च 'मातुः स्मृतमि'त्यादौ समासाऽभावोऽपि फलम् । न हि तत्र कारकषष्ठी लभ्यते । 'न लोक (२।३।६९) इति निषेधात् । आह च—

'निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते ।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते' ॥ इति ।

एवं स्थिते वृत्त्यादिबहुग्रन्थेष्विह प्रकरणे उदाहरणं, प्रत्युदाहरणं च [1]यद्यतिङन्तं दृश्यते, तत्सर्वमुपलक्षणतया नेयमिति हरदत्तादयः ।

**सर्वनाम्नस्तृतीया च (२।३।२७)** । इह 'सर्वनाम्न' इति षष्ठी ।

---

बृहच्छब्दरत्नः

'तदर्थस्ये'त्यत्रेष्टाऽर्थाऽनापत्तेश्च । प्रकृतिस्वरेति । 'स्मरणमि'ति करणे ल्युट् । अत एवा'ऽनो भावकर्मवचन' इत्यस्य न प्रवृत्तिः । अकारप्रश्लेषपक्षेऽभाव एव । स्मृतमिति । 'आदिकर्मणि क्तः कर्त्तरि चे'तिसूत्रेण कर्त्तरि क्तो, न कर्मणि । कर्मण उक्तत्वाऽऽपत्तेः । भावे तु न । सकर्मकत्वात् । तद्योगे शेषविवक्षैवेति भाष्यादौ सिद्धान्तितत्वाच्च ।

समासाभावोऽपीति । एवं 'सर्पिषो जानीतेकल्पमि'त्यादावपि बोध्यम् । 'क्रथ हिंसायामि'ति घटादौ पठ्यते, तस्येह निपातनाद् वृद्धिः । 'चिण्णमुलोरि'त्यनेन हि निपातनं बाधित्वा परत्वाद्दीर्घविकल्पः । 'क्राथे'तिविकृतनिर्देशा'त्संनियोगशिष्ट'न्यायेन दीर्घविषये एव शेषलक्षणा षष्ठी, तत्रैव समासाऽभावः । तेन 'चोराऽक्रथि-कल्पमि'त्यादौ 'चिण्णमुलोरि'तिसूत्रविषये कर्मत्वाऽविवक्षायां षष्ठीसमासो भवत्येवेत्याहुः । 'का पुनः षष्ठी प्रतिपदविधाना, का च कृद्योगे'ति

---

लघुशब्दरत्नः

ऽऽपत्तेश्च । ननु शेषत्वाऽविवक्षायां कृद्योगषष्ठ्या वैकल्पिकसमासाऽङ्गीकारे अधीगर्थ (२।३।५२) इत्यादीनां वैयर्थ्यमेवेत्यत आह—तत्र चेति । करणल्युडन्तस्मरणादिशब्दैः कृद्योगषष्ठ्या समासे अनो भावकर्मवचनः (६।२।१५०) इत्यस्याऽप्राप्तिरिति भावः । मातुः स्मृतमिति । आदिकर्मणि कर्त्तर्यत्र क्तः । 'प्र'शब्दं विनाऽपि अनुदात्तादौ आदिकर्मबोधवदत्राऽपि प्रकरणादिना तद्बोधसम्भवः । एतेन 'अत्र कर्मणि क्ते कर्मण उक्तत्वादधीगर्थ (२।३।५२) इत्यस्य विषय एव न । भावे तु क्तो दुर्लभः । सकर्मकत्वात् । गत्याद्यर्थकत्वाऽभावाच्च कर्त्तरि स दुर्लभ' इत्यपास्तम् । कर्मणः शेषत्वेन विवक्षायामविवक्षितकर्मत्वेनाऽकर्मकतया[2] भावे क्तस्य सुलभत्वाच्च । षष्ठी चेति । चस्त्वर्थे । एवञ्च तत्र समासाऽभावोऽपि फलमिति भावः ।

---

[1] 'यद्यत्तिङन्तम्' इति लिखितेषु पाठः ।

[2] अकर्मकतया' इति लिखितेषु नास्ति ।

**तदाह—सर्वनाम्नः प्रयोगे इति। पञ्चम्यान्तु हेतुशब्दात् षष्ठी-तृतीये न स्यातामिति भावः। 'निमित्तपर्याये'ति पर्यायग्रहणस्य फलमुदाहरति—एवमित्यादिना। प्राचा तु 'किमर्थमि'त्युदाहृतम्। तत्र किमः क्लीबत्वं दुर्लभम्। सामान्ये नपुंसकतां, समासं वाऽऽश्रित्य कथञ्चिद्वा नेयम्। असर्वनाम्न इति। 'निमित्त-कारण-हेतुषु सर्वासां प्रायदर्शनमि'ति वार्त्तिकं हि वृत्तिकारेण यद्यपीहोक्तं, तथाऽपि भाष्यकृता हेतौ (२।३।२३) इत्यत्र**

---

**बृहच्छब्दरत्नः**

संशयपरं भाष्यं 'क्वचिदुदाहरणविषये कृद्योगोऽस्ती'त्यभिप्रायेण व्याख्येयम्। हरदत्तादय इति। अत्राऽरुचिबीजन्तु सप्तसूत्र्याः समासनिवारकत्वेऽपि 'कृत्वोऽर्थ-प्रयोगे कालेऽधिकरणे' इत्यस्य तन्निवारकत्वे मानाऽभावः। अधिकरणकारके एव षष्ठ्या विधानेन चारितार्थ्यात्। 'शेषे' इत्यस्य विच्छिन्नत्वाच्च। अत एव 'अधीगर्थे'तिसूत्रात्पूर्वं न पठितम्। नचोभयप्राप्ताविति सूत्रे 'प्रयोगे' इत्यनुवृत्त्यर्थं तथा पाठ इति वाच्यम्। मदुक्तन्यासेऽप्यनुवृत्तेः सुलभत्वात्। न च मध्ये सम्बन्धा-ऽभावेन मण्डूकाऽनुवृत्त्यापत्तिः। यथान्यासे 'शेषे' इतिसम्बन्धाऽर्थं मण्डूकाऽनु-वृत्तेरावश्यकत्वात्। 'प्रयोगे' इत्यस्य [1]मध्येऽसम्बन्धाऽर्थं [2]तव मतेऽत्रापि तां विनाऽनिर्वाहाच्च। [3]मध्ये सम्बन्धेनाऽन्वय' इति चेत्तर्हि मन्मते न दोषः। न च 'कृद्योगा षष्ठी समस्यते' 'प्रतिपदविधाना षष्ठी न समस्यते' इत्युक्त्वा, 'सर्वा प्रतिपदविधाना षष्ठी, शेषलक्षणां वर्जयित्वे'ति भाष्यात् 'शेषे षष्ठी'तिलक्षणभिन्न-लक्षणविहितषष्ठ्यां समासाऽभावस्य बोधितत्वेनाऽत्र शेषसम्बन्ध आवश्यक इति वाच्यम्। 'दिवस्तदर्थस्ये'त्यादौ शेषपदाऽसम्बन्धस्य भाष्यादिसंमतत्वेनोक्त-भाष्यस्योपलक्षणपरतया व्याख्यानात्।

कारणेति। कारण-हेतुपदयोः पाठस्तूपलक्षणाऽर्थः। अत एव 'हेतु'पदस्य घ्यन्तस्याऽल्पाऽच्तरत्वेऽपि न पूर्वनिपातः। अर्थपरत्वविवक्षया सर्वसंग्रहेण तस्यैवाऽभ्यर्हितत्वादित्याहुः। हेताविव्यत्रेति। सर्वनामसञ्ज्ञासूत्रशेषस्थभाष्यन्तु

---

**लघुशब्दरत्नः**

**दुर्लभमिति। अर्थशब्दस्य द्वितीयाऽन्तत्वे तु 'कमर्थमि'त्युचितम्। प्रथमाऽन्तत्वे-ऽर्थशब्दस्य पुंस्त्वान्नपुंसकत्वं दुर्लभमिति भावः। कथं चिदिति। आद्ये क्लिष्टम्, अन्त्ये लक्षणा-ऽभावोऽर्थाऽसङ्गतिश्च। 'कोऽर्थः किमर्थमि'ति [4]समासे सामान्ये नपुंसकत्वाऽऽश्रयणञ्चेति भावः।**

---

[1] 'मध्ये सम्बन्धार्थम्' इति ख. पाठः।

[2] 'तव मते इव अत्रापि' इति वा पाठः। 'विना निर्वाहाच्च' इति क. पाठः।

[3] 'मध्ये सम्बन्धेन अन्वयः' इति क. पाठः।

[4] 'समासे' इति क. च. नास्ति।

पठितम्। तेन सर्वनामाऽप्रयोगेऽपि प्रवर्त्तते। किन्तु प्राय-ग्रहणात्तत्र तृतीयादय एवेत्यर्थः। वर्द्धमानस्तु प्रथमामपीच्छति।

**षष्ठ्यतसर्थप्रत्ययेन** (२।३।३०)। **पञ्चम्या इति।** कथन्तर्हि 'ततः पश्चादि'ति। 'ततः पश्चात्स्रंस्यते ध्वंस्यते चे'ति भाष्यप्रयोगात्पश्चाद्योगे पञ्चम्यपि। प्रत्ययग्रहणं चिन्त्यप्रयोजनम्।

**एनपा** (२।३।३१)। कथन्तर्हि 'तत्राऽगारं धनपतिगृहादुत्तरेणाऽस्मदीयमि'ति। 'उत्तरेणे'ति तृतीयान्तं, 'तोरणेने'त्यनेन समानाधिकरणं बोध्यम्।

**दूरान्तिकार्थैः** (२।३।३४)। अन्यतरस्याम्ग्रहणं समुच्चयाऽर्थम्। तेन च

---

बृहच्छब्दरत्न

पूर्वाऽपरविरोधात्, प्रयोजनोपलक्षणतात्पर्यस्य स्पष्टतया लाभाच्च, वचनस्याऽव्यापकत्वाऽऽपत्तेश्चोपेक्ष्यम्। 'दूराऽन्तिकाऽर्थैरि'तिसूत्रेऽन्यतरस्यांग्रहणस्य विकल्पाऽर्थत्वे षष्ठ्यभावे सर्वासां विभक्तीनां फलितत्वेन,[१] पृथक्करणाद् 'दूराऽन्तिकाऽर्थे सर्वा' इति न्यासेनेष्टसिद्धौ वैयर्थ्याऽऽपत्तेः। न च 'दूराऽन्तिकाऽर्थेभ्यो द्वितीया चे'त्यत्राऽनुवृत्त्यर्थमिति वाच्यम्। तत्रैव कर्त्तुं युक्तत्वात्। विकल्पाऽर्थत्वपक्षे तु विधेयाऽन्तराऽभावेन पञ्चम्या असम्बन्धाऽऽपत्तेः। प्रथमाया अप्यापत्तेः। 'पृथग्विने'तिसूत्रे समुच्चयाऽर्थतायाः स्थापितत्वेनैकप्रघट्टकाऽनुरोधेनाऽत्राऽपि तथैवोचितत्वाच्चेत्याशयेनाऽऽह—समुच्चयार्थमिति। 'सूत्रद्वये' इति शेषः।

दूरान्तिकार्थैः। 'दूराऽन्तिकाऽर्थेभ्य' इतियोगविभागेन विधेयाऽऽकाङ्क्षायां पञ्चम्याः सम्बन्धे सिद्धे अन्यतरस्याङ्ग्रहणं विभक्त्यन्तरसहितपञ्चमीसमुच्चयाऽर्थम्। विभक्त्यन्तरञ्च 'दूराऽन्तिकाऽर्थैः[२] षष्ठी'तिसूत्रे द्वितीया। तस्याः पूर्वसूत्रे-

---

लघुशब्दरत्नः

तेनेति। यत्तु सर्वनामसूत्रशेषे भाष्यं—'भवतः सर्वनामत्वे तृतीया प्रयोजनं—'सर्वनाम्नस्तृतीया च (२।३।२७) इति। तत्तु यथाश्रुतसूत्रमते। अत एव सूत्रोपन्यासः। न तु तद्बलादिदं सर्वनामविषयम्। कैयटादिविरोधात्। हेतौ (२।३।२३) इत्यत्रोपन्यासस्य निर्बीजत्वाऽऽपत्तेश्चेति बोद्धव्यम्।

पञ्चम्यपीति। 'अत्र सार्वविभक्तिकः षष्ठ्यन्तात्तसिरि'त्यन्ये। चिन्त्यप्रयोजनमिति। इदमत्रैव सूत्रे भाष्ये स्पष्टम्। समानाधिकरणं बोध्यमिति। 'स्त्र्यधिकारात्परेण वाऽसरूपविधिर्ने'त्यत्र 'परेणे'ति तृतीया। 'ततः परेण शास्त्रेण वाऽसरूपसम्बन्धो ने'त्यर्थः। 'ततः परेण नाऽयमनुवर्त्तते' इत्यत्र सार्वविभक्तिकः षष्ठ्यन्तात्तसिरिति बोध्यम्।

---

[१] 'ष्टकरणात्' इति क. पाठः।

[२] 'दूरान्तिकार्थैः' इति ख. नास्ति।

विप्रकृष्टाऽपि पञ्चमी समुच्चीयते। व्याख्यानात्। न तु षष्ठी-द्वितीया-तृतीयाः। तदेतदाह—पञ्चमी चेति।

दिवस्तदर्थस्य (२।३।५८)। तच्छब्देन व्यवहृ-पणौ परामृश्येते। तौ च द्यूते, क्रय-विक्रयव्यवहारे च तुल्याऽर्थौ पूर्वसूत्रे गृहीतावित्याशयेनाऽऽह—द्यूते इति। कर्मणीति। इह 'शेषे' इति न सम्बध्यते।

---

**बृहच्छब्दरत्नः**

ऽन्यतरस्यांग्रहणेन समुच्चयस्य क्लृप्तत्वात्। अनन्तरत्वात्तृतीया[1]। 'दूराऽन्तिकाऽर्थेभ्य' इति सूत्रे त्वनन्तरत्वात्षष्ठ्येव। तन्नेति ध्वनयन्नाह—न त्वित्यादि। अयं ग्रन्थः[2] अनेकविधिकल्पः। एतेन 'षष्ठ्याः सूत्रोपात्तत्वेन 'न तु षष्ठी'ति ग्रन्थो न युक्त' इति मन्दप्रतारणमपास्तम्। अन्यविषयतया षष्ठीपदस्य सत्त्वात् 'मूलग्रन्थो न युक्त' इति मन्दोक्तमपास्तम्। 'असत्त्ववचनस्ये'त्येतत्सम्बद्ध[3]-तृतीयाया उपस्थितेः, अस्मिन्प्रकरणे, 'करणे च स्तोकाऽल्पे'ति सूत्रे चकारेण तृतीयायाः समुच्चयस्य दृष्टत्वाच्च 'दूराऽन्तिकाऽर्थेभ्यो द्वितीया चे'तिसूत्रे चकारेण तृतीयाया एव समुच्चय इत्यलम्। यत्तु 'दिवस्तदर्थस्ये'तिसूत्रे 'शेषे' इति सम्बध्यते, असम्बन्धे मानाऽभावात्। विच्छिन्नत्वेन 'कृत्वोऽर्थप्रयोगे काले' [4]इत्यत्राऽनुवृत्त्यनापत्तेश्च। न चैवं दिवेः पूर्वसूत्रे एव पाठे 'तदर्थस्ये'ति व्यर्थमिति वाच्यम्। योगविभागस्योत्तराऽर्थत्वात्। तन्नेति ध्वनयन्नाह—इहेति। अत्र 'शेषे' इति सम्बन्धे 'विभाषोपसर्गे' इति सूत्रे 'शेषे' इति सम्बध्यते, उत न ?। आद्ये सोपसर्गदिवेः कर्मणि शेषषष्ठ्या वैकल्पिकतया विधाने, पक्षे 'दिवस्तदर्थस्ये'ति सूत्रं प्रवर्त्तते, उत 'शेषे षष्ठी'ति सूत्रम् ?। तत्र पक्षद्वयेऽपि [5]सूत्रवैयर्थ्यम्। समासा-

---

**लघुशब्दरत्नः**

समुच्चीयत इति। अतः षष्ठी-पञ्चम्योरेवाऽत्र विधानमित्यर्थः। न तु षष्ठीति। 'विधीयन्ते' इति शेषः। षष्ठी-द्वितीया-तृतीया अत्र न विधीयन्ते इत्यर्थः। तत्राऽऽद्योपात्ता, अन्त्ये समुच्चेये इति बोध्यम्। समुदायविधानाऽभावे तात्पर्यम्।

उत्तरसूत्रद्वयेति। अयं भावः—अत्र 'शेषे' इत्यस्य सम्बन्धे विभाषोपसर्गे (२।३।५९) इत्यत्र 'शेषे' इति सम्बध्यते, उत न ?। नाऽऽद्यः। दिवस्तदर्थस्य (२।३।५८) इत्यनेनैव समासाऽभावस्य सिद्धत्वेन सूत्रवैयर्थ्याऽऽपत्तेः। न च पक्षे षष्ठी शेषे (२।३।५०) इत्यस्य प्रवृत्त्या पक्षे समासप्रवृत्तिः फलम्। 'नोपसर्गे' इति न्यासेन दिवः (२।३।५८)

---

[1] 'तृतीयादि' इति क. पाठ.।

[2] 'अयम्भावः' इति क. ख. पाठः।

[3] 'एतत्सम्बन्ध' इति ख. पाठः।

[4] 'इत्यनुवृत्त्यनापत्तेश्च' इति ख. पाठः।

[5] 'सूत्र' इति ख. नास्ति।

उत्तरसूत्रद्वयाऽऽरम्भादिति भावः। अत[1] एव हि त्रिसूत्र्यां तिङन्तमुदाहरति—शतस्य दीव्यतीति।

**प्रेष्यब्रुवोः** (२।३।६१)। इष्यतेर्दैवादिकस्य गत्यर्थस्य लोण्मध्यमपुरुषैकवचनं—'प्रेष्ये'ति। तत्साहचर्याद् ब्रुविरपि तथाभूत एव गृह्यते। अत

---

बृहच्छब्दरत्नः

ऽभावस्य 'दिवस्तदर्थस्ये'त्यनेनैव सिद्धत्वात्। 'शेषे षष्ठी'ति षष्ठ्यां समासविकल्पेनैव रूपद्वयस्य सिद्धत्वाच्च। अन्त्ये 'द्वितीया ब्राह्मणे' इति सूत्रं सोपसर्गे प्रवर्त्तते, उत निरुपसर्गे ?। तत्राऽऽद्यो न। 'विभाषोपसर्गे' इति सूत्रेण कर्मणि द्वितीयायाः सिद्धत्वाद्वेदे रूपाऽन्तरस्याऽनापाद्यत्वाद् 'द्वितीया ब्राह्मणे' इतिसूत्रस्य वैयर्थ्याऽऽपत्तेः। द्वितीयेऽपि कर्मत्वविवक्षायां 'दिवस्तदर्थस्ये'तिसूत्राऽप्रवृत्त्या 'कर्मणि द्वितीये'त्यनेनैव सिद्धत्वात्सूत्रवैयर्थ्यं स्पष्टमेव। 'द्वितीया ब्राह्मणे' इति सूत्रन्तु क्वचित न प्रवर्त्तते। लक्ष्याऽभावात्। न च 'द्वितीया ब्राह्मणे' इतिसूत्रे 'शेषे' इत्यनुवर्त्तनात्कर्मत्वाऽविवक्षायां द्वितीयाविधानाऽर्थं सूत्रमस्त्विति वाच्यम्। विच्छिन्नत्वेनाऽनुवृत्तेर्वक्तुमशक्यत्वात्। ध्वनितञ्चेदं भाष्य-कैयटयोः। तत्सर्वं हृदि निधायाऽऽह—उत्तरेति। त्रिसूत्र्यामिति। चरमसूत्रस्य तु वैदिक्यामुपन्यासः।

---

लघुशब्दरत्नः

इत्यस्य निषेधे [2]शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धतया, विभाषाग्रहणस्य तथाऽपि वैयर्थ्यात्। नाऽन्त्यः। वेदेऽपि विभाषोपसर्गे (२।३।५९) इति सूत्रेण कर्मणि द्वितीयायाः सिद्धत्वादापाद्यरूपस्य तत्राऽभावाच्च द्वितीया ब्राह्मणे (२।३।६०) इत्यस्य वैयर्थ्याऽऽपत्तेः। न च तन्निरुपसर्गे द्वितीयाऽर्थमिति वाच्यम्। कर्मत्वविवक्षायां दिवः (२।३।५८) इत्यस्याऽप्रवृत्त्या [3]कर्मणि द्वितीया (२।३।२) इत्येव सिद्धत्वेन वैयर्थ्यस्य तदवस्थत्वात्। न च द्वितीया ब्राह्मणे (२।३।६०) इति सूत्रे 'शेषे' इत्यनुवर्त्तते, तेन कर्मत्वाऽविवक्षायां द्वितीयाऽर्थमिति वाच्यम्। विच्छिन्नत्वेनाऽनुवृत्तेरयुक्तत्वात्। वक्ष्यमाणोदाहरणे कर्मत्वस्यैव प्रतीतेश्च। क्वचित त्विदं न प्रवर्त्तते इति 'पुनर्विधानं समासाऽभावाये'त्यपि न वाच्यम्। अत एव द्वितीया ब्राह्मणे (२।३।६०) इति सूत्रे भाष्यम्—'किमुदाहरणम् ?। 'गां प्रतिदीव्यन्ति'। पूर्वेणाऽप्येतत्सिद्धम्। इदन्तर्हि—'गामस्य तदहः सभायां दीव्येयुरि'ति। 'दिवस्तदर्थस्य (२।३।५८) इति नित्यं षष्ठी प्राप्नोती'ति कैयटश्चे'ति।

त्रिसूत्र्यामिति। तृतीयस्य वैदिक्यामुपन्यासो द्रष्टव्यः।

---

[1] 'अत एव इह' इति च. मुद्रितेषु च पाठः।

[2] 'शेषषष्ठ्याः' इति च. पाठः। 'षष्ठ्याम्' इति क. पाठः। 'शेष'पदन्तु क. नास्ति।

[3] 'कर्मणि द्वितीययैव' इति क. घ. च. पाठः।

एवेह शेषग्रहणं न सम्बध्यते। तिङन्तेन सह समासस्याऽप्रसक्तत्वात्।

कर्त्तृकर्मणोः कृति (२।३।६५)। गुणेति। तदुक्तम्—

'प्रधाने नियता षष्ठी, गुणे तूभयथा भवेत्'। इति।

कृतपूर्वीति। 'कृतं पूर्वमनेने'ति विग्रहः। [1]'पूर्वं कृतवानि'त्यर्थः।

**बृहच्छब्दरत्नः**

अप्रसक्तत्वादिति। यद्यपि कल्पबाद्यन्ते समासप्रसक्तिरस्ति, तथाऽपि 'शेषे' इत्यस्य विच्छिन्नत्वान्नाऽनुवृत्तिः। अत एव 'हविषः प्रस्थितस्य नेति वक्तव्यमि'ति वार्त्तिकं, 'प्रस्थितं प्रेष्ये'ति भाष्योदाहृतञ्च सङ्गच्छते। 'इदं सूत्रं लोकेऽपि प्रवर्त्तते, उत्तरसूत्रे छन्दोग्रहणादि'त्याहुः।

कर्त्तृकर्मणोरिति। अत्र 'शेषे' इति न सम्बध्यते। कर्मग्रहणात्। 'कर्त्तरि चे'ति हि नोक्तं, 'शेष'सम्बद्धं कर्मग्रहणं माऽनुवृतत्। न च करणाऽऽदिनिवृत्त्यर्थं तदिति वाच्यम्। 'चतुर्थ्यर्थे बहुलं छन्दसि' 'यजेश्च करणे' 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इतिसूत्रत्रयस्याऽन्यत्र [2]पाठेन दोषाऽभावात्। न चैवं 'प्रयोगस्ये'-त्यननुवृत्तावुभयप्राप्तौ कर्मणीत्यस्य 'कर्त्तृकर्मणोः प्रयोगे' इत्यर्थाऽनापत्त्या, अन्यतरप्रयोगेऽपि नियमप्रवृत्तौ, 'शब्दाऽनुशासनमि'त्यत्र 'कर्मणि चे'ति निषेधा-ऽऽपत्तिरिति वाच्यम्। 'केचिदविशेषेण विभाषामिच्छन्ती'ति मते दोषाऽभावात्। शेषषष्ठ्याः स्वीकाराच्च। अत एवाऽन्तर्द्धौ येनाऽदर्शनमिति निर्देशः सङ्गच्छते। किञ्च 'कर्त्तृकर्मणोः कृती'ति सूत्रस्य 'शेष'ग्रहणाऽनुवृत्त्या समासनिवृत्तिफलकत्व-कल्पने 'न लोकाऽव्यय' 'अकेनोरि'ति निषेधवैयर्थ्याऽऽपत्तिः। अस्य निषेधेऽपि 'शेषे षष्ठी'तिसूत्रस्य दुर्वारत्वेन फले विशेषाऽभावात्। न च 'शेषे षष्ठी'ति [3]षष्ठ्यां समासः स्यादिति वाच्यम्। 'पूरणगुणसुहिताऽर्थ' 'तृजकाभ्यां कर्त्तरी'त्यनेन निषेधात्। अपि च 'कृद्योगा षष्ठी समस्यते' इति भाष्य-वार्त्तिककारैरुक्तत्वेन शेषपदाऽनुवृत्त्यभावः स्पष्ट एव।

पूर्वमिति। क्रियाविशेषणञ्चैतत्। यद्यपि वृत्तिप्रविष्टपदार्थयोर्येन सम्बन्धेना-ऽन्वयस्तेनैव सम्बन्धेन वृत्त्यप्रविष्टस्य न। प्रकृते च 'पूर्वमि'त्यस्य कर्मत्वेना-ऽन्वयात् 'कटमि'त्यस्याऽन्वयो दुर्घटः, तथाऽपि 'पूर्वमि'त्यस्य फलेन सहाऽभेदा-ऽन्वयः, 'कटमि'त्यस्य फले [4]आधेये आधेयतासम्बन्धेनाऽन्वय इति भेदान्न दोष इति ध्येयम्। ननु समासाऽर्थकथने न्यूनता। निष्ठाऽर्थस्याऽप्रदर्शनात्। किञ्च

**लघुशब्दरत्नः**

अप्रसक्तत्वादिति। कल्पाद्यन्तस्य तु न प्रैषे प्रयोग इति भावः। उभयथा—षष्ठी-तदभावौ। इदं चाऽकथितसूत्रभाष्ये स्पष्टम्।

[1] 'पूर्वं कृतमनेनेति विग्रह' इति घ. ङ. छ. पाठः। [3] 'षष्ठ्या' इति क. पाठः।
[2] 'अन्यत्र पाठे दोषाऽभावात्' इति क. ख. पाठः। [4] 'फले अधे आधे' इति ख. पाठः।

अविवक्षितकर्मकतया भावे क्तः। 'सुप्सुपे'ति समासः। पूर्वादिनिः (५।२।८६) सपूर्वाच्च (५।२।८७) इति कर्त्तरि इनिः। तद्विधौ श्राद्धमनेन (५।२।

बृहच्छब्दरत्नः

'कृतपूर्वी कटमि'त्यादौ कर्मणोऽभिहितत्वाद् द्वितीयया न भाव्यम्। एवं तदपवादभूतया षष्ठ्याऽपि। इहाऽप्यनभिहिताऽधिकारात्। यत्तु 'कर्मसामान्यस्य क्तेनाऽभिधानेऽपि विशेषाऽनभिधानान्न दोष' इत्याहुः। तन्न। सर्वत्रैवमेवाऽऽपत्तावभिधाना-ऽनभिधानोच्छेदाऽऽपत्तेः। एतेन 'कृतशब्दस्य कर्माऽर्थत्वेऽपि, कटेन सह नाऽन्वयः। तद्धिताऽर्थेनैकार्थीभूतस्य 'कृत'शब्दस्य निष्कृष्य कटेन सह सम्बन्धाऽभावात्। क्रियया गुणभूतयाऽपि कारकाणां सम्बन्धो भवति, यथा 'कटं कृतवानिती'त्यपास्तम्। 'कर्माऽर्थत्वेऽपि कटेन सह सम्बन्धो ने'ति परस्परव्याघाताच्च। नित्यसापेक्षत्वेनाऽन्वयस्याऽऽवश्यकत्वाच्च। किञ्चौदनः पच्यतेतमामित्यादौ द्वितीयाऽऽपत्तेरित्याशङ्क्याऽऽह—अविवक्षितेति। न चैवं 'पच्यते देवदत्तेन तण्डुलमि'ति प्रयोगाऽऽपत्तिः, त्वदुक्तरीत्योभयोरप्यनुक्तत्वादिति वाच्यम्। प्रयोगाऽनुरोधेनैव विवक्षायाः सत्त्वेनाऽदोषात्। अन्यथा 'तेन तुल्यं क्रिया' 'क्षुदपहन्तुं शक्यमि'त्यादाविव 'पचनं दण्डः' 'पचनं स्थाली'ति प्रयोगाऽऽपत्तिः। 'पूर्वं धातुः साधनेन युज्यते' इति पक्षे 'विजयती'ति परस्मैपदाऽऽपत्तिश्च। अत एव 'वा लिप्सायामि'त्यादीनां चारितार्थ्यम्। ध्वनितञ्चेदं 'कर्मणा यमभिप्रैति' 'गत्यर्थकर्मणी'त्यादौ भाष्ये। स्पष्टीकृतञ्च पस्पशाऽऽह्निकादौ कौस्तुभे।

स्यादेतत्। तद्धिताऽन्तेऽपि कृत्प्रकृत्यर्थं प्रति कर्त्तृकर्मत्वाऽनपायेन सूत्रप्रवृत्तिर्दुर्वारा। न च कृद्ग्रहणसामर्थ्यान्न तदाधिक्ये प्रवृत्तिरिति वाच्यम्। 'ओदनस्य पाचकतम' इत्यादौ षष्ठ्यनापत्तेः। 'उभयप्राप्तौ कर्मणी'तिसूत्रे बहुव्रीह्यर्थं कृद्ग्रहणम्। अन्यथा तत्पुरुषः सम्भाव्येत। अथ वा 'करोतीति कृदि'ति कृच्छब्देन कर्त्तोच्यते। तत्र 'कर्त्तृकर्मणोरि'त्येव षष्ठ्यां सिद्धायां गुणभूतेऽपि कर्त्तरि यथा स्यात्, 'भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामि'त्यादिप्रयोजनानां भाष्यादावुक्तत्वेन सामर्थ्याऽभावाच्च। न चाऽनुपात्तेऽपि कृद्ग्रहणे 'एकाचो द्वे' इत्यादाविव बहुव्रीहिर्भविष्यति। व्याख्यानात्, 'इह किञ्चित्रपो' इतिन्यायेन फलस्याऽऽवश्यकत्वाच्च एतत्प्रकरणोपात्तकर्त्रादिशब्देषु लक्ष्याऽनुरोधेन गौणमुख्यन्यायाऽनाश्रयणात्। कर्त्रादिसङ्केतानां सर्वत्र मुख्यत्वाच्च। कारकाऽधिकारे गौणस्याऽपि ग्रहणात्।

लघुशब्दरत्नः

अविवक्षितेति। तद्धितवृत्तेः पूर्वमविवक्षितेत्यर्थः। पश्चात्तु कर्मयोगो भवत्येवेति बोध्यम्। अयञ्च प्रकार[1]एतद्वृत्तिविषये एव। तेन 'घटं क्रियते' इत्यादि न। नपुंसके

[1] 'तद्धितवृत्तिविषये' इति क्वचिन्मुद्रिते पाठः। स च लिखितसकलादर्शविरुद्धो, भावप्रकाशविरुद्धश्च।

८५) इति सूत्रादनेनेत्यनुवृत्तेः। अथ कथं [1]'धायैरामोदमुत्तममि'ति भट्टिः।

बृहच्छब्दरत्नः

अत एव प्रयोज्ये कर्त्तरि तृतीया सिध्यति। एवञ्च तादृशप्रयोजनपरभाष्यस्य प्रौढिवादपरत्वेन सामर्थ्यवर्णनपरं भाष्यं युक्तमिति वाच्यम्। अत्राऽपि 'न लोके'तिनिषेधस्य दुर्वारत्वेन भाष्यस्य प्रौढिवादपरत्वस्याऽऽवश्यकत्वात्। 'निष्ठाऽन्ते धातुवाच्यक्रियाऽपेक्षे ये कर्त्तृकर्मणी, तयोः प्रतिषेध' इत्यर्थस्याऽऽकरे स्थितत्वात्।

यत्तु 'वृत्त्यप्रविष्टनिष्ठाऽन्तमेव गृह्यते' इति। तन्न। सङ्कोचे मानाऽभावात्। 'कटं कृतवत्पुत्र' इत्यादौ [2]षष्ठ्यापत्तेश्च। किञ्च कृद्ग्रहणवैयर्थ्यं दुरुपपादम्। न च 'कर्त्तृकर्मभ्यां क्रिया संनिधाप्यते। धातुरेव च क्रियावाची। धातोश्च प्रत्ययद्वयं, कृत्, तिङ् च। तत्र तिङो योगे निषेधात्कृद्योगे एव भविष्यती'ति भाष्यात् सामर्थ्यं सूपपादमिति वाच्यम्। 'कृतपूर्वी कटमि'त्यादाविव 'तण्डुलानां पाचकपुत्रः' 'तण्डुलानां [3]पक्तातरामि'त्यादावपि षष्ठ्यनापत्तेः। कृदपेक्षयाऽऽधिक्यस्य तुल्यत्वात्। अपि च 'आभ्रिको भूमिम्' 'देवदत्तेन शत्योऽश्व' इत्यादौ षष्ठ्यभावाऽर्थं कृद्ग्रहणस्य चारितार्थ्येन कथं सामर्थ्यवर्णनम्। 'खनती'त्यद्यर्थे जायमानानां तद्धितानां क्रियोपसर्जनद्रव्यवाचकत्वस्य सर्वतन्त्रसिद्धत्वात्। अत एव प्रकृति-प्रत्ययाऽर्थाऽन्वयः सुलभः। ध्वनितञ्चेदमधिकमितिसूत्रे आकरग्रन्थे। अत एवा'ऽनुपद्यन्वेष्टे'तिसूत्रे'ऽनुको भार्यामि'त्युदाहृतं हरदत्तेन। एतेन 'कृत्येव यथा स्यान्न तु तद्धिताऽऽधिक्ये। तेन 'कर्त्तव्यपूर्वी कटमि'त्यादौ न। किञ्च 'प्रजानातीति प्रज्ञः, प्रज्ञ एव प्राज्ञः, व्याकरणं प्राज्ञ' इत्यत्र षष्ठी ने'त्यपास्तम्। तस्मादत्र भाष्यादिग्रन्था न क्षोदक्षमाः। तत्त्वन्तु कृद्ग्रहणमुत्तराऽर्थम्। 'शत्य' इत्यादितद्धितव्यावृत्त्यर्थतया इहाऽर्थमपि वा। 'कर्त्तव्यपूर्वी कटमि'त्यादीनां यदि प्रामाणिकत्वं, तर्ह्यनित्यत्वेनैव निर्वाहो बोध्यः। इदमेव हृदि निधायाऽनित्यत्वाऽऽश्रयणमावश्यकमिति ध्वनयितुमाशङ्कापूर्वं तत्प्रतिपादयति—अथेति।

लघुशब्दरत्नः

भावे क्तोऽप्यकर्मकेभ्य एव। 'भ्रान्तं देशमि'त्यादि तु गत्यर्थाऽकर्मक (३।४।७२) इति क्तेन निर्बाधम्। तत्सूत्रोपात्तधातुभ्यश्चेन तस्य भावेऽपि विधानादित्यन्यत्र विस्तरः। धायैरामोदमुत्तममिति। 'दधातेः—ददातिदधात्योर्विभाषा (३।१।१३९) इति णः, आतो युक् (७।३।३३) इति युगि'ति जयमङ्गला। 'धयैरि'ति ह्रस्वपाठो लेखकप्रमादात्। 'उत्तमं [4]पुष्पादिसम्बन्ध्यामोदं धारयद्भिरि'त्यर्थाऽभिमानेन प्रश्नः। यदि तु 'आमोदं गृहीत्वा मादृशां दुःखस्य पोषकैरि'त्यर्थो जयमङ्गलाव्याख्यातरीत्या स्वीक्रियते, तदा न काऽप्यनुपपत्तिः।

[1] 'धयैः' इति ङ. छ. पाठः।

[2] 'षष्ठ्यनापत्तेश्च' इति क. पाठः।

[3] 'पक्तारावित्यादौ' इति क. ख. पाठः।

[4] 'उत्तमपुष्पादि' इति क. मुद्रितेषु च पाठः।

[1]अत्राऽऽहुः—अनित्यमिदम् । तदर्हम् (५।१।११७) इति निर्देशात् । स्त्रीप्रत्यययोरिति । कथन्तर्हि सुट्तिथोः (३।४।१०७) इति सूत्रे 'सुटा सीयुटो [2]बाधा ने'ति वृत्तिः । करणत्वविवक्षायां तृतीयेति गृहाण ।

न लोकाव्ययनिष्ठा (२।३।६९) । 'उश्च उकश्च ऊकौ, लश्च

---

**बृहच्छब्दरत्नः**

निर्देशादिति । 'अर्हमि'ति पचाद्यजन्तम् । 'तत्कर्मकाऽर्हणकर्त्तरि प्रथमोच्चारितात्प्रत्यय' इति सूत्राऽर्थः । एवं 'तस्याऽपत्यमि'त्यादीनामपि 'तत्सम्बन्ध्यपत्यमणादीनां वाच्यमि'त्यादिः शाब्दोऽर्थः । तत्र 'समर्थानां प्रथमाद्वे'त्यस्य सत्त्वेन षष्ठ्याद्यन्तेभ्यः प्रत्ययः । तथा चाऽनन्यलभ्यत्वेनाऽपत्यादिमात्रं प्रत्ययाऽर्थ इत्यग्रे निरूपयिष्यामः । एवञ्च 'तदर्हमि'त्यत्र 'कर्त्तृकर्मणोः कृती'त्यस्य प्रवृत्तिः स्पष्टैव । अत्राऽरुचिबीजन्तु[3] 'द्वितीयासमर्थादि'ति व्याख्यानं विग्रहवाक्याऽभिप्रायम् । यदा 'राजानमर्हती'त्येवं तिङन्तेन विगृह्यते, तदा द्वितीया । [4]समर्थानामि'ति सूत्रे '[5]कर्मोपपदादण् प्रत्ययः, कर्मषष्ठ्या वा समासो वे'ति । 'तत्रेव' 'तस्य' 'अर्हमि'ति सूत्रत्रयमस्तु । 'अर्हमि'ति सूत्रे योग्यताबलात्कर्मणि षष्ठी । एवञ्च 'तस्य भाव' इति सूत्रे 'तस्ये'ति न वक्तव्यमिति महल्लाघवम् । एवं सिद्धे 'तदि'तिर्निर्देशोऽसमस्तद्वितीयाऽन्तत्वबोधनाऽर्थः । तत्फलं त्वनित्यत्वमेव । अयमेव च मूलाऽर्थ इति प्रतीमः । 'तदर्हमि'तिसूत्रप्रत्याख्याने तु बहुलग्रहणाऽनुवृत्त्या वैकल्पिकत्वं बोध्यम् । यत्तु 'स्तोकं पाक' इति क्रियाविशेषणे षष्ठ्यभावोऽनित्यत्वे फलमि'त्याहुः । तन्न । कर्त्तृसाहचर्येणाऽधात्वर्थकस्य कर्मणो ग्रहणात् ।

---

**लघुशब्दरत्नः**

निर्देशादिति । अयं भावः—'तत्रेव,' (५।१।११६) 'तस्य', 'अर्हम्' (५।१।११७) इति सूत्रत्रयं कार्यम् । 'अर्हमि'त्यत्र योग्यताबलात्कर्मणि [6]षष्ठी । तस्य भावः (५।१।११९) इत्यत्र च 'तस्ये'ति न वाच्यम् । एवं सिद्धे 'तदि'ति निर्देशो समस्तद्वितीयाऽन्तत्वबोधनाऽर्थः । एतेन 'सूत्रे कर्मोपपदादणप्रत्यये उपपदसमासः, अजन्तस्य कर्मषष्ठ्या वा समास' इति निरस्तम् । अत एव 'द्वितीयासमर्थादि'ति व्याख्यायते, 'राजानमर्हती'ति च विगृह्यते । तत्फलन्त्वनित्यत्वबोधनमेवे'ति । भाष्ये तु नैतद् दृश्यते इति बोध्यम् ।

---

[1] 'अत्राहुः' इति च. नास्ति ।

[2] 'बाधो न' इति मुद्रितेषु पाठः ।

[3] 'बीजन्तु सामर्थ्यादिति' इति ख. पाठः ।

[4] 'समर्थमितिसूत्रे' इति क. ख. पाठः ।

[5] 'कर्मोपपदोऽण्प्रत्यय' इति क. ख. पाठः ।

[6] 'षष्ठीति' इति मुद्रितेषु पाठः ।

ऊकौ चे'ति विग्रहः। उकारेण कृतो विशेषणात्तदन्तविधिस्तदाह—हरिं दिदृक्षुरलङ्करिष्णुर्वेति। शेषे षष्ठी त्विति। एतेन 'इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः,' 'अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयमि'-त्यादि व्याख्यातम्। यद्वा 'इक्ष्वाकूणां सिद्धय' इत्यन्वयो, न तु 'इक्ष्वाकूणां दुरापे' इति। तथा 'वागधिपस्य विस्मयमि'त्यन्वयो, न तु 'वागधिपस्य दुर्वचमि'ति।

तुल्यार्थैः (२।३।७२)। कथन्तर्हि 'तुलां यदारोहति दन्तवाससे'ति कालिदासः, 'स्फुटोपमं भूतिसितेन शम्भुने'ति माघश्च ?। उच्यते—सहयुक्तेऽप्रधाने (२।३।१९) इति तृतीया, 'स्वबालभारस्य तदुत्तमाऽङ्गजैः समं चमर्येव तुलाऽभिलाषिण' इत्यत्र यथा। उक्तं हि—'विनाऽपि तद्योगं तृतीये'ति।

---

बृहच्छब्दरत्नः

विशेषणादिति। विभक्तिव्यत्ययेनाऽन्वय इति भावः। 'तण्डुलं पाचयाञ्चकारे'त्यादावामन्तोत्तरलिटमाश्रित्य षष्ठ्याः प्राप्तत्वेऽपि लिटमाश्रित्यैव परत्वात्, 'निषेधाश्च बलीयांसो भवन्ती'ति न्यायाच्च तदभावो बोध्यः। 'न लोके'तिसूत्रे सामर्थ्याल्लशब्देन भावरूपाऽऽदेश इव, सङ्कोचे मानाऽभावेनाऽभावरूपोऽप्यादेशो गृह्यते' इति कश्चित्।

तुल्यार्थैरिति। 'अतुलोपमाभ्यामि'ति पर्युदासेन सत्त्वाऽर्थकतुल्याऽर्थस्यैव ग्रहणान्निपातानां वाचकत्वपक्षे 'इव'योगे ने'त्याहुः। सूत्रेऽतुलोपमाशब्दौ कर्मसाधनौ, न भाव-करणसाधनौ। 'अतुलोपमाभ्यामि'तिपर्युदासेन, बहुवचनेन चेष्टसिद्धावर्थग्रहणात्सत्त्वाऽर्थकस्यैव ग्रहणान्नाऽयं दोष' इत्यपि वदन्ति। 'इव'शब्दयोगे [1]षष्ठ्यर्थे सप्तम्यप्यस्तीति 'तत्र तस्येवे'तिसूत्रे भाष्य-कैयटयोः स्पष्टम्। अपरे तु 'निपातानां वाचकत्वे कर्तृकर्मद्वारा क्रियाऽऽश्रयाऽभावेऽपि 'उपमेयसमाना विभक्तिरुपमाने' इत्यर्थे तात्पर्यम्। अत एवोपमानानि सामान्यवचनैरित्यादीनां समानाऽधिकरणप्रकरणे पाठः सङ्गच्छते' इत्याहुः। 'वे'त्यनुवर्त्तमानेऽन्यतरस्याङ्ग्रहणमुत्तरसूत्रे चेन समुच्चयाऽर्थम्। तेन पक्षे षष्ठी। अन्यथा तृतीयैव परामृश्येत, सन्नि-

---

लघुशब्दरत्नः

ऊकौ चेति। 'अव्ययं चे'त्यादेरुपलक्षणमिदम्। तदन्तविधिरिति। व्यपदेशिवद्भावेन तस्याऽपीति बोध्यम्। ननु 'नपुंसके भावे क्तस्ये'ति [2]भाष्ये वार्त्तिकात्कारकषष्ठीनिषेधविषये शेषत्वविवक्षा न। तत्प्रत्याख्याने त्वनभिधानात् क्ताऽतिरिक्तविषये सा न।

---

[1] 'षष्ठ्यर्थसप्तमी' इति ख. पाठः।
[2] 'भाष्यवार्त्तिकात्' इति च. पाठः।

**व्याख्यानादिति। सूत्रेऽर्थशब्दोऽपि पृथङ् निमित्तम्। तथा च द्वन्द्व एवाऽयं[1], न त्वर्थशब्देन बहुव्रीहिरिति भावः।**

**इति षष्ठी ॥**

**(अथ सप्तमी)**

**आधारस्त्रिधेति। एतच्च संहितायाम् (६।३।१४) इति सूत्रे भाष्ये**

---

बृहच्छब्दरत्नः

धानादि'ति प्राञ्चः।

इति षष्ठी ॥

आधार इति। 'आधारोऽधिकरणमि'तिसूत्रे 'कारकमि'त्यनुवर्त्तनात्क्रिया-ऽन्वयिन्येव प्रवृत्तिरिति तावन्निर्विवादम्। तथा चोपस्थितत्वात्क्रियाऽऽधारस्यैवा-ऽधिकरणसञ्ज्ञा। न चैवं कर्त्तृ-कर्मणोरेवाऽधिकरणसञ्ज्ञा स्यादिति वाच्यम्। कर्त्तृ-कर्मसञ्ज्ञाभ्यां बाधात्। न च [2]कर्त्तृ-कर्मणोः सञ्ज्ञयोः परम्पराऽऽधारस्याऽपि ग्रहणं स्यादिति वाच्यम्। 'कर्त्तुरीप्सिततममि'ति सूत्रे 'कर्म'ग्रहणाऽनुवृत्त्यैव सिद्धौ 'कर्म'ग्रहणस्य वैयर्थ्याऽऽपत्तेः। इष्टतमत्वाऽभावाच्च। अत एव 'स्वतन्त्रः कर्त्ते'तिसूत्रे न यथाकथञ्चित्क्रियाऽऽश्रयस्य ग्रहणम्। स्वतन्त्रपदस्य वैयर्थ्याऽऽपत्तेः। एवञ्च सामर्थ्याद्व्यापाराऽऽश्रयाऽऽश्रयस्य,[3] फलाऽऽश्रयाऽऽश्रयस्य च ग्रहणम्। सङ्कोचे मानाऽभावात्। 'कर्त्तृ-कर्म-द्वारे'त्यर्थस्तु फलिताऽर्थकथनपरतया योज्यः। एतेन 'कर्मसञ्ज्ञायाः कर्त्तृसञ्ज्ञानिमित्तत्वेन, कर्त्तृरहितक्रियाया अभावेन [4]च, व्यापारस्य [5]विशेष्यत्वाच्च 'कर्मद्वारे'त्यस्मिन्नर्थे न मानमि'त्यपास्तम्। 'पुष्पवन्त'-पदवच्छक्त्यङ्गीकारेण पदाऽर्थोपस्थितिवेलायां फलस्य प्रकारकत्वाऽभावाच्च। कर्मप्रत्ययसमभिव्याहारे फलस्य विशेष्यत्वाच्च।

---

लघुशब्दरत्नः

अत एव[6] पूरणगुण (२।२।११) इति सूत्रे [7]सद्ग्रहणप्रत्याख्यानं भाष्ये ध्वनितमित्यरुचेराह-यद्वेति (-७२५ पृष्ठे)। सहयुक्ते इति। 'स्फुटोपममि'त्यत्रोपमाशब्दो भावसाधनः।

इति षष्ठी ॥

---

[1] 'अयम्' इति मुद्रितेषु त्रुटितम्। [2] 'कर्त्तृकर्मणोः' इति ख. पाठः।

[3] 'व्यापाराश्रयस्य, फलाश्रयस्य च' इति पाठः। [4] चकारः ख. नास्ति।

[5] 'विशेषणत्वाच्च' इति क. पाठः।

[6] 'अत एव' इति लिखितेषु नास्ति।

[7] 'सद्ग्रहणप्रत्याख्यानम्' इति लिखितेषु नास्ति। 'ग्रहणं भाष्ये प्रत्याख्यातम्' इति मु. पाठः।

[8] 'ध्वनितमिदमित्यरुचेराह' इति लिखितेषु पाठः।

स्पष्टम् । चतस्र इति । प्रातिपदिकाऽर्थमात्रे इति भावः । किञ्च दूरान्तिक (२।३।३५) इति सूत्रस्य इहाऽप्यनुवर्त्तनादधिकरणेऽप्येता बोद्धयाः ।

बृहच्छब्दरत्नः

स्पष्टमिति । 'गङ्गायां घोष' इत्यादीनामौपश्लेषिकेष्वेवाऽन्तर्भावः । अत्र चा'ऽस्ती'त्यध्याहारः । तीरधर्म आधारत्वं प्रवाहे उपचर्यते । अस्मिन्पक्षे विभक्ति-र्लाक्षणिकी । ननु 'गङ्गायामि'ति मुख्यमेवाऽधिकरणमस्तु । विभक्त्यर्थ-धात्वर्थयोः परम्परासम्बन्धेनाऽन्वयः । न च कर्तृ-कर्मद्वारकव्यापाराऽऽश्रये सूत्रं चरितार्थं सदधिकरणद्वारके न प्रवर्त्ततेति वाच्यम् । संसिद्ध्यर्थक'साध्'धातुनिष्पन्न-'साधक'शब्देनैव 'यद्व्यापाराऽनन्तरमव्यवधानेन फलोत्पादकत्वमि'त्यर्थलाभे सिद्धे, [1]तमब्ग्रहणेना'ऽस्मिन्प्रकरणे परम्परया व्यापाराऽऽश्रयस्य ग्रहणमि'त्यर्थस्य ज्ञापितत्वेनाऽदोषात् । 'शब्दशक्तिगम्य एवाऽर्थो नाऽऽश्रीयते, किन्तु गौणो-ऽपी'त्यर्थ' इति मतेऽपि नाऽस्माकं क्षतिः । यत्तु 'कारकाऽधिकारादेव साधकत्वे लब्धे, 'साधक'ग्रहणमेव साधकतमाऽर्थं भविष्यति, किं 'तमप्'ग्रहणेन । तत्क्रियमाणं 'शब्दवैयर्थ्याऽऽपादनपूर्वकसामर्थ्यगम्यः प्रकर्षो नाऽऽश्रीयते' इति ज्ञापनाऽर्थमि'त्युक्तम् । तन्न । कारकशब्दस्य क्रियाऽन्वयित्वाऽर्थत्वेऽपि त्वदभि-मताऽर्थत्वाऽभावात् । 'नटस्य श्रृणोती'त्यादिव्यावृत्त्यर्थं तस्याऽऽवश्यकत्वाच्च । योगविभागसम्पादनेन कारकसञ्ज्ञासमावेशाऽर्थं 'साधक'ग्रहणस्याऽऽवश्यक-त्वाच्च । फलस्य दुर्वचत्वाच्च । न च 'गङ्गायां घोष' इत्यधिकरणसञ्ज्ञासिद्धिरेव फलमस्त्विति वाच्यम् । 'आधारोऽधिकरणमि'त्यत्र सामर्थ्यगम्यप्रकर्षाऽभावात् । 'अधिकरणम्' इत्येवोक्तेऽतिप्रसङ्गाऽऽपत्तेः । न च 'गौणमुख्य'न्यायाद्ग्रहणं न स्यात् । विशिष्टरूपोपादाने एव तत्प्रवृत्तेः । स्वरितत्वप्रतिज्ञया गौणाऽर्थस्याऽपि ग्रहणमिति 'स्वरितेनाऽधिकार' इति सूत्रे भाष्ये उक्तत्वाच्चेति चेन्न । 'तीरे गावः' 'गङ्गायां स्नाती'त्यादौ विभक्त्यर्थ-धात्वर्थयोः साक्षात्सम्बन्धेनाऽन्वयस्य क्लृप्तत्वेन तत्त्यागे मानाऽभावात् । एतेन 'परम्परासम्बन्धः[2] प्रकृति-प्रत्ययाऽर्थयोः संसर्गः' इति परास्तम् । कारकविभक्त्यर्थानां प्रकृत्यर्थेन साक्षादभेदसम्बन्धेन विशेष्य-

लघुशब्दरत्नः

प्रातिपदिकार्थमात्र इति । सप्तम्यधिकरणे च (२।३।३६) इति सूत्रेणाऽधिकरणे सप्तम्याः सिद्धत्वाच्चकारेणाऽन्तरङ्गे[3] प्रातिपदिकाऽर्थमात्रे सप्तमी विधीयते, प्रागुक्ताश्च तिस्रः । इयञ्च[4] सप्तमी निरवकाशत्वात्पराया अपि प्रथमाया बाधिकेति भावः । वृत्ति-

[1] 'तमप्ग्रहणेन' इति क. ख पाठः ।

[2] 'परम्परासम्बन्धेन' इति ख. पाठः ।

[3] 'अन्तरङ्गप्रातिपदिकार्थमात्रे' इति कः ख. पाठः ।

[4] चकारः ख. च. नास्ति ।

**क्तस्येति । 'इन् = इन्नन्तः शब्दो विषयो = [1]वृत्तिभूमिर्यस्य [2]क्ताऽन्तस्ये'त्यर्थः ।**

---

बृहच्छब्दरत्नः

ताया व्युत्पन्नत्वेन [3]तत्त्यागाऽयोगात् । यदा तु गङ्गाशब्दस्तीरे वर्त्तते, तदा प्रकृतिर्लाक्षणिकी । ननु जन्यतासम्बन्धेन फलस्य क्रियाऽऽश्रयत्वादुक्तरीत्या विक्लित्यादेः कर्मत्वाच्च, तदाश्रयत्वेन तण्डुलादेरधिकरणत्वं दुर्वारमिति चेन्न । ईदृशे विषये दोषस्य पूर्वमुद्धृतत्वात् । व्यापारजन्यधात्वर्थफलाऽऽश्रयत्वस्याऽपि कर्मसञ्ज्ञायां प्रयोजकत्वेनाऽदोषाच्च । एतेन 'देवदत्तः पचति-भवति' 'देवदत्तेन शय्यते-भवती'त्यादौ पाकादिद्वारा भावनाऽऽश्रयत्वविवक्षायामधिकरणत्वाऽऽपत्तिरि'ति परास्तम् । पाकादावन्वयस्याऽऽवश्यकत्वेन कर्त्तृत्वस्यैव प्रवृत्तेः । 'मोक्षे इच्छाऽस्ती'त्यादौ तु प्रत्ययोपात्तेच्छाद्वाराऽस्तिक्रियायामन्वयस्य विवक्षितत्वेनाऽधिकरणत्वं सूपपादम् । प्रत्ययोपात्तेच्छायान्तु विषय-विषयिभावेनाऽन्वयः । न हि प्रत्ययोपात्ताऽर्थमादाय कर्मत्वप्रवृत्तिः । तस्य सिद्धाऽर्थकत्वेन क्रियावाचकत्वाऽभावात् । प्रकृत्यर्थेऽन्वये साध्याऽवस्थाऽऽपन्नत्वेन क्रियात्वादकर्मकत्वमेव ।

क्तस्येतीति । 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानमि'तिवार्त्तिकोदाहरणे 'अधीती व्याकरणे' इत्यादौ भावे क्तप्रत्ययः । 'गुणीभूतभावनायामपि कारकाणामन्वय' इति प्रागेव निरूपितम् । नन्वस्तीत्यध्याहारस्याऽऽवश्यकत्वेन कर्त्तृद्वारा व्यापाराऽऽश्रयत्वेना'ऽधीती व्याकरणे' इत्यादौ सप्तमी सिद्धा । अध्ययनं हि ताल्वोष्ठपुटव्यापारेण प्रकाशनम् । न चाऽध्ययनस्याऽपि द्वारत्वेन कर्त्तमात्रद्वारा व्यापाराऽऽश्रयत्वाऽभावान्न प्रवृत्तिरिति वाच्यम् । 'अधीति'पदेन कर्त्तृसमर्पणेनाऽध्ययनविशिष्टस्यैवाऽस्तिक्रियायां कर्त्तृत्वेनाऽदोषादिति चेन्न । पूर्वमध्ययनाऽन्वये कर्मत्वेन द्वितीयायाः प्राप्तत्वेन वचनस्याऽऽवश्यकत्वात् । यत्तु 'कर्मणि क्तप्रत्यये उक्तत्वाद्व्याकरणाऽऽदिशब्देभ्यः प्रथमैवे'ति । तन्न । कर्मक्तप्रत्ययाऽन्तेन विग्रहेऽपि वृत्तौ भावक्तप्रत्ययाऽन्तस्याऽविरविकन्यायेन प्रविष्टत्वात् । ध्वनितश्चेदं 'कर्त्तृकर्मणोः कृती'ति सूत्रे भाष्ये ।

इन् इनन्त इति । तत्र सङ्कोचे मानाऽभावादिनभिन्ना वर्णाऽनुपूर्वी यत्र

---

लघुशब्दरत्नः

भूमिर्यस्येति । यत् क्तान्तनिरूपितपदार्थाऽभिधायकत्वाऽऽश्रय[4] इन्नन्तः [5]शब्द इत्यर्थः ।

---

[1] 'वृत्तिः=भूमिर्यस्य' इति ख. च. पाठः । 'वृत्तिभूमिरि'ति स. तत्रैव शोधितश्च ।

[2] 'क्तस्य' इत्येव मुद्रितेषु पाठः । अन्तपदं तत्र त्रुटितम् ।

[3] तदिति क. ख. नास्ति ।

[4] 'परार्थाऽभिधायकत्वाश्रयः' इति मुद्रितेषु पाठः ।

[5] 'शब्द इत्यर्थः' इति क. ख. नास्ति ।

[1]हेतुतृतीयेति । तादर्थ्ये चतुर्थीत्यपि बोद्धव्यम् । सीमेत्यादि । एतच्च [2]दुर्गवाक्यप्रबोधे कुलचन्द्रेणोक्तम् । मेदिनीकारोऽप्याह–'सीमा घाट-स्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियामि'ति । 'अथ पुष्कलको गन्धमृगे क्षपण-कीलयोरि'ति च । हरदत्तादयस्तु–'पुष्कलकः = शङ्कुः, सीम्नि = सीमज्ञानाऽर्थं, हतो = निहतो, निखात' इत्याहुः ।

यस्य च (२।३।३७) । निर्ज्ञातकाला क्रिया अनिर्ज्ञातकालायाः

---

**बृहच्छब्दरत्नः**

क्ताऽन्तेऽन्तर्भवति, तत्रैवेदं प्रवर्त्तते । तेन 'कृतपूर्वी कटमि'त्यादौ न दोषः । यत्तु कैयट-हरदत्तादय आहुः—'मासमधीती व्याकरणे' इति काल-कर्मणोर्बहिरङ्गत्वा-त्सप्तम्यभावः । द्वितीया तु भवत्येव । लक्ष्याऽनुरोधेन बहिरङ्गस्याऽपि ग्रहणा-दि'ति । तन्न । कालस्य पूर्वं सम्बन्धेऽन्तरङ्गत्वाऽऽपत्तेः । पश्चात्सप्तम्यन्त-कर्मणः सत्त्वेना'ऽकर्मकधातुभिर्योगे' इति वार्तिकस्याऽप्रवृत्तौ मासादीनां कर्मत्वा-ऽभावात् । [3]द्वितीयभाष्यध्वनितप्रागुपपादितरीत्या कर्मत्वाऽऽश्रयणे द्वितीया-वत्सप्तम्याश्रयणे को दोष इति (ते) प्रष्टव्याः ।

तादर्थ्येति । यद्यपि पूर्वं चर्मादिकमस्त्येव, तथापि त्वग्योग्यव्यवहाराऽर्थत्व-मस्त्येव । तथा च चर्मणो हननक्रियायामेवाऽन्वयः । कर्म च प्रत्यासत्त्या अन्वितक्रियाया एव । केचित्तु 'निमित्तात्सप्तमी । सा च निमित्तवाचिनी । निमित्तञ्च फलम् । फलस्याऽपि हेतुत्वात्तृतीयाप्रवृत्तिः' । अन्ये तु 'षष्ठ्यपवादिकेयं विभक्तिरि'त्याहुः । ननु भूयोदर्शनाऽऽश्रयो लक्ष्य-लक्षणभावः । यथाऽग्नि-धूमयोः । ततश्चोदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु 'गोषु दुह्यमानास्वि'-[4]त्यादावित्याशङ्क्याऽऽह—निज्ञतिति । कालेति । इदञ्चोपलक्षणम् । तेन 'सति गुणे

---

**लघुशब्दरत्नः**

अत्रेनो विषयस्य=इनः प्रकृतेः क्ताऽन्तस्ये'ति षष्ठीतत्पुरुषोऽपि वक्तुं शक्यः । तादर्थ्ये इति । फलस्य हेतुत्वेन विवक्षणात् । फलाऽर्थत्वाच्च [5]करणस्येति भावः ।

ननु ज्ञाप्य-ज्ञापकभावरूप-लक्ष्य-लक्षणभावो भूयोदर्शनाऽऽश्रयो दृष्टः । ततश्चोदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते । कदा चिद्धि गोषु दुह्यमानास्वसौ गत इत्यत

---

[1] 'हेतौ तृतीयेति' इति मुद्रितेषु पाठः ।

[2] कातन्त्र–कालाप-व्याकरणटीकाकारो दुर्गः । दुर्गटीका च दुर्गवाक्यप्रबोधः कुल-चन्द्रकृतः ।

[3] 'द्वितीयाभाष्य' इति क्वचित् पाठः ।

[4] 'इत्यादौ' इति क. ख. नास्ति ।

[5] 'कारणस्य' इति लिखितेषु पाठः । 'करणस्य' इति मुद्रितेषु पाठः ।

क्रियायाः कालपरिच्छेदकत्वाल्लक्षणम्। तदाश्रययोः कर्त्तृ-कर्मणोर्बोधकादियं सप्तमी। तत्र 'ब्राह्मणेष्वधीयानेषु गत' इति कर्त्तर्युदाहरणम्। कर्मण्याह—गोष्विति। इह अधीयानानां ब्राह्मणानां, दुह्यमानानां गवाञ्च [1]प्रतीयमानं लक्षकत्वं विशेषणीभूतयोरध्ययन-गोदोहन-क्रिययोर्विश्राम्यति। भेद एवेति। न तु शब्दाऽन्तरोपात्तसामान्यरूपाऽऽक्रान्ततेति भावः। माथुरा इति। न ह्यत्र 'गवां कृष्णे'त्यादाविव सामान्य-विशेषभावः, किन्तु शब्दोपात्तयोर्धर्मयो-

---

बृहच्छब्दरत्नः

द्रव्यत्वमस्ती'त्यादौ देशपरिच्छेदकत्वेऽपि भवति। लक्षणमिति। अत एवाऽस्याः क्रियायामेवाऽन्वयः। धातूपस्थाप्यायाः साक्षाच्छब्देन लक्षणत्वं [2]बोधयितुमशक्यम्। असत्त्वभूतत्वात्। अप्रातिपदिकत्वेन सप्तम्या असम्भवाच्च। किन्तु अन्यद्वारैवेत्याशयेनाऽऽह—तदाश्रययोरिति। एतेन 'गवां दोहे गत' इत्यादौ क्रियाया एव साक्षाल्लक्षणत्वसम्भव' इति मन्दोक्तमपास्तम्। कालाऽन्वयाऽर्थं 'सती'त्यध्याहारे कर्त्तृवाचकात् सप्तमी पर्यवसन्ना। एवं 'राहूपरागे स्नायात्',

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे पराऽवरे॥'

—इत्यादौ बोध्यम्। राहूपरागादीनां निमित्तत्वन्तु 'सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यते' इति न्यायेन पर्यवस्यति। न हि अस्मिन् शास्त्रे विशिष्य निमित्ते[3] सप्तमी विहिता। स्पष्टञ्चेदं [4]सप्तमीकौस्तुभे। न चैवम् 'अर्हाणां कर्त्तृत्वेऽनर्हाणामकर्त्तृत्वे, तद्वैपरीत्ये चे'ति वचनं व्यर्थमिति वाच्यम्। लक्ष्यलक्षणभावाऽविवक्षायां तत्सत्त्वात्।

गवां कृष्णेति। गोसमूहस्याऽऽ[5]धारत्वविवक्षायां सप्तम्यां प्राप्तायां वचनम्।

---

लघुशब्दरत्नः

आह—निर्ज्ञातकालेति। कालो देशस्याऽप्युपलक्षणम्। तदुदाहरणं 'सति गुणे द्रव्यत्वमस्ती'ति। तदाश्रययोरिति। क्रियाऽऽश्रययोरित्यर्थः। विशेषणीभूतयोरिति। 'शिखी ध्वस्त' इत्यादौ शिखायां ध्वंसप्रतियोगित्वविश्रान्तिवद्विशिष्टवैषेणैव[6] तस्य लक्षकत्वात्। न त्विति। 'गवां कृष्णे'त्यादौ गोत्वाद्याक्रान्तता यथेति भावः। तदाह—न ह्यत्रेति।

---

[1] 'प्रतीयमानलक्षकत्वम्' इति मुद्रितेषु पाठः।
[2] 'बाधयितुम्' इति क. ख, पाठः।
[3] 'निमित्तसप्तमी' इति ख. पाठः।
[4] 'क्ङिति चे'तिसूत्रे कौस्तुभे' इति क. पाठः।
[5] 'आधारस्य' इति ख. पाठ।
[6] 'विशिष्टवैशिष्टचेन' इति घ. पाठः। 'विशिष्टविशेषेण' इति क. पाठः। 'विशिष्टरूपेणैव' इति ख. पाठः।

**विरोध एव । निपुणो राज्ञ इति । साधुशब्दप्रयोगे त्वर्चां विनाऽपि सप्तमी**

### बृहच्छब्दरत्नः

'अवयवाऽवयविभावविवक्षायां षष्ठ्यां प्राप्तायां, सप्तम्या अपि विधानाऽर्थमि'त्यपि वदन्ति । 'विवक्षाभेदेन प्रयोगद्वये सिद्धे, शेषत्वविवक्षायां षष्ठ्यामेव प्राप्तायां, बुद्धिकृताऽपादानत्वविवक्षायां पञ्चम्यामेव प्राप्तायां वचनमि'त्यपरे । इदञ्च 'आयुक्त-कुशलाभ्यामि'ति सूत्रेऽपि बोध्यम् ।

यत्तु 'निर्धारणं विभक्त्यर्थ' इति । तन्न । 'कर्त्तरि कृदि'त्यादाविव सप्तम्य-भावेन शक्तिपरिच्छेदकत्वाऽभावात् । तरबादीनामपि शक्तताऽऽपत्तौ बोधाऽऽवृत्त्यापत्तेः । निर्धारणस्य बहुपदार्थघटितत्वेन गौरवाऽऽपत्तेश्च । 'गोमण्डले वर्त्तमाना कृष्णा या गौः सा बहुक्षीरे'त्याधारसप्तमीघटितवाक्ये निर्धारणस्य प्रतीयमानत्वेन अन्यलभ्यत्वस्याऽऽवश्यकत्वाच्च ।

विरोध एवेति । अयम्भावः—'पञ्चमी विभक्ते' इति सूत्रे 'यतश्च निर्द्धारण-मि'त्यनुवर्त्तते । [1]गोत्वेनेवाऽऽढ्यत्वेनैकबुद्धिविषयीकृतात्समुदायादेकदेशस्य—कृष्ण-त्वादिनेव माथुरत्वादिना—बुद्ध्या बहुक्षीरत्वस्येवाऽऽढ्यतरत्वबोधनाऽर्थं पृथक्क-रणस्य सत्त्वेन, 'माथुराः पाटलिपुत्रकेभ्य आढ्यतरा' इत्युदाहरणे निर्द्धारणमस्त्येव । एवञ्च विभागरूपाऽर्थलाभे पुनर्विभक्तग्रहणेन निर्द्धारणाऽऽश्रययोर्विभागे एव प्रवृत्तिर्बोध्यते । अत एव 'साङ्काश्यकानां पाटलिपुत्रकाणाञ्च पाटलिपुत्रका अभिरूपतमा' इत्यत्र न । अंशे अविभागस्याऽपि प्रतीयमानत्वात् । अपरे तु 'पञ्चमी'ति सूत्रे 'यतश्च निर्द्धारणमि'त्यनुवृत्त्या विभागे लब्धेऽपि, योगविभाग-सामर्थ्येन विभागे एव प्रवृत्तिर्बोध्यते । [2]विभक्तग्रहणन्तु 'अंशे विभागप्रतीतौ विभागस्यैव प्रतीयमाने अंशाऽन्तरे ने'त्येतदर्थम् । तेन 'साङ्काश्यकेभ्यः पाटलिपुत्रकाणाञ्च पाटलिपुत्रका अभिरूपतमा' इति भिन्नविभक्तित्वं न । न च 'कृञ्चाऽनुप्रयुज्यते लिटी'ति [3]सूत्रस्थेन 'एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्या' इत्यादिन्यायेन 'अश्वानां गोषु च स्वामी'त्यादीनामिवोक्तप्रयोगो नेति वाच्यम् । 'यथाविध्यनुप्रयोग' इति सूत्रप्रामाण्येन, पदद्विर्वचनस्थभाष्यपर्यालोचनया चैक-निमित्ते, एकविधेये चोक्तन्यायप्रवृत्तेरित्याहुः । 'यदत्राऽवर्णं विवृततरं तदन्यस्माद-वर्णादि'त्याद्येओङिति सूत्रस्थभाष्ये तु व्यक्तिभेदस्यैव विवक्षितत्वेन पञ्चमी युक्तैव । यत्तु 'बुद्धिकृताऽपादानत्वविवक्षया सिद्धत्वेन 'पञ्चमी विभक्ते'[4] इति सूत्रं माऽस्तु । तत्र विभागाऽनुकूलक्रियावाचिपदाऽध्याहारोऽर्थाऽध्याहारः, श्रूयमाणपदानां

---

[1] 'गोत्वेनैव' इति क. ख. पाठः ।

[2] विभक्तग्रहणन्तु अशेषांऽशे विभागस्यैव प्रतीयमाने(न) अंशाऽन्तरेणेत्येतदर्थम्'इति ख. पाठः ।

[3] 'सूत्रस्यैकस्याः' इति क. ख. पाठः ।

[4] 'विभक्तेरिति' इति क. ख. पाठः ।

भवत्येव, 'साध्वसाधुप्रयोगे चे'ति वार्त्तिकात्। प्रसित इति। 'तत्परे प्रसिताऽऽसक्ताावि'त्यमरः। मूलेनेति। नक्षत्रेण युक्तः कालः (४।२।३) इत्यणो लुबविशेषे (४।२।४) इति लुप्। पर्यायेणेति। ईश्वरशब्दो भावसाधनः। 'यस्य स्वामिन ईश्वरत्वमुच्यते' इत्येकं व्याख्यानम्। 'यस्ये'ति

बृहच्छब्दरत्नः

तत्र लक्षणा वेत्यन्यदेतदि'ति। तन्न। पूर्वसूत्रविषयेऽपि तदापत्तेः। न चेष्टाऽऽपत्तिः। 'द्विवचनविभज्योपपदे' इतिसूत्रस्थभाष्य-कैयट-हरदत्तादिग्रन्थविरोधाऽऽपत्तेः। किञ्च पूर्वसूत्रबाधनाऽर्थम्, [1]अपादानत्वादिविवक्षायां षष्ठीबाधनाऽर्थञ्च 'पञ्चमी विभक्ते' इतिसूत्रस्याऽप्यावश्यकत्वात्। अपि च त्वदुक्ताऽपादानत्वविवक्षा भेदे एव, नाऽभेदे इति, भेदे अपादानत्वविवक्षैव, नाऽन्यविवक्षेति वा बोधनाऽर्थं सूत्रमावश्यकम्। एतेना'ऽन्यतरविभक्ते [2]विधेयत्वाऽभावः। लाघवाऽनुरोधेनाऽवयवाऽवयविभावाऽऽधाराऽऽधेयभावे एव पूर्वसूत्रप्रवृत्त्या 'पञ्चमी विभक्ते' इति सूत्रं व्यर्थमि'त्यपास्तम्। 'माथुर-पाटलिपुत्रकेभ्यः, पाटलिपुत्रक-माथुराऽऽढ्य-पण्डिताावि'तिप्रयोगस्तु 'समूलाऽकृतजीवेषु हन्कृञ्ग्रह' इत्यादाविव द्वन्द्वोपात्तपदार्थानां द्वन्द्वोपात्तपदार्थेषु क्रमेणाऽन्वयस्य व्युत्पन्नत्वेन विभागस्यैव सत्त्वेऽपि न भवति। 'यतः पृथक्करणं तत एव पञ्चमी, न पृथक्क्रियमाणादि'ति सूत्राऽर्थाऽऽश्रयणात्। माथुराणां, पाटलिपुत्रकाणां धर्मद्वयाऽऽक्रान्तत्वात्। अत एव 'यत' इति चरिताऽर्थम्। अन्यथा सम्बन्धवन्निर्द्धारणे प्रतीयमानविभागस्योभयनिष्ठत्वेऽपि षष्ठीवद्विशेषणादेव प्रवृत्तौ 'यत' इत्यस्य वैयर्थ्यं स्पष्टमेवेत्याहुः। भाष्योदाहृते 'साङ्काश्यकानां पाटलिपुत्रकाणाञ्च पाटलिपुत्रका अभिरूपतमा' इत्यादौ [3]पाटलिपुत्रकशब्दाच्छेषविवक्षायां षष्ठी'ति वदन्ति।

प्रथमोपस्थित'साधु'शब्दत्यागे बीजमाह—वार्त्तिकादिति। तथा च सूत्रे [4]साधुपदोपादानं व्यर्थमिति भावः। कथन्तर्हि 'साधुर्भृत्यो राज्ञ' इति। उच्यते। राज्ञो भृत्येन शाब्दोऽन्वयः। तत्र राज्ञि. अन्यस्मिन्वेति नैतच्छब्देन स्पृश्यते।

लघुशब्दरत्नः

वार्त्तिकादिति। 'साधुर्भृत्यो राज्ञ' इति तु राज्ञो भृत्येनाऽन्वये साधु। प्रत्यासत्त्या च राजविषयमेव साधुत्वं गम्यते, न तु शब्देन तत् स्पृश्यते। अर्चायां प्रतियोगे निषेधाऽर्थं त्वत्र 'साधु'ग्रहणमिति तत्त्वम्। तत्परे इति। रूढत्वादेतदर्थस्यैव ग्रहणम्।

१ 'अपादानत्वाऽविवक्षायाम्' इति ख. पाठः।

२ 'विधेयताभाव···लाघवानुरोधेन अवयवाऽवयविभाव' इति क. ख. पाठः।

३ 'पाटलिपुत्रशब्दात्' इति क. ख. पाठः।

४ 'साधुग्रहणम्' इति क. पाठः। 'साधु व्यर्थम्' इति ख. पाठः।

स्वं निर्दिश्यते, यस्य स्वस्य ईश्वर उच्यते' इत्यपरम् । एवञ्च व्याख्याभेदात्पर्यायेण विभक्तिः । सा च विशेषणात्, षष्ठीवदिति भावः ।

इति सप्तमी ॥

[ इति विभक्त्यर्थ(कारक)प्रकरणम् ] ।

---

बृहच्छब्दरत्नः

प्रत्यासत्त्या राजविषयकमेव साधुत्वं गम्यते इत्यन्यदेतत् । विशेषणादिति । यत्तु 'स्वामिन्याधारे भूः स्थिता, तस्याञ्च स्वामी, तत्र यदा यदधिकरणत्वेन विवक्ष्यते, तदा तत्र सप्तमी भविष्यति । 'अधिरीश्वरे' इति सूत्रमपि न कर्त्तव्यम् । क्रियायोगाऽभावेन गत्युपसर्गसञ्ज्ञाया नैव प्रवृत्तिः । एवं सति सूत्रद्वयाऽऽरम्भसामर्थ्येन द्वितीयाऽप्यभ्यनुज्ञायते' इति । तन्न । आकरविरोधात् । स्वस्वामिभावविवक्षायां षष्ठीबाधनाऽर्थं सूत्रस्याऽऽवश्यकत्वाच्च । ईश्वरवाचकाऽधिशब्दसमभिव्याहारे आधाराऽऽधेयभावविवक्षाया वक्तुमशक्यत्वाच्च । अधिशब्दोच्चारणस्य वैयर्थ्याऽऽपत्तेश्चेति वदन्ति ।

( इति सप्तमी ) ।

इति विभक्त्यर्थाः ॥

---

लघुशब्दरत्नः

तेन 'प्रकर्षेण सित' इत्यर्थे न ।

(इति सप्तमी) ॥

[1]इति विभक्त्यर्थाः ॥

[2]इति श्रीमद्भट्टोजिदीक्षितपौत्र—दीक्षितहरि–विरचिते प्रौढमनोरमाव्याख्याने लघुशब्दरत्ने कारकाऽन्तं समाप्तम् ॥

---

[1] अयं क. पाठः ।
[2] अयं ख. पाठः ।

# अथाव्ययीभावसमासप्रकरणम् ।

**समर्थाश्रित इति ।** सूत्रे समर्थशब्दो लाक्षणिक इति भावः । **कतिपयेति ।** यद्यपि उदात्तवता, गतिमता च तिङा गतेः समासो नित्याऽधिकारे वार्तिककृतोक्तस्तथाऽपि नाऽसौ नियतः । 'य आ नयत्', 'अभिप्रभर-

---

**बृहच्छब्दरत्नः**

सूत्रे इति । 'राजपुरुष' इत्यादावेकार्थीभावस्य सत्त्वेन तन्मूलत्वेन क्लृप्ते 'राजन् अस् पुरुष सु' इत्यलौकिकेऽप्येकार्थीभावसामर्थ्यकल्पना । यथा शत्रादौ द्वितीयासामानाधिकरण्यं दृष्ट्वा लकारे तत्कल्पना । 'अन्यपदार्थे' इत्यादिसौत्राऽनुवादेनैव देवताविग्रहवत्तत्सिद्धेश्च । यत्तु 'पदत्वसम्पादको विधिः पदविधिरि'ति व्युत्पत्त्या 'कर्त्तृकरणयोस्तृतीये'त्यादिर्गृह्यते । सामर्थ्यञ्चेतरनैरपेक्ष्यम् । अत एव 'इतरनिरपेक्षैरेव व्रीहिभिर्यवैश्च याग' इति । तन्न । 'पदमितरनिरपेक्षाऽर्थ-बोधकमि'त्यर्थकेनैव सिद्धौ 'विधि'ग्रहणस्य वैयर्थ्याऽऽपत्तेः । 'अनभिहिते' इतिवत् 'समर्थ' इत्यधिकारेणैव सिद्धौ 'पद'ग्रहणस्याऽपि निष्फलत्वाऽऽपत्तेश्च । 'दण्डेन चक्रेण घटं करोती'त्यादीनामसाधुताऽऽपत्तेश्च । 'गार्ग्यः पाचको देवदत्त' इत्यादौ प्रकृतिप्रत्यययोः पदत्वसम्पादकविधित्वाऽभावेनेतरनिरपेक्षतया प्रकृत्यर्थ-प्रत्ययाऽर्थानां बोधाऽनापत्तेश्च । [2]व्याकरणे शास्त्रमात्रस्य पदनिष्पादकत्वेन व्यावर्त्त्याऽभावाच्च । इतरत्वस्य निर्वक्तुमशक्यत्वाच्च । 'विशेषणमयोगाऽन्य-योगव्यवच्छेदकमतो नोक्तदोष' इति चेत्तर्हि त्वदुक्तदोषस्य दूरोत्सारितत्वेन त्रिमुनि-विरोधेन परिभाषाव्याकुलीभावो वृथैव । अत एव 'गवित्ययमाह' 'पश्य मृगो धावति' 'पचति-पठति भवती'त्यादौ सुबन्तत्वाऽभावेऽपि निरपेक्षकर्मत्वादिबोधः । ध्वनितञ्चेदं सर्वनामसञ्ज्ञासूत्रस्थ-कौस्तुभ-तत्त्वविवेकटीका-विवरणयोः पितामह-चरणैः । पदोद्देश्यको विधिः पदविधिः । उद्देश्यकोटौ पदगन्ध इति यावत् । सामर्थ्यञ्चैकार्थीभावः । 'इयञ्च परिभाषा सुप्-तिङ्विभक्ति-लकारविध्यादौ, षष्ठाऽध्यायादौ, कृञनुप्रयोगे च न प्रवर्त्तते' इत्याद्यग्रे निरूपयिष्यामः । 'सुबा-मन्त्रिते' इतिसूत्रे 'समर्थ'ग्रहणमनुवर्त्तते । तत्र शब्दाऽधिकाराद्व्यपेक्षारूपमेव सामर्थ्यम् । एतदर्थमेव ह्यत्र परिभाषायाः प्रणयनम् ।

---

**लघुशब्दरत्नः**

नित्याधिकारे इति । उपपदमतिङ (२।२।१९) इत्यत्रेत्यर्थः । नियत इति । [3]अप्रतिबद्धप्रसरः । नित्य इत्यर्थः । एवञ्चाऽधिकारप्राप्तमपि नित्यपदं तदंशे न सम्बध्यते इति

---

[1] 'पदमिति इतरनिरपेक्षाऽर्थं' इति ख. पाठः ।

[2] 'व्याकरणशास्त्रमात्रस्य' इति पाठान्तरम् ।

[3] 'अप्रतिबद्धप्रसर इत्यर्थः' इति ख. पाठः । 'अतिप्रबद्धप्रसरो नेत्यर्थः' इति क. पाठः ।

धृषते'त्यादौ समासाऽदर्शनात् । अत एव भाष्यकृता 'सहे'ति योगविभागेनाऽयं साधितः । यथोत्तरं मुनीनां प्रामाण्यमिति भावः । स चेति । एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्यते[1] । एतच्च सम्प्रदानसञ्ज्ञासूत्रे पदमञ्जर्यां स्पष्टम् । यदि हि लोकेऽपि स्यात्तर्हि 'अभिप्रैती'त्यादौ समासात्स्वादयः स्युः, 'पचतिकल्पमि'त्यादौ तद्धिताऽन्ताद्यथा । न च लिङ्गसर्वनामनपुंसकताऽभ्युपगमेन निर्वाहः । [2]'यत् प्रकुरुते' इत्यादौ ह्रस्वाऽऽपत्तेः । 'प्रकुर्वीरन्नि'त्यत्र नलोपाऽऽपत्तेश्च । निर्देशादिति । अन्यथा हि प्रथमानिर्दिष्टत्वाऽविशेषेऽप्युपसर्जनसञ्ज्ञाया अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः । इवेनेति । अयमपि समासः पूर्ववत् क्वाचित्क एव । तेन 'जीमूतस्येवे'त्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः, 'उद्बाहुरिव वामन' इत्यादौ व्यस्तप्रयोगश्च[3] सङ्गच्छते ।

---

**बृहच्छब्दरत्नः**

व्यस्तेति । अव्ययग्रहणाद्यथाऽर्थग्रहणात्सादृश्यग्रहणाद्वाऽव्ययीभावस्तु न । 'इवेने'त्यनेन बाधात् । एतस्याऽनित्यत्वेऽपि तस्य नित्यत्वाच्च । 'तत्र तस्येवे'ति ज्ञापकाच्च ।

---

**लघुशब्दरत्नः**

भावः । योगविभागेनेति । तस्य च वैकल्पिकत्वं [4]वक्ष्यते । एतदपीति । 'छन्दस्येवे'त्येतदित्यर्थः । एतदुत्तरं 'छन्दस्येवे'ति [5]प्रतीकपाठो लेखकप्रमादात् । एतच्चेति । उक्तं च्छान्दसत्वमित्यर्थः । निर्वाह इति । [6]'शयितव्यमि'त्यादेः क्रियावाचकस्याऽपि नपुंसकत्ववदस्याऽपि प्रातिपदिकत्वे, तत्त्वेन लुका तदश्रवणादित्यर्थः । अन्यथेति । 'सुबन्तमि'त्यनेनाऽन्यतरस्यैव ग्रहणे विनिगमकाऽभावादिति भावः । पूर्वशब्दस्यैवेति । तस्य कालवाचकत्वेन क्रियायां विशेषणत्वादिति भावः । क्वाचित्क इति । कादाचित्क इत्यपि बोद्धव्यम् । योगविभागसिद्धत्वात् । तदनुवादेन विभक्त्यलोपस्यैवाऽनेन विधानमिति भावः । व्यस्तप्रयोग इति । समासे हि इवस्य परनिपातः स्यादिति भावः । [7]अलोपश्च प्रत्यासत्त्या

---

[1] इत उत्तरं 'छन्दस्येवेति' इति प्रतीकपाठो घ. ङ. वर्त्तते । मुद्रितेषु तु न दृश्यते ।

[2] 'यत्' इति मुद्रितेषु नास्ति ।

[3] 'प्रयोगोऽपि' इति मुद्रितेषु पाठः ।

[4] 'वक्ष्यति' इति मुद्रितेषु पाठः ।

[5] 'नपुंसकप्रतीकपाठो' इति ख. पाठः ।

[6] 'इह शयितव्यमित्यादेः' इति घ. पाठः ।

[7] 'अयं लोपश्च' इति क्वचिन्मुद्रिते पाठः ।

**गोस्त्रियोः (१।२।४८) । उपसर्जनं य इति । यत्तु प्राचा 'गोऽन्त-स्त्रीप्रत्ययाऽन्तयोरुपसर्जनयोरि'त्युक्तम् । तन्न । 'चित्रगुरि'त्यादौ गोशब्द-स्योपसर्जनत्वेऽपि, तदन्तस्याऽतथात्वात् । 'गौरीपतिरि'त्यादावतिप्रसङ्गाच्च ।**

**कथं[1] 'सुगोकुलं,' 'राजकुमारी-पुत्र' इति चेत् । शृणु । [2]उपसर्जनत्वस्य**

बृहच्छब्दरत्नः

अतिप्रसङ्गाच्चेति । चेन हेत्वन्तरं सूचितम् । 'गोस्त्रियोरि'तिसूत्रे स्त्रीग्रहणेन स्त्रीप्रत्ययाऽन्तं गृह्यते । प्रत्ययग्रहणपरिभाषया च तदन्तविधिः । 'उपसर्जनस्ये'ति श्रुतत्वाद् गो-स्त्रीप्रत्ययाऽन्ता-ऽन्तयोर्विशेषणम्[3] । न चैवं स्त्रीप्रत्ययस्यैव विशेषणं स्यादिति वाच्यम् । सामर्थ्यगम्यतदन्तविधेरन्तरङ्गत्वात् । गो-शब्दसाहचर्येणा-ऽप्रत्ययस्यैव विशेषणाच्च । प्रत्ययमात्रस्योपसर्जनत्वाऽभावाच्च । 'स्त्रीप्रत्यया-ऽन्ताऽन्तयोरि'त्यर्थस्य वक्तुं युक्तत्वाच्च । प्रातिपदिकग्रहणत्यागे बीजाऽनापत्तेश्च ।

[1]कथं गोकुलमिति । 'येन विधिस्तदन्तस्ये'तिसूत्रप्रवृत्त्योपसर्जनं यो गोशब्दः, उपसर्जनं यत्स्त्रीप्रत्ययाऽन्तं, तदन्तस्य प्रातिपदिकस्ये'त्यर्थस्य निष्पन्नत्वेऽपि 'स्वस्य चे'त्यनुवृत्त्या, 'तस्य चे'तिवार्त्तिकादिना वा 'उपसर्जनगोरूपं यत्प्रातिपदिकमुपसर्जन-स्त्रीप्रत्ययाऽन्तरूपं यत्प्रातिपदिकमि'त्यर्थस्य दुर्वारत्वेन ह्रस्वो दुर्वारः । अस्ति च 'राजकुमारीपुत्र' इत्यत्राऽपि 'राजकुमारी'शब्दस्य समासत्वात्प्रातिपदिकत्वम्, अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावात्स्त्रीप्रत्ययाऽन्तत्वञ्च । अत एव सिद्धान्ते 'अतिराजकुमारिरि'त्यत्र ह्रस्वसिद्धिः । एवञ्च चरमोदाहृणे तदन्तविधौ विशेषणमात्रग्रहेऽपि प्रसक्तिर्बोध्या । ननु 'कुमारीपुत्र' इत्यत्राऽपि दोषो दुर्वारः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणात् । 'षष्ठी'तिसूत्रे प्रथमानिर्दिष्ट-त्वेनोपसर्जनत्वाच्च । यत्तु 'लिङ्गविशिष्टस्यैवेहोपादानाल्लिङ्गविशिष्टपरिभाषाया अनुपस्थानमि'ति 'लुक्तद्धितलुकी'ति सूत्रे कैय्यटेनोक्तम् । तन्न । अप्रयोजकत्वात् । फलस्य स्पष्टत्वाच्च । अपि च 'अजापुत्र' इत्यत्राऽपि ह्रस्वाऽऽपत्तिः । यत्तु भाष्ये 'उभयत आश्रयणेऽन्तादिवद्भावाऽभावान्न दोष' इत्युक्तम् । तन्न । 'स्त्रीभ्यो

लघुशब्दरत्नः

समासाऽवयवविभक्तेरेव । तेन समासादुत्पन्नस्य अव्ययात् (२।४।७२) इति लुग्भवत्येव । ननु गोपदार्थस्येव 'चित्रगो' इतिसमुदायाऽर्थस्य चित्राऽभिन्नगोरूपस्याऽन्यपदार्थोपसर्जनत्व-[4]मेवेत्यरुचेराह—गौरीपतिरिति । राजकुमारीपुत्रे स्त्रीप्रत्ययाऽन्तस्य प्रातिपदिकत्वलाभाय

[1] 'कथं गोकुलम्' इति बृहच्छेखरादिषु पाठः ।

[2] 'उपसर्जनस्य' इति मुद्रितेषु पाठः ।

[3] 'श्रुतत्वाद्वा स्त्रीप्रत्ययान्ताऽन्तयोर्विशेषणम्' इति ख. पाठः । क. खण्डितोऽयं पाठः ।

[4] 'उपसर्जनत्वमस्त्येव' इति क. पाठः ।

ससम्बन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति यदा[1] उत्तरपदभूतयोर्गोस्त्रियोर्गुणीभावस्तदैव ह्रस्वत्वम्। दिशयोरिति। 'दिशो-

बृहच्छब्दरत्नः

ढगि'त्यादौ मण्डूकप्लुतेरप्रामाणिकत्वेन 'प्रातिपदिकादि'त्यनुवृत्तौ दोषाऽऽपत्तेः। 'प्रत्ययग्रहणे यस्मात्स विहित' इति वचने प्रकृतिप्रत्यययोराश्रयणेन त्वदुक्तनिषेधस्य दुर्वारत्वेन 'अतिखट्व' इत्यादौ ह्रस्वाऽनापत्तेश्च। रामशब्दे उक्तदोषोद्धाराच्चेति चेन्न। 'स्त्रिया' इत्यस्य विशेषणत्वेन 'प्रत्ययग्रहणे' इतिपरिभाषया, 'येनविधिस्तदन्तस्ये'तिसूत्रेण च 'टिड्ढाणञि'तिसूत्रे 'अण्णन्ताऽन्तात्प्रातिपदिकादि'तिवत् 'स्त्रीप्रत्ययाऽन्ताऽन्तस्य प्रातिपदिकस्ये'त्यर्थेन दोषाऽभावात्। न च व्यपदेशिवद्भावेन स्त्रीप्रत्ययाऽन्ताऽन्तत्वमिति वाच्यम्। 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधात्। 'अप्रातिपदिकेने'ति निषेधशेषे 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्ये'तिपरिभाषया स्त्रीप्रत्ययाऽन्तेऽपि निषेध' इति 'येन विधिरि'तिसूत्रे भाष्यादावुक्तत्वात्। 'स्वस्य चे'त्यादिबोधितविशेषणमात्रग्रहोऽपि व्यपदेशिवद्भावप्रवृत्तिविषय एव। न च 'प्रातिपदिकस्ये'त्यस्य विशेषणत्वमेवेति भ्रमितव्यम्। 'गोऽन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवती'त्युच्यते, न चैतदपि व्यपदेशिवद्भावेन गोऽन्तम्, 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति भाष्यविरोधाऽऽपत्तेः। न चैवं 'गोकुलमि'त्यत्राऽपि न प्राप्नोतीति वाच्यम्। 'येन विधिरि'त्यादिसूत्रस्थभाष्यादौ 'पादः पदि'त्यादीनां तदन्ते, केवले च प्रवृत्तेरुक्तत्वेन, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिरि'त्यस्यैव 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'त्यस्याऽपि विशिष्टरूपोपादाने क्वचिदप्रवृत्तिरित्यर्थस्याऽऽवश्यकत्वात्। एतेन 'गोकुलमि'त्यत्राऽपूर्वपदकगोशब्दोपन्यासः, स्त्रीप्रत्ययाऽन्तं च सपूर्वपदकमित्यत्र बीजाऽभाव' इति मन्दोक्तमपास्तमित्याहुः[2]।

ससम्बन्धिकतयेति। अत एव महासञ्ज्ञाकरणञ्चरिताऽर्थम्। तदर्थं प्रतीति। प्रत्यासत्त्येति भावः। किञ्च प्रातिपदिकाऽनुवृत्तिसामर्थ्यादुक्ताऽर्थलाभः। 'येन विधिरि'तिसूत्रे 'अन्त'शब्दश्चरमाऽवयववाचीति स्पष्टम्। तदेव ध्वनयन्नाह—उत्तरपदभूतयोरिति। गोशब्दाऽन्तं, स्त्रीप्रत्ययाऽन्ताऽन्तञ्च प्रति उपसर्जनत्वे तयोरुत्तरपदत्वमेव सम्भवतीति भावः। शास्त्रीयं चोपसर्जनत्वं गृह्यते। अत एव 'कुमारीमिच्छन्, कुमारीवाऽऽचरन् ब्राह्मणः कुमारी' 'हरितक्याः फलं हरीतकी' 'प्रकुमारी' 'प्रहरीतकी'त्यादौ ह्रस्वो न। अस्ति चाऽत्र विशेष्याऽर्थं प्रति कुमार्याद्यर्थस्य गुणीभावः। स्पष्टं चेदम् 'उपमानानि सामान्यवचनैरि'तिसूत्रे भाष्य-

लघुशब्दरत्नः

समस्तस्य पूर्वपदत्वकरणम्। उत्तरपदभूतयोरिति—स्वरूपकथनम्। उत्तरपदस्यैव तथात्व-

[1] 'यदोत्तरभूतयोः' इति छ. पाठः। 'यदोत्तरपदयोर्गोस्त्रियोः'इति मुद्रितेषु पाठः।
[2] 'इत्यप्याहुः' इति ख. पाठः।

**रि'ति हलन्तेन विग्रहेऽप्येतदेव रूपम्। दिश्शब्दस्य [1]शरदादिषु पाठाट्टच्।**

**वचनसामर्थ्यादिति। 'विभक्ती'त्यनेन हि येन सुबन्तेन सह समासस्तद्घटकीभूतैव विभक्तिर्गृह्यते। सन्निधानात्। तदर्थद्योतकश्चाऽधिरिति भावः। [2]परिशिष्टे तु 'प्रथमाऽन्तेनाऽयं समासः, षष्ठ्यन्तेन वे'त्यपि पक्षद्वयं स्थितम्। यत्तु प्राचोक्तं–'हरौ अधिकृत्ये'ति विग्रहे 'हरावधीति स्थिते' इति।**

बृहच्छब्दरत्नः

कैय्यटयोरि'त्याहुः। एतेन 'समासग्रहणाऽनुवृत्त्योत्तरपदत्वलाभ' इति मन्दोक्तमपास्तम्। निष्फलत्वात्। स्वरितत्वकल्पने मानाऽभावाच्च। 'सुन्दरौ रै-गावौ यस्ये'तिद्वन्द्वगर्भबहुव्रीहौ ह्रस्वो न। समुदायस्योपसर्जनत्वेऽपि गोशब्दस्याऽतथात्वात्। स्पष्टञ्चेदं 'स्वाङ्गाच्चोपसर्जनादि'तिसूत्रे भाष्ये। प्रागुक्त'कुमारी'शब्देन समासे 'अतिराजकुमारी'त्यत्र ह्रस्वो न। 'कुमारी'शब्दस्योपसर्जनत्वेन 'राजकुमारी'-शब्दस्य स्त्रीप्रत्ययाऽन्तत्वाऽभावात्। कैय्यटादिग्रन्थास्त्वापातरमणीया एवेति सुधियो विभावयन्तु।

दिश्शब्दस्येति। यद्यपि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपी'ति टचि, 'यस्येति चे'त्याकारलोपेन रूपं सिध्यति, तथाऽपि 'गोस्त्रियोरि'त्याद्युपन्यास उपायस्योपायाऽन्तराऽदूषकत्वात्। समासाऽन्तविषये लिङ्गविशिष्टपरिभाषाया अप्रवृत्तेङ्याप्सूत्रे भाष्ये ध्वनितत्वाच्च न दोषः। के चित्तु 'अलौकिकविग्रहवाक्ये उत्तरपदाऽवयवसमासाऽन्तप्रवृत्तौ सुब्लुकि, 'यस्येति चे'त्याकारलोपे[3], पुनः सुबुत्पत्तेः पूर्वं लिङ्गकार्यत्वेन पुनष्टाप्। न च ङीप्। उपसर्जनत्वात्। न च 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरि'ति वाच्यम्। हलन्ताऽदन्तयोर्भेदेन लक्ष्यैक्याऽभावात्। लक्षणभेदाच्च। समासाऽन्ताऽन्तः पुनरुक्त्युक्त्यैव। बहिर्भूतलिङ्गनिमित्तह्रस्वाऽपेक्षयोपसर्जनह्रस्वोऽन्तरङ्गः। एवञ्च मूलग्रन्थो युक्त एवे'ति वदन्ति। एतेन 'नदीपौर्णमासी'तिसूत्रस्थमनोरमोक्तरीत्या नपुंसकह्रस्वत्वेन रूपसिद्धौ 'गोस्त्रियोरि'त्युपन्यासो व्यर्थ' इति परास्तम्।

हरावधिकृत्येति। न च 'क्त्वातोसुन्कसुन' इतिसूत्रेण 'कृद्ग्रहणे गतिकारकपूर्वस्ये'तिपरिभाषयाऽव्ययत्वे, 'अव्ययमि'ति योगविभागान्नित्यसमासः स्यादिति

लघुशब्दरत्नः

**सम्भवात्। टजिति। 'यतष्टच्, अत एतदेव रूपमि'त्यन्वयः। संनिधानादिति। उपस्थितत्वादित्यर्थः। [4]परिशिष्टे त्विति। अत्राऽरुचिः स्पष्टैव। 'द्योतकसमभिव्याहारे**

[1] 'शरदादित्वात् टच्' इति मुद्रितेषु पाठः।

[2] कातन्त्रपरिशिष्टो व्याकरणग्रन्थविशेषः।

[3] 'अकारलोपे' इति ख. पाठः।

[4] कातन्त्रपरिशिष्टो नाम व्याकरणग्रन्थविशेषः।

तन्न । नित्यसमासत्वेन विग्रहाऽयोगात् । यदाहुः–'अविग्रहो नित्यसमास' इति । नन्वस्वपदविग्रहोऽपि स्वीक्रियते—'कुम्भं करोती'ति यथा, अयमपि तथाऽस्तु, 'अधिकृत्ये'ति ल्यबन्तस्य समासाऽप्रविष्टस्य सत्त्वादिति चेन्न । समासाऽर्थलेशमपि अबोधयतस्तस्य विग्रहे प्रवेशस्यैवाऽसम्भवात् ।

यत्तु व्याचख्युः–'विग्रह इव विग्रहः = अर्थकथनमात्रम् । [1]तेनाऽविग्रहत्वान्नित्यसमासत्वमविरुद्धम् । अत एव समासप्रकृतिभूतमलौकिकं वाक्याऽन्तरं दर्शयति–'हरौ अधीति स्थिते इती'ति । अत्रेदं वक्तव्यम्–'विग्रह इवे'त्यसङ्गतम् । अर्थकथनवाक्यस्यैव विग्रहत्वेन, ततो भेदाऽभावात् । 'अर्थकथनमात्रमि'त्यपि न । ल्यबन्तेन समासाऽर्थाऽसंस्पर्शात् । [2]यच्च 'हरौ अधीत्यलौकिकमि'त्युक्तम् । तदपि न । तत्र 'हरि ङी'त्यस्यैव प्रवेशात् । 'अन्तरङ्गानपी'ति न्यायात् । अन्यथा समासे हरिशब्देकारस्य दुर्लभत्वाऽऽपत्तेश्च । यदपि व्याचख्युः—'अलौकिकत्वादेवाऽधिशब्देनाऽभिहितेऽपि सप्तमी । अन्यथा सा न स्यात् । अनभिहिताऽधिकारादि'ति । तदप्यापाततः । अलौकिकत्वं हि

---

**बृहच्छब्दरत्नः**

वाच्यम् । योगविभागस्येष्टसिद्ध्यर्थत्वेन क्काचित्कत्वात् । 'विभक्ती' त्यादिसाहचर्येण क्रियावाचकाऽव्ययस्यैव ग्रहणाच्च । अविग्रह इति । एतत्समासस्य नित्यत्वेन तद्घटकीभूतशब्दानां तदभावो वक्तुमशक्य इति भावः । नन्वर्थकथनं विस्तरेण शब्दाऽन्तरेणाऽपि भवति, विग्रहस्तु न, स्पष्टञ्चेदम् 'ऊकालोऽजि'त्यादावाकरग्रन्थे इत्यरुचेराह—अर्थकथनेति ।

हरि ङीति । 'अनुबन्धविशिष्टस्यैव विधानमि'ति ङमुट्सूत्रप्रतिपादितपक्षे वक्ष्यमाणन्यायेन ङकारेत्त्वाऽभावः । यत्तु 'समासाऽनुरोधेनाऽधिशब्दस्य पूर्वत्वं वाक्ये युक्तमि'ति । तन्न । एकाऽर्थीभावसामर्थ्यस्याऽलौकिकविग्रहे आवश्यक-

---

**लघुशब्दरत्नः**

षष्ठ्या अप्राप्तेश्च । वाचकत्वेऽपि संनिधानत्यागे न मानमि'ति । विग्रहाऽयोगादिति । एवञ्च 'विग्रहे' इति तदुक्तिरसङ्गतेति भावः । प्रवेशस्यैवेति । एवञ्च तादृशविग्रहस्वरूपकथनमसङ्गतमिति भावः । असंस्पर्शादिति । एवञ्च तथाऽर्थकथनतवस्यैवाऽभावेन तन्मात्रत्वोक्तिरसङ्गतेति[3] भावः । दुर्लभत्वापत्तेरिति । कृताऽत्वेन कृतैकादेशौकारस्यैव

---

[1] 'तेनाऽविग्रहात्' इति ङ. पाठः ।

[2] 'यच्च' इति घ. ङ. नास्ति ।

[3] 'अत्यन्ताऽसङ्गतेति भावः' इति घ. पाठः ।

नित्यविध्यन्तरप्राप्तिविषयत्वेनाऽपरिनिष्ठितत्वम् । न त्वेतावन्मात्रेणाऽननुशिष्टायाः सप्तम्यास्तत्र प्रवेशः सूपपादः । अतिप्रसङ्गात् । यत्तु तत्पौत्रेण व्याख्यातं–'तिङ्कृत्तद्धितसमासैरिति परिगणनादधिनाऽभिहितेऽपि सप्तमी'ति । तन्न । परिगणनस्याऽऽकरे प्रत्याख्यातत्वात् । 'कर्मणि द्वितीये'ति सूत्रे स्वयमपि तथैवोक्तत्वात् । 'क्रमादमुं नारद इत्यबोधि स' इत्यादि प्रयोगविरोधाच्च ।

---

**बृहच्छब्दरत्नः**

त्वेनाऽन्वितप्रयोगस्य युक्तत्वात् । ङ्यब्ध्योः समानाऽर्थत्वेन 'द्वावि'त्यादाविव अव्यवहितप्रयोगस्यैव युक्तत्वाच्च । नारद इति । स्यादेतत् । 'नारद इत्यबोधी'त्यादौ पदसंस्कारपक्षे प्रातिपदिकाऽर्थे प्रथमा । 'अमुमि'त्यत्र तु वाक्यसंस्कारपक्ष एव । एवञ्चेतिशब्देन कर्मत्वाऽनुक्तावपि न क्षतिः । किञ्च निपातेन कर्मत्वोक्तौ कर्मसञ्ज्ञाया अर्थसञ्ज्ञात्वेन 'अमुमि'त्यत्र द्वितीयाऽनापत्तिरिति चेन्न । युष्मत्सामानाधिकरण्यादौ प्रथमपुरुषाद्यापत्तेः । अनभिहितसूत्रवैयर्थ्याऽऽपत्तेश्च । 'वा लिप्सायां' 'विभाषाऽकर्मकादि'त्यादिभिरीदृशे विषये पदसंस्कारपक्षाऽभावस्य बोधनाच्च । साक्षान्नामाऽर्थप्रकारकबोधस्याऽव्युत्पन्नत्वाच्च । 'प्रातिपदिकाऽर्थ'सूत्रस्थ'मात्र'ग्रहणेनाऽसाधुत्वबोधनाच्च । 'कृञ्चाऽनुप्रयुज्यते लिटी'तिसूत्रस्थभाष्याद्युक्तरीत्या 'गवामश्वेषु स्वामी'त्यादिवदसाधुताऽऽपत्तेश्च । 'इति'शब्दस्य वैयर्थ्याऽऽपत्तेश्च । तस्मान्निपातेन कर्मत्वाऽभिधानमावश्यकम् । 'इति'शब्देन विभक्तिवत्समभिव्याहृतपदाऽर्थमात्रनिष्ठकर्मत्वाऽभिधानादमुमित्यत्र न दोषः । [1]अध्याहृतक्रियायामन्वयः । नन्वेवमधिहरीतिवद् द्वितीयाया, नित्यसमासस्य चाऽऽपत्तिरिति चेत् । तन्न । 'साकल्याऽन्तेषु' इति वक्तव्ये 'वचन'ग्रहणाद् विभक्त्यर्थमात्रवृत्तेरेवाऽव्ययस्य ग्रहणम् । 'इति'शब्दस्य तु सर्वनामवत्प्रकृतपरामर्शकत्वान्न दोष इति कौस्तुभे पितामहचरणाः । तत्रेदमवधेयम्—यद्यपि 'इतिः प्रकरणे, हेतौ, प्रकाशादिसमाप्तिषु । निदर्शने, प्रकारे स्यादनुकर्षे च संमतमि'ति विश्वकोशादावनेकेऽर्था उक्तास्तथाऽपीहाऽन्येषामसम्भवेनाऽनुकर्षरूपाऽर्थ एव गृह्यते । केचित्तु 'प्रकाररूपाऽर्थ एवेह गृह्यते । प्रकृते च योग्यताबलान्नारदत्वमेव प्रकारतया विवक्षितम् । तत्रेतिशब्दो वाचको, द्योतको वेत्यन्यदेतत् । इदमेवाऽभिसन्धाय 'इति'शब्दः पदार्थविपर्यासकृदि'ति भाष्यादिकृतां व्यवहारः ।

---

**लघुशब्दरत्नः**

लुकाऽपहारेणेति भावः । वैकल्पिकेडादिविषये 'सेद्धा' इत्यादावलौकिकत्ववारणाय–नित्येति । आकरे—अनभिहितसूत्रे भाष्ये । परिगणनफलस्य 'भीष्मं कटमि'त्यस्याऽन्यथासिद्धिस्तत्रोक्ता ।

---

[1] 'अध्याहृतक्रियादावन्वयः' इति वा पाठः । 'क्रियायां दान्वयः' इति ख. पाठः ।

द्वितीयापञ्चम्योरिति। एतच्च रक्षितग्रन्थे स्पष्टम्। यत्तु वदन्ति—'चैत्रस्य वनादाराद्'ित्यादौ सापेक्षत्वादसमासे चरितार्थत्वाद्विधानसामर्थ्यं नास्ती'ति। तच्चिन्त्यम्। नित्यसमासस्य न्याय्यत्वे सति 'चैत्रस्ये'त्यादिविशेषणप्रयोगस्यैवाऽसम्भवात्। उक्तं हि भाष्ये—'वृत्तस्य विशेषणयोगो ने'ति। ननु 'सविशेषणानां वृत्तिर्ने'त्यपि भाष्ये उक्तमिति चेत्। सत्यम्। अनित्यसमासविषयं तत्। नित्यसमासस्याऽपि सविशेषणेष्वप्रवृत्तौ 'महतः कुम्भस्योपे'त्यापद्येत[1]। यत्तु प्राचा 'कृष्णस्योपे'त्युक्तम्। यच्च व्याचख्युः—'ईदृशे प्रक्रियावाक्ये स्थिते' इति। तदुभयमपि प्रागुक्तरीत्या प्रामादिकमेव।

---

**बृहच्छब्दरत्नः**

एतेन 'गवित्ययमाहे'त्यादि व्याख्यातम्। शब्दस्याऽपि जातेरिव व्यक्तिविशेषणतया भानाऽङ्गीकारात् प्रकारे 'इति'शब्दस्य पर्यवसानादि'त्याहुः। 'तत्र तेनेदमिति सरूपे' 'तदस्य तस्मिन् स्यादिती'इत्यादावितिशब्दः प्रकाशे, प्रकर्षे, निदर्शने वा। तत्त्वञ्च लोकप्रसिद्धत्वम्। निदर्शनञ्च लौकिकानामेव। न च 'नारद इती'त्यत्र 'अव्ययमि'तिविभक्तसूत्रेण नित्यसमासाऽऽपत्ति'रिति वाच्यम्। योगविभागस्येष्टसिद्ध्यर्थत्वेन, 'तस्मिन्निती'त्यादिनिर्देशैश्च' 'इति'शब्देऽप्रवृत्तेरिति दिक्।

एतच्चेति। ननु मध्याऽर्थक'समया'शब्दयोगे द्वितीयाया, आदराऽर्थकाऽऽराच्छब्दयोगे पञ्चम्याश्च चरिताऽर्थत्वेन सामर्थ्याऽयोगात्समासो दुर्वार इति चेन्न। 'अनुयत्समये'त्यसमस्तनिर्देशविरोधाऽऽपत्तेः। न च 'समया'शब्दो मध्याऽर्थक इति वाच्यम्। वृत्ति-न्यास-पदमञ्जर्यादिमहाग्रन्थविरोधाऽऽपत्तेः। 'यन्मध्यमि'ति लघुभूतन्यासेनैवेष्टसिद्धेश्च। 'यन्मध्यमि'ति षष्ठीसमासः। न च 'यत्समये'ति षष्ठीसमासः। षष्ठ्या दुर्लभत्वात्। 'पूरणगुणे'तिनिषेधात्। अव्ययीभावस्याऽनित्यत्वाऽऽपत्तेश्च। अव्ययाऽर्थप्राधान्येन तस्यैव युक्तत्वाच्च। न चेदमव्ययस्याऽनुकरणं, नाऽव्ययम्, अव्यययोगे विहितविभक्तिः समीपाऽर्थेऽपि। अत एव द्वितीया—ऽव्ययीभावौ नेति वाच्यम्। शब्दपरत्वाऽऽपत्त्याऽनन्वयाऽऽपत्तेः। विभक्तिश्रवणाऽऽपत्तेश्च। तच्च ज्ञापकं सामान्याऽपेक्षम्—'समीपाऽर्थकाऽन्याऽर्थकाऽव्यययोगे विहितविभक्तिः समीपाऽर्थेऽपि'। एवञ्च पञ्चमीविधानसामर्थ्यमपि सूपपादम्। 'निकषा'शब्दः समीपाऽर्थकः, तत्साहचर्यात् 'समया'शब्दोऽपि तदर्थ एव। एवञ्च द्वितीयाविधानस्य सामान्याऽपेक्ष-

---

**लघुशब्दरत्नः**

रक्षितग्रन्थे इति। अत्राऽरुचिबीजन्तु 'मध्याऽर्थकसमयायोगे द्वितीयाविधानस्य, दूरार्थकाऽऽराच्छब्दयोगे पञ्चमीविधानस्य चारितार्थ्य'मिति। प्रागुक्तरीत्या—'अधिहरी'-

---

[1] 'इत्याद्यापद्येत' इति मुद्रितः पाठः।

**सम्प्रति नेति ।** 'सम्प्रती'त्यव्ययमिदानीमित्यर्थे । 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथे'त्यमरः । तच्चाऽधिकरणशक्तिप्रधानत्वात्क्रियापदेनैवाऽन्वयाऽर्हम् । निषेधोऽपि क्रियाया एव । तदेतदाह—युज्यते इति ।

**असम्प्रतीति ।** [1]वृत्तौ तु युजिक्रियाऽन्तर्भवति, 'दध्योदन' इत्यत्र उपसेचनक्रिया यथा । यत्तु प्राचोक्तम्—'असम्प्रतीति । सम्प्रत्यभाव इत्यर्थः । अनेनोपभोग्यवस्तुनो यो वर्त्तमानः कालस्तस्यैव निषेधः क्रियते' इति । तन्न । अधिकरणस्य निषेधं प्रति प्रतियोगित्वेनाऽन्वयस्य सर्वतन्त्रविरुद्धत्वात् ।

---

**बृहच्छब्दरत्नः**

ज्ञापकत्वेन समीपाऽर्थकाऽव्ययनिमित्तविभक्तया न समास' इत्यपि वदन्ति । अत्राऽरुचिबीजन्तु 'सामान्याऽपेक्षज्ञापने दृढतरप्रामाणाऽभाव' इति । मूलग्रन्थस्त्वव्ययमितियोगविभागप्राप्तसमासाऽभावपरो बोध्यः ।

सम्प्रतीत्यव्ययमिति । उपसर्गसमानाऽऽकाराऽवयवकमखण्डमित्यर्थः । एतर्हीति । 'अस्मिन् काले' इत्यर्थे इदम्शब्दादिदमोर्हिलिति र्हिल्प्रत्ययः । 'एतेतौ रथोरि'ति सूत्रेणैताऽऽदेशः । 'अनद्यतने र्हिलन्यतरस्यामि'ति सूत्रेण र्हिल्प्रत्ययस्तु 'सर्वैकाऽन्यकिंयत्तद' इत्यनुवृत्तावपि योग्यताबलात्किंयत्तच्छब्देभ्य एव । तैरेवाऽनद्यतनकालस्य वक्तुं शक्यत्वात् । साम्प्रतमिति । 'सम्प्रती'त्यव्ययात्प्रज्ञाद्यण् । गणे निपातनान्माऽन्तत्वम् । अन्वयार्हमिति । सप्तम्युपात्ताऽधिकरणकारकस्य क्रियायामेवाऽन्वयस्य दृष्टत्वादिति भावः । क्रियाया एवेति । न चैवम् 'अविघ्नमि'त्यादावसामर्थ्यात्समासो न स्यादिति वाच्यम् । समसत्ताकाऽभावानामैक्येन आकाङ्क्षितत्वेन पार्ष्टिकाऽन्वयस्य सत्त्वाच्च, समासे क्रियाया अन्तर्भूतत्वाच्च सामर्थ्यात् । 'अविघ्नमि'त्यादौ न नञ् निषेधाऽर्थकोऽपि त्वभावाऽर्थकोऽतो न दोष' इत्यप्याहुः ।

विरुद्धत्वादिति । नित्यसमासप्रसक्त्या 'सम्प्रति ने'तिवाक्यस्याऽसाधुताऽऽपत्तेः । कारकविभक्तेरयोगाच्च । ननु सिद्धान्तेऽपि 'न पचतितरामि'त्यादौ नित्यसमासाऽऽपत्तिः । न चाऽनित्योऽर्थाऽभावे विहितसमासः, व्यृद्ध्यत्ययग्रहणात् । अत एव 'घटः पटो ने'त्यत्राऽन्योन्याऽभावे न समास इति वाच्यम् । 'अर्थाऽभावे'त्यत्र 'प्रत्यासत्ति'न्यायेन समस्यमानपदाऽर्थस्यैव ग्रहणेन व्यृद्धिग्रहण-

---

**लघुशब्दरत्नः**

त्यत्रोक्तया । अधिकरणशक्तीति । कालवाचकत्वादित्यपि बोध्यम् । क्रियापदेनैवेति । कर्त्तृकर्मद्वारेति भावः । निषेधोऽपीति । अत्यन्ताऽभावाऽर्थकनञः [2]क्रियाऽऽन्वयित्वव्युत्पत्ते-

---

[1] 'समासवृत्तौ तु' इति मुद्रितेषु पाठः ।

[2] 'क्रियाऽन्वयव्युत्पत्तेः' इति घ. पाठः ।

न हि 'भूतले घटो नास्ती'त्यनेन भूतलं निषिध्यते इति कश्चिदभ्युपैति, न वा युक्तिसहमित्यास्तान्तावत् ।

इतिहरीति । स्वरूपपरेण षष्ठ्यन्तेन हरिशब्देन सह प्रकाशाऽर्थस्य 'इति'-शब्दस्य समासः । प्रतिशब्दस्येति । यत्त्वाहुः—'ग्रामस्य वृक्षं प्रती'त्यत्र सापेक्षत्वेन समासाऽभावे द्वितीयाविधानं सावकाशमि'ति, तत्प्रागेव दूषितम् ।

बृहच्छब्दरत्नः

स्याऽऽवश्यकत्वात् । 'दुर्यवनमि'त्यत्र तु न यवनानामभावः, किन्तु तदीयाया ऋद्धेरेव[1] । एतेन 'असम्प्रतिग्रहणेन क्रियानिषेधे समासाऽभावो ज्ञाप्यते' इति परास्तम् । 'निद्रा सम्प्रति न युज्यते' इत्यर्थे साधुत्वबोधनेन चारिताऽर्थ्याच्च । अत एवाऽतिनिद्रमासीदिति प्रयुञ्जानाः परास्ताः । कालाऽनन्तर्भावेऽप्यन्तरङ्गत्वा-द्वर्त्तमानकाले समासप्रवृत्तेः । इदमेवाऽभिसन्धाया'ऽस्तिर्भवन्तीपरोऽप्रयुज्यमानो-ऽप्यस्ती'ति प्राचां व्यवहारः । 'सम्प्रती'त्यस्येदानीमित्यर्थसत्त्वे तस्यैव युक्तत्वाच्च । 'अत्यय'साहचर्येणाऽभावप्रतियोगिवाचकेनैव समासाच्च । 'ध्वंसत्वञ्चाऽभावत्व-व्याप्यमखण्डमेव, 'चरमक्षणसंयोग एव वे'तिवादिनां मतेऽत्ययग्रहणस्य चारिता-र्थ्यादिति चेन्न । अर्थग्रहणसामर्थ्येन समस्यमानपदजन्यप्रतीतिविशेष्यलिङ्ग-सङ्ख्याकारकाऽन्वयिनो विरोधिनोऽभावस्य ग्रहणात् । 'व्यृद्धिशब्दस्याऽल्पाच्त-रस्य परनिपातेनाऽस्याऽनित्यत्वज्ञापनादिष्टाऽर्थलाभ' इत्यपि वदन्ति ।

दूषितमिति । ननु मूलकारोक्तमप्ययुक्तं, वीप्सायां 'वृक्षं [3]वृक्षं प्रति सिञ्चती'-त्यादौ षत्वाऽभावसम्पादनेन चारितार्थ्यात् । न ह्यत्र समासप्रसङ्गः । 'प्रति'-शब्दस्य वीप्साऽर्थकत्वाऽभावात् । क्रियाविशेषकत्वेन सुबन्तं प्रति सामर्थ्या-ऽभावाच्च । 'वृक्षमि'ति कर्मकारकमपि क्रियायामेव सम्बध्यते । वीप्सा तु द्विर्वचन-द्योत्या । अत एव 'लक्षणादिषु विषयभूतेषु कर्मप्रवचनीयसञ्ज्ञे'ति व्याख्यातं तत्राऽऽकरे इति चेन्न । उद्देश्यत्वेन 'अनुर्लक्षणे' इत्यादिवत्सञ्ज्ञिनां पूर्वनिर्देशे कर्त्तव्ये विपरीतोच्चारणमासत्तिबोधनद्वारा वीप्सायां पुनः सञ्ज्ञाविधानाऽर्थम् । एवञ्च 'प्रति'शब्देन योगे द्वितीयागर्भं वाक्यमपि । सर्वत्राऽष्टदोषदुष्टविकल्पस्या-ऽयुक्तत्वात् । अत एव 'वीप्सा'शब्दस्याऽल्पाच्तरत्वेऽपि न पूर्वपातः । न चैवं बहुलक्ष्यसंस्काराऽनुरोधेन प्रत्यादीनां द्विर्वचनद्योत्यवीप्सायां कर्मप्रवचनीय-

लघुशब्दरत्नः

रिति भावः । न वा युक्तीति । उक्तव्युत्पत्तिविरोधादिति भावः । ततो भूतलाऽऽधारक-घटाऽभावप्रतीतिस्त्वर्थीति बोध्यम् ।

[1] एवकारः ख. नास्ति ।

[2] 'इदानीमित्यर्थस्यैव युक्तत्वाच्च' इति ख. पाठः शोभनः ।

[3] द्वितीयं 'वृक्षम्' इति क. ख. नास्ति ।

हरदत्तस्त्वाह—'अर्थमर्थं प्रती'ति भाष्यकारप्रयोगाद्वाक्यमपि साधु। यद्वा नाऽत्राऽव्ययं वीप्सावृत्ति, किन्तर्हि, कर्मप्रवचनीयत्वात्सम्बन्धमवच्छिनत्ति। वीप्सा तु द्विर्वचनद्योत्ये'ति।

सहपूर्वाह्णमिति। साकल्येऽव्ययीभावः। गुणभूतेऽपीति। यदि 'सादृश्ये' इति नोच्येत, ततो यत्र सादृश्यं प्रधानं तत्रैव स्यात्, अव्ययाऽर्थप्राधान्यस्याऽव्ययीभावे औत्सर्गिकत्वादिति भावः।

---

### बृहच्छब्दरत्नः

सञ्ज्ञाऽर्थं विपरीतोच्चारणमि'ति कारकोक्ताऽर्थो न सिद्ध्येदिति वाच्यम्। विनिगमकाऽभावेनोभयज्ञापने बाधकाऽभावात्। अत एव यासुडुदात्तवचनं 'प्रत्ययाऽऽद्युदात्तत्वे आगमा अविद्यमानवद्भवन्ति,' 'आगमा अनुदात्ता' इत्यर्थद्वयस्य ज्ञापकमिति सिद्धान्तः। एवञ्च समासबाधः। एतेन 'प्रतिस्तवनं' 'प्रतिस्थानमि'त्यादौ नित्यसमासाऽङ्गीकारेऽपि षत्वाऽभावाऽर्थकतया कर्मप्रवचनीयसञ्ज्ञायाश्चारितार्थ्यमि'ति मन्दोक्तमपास्तम्। [१]स च न नित्यः। 'प्रत्यर्थमि'त्यादिसमस्तप्रयोगस्य भाष्यादौ दृष्टत्वात्। एतेन मूले 'द्वितीयागर्भं वाक्यमपी'त्यपिशब्दः। प्रतिशब्दस्यैवोपन्यासः, पर्यादीनाञ्च त्यागो निर्बीज' इत्यपास्तम्। एतेन 'मात्राऽर्थे किम्?। वृक्षं प्रति विद्योतते विद्युदि'ति मूलग्रन्थो व्याख्यातः। भाष्यपठितवाक्ये प्रतिशब्दस्य वीप्सायां, लक्षणादौ पर्यादीनाञ्च कर्मप्रवचनीयसञ्ज्ञायाश्चारितार्थ्यात्। अत्राऽस्वपदविग्रहेऽपि न दोष इति 'प्रतिजनादिभ्यः खञि'तिसूत्रे निरूपयिष्यामः।

हरदत्तस्त्विति। 'प्रति'शब्देन वीप्साया उक्तत्वेऽपि द्विर्वचनं भाष्यप्रयोगात्साधु। वीप्सायुक्तस्याऽन्यत्राऽन्वयात्कर्मत्वविवक्षया वा द्वितीये'ति कारके स्पष्टम्। अवच्छिनत्तीति। 'लक्ष्यलक्षणभावमि'ति शेषः। तथा च लक्षणाऽर्थनिमित्ताऽपि कर्मप्रवचनीयसञ्ज्ञा। अत्राऽरुचिबीजन्तु 'प्रतिशब्दस्य सम्बन्धाऽवच्छेदकत्वे तद्द्वारा सम्बन्धिन्यन्वयाद्योगविभागेन समासो दुर्वारः। अत एव 'कर्मप्रवचनीययुक्ते द्वितीया' 'अनुर्यत्समया' 'यस्य चायाम' इत्यादीनामुक्तिसम्भव' इति वदन्ति। अन्ये तु 'भाष्यादिप्रामाण्यादुत्तरसूत्राऽविषये विभक्तसूत्रस्य प्रवृत्तिरि'त्याहुः। भाव इति। तथा च 'सादृश्यमि'त्यत्र स्वार्थे ष्यञिति भावः।

---

### लघुशब्दरत्नः

भाष्यकारेति। सञ्ज्ञा तु 'प्रतिस्थानमि'त्यादौ षत्वाऽभावाऽर्थेति तदाशयः। अत्र='अर्थमर्थं प्रती'ति वाक्ये। 'प्रतिशब्दस्ये'त्यादि मूलन्तु रक्षिताऽनुसारीति बोध्यम्।

साकल्ये इति। 'पूर्वाह्णमपरित्यज्ये'त्यर्थ इति भावः।

---

[१] 'स च नित्यः' इति क. पाठः।

अन्त इति । 'इदानीमेतावान्प्रदेशोऽध्येतव्य' इति यावतः प्रदेशस्य परिग्रहः कृतस्तदपेक्षा[1] समाप्तिरिहाऽन्तो विवक्षितः । स चाऽसकलेऽप्यध्ययने भवतीति साकल्यात् पृथगुच्यते ।

---

**बृहच्छब्दरत्नः**

तत्साहचर्याद्यौगपद्यमित्यत्राऽपि स्वार्थे ष्यञ् । एतेन 'सादृश्यमि'त्यत्र तद्धितोच्चारणं व्यर्थमि'त्यपास्तम् । न चैवं 'चक्रेण युगपदि'ति विग्रहो न युज्येतेति वाच्यम् । समीपादिसाहचर्येण सूत्रोपात्ततद्धितसम्बद्धाऽव्ययस्याऽग्रहणात् । एतेन साहचर्येण 'आनुपूर्व्य'त्यत्राऽपि स्वार्थिकतद्धिताऽऽपत्तिः । न च वैयर्थ्यम् । 'यौगपद्यमि'त्यत्राऽपि समत्वादि'ति मन्दप्रतारणमपास्तम् । व्यवहितस्य तथात्वकल्पने मानाऽभावाच्च । शब्दाऽर्थसाधुत्वे सम्भवति शब्दमात्रसाधुत्वकल्पनस्याऽन्याय्यत्वेन 'यौगपद्य'साहचर्यमपि न शङ्कनीयम् । 'ज्येष्ठस्याऽऽनुपूर्व्येणे'ति तृतीया त्वनुज्येष्ठं कार्यं कृतमित्यादौ करणत्वेनाऽन्वयात् 'परिनिष्ठितविभक्त्या समास' इति बोधनाऽर्थम् । यत्तु 'तथा हर' इत्यत्र यथाऽर्थत्वेन समासो दुर्वारः । न च [2]'तथा'शब्देनोपमेयत्वद्योतनेऽपि सादृश्यस्याऽवाचकत्वमिति वाच्यम् । 'यथा'शब्देऽप्येवमेवाऽऽपत्तेरि'ति । तन्न । यथाऽर्थत्वेन यथाशब्दाऽर्थसादृश्यस्यैव[3] ग्रहीतुमुचितत्वात् । हराद्युपमेयस्य [4]'यथा'द्योत्यक्रियाद्यन्वयित्वेनाऽन्वयाऽर्थप्राधान्याऽभावाच्च । न चैवं 'यथाहरिरि'त्यत्राऽपि न स्यादिति वाच्यम् । समानाधिकरणप्रकरणे 'उपमानानि सामान्यवचनैः' 'उपमितं व्याघ्रादिभिरि'त्यादिना 'उमेयसमानविभक्तिकत्वमुपमानस्ये'त्यर्थस्य ज्ञापितत्वेन 'यथा'शब्दे एवाऽन्वयात् । वाचकत्वपक्षे ह्येषैव गतिः । द्योतकत्वपक्षेऽपि [5]हरिशब्दशक्याऽर्थस्याऽव्ययद्योत्याऽर्थं प्रत्युपसर्जनत्वात्समासप्रसक्तिरिति दिक् ।

पृथगुच्यते इति । ([6]'समुदायवाचकाः शब्दा अवयवेऽपि वर्त्तन्ते') इति न्यायेन ग्रन्थवाचकाऽग्निशब्दस्याऽवयवे वृत्तिः । तथा चाऽग्निग्रन्थस्याऽसाकल्ये-

---

**लघुशब्दरत्नः**

औत्सर्गिकत्वादिति (—७४४ पृष्ठे) । [7]'उन्मत्तगङ्गमि'त्यादौ व्यभिचारादिति भावः । नन्वग्निग्रन्थादग्रेऽप्यध्ययनमस्तीत्यत आह—इदानीमिति ।

---

[1] 'तदपेक्षया' इति मुद्रितेषु पाठः । [2] 'यथाशब्देन' इति क. पाठः ।
[3] 'यथाशब्दसादृश्यस्यैव' इति वा पाठः । 'सदृशस्यैव' इति क. पाठः ।
[4] 'यथायोग्य' इति क. ख. पाठः ।
[5] इत आरभ्य 'पृथगुच्यते इति' इत्यन्तः पाठः ख. खण्डितः ।
[6] अयं पाठोऽस्माभिरौचित्यात्पूरितः । क. ख. तु खण्डितोऽत्र ग्रन्थः ।
[7] 'उन्मत्तगङ्गा'नाम्नी नदी मध्यदेशे आगराप्रान्ते 'उटङ्ग' इत्यादिनाम्ना वर्त्तते ।

[1]साग्नीति। अग्निशब्दस्तदर्थे ग्रन्थे वर्त्तते, स तृतीयाऽन्तः समस्यते। यद्यप्यग्निना सहेति प्रयोगाऽर्हमेव, तथाऽपि साहित्यमात्रे तथा। अन्तत्वविवक्षायान्तु समासो नित्यः। अत एव 'अग्निग्रन्थपर्यन्तमि'त्यस्वपदविग्रहो दर्शितः। यत्तु 'अग्निरन्तोऽस्ये'ति प्रथमाऽन्तेन, 'अग्नेरन्तत्वमि'ति षष्ठ्यन्तेन वा विग्रह इति, प्रथमाऽन्तेन, षष्ठ्यन्तेन वा समास' इति। तन्न। सहशब्दस्याऽन्तवाचकत्वाऽभावात्। अन्तत्वस्य तु सुतरामलाभात्। तस्याऽध्ययने-

बृहच्छब्दरत्नः

ऽप्यध्ययने अन्तत्वं, सहितत्वञ्चाऽस्ति। साकल्ये तु यन्निष्ठसाकल्यं प्रतिपाद्यते तद्भिन्नाऽर्थवाचकशब्देनैव समासः। तत्साहित्यन्त्वारोपेणैव। अत एव साकल्याऽर्थे समासे समस्यमानपदार्थस्य क्रियाऽन्वये न तात्पर्यम्। अन्तवचने तु नैवम्। इदमेव सूचयितुं 'न त्वत्र तृणभक्षणे तात्पर्यमि'ति मूलकारेणोक्तम्। एतेन 'अपरित्यज्ये'त्यनन्वितमशब्दार्थञ्चे'ति परास्तम्। 'पराऽवरयोगे चे'त्यनेन क्त्वा। उत्तरक्रियामादाय वा। अन्तत्वविवक्षायामिति। अन्तेऽर्थे समासविधानेन तत्र शक्तिग्रहादिति भावः। पर्यन्तमिति—द्वितीयाऽन्तम्। ग्रन्थः—समासाऽर्थः। 'अधीते' इति क्रियायास्तु समासमध्ये प्रवेशे न किञ्चिन्मानम्। सूत्रेऽन्तशब्दस्यैवोपादानात्। 'वचन'ग्रहणसामर्थ्येनाऽन्तमात्रद्योतकाऽव्ययस्य ग्रहणाच्च। मूले निःक्रियस्य वाक्यस्याऽयोग्यत्वादधीते इति क्रियोपादानम्। अत एव 'साऽग्नि ज्ञानमि'त्यादिप्रयोगाः सङ्गच्छन्ते। न चैवं 'तदधीते' इत्यणप्रसङ्गः। वैकल्पिकत्वात्। अणपक्षे तु 'सर्वादेः सादेरि'त्यनेन लुकि 'साग्निरि'ति श्रूयमाणविभक्त्यन्तं पदं बोध्यम्। न च 'अव्ययादाप्सुप' इति लुक् शङ्क्यः। तद्धितात्पूर्वं परत्वेन, अन्तरङ्गत्वेन च 'सुपो धातुप्रातिपदिकयोरि'ति बाधित्वा 'अव्ययादाप्सुप' इत्यस्य प्रवृत्तत्वेन, पुनरप्रवृत्तेः। 'अन्तरङ्गानपी'तिन्यायस्य तु नाऽत्र प्रवृत्तिः। उभयोरपि लुक्त्वात्। किञ्च गौणत्वेनाऽव्ययत्वमेव न। ध्वनितं चेदं प्रथमद्वितीयचतुर्थभाष्ये। अग्निग्रन्थसाहित्यं द्विविधं,तदुत्तरग्रन्थाऽध्ययने,अनध्ययने च। सर्वत्र 'सह'शब्दप्रयोग इति निर्विवादम्। एवञ्च केवलाऽन्तवाचित्वं निर्मूलम्। तदेवाऽऽह—सहशब्दस्येति।

तस्येति। न हि अग्नेः अन्तत्वमधीते इति भावः।

लघुशब्दरत्नः

तदर्थे=तत्प्रतिपादके। अन्तत्वविवक्षायाम्। तस्याऽपि विवक्षायामित्यर्थः। ग्रन्थपर्यन्तमिति। तदन्तमित्यर्थः। अन्तत्वस्य सुतरामिति। प्राधान्येनेत्यर्थः। तस्येति। अन्तत्वस्येत्यर्थः। ननु सहशब्दस्याऽन्तवाचकत्वाऽभावे तेन समासो न स्यात्, 'अग्निग्रन्थपर्यन्त-

[1] 'साग्नीति' इति मुद्रितेषु त्रुटितम्।

ऽनन्वयाच्च । सहयुक्ते तृतीयाया न्याय्यत्वाच्च । 'सतृणमत्तीत्य'त्र साकल्यस्यैव 'साग्नी'त्यत्राऽन्तत्वस्याऽपि साहित्यद्योत्यतया तत्र तृतीयाऽन्तेन समासं स्वीकृत्येह तत्परित्यागस्य निर्मूलत्वाच्च । यावच्छ्लोकमिति । 'यावदि'-त्यव्ययं समस्यते । विग्रहस्तु तद्धितेनेत्यस्वपदत्वं बोध्यम् ।

बृहच्छब्दरत्नः

न्याय्यत्वादिति । अत एव 'सहयुक्ते' इत्यत्र 'युक्त'ग्रहणम् । द्योत्यतयेति । साहित्ये सति तयोः सम्भवादिति भावः । इदमेवाऽभिसन्धायाऽव्ययस्य साकल्याऽन्तवाचित्वम् । केवलाऽन्तवाचिनोऽव्ययस्याऽभावात् । 'साकल्य'शब्दे सहशब्दस्यैवोपस्थितत्वाच्च तस्यैव ग्रहणम् । यत्त्वनयैव रीत्या 'हरेः सादृश्यं सहरी'त्यत्राऽपि तृतीयाऽन्तेन समास' इति । तन्न । सादृश्ये साहित्याऽभावात् । अत एव तत्र 'द्वितीये चाऽनुपाख्ये' इत्यनेन सहस्य [1]'सभाव' इत्याहुः । 'अप्रत्यक्षीभूतपदार्थवाचके परतः सहस्य साऽऽदेश' इति तदर्थः । अस्ति चाऽत्रोपमानीभूतो[2] हरिः प्रत्यक्षीभूतस्तदाऽपीदृशप्रयोगस्य सम्भवात् । अस्तु वा 'अव्ययीभावे चाऽकाले' इत्यनेन सहस्य सः । इदमेव मनसि निधाय 'अव्ययीभावे चाऽकाले' इतिसूत्रमनुपन्यस्य 'वक्ष्यमाणेन सहस्य स' इत्युक्तं मूले । यत्तु 'वैयर्थ्याऽऽपादनपूर्वकमेवाऽत्र सामर्थ्यम् । समर्थपरिभाषया एकार्थीभावे [3]समासे, व्यपेक्षायां वाक्यस्य च सिद्धत्वेन 'विभाषे'ति सूत्रवैयर्थ्यात् । न चैवं समासादिनिषेधसूत्रादीनां वैयर्थ्यम् । 'वाक्यविशेषे एकाऽर्थीभावः, वाक्यविशेषे व्यपेक्षे'त्यर्थस्य लक्षणं विना निरूपयितुमशक्यत्वेन, तद्विषये [4]पाक्षिकैकाऽर्थीभावकल्पनवदीदृशे विषयेऽनायत्या समासादीनां दुर्वारत्वेन

लघुशब्दरत्नः

मि'ति विग्रहप्रदर्शनेन भवताऽपि तस्य स्वीकारात् । 'अग्निरन्तो यस्ये'त्यस्य त्वदुक्तविग्रहसमानाऽर्थत्वादत आह—सहयुक्ते इति । एवञ्च 'प्रथमाऽन्तेन समास' इत्यसङ्गतम् । [5]साहित्यञ्च सहशब्दाऽर्थः । तत्र च सूत्रे विनिगमनाविरहादधिकाऽर्थकसहशब्दस्य ग्रहणमिति भावः । साकल्यस्येवेति । 'यस्तृणानि भक्षयेत्स कथमन्यत्परित्यजेदि'ति प्रतीतेरिति भावः । एवञ्च यत्र 'न त्वत्र तृणभक्षणे तात्पर्यमि'ति ग्रन्थसूचितं साहित्यप्रतीतौ न तात्पर्यं, तत्राऽपि चेत्तृतीया, तर्हि यत्र तदपि भासते, तत्र कथं न तृतीयेति तात्पर्यम् । साहित्यद्योत्यतयेति । साहित्यवद् द्योत्यतया=बोध्यतयेत्यर्थः । मयूरव्यंसकादित्वात्, 'सुप्सुपे'ति वा समासः । यथाश्रुते तु ग्रन्थद्वयस्य सहाऽध्ययनेऽपि साहित्यप्रतीतिर्जायते, न त्वन्तत्वप्रतीतिरिति, तस्य तद्द्योत्यतोक्तिरसङ्गतैव स्यादिति दिक् ।

१ 'सम्भाव' इति क. ख. पाठः । २ 'उपमानभूतः' इति वा पाठः ।

३ 'समासस्य' इति वा पाठः ।

४ 'पाक्षिक-एकार्थीभावकल्पनवत्' इतिरीत्या क. ख. विसन्धिः पाठो ग्रन्थकर्तुरेव, छात्राणां सौकर्येण प्रतीत्यर्थमिति ध्येयम् ।

५ 'अन्तःसाहित्यञ्च' इति घ. पाठः ।

**विभाषा (२।१।११)** । एतदिति । न्यायसिद्धेऽर्थे लिङ्गदर्शनमिदम् । टि-घु-भादिसञ्ज्ञानामिव समाससञ्ज्ञाया अपि नित्यप्राप्तत्वाद्वचनं विना विध्यन्तराणामिव सञ्ज्ञानामपि विकल्पाऽलाभात् ।

स्यादेतत् । सुप्सुपा (२।१।४) इत्यपि तर्हि नित्यं स्यात् । न चेष्टाऽऽपत्तिः । अपसिद्धान्तात् । तथा हि चरट्सूत्रे वृत्तिकृतोक्तं-'पूर्वं भूतो भूतपूर्वः । सुप्सुपेति समास' इति । तथा शाकलसूत्रे—'सिन्नित्यसमासयोः शाकलप्रतिषेध' इत्यत्र 'नित्यग्रहणेन नाऽर्थः । इदमपि सिद्धं भवति-वाप्यामश्वो वाप्यश्व' इति भाष्यं कैयटो व्याख्यत्—'वाप्यश्व इति । 'सुप्सुपे'ति समासः । सञ्ज्ञायाम् (२।१।४४) इति समासस्य नित्यत्वात्सिद्धः प्रतिषेध' इति । तथा अनुदात्तं पदमेकवर्जम् (६।१।१५८) असिद्धवदत्र (६।४।२२) इत्यादिसूत्रेष्वपि

बृहच्छब्दरत्नः

तेषां चारितार्थ्यात् । वस्तुतस्तु वैयर्थ्यमेव । 'अव्ययं विभक्ती'त्यादिविषये व्यपेक्षारूपसामर्थ्याऽभावकल्पनवदीदृशे विषये एकार्थीभावसामर्थ्याऽभावकल्पनस्याऽपि निरूपयितुं शक्यत्वात् । न च 'विभाषे'तिसूत्रमेकार्थीभावसामर्थ्ये एव समासविकल्पाऽर्थमस्त्विति वाच्यम् । भाष्यविरोधात् । फलाऽभावाच्च । उत्सर्गप्राप्तवाक्यस्य सर्वत्र दुर्वारत्वेन, 'विभाषे'तिसूत्रस्य वैयर्थ्याऽनुद्धाराच्च । एवञ्चेदमेव सूत्रं ज्ञापयति—'प्राग्विधिष्वेकार्थीभावरूपमेव सामर्थ्यमि'ति । तन्न । भवदुक्ताऽर्थे ज्ञापितेऽपि 'विभाषे'तिसूत्रस्य प्रवर्त्तकत्व-निवर्त्तकत्वाऽसम्भवेन ज्ञापकत्वाऽयोगात् । 'यस्मिन् ज्ञापिते यस्य चारितार्थ्यं, तत्तेन ज्ञाप्यमि'ति सिद्धान्तात् । किञ्च समासप्रवृत्तियोग्यपदानां [1]व्यपेक्षास्वरूपसामर्थ्याऽभावकल्पनेन 'कुम्भस्योप' इति वारणेऽपि 'महतः कुम्भस्योप' इति प्रयोगस्य व्यपेक्षायां सामर्थ्येऽवारणात् । 'अव्ययमि'त्यादिनिमित्तकोटिप्रविष्टपदानाम् असमस्तः सहाऽप्रयोगोऽनभिधानादि'त्यर्थकल्पने तु 'कुम्भस्योप' इत्यस्याऽपि वारणेन वैयर्थ्यं स्पष्टमेवेति ध्वनयन्नाह-न्यायेति । अत्र करणेन परत्र सम्बन्धेऽपि पूर्वत्र सम्बन्धाऽभावेनाऽर्थान्न्यायसिद्धत्वम्[2] । तस्य फलमाशङ्कापूर्वकमाह—स्यादेतदित्यादिना । सिद्धः प्रतिषेध इति । ननु [3]भाष्यस्थविग्रहोऽप्यनुपपन्नः स्यात् । 'वाक्येन सञ्ज्ञाऽनवगमान्नित्यसमासत्वादि'त्यपि कुतो नोक्तमिति चेन्न । प्रकरणादिसहकृतवाक्यस्य समाससमानाऽर्थकत्वेन बाधकाऽभावात् । प्रकरणाद्य-

लघुशब्दरत्नः

न्यायसिद्धत्वमेवाऽऽह—वचनं विनेति । विकल्पबोधकशब्दं विनेत्यर्थः । नित्यत्वादिति ।

[1] 'व्यपेक्षारूप' इति क. पाठः ।

[2] 'न्यायसिद्धत्वात्' इति क. ख. पाठः । [3] 'भाष्यस्य' इति क. ख. पाठः ।

**कैयटे स्पष्टम् । अत आह—सुप्सुपेति त्विति[१] । समासेति । योगविभागेनैव सिद्धे समासे, उत्तरसूत्रैः पुनर्विधानं प्राचीनस्य काचित्कतां ज्ञापयति । एवञ्च इवेन समासस्याऽपि काचित्कत्वाद् 'उद्बाहुरिव वामन' इत्यादि सिद्धम् । 'इवेने'ति वार्त्तिकन्तु यद्यपि 'कुगती'त्यत्र पठ्यते, तथाऽपि**

---

**बृहच्छब्दरत्नः**

भावेऽर्थविशेषस्य समासेनैव बोधः । अयमेव 'वाक्येन सञ्ज्ञाया अनवगमान्नित्यसमास' इत्याकरग्रन्थानामाशयः । ध्वनितं चेदम् 'ईदतौ च सप्तम्यर्थे' इतिसूत्रे कैय्यटग्रन्थे । 'सुप्सुपे'त्यस्य नित्यत्वेऽप्यस्य प्रयोगस्यैव दुर्लभत्वेन वृत्तिग्रन्थोऽपि प्रमाणीभूतः ।

पुनरिति । न च तत्रैव मानाऽभावः । 'प्राक्कडारात्समास' इत्यधिकारसूत्रस्य वैरूप्याऽर्थकल्पने मानाऽभावात् । 'सह सुपे'त्यस्य विधेयाऽन्तराऽभावेन समासविधेयत्वेनैव विश्रान्तेश्च । 'उपपदमतिङ्' 'अनेकमन्यपदार्थे' इत्यादिविषये लक्षणाऽन्तरेण समासस्याऽप्राप्तत्वेन तस्य विधेयताया आवश्यकत्वाच्च । 'समासः' 'सह सुपा' 'सोऽव्ययीभाव' इति लघुभूतन्यासेनैव विधेयत्वोद्देश्यत्वयोः सिद्धेः 'प्राक्कडारात्समास' इति सूत्रस्यैव मानत्वाच्च । अनुवादबलादेवाऽव्ययीभावादिसञ्ज्ञाभिः समावेशे सिद्धे, 'प्राक्'पदाऽऽवृत्त्यादिकं नाऽऽश्रयणीयमिति महल्लाघवम् । विधिविषयता चाऽनेकेषां नास्तीत्यपरमनुकूलम् । वस्तुतस्त्वव्ययीभावादिविधौ समासस्योद्देश्यत्वे तद्बोधिकाऽऽनुपूर्वी गुरुभूताऽपि कर्त्तुं युक्ता । प्रामाणिकगौरवस्याऽदोषत्वात् । न चैवं 'प्रथमानिर्दिष्टमि'तिसूत्रस्याऽप्राप्तिः, समासविधायकशास्त्रेऽव्ययादीनां प्रथमानिर्दिष्टत्वाऽभावादिति वाच्यम् । समासशास्त्रलक्षणायां तात्पर्यग्राहकनिर्दिष्टग्रहणस्यैवा'ऽव्ययमि'त्यादिशास्त्रग्रहणे मानत्वात् । समासोद्देश्यकशास्त्रग्रहणेऽपि 'अनन्तरस्ये'ति न्यायेना'ऽव्ययमि'त्यादिग्रहणस्यैव युक्तत्वात् । तत्र 'समास' इत्येकं सूत्रम् । तत्र 'सुबि'त्यनुवर्त्तते । अन्वर्थसञ्ज्ञाबलादेकसुबन्तस्य तु न । इदञ्चोत्तरसूत्रेषु उद्देश्यसमर्पणाऽर्थमेव । तदर्थत्वेना-

---

**लघुशब्दरत्नः**

वाक्येन सञ्ज्ञाऽनवगमान्नित्यसमाससदृशत्वेन नित्यत्वादित्यर्थः । पुनर्विधानमिति । समाससञ्ज्ञाया इति भावः । अन्यथा [२]तद्विहितसमाससञ्ज्ञाऽनुवादेनाऽव्ययीभावादिसञ्ज्ञामेव विदध्यात् । अत्र च व्याख्यानमेव शरणं वृद्धानाम् । न च तत्सञ्ज्ञाविधानमव्ययादीनां [३]समासशास्त्रप्रथमानिर्दिष्टत्वसंपादनेनोपसर्जनसञ्ज्ञाऽर्थं चरितार्थमिति, कथं ज्ञापकमिति

---

१ 'सुप्सुपेतीति' इति मुद्रितेषु पाठः ।

२ तद्विहितसञ्ज्ञानुवादेन' इति क. पाठः । 'तद्विहितसमासानुवादेन' इति घ. पाठः । 'तद्विहितसमाससञ्ज्ञानुवादेन' इति मुद्रितेषु पाठः ।

३ 'समासशास्त्रे प्रथमा' इति पाठः ।

'सुप्सुपे'त्यत्रत्यमेव नित्याऽधिकारे स्मारितमि'ति कैयटः। एवं स्थिते इवेन समासस्य छान्दसत्वं कल्पयन्तः प्रत्युक्ताः। 'जीमूतस्येवे'त्यत्र बह्वृचैः समासाऽभ्युपगमेऽपि, तैत्तिरीयैर्व्यस्तस्यैव पाठादिति दिक्।

**अपपरिबहिः (२।१।१२)।** अत एव ज्ञापकाद्बहिर्योगे पञ्चमी।

---

बृहच्छब्दरत्नः

ऽऽवश्यकत्वेऽन्यत्र प्रवृत्तौ गौरवात्। उत्तरसूत्राऽऽरम्भसामर्थ्याच्च। लक्ष्याऽनुरोधेन प्रवृत्त्यङ्गीकारे क्षत्यभावाच्च। यथान्यासेऽपीदमावश्यकम् 'सहे'तियोगविभागस्तु मूले एव स्पष्टः।

'प्राक्कडारादि'त्यधिकारसूत्रम्। तत्र 'कडाराः कर्मधारये' इत्येतदुत्तरं 'समास' इत्यस्य सम्बन्धे फलाऽभावात् 'प्रागि'त्यर्थलाभेन, आवृत्त्या वा पूर्वं समाससञ्ज्ञा। तेनाऽव्ययीभावादिसञ्ज्ञाभिः समावेशः सिध्यतीति स्पष्टं कौस्तुभादौ। इदञ्च फलं न 'सह सुपे'तिसूत्रे। अव्ययीभावादिविनिर्मुक्तविषये समाससञ्ज्ञामात्रविधानात्। उत्तरत्र तु समाससञ्ज्ञासहितसञ्ज्ञाऽन्तरम्।

स्मारितमिति। पूर्वोक्तस्योत्तरत्र स्मरणमुचितमिति भावः। व्यस्तस्यैवेति। नित्यत्वविशिष्टं छान्दसत्वमयुक्तमिति भावः।

दिगिति। दिगर्थस्तु 'इव'समासे समासगां श्रौतीमुपमामुदाहरतामालङ्कारिकाणां प्रतिकूलत्वञ्च, 'हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीमि'ति प्रयोगविरुद्धञ्च। 'मातेवे'त्यस्याऽसमस्तत्वे 'माते'ति प्रथमाऽन्तस्याऽनन्वयाऽऽपत्तिः। असाधुत्वाऽऽपत्तिश्च। 'उपमानानि सामान्यवचनैः' 'उपमितं व्याघ्रादिभिरि'त्यादिभिरेकविभक्तित्वबोधनात्। 'अनभिहिते' 'विभाषाऽकर्मकात्' 'वा लिप्सायामि'त्यादिविरोधेन पदसंस्कारपक्षस्याऽनङ्गीकाराच्च। समस्तत्वे तु न दोषः। 'प्रथमान्तेन समास' इतिवदता भाष्यकारेण क्वचित्पदसंस्कारपक्षस्याऽपि बोधनादित्याहुः। 'मातेवे'ति समस्तं प्रथमाऽन्तम्, उत द्वितीयाऽन्तम्?। नाऽऽद्यः। विभिन्नविभक्तिकयोरनन्वयाऽऽपत्तेः। नाऽन्त्यः। इवशब्दाऽन्तस्याऽव्ययत्वेन कारकत्वाऽयोगात्। अन्यथा 'इव'शब्दाद् द्वितीयोत्पत्त्या त्वदभिमताऽर्थसिद्धौ, समस्तत्वकल्पनस्य निर्बीजत्वाऽऽपत्तिः। अपि च कारकयोगस्येव लिङ्गयोगस्याऽपि सम्भावितत्वेन टाप् दुर्वारः। 'हितकारिणी'शब्देन कर्मधारये तु न कश्चिद्दोष' इत्याहुः।

अपपरी परस्परसाहचर्याद्वर्जनाऽर्थौ। तौ च कर्मप्रवचनीयौ। तद्योगे

---

लघुशब्दरत्नः

वाच्यम्। तत्र सूत्रे 'समासे' इत्यस्य [1]'समाससञ्ज्ञाव्याप्यसञ्ज्ञाविधौ प्रथमानिर्दिष्टमि'त्यर्थे बाधकाऽभावादिति दिक्। इवेन समासस्य क्वाचित्कत्वे हेतुमाह—जीमूतस्येवेति।

अत एव ज्ञापकादिति। बहिर्योगे पञ्चम्या समासविधानाज्ज्ञापकादित्यर्थः।

---

[1] 'समासत्वव्याप्य' इति मुद्रितेषु पाठः।

ज्ञापकसिद्धं न सर्वत्र । तेन 'करस्य करभो बहिरि'ति सिद्धम् । आबालमिति । यत्तु 'आ परमाणोः, आ च भूगोलकमि'ति किरणावल्यां प्रयुक्तं, तत्प्रामादिकम् । समासमध्ये [1]चकारप्रयोगाऽसम्भवात् । [2]'आ च भूगोलकादि'ति तु पाठ्यम् । यं पदार्थमिति । सूत्रे [3]तु 'यदि'ति सामान्ये नपुंसकम् । अव्ययं विभक्ति (२।१।६) इत्यनेन सिद्धे विभाषाऽर्थं सूत्रम् । तेन पक्षे 'वनस्याऽनु' इत्युदाहार्यम् । अनुगङ्गमिति । इहाऽऽयामो, लक्षणत्वञ्चा-

बृहच्छब्दरत्नः

'पञ्चम्यपाङ्परिभिरि'तिवचनात्पञ्चम्येव । किञ्च पञ्चमीग्रहणाऽभावे 'लक्षणप्रतिपदोक्त'परिभाषयाऽपपरिनिमित्तसुबन्तमेव ग्रहीष्यते । [4]अपपरिसाहचर्यादुक्तपरिभाषया चाऽञ्चूत्तरपदलक्षणपञ्चम्यन्तस्यैव ग्रहणम् । एवं स्थिते 'पञ्चम्ये'ति व्यर्थमित्याशङ्कयाऽऽह—अत एवेति (७५० पृष्ठे) ।

वनस्याऽन्विति । षष्ठ्यर्थः सामीप्यं, लक्ष्यलक्षणभावश्च । लक्षणत्वञ्च सामीप्यस्यैव । अत एव च 'वन'शब्दान्न द्वितीया । तस्य कर्मप्रवचनीययुक्तत्वाऽभावात् । तद्युक्तत्वन्तु तद्द्योत्यसम्बन्धाऽऽश्रितत्वम् । वन-गङ्गादीनां लक्षणत्वव्यवहारस्तु परम्परया बोध्यः । 'अग्निमभी'त्यादौ पूर्वसूत्रविषये तु प्रकृत्यर्थस्यैव लक्षणत्वम् । किञ्च 'कर्मप्रवचनीययुक्ते द्वितीये'त्यनेन लक्ष्यलक्षणभावसम्बन्धनिमित्तषष्ठ्या बाधेऽपि, सामीप्यसम्बन्धनिमित्तषष्ठ्या बाधो वक्तुमशक्यः । प्रत्यासत्त्या, 'येन नाप्राप्ति'न्यायेन च तस्या एव बाधात् । परत्वात्, अर्थमात्रनिमित्तकत्वेनाऽन्तरङ्गत्वाच्च 'अपवादो यद्यन्यत्र चरिताऽर्थस्तर्ह्यन्तरङ्गेण बाध्यते' इति न्यायेन षष्ठ्या द्वितीयाया बाधात् । 'अग्निमभी'त्यादौ त्वाभिमुख्यस्य[5] प्रतीतावपि, सम्बन्धत्वेन विवक्षाऽभावान्न दोषः । अत एव 'गङ्गाया अनु' इति व्याख्यातम् । स्वनिष्ठदैर्घ्यसदृशदैर्घ्यवत्तासम्बन्धे 'गङ्गाया' इति षष्ठी । तत्र च लक्षणत्वं गङ्गानिष्ठदीर्घत्वस्य । तत्र चाऽनुस्तात्पर्यग्राहक इति ध्वनयन्नाह—इहेति । यद्यप्यव्ययाऽर्थप्राधान्येऽव्ययीभावस्तथाऽपीह प्रकरणे बहुव्रीहिविषये-

लघुशब्दरत्नः

लक्षणत्वं वस्तुसन्निमित्तं, न तु तेन सम्बन्धेनाऽन्वयः । तदाह—अव्ययमिति । अनोः समीपाऽर्थत्वादिति भावः । वनस्यान्विति । कर्मप्रवचनीयसञ्ज्ञा तु नाऽत्र । तद्द्योत्येन लक्ष्यलक्षणभावेनेतरत्राऽन्वयाऽभावात् । 'वनसमीपमि'त्येव बोधादिति भावः । तेन सम्बन्धेना-

[1] 'च'प्रयोगाऽसम्भवात्' इति ङ. पाठः ।

[2] 'आ च' इति ङ. नास्ति । 'आ भूगोलकात्' इति पाठान्तरम् ।

[3] 'तुः मुद्रितेषु नास्ति ।

[4] 'अपपरी' इति क. ख. पाठः ।

[5] 'अप्रतीतावपि' इति ख. पाठः ।

ऽनुना द्योत्यते। लक्ष्यन्तु समासार्ऽथः। अत एव [१]च वाराणस्या समानाधिकरण्यम्। एवं स्थिते फलितमाह—गङ्गादैर्घ्येति।

**वाराणसीति।** वरञ्च तदनञ्च वराऽनः = श्रेष्ठोदकम्। तस्याऽदूरभवा नगरी। अदूरभवश्च (४।२।७०) इत्यण्। आदिवृद्धिः। पूर्वपदात्सञ्ज्ञायाम् (८।४।३) इति णत्वम्। अणणन्तत्वान्ङीप्।

**नदीभिश्च (२।१।२०)।** स्वरूपस्य, [२]सञ्ज्ञानद्याश्च नेह ग्रहणम्। बहुवचननिर्देशात्। किन्त्वर्थस्य। न च तस्य [३]समासः सम्भवति। अतस्त-

बृहच्छब्दरत्नः

ऽप्यव्ययीभावः। 'लक्षणेनाऽभिप्रती' इति सूत्रे 'आभिमुख्य'ग्रहणात्। तद्धि 'अभ्यङ्का गावः' 'प्रत्यङ्का गावः'। 'अभिनवः, प्रतिनवश्चाऽङ्क आसामि'ति बहुव्रीहिः। अङ्कोऽत्र भवति गवां लक्षणम्। आभिमुख्यन्तु नाऽस्ति। न च 'लक्षणेनाऽभिप्रती' इत्यत्राऽभिप्रत्योरर्थाऽऽकाङ्क्षायां 'प्रत्यासत्ति'न्यायेन लक्षणबोधकावेव ग्राह्याविति वाच्यम्। अभिप्रत्योरङ्कविशेषणत्वेन तत्त्वात्। नाऽपि 'लक्षणप्रतिपदोक्त'परिभाषया लक्षणवाचकद्वितीयाऽन्तमेव ग्राह्यमिति वाच्यम्। 'कर्मप्रवचनीये'ति सामान्येन द्वितीयाया विधानेन द्वितीयाया अपि लाक्षणिकत्वादिति ध्वनयन्नाह—[४]लक्ष्यन्त्विवति। एतेन 'द्विमुनि[५] व्याकरणमि'ति व्याख्यातमि'ति प्राञ्चः। तन्न। लक्ष्यलक्षणभावमात्रविवक्षायामाभिमुख्याऽविवक्षायामग्निमभि विद्योतते विद्युदित्यादौ चारितार्थ्यात्। विद्या-तद्वतामभेदोपचारेऽपि प्रयोगः। तदविवक्षायां [६]'द्विमुनि व्याकरणस्ये'ति भवत्येवेत्याहुः। 'एकविंशति भारद्वाज-

लघुशब्दरत्नः

ऽन्वये तु 'वनमन्वि'त्येव बोध्यम्, 'अग्निमभी'तिवत्। अनुना द्योत्यत इति। 'दीर्घगङ्गासदृशी'ति वाच्योऽर्थः। 'गङ्गादैर्घ्ये'त्यादिः फलितोऽर्थः। द्योत्याऽर्थस्य विशेषणताया एव सर्वसंमतत्वात्। यद्वा 'द्योत्यते' इत्यस्य बोध्यते इत्यर्थः। स च शक्त्यैवेति बोध्यम्। लक्षणत्वञ्च वस्तुसदेव निमित्तम्। एवञ्चाऽत्रापि तेन सम्बन्धेनाऽन्यत्राऽन्वयाऽभावान्न कर्मप्रवचनीयत्वप्रयुक्ता द्वितीया। सादृश्याद्यन्तर्भावश्चैकार्थीभावबलात्। 'उपलक्षिते'त्यस्य विशिष्टेत्यर्थः। 'गङ्गादैर्घ्यसदृशे'त्यादिबोधोत्तरं नियमेन मनसा तद्गतज्ञापकत्वबोधात्तस्याऽनु-

[१] 'अत एव वाराणस्याः' इति मुद्रितेषु पाठः।
[२] 'सञ्ज्ञाया नद्याश्च' इति मुद्रितः पाठः।
[३] 'समासः सञ्ज्ञा भवति' इति मुद्रितेषु पाठः।
[४] 'लक्षणन्त्विवति' इति क. पाठः।
[५] 'त्रिमुनि' इत्यपि वा पाठो बोध्यः।
[६] 'त्रिमुनि' इति वा पाठः।

द्वाचिनामयं समासः । ते च न केवलं विशेषशब्दा एव, किन्तु सामान्यशब्दोऽपि । नित्यसमास इति । एतच्च वृत्तौ स्पष्टम् । शाकलसूत्रे कैयटस्वरसोऽप्येवम् । नन्वेवं न्यायसाम्याद्बहुव्रीहेरपि नित्यसमासत्वं स्यादिति चेन्मैवम् । 'यस्ये'त्यादिपदाऽन्तरसमभिव्याहारेणाऽन्यपदार्थप्रतीतेः । अत एव 'इह[1] सञ्ज्ञाऽनवगमादि'त्युक्तं, न तु 'अन्यपदार्थाऽनवगमादि'ति । सञ्ज्ञायां किम् ? । शीघ्रगङ्गो देशः । अथाऽव्ययीभावेऽसाधारणान् समासाऽन्तानाह—

अव्ययी (५।४।१०७) । समासान्त इति । 'समासस्य, समासाऽर्थोत्तरपदस्य [2]वा चरमाऽवयव' इत्यर्थः । तेनोपशरदमित्यत्र नाऽव्ययीभावात्

## बृहच्छब्दरत्नः

मि'त्यत्र भाष्यकारप्रयोगाल्लुगभाव' इति द्वितीयाऽध्यायाऽन्ते हरदत्तः । 'गङ्गा-सम्बन्धिवाराणसी'त्येव विवरणं युक्तमित्याह—एवमिति ।

'समासान्ता' इति सूत्रे 'समास'पदं तत्सम्बन्ध्यलौकिकवाक्यस्य लक्षकम् । एवं तत्पुरुष-बहुव्रीह्यादिपदान्यपि । बहुवचनेनाऽनेकविधिकल्पनेन समासाऽपेक्षया पूर्वं प्रवृत्तेः । अत एव डचश्चित्करणञ्चरिताऽर्थम् । ध्वनितञ्चेदं 'गोस्त्रियोरि'ति सूत्रे भाष्ये । 'अन्त'शब्दश्चरमाऽवयववाची, न समीपवाची । प्रत्ययपरत्वेनैव सिद्धेः । तत्र समुदायस्योत्तरपदस्य च सन्निधानेन विनिगमकाऽभावाद् द्वयोरपि । तदाह—समासस्येति । [3]उत्तरपदस्य वेति । अत्रोत्तरपदशब्द

## लघुशब्दरत्नः

द्योत्यतोक्ता, यथा 'प्रारभ्यते' इतिक्रियाऽध्याहारकतयाऽथशब्दस्य प्रारम्भद्योतकता, [4]तद्वदिति बोध्यम् । सामान्यशब्दोऽपीति । तेन 'पञ्चनदं' 'सप्तगङ्गमि'त्यादिसिद्धिः । पदान्तर-समभिव्याहारेणेति । तद्घटितमेव तत्र वाक्यं, न केवलवर्त्तिपदाऽर्थघटितमिति भावः ।

समासस्येति । इदञ्च समासान्ताः (५।४।६८) अन्तः (६।२।९२) इत्यादिसूत्रेषु भाष्ये स्पष्टम् । समासार्थोत्तरपदस्य वेति । अयं पक्षः सरूपसूत्रे कैयटे स्पष्टः । परन्तु चिन्त्यः । 'समास'पदस्य तदर्थोत्तरपदलक्षणायां मानाऽभावात् । 'तदर्थवाक्यस्योपचारेण समासपदेन ग्रहणमि'त्यर्थस्यैव गोस्त्रियोः (१।२।४८) इति भाष्ये उक्तत्वाच्च । अन्तः (६।२।९२) इति सूत्रस्थभाष्येणोत्तरपदाऽवयवत्वपक्षस्य विरोधाच्च । सरूपसूत्रस्थभाष्यन्तु समासाऽवयवत्वपक्षेऽपि सुयोजं सुधियाम् । तद् ध्वनयन्नाद्यपक्षे एव फलद्वयमाह—तेनेति ।

१ 'इह' इति मुद्रितेषु त्रुटितम् ।
२ 'च' इति क. पाठः ।
३ 'उत्तरपदस्य चेति' इति क. ख. पाठः ।
४ 'तद्वदि'ति मुद्रितेषु नास्ति ।

(२।४।८३) इत्यम्, 'द्विपुरी'त्यादौ द्विगोः (४।१।२१) इति ङीप् च सिध्यति।

'जराया' इति [1]गणसूत्रम्, 'प्रतिपरे'ति [2]च। अक्ष्णः परमिति। अविषय इत्यर्थः। वृत्तिविषयेऽक्षिशब्द इन्द्रियमात्रपरः। समक्षमिति। अक्ष्णो योग्यम्।

---

**बृहच्छब्दरत्नः**

उत्तरसुबन्तपरः। समासात्पूर्वं प्रवृत्तत्वेन रूढेरसम्भवात्। अनेन प्रथमपक्षोऽपि सङ्गृहीतः। अवयवाऽवयवस्य समुदायाऽवयवत्वात्। वाक्यस्य लक्ष्यत्वे गौरवाच्च। 'समासाच्च तद्विषयादि'तिसूत्रस्थं 'समास'पदं समासाऽन्तप्रकरणेऽनुवर्त्तते इति स्पष्टं तावदष्टमे आकरे। एवञ्च [3]पदद्वयेऽप्येकस्मिन्नर्थे लक्षणायाः सत्त्वेन 'समासमात्राऽवयवः', 'उत्तरपदमात्राऽवयव' इति पक्षद्वयमि'ति केचिदाहुः। तन्नेति ध्वनयन्नाह—तेनेति। उत्तरपदमात्राऽवयवत्वेऽव्ययीभावाऽनवयवत्वे न स्यादिति भावः।

द्विपुरीति। समासमात्राऽवयवत्वे 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट' इत्यस्य प्रवृत्तिर्न स्यादिति भावः। नन्वदन्त-'पुर'शब्दमादायैवेदं सेत्स्यतीति चेन्न। हलन्तेन समासे दोषाऽऽपत्तेः। 'द्विधुरी' 'त्रिधुरी'तिभाष्याद्युदाहृतप्रयोजनस्याऽसङ्गतताऽऽपत्तेश्च। नन्वकारान्तो द्विगुः स्त्रियामित्येव वक्तव्ये 'अनुत्तरपद'ग्रहणं समासाऽन्ते प्रवृत्त्यभावाऽर्थम्। अत एव 'द्विगुश्चे'ति सूत्रे 'पञ्चराजं'

---

**लघुशब्दरत्नः**

अदन्ताऽव्ययीभावत्वप्रयुक्तोऽम्, अदन्तद्विगुत्वप्रयुक्तो ङीप् चेत्यर्थः। न च 'द्विधुरी'त्यादावकाराऽन्तोत्तरपदत्वाऽभावात् स्त्रीत्वं कथं स्यादिति वाच्यम्। लिङ्गाऽनुशासनसूत्राणां लोकसिद्धलिङ्गाऽनुवादकत्वेन, अविधायकत्वेन चाऽन्यत्र[4] द्विगौ स्त्रीत्वाऽभावनियामकत्वाऽभावात्। तदुक्तं—'लिङ्गमशिष्यं, लोकाऽऽश्रयत्वाल्लिङ्गस्ये'ति समासान्ताः (५।४।६८) इत्यादिसूत्रेषु भाष्ये। न चोत्तरपदाऽवयवत्वेऽपि अवयवाऽवयवस्य समुदायाऽवयवत्वेनोक्तप्रयोगयोः सिद्धिरिति वाच्यम्। अन्तः (६।२।९२) इति सूत्रे समासस्याऽन्तोदात्तत्वमुत्तरपदस्य वेति विकल्पे, आद्ये 'इम्प्रथमका' इत्यादौ कपोऽन्तोदात्तत्वाऽऽपत्तिमुक्त्वा, 'अस्तु तर्ह्युत्तरपदस्ये'त्युक्त्वा, तत्पक्षे 'अनृच' इत्यत्राऽन्तोदात्तत्वाऽसिद्धिरित्यर्थपरभाष्यविरोधेन[5] तत्पक्षस्याऽङ्गीकर्त्तुमशक्यत्वादित्यलम्। इन्द्रियमात्रपर इति। बाह्येन्द्रियेत्यर्थः। सर्वबाह्येन्द्रियाऽविषये एव[6] परोक्षत्वव्यवहारादिति भावः।

---

[1] 'गणसूत्रे' इति क्वाचित्कः पाठः। [2] चकारो मुद्रितेषु त्रुटितः।

[3] 'पदद्वयेषु एकस्मिन्नर्थे' इति क. ख. पाठः।

[4] 'अत्रत्यद्विगौ' इति मुद्रितेषु पाठः।

[5] 'इतीत्यर्थपर' इति मुद्रितेषु पाठः।

[6] 'एव' इति पदं मुद्रितेषु त्रुटितम्।

**नदी (५।४।११०) । इह स्वरूपस्यैव ग्रहणं, न सञ्ज्ञायाः, पौर्णमास्याग्रहायण्योः पृथग्ग्रहणात् । उपनदीति । टजभावे नपुंसकह्रस्वः । इदन्त्ववधेयम्—नदीभिश्च (२।१।२०) इति सूत्रे विशेषाणामिव स्वरूपस्याऽपि[1]**

### बृहच्छब्दरत्नः

'दशराजमि'ति भाष्योदाहृतं सङ्गच्छते । 'द्विगुश्च समासो [2]नपुंसको भवती'ति वक्तव्यम् । 'पञ्चगवं' 'दशगवम्' । 'अकाराऽन्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इत्यादि 'अपथं नपुंसकमि'तिसूत्रस्थभाष्यादप्येवमेवोपलभ्यते । तथा च 'द्विपुरी' 'द्विधुरी'त्यादिप्रयोगा असङ्गता एवेति चेन्न । प्रकृतसूत्रस्थभाष्यादिप्रामाण्येन 'क्वचित्समासमात्राऽवयवत्वं समासाऽन्तानामि'त्यर्थज्ञापनपरतयैवोत्तरपदग्रहणस्य वर्णयितुं युक्तत्वात् । अत एव 'रात्राऽह्नाऽहाः पुंसी'तिसूत्रेऽह्नादिग्रहणञ्चरिताऽर्थम् । न चाऽहन्ग्रहणे समासाऽन्तविरहे प्रवृत्तिः स्यादिति वाच्यम् । कृतसमासान्त-'रात्र'शब्दसाहचर्यात् । मन्मते तूत्तरपदाऽनवयवत्वेऽहन्शब्दाऽन्ततत्पुरुषाऽभावेन कृतसमासाऽन्ते प्रवृत्त्यनापत्त्याऽह्नादिग्रहणसार्थक्यं स्पष्टमेव । न च वचनसामर्थ्यात्प्रवृत्तिः । साहचर्यस्य बाधाऽऽपत्तेः । अत एव 'इदम्प्रथमका' इत्यादौ 'बहुव्रीहाविदमेतद्भ्यः प्रथमपूरणयोः क्रियागणने' इतिसूत्रेण कप्प्रत्ययात्पूर्वमुदात्तत्वसिद्धिः । एतेन समासपदाऽनुवृत्तिरपि परास्ता । अनुवृत्तेः फलाऽन्तरस्य तत्रैव स्पष्टत्वाच्च । अलौकिकविग्रहवाक्ये प्रवर्त्तमानः समासाऽन्तः सुपः परस्तादेव । समासप्रवृत्तेः पूर्वं कबुत्तरं सुब्न । तत्पूर्वभागं सुबन्तमादाय समासप्रवृत्तेः सत्त्वात् । अत एव 'बहुचर्मिके'त्यादावित्त्वसिद्धिरिति स्पष्टमाकरे । 'द्वित्रिभ्यां पाद्दन्मूर्द्धस्वि'तिसूत्रस्थं 'समासे कृते समासान्ता' इत्यर्थपरं भाष्यन्तु 'अन्त' इत्यादिसूत्रस्थभाष्यादिविरोधात्प्रौढिवादपरं बोध्यम् ।

**नपुंसकेति ।** यद्यप्युसर्जनह्रस्वेनाऽपि सिद्धं, तथाऽप्युपायाऽन्तरत्वान्न दोष इति ध्येयम् । एतेनोपराजमित्यादौ 'अव्ययानां भमात्रे' इत्यनेनैव लोपसिद्धेः 'नस्तद्धिते' इति सूत्रोपन्यासो व्यर्थ' इति मन्दशङ्का निरस्ता । [3]'आतीत्' 'अभवदि'त्यादौ प्रत्ययत्वाद्युपजीव्यत्वेन कृतेष्वागमेषु तद्विशिष्टस्यैव प्रत्ययत्वादिवत्समासाऽन्तविशिष्टस्यैवाऽव्ययीभावत्वेन प्रकृतिभागस्याऽनव्ययत्वाच्च । एतवान् परं विशेषः—[4]'आतीदि'त्यादौ पूर्वं धातुत्वादीनां प्रवृत्तत्वेन, आगमप्रवृत्त्युत्तरं

### लघुशब्दरत्नः

**न सञ्ज्ञाया इति ।** तत्सञ्ज्ञकस्येत्यर्थः । **नपुंसकह्रस्व इति ।** उपलक्षणमेतत्-

[1] अपिः मुद्रितेषु त्रुटितः ।
[2] 'नपुंसकम्'इति वा पाठः । लिखितयोस्तु 'नपुंसके'ति निर्विभक्तिक एव पाठो दृश्यते ।
[3] 'आवीत्' 'अभवत्' इति क. ख. पाठः ।
[4] 'आवादित्यादौ' इति ख. पाठः । 'आवीदित्यादौ' इति क. पाठः ।

ग्रहणम्। 'विशेषाणामेवे'त्यत्र मानाऽभावादित्युक्तम्। तेन 'पञ्चनदमि'ति सिध्यति। अत्र च नित्योऽच्। तदुक्तम्—

'गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि' इति।

एतच्च अच्प्रत्यन्ववः (५।४।७५) इत्यत्र अजिति योगविभात्सिद्धम्। पूजार्थमिति। अन्यतरस्याङ्ग्रहणस्य प्रकृतत्वादिति भावः।

इत्यव्ययीभावः॥

———

बृहच्छब्दरत्नः

तद्विशिष्टे प्रवर्त्तते। इह तु पूर्वभागप्रवृत्तिद्वारैव विशिष्टे समासत्वमि'ति। न चोत्तरपदाऽवयवत्वमिति पक्षे दोषो दुर्वार इति वाच्यम्। उत्तरपदाऽवयवत्वेऽपि समासाऽवयवत्वे बाधकाऽभावात्। अत एवोपशरदमित्यादौ टिलोपो न। यत्तु 'लुङ्मुखस्वरोपचारेष्वि'ति परिगणनान्न दोष' इत्युक्तम्। तन्न। 'उपचार'-पदस्य दूषयिष्यमाणत्वात्। सूत्रस्य वैयर्थ्याऽऽपत्तिहेतुना भाष्ये प्रत्याख्यानाच्च। टिलोपस्याऽनिष्टकार्येष्वपरिगणितत्वेन भाष्यकारैरव्ययीभावे प्रवृत्तेर्ज्ञापनाच्च। ध्वनितश्चेदं 'प्राग्दीव्यतमि'ति तूचितमि'त्युक्त्या मूलकृतेति तद्धिते निरूपयिष्यामः।

गोदावर्यश्चेति। पूर्वाऽर्द्धन्तु—

'कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः'। इति।

'गोदावर्याश्चे'ति 'च'शब्देन भूमेरपि समुच्चयः। इदञ्चाऽविशेषात्समासमात्रे प्रवर्त्तते। 'नदीगोदावरी'शब्दे तु समाहारे एव। अत एव 'एकनदी'त्यादौ 'पूर्वकालैके'तिसमासे 'अच्'प्रत्ययो न। 'नदीभिश्चे'ति सूत्रन्तु 'येन नाऽप्राप्ति'-न्यायेन समाहारद्विगोरेव बाधकमित्याहुः। योगविभागादिति। अत एव प्राक प्रत्ययनिर्देशः।

इत्यव्ययीभावः॥

---

लघुशब्दरत्नः

उपसर्जनह्रस्वस्याऽपि। तदुक्तमिति। माधवादिभिरिति भावः। नदीभिश्च (२।१।२०) इत्यत्र कैयटोऽप्येवम्। परन्तु योगविभागसिद्धस्य सामान्यत्वेन, विशेषेण नदीपौर्णमासी (५।४।११०) इत्यनेन बाधः कथं नेत्यत्र दृढं मानं, फलञ्च चिन्त्यम्। तदेतत् 'तदुक्तमि'त्यनेन ध्वनितम्।

इत्यव्ययीभावः॥

## अथ लण्डननगरस्थात् 'इण्डिया-आफिस'-पुस्तकालयाल्लब्धाभ्यां प्राचीनतरप्रौढमनोरमाहस्तलेखाभ्याम् छ. 'ज.' इत्येवमस्माभिः संकेतिताभ्यामुद्धृताः पाठभेदाः, टिप्पण्यश्च—

| पृष्ठे | पङ्क्तौ | |
|---|---|---|
| ६ | ५ | 'संयोगान्तस्य लोप इति चेत्' छ. पाठः। 'संयोगान्तस्येति लोप इति चेत्'—इति ज. पाठः। |
| ८ | १ | 'चित्रगवीनाम्' छ. ज. पाठः। |
| २२ | १ | 'प्रौढिवादमात्रपरम्' ज. पाठः। |
| २७ | १ | 'ध्वसोरेध्दावितिसूत्रे' छ. ज. पाठः। |
| २७ | २ | 'द्विशकारकोऽयं निर्देशः' ज. पाठः। |
| २७ | २ | 'अलोन्त्यात्सूत्रस्थ' छ. ज. पाठः। |
| २८ | १ | 'धातुषु' छ. ज. पाठः। |
| २९ | ४ | 'वक्तुमुचितम्' ज. पाठः। |
| ३१ | ७ | 'प्राक्स्थितम्' छ. पाठः। |
| ३२ | १ | 'मध्यगत्वात्' छ. पाठः। |
| ३३ | ५ | 'एवञ्च' छ. पाठः। |
| ३७ | ६ | 'तनूशचीतिशब्दयोः' छ. पाठः। |
| ३७ | ८ | 'जात्यवद्वा। जात्यो यथा कम्पते तथा तयोरन्तावपि—'तनूउ॒'ऽनपात्' शचीउ॒'ऽपतिम्। 'असंहितवद्वा'। 'तनू॑ऽनपा॑त्' 'शचीऽपतिम्'। 'संहितवद्वा'। 'तनूऽनपा॑त्'। अध्ययनन्तु जात्यवदेव। पृथग्वाशब्दकरणेन पूर्ववदस्य अध्ययनबोधनात्' इति ज. पुस्तकस्था प्राचीना टिप्पणी। |
| ३८ | ६ | 'उदात्तानुदात्तयोः' छ. पाठः। |
| ५१ | १ | 'ऌलोः' (ॡलोः) इति ज. पाठः। |
| ६८ | १ | 'स' इति छ. ज. नास्ति। |
| ७९ | २ | 'शित्त्वस्यैवाऽलाभात्' छ. पाठः। |
| ८७ | ३ | 'स्थानेन्तरतमसूत्रेणैव' छ. पाठः। |
| ८८ | २ | 'इति पूर्वसूत्रात्' छ. पाठः। |
| ९० | १ | 'तकारद्वित्वविकल्पः' छ. ज. पाठः। |
| १२२ | ५ | 'संयोगान्तलोपे' ज. पाठः। |
| १२३ | ४ | 'लोपोव्योरितिप्रसङ्गाच्च' ज. पाठः। |
| १४१ | २७ | (प्रथमटिप्पण्याम्—)'यून इत्यस्याऽसिद्धचापत्तेः' ज. पाठः। |
| १५३ | १४ | 'कुत्वमात्रविषयत्वात्' छ. ज. पाठः। |
| १७० | ५ | 'जश्शास्त्रस्य' छ. पाठः। |
| १८० | १ | 'प्राचोदाहृतम्' छ. ज. पाठः। |
| १९३ | ७ | 'द्वेवोऽसीति। न च लक्षणप्रतिपदोक्तपरिभाषया निस्तारः। वर्णग्रहणे तस्या अप्रवृत्तेः। अन्यथा 'चक्रे' 'तस्मायाचष्टे' इत्यादौ न प्रवर्त्तेतेति भावः। अप्रवृत्तौ लिङ्गन्तु 'आदेच उपदेशे' इति सूत्रे उपदेशग्रहणम्'। इति ज. पुस्तकस्था टिप्पणी। |
| २०१ | ३ | 'तज्ज्ञानसित्यादौ' ज. पाठः। |
| २१४ | ५ | 'सौष्ठवत्वात्' ज. पाठः। |
| २१६ | २ | 'त्रिसकारत्व' छ. पाठः। |
| २१७ | ८ | अनुनासिकत्वगुणक एव' छ. पाठः। |
| २२१ | १० | 'निष्ठात्वम्—आख्याते' छ. ज. पाठः। |
| २५६ | २ | 'प्रत्ययान्तं वर्जयित्वेत्युचितमेव' छ. ज. पाठः। |

| पृष्ठे | पङ्क्तौ | |
|---|---|---|
| २९८ | ३ | 'तथाभूतो विषयः' छ० ज. पाठः । |
| ३०७ | ३ | 'ब्राह्मणशब्देनैव' छ. ज. पाठः । |
| ३१३ | ५ | 'तत्र सर्वैर्व्यव्यवायो' छ. ज. पाठः । |
| ३१८ | ४ | 'अघोषस्य तादृश एव षकारः छ. पाठः । |
| ३५२ | १ | 'न च द्वन्द्वे यानि' छ. पाठः । |
| ३५६ | १४ | 'आङि च । आङि च परे' छ. ज. पाठः । |
| ३५८ | ३ | 'इत्यतः छन्दसीत्यनुवर्त्तते' छ. पाठः । |
| ३६७ | ८ | 'पुष्टः पुष्टिः' छ. पाठः 'पुष्टं पुष्टिः' ज. पाठः । |
| ३८० | १ | 'हल्ङ्याप्भ्यो' ज. पाठः । |
| ३८२ | २ | 'हल्ङ्यापः सोरिति सूत्रमस्तु' छ. ज. पाठः । |
| ३९२ | ४ | 'इति भावः' इत्येतदग्रे–'द्विपर्य्यन्तानामेवेति । तेनेह न–भवान् भवन्तौ' इति ज. पुस्तकस्था टिप्पणी । |
| ४०४ | ८ | 'साधारणं तन्मन्वानाः सख्युः पत्युः' छ. पाठः । |
| ४०५ | १ | 'तदेतत्सर्वं भाष्य–' छ. ज. पाठः । |
| ४०५ | ३ | 'शुष्क्यः पक्व्यः' छ. नास्ति । 'शुष्क्युः शुष्क्यः' ज. पाठः । |
| ४३७ | १-२ | 'अन्यतमत्तम इत्यादिप्रयोगाः' छ. ज. पाठः । तत्र च-पुस्तके च हरिताललेपेन अन्यतमदिति पाठः शोधितः । |
| ४३७ | ९ | 'पूर्वत्वमात्रोपलक्षणम्' छ. पाठः । |
| ४५८ | १ | 'इति वान्ताः' ज. पाठः । |
| ४५९ | २ | 'द्वित्वे इति' छ. पाठः । |
| ४६१ | १ | 'उपसर्जनेऽपि' ङ. च. छ. पाठः । |
| ४६४ | १ | 'सङ्कोचता वेति' छ. पाठः । |
| ४६८ | १० | 'शब्दकौस्तुभे च' छ. ज. पाठः । |
| ४७४ | १ | 'मघवा वेति' छ. ज. पाठः । |
| ४८५ | ९ | 'परिभाषाया निर्विषयत्वापत्तः' छ. ज. पाठः । |
| ५०९ | ५ | 'जानाति, जायते' छ. ज. पाठः । |
| ५१२ | २ | 'स्थान्यादेशिभाव' छ. ज. पाठः । |
| ५१४ | ११ | 'प्रातिपदिकार्थत्वानपायात्' — एतावानेव छ. ज. पाठः । 'इति भावः' इति तत्र नास्ति । |
| ५२७ | ४ | 'तत् पश्यतीति' छ. ज. पाठः । |
| ५३३ | ७ | 'इत्यत्रानुनासिकस्यैव' छ. ज. पाठः । |
| ५३७ | ६ | 'प्रामाण्यमितिदिक्' छ.ज. पाठः । |
| ५४१ | १५ | 'सहार्थे' छ. ज. पाठः । |
| ५४५ | १८ | 'इ-सम्बोधन' छ. ज. पाठः । |
| ५९२ | ४ | 'आनुक् ह्रस्वादिरेव' ज. पाठः । |
| ६५१ | २ | 'नटस्य गाथां शृणोतीत्यादौ' इति छ. वर्द्धितः पाठः । |
| ६५५ | ८ | 'कर्मणि स्युः गौणे वे' छ. पाठः । |
| ६७३ | २ | 'वीप्साद्विर्वचने सति' छ. ज. पाठः । |
| ६८१ | २ | 'कर्त्तृकर्मद्वारकसम्बन्धेन' छ. ज. पाठः । |
| ६९२ | ७ | 'ग्राममित्यत्रातिप्रसङ्गः' ज. पाठः। |
| ६९८ | ४ | 'उत्पातेनेति' छ. ज. नास्ति । |
| ७०५ | ५ | 'इञ्जादिभ्यः' छ. पाठः । |
| ७०६ | १ | 'इणजादिभ्यः' ज. पाठः । 'जनिघसिभ्यामिण् इत्यौणादिको वा' ज. पाठः । |
| ७१२ | १२ | 'उक्तञ्च' छ. ज. पाठः । |
| ७१४ | १ | 'प्रधाने' इत्येवं ज. पुस्तके शोधितः पाठः । |
| ७१६ | ८ | 'यद्यपि तिङन्तम्' ज. पाठः । |

| पृष्ठे | पङ्क्तौ | |
|---|---|---|
| ७२५ | ३-४ | 'तद्विदधीत विस्मयमित्यादि सिद्धम्' ज. पाठः । |
| ७३३ | १ | 'व्याख्यानभेदात्' ज. पाठः । |
| ७३६ | ३ | 'कथं गोकलम्' छ. ज. पाठः । |
| ७४६ | ६ | 'सुतरामभावात्' ज. पाठः । |
| ७५२ | ४ | 'वाराणसीति' इत्यारभ्य 'अण्णन्तत्वान्ङीप्' इत्यन्तः पाठः छ. ज. पुस्तकयोः पूर्वं नैवासीत्, पश्चात् केनापि लिखित्वा वर्द्धितः । तदन्ते च 'अनः क्लीबं जले शोके मातरि स्यन्दने द्वयोरिति रुद्ररभसौ' इति क्वचित्पाठः' इत्येवं ज. पुस्तके पश्चाद्वर्द्धितः छ. पुस्तकापेक्षया अधिकः पाठ उपलभ्यते । |

# अथ शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| २२ | ५ | 'प्रतिषेधारम्भसामथ्यन' | 'प्रतिषेधारम्भसामर्थ्येन' |
| २३ | ३ | 'तचा च वार्त्तिकम्' | 'तथा च वार्त्तिकम्' |
| ३८ | १२ | 'नन्विदं प्रतिशाख्यम्' | 'नन्विदं प्रातिशाख्यम्' |
| ८२ | १ | 'अत्तङ्गेण' | 'अन्तरङ्गेण' |
| १०२ | १५ | 'अस्तेर्भरित्यस्य' | 'अस्तेर्भूरित्यस्य' |
| १०३ | ११ | 'आद्धधातुकस्ये' | 'आर्द्धधातुकस्ये' |
| १०६ | २८ | 'वृक्षम् इति क्वचिन्नास्ति' | 'वृक्षम् इति छ. ज. नास्ति' |
| ११९ | ११ | 'प्रतिपदोक्तत्लत्वस्यैव' | 'प्रतिपदोक्तलत्वस्यैव' |
| १३० | १० | 'वदन्भाष्यकरः' | 'वदन्भाष्यकारः' |
| १३० | १९ | 'शङ्कोत्थानाथ' | 'शङ्कोत्थानार्थं' |
| १३० | २१ | 'पुनलक्ष्यान्तरे' | 'पुनर्लक्ष्यान्तरे' |
| १३० | २३ | 'स्वर्ग लोके' | 'स्वर्गे लोके' |
| १३१ | ५ | वाक्याऽथबोधात्' | 'वाक्याऽर्थबोधात्' |
| १३१ | ८ | 'प्रवत्तन्ते' | 'प्रवर्त्तन्ते' |
| १३२ | ४ | 'पितामहचरणः' | 'पितामहचरणैः' |
| १४५ | ४ | 'आदौतोरिति' | 'ओदौतोरिति' |
| १८० | ३-४ | 'कायकालपक्षे' | 'कार्यकालपक्षे' |
| ३२७ | ११ | 'नपुसकत्वन्तु' | 'नपुंसकत्वन्तु' |
| ३२८ | १ | 'संख्या यास्ततपुरुष' | 'संख्यायास्तत्पुरुष' |
| ३२९ | ४-५ | 'अन्नेन कारणेन अन्नस्य' | 'अन्नेन कारणेन वसति, अन्नस्य' |
| ३३० | ३ | 'कृतेऽप्यच्' | 'कृतेऽप्ययच्' |
| ४३६ | १-२ | 'इवर्णाऽवर्णयोरिति' | 'इवर्णोवर्णयोरिति' |
| ४३७ | ९ | 'पूर्वमात्रोपलक्षणम्' | 'पूर्वत्वमात्रोपलक्षणम्' |
| ४७२ | १ | 'मतुषा च' | 'मतुपा च' |
| ४७५ | २ | 'नमु गुणा' | 'ननु 'गुणा' |
| ४७६ | २ | 'त्यत्यङ्गतम्' | 'त्यसङ्गतम्' |
| ४७६ | २ | 'दुरुद्धत्वात्' | 'दुरुद्धरत्वात्' |
| ५०१ | ३ | 'स्पष्ट' | 'स्पृष्ट' |
| ५१७ | १ | 'बुद्धयुपारोहणैव' | 'बुद्धयुपारोहेणैव' |
| ५४१ | १ | 'सना, सनत् इत्येते' | 'सना, सनत्, सनात् इत्येते' |
| ४४५ | १५ | 'त्वामस्ति वच्मि' | 'त्वामस्मि वच्मि' |
| ५४५ | २१ | 'हिंसा-प्रतिलोम्य' | 'हिंसा-प्रातिलोम्य' |
| ६०६ | ६ | 'ञ्यङ। करीषस्येव' | 'ञ्यङ। कारीषगन्ध्येति। करीषस्येव' |
| ६७३ | ६ | 'शब्दबोधे' | 'शाब्दबोधे' |
| ७०६ | १२ | 'भूकर्त्तरिति' | 'भूकर्त्तुरिति' |

# अथ खण्डितपाठपूर्त्तिः

| पृष्ठे | पङ्क्तौ | खण्डितः पाठः | शुद्धः पाठः |
| --- | --- | --- | --- |
| २१९ | ९ | 'रेफश्रवणाऽऽपत्तिः। किञ्च चतुर्षु इत्यादौ'.......... ( )......यदि त्विति'। | 'रेफश्रवणापत्तेः। किञ्च चतुर्षु इत्यादौ रोः सुपीति नियमेन सत्वाभावेऽपि वा शरीत्यनेन पाक्षिकविसर्गो दुर्वारः। अपि च वा शरीति वैकल्पिकं विसर्गं बाधित्वा रोः सुपीत्यस्य नित्यसकारविधायकत्वे पक्षे विसर्गाऽनापत्तिः। वा शरीत्यस्याऽग्रे रोः सुपीत्यस्य पाठे तु विकल्पाऽननुवृत्तौ पक्षे सत्त्वानाऽपत्तिः। विकल्पाऽनुवृत्तौ तु नियमापत्त्या चतुर्षु इत्यादौ नित्यसत्वापत्तिः। तत्सर्वं हृदि निधाय आह—एतच्चेति। वस्तुतस्तु सत्वविधिरनैमित्तिक एव। न चावसाने प्रसङ्गः। 'विसर्जनीयः' 'खरि' इतिन्यासद्वयं विधाय पूर्वसूत्रेणाऽवसाने विसर्गसिद्धौ अवसानग्रहणमवसाने विसर्ग-एवेत्यर्थबोधनार्थम्। तेन सत्वबाधः। न चाद्यसूत्रस्य अखरि प्रसङ्गः। खरीति सामान्यतो नियमेन वर्णपरत्वस्य बाधात्। इदञ्च एतच्चेति चकारेण ध्वनितम्। मण्डूकप्लुत्येति। एकदेशे स्वरितत्वप्रतिज्ञानेनेत्यपि बोध्यम्। यदि त्विति'। अयं पाठः क. ख. पुस्तकयोस्तु खण्डित एवाऽऽसीत्, सरस्वतीभवनस्थादेकस्माद्धस्तलेखात् कथञ्चित्पूरितः। |

---

## अथ प्रौढमनोरमायामव्ययीभावसमासान्तभागे स्मृतानां ग्रन्थानां, ग्रन्थकर्तॄणाञ्च नामानि—

# अथ बृहच्छब्दरत्नाव्ययीभावान्तभागे स्मृतानां ग्रन्थानां, ग्रन्थकर्तॄणाञ्च नामानि—

# अथ अव्ययीभावान्त-लघु-शब्दरत्ने स्मृतानां ग्रन्थानां, ग्रन्थकर्तॄणाञ्च नामानि—

॥ श्रीगणेशाय नमः ॥

# अथ प्रौढमनोरमायां व्याख्यातानां पाणिनीयसूत्राणां सूची

## अ

---

॥ श्रीः ॥

# अथ प्रौढमनोरमायां व्याख्यातानां वार्त्तिकानां सूची

इति वार्त्तिकसूची

---

# अथ प्रौढमनोरमायां स्पष्टं व्याख्यातानां परिभाषाणां सूची।



इति परिभाषासूची।

---

॥ श्रीः ॥

वाराणसेय-संस्कृत-विश्वविद्यालयीय-सरस्वतीभवनपुस्तकालयाद्विलम्वेन (एतद्ग्रन्थ-प्रथम-भागमुद्रणानन्तरम्) उपलब्धानां खण्डितानामपि बृहच्छन्दरत्नहस्तलेखानां सावधानं सूक्ष्मेक्षिकया पर्यालोचनेन, तुलनात्मकदृष्ट्या सर्वेषां बृहच्छब्दरत्नग्रन्थाधिगतहस्तलेखानां गभीरतयाऽनुशीलनेन च बह्वोऽधिकाः पाठाः, ग्रन्थकृता स्वयमेव पूर्वं, पश्चाद्वा परिवर्त्तिता, अन्यथारूपेण व्याख्याता विशिष्टाश्च पाठा एतेभ्यो हस्तलेखेभ्योऽध्यगम्यन्त। एवमेव 'क'.'ख'. पुस्तकयोर्वर्त्तमानानां खण्डितानां, भ्रामकाक्षरवशात्परिभ्रष्टानाञ्च बहूनां पाठानां पूर्त्तिः, परिशुद्धिश्चापि पुनः पुनरेतेषां ग्रन्थानामालोडनेन सम्भूतामिति, ते सर्वेऽप्यधिकाः, परिवर्द्धिताः, परिशोधिताः, पूरिता, विशिष्टाश्च पाठाः, पाठान्तराणि च अध्येतृणां सौकर्याय पृथगत्र संगृह्यन्ते—

इत्यावेदयते

**श्रीसीतारामशास्त्री,**

सम्पादकः।

## अथ सरस्वतीभवनपुस्तकालयीयबृहच्छब्दरत्नहस्तलेखेभ्य उपलब्धा अधिकाः, परिवर्द्धिता, विशिष्टाश्च पाठाः

पृष्ठे पङ्क्तौ

५ ८ 'हलि अन्त्यमिति। उपदेशे इत्यनुवर्त्तनेन अज्ञातज्ञाप्येऽन्त्यमित्यर्थस्य सत्त्वात्सूत्रे इत्यर्थाल्लब्धम्। सप्तमीति।' इति स-क० पाठः।

७ ५ 'इत्यन्यत्र विस्तरः। इति च व्याख्यास्यत इति। प्रकारान्तरेण न व्याख्यास्यते, येन दोषास्पदत्वं स्यादिति भावः। तच्च प्रकारान्तरमित्थं—'हलित्यस्य उपदेशे हल्शब्द इत्सञ्ज्ञो भवतीत्यर्थः। सा चेत्सञ्ज्ञा हल्शब्दे वैयर्थ्यात्तदवयवे प्रवर्त्तमाना हकाराऽकारयोरुक्तरीतेरप्रवृत्तौ लकारे विश्राम्यति। तत आदिरन्त्येनेति हल्प्रत्याहारसिद्धिरि'ति। नैतद्युक्तम्। प्रथमोपस्थितशब्देनैव शब्दमर्यादया लकारेत्सञ्ज्ञाप्रतिपादकवाक्यार्थकल्पनस्य युक्तत्वेन वैयर्थ्यमूलकन्यायाश्रयणस्याऽयुक्तत्वात्। क्लिष्टत्वादिति।' इति स-क० पाठः।

७ १७ 'श्रुत्या प्रकरणबाधात्। न चोपदेशे इत्यस्योत्तरत्राऽनुवृत्तिरावश्यकीति वाच्यम्। तावताऽप्यत्र सम्बन्धबोधकस्याऽस्मदुक्तमीमांसकादिप्रसिद्धतर्कस्याऽबाधात्। उपदेशे इत्यनुवृत्तावपि चुञ्चुपचणपादौ यकारादिप्रश्लेषादिरूपयत्नस्यावश्यकत्वेन तत्सामर्थ्यादित्त्वविधायकसूत्रोपात्तोद्देश्यकोटिप्रविष्टवर्णस्य उपदेशेऽनुपदेशे चादित्वं तत्रैवेत्संज्ञेत्यर्थकल्पनेनेत्त्वाऽभावसिद्धावुपदेशाऽधिकारस्य हलन्त्यमितिसूत्रादुत्तर-

पृष्ठे पङ्क्तौ

त्राऽनुपयोगाच्च। आदिर्ञिटुडव इत्यत्र त्वादिग्रहणाऽऽवृत्त्या, अन्त्यपदसाहचर्याच्च आदिरेव य आदिरित्यर्थलाभादुपदेशाधिकारस्य निष्प्रयोजनत्वाच्च।

वस्तुतस्तु पित्करणसामर्थ्येन लाघवादाद्यवर्णस्यैव वा पित्त्वं कल्प्यते, एवञ्च यकारादिप्रश्लेषो व्यर्थ इत्यपरे। अनुबन्धानां शास्त्रकृतप्रयोगसमवायित्वं, न तु श्रुतिकृतं, तेन यकारादिप्रश्लेषो व्यर्थः। चाप्प्रत्यये तु उभयोरित्त्वे तदनुबन्धकपरिभाषाबाधेन 'याडाप' इत्यादौ चापोऽपि ग्रहणेन, अविरुद्धकार्ये परत्वेन व्यवस्थायाः सत्त्वाच्च लोपेनोभयोर्निवृत्तिः। न च विधौ' इति स-क० पाठः।

७ १८ 'तदनित्यत्वस्य च' इत्यत्र चकारः स-क० नास्ति।

१३ २६ 'वाक्यार्थाऽनिष्पत्तेस्तुल्यत्वात्। एवं लघटितवाक्यस्य पुनरुत्पत्तौ बीजाऽभावेन हल्पदघटितवाक्यार्थस्याऽप्यनिष्पत्तिः। किञ्च क्रमोऽपि नियन्तुमशक्य' इति स-क० पाठः।

१९ ७ 'उक्तार्थकल्पनस्योचितत्वाच्च। यत्तु 'यत्तावदुच्यते—'उच्यमानेऽप्येतस्मिन् कुत एतत्परस्य भविष्यति, न पूर्वस्येति?। इहेङ्गितेन, चेष्टितेन, निमिषितेन, महता वा सूत्रप्रबन्धेन आचार्याणामभिप्रायो गम्यते। एतदेव ज्ञापयति परस्य भविष्यति, न पूर्वस्येति, यदयं न सम्प्रसारणे सम्प्रसारणमिति प्रतिषेधं शास्तीति भाष्ये—'न पूर्वस्ये'त्युत्तरम् 'अपवादं विना अपवादसिद्धयुपयोगिनि पदार्थमात्रे पूर्वं प्रवृत्तिरिति सिद्धान्तात्' इति शेषपूरणेन एकः पक्ष उक्तः। 'यदप्युच्यते' इत्यादिभाष्यं तु पक्षान्तराभिप्रायेणे'ति। तत्तुच्छम्। अथवेत्यादिशब्दाऽनुल्लेखेन पक्षान्तरस्य वक्तुमशक्यत्वात्। अध्याहारे मानाऽभावाच्च। प्रथमोपस्थितभाष्ये एव 'न पुनः पूर्वस्ये'त्युत्तरम् त्वदुक्ताऽध्याहारेण भाष्योक्तदूषणद्वयाऽभावेन 'एकयोग'मित्यादिभाष्यग्रन्थस्य निरालम्बनतापत्त्या, अस्मदुक्तार्थाश्रयणेनैव भाष्यव्याख्याया उचितत्वाच्च। लक्षणायां ज्ञापकानुपन्यासेन न्यूनतापत्तेश्च। अत्रैव ज्ञापकोपन्यासे बीजानापत्तेश्च। प्रतिपादितावश्यकपक्षेणैवोपपत्तौ पक्षान्तरप्रतिपादकभाष्यस्य वैयर्थ्यापत्तेश्च। अप्रयोजकपक्षस्य चरमग्रन्थे उपन्यासाऽनर्हत्वाच्च। पक्षान्तरे तात्पर्यकल्पने गौरवाच्च। लाघवाद्धेतुहेतुमद्भावेन संप्रसारणप्रवृत्त्यप्रवृत्त्योर्भेदेनाऽभिप्रायवर्णनपरतया ग्रन्थलाघवस्य युक्तत्वाच्च।

तस्मात् ऋषिप्रणीतवाक्ये आनर्थक्यस्याऽयुक्तत्वेन, शब्दमर्यादयोक्तरीत्या सार्थक्यस्य वक्तुमशक्यत्वेन च 'यत्तावदुच्यते' इत्यादिग्रन्थस्तत्खण्डनपरो बोध्यः। एवञ्च वक्ष्यमाणार्थे सूत्रमेव तात्पर्यग्राहकम्। एतेन 'यत्तावदुच्यते' 'यदप्युच्यते' इति भेदोपन्यासे बीजं चिन्त्यमित्यपास्तम्।

'यदप्युच्यते' इत्यादिग्रन्थस्तु निमित्ताऽभावादिखण्डनपरः। एवञ्च भाष्ये नाऽनन्वयः। स्पष्टा चेयं रीतिर्वृद्धिसंज्ञासूत्रभाष्ये। अङ्गस्येतिसूत्रस्थभाष्यमपि लक्षणागर्भितपक्षद्वयमादायैव बोध्यम्। न हि कार्यीतिन्यायेन संप्रसारणभिन्नस्याऽचो ग्रहणात्। किञ्च 'तथाहि संप्रसारणकार्यं निषिध्यते इत्यस्मिन्पक्षे वव्रश्चेत्यत्र 'उ ऋ अ' इति स्थिते तत्रान्तरङ्गत्वात् सम्प्रसारणाच्चेति पूर्वरूपं न। अवादेशस्य

पृष्ठे पङ्क्तौ

सम्भावितत्वेन अकृतव्यूहपरिभाषाप्रवृत्तेः। अवादेशे सम्प्रसारणत्वन्तु आ सप्तमसमाप्तेरङ्गाधिकारे सत्येव।

सम्प्रसारणे इति सप्तम्यन्तपदे सम्प्रसारणस्थानिनि लक्षणायामपि महासंज्ञाकरणात्, प्राधान्याच्छ्रूयमाणसम्प्रसारणसंज्ञकादेशस्यैव ग्रहणेन आदेशे सम्प्रसारणत्वलाभार्थं प्रागभ्यासविकारेभ्योऽङ्गाधिकार इति पक्षस्याऽनाश्रयणमेवोचितम्।

किञ्च सम्प्रसारणे इति सप्तम्यन्ते लक्षणाकल्पनं नोचितम्। उपक्रमस्थत्वात्। अपि च एकलक्षणविहितत्वेन पूर्वत्र निषेधे सन्नियोगशिष्टन्यायेन परत्राऽप्यभावापत्तौ संप्रसारणभाविनो यणोऽभावान्निमित्तसंश्रयोऽनुपपन्न इति वज्रपातो दुर्वारः। किञ्च स्थानेऽन्तरतम इति सूत्रप्रामाण्याद् यण्पदस्याऽन्तरतमे यणि लक्षणयेष्टसिद्धौ स्थानेऽन्तरतम इतिसूत्रस्थभाष्यस्य दत्तजलाञ्जलित्वापत्तिः। एतेन श्रुतार्थापत्तिमूलकवाक्यान्तरकल्पनापेक्षया लक्षणा अभ्यर्हितेत्यपास्तम्। बहुषु स्थलेषु तदङ्गीकारस्याऽनुचितत्वाच्च। प्रथमान्तसम्प्रसारणपदेऽपि लक्षणाकल्पनं नोचितम्। अनुवृत्तसंप्रसारणपदे लक्षणयैवोपपत्तौ सम्प्रसारणग्रहणस्य वैयर्थ्यापत्तेः।

न च प्रकरणान्तरस्थसंप्रसारणग्रहणार्थं तदिति वाच्यम्। 'न हि कार्यी निमित्तत्वेनाश्रीयते' इति न्यायेन पूर्वरूपाऽभावसिद्धौ निषेधसामर्थ्यादेव तद्ग्रहसिद्धेः। सम्प्रसारणग्रहणसामर्थ्याद्यणभावस्यापादयितुं शक्यत्वाच्च। यथाकथञ्चिदस्मदुक्तपक्षस्य भाष्यारूढत्वाङ्गीकारेऽपि लक्षणागर्भितभाष्योक्तपक्षस्त्वयुक्त एव। तदेतत्सकलमभिसन्धाय मूले पितामहचरणैरुक्तम्—'अत एव ज्ञापकादन्त्यस्य यणः पूर्वं सम्प्रसारणमि'ति। अभिनिर्वृत्तावनभिनिर्वृत्तौ च 'न सम्प्रसारणे' इति सूत्रवैयर्थ्यापत्त्या पूर्वं ह्यपवादा अभिनिविशन्ते इति ज्ञापनेन संप्रसारणविधीनां पूर्वमपवादसिद्धेरेवाऽऽकाङ्क्षितत्वेन परयण्येव पूर्वं सम्प्रसारणप्रवृत्तिरिति हि तदर्थः। अत एव सर्वनिषेध्यैः सह एकवाक्यता। अत एवैतस्यैव पक्षस्य मूले उपन्यासे बीजं चिन्त्यमित्यलम्। न चैवमपि स्मात्स्मिन्नादौ इति रीत्या 'स-क०' 'स-ख०' पाठः।

२२ १२ 'अयुक्तत्वात्। हयवरडित्यादिसूत्रस्थाऽकारस्यादिरन्त्येनेतिसूत्रप्रवृत्तिकाले उच्चारणार्थत्वेन असंनिधानात्संज्ञित्वं व्यञ्जनानामेव। तथा आदि-स्वशब्दाभ्यां व्यञ्जनयोरेव ग्रहणादाद्यन्तयोर्व्यञ्जनयोरेव संज्ञात्वं, तथापि तत्तच्छब्दैः प्रदेशेषु व्यवहाराऽभावात् ([1]'खरि च 'लोपो'व्योर्वलि' इत्यादिप्रवृत्त्या संज्ञास्वरूपभङ्गाऽऽपत्तेश्च) उच्चारणे क्लेशाधिक्याच्च, शास्त्राऽविहिताऽनेकव्यञ्जनाऽसाधुत्वस्योपपादितत्वाच्च अकारविशिष्टसंज्ञासु सूत्रकृतस्तात्पर्यमित्यध्यवसीयते। अत एव एकाचो बशो भष् इत्यादिसूत्रैः सह न विरोध इत्यन्यत्र विस्तरः।' इति स-क०, स-ख० पाठः।

[1] अयं पाठः स-क. पुस्तके कुण्डलितः।

पृष्ठे पङ्क्तौ

२४ १७ 'निरूपयिष्यामः। यदपि खनो घ चेति सूत्रे घप्रत्ययस्य घित्त्वेन करणे घप्रत्ययः सुलभ इति। तन्न। उक्तरीत्या घप्रत्ययलाभे भाष्यकृतो बाहुलकस्वीकारस्याऽसङ्गतापत्तेः। घित्प्रयोजनवति 'भग' इत्यादौ चारितार्थ्येन उपदेशशब्देऽप्रवृत्तेश्च। न चैवं भगः पदमिति कृदन्तस्थं मूलं विरुध्येतेति वाच्यम्। भगशब्दस्य पदमित्यर्थकथनं, न तूदाहरणान्तरम्। स्पष्टं चेदम् आस्पदं प्रतिष्ठायामिति सूत्रे हरदत्तग्रन्थे। आदिना स्थानमित्यपि विवरणं बोध्यम्। तत्फलन्तु भगशब्दस्य केवलयौगिकत्वबोधनम्। अस्तु वा गृहीतधातुभिन्नधातुभ्यो घप्रत्यय इत्यर्थे घित्करणं सामान्यापेक्षज्ञापकम्। तच्च खन्ग्रहणसामर्थ्यात्, बाहुलकात्, ज्ञापकसिद्धत्वाद्वा असार्वत्रिकम्, एवमपि बाहुलकवदगतिकगतिरूपत्वादुपदेशशब्दे आश्रयणमयुक्तमेवेत्यलम्। यदपि 'अकर्त्तरीति सूत्रे' इति 'स-क०' पाठः।

२७ १४ 'मन्मते तु प्रत्यासत्तिन्यायादुपदिश्यमानान्त्यस्यैव ग्रहणेन लोपस्येव 'श्' इत्यस्याऽपि अज्ञातज्ञाप्यत्वात्' इति 'स-क०' 'स-ख०' पाठः।

२७ १५ 'एतेन' इत्यारभ्य 'इत्यपास्तम्' इत्यन्तः पाठः स-क० नास्ति।

३१ ११ 'आवश्यकत्वाच्च। इदितो नुम् धातोरिति निर्द्देशाद्वर्णग्रहणे यदागमास्तद्गुणीभूता इति न्यायस्याऽप्रवृत्त्या विभक्तिकार्यं न सङ्कनीयम्।' इति स-क० पाठः।

३७ १० 'प्रातिशाख्यादिकं चेति। प्रातिशाख्य-आदि-शब्दयोर्बहुव्रीहिः। प्रातिशाख्यमूलकं लक्ष्यदर्शनमित्यर्थः। शाकल्यरूपान्यपदार्थे बहुव्रीहिर्वा 'च'शब्दार्थः' इति स-क० पाठः।

४० १५ 'मुखञ्चेति। मुखशब्दोऽत्र नासिकाग्रहणसामर्थ्यात्, मुखग्रहणसामर्थ्याच्च, नासिकासाहचर्याच्च मुखस्थताल्वादिस्थानपरः। अत एव सामान्यविशेषवाचिनोर्न द्वन्द्व इति वचनस्याऽत्र न प्रवृत्तिः। प्राच्यभरतेष्विति लिङ्गादिदं वचनमनित्यमित्युक्तेरत्रैव तात्पर्यम्। आस्ये भवमिति' इति 'स-क०' पाठः।

४३ ५ 'भिन्नस्थानानां सानुनासिकाऽचामेकस्मिन् प्रयोगे पूर्वोत्तरभावेनाऽवस्थानाऽयोगात्सावर्ण्ये सत्यपि न क्षतिः। अनुकरणन्तु न सर्वत्रेति प्रागेव प्रपञ्चितम्। नाग्लोपिशास्वृदितामित्यादिनिर्देशान्न दोष इति केचित्। एतेन' इति 'स-क०' 'स-ख'० पाठः।

४४ २४ 'नोक्तम्। कण्ठस्थानमात्रैक्यं गृहीत्वा सर्वेषां सवर्णसंज्ञा न प्रवर्त्तते, अव्यावर्तकत्वात्, विशेषस्थानप्रयत्नोक्तिसामर्थ्याच्च। ध्वनितञ्चेदं मूलकृतेत्यलम्' इति 'स-क०' पाठः।

४५ ४ 'भाष्ये। असिद्धशब्दस्यारोपितसिद्धपरत्वं, सिद्धसदृशपरत्वं वा, ततो वतिप्रत्ययकल्पनेत्याद्यग्रे निरूपयिष्यामः। न चास्या' इति 'स-क०' पाठः।

४८ १० 'किञ्चार्थाधिकारेण कण्ठादिव्यापारेणाऽप्रकाश्यमानस्य लोपस्याऽसिद्धत्वाऽनापत्तेः। अपि च अविद्यमानवत्' इति 'स-क०' पाठः।

४८ १४ कार्याऽसिद्धत्वपक्षे तु लक्ष्ये कार्यस्याऽभावस्य वक्तुमशक्यत्वम्' इति स-क० स-ख० पाठः।

पृष्ठे पङ्क्तौ

४८ १७ 'अग्नी ३ इतीत्यादौ' इति पाठं निरस्य 'सुश्लोका ३ इतीत्यादौ' इत्येवं स-ग० शोधितः पाठः ।

४८ १९ 'चरितार्थः । अन्तरङ्गस्यापि निषेधे आदेशेऽपि प्लुतः श्रूयेत । अप्लुतवदित्यादीनां वैयर्थ्यम् । तथा च ईदूदेद् द्विवचनं प्रगृह्यमिति प्रगृह्यसंज्ञाऽनापत्तिस्तपरत्वात् । सिद्धान्ते तु' इति 'स-क०' पाठः ।

४८ २२ 'युक्तम् । किञ्च लून्युः पक्व्युः क्षाम्युः गोमानित्यादौ निषेधप्रवृत्तावप्रवृत्तौ च दोषः स्पष्टः' इति 'स-क०' 'स-ख०' पाठः ।

४९ १० 'वक्ष्यामः । अत्रेदमवधेयम्—संज्ञापरिभाषाभ्यां संस्कृतो विधिस्तदेकवाक्यतापन्नो महावाक्यस्वरूपो निष्पन्नमूर्त्तिको बुद्ध्यारूढो लक्ष्ये प्रवर्तते । अत एव प्रमित्यनुष्ठानकालयोर्भेदः । संज्ञापरिभाषाप्रवृत्तौ तस्याऽसिद्धत्वं न । साकाङ्क्षितत्वेनाऽनिष्पन्नमूर्त्तिकत्वेन वस्तुतोऽसिद्धत्वात् ।

एतेन 'ङः सि धुडित्यत्र निर्दिष्टपरिभाषयोः प्रवृत्तिमङ्गीकृत्य परत्वेन तस्मादित्यस्य प्रवृत्तिरित्याकरोक्तं न युक्तम् । यथोद्देशपक्षे ङः सि धुडित्यस्याऽसिद्धत्वात् । कार्यकालपक्षे परत्वस्य वक्तुमशक्यत्वाच्चे'त्यपास्तम् ।

अपरे तु 'कार्यकालपक्षे परिभाषयोरत्रोपस्थितावपि वक्ष्यमाणरीत्या विरोधात्समावेशाऽयोगेन नियतशास्त्रार्थस्य युक्तत्वात् क्रमत्यागे बीजाऽभावेन परत्वादित्युक्तमि'त्याहुः' इति 'स-क०' पाठः ।

५१ २१ 'ध्येयम् । 'परिनिष्ठितविभक्त्या समास इति पक्षे वर्णपदसमभिव्याहारे समानाधिकरणेनेति षष्ठीसमासनिषेधाऽभावः, विशेषणसमासप्रवृत्तिर्वेत्यवश्यमभ्युपगन्तव्यम् । अवर्णस्येति भाष्यादिप्रयोगात् प्रथमान्तेनेति' इति 'स-क० पाठः ।

६१ २६ '......अत्र मानम् । क्रियावाचकत्वेनेति । अनेनैव रूपेण सर्वेषां सादृश्यस्य संभवादिति भावः । याः पश्यतीति' इति 'स-क०' पाठः ।

६७ ११ 'उद्देश्यभेदादिकं च बीजम् । किञ्च क्वचित्फलाऽसम्भवेऽपि तत्कल्पनमन्याय्यम्' इति 'स-क०' 'स-ख०' पाठः ।

६९ २३ 'निर्णेतुमशक्यत्वात् । परिभाषानिरपेक्षविधिवाक्यार्थकल्पनं, तस्य चोपजीव्यत्वं सर्वत्र न । गौरवात् । मानाऽभावाच्च । अत एव परिभाषाणामार्थं नियमत्वमिति तत्र तत्र निरूपयिष्यामः । एवन्तु' इति 'स-क०' पाठः ।

७६ २६ 'लक्ष्याऽभावः । एतेन स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधी रेफे न प्रवर्तते इति मूलग्रन्थो व्याख्यातः । अत्र रेफपदं शलामप्युपलक्षणम् । स्पर्शपदञ्च जिह्वाद्यग्रादीनां तत्तत्स्थानसम्बन्धेन जन्ये वर्णे वर्त्तते । एवञ्च यवलानामपि ग्रहणं बोध्यम् । तथापि यदि परिभाषासूत्रं न स्यात्' इति 'स-क०' पाठः ।

७८ १९ 'अनुद्धाराच्च । शित्वकल्पनवत् शिद्ग्रहणाऽभावे शकारस्य उपलक्षणतया शकारसदृश इत्संज्ञकः, अनेकाल्सम्बन्धस्याऽपि कल्पनम्, तेन च नाऽनुबन्धकृतमनेकाल्त्वमिति ज्ञापनार्थमिति भाष्यकाराद्युक्तं युक्तम्' । इति 'स-ख०' पाठः ।

पृष्ठे पङ्क्तौ

७९ २० 'अभावादिति। नन्वेवं 'शे' इति सूत्रस्थः सुपां सुलुगिति सूत्रेण शेआदेशः, शित्वात्सर्वादेश इति कौस्तुभग्रन्थो विरुध्येतेति चेदत्रोच्यते—सुपां सुलुगिति सूत्रे आ-आदित्युत्तरं 'शे' इत्यस्मात्प्राक् 'श्' इति प्रथमान्तपदमस्ति, तस्य झरो झरीति लोपः, तस्य हलन्त्यमितीत्संज्ञा। तत्—शित्त्वस्य प्रयोजनाकाङ्क्षायां सामर्थ्यात्पूर्वोत्तरत्र शित्वं कल्प्यते। अत एव सुः सर्वादेशः। अन्यथा नाऽनुबन्धकृतमनेकाल्त्वमिति निषेधेन 'ऋजवः सन्तु पन्था' इत्यादौ जसः स्थाने सर्वादेशताऽनापत्तिः। एवञ्च 'शे' इत्यस्याऽपि शित्वात् कौस्तुभो रमणीय एव। एतेन 'सोरादेशस्याऽन्त्यस्य स्थाने दुर्वारत्वेन व्यवधानान्निरर्थकत्वाच्च न्था-ऽऽत्वाद्यनापत्तौ पन्थान इत्यर्थे पन्था इति प्रयोगो दुर्घट' इति मन्दोक्तमपास्तम्। 'लुक्साहचर्य्यादेते आदेशाः सर्वस्य स्थाने भवन्ति। अत एव भावादेशेषु मध्येऽभावादेशः पठित' इत्यादिमनोरमाविलासेऽस्मद्गुरुग्रन्थे स्पष्टम्। आदेशे जाते' इति 'स-क०' पाठः।

८४ १९ 'प्रत्याहारेति। एवं द्विरेफपदे तद्वाच्यभ्रमरपदवाच्ये निरूढलक्षणा, तत्र जातिप्रकारक एव बोधः। अन्यांशस्तु संसर्गः। इयमेव लक्षितलक्षणाशब्देन व्यवह्रियत इत्यालङ्कारिकाः' इति 'स-क०' पाठः।

८८ ६ 'अस्याऽग्रहणाच्च। एवञ्चाऽनियमे नियमकारिणी परिभाषेति युक्तिसिद्धार्थस्य भाष्यादावुक्तत्वात्, 'आकाङ्क्षितविधानं ज्याय' इति न्यायाच्च यथासंख्यसूत्रप्रवृत्तिबोधकभाष्यादिग्रन्था युक्ता एवेति ध्ययम्। कैयट इति'। इति स-क० पाठः।

८९ १५ 'शास्त्रवैयर्थ्यापत्तेः। वाग्रहणाऽननुवृत्तौ सर्वत्रेति सूत्रेण विकल्पस्य सत्त्वात्। पूर्वोत्तरयोः प्रपञ्चार्थत्वस्यावश्यकत्वे साहचर्य्येण सर्वत्रेति सूत्रस्याऽपि प्रपञ्चाऽर्थत्वमिति बोधयितुं पूर्वोत्तरेत्युक्तम्। क्लिश्यन्ते इति'। इति 'स-क०' स-ख०' पाठः।

९० १४ 'तु सममस्माकम्। सर्वत्र शाकल्यस्येति सूत्रे सर्वत्रेत्युक्त्या त्रिप्रभृतिष्वपि विकल्पस्य सिद्धत्वेन स्वमतप्रच्युत्यभावो मूले एव ध्वनितः। वस्तुतस्तु त्रिप्रभृतिष्विति'। इति 'स-क०' पाठः।

९४ १५ 'उक्तदोषाऽनिस्ताराच्च। प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति वचनेन णिज्विधानार्थमावश्यकेनेष्ठवद्भावसिद्धौ टेरितिसूत्रस्थवचनस्याऽनुवादकत्वादिष्ठवद्भावस्याऽऽभीयत्वे मानाऽभावः। एतेन' इति स-क० पाठः।

९६ ७ 'उक्तोदाहरणव्यावृत्त्यर्थमावश्यकम्। शास्त्रीयकार्ये चातिदेशः, शास्त्रीयकार्यार्थं चातिदेशवाक्यकल्पना। सामर्थ्याद्बहिरङ्गमपि गृह्यते। अत एव संज्ञापरिभाषाप्रकरणमध्ये पारार्थ्यसाम्यादतिदेशप्रकरणं पठितम्। एवमचः परस्मिन्नित्यत्राऽपि बोध्यम्। ध्वनितं चेदमुगिदचामिति सूत्रे भाष्ये। न चैवमपि उत्तरग्रन्थो न युक्तः' इति 'स-क०' पाठः।

पृष्ठे पङ्क्तौ

९८ ६ '···स्थाने इति चेन्न । पूर्वपक्षस्य बाधितत्वेनोत्तरपक्षस्यैवाऽङ्गीकारात् । पूर्वस्येति शेषषष्ठ्याः सत्त्वात्' इति 'स-क०' 'स-ख०' पाठः ।

९८ २२ '···निमित्तत्वमिति वा । यथोद्देशपक्षेऽपि प्रत्यये परेऽङ्गसंज्ञाया विधानेन प्रत्ययपरत्वस्याऽङ्गशब्दवाच्यकोटौ प्रविष्टत्वमिति वा । स्पष्टं चेदं ष्यङः सम्प्रसारणम्···' इति 'स-क०' पाठः ।

९९ ९ '···ऽपि प्रत्ययलाभः । नाप्यभ्यासवाच्यकोटौ प्रत्ययपरत्वस्य प्रवेशः । न च धातो' इति स-क० पाठः ।

९९ २१ '···प्रयोजनद्वयं बोध्यम् । एवञ्च ण्यन्तसाहचर्य्यमपि न विरुध्यते । एतेन अचङीति ण्यन्तस्यैव विशेषणं न्याय्यमित्यपास्तम् । केवलं हिनोतेः कुत्वं, लुङि, सनि, यङि सर्वेषामिट् । अपरे तु अचङीति प्रसज्यप्रतिषेधमाश्रित्य हिनोतेर्यङलुकि कुत्वमिच्छन्ति । न चैवमभ्यासे चर्चेति' इति 'स-क०' पाठः ।

१०० ६ '···कुत्वं नेति स्पष्टं भाष्ये । न च द्युतिस्वाप्योरिति सूत्रे लिटीत्यस्य सम्बन्धः शङ्क्यः । योगविभागवैयर्थ्यापत्तेः । स्वापेर्लिटोऽसम्भवाच्च । स्थापेश्चङि इति सूत्रं तु द्वित्वात्पूर्वं परत्वात्प्रवर्त्तते, अभ्यासस्येत्यनुवृत्तेरिति यथान्यासेऽपि समानम् । अत एव 'लिटचभ्यासस्योभयेषाम्', 'व्यथः', 'द्युतिस्वाप्यो'रिति न सूत्रितम् ।' इत्येवं 'स-क०' पाठः ।

१०१ १५ '···प्रातिपदिकत्वमिति वाच्यम् । पर्य्युदासे प्रत्ययांशे विधिनिषेधयोरभावेनाऽतिदेशाऽप्रवृत्तेः । किञ्च प्रत्ययत्वावच्छिन्नप्रतियोगिताकभेदराहित्यान्न' इति 'स-क०' पाठः ।

१०१ २८ '···ज्ञापनेन चारितार्थ्यात् । विष्कन्नः, हे विष्कन्न, विष्कन्नवन्तौ, विष्कन्नवन्त इत्यादौ चारितार्थ्याच्च । अत एव 'किरश्च पञ्चभ्य' इति 'स-क०' पाठः ।

१०३ २५ '···इति । तन्न । विकल्पाऽसहत्वात् । तथा हि—स्थानिवदित्यत्र श्रौत एव सिद्धः स्थानी गृह्यते, उत आनुमानिकोऽपि ? । नाद्यः । आनुमानिकादेशग्रहणवैफल्यापत्तेः । पचत्वित्यादौ दोषापत्तेश्च । अन्त्ये तु स्थानिद्वयेन ससम्बन्धिकतया आदेशद्वयलाभे आदेशग्रहणवैफल्यं स्पष्टमेव । किञ्च सर्वस्येत्यनुवृत्त्यैव सिद्धेः । अत एव' इति 'स-क०' पाठः ।

१०३ २८ '···न सूत्रितम् । वस्तुतस्तु जशः शित्करणं 'सर्वे सर्वपदादेशा' इति न्याये ज्ञापकमिति भाष्यादौ सिद्धान्तितत्वेन ससम्बन्धिकत्वेनाऽऽक्षिप्ताऽऽदेशपदेनैव शास्त्रीयत्वाऽविशेषेण सङ्कोचे मानाऽभावाच्चाऽऽदेशद्वयग्रहणं सुवचम् । तस्मादादेशग्रहणेन वाक्यभेदेन' इति 'स-क०' पाठः ।

१०५ १९ ···'वक्ष्यमाणत्वाच्च । यलोपश्च दीर्घादयश्चेत्येव द्वन्द्व इति कश्चित् । न चैवं द्विर्वचनत्यागे बीजाऽभाव' इति 'स-क०' पाठः ।

१०९ ९ '···सवर्णग्रहणवैयर्थ्यं च । ओः=शम्भोः, अश्वः=वश्वः । एषो वश्वः । एतीति यन् । इण्धातोः शतरि रूपम् । एषो यन् । यत्तु कर्मसाधने षडिक इत्यसिद्धिः ।' इति 'स-क०' पाठः ।

पृष्ठे पङ्क्तौ

१०९ २८ 'भसंज्ञाया अपि सम्भावितत्वेन, अङ्गुलिशब्दकृतसंहिताया विनाशेन च अकृतव्यूहपरिभाषाया अन्तरङ्गानपि विधीन्' इति 'स-क०' 'स-ख०' पाठः ।

११० २५ 'तिङन्ते निरूपयिष्यामः । विज्बहिर्भूतसुब्निमित्तकपदसंज्ञानिमित्तनिषेधेन विजुत्पत्तिवेलायां वलोपप्रतिबन्धकाऽप्राप्ताऽतिदेशबाधो वक्तुमशक्य इति ध्वनयन्नाह—अन्तर्वर्त्तिसुपेति ।' इति 'स-क०' 'स-ख०' पाठः ।

१११ १७ 'अर्थद्वयकल्पने गौरवात् । किञ्च 'अस्ति पयः, सन्ति देवता' इत्यत्र विसर्गस्याऽसिद्धत्वादल्लोपस्य स्थानिवद्भावेन 'अतो रोरप्लुतादप्लुते' इत्युत्वं दुर्वारम् । एवम् ओः=शम्भोरपत्यं—वपत्यं, 'गणेशो वपत्यमि'त्यत्र उकारादेशस्य स्थानिवद्भावेन हशि चेत्युत्वं न स्यात् । न पदान्तेति सूत्रदृष्ट्या रोरसिद्धत्वेन पदान्तस्य स्थाने विधेयाऽभावेन निषेधाऽप्रवृत्तेः । पदचरमावयवे कर्त्तव्ये इतिव्याख्याने तु उकारस्य चरमावयवत्वम् । अत एव प्रातिपदिकाद्धात्वर्थे इत्येव सिद्धे' इति 'स-क०' पाठः ।

११४ २६ '···द्विर्वचनं भवत्येव । न च मध्ये यमोत्पत्तेः सत्त्वेन अनचीति निषेधो दुर्वार इति वाच्यम् । यमोत्पत्तिविधायकस्य प्रातिशाख्ये उक्तत्वेन समाख्याबलात्तच्छाखाविषयत्वेऽपि लोके तदभावात् । जक्षतुरित्युदाहरणान्तरस्य सत्त्वाच्च । किञ्च पञ्चमीसमासपक्षे प्राप्तस्थानिवद्भावनिषेधादुक्तोदाहरणे शरः खय इति द्विर्वचनं भवत्येव । 'न पदान्तेति सूत्रे सौत्रं द्विर्वचनमेव गृह्यते' इत्यत्र न किञ्चिन्मानम् । कैयटस्य तु प्रमाद एव' इति 'स-क०' पाठः ।

११९ ११ '···लत्वस्यैव ग्रहणाच्च । अत एवाष्टाध्याय्यां लत्वात्परत्र पठितमपि पूर्वत्र पठितम् । एवञ्च संयोगादिलोप' इति 'स-क०' पाठः ।

११९ १२ '···बह्वच्कस्य पूर्वनिपातः । एवञ्च वर्णग्रहणे प्रतिपदोक्तपरिभाषाया अप्रवृत्तावपि न क्षतिः । शिंषन्तीति ।' इति 'स-क०' पाठः ।

१२३ १६ '···आदृतो भाष्यकारैः । पूर्वं पूर्वमिति । तत्र पूर्वत्वमुद्देश्यकोटिसमुदायप्रविष्टमेव । प्रकृते च संयोगान्तपदस्योद्देश्यत्वम् । ऐक्याऽभावे एतदर्थाश्रयणमयुक्तमेव, वरेग्रहणादीनां वैयर्थ्यापत्तेः । ध्वनितं चेदं दीधीवेवीटामित्यादौ भाष्ये । एतेन यलोपादीनामपि सिद्धत्वादूठ् नेति मन्दोक्तमपास्तम् । ऊठ इति ।' इति 'स-क०' पाठः ।

१२३ २० '···दुर्वारत्वात् । तथा चाऽस्मिन् पक्षे संयोगान्तलोपोदाहरणाऽनुपपत्तिरेव दोष इति भावः । मान्तमेवेति ।' इति 'स-क०' पाठः ।

१२५ २२ '···प्रवृत्तेरज्ञापितत्वात् । न च मकारवैयर्थ्यम् । उपदेशान्तत्वनिमित्तविघटनद्वारा मकारे इत्संज्ञाप्रवृत्त्यभावसम्पादनेन चारितार्थ्यात् । दानीं चेतिसूत्रे 'दानीम्-य' इति यान्तः प्रत्ययः । प्रयोगे तु चशब्दमाश्रित्य लोपो व्योरिति लोपेनाऽश्रवणम् । हलन्त्यमितीत्संज्ञा' इति 'स-क०' पाठः ।

१३३ ७ '' प्रतिपदोक्तपरिभाषया, कार्य-निमित्तैकविधिविधेयढलोपसाहचर्य्येण च रो रीति लोपस्यैव ग्रहणात् । वस्तुतस्तु····' इति 'स-क०' 'स-ख०' पाठः ।

पृष्ठे पङ्क्तौ

१६५ २३ '…समानार्थः पर्यादिरित्याहुः। एवञ्चाऽङ्गसंज्ञाप्रयोजकप्रत्ययप्रकृतिरपि एतादृशमेव धात्वर्थक्रियायोगमङ्गीकृत्य गतित्वात् गतिसमासमाहुरित्यादि तिङन्ते निरूपयिष्याम' इति 'स-क०' पाठः। ('पर्यादिरित्याहुरित्यादि तिङन्ते निरूपयिष्याम' इति तु स-ग. पाठः)।

१७० १७ '…अज्ञानकल्पनापत्तेः। यथोद्देशपक्षे दोषस्योद्भूटत्वाच्च। पररूपेणैवेति।' इति 'स-क०' पाठः।

१७० १९ '…मन्दोक्तमपास्तम्। जश्त्ववशाद्दान्तत्वसम्भावना पररूपप्रवृत्तिकाले उत पररूपप्रवृत्त्युत्तरकाले?। तत्राऽऽद्ये आह—जश्त्वशास्त्रस्येति। पररूपोत्तरन्तु अच्छब्दस्यैव नाशात्, जश्त्वस्य प्रवृत्त्यभावे च व्यावर्त्याऽभावः। दोषान्तरमप्याह-नाम्रेडितस्येति। निषेधे निमित्तान्तराणामिव निषेधस्य प्रवृत्तियोग्यताया अपि निमित्तत्वं निषेधारम्भसामर्थ्येन वाच्यम्। तच्च भवदुक्तरीत्या नास्त्येव। निषेधस्य स्वनिमित्तविघातकत्वेन प्रवृत्त्यभावश्च। तदेव विवृणोति—तत्र हीत्यादिना। प्राप्तिरेवेति। त्वदुक्तगुरुभूतकल्पनाश्रयणे तु न कश्चिद्दोषः। उत्तरप्रवृत्तिः। उत्तरग्रन्थशब्देन नाम्रेडितस्यान्त्येतिसूत्रमुच्यते। तत्राम्रेडितं नाम द्विरुक्तस्य रूपम्। द्विर्वचनञ्च पदस्यैवेति अवश्यं भेदपक्ष आश्रयणीयः। एतेन अपदान्तादित्यनुवृत्त्या अभेदपक्षे एव प्रवृत्तिरिति मन्दोक्तमपास्तम्। तस्मात् सङ्कोचे मानाऽभावात्पक्षद्वयेऽपि प्रवृत्तिरिति ध्येयम्। तदेव ध्वनयन्नाह-जश्त्वशास्त्रस्येति' इति 'स-क०' 'स-ख०' पाठः।

१७२ ८ 'बोधकस्य बाधः। निर्दिष्टपरिभाषया वर्णव्यवधानं वार्यते। तस्मिन्नित्यादिशब्दैस्तथैव प्रतीतेः। संहिताऽधिकारेण तु वर्णशून्यकालकृतव्यवधानं वार्यते। एतदधिकारबहिर्भूतानां वर्णशून्यकालव्यवाये प्रवृत्तिर्निर्विघ्नैव। एतेन 'संहितायाम्। अयं योगः शक्योऽवक्तुम्। कथम्। अधिकरणं नाम त्रिप्रकारकम्। व्यापकम्, औपश्लेषिकं, वैषयिकमिति। शब्दस्य च शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति अन्यदत उपश्लेषात्। 'इको यणचि'—अचि उपश्लिष्टस्येति। तत्राऽन्तरेण संहिताग्रहणं संहितायामेव भविष्यती'ति भाष्यं परास्तम्। सति सप्तम्यां दोषस्योद्भूटत्वाच्च। न हि तस्मिन् पक्षे औपश्लेषिकसप्तम्यस्ति, येनाऽव्यवहिते सतीत्यर्थः स्यात्। किञ्च औपश्लेषिकसप्तम्यामपि गङ्गायां घोष इत्यादौ दृष्टत्वेन च कालव्यवाये यणादिकं दुर्वारम्। अनभिधानब्रह्मास्त्रमादाय प्रत्याख्याने तु शास्त्रमात्रोच्छेदापत्तिः। किञ्च प्रथमोपस्थित-छेचेत्यस्य त्यागस्याऽनुचितत्वाच्च। उपलक्षणं तदिति चेत्। अमुख्येन मुख्यस्योपलक्षणतया व्याख्यानस्य क्लिष्टत्वात्। परिभाषायाः फलोपलक्षणतया व्याख्याने तु न काचिद्दोषशङ्केत्यलम्। दिगिति। दिगर्थस्तु' इति 'स-क०' 'स-ग०' पाठः।

१९० १५ '…इत्यर्थाङ्गीकारात्। ननु भेदेनाऽन्वयाऽयोगात्, गौर्यादिपदानां तदधिकरणके लक्षणाया आवश्यकत्वे वृत्त्यवृत्त्योरविशेष इति चेदत्राहुः—राज्ञो देवदत्तस्य यज्ञदत्त इत्यादौ प्रकारद्वयेनाऽन्वयस्य दर्शनेन तात्पर्यस्यैव नियामकत्वाद् 'गौरी

